॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१९८



पण्डितवरश्रीमदमरसिंहविरचितः

# नामलिङ्गानुशासनं

नाम

# अमरकोषः

महामहोपाध्यायश्रीभट्टोजिदीक्षितात्मजविद्वद्वरश्रीभानुजिदीक्षितकृतया
'रामाश्रमी' ( व्याख्यासुधा ) व्याख्यया विभूषितः ।

व्याकरण-साहित्याचार्य-साहित्यरत्नेन

श्री पं० हरगोविन्दशास्त्रिणा

प्रकाशोपनामकं 'सरल-मणिप्रभा' हिन्दीव्याख्यया टिप्पण्यादिभिश्च सुसंस्कृत्य सम्पादितः



चौखम्बा संस्कृत सीरिज आफिस, वाराणसी-१

१९७०

THE
KASHI SANSKRIT SERIES
198

# NĀMALIṄGĀNUŚĀSANA

OR

# AMARAKOṢA

OF

AMARASIṀHA

WITH THE

RĀMĀŚRAMĪ ( VYĀKHYĀSUDHĀ ) COMMENTARY

OF

BHĀNUJI DĪKṢITA ( RĀMĀŚRAMA )

EDITED WITH

THE EASY MAṆIPRABHĀ ( PRAKĀŚA ) HINDĪ
COMMENTARY AND NOTES, ETC.

BY

**Pt. HARAGOVINDA ŚASTRĪ,**
*Vyākaraṇa-Sāhityācārya, Sāhityaratna*

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1970

# प्रस्तावना

विश्वस्य व्यवहारस्य करणं यन्मतं बुधैः।
शब्दब्रह्माभिधं वन्देऽहं तत्सारस्वतं महः॥

श्रीमतोऽनादिनिधनस्य परब्रह्मपरमात्मन आसृष्टिसत्तावधि समेऽपि प्राणिनो न केवलमैहिकमेव, अपि तु निरतिशयानन्ददं परमात्मसामीप्यसायुज्यादिरूपं पुरुषार्थचतुष्टयश्रेष्ठतममपारानन्तसंसारमहार्णवावागमनजन्यकष्टमुक्तिप्रदं मुक्तिरूपं शाश्वतं सुखमेव सततं कामयन्ते। तदवाप्तिसाधनभूतश्रुतिस्मृत्यादिसच्छास्त्रानुमोदितधर्मकर्मसम्पादनसमर्थं चतुरशीतियोनिषु परमदुर्लभं नैकपुण्यप्रतापलभ्यं मानवशरीरं समवाप्य स्व-स्वमुक्तिकामा अनेकजन्मसु निरतिशयं प्रयतमानेष्वपि बहुषु प्राणिषु केचन एव तल्लाभेनात्ममानवजन्मनः सार्थक्ये कृतकामाः संजायन्ते। श्रुतिस्मृत्यादिसच्छास्त्रज्ञानं च शब्दार्थलिङ्गादिबोधकसमस्तव्यवहारकारणभूतसत्कोषज्ञानाधीनम्। साकल्येन तज्ज्ञानं च प्रकृतिप्रत्ययतत्तदर्थबोधकस्वरादिसम्पापकव्याकरणज्ञानायत्तम्। तदुक्तं श्रीमद्भगवता पतञ्जलिना महाभाष्ये—

'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति' इति (पस्पशाह्निकम्)

अन्यत्र च—'यद्यपि बहु नाधीषे पठ पुत्र! व्याकरणम्।
स्वजनः श्वजनो मा भूत् सकलः शकलः सकृच्छकृत्॥' इति।

पुरा हि तपोयोगबलेन शब्दब्रह्मकृतसाक्षात्कारा महर्षयो हस्तामलकवत्साक्षान्मन्त्रार्थद्रष्टारो भवन्ति स्म। ते हि सृष्ट्यादौ पितामहमुखाद्वेदचतुष्कमुपश्रुत्य विश्वजनीनांस्तन्मन्त्रान् विश्वहितायाख्यातवन्तः। अत एव वेदमन्त्राणां विनियोगेऽनेकेषामृषीणां नामान्यद्यावधि प्रयुज्यन्ते शास्त्रज्ञैः। एकस्यापि शब्दस्य तत्त्वार्थज्ञाने लेशमात्रमपि शङ्कावसरस्तेषां कदाचिदपि कुत्रापि न समभवत्। एतन्मूलक एव 'सर्वे सर्वार्थवाचका' इति वैयाकरणानां सिद्धान्तः साम्प्रतमपि जरीजागर्ति।

परं परिवर्तनशीलेऽस्मिन् संसारे तपोयोगादिह्रासेन सममेव प्रखरधीसुधीप्रशमितशब्दरूपतिशङ्कातङ्कानां तेषां महामहिम्नां महर्षीणां बुद्धिह्रासमवलोक्य भगवान् कश्यपो वेदानां दुर्बोधशब्दसमुदायं संगृह्य 'निघण्टु'नामकं वैदिककोषं रचितवान्। यूथभ्रष्टगोगोत्वमिव वेदपृथग्भूतशब्दसमूहसम्पादिते निघण्टावपि वेदत्वमबाधितमेवेति ध्वनयता निघण्टुव्याख्याकृता निरुक्तकारेण 'समाम्नायः समाख्यातः, स समाख्यातव्यः' इति वचनेन निघण्टुमभिलक्ष्य वेदवाचकस्य 'समाम्नाय'शब्दस्य प्रयोगः कृतः।' अत एव श्रीमता व्यासेनापि महाभारतस्य मोक्षपर्वणि—

वृषो हि भगवान् रुद्रः ख्यातो लोकेषु भारत।
निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्॥
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।
तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः॥

इति (अध्या० ३४२ श्लो० ८६-८७) उक्त्या तदेव समर्थितम्। 'वृषाकपि'शब्दविवरणं निघण्टौ (अध्या० ५ खण्ड ६ पृष्ठ १६) द्रष्टव्यम्।

परं कालप्रभावत उत्तरोत्तरं ततोऽप्यधिकं ह्रासं गते तपोयोगादिबले समेधमाने च बुद्धिमान्द्ये निघण्टुज्ञानेऽप्यक्षमं विद्वल्लोकमालोक्य यास्को नाम महामुनिर्निघण्टुव्याख्याभूतं 'निरुक्त'नामकं ग्रन्थं प्रणिनाय। एतस्यापि वेदत्वं निघण्टुवदबाधितमिति 'शिपिविष्ट'शब्दव्याख्यायामुक्तं तत्रैव महाभारतीय-मोक्षपर्वणि—

'शिपिविष्टेति चाख्यायां हीनरोमा च योऽभवत्।
तेनाविष्टं तु यत्किञ्चिच्छिपिविष्टेति च स्मृतः॥
यास्को मामृषिरव्यग्रोऽनेकयज्ञेषु गीतवान्।
शिपिविष्ट इति ह्यस्माद् गुह्यनामधरो ह्यहम्॥
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः।
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान्॥'

( अध्या० ४३२ श्लो० ७१–७२ ) इति।

'शिपिविष्ट'शब्दनिर्वचनं निरुक्ते ( अध्या० ५ खण्ड ८ पद ३७ ) द्रष्टव्यम्।

## लौकिककोषरचना—

परमग्रेऽपि दूषितान्नपानसंसर्गाचरणादिदोषैस्ततोऽप्यधिकतमे तपश्चरणादिक्षयेन जाते बुद्धिह्रासे निरुक्तज्ञानेऽप्यशक्ते विद्वद्वर्गे लौकिकान् कोषान् व्यरचयन् विश्वजनीना आचार्याः यतः—

१ भोगीन्द्रः, २ कात्यायनः, ३ साहसाङ्कः, ४ वाचस्पतिः, ५ व्याडिः, ६ विश्वरूपः, ७ मङ्गलः, ८ शुभाङ्कः, ९ बोपालितः, १० भागुरिः, इत्येते रचिताः प्रचीनकोषा विश्वे;

१ उत्पलिनी, २ शब्दार्णवः, ३ संसारावर्तः, ४ नाममालाख्यः, ५ वररुचिः, ६ शाश्वतः ७ रन्तिदेवः, ८ रत्नापरनामहरः, ९ गोवर्धनः, १० रभसपालः, ११ रुद्रः १२ अमरदत्तः, १३ गङ्गाधरः, १४ वाग्भटः, १५ माधवः, १६ धर्मः, १७ तारपालः, १८ वामनः, १९ चन्द्रः, २० विक्रमादित्यः, २१ गोमिरचितकोषः, २२ पाणिनिशब्दानुशासनं च। अन्ये च 'बलह'प्रभृतिकोषाः सन्ति[१]।

अस्मिन्नेव क्रमे महाविदुषा अमरसिंहेन 'नामलिङ्गानुशासन'कोषस्य रचना कृता। अयममरसिंहः कदा कुत्र जनिं लेभे इति विषयो नाद्यापि सम्यक् निर्णीतः। प्रथमकाण्डे स्वर्गवर्गे देवपर्यायकथनानन्तरं बुद्धस्य पर्यायकथनेनायं बौद्ध आसीदिति बहूनामितिहासज्ञानां मतम्। किन्तु शोलापुरनिवासि-श्रेष्ठिवर्य-श्रीरावजीसखारामदोशीमहोदया एनममरसिंहं जैनधर्मावलम्बिनं मन्यन्ते। तन्मताधारश्चायम्—अमरसिंहो ग्रन्थ( नामलिङ्गानुशासन )स्थ-'यस्य ज्ञानदयासिन्धो—' ( अम० १।१।१ ) इति मङ्गलाचरणपद्यस्यादौ षोडशतमस्य तीर्थङ्करस्य वन्दनां—

जिनस्य लोकत्रयवन्दितस्य प्रक्षालयेत्पादसरोजयुग्मम्।
नखप्रभादित्यसरित्प्रवाहैः संसारपङ्कं मयि गाढलग्नम्॥ १॥
नमः श्रीशान्तिनाथाय कर्मारातिविनाशिने।
पञ्चमश्चक्रिणां यस्तु कामस्तस्मै जिनेशिने॥ २॥

इति पद्यद्वयेन कृतवान्। 'सुरलोको—' (अम० १।१।८) इति श्लोकस्यानन्तरं च सार्द्धाशीतिश्लोकैर्जैनसम्प्रदाय-सम्मतानां देवीदेवतादीनां पर्याया उक्ताः। द्वितीयकाण्डे च दशैकादश श्लोका वर्तमानामरकोषे त्रुटिताः।

[१] शब्दकल्पद्रुमस्य मुखबन्धनम् पृ० ५।

अतस्तस्य जैनधर्मावलम्बिता सुस्पष्टेति दोशिमहाशयोक्ताधारः। किन्तु दोशिमहाशयोक्तामरसिंह-विरचिते मङ्गलाचरणश्लोकद्वये 'जिनस्य—' इति प्रथमश्लोको वादीभसिंहविरचिते गद्यचिन्तामणिनामके जैनग्रन्थेऽपि लभ्यते। अतस्तयोः समयनिर्धारणादृते केन प्रथमं रचितः प्रथमो मङ्गलाचरणश्लोकः स्वग्रंथे निबद्धमिति विवादास्पदं विषयमितिहासज्ञेषु त्यजामि। केचित्तु—

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः॥'

इति पद्याधारेण पाणिनेः पश्चाज्जातममरसिंहं मन्यन्ते, किन्त्वयं क्रमः सर्वसम्मत्या पाणिन्यनन्तरं जातस्य चन्द्रस्य पाणिनेः पूर्वमस्मिन् पद्य क्तया न प्रामाणिकतां लभते। अपरे तु—

धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥'

इत्युक्त्येममरसिंहं विक्रमादित्यसमकालीनं तदीयराजसभास्थविद्वन्नवरत्नान्तर्गतं मन्यन्ते। परमत्रापि सन्दिहाना इतिहासकारा अमरसिंहं खीष्टाब्दीयषष्ठशताब्द्यां जातमुररीकुर्वन्ति।

अमरसिंहेनानेनान्यग्रन्थस्यापि रचना कृता न वेति सम्यक्तया निर्णेतुं नाशाकि केनचित्। एतस्य विषये इयमपि जनश्रुतिर्यदयं स्वग्रन्थान् विरच्य तैः सह नावमधिरुह्य कचिद्गच्छति स्म, किन्तु विरोधिभिरार्यैरमरकोषातिरिक्ताः समस्तग्रन्था नदीजले प्रक्षिप्तास्तत्र निमग्ना नष्टाश्चेति। एवमेव 'अमरसिंहस्तु पापीयान् सर्वं भाष्यमचूचुरत्' इति कथयन्तोऽस्यामरसिंहस्य महावैयाकरणत्वं स्वीकुर्वन्तोऽप्यस्मिन् चौर्यदोषस्यारोपणं विदधति। परं स्वग्रन्थस्यादौ 'समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ( अम० १।१।२ ) इति ग्रन्थकृद्वचनेनास्मिश्चौर्यदोषारोपणमेतेन सह विरोधजनितमेव प्रतीयते।

## अमरकोषस्य नामनि—

ग्रन्थस्यादौ—'समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः।
सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्॥' इति ( अम० १।१।२ )

प्रतिकाण्डान्ते च—'इत्यमरसिंहकृतौ नामलिङ्गानुशासने।'

इति ग्रन्थकृतोक्त्याऽस्य ग्रन्थस्य 'नामलिङ्गानुशासनम्' इत्येकं नाम। एतस्य काण्डत्रये रचितत्वेन पुरुषोत्तमदेवेन एतद्ग्रन्थस्यैव काण्डवर्गक्रमादिकमादाय शेषशब्दैः रचितस्य स्वग्रन्थस्य 'त्रिकाण्डशेष' इति नामकरणेन, रघुनाथचक्रवर्तिकृताया एतद्ग्रन्थव्याख्यायाः 'त्रिकाण्डचिन्तामणिः' इति नाम्ना, रमानाथविरचिताया एतद्ग्रन्थव्याख्याया 'त्रिकाण्डविवेक' इति नाम्ना चास्यामरकोषस्य 'त्रिकाण्डकोष' इति द्वितीयं नाम। देवभाषाशब्दैरारब्धत्वात्संगृहीतत्वाच्च 'देवकोष' इति तृतीयं नाम। तथा 'वाल्मीकीयरामायणम्' 'भट्टिकाव्यम्' इत्यादिग्रन्थकारनाम्ना प्रसिद्धग्रन्थवदस्यापि अमरसिंहरचितत्वेन 'अमरकोष' इति सर्वसाधारणे प्रसिद्धतमम् 'अमरकोष' इति चतुर्थं नाम वर्तते।

सत्स्वपि प्रचुरतमेष्वन्येषु कोषग्रन्थेष्वस्य अमरकोषस्यैव मान्यताबाहुल्ये हेतुरयं यत् केचन कोषग्रंथाः केवलं पर्यायशब्दान्, केचित्केवलं नानार्थशब्दानेवोक्तवन्तः, परमयममरसिंहः स्वकोषे पर्यायशब्दैः सह नानार्थकानपि शब्दानुक्तवान्।

संस्कृतभाषानुरागिणो योरोपादिविदेशस्था अध्येतस्य ग्रन्थस्य स्व-स्वभाषायामनुवादं कृत्वैनमादृतवन्त इति नाश्चर्यस्य विषयः, किन्तु धर्मान्धतादिदोषाविष्टा ये मुद्गमदजातीयाः सहस्रश आर्यग्रन्थान् जलानलादौ प्रक्षिप्य नष्टान् कृतवन्तः, त एवास्य ग्रन्थस्य स्वारब्याख्यभाषायामनूद्य 'खालीक बरी' इति प्रथमयं ग्रन्थं विरच्यास्य निरतिशयं महत्त्वं संवर्धितवन्तः। पञ्चमां खीष्टीयशताब्द्यां 'चीन'भाषायामप्यस्यानुवादो जात इति मैक्समूलरोऽपि स्वीकरोति इत्येतद् 'भट्टक्षीरस्वामी' इति शीर्षके लेखे ज्यौतिषाचार्येण श्रीमता गिरिजाप्रसादद्विवेदिनोक्तम्।

प्राचीनतमेष्वन्येषु बहुसंख्यककोषग्रन्थेषु सत्स्वपि यावत्यो व्याख्या एतस्य ग्रन्थस्य जाताः, न तावत्योऽन्यस्य कस्यचिदपि ग्रंथस्य। अधोलिखितैतद्व्याख्या-तत्कर्तृनामभिर्मदुक्तिपुष्टिः सुतरां सम्पत्स्यते। एतद्व्याख्यानां तत्कर्तॄणां च शब्दकल्पद्रुम-अमरभारत्याधारेण नामानि—

| व्याख्याः | व्याख्याकाराः | व्याख्याः | व्याख्याकाराः |
|---|---|---|---|
| १. व्याख्याप्रदीपः | अच्युतोपाध्यायः | १५. सारसुन्दरी | मथुरेशविद्यालङ्कारः |
| २. क्रियाकलापः | आशाधरः | १६. अमरपदपारिजातः | मल्लिनाथः |
| ३. काशिका | काशीनाथः | १७. बुधमनोहरा | महादेवतीर्थः |
| ४.* अमरकोषोद्घाटनम् | भट्टक्षीरस्वामी | १८. अमरविवेकः | महेश्वरः |
| ५. बालबोधिनी | गोस्वामी | १९. अमरबोधिनी | मुकुन्दशर्मा |
| ६. अमरकौमुदी | नयनानन्दरामचन्द्रः | २०. त्रिकाण्डचिन्तामणिः | रघुनाथचक्रवर्ती |
| ७. अमरकोषपञ्जिका ( पदार्थकौमुदी ) | नारायण शर्मा | २१. अमरकोषव्याख्या | राघवेन्द्रः |
| ८. शब्दार्थदीपिका | नारायणविद्याविनोदः | २२. त्रिकाण्डविवेकः | रामनाथः |
| ९. सुबोधिनी | नीलकण्ठः | २३. वैषम्यकौमुदी | रामप्रसादः |
| १० अमरकोषमाला | परमानन्दः | २४. अमरकोषव्याख्या | रामशर्मा |
| ११ अमरकोषपञ्जिका ( द्वितीया ) | बृहस्पतिः | २५. अमरवृत्तिः | रामस्वामी |
| १२.† मुग्धबोधः | भरतमल्लिकः | २६. प्रदीपमञ्जरी | रामेश्वरशर्मा |
| १३. व्याख्यासुधा ( रामाश्रमी ) | भानुजिदीक्षितः ( रामाश्रमो वा ) | २७.‡ पदचन्द्रिका | रायमुकुटः |
| १४. गुरुबालबोधिनी | मञ्जुभट्टः | २८. अमरव्याख्या | लक्ष्मणशास्त्री |
| | | २९. अमरबोधिनी | लिङ्गभट्टः |
| | | ३०. पदमञ्जरी | लोकनाथः |

---

* निघण्टुव्याख्याकृता देवराजयज्वना भोजस्य क्षीरस्वामिनश्च नामोल्लेख कृतः। भोजसमयः खीष्टाब्दीय १०१८–१०९० तमो वर्तते। क्षीरस्वामिसमयश्चैकादशशततमस्य चरमो भागः। अयं स्वटीकाया ८८०–९२० खीष्टाब्दीयस्य राजशेखरस्य, उपाध्याय–गौड–श्रीभोज–व्याडि–भागुरि–मालाकार–कात्य (कात्यायन)–प्रभृतीना नामानि लिखितवान्। न केवलं व्याख्याकाराणा नामोल्लेख एवानेन कृतः, अपित्वनेकत्र तेषां भ्रान्तिश्चापि प्रदर्शितेति।

† गौराङ्गमल्लिकपुत्रस्य भरतसेनापरनाम्नो भरतमल्लिकस्येयं व्याख्या सुविशदा, पाठान्तरबहुला, वोपदेवव्याख्यानुसारिणी खीष्टीयदशशताब्दया लिखितेति संभाव्यते।

‡ वङ्गप्रान्तीय 'राधानगर'वास्तव्येन 'गोविन्द'पुत्रेण 'बृहस्पतिना' इयं 'पदचन्द्रिका' १४३१ ई० रचिता। एतद्व्याख्या अस्यग्रन्थस्यासन्। आस्या शतद्वयविदुषा वचनानि प्रमाणत्वेनोद्धृतानि। बृहस्पतिपुत्रस्य 'इत्यादिनाभान्यासन्निति 'Anfrecht' इत्येतेन लिखितम्। २८। १०९-११८॥

| व्याख्या: | व्याख्याकारा: | व्याख्या: | व्याख्याकारा: |
|---|---|---|---|
| ३१. व्याख्यामृतम् | शङ्कराचार्यः | ३६. ............ | अप्पय्यदीक्षितः |
| ३२. अमरटीका | श्रीधरः | ३७. गुरुबालबोधिनी | भानुदीक्षितः |
| ३३.* टीकासर्वस्वम् | सर्वानन्दः | ३८. ............ | मान्यभट्टः |
| ३४. अमरपद्ममुकुटः | रङ्गाचार्यः | ३९. ............ | लिङ्गमसूरिः |
| ३५. बृहद्वृत्तिः | ............ | ४०. अमरकोषपदविवृतिः | ............ |
| | | ४१. कामधेनुः | वङ्गप्रान्तीयः कश्चित् |

एतद्भिन्ना अपि व्याख्या अस्यामरकोषस्य व्याख्यातृभिः कृताः। उपर्युक्ताः समस्ता अपि व्याख्या देवभाषामय्यः। भाषान्तरेषु अनुवादादिसंख्यास्तु इतोऽप्यधिका वर्तन्ते। एताभिर्बहुसंख्यकव्याख्याभिरस्य ग्रन्थस्य सर्वप्रियता सर्वाधिका मान्यता चेति न विचिकित्सा काचित्।

## रामाश्रम्याः ( व्याख्यासुधायाः ) श्रेष्ठता

मयोक्तचरमिदं यत् स्वर्गादिसाधकसच्छास्त्रकोषज्ञानाय शब्दानां प्रकृतिप्रत्ययतत्तदर्थज्ञानसाधनीभूतं व्याकरणशास्त्रज्ञानं परमावश्यकम्। अत एव प्राक्तनैरर्वाचीनैर्वा विद्वद्वर्यैं रचितास्वप्यनेकव्याख्यासु बहूनामनुपलब्ध्या, उपलभ्यमानास्वप्येषा रामाश्रम्यपरनामिका व्याख्यासुधैव शङ्कासमाधानखण्डनमण्डन-सदसद्विवेचनपाठान्तरादिकथनपूर्वकं संप्रत्याबालवृद्धविद्वद्वृन्दाभ्यस्तपाणिन्यादिकृतसूत्रवार्तिकोणादिसूत्रादिद्वारेण धातुप्रत्ययादिनिर्देशपुरःसरं च प्रत्येकेषां नाम्नां साधिततया, हैम-विश्व-मेदिनी-रभस-अजय-प्रभृतिकोषाणां श्रुतिस्मृतिपुराणेतिहासायुर्वेदादिविविधशास्त्राणां प्रमापकवचनैश्च परिपूर्णतया समस्तव्याख्यानां मुकुटमणीयते।

एतद्व्याख्याकारः सिद्धान्तकौमुदीकारस्य महावैयाकरणस्य श्रीमतो भट्टोजिदीक्षितस्य पुत्रः स्वनामधन्यो भानुजिदीक्षितो नाम। अयमपि स्वजनकवदेव महावैयाकरण इत्येतदस्य व्याख्यावलोकनेनैव सुस्पष्टं प्रतीयते। भानुजिदीक्षितस्यापरं नाम 'रामाश्रम' इति। एतन्नाम्नैवास्या व्याख्यासुधाया नामापि 'व्याख्यासुधा' इत्यपेक्षया 'रामाश्रमी'ति नाम्नैव लोके ख्यातिं गतम्।

पातञ्जलमहाभाष्याद्यनेकग्रन्थसम्पादकैः श्रीमद्भिः म० म० दाधिमथशिवदत्तशर्ममहोदयैर्महता परिश्रमेणेमां व्याख्यासुधाव्याख्यां सुपरिष्कृत्य महानुपकारः कृतो लोकानाम्। तैर्विद्वद्वर्यैर्महामतिभिरतिशयेन परिश्रमेण सम्पादितेऽप्यत्र ग्रन्थे मानवमात्रसुलभेन लेखक-मुद्रक-संशोधकादिदृष्टिदोषेण वाऽनेकत्र प्रमापकवचनाधारभूतग्रन्थादिनाम्नां व्यतिक्रमः, तद्ग्रन्थेषु तदुद्धृतप्रमापकवचनानामनुपलब्धिरित्यादयो बहुविधास्त्रुटय आसन्। पाणिनीयसूत्र-वार्तिक-उणादिसूत्राङ्कनिर्देशे तैः कृतेऽपि भूरिश्रमे कोषादिग्रंथस्थलानां निर्देशः सर्वथैव नासीत्तत्र। अतो मया यथाशक्यमुपलभ्यमानग्रन्थाधारेण तत्तत्प्रमापकत्वेनोद्धृतानां वचनानां ग्रन्थस्थलनिर्देशपुरःसरं तत्रत्यपाठभेदाः, मूलग्रन्थपाठभेदाः, अपूर्णतयोद्धृतप्रमापकवचनानां पूर्तिः, अनुपयुक्तानां च तेषां निराकरणं प्रभृतयो बहवो विशेषा अत्र ग्रन्थे सन्निवेशिताः।

---

* दशटीकाधारेण ११५९ ई० लिखितेयं टीका प्रायः क्षीरस्वामिटीकासमानैव। इयमेव वङ्गदेशीय रायमुकुटादिटीकाकाराणामाधारभूता। एतस्या अनन्तरं, किन्तु वङ्गप्रान्तीयान्यटीकाकारेभ्यः पूर्वं सुभूतिचन्द्रेण बौद्धसुभूतिना वा 'कामधेनु'नाम्नी टीका रचिता। यस्या उल्लेखो वङ्गप्रान्तीयैर्बहुभिष्टीकाकारैः स्व-स्वटीकासु कृतः ११७३ ई० रचितायां शरणदेवकृतायां 'दुर्घटवृत्त्यां' सुभूतेर्नामोल्लेखो वर्तते।

# अमरकोषस्थ-विषयानुक्रमणिका

# अमरकोषः

## सटिप्पण-रामाश्रमी(व्याख्यासुधा)संस्कृतव्याख्यया प्रकाशाख्यहिन्दीव्याख्यया चोपेतः ।

### प्रथमं काण्डम्

वल्लवीवल्लभं नत्वा [1]गुरुं भट्टोजिदीक्षितम् ।
[2]आमरे विदधे व्याख्यां मुनित्रयमतानुगाम् ॥

प्रारिप्सितप्रत्यूहापनुत्तये कृतं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति[3]—

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।**
**सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥ १ ॥**

मन्थाचलाविलपयोधिविनिःसृतेन
दृष्ट्वा ज्वलज्जगदिदं गरलेन शीघ्रम् ।
पीत्वा हसंस्तदभिरक्षितवान् भृशं य-
स्तन्नीलकण्ठचरणाम्बुजमाश्रयामि ॥

**हे पण्डितो ! अतिगम्भीर, ज्ञान और करुणाके समुद्र जिसके निर्मल क्षमा आदि गुण हैं; उस अविनाशीकी आप लोग धन और मोक्षके लिये सेवा करें ।**

**यस्येति** ॥ हे अनघा, भवद्भिः स धीरा सेव्यताम् । न अघं पापं येषां तेऽनघा निष्पापा । सुकृतिन इति यावत् । सुकृतिन एव तं सेवितुं प्रभवन्तीति त एव संबोध्यन्ते । 'धर्मेण पापमपनुदति' इति श्रुतेः । धियं राति ददाति । 'रा दाने' (अ० प० अ०) अस्मात् 'क्विप् च' (३।२।७६) इति क्विप् । धीरा ज्ञानप्रदो गुरुः । अनेन 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रुत्यर्थ उपदिष्टः । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति गुरुसेवाया फलमाह—**श्रिये चामृताय चेति** । चद्वयमुभयोः प्राधान्यद्योतनाय । भुक्तिमुक्तिप्राप्तिर्गुरुसेवातो भवति । 'क्रियार्थोपपदस्य—' (२।३।१४) इति चतुर्थी । तादर्थ्ये (वा० २।३।१३) वा । तदुक्तं **भागवते**—'योगर्द्धिमापुरुभयीं यदुहेहयाद्याः' इति । ननु गुरोः श्रियोऽभावात्तत कथं सा [1]प्राप्यते इत्याशङ्क्याह—यस्येति । अस्य गुरोरी लक्ष्मीरस्ति, गुणाश्च सन्ति । तदुक्तं **भागवते**—'ऋते भवत्पादपरायणान्न मां विन्दन्त्यहं त्वद्धृदया यतोऽजित' इति 'सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः । स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥' इत्यादयो गुणाः । कीदृशस्यास्य—ज्ञानदयासिन्धोः । ज्ञायतेऽनेनेति ज्ञानं शास्त्रम्, दया निष्कारणपरदुःखप्रहाणेच्छा, तयोः सिन्धोरिव । शास्त्रसंपन्नस्य, दयापूर्णस्य च । अनेन 'श्रोत्रियं ब्रह्मनिष्ठम्' इति विशेषणयोर्मध्ये श्रोत्रियत्वमुक्तम् । स ज्ञानवानपि किमर्थं दास्यतीत्यतो दयावत्त्वमुक्तम् । 'दयालोरसमर्थस्य दुःखायैव दयालुता' इत्यतो ज्ञानवत्त्वमुक्तम् । कीदृशस्य—अगाधस्य । न गाधस्तलस्पर्शो यस्य गम्भीरस्य । विषयानाकृष्टस्येति यावत् । यद्वा, अगं शैलं वृक्षं वा आप्नोति । 'अन्येभ्योऽपि दृश्यते' (वा० ३।२।१०१) इति आप्नोतेः 'आप्लृ व्याप्तौ' (स्वा० प० अ०) डः । टिलोपः (६।४।१४३) । सवर्णदीर्घः (६।१।१०१) ।

विधिहरिहरैरपि स्तुतमनादिनिधनं सुशारदं धाम ।
हरगोविन्दः प्रणमति व्याख्यासुधाटिप्पणीपूर्त्यै ॥

१. 'गिरम्' इति पाठान्तरम् ।
२. 'अमरे' इति पा० ।
३. 'ग्रन्थकार' इति शेषः ।

१. 'प्राप्यते' इति पा० ।

तमग दधाति मनसेत्यगाध , तस्य । परमेश्वरभक्तस्येति यावत् । कीदृशो धीरा —अक्षय । अ वासुदेव , तस्मिन् क्षयो ज्ञान निवासो वाऽस्य सोऽक्षय । अनेन ब्रह्मनिष्ठना-रूप द्वितीय विशेषणमुक्तम् । यद्वा—न क्षयो हिसा यस्य । ‘क्षीप हिंसायाम्’ (क्र्या० प० अ०) ‘एरच्’ (३।३।५६) । पूर्वत्र तु ‘क्षि निवासगत्यो ’ (तु० प० अ०) । परपीडापहा-रक । ‘यस्मान्नोद्विजते लोक ’ इति **गीता** [ १२।१५ ] । **अथवा** स धीरा मया सेव्यताम् । स क —यस्य गुणा अनघा । न अघ येभ्यस्तेऽनघा । पापनिवर्तका इति यावत् । ‘यश कलिमलापहम्’ इति **भागवतात्** [ १।१।१६ ] । शेष समानम् । ‘आशिषि लिङ्लोटौ’ (३।३।१७३) इति कर्मणि लोट् । इत्थ हि गुरुसेवापरान् प्रति कर्तव्य-त्वेनोपदिश्यते स्वय वा प्रार्थ्यते । गुरुसेवामाहात्म्य च ब्रह्मवैवर्तादौ प्रसिद्धम् । **भागवते**ऽपि—‘यथाऽह ज्ञानदो गुरु ’ इति, ‘तुष्येय सर्वभूतात्मा गुरुशुश्रूषया यथा’ इति च । एव ‘लक्ष्मीवान् , ‘कल्याणगुण , शास्त्रसपन्नो, दयापूर्णो, विषयानाकृष्टो, विष्णुभक्तो, विष्णुसाक्षात्कारवान्, ज्ञानदो, गुरु सपत्प्राप्त्यर्थं मोक्षप्राप्त्यर्थं च निष्पापैरधिकारिभि , मया वा सेव्यताम्’ इति परेभ्यो हितमुपदिशन् , स्वहित-माशासमानो वा ग्रन्थकृदाशीर्वादलक्षण लक्ष्मीस्मरणलक्षण च मङ्गलमाचचार । यत्तु **मुकुट**:—‘स्वेष्टदेवतासकीर्तना-द्विशिष्टमुरिपपादयिषु ’ इत्यवोचत् । तन्न । देवतावाचक-पदस्यात्रादर्शनात्, आशीर्लोटो दर्शनाच्च । **स्वामी**[2] तु—‘जिनमनुस्मृत्य’ इति स्मरणलक्षण मङ्गलमाह । तन्न । जिनवाचकपदस्यात्रादर्शनात्, सामान्यशब्दाना जिनलक्षण-विशेषपरत्वेन व्याख्यानस्य वैदिकानामनुचितत्वात्, अमर-कर्तुर्जैनत्वे [3]प्रमाणाभावाच्च । **प्राञ्च**स्तु—‘हे धीरा , स भगवान् सेव्यतामाराध्यताम् । धैर्यशालिन एव सेवितु शक्नु-वन्ती’ति तानेव सबोधयति । प्रकृतत्वाद्युष्माभिर्हितेच्छुभि । स क —यस्य गुणा मैत्रीमर्यादादयोऽणिमादयो वा अनघा निष्पापा । रागाद्यसवलिता इति यावत् । यद्वा हृद्या । तथा च **धरणि**:—‘**अनघोऽपापहृद्ययो** ’ इति । किभूतस्य—ज्ञानदयासिन्धो । ज्ञान समस्तविद्यावबोध [1] । दृष्ट स्वार्थ-मनपेक्ष्य परदु खप्रहाणेच्छा दया । तयोरम्बुतुल्ययो सिन्धो-रिव सिन्धोर्विपुलाधारस्य, अगाधस्य अनवच्छिन्नमहिम्न । अन्यैरनवगतज्ञानपारत्वादपरिच्छेद्यगाम्भीर्यस्य[2] वा । स किभूत —परहितापादनेषु नास्ति क्षयो विरामो यस्य, मर-णादिराहित्याद्वा । फलाधीनैव प्रेक्षावता प्रवृत्तिरत आह—**श्रियै चे**त्यादि । श्रीरत्र त्रिवर्गसपत्ति , ता प्राप्तुम्, अमृताय मोक्षाय च । यद्वा—स सिन्धु सेव्यताम् । स क —‘यस्य अगाधस्यातलस्पर्शस्य, अक्षयस्य सदा परिपूर्णस्य, अस्य विष्णो क्षयस्य निवासस्य वा गुणा अनघा रत्नादिमत्त्वा-न्नैर्मल्यादय , श्रियै लक्ष्म्यै, अमृताय च पीयूषाय च’ इत्याहु । अत्र समुद्रपक्षस्तु न सम्यगिव । ज्ञानेत्यस्यान-न्वयात् । ‘अक्षय ’ इत्यस्य प्रथमान्तस्य षष्ठ्यन्तत्वेन व्याख्यानस्यानुचितत्वात् । ‘अभीष्टदेवतानमस्काराद्युप-नीतमदृष्ट हि—’ इत्यादिस्वग्रन्थविरोधाच्च । आशीर्नम-स्क्रियावस्तुनिर्देशेष्वनन्तर्भावात् । ‘ज्ञानदययो स्यन्दते प्रव-र्तते देवतारूपत्वात्’ इति वा, ‘ज्ञानदये स्यन्देने प्रवर्तते देव-तारूपेऽस्मिन्’ इति वा समाधेयम् । षष्ठ्यर्थोऽप्याधिकार्थ-त्वेन समाधातु शक्य । ‘स्यन्दते सप्रसारण धश्च’ (उ० १।११) इत्यु । यत्तु **मुकुट**:—“ताभ्या सिन्धुरिवेति प्रकृत्यादित्वात् [ ‘प्रकृत्यादिभ्य उपसंख्यानम्’ वा० २।३।१८ ] तृतीया । ‘तृतीया–’ ( २।१।३० ) इति ‘योगविभागात्समास ’ इति **सर्वधरादय**.” इति । तदपि न सम्यक् । अर्थासङ्गते । प्रातिपदिकार्थे हि सा, तस्य न भेदेनाभेदेन वाऽन्वय सम्भ-वति । अभेदे हि तृतीया व्यर्था । प्रथमाया एवौचित्यात् ।

१ ‘निर्मल’ इति पा० ।

२ “ग्रन्थारम्भेऽभीप्सितसिद्धिहेतु जिनमनुस्मृत्य श्रोतृ-प्रोत्साहनार्थं स्वप्रवृत्तिप्रयोजन साभिधेयमादिवाक्येनाह ।” इति स्वामिवचनम् ।

३ शोलापुरनिवासिना स्व० ‘रावजी सखारामदोशी’ महोदयेन स्वप्रकाशिताया अमरकोषसम्बद्धपुस्तिकाया भूमि-काया बहुभिर्युक्तिभिरमरसिंहो जैन इत्येव समर्थितम् । दोशिमहोदय कथयति सम्प्रत्युपलभ्यमानेषु अमरकोष-ग्रन्थेषु प्राय श्लोकशत लेखकादिप्रमादान्नोपलभ्यते । “यस्य ज्ञान–” ( १।१।१ ) श्लोकात्पूर्वमेव ग्रन्थकारः षोडश-तमतीर्थङ्करस्य वन्दनाम्—“जिनस्य लोकत्रयवन्दितस्य प्रक्षालयेत्पादसरोजयुग्मम् । नखप्रभादिव्यसरित्प्रवाहै ममारपङ्क मयि गाढलग्नम् ॥ १ ॥ नम श्रीशान्तिनाथाय कर्मारातिविनाशिने । पञ्चमश्चक्रिणा यस्तु कामस्तस्मै जिनेशिने ॥ २ ॥” इति श्लोकद्वयेन कृतवान् । तथा च “सुरलोको–” ( १।१।८ )- श्लोकस्यानन्तर ग्रन्थकारो महावीरादितीर्थङ्कराणा जैनसिद्धान्तसम्मतदेवीदेवतानाश्च पर्यायान् सार्द्धाशीतिश्लोकैर्ग्रन्थे निबबन्ध । एव द्वितीय-काण्डेऽपि प्रायो दशैकादशाना पद्याना लेखकादिप्रमाद-भ्रष्टतामाह दोशिमहोदय । यद्यपि पूर्वोक्तमङ्गलाचरण-श्लोकयो प्रथम श्लोको वादीभसिंहकृते ‘गद्यचिन्तामणि’-नामके जैनग्रन्थेऽपि दृश्यते, तथापि द्वितीयश्लोको नान्यत्र क्वापि दृश्यते । एवं सति दोशिमहोदयमतानुसार प्रकृत-ग्रन्थकारस्य जैनत्वे प्रमाणमस्तीति कृत पल्लवितेन ।

१. ‘समस्तविषयावबोध ’ इति पा० ।

२. ‘–परिच्छेद्यं गाम्भीर्यं यस्य’ इति पा० ।

COLLEGE

अभिधेयप्रयोजने दर्शयति—

**समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः।**
**संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्॥ २॥**

**नाम और लिङ्गको बतलानेवाला, वररुचि आदिके तन्त्रों (कोशों) को एकत्रित कर विस्तारके थोड़ा होनेपर भी अधिक अर्थवाला और प्रत्येक पदके प्रकृति और प्रत्ययोंको विचार-पूर्वक संस्कार कर बनाये हुए वर्गों ( प्रकरणों ) से सम्पूर्ण नाम ( स्वः, स्वर्गः, नाकः, आदि ) और लिङ्ग ( पुंल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग ) को बतलानेवाला यह शास्त्र कहा जाता है।**

समेति॥ मया, अन्येषां व्याड्याादीनां तन्त्राणि नाम-लिङ्गानुशासनानि, सिद्धान्तान् वा। समाहृत्यैकीकृत्य, सगृह्य वा। नामाख्यया, लिङ्गानि च स्त्रीपुंनपुंसकानि, अनुशिष्यन्ते विविच्य बोध्यन्तेऽस्मिन्ननेन चेति नामलिङ्गानुशासनम्, 'करणाधिकरणयोश्च' (३।३।११७) इति ल्युट्। संपूर्णं न्यूनत्वदोषरहितम्। उच्यते। कीदृशम्—वर्गैः प्रकरणैर्युक्तम्। कीदृशैः—संक्षिप्तैः स्वल्पशब्दैः। पुनः कीदृशैः—प्रतिसंस्कृतैः प्रत्येकं परिपाटीस्थापनादिना[1] कृतोत्कर्षैः। यद्वा—असाराद्यरहितैः शब्दरचनाविशेषवद्भिः। त्रिकाण्डोत्पलिन्यादीनि नाममात्रप्रतिपादकानि। वररुच्यादिकृतानि तु लिङ्गमात्रप्रतिपादकानि। अत्र तूभयार्थसंग्रहादिदमेव सर्वैः पाठ्यमिति भावः।

लिङ्गज्ञानोपायं परिभाषते—

**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्।**
**स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित्॥ ३॥**
**भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः।**
**कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते॥ ४॥**
**त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति।**
**निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक्॥ ५॥**

**प्रायः रूप-( आकार ) भेद अर्थात् 'ङीप्, ङीष्, टाप्, विसर्ग और अमादेश' आदिसे, कहीं कहीं साहचर्यसे तथा कहीं-कहीं विशेष रूपसे कहनेपर स्त्रीलिङ्ग, पुंल्लिङ्ग और नपुंसकलिङ्ग जानना चाहिये।**

**इस ग्रन्थमें प्रत्येक शब्दका लिङ्ग मालूम करनेके लिये उन शब्दोंके 'द्वन्द्व, एकशेष और सङ्कर' प्रायः नहीं किये गये हैं जिनके लिङ्ग पहिले नहीं कहे हैं और भिन्न भिन्न हैं। किन्तु जिन शब्दोंके लिङ्ग आदि कहींपर कह दिये गये हैं, उन्हींके 'द्वन्द्व, एकशेष और सङ्कर' किये गये हैं।**

**तीनों लिङ्ग बतलानेके लिये इस ग्रन्थमें 'त्रिषु', तथा 'पुंल्लिङ्ग और स्त्रीलिंग दोनों लिङ्ग हैं' यह बतलानेके लिये 'द्वयोः' ये शब्द कहे गये हैं। जहाँ जिस लिङ्गका निषेध किया गया है, उस निषिद्ध लिङ्गके अतिरिक्त शेष लिङ्ग उस शब्दके होते हैं। जिस शब्दके अन्तमें 'तु' या आदिमें 'अथ' शब्द हो, ऐसे, '१ नामपद, २ लिङ्गपद, ३ सर्वनामपद और ४ अव्ययपद' इन चारोंका पहलेवाले (पूर्वमें रहनेवाले) शब्दोंके साथ सम्बन्ध नहीं होता है।**

**प्रायश इति॥** 'बह्वल्पार्थाच्छस्–' (५।४।४२) इति शस्, प्रायशो बाहुल्येन, रूपभेदेन ङयाब्विसर्गबिन्दुरूपेण स्त्रीपुंनपुंसकं बोध्यम्। यथा—'पद्मालया पद्मा' [ अ० १।१।२७ ], 'पिनाकोऽजगवं धनुः' [ अ० १।१।३५ ]। क्वचिद्विशेषणपदस्थेन सर्वनामपदस्थेनापि रूपभेदेन स्त्रीपुंनपुंसकं ज्ञेयम्। यथा—'तत्परो हनुः' [अ० २।६।९०]। अत्र तत्पर इति विशेषणाद्धनो पुंस्त्वम्।[1] '—सैवाल्पा कुतूः पुमान्' [अ० २।९।३३]। 'सा' इत्युक्त्या कुत्वा स्त्रीत्वम्। निश्चितलिङ्गेनानन्तर्यं साहचर्यम्। रूपभेदाभावेऽपि क्वचित्तेनापि लिङ्गं ज्ञेयम्। यथा—'अश्वयुगश्विनी' [अ० १।३।२१], 'भानुः करः' [अ० १।४।३३], 'वियद्विष्णुपदम्' [अ० १।२।२]। अत्राश्वयुग्भानुवियन्ति साहचर्यात्स्त्रीपुंनपुंसकानि ज्ञेयानि। क्वचित् तस्य स्त्रीपुंनपुंसकस्य विशेषोपादानात्तज्ज्ञेयम्। यथा—'भेरी स्त्री दुन्दुभिः पुमान्'[2] [ अ० १।७।६ ], 'रोचिः शोचिरुभे क्लीबे' [ अ० १।४।३४ ]॥ ३॥ अत्र[3] कोशे, अनुक्तानां स्वपर्यायेष्वपठितानाम्, भिन्नं लिङ्गं येषां तेषाम्, लिङ्गभेदमाख्यातुम्, द्वन्द्व एकशेषश्च न कृतः। यथा—'देवतादैवतामराः' इति न कृतम्। परवल्लिङ्गता स्यात्। यथा वा–'नः नभः श्रावणो नभाः' [ अ० ३।३।२३२ ] इत्यत्र 'नभश्रावणौ तु नभसी' इति न कृतम्। शिष्यमाणलिङ्गतैव स्यात्। समानलिङ्गानां तु तौ कृतावेव। यथा—'स्वर्गनाकत्रिदिवत्रिदशालयाः' [ अ० १।१।६ ], 'पादा रश्म्यङ्घ्रितुर्यांशाः' [ अ० ३।३।८९ ]। स्थानान्तरनिर्दिष्टानां तु भिन्नलिङ्गानामपि तौ कृतावेव। यथा—'अप्सरोयक्षरक्षोगन्धर्वकिंनराः' [ अ० १।१।११ ], 'मातापितरौ पितरौ' [ अ० २।६।३७ ]। एते स्वस्वपर्यायेषूक्ता एव। तथा तेषां क्रमादृते क्रमं विना संकरो न कृतः। स्त्रीपुंनपुंसकानि क्रमेण पठितानि, तेषु क्रमेण पठ्यमानेषु नान्तरीयकस्तु संकरो न दोष इति भावः। संकरो नाम भिन्नलिङ्गानां मिश्रतारूपः। यथा—'स्तवः' [ अ० १।६।११ ] इति

१. 'क्रमकथनेन' इति पा०।

१. अत्र (कुतूः कृत्तेः स्नेहपात्रम्) इत्यधिकं नि० पु०।

२ स्वामिसम्मतोऽयं पाठः, भा० दी० सम्मतपाठस्तु 'भेर्यामानकदुन्दुभी' इति।

३. विशेषजिज्ञासुभिः क्षीरस्वामि-रायमुकुटदीक्षित-रामकृष्णकृता व्याख्या मत्कृत'मणिप्रभा'ख्यराष्ट्रभाषा-व्याख्या अमरकौमुद्याख्या टिप्पणी च द्रष्टव्याः।

पुंल्लिङ्गमुक्त्वा, 'स्तोत्र' [ अ० १।६।११ ] नपुंसकमुक्त्वा 'नुति स्तुति' [ अ० १।६।११ ] इति स्त्रीलिङ्गावुक्तौ। न तु 'स्तुतिः स्तोत्रं स्तवो नुतिः' इति कृतम्। एवं 'जनुर्जननजन्मानि' [अ० १।५।३०] इति नपुंसकलिङ्गान्यभिधाय [तत्रैव] 'जनिरुत्पत्तिः' इति स्त्रीलिङ्गावुक्त्वा 'उद्भव' शब्दः पुंलिङ्ग उक्तः। यत्तु स्वामिनोक्तम्—'एतच्च प्रमाद्यते। यत्र संग्रहश्लोकादौ क्रममात्रं विवक्षितम्, तत्र अनुक्तानां भिन्नलिङ्गानां द्वन्द्वादयः कृता एव। यथा—'वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधि–' [ अ० २।१।१ ] इत्यादौ द्वन्द्वसंकरौ, 'भ्रात्रादौ[अ० २।६।३७] एकशेषश्च कृतः' इति। तन्न। इत्थं हि 'पृथ्वीपुर–' [अ० २।१।१] इत्यादिनिर्वाहेऽपि भ्रात्रादावनिर्वाह एव। तत्र क्रममात्रस्याप्रतिपिपादयिषितत्वात्। अत एव 'अप्सरोयक्षरक्षोगन्धर्वकिंनराः' [अ० १।१।११] इत्यादावप्यनिर्वाहः। यदपि "उपाध्यायश्च 'क्रमादृते' इत्यन्तर्गडु मन्वानः 'क्रमेणादृते परिपाट्योपादेये [ अत्र ] ग्रन्थे' इति व्याख्यत्[1]" इति स्वामी। तदपि न। अन्तर्गडुमानस्य निर्बीजत्वात्। अस्मदुक्तरीत्या तस्य सामञ्जस्यात्॥ ४॥

त्रयाणां लिङ्गानां समाहारस्त्रिलिङ्गी, तत्र 'त्रिषु' इति पदं ज्ञेयम्। इति परिभाष्यते। यथा—'त्रिषु स्फुलिङ्गोऽग्निकणः' [ अ० १।१।५७ ]। न्यायसिद्धं चैतत्। निर्लिङ्गस्यानिरुक्तस्यार्थस्यासम्भवात्। अयोगाच्च। स्त्रीपुंसौ मिथुनम्, तत्र 'द्वयोः' इति पदं ज्ञेयम्। यथा—'—द्वयोर्ज्वालकीलौ' [ अ० १।१।५७ ]। 'द्वयोः' इति 'द्वि'शब्दप्रयोगोपलक्षणम्। तेन 'द्विहीनं प्रसवे सर्वम्' [ अ० २।४।१८ ], 'द्वयहीने कुकुन्दरे' [ अ० २।६।२८ ] इत्याद्युपपद्यते। तथा निषिद्धं लिङ्गं यस्य तन्निषिद्धलिङ्गं पदं, शेषार्थं शेषलिङ्गकं ज्ञेयम्। इदमपि न्यायसिद्धम्। विशेषनिषेधे शेषाभ्यनुज्ञानात्। यथा—'वज्रमस्त्री' [अ० १।१।४७ ] इति। तुरन्ते यस्य तदन्तम्, अथ आदिर्यस्य तदथादि, त्वन्तं च अथादि च नामपदं लिङ्गपदं सर्वनामपदमव्ययपदं च पूर्वान्वयि न भवति, किं तूत्तरान्वयि। 'नगरी त्वमरावती' [ अ० १।१।४५ ], 'जवोऽथ शीघ्रं त्वरितम्' [ अ० १।१।६४ ] इति च नामपदम्। 'पुंसि त्वन्तर्धिः' [ अ० १।३।१२ ], 'अस्त्र चाथ त्रिषु द्रव्ये' [ अ० १।४।२६ ] इति लिङ्गपदम्। 'तस्य तु प्रिया' [ अ० १।१।४४ ] इति सर्वनामपदम्। 'धा तु पुंसि' [ अ० १।३।१६ ] इत्यव्ययपदम्। 'अथ'शब्दः 'अथो'-शब्दस्याप्युपलक्षणम्। यथा–'अनुक्रोशोऽप्यथो हसः' [ अ० १।७।१८ ]। न्यायसिद्धमिदम्। 'तु'ना पूर्वस्माद्विशेषद्योतनात्। 'अथ'शब्देन चार्थान्तरारम्भात्। भ्रमविषयं चैतत्। 'उदपानं तु पुंसि वा' [ अ० १।१०।२६ ] इत्यादौ तु न दोषः। उत्तरस्यानामत्वात्। लिङ्गवाचिनाऽन्वयेऽपि दोषाभावात्। वस्तुतस्तु अत्र पादपूरणाय चकाराद्येव पठितुं युक्तम्॥ ५॥

**स्वरव्ययं स्वर्ग-नाक त्रिदिव-त्रिदशालयाः।**

**सुरलोको द्यो-दिवौ द्वे स्त्रियां[1] क्लीबे त्रिविष्टपम्॥६॥**

स्वः (=स्वर् अ०), स्वर्गः, नाकः, त्रिदिवः, त्रिदशालयः, सुरलोकः ( ५ पु ), द्यौः (= द्यो ), द्यौः ( = दिव् । २ स्त्री ), त्रिविष्टपम् ( न ) 'स्वर्ग' के ९ नाम हैं।

स्वरिति॥ यद्यपि 'चतुष्टयी शब्दानां प्रवृत्तिः' इति पक्षे संज्ञाशब्देषु व्युत्पत्तिर्निरर्थकी, तथापि शाकटायनाद्यभिमतत्रयीपक्षे व्युत्पत्तिः प्रदर्श्यते॥१॥ स्वर्यते स्तूयते इति स्वः। 'स्वृ शब्दोपतापयोः'(भ्वा० प० अ०)। 'अन्येभ्योऽपि दृश्यन्ते' (३।२।७५) इति विच्। बाहुलकात्कर्मणि गुणः। रपरत्वम्[2] इत्याहुः। तन्न। निर्बीजबाहुलकाश्रयणस्यायुक्तत्वात्। 'स्वरति शब्दायते' इति व्युत्पत्तिरप्ययुक्ता। उक्तार्थस्य तत्रासम्भवात्। स्वरत्यप्राप्त्या उपतापयति। 'नैनं कृताकृते तपतः' इति श्रुतेः। स्वरादि (१।१।३७) पाठादव्ययत्वम्। 'अव्ययोऽस्त्री शब्दभेदे नाविष्णी निर्णये त्रिषु।' [इति मेदिनी ११८।७१]। 'स्व'शब्दस्य मङ्गलार्थमादौ प्रयोगः। [ स्वः प्रेत्य व्योम्नि नाके च' इति मेदिनी १८४।७० ]॥ (१)॥७॥ सुष्ठु अर्ज्यते स्वर्गः। 'अर्ज अर्जने' (भ्वा० प० से०) कर्मणि [ 'अकर्तरि च–' ( ३।३।१९ ) इति ] घञ्। ऋज्यतेऽस्मिन्निति वा। 'ऋज गतिस्थानार्जनोपार्जनेषु' (भ्वा० आ० से०) 'हलश्च' (३।३।१२१) इति घञ्। न्यङ्क्वादित्वात् (७।३।५३) कुत्वम्। यत्तु मुकुटः–'चजोः–' (७।३।५२) इति कुत्वमाह। तन्न। 'निष्ठायामनिट कुत्वम्' (७।३।५९) इति वार्तिकात्॥ (२)॥८॥ 'कं सुखं तद्विरुद्धम् अकं दुःखम्, नास्त्यकमत्र' इति नाकः। 'नभ्राण्नपात्–' (६।३।७५) इति नलोपो न। को ब्रह्मा, तदभावो नास्त्यत्रेति वा। 'नाकस्तु त्रिदिवेऽम्बरे' [इति मेदिनी २।२७]॥(३)॥ ९॥ तिसृष्वप्यवस्थासु त्रयो ब्रह्मविष्णुरुद्रा वा दीव्यन्त्यत्रेति त्रिदिवः। '—घञर्थे कविधानम्' (वा० ३।३।५८) इति कः–इत्याहुः। तन्न। 'स्थास्नापाव्यधिहनियुध्यर्थम्'[3] इति परिगणनात्। उदाहरणत्वेन व्याख्यानस्य निर्मूलत्वात्। यदपि—मूलविभुजादित्वात् ( वा० ३।२।५ ) कप्रत्ययः–इति। तदपि न। अधिकरणव्युत्पत्तिप्रदर्शनस्यासंगतत्वात्। तत्र 'कर्तरि कृत्' ( ३।४।६७ ) इति वाक्यशेषात्। तस्मात्—'हलश्च' (३।३।१२१) इति घञ्।

१. 'व्याददत्' इति तत्र पाठः।

१. 'स्त्रियौ' इति पा०।

२ 'सार्वधातु–' इति 'उरण्–' इति च गुणरपरत्वे बोध्ये।

३ अत्र ( उक्तवार्तिकशेषे ) इत्यधिकं नि० पु०।

संज्ञापूर्वकत्वात् न गुण—इति व्याख्येयम्। यद्वा—ब्राह्मवैष्णवरौद्रभेदेन सात्त्विकराजसतामसभेदेन वा त्रिविधो दीव्यति व्यवहरति प्रकाशते वा। 'दिवु क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु' ( दि० प० से० ) 'इगुपधत्वात्' ( ३।१।१३५ ) क। 'त्रिदिवं तु खे। स्वर्गे च त्रिदिवा नद्याम्' इति मेदिनीदर्शनात्[१] क्लीवेऽपि॥(४)॥*॥ त्रिदशानामालय ॥ (५)॥ स्वर्गसुरादय शब्दा स्वस्वपरा। लक्षणया स्वर्गपरा। अत ममानार्थत्वाभावादेकशेषो न॥१॥ सुराणा लोक ॥ (६)॥ सुरसद्मादीनामप्युपलक्षकमेतत्। एव यौगिकेषु सर्वत्रोह्नेयम्॥ * ॥ द्योतन्तेऽस्या द्यौ गोवत्। बाहुलकात् (३।३।१) द्युते डो[२]। द्यौति 'द्यु अभिगमने' ( अ० प० अ० ) विच्' (३।२।७५) वा। ['द्यौस्तु स्वर्गे विहायसि' इति हैम २।१२] ॥(७)॥*॥ दीव्यन्त्यस्यामिति बाहुल्कात् (३।३।१) दिवे दिवि। द्यौ, दिवौ, दिव, द्युभ्याम्॥ (८)॥ यत्तु—'दिवेड्यों' इति ड्योप्रत्यय —इत्याह मुकुटः। तन्न। उक्तसूत्रस्यादर्शनात्। स्वामी तु-'द्योशब्दोऽप्योकारान्तोऽस्ति। भाष्ये (६।१।९३) 'गोतो णित्' (७।१।९०) इत्यत्र 'ओतो णित्' इति पाठान्तराम्नानात्' इत्याह। तदपि न। स्मृत उर्वेन म स्मृनोरित्यत्र वृद्धिविधानेन पाठस्योपक्षीणत्वात्। यदपि—दिवं दिवन् (३।२।७६) इत्युक्तम्। तदपि न। दिवौ दिव इत्यादौ 'च्छ्वो शूड्–' ( ६।४।१९ ) इत्यूठ प्रसङ्गात्। सुभूतिस्तु—'द्यु अभिगमने' [ अ० प० अ० ] द्यूयते अभिगम्यते बाहुलकात्कर्मणि डोप्रत्यय[३] [ उ० २।६८ ]—इत्याह। 'द्यौः स्त्री स्वर्गे च गगने दिवं क्लीव तयो स्मृतम्'। [ इति मेदिनी १५८।११ ]। यत्तु—स्वामिना 'दिव-शब्दो वृत्तिविषय' इत्युक्तम्, तदनेन परास्तम्। उक्तमेदिन्या वृत्तिविषयत्वानभिधानात्। 'मन्दर मेरिभ शक्रभवन[४] स दिव नभ।' इति त्रिकाण्डशेषात् [ १।१।४ ] च॥ * ॥ विशन्त्यस्मिन् सुकृतिन इति विश[५] कप्रत्यय, तस्य च तुट्। 'व्रश्च–' ( ८।२।३६ ) इति षत्वम्। 'यत्र व्रध्नस्य विष्टपम्' इति वैदिकः प्रयोग। तृतीय विष्टप त्रिविष्टपम्॥ ( ९ )॥ पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते[१]। ( रूपभेदेनैव क्लीवत्वे लब्धे रूपभेदलब्धलिङ्गविशेषस्यानित्यत्वज्ञापनार्थं 'क्लीव' इत्युक्तम्। तस्य फल 'कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्परा' [ अ० ३।२।१] इत्यत्र नपुंसकत्व उक्तेऽपि पुल्लिङ्गत्व सिद्धम्। अत 'कर्म व्याप्ये क्रियाया च पुनपुंसकयोर्मतम्' इति रुद्रकोशेन सह न विरोध शङ्कनीय )। केचित्तु—'पिष्टप' इति सूत्रं पठित्वा विशतेरादे पो निपात्यते—इत्याहु। अथ पुम्यपि। तथा चामरमाला—'पिष्टपो विष्टपोऽप्यस्मी भुवनं च नपुंसकम्' इति। 'नभो त्रिष्टपं वृषो गौर्ना पृश्निश्चापि सुरालय' इति रत्नमाला। एव शक्रभवनफलोदयावरोहोर्ध्वलोकादयोऽप्यूह्या। नव 'स्वर्गस्य'।

**अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः।**
**सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः॥ ७॥**
**आदितेया दिविषदो लेखा अदितिनन्दनाः।**
**आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः॥ ८॥**
**बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः।**
**वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्॥ ९॥**

अमरः, निर्जरः, देवः, त्रिदशः, विबुधः, सुरः, सुपर्वा (=सुपर्वन्), सुमनाः (=सुमनस्), त्रिदिवेशः, दिवौकाः (=दिवौकस्), आदितेयः, दिविषत् (=दिविषद्), लेखः, अदितिनन्दनः, आदित्यः, ऋभुः, अस्वप्नः, अमर्त्यः, अमृतान्धाः (=अमृतान्धस्), बर्हिर्मुखः, क्रतुभुक् (=क्रतुभुज्), गीर्वाणः (+गीर्वाणः), दानवारिः, वृन्दारकः (२४ पु), दैवतम् (पु न), देवता (स्त्री), 'देवता' के २६ नाम हैं।

अमरा इति॥ न म्रियन्ते 'मृङ् प्राणत्यागे' ( तु० आ० अ०)। पचाद्यच् (३।१।१३४)। 'अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे। स्त्री गुडूच्यमरावत्यो स्थूणादूर्वाजरायुषु॥' [इति मेदिनी १३०।१०३] ॥ ( १ ) ॥*॥ जराया निष्क्रान्ता। 'निर्जरः स्यात्पुमान्देवे जरारयक्ते च[२] वाच्यवत्। निर्जरा तु गुडूच्या च तालपर्ण्यामपि स्त्रियाम्॥' [ इति मेदिनी १३५।१७३ ]॥ ( २ ) ॥*॥ दीव्यन्तीति देवा। पचादिषु (३।१।१३४) पाठादच्। 'देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये। देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि॥' [इति विश्व १६३।१५] ॥ (३) ॥*॥ तृतीया यौवनाख्या दशा सदा येषाम्। 'त्रि'शब्दस्य तृतीयार्थता त्रिभागवत्। त्रिर्दश वा। 'सङ्ख्ययाऽव्यया–' ( २।२।२५ ) इति बहुव्रीहि। 'बहुव्रीहौ सङ्ख्येये–' ( ५।४।७३ ) इति डच्। जन्मसत्ताविनाशाख्यास्तिस्रो दशा येषामिति वा।

१ अयं पाठो हैमे ( ३।७३७–७३८ ), मेदिन्या तु 'त्रिदिवा सरिदन्तरे' ( १६०।२७ ) इत्येव पाठ।

२. 'द्युत दीप्तौ' इति भौवादिकधातो 'गमेर्डो' ( उ० सू० २२५ ) इति 'उणादयो बहुलम्' इति बाहुलकात्प्रत्यय.।

३ 'गमेर्डो' इत्यनेनेति शेष.।

४. 'सदनं' इति पा०।

५. 'विश प्रवेशने' इति तौदादिकाद्धातो।

१ एतदग्रे कोष्ठस्थः पाठः निर्णयसागरीय.।

२. 'तु' इति मेदिनीपाठः।

"त्रीन् तापान् दशन्ति 'दश दशने' (भ्वा० प० अ०) पचाद्यचि पृषोदरादित्वात् ( ६।३।१०९ ) न लोपः" इति **राजदेवः** । तन्न । उत्तरविग्रहे कर्मण्यण ( ३।२।१ ) प्रसङ्गे-[१]नाचोऽप्राप्ते । मूलविभुजादित्वादित्येके (वा० ३।२।५) वा समाधेयम् ॥(४)॥*॥ विशिष्टो बुधो येषाम् । त्रिकालज्ञजीव-शिष्यत्वात् । विशेषेण बुध्यन्ते वा । 'बुध अवगमने' (भ्वा० प० से०, दि० आ० अ०) 'इगुपध-' (३।१।१३५) इति क । '**विबुधो** ज्ञे सुरे' [इति मेदिनी ८१।३६] ॥(५)॥*॥ सुन्वन्तीति सुराः । 'षुञ् प्रसवैश्वर्ययोः' ( तु० प० से० ) । 'इगुपध-' (३।१।१३५) इति कः । यद्वा—समुद्रोत्था सुराऽस्त्येषाम् । अर्शआद्यच् ( ५।२।१२७ ) । यद्वा—शोभनं राजते । 'राजृ दीप्तौ' ( भ्वा० उ० से० ) । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति डः । '**सुरा** चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात्' [इति मेदिनी १२९।९८] ॥ ( ६ ) ॥*॥ सुष्ठु पर्व अमावास्यादिचरितम्, अङ्गुल्यादिग्रन्थिः, उत्सवो वा येषां सुपर्वाणः । '**सुपर्वा** ना शरे वंशे पर्वधूमसुरेषु च ।' [इति मेदिनी ९९।१२५] ॥ (७) ॥*॥ शोभनं मनो यषां ते सुमनसः । '**सुमनाः** पुष्पमालत्योः स्त्रियां, ना धीरदेवयोः ।' [इति मेदिनी १७४।६७ ] ॥(८) ॥ * ॥ त्रिदिवस्थत्वा ॥ (९) ॥ * ॥ दिवमोको येषां ते दिवौकसः । 'दिव' शब्दोऽदन्तः । 'मन्दर सैरिभ शक्रभवन[२] ख दिव नभ' इति **त्रिकाण्डशेषात्** [१।१।४] । द्यौरोको येषामिति विग्रहे '**दिवोकसः**' अपि । 'स्याद्दिवौका दिवोकाश्च देवे चापीह पक्षिणि' इति **रन्तिदेवः** । '**दिवोकाश्च दिवौकाश्च** पुंसि देवे च चातके ।' [इति मेदिनी १७३।५४]। शब्दपरविप्रतिषेधात् परस्य यणादेशः[३] [ ६।१।७७ ] । स्थानिवत्त्वेन पूर्वस्य न यण् 'सकृद्गतौ' ( प० १।४।२ ) इति न्यायात् ॥ (१०) ॥*॥ 'नञो दाञो डिति' इति **शाकटायनः** । यद्वा—द्यति । 'दो अवखण्डने' ( दि० प० अ० ) । 'क्तिच् क्तौ च-' ( ३।३।१७४ ) इति क्तिच् । 'द्यतिस्यति-'(७।४।४०) इति इत्वम् । दितिर्भिन्नार्थादितिः । आदरया अपत्यानि । 'कृदिकारादक्तिनः' (ग० ४।१।४५) इति ङीषन्तात् 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) ॥ (११) ॥ * ॥ दिवि सीदन्ति वसन्ति 'षद्लृ विशरणगत्यवसादनेषु' (भ्वा० प० अ०, तु० प० अ०) । 'सत्सूद्विष-' (३।२।६१) इति क्विप् । 'हृद्द्युभ्यां च'[४] (वा० ६।३।९) इति ङेर्लुक् । 'सुषामादिषु च' ( ८।३।९८ ) इति षत्वम् ॥*॥ 'तत्पुरुषे कृति बहुलम्' (६।३।१४) इति ङेर्लुकि '**द्युसदः**' अपि । 'मन सु येन द्युसदां न्यधीयत' इति **माघः** [१।४३] ॥(१२)॥*॥ चित्रादौ लिख्यन्ते । 'लिख अक्षरविन्यासे' (तु० प० से०) । 'अकर्तरि-' ( ३।३।१९ ) इति कर्मणि घञ् । ग्रीवाहस्तपादेषु तिस्रो लेखा सन्त्येषामिति वा । 'अर्शआद्यच्' (५।२।१२७) । '**लेखो** लेख्ये सुरे **लेखा** लिपिराजिकयोर्मता ।' [इति मेदिनी २०।४] ॥ (१३) ॥*॥ अदितेर्नन्दनाः ॥(१४)॥*॥ अदितेरपत्यानि । 'दित्यदित्या-'(४।१।८५ ) इति ण्यः । लिङ्गविशिष्ट (४।१।१) परिभाषया अनित्यत्वान्ङ्यन्ताण्ण्यो न । '**आदित्यो** भास्करे देवे' [इति मेदिनी ११८।७४ ] ॥ ( १५ ) ॥*॥ 'ऋ' शब्दवाच्यं स्वर्गं, अदितिर्वा । स्वरादि( १।१।३७ ) पाठादव्ययत्वम् । तत्र ततो वा भवन्ति । 'मितद्र्वादित्वात्' ( वा० ३।२। १८० ) डः ॥ * ॥ क्विपि ( ३।२।७६ ) '**ऋभुवः**' अपि—**इत्यन्ये** ॥(१६)॥*॥अविद्यमानः स्वप्नो येषाम् ॥ ( १७ ) ॥ * ॥ म्रियन्तेऽस्मिन्निति मर्तो भूर्लोकः । 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' ( उ० ३।८६ ) । तत्र भवा अप्युपचारान्मर्ताः । ततश्च 'नवसूरमर्तयविष्ठेभ्यो यत्' ( वा० ५।४।३६ ) इति स्वार्थे यत् । तद्भिन्नाः ॥ (१८) ॥*॥ अमृतमन्धोऽन्नं येषां ते ॥ (१९) ॥ * ॥ वर्हिरग्निर्मुखं येषां ते ॥ (२०) ॥*॥ क्रतून् क्रतुषु वा भुञ्जते । 'भुज पालनाभ्यवहारयोः' (रु० आ० अ०) क्विप् (३।२।७६) ॥ ( २१ ) ॥*॥ गीरेव निग्रहानुग्रहसमर्था वाणोऽस्त्रं येषाम् ॥ * ॥ दन्तोष्ठ्यपाठे[१] गिरं वन्वते स्तुतिप्रियत्वात् । 'वनु याचने' (त० आ० से०) 'कर्मण्यण्' (३।२।१) । 'पूर्वपदात्-' (८।४।३) इति णत्वम् ॥ (२२) ॥*॥ दानवानामरयः ॥ (२३) ॥*॥ प्रशस्तं वृन्दं येषाम् । 'शृङ्गवृन्दाभ्यामारकन्' ( वा० ५।२।१२० ) । '**वृन्दारकः** सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु ।' [इति मेदिनी १७।२०४] ॥ (२४) ॥*॥ 'देव'-शब्दात् स्वार्थे तल् ( ५।४।२७ ) । ततः स्वार्थे प्रज्ञाद्यण् (५।४।३८) । विशेषविधेः पुंस्त्वम् । रूपभेदात्क्लीबत्वम् ॥ (२५) ॥*॥ दवता ॥ (२६) ॥ स्त्रियाम् । रूपभेदादेव स्त्रीत्वे सिद्धे बहुवचनान्तपुंलिङ्गशङ्कावारणार्थं 'स्त्रियाम्' इति—**मुकुटः** । तन्न । रूपभेदेनैव वारणाद्विमर्शं विना पुंलिङ्गकोटेरनुत्थानात् । अन्यथा 'पद्मा गदा' इत्यादौ तस्या अनिवारणात् । अतो 'देवपर्याया पुंसि' इति वक्ष्यति तद्बाधनार्थमिदम् । षड्विंशतिः '**देवानाम्**' ।

**आदित्य विश्व वसवस्तुषिताभास्वरानिलाः ।**
**महाराजिक साध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥**

---

१ 'नन्दिग्रहि-' इति सूत्रेण ।

२ 'शक्रसदनम्' इति पा० ।

३ 'दिव उत्' ( ६।१।१३१ ) इति वकारस्योत्त्वे कृते इति बोध्यम् ।

४ भाष्ये तु—'हृद्द्युभ्यां ङेरुपसंख्यानम्' इति पाठः ।

१. 'गीर्वाणाः' इत्येवरूपः इत्यर्थः ।

**आदित्याः १२, विश्वे १०, वसवः ८, तुषिताः २६ या ३६, आभास्वराः ६४, अनिलाः ४९, महाराजिकाः २२०, साध्याः १२, रुद्राः १०, ( ९ पु ) 'गणदेवता' देवताओंके एक-एक गण (समूह) के ९ नाम हैं ( इन गणदेवताओंमें से प्रत्येकके जितने भेद होते हैं, वह संख्या प्रत्येक नामके साथ लिख दी गई है )।**

आदित्यादयः प्रत्येकं गणदेवताः समुदायचारिण्यो देवताः । एकत्वं तु समुदायवृत्तानामवयववृत्तेरप्यभ्युपगमात् । 'आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः । वसवश्चाष्ट संख्याताः षट्त्रिंशत्तुषिता मताः । आभास्वराश्च चतुःषष्टिर्वाता पञ्चाशदूनकाः । महाराजिकनामानो द्वे शते विंशतिस्तथा । साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः' ॥ ॥ (१) ॥ ॥ विशन्ति कर्मस्विति विश्वे । 'विश प्रवेशने' (तु० प० अ०) । 'अशू-प्रुषि-लटि-कणि-खटि-विशिभ्यः क्वन्' (उ० १।१४९)। सर्वनामसंज्ञोऽयम् । आधुनिकसंज्ञास्वेव सर्वनामत्वपर्युदासात् । **मुकुटस्तु**—सर्वेषां विश्वेदेवानां नाम इति कृत्वा सर्वनामसंज्ञः—इत्याह । तन्न । 'एक'शब्दस्य बहुषु सङ्केतितस्य सञ्ज्ञात्वौचित्यात् । यथा प्राचीनबर्हिषः पुत्रेषु संकेतितस्य 'प्रचेतः'-शब्दस्य । 'यथा पूर्वजवृत्ति पूर्व-शब्दः' इति तदीयदृष्टान्तोऽपि चिन्त्यः । पूर्वजवृत्ते 'पूर्व'शब्दस्य व्यवस्थाया सत्त्वात् सञ्ज्ञात्वोक्तिसंभवाभावात् । '**विश्वा** त्वतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु ॥' [इति मेदिनी १५९।२३–२४] ॥ (२) ॥*॥ वसन्तीति वसवः । 'वस निवासे' 'शॄ-स्वॄ-स्निहि-त्रप्यसि-वसि-हनि-क्लिदि-बन्धि-मनिभ्यश्च' (उ० १।१०) इति उः । 'विभ्वस्य वसुराटोः' ( ६।३।१२८ ) इति दीर्घो न । असंज्ञात्वात् । [ '**वसु**स्तत्वग्नौ देवभेदे नृपे रश्मौ' । योक्त्रे शुष्के **वसु** स्वादौ' रत्ने वृद्ध्यौषधे धने ॥' इति हैम. २।६०४ ] ॥ (३) ॥*॥ तुष्यन्ति । 'तुष तुष्टौ'[3] [ दि० प० से० ] । 'रुचिकुटिकुषिभ्यः कितच्'[4] (उ० ४।१८६) इति बाहुलकात् कितच् । यद्वा—तोषणं तुट् । सम्पदादि ( वा० ३।३।१०८) । ततः 'तारकादित्वादितच्' (५।२।३६) ॥ (४) ॥*॥ आ समन्ताद्भासनशीलाः । 'भासृ दीप्तौ' (भ्वा० आ० से०) । 'स्थेशभासपिसकसो वरच्' (३।२।१७५) ॥ (५) ॥*॥ अनन्त्यनेन । 'अन प्राणने' (अ० प० से०) 'सलिकल्यनिमहि'भण्डिमण्डिशण्डिपिण्डितुण्डिकुकीभूभ्य इलच्' (उ० २।५४) । '**अनिलो** वसुवातयोः' [इति मेदिनी १४९।५७] ॥ (६) ॥*॥ महती राजिः पङ्क्तिर्येषाम् । 'शेषाद्विभाषा' ( ५।४।१५४ ) इति कप् ॥*॥ '**माहाराजिक**' इति पाठे महाराजो देवता येषाम् । 'महाराजप्रोष्ठपदाट्ठञ्' ( ४।२।३५ ) इति ठञ् । यद्यपि—सूक्तहविर्भागिन एव देवतात्वम्, तथापि 'आग्नेयो वै ब्राह्मण' इतिवदुपचारो बोध्यः ॥(७) ॥*॥ साध्यं सिद्धिः । 'साध संसिद्धौ' ( स्वा० प० अ० ) । 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) इति भावे ण्यत् । साऽस्त्येषाम् । अर्शआद्यच् ( ५।२।१२७ ) । '**साध्यो** योगान्तरे सुरे[1] । गणदेवविशेषे च साधनीये च वाच्यवत् ॥' [ इति मेदिनी ११७।६२] ॥ (८) ॥*॥ रोदयन्त्यसुरान् । 'रुदिर् अश्रुविमोचने' ( अ० प० से० ) । 'रोदेर्णिलुक् च' ( उ० २।२२ ) इति रक् णेश्च लुक् ॥ ( ९ ) ॥ नव '**गणदेवानाम्**' ।

**विद्याधराऽप्सरो-यक्ष-रक्षो-गन्धर्व-किंनराः ।**
**पिशाचो[2] गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११ ॥**

**विद्याधराः ( 'जीमूतवाहन,…' ), अप्सरसः ( स्त्री, नि० ब०, देवताओंकी स्त्रियाँ ), यक्षाः ( कुबेर,…… ), रक्षांसि ( = रक्षस्, न । लङ्कावासी माया करनेवाले ), गन्धर्वाः ( देवताओंके यहाँ गानेवाले ), किंनराः, ( घोड़ेका मुँह तथा आदमीके शरीरवाले और आदमीका मुँह तथा घोड़ेके शरीर वाले ), पिशाचाः ( मांसभोजी भूतविशेष ), गुह्यकाः ('मणिभद्र,……' ), सिद्धाः ( 'विश्वावसु,…' ), भूताः ( शिवके गणविशेष-प्रमथ… । शे० ८ पु ), 'देवयोनि' के १० नाम हैं ( इनका प्रयोग तीनों वचनोंमें होता है )।**

**विद्येति** ॥ 'विद्याधरो[3]ऽप्सरो–'इति पाठः । भिन्नलिङ्गत्वादयेऽनभिधानादसमासः । विद्याया गुटिकाञ्जनादिविषयिण्या धरो धारकः । यत्तु—'विद्यां धरति' इति मुकुट आह । तन्न । पचाद्यच् (३।१।१३४) अपवादत्वादण्[4] ( ३।२।१ ) प्रसङ्गात् ॥ ( १ ) ॥*॥ अद्भ्यः सरन्ति । 'सर्तेरसुन्'[5] ( उ० ४।२३७ ) ॥ ( २ ) ॥ ॥ यक्ष्यते पूज्यते 'यक्ष पूजायाम्' ( चु० आ० से० ) । 'अकर्तरि च कारके सञ्ज्ञायाम्' ( ३।३।१९ ) इति कर्मणि घञ् । '**यक्षो** गुह्यकमात्रे च गुह्यकाधीश्वरेऽपि च ।' [ इति मेदिनी १६७।२२] । इः कामः, तस्येवाक्षिणी अस्येति वा, इरक्षिषु यस्येति वा । 'बहुव्रीहौ सक्थ्यक्ष्णोः–' (५।४।११३) इति षच् ॥ (३) ॥*॥ रक्षन्त्येभ्यो रक्षांसि । 'रक्ष पालने' (भ्वा० प० से०) ।

---

१. 'रुचि' इति पा० ।
२. 'स्वर्णे' इति पा० ।
३. 'तुष प्रीतौ' इति पाठो धातुपाठे ।
४. 'रुचिवचिकुचिकुटिभ्यः कितच्' इति पा० ।
५ '–भडिभण्डि–' इति पा० ।

१ 'शरे' इति मेदिनीपाठः ।
२. तत्र च द्वितीयमर्धम्—"सिद्धगुह्यकभूता हि पिशाचा देवयोनयः । इति भागुरिः पपाठ ।" इति क्षी० स्वा० ।
३. इति महेश्वरसम्मतः पाठः ।
४. 'कर्मण्यण्' इत्यनेन प्राप्तस्य ।
५ 'सर्त्तेरप्पूर्वादसिः' इत्यसिरिति वक्तव्यमासीत् ।

'सर्वधातुभ्योऽसुन्' ( उ० ४।१८९ ) ॥ (४) ॥*॥ गन्धं सौरभमर्वन्ति गन्धर्वं । 'अर्वं गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) शकन्ध्वादि ( वा० ६।१।९४ ) ॥ ( ५ ) ॥ * ॥ अश्वमुखत्वात्कुत्सिता नरा । 'किं क्षेपे' (२।१।६४) इति समास ॥ (६) ॥*॥ पिशितमश्नाति । 'अश भोजने' (क्र्या० प० से०) । 'कर्मण्यण्' ( ३।२।१ ) 'पृषोदरादि' (६।३।१०९) । मध्यताऽव्य ॥ (७) ॥*॥ गूहन्ति निधिं रक्षति । 'गुहू संवरणे' ( भ्वा० उ० से० ) । 'ण्वुल्' ( ३।१।१३३ ) । पृषोदरादित्वाद् [ ६।३।१०९ ] यशागम । तथा च व्याडिः—'निधिं रक्षन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञका' इति । यद्वा—गुह्य कुत्सित कायति । 'कै शब्दे' (भ्वा० प० अ०) 'आतोऽनुपसर्गे क' (३।२।३) । गुह्य गोपनीय क सुख यस्येति वा । अनयो पक्षयो 'शमिदुहिगुहिभ्यो वा' (वा० ३।१।१०९) इति काशिकाकारवचनाद् गुहे क्यप् । तत्र दुहि-गुह्योर्ग्रहण निर्मूलमिति भट्टोजिदीक्षिताः । तन्मते ण्यति संज्ञापूर्वकत्वान्न गुण ॥ ( ८ ) ॥ * ॥ असेधीदिति सिद्ध । 'षिधु हिंसासंराद्ध्योः' ( दि० प० से० ) । 'गत्यर्थाकर्मक–' ( ३।४।७२ ) इति कर्तरि क्त । सिद्धिरस्यास्तीति वा । अर्शआद्यच् । ['सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयो । नित्ये प्रसिद्धे' इति हैम २।२५८] ॥ ( ९ ) ॥*॥ भूतिरस्यास्ति । अर्शआद्यच्(५।२।१२७)। भूत । ['भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरेषु ना ।।' इति मेदिनी ५७।४१–४२] । भवति इष्ट प्राप्नोति । 'भू प्राप्तौ' ( चु० आ० से० ) । 'गत्यर्थाकर्मक–'(३।४।७२) इति क्त –इति मुकुटः । तन्न । प्राप्त्यर्थस्यागत्यर्थाकर्मकत्वात् वर्तमानविग्रहायोगाच्च ॥ (१०) ॥*॥ अमी विद्याधरादयो दश, देवा योनिरेषा ते देवयोनय । देवाशका इत्यर्थ । यत्तु—'देवानामिव योनिरुत्पत्तिकारणमविभाव्यमेषाम्' इति मुकुटो व्याख्यत् । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् । श्लोकोपक्रमस्थग्रन्थविरोधाच्च । दश 'देवयोनयः' ।

**असुरा दैत्य दैतेय-दनुजेन्द्रारि-दानवाः ।**
**शुक्रशिष्या दितिसुताः पूर्व-देवाः सुरद्विषः ॥ १२ ॥**

असुरः, दैत्यः, दैतेय', दनुज', इन्द्रारिः, दानवः, शुक्रशिष्यः, दितिसुतः, पूर्वदेव', सुरद्विट् ( = सुरद्विष् । १० पु ) 'दैत्य के १० नाम हैं।

असुरा इति ॥ अस्यन्ति क्षिपन्ति देवान् असुरा । 'असु क्षेपणे' (दि० प० से०) । 'असेरुरन्' (उ० १।४२) इत्युरन् । सुरविरुद्धत्वाद्वा । 'नञ्' ( २।२।६ ) इति तत्पुरुष । प्रज्ञादणि ( ५।४।३८ ) आसुराश्च । असुषु रमन्ते वा । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । [ 'असुरः सूर्यदैत्ययो । असुरा रजनीवास्यो'[१] इति हैम ३।५५३ ] ॥ (१) ॥*॥ दितेरपत्यानि । 'दित्यदित्या–' ( ४।१।८५ ) इति ण्य । 'दैत्योऽसुरे सुरायां तु दैत्या चण्डौषधावपि ।' [इति मेदिनी ११५।३०] ॥ (२) ॥*॥ ढीपन्तात् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ ( ३ ) ॥*॥ दनोर्दनौ वा जाता । 'सप्तम्या जनेर्ड', 'पञ्चम्यामजातौ' (३।२।९७–९८) ॥ ( ४ ) ॥*॥ इन्द्रस्यारय ॥ (५) ॥*॥ दनोरपत्यानि ॥ ( ६ ) ॥ * ॥ शुक्रस्य शिष्या ॥ (७) ॥*॥ दिते सुता ॥ (८) ॥*॥ पूर्वे च ते देवाश्च। 'पूर्वापरप्रथम–' ( २।१।५८ ) इत्यादिना समास । यद्वा–पूर्वं देवा । अन्यायाद्धि देवत्वाद्भ्रष्टा । 'सुप्सुपा' ( २।१।४ ) इति समास । पूर्वे देवा येभ्यो वा । 'अनेकमन्यपदार्थे' (२।२।२४) इति बहुव्रीहि ॥ (९) ॥*॥ सुरान् द्विषन्ति । 'द्विष अप्रीतौ' ( अ० उ० अ० ) । 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥ (१०) ॥*॥ यद्यपि पातालवासित्वेन पातालवर्गे वक्तु युक्ता , तथापि देवविरोधित्वेन बुद्ध्युपारोहादिहैवोक्ता । दश नामानि 'असुराणाम्' ।

**सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।**
**समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३ ॥**
**षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।**
**मुनीन्द्रः श्रीघनः शास्ता मुनिः—**

**सर्वज्ञः, सुगतः, बुद्ध', धर्मराज', तथागतः, समन्तभद्रः, भगवान् ( = भगवत् ), मारजित् , लोकजित्, जिन', षडभिज्ञ', दशबल', अद्वयवादी ( = अद्वयवादिन् ), विनायकः, मुनीन्द्रः, श्रीघन', शास्ता ( शास्तृ ), मुनिः ( १८ पु ) 'बुद्ध' के १८ नाम हैं।**

सर्वज्ञ इत्यादि ॥ सर्वं जानाति । 'ज्ञा अवबोधने' (क्र्या० प० अ०) । 'आतोऽनुपसर्गे क' (३।२।३) । यद्वा–सर्वे ज्ञा यस्य । स्वात्मन सर्वस्यापरोक्षत्वात् । 'य[२] साक्षादपरोक्षात्' इति श्रुतेः । यद्वा–सर्वे ज्ञा यस्मात् । 'यथाऽग्ने क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मन सर्वे प्राणा सर्वे लोका सर्वे देवा सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति' इति श्रुते । यद्वा–सर्वे ज्ञा येन । 'तस्य भासा सर्वमिद विभाति' इति श्रुते । 'सर्वज्ञस्तु जिनेन्द्रे स्यात् सुगते शङ्करेऽपि च ।' [इति हैम ३।१५०] ॥ (१) ॥*॥

१ गत्यर्थक 'अर्व'धातु पवर्गान्त , दन्त्योष्ठ्यान्तस्तु हिंसार्थक इत्यवधेयम् ।

२. '–व्याडचादिके' इति पा० ।

१ '–राशयो ' इति पा० ।

२. 'यत् साक्षादपरोक्षाद्' इति पाठ साधीयान् ।

शोभनं गतं ज्ञानमस्य ॥ (२) ॥*॥ बुध्यते स्म, बुद्धिरस्य । अर्शआद्यच् (५।२।१२७) । यद्वा—बुध्यते स्म । 'मतिबुद्धि-' (३।२।१८८) इति क्तः ॥*॥ 'इगुपध-' (३।१।१३५) इति के 'बुधः' अपि । 'सर्वज्ञः सुगतो बुधः' इति व्याडिः ॥ (३) ॥*॥ धर्मेण राजते । पचाद्यच् (३।१।१३४)। धर्मस्य राजेति वा । 'राजाहःसखिभ्यष्टच्' (५।४।९१) । ['धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्' इति मेदिनी ३२।३३] ॥ (४) ॥*॥ तथा गतस्य गतं ज्ञानं यस्य ॥ (५) ॥*॥ समन्तं भद्रमस्य सः । समन्ताद्भद्रमस्येति तु व्यधिकरण-त्वादनुचितम् ॥ (६) ॥*॥ भगं माहात्म्यमस्यास्ति । मतुप् (५।२।९४)॥ (७) ॥*॥ मारं कामं जयति । 'सत्सूद्विष-' (३।२।६१) इति क्विप् ॥ (८) ॥*॥ लोकं जयति ॥ (९) ॥*॥ जयति जिनः । 'इण्षिञ्जिदीङुष्यविभ्यो नक्' (उ० ३।२) । 'जिनाति' इति स्वामिमुकुटौ । नश्च । 'अङ्गस्य', 'हलः' (६।४।१-२) इति दीर्घप्रसङ्गात् । ['जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु' इति मेदिनी ८३।८] ॥ (१०) ॥*॥ दिव्यं चक्षुः, श्रोत्रम्, परचित्तज्ञानम्, पूर्वनिवासानुस्मृतिः, आत्मज्ञानम्, वियद्-गमनम्, कायव्यूहसिद्धिश्चेति षट् अभिज्ञा ज्ञायमानानि यस्य सः । षट्सु दानशीलक्षान्तिवीर्यध्यानप्रज्ञासु अभिज्ञा आद्यं ज्ञानमस्येति वा ॥ (११) ॥*॥ दश बलान्यस्य । यदाहु—'दानं शीलं क्षमा वीर्यं ध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै' ॥ इति (१२) ॥*॥ अद्वयमद्वैतं वदत्यवश्यम् । आवश्यके (३।३।१७०) णिनिः ॥ (१३) ॥*॥ विनयत्यनुशास्ति । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । ण्वुल् (३।१।१३३) । ['विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' इति मेदिनी १७।२१३] ॥ (१४) ॥*॥ मुनिषु इन्द्रः ॥ (१५) ॥*॥ श्रिया घनः पूर्णः । क्षुभ्नादित्वात् (८।४।३९) न णत्वम् ॥ (१६) ॥*॥ शास्तीति शास्ता । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २।९४) इति तृन् तृच् वा । पितृवच्छास्तृशब्दः । नप्त्रादिग्रहणस्य (६।४।११) नियमार्थत्वात् । चान्द्रे शासेस्तिचि शिष्टिरित्यत्र 'शास्ता' इति प्रत्युदा-हरणेऽनौणादिकतृच एव रत्नमतिना दर्शितत्वाद् बुद्धवाचि-नोऽपि दीर्घः—इति सुभूतिः । तन्न । तृचस्तस्येट्प्रसङ्गात् । अनौणादिकतृच एवेत्यत्र प्रमाणाभावाच्च । ['शास्ता सर्व-ज्ञभद्रे ना शासके पुनरन्यवत्' इति मेदिनी ५८।६३] ॥ (१७) ॥*॥ मन्यते मुनिः । 'मनेरुच्च' (उ० ४।१२३) इतीन् । ['मुनिर्वाचंयमेऽर्हति । प्रियालागस्तिपालाशे' इति हैमः २।२८२] ॥ (१८) ॥*॥ अष्टादश बुद्धस्य[3] ।

१ 'शासने' इति पा० ।
२. 'प्रियालागस्तिपालाश-' इति पा० ।
३. इमानि नामानि बुद्धसामान्यस्य बोध्यानि । वक्ष्य-

शाक्यमुनिस्तु यः ॥ १४ ॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥ १५ ॥

शाक्यमुनिः, शाक्यसिंहः, सर्वार्थसिद्धः, शौद्धोदनिः, गौतमः, अर्कबन्धुः, मायादेवीसुतः (७ पु), 'बुद्धके अवान्तर भेद, सप्तम बुद्ध' के ७ नाम हैं ।

शाक्येत्यादि ॥ [1]शकोऽभिजनोऽस्य । 'शण्डिकादिभ्यो ञ्यः' (४।३।९२) । यद्वा—'शाकवृक्षप्रतिच्छन्नं वासं यस्मा-च्च चक्रिरे । तस्मादिक्ष्वाकुवंश्यास्ते शाक्या इति भुवि स्मृ-ताः ॥' इत्यागमात् शाके भवाः शाक्याः । दिगादित्वाद्यत् (४।३।५४) प्रत्ययः । तद्वंशावतीर्णो मुनिः । शाक्यश्चासौ मुनिश्चेति ॥ (१) ॥*॥ [2]शाक्यः सिंह इव । 'उपमितं व्याघ्रा-' (२।१।५६) इति समासः ॥*॥ भीमवत् 'शाक्यः' अपि ॥ (२) ॥*॥ सर्वार्थेषु सिद्धो निष्पन्नः । 'सिद्धशुष्क-' (२।१।४१) इति समासः । सर्वोऽर्थः सिद्धोऽ-स्येति वा ॥*॥ 'सिद्धार्थः' अपि । 'सिद्धार्थौ बुद्धसर्षपौ' इति शाश्वतः [५९८] ॥ (३) ॥*॥ शुद्ध ओदनोऽ-स्येति । शकन्ध्वादि (वा० ६।१।९४) । शुद्धोदनस्याप-त्यम् । 'अत इञ्' (४।१।९५) ॥ (४) ॥*॥ गोतम-स्यायं शिष्यः । 'तस्येदम्' (४।३।१२०) इत्यण् । 'तद्गोत्रा-वतारात्' इति स्वामी । ['गौतमो गणभृद्भेदे शाक्यसिंह-र्षिभेदयोः । गौतमी तु माया रोचन्याम्[3]' इति हैमः ३।४९४-९५] ॥ (५) ॥*॥ अर्कस्य बन्धुः । सूर्यवंशजत्वात् ॥ (६) ॥*॥ माया चासौ देवी च । तस्याः सुतः ॥ (७) ॥*॥ यद्यपि वेदविरुद्धार्थानुष्ठातृत्वाज्जिनशाक्यौ नरकवर्गे वक्तुमुचितौ । तथापि देवविरोधित्वेन बुद्धपुराणोक्तेरत्रै-वोक्तौ । सप्त 'शाक्यस्य' ।

[4]ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।
हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ॥ १६ ॥
धाताऽब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः ॥ १७ ॥
नाभिजन्माऽण्डजः पूर्वो निधनः कमलोद्भवः [1]

माणशाक्यमुन्यादीनि च सप्तमबुद्धस्य । एवं च सप्त बुद्धाः सन्ति, तेषु षट्—"बुद्धाः स्युः सप्त ते त्वमी । विपश्यी शिखी विश्वभूः ककुच्छन्दश्च काञ्चनः ॥ काश्यपश्च" (अभि० चि० २।१४९-५०), सप्तमस्तु 'शाक्यमुनिः' ।'
१ एतत्पूर्वं (य.) इत्यधिकं नि० पु० ।
२. एतत्पूर्वं (स) इत्यधिकं नि० पु० ।
३. 'राजन्याम्' इति पा० ।
४. इतः पूर्वं "सर्वज्ञो वीतरागोऽर्हन् केवली तीर्थकृ-ज्जिनः ।" इत्यधिकं पा० ।

याति वा। 'या गतौ' (अ० प० अ०)। 'आतः—' (३।२।३) इति कः। 'अभो पितामहो ब्रह्मपिता शब्दाद्यधीश्वर' इति पाद्मोक्ते। यत्तु—'हन्त्यर्थाद्वधे केशिनं हतवान्'[2]। 'अन्येभ्योऽपि दृश्यते' (वा० ३।२।१०१) इति डः। पृषोदरादित्वात् (६।३।१०९) केशिशब्दस्यैकारस्याकारे नलोपे च केशवः—इति मुकुटः। तन्न। वधधातोरभावात्। वध इत्यादौ वधादेशविधानात्। ['केशवोऽजे च पुन्नागे पुंसि पेशलवति त्रिषु' इति मेदिनी १६०।३४] ॥ (८) ॥*॥ मा या लक्ष्म्या धवः। यद्वा—मधोरपत्यम्। नक्षत्रत्वात् ('मधोरन्तोऽपि वा'[3]) शैषे (४।२।९२) इत्यण्। मा नास्ति धवोऽस्य वा। ['माधवोऽजे मधौ राधे माधवे ना स्त्रियां श्रियाम्। मधुशर्करायां सीधुर्मदिरासु च॥' इति मेदिनी १५१।६६-६७] ॥ (९) ॥*॥ स्वयं भवति। 'भुवः—' (३।२।१७९) इति क्विप्। ['स्वयम्भूर्ना ब्रह्मणि हरे' इति मेदिनी १०५।१०] ॥ (१०) ॥*॥ दैत्यानामरिः ['दैत्यारिः पुंसि दामोदरे च गरुडध्वजे' इति मेदिनी १३५।१७०] ॥ (११) ॥*॥ पुण्डरीकमिवाक्षिणी यस्य। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' (५।४।७३)। पुण्डरीकं व्यक्षि यस्य वा। एतच्च हरिहस्ते साहस्रं कमलबलिमादाय [पदयोर्देवेन लसितम्निजमुदहरन्नेत्रकमलम्।' शिवम० स्वा० १९] इत्यत्र व्यक्तम्। यद्वा—पुण्डरीकं लोकात्मकम् अश्नाति। 'अशू व्याप्तौ' (स्वा० प० से०)। 'कर्मण्यण्' (३।२।१) तत् क्षायति वा। 'क्षै क्षये' (भ्वा० प० अ०) 'आतोऽनुप—' (३।२।३) इति कः। 'अन्येषामपि—' (६।३।१३७) इति दीर्घः। आङ्प्रश्लेषो वा। तत्र 'सुपि' (३।२।४) इति 'मूलविभुजादि—' (वा० ३।२।५) इति कः ॥ (१२) ॥*॥ गां भुवं धेनुं स्वर्गं वेदं वा अविन्दत्। 'विद्लृ लाभे' (तु० उ० अ०)। 'गवादिषु विन्देः संज्ञायाम्' (वा० ३।१।१३८) इति शः। वराहरूपेणोद्धरणात्। कामधेनोरैश्वर्यप्राप्तेः। इन्द्रेण स्वर्गस्य निवेदनात्। मत्स्यादिरूपेण वेदाहरणाद्वा। ['गोविन्दो वासुदेवे स्याद् गवाध्यक्षे बृहस्पतौ' इति मेदिनी ७६।२८] ॥ (१३) ॥*॥ गरुडो ध्वजश्चिह्नमस्य ॥ (१४) ॥*॥ पीतमम्बरं यस्य। ['पीताम्बरस्तु शैलूषे पुंसि कैटभसूदने' इति मेदिनी १४३।२८३] ॥ (१५) ॥*॥ नास्ति च्युतं स्खलनं स्वपदादस्य। नाच्योष्ट इति वा। 'च्युङ् गतौ' (भ्वा० आ० अ०)। 'गत्यर्था—' (३।४।७२) इति क्तः। ['अच्युतस्तु हरौ पुंसि त्रिषु स्थिरे' इति मेदिनी ५९।७९] ॥ (१६) ॥*॥ शृङ्गस्य विकारः शार्ङ्गं धनुः। 'अनुदात्तादेश्च—' (४।३।१४०) इत्यञ्। तदस्यास्ति। 'अत इनिठनौ' (५।२।११५) इति इनिः ॥ (१७) ॥*॥ विषुशब्दो नानार्थो निपातः। विषु नाना अञ्चति। 'ऋत्विग्—' (३।२।५९) इति क्विन्। 'उगितश्च' (४।१।६) इति ङीप्। विषूची सेना यस्य[1]। गकारपरत्वाद् 'एति संज्ञायामगात्' (८।३।९९) इति न षत्वम्। विष्वक्सेनः। 'विष्वग् विश्वक् स्मृतौ विज्ञैर्विषुव विशुव तथा' इति द्विरूपकोशात् तालव्यमध्योऽपि। 'तालव्या मूर्धन्याश्चैते शब्दाः शटी च परिवेषः। विश्वक्सेना शेषः प्रतिष्कशः कोशविशस्त्री च॥' इत्यूष्मविवेकाच्च। 'विष्वक्सेना फलिन्यां स्याद् विष्वक्सेनो जनार्दने।' [इति विश्वः १०१।१९५]। मुकुटस्तु—'पूर्वपदात्संज्ञायामगः' (८।४।३) इति न णत्वम्। विष्वक्शब्दस्य गकारान्तत्वात्। गकारान्तत्वे च णत्वे कर्तव्ये परस्य 'खरि च' (८।४।५५, भा० ६१) इति चर्त्वस्यासिद्धत्वात्—इत्याह। तन्न। 'अट्कुप्वाङ्—' (८।४।२) इत्यधिकारात् ककारव्यवायप्राप्तेरभावात् ॥ (१८) ॥*॥ जननं जनः। 'भावे' (३।३।१८) घञ्। 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः। जनो जन्म। तमर्दयति जनार्दनः। 'अर्द हिंसायाम्' (चु० उ० से०)। नन्द्यादित्वात् (३।१।१३४) ल्युः। जनाः समुद्रस्थदैत्यभेदाः, तेषामर्दन इति वा। [[2]जनैरर्द्यते इति वा। 'अर्द गतौ याचने च'। 'कृत्यल्युटो—' (३।३।११३) इति कर्मणि ल्युट् ॥] ॥ (१९) ॥*॥ इन्द्रमुपगतोऽनुजत्वात् उपेन्द्रः। 'कुगति—' (२।२।१८) इति समासः। यत्तु—'उपगत इन्द्रोऽस्य—' इति। तन्न। 'कुगति—' (२।२।१८) इत्युपन्यासविरोधात् ॥ (२०) ॥*॥ इन्द्रस्यावरे जातः। 'अन्येष्वपि—' (३।२।१०१) इति डः[3]। (२१) ॥*॥ चक्रं पाणौ यस्य। 'प्रहरणार्थेभ्यः—' (वा० २।२।३६)

१ 'यस्मात्त्वया हतः केशी तस्मान्मच्छासनं शृणु। … नाम नाम्ना त्वं ख्यातो लोके भविष्यसि॥' इति … अ० ८१ इति वाचस्पत्याभिधाने पृ० २२४७। …शब्दस्य निरुक्तिद्वयं व्याख्यान्तराणि च तत्रैव द्रष्टव्यानि।

२ इदं खण्डनं 'हतवान्' इति विग्रहमाश्रित्य 'हन्'-धातोर्वधादेश इति मत्वा। वस्तुतस्तु मुकुटो 'वध' धातुं मत्वा तथाह, अत एव 'वध हिंसायाम्—वधकः' इति कृदन्ते उक्तवान् भट्टोजिदीक्षितः। अथ च हनो वधादेशस्यादन्तत्वेनोपधायामचोऽभावाद् वृद्ध्यप्राप्तौ 'जनिवध्योश्च' इति निषेधोऽपि व्यर्थः स्यात्, तस्माद्वधधातोः सत्त्वेन मुकुटोक्तं सङ्गतं प्रतिभाति।

३ कोष्ठस्थः पाठो निर्णयसागरीयः।

४ 'सुपि स्थः' इति सूत्रे 'सुपि' इति योगविभागात्।

१ 'विष्वक् सर्वव्यापिनी सेनास्येति विष्वक्सेनः' इति क्षी० स्वा०।

२ कोष्ठस्थः पाठो निर्णयसागरीयः।

३ इतः परं [इन्द्रोऽज उपेन्द्रो वा] इत्यधिकं लि० पु०।

इति सप्तम्या. पररवम् ॥ ( २२ ) ॥ * ॥ चत्वारो भुजा यस्य । यद्वा—'भुङ्क्ते भुनक्ति' इति भुज । चतुर्णा धर्मार्थकाममोक्षाणां भुज ॥ (२३) ॥*॥ पद्म नाभौ यस्य।[1] 'अच् प्रत्यन्वव-' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच्॥ (२४) ॥*॥ मधोरसुरस्य रिपु ॥ (२५) ॥*॥ वसुदेवस्यापत्यम् । 'ऋष्यन्धक–' (४।१।११४) इत्यण् । यद्वा—वसतीति वासु । 'बाहुलकादुण्' । वासुश्चासौ देवश्च । 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यत तनोऽसौ वासुदेवेति विद्वद्भि परिगीयते ॥' इति विष्णुपुराणात् । वसुदेवे गुद्धान्त करणे प्रकाशते इति वा । 'लेपे' ( ४।२।९२ ) इत्यण ॥ * ॥ वासुरपि । 'वासुर्नारायणपुनर्वसुविश्वरूपा ' इति त्रिकाण्डशेषात् [१।१।२९] ॥ (२६) ॥ * ॥ त्रिषु लोकेषु गुणेषु वा, त्रयो वा विक्रमा पादविन्यासा यस्य ॥ (२७) ॥*॥ देवक्या नन्दन । देवकशब्दस्य नदयन्ते लक्षणया वृत्तौ 'पुयोगात्–' ( ४।१।४८ ) इति ङीप् । 'नहि नन दाम्पत्यलक्षण एव पुयोग, कि तु जन्यजनकभावोऽपि' इति हरदत्तादयः । अत एव 'प्राक् केकयीतो भरतस्ततोऽभूत्' इति भट्टिः [ १।१४ ] । एव रैवतीरमणोऽपि ॥ * ॥ अपि तु दैवकी । 'दैवकी देवकी' च' इति द्विरूपकोषः ॥ ॥ देवकानाचष्टे इति 'णिजन्तात् 'अच इ' (उ० ४।१३९) । 'ततो ङीप्' ( वा० ४।१।४५ ) इति, देवकस्यापत्यं वा । 'अत इञ्' ( ४।१।९५ ) मनाद्यपूर्वत्वाद्वृद्ध्यभाव । 'इतो मनुष्यजाते ' ( ४।१।६५ ) इति ङीप् —इति च मुकुट. ॥ ( २८ ) ॥*॥ शूरस्यापत्यम्, तद्गोत्रजत्वात् । वष्णिभ्योऽपि बाह्वादित्वात् (४।१।९६) इञ् ।' ॥ 'शौरी यादवे' इत्ययवान्' इति माधवी । 'सौरिः' अपि ॥ (२९) ॥*॥ श्रिय पतिः [ श्रीपतिर्विष्णुश्शुरो ' इति हैम, २।१२६ ] (३०) ॥*॥ पुरुषेषूत्तम, पुरुषाणा पुरुषेभ्यो वोत्तम ॥ (३१) ॥*॥ 'आपादपद्मं या माला वनमालेति' गा मता' इति कलिङ्गः । मास्यास्ति । व्रीह्यादित्वात् (५।२।११६) इनिः । वन मलितु शीलमस्य इति वा । 'मल धारणे' (क्षा० आ० से०) । 'सुपि–' ( ३।२।७८ ) इति णिनि । ['वनमाली तु गोविन्दे वाराहा वनमालिनी' इति मेदिनी १००।४२ ] ॥ ( ३२ ) ॥*॥ बलिमसुरं ध्वंसितुं शीलमस्य । ताच्छील्ये (३।२।७८) णिनि । बलिना पूजादिनाविधा ध्वसितु शीलमस्येति वा ॥ ( ३३ ) ॥*॥ कंसस्यारातिः ॥ ( ३४ ) ॥*॥ अथ कृतम् अक्षजमैन्द्रियक ज्ञान येन, अधोऽक्षाणा जितेन्द्रियाणा जायते प्रत्यक्षो भवति वा, अध अक्षज ज्ञान यस्येति वा[1] ॥ ( ३५ ) ॥ * ॥ विश्वं बिभर्ति । 'सञायां भृतृवृजि–' ( ३।२।४६ ) इति खच् । 'अरुर्द्विषद्–' ( ६।३।६७ ) इति मुम् । 'विश्वम्भरोऽच्युते शक्रे पुमि, विश्वम्भरा भुवि' [ इति मेदिनी १४४।२९५] ॥ (३६) ॥*॥ कैटभमजैषीत् । 'सत्सूद्विष–' ( ३।२।६१ ) इति क्विप् ॥ (३७) ॥*॥ विध्यत्यसुरान् । 'पृभिदिव्यधिगृधिधृषिभ्य ' ( उ० १।२३ ) इति कु ['विधुश्चन्द्रेऽच्युते' इति हैमः २।२५३ ] ॥ ( ३८ ) ॥*॥ वदति महत्त्वम् । 'वृ-तृ-वदि-वचि-वसि[2]-हनि-कमि-कषिभ्य स ' (उ० ३।६२) वत्स । श्रीयुक्तो वत्स । श्रीवत्सो महत्त्वलक्षणं रवेतरोमावर्तविशेषो लाञ्छन यस्य ॥*॥ 'श्रीशिश्रीवत्सवत्सादयोऽपि विष्वक्सेनजनार्दना ' इति शब्दार्णवात् । श्रीवत्सः' अपि ॥ ( ३९ ) ॥ * ॥ ऊनचत्वारिंशत् विष्णो.[3] ।

**वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ २२ ॥**

वसुदेव, आनकदुन्दुभि. ( २ पु ), 'कृष्णके पिता' के २ नाम हैं।

**वसुदेव इत्यादि** ॥ वसुषु दीव्यति । 'दिवु क्रीडादौ' (दि० प० से०) । पचाद्यच् ( ३।१।१३४ ) । यत्तु—'वसुभिर्दीव्यति' इति विगृह्य पचाद्यच् (३।१।१३४)—इत्याह मुकुट । तन्न । 'कर्मण्यण्' ( ३।२।१ ) इत्यपवादस्य सत्त्वात् । 'दिव कर्म च' (१।४।४३) इति करणस्य कर्मसज्ञा विधानात् । वसूनि दीव्यतीति विग्रहस्य वैयर्थ्यांच्च ॥ ( १ ) ॥ * ॥ आनकैर्दुन्दुभिभिश्चोपलक्षित । वसुदेवजन्मनि देवैरानकदुन्दुभिवादनात् । हरौ जाते, कृष्णे जाते. इति स्वामिमुकुटोक्तिस्तु भागवताद्यश्रवणमूलिका । 'आनकदुन्दुभो वसुदेवपिता' इत्यपि निर्मूलम् ॥ (२) ॥*॥ विष्णुनामसु, कृष्णनामोपगमात् कृष्णस्यैव विष्णुत्वमभिप्रैति ग्रन्थकृत् । अवतारान्तराणा तु तदंशत्वात्तन्नामानि नोक्तानि । '[3]अन्ये त्वंशकला पुसः कृष्णस्तु भगवान् स्वयम्' [ भागवते १।३।२८ ] इति वदतो व्यासस्याप्ययमाशयो

१. इत.पर ('गड्वादित्वात् (वा० २।२।३५) सप्तम्या परनिपात.') इत्यधिक नि० पु० ।

२ शब्दभेदप्रकाशे तु 'देवकी दैवकीति च' इति पाठ ।

३. 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति गणसूत्रेण विहितादिति भाव ।

४. 'शूर सूरश्च कथित ' इति शब्दभेदप्रकाशात् (१८) च तालव्यादिर्दन्त्यादिश्च ।

५. 'पुष्पफलपल्लवसमन्विता वनमालाऽस्यास्तीति वनमाली' इति स्वाम्याह । 'आपादलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्तिता ॥' इति वाचस्पत्यम् ( पृ० ४८४५ ) ।

१ तदुक्त वाचस्पत्ये—'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षज ।' इति । अथ च 'द्यौरक्षं पृथिवी चाधस्तायोर्यस्मादजायत। मध्ये वैराजरूपेण ततोऽधोक्षज उच्यते ॥' इति च ( पृ० १३६ ) ।

२ अय पाठो वेदाङ्गप्रकाशोणादिसूत्रपाठाऽनुगत , सिद्धान्तकौमुद्या तु 'वृतृवदिहनिकमिकषिभ्य स ' इत्येव ।

३ 'एते' इति पा० ।

जनेभ्य इत्युपसर्जनात्स्य —इति । नञ । एतादृशाभावात । पञ्चजन पाताल भव इति स्वामी । ['पाञ्चजन्य पाटगरे' इति हैम ४।२२३ । विष्णुशङ्ख हुताशन इति मेदिनी १ ।१ ] ॥(१)॥ ॥ एकम् 'विष्णुशङ्खस्य' ।

चक्र सुदर्शन ।

सुदर्शन (पु न)—भगवान् विष्णुके 'चक्र का नाम 'सुदर्शन' है।

चक्रमिति ॥ शोभन दर्शनमस्य । सुष्ठु दृश्यत इति वा । भ पाया दा मिर्यविदनिमृपिभ्यो युच ( वा० ३।२। १३० ) । सुदर्शना स्त्र्यन मेरजम्बुद्रुम पुमान । न द्वयो रथाङ्गे आज्ञापरिभिन्न नियाम ॥ [इति मेदिनी ९०। १२३ ] । 'सुदर्शनोऽस्त्रिया चक्र इति नामलिङ्गानुशासन क्लीवेऽपि । (१) ॥ ॥ एकम् 'विष्णुचक्रस्य' ।

कौमोदकी गदा

कौमोदकी (स्त्री)—भगवान् विष्णुकी 'गदा का नाम 'कौमोदकी' है।

कौमोदकीति ॥ पाण्डवत्वात को पृथिव्या मोदक कुमोदको विष्णु । विष्णु कुमोदक गौरि इति दुग । तस्येय ॥ ॥ सूपोदकाज्जातत्वात कौमोदकी इति तु स्वामी ॥ (१) ॥ ॥ गदति । पचाद्यच (३।१।१३४) । 'गदो भ्रातरि विष्णोश्च आमय नायुधे गदा' [इति मेदिनी ७४।४] । एकम् 'विष्णुगदायाः' ।

खड्गो नन्दक

नन्दक (पु)—भगवान् विष्णु की 'तलवार का नाम 'नन्दक' है।

खड्ग इति ॥ न दयति [ टुनदि समृद्धौ भ्वा० प० से०] दवात ण्वुल ( ३।१।१३३ ) । 'नन्दको हरिखड्ग च हर्षक कुलपालक [ इति मेदिनी ९।११० ] ॥ ( १ ) ॥ ॥ एकम् 'विष्णो खड्गस्य' ।

कौस्तुभो मणि ॥ २८ ॥

चाप शार्ङ्ग मुरारेस्तु श्रीवत्सो लाञ्छन स्मृतम [११]

अश्वाश्च शैब्यसुग्रीवमेघपुष्पबलाहका [१०]

सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गद [१२]

कौस्तुभ (पु)—भगवान् विष्णुकी मणिका नाम 'कौस्तुभ' है।

[ शार्ङ्गम् (न)- विष्णुका धनुष , श्रीवत्स (पु)- विष्णुका चिह्न', शैब्य , सुग्रीव , मेघपुष्प , बलाहक (४ पु), ४ 'विष्णुके घोडे', दारुक (पु)- विष्णुका सारथी , उद्धव (पु)-'विष्णुका मन्त्री' और गद (पु) 'विष्णुका छोटा भाई' है।]

कौस्तुभ इति ॥ कु भुव स्तुभ्नाति व्याप्नाति कुस्तुभोऽब्धि तत्र भव । कु स्ताभते कुस्तुभो विष्णु । ष्टुभ स्तम्भे ( भ्वा० आ० से० ) । मूलविभुजादित्वात ( वा० ३।२।५) क । तस्यायमिति वा ॥ ( १ ) ॥*। लक्ष्मीपते ' इति एतत्पर्यन्त सबध्यते । एकम् 'विष्णोर्मणे ' ।

गरुत्मान् गरुडस्तार्क्ष्यो वैनतेय खगेश्वर ।

नागान्तको विष्णुरथ सुपर्ण पन्नगाशन ॥ २९ ॥

गरुत्मान् (=गरुत्मत्), गरुड , तार्क्ष्य , वैनतेय , खगेश्वर , नागान्तक , विष्णुरथ , सुपर्ण , पन्नगाशन (९ पु), 'गरुड' के ९ नाम है।

गरुत्मानिति ॥ गरुत पक्षा सन्त्यस्य । मतुप (५।२। ९४) यवादित्वान ( ८।२।९ ) वत्व ( ८।२।१० ) इति वत्व न ॥ (१) ॥ ॥ गरुद्भिर्डयते । डीङ् विहायसा गती (भ्वा० आ० से०) । अन्यष्वपि-- (वा० ३।२।१०१) इति ड । पृषोदरादि वात (५।३।१०९) तलोप ॥ (२) ॥ ॥ तार्क्ष्यस्य कश्यपस्यापत्यम् । ऋष्यण् (४।१।११४) । बहुत्व तार्क्ष्या । तृक्षस्यापत्यम् गर्गादित्वात (४।१।१०५) यञ्वा । बहुत्व तृक्षा इत्यन्ये । [ तार्क्ष्यस्तु स्यन्दने वाहे गरुडे गरुडाग्रजे अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यं तु रसाञ्जने । अहौ च[1] इति हैम २।३६७] ॥ ( ३ ) ॥*॥ विनताया अपत्यम् । स्त्रीभ्यो ढक् (४।१।१२०)। [ वैनतेयस्तु गरुडे स्यादरुणे रविसारथौ इति मेदिनी १२२। १२८] ॥ ( ४ ) ॥ ॥ खगानामीश्वर । (५) ॥*॥ नागानामन्तक ॥ ( ६ ) ॥*॥ विष्णो रथ इव । यद्वा— 'रथ पौरुषदेहयो' इति त्रिकाण्डशेष [ ३।३।१११ ] । विष्णो रथ पौरुष देहो वा । 'वैनतेयश्च पक्षिणाम्' इति गीता [१०।३०] ॥ ( ७ ) ॥ * ॥ कनकमयत्वात्पत्नत्वाद्वा शोभन पर्णं पक्षावस्य । [ सुपर्ण स्वर्णचूडे च गरुडे कृतमालके । सुपर्णी कद्रुभगिन्या च वैनतेयस्य मातरि ॥ इति मेदिनी ५१।८५-८६] ॥ (८) ॥*॥ पन्नगानश्नाति । अश भोजन (अ० प० से०) । ल्यु (३।१।१३४) । पन्नगा अशन यस्येति वा ॥ (९) ॥*॥ नव 'गरुडस्य' ।

शम्भुरीश पशुपति शिव शूली महेश्वर ।

ईश्वर शर्व ईशान शङ्करश्चन्द्रशेखर ॥ ३० ॥

भूतेश खण्डपरशुर्गिरीशो गिरिशो मृड ।

मृत्युंजय कृत्तिवासा पिनाकी प्रमथाधिप ॥ ३१ ॥

उग्र कपर्दी श्रीकण्ठ शितिकण्ठ कपालभृत् ।

वामदेवो महादेवो विरूपाक्षस्त्रिलोचन ॥ ३२ ॥

कृशानुरेता सर्वज्ञो धूर्जटिर्नीललोहित ।

हर स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तक ॥ ३३ ॥

गङ्गाधरोऽन्धकरिपु क्रतुध्वंसी वृषध्वज ।

व्योमकेशो भवो भीम स्थाणू रुद्र उमापति ॥ ३४ ॥

अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानट. [१४]

शम्भु , ईश , पशुपति , शिव , शूली (=शूलिन्), महेश्वर , ईश्वर , शर्व , ईशान , शङ्कर , चन्द्रशेखर , भूतेश , खण्डपरशु , गिरीश , गिरिश', मृड , मृत्युञ्जय , कृत्तिवासा'

१ अहौ च इति क्वचिन्नोपलभ्यते ।

(=कृत्तिवासस्), पिनाकी (=पिनाकिन्), प्रमथाधिपः, उग्रः, कपर्दी (=कपर्दिन्), श्रीकण्ठः, शितिकण्ठः, कपालभृत्, वामदेवः, महादेवः, विरूपाक्षः, त्रिलोचनः, कृशानुरेताः (=कृशानुरेतस्), सर्वज्ञः, धूर्जटिः, नीललोहितः, हरः, स्मरहरः, भर्गः, त्र्यम्बकः, त्रिपुरान्तकः, गङ्गाधरः, अन्धकरिपुः, क्रतुध्वंसी (=क्रतुध्वंसिन्), वृषध्वजः, व्योमकेशः, भवः, भीमः, स्थाणुः, रुद्रः, उमापतिः (४८ पु) 'शिव' के ४८ नाम हैं।

[अहिर्बुध्न्यः, अष्टमूर्तिः, गजारिः, महानटः (४ पु), 'शिव' के ४ नाम हैं।]

शंभुरिति ॥ शं सुखं भवति । अन्तर्भावितण्यर्थान् मितद्र्वादित्वात् (वा० ३।२।१८०) डु । यत्तु 'शं भवत्यस्माद्' इति स्वामिमुकुटौ । तन्न । कर्तरि कृत्तो विधानादपादाने डुप्रत्ययाभावात् । [ 'शंभुर्ब्रह्मार्हतो शिवे' इति हैमः २।३१६] ॥ (१) ॥०॥ ईष्टे । 'ईश ऐश्वर्ये' (अ० आ० से०) । इगुपधत्वात् क (३।१।१३५) । [ 'ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके' इति हैमः २।५५६] ॥ (२) ॥ ० ॥ पशूनां जीवानां पतिः । 'निर्यञ्जातौ पशुः प्रोक्तः सर्वप्राणिषु पुस्ययम्' । प्रमथानामिति वा । 'पशुर्मृगादौ छगले प्रमथे च पुमानयम्' इति तालव्यान्ते रभसात् । [ 'पशुपतिः पिनाकिनि हुताशने' इति हैमः ४। १२४] ॥ (३) ॥०॥ शिवमस्यास्ति । अर्शआद्यच् (५।२। १२७) । शिवयतीति वा । 'तत्करोति–' (वा० ३।१। २६) इति ण्यन्तात्पचाद्यच् (३।१।१३४) । [ 'शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमेऽपि च ॥ सुखे क्षेमे जले क्लीब' इति मेदिनी १५९।२५-२६] ॥ (४) ॥ ० ॥ शूलमस्यास्ति । इनि (५।२।११५) ॥ (५) ॥ ० ॥ महांश्चासावीश्वरश्च । 'सन्महत्–' (२।१।६१) इति समासः । [ 'महेश्वरो महादेवे कथितोऽधीश्वरेऽपि च' इति मेदिनी १४३।२९१] ॥ (६) ॥ ० ॥ ईशितुं शीलमस्य । 'स्थेशभास–' (३। २।१७५) इति वरच् । [ 'ईश्वरो मन्मथे शंभौ नाढ्ये स्वामिनि वाच्यवत् । ईश्वरो चेश्वरोमायाम्' इति मेदिनी १३१।११६ ] ॥ (७) ॥ ० ॥ शृणाति 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'कॄगृशॄदृभ्यो व' (उ० १।१५५) ॥०॥ 'शर्व गतौ' (भ्वा० प० से०) इत्यत, 'षर्व हिंसायाम्' (भ्वा० प० से०) इत्यतो वा वबयोरभेदात् पचाद्यचि (३।१।१३४) 'सर्व' अपि । 'सर्वस्तु शर्वो भगवान् शंभु कालंजर शिव' इति नामनिधानात् ॥ (८) ॥०॥ ईष्टे तच्छीलः । 'ताच्छील्य–' (३।२।१२९) इति चानश् । [ 'ईशानं ज्योतिषि क्लीबं पुल्लिङ्गः स्यात्त्रिलोचने' इति मेदिनी ८५।४०] ॥ (९) ॥०॥ शं करोति । 'शमि धातोः संज्ञायाम्' (३।२।१४) इत्यच् । यत्तु 'कृञो हेतु–' (३।२। २०) इति ट.– इति स्वामी । तन्न । अस्यैव टापवादत्वात् ॥ (१०) ॥०॥ चन्द्रः शेखरो यस्य । (११) ॥०॥ भूतानामीशः ॥ (१२) ॥०॥ खण्डयतीति खण्डः परशुरस्य ॥ ० ॥ 'खण्डपर्शुः' अपि । 'खण्डपर्शुः पर्शुरामे शङ्करे चूर्णलेपिनि' इति विश्वात् [ १७७।३८ ] ['खण्डामलकभैषज्ये सिंहिकातनयेऽपि ना ॥' इति मेदिन्याश्च १६५।३४ ]॥(१३) ॥०॥ गिरेरीशः । ('गिरीशोऽद्रिपतौ वाचस्पतिशंकरयोः पुमान्' )[1]॥ (१४) ॥ ० ॥ गिरिराश्रयत्वेनास्यास्ति । लोमादित्वात् (५।२।१००) श । स्वामी तु 'गिरिं श्यति, उपभोगेन तनूकरोति,' गिरौ शेते वा । 'गिरौ डश्छन्दसि' (वा० ३।२।१५) । लोके तु 'आशुशुक्षणिवत्' इत्याह ॥ (१५) ॥ ० ॥ मृडति । 'मृड सुखने' (तु० प० से०) इगुपधत्वात्क (३।१।१३५) मृड्णाति वा । 'मृड च' चात्क्षोदे (क्र्या० प० से०) ॥ (१६) ॥ ० ॥ मृत्युं जयति । 'संज्ञायां भृतॄवृजि—' (३।२।४६) इति खच् । मुम् (६।३।६७) ॥ (१७) ॥०॥ कृत्तिश्चर्म वासोऽस्य ॥ (१८) ॥०॥ पिनाकोऽस्यास्ति । इनि (५।२।११५) ॥ (१९) ॥ ० ॥ प्रमथानामधिपः ॥ (२०) ॥ ० ॥ उच्यति क्रुधा सवध्यते उग्रः । 'उच समवाये' (दि० प० से०) 'ऋज्र–' (उ० २।२८) इत्यादिना रन् गश्चान्तादेशः । [ 'उग्रः क्षत्रियतः शूद्रया सूतावुत्कटरुद्रयोः' । उग्रा वचाछिक्किकयो ' इति हैमः २।४०८–४०९ ] ॥ (२१) ॥०॥ कपर्दोऽस्यास्ति । इनि (५।२।११५) ॥ (२२) ॥ ० ॥ श्रीः शोभा कण्ठेऽस्य । [ 'श्रीकण्ठः कुरुजाङ्गले । शंकरे च' इति हैमः ३।१८१ ] ॥ (२३) ॥०॥ शितिः काल कण्ठोऽस्य ॥ (२४) ॥ ० ॥ कपालं बिभर्ति ॥ (२५) ॥०॥ वामयति दुष्टानां मदमिति वामः । 'टुवमु उद्गिरणे' (भ्वा० प० से०) । णिच् (३।१।२६) । पचाद्यच् (३।१।१३४) । वामश्चासौ देवश्च । लोकविपरीतत्वाद्वा वामः । ['वामं धने, हरे शुभि कामदेवे पयोधरे' इति मेदिनी ११०।२९] । यत्तु घञि (३।३।१८, १९) 'नोदात्तोपदेश–' (७।३।३४) इत्यादिना वृद्धिनिषेधे प्राप्ते 'अनाचमेः' (७।३। ३४) इति 'कम्यमिवमि–' इत्यादिना निषेध, इति मुकुटेनोक्तम् । तन्न । कर्तरि घञोऽसंभवात् । भवादौ संभवेऽपि देवेन सामानाधिकरण्यासंभवात् । लोकाचारविपरीतत्वाद्वामो देवः क्रीडा यस्येति वा समाधेयम् । वामेषु श्रेष्ठेषु देवो द्योतो यस्येति वा ॥ (२६) ॥ ० ॥ महांश्चासौ देवश्च । महान् देवो नृत्यादिरूपा क्रीडा यस्येति वा ॥ (२७) ॥०॥ विविधानि रविचन्द्राग्निरूपाण्यक्षीण्यस्य । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' (५।४।११३) । विरूपेष्वपि अक्षि कृपादृष्टिर्यस्येति वा । विविधरूपाणि विविधरूपेषु वा अक्षाणीन्द्रियाण्यस्येति वा ॥ (२८) ॥०॥ त्रीणि लोचनानि यस्य ।

1. कोष्ठस्थपाठः नि० पु० । मेदिन्या तु 'गिरिशः' इति ।

अजादित्वात ( ४।१।४ ) वा । [ 'उमा गौर्यां हरिद्रायां कीर्तिकान्त्यतसीषु च इति हैम २।३१९ ]॥ (१) ॥०॥ कतस्यापत्यम । गर्गादित्वात ( ४।१।१०५ ) यञ । सर्वत्र लोहितादिकतन्तेभ्य (४।१।१८) इति ष्फ । षित्त्वाड्डीष (४।१।४१) । ['कात्यायनो वररुचौ कात्यायनी तु पार्वती । कषायवस्त्रविधवाधवृद्धमहिलापि च ॥ इति हैम ४।१७२ ७३] ॥ (२) ॥ ॥गौरो वर्णोऽस्त्यस्या । गौरादित्वात (४।१।४१) ङीष । [ गौर श्वेतेऽरुणे पीते विशुद्धे चाभिधेयवत । ना श्वेतसर्षपे चन्द्रे नद्वयो पद्मकेशरे ॥ गौरी स्वसजातरज कन्यानकरभार्यया । रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगायां विशेषेऽपि यादमांपतियोषिति ॥ इति मेदिनी १२४।२७-२९]॥(३)॥०॥ एव काली । जानपद- (४।१।४२) इत्यादिना ङीष । [ कालो मतौ महाकाले समययमकृष्णयो ।काला तु कृष्णात्रिवृतामञ्जिष्ठानीलिनीषु च॥ काली गौर्यां क्षीरकीटे कालिकामातृभेदयो । इति मेदिनी १४५।७८। न यमेघौघपरिवादयो इति हेम ]॥०॥वर्णस्याविवक्षायां काली । उमा कात्यायनी दुर्गा काली हैमवतीश्वरी । काली कालञ्जरी गौरी इति वाचस्पति ॥ ( ४ ) ॥०॥ हिमवतोऽपत्यम् । तस्यापत्यम् (४।१।९२) इत्यण् । 'हैमवत्यभयास्वर्णक्षीर्यो स्वतवचोमयो [ इति मेदिनी ७१। २३०]॥(५)॥०॥ ईष्टे॥ ईश ऐश्वर्ये (अ० आ० से०) । स्थेशभास- (३।२।१७५) इति वरच् । टाप् ( ४।१।४ ) ॥०॥ वनिपि (३।२।७५) वनो र च ( ४।१।७ ) इति ङीप्रौ । अत 'ईश्वरी' अपि । यद्वा—अश्नुते । अशूङ् व्याप्तौ (स्वा० आ० स०) अश्नोतेराशुकर्मणि वरट ई चोपधाया ( उ० ५।५७ ) । टित्त्वात ( ४।१।१५ ) ङीप् । 'ईश्वर शंकरेऽधीश तत्पत्न्यामीश्वरीश्वरा' इति पालित ॥ (६) ॥ ॥ शिवयति । शिवमस्त्यस्या । शिवो वास्ति भर्तृत्वेन यस्या इति वा । 'शिव भद्रं शिवः शम्भु शिवा गौरी शिवाभया । [शिव कीलं शिवा क्रोष्ट्री भवेदामलकी शिवा ॥ ] इति शाश्वत ॥०॥ पुन्नागे तु शिवो ॥(७) ॥ ॥ भवस्य स्त्री । इन्द्रवरुण- (४।१।४९) इति ङीषानुकौ ॥ (८) ॥०॥ एव रुद्राण्यादय ॥ (९) ॥ (१०) ॥ ( ११ ) ॥ ०॥ सर्वस्य सर्वेषां वा मङ्गला । सर्वाणि मङ्गलानि यस्या इति वा ॥०॥ 'मङ्गला' इत्यपि । मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणं पुंसि सर्वार्थदक्षिण ॥ [इति मेदिनी १५३।१२०]॥(१२) ॥०॥ न पर्णं यस्या । तपस्यन्त्या पर्णानामपि त्यागात ॥ (१३) ॥०॥ पर्वतस्येयम् । पार्वती । तस्येदम ( ४।३। १२०) इत्यण् । अपत्यार्थे त्वपवादत्वादिञ् ( ४।१।९५ ) स्यात् । इतो मनुष्य— (४।१।६५) इति न ङीप । मनुष्यजातिवाचित्वाभावात । क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति वा समाधेयम् ॥ (१४) ॥०॥ दु खेन गम्यते ज्ञायतेऽस्याम् सदुरोरधिकरण (वा० ३।२।४८) इति ड । दु खेन दुष्टैर्वा गीयते स्तूयते । 'गै शब्द (भ्वा० प० अ०)। आतश्चोपसर्गे (३।३।१०६) इत्यङ । 'दुर्गं कोट्टे दगमे स्याद् दुर्गा तु नीलिकोमयो इति हेमचन्द्र [२।३४] ॥ (१५) ॥०॥ चण्डते । चडि कोपे ( भ्वा० आ० स० ) । ण्वुल ( ३।१।१३३ ) ॥ ० ॥ पचाद्यच ( वा० ३।१।१३४ ) । बह्वादिभ्यश्च (४।१।४५) इति ङीपि 'चण्डी' इत्यपि । [ चण्डो ना तिन्तिडीवृक्ष यमकिङ्करदैत्ययो । ] चण्डी कात्यायनी देव्यां हिंस्रकोपनयोषितो । [ चण्डा धनहरी शङ्खपुष्प्योस्त्रिष्वतिकोपने । तीव्रेऽपि इति मेदिनी ४१। ११ १३] ॥ ( १६ ) ॥०॥ अम्बैवाम्बिका । जगन्मातृत्वात । 'अम्बिका पार्वतीमातृभेद धृतराष्ट्रस्य मातरि [इति मेदिनी ४।४५] ॥ ( १७ ) ॥०॥ सप्तदश 'उमाया' ।

**विनायको विघ्नराजद्वैमातुरगणाधिपा ।**
**अप्येकदन्त हेरम्ब लम्बोदर गजानना ॥ ३८ ॥**

विनायक, विघ्नराज, द्वैमातुर, गणाधिप, एकदन्त, हेरम्ब, लम्बोदर, गजानन ( ८ पु), 'गणेश' के ८ नाम हैं।

**विनायक इति** ॥ विनयति । ण्वुल् ।(३।१।१३३) विशिष्टो नायक इति वा । विगतो नायको नियन्ताऽस्य इति वा । 'विनायकस्तु हेरम्बे ताक्ष्ये विघ्ने जिने गुरौ [इति मेदिनी १७।२१३]॥ (१) ॥०॥ विघ्नानां राजा । राजाह सखिभ्यष्टच (५ ४।९१) ॥ (२) ॥ ० ॥ द्वयोर्मात्रोरपत्यम् । मातुरुत्सङ्ख्यासम्भद्रपूर्वाया ( ४।१।११५ ) इत्यणि उत्वं रपरत्वं च । दुर्गाचित्पुण्डाभ्यां पालितत्वात् । गजमुखतया हस्तिन्या अपत्यत्वात् । गङ्गाया अपत्यत्वाद्वा । 'द्वैमातुरो जरासन्धवारणाननयो पुमान् [इति मेदिनी १४२।२६८]॥ (३) ॥०॥ गणानां प्रमथानामधिप ॥ (४) ॥०॥ एको दन्तोऽस्य । 'स्कन्देनोत्पाटितदन्तत्वात ॥ (५) ॥ ० ॥ हे रम्बते। 'ह शंकरे हरौ हसे रणरोमाञ्चवाजिषु इति नानार्थरत्नमाला [१६७] । अबि रवि शब्दे [भ्वा० आ० स] पचाद्यच ( ३।१।१३४ ) । तत्पुरुष कृति- ( ६।३।१४ ) इत्यलुक । हे उपसि रम्बते इति स्वामी । [ हेरम्ब शौर्यगर्विते । महिषे विघ्नराजे वा इति हैम ३।४७९ ८० ] ॥(६)॥ ॥ लम्बमुदरमस्य । [ 'लम्बोदर स्याद् द्यूने प्रमथानां च नायके इति हैम ४।२८७ ] ॥ (७) ॥ ० ॥ गज आननमस्य । समुदायशब्दा अवयवेऽपि वर्तन्ते इति गजमुखपरो गजशब्द ॥ (८) ॥ ० ॥ [2](नात्र द्वन्द्वो न प्राप्नोति । विरूपाणामपि समानार्थानाम् (वा० १।२।६४)

१ परशुरामेणोत्पाटितैकदन्तो गणेश इति वाचस्पति पृ० १४६९ ।

२ कोष्ठस्थ पाठ निर्णयसागरीय ।

इत्येकशेषविधानात् । मैवम् । स्वरूपपदार्थकानामेषा द्वन्द्वविधानात् । स्वरूपस्य च प्रतिशब्दं भिन्नत्वेन समानार्थताया एवाभावात् । अर्थपरता तु लक्षणया ज्ञेया । तारतम्यशब्दवत् । सर्वत्रैवं बोध्यम्) ॥ अष्टौ 'गणेशस्य' ।

**कार्तिकेयो महासेनः शरजन्मा षडाननः ।**
**पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥**
**बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।**
**षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥**
**'शृंगी भृंगी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः [२१]**

कार्तिकेयः, महासेनः, शरजन्मा (=शरजन्मन्), षडाननः, पार्वतीनन्दनः, स्कन्दः, सेनानीः, अग्निभूः, गुहः, बाहुलेयः, तारकजित्, विशाखः, शिखिवाहनः, षाण्मातुरः, शक्तिधरः, कुमारः, क्रौञ्चदारणः ( १७ पु ), 'कार्तिकेय' के १७ नाम हैं ।

[शृङ्गी, (=शृङ्गिन्), भृङ्गी (=भृङ्गिन्), रिटि, तुण्डी (=तुण्डिन्) नन्दिकः, नन्दिकेश्वरः ( ६ पु ), 'नन्दी' के ६ नाम हैं । ]

**कार्तिकेय इति** ॥ कृत्तिकानामपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (१) ॥ * ॥ महती सेना यस्य । ['महासेनो महासैन्ये स्कन्देऽपि' इति हैम ४।१९१]॥(२) ॥*॥ शरेषु जन्मास्य ॥ (३) ॥*॥ षड् आननान्यस्य ॥ (४)॥*॥ पार्वत्या नन्दनः ॥(५)॥*॥ स्कन्दति । पचाद्यच् ( ३।१।१३४ ) ॥ ( ६ ) ॥ * ॥ सेना नयति । 'सत्सूद्विष-' ( ३।२।६१ ) इति क्विप् । 'सेनानी स्यात्पुमान्कार्तिकेये सेनापतौ पुमान्' [इति मेदिनी ९४।५६] ॥ (७) ॥ * ॥ अग्नेर्भवति । 'भुव –' ( ३।२।१७९ ) इति क्विप् ॥ (८) ॥*॥ गूहति रक्षति सेनाम् । 'गुहू संवरणे' (भ्वा० उ० से०) । 'इगुपध–' ( ३।१।१३५ ) इति क । 'गुहः षाण्मातुरे गुहा । सिंहपुच्छ्या च गर्ते च पर्वतादेश्च कदरे'[२] [इति मेदिनी १७५।४] ॥ (९) ॥*॥ बहुलाना कृत्तिकानामपत्यम् । 'स्त्रीभ्यो ढक्' ( ४ । १ । १२० ) ॥ ( १० ) ॥*॥ तारकं जयति ॥ (११) ॥ * ॥ विशाखति । 'शाखृ श्लाखृ व्याप्तौ' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । विशाखाया जात इति वा । 'सन्धिवेलादि–' ( ४।३।१६ ) इत्यण 'श्रविष्ठाफल्गुनी–' ( ४।३।३४ ) इत्यादिना लुकि 'लुक्तद्धितलुकि' ( १।२।४९ ) । ['विशाखो याचके स्कन्दे विशाखाभे कठिल्लके' इति हैमः ३।११३ ] ॥ (१२) ॥ * ॥ शिखी मयूरो वाहनमस्य ॥ (१३) ॥ * ॥ षण्णा मातॄणामपत्यम् । 'मातुरुत्संख्यासं–' ( ४।१।११५ ) ॥ ( १४ ) ॥ * ॥ शक्तेर्धरः ॥ (१५) ॥ * ॥ कुमारयति क्रीडति । 'कुमार क्रीडायाम्' ( चु० उ० से० ) । पचाद्यच् (३।१।१३४)। कुत्सितो मारोऽस्येति वा । 'कु. पापेपदर्थयो' । कौ मारयति दुष्टान् । पचाद्यच् ( ३।१।१३४ ) । यत्तु–ब्रह्मचारित्वात्कुमार.–इति स्वामिनोक्तम् । तन्न । 'शतक्रतो रूपवती देवसेनेति या सुता । सा महेन्द्रेण रत्यर्थं भार्यात्वेनोपपादिता ॥ उदीर्णसेनापतये महासेनाय सुव्रत ॥' इति वायुपुराणात् । [ कुमारः स्याच्छुके स्कन्दे युवराजेऽश्वचारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने ॥' इति मेदिनी १३२।१३८ ] ॥ ( १६ ) ॥ * ॥ क्रुञ्चे ( भ्वा० प० से० ) क्विन् (३।२।५९) । प्रज्ञाद्यण् ( ५।४।३८ ) । क्रौञ्चस्य पर्वतस्य दारण. । 'दॄ विदारणे' ( भ्वा० प० से० ) । ण्यन्तात् ( ३।१।२६ ) ल्यु ( ३।१।१३४ ) ॥ * ॥ 'कैलासे धनदावासे क्रौञ्चः क्रौञ्चोऽभिधीयते' इति बृहद्धारावली । अतः 'क्रौञ्चदारणः' अपि ॥ (१७) ॥ * ॥ सप्तदश 'कार्तिकेयस्य' ।

**इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः ।**
**वृद्धश्रवाः सुनासीरः पुरुहूतः पुरंदरः ॥ ४१ ॥**
**जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।**
**सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥**
**वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।**
**जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥**
**संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।**
**आखण्डलः सहस्राक्ष ऋभुक्षाः**

इन्द्रः, मरुत्वान् ( =मरुत्वत् ), मघवा ( =मघवन् ), बिडौजाः ( =बिडौजस् ), पाकशासनः, वृद्धश्रवाः ( =वृद्धश्रवस् ), सुनासीरः, पुरुहूतः, पुरन्दरः, जिष्णुः, लेखर्षभः, शक्रः, शतमन्युः, दिवस्पतिः, सुत्रामा (=सुत्रामन्), गोत्रभिद्, वज्री ( =वज्रिन् ), वासवः, वृत्रहा (=वृत्रहन्), वृषा (=वृषन्), वास्तोष्पतिः, सुरपतिः, बलारातिः, शचीपतिः, जम्भभेदी (=जम्भभेदिन्), हरिहयः, स्वाराट् (=स्वाराज्), नमुचिसूदनः, संक्रन्दनः, दुश्च्यवनः, तुराषाट् (=तुरासाह्), मेघवाहनः, आखण्डलः, सहस्राक्षः, ऋभुक्षाः (=ऋभुक्षन् । ३४ पु ), 'इन्द्र' के ३४ नाम हैं ।

**इन्द्र इति** ॥ इन्दति । 'इदि परमैश्वर्ये' ( भ्वा० प० से० ) । 'ऋज्रेन्द्र–' ( उ० २।२८ ) इत्यादिना रन् । 'रग्' इति मुकुट. । तन्न । अन्तोदात्तत्वापत्ते । 'इन्द्रः शक्रादित्यभेदयोगभेदान्तरात्मसु' । 'इन्द्रः फणिज्जकेऽस्त्री'

१. 'पतावपि' इति पा० । २. 'गह्वरे' इति पा० ।

१. मेदिन्याम्–'इन्द्रा फणिज्जके स्त्री स्यात्' (१२३।९), हैमे–'स्यादिन्द्रा तु फणिज्जके' (२।४०८), विश्वे च 'इन्द्रा फणिज्जके' (१३०।६२) इति पाठानुरोधेन 'इन्द्र फणिज्जके स्त्री स्यात्' इत्येव पाठ समीचीन ।

स्यात्' ॥ ( १ ) ॥ * ॥ मरुत सन्त्यस्य। मतुप् ( ५।२। ९४) । 'झय' ( ८।२।१० ) इति वत्वम्। 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वाज्जश्त्वाभाव ॥ ( २ ) ॥ : ॥ मह्यते पूज्यते। 'मह पूजायाम्' ( भ्वा० प० से०, चु० उ० से० ) । 'श्वन्नुक्षन्–' ( उ० १।१५९ ) इत्यादिना 'मघवन्' इति निपातितम् ॥ * ॥ 'मघवा बहुलम्' ( ६।४। १२८) इति त्रादेशपक्षे तु 'मघवान्' इत्यपि बोध्यम्। यत्तु 'त्रादेशे दीर्घाभावात् मघवन्' इति स्वामिनोक्तम्। तन्न। 'सर्वनामस्थाने चासंबुद्धौ' ( ६।४।८ ) इति दीर्घसंभवात्। नच संयोगान्तलोपस्य ( ८।२।२३ ) असिद्धत्वम्। 'मघवा बहुलम्' ( ६।४।१२८ ) इति बहुलग्रहणेन तद्बाधनात्। अत एव मतुपा ( ५।२।९३ ) त्रन्तादेशप्रत्याख्यानपर वार्तिक तद्भाष्य च ( ६।४।१२८ ) सगच्छते। 'हविर्जक्षिति नि-शङ्को मखेषु मघवानसौ' इति भट्टि [ १८-१९।] । एतेन मघवा मघवन् मघवान् इति त्रैरूप्य वदन्मुकुटोऽपि प्रत्युक्त । भाष्यवार्तिकैकमत्यानुरोधेन सूत्रकारमतेऽपि 'मघवान्' इत्यस्यैवाभ्युपगमात्। मतभेदे हि प्रत्याख्यानासंभवात्। भवतु वा मतभेद, तथापि 'होतृ लृकार' इत्यत्र सूत्ररीत्या यणादेश प्राप्तो वार्तिकरीत्या दीर्घेण बाध्यते यथा, एवं सूत्ररीत्या 'मघवन्' इति प्रयोग प्राप्तो भाष्यवार्तिककृतप्रत्याख्यानरीत्या 'मघवान्' इति प्रयोगेण बाध्यते ॥ (३) ॥*॥ बिडति। 'बिड भेदने' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क । बिड भेदकमोजोऽस्य। सान्त [ = बिडौजस् ] ॥*॥ विट्सु प्रजासु मनुष्येषु वा ओजोऽस्येति 'विड्‌ओजाः' इति केचित् ॥ ( ४ ) ॥ * ॥ पाकस्य दैत्यभेदस्य शासन । शासयति। 'शासु अनुशिष्टौ' (अ० प० से०) । णिजन्तात् ( ३।१।२६ ) नन्द्यादित्वात् (३।१।१३४) ल्यु ॥ ( ५ ) ॥*॥ वृद्धेभ्य शृणोति। 'श्रु श्रवणे' (भ्वा० प० अ० ) । असुन् (उ० ४।१९६) । वृद्धे श्रवसी यस्येति वा। वृद्धेषु पण्डितेषु श्रवो यशो यस्येति वा ॥ (६) ॥*॥ 'णासृ शब्दे' (भ्वा० आ० से०) बाहुलकादीरन् (उ० ४।३०) । सुष्ठु नासीर सेनामुखम्, नासीरा अग्रेसरा वा यस्य द्विदन्त्य [सुनासीर ] ॥ * ॥ शु इत्यव्ययस्य पूजार्थकत्वात् तालव्यादिरपि [ शुनासीर ] ॥ * ॥ 'शुनाशीरशीतशिवशङ्का' इति तालव्यादावूष्मविवेक । शुनो वायु, सीर सूर्य, तावस्य स्त इति अर्शआद्यच् (५।२।१२७) 'अन्येषामपि–' (६।३।१३७) इति दीर्घ, इति व्युत्पत्त्या (सुनासीर ) द्वितालव्योऽपि ॥ (७) ॥ * ॥ पुरु प्रचुर हूतमाह्वान यज्ञेष्वस्य। पुरूणि हूतानि नामान्यस्येति वा ॥ ( ८ ) ॥ * ॥ पुरोऽरीणा दारयति। 'पू सर्वयोर्दारिसहोः' ( ३।२।४१ ) इति खच्। 'वाचंयमपुरंदरौ च' (६।३।६९) इति निपातित ॥ (९) ॥ * ॥ जयति। 'जि जये, अभिभवे वा' ( भ्वा० प० अ० ) । 'ग्लाजिस्थश्च–' ( ३।२।१३९ ) इति ग्स्नु। 'जिष्णुर्ना वासवेऽर्जुने। जित्वरे[१] वाच्यवत् [ जीर्ण परिशुष्कपुराणयो ' इति मेदिनी ४५।१३], '–प्रोक्तो विष्णावर्के वसुष्वपि' [इति हैम २।१४३] ॥ (१०) ॥*॥ लेखेषु ऋषभ। 'सप्तमी' (२।१।४०) इति योगविभागात्समास। लेख ऋषभ इवेति वा। 'उपमितं व्याघ्रा–' ( २।१।५६ ) इति समास ॥ (११) ॥*॥ शक्नोति। 'शक्लृ शक्तौ' (स्वा० प० अ०)। 'स्फायितञ्चि–' ( उ० २।१३ ) इत्यादिना रक्। 'शक्रः पुमान्देवराजे कुटजार्जुनभूरुहो' [इति मेदिनी १२९।८७] ॥ ( १२ ) ॥*॥ शत मन्यवो यागा अस्य। शते दैत्येषु मन्यु क्रोधोऽस्येति वा। शत मन्यवो दैन्यान्यस्येति वा दैत्यै पराजितत्वात् ॥ (१३) ॥*॥ दिव पति । 'तत्पुरुषे कृति–' ( ६।३।१४ ) इत्यत्र बहुलग्रहणादलुगप्यलुग् इति मुकुट.। तन्न। 'पातेर्डति' ( ४।५७ ) इत्युणादिसूत्रसत्त्वात्। वस्तुतस्तु 'षष्ठ्या पतिपुत्र–' (८।३।५३) इति सत्वविधानसामर्थ्याल्लोकवेदसाधारण्येन '[२]वृद्धकुमारीवर'न्यायेनालुक् ज्ञापित । कस्कादित्वात् (८।३।४८) । स सत्तु–'षष्ठ्या पतिपुत्र–' ( ८।३।५३ ) इति सत्वम्–इति मुकुटेनोक्तम्। तन्न। तत्र छन्दोऽधिकारात् ॥ ( १४ ) ॥*॥ सुष्ठु त्रायते। 'त्रैङ् पालने' (भ्वा० आ० से०) । 'आतो मनिन्–' (३।२।७४) ॥*॥ सु उद् इत्युपसर्गद्वयप्रयोगे तु 'सूत्रामा' दीर्घादिरपि। एतेन 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घत्वे 'सूत्रामा' इति वदन् मुकुट प्रत्युक्त ॥ ( १५ ) ॥*॥ गोत्रान् गिरीन् भिनत्ति। 'सत्सूद्विष–' ( ३।२।६१ ) इति भिदे [रु० उ० अ० ] क्विप् ॥ (१६) ॥*॥ वज्रोऽस्यास्ति। 'अत इनि–' (५।२।११५)।[ 'वज्री तु बुद्धे देवाधिपे पुमान्' इति मेदिनी ९३।२४ ] ॥ (१७) ॥*॥ वसवो देवा, वसूनि रत्नान्यस्य वा सन्ति। ज्योत्स्नादित्वात् ( वा० ५।२।१०३ ) अण्। वसोरपत्यमिति वा। दैत्याना वास वाति वा। 'वा गतिगन्धनयो' ( अ० प० अ० ) । क ( ३।२।३ ) ॥ ( १८ ) ॥*॥ वृत्रं हतवान्। 'ब्रह्मभ्रूणवृत्रेषु–' ( ३।२।८७ ) इति क्विप् ॥ ( १९ ) ॥*॥ वर्षति। 'वृषु सेचने' ( भ्वा० प०

१ 'जित्वरेऽर्के' इति पा०।

२ अयं च न्याय 'न सुते' इति सूत्रभाष्ये। तत्र हि भाष्यकार —''टाविभक्तेर्नाभावप्रसङ्गे' 'वृद्धकुमारीवदिदं द्रष्टव्यम्।' तद्यथा—वृद्धकुमारी इन्द्रेणोक्ता—वरं वृणीष्व इति। सा वरमवृणीत—'पुत्रा मे बहुक्षीरघृतमोदन कास्यपात्र्या भुञ्जीरम्।' इति। न च तावदस्या पतिर्भवति, कुत पुत्रा ? कुतो गाव ? कुतो धान्यम्? तत्रानयैकेन वाक्येन–'पति, पुत्रा, गाव, धान्यम्' इति सर्वं सगृहीत भवति।'' इत्येव तन्न्यायस्वरूप बोधितवानित्यवधेयम्।

से० )। 'कनिन् युवृषि–' ( उ० १।१५६ ) इति कनिन्। 'वृषा तु वासवे। वृषभे तुरगे पुंसि' [ इति हैम २।२८९–९० ] ॥ (२०) ॥*॥ वास्तोर्गृहक्षेत्रस्य पतिरधिष्ठाता। '—वास्तोष्पतिगृहमेधाच्छ च' (४।२।३२) इति निपातनादलुक् षत्वं चेत्येके। इण परत्वात् 'कस्कादिषु च' ( ८।३।४८ ) इति षत्वम्। यत्तु मुकुट 'षष्ठ्या पतिपुत्र–' ( ८।३।५३) इति सत्वे इण परत्वान्मूर्धन्य इति। तन्न। तत्र छन्दोऽधिकारात्। 'अपदान्तस्य–' ( ८।३।५५ ) इत्यधिकारात् ॥ ( २१ ) ॥*॥ सुराणा पति ॥ (२२) ॥*॥ वलस्यासुरस्याराति ॥ (२३) ॥*॥ शच्या पति ॥ (२४) ॥*॥ जम्भमसुरं भेत्तु शीलमस्य। 'सुप्यजातौ–' ( ३।२।७८ ) इति णिनि ॥ ( २५ ) ॥*॥ हरिर्हयो यस्य। 'स्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु। हरि स वर्णतोऽश्वस्तु पीतकौशेयसप्रभ ॥' इति शालिहोत्रम् ॥(२६)॥*॥ स्व: स्वर्गे राजते। स्वेषु देवेषु, स्वेन धनेन वा, आ राजते वा। सत्सू–' ( ३।२।६१ ) इति क्विप्। 'रो रि' (८।३।१४ ) इति लोपे 'ढ्रलोपे–' (६।३।१११) इति दीर्घ । जात्न ॥ (२७) ॥*॥ न मुञ्चति। 'मुच्लृ मोक्षणे' (तु० उ० अ०)। 'इगुपधात्कित्–' ( उ० ४।१२० ) इतीन्। 'नभ्राण्नपान्–' ( ६।३।७५ ) इति नञ् प्रकृत्या। नमुचेर्दैत्यस्य सूदन.। 'षूद क्षरणे' ( भ्वा० आ० से०, चु० उ० से० )। नन्द्यादित्वात् (३।१।१३४) ल्यु ॥(२८)॥*॥ संक्रन्दयति। 'क्रदि आह्वाने रोदने च' ( भ्वा० प० से )। ल्यु ( ३।१।१३४ ) ॥ ( २९ ) ॥*॥ दु खेन दुष्टं दुष्टेषु वा च्यवनमस्य। दु.सहश्च्यवनो मुनिरस्येति वा ॥(३०)॥*॥ तुतोर्तिसुर:। 'तुर त्वरणे' ( जु० प० से० )। 'इगुपध–' (३।१।१३५) इति क। तुरं वेगवन्तं साहयत्यभिभवति। 'अधे प्रसहने' (१।३।३३) इति सूत्रे 'प्रसहनमभिभव.' इति वृत्ते। ण्यन्तात् ( ३।१।२६ ) सहे ( भ्वा० आ० से० ) क्विप् ( ३।२।७६ )। 'सहे साड स' (८।३।५६) इति षत्वम्। 'अन्येषामपि–' ( ६।३।१३७ ) इति पूर्वपदस्य दीर्घ। आङ्प्रश्लेषो वा। 'नहिवृतिवृषि–' ( ६।३।११६ ) इति वा दीर्घ। एकदेशविकृतस्यानन्यत्वात्। 'दीर्घविधौ' ( १।१।५८) इति, 'क्विलुग्–' (वा० १।१।५८) इति वा (णिलोपस्य) स्थानिवत्त्वनिषेधात्क्विप्परत्वानपायात्। यत्तु—तुरं सहते इति विगृह्य 'छन्दसि सह.'(३।२।६३) इति ण्वि:–इति स्वामी। तन्न। छान्दसस्य लोके प्रयोगाभावात्। यदपि—'नहिवृतिवृषि–' (६।३।११६) इति पूर्वपदस्य दीर्घ.—इत्युक्तम्। तदपि न। क्विबन्तेषु नह्यादिष्वस्य प्रवृत्तेर्ण्यन्तेऽस्योपन्यासस्यान्याय्यत्वात्। एतेन–'तुरं' वेगवन्तं सहते इति वा, 'तुरस्त्वरित. सन् परबलानि सहते इति वा' इति विगृह्य 'छन्दसि सह ' (३।२।६३) इति ण्वि —इत्युपन्यस्यन् मुकुटोऽपि प्रत्युक्त ॥ (३१) ॥*॥ मेघा वाहनमस्य। मेघान् वाहयतीति वा। ल्यु ( ३।१।१३४ ) ॥ (३२ ) ॥*॥ आखण्डयति। 'खडि भेदने' ( चु० प० से० )। 'वृषादिभ्य. 'कलच्'[1] ( उ० १।१०६ ) ॥ (३३) ॥*॥ सहस्रमक्षीण्यस्य। 'बहुव्रीहौ सक्थ्यक्ष्णो —'(५।४।७३) इति षच् ॥(३४) ॥*॥ ऋभव क्षियन्त्यत्र। 'क्षि निवासगत्यो ' ( तु० प० अ० )। ड (वा० ३।२।१०१)। 'ऋभुक्ष: स्वर्गवज्रयो ' इति विश्व [ ? ]। सोऽस्यास्तीति ऋभुक्षा। इनि ( ५।२।११५ )। पथिवत्। यद्वा,—ऋच्छति इयर्तीति वा। अर्तेर्भुक्षिनक् प्रत्यय. ॥(३५) ॥*॥ पञ्चत्रिंशत् '**इन्द्रस्य**'।

**तस्य तु प्रिया ॥ ४४ ॥**

**पुलोमजा शचीन्द्राणी**

**पुलोमजा, शची, इन्द्राणी ( ३ स्त्री ), इन्द्रकी पत्नी के तीन नाम हैं।**

[ तस्येन्द्रस्य प्रिया सहधर्मिणी तु ] **पुलोमजेति** ॥ पुलोम्नो मुनेर्जाता। 'पञ्चम्यामजातौ' ( ३।२।९८ ) इति ड ॥*॥ अत एव '**पौलोमी**' अपि। 'तस्यापत्यम् (४।१।९२ ) इत्यण्। गोत्रत्वेन जातित्वान्ङीष् ( ४।१।६३ ) ॥ ( १ ) ॥*॥ शचते। 'शच व्यक्तायां वाचि' (भ्वा० आ० से० )। इन् (उ० ४।११८)। 'कृदिकारात्–' ( ग० सू० ४।१।४५) इति ङीष्। ['**शची**न्द्राण्यां शतावर्यां तथा स्त्रीकरणान्तरे' इति मेदिनी २८।१०]। 'अथ शची स्यादिन्द्राणी शतावरी। चारुधारा महेन्द्राणी शक्राणी जयवाहिनी॥' इति रभस। शक्रमणति आनयति जीवयतीति वा शक्राणी ॥*॥ सर्वेन्द्रियेषु सचते। 'षच समवाये' ( भ्वा० आ० से० )। इन् ( उ० ४।११८ )। **सची** दन्त्यादिरपि ॥ (२) ॥*॥ इन्द्रस्य स्त्री। 'इन्द्रवरुण–' (४।१।४९) इति ङीषानुकौ। ('इन्द्राणी शच्यां निर्गुण्ड्यां स्त्रीकरणेऽपि'[2]) ॥ यत्तु—अनुकि कर्तव्ये दीर्घाकारमानुकं शास्ति, तज्ज्ञापयति 'यतो विहितस्ततोऽन्यत्रापि भवति'। तेन क्रियाणी गिर्याणी इत्यादि सिद्ध भवति—इति धातुपारायणम्। अत एव 'शक्राणी' इति मुकुटश्च। तन्न। अनुकि कृते 'अतो गुणे' (६।१।९७) इति पररूपप्रसङ्गात्। नन्वकारोच्चारणसामर्थ्याद्दीर्घो भविष्यति। अन्यथा हि नुकमेव कुर्यात्—इति चेत्। न। 'अल्लोपोऽन' ( ६।४।१३४ ) इत्यस्य बाधेन चरितार्थत्वात् 'पत्युर्न –' (४।१।३३) इति वदादेशे कर्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेव अल्लोपो न भविष्यति—इति चेत्। न। शर्वशब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति। 'न संयोगात्–' (६।४।१३७) इति निषेधात्। तस्मात् ककाराकारयो सामर्थ्यविरहे पररूप-

१. 'वृषादिभ्यश्चित्' इत्येव सूत्रम्, 'कलच्' इति तु फलितार्थकथनम्।

२. कोष्ठस्थ पाठः निर्णयसागरीय ।

साधनार्थं दीर्घोच्चारणमावश्यकम्। प्रयोगनिर्वाहस्तूक्त एव ॥ (३) ॥*॥ त्रीणि 'इन्द्रपत्न्याः'।

**नगरी त्वमरावती।**

अमरावती (स्त्री)—'इन्द्र की नगरी' का नाम 'अमरावती' है।

**नगरी त्विति** ॥ अमरा सन्त्यस्याम। मतुप् (५।२।९४)। 'मतौ बह्वचोऽनजिरादीनाम्' (६।३।११९) इति दीर्घः ॥ (१) ॥*॥ एकम् 'इन्द्रपुरस्य'।

**हय उच्चैःश्रवा**

उच्चैःश्रवा (=उच्चैःश्रवस्। पु) यह नाम इन्द्र के घोड़े का है।

**हय इति** ॥ उच्चैः श्रवसी यस्य। उच्चैः शृणोतीति वा। असुन् (उ० ४।१८९)। उच्चैर्महत् श्रवो यशो यस्येति वा ॥ (१) ॥*॥ एकम् 'इन्द्राश्वस्य'।

**सूतो मातलिः**

मातलिः (पु)—इन्द्र के सूत (सारथि) का नाम 'मातलि' है।

**सूत इति** ॥ मतं लाति। 'आतोऽनुप–' (३।२।३) इति कः। मतलस्यापत्यम्। 'अत इञ्' (४।१।९५) ॥ (१) ॥*॥ एकम् 'इन्द्रसारथेः'।

**नन्दनं वनम् ॥ ४५ ॥**

नन्दनम् (न)—इन्द्र के उद्यान का नाम 'नन्दन' है।

**नन्दनमिति** ॥ नन्दयति। 'टुनदि समृद्धौ' (भ्वा० प० से०)। ल्युः (३।१।१३४)। 'अथ नन्दनम्। इन्द्रोद्याने, नन्दनस्तु तनये हर्षकारिणि इति हैमः [ ३। ४१३ ] ॥ (१) ॥*॥ एकम् 'इन्द्रवनस्य'।

**स्यात्प्रासादो वैजयन्तः**

वैजयन्त (पु)—इन्द्र के प्रासाद (अटारी) का नाम 'वैजयन्त' है।

**स्यादिति** ॥ वैजयन्त्य पताका सन्त्यस्य। 'अर्शआद्यच्' (५।२।१२७)। 'वैजयन्तो महेन्द्रस्य ध्वजप्रासादयोः पुमान्। वैजयन्ती पताकायां जयन्तीपादपे स्त्रियाम् ॥' [ इति मेदिनी ७०।२२०-२१ ] (१) ॥*॥ एकम् 'इन्द्रगृहस्य'।

**जयन्तः पाकशासनिः।**

जयन्त, पाकशासनि (२ पु)—ये दो नाम इन्द्र के पुत्र के हैं।

**जयन्त इति** ॥ जयति। 'तॄभूवहि–' (उ० ३। १२८) इत्यादिना झच्। 'भोऽन्तः' (७।१।२)। ('जयन्तावैन्द्रिगिरिशौ जयन्त्युमापताकयोः। जीवन्त्यां सिंहपुच्छयां च इन्द्रपुत्र्यां च'[1]) ॥ (१) ॥*॥ पाकशासनस्यापत्यम्। 'अत इञ्' (४।१।९५) ॥ (२) ॥*॥ द्वे 'इन्द्रपुत्रस्य'।

**ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४६ ॥**

ऐरावत, अभ्रमातङ्ग, ऐरावण, अभ्रमुवल्लभ (४ पु), इन्द्रके हाथीके ४ नाम हैं।

**ऐरावत इति** ॥ इराः उदकानि सन्त्यस्मिन्। मतुप् (५।२।९४)। इरावत्यब्धौ भवः। 'तत्र भवः' (४।३।५३) इत्यण्। [ ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे। नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् ॥ नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने' इति मेदिनी ६८।१९२-९३ ] ॥ (१) ॥*॥ अभ्रं मेघः, तदात्मको मातङ्गः। शाकपार्थिवादिः (२।१।६९)। अभ्रे आकाशे मेघे वा विद्यमानो [ अभ्ररूपः ] मातङ्ग इति वा ॥ (२) ॥*॥ इरया उदकेन वणति। 'वण शब्दे' (भ्वा० प० से०)। पचाद्यच् (३। १।१३४)। इरावणः। ततः प्रज्ञाद्यण् (५।४।३८)। इरा सुरा वनमुदकं यस्मिन्। 'पूर्वपदात्–' (८।४।३) इति णत्वम्। इरावणे भवः। 'तत्र भवः' (४।३।५३) इत्यण्। स्वामी तु—इरावणे भवः। 'तत्र भवः' (४।३।५३) इत्यण्। 'विभाषौषधि–' (८।४।६) इति वा णत्वम्—इति। तन्न। ऐरावन' इत्यस्यापि प्राप्तेः ॥ (३) ॥*॥ अभ्रे खे माति, न भ्राम्यति वा, मन्थरगामिनीत्वात्। बाहुलकात् । अभ्रमोर्वल्लभः ॥ (४) ॥*॥ चत्वारि 'इन्द्रहस्तिनः'।

**ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः।**
**शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥ ४७ ॥**

ह्रादिनी (स्त्री), वज्रम् (पु न), कुलिशम्, भिदुरम् (२ न), पवि, शतकोटि, स्वरु, शम्ब, दम्भोलि (५ पु), अशनि (पु स्त्री), 'वज्र' के १० नाम हैं।

**ह्रादिनीति** ॥ ह्लादतेऽवश्यम्। 'ह्लाद अव्यक्ते शब्दे' (भ्वा० आ० से०)। आवश्यके णिनिः (३।२।७८)। ह्रादो स्त्यस्या इति वा। इनिः (५।२।११५)। 'ह्लादिनी वज्रविद्युतोः' [इति हैमः ३।४६७] (१)॥*॥ वजति। 'वज गतौ' (भ्वा० प० से०)। 'ऋज्रेन्द्र–' (उ० २।२८) इति रन् ॥*॥ अस्त्री इति पूर्वोत्तराभ्यामन्वेति। सन्निधानाविशेषात्। 'अस्त्रियौ वज्रकुलिशौ' इति सत्सारावर्ताच्च। 'वज्रो ऽस्त्री' [ अ० ३।३।१८४ ] इति वक्ष्यमाणं तस्यैवानुवादः। ['वज्रं स्याद्धात्के बालके क्लीबं योगान्तरे पुमान्। वज्रा स्नुह्यां गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता। दम्भोलौ हीरकेऽप्यस्त्री' इति मेदिनी १२८।८१-८२ ॥ ] (२) ॥*॥ 'कुलिशस्तो भुजादलः' इति त्रिकाण्डशेषः [ १।६।२६ ]।

[1] कोष्ठस्थः पाठः निर्णयसागरीयः।

कुलौ शेते। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड। कुलिन: पर्वतान् श्यति वा। 'शो तनूकरणे' ( दि० प० अ० )। 'आतोऽनुपसर्गे–' (३।२।३) इति क। कुलिनमीषद्वा लिशति। 'लिश अल्पीभावे' ( तु० प० से० )। 'इगुपध–' (३।१।१३५) इति क। 'कुलिशो न स्त्रिया प्रोक्तो दम्भोलौ, ना झषान्तरे'[1] ॥ ( ३ ) ॥*॥ भिनत्ति। 'विदिभिदिच्छिदे: कुरच्' ( ३।२।१६२ )। यत्तु—'कर्मकर्तरि चायमिष्यते, इत्यत्र चकार वर्तगीत्यनुकर्षणार्थ' तेनाकर्मकर्तर्यपि भवति, इति वामन'—इति मुकुटेनोक्तम्। तन्न। भाष्येऽस्यार्थस्यादर्शनात्। निष्फलत्वाच्च। 'भिदिरम्' इति पाठे तु 'इषिमदि–' (उ० १।५१) इत्यादिना 'किरच्' ॥ (४) ॥*॥ पुनाति। 'अच इ' ( उ० ४।१३९ ) ॥ (५) ॥*॥ शतं कोटयो धारा अस्य ॥ ( ६ ) ॥*॥ स्वरति। 'स्वृ शब्दोपतापयो' (भ्वा० प० अ०)। 'शृस्वृस्निहि–'(उ० १।१०) इति उ। [ स्वरुः पुंसि यूपखण्डे भिदुरेऽप्यध्वरे शरे' इति मेदिनी १२१।९३ ] ॥*॥ शोभनान्दरुणि धारा अस्येति सान्तोऽपि ( स्वरम् ) ॥ (७) ॥*॥ शाम्यत्यरीन्। अन्तर्भावितण्यर्थाच्छमेर्वन् ( उ० ४।९४ )। शं शुभमस्यास्त्यभेदत्वात् इति वा। 'शंसंभ्याम्–' ( ५।२। १३८) इति व। पक्षद्वयेऽपि दन्त्योष्ठ्य [ शंव ] ॥*॥ 'शम्ब सबन्धने' चुरादि ( प० से० )। 'शम्बयति सबध्नाति शत्रून्' इति विग्रहे तु पवर्गतृतीयान्त [ शम्ब ]। 'शम्बः स्यान्मुसलाग्रस्यलोहमण्डलके पवौ। शुभान्विते त्रिषु' [ इति मेदिनी १०५।८ ] ॥*॥ सम्बध्यते (चु० प० से०) विग्रहे तु दन्त्यादिरपि [सम्ब ]। 'तालव्या अपि दन्त्याश्च सम्बसूकरपामव' इत्यूष्मविवेक ॥(८)॥*॥ दम्भु रोधने[2] (स्वा० प० से०)। असुन् (उ० ४।१८९)। दम्भमि गोधने अलि, समर्थ। 'अल भूषणपर्याप्तिवारणेषु'(भ्वा० प० से०)। इन् ( उ० ४।११८ )। दम्भोति सेदयति। 'दम्भु दम्भने' (स्वा० प० से०)। औणादिक ओलिरिति वा ॥(९)॥*॥ अश्नाति,[3]अश्यतेऽनेनेति वा 'अशिगृधृधृम्यम्यस्यविहृभ्यो नि' ( २।१०२ )। ॥*॥ इह 'वज्राशनि:' इति समुदितमपि बोध्यम्। 'वज्राशनि विदुर्वज्रम्' इति त्रिकाण्डशेषात्। 'अथ वज्राशनिर्द्वयो' इति नामनिधानाच्च ॥ (१०)॥*॥ दश 'वज्रस्य'।

**व्योमयानं विमानोऽस्त्री**

**व्योमयानम् ( न ), विमानः ( पु न ), 'पुष्पक विमान' या 'देवोंके विमानमात्र' के दो नाम हैं।**

**व्योमयानमित्यादि ॥** व्योम्नि यान्त्यनेन। करणे ल्युट् (३।३।११७)। व्योम याति। 'कृत्यल्युट –' (३।३।११४) इति कर्तरि ल्युट् इति वा ॥ (१) ॥*॥ विशिष्ट मानयन्त्यनेन। 'पुंसि संज्ञायाम्' (३।३।११८) इति करणे घ। 'घञ्' इति मुकुट। तन्न। परत्वाल्ल्युट्प्रसङ्गात्। घस्तु करणाधिकरणयोर्विहित। विशेषेण मान्त्यस्मिन्निति वा। अधिकरणे ल्युट् ( ६।३।११७ )। विगत मानमुपमाऽस्येति वा। 'विमानो व्योमयाने च सप्तभूमिगृहेऽपि च। घोटके यानमात्रे च पुनपुंसकयोर्मत'[1]॥' ( २ ) ॥*॥ द्वे 'देवरथस्य'।

**नारदाद्याः सुरर्षयः।**

**नारदः ( पु )—नारद आदि 'देवर्षि' हैं। ( आदि शब्दसे 'तुम्बुरु, भरत, पर्वत, देवल' आदि का संग्रह है )।**

**नारदाद्या इति ॥** नरस्य धर्म्यम्। 'नराच्चेति वक्तव्यम्' ( वा० ४।४।४९ ) इत्यण्। नार ददाति। 'आतोऽनुप–' (३।२।३) इति क। यद्वा,–'नार पानीयमित्युक्तं तत् पितृभ्य सदा भवान्। ददाति तेन ते नाम नारदेति भविष्यति ॥' इत्यागम। नारं नरसमूह द्यति कलहेनेति वा। नृणिदं नारमज्ञानम्, तद्द्यति ज्ञानोपदेशेनेति वा। 'दो अवखण्डने' ( दि० प० अ० )। क (३।२।३) ॥ (१) ॥*॥ आद्येन तुम्बुरुभरतपर्वतदेवलादय। सुराश्च ते ब्रह्मादिपुत्रत्वादृषयश्च। षष्ठीसमासो वा ॥ एकम् 'देवर्षे'।

**स्यात् सुधर्मा देवसभा**

**सुधर्मा, देवसभा ( २ स्त्री ), ये दो नाम 'देवसभा' के हैं।**

**स्यादिति ॥** शोभनो धर्मोऽस्याम्। 'धर्मादनिच् केवलात्' ( ५।४।१२४ )। 'डाबुभाभ्याम्' (४।१।१३) इति पक्षे डाप्। 'अनो बहुव्रीहे' (४।१।१२) इति 'ङीप्' (४।१।१५ ) न ॥ ( १ ) ॥*॥ सह भान्त्यस्याम्। 'सभा राजामनुष्यपूर्वा' (२।४।२३) इति निपातनादड्। देवाना सभा आस्थानगृहम् ॥ ( २ ) ॥*॥ द्वे 'देवसभायाः'।

**पीयूषममृतं सुधा ॥ ४८ ॥**

**पीयूषम्, अमृतम् ( २ न ), सुधा ( स्त्री ), 'अमृत' के ३ नाम हैं।**

**पीयूषमिति ॥** पीयते। 'पीय' इति सौत्रो धातु। 'पीयेरूषन्' ( उ० ४।७६ )। बहुलवचनात्पक्षे गुण [पेयूषम्]। 'स्यात्पेयुष च पीयूषे नवक्षीरेऽमृतेऽपि च' इति हारावली। 'पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते' [इति मेदिनी १६८।४१ ] ॥ ( १ ) ॥ * ॥ न म्रियन्तेऽनेन। 'तनि-

---

१. 'पवे ना कुलिशो न स्त्री दम्भोलौ ना झषान्तरे' इति मेदिनी पाठ ( १६४।२० )।

२. '–दम्भने' इति पा०।

३. अशु भाजने' (क्र्या० प० अ० )।

१ विमानो व्योमयाने च सार्वभौमगृहेऽपि च। घोटके यानपात्रे च पुन्नपुंसकयोर्मतः॥' इति मेदिनी ( ९२।३०–३१ ) पा०।

मृङ्भ्या किच्च' ( उ० ३।८८ ) इति तन्। 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरिदेवयो ॥' [ इति मेदिनी ५९।७७] ॥ (२) ॥३॥ मुखेन धीयते। 'धेट् पाने' ( भ्वा० प० अ० )। 'आतश्चोपसर्गे' ( ३।३।१०६ ) इति कर्मण्यङ्। यत्तु—अङ्विधौ ( ३।३।१०४,५,६ ) कारकाधिकार ( ३।३।१९,९३ ) निवृत्त—इति मुकुट। तदाकरविरुद्धम्। द्वितीयभावग्रहणस्य ( ३।३।९५ ) कारकाधिकारनिवृत्त्यर्थत्वात्—इति हेतुरपि स्वरूपासिद्ध। 'अभिविधौ भावे—' ( ३।३।४४ ) इत्यस्याग्रेऽनुवर्तनात्। यदपि—सुष्ठु दधाति पुष्णाति शरीरमिति पचाद्यजन्तात् ( ३।१।१३४ ) टाप् ( ४।१।४ ) इति—तदपि न। नित्यत्वादन्तरङ्गत्वाच्चैकादेशे [ ६।१।१०१ ] अदन्तत्वाभावेन टाबयोगात्। एकादेशस्य पूर्वान्तत्वेन [ ६।१।८५ ] ग्रहणात्तस्यालोऽन्त्यप्रसङ्गाच्च। 'आतश्चोपसर्गे' (३।१।१३६) कप्रत्ययो वक्तुमुचित। [ 'सुधा गङ्गेष्टिकास्नुह्योर्मूर्वालेपामृतेषु च' इति हैमः २।२५९] ॥ (३) ॥ ॥ त्रीणि 'अमृतस्य'।

**मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका।**

मन्दाकिनी, वियद्गङ्गा, स्वर्णदी, सुरदीर्घिका ( ४ स्त्री ), 'आकाशगङ्गा' के ४ नाम हैं।

मन्दाकिनीति ॥ मन्दमकितुं शीलमस्या। 'अक कुटिलायां गतौ' ( भ्वा० प० से० )। 'सुपि—' ( ३।२।७८ ) इति णिनि ॥ ( १ ) ॥ ॥ वियति वियतो वा गङ्गा ॥ ( २ ) ॥ ॥ स्व स्वर्गस्य नदी। 'पूर्वपदात्संज्ञायाम्—' ( ८।४।३ ) इति णत्वम् ॥ ( ३ ) ॥ ॥ सुराणां दीर्घिकेव ॥ ( ४ ) ॥ ॥ चत्वारि 'देवगङ्गायाः'।

**मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९ ॥**

मेरु, सुमेरु, हेमाद्रिः, रत्नसानुः, सुरालय (५ पु), 'सुमेरु पर्वत' के ५ नाम हैं।

मेरुरित्यादि ॥ मिनोत्युच्चत्वाज्ज्योतींषि। 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ० )। 'मिपीभ्यां रु' ( उ० ४।१०१ )। 'मापा रुरिच्च' इति मुकुट। तन्न। उज्ज्वलदत्तादावस्य सूत्रस्यानुपलब्धे ॥ ( १ ) ॥ ॥ सुमेरुरित्युपसर्गान्तरनिवृत्त्यर्थमुक्तम् ॥ ( २ ) ॥ ॥ हेम्नोऽद्रि ॥ ( ३ ) ॥ ॥ रत्नानि सानावस्य ॥ ( ४ ) ॥ ॥ सुराणामालय ॥ ( ५ ) ॥ ॥ पञ्च 'मेरो.'।

**पञ्चैते देवतरवो मन्दारः पारिजातकः।**
**संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५० ॥**

मन्दारः, पारिजातक, सन्तान, कल्पवृक्ष ( ४ पु ), हरिचन्दनम् ( पु न ), ये ५ 'देवताओंके वृक्ष' हैं।

पञ्चेति ॥ [ एते वक्ष्यमाणा पञ्च शब्दा देववृक्षाणां नामानि ] मन्दयन्ते मोदयन्ति। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' (भ्वा० प० से०)। 'अङ्गिमदिमन्दिभ्य आरन्' ( उ० ३।१३४)। मन्दा आरा धारा अस्य, मन्दत्वादिति वा। ['मन्दारः स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च ॥' इति मेदिनी १३७।१९६–९७ ] ॥ ( १ ) ॥ ॥ पारिणोऽब्धेर्जात। तत स्वार्थे कन् ( ५।३।८७ )। यत्तु—पारिजातो जन्यत्वेनास्यास्ति। 'अर्शआद्यच्' ( ५।२।१२७ )। पारिजात समुद्र। 'तत्र भव' (४।३।५३) इत्यणि पारिजात—इति मुकुट। तन्न। वृद्धाच्छस्य (४।२।११४) अपवादस्य सत्त्वादणोऽप्रसङ्गात्। वैयर्थ्यात् जन्यस्यैव नामनिर्वचनासिद्धेश्च। [ 'पारिजातस्तु मन्दारे पारिभद्रे सुरद्रुमे' इति हैमः ४।१२५ ] ॥ (१) ॥ ॥ सम्यक् तनोति पुण्यानि। 'ज्वलिति—' ( ३।१।१४० ) इति सूत्रे तनोतेरुपसंख्यानात् ण। सम्यक् तन्यन्ते पुष्पाण्यस्मिन्निरयधिकरणे 'हलश्च' ( ३।३।१२१ ) इति घञ वा। [ संतानः सनतौ गोत्रे स्यादपत्ये सुरद्रुमे' इति मेदिनी ९३।४६ ] ॥ ( १ ) ॥ ॥ कल्प सङ्कल्पितोऽर्थ, तस्य वृक्ष। जन्यजनकभावसम्बन्धे षष्ठी ॥ ( १ ) ॥ ॥ चन्दयति। 'चदि आह्लादने' ( भ्वा० प० से० ) ण्यन्त ( ३।१।२६ ) ल्यु (३।१।१३४)। हरेश्चन्दन। 'हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे। नपुंसक तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ॥' [इति मेदिनी १०१।१५०–५१] ॥ (१) ॥ ॥ पञ्चानां देववृक्षाणाम्' एकैकम्।

**सनत्कुमारो वैधात्रः**

सनत्कुमारः, वैधात्रः ( २ पु ), 'सनकादि' के २ नाम हैं। ( आदि शब्दसे 'सनक, सनन्दन, सनातन'का संग्रह है )।

सनत्कुमार इति ॥ सनत् नित्य कुमार ॥ ॥ 'सनात्कुमारः' अपि। यद्वा,—'हसगो मृहिण सनत्' इति ब्रह्मपर्याय रभस। तस्य कुमारोऽपत्यम्। दन्त्यादि ॥ (१) ॥ ॥ विधातुरपत्यम्। अण् ( ४।१।९२ ) ॥ (२) ॥ ॥ वैधमहिमाप्रणेतृत्वात् स्ववैद्यपर्यायसन्निधौ कथनम्। द्वे 'ब्रह्मपुत्रस्य'।

**स्ववैद्यावश्विनीसुतौ।**
**नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५१ ॥**

स्ववैद्यौ, अश्विनीसुतौ, नासत्यौ, अश्विनौ, दस्रौ, आश्विनेयौ, ( ६ पु०, नि० द्वि० ), 'अश्विनीकुमार' के ६ नाम हैं।

स्ववैद्याविति ॥ स्व स्वर्गस्य वैद्यौ ॥ ( १ ) ॥ ॥ अश्विन्या सुतौ ॥ ( २ ) ॥ ॥ न सत्य ययोस्तावसत्यौ, न असत्यौ। 'नभ्राण्नपाद्—' (६।३।७४) इति नञ प्रकृतिभाव ॥ (३) ॥ ॥ प्रशस्ता अश्वा सन्ति ययो। इति ( ५।२।११५ )। यद्वा,—अश्विन्या जातौ। 'मधिवेला—'

१ 'देवतानाम्' इति पा०।

( ४।३।१६ ) इत्यण 'नक्षत्रेभ्यो बहुलम्' ( ४।३।३७ ) इति लुकि 'लुक् तद्धितलुकि' ( १।२।४९ ) इति ङीपो लुक् । अश्वोऽस्ति जनकत्वेन ययोर्वा । इन् (५।२।११५) ॥ ( ४ ) ॥ * ॥ दस्यत क्षिपतो रोगान् । 'दसु उपक्षये' ( दि० प० मे० ) । 'स्फायितञ्चि–' ( उ० २।१३ ) इति रक् ।[ 'दस्रः खरेऽश्विनीसुते' इति मेदिनी १२६।४७] ॥ ( ५ ) ॥ * ॥ अश्विन्या अपत्ये । 'स्त्रीभ्यो ढक्' (४।१।१२० ) ॥ ( ६ ) ॥ * ॥ 'तावुभावपीति द्वित्वादिष्टत्वादेकवचनाभाव –' इति स्वामी । अयं च प्रायोवाद । 'देव्यां तस्यामजायेतां नासत्यौ दस्र एव च' इति मार्कण्डेयात् । 'नासत्यौ' इति 'दस्रौ' चैकस्यापरस्योभयो प्रयोगो गौण । पद् 'अश्विनौ.' ।

स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।
घृताची मेनका रम्भा उर्वशी च तिलोत्तमा [ ५२]
सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः [ ५३]

अप्सरसः ( स्त्री०, नि० ब० व० ), 'उर्वशी आदि स्वर्गकी वेश्याओं' का १ नाम है ।

[ घृताची, मेनका, रम्भा, उर्वशी, तिलोत्तमा, सुकेशी, मञ्जुघोषा ( ६ स्त्री ), इत्यादि स्वर्गकी 'अप्सराओंके' विशेष नाम हैं ] ।

स्त्रियामिति ॥ अद्भ्य सरन्ति । सरतेरसुन् ( उ० ४।२३७ ) ॥ ( १ ) ॥ * ॥ 'बहुषु' इति प्रायोवाद । 'अनचि च' ( ८।४।४७ ) इति सूत्रे 'अप्सरा ' इति भाष्यप्रयोगात् । 'स्त्रियां बहुष्वप्सरस स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवाच्च—अस्य शुभयाशब्दवद्रूपम्–इति मुकुटोक्त चिन्त्यम् । अप्सर शब्दस्य सान्तत्वात् ॥ * ॥ स्व स्वर्गस्य वेश्या ॥ ( २ ) ॥ * ॥ उरून्महतोऽश्नुते व्याप्नोति वशीकरोतीति यावत् ' 'कर्मण्यण्' (३।२।१)। सञ्ज्ञापूर्वकस्य विधेरनित्यत्वान्न वृद्धि । मूलविभुजादित्वात् (वा० ३।२।५ ) कां वा । उरु अश्नातीति वा ॥ ( ३ ) ॥*॥ मुखशब्देनाद्यर्थेन रम्भा-मेनका-घृताची-तिलोत्तमादीना ग्रहणम् । एकम् 'उर्वश्याद्यैः' ।

हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५२ ॥

हाहाः, हूहूः ( २ पु ), इत्यादि 'देवताओंके यहाँ गानेवाले गन्धर्व' हैं । (आदि शब्दसे 'चित्ररथ, विश्वावसु''' का संग्रह है ) ।

हाहेति ॥ अव्युत्पत्तिपक्षे 'आतो धातो ' (६।४।१४०) इत्यस्याप्राप्ते शसि हाहान्, 'ओ सुपि' (६।४।८३) इत्यस्याप्राप्तेर्हूहून्, इत्यादि । यत्तु—'आतो धातो ' ( ६।४।१४० ) इति योगविभागादाकारलोप –इति मुकुटेनोक्तम् । तच्चिन्त्यम् । निर्णीतरूपस्य योगविभागेन निर्वाहस्यानौचित्यात् । अप्रयुक्तस्य तेन साधनस्यानुचितत्वात् । हा इति शोकव्यञ्जकशब्दं जहाति । 'ओहाक् त्यागे' ( जु० प० अ० ) । क्विप् ( ३।२।७४ ) । शसि हाहः । हू इति ह्वयति । ह्वेञ ( भ्वा० उ० अ० ) क्विप् ( ३।२।१७८ ) । 'वचिस्वपि–' (६।१।१५ ) इति संप्रसारणम् । 'हल ' (६।४।२ ) इति दीर्घ. । बाहुलकाड्डाप्रत्यये तु ( हाहा· ) व्युत्पन्नोऽप्यात्वश्च । एवं डुप्रत्यये हूहूरपि बोध्य । हाहा सान्तोऽपि । 'गन्धर्वौ वीतिहाहसो ' इति संसारावर्तात् । 'गन्धर्वो हाहसि प्रोक्त ' इति रत्नकोषाच्च । भोजस्तु हाहाहूहुशब्दयोरव्ययत्वमाह । 'हूहूः' इत्यादिह्रस्व । 'हुहुः' इत्युभयह्रस्वश्च । 'हसो हाहाहूहू च द्वौ वृषणश्चाश्व तुम्बुरु ' इति शब्दार्णवात् । 'गीतमाधुर्यसंपन्नौ विख्यातौ च हाहाहूहू' इति व्याडोक्तेश्च ॥ * ॥ गन्ध सौरभमर्वति । 'अर्व गतौ'[1] ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादि ( वा० ६।१।९४ ) । [ 'गन्धर्वस्तु नभश्चरे । पुस्कोकिले गायने च मृगभेदे तुरगमे । अन्तराभवदेहे च' इति हैम ३। ७३५–३६ ] ॥ * ॥ प्रज्ञादिभ्य ( ५।४।३८ ) दीर्घादिरप्ययम् । 'अपि गन्धर्वगान्धर्वदिव्यगायनगातव ' इति शब्दार्णवात्[2] ।' ( १ ) ॥*॥ आद्येन तुम्बुरु-विश्वावसु-चित्ररथादीना सग्रह । 'देवगायकानाम्' एकम् ।

अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥
बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५४ ॥
लोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥ ५५ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तम्

अग्निः, वैश्वानरः, वह्निः, वीतिहोत्रः, धनञ्जयः, कृपीटयोनिः, ज्वलनः, जातवेदाः (=जातवेदस्), तनूनपात्, बर्हिः (=बर्हिस्), शुष्मा (=शुष्मन्), कृष्णवर्त्मा (=कृष्णवर्त्मन्), शोचिष्केशः, उपर्बुधः, आश्रयाशः, बृहद्भानुः, कृशानुः, पावकः, अनलः, रोहिताश्वः, वायुसखः, शिखावान्

१ गत्यर्थक 'अर्व'धातु पवर्गीयान्त , दन्त्योष्ठ्यान्तस्तु हिंसार्थक इत्यवधेयम् ।

२ 'हाहाद्यस्तु गन्धर्वा गान्धर्वा देवगायना ' इति अभि० चि० ( २।९७ ) वचनाच्चेति । "हाहाहूहू'रिति पुल्लिङ्गमेकमखण्डं नामेत्येके । 'गन्धर्वौ च हाहाहूहूरिति लक्ष्यम् । अव्ययावित्येके, यद्वाचस्पति —'हसो हाहाहूहू च द्वौ विषणाश्वश्च तुम्बुरु. ।' इति ।" इति हेमचन्द्रः ( अभि० चि० स्वोप० २।९७ 'हाहा'शब्दव्याख्याने ) ।

(=शिखावत्) आशुशुक्षणि, हिरण्यरेता (=हिरण्यरेतस्), हुतभुक (=हुतभुज्), दहन, हव्यवाहन, सप्तार्चि (=सप्तार्चिष्), दमुना (=दमुनस्), शुक्र, चित्रभानु, विभावसु शुचि (३४ पु), अप्पित्त (न)। 'अग्नि' के ३४ नाम हैं।

अग्निरिति॥ अङ्गति। अगि गतौ (भ्वा० प० से०)। अङ्गेर्नलोपश्च (उ० ४५०) इति निर्नलोपश्च। [अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान् इति मेदिनी ८२।१]॥ (१)॥*॥ विश्वे नरा अस्य। नरे संज्ञायाम् (६।३।१२९) इति विश्वशब्दस्य दीर्घः। विश्वानरस्यापत्यम्। ऋष्यण (४।१।११४)। यत्तु—विदादित्वात् (४।१।१०४) अञ्। बहुत्वे च यञञोश्च (२।४।६४) इति लुक्। विश्वानराः—इति मुकुटः। तन्न। विश्व वैश्वानरा उत [ऋक० ८।३।१४] इत्यत्र लुकोऽदर्शनात्। वैश्वानराय मीढुषे [ऋक० ४।५।१] इत्यादावाद्युदात्तदर्शनाच्च। ऋषिभ्यो गोत्रे एव यञ्ञो विहितत्वेनानन्तरापत्ये प्रमाणत्वाभावाच्च। एतेन विदादित्वात् (४।१।१०४) अञ्—इति वदन् ॥ स्वाम्यपि प्रत्युक्तः॥ (२)॥*॥ वहति हव्यम्। वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (उ० ४।५१) इति निः। निच्च। [वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधे पुमान् इति मेदिनी ८४।१९]॥(३)॥*॥ वी गतिप्रजननकान्त्यसनखादनेषु (अ० प० अ०)। यमणि क्तिन् (३।३।९८)। वीतिर्भक्ष्यपुरोडाशादिर्हूयतेऽस्मिन्। हु दानादनयोः (जु० प० अ०)। हुयामा— (उ० ४।१६८) इति त्रन्। वीतिरश्वो होत्र इव नमस्यति वा। [वीतिहोत्रोऽनले सूर्ये च इति मेदिनी १४४।२९७]॥ (४)॥ धनं जयति। संज्ञायां भृत—(३।२।४६) इति खच्। [धनंजयः सर्पभेदे ककुभे देहमारुते। पार्थेऽग्नौ इति हैम ४।२३१]॥(५)॥ ॥ कृपीटमम्बु जलं तस्य योनिः। 'कृपीटमुदरे जले इति रत्नकोशात्। अग्नेरापः इति श्रुतेः। कृपीटं योनिरस्येति वा। अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम् इति मनुः [९।३२१]॥ (६)॥*॥ ज्वलति। जुचङ्क्रम्य— (३।२।१५०) इति युच्॥ (७)॥*॥ विद्यते लभ्यते। विद्लृ लाभे (तु० उ० अ०)। जातं वेदो धनं यस्मात्। जाते जाते विद्यते इति वा। विद सत्तायाम् (दि० आ० अ०)। जातं वेत्ति वेदयते वा। विद चेतनादौ [विद ज्ञाने (अ०प०से०) विद विचारणे (रु० आ० अ०) विद चेतनाख्याननिवासेषु (चु० आ० से०)]। असुन् (उ० ४।१८९)॥(८)॥*॥ तनूः शरीरं न पातयति। नभ्राण्नपात्— (६।३।७५) इति निपातितः। तनूनपातौ। तनूनपातमुपसस्य निसाते इति मन्त्रः॥*॥ तनूः स्वं स्वरूपं न पाति न रक्षति [इन्धनसमाप्तौ] आनुविनाशित्वाद् इति तनूनपात् गर्वितः। उगिदचाम्— (७।१।७०) इति नुमि तनूनपान्। तनूनपातौ तनूनपा ■ इति वा॥*॥ तन्वा ऊनं कृशं पाति। तनूनः घृतादि तन्ति। यन्नो नप्त्रे (७।२।६८) इति विम्। तनूनपादौ तनूनपाद इति वा॥ (९)॥*॥ वृहति। वृहि वृद्धौ (भ्वा० प० से०)। बृहेर्नलोपश्च (उ० ३।१०९) इति इन्। पुंलिङ्गोऽयम्। बर्हिस्तो बृहद्भानु इत्यमरमालापुंस्काण्डे पाठात्॥ (१०)॥*॥ 'गुनो वैश्वानरो वह्निर्बर्हि शुष्मा तनूनपात् इति शब्दार्णवात् 'बर्हि शुष्मा' इति व्यस्त समस्तनाम इति दर्शितम्। तत्र समस्तपक्षे बर्हिः शुष्मा शुष्म वर्त्म स्यति विग्रहः। बर्हिः शाम [‘बर्हिः पुंसि हुताशने। न स्त्री कुशे इति मेदिनी १७२।३६]। बर्हिरिति। 'शुष्मा इति नान्तं पृथक्—इत्यन्ये॥*॥ शुष्यत्यनेनेति शुष्मा। शुष शोषणे (दि० प० अ०)। अन्येभ्योऽपि— (३।२।७५) इति मनिन्। संज्ञापूर्वकत्वान्न गुणः॥*॥ शुष्यति जलम्। ग्रुपेर तर्थाविरण्यर्थान् अविसिविसिशुषिभ्यः कित् (उ० १।१४५) इति मनिप्रत्यये 'शुष्म' अदन्तोऽपि॥ (११)॥ ॥ कृष्णो धूमो वर्त्मास्य। नान्तः। ['कृष्णवर्त्मा विधुन्तुदे। दुराचारे हुताशे च इति हैम ४।१७५ ७६]॥ (१२)। ॥ शोचींषि ज्वाला केशा इवास्य। नित्यं समासे नुत्तरपदस्थस्य (८।३।४५) इति षत्वम्॥ (१३)॥*॥ 'उष प्रभाते मध्याद्याम् इति विश्वः [१७६।२६]। उषसि बुध्यते प्रबुध्यते। इगुपधत्वात् (३।१।१३५) कः। अहरादीनां पत्यादिषु वा रेफः— (वा० ८।२।७०)। स च व्यवस्थितविभाषयेह नित्यम्॥ (१४)॥*॥ आश्रयमाधारमश्नाति। कर्मण्यण् (३।२।१)। ['आश्रयाशः पुमान् वह्नौ त्रिषु चाश्रयनाशके इति मेदिनी १६४।३२]॥*॥ 'आशयाश' इति पाठान्तरम्। आशेरतेऽनेनाशयः। एरच् (३।३।५६)। तमश्नाति॥ (१५)॥*॥ बृहन्तो भानवो यस्येति॥(१६)॥ ॥ कृश तनूकरणे (दि० प० से०)। कृशयति ऋज्रेन्द्राग्रवज्र— (उ० ४।२) इत्यानुक्॥ (१७)॥*॥ पुनाति। पूञ् पवने (क्र्या० उ० से०)। ण्वुल् (३।१।१३३)। [पावको वह्नौ सदाचारे वह्निमन्थे च चित्रके। भल्लातके विडङ्गे च शोधयितृरपि च॥ इति हैम ३।६२ ६३]॥(१८)॥ । अनित्यनेन। वृषादित्वात् (उ० १।१०६) कलच्। 'अनलो वसुभेदाग्नी [इति मेदिनी १४९।५७]। ['अनलोऽग्नौ। वसुभेदे वसौ वह्नौ इति हैमः १००।६५८]॥ (१९)॥ ॥ लोहिता अश्वा यस्य। वरुणस्तम्भितनाश्वाकुपेर कुमुदोपमान्। हुताशनं किंशुकाभ्यां वायुवभ्रुस्तथावर्णौ इति शालिहोत्रात्। रोहितो मृगोऽश्वो वाहनमस्येति वा। ['रोहितोऽश्वश्चित्रभानौ हरिश्चन्द्रसुते मजे' इति मेदिनी १६२।६३]॥ (२०)॥*॥ वायुः सखा। राजाहःसखिभ्यष्टच् (५।४।९१)॥*॥ वायुं सखायं स्यति (वायुसखा) वा। अस्मिन्पक्षे टजभावात् अनङ् सौ (७।१।९३) इत्यनङ्॥ (२१)॥*॥ शिखा सन्त्यस्य। मतुप् (५।२।९४)॥*॥ व्रीह्यादित्वात् (५।

२।११६) इति प्रत्यये 'शिखी' अपि। 'शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गक.॥' [इति मेदिनी ९३।४२] ॥ (२२) ॥*॥ (आशोष्टुमिच्छति) आङ्पूर्वाच्छुष्यते (दि० प० अ०) सन्नन्तात् 'आङि शुषे सनश्छन्दसि' (उ० २।१०६) इत्यनि.। छान्दसानामपि क्वचिद्भाषायां प्रयोग । 'अध्वर्युक्रतु–' (२।४।४) इति ज्ञापकात् ' आशु शीघ्रं आशु व्रीहिं वा शु क्षणोति। 'क्षणु हिंसायाम्' (त० उ० से०)। इन (उ० ४।११८)। शु इति पूजार्थमव्ययम् ॥ (२३) ॥*॥ हिरण्यं रेतोऽस्य। सान्त। 'हिरण्यरेता पुंसि स्याद्दिवाकरहविर्भुजो. [इति मेदिनी १७५।६९] ॥ (२४) ॥*॥ हुतं भुङ्क्ते। क्विप् (३।२।१७८)। जान्त ॥ (२५) ॥*॥ दहति। ल्यु (३।१।१३४) [ 'दहनश्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते' इति मेदिनी ८८।७५] ॥ (२६) ॥*॥ हव्यं वाहयति। ण्यन्ताद्वहे (भ्वा० उ० अ०) ल्यु (३।१।१३४)। यत्तु स्वामी—'हव्यं वाहयति' इति विगृह्य 'हव्यपुरीषपुरीष्येषु ञ्युट्' (३।२।६५)—इत्याह। तन्न। उदाहृतपाठस्यानुपलम्भात्। 'कव्यपुरीषपुरीष्येषु–' इति पाठस्योपलम्भात्। 'वहश्च' (३।२।६४) इत्यनुवृत्तेर्ण्यन्तादसम्भवाच्च। मुकुटोऽपि—'वाहयति' इति विगृह्य 'हव्येऽनन्त पादम्' (३।२।६६) इति वहेर्ञ्युट्—इत्याह। तदपि न। ञ्युटश्छान्दसत्वात्। 'वहश्च' (३।२।६४) इत्यनुवृत्तेर्ण्यन्तादसम्भवाच्च॥ (२७) ॥*॥ सप्तार्चिषो यस्य। काली-कराली-मनोजवा-सुलोहिता-सुधूम्रवर्णा-स्फुलिङ्गिनी-विश्वदामाख्या सप्त वह्नेर्जिह्वा। ['सप्तार्चिः पावके पुंसि क्रूरचक्षुषि च त्रिषु' इति मेदिनी १७४।६५] ॥ (२८) ॥*॥ 'दमु उपशमे' (दि० प० से०)। अन्तर्भावितण्यर्थाद् 'दमेरुनसि' (उ० ४।२।३५): दाम्यति। दमुना, दमुनसौ ॥*॥ दीर्घमध्योऽपि। 'दमूना दमुना प्राचीनबर्हिः शुचिर्बर्हिषो' इति नामनिधानात् ॥ (२९) ॥*॥ शोचयति। 'ऋज्रेन्द्र–' (उ० २।२८) इति निपातित। शुक्र रेतोऽस्यास्तीति वा। अर्शआद्यच् (५।२।१२७)। शुक्लवर्णत्वादिति वा। रलयोरेकत्वम् [ शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदो क्लीवम्' इति मेदिनी १२९।९२-९३] ॥ (३०) ॥*॥ चित्रा भानवोऽस्य। क्षुभ्नादि (८।४।३९)। [ 'चित्रभानुः पुमान्वैश्वानरे चाहस्करेऽपि च' इति मेदिनी ६६।८७ ] ॥ (३१) ॥*॥ विभा प्रभा वसु धन यस्य। [ 'विभावसुस्तु भास्करे। हुताशने हारभेदे चन्द्रे' इति हैमः ४।३४६ ] ॥ (३२) ॥*॥ शुचि पवित्रं करोति शुचयति। 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्ताद् 'अच इः' (उ० ४।१३९)। यद्वा,–शोचति। अन्तर्भावितण्यर्थाच्छुचे (भ्वा० प० से०) 'इगुपधात्–' (उ० ४।१२०) इतीन्। [ शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु।' इति मेदिनी २८।११] ॥ (३३) ॥*॥ अपां पित्तमिव। दाहकत्वात् ॥ (३४) ॥*॥ चतुस्त्रिंशत् 'अग्नेः'।

**और्वस्तु वाडवो वडवानलः ॥ ५६ ॥**

और्वः, वाडवः, वडवानलः (३ पु), 'वडवानल' के ३ नाम हैं।

और्व इति ॥ उर्वस्य मुनेरपत्यम्[1]। यत्तु विदाद्यञ् (४।१।१०४) बहुत्वे 'यञञोश्च' (२।४।६४) इति लुकि उर्वा.– इति मुकुट। तन्न। 'अनन्तरापत्येऽञोऽसंभवात्। तस्मादप्यण् (४।१।११४) ॥ (१) ॥*॥ वडवायां भव। 'तत्र भव' (४।३।५३) इत्यण्। 'वाडवं करणे स्त्रीणां घोटकौघे नपुंसकम्। पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले ॥' [इति मेदिनी १६१।५०] ॥ (२) ॥*॥ वडवाया अनल। आधाराधेयभाव एव सम्बन्धत्वेन षष्ठ्यर्थ ॥ (३) ॥*॥ त्रीणि 'वाडवाग्ने.'।

**वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्।**

ज्वालः, कीलः (२ पु स्त्री), अर्चिः (= अर्चिष्), हेतिः, शिखा (३ स्त्री), 'आगकी लपट' के ५ नाम हैं।

वह्नेरिति ॥ 'वह्ने' इति प्रायोवाद। 'हेतिः स्यादायुधज्वालासूर्यतेज सु योषिति' इति [मेदिनी ५९।७६] दर्शनात्। ज्वलति। 'ज्वलितिकसन्तेभ्यो ण' (३।१।१४०) ॥*॥ स्त्रियां टाप् (४।१।४) ॥ (१) ॥*॥ 'कील बन्धे' [बन्धने] (भ्वा० प० से०)। कीलति। 'इगुपध–' (३।१।१३५) इति क ॥*॥ स्त्रियां टाप् (४।१।४) [ कीलोऽग्नितेजसि। कूर्परास्त्रभिदो शङ्कौ कीला रतहतावपि' इति हैमः २।४९१-९२] (२) ॥*॥ अर्च्यते। 'अर्च पूजायाम्' (भ्वा० प० से०, चु० उ० अ०) 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसि' (उ० २।१०८)। अर्चि सान्त ॥ ॥ इनि (उ० ४।११८) इन्नन्तोऽपि। 'अग्नेर्भ्राजन्ते अर्चय' इति श्रुते [ऋक्० १।६४।१] ॥*॥ 'स्त्रियाम्' इति अर्चिरादिभि सबध्यते। तथापि 'ज्वालाभासोर्नपुंस्यर्चिः' [अ० ३।३।२३०] इति क्लीबत्वमपि वक्ष्यते। ['अर्चिर्मयूखशिखयो' इति हैमः २।५८८, विश्वश्च १७७।३८] ॥ (३) ॥*॥ हिनोति, हन्ति वा। 'हि गतौ' (स्वा०

१ 'च्यवन'मुनेर्मनुपुत्र्यामारुष्याम् 'ऊर्व'नामा ऋषिर्मातुरूरु विदार्योत्पन्न (महाभा० आदि० ६६।४६)। अनेन स्वकोपानल समुद्रे वडवानलरूपेण तत्याज (महाभा० आदि० १७९।२१), इति क्षेमः। वाचस्पत्ये च 'और्व'–शब्दनिर्वचने कथेयमुक्तेति तत्रैव द्रष्टव्या (१५८२)।

२ उर्वशब्दस्य विदादिगणे पाठात् मुकुटोक्ति सम्यगेव भाति।

प० अ०)। ऊतियूति- (३।३।९७) इत्यादिना क्तिन्तो निपातितः। [ हेतिर्ज्वालास्त्रसूर्याशुषु इति हैम २।२१५] ॥ (४) ॥*॥ नख। शीङ् [ शीङ् स्वप्ने अ० आ० से०] कि शिखावश्च (उ० ५।२४) इति ख। 'शिखा' ज्वालार्वाह्न डालाङ्ग ऽश्वग्रमं श्रके [चूडामात्र शिखायां च ज्वालायां प्रपदेऽपि च॥ इति मेदिनी २०।६ ७] ॥ (५) ॥*॥ पञ्च 'ज्वालायाः'।

त्रिषु स्फुलिङ्गोऽग्निकणः

स्फुलिङ्ग, अग्निकण (२ त्रि), 'चिनगारी के २ नाम हैं।

त्रिष्विति॥ स्फु इत्यनुकरणशब्दः। स्फुना फूत्कारेण लिङ्गति। लिगि गतौ (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)॥*॥ स्फुलिङ्गा जातावपि। अजादित्वाट्टाप् [४।१।४]॥ (१)॥*॥ अग्ने कण॥ (२)॥*॥ द्वे 'अग्निकणस्य'।

संतापः सञ्ज्वरः समौ॥५७॥

उल्का स्यान्निर्गतज्वाला भूतिर्भसितभस्मनी [ २४ ]
क्षारो रक्षा च दावस्तु दवो वनहुताशनः [ २५ ]

सताप, सज्वर (२ पु) अग्निका ताप' के २ नाम हैं।

[ उल्का (स्त्री), 'निकली हुई ज्वाला अर्थात् 'तारा टूटने या लुक' का १ नाम है। भूति (पु स्त्री) भसितम्, भस्म (=भस्मन्। २ न), क्षार (पु) रक्षा (स्त्री) 'राख के ५ नाम हैं। दाव, दव, वनहुताशन (३ पु), 'दावाग्नि के ३ नाम हैं ]।

संताप इति॥ संतापयति। तप संतापे (भ्वा० प० अ०)॥ (१)॥॥ ज्वर रोग (भ्वा० प० से०) ण्यन्तौ। सज्वरयति। पचाद्यच् (३।१।१३४)॥ (२)॥*॥ यत्तु संतापन संतापः। घञ् (३।३।१८)। सज्वरयति सज्वरः। अच् (३।१।१३४)—इति मुकुटनोक्तम्। तन्न। वक्ष्यमाणप्र माणाभावात्। भावकर्मभिधायिनोः समानाधिकरणत्वाभावात्। समौ समानार्थकौ समलिङ्गौ। ▪ 'संतापस्य'।

धर्मराजः पितृपतिः समवर्ती परेतराट्।
कृतान्तो यमुनाभ्राता शमनो यमराड्यमः॥५८॥
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः।

धर्मराज पितृपति, समवर्ता (= समवर्तिन्) परेतराट् (= परेतराज्) कृतान्त, यमुनाभ्राता (= यमुनाभ्रातृ) शमन यमराट् (= यमराज) यम, काल, दण्डधर, श्राद्धदेव वैवस्वत अन्तक (१४ पु) 'यमराज' के १४ नाम हैं।

धर्मराज इति॥ धर्मस्य राजा। राजाह- (५।४।९१) इति टच्॥ (१)॥*॥ पितृणां पतिः (२)॥*॥ समं वर्तितुं शीलमस्य। सुप्यजातौ- (३।२।७८) इति णिनि॥ (३)॥*॥ परेतेषु मृतेषु राजते। सत्सूद्विष- (३।२।६१) इति क्विप्। जाते॥ (४)॥*॥ कृतो ऽन्तो विनाशो येन। [ 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति मेदिनी ६२।१०६ ] (५)॥*॥ यमुनाया भ्राता॥ (६)॥*॥ शमयति। ल्यु (३।१।१३४)। ['शमनः शान्तिवधयोः। शमनः श्राद्धदेवे' इति विश्व ८७।२८ मेदिनी च ९३।३७ ]॥ (७)॥*॥ यमेन संयमेन राजते। क्विप् (३।२।६१) जाते॥ (८)॥ ॥ यमयति। अच् (३।१।१३४)। 'यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च। [ शरीरसाधनापेक्षनित्यकर्मणि चेष्यते॥ ] इति विश्व [ ११०।५ ] ॥ (९)॥*॥— कलयत्यायुः। कल संख्याने (चु० उ० से०) पचाद्यजन्तात् (३।१।१३४) प्रज्ञाद्यण् (५।४।३८)—इति मुकुट। तन्न। कर्तृत्वाभावात्। प्रज्ञादिगणे रूपद्वयप्रसङ्गाच्च। एतेन स्वाम्यपि परास्तः। तस्मात् कालयति' इति विग्रह उचितः। कालवर्णत्वाद्वा। ['कालो मतो महाकाले समये यमकृष्णयोः' इति मेदिनी १४५।७ ]॥ (१०)॥*॥ दण्डस्य धरः। दण्ड धरतीति विग्रहे कर्मण्यण् (३।२।१) इत्यणि 'दण्ड धार' अपि। [ 'दण्डधारो यमे राज्ञि' इति हैम ४।२६४ ]॥ (११)॥*॥ श्राद्धस्य देवः अभावकत्वात् पितृपतित्वाद्वा॥ (१२)॥*॥ विवस्वतो ऽपत्यम्। तस्यापत्यम् (४।१।९२) इत्यण्॥ (१३)॥*॥ अन्तं करोति- अन्तयति। तत्करोति- (वा० ३।१।२६) इति ण्यन्तात् ण्वुल् (३।१।१३३)॥ (१४)॥॥ चतुर्दश 'यमस्य'।

राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः॥५९॥
रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः।
यातुधानः पुण्यजनो नैरृतो यातुरक्षसी॥६०॥

राक्षस, कौणप, क्रव्यात् (= क्रव्याद) क्रव्याद, अस्रप, आशर, रात्रिंचर रात्रिचर, कर्बुर, निकषात्मज, यातुधान, पुण्यजन नैरृत (१३ पु), यातु, रक्ष (—रक्षस्। २ न), 'राक्षस के १५ नाम हैं।

राक्षस इति॥ रक्षत्यस्मात्। रक्ष पालने (भ्वा० प० स०) असुन् (उ० ४।१८९) प्रज्ञाद्यणि (५।४।३८) राक्षस। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि (प० ५।२।६८) इति पुंस्त्वम्। [ राक्षसो यातुधाने स्याच्चण्डायां राक्षसी स्मृता इति मेदिनी १७२।३२ ]॥ (१)॥ ॥ कुणपं शवं भक्षयितुं शीलमस्य। शीलम् (४।४।६१) इत्यण्। कोणं पाति। आत- (३।२।३) इति क। कोणपस्य निकृतेरयम्-कौणपः। तस्येदम् (४।३।१२०) इत्यण्॥ (२)॥ ॥ क्रव्यमाममांसमत्ति। क्रव्ये च (३।२।६९) इति विट्। अदो ऽनन्ने (३।२।६८)

१ नाखावह- इति पा०।

१ वस्तुतस्तु अमत्यर्थि मित्त्वेऽदन्तत्वयोपधावृद्धय प्राप्त्या मुकुटोक्त सम्यगव।

इत्येव सिद्धेऽण् (३।२।१) बाधनार्थमिदम्। तेनाममासभक्षके 'क्रव्याद' इति न भवत्येव। ['क्रव्यान्मामासिरक्षसो' इति हैम २।२२७] ॥ (३) ॥*॥ कृत्तं छिन्नं तदेव पूर्वनिपातः कृतं पक्वं च भुङ्क्ते इति क्रव्याद। 'कृत्तविकृत्तपक्वशब्दस्य पृषोदरादित्वात् (६।३।१०९) क्रव्यादेशः' (३।२।६९) इति काशिका। शब्दार्णवेऽपि कृदध्याये—'सदान्नादकणादौ च स्यात्क्रव्यादाममामभुक्। क्रव्याद कृत्तविकृत्तपक्वमांसभुगुच्यते' इत्युक्ते। तस्मायोगार्थस्य व्यवस्थितत्वेऽपि गौण्या उभयो सामान्येन प्रयोग ॥ (४) ॥*॥ असृ रक्तं पिबति। 'आतोऽनुप–' (३।२।३) इति क। न लुटक् (३।२।८) 'पिबते सुराशीध्वो' (वा० ३।२।८) इति वचनात्। दस्त्यसवान्। ['असृपा तु जलौकाया डाकिन्या राक्षसे तु ना' इति मेदिनी १०२।१३] ॥*॥ न थपयति क्रव्यात्त्वात् अप्रपः। पचाद्यच् (३।१।१३४) नाल्ल्यसवात्॥ (५) ॥*॥ आश्रृणाति 'शृ हिंसायाम्' (क्र्या० प० से०) पचाद्यच् (३।१।१३४) ॥*॥ 'आशिरः' इति पाठे 'अशेर्णिच्च' (उ० १।५२) इति किरच्। 'आशिरो घनुपः शंकु क्रव्यादोऽत्र आशर' इति ममागावर्तं। ['आशिरोऽर्के राक्षसेऽग्नौ' इति हैम ३।५५२] ॥ (६) ॥*॥ रात्रौ चरति। 'चरेष्ट' (३।२।१६)। 'रात्रे कृति विभाषा–' (६।३।७२) इति पक्षे मुम्॥ (७) ॥८॥ ॥*॥ कर्वुरो वर्णेन। यद्वा,–कर्वति। 'कर्ब हिंसायाम्' (भ्वा० प० से०)। 'मद्गुरादयश्च' (उ० १।४१) इति कुरच्। ['कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसो। कर्बुरा कृष्णवृन्ताया शबले पुनरन्यवत्' इति मेदिनी १३१। १२२] ॥*॥ 'कर्वरः' इति पाठान्तरम्। 'नैर्ऋत कर्दरः क्रव्यात् कर्बुरो यातुरक्षसी' इति शब्दार्णव। 'कृ हिंसायाम्' (क्र्या० उ० से०)। कृणाति। 'कृगृशृवृञ्चतिभ्य ष्वरच्' (उ० २।१२१) ॥ (९) ॥*॥ निकषाया आत्मज। मूर्धन्य प ॥ (१०) ॥*॥ यातूनि रक्षांसि दधाति पुष्णाति स्वजातिपोषकत्वात्। धाञो 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्। 'कृत्यल्युट –' (३।३।११३) इति ल्युट् वा। यातूनि यातना धीयन्तेऽस्मिन्निति वा। ल्युट् (३।३। ११७)। अन्तस्थादि [यातुधान] ॥*॥ जातु कदाचित् धानं संनिधानमस्येति (जातुधानः) चवर्गादिरपि [जातुधान] ॥ (११) ॥*॥ विरुद्धलक्षणया पुण्यश्चासौ जनश्च। ['भवेत् पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च' इति विश्व ९६।१४१, मेदिनी च ९७।९६] ॥ (१२) ॥*॥ निर्ऋतेरपत्यम् ॥ (१३) ॥*॥ याति। 'कमिमनिजनिगाभायाहिभ्यश्च' (उ० १। ७२) इति तु। अर्धर्चादि (ग० २।४।३१) ॥ (१४) ॥*॥ रक्षन्त्यस्मात्। असुन् (उ० ४।१८९) 'भीमादयोऽपादाने' (३।४।७४) ॥ (१५) ॥*॥ पञ्चदश 'राक्षसस्य'।

**प्रचेता वरुणः पाशी यादसांपतिरप्पतिः।**

प्रचेताः (=प्रचेतस्), वरुणः, पाशी (=पाशिन्), यादसांपतिः, अप्पतिः (५ पु), 'वरुण' के ५ नाम हैं।

प्रचेता इति ॥ प्रचेतयति। प्रकृष्टं चेतोऽस्येति वा। चिती संज्ञाने' (भ्वा० प० से०)। असुन् (उ० ४।१८९)। 'प्रचेताः पाशिनि मुनौ ना 'प्रहृष्टहृदि त्रिषु'॥ [इति मेदिनी १७४।५७] ॥ (१) ॥*॥ व्रियते वृणोति वा। 'वृञ् वरणे' (स्वा० उ० से०)। 'कृवृदारिभ्य उनन्' (उ० ३।५३)। 'वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययो' [इति विश्व ५०।३१] ॥*॥ युचि (उ० २।७४) 'वरणः' अपि। 'वरं वृणन्ति त देवा वरदश्च वरार्थिनाम्। धातुर्वै वरणे प्रोक्तस्तस्मात्स वरुणः स्मृत' इति साम्बपुराणम्॥ (२) ॥*॥ पाशोऽस्यास्ति। इति (५।२।११५)। 'पाशी पाशधरेऽप्यनौ' इति विश्व [९३।१०६] ॥ (३) ॥*॥ यादसांपति। 'तत्पुरुषे कृति–' (६।३।१४) इत्यलुक्। ['यादसांपतिरम्भोधौ पश्चिमाशापतावपि' इति मेदिनी ७१। २३४] ॥*॥ लुकि तु 'यादःपति' अपि॥ (४) ॥*॥ अपांपति ॥*॥ लुकि 'अप्पतिः' अपि ॥ (५) ॥*॥ पञ्च 'वरुणस्य'।

**श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥६१॥**
**पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः।**
**समीर-मारुत-मरुज्-जगत्प्राण-समीरणाः ॥ ६२ ॥**
**नभस्वद्-वात पवन-पवमान प्रभञ्जनाः।**
**प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः [ २६ ]**

श्वसनः, स्पर्शनः, वायुः, मातरिश्वा (=मातरिश्वन्), सदागतिः, पृषदश्वः, गन्धवहः, गन्धवाहः, अनिलः, आशुगः, समीरः, मारुतः, मरुत्, जगत्प्राणः, समीरणः, नभस्वान् (=नभस्वत्), वातः, पवनः, पवमानः, प्रभञ्जनः (२० पु), 'हवा' के २० नाम हैं।

[प्रकम्पनः (पु), 'आँधी' का १ नाम है। झञ्झावातः (पु) 'वर्षाके सहित हवा' अर्थात् 'झपसी' का १ नाम है]।

श्वसन इति ॥ श्वसित्यनेन। 'श्वस प्राणने' (अ० प० से०) ल्युट् (३।३।११७)। ['श्वसनं श्वसिते पुंसि मारुते मदनद्रुमे' इति मेदिनी ९३।३८] ॥ (१) ॥*॥ स्पृशति 'स्पृश स्पर्शने' (तु० प० अ०)। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्। 'स्पर्शनो मारुते स्पर्शदानयो स्पर्शनं मतम्' इति विश्व [८८।४४] ॥ (२) ॥*॥ वाति। 'वा

१ '–प्रकृष्टहृदि' इति पा०।

गतिगन्धनयो' (अ० प० अ०)। 'कृवापाजि-' (उ० १।१) इत्युण्। 'आतो युक्' (७।३।३३) इति युक् ॥ (३) ॥*॥ 'मातरि' इति सप्तम्यन्तप्रतिरूपकम्। मातरि अन्तरिक्षे श्वयति सञ्चरति। टुओश्वि गतिवृद्ध्योः' (भ्वा० प० से०)। यद्वा– मातरि जनन्यां श्वयति वर्धते सप्तसप्तकरूपत्वात्। 'श्वन्नुक्षन्-' (उ० १।१५७) इति निपातनात्सप्तम्या अलुक् ॥ (४) ॥*॥ सदा गतिरस्य [ 'सदागतिर्नाकवातनिर्वाणेषु सदीश्वरे' इति मेदिनी ७०।२२३] ॥ (५) ॥*॥ पृषद् मृगभेदोऽश्वो वाहनमस्य। पृषतामम्बुकणानामश्व इवेति वा। यत्तु—पृषन्त्यम्बुकणा अश्वोऽस्य– इति मुकुट। तन्न। वाह्यवाहकभावस्य विपरीतत्वात् ॥ (६) ॥*॥ वहति। पचाद्यच् (३।१।१३४)॥ गन्धस्य वहः। यत्तु—गन्धस्य वह –इति विगृह्य 'अकारादनुपपदात् सोपपदो भवति विप्रतिषेधेन' (वा० ३।२।१) इत्यस्य प्रायिकत्वात् पचाद्यच् (३।१।१३४)–इति मुकुट। तन्न। प्रायिकत्वकल्पनाया निर्मूलत्वात्। उपपदाविवक्षायामच (३।१।१३४) सिद्धत्वाच्च ॥ (७) ॥*॥ गन्धं वहति। 'कर्मण्यण्' (३।२।१) ['गन्धवाहो मृगेऽनिले। गन्धवाहा[1] तु नासायाम्' इति हैमः १३९।३५४]॥(८) ॥*॥ अनित्यनेन। 'सलिकल्यनि-' (उ० १।५४) इति इलच्। [अनिलो वसुवातयो' इति मेदिनी १४९।५७]॥( ९ ) ॥*॥ आशु गच्छति। 'अन्यत्रापि-' (वा० ३।२।४८) इति ड। ['आशुगोऽर्के शरे वायौ' इति हैम' ३।११६] ॥ (१०) ॥*॥ सम्यग् ईर्ते गच्छति ईरयति प्रेरयति वा। 'ईर गतौ' (अ० आ० से०)। अच् (३।१।१३४) ॥ ( ११ ) ॥*॥ युचि ( ३।२।१४८ ) तु समीरण। ['समीरणः स्यात्पवने पथिके च फणिज्जके' इति मेदिनी ५३।१११] ॥ ( १५ ) ॥ * ॥ म्रियन्तेऽनेन वृक्षेन विना वा। मरुत्। 'मृग्रोरुति' (उ० १।९४)। [ 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी ६४।१४३ ]॥ ( १३ ) ॥*॥ तत प्रज्ञाद्यण् (५।४।३८)॥*॥ मरुतशब्दोऽपि बोध्य। 'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत्' इति विक्रमादित्यकोशात्। 'मारुतः श्वसनः प्राणः समीरो मारुतो मरुत्' इति समारावर्ताच्च ॥(१२)॥ अतएव जगत्प्राणो पृथगपि। 'जगत् स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति रुद्रकोष। 'जगदाख्या स्मृता वाते विष्टपे जङ्गमेऽपि च। जगती भुवने स्यात्ता छन्दोभेदे जनेऽपि च' इति विश्व [६७।१३९] तत्र 'द्युतिगमिजुहोतीनां द्वे च' (वा० ३।२।१७८) इति क्विपि द्वित्वे 'गम क्वौ' (६।४।४०) इति मलोपे तुकि जगत्, जगती ॥*॥ यदा तु 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ० २।८४) इति व्युत्पाद्यते, तदा 'उगिदचाम्–' (७।१।७०) इति नुम्। जगत्, जगन्तौ ॥*॥ यत्तु—मुकुटः 'यदा वर्तमाने पृषद्बृहन्महज्जगच्छतृवद् इत्येतन्नास्ति'–इत्यवोचत्। तन्न। उणादिसूत्रस्यासत्त्वे मानाभावात्। उगित्कार्यार्थत्वाच्च ॥*॥ एकत्वे तु जगता प्राण ॥ ( १४ ) ॥*॥ नभोऽस्याश्रयत्वेनास्ति। मतुप् ( ५।२।९४ ) 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वाद्रुत्वाभाव ॥ ( १६ ) ॥*॥ वाति। 'हसिमृग्रिण्' (उ० ३।८६) इति तन् ॥*॥ 'तितुत्रतथसिसुसरकसेषु च' ... 'क्तिच्क्तौ च संज्ञायाम्' (३।३।१७४) इति क्तिचि 'वातिः' अपि। 'वायुर्मरुत्वाञ्श्वसनः पवनो मरुतोऽनिल। नभस्वान् क्षिपणुर्वातिः शुषिणो नघटो वहः' इति साहसाङ्क ॥ (१७) ॥*॥ पुनाति। 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति युच् [ पवनं कुम्भकारस्य पाकस्थाने नपुंसकम्। निष्पावमरुतो पुंसि' इति मेदिनी ८८।४४ ] ॥ ( १८ ) ॥ * ॥ पवते। 'पूङ्यजो शानन्' ( ३।२।१२८ )। 'आने मुक्' ( ७।२।८२ ) ॥ ( १९ ) ॥ * ॥ प्रकृष्टं भनक्ति। 'भञ्जो आमर्दने' (रुधा० प० अ०)। युच् (उ० २।७८) ॥ (२०) ॥*॥ विद्यते 'वातस्य'।

**प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६३ ॥**

**शरीरस्था इमे**

**हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः [२७]**

**उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः [२८]**

प्राणः, अपानः, समानः, उदानः, व्यानः (५ पु), ये ५ 'शरीरमें रहनेवाले वायु' हैं।

[ हृदयमें 'प्राण', गुदामें 'अपान', नाभिप्रदेशमें 'समान', कण्ठदेशमें 'उदान' और सम्पूर्ण शरीरमें 'व्यान' (५ पु) नामक वायु रहता है ]।

प्राण इति ॥ प्रसरणेन, अपसरणेन, समन्तात्, ऊर्ध्वं व्याप्त्या च अनित्यनेन। 'हलश्च' (३।३।१२१) इति घञ् –इति मुकुट। अन्ये तु—प्राणयति, अपानयति, समन्तादानयति। आनयते [ 'अन प्राणने' (अ० प० से०) इति ण्यन्तात् ] ड (वा० ३।२।१०१) अच् (३।१।१३४) वा– इत्याहु। इमे प्राणादय शरीरस्था वायव। तत्र 'हृदि प्राणो, गुदेऽपान, समानो नाभिसंस्थित। उदान कण्ठदेशे स्याद्, व्यान सर्वशरीरग'[1] ॥ अन्नप्रवेशन मूत्राद्युत्सर्गोऽन्नादिपाचनम्। भाषणादिनिमेषादि तद्व्यापारा क्रमादमी ॥' प्राण इत्यत्र 'अनितेः' (८।४।१९) इति णत्वम्। 'प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंल्लिङ्गः, पूरिते वाच्यलिङ्गः, पुंभूम्नि चासुषु॥'[इति मेदिनी ४६।२१]।['अपानं तु गुदे क्लीबं, पुंसि स्यात्तस्य मारुते' इति मेदिनी ८४।२८। 'उदानोऽप्युदरावर्ते वायुभेदे भुजङ्गमे' इति मेदिनी ८५।

१. 'गन्धवहा' इति पा०।

१. श्लोकोऽयं मूले प्रक्षिप्तेऽपि पठित।

४२। 'समानः सत्समेकेषु त्रिषु, ना नाभिमारुते' इति मेदिनी ९३।४६ ]। प्रत्येकं 'देहस्थपञ्चवायूनाम्'।

रंहस्तरसी तु रयः स्यदः।
जवः

रंहः (= रंहस्), तरः (= तरस्। २ न), रयः, स्यदः, जवः (३ पु), 'वेग' के ५ नाम हैं।

रह इति॥ रमतेऽनेन। 'रमेर्हुक्च'¹ (उ० ४।२१४) इत्यसुन् हुगागमश्च। रहत्यनेन वा। 'रहि गतौ' (भ्वा० प० से०)। असुन् (उ० ४।१८९)॥(१)॥*॥ तरन्त्यनेन। 'तॄ प्लवनतरणयोः' (भ्वा० प० से०)। असुन् (उ० ४।१८९)॥(२)॥*॥ रिणात्यनेन। 'री गतिरेषणयोः' (क्र्या० प० अ०)। 'एरच्' (३।३।५६)। रय—इति स्वामिमुकुटौ। तन्न। करणे ल्युटो [३।३।११७] बाधकस्य सत्त्वात्। तस्मात् 'पुंसि–' (३।३।११८) इति घ। रयतेऽनेन वा। 'रय गतौ' (भ्वा० आ० से०)। 'पुंसि–' (३।३।११८) इति घ.। 'हलश्च' (३।३।१२१) इति घञ् तु सञ्ज्ञापूर्वकत्वाद् वृद्ध्यभाव॥ (३)॥*॥ स्यन्दतेऽनेन। 'स्यदो जवे' (६।४।२८) इति घञन्तो निपातितः (४)॥*॥ 'जु' इति सौत्रो (३।२।१५०) धातुः [गतिवेगार्थक]। जवनम्। 'ऋदोरप्' (३।३।५७)। पवर्गादि। ['जवो वेगवति त्रिषु। पुंल्लिङ्गस्तु भवेद्वेगे चौड्रपुष्पे जवा स्मृता॥' इति मेदिनी १५८।७] ॥ (५) ॥ * ॥ इति मुकुट। वस्तुतस्तु रंहआदिष्वपि भावव्युत्पत्तिरेव न्याय्या। पञ्च 'वेगस्य'।

अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्॥ ६४॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च।

शीघ्रम्, त्वरितम्, लघु, क्षिप्रम्, अरम्, द्रुतम्, सत्वरम्, चपलम्, तूर्णम्, अविलम्बितम्, आशु (११ न), 'शीघ्र' के ११ नाम हैं।

अथेति॥ रंह आदयः सवेगगतिवचनाः। शीघ्रादयस्तु धर्मवचना एव। अत एव 'शीघ्रं पचति' इति प्रयोगः, न तु 'जवं पचति' इति—इति वदन्ति। वस्तुतस्तु रंह प्रभृतयो वेगाख्यगुणपरा, शीघ्रादयस्तु कालाल्पत्वपरा—इति। शिङ्घति व्याप्नोति। 'शिघि आघ्राणे' (भ्वा० प० से०)। 'शीघ्रादयश्च' (?) इति रगन्तो निपातितः। ['शीघ्रं नलदे चक्राङ्गे क्लीबं द्रुतगतौ त्रिषु' इति मेदिनी १२९।९१]॥ (१)॥*॥ त्वरते स्म। 'ञित्वरा संभ्रमे' (भ्वा० आ० से०)। 'गत्यर्थाकर्मक–' (३।४।७२) इति कर्तरि क्त। 'रुष्यमत्वरसंघुषास्वनाम्' (७।२।२८) इति वेट्। ['त्वरितं वेगतद्वतो' इति हैम ३।२७९]॥(२)॥*॥ इडभावे तूर्णम्। 'ज्वरत्वर–' (६।४।२०) इत्यूठ्। 'रदाभ्याम्–' (८।२।४२) इति नत्वम्। 'रषाभ्याम्–' (८।४।१) इति णत्वम्॥ (९)॥*॥ 'लघि गतौ' (भ्वा० आ० से०) लङ्घते। 'लङ्घिबंह्योर्नलोपश्च' (उ० १।२९) इति कु, नलोपश्च। '—लघि शोषणे' (भ्वा० प० से०)—इति तु मुकुटस्य प्रमादः। ['लघुरगुरौ च मनोज्ञे निःसारे वाच्यवल्लीबम्। शीघ्रे कृष्णागुरुणि च स्पृक्कानामौषधौ तु स्त्री॥' इति मेदिनी २६।५]॥*॥ 'वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यते' (वा० ८।२।१८) इति रत्वपक्षे 'रघु' इत्यपि। 'वरुणस्य रघुस्यद' इति [भाष्य-] प्रयोगात्॥ (३)॥*॥ क्षिपति। 'क्षिप प्रेरणे' (तु० उ० अ०)। 'स्फायितञ्चि–' (उ० २।१३) इति रक्॥(४)॥*॥ ऋच्छति, इयर्ति वा। 'ऋ गतौ' (भ्वा०, जु० प० अ०)। पचाद्यच् (३।१।१३४)। 'अरमङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपि' इति शाश्वत [५८५]। 'अलम्' इत्यव्ययस्य 'वालमूल–'(वा० ८।२।१८) इत्यादिना रेफपक्षे तु 'अरम्' इत्यव्ययमपि।—अप् (३।३।५७)। बाहुलकात् क्लीबत्वम्—इति मुकुटस्य प्रमादः। बाहुलकस्यागतिकगतित्वात्। अत्र तूक्तगते सत्त्वात्। एतेन स्वाम्युक्तिरपि परास्ता॥ (५)॥*॥ द्रवति स्म। 'द्रु गतौ' (भ्वा० प० अ०)। 'गत्यर्था–' (३।४।७२) इति कर्तरि क्त। ['अथ द्रुतं त्रिषु। शीघ्रे विलीने विद्राणे' इति मेदिनी ५५।२५]। यत्तु—भावे क्त—इति मुकुटेनोक्तम्। तन्न। त्वरितमित्यादावपि तथात्वप्रसङ्गात्। वैषम्ये बीजाभावात्। एतेन 'लङ्घयते' इति कर्मव्युत्पत्तिरपि¹ परास्ता॥ (६)॥*॥ सह त्वरया वर्तते॥ (७)॥*॥ चोपति। 'चुप मन्दायां गतौ' (भ्वा० प० से०)। 'चुपेरच्चोपधायाः' (उ० १।१११) इति कल प्रत्ययः। ['चपलः पारदे मीने चोरके प्रस्तरान्तरे। चपला कमला विद्युत्पुंश्चलीपिप्पलीषु च॥ नपुंसकं तु शीघ्रे स्यात्वाच्यवत्तरले चले' इति मेदिनी १५१।८७-८८]॥ (८)॥*॥ विलम्बते स्म। 'लवि अवस्रंसने' (भ्वा० आ० से०)। अकर्मकत्वात् (३।४।७२) कर्तरि क्त। नञ्समासः।—भावे क्त—इति मुकुटस्तु पूर्ववत्॥ (१०)॥*॥ अश्नुते। 'अशू व्याप्तौ' (स्वा० आ० से०)। 'कृवापाजि–' (उ० १।१) इत्युण्। 'आशुस्तु² व्रीहिशीघ्रयोः' [इति हैम २।५५६]॥ (११)॥*॥ एकादश 'शीघ्रस्य'।

१. 'रमेरच' इत्येव सूत्रस्वरूपम्, तत्र 'अभेर्हुक् च' (उ० ४।२१३) इति पूर्वसूत्रात् हुकोऽनुवृत्त्याऽत्र 'रमेर्हुक्च' इति पाठः फलितार्थकथनपर इति बोध्यम्।

१ 'स्वाम्युक्ता' इति शेषः।
२. 'आशु तु' इति पा०।

सततानारताश्रान्तसंततविरतानिशम् ॥ ६५ ॥
नित्यानवरताजस्रमपि

सततम्, अनारतम्, अश्रान्तम्, सन्ततम्, अविरतम्, अनिशम्, नित्यम्, अनवरतम्, अजस्रम् ( ९ न ), 'नित्य' के ९ नाम हैं।

सततेति ॥ सतन्यते स्म । 'तनु विस्तारे' ( त० उ० से० ) । क्त ( ३।४।७२ ) । 'अनुदात्तोपदेश–' ( ६।४।३७ ) इति नलोपः । 'समो वा हिततततयोः' ( वा० ६।१।१४४ ) इति वा समो मलोपः ॥(१)॥*॥ पक्षे सततम् ॥(४)॥*॥ आङ्पूर्वो रमिर्विरामे । अविद्यमानमारतं यस्मिन् ॥ ( २ ) ॥ * ॥ 'श्रमु तपसि खेदे च' ( दि० प० से० ) । भावे क्त ( ३।३।११४ )। 'अनुनासिकस्य–' ( ६।४।१५ ) इति दीर्घः । अविद्यमानं श्रान्तमत्र ॥ ( ३ ) ॥*॥ नास्ति विरतमस्य ॥ ( ५ ) ॥ * ॥ निशाव्यापाररहित्यमुपचारात् । नास्ति निशाऽस्मिन् ॥ ( ६ ) ॥*॥ नियमेन भवम् । 'त्यब् नेर्ध्रुवे' ( वा० ४।२।१०४ ) । [ 'नित्यं स्यात्सततेऽपि च । शाश्वते त्रिषु' इति मेदिनी ११५।३४-३५ ] ॥ ( ७ ) ॥*॥ नास्त्यवरतं यत्र ॥ ( ८ ) ॥*॥ न जस्यति । 'जसु मोक्षणे' ( दि० प० से० ) । 'नमिकम्पि–' ( ३।२।१६७ ) इति र ॥*॥ सततम्, अजस्रम्, शब्दावव्ययावपि नित्यपर्यायौ स्तः । 'शश्वदभीक्ष्णं नित्यं सदा सततमजस्रमिति सातत्ये' इत्यव्ययप्रकरणे आपिशलेः ॥ ( ९ ) ॥ * ॥ नव 'निरन्तरस्य' ।

अथातिशयो भरः ।
अतिवेल-भृशात्यर्थातिमात्रोद्गाढ-निर्भरम् ॥ ६६ ॥
तीव्रैकान्त नितान्तानि गाढ बाढ दृढानि च ।

अतिशय, भरः ( २ पु ), अतिवेलम्, भृशम्, अत्यर्थम्, अतिमात्रम्, उद्गाढम्, निर्भरम्, तीव्रम्, एकान्तम्, नितान्तम्, गाढम्, बाढम्, दृढम् ( १२ न ), 'अतिशय' अर्थात् अधिक के १४ नाम हैं।

('शीघ्रम्' .... 'दृढम्' तक शब्दों का प्रयोग द्रव्यवाचक न होने पर नपुंसकलिङ्ग में और द्रव्यवाचक होने पर तीनों लिङ्गों में होता है।)

अथेति ॥ सततं क्रियान्तरैरव्यवधानम् , अतिशयस्तु पीनः पुन्यम्, इति भेदः । अतिशेते [ शीङ् स्वप्ने, अ० आ० से० ]। पचाद्यच् ( ३।१।१३४ )। यद्वा,–अतिशयनम् । 'एरच्' ( ३।३।५६ ) भावे ।—अतिशेतेऽभिभवत्यनेन । अतिपूर्वाच्छीङ 'एरच्' ( ३।३।५६ ) इति मुकुटः । तन्न । ल्युट्प्रसङ्गात् । 'भरः पूर्णता' इति स्वव्याख्यानविरोधाच्च ॥ ( १ ) ॥ * ॥—'भृ भर्त्सने' ( क्र्या० प० से० ) । करणे 'ऋदोरप्' ( ३।३।५७ )–इति स्वामिमुकुटौ । तन्न । ल्युटा [ ३। ३।११७ ] बाधप्रसङ्गात् । भरति । 'भृ भरणे' ( भ्वा० उ० अ० ) । पचाद्यच् ( ३।१।१३४ ) । यद्वा,–भरणम् । 'पुंसि–' ( ३।३।११८ ) इति घ, अप् ( ३।३।५७ ) वा ॥ ( २ ) ॥ * ॥ उपसर्गान्तरनिवृत्त्यर्थं 'निर्भर' इत्युक्तम् ॥ * ॥ अतिक्रान्तं वेला मर्यादाम् । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' ( वा० २।२।१८ ) इति समासः ॥(३)॥*॥ भृशते[1]। 'भृशु भ्रशु अधः पतने' [दि०प०से०] अन्तर्भावितण्यर्थात् 'इगुपध–' ( ३।१।१३५ ) इति क । भृशम् ॥ ( ४ ) ॥ * ॥ अर्थो निवृत्तिविषयो वा, तमतिक्रान्तम् अत्यर्थम् ॥ ( ५ ) ॥ * ॥ मात्रा स्तोकम् , तामतिक्रान्तम् । 'गोस्त्रियोः–' ( १।२।४८ ) इति ह्रस्वः । ( ६ ) ॥*॥ उद्गाह्यते स्म । 'गाहू विलोडने' ( भ्वा० आ० से० )। क्त ( ३।४।७२ )॥(७)॥*॥ निःशेषेण भरोऽत्र ॥ ( ८ ) ॥ * ॥ तीवति । 'तीव स्थौल्ये' ( भ्वा० प० से० । दन्त्योष्ठ्यवान्तः ) । बाहुलकाद् रक् [ उ० २। २८ ] ॥ ( ९ ) ॥ * ॥ एकोऽन्तो निश्चयोऽत्रेति ॥ ( १० ) ॥*॥ नितास्यति स्म । 'तमु काङ्क्षायाम्' (दि० प० से०)। अकर्मकत्वात् कर्तरि क्त ( ३।४।७२ ) । 'अनुनासिकस्य–' ( ६।४।१५ ) इति दीर्घः ॥ ( ११ ) ॥ * ॥ गाढमुद्गाढवत् ॥ ( १२ ) ॥*॥ 'बाहृ प्रयत्ने' ( भ्वा० आ० से० ) । 'क्षुब्धस्वान्त–' ( ७।२।१८ ) इति निपातितम् । [ 'बाढं भृशप्रतिज्ञयोः' इति हैम २।१३१ ] ॥ ( १३ ) ॥*॥ 'दृह दृहि वृद्धौ' ( भ्वा० प० से० ) । 'दृढः स्थूलबलयोः' ( ७। २।२७) निपातितम् । [ 'दृढः स्थूले भृशे शक्ते' इति विश्व ४६।१ ] ॥ ( १४ ) ॥ * ॥ चतुर्दश 'अतिशयस्य' ।

क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्वगामि यत् ॥६७॥

क्लीब इति ॥ शीघ्रादिदृढपर्यन्तं क्रियाविशेषणत्वादद्रव्ये वर्तमानं क्लीबे स्यात् । यथा शीघ्रं जुहोति, सततं भुङ्क्ते । एषां मध्ये यत् सत्वगामि द्रव्यगामि तत् त्रिषु वाच्यलिङ्गम् इत्यर्थः । शीघ्रा जरा, शीघ्रो मृत्युः, शीघ्रं वयः, इत्यादि । अतिशयभरयोः सत्ववचनत्वेऽपि पुंस्त्वमेव । पुल्लिङ्गेन निर्देशात् । 'गाढैकान्तनितान्तानि पुमानतिशयो भरः' इति रभसाच्च । 'अतिशयं पचति' इति प्रयोगस्तु क्रियाविशेषणत्वात्कर्मत्वेन द्वितीयया । क्लीबता तु न, नियतलिङ्गत्वात् । शीघ्रादीनामनियतलिङ्गानां हि क्रियाविशेषणत्वे क्लीबता, न तु नियतलिङ्गानाम् । क्वचिद् 'भेद्यगामि' इति पाठः, तस्य विशेष्यगामीत्यर्थः ।

कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥
किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैडविड-श्रीद पुण्यजनेश्वराः ॥ ६९ ॥

कुबेर, त्र्यम्बकसख, यक्षराट् (=यक्षराज्), गुह्यकेश्वर, मनुष्यधर्मा (=मनुष्यधर्मन्), धनद, राजराज, धनाधिप,

[1] 'भृंशयति' इत्येव पठितव्यं 'भृश' धातोर्दैवादिकत्वाच्छ्यनो दुर्वारत्वात् ।

किन्नरेशः, वैश्रवणः, पौलस्त्यः, नरवाहनः, यक्षः, एकपिङ्गः, ऐडविडः (ऐलविलः), श्रीदः, पुण्यजनेश्वरः ( १७ पु ), 'कुबेर' के १७ नाम हैं।

**कुबेर इति** ॥ कुत्सितं वेरं शरीरमस्य। कुष्ठित्वात्। 'कुत्सायां क्विति शब्दोऽयं शरीरं वेरमुच्यते। कुबेरः कुशरीरत्वान्नाम्ना तेनैव सोऽङ्कितः ॥' इति वायुपुराणम्। यद्वा,—कुम्बति धनम्। 'कुबि आच्छादने' (भ्वा० प० से०)। 'कुम्बेर्नलोपश्च' ( उ० १।५९ ) इत्येरक् ॥ (१) ॥*॥ त्र्यम्बकस्य सखा। 'राजा–'(५।४।९१) इति टच् ॥(२)॥*॥ यक्षेषु राजते। 'सत्सू–' ( ३।२।६१ ) इति क्विप् ॥ (३) ॥ * ॥ गुह्यं कायति [ 'कै शब्दे', भ्वा० प० से० ] 'आतोऽनुप–' (३।२।३) इति कः। गुह्यकानामीश्वरः ॥ (४) ॥ * ॥ मनुष्यस्येव धर्म आचारः दमश्रुलत्वादिर्यस्य। 'धर्मादनिच् केवलात्' ( ५।४।१२४ ) ॥ (५) ॥ * ॥ धनं दयते। 'देङ् पालने' (भ्वा० आ० अ०)। 'आतः' ( ३।२।४) इति कः ॥ (६)॥*॥ राज्ञा यक्षाणां राजा। 'राजा–' ( ५।४।९१ ) इति टच्। 'यक्षे चन्द्रे च राजा स्यात्' इति त्रिकाण्डशेष. [ ३।३।२५६ ] ॥ (७) ॥ * ॥ धनानामधिप. ॥ (८) ॥ * ॥ किंनराणामीशः (९) ॥*॥ विश्रवसोऽपत्यम्। शिवादिपु ( ४।१।११२ ) विश्रवसो विश्रवणरवणावादेशौ निपातितौ अण् च ॥ (१०) ॥ * ॥ पुलस्त्येर्गोत्रापत्यम्। 'गर्गादिभ्यो यञ्' (४।१।१०५)। बहुत्वे 'पुलस्तयः।—अपत्यं गोत्रं वा–इति मुकुटः। तत्र। अनन्तरापत्ये यञोऽसंभवात् ॥ ( ११ ) ॥ * ॥ नरो वाहनमस्य। क्षुभ्नादित्वात् ( ८।४।३९ ) न णत्वम् ॥ (१२) ॥*॥ ई लक्ष्मीमक्ष्णोति व्याप्नोति। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। 'कर्मण्यण्' ( ३।२।१ )। यक्ष्यते। 'यक्ष पूजायाम्' ( चु० आ० से०)। 'अकर्तरि–' (३।३।१९) इति घञ्, 'पुंसि–' (३।३।११८) इति घो वा। यजति शिवम्। इज्यते लोकेन वा। बाहुलकात्सो वा ॥ (१३) ॥ * ॥ साभूयं गौरीनिरीक्षणे वामे चक्षुषि रुद्रानुतयात्पिङ्गलतामगात्। अत एकं पिङ्गमस्य ॥ (१४) ॥ * ॥ इडविडोऽपत्यम्। 'तस्यापत्यम्' ( ४।१।९२ ) इत्यण् ॥ * ॥ डलयोरेकत्वस्मरणाद् 'ऐलविळः' अपि। इलविलाया अपत्यमिति वा विग्रहः। तत्र 'अवृद्धाभ्यो नदीमानुषी–' ( ४।१।११३ ) इत्यण्। इडविलास्ति मातृत्वेनास्य। ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण् इति वा ॥ (१५) ॥ * ॥ श्रियं दयते [ 'देङ् प्रणिदाने', दि० आ० अ० ] ददाति [ 'डुदाञ् दाने', जु० प० अ० ] वा ॥ (१६) ॥*॥ पुण्यजनानामीश्वरः ॥ (१७) ॥*॥ सप्तदश 'कुबेरस्य'।

१. 'यञञोश्च' इति सूत्रेण यञो लुकि इत्याशयः।

**अस्योद्यानं चैत्ररथम्**

चैत्ररथम् ( न ) यह नाम कुबेर के (खेल-कूद के) उद्यान का है।

**अस्येति** ॥ उद्यान्ति अस्मिन्। 'या प्रापणे' (अ० प० अ० )। ल्युट् ( ३।३।११७ ) ॥ * ॥ चित्ररथेन निर्वृत्तम् 'तेन निर्वृत्तम्–' ( ४।२।६८ ) इत्यण् ॥ ( १ ) ॥ * ॥ एकम् **'कुबेराक्रीडस्य'**।

**पुत्रस्तु नलकूबरः।**

नलकूबरः ( पु )—यह नाम कुबेर के पुत्र का है।

**पुत्रस्त्विति** ॥ नल कूबरो युगधरो यस्य। त्रिकाण्डशेषे तु–'पुत्रो तु नलकूबरो' इत्युक्तम्। तत्तु 'नासत्यौ' इतिवदौपचारिकं बोध्यम्। नलकूबर-मणिग्रीवयोस्तत्पुत्रयोः पुराण-प्रसिद्धत्वात्। 'नलकूबरमणिग्रीवाविति ख्यातौ श्रियान्वितौ' इति भागवतम् ॥ ( १ ) ॥ * ॥ एकम् **'कुबेरपुत्रस्य'**।

**कैलासः स्थानम्**

कैलासः ( पु )—यह नाम कुबेर के निवासस्थान का है।

**कैलास इति** ॥ के जले लासो लसनमस्य। केलासः स्फटिकः। 'हलदन्तात्–' ( ६।३।९ ) इत्यलुक्। तस्यायं कैलासः। यद्वा,—केलीनां समूहः कैलम्। 'तस्य समूहः' (४।२।३७) इत्यण्। तेन आस्यतेऽत्र। 'आस उपवेशने' ( अ० आ० से० )। 'हलश्च' ( ३।३।१२१ ) इति घञ् ॥ (१) ॥*॥ एकम् **'कुबेरस्थानस्य'**।

**अलका पूः**

अलका ( स्त्री )—यह नाम कुबेर के नगर का है।

**अलकेति** ॥ अलति भूषयति। 'अल भूषणादिषु'(भ्वा० प० से० )। 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २।३२) इति क्वुन्। क्षिपकादित्वात् ( वा० ७।३।४५ ) नेत्वम्। '**अलका** कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' [ इति मेदिनी ४।४१ ] ॥ ( १ ) ॥ * ॥ एकम् **'कुबेरपुर्याः'**।

**विमानं तु पुष्पकम् ॥ ७० ॥**

पुष्पकम् ( न )—यह नाम कुबेर के विमान का है।

**विमानमिति** ॥ पुष्प्यति। 'पुष्प विकसने' (दि० प० से०)। क्वुन् ( उ० २।३२ )। पुष्पमिव वा। 'इवे प्रतिकृतौ' (५।३।९६) इति कन्। 'विमानं तु पुष्पकोऽस्त्री नगरी त्वलका प्रभा' इति शब्दार्णवात् पुंस्त्वमपि। ['पुष्पकं रीतिपुष्पे च विमाने धनदस्य च। नेत्ररोगे तथा रत्नकङ्कणे च रसाञ्जने। लोहकास्ये मृदङ्गारजवटचा च नपुंसकम् ॥' इति मेदिनी १०।१२३–२४ ] ॥ ( १ ) ॥ * ॥ एकम् **'कुबेरविमानस्य'**।

**स्यात् किंनरः किंपुरुषस्तुरङ्गवदनो मयुः।**

किन्नरः, किम्पुरुषः, तुरङ्गवदनः, मयुः ( ४ पु ), 'किन्नर' अर्थात् 'कुबेर के दूत' के ४ नाम हैं।

**स्यादिति** ॥ किञ्चित् कुत्सितो वा नरः । 'किं क्षेपे ( २।१।६४ ) इति समासः ॥ ( १ ) ॥ * ॥ एवं किंपुरुषः । कुत्सा च कस्यचिन्नरमुखाश्वकायत्वात्, कस्यचिद् अश्वमुखनरशरीरत्वात् । 'अथ किंपुरुषो लोकभेदकिंनरयोः पुमान्' [ इति मेदिनी १६९।५२ ] ॥ (२) ॥*॥ तुरङ्गस्येव वदनमस्य ॥ ( ३ ) ॥*॥ मिनोति । 'डुमिञ् प्रक्षेपणे (स्वा० उ० अ०) । भृमृशीतृ– (उ० १।७) इत्यु । 'मीनातिः– (६।१।५०) इत्यात्वं तु बाहुलकान्न । [ 'मयुर्मुंगाश्वमुखयोः' इति हैम २।३७९ ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'किंनरस्य' ।

**निधिर्ना शेवधि**

निधि, शेवधि, (२ पु) 'निधिसामान्य' अर्थात् खजानामात्र के ३ नाम हैं ।

**निधिरिति** ॥ नितरां धीयते । धाञ (जु० उ० अ०) कि (३।३।९२) । नितरां दधाति पोषयत्यनेन । निधीयते वा । 'धि धारणे ( तु० प० अ० ) । सम्पदादि (वा० ३।३।१०८) । आगमशासनस्यानित्यत्वान्न नुक् ॥ (१) ॥*॥ श कल्याणं मोहे यावधि । तत्पुरुषे– ( ६।३।१४ ) इत्यलुक् । यद्वा,–शेतेऽनेन शेवं सुखम् । 'इण्शीभ्यां वन्' ( उ० १।१५२ ) । शेवं धीयतेऽस्मिन् । धाञ [ 'डुधाञ् धारणपोषणयोः'] (जु० उ० अ०) । 'कर्मण्यधिकरणे च' (३।३।९३ ) इति कि ॥ ( २ ) ॥ * ॥ द्वे 'सामान्यनिधेः' ।

**भेदाः पद्मशङ्खादयो निधेः ॥ ७१ ॥**
**महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ [ २९ ]**
**मुकुन्द कुन्द-नीलाश्च खर्वश्च निधयो नव [ ३० ]**

इति स्वर्गवर्गः ॥ १ ॥

पद्म, शङ्ख ( २ पु ) आदि 'खजाने के भेद' हैं ।

[महापद्म, पद्म, शङ्ख, मकर, कच्छप, मुकुन्द, कुन्द, नील, खर्व, (९ पु) ये ९ 'निधिविशेष' हैं । ]

**भेदा इति** ॥ पद्मा लक्ष्मीरस्मिन्नस्ति । 'अर्शआद्यच् (५।२।१२७) ॥ ( १ ) ॥ * ॥ शम्यत्यम्बु दुःखं वा ध्मातेऽनेन । शमः ख (उ० १।१०२)॥['शङ्खः कम्बौ निधेर्भेदे स्यात्तथामलिकास्थनि' इति हैम २।२६ ] । 'वलने दिनभागे च नागभेदे [?]॥(१)॥*॥ पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ । मुकुन्द कुन्द नीलाश्च खर्वश्च निधयो नव ॥ इति शब्दार्णवः । 'निधिविशेषस्य' प्रत्येकम् ।

इति स्वर्गवर्गविवरणम् ॥ १ ॥

## अथ व्योमवर्गः ॥ २ ॥

**द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।**
**नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥**
**वियद्विष्णुपदं वा तु पुंस्याकाशविहायसौ ।**
**विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् [ ३१ ]**
**तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम् [ ३२ ]**
**विहायाः शकुने पुंसि गगने पुंनपुंसकम् [ ३३ ]**

इति व्योमवर्गः ॥ २ ॥

द्यौ ( =द्यो ), द्यौ ( =दिव् । २ स्त्री ) अभ्रम्, व्योम ( =व्योमन् ), पुष्करम्, अम्बरम्, नभ ( =नभस् ), अन्तरीक्षम्, गगनम्, अनन्तम्, सुरवर्म ( =सुरवर्त्मन् ), खम्, वियत्, विष्णुपदम् ( १२ न ), आकाशम्, विहाय ( =विहायस् । २ पु न ), 'आकाश' के १६ नाम हैं ।

[ विहायस, नाक, द्यु ( अ० ), तारापथ, अन्तरिक्षम् ( न ), मेघाध्वा ( =मेघाध्वन् । शे० ४ पु ), महाबिलम् (न), विहाय ( =विहायस्, पु न ), 'आकाश' के ८ नाम हैं । ]

**द्योदिवाविति** ॥ न बिभर्ति किञ्चित् ['डुधाञ् धारणपोषणयोः , जु० उ० अ०]। मूलविभुजादित्वात् (वा० ३।२।५)क । यद्वा,–[अभ्रम् इति पाठे] आपो भ्रश्यः यस्मात् । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड । यद्वा,–अभ्रति स्थैर्यं गच्छति । अच् (३।१।१३४) । 'अभ्र वभ्र मभ्र चर गत्यर्थाः' ( भ्वा० प० से० ) । यद्वा,—न भ्राजते । 'भ्राजृ दीप्तौ' (भ्वा० प० से०)। 'अन्येभ्योऽपि–'(३।२।१०१) इति ड । 'अभ्रं मेघे च गगने धातुभेदे च काञ्चने' [इति मेदिनी १२३।६]॥(३)॥*॥ व्ययति । 'व्येञ् संवरणे [भ्वा० प० से० ] । 'नामन्सीमन्–' (उ० ४।१५१) इत्यादिना मन्नन्तं निपातितम् । यद्वा,—व्यवति । विपूर्वादवते ['अव रक्षणगति , भ्वा० प० से० ] मनिन् ( ३।२।७५ ) । 'ज्वरत्वर–' ( ६।४।२० ) इत्यूठी । सवर्णदीर्घः (६।१।१०१)। 'सार्वधातुका–' (७।३।८४) इति गुणः । ['व्योम वारिणि चाकाशे भास्करस्यार्चनाश्रये' इति मेदिनी ९२।३६ ] ॥ (४) ॥*॥ पुष्यति । पुष पुष्टौ (दि० प० अ०) । 'पुषः कित्' ( उ० ४।४ ) इति करन् किच्च । पुष्कं वारि राति–इति स्वामी । 'पुष्करं गगनपद्मवारिषु [?]।['पुष्करं द्वीपतीर्थाहिखगराजौषधान्तरे । तूर्यास्यअसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे ॥ इति हैम ३।६१४–१५] ॥ (५) ॥*॥ अबि शब्दे (भ्वा० आ० से०) । भावे घञ् (३।३।१८)। अम्बं शब्दं राति [ 'रा दाने, अ० प० अ० ]। अम्बरम्।['अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः' इति मेदिनी १३०।१०७ ] ॥ (६) ॥*॥ नह्यते मेघैः । 'णह बन्धने (दि० उ० अ०) । 'नहेर्दिवि भश्च' (उ० ४।२१) इत्यसुन् भश्चान्तादेशः । न बभस्तीति वा क्विप ( ३।२।१७८ ) । नभते । णभ हिंसायाम् ( भ्वा० आ० से० )।

असुन् ( उ० ४।१८९ ) । सान्तम् । 'नभः क्लीबं व्योम्नि पुमान् घने । घ्राणश्रावणवर्षासु बिसतन्तौ पतद्ग्रहे ॥' [इति मेदिनी १७१।२६-२७]। 'नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृत ' इति विश्व [ १७७।२७ ] ॥ * ॥ 'अत्यविचमितमि-' (उ० ३।११७) इत्यसच्प्रत्यये तु नभसमदन्तमपि । नभसः पुंसि-इत्युणादिवृत्तौ । ['नभसस्तु नदीपतौ । गगने ऋतुभेदे च' इति हैमः ३।७९२-९३] ॥ (७) ॥*॥ द्यावापृथिव्योरन्तरीक्ष्यते । 'ईक्ष दर्शने' ( भ्वा० आ० से० ) । कर्मणि घञ् ( ३।३।१९ ) । वेदे तु छान्दस ह्रस्वत्वम् । अन्तर् ऋक्षाण्यस्य । पृषोदरादित्वात् ( ६।३।१०९ ) ह्रस्वम् । अस्मिन् पक्षे 'अन्तरिक्षम्' इति ह्रस्वमध्य । अधिकरणल्युत्पत्तिस्तु नोचिता । ल्युटा घञो बाधप्रसङ्गात् ॥(८)॥*॥ गच्छन्त्यनेनास्मिन्वा । 'गमेर्गश्च' ( उ० २।७७ ) इति युच् गश्चान्तादेशः ॥ (९) ॥*॥ नास्त्यन्तो यस्य । ['अनन्तः केशवे शेषे पुमाननवधौ त्रिषु । अनन्ता च विशल्याया शारिवादूर्वयोरपि ॥ कणा दुरालभापथ्यापार्वत्यामलकीषु च । विश्वम्भरागुडूच्यो. स्यादनन्तं सुरवर्त्मनि ॥' इति मेदिनी ६०।८१-८३ ] ॥ (१०) ॥*॥ सुराणा वर्त्म ॥ (११) ॥*॥ खन्यते । 'खनु अवदारणे' ( भ्वा० उ० से० ) । ड (वा० ३।२।१०१) । 'खं स्व संविदि व्योमनीन्द्रिये । शून्ये बिन्दौ सुखे[1] खस्तु सूर्ये' इति हैम [१।५-६] । खवत्यस्मिन् वा । 'खर्व गतौ' ( भ्वा० प० से० ) । ड ( वा० ३।२।१०१ ) ॥ ( १२ ) ॥ * ॥ वि विश्वम् एति व्याप्नोति ['इण् गतौ', अ० प० अ०] । तृन् (३।२।१२४) । वियच्छति न विरमति वा । विपूर्वाद्यमे ( भ्वा० प० अ० ) 'अन्येभ्योऽपि-' ( ३।२।७५ ) इति क्विप् । 'वयौ च गमादीनाम्' ( वा० ६।४।४० ) इति मलोपे तुक् (६।१।७१) ॥ (१३) ॥*॥ विष्णोः पदम् आस्पदम् स्वरूपं वा । विष्णो पद इमोऽत्र-इति स्वामी । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् । ['विष्णुपदं नभोऽब्जयो । विष्णुपदस्तु क्षीरोदे विष्णुपदी सुरापगा । संक्रान्तिर्द्वारिका चापि' इति हैम. ४।१५०-५१ ] ॥ (१४) ॥*॥ आ समन्तात् काशन्ते सूर्यादयोऽत्र । 'काशृ दीप्तौ' (भ्वा० आ० से०) । 'हलश्च' (३।३।१२१ ) इति घञ् ॥ ( १५ ) ॥*॥ विशेषेण हापयति गमयति विमानादीन् । 'ह्य गतौ' (भ्वा० प० से०) । ण्यन्ताद् असुन् (उ० ४।१८९)। विजहाति भुव वा । 'वहिहाधाञ्भ्यश्छन्दसि' (उ० ४।२२१) इत्यसुन् । णिदित्यस्यानुवृत्तेर्युक् ( ७।३।३३ ) ।—विपूर्वाज्जहातेर्बाहुलकादसुन्-इति मुकुटः । तन्न । असुनो धातुमात्रात् (उ० ४।१८९) विहितत्वेन बाहुलकस्यानुपयोगात् । यकारस्याश्रवणप्रसङ्गाच्च ॥ (१६) ॥*॥ 'वा तु पुंसि-' इति 'तु'शब्दादुत्तरान्वयि । तेन आकाश, विहायाश्च । 'विदुर्विहायसं व्योम पक्षिणश्च विहायस.' इति शाश्वत [ ३६५ ] । विहायाः शकुनौ पुंसि गगने पुनपुंसकम्' [इति मेदिनी १७४।६३] । षोडश 'आकाशस्य' ।

इति व्योमवर्गविवरणम् ॥ २ ॥

## अथ दिग्वर्गः ॥ ३ ॥

दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।

दिक् ( =दिश् ), ककुप् ( =ककुभ् ) काष्ठा, आशा, हरित् (५ स्त्री), 'दिशाओं' के ५ नाम हैं ।

दिश इति ॥ दिशत्यवकाशम् । 'दिश अतिसर्जने' (तु० उ० अ०)। क्विन् 'ऋत्विग्दधृक्-' (३।२।५९) इत्यादिना निपातनात् । यत्तु—मुकुट कर्मण्येव क्विन्, कर्तरि तु क्विबेव-इत्याह । तन्निर्मूलम्, आकरविरुद्ध च ॥*॥ भागुरिमतेन टापि दिशा[1] । 'दिक् तु स्त्रिया दिशा दान्तो ककुब् देववधूः पविः' इति शब्दार्णव ॥ ( १ ) ॥*॥ कक्यते । 'कक लौल्ये' ( भ्वा० प० से० ) । बाहुलकादुभ् प्रत्यय. । यद्वा,—कं वातं स्कुभ्नाति विस्तारयति । 'स्कुभु'[2] इति सौत्राद् [ १।३।८२] धातो' क्विप् (३।२।१७८) । पृषोदरादित्वात् ( ६।३।१०९ ) सलोप । 'ककुप् स्त्रियां प्रवेणीदिक्शोभासु चम्पकस्रजि' [ इति मेदिनी १०७।१३] ।—केनादित्येन जलेन वा कुत्सितानि भानि नक्षत्राण्यत्रेति टाबन्तोऽपि [ ककुभा ] इति कश्चित् । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् ॥ ( २ ) ॥ * ॥ काशते । 'काशृ दीप्तौ' ( भ्वा० आ० से० ) । 'हनिकुषि-' ( उ० २।२ ) इति क्थन् । [ 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयो । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम् ॥' इति मेदिनी ३८।२-३ ] ॥ (३) ॥*॥ आ समन्ताद् अश्नुते व्याप्नोति । 'अशू व्याप्तौ [ सङ्घाते च ]' ( स्वा० आ० से० ) । अच् (३।१।१३४) । [ 'आशा तृष्णादिशो स्त्रियाम्' इति मेदिनी १६२।२ ] ॥ ( ४ ) ॥*॥ हरन्ति नयन्त्यनया । 'हृसृरुहियुषिभ्य इति' ( उ० १।९७ ) । 'हरिद्दिशि स्त्रिया पुंसि हयवर्णविशेषयो । अस्त्रिया स्यात्तृणे [च' इति मेदिनी ६७।१७४-७५ ] । (५) ॥*॥ ता इत्यनेन स्त्रीत्वं व्यनक्ति । दिशा बहुत्वाद्बहुवचनम् । पञ्च 'दिशः' ।

1. 'मुखे' इति पा० ।

1. तदुक्त भट्टोजिदीक्षितेन 'अप्यमादाप्सुप' इति सूत्रव्याख्याने—"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥" इति ।

2. 'स्तम्भुस्तुम्भु—' इति सूत्रानुरोधादत्रापि 'स्कुम्भु' इति सानुनासिक. पाठ उचित. ।

प्राच्यवाचीप्रतीच्यस्ता पूर्वदक्षिणपश्चिमा ॥ १ ॥
उत्तरा दिगुदीची स्यात्

प्राची, अपाची, प्रतीची, उदीची (४ स्त्री), 'पूर्व, दक्षिण, पश्चिम और उत्तर दिशा' के क्रमश ११ नाम हैं।

प्राच्येति ॥ प्राथम्ये प्राब्दोऽत्र। प्राञ्चति प्राप्नोति सूर्यम्। अञ्चु गतिपूजनयो (भ्वा० प० से०)। ऋत्विग्– (३।२।५९) इत्यादिना क्विन् प्रत्यय। प्राञ्चति रविर स्याम्। बाहुलकादधिकरण क्विन्–इति मुकुट। तन्न। बाहुलकस्यागतिकगतित्वात्। एवमग्रेऽपि बोध्यम् ॥ (१) ॥*॥ अह्नो मध्यऽञ्चत्यस्याम्। अपाची। अप इत्यव्यय मध्यार्थेऽव्दिशामितिवत्। अपाञ्चति सूयम्–इत्युचितम्। कर्तरि क्विद्विधानात्। 'अवाची'–इत्यपपाठ एव। अवपूर्वस्याञ्चतेर धोमुखीभाव वृत्त। स्वामी त्ववशब्दस्य मध्यार्थतामाह ॥ (१) ॥*॥ प्रति पश्चाद् दिनान्तऽञ्चति सूयम्। सूर्योऽस्याम्–इति तु दुष्टम् ॥ (१) ॥*॥ पूर्वदक्षिणेत्यत्र सर्वनाम्नो वृत्तिमात्रे पुवद्भाव (वा० ५।३।२८)। उद ऊर्ध्वं तरत्यत्र। तॄ प्लवनसतरणयो (भ्वा० प० से०)। ऋदोरप् (३।३।५७)। [उत्तरा दिग्विशेषे च स्नुषायाम् जुनस्य च इति मेदिनी १३१।११८] ॥*॥ उत्तरमश्नुत्यम्। उत्क्रान्त दृष्टिपथमञ्चति सूय वा। अस्यामिति तु न युक्तम्। उद ईत् (६।४।१३९) इत्यञ्चतेरत ईकार ॥ (१) ॥*॥ प्रत्येक द्व द्व 'चतसृणाम्' [दिशाम्]।

दिश्य तु त्रिषु दिग्भवे।
अवाग्भवमवाचीनमुदीचीनमुदग्भवम् [ ३४ ]
प्रत्यग्भव प्रतीचीन प्राचीन प्राग्भव त्रिषु [ ३५ ]

दिश्यम् (त्रि), 'दिशाम होनेवाले पदार्थ' का १ नाम है। [अवाचीनम्, उदीचीनम्, प्रतीचीनम्, प्राचीनम् (४ त्रि), 'दक्षिण, उत्तर, पश्चिम और पूर्व दिशा में होनेवाले पदार्थ' के क्रमश ११ नाम हैं]।

दिश्यमिति ॥ दिशि भव दिश्यम। दिगादिभ्यो यत (४।३।५४) ॥ (१) ॥*॥ एक 'दिग्भवस्य'।

इन्द्रो वह्नि पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥
कुबेर ईश पतय पूर्वादीना दिशा क्रमात्।
रवि शुक्रो महीसूनु स्वर्भानुर्भानुजो विधु [ ३६ ]
बुधो बृहस्पतिश्चेति दिशा चैव तथा ग्रहा [ ३७ ]

इन्द्र, वह्नि, पितृपति, नैर्ऋत, वरुण, मरुत्, कुबेर, ईश (८ पु) 'पूर्वदिशा, अग्निकोण, दक्षिण दिशा, नैर्ऋत्य कोण, पश्चिम दिशा, वायव्य कोण, उत्तर दिशा और ईशान कोण' के क्रमश ११ स्वामी हैं।

[रवि, शुक्र, महीसूनु (मङ्गल), स्वर्भानु (राहु), भानुज (शनि), विधु (चन्द्र), बुध, बृहस्पति (८ पु), 'पूर्व दिशा, अग्निकोण, आदि आठ दिशाओं' के क्रमश १-१ ग्रह हैं]।

इन्द्र इति ॥ एव च प्राच्यादीनामैन्द्रीत्यादिनामानि। इन्द्रादीना प्राचीपतिरित्यादीनि नामानीति भाव।

ऐरावत पुण्डरीको वामन कुमुदोऽञ्जन ॥ ३ ॥
पुष्पदन्त सार्वभौम सुप्रतीकश्च दिग्गजा।

ऐरावत, पुण्डरीक, वामन, कुमुद, अञ्जन, पुष्पदन्त, सार्वभौम, सुप्रतीक (८ पु), पूर्व दिशा, अग्नि कोण, दक्षिण दिशा, नैर्ऋत्य कोण आदि आठ दिशाओं के क्रमश १-१ दिग्गज हैं।

ऐरावत इति ॥ पुण्डरीकवर्णयोगात्। अर्शआद्यच् (५।२।१२७)। ['पुण्डरीक सिताम्बुज। सितच्छत्रे भेषजे च पुण्डरीकोऽग्निदिग्गज ॥ सहकार गणधरे राजिलाही गजज्वरे। कोषकारान्तरे व्याघ्रे इति हैम ४।२०–२२] (१) ॥*॥ खर्वत्वाद्वामन। ['वामनोऽप्यतिखर्वे च त्रिषु पुसि तु दिग्गजे। हरावङ्कोटवृक्षे इति मेदिनी ९२।२७] ॥ (१) ॥*॥ कुमुद रक्तोत्पल तत्तुल्यवर्णत्वात्। 'कुमुद कैरव रक्तपद्मे स्त्री कुम्भिको पर्णी। गम्भार्यां पुसि दिङ्नाग नागे शाखामृगान्तरे ॥' [इति मेदिनी ७६।२५–२६]। कौ मोदते वा। इगुपध– (३।१।१३५) इति क। 'मुद हर्षे (भ्वा० आ० से०)। मूलविभुज– (वा० ३।२।५) इति क–इति मुकुट। तन्न। अनुपयोगात् ॥ (१) ॥*॥ अञ्जनवर्णत्वात्। अञ्जन। [अञ्जनवद् वर्णोऽस्य। यद्वा–अनक्ति अञ्जू व्यक्त्यादौ। ल्यु युट् वा]। ['अञ्जन कज्जले चास्त्री सौवीरे च रसाञ्जने। पुसि ज्येष्ठादिगागरोरञ्जना वानरीभिदि। अञ्जनी लेप्य नार्यां च इति मेदिनी ८४।२६–२७] ॥ (१) ॥*॥ पुष्पमिव दन्ता यस्य। ['पुष्पदन्तस्तु दिङ्नागभेदे विद्याधरान्तर इति मेदिनी ७०।१५] ॥ (१) ॥*॥ सर्वस्या भूमौ विदित। तत्र विदित (५।१।४३) इत्यण। अनुशतिकादि[१] (७।३।२०)। ['सार्वभौमस्तु दिग्गजे चक्रवर्तिनि इति हैम ४।२२५] ॥ (१) ॥*॥ शोभना प्रतीका अवयवा यस्य। 'सुप्रतीको दिगीभे शोभनावयव त्रिषु [?] ॥ (१) ॥ ॥ दिक्षु विख्याता गजा। दिगीशा गजा इति वा। शाकपार्थिवादि (वा० २।१।६९)। एकैकम् 'इन्द्रादिगजानाम्'।

करिण्योऽभ्रमु–कपिला पिङ्गलानुपमा क्रमात् ॥४॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती।

अभ्रमु, कपिला, पिङ्गला, अनुपमा, ताम्रकर्णी, शुभ्रदन्ती,

१ तेनोभयपदवृद्धि अनुशतिकादीना च इत्यनेनेत्याशय।

अञ्जना, अञ्जनावती ( ८ स्त्री ), 'पूर्व दिशा, अग्निकोण, दक्षिण कोण आदि आठ दिशाओं की हथिनी' और 'ऐरावत, पुण्डरीक, वामन आदि आठ दिग्गजोंकी स्त्रियों' के क्रमशः १-१ नाम हैं।

करिण्य इति ॥ अभ्र आकाश एव माति । 'मा माने' ( अ० प० अ० ) । मित्रस्त्रादित्वात् (उ० १।३७) कु । न भ्राम्यति । 'भृमृशीतृचरि–' (उ० १।७) इत्यु. । मन्थरगामिनीत्यर्थ इति वा ॥(१)॥*॥ कपिलपिङ्गलवर्णत्वात् कपिलापिङ्गले । [ 'कपिला रेणुकायां च शिंशपागोविशेषयो । पुण्डरीकयरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ॥ नानले वासुदेवे च मुनिभेदे च कुक्कुरे' इति मेदिनी १४९।६६-६७। 'पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके । निधिभेदे कपावग्नौ पुंसि स्यात्कपिलेऽन्यवत् ॥ स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च ।' इति मेदिनी १५३।११३-१४ ] ॥ ( १ ) ॥ * ॥ श्रेष्ठत्वान्नास्त्युपमाऽस्या । ( 'अनुपमत्तु भवेदयम् । उपमारहितेऽनुपमेभ्याम्'[१]) ॥ ( १ ) ॥ * ॥ ताम्रौ वर्णौ यस्या । 'पाकवर्ण–' ( ४ । ६४ ) इत्यादिना ङीप् । 'नासिको–' ( ४।१। ५५ ) इति वा ॥ ( १ ) ॥ * ॥ शुभ्रौ दन्तावस्या । 'नासिकोदरौष्ठ–' (४।१।५५) इति ङीप् । [ शुभ्रदन्ती सुदन्त्यां स्यात्पुष्पदन्तेभयोषिति' इति मेदिनी ७०।२२२ ] शुभ्रदन्ती इति वा पाठ. । शुभौ दन्तावस्या ॥ (१)॥*॥ अङ्गति । 'अगि गतौ' ( भ्वा० प० से० ) । युच् (उ० २। ७८) । कल्याणान्यङ्गान्यस्या इति वा । 'अङ्गात्कल्याणे' (ग० ५।२।१००) इति न ( १ ) ॥*॥ अञ्जनवर्णत्वादञ्जनमस्त्यस्या' । 'मतौ बह्वच –' ( ६।३।११९ ) इति दीर्घ. ॥ ( १ ) ॥ * ॥ क्रमेण एकैकम् 'ऐरावतादीनां हस्तिनीनाम्' ।

क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥५॥

अपदिशम् ( न, अ ), विदिक् ( =विदिश्, स्त्री ), 'दिशाओंके मध्य भाग' अर्थात् 'कोण' के २ नाम हैं।

क्लीबेति ॥ 'क्लीबाऽव्ययमिति कर्मधारयोऽव्ययीभावत्वसूचनार्थः । अव्ययीभावश्च–' ( १।१।४१,२।४।१८ ) इति सूत्राभ्या क्लीबत्वाऽव्ययत्वयोर्विधानात् । तेन 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' ( २।४।८३ ) इत्यादिप्रवृत्ति । 'अप' इति मध्यवाची । शरदादित्वात् (५।४।१०७) टच् । आवन्तेन समासे तु टज् नापेक्षित ।—दिशोरिदमपदिशम्, विभक्त्यर्थेऽव्ययीभाव –इति स्वामी । तन्न । सम्बन्धमात्रस्य विभक्त्यर्थत्वेऽपि मध्यस्य तदर्थत्वाभावात् ॥ ( १ ) ॥*॥ दिग्भ्या विनिर्गता । विदिक् शान्ता [विदिश्] ॥*॥ सैव प्रदिक् । 'याभ्यासामन्तरालानि प्रदिशो विदिशश्च ता' इत्यमरमाला ॥ (२) ॥*॥ द्वे 'अग्न्यादिकोणस्य' ।

अभ्यन्तरं त्वन्तरालम्

अभ्यन्तरम्, अन्तरालम् ( २ न ), 'बीच' अर्थात् 'मध्य-भाग' के २ नाम हैं।

अभ्यन्तरमिति । अभिगतमन्तरम् ॥ ( १ ) ॥*॥ अन्तर लाति । 'आतोऽनुप–' (३।२।३) इति क । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घ । आङ्प्रश्लेषो वा । मूलविभुजादित्वात् (वा० ३।२।५) क ॥ (२) ॥*॥ द्वे 'मध्यमात्रस्य' ।

चक्रवालं तु मण्डलम् ।

चक्रवालम्, मण्डलम् ( २ न ), 'घेरा, गोलाई' के २ नाम हैं।

चक्रेति । चक्राकारेण वलते । 'वल संवरणे' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । 'अन्येषामपि–' ( ६।३। १३७ ) दीर्घ । यद्वा,—भावे घञि [ ३।३।१८ ] वाल । चक्रमिव वालो यस्य । यद्वा,—चक्राकारेण वाडते । 'वाडृ आप्लाव्ये' (भ्वा० आ० से०)। अच् (३।१।१३४)। चक्रवाडम् । डलयोरेकत्वस्मरणाच्चक्रवालम् । ['चक्रवालोऽद्रिभेदे स्याच्चक्रवालं तु मण्डले' इति मेदिनी १५६।१५४] ॥(१)॥*॥ मण्डयति । 'मडि भूषायाम्'(चु० प० से०) । वृषादित्वात् कलच् (उ० १।१०६) । मण्ड भूषां लाति–इति वा । [ 'मण्डलं बिम्बदेशयो । भुजंगभेदे परिधौ शुनि द्वादशराजके । सघाते कुष्ठभेदे च' इति हैम ३।७११-१२ ] ॥ (२) ॥ * ॥ द्वे 'मण्डलाकारेण परिणतसमूहस्य' ।

अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ।
घन-जीमूत-मुदिर-जलमुग्धूमयोनयः ॥ ७ ॥

अभ्रम् ( न ), मेघः, वारिवाहः, स्तनयित्नुः, बलाहकः, धाराधरः, जलधरः, तडित्वान् ( =तडित्वत् ), वारिदः, अम्बुभृत्, घनः, जीमूतः, मुदिरः, जलमुक् ( =जलमुच् ), धूमयोनिः ( १४ पु ), 'बादल' के १५ नाम हैं।

अभ्रमिति ॥ अपो बिभर्ति । मूलविभुजादित्वात् (३।२।५) क [अब्भ्रम्] । अभ्रति' । 'अभ्र गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । न भ्रश्यन्त्यापो[२]यस्मात् । 'भ्रंशु अध.-

१. कोष्ठस्थः पाठ निर्णयसागरीय. ।

१. अपो रातीत्यर्थ ।

२ "यदुक्तम्—'न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यत ।' इति पुराणम्" इति स्वामी । माघप्रयोगश्च बकाररहितः, यथा—'कुटजानि वीक्ष्य शिलिभिः शिखरीन्द्रं समयावनौ घनमदभ्रमराणि । गगनं च गीतनिनदस्य

पतने' [दि० प० अ०]। 'अन्येष्वपि–' (वा० ३।२।१०१) इति ड –इति वा [अभ्रम्]। 'अभ्रं मेघे च गगने धातुभेदे च काञ्चने' [इति मेदिनी १२३।६]॥(१)॥*॥ मेहति। 'मिह सेचने' (भ्वा० प० से०)। अच् (३।१।१३४)। न्यङ्क्वादित्वात् कुत्वम् (७।३।५३)। 'मेघो मुस्ताजलदयोः पुमान्' [इति मेदिनी २६।४]॥(२)॥*॥ वारि वहति। 'कर्मण्यण्' (३।२।१)॥(३)॥*॥ स्तनयति। 'स्तनगदी देवशब्दे' (चु० उ० से०) चुरादावदन्तः। 'स्तनिहृषि–'(उ० ३।२९) इतीत्नुच्। 'अयामन्ता–' (६।४।५५) इति णेरय्॥ (४)॥*॥ वारिवाहकः। पृषोदरादि (६।३।१०९)। बलाभ्यामिर्हीयते गम्यते। 'ओहाङ् गतौ' (जु० आ० अ०)। कर्मणि क्वुन् (उ० १।३७)। पृषोदरादि (६।३।१०९)। बलेन हीयते आहायते वा। क्वुन् (उ० २।३७)। ['बलाहको गिरौ मेघे दैत्यनागविशेषयोः' इति विश्वः १७।१८३, मेदिनी च १६।२०२]॥(५)॥*॥ धाराणां जलस्यं च धरः। 'धाराधरोऽसिमेघयोः' [इति मेदिनी १४२।२६९]॥ (६)॥*॥ (जलधरस्तोयधरादीनामप्युपलक्षणम्)। ['अथ तोयधरो मुस्तासुनिषण्णौषधीघने' इति मेदिनी १४१।२६५]॥७॥ ॥*॥ तडित् सन्त्यस्मिन्। मतुप् (५।२।९४)। 'झयः' (८।२।१०) इति वत्वम्। (८)॥*॥ वारि ददाति। 'आतोऽनुप–' (३।२।३) इति कः। (वारिदो जलदतोयदादीनामप्युपलक्षणम्)। ['जलदो मुस्तके मेघे', 'तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्'॥ इति मेदिनी ७६।२९-३०]॥(९)॥*॥ अम्बु बिभर्ति। क्विप्(३।२।७६)॥(१०)॥*॥ हन्यते वायुना। 'मूर्तौ घनः' (३।३।७७) इत्यप् कुत्वं च। ['घनः स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गरे। त्रिषु सान्द्रे दृढे च' इति मेदिनी ८२।३-४]॥ (११)॥*॥ जीवनं जलं मूतं बद्धमनेन। 'मूङ् बन्धने' (भ्वा० आ० से०)। कर्मणि क्तः (३।२।१०२, ३।४।७०)। पृषोदरादि (६।३।१०९)। ज्यानं जीः। 'ज्या वयोहानौ' (क्र्या० प० अ०)। सम्पदादित्वात् क्विप् (वा० ३।३।१०८)। जिया वयोहान्या मूतो बद्ध इति वा। ['जीमूतो वासवेऽम्बुदे। घोषकेऽद्रौ भृतिकरे' इति हैमः ३।२७७-७८]॥ (१२)॥*॥ मोदन्तेऽनेन। 'मुद हर्षे' (भ्वा० आ० से०)। 'इषिमदिमुदि–' (उ० १।५१) इति किरच्। 'मुदिरः कामुके मेघे' [इति हैमः ३।६३१]॥ (१३)॥*॥ जलं मुञ्चति। 'मुच्लृ मोक्षणे' (तु० उ० अ०)। क्विप् (३।२।७६)॥ (१४)॥*॥ धूमो योनिरस्य॥

गिरोच्चैः समया वनोपनमदभ्रभ्रमराणि॥" इति शिशु० व० (६।७९)।

(१५)॥*॥ यद्यपि शब्दार्णवे 'मेघास्तु त्रिविधास्तत्र वह्निजा धूमयोनयः। निःश्वासजास्तु जीमूतास्ते ज्ञेया जीवरूपिणः। पक्षजास्तु घना घोराः पुष्करावर्तकादयः' इति विशेषपरत्वमुक्तम्, तथाप्यन्यत्रापि वृत्तिर्न विरुद्धा। पञ्चदश 'मेघस्य'।

**कादम्बिनी मेघमाला**

कादम्बिनी, मेघमाला (२ स्त्री), 'मेघ समूह' के २ नाम हैं।

कादम्बिनीति॥ कादम्बाः कलहंसा बलाकाश्च मेघमनुधावन्ति। ते सन्त्यस्याः। इनि (५।२।११५)। यत्तु—ज्योत्स्नादित्वात् (वा० ५।२।१०३) अणि ङीप् (४।१।१५) इति मुकुटः। तन्न। एवं हि 'कादम्बी' इति प्रयोगप्रसक्तेः। कदम्बस्य विकारः = कादम्बोऽस्त्यस्याः कार्यत्वेनेति वा॥ (१)॥*॥ मेघानां माला॥ (२)॥*॥ द्वे 'मेघपङ्क्तेः'।

**त्रिषु मेघभवेऽभ्रियम्।**

अभ्रियम् (त्रि), 'मेघमें होनेवाले पदार्थ' का १ नाम है।

अभ्रियेति॥ अभ्रे भवम्। 'समुद्राभ्राद्घः' (४।४।११८)। छान्दसत्वं प्रायिकम्। स्त्रियामभ्रिया॥ (१)॥*॥ एकम् 'मेघभवस्य'।

**स्तनितं गर्जितं मेघनिर्घोषे रसितादि च॥ ८॥**

स्तनितम्, गर्जितम्, रसितम्, (३ न। 'आदि शब्द से ध्वनितम्, आदि), 'मेघके गर्जने या तड़पने' के ३ नाम हैं।

स्तनितमिति॥ 'स्तनगदी देवशब्दे' (चु० उ० से०)। 'गर्ज शब्दे' (भ्वा०, चु० प० से०)। 'रस शब्दे' (भ्वा० प० से०)। एभ्यो भावे क्तः (३।३।११४)॥ [१, २, ४]॥*॥ मेघस्य निर्घोषः॥ (३)॥*॥ आदिना ध्वनितह्रादगर्जादयः। चत्वारि 'मेघध्वनेः'।

**शम्पा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा।**
**तडित्सौदामनी विद्युच्चञ्चला चपला अपि॥ ९॥**

शम्पा, शतह्रदा, ह्रादिनी, ऐरावती, क्षणप्रभा, तडित्, सौदामनी, विद्युत्, चञ्चला, चपला (१० स्त्री), 'बिजली' के १० नाम हैं।

शम्पेति॥ भयकरत्वाच्छं सुखं पिबति। 'आतोऽनुप–' (३।२।३) इति कः। टाप् (४।१।४)॥ (१)॥*॥ शतं ह्रादा अव्यक्ता शब्दा यस्याः। पृषोदरादित्वात् (६।३।१०९) ह्रस्वः। शतं ह्रदा अर्चींषि, अगाधजलाशया वा सन्त्यस्या इति वा। अच् (५।२।१२७)। ['शतह्रदा स्त्रियां वज्रे सौदामिन्यां च कीर्तिता' इति मेदिनी ७८।५५]॥(२)॥*॥ ह्रादते। आवश्यके णिनिः (३।२।७८)। ह्रादोऽस्ति यस्या

वा। इनिः (५।२।११५)। 'ह्रादिनी वज्रतडितो' [इति विश्वः ९५।१२४, मेदिनी च ९४।५९ ] ॥ (३) ॥*॥ इरा आपः सन्त्यस्य — इरावान् मेघः। तस्येयम्। 'तस्येदम्' (४।३।१२०) इत्यण्। ऐरावतेनैकदिक्। 'तेनैकदिक्' (४।३।११२) इत्यण् इति वा ॥ (४) ॥ ७॥ क्षणं प्रभाऽस्याः ॥ (५) ॥=॥ ताडयति 'तड आघाते' (चु० प० से०)। 'ताडेर्णिलुक्च' (उ० १।९८) इनीति। डल-योरेकत्वात् 'तलित्' अपि। 'दूरेचित्सतलिदिवातिरोचसे' इति मन्त्रः ॥ (६) ॥*॥ 'भेनद्विपः सुदामा' इति त्रिकाण्डशेषे [ १।१।६१ ] ऐरावतपर्यायो। 'तेनैकदिक्' (४।३।११२) इत्यण्। 'अन्' (६।४।१६७) इति प्रकृतिभावाट्टिलोपाल्लोपौ न भवतः। 'सुदाम्नाद्रिणा—' इति वा। 'सुदामा तु पुमान्वारिधरपर्वतभेदयोः' [ इति मे० ९९।१२६]॥ सुदाम्नि मेघे भवा वा। 'सौदामिनी' इत्यपपाठः। 'सौदामन्यप्सरोभेदे तडित्तद्भेदयोः स्त्रियाम्' [ इति मे० ९९।१२६] ॥ (७) ॥=॥ विशेषेण द्योतते। 'द्युत दीप्तौ' (भ्वा० आ० से०)। 'भ्राजभास—' (३।२।१७७) इति क्विप्। [ 'विद्युत्तडिति संध्यायां स्त्रियां, त्रिषु तु निष्प्रभे' इति मे० ६५।१५६]॥(८)॥*॥'चञ्चु गतौ' (भ्वा० प० से०)। घञ् (३।३।१८)। चञ्चं लाति। 'कः' (३।२।३)। 'चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलः कामुकेऽनिले' [ इति विश्व १५९।१२०, मेदिनी च १५१।९० ] ॥ (९) ॥८॥ चोपति। 'चुप मन्दायां गतौ' (भ्वा० प० से०)। 'चुपेरच्चोपधायाः' (उ० १।१११) इति कलच्। 'चपला कमलाविद्युत्पुंश्चली-पिप्पलीषु च। नपुंसकं तु शीघ्रे स्यात्वाच्यवत्तरले चले' [इति मे० १५१।८८ ] ॥ (१०) ॥*॥ दश 'विद्युतः'।

स्फूर्जथुर्वज्रनिर्घोषे

स्फूर्जथुः, वज्रनिर्घोषः (२ पु) 'बिजली के गिरने के समय के शब्द' के २ नाम हैं।

स्फूर्जथुरिति ॥ स्फूर्जनं स्फूर्जथुः। 'टुओस्फूर्जा वज्रनिर्घोषे' (भ्वा० प० से०)। 'ट्वितोऽथुच्' (३।३।८९) ॥ (१) ॥*॥ वज्रनिर्घोषोऽशनिशब्दः। 'वज्रनिष्पेषे' इति पाठे 'पिष्लृ संचूर्णने' (रु० प० अ०)। घञ् (३।३।१८)। 'इदुदुपधस्य—' (८।३।४१) इति षः। निष्पेषशब्दस्तत्तुल्यशब्दपरः। संघट्टमात्रपर—इत्यन्ये ॥ (२) ॥*॥ द्वे 'वज्रध्वनेः'।

मेघज्योतिरिरंमदः।

मेघज्योतिः ( = मेघज्योतिस् ), इरंमदः (२ पु), 'बादल के प्रकाश' के २ नाम हैं।

मेघेति ॥ अन्योन्यस्य संघट्टेन मेघाग्निरुत्थ वृक्षादौ ज्योतिः पतति स इरंमदः। इरया जलेन माद्यति दीप्यते। अविन्धनत्वात्। 'उग्रपश्येरंमद—' (३।२।३७) इति साधु। मेघेत्युपलक्षणम्। तेन वाडवोऽपि। अत एव 'मेघाग्न्यादिरिरमदः' इति शब्दार्णवः। द्वे 'वज्राग्नेः'।

इन्द्रायुधं शक्रधनुः

इन्द्रायुधम्, शक्रधनुः ( = शक्रधनुष् ।२ न), ये दो नाम (टेढ़े दीखने वाले) 'इन्द्रधनुष' के हैं।

इन्द्रेति। इन्द्रस्यायुधम् ॥ (१) ॥*॥ शक्रस्य धनुः ॥ (२) ॥ * ॥ द्वे 'इन्द्रधनुषः'।

तदेव ऋजु रोहितम् ॥ १० ॥

रोहितम् (न)—यह नाम सीधे दिखाई देने वाले इन्द्र-धनुष का है।

तदिति ॥ तदिन्द्रधनुरुत्पातादिना ऋजु अवक्रं सद्रोहितं स्यात्। 'रुहे रश्च लो वा' (उ० ३।९४) इतीतन्। 'रोहितं रुधिरे धीरऋजुशक्रशरासने। रोहितो मीनमृगयोर्भेदे रोहितकद्रुमे' इति विश्व [६५।१०६]। यद्वा—रोहणं रोहः सञ्जातोऽस्येति। तारकादित्वात् (५।२।३६) इतच् ॥ (१) ॥२॥ एकम् 'ऋजोरिन्द्रधनुषः'।

वृष्टिर्वर्षं

वृष्टिः (स्त्री), वर्षम् (न), 'वर्षा के २ नाम हैं।

वृष्टिरिति ॥ वर्षणम्। 'वृषु सेचने' (भ्वा० प० से०)। 'स्त्रियां क्तिन्' (३।३।९४) ॥ (१) ॥ * ॥ 'अजिवधी भयादीनामुपसंख्यानम्' (वा० ३।३।५६) इत्यचि वर्षम्। ल्युटि (३।३।११५) वर्षणमपि। नचाचा ('नपुंसके क्तादिनिवृत्त्यर्थम्' इति (वा० ३।३।५६) भाष्योक्त्या क्तस्येव') ल्युटो बाधः। 'वृषभो वर्षणात्' इति भाष्यप्रयोगात्। 'अथ वृष्टिवर्षमसी केचिदिच्छन्ति वर्षणम्' इति शब्दार्णवः। 'वर्षस्तु समाद्वीपाद्यवृष्टिषु[२]। वर्षवरेऽपि वर्षास्तु प्रावृषि' [२।५८३–५८४] इति हैम. ॥ (२) ॥*॥ द्वे 'वृष्टेः'।

तद्विघातेऽवग्राहावग्रहौ समौ।

अवग्राहः, अवग्रहः (२ पु), 'वर्षा के न होने' अर्थात् 'सूखा पड़ने' के २ नाम है।

तद्विघात इति ॥ तस्या वृष्टेर्विघाते द्वौ। 'अवे ग्रहो वर्षप्रतिबन्धे' (३।३।५१) इति अवपूर्वाद्ग्रहेर्वा घञ् ॥ (१) ॥*॥ 'ग्रहवृदृनिश्चिगमश्च' (३।३।५८) इत्यपि अवग्रहः। ['अवग्रहे ज्ञानभेदे ह्रस्वात्स्ये गजालिके। प्रतिबन्धे वृष्टिरोधे' इति हैम ४।३५१ ] ॥ (२) ॥ * ॥ द्वे 'वृष्टिविघातस्य'।

धारासंपात आसारः

धारासंपातः, आसारः (२ पु), 'लगातार जोर से वर्षा होने' के २ नाम हैं।

१. कोष्ठस्थः पाठः निर्णयसागरीयः।

२. '—द्वीपाब्दवृष्टिषु' इति पा०।

धारेति ॥ धारणा सपात सभूय पतनम् । पत [ 'पत्लृ गतौ ( भ्वा० प० से० ) ] भावे घञ ( ३।३।१८ ) ॥ (१) ॥ ॥ सृ गतौ ( भ्वा० प० अ० ) । आसरणम् । घञ (३।३।१८) । 'आसार स्यात्प्रसरणे वेगवर्षे सुहृद्बले' इति विश्व [ १३८।१६७ मे० च १३१।११३ ] ॥ (२) ॥ ॥ द्वे 'महावृष्टे' ।

शीकरोऽम्बुकणा स्मृता[1] ॥ ११ ॥

शीकर (पु) 'पानी के कण' अर्थात् 'पानी की छोटी-छोटी बूँदों' का १ नाम है।

शीकर इति ॥ मृता वायुना इतस्तत प्रेरिता अम्बुकणा शीकरा तालव्यादि । गम्भशीकरपादाव इति तालव्यप्रकरणे उष्मविवेकात् । शीकृ सेचन ( भ्वा० आ० से० ) । ऋच्छेररन्[2] (उ० ३।१३१) इति बाहुलकादरन् । [ 'शीकर सरले[3] वातसृताम्बुकणयो पुमान् इति मे० १३१।२२८ ] ॥ ॥ 'दन्त्यादिरयम्[4] [ सीकर ] इति धनपालादय ॥ ( १ ) ॥ ॥ एकम् 'वातप्रक्षिप्तजलकणस्य' ।

वर्षोपलस्तु करका

वर्षोपल (पु), करका (पु स्त्री), 'बनौरी, ओला' के २ नाम हैं।

वर्षोपल इति ॥ कृणोतीति । कृञ् हिंसायाम् ( स्वा० उ० अ० ) । कृञादिभ्य सज्ञाया वुन् ( उ० ५।३५ ) । क्षिपकादित्वात् ( वा० ७।३।४५ ) इत्वाभाव । पुस्यपि । 'वर्षोपलस्तु करका करकोऽपि च दृश्यते । [ करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्वर्षोपले न स्त्री करङ्के च कमण्डलौ ॥ इति मे० ५।५४–५५।] ॥ ( १ ) ॥ ॥ एक 'वर्षोपलस्य' ।

मेघच्छन्नेऽह्नि दुर्दिनम् ।

दुर्दिनम् ( न ), 'जब आकाश में लगातार बादल घिरे रहें, ऐसे समय' का १ नाम है।

मेघेति ॥ मेघच्छन्ने मेघान्धकारिते । अह्नीति रात्रेरप्युपलक्षणम् । रात्रावपि दुर्दिनम् । दुर्दिनं जलदध्वान्तम् इति रत्नकोष । दुर्निन्दित दिनम् । बादल दुर्दिने मेघे' इति ॥ (१) ॥ ॥ एक 'मेघान्धकारितस्य' [दिनादे ] ।

१ स्मृता इति पा० ।

२ ऋच्छेरर' इति सूत्रस्वरूप, तेन बाहुलकादर इति बोध्यम् ।

३ शरले' इति पा० ।

४ शीकृ सेचन तालव्यादि । दन्त्यादिरित्येके, इति सि० कौ० एकेषा मतेनेद बोध्यम् ।

अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥
अपिधान तिरोधान-पिधानाच्छादनानि च ।

अन्तर्धा, व्यवधा ( २ स्त्री ), अन्तर्धि ( पु ), अपवारणम्, अपिधानम्, तिरोधानम्, पिधानम्, आच्छादनम् ( ५ न ), 'ढँकने' अर्थात् 'कपडे आदि से छिपाने' के ८ नाम हैं।

अन्तर्धेति ॥ अन्तर्धानम् । व्यवधानम् । डुधाञ (जु० उ० अ० ) अन्त शब्दस्याङ्किविधिणत्वपूपसर्गत्वात् ( वा० १।४।६५) 'आतश्चोपसर्गे ( ३।३।१०६ ) इत्यङ् ॥ (१) ॥ ( २ ) ॥ ॥ 'उपसर्गे घो –' ( ३।३।९२) इति किप्रत्ययेऽन्तर्धि ॥ ( ३ ) ॥ ॥ 'वृञ् आच्छादने' ( चु० उ० से० ) चुरादिण्यन्ताद्भाव ल्युट् ( ३।३।११५ ) ॥ ( ४ ) ॥ ॥ 'वष्टि भागुरि –' इति वाल्लोप ॥ ( ५ ) ॥ (६) ॥ ॥ 'तिरोऽन्तर्धौ ( १।४।७१ ) इति गतित्वे 'कुगति–' ( २।२।१८ ) इति समास ॥ ( ७ ) ॥ ॥ 'छद अपवारणे' (चु० उ० से० ) । ण्यन्ताल्ल्युट् (३।३।११५) ॥ ॥ अण्यन्ताल्ल्युटि तु छदनम् । यत्तु—छदनमिति 'छादेर्घे (६।४।९६ ) योगविभागाद् ह्रस्वत्वम्–इति मुकुटेनोक्तम् । तच्चिन्त्यम् । उक्तरीत्या प्रयोगद्वयनिर्वाहे योगविभागस्य निष्प्रयोजनत्वात् ॥ ( ८ ) ॥ ॥ अष्टौ 'अन्तर्धानस्य' ।

हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥ १४ ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।

हिमांशु, चन्द्रमा (=चन्द्रमस्), चन्द्र, इन्दु, कुमुदबान्धव, विधु, सुधांशु, शुभ्रांशु, ओषधीश, निशापति, अब्ज, जैवातृक, सोम, ग्लौ, मृगाङ्क, कलानिधि, द्विजराज, शशधर, नक्षत्रेश, क्षपाकर ( २० पु ), 'चन्द्रमा' के २० नाम हैं।

हिमांशुरिति ॥ हिमा अंशवो यस्य ॥ ( १ ) ॥ ॥ चन्द्र कर्पूर[1] साहश्यन माति तुलयति । 'चन्द्रे मो डिच्च'[2] (उ० ४।२२८) इत्यसुन्[3] । चन्द्रमाह्लाद मिमीते निर्मिमीत इति वा । बाहुलकात्केवलादप्यसि । 'मिमीत आनन्द' इति मा = चन्द्र । मास्शब्द केवलोऽपीह समतो वहुदृश्वनाम्'– इत्युत्पलिनी । ['माश्चन्द्रमासयो पुमान् इति मे० १७०।७] काल मिमीते । माश्चासौ चन्द्रश्च=चन्द्रमा –इति वा । राज

१ 'चन्द्र रजतममृत च । तदिव मीयतेऽसौ चन्द्रमा' इति हरदत्त, इति सि० कौ० तत्त्वबोधिनी ।

२ सर्वत्र चकाररहित '–डित्' इत्येव पाठो लभ्यते ।

३ 'चन्द्रोपपदे माङोऽसि स च डित्' इति सि० कौ० तद्वृत्त्यनुरोधात् 'असि' इति पाठ्यम् ।

दन्तादि[1] (२।२।३१)॥(२)॥*॥ चन्दति। 'चदि आह्लादने' (भ्वा० प० से०) 'स्फायितञ्चि–' (उ० २।१३) इति रक्। 'चन्द्रोऽम्बुकाम्ययोः। स्वर्णे सुधांशौ कर्पूरे काम्पिल्ये मेचकेऽपि च' इति हैमः [ ४२८–२९ ]॥*॥ अपि (३।३।१३४) रेफशून्य [चन्द] अपि। 'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्द्रो हिमद्युतिः' इति शब्दार्णवात्॥ (३) ॥*॥ उनत्ति। 'उन्दी क्लेदने' (रु० प० से०) 'उन्देरिच्चादेः' (उ० १।१२) इत्यु। यत्तु स्वामि-मुकुटौ–उन्दनेः,[2] उन्दति–इत्याहतुः। तच्चिन्त्यम्। उन्दे रौधादिकत्वात्॥ (४)॥*॥ कुमुदानां बान्धवः। (५)॥*॥ विशेषेण धयन्त्येनं सुराः। 'धेट् पाने' [भ्वा० प० अ०]। बाहुलकात् कु. (उ० १।२२)। 'विधुः शशाङ्के कर्पूरे हृषीकेशे च[3] राक्षसे' इति विश्व [ ८२।१२ ]॥ (६)॥*॥ सुधायुक्ता अंशवो यस्य॥ (७)॥*॥ शुभ्रा अंशवो यस्य॥ (८)॥*॥ ओषधीनामीशः॥ (९)॥*॥ निशायाः पतिः॥ (१०)॥*॥ अब्जाज्जातः। 'पञ्चम्यामजातौ' (३।२।९८) इति डः। 'अब्जोऽस्त्री पद्मे ना निचुले धन्वन्तरौ च हिमकिरणे। क्लीबं पद्मे' इति विश्व[4]॥ (११)॥*॥ जीवयति। अन्तर्भावितण्यर्थः। 'जीवे' इत्यनुवृत्तौ 'आतृकन् वृद्धिश्च' (उ० १।७९) इति साधु। 'जैवातृकः पुमान् सोमे कृपकायुष्मतोस्त्रिषु'[5]॥ (१२)॥*॥ अमृतं सूते–सोमः। 'अतिस्तुसु–' (उ० १।१३७) इत्यादिना मन्। 'सोमस्त्वोषधीतत्भेदेन्दुषु। दिव्यौषध्यां धनसारे समीरे पितृदैवते॥ वसुप्रभेदे सलिले वानरे किंनरेश्वरे॥' इति हैम [२।३४५–४६]॥*॥ सोमा नकारान्तोऽपि। 'नामन्सीमन्व्योमन्–' (उ० ४।१५०) इत्यादिना सन्पाद्या निपातनात्। यत्तु–मुकुटेनोक्तम्–सूयते जायते। 'नवो नवो भवति जायमानः' इति श्रुतेः, सूयते यज्ञाङ्गस्थानं वा करोति, सूतेऽमृतं वा सोमः इति। 'षुञ् अभिषवे'। 'षू प्रेरणे' वा—इति। तन्न। सूयते सकर्मकत्वेन जायते इति प्रतिपदासंभवात्। श्रुत्युपन्यासोऽप्यसंबद्धः। जायमान इति जनेरकर्मकस्य ग्रहणात्। एतेनैव स्वाम्युक्तिरपि प्रत्युक्ता। सूयत इत्यस्य यज्ञाङ्गस्थानं वा करोति—इत्यर्थकथनमप्यसंगतम्। प्राणिगर्भविमोचनार्थकस्य तदसंभवात्। सुनोतेः सुवतेश्चोपन्यासः पूर्वान्वयी स्वतन्त्रो वा? नाद्यः—पृथग् विग्रह तदुपन्यासस्यासंगतत्वात्। द्वितीयेऽपि 'अर्तिस्तु–' इति ह्रस्वस्य ग्रहणे सुवतेरुपन्यासोऽसंगतः। दीर्घग्रहणे सुनोतेरुपन्यासोऽसंगतः॥ (१३)॥*॥ ग्लायति। 'ग्लै हर्षक्षये' (भ्वा० प० अ०)। 'ग्लानुदिभ्यां डौः' (उ० २।६४)॥ (१४)॥*॥ मृगोऽङ्कोऽस्य॥ (१५)॥*॥ कला निधीयन्तेऽत्र। डुधाञ् [ 'डुधाञ् धारणपोषणयोः', जु० उ० अ०] 'कर्मण्यधिकरणे च' (३।३।९३) इति किः॥ (१६)॥*॥ द्विजानां राजा। 'राजा–' (५।४।९१) इति टच्। 'द्विजराजः शशधरे सुपर्णेऽनन्तभोगिनि' इति विश्वः [३४।३०]॥ (१७)॥ ॥ शशमस्य धरः॥ (१८)॥*॥ नक्षत्राणामीशः॥ (१९)॥*॥ क्षपां करोति। 'कृञो हेतु–' (३।२।२०) इति टः॥ (२०)॥*॥ विंशतिः 'चन्द्रस्य'।

**कला तु षोडशो भागो**

कला (स्त्री), 'पूर्ण चन्द्रमा के सोलहवें हिस्से' का १ नाम है।

कलेति॥ चन्द्रस्य षोडशो भागः। कलयति। 'कल संख्याने' (चु० उ० से०) पचाद्यच् (३।१।१३४)। कल्यते वा। 'पुंसि–' (३।३।११८) इति घः। ('कलं त्वजीर्णरेतसोः। अव्यक्तमधुरध्वाने')'कला स्यादंशशिल्पयोः'[2] (कलने मूलरैवृद्धौ षोडशांशे विधोरपि'[1]) इति हैमः[२।४८८–८९]॥ (१)॥*॥ एकम् 'चन्द्रषोडशांशस्य'।

**बिम्बोऽस्त्री मण्डलं त्रिषु ॥ १५॥**

बिम्बः (पु न), मण्डलम् (त्रि), 'सूर्य या चन्द्रमा के बिम्ब' के दो नाम हैं।

बिम्ब इति। 'वीर्ति शोभते'। 'वी गतौ' (अ० प० से०) 'उल्वादयश्च' (उ० ४।९५) इति वक्ष्यमाणमह्रस्वत्वानि। 'बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले' इति हैमः [२।३०९]॥ (१)॥ ॥ मण्डयति, मण्ड्यते वा। 'मडि भूषायाम्' (चु० प० से०)। वृषादित्वात् (उ० १।१०६) कलच्। गौरादित्वात् (४।१।४१) ङीप्। मण्डली। 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च। कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि भुजङ्गभेदे शुनि मण्डलः स्यात्॥' इति विश्व [१५५।८१]॥ (२)॥*॥ द्वे 'रविचन्द्रमण्डलस्य'।

**भित्तं शकलखण्डे वा पुंस्यर्धः**

भित्तम् (न), शकलम्, खण्डम् (२ पु न), अर्धः (पु), 'खण्ड, टुकड़ा' के ४ नाम हैं। यहाँ 'खण्ड' (टुकड़ा) अर्थ में ही 'अर्ध' शब्द पुंल्लिङ्ग है।

१ 'राजदन्तादिषु परम्' इति 'मा' शब्दस्य परप्रयोग इति भावः।

२. स्वामी तु 'उनत्तीन्दुः' इत्याह।

३ 'हृषीकेशेऽपि—' इति पा०।

४ पाठोऽयं मेदिन्याम् (३।३०) उपलभ्यते, न तु विश्वे।

५. 'जैवातृकः पुमान् सोमे दीर्घायु कृशयोस्त्रिषु' इति मेदिनी (१६।१९१)।

१-३. कोष्ठस्थः पाठः निर्णयसागरीयः।

२. हैमे तु '–कला स्यात्कालशिल्पयोः' इत्येव पाठः।

भित्तमिति ॥ भिद्यते स्म । 'भित्तं शकलम्' (८।२।५९) इति निपातितम् ॥ ( १ ) ॥ * ॥ शक्नोति, शक्यते वा । 'शक्लृ शक्तौ' ( स्वा० प० अ० ) । 'शकिशम्योर्नित्' (उ० १।११२) इति कलच् । 'शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्व [ १५३।५७, मे० च १५४।१३५ ] । (२) ॥ * ॥ 'खडि भेदने' ( चु० प० से० ) । खड्यते । कर्मणि घञ् ( ३।३।१९ ) ।—भावे घञ् (३।३।१८) इति मुकुटोक्तिरसंगता । खण्डनक्रियाया एव ग्रहणप्रसङ्गात् । खण्ड्यमानस्याग्रहणप्रसङ्गात् । 'खनु अवदारणे' (भ्वा० उ० से०) । 'अमन्ताड्ड' (उ० १।११४) इति वा । 'खण्डोऽर्धे ऐक्षवे । मणिदोषे च' इति हैमः [२।११५-१६ ] । ['खण्डोऽस्त्री नकले नेक्षुविकारमणिदोषयो । खण्ड पामान्तरे भेदे' इति मे० ४१।७-८ ] । वा पुंसि—इति पूर्वोत्तराभ्या सबध्यते ॥ (३) ॥*॥ 'ऋधु वृद्धौ' ( स्वा० प० से० ) । ऋध्नोत्यनेन । 'हलश्च' ( ३।३।१२१ ) इति घञ् । विशेष्यनिघ्न ॥ (४) ॥ * ॥ चत्वारि 'खण्डमात्रस्य' ।

**अर्धं समेंऽशके ।**

अर्धम् (न), 'बराबर का हिस्सा' अर्थ में 'अर्ध' शब्द नित्य नपुंसकलिङ्ग है ।

अर्धमिति । समप्रविभागेऽर्धशब्द क्लीबमेव ॥ (१) ॥ * ॥ एक तुल्यस्य खण्डद्वयस्य मध्ये 'एकखण्डस्य' ।

**चन्द्रिका कौमुदी ज्योत्स्ना**

चन्द्रिका, कौमुदी, ज्योत्स्ना ( ३ स्त्री ), 'चाँदनी' के ३ नाम हैं ।

चन्द्रिकेति । चन्द्रोऽस्त्यस्या । ठन् ( ५।२।११५ ) ।—चन्द्र कायति वा—इति मुकुट । तन्न । ह्रस्वाभावप्रसङ्गात् । चन्द्रयति । 'तत्करोति—' ( वा० ३।१।२६ ) इति ण्यन्तात् ण्वुल् ( ३।१।१३३ ) इति वा । 'चन्द्रिका चन्द्रिमा चार्वी' इति शब्दार्णव ॥ (१) ॥ * ॥ कुमुदानामियम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । [ 'कौमुदः स्यात्कार्तिके चन्द्रिकायां तु कौमुदी' इति मे० ७६।२७] ॥ ( २ ) ॥ * ॥ ज्योतिरस्त्यस्याम् । 'ज्योत्स्नातमिस्रा—' ( ५।२।११४) इति निपात्यते । 'ज्योत्स्ना चन्द्रातपेऽपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता' [ इति मे० ८३।८ ] ॥ (३) ॥*॥ त्रीणि 'ज्योत्स्नायाः' ।

**प्रसादस्तु प्रसन्नता ॥ १६ ॥**

प्रसाद[1] ( पु ), प्रसन्नता (स्त्री), 'प्रसन्नता' के २ नाम हैं ।

प्रसाद इति । 'षद्लृ विशरणादौ' ( भ्वा०, तु० प० अ० ) । भावे घञ् (३।३।१८) । 'प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु । काव्यगुणे' इति हैमः [३ ३६३] ॥ (१)॥*॥ प्रसीदति स्म । 'गत्यर्थे—' ( ३।४।७२ ) इति क्त । प्रसन्नस्य भाव । तल् ( ५।१।११९ ) ॥ ( २ ) ॥ ॥ द्वयं 'नैर्मल्यस्य' ।

**कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ।**

कलङ्कः, अङ्कः (२ पु), लाञ्छनम्, चिह्नम्, लक्ष्म (=लक्ष्मन्), लक्षणम् ( ४ न ), 'चिह्न' अर्थात् 'निशान' के ६ नाम हैं ।

कलङ्केति । क ब्रह्माण लङ्घयति हीनता गमयति, ज्ञापयति वा । 'लघि गतौ' चुरादि । 'कर्मण्यण्' ( ३।२।१ ) । [ 'कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च' इति विश्व १४।१४८, मे० च ६।५९ ] ॥ ( १ ) ॥ * ॥ अङ्क्यतेऽनेन । 'अकि लक्षणे' ( भ्वा० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । ['अङ्को भूषारूपकलक्ष्मसु । चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसो ॥' इति हैमः २।१-२ ] ॥ (२) ॥*॥ 'लछ लाछि लक्षणे'[1]( भ्वा० प०से० ) । लाञ्छ्यतेऽनेन । ल्युट् ( ३।३।११५ ) । 'लाञ्छनं लक्ष्मसज्ञयो ' इति हैमः[३।४३६]॥*॥ लञ्छ्यतेऽनेन इति विग्रहे ल्युटि 'लञ्छनम्' अपि ज्ञेयम् ॥(३)॥*॥ चाह्यति, चह्यतेऽनेन वा । 'चह परिकल्कने' (भ्वा० प० से०) । बाहुलकान्नक् । उपधाया इत्व च । 'चिह्नं लक्ष्मपताकयो ' इति मेदिनी [ ८३।४ ] ॥ (४) ॥*॥ लक्षयति । 'लक्ष दर्शनाङ्कनयो ' ( चु० प० से० ) । मनिन् (३।२।७५) । 'लक्ष्म प्रधानचिह्नयो ' इति हैम २।२८९]॥(५)॥*॥ ल्युटि लक्षणम् । 'लक्षेरट् च' (उ० ३।७) इति न । ['लक्षणं नाम्नि चिह्ने च सारस्या लक्षणा क्वचित्' इति मेदिनी ५०।७६ ] ॥*॥ मुद्वा (?) (उ० ३।७) इति लक्ष्मणमपि । 'ज्योत्स्नत्या च सारस्या स्त्री, क्लीबे नामचिह्नयो । स्याद्वक्षे लक्ष्मणः पुंसि सौमित्री, श्रीमति त्रिषु' इति रभसात् । लक्ष्मीवति तु पामादित्वात् न ( ५।२।१०० ) । 'लक्ष्म्या अच्च' इति गणसूत्रेणात्व बोध्यम् ॥ (६) ॥*॥ षट् 'चिह्नस्य' ।

1. 'स्याद्' इति पा० ।

१ धातुपाठे 'लछ, लाछि' इति चकाररहित एव पाठो लभ्यते ।

२ पूर्वं 'लक्ष्मण'शब्दमुक्त्वा तदुदाहरणप्रसङ्गे पवर्गपञ्चमरहितस्य 'लक्षण'शब्दस्यार्थनिर्देशो 'रभस'वचनेनानुपयुक्त । अत एवात्र सर्वसग्रहार्थं "लक्षण नाम्नि चिह्ने च सारस्या लक्षणा क्वचित् । लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति ॥ रामभ्रातरि पुंसि स्यात् मश्रीके चाभिधेयवत् ।" इति मेदिन्या (५०।७६-७७) उपन्यासो युक्त । दृष्टिदोषवशाद्वा 'लक्ष्मण ' इत्यस्य स्थाने 'लक्षण ' मुद्रित प्रतीयते, अनुपदमेव 'पुंसि सौमित्री' इति दर्शनात् ।

सुषमा परमा शोभा

सुषमा ( स्त्री ), 'अधिक शोभा' का १ नाम है।

**सुषमेति** ॥ शोभनं समं सर्वमनया । 'सुविनिर्दुर्भ्यः सुपिसूतिसमा.' ( ८।३।८८ ) इति षत्वम् । एतेन सुषामादित्वात् (८।३।९८) षत्वम्—इति स्वाम्युक्तिः परास्ता । उक्तरीत्या निर्वाहे सुषामादिष्वपठनस्य निर्बीजत्वात् । [ सुषमं रुचिरे समे । सुषमा तु स्यात्परमशोभायां कालभिद्यपि ।' इति हैमः ३।५०५ ] ॥ ( १ ) ॥*॥ एकम् 'उत्कृष्टशोभायाः' ।

शोभा कान्तिर्द्युतिश्छविः ॥ १७ ॥

शोभा, कान्तिः, द्युतिः, छविः ( ४ स्त्री ), 'शोभा' के ४ नाम हैं।

**शोभेति** ॥ शोभयति 'शुभ शुम्भ शोभायाम्' ( तु० प० से० ) पचाद्यच् ( ३।१।१३४ ) । यत्तु मुकुटेनोक्तम्—शोभतेऽनया । 'शुभ शुम्भ शोभार्थे' इति निर्देशात् 'गुरोश्च हलः' (३।३।१०३) इत्यकार—इति । तन्न । अर्थनिर्देशस्यातान्त्रिकत्वात् । यदपि—'गुरोश्च हलः' [ ३।३।१०३ ] इति चकारादप्रत्ययः इति तु ययम्—इति । तदपि न । आकरे तथानुक्तेः । उक्तरीत्या निर्वाहाच्च । [ 'शोभा कान्तीच्छयोर्मता' इति मे० १०६।९ ]॥*॥ शुम्भयतीति शुम्भापि बोध्या ॥ (१) ॥*॥ काम्यते । क्तिन् ( ३।३।९४ )। 'अनुनासिकस्य—'(६।४।१५ ) इति दीर्घः—इति मुकुटेनोक्तम् । तन्न । 'काम्यते' इति 'विगृहीतत्वात्तत्रान्तरङ्गत्वाण्णिङ्निमित्तवृद्धेः सम्भवात् । आयादय—' ( ३।१।३१ ) इति णिङभावे वा बोध्यम् । [ 'कान्तिः शोभेच्छयोः स्त्रियाम्' इति मेदिनी ५४।८ ] ॥ (२) ॥*॥ 'द्युत दीप्तौ' ( भ्वा० आ० से० ) । द्योततेऽनया ।—'इगुपधात्कित्' इति—मुकुटः । तन्न । 'इगुपधात्कित्' (उ० ४।१२०) इत्यनेन इन्विधानात्तस्य कित्वातिदेशात् । ['द्युतिस्तु शोभादीधित्योः' इति हैमः २।१७६] ॥*॥ ङीपि (ग० ४।१।४५) द्युती च । द्यूयते वा । 'द्यु अभिगमने' [ अ० प० अ० ] क्तिन् ॥*॥ क्तिनि (३।३।९४) द्युतिः ॥ ( ३ ) ॥*॥ छ्यति । छिनत्त्यसारमिति वा । 'छो छेदने' ( दि० प० अ० ) । 'छिदिर् द्वैधीकरणे' ( रु० उ० अ० ) । 'कृविघृष्विच्छवि—' ( उ० ४।५६ ) इति वित्रन्तो निपातितः । ['छविस्तु रुचि शोभायाम्' इति हैम २।५३३ ] ॥ (४) ॥*॥('एषु भावे वा प्रत्ययाः । शोभेत्यत्र 'स्त्रनो घ च' (३।३।१२५) इति घः । द्युतिरित्यत्र 'इक् कृष्यादिभ्यः' ( वा० ३।३।१०८ ) इति दिक्) । चत्वारि 'शोभायाः' ।

१ विगृहीतात्पूर्वं तेनेत्यधिक पाठः ।
२. कोष्ठस्थ. पाठ. क्वचिन्नोपलभ्यते ।

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।
प्रालेयं मिहिका च

अवश्यायः, नीहारः, तुषारः ( ३ पु ), तुहिनम्, हिमम्, प्रालेयम् ( ३ न ), महिका ( स्त्री ), 'पाला पड़ने' अर्थात् 'ओस, हिम' के ७ नाम हैं।

**अवश्याय इति** ॥ अवश्यायते शैत्यमापाद्यते । 'श्यैङ् गतौ' ( भ्वा० आ० अ० ) । 'श्याद्व्यध—' (३।१।१४१) इति णः । [ 'अवश्यायो हिमे दर्पे' इति हैम ४।२२७ ] ॥ (१) ॥*॥ निह्रियते । 'हृञ् हरणे' (भ्वा० उ० अ) । घञ् (३।३।१९) । 'उपसर्गस्य घञि—' (६।३।१२२) इति दीर्घः । यत्तु—'अध्यायन्याय—' (३।३।१२२) इत्यत्र चकाराद्घञ्—इति मुकुटेनोक्तम् । तन्न । 'अकर्तरि च—' (३।३।१९ ) इति घञः सिद्धत्वात् ॥ (२) ॥*॥ तोषयति । तुष (दि० प० अ०) अन्तर्भावितण्यर्थात् 'कर्मे कित्' इत्यनुवृत्तौ 'तुषारादयश्च' ( उ० ३।१३९ ) इत्यारन् किच्च । [ तुषारो हिमदेशयोः । शीकरे हिमभेदे च' इति हैम ३।५९६ ] ॥ ( ३ ) ॥*॥ तोहति । 'तुहिर् दुहिर् अर्दने' ( भ्वा० प० से० ) । 'वेपितुह्योर्ह्रस्वश्च' ( उ० २।५२ ) इतीनन् ॥ (४) । *॥ हन्ति [ 'हन् हिंसागत्योः', अ० प० अ०] 'हन्तेर्हि च' (उ० १।१४७) इति मक् । हिनोति वर्धते । 'हि गतौ वृद्धौ च' ( स्वा० प० अ० ) । मन् (उ० १।१४१ बाहुलकेन) इति वा । संज्ञापूर्वकत्वान्न गुणः । 'हिमं तुषारमलयोद्भवयोः स्यात्पुंसकम् । शीतले 'वाच्यलिङ्गं स्यात्' [ इति मेदिनी ११०।३८ ] ॥ (५) ॥*॥ प्रलीयन्ते पदार्था अत्रेति हिमाद्रेः प्रलयः । तत आगतम् । अण् (४।३।७४) । 'केकय—' (७।३।२) इत्यादिना यादेरियः ॥ (६) ॥*॥ महाते । 'मह पूजायाम्' (भ्वा० प० से०) । 'क्वुन् शिल्पिसंज्ञयोः—' ( उ० २।३२ ) ॥*॥ 'मिहिका' इति पाठे 'मिह सेचने' ( भ्वा० प० अ० ) । क्वुन् ( उ० २।३२ ) ॥ (७) ॥ * ॥ धूमिका धूममहिषी च बोध्या[२]। सप्त 'हिमस्य' ।

अथ हिमानी हिमसंहतिः ॥ १८ ॥

हिमानी, हिमसंहतिः (२ स्त्री), 'बहुत पाला पड़ने' के २ नाम हैं।

**अथेति** ॥ हिमानां संहतिः ॥ (२) ॥ * ॥ महद्धिमम् । 'हिमारण्ययोर्महत्त्वे' ( वा० ४।१।४९ ) इति ङीषानुकौ ॥ (१) ॥ * ॥ द्वे 'हिमसमूहस्य' ।

१. 'वाच्यलिङ्गोऽथ' इति पा० ।
२. 'कुज्झटिमर्धूमहिषी रतान्ध्री च कुहेलिका । धूमिका च तमोरेणुः.' इति त्रिकाण्डशेषात् ( १।३।८ ) ।

१०९ ) पलं चिन्त्यम् । यत्तु—लोपयति योषिता स्याभिमानम् । पचाद्यच् (३।१।१३४)। टाप् (४।१।४)। लोपा। मुद्रयति स्रष्टु सृष्टिमिति मुद्रा । तत कर्मधारय ( २।१।५७)-इति मुकुटेनोक्तम् । तच्चिन्त्यम् । लोपामुद्रशब्दस्यैव भाषितपुंस्कत्वात्पुंवद्भावप्रसङ्गात् । आङ्प्रश्लेषेण वा तन्नमाधेयम् ॥ (१) ॥ * ॥ समानो धर्मोऽस्त्यस्या । इति ( ५।२।११५ ) । 'नमानस्य-' ( ६।३।८४ ) इति म । एनम् 'अगस्त्यपत्न्याः' ।

**नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।**

नक्षत्रम्, ऋक्षम्, भम् ( ३ न ), तारा, तारका (२ स्त्री), उडुः ( स्त्री न ), 'नक्षत्र' के ६ नाम हैं।

**नक्षत्रमिति** ॥ न क्षदते हिनस्ति । 'क्षद' इति सौत्रो धातुर्हिंसार्थ[1] आत्मनेपदी । ष्ट्रन् (उ० ४।१५९)। 'नभ्राण्नपाद्-' ( ६।३।७५ ) इति नञ प्रकृतिभाव । यत्तु क्षदतीति विग्रहप्रदर्शनं मुकुटेन कृतम् । तच्चिन्त्यम् । यद्वा—'णक्ष गतौ' ( भ्वा० प० से० ) । नक्षति । 'अमिनक्षियजिवधिपतिभ्योऽत्रन्' (उ० ३।१०५) । न क्षणोति वा । 'क्षणु हिंसायाम्' ( त० उ० से० ) । ष्ट्रन् ( उ० ४।१५९ ) । बाहुलकाण्णलोप । न क्षत्र वा । देवत्वात्क्षत्रभिन्नत्वात् ॥ (१) ॥ * ॥ ऋषति । 'ऋषी गतौ' ( तु० प० से० ) । 'स्नुव्रश्चिकृत्यृषिभ्य कित्' (उ० ३।६६) इति स । 'षढो –' (८।२।४१) इति क । 'ऋक्षस्तु स्याद्यक्षत्राच्छभल्लयो । महीधरविशेषे च शोणके लक्ष्यवेधने'[2] इति हैम [२।५७०-७१ ] ॥ (२) ॥ * ॥ भाति । ['भा दीप्तौ', अ० प० अ०] 'अन्येष्वपि-' ( ३।२।१०१ ) इति ड । 'भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद्भृगुनन्दने' । [ इति मेदिनी १०६।१ ] । ['नक्षत्रं भ बुधा प्राहु -] भ्रमरो[3] भ प्रकीर्तित ' इत्येकाक्षर [२६] ॥ ( ३ ) ॥*॥ तरन्त्यनया [ 'तॄ प्लवनतरणयो', भ्वा० प० से० ] । भिदादित्वात् (३।३।१०४) अङ् । गुण ( ७ । ४ । १६ ) । निपातनाद्दीर्घ ॥ * ॥ तारयते पचाद्यच् (३।१।१३४) । तारोऽपि । 'नक्षत्रे नेत्रमध्ये च तारा स्यात्तार इत्यपि' इति व्याडि । ['तारो वानरभिन्मुक्ताविशुद्धयो शुद्धमौक्तिके । ना, नक्षत्रेऽक्षिमध्ये च न ना, रूप्ये नपुंसकम् । स्त्री बुद्धदेवताभेदे वालिगोर्पतिभार्ययो । त्रिलिङ्गोऽत्युच्चशब्दे च' इति मेदिनी १२५।४३-४४] ॥ (४) ॥*॥ ण्वुलि (३।१।१३३) तारका । 'तारका ज्योतिषि' (वा० ७।३।४५) इतीत्वाभाव । अपिशब्दात्तारकापि वा स्त्रियाम् । स्त्रीत्वाभावे क्लीवत्वमुडुनाहचर्यात् । 'नक्षत्रे चाक्षिमध्ये च तारकं तारकापि न' इति शाश्वत [४२०]।['तारको दैत्यभित्कर्णधारयोर्न द्वयोरक्षि । कनीनिकायामृक्षे च न पुमान्स्त्री नरि त्रिपु' इति मेदिनी ९।९९-१००] ॥ (५) ॥ * ॥ अवतीति—ऊ । क्विप् (३।२।१७८) । 'ज्वरत्वर-' (६।४।२०) इत्यूठौ । 'ह्रस्वो नपुंसके-' (१।२।४७ ) इति ह्रस्व । समासोत्तरम् 'इको ह्रस्वोऽङ्य –' ( ६।३।६१ ) इति वा ह्रस्व । ड्यतेर्डुं डीङो मितद्र्वादित्वात् ( वा० ३।२।१८० ) डु । 'उ न तड्डु च' इति विग्रह. । स्त्रिया तु 'ऊङ्ग्रामो इश्च' इति ज्ञेय । उडु, उडू, उडव, इत्यादि धेनुवत् । यद्वा:— उ शब्दो रपोक्ती च शिववाची त्वनव्ययम् । उ प्रश्ने च'[1] इति हैम [७।४] । उ क्रोध ड्यते, उना वा उना टीयते वा । 'मितद्र्वादिभ्य '(वा० ३।२।१८०) इति ड् ॥ (६) ॥ * ॥ षड् 'नक्षत्रसामान्यस्य' ।

**दाक्षायण्योऽश्विनीत्यादितारा:**

दाक्षायण्य' (स्त्री, नि० ब० व०), 'अश्विनी, भरणी आदि सत्ताइस नक्षत्रों' का १ नाम है।

**दाक्षायण्य इति** ॥ दक्षस्यापत्यानि । 'वा नामधेयस्य' (वा० १।१।७३) इति वृद्धसंज्ञायाम् 'उदीचा वृद्धादगोत्रात्' ( ४।१।१५७ ) इति फिञ् । गौरादित्वात् ( ४।१।४१ ) ङीष् । यत्तु—'आसुरेरुपसंख्यानम्' (वा० ४।१।१९) इत्यत्र केचित्, 'आसुरिदाक्षयो 'रिति–इति मुकुट आह । तन्न । भाष्ये दाक्षेरदर्शनात्। यदपि—गोत्रत्वमुपचर्य 'गोत्रे कुञ्जादिभ्यश्चफञ्' ( ४।१।९८ ) इति च्फञि 'जातेरस्त्रीविषयादयोपधात्'(४।१।६३) इति ङीष्–इत्याह । तदपि न । कुञ्जादिगणेऽस्य पाठाभावात् । उक्तरीत्योपचार विना निर्वाहाच्च । यत्तु—'अत इञ्' ( ४।१।९५ ) । अनन्तरापत्येऽपि द्वैपायनवत् । 'यञिञोश्च' ( ४।१।१०१ ) इति फक्–इति स्वामी आह । तदपि न । अनन्तरापत्ये फकोऽदर्शनात् । द्वीपमयनमस्य द्वीपायन । द्वीपायनस्यापत्य द्वैपायन । ऋष्यण् ( ४।१।११४) इति द्वैपायनशब्दव्युत्पत्तेर्दृष्टान्तासंभवाच्च । यदपि—'इतो मनुष्यजाते' (४।१।६५) इत्यत्र 'इञ' उपसंख्यानान्ङीष् । 'कौरव्यमाण्डूकाभ्या च' (४।१।१९) इति चकारादासुरायणीवत् फ –इति । तदपि न । स्वदुक्तोपसंख्यानाप्रसिद्धे । चकारस्यानुक्तसमुच्चयार्थत्वे मानाभावाच्च । यदपि—दक्षमयते । ण्युः ( ३।१।१३४ ) । प्रज्ञाद्यण् ( ५।४।३८ )–इत्याह मुकुट । तदपि न । प्रज्ञाजवद्रूपद्वयप्रसङ्गात्। [3]अश्विन्याद्या सप्तविंशतितारका दाक्षायण्य उच्यन्ते ।

१ 'तृन्तृचौ शंसिक्षदादिभ्य –' इत्युणादिसूत्रीयो धातु छादनीकरणे भक्षणे च ।

२ 'क्षतवेधने' इति, 'कृतवेधने' इति च पा० ।

३ 'भवने' इति पा० ।

१ 'उ प्रश्ने च' इत्यशो हैमे नोपलभ्यते ।

२ भाष्ये तु कौरव्यमण्डूकयोरासुरेरुपसंख्यानम्' इति वार्तिकस्वरूपं लभ्यते ।

३. अश्विन्यादिनक्षत्राणा नामानि 'चौखम्बा'प्रकाशितस्य 'अमरकोषस्य' मणिप्रभाव्याख्याया 'दाक्षायणी'

['दाक्षायणी त्वपर्णायामश्विन्यादिषुडुषु स्त्रियाम्' इति मेदिनी ५२।९७ ] ॥ (१) ॥*॥ एवम् 'अश्विन्यादिभानाम्' ।

अश्वयुगश्विनी ॥ २१ ॥

अश्वयुक् (=अश्वयुज्), अश्विनी (२ स्त्री), 'अश्विनी' के २ नाम हैं।

अश्वयुगिति ॥ अश्वं युनक्ति रूपेणानुकरोति । 'सत्सूद्विष-' (३।२।६१) इति क्विप् । यत्तु—'ऋत्विग्-' (३।२।५९) इत्यादिना क्विन्-इति मुकुटः । तन्न । युजे केवलात् क्विन्विधानात् ॥ (१) ॥*॥ अश्वः अश्वरूपमस्त्यस्याः । इनिः (५।२।११५) ॥ (२) ॥ * ॥ द्वे 'अश्विन्याः' ।

राधा विशाखा

राधा, विशाखा (२ स्त्री), 'विशाखा नक्षत्र' के २ नाम हैं।

राधेति ॥ राध्नोति कार्यमनया । 'राध समिद्धौ' (स्वा० प० अ०) । 'गुरोश्च हलः' (३।३।१०३) इत्यकारः । राधयति । अच्(३।१।१३४)इति वा । 'राधा विद्युद्विशाखयोः । विष्णुकान्तामलक्ययोश्च गोपीवेषविशेषयोः'[1] इति हैमः [ २।२४९-५० ] ॥ (१) ॥ * ॥ विशाखयति । 'शाखृ व्याप्तौ' (भ्वा० प० से० ) अच् ( ३।१।१३४ ) । 'विशाखो याचके स्कन्दे विशाखाभे च ठिल्लके' इति हैमः [३।११३] ॥ (२) ॥ * ॥ द्वे 'विशाखायाः' ।

पुष्ये तु सिध्यतिष्यौ

पुष्यः, सिध्यः, तिष्यः (३ पु), 'पुष्य नक्षत्र' के ३ नाम हैं।

पुष्य इति ॥ पुष्णाति ['पुष पुष्टौ', क्र्या० प० से०] कार्याणि । 'पुष्यः कलियुगे स्मृतः । भानक्षत्रयोर्भेदे' [इति मेदिनी ११५।३८] ॥ (१) ॥*॥ सिध्यन्त्यस्मिन् । 'पुष्यसिध्यौ नक्षत्रे' (३।१।११६) इति क्यपि निपातितः ॥ (२) ॥*॥ ['तुष तुष्टौ', दि० प० अ०] तुष्यन्त्यस्मिन् । 'सूर्यतिष्य-' ( ६।४।१४९ ) इति निपातनात्क्यप् उपधेत्वं च । 'तिष्यो नक्षत्रभेदे स्यात्कलौ धाव्या च योषिति' [ इति मे० ११५।२८ ] ॥ (३) ॥ * ॥ त्रीणि 'पुष्यस्य' ।

श्रविष्ठया ।

समा धनिष्ठा

श्रविष्ठा, धनिष्ठा (२ स्त्री), 'धनिष्ठा नक्षत्र' के २ नाम हैं।

श्रविष्ठेति ॥ श्रवणं श्रव[2] । ['श्रु श्रवणे', भ्वा० प० से०] 'ऋदोरप्' (३।३।५७) । प्रसिद्धिः । श्रवोऽस्त्यस्याः । मतुप्(५।२।९४)। अतिशयेन श्रववती । इष्ठन् (५।३।५५)। 'विन्मतोर्लुक्' (५।३।६५) इति मतुपो लुक् ॥ (१) ॥*॥ एवमतिशयेन धनवती ॥ (२) ॥ ॰ ॥ सा श्रविष्ठया समेत्यन्वयः ॥ द्वे 'धनिष्ठायाः' ।

स्युः प्रोष्ठपदा भद्रपदाः स्त्रियः ॥ २२ ॥

प्रोष्ठपदाः, भद्रपदाः (२ पु स्त्री, नि० ब० व०), 'पूर्वाभाद्रपदा नक्षत्र' के २ नाम हैं।

स्युरिति ॥ प्रोष्ठो गौः, तस्येव पादा यासाम् । 'सुप्रातसुश्व-' (५।४।१२०) इत्यादिना बहुव्रीहावच् पद्भावश्च निपातितः । प्रोष्ठादयोर्द्वित्वेऽपि 'फल्गुनीप्रोष्ठपदानाम्-' (१।२।६०) इति नक्षत्रात्पाक्षिकं बहुत्वम् ॥ (१)॥*॥ भद्रं पदं यासां ताः । अत्रारोपाद्बहुत्वम् । यत्तु-'सुप्रात-'(५।४।१२०) इति प्रोष्ठपदा भद्रपदाश्च निपातिता -इति मुकुटः । तन्न । भद्रपदाशब्दस्य तत्राग्रहणात् । एतेन—अर्थग्रहणाद्भद्रपदा-इति स्वाम्युक्तिरपि परास्ता ॥ (२) ॥*॥ द्वे 'पूर्वभद्रपदोत्तरभद्रपदानाम्' ।

मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।

मृगशीर्षम्, मृगशिरः (=मृगशिरस् । २ न), आग्रहायणी (स्त्री), 'मृगशिरा नक्षत्र' के ३ नाम हैं।

मृगेति ॥ आकृत्या मृगस्य शीर्षमिव शीर्षं शिरो यस्य ॥ (१) ॥*॥ मृग शिरोऽस्य । रूपभेदात्क्लीबम् । 'सौम्या मृगशिरः स्युर्मृगशिरा' इति पालितः स्त्रीत्वमप्याह ॥*॥ मृगोऽपि । 'मृगशीर्षे हस्तिजातौ मृगः पशुकुरङ्गयोः' इति व्याडिः ॥ (२) ॥ * ॥ अग्रे हायनमस्याः । मार्गशीर्षमारभ्य वर्षप्रवृत्तेः । प्रज्ञाद्यण् (५।४।३८) । 'पूर्वपदात्-' (८।४।३ ) इति णत्वम् । आग्रहायणी पौर्णमासी । तद्योगान्नक्षत्रमपि तथा । यत्तु-'आग्रहायण्यश्वत्थाट्ठक्' ( ४।२।२२ ) इति निर्देशात्स्वार्थेऽण् । गौरादित्वात् (४।१।४१) ङीष् । अणन्तत्वादेव ङीपि सिद्धे गौरादिषु पाठोऽस्य पुंवद्भावनिषेधार्थः । तेनाग्रहायणीभार्य इति सिध्यति-इति मुकुटः । तन्न । अपसिद्धान्तात् । नहि गौरादित्वं पुंवद्भावप्रतिषेधार्थम्, किं तु ङीष्विधानार्थम् । न च पाठसामर्थ्यम् । तस्य स्वरभेदार्थत्वात् । न चोदात्तनिवृत्तिस्वरेण तदभावः । पाठसामर्थ्यादुदात्तनिवृत्तिस्वरस्यैव बाधसंभवात् । अस्य गौरादिकत्वमप्रामाणिकमिति सुवचत्वाच्च ॥ ( ३ ) ॥ * ॥ त्रीणि 'मृगशिरसः' ।

इन्वकास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २३ ॥

इन्वकाः (स्त्री, नि० ब० व०), 'मृगशिरा नक्षत्र के शिरोभाग में उदय होनेवाली पाँच ताराओं' का १ नाम है।

इन्वका इति ॥ इन्वन्ति प्रीणयन्ति । 'इवि व्याप्तौ प्रीणने च' ( भ्वा० प० से० ) । इदित्वात् ( ७।१।५८ )

---

शब्दस्य टिप्पणी, तेषां लिङ्गवचनादिनिर्णयश्च तत एव प्रकाशितस्य 'अभिधानचिन्तामणेः' 'मणिप्रभा' व्याख्यायां ( २।२९ ) तज्जिज्ञासवोऽवलोकयन्तु ।

१. 'वेष्यविशेषयो' इति पा० ।

२ 'श्रुव शृ च' ( ३।१।७४ ) इति आदेशो कृते सतीति शेषः ।

नुम् । सञ्ज्ञायां क्वुन् (उ० २।३२) । क्षिपकादित्वात् ( वा० ७।३।४५) इत्वाभाव. ॥*॥ 'इल्वला:' इति पाठे तु 'इल स्वप्ने क्षेपणे च' (तु० प० से०) । 'मानमिवर्णमि–' ( उ० ४।१०७ ) इति वलच् गुणाभावश्च निपात्यते । [ 'इल्वला-स्तारकाभेदेऽपील्वलो दैत्यमत्स्ययो ' इति विश्व ] ॥ (१) ॥ * ॥ एकं 'मृगशीर्षशिरोदेशस्थाना पञ्चाना स्वल्प-तारकाणाम्' ।

**बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणो गुरुः ।**
**जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ २४ ॥**

बृहस्पतिः, सुराचार्यः, गीर्पतिः, धिषणः, गुरुः, जीवः, आङ्गिरसः, वाचस्पतिः, चित्रशिखण्डिजः ( ९ पु ), 'बृहस्पति' के ९ नाम हैं।

बृहस्पतिरिति ॥ बृहता पति । 'तद्बृहतो –' ( वा० ६।१।१५७ ) इति सुट्तलोपौ ॥*॥ अलुकि 'बृहतां पतिः' इत्यपि ॥ (१) ॥*॥ सुराणामाचार्य ॥(२) ॥*॥ गिरा पतिः । 'अहरादीना–' (वा० ८।२।७०) इति वा रेफ ॥*॥ [पक्षे गी:पति , गी पति ] । कस्कादित्वात् (८।३।४८) ष –इति केचित्[1] ॥ (३)॥*॥ प्रशस्ता धिषणाऽस्य । अर्श-आद्यच् ( ५।२।१२७ ) । यद्वा–धृष्णोति । 'ञिधृषा प्राग-ल्भ्ये' ( स्वा० प० से० ) । 'धृषेर्धिष् च–' (उ० २।८२) इति क्युः । [ 'धिषणस्त्रिदशाचार्ये धिषणा धियि सम्मता' इति विश्वः ५१।४६ ] ॥ ( ४ ) ॥ * ॥ गृणाति उपदि-शति । 'गृ शब्दे' ( क्र्या० प० से० ) । 'कृग्रोरुच्च' ( उ० १।२४) इति कु. उश्चान्तादेश । 'गुरुर्महत्याङ्गिरसे पित्रा-दौ धर्मदेशके । अलघौ दुर्जरे चापि' इति हैम [२।४२३] ॥ (५) ॥　॥ जीवयति । अच् ( ३।१।१३४ ) । मृत-संजीवनमन्त्रज्ञत्वात् । 'जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे श-रीरिणि' इति हैम [ २।५३४ ] ॥ (६) ॥ * ॥ 'अगि गतौ' (भ्वा० प० से०) । 'अङ्गिरा.'(उ० ४।२३६) इत्य-सुप्रन्तो निपातित. । अङ्गिरसोऽपत्यम् । 'ऋष्यन्धक–' (४। १।११४ ) इत्यण् । बहुत्वे 'अत्रिभृगु–' ( २।४।६५ ) इति लुक् । आङ्गिरस., आङ्गिरसौ, अङ्गिरस. ॥ (७) ॥*॥ वाचस्पतिरित्यत्र 'षष्ठ्या पतिपुत्र–' ( ८।३।५३ ) इति सत्वविधानात्तत्पुरुषे अलुक् ॥ * ॥ लुक्पक्षे 'वाक्पतिः' अपि ॥ ( ८ ) ॥ * ॥ 'ऋषय. सप्त धीमद्भि. स्मृताश्चित्र-शिखण्डिन ' इति हारावली । तदन्तर्गतादङ्गिरसो जातत्वा-च्चित्रशिखण्डिनो जात । 'पञ्चम्याम्–' ( ३।२।९८ ) इति ड. ॥ (९) ॥ * ॥ नव 'बृहस्पते.' ।

१. कस्कादिसूत्रभाष्ये गीष्पतिप्रयोगादर्शनात् 'इति केचित्' इत्युक्तमत्र । मुकुटव्याख्याने तु गीष्पतिरित्यसाधु-रिति स्पष्टमेवोक्तम् ।



**शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।**

शुक्रः, दैत्यगुरुः, काव्यः, उशनाः ( =उशनस् ), भार्गवः, कविः ( ६ पु ), 'शुक्राचार्य' के ६ नाम हैं।

शुक्र इति । माहेश्वरशुक्रद्वारा निर्गतत्वाच्छुक्र । शो-चति । 'शुच शोके' ( भ्वा० प० से० ) । 'ऋज्रेन्द्र–' ( उ० २।२८) इति रक् इति वा ॥ (१) ॥*॥ दैत्याना गुरु. ॥ (२) ॥ * ॥ 'कुङ् शब्दे' ( भ्वा० आ० अ० ) । कोतु-मवश्यमास्यातुमर्हत्वात् काव्य. । 'ओरावश्यके'(३।१।१२५) इति ण्यत् । कवेरपत्यम् । 'कुर्वादिभ्यो ण्य ' (४।१।१५१) इति वा । [ 'काव्यं ग्रन्थे पुमान् शुक्रे काव्या स्यात्पूतना-धियो ' इति मे० ११३।११ ] ॥ ( ३ ) ॥ * ॥ 'वश कान्तौ' ( अ० प० से० ) । वष्टि । 'वशे कनसि' ( उ० ४।२३९ ) । ग्रह्यादित्वात्सम्प्रसारणम् (६।१।१६) । 'ऋदु-शनस्–' ( ७।१।९४ ) इत्यनङ् ॥ (४) ॥ * ॥ भृगोर-पत्यम् । ऋष्यण् ( ४।१।११४ ) । बहुत्वे तु लुक् ( २।४। ६५) । भृगव । ['भार्गवः परशुरामे सुधन्वनि मतङ्गजे । दैत्याचार्ये भार्गवी तु कृष्णदूर्वोमयो श्रियाम्॥' इति हैम' ३। १४४-४५]॥(५)॥*॥ कवते । 'कुङ् शब्दे' ( भ्वा० आ० अ०) । 'अच इ ' (उ० ४।१३९) । कौतीति वा । [कवि-र्वल्मीकिशुक्रयो । सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषिति' इति मे० १५७।४] ॥(६)॥*॥ षट् 'शुक्रस्य' ।

**अंगारकः कुजो भौमो लोहितांगो महीसुतः ॥ २५ ॥**

अङ्गारकः, कुजः, भौमः, लोहिताङ्गः, महीसुतः ( ५ पु ), 'मङ्गल ग्रह' के ५ नाम हैं।

अङ्गारक इति ॥ अङ्गानि इयर्ति पीनत्वात् । 'ऋ गतौ' ( जु० प० अ० ) । 'कर्मण्यण्' (३।२।१) । अङ्गति वा । 'अगि गतौ' (भ्वा० प० से०)। 'अङ्गिमदि–' (उ० ३।१३४) इत्यारन् । सञ्ज्ञाया कन् (५।३।९७)। अङ्गार इव । कन्(५। ३।९६) । रक्तवर्णत्वादिति वा । 'अङ्गारकः कुजेऽपि स्यात्कु-लमुकाशे कुरुण्टके । भवेदङ्गारिका चेक्षुकाण्डे[1] किंशुककोरके।' [ इति मे० १४।१७५ ] ॥ ( १ ) ॥ * ॥ को. पृथिव्या जात । 'पञ्चम्याम्–' (३।२।९८) इति ड. । ['कुजा भवा-न्या वृक्षे तु कुजो नरकभौमयो.' इति मे० ३०।५] ॥ (२) ॥ * ॥ भूमेरपत्यम् । शिवादित्वात् ( ४।१।११२ ) अण् । 'भौमो मङ्गलदैत्ययो.' इति हैम. [ २।३२५ ] ॥ ( ३ ) ॥ * ॥ लोहितान्यङ्गान्यस्य ॥ (४) ॥*॥ मह्या सुत. ॥ (५) ॥ * ॥ पञ्च 'मङ्गलस्य' ।

**रौहिणेयो बुधः सौम्यः**

रौहिणेयः, बुधः, सौम्यः ( ३ पु ) 'बुध' के ३ नाम हैं।

१. 'चेक्षुदण्डे' इति पा० ।

रौहिणेय इति ॥ रोहिण्या अपत्यम्। 'स्त्रीभ्यो ढक्' (४।१।१२०)। 'रौहिणेयो भवेद्वत्से रेवतीरमणे बुधे' इति विश्व [१२३।१११] ॥ (१) ॥*॥ बुध्यते। 'बुध अवगमने' (दि० आ० अ०)। क (३।१।१३५) [ 'बुधः सौम्ये कवौ' इति हैम २।२४६ ] ॥ (२) ॥ * ॥ सोम इव। सौम्य 'शाखादिभ्यो य (५।३।१०३)। तत प्रज्ञाद्यण् (५।४।३८)। [ 'सौम्य सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवते। सौम्या पुनर्मृगशिर शिरस्था पञ्च तारका ॥ इति हैम २।४०१ २ ] ॥ (३) ॥*॥ त्रीणि 'बुधस्य।'

**सम्रौ सौरिशनैश्चरौ।**

**सौरि, शनैश्चर (२ पु), 'शनि' के २ नाम हैं।**

समाविति ॥ सूरस्यार्कस्यापत्यम्। अत इञ् (४।१।९५) ॥ * ॥ तस्यदम् (४।३।१२०) इत्यणि 'सौर अपि ॥ (१) ॥ ॥ शनैश्चरति पङ्गुत्वात्। अच् (३।१।१३४) ॥*॥ 'शनिसौरिशनैश्चरा इति रभसाच्छनिरपि ॥*॥ शनैश्चर 'मन्द' इति वाचस्पति ॥ (२) ॥ * ॥ द्वे शने [१]।

**तमस्तु राहु स्वर्भानुः सैंहिकेयो विधुन्तुद ॥ २६ ॥**

**तम (=तमस्, न), राहु, स्वर्भानु, सैंहिकेय, विधुन्तुद (४ पु), 'राहु' के ४ नाम हैं।**

तम इति ॥ ताम्यति। तमु ग्लानो (दि० प० से०)। असुन् (उ० ४।१८९)। तमु काङ्क्षायाम् (दि० प० से०) इति मुकुटस्य प्रमाद। ताम्यतीति विगृहीतत्वात्। 'तमासि गुणतिमिरसैंहिकेया इति त्रिकाण्डशेष [२] ॥ ॥ पचाद्यच् (३।१।१३४) अदन्त पुल्लिङ्गोऽपि। स्वर्भानुस्तु तमो राहु इति पुस्काण्डे रत्नकोषामरमालयोर्दर्शनात् ॥ (१) ॥*॥ रहति गृहीत्वा त्यजति चन्द्रार्कौ। 'रह त्यागे' (भ्वा० प० से०) भ्वादि। बाहुलकादुण्।—'रहश्च' इत्युण्—इति मुकुटस्य प्रमाद। एतादृशसूत्रादर्शनात् ॥ (२) ॥*॥ स्वराकाशे विपरीतलक्षणया भाति। 'दाभाभ्या नु (उ० ३।३२)। क्षुभ्नादि (८।४।३९) ॥ (३) ॥*॥ सिंहिकाया अपत्यम्। 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (४) ॥ * ॥ विधु तुदति। विध्वरुषोस्तुद (३।२।३५) इति खश्। अरुर्- (६।३।६७) इति मुम् ॥ (५) ॥ * ॥ पञ्च 'राहो'।

केतु ॥ [ 'केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि' इति मे० ५४।१३] ॥ (१) ॥*॥ शिखी। ['शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गक ॥' इति मे० ९३।४२] इति स्वामी ॥ (२) ॥*॥ द्वे 'केतो'।

**सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिन।**

**चित्रशिखण्डिन (=चित्रशिखण्डिन्, पु, नि० ब० व०), 'सप्तर्षियों' का १ नाम है। (मरीचि १, अङ्गिरा २, अत्रि ३, पुलस्त्य ४, पुलह ५, क्रतु ६ और वसिष्ठ ७, ये सप्तर्षि हैं)।**

सप्तेति ॥ सप्त च ते ऋषयश्च। दिक्संख्ये–' (२।१।५०) इति द्विगु। 'चित्र शिखण्डश्चूडाविशेषोऽस्त्येषाम्' इति व्युत्पत्त्या प्रत्येक सप्तापि चित्रशिखण्डिन। 'मरीचिरङ्गिरा अत्रि पुलस्त्य पुलह क्रतु। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिन' ॥ (१) ॥*॥ एक 'सप्तर्षीणाम्'।

**राशीनामुदयो लग्न**

**लग्नम् (न), 'राशियों' का १ नाम है।**

राशीनामिति ॥ अश्नुवते व्याप्नुवन्ति। 'अशू व्याप्तौ' (स्वा० आ० से०)। 'अशिपणाय्यो रुडायलुकौ च' (उ० ४।१३३) इति रुडागम इण्प्रत्ययश्च ॥ (१) ॥*॥ लगति फले। 'लगे सङ्गे' (भ्वा० प० से०)। 'क्षुब्धस्वान्त–' (७।२।१८) इति क्तस्येडभाव, तस्य नश्च निपात्यते। यत्तु—लगति साध्ये सिजे, इति विग्रह प्रदर्श्य 'ओलजी ओलस्जी व्रीडे' (तु०आ० से०)—इति धातोरुपन्यसन मुकुटेन कृतम्। तन्न। उक्तधातोर्लगतिरूपाभावात्। प्रकृतेऽर्थासंगतेश्च। अत 'श्वीदितो निष्ठायाम्' (७।२।१४) 'ओदितश्च' (८।२।४५) इति सूत्रयोरुपन्यासो व्यर्थ। 'लग्न राश्युदये क्लीब सक्त लज्जितयोस्त्रिषु' [इति मे० ८४।१८]। 'एक राश्युदयस्य'[१]।

**ते तु मेषवृषादयः ॥ २७ ॥**

**वे वृषादि राशियां १२ होती हैं। (यथा—'मेष १, वृष २, मिथुन ३, कर्क ४, सिंह ५, कन्या ६, तुला ७, वृश्चिक ८, धनु ९, मकर १०, कुम्भ ११, और मीन १२)।**

ते त्विति ॥ ते राशय। मेषवृषौ आदी येषा ते। प्रत्येकम् एकम्।

**सूरसूर्यार्यमादित्यद्वादशात्मदिवाकरा। ।**
**भास्कराहस्करब्रध्नप्रभाकरविभाकरा ॥ २८ ॥**
**भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय ।**
**विकर्तनार्कमार्तण्डमिहिरारुणपूषण ॥ २९ ॥**
**द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचन ।**
**विभावसुर्ग्रहपतिस्त्विषापतिरहर्पतिः ॥ ३० ॥**
**भानुर्हंसः सहस्रांशुस्तपन सविता रवि ।**

१ स्वामी तु 'शनिर्मन्दो पङ्गुकालौ छायापुत्रोऽसित्तश्च स' इत्यधिकनामान्याह।

२ इद वर्तमानत्रिकाण्डशेषे नोपलभ्यते।

१ स्वामी राशीना नामान्याह—मेषो वृषोऽथ मिथुन कर्कट सिंहकन्यके। तुलाऽथ वृश्चिको धन्वी मकर कुम्भ मीनकौ ॥' इति।

पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा [ ३८ ]
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः [ ३९ ]
प्रद्योतनो दिनमणिर्खद्योतो लोकबान्धवः [ ४० ]
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः [ ४१ ]

सूरः, सूर्यः, अर्यमा (=अर्यमन्), आदित्यः, द्वादशात्मा (=द्वादशात्मन्), दिवाकरः, भास्करः, अहस्करः, ब्रध्नः, प्रभाकरः, विभाकरः, भास्वान् ( =भास्वत्), विवस्वान् ( =विवस्वत् ), सप्ताश्वः, हरिदश्वः, उष्णरश्मिः, विकर्तनः, अर्कः, मार्तण्डः, मिहिरः, अरुणः, पूषा (=पूषन् ), द्युमणिः, तरणिः, मित्रः, चित्रभानुः, विरोचनः, विभावसुः, ग्रहपतिः, त्विषांपतिः, अहर्पतिः , भानुः, हंसः, सहस्रांशुः, तपनः, सविता ( =सवितृ ), रविः ( ३७ पु ), 'सूर्य' के ३७ नाम हैं।

[ पद्माक्षः, तेजसांराशिः, छायानाथः, तमिस्रहा (=तमिस्रहन् ), कर्मसाक्षी ( =कर्मसाक्षिन् ), जगच्चक्षुः ( =जगच्चक्षुस् ), लोकबन्धुः, त्रयीतनुः, प्रद्योतनः, दिनमणिः, खद्योतः, लोकबान्धवः, इनः, भगः, धामनिधिः, अंशुमाली ( =अंशुमालिन् ), अब्जिनीपतिः ( १७ पु ), 'सूर्य' के १७ नाम हैं ]।

सूरेति ॥ सुवति प्रेरयति कर्मणि लोकम्। 'षू प्रेरणे' ( तु० प० से० )। 'सुसूधागृधिभ्यः क्रन्' (उ० २।२४)। दन्त्यादिः ॥ * ॥ शवति। 'शु गतौ' [ सौत्रो धातुः ]। 'शुसिचिमीनां दीर्घश्च' ( उ० २।२५ ) इति क्रनि शूरश्च। 'शूरश्चारभटे सूर्ये' इति विश्वः। 'सुभटे शूरः सूर्ये च दन्त्योऽपि' इत्यूष्मविवेकः। शूरयते वा। 'शूर विक्रान्तौ' ( चु० आ० से० )। अच् (३।१।१३४)। यत्तु—सूते प्रेरयत्यन्धकारम्, इति विग्रहं प्रदर्श्य 'षू प्रेरणे' (तु० प० से०) इति धातोरप्यन्यमत मुकुटेन कृतम्। तन्न। उक्तधातोस्तादृशरूपाभावात् ॥ ( १ ) ॥ * ॥ सरति। 'सृ गतौ' ( भ्वा० प० अ० )। सुवति प्रेरयति कर्मणि लोकान्, इति वा। 'षू प्रेरणे' (तु० प० से०)। 'राजसूयसूर्य—' (३।१।११४) इति निपातितः। 'सूर्योऽर्कपर्णे तपने स्त्री तद्भार्यौषधीभिदोः'[1] ॥ (२) ॥*॥ इयर्ति। 'श्वन्नुक्षन्पूषन्—' (उ० १५९) इति निपातितः। [ 'अर्यमा पितृदेवते। तरणौ सूर्यभक्तायाम्' इति हैमः ३।३८४ ] ॥ (३) ॥ * ॥ अदितेरपत्यम्। 'दित्यदित्या—' (४।१।८५) इति ण्यः। ['आदित्यस्त्रिदशार्कयोः' इति हैमः ३।५१० ] ॥ ( ४ ) ॥ * ॥ द्वादश आत्मानो मूर्तयो यस्य ॥ (५) ॥ * ॥ दिवा दिनं करोति। 'दिवाविभा—' (३।२।२१) इति टः ॥ (६) ॥*॥ एवं भास्करादिषु। ( [2]कस्कादित्वात् (८।३।४८) भास्कराहस्करौ— इति स्वामी )। [ 'भास्करो वह्निसूर्ययोः' इति हैमः ३।६१९ ] ॥ (७) ॥ * ॥ (८) ॥ * ॥ तिमिरं बध्नाति। 'बन्धेर्ब्रधिबुधी च' (उ० ३।५) इति नक् ॥ (९) ॥*॥ (१०) ॥*॥ (११) ॥*॥ भाम सन्त्यस्य। मतुप् (५।२।९४)। ['भास्वान्दीप्ते रवौ' इति हैमः २।१८६] ॥ (१२) ॥*॥ विविधं वस्ते आच्छादयति। 'वस आच्छादने' ( अ० आ० अ० )। क्विप् ( ३।२।६६ )। विवो रश्मिः। विवोऽस्यास्ति। मतुप् ( ५।२।९४ )। 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वाद्रुत्वाभावः। ['विवस्वान्विबुधे सूर्ये तन्नगर्यां विवस्वति' इति मे० ७०।२२० ] ॥ ( १३ ) ॥*॥ सप्ताश्वा यस्य ॥ (१४) ॥*॥ हरितोऽश्वा यस्य ॥ (१५) ॥*॥ उष्णा रश्मयोऽस्य ॥ (१६) ॥ * ॥ विशेषेण कर्तनं यस्य। विश्वकर्मणा यन्त्रोल्लीढत्वात्। विकर्तयति भक्तरोगान् इति वा। 'कृती छेदने' ( रु० प० से० )। णिजन्ताल्ल्युट् ( ३।३।११३ ) ॥ ( १७ ) ॥ * ॥ अर्च्यते। 'अर्च पूजायाम्' ( भ्वा० प० से० )। कर्मणि घञ् (३।३।१९) 'चजोः—' ( ७।३।५२ ) इति कुत्वम्। यद्वा—'कृदाधाराचिकलिभ्यः कः' ( उ० ३।४० )। 'चोः कुः' ( ८।२।३० )। [ 'झरो झरि सवर्णे' (८।४।६५) इति कलोपः ]। यद्वा—'अर्क स्तवने' ( चु० प० से० ) चुरादिः। अर्क्यते। 'एरच्' (३।३।५६)। 'एरजण्यन्तानाम्' इति [3]मते घञ्। [अर्को द्रुभेदे स्फटिके ताम्रे सूर्ये बिडौजसि' इति हैमः २।१ ] (१८) ॥*॥ मृतेऽण्डे भवः। शकन्ध्वादि (वा० ६।१।९४)। 'परा मार्ताण्डमास्यत्'। 'पुनर्मार्तण्डमाभरत्' इत्यादिमन्त्रात् दीर्घोऽपि। 'अथ मार्तण्डमार्ताण्डौ' इति नामनिधानाच्छब्दार्णवाच्च। 'मार्तण्डः क्रोडसूर्ययोः' [ इति मे० ४३।३५ ] ॥ (१९) ॥*॥ मेहति। 'मिह सेचने' ( भ्वा० प० अ० )। 'इषिमदि—' (उ० १।५१) इति किरच्। 'मिहिरः सूर्यबुद्धयोः'[2] ॥*॥ मिहे किरचि मिहिरोऽपि। 'महिरमिहिरगोपा.'[3] कालकूटपाणि' इति त्रिकाण्डशेषात् [ ३।१८ ] ॥ (२०) ॥*॥ ऋच्छति। 'अर्तेश्च' (उ० ३।६०) इत्युनन्। ['अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ। नि शब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च ॥' इति मे० ४७।३३-३४ ] ॥ (२१) ॥*॥ पुष्णाति। पूषति वा। 'पुष पुष्टौ' ( क्र्या० प० से० )।

1. 'तद्भार्यौषधीभिदोः' इति मेदिनी (११७।६३)।

2. कोष्ठस्थः पाठः निर्णयसागरीयः।

1 'एरच्' इति सूत्रे 'कल्प्यादिभ्यः प्रतिषेधः' इति वार्तिकव्याख्यायां ण्यन्तेभ्योऽचि प्रतिषिद्धे घञेव भवति। 'एरजण्यन्तानाम्' इति तु वचनमनार्षम् इति कैयटसम्मतताऽस्य चिरश्च 'मते' —इत्यनेन सूच्यते।

2. 'सूर्यवृद्धयोः', इति मेदिनी (१३७।२०४), 'मिहिरोऽर्केऽम्बुदे बुद्धे' इति हैमः ( ३।६३० )।

3. '—पीथाः' इति पा०

'पूष वृद्धौ' ( भ्वा० प० से० ) वा 'श्वन्नुक्षन्–' ( उ० १। १५९ ) इति निपातितः ॥ (२२) ॥*॥ दिवो मणिरिव ॥ ( २३ ) ॥*॥ तरन्ति [ 'तॄ प्लवनतरणयोः', भ्वा० प० से० ] अनेन संसारम् । तरणिः । 'अर्तिसृधृ–' ( उ० २। १०२) इत्यादिना तरतेरनिः । 'तरणिर्द्युमणौ पुंसि कुमारी-नौकयोः स्त्रियाम्' [इति मे० ४८।५०] ॥ ( २४ ) ॥*॥ मेद्यति । 'ञिमिदा स्नेहने' ( दि० प० से० ) । 'अमिचिमि दिशसिभ्यः क्त्रः' ( उ० ४।१६४ ) इति क्त्रः । [ 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी १२८।७७ ] ॥ ( २५ ) ॥*॥ चित्रा भानवोऽस्य । 'चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च' [ इति मेदिनी ९६। ८१ ] ॥ ( २६ ) ॥ * ॥ विरोचते । 'रुच दीप्तौ' ( भ्वा० आ० से० ) । 'अनुदात्तेतश्च–' ( ३।२।१४९ ) इति युच् । 'विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः' [इति मे०९८। १०७ ] ॥ (२७) ॥ * ॥ विभैव वसु यस्य । 'विभावसुः पुमान् सूर्ये हारभेदे च पावके'[इति मे० १७४।६४]॥(२८) ॥ * ॥ ग्रहाणां पतिः ॥ ( २९ ) ॥ * ॥ त्विषां पतिः । अलुक् ॥ (३०) ॥ * ॥ अह्नः पतिः । अहर्पतिः ['अहरादीनां–' ( वा० ८।२।७० ) इति वा रेफः ] ॥ ( ३१ ) ॥ * ॥ भाति । 'दाभाभ्यां नुः' (उ० ३।३२) । ['भानुः रश्मौ रवौ दिने' इति हैम २।२८० ] ॥ ( ३२ ) ॥ * ॥ हन्ति [ 'हन हिंसागत्योः', अ० प० अ० ] । 'वृतॄवदिहनि–' (उ० ३।६२) इति सः । 'हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मनि मत्सरे ॥ योगिभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरगमप्रभेदे च' [ इति मे० १७०।१२-१४ ] ॥ (३३) ॥ * ॥ सहस्रमंशवो यस्य ॥ ( ३४ ) ॥ * ॥ तपति [ 'तप सन्तापे', भ्वा० प० अ० ] । ल्युः ( ३।१। १३४)। 'तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे [इति मे० ८७।६९] । प्रज्ञाद्यणि (५।४।३८) तापनोऽपि । तापयति वा । ल्युः (३।१।१३४) । 'तपनस्तापनो रविः इति संसारावर्तात् ॥ (३५) ॥ * ॥ सुवति । 'पू प्रेरणे' ( तु० प० से० ) । तृच् (३।१।१३३) । यत्तु—सूयते, सूते—इति स्वामि-मुकुटाभ्यामुक्तम् । तन्न । 'स्वरतिसूतिसूयति–' ( ७। २।४४ ) इतीड्विकल्पात् पक्षे 'सोता' इति रूपप्रसङ्गात् । उक्तधात्वोरर्थासंगतेश्च ॥ (३६) ॥*॥ रूयते, स्तूयते, रवते वा । रविः । 'रु शब्दे (अ० प० से०) । 'रुङ् गतौ' (भ्वा० आ० अ०) वा । 'अच इः' ( उ० ४।१३९ ) ॥ (३७) ॥*॥ चण्डांशुः अपि । 'चण्डांशोः पारिपार्श्विकाः' [ अ० १।३।३१] इति वक्ष्यमाणत्वात् ॥ * ॥ सप्तत्रिंशत् 'सूर्यस्य' ।

**माठरः पिंगलो दण्डश्चण्डांशोः पारिपार्श्विकाः ॥ ३१ ॥**

माठर, पिङ्गल, दण्ड ( ३ पु ), 'सूर्य के पार्श्ववर्तियों' अर्थात् 'सूर्य के पास में रहनेवालों' के ३ नाम हैं।

माठर इति ॥ मनुते ['मनु अवबोधने', त० आ० से०] मठरः । स एव माठरः । 'जनेररष्ठ च' (उ० ५।३८) इत्यनुवर्तमाने 'वचिमनिभ्यां चिच्च'(उ० ५।३९) इत्यरप्रत्ययः, ठश्चान्तादेशः । ततः प्रज्ञाद्यण् (५।४।३८) । मठति । 'मठ मदनिवासयोः' (भ्वा० प० से०) । बाहुलकादरच् । मठरस्यापत्यमिति वा । ऋष्यण् ( ४।१।११४ ) । मठन्त्यनेन मठः । 'पुंसि–' (३।३।११८) इति घः । मठं राति । 'रा दाने' (अ० प० से०) । कः (३।२।३) [ 'माठरो व्यासविप्रयोः । सूर्यानुगे' इति हैम ३।६२९ ] ॥ ( १ ) ॥*॥ पिङ्गलो वर्णोऽस्यास्ति । अर्शआद्यच् (५।२।१२७) । पिङ्गं वर्णं लातीति वा । कः (३।२।३) ॥ (२) ॥*॥ दण्डोऽस्यास्ति । अच् (५।२।१२७) । दण्डयतीति वा । ['दण्डः सैन्ये दमे यमे । मानव्यूहप्रभेदेष्वश्वेऽर्कानुचरे मथि ॥ प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः' इति हैम २।१२१–२२] ॥ ( ३ ) ॥*॥ पार्श्वे इति परिपार्श्वम् । विभक्त्यर्थेऽव्ययीभावः (२।१।६) । परिपार्श्वं वर्तते, इत्यर्थे 'परिमुखं च' ( ४।४।२९ ) इति चकाराट्ठक् । एकैकं[1] सूर्यपार्श्वस्थानां 'माठरादित्रयाणाम्' ।

**सूर्यसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।**

सूर्यसूत, अरुण, अनूरु, काश्यपि, गरुडाग्रज (५ पु), 'सूर्य के सारथि' के ५ नाम हैं।

सूर्येति ॥ सूर्यस्य सूतः ॥ ( १ ) ॥*॥ अरुणो वर्णोऽस्यास्ति । अच् ( ५।२।१२७ ) । 'गुण–' ( वा० ५।२। ९४ ) इति मतुपो लुग्वा ॥ ( २ ) ॥*॥ अविद्यमानावूरू यस्य ॥ ( ३ ) ॥ * ॥ कश्यपस्यापत्यम् । बाह्वादित्वात्

[1] सूर्यस्य पारिपार्श्विका अष्टादश सन्ति । तदुक्तं हेमचन्द्राचार्येणाभिधानचिन्तामणौ—"अष्टादश माठराद्याः सवितुः पारिपार्श्विकाः ।" इति (२।१७) । तेषां नामानि च तेन तत्रैव स्वोपज्ञवृत्तावुक्तानि, यथा—"माठरः पिङ्गलो दण्डो राजश्रोथौ खरद्वारिकौ कल्माषपक्षिणौ जातृकारकुतापकौ पिङ्गजौ दण्डिपुरपौ किशोरकौ" इति । यद्व्याडिः "सुरावृतस्त्वसावष्टादशभिः पारिपार्श्विकैः।इन्द्रादयश्च ते देवाः सर्वे नामान्तरैः स्थिताः । तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः । वह्निश्च दक्षिणे पार्श्वे पिङ्गलो वामनश्च सः । पूर्वद्वारे गुहहरौ राजश्रोथौ क्रमेण तौ । द्वितीये तु धर्माधर्मौ तौ खरद्वारिकौ क्रमात् । तृतीये तु यमताक्ष्यौ क्रमात् कल्माषपक्षिणौ । चित्रगुप्तश्च कालश्च रवेर्दक्षिणपार्श्वगौ । प्रथमो जातृकाराख्यो माठराख्यो द्वितीयकः । पश्चिमेनाब्धिवरुणौ तौ प्राप्नुयात् कुतापकौ । उदीच्यां यक्षहेरम्बौ तौ च पिङ्गजौ क्रमात् । आश्विनौ तु पार्श्वद्वये तौ द्वावेव किशोरकौ इत्यष्टादशको वर्गश्चण्डांशोः पारिपार्श्विकः ॥" इति ।

( ४।१।६६ ) दन् ॥ (४) ॥*॥ गरुडस्याग्रज ॥ (५) ॥*॥ पञ्च 'सूर्यसारथे.'।

**परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥**

परिवेषः, परिधिः ( २ पु ), उपसूर्यकम्, मण्डलम् (२ न), 'मण्डल' के ४ नाम हैं। ( सूर्य और चन्द्रमा के चारों तरफ दिखलायी पड़नेवाले तेजोविशेष को 'मण्डल' कहते हैं )।

परिवेष इति ॥ परितो विष्यतेऽनेन। 'विष्लृ व्याप्तौ' ( जु० उ० अ० )। घञ् (३।३।१८)। 'परिवेषः स्यात् परिधौ परिवेषणे' इति मूर्धन्यान्ते रुद्र ॥*॥ 'विश प्रवेशने' (तु० प० अ०)। अस्माद्घञि तु तालव्यान्त [परिवेशः]। 'वेष्टने परिवेशः स्याद्भानो सविधमण्डले' इति तालव्यान्ते रभस.॥(१)॥*॥ परितो धीयतेऽनेन। 'उप-' ( ३।३।९२ ) इति किः। [ 'परिधिर्यज्ञियतरोः शाखाया-मुपसूर्यके' इति हैम ३।३७५] ॥ (२) ॥*॥ उपगत सूर्य-मुपसूर्यम्। प्रादिसमास ( २।२।१८ )। तत स्वार्थे कन् ( ५।३।९७ ) ॥ ( ३ ) ॥*॥ 'मडि भूषायाम्' ( भ्वा० प० से०)। मन्दति। वृषादित्वात् (उ० १।१०६) कलच् ॥ ( ४ ) ॥*॥ 'मण्डल परिवेशश्च परिधिश्चोपसूर्यकम्' इति भागुरि.। चत्वारि 'चन्द्रसूर्ययोरुत्पातादिजातमण्डलस्य'।

**किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः।**
**भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥३३॥**

किरणः, उस्रः, मयूखः, अंशुः, गभस्तिः, घृणिः, धृष्णिः, भानुः, करः ( ९ पु ), मरीचिः ( पु स्त्री ), दीधितिः ( स्त्री ), 'किरण' के ११ नाम हैं।

किरण इति ॥ कीर्यते। 'कॄ विक्षेपे' (तु० प० से०)। 'कॄपॄवृजि-' (उ० २।८१) इति क्यु ॥ (१) ॥*॥ वसन्ति रसा अस्मिन्। 'वस निवासे' (भ्वा० प० अ०)। 'स्फायि-तञ्चि-' (उ० २।१३) इति रक्। यजादित्वात्। ( ६।१।१५ ) संप्रसारणम्। 'न रपर-' ( ८।३।११० ) इति न षत्वम्। ['उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयो' इति मे० १२३।१० ] ॥ ( २ ) ॥ * ॥ मिमीते ['माङ् माने शब्दे च', जु० आ० अ०] : 'माङ ऊखो मय च' (उ० ५। २५ ) इत्यूखप्रत्ययो मयादेशश्च। एतेन मापयन् प्रमापयश्च गगनमोखति गच्छति। 'मा माने' (अ० प० अ०)। 'उख-उखि-' (भ्वा० प० से० ) इति दण्डकोक्तो गत्यर्थ। अच् ( ३।१।१३४ )। पृषोदरादि. (६।३।१०९) इति मुकुटः परास्तः। धातुसमुदायात्प्रत्ययानामविधानात्। पृषोदरादि-त्वाश्रयणस्य निर्मूलत्वाच्च। [ 'मयूखः किरणेऽपि च। ज्वालायामपि शोभायाम्' इति मे० २०।१०-११] ॥ (३) ॥*॥ अंशयति। 'अंश विभाजने' चुरादि.। मृगय्वादित्वात् ( उ० १।३७ ) कु। 'अंशुर्लेशे रवौ रश्मौ' इति विश्व. [१६८।१२]। 'अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ' [ इति हैम २।५५५ ] ॥ ( ४ ) ॥*॥ गम्यते। 'अन्य-त्रापि' (वा० ३।२।४८) इति ड। गो शेयवर्ग। तं बभस्ति दीपयति। गभस्ति। 'भस भर्त्सनदीप्त्यो' ( जु० प० से० )। जुहोत्यादि। 'क्तिच्क्तौ च-' (३।३।१७४) इति क्तिच्। एव च-गगने भसति दीप्यते। 'भस भर्त्सनदीप्त्यो' [ जु० प० से० ]। 'वसेस्तिः' ( उ० ४।१८० ) इति बाहुलकात्तिप्रत्यय। पृषोदरादित्वात् (६।३।१०९) गन-भावश्चेत्-इति मुकुटकृत क्लिष्टकल्पनमशुद्धादेयम्। भस-तीति विगृह्योक्तधातोर्म्यप्यसन प्रामादिकम्। [ 'गभस्तिः किरणे सूर्ये ना स्वाहाया तु योषिति' इति मे० ६२।१६०] ॥ ( ५ ) ॥*॥ जिघर्ति। 'घृ क्षरणदीप्त्यो' ( जु० प० अ० ) जुहोत्यादि। छान्दसस्यापि भाषाया प्रयोग-इति प्राञ्च। वस्तुतस्तु-घरति। 'घृ सेचने' (भ्वा० प० अ०) भ्वादि। 'घृणिपृश्नि-' ( उ० ४।५२ ) इति निप्रत्ययो गुणाभावश्च निपात्यते. ['घृणिः पुन। अशुज्वालातरङ्गेषु इति हैम २।१४२] ॥ ( ६ ) ॥*॥ धृष्णोति। 'ञिधृषा प्रागल्भ्ये' ( स्वा० प० से० )। 'सृवृधृषिभ्या कित्' इति नि किच्च-इति मुकुट। तन्न। तादृशसूत्राभावात्। अतो बाहुलकान्नि, गुणाभावश्च ॥*॥ 'घृष्णिः' इति पाठान्त-रम्। 'घृषु सेचने' ( भ्वा० प० से० )। 'सृवृषिभ्या कित्' ( उ० ४।४९ ) इति नि पिच्च ॥*॥ 'पृश्निः' इत्येके पेठु। 'स्पृश संस्पर्शने' ( तु० प० अ० )। अस्य सलोपो गुणाभावश्च 'घृणिपृश्नि-' (उ० ४।५२) इति निपातित। पर्शति। 'पृषु सेचने' ( भ्वा० प० से० ) वा ॥ ( ७ ) ॥*॥ भाति। ['भा दीप्तौ', अ० प० अ०] भानु ॥ (८) ॥*॥ कीर्यते। 'कॄ विक्षेपे' ( तु० प० से० )। 'ऋदोरप्' ( ३।३।५७ )। [ 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयो' इति मे० १२३।१२ ] ॥ ( ९ ) ॥ * ॥ म्रियते तमोऽस्मिन्। 'मृकणिभ्यामीचि.' (उ० ४।७०) स्त्रीपुंसा-धिकारे-'त्रुटिमसिमरीचय' इति लिङ्गानुशासनम्। 'द्यु-योर्मरीचि. किरणो भानुरुस्र कर. पदम्' इति शब्दार्णव.। 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' [ इति मे० २८। १६] ॥ ( १० ) ॥*॥ दीधीते दीप्यते। 'दीधीङ् दीप्ति-देवनयो' ( अ० आ० से० )। क्तिच् ( ३।३।१७४ )। 'तितुत्र-' ( ७।२।९ ) इतीण्निषेधस्तु न। 'अग्रहादीनाम्' इति वार्तिकात्। 'यीवर्णयो -' ( ७।४।५३ ) इतीकार-लोप.। अयं स्त्रियामेव। 'दीधिति स्त्रियाम्' इति लिंगानु-शासनात्। काकाक्षिगोलकन्यायेन 'दीधिति' इत्यत्र स्त्रिया-मिति संबध्यते। उत्तरत्रापि ॥ ( ११ ) ॥ * ॥ एकादश 'किरणानाम्'।

स्यु' प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तय. ।
रोचिः शोचिरुभे क्लीबे

प्रभा, रुक् ( =रुच् ), रुचि, त्विट् ( =त्विष् ), भा, भा ( =भास् ), छवि, द्युति, दीप्ति ( ९ स्त्री ), रोचि. (=रोचिस्), शोचि ( =शोचिस्। २ न ), 'प्रभा' के ११ नाम हैं।

स्युरिति ॥ प्रभाति [ 'भा दीप्तौ , अ० प० अ० ] । 'आतश्चोपसर्गे ( ३।१।१३६ ) इति क ॥ ( १ ) ॥*॥ रोचते । रुच दीप्तौ ( भ्वा० आ० से० ) । क्विप् (३।२। १७८ ) [ 'रुक् शाभाकिरणेच्छासु' इति हैम १।७ ] ॥ ( २ ) ॥*॥ इगुपधात्कित् ( उ० ४।१२० ) इतीन् । 'रुचिर्दीप्तौ च' शोभायामभिष्वङ्गाभिलाषयो ' ॥ ( ३ ) ॥*॥ त्वेषति । 'त्विष दीप्तौ ( भ्वा० उ० से०) ॥ क्विप् ( ३।२।१७८ ) । ['त्विट् शोभाया जिगीषाया व्यवसाये रुचौ गिरि इति हैम १।१७ ]॥ (४) ॥*॥ भा दीप्तौ' ( अ० प० अ० ) । दृशिग्रहणात् (वा० ३।२।१०१) ड । टाप् ( ४।१।४ ) । 'भा कुम्यलकृतौ दीप्तौ स्त्रिया भा किरणे द्युतौ । [ क्लीब तु गगने राशौ ताराया पुण्ड्रचक्रयो ॥' ] इति नानार्थरत्नमाला [ १२३-२४ ] । यद्वा— क्विप् ( ३।२।१७८ ) । आवन्तत्वाभावान्न सुलोपादि भा । विश्वपावत् ॥ ( ५ ) ॥*॥ 'भास दीप्तौ' ( भ्वा० आ० से० ) । क्विप (३।२।१७७) । भा, भासौ । ['भा' प्रभावे मयूखे च' इति हैम १।१७] ॥ (६) ॥*॥ छ्यति ['छो छेदन दि० प० अ०] छिनत्ति ['छिदिर् द्वैधीकरणे', रु० उ० अ०]वा तम । कृविघृष्विच्छवि-' (उ० ४।५६) इति क्विन्नन्तो निपातित ॥(७)॥*॥ द्युत दीप्तौ' (भ्वा० आ० से०)। द्योततेऽनया । इगुपधात्कित् (उ० ४।१२०) इतीन् ॥ (८) ॥*॥ दीप्यतेऽनया । दीपी दीप्तौ' (दि० आ० से० ) । 'क्तिन्नावादिभ्य ' ( वा० ३।३।९४ ) ॥ (९) ॥ ॥ रुच दीप्तौ (भ्वा० आ० से०)। रोचतेऽनेन । 'अर्चिशुचि- ( उ० २।१०८) इति इसि ॥ (१०)॥*॥ ईशुचिर् पूतीभावे ( दि० उ० से० ) । शुच्यति पूती भवत्यनेन । इसि [२] ॥ ( ११ ) ॥*॥ एकादश 'प्रभायाः' ।

प्रकाशो द्योत आतपः ॥ ३४ ॥

प्रकाश, द्योत, आतप ( ३ पु ), 'धूप' अर्थात् 'घाम' के ३ नाम हैं।

प्रकाश इति ॥ प्रकाशयोतावित्ति भावे ( ३।३।१८ ) करणे ( ३।३।१९ ) वा घञन्तौ । [ 'प्रकाश स्फुटहासयो । उद्द्योतेऽतिप्रसिद्धे च' इति हैम ३।७६१ ] ॥ (१) ॥*॥ (२) ॥*॥ आतपस्तु पचाद्यजन्त । ( 'खनो घ च' [ ३।३।१२५ ] इति घो वा[१] ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'आतपस्य' ।

कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।

कोष्णम्, कवोष्णम्, मन्दोष्णम्, कदुष्णम् ( ४ न ), 'थोड़ा गरम' के ४ नाम हैं।

कोष्णमिति ॥ ईषदुष्ण कोष्णम् । 'ईषदर्थे' ( ६।३। १०५ ) इति कादेश ॥ ( १ ) ॥*॥ 'कव चोष्णे' (६। ३।१०७ ) इति को कवादेश ॥ ( २ ) ॥*॥ कदादेशश्च ॥ ( ४ ) ॥ * ॥ मन्द च तदुष्ण च ॥ (३) ॥*॥ एते गुणे क्लीबा । गुणिनि विशेष्यनिघ्ना ॥ चत्वारि 'ईषदुष्णस्य' ।

तिग्म तीक्ष्ण खर तद्वत्

तिग्मम्, तीक्ष्णम्, खरम् ( ३ न ), 'अधिक गरम' के ३ नाम हैं।

तिग्ममिति ॥ तेजयति । 'तिज निशाने' ( चु० प० से० ) । 'युजिरुचितिजा कुश्च' (उ० १।१४६) इति मक्, कवर्गश्चान्तादेश ॥ ( १ ) ॥*॥ 'तिजेर्दीर्घश्च' (उ० ३। १८ ) इति स्नक्प्रत्यय तीक्ष्णम् । 'तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीब यवाग्रके[२] पुसि तिग्मार्थत्यागिनोस्त्रिषु ॥' [इति मे० ४६।१५] ॥ (२) ॥*॥ खमिन्द्रिय रात्यभिभवति । रा दाने' ( अ० प० अ० ) । क ( ३। २।३ ) 'खर स्यात्तीक्ष्णघमयो । गर्दभेऽस्त्री देवताडे' [इति मे० १२४।२१] ॥ (३) ॥*॥ तद्वत्–गुणे क्लीबम्, तद्वति त्रिषु, इत्यथ । त्रीणि 'अत्युष्णस्य' । तीक्ष्णोऽसि इत्यादावुपचारात्प्रयोग ।

इति दिग्वर्ग ॥ ३ ॥

मृगतृष्णा मरीचिका ॥ ३५ ॥

मृगतृष्णा, मरीचिका (२ स्त्री), 'मृगतृष्णा' के २ नाम हैं।

मृगेति ॥ मृगाणा तृष्णास्त्यस्याम् । अर्शआद्यच् ( ५। २।१२७) ॥ ( १ ) ॥ * ॥ मरीचिरिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (२) ॥*॥ द्वे 'मृगतृष्णायाः' ।

इति दिग्वर्गविवरणम् ॥३॥

## अथ कालवर्गः

कालो दिष्टोऽप्यनेहापि समयोऽपि

काल, दिष्ट, अनेहा ( =अनेहस् ), समय ( ४ पु ), 'समय' के ४ नाम हैं।

---

१ मेदिन्या ( २८।८) 'रुचि स्त्री दीप्तौ—' इति । विश्व (३०।७) तु 'रुचिर्योपिति शोभाया—' इति पाठ ।
२ 'अर्चिशुचि—' इत्युणादिसूत्रेणेति भाव ।

१ कोष्ठान्तर्गत पाठ क्वचिन्नोपलभ्यते ।
२ 'यवाग्रजे' इति पा० ।

काल इति ॥ कल्यते । 'कल संख्याने शब्दे च' (भ्वा० आ० से०) । कर्मणि घञ् (३।३।१९) । कालयति सर्वम्, इति वा । ण्यन्तात्पचाद्यच् (३।१।१३४) । 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' [इति मे० १४५।७] ॥ (१) ॥ * ॥ दिशति । 'दिश अतिसर्जने' ( तु० उ० अ० ) । 'क्तिच्क्तौ च संज्ञायाम्' (३।३।१७४) इति क्त । 'दिष्टं दैवे पुमान्काले' [इति मे० ३४।१७] ॥ (२) ॥*॥ नाहन्ति नागच्छति, नाहन्यते, इति वा । 'नञ्याहन एह च' ( उ० ४।२२४ ) इत्यसुन्, एहादेशश्च । सौ 'ऋदुशनस्–' ( ७।१।९४) इत्यनङ् । 'तस्मान्नुडचि' (६।३।७४) इति नुट् । सान्त ॥ (३) ॥*॥ सम्यग् एति । 'इण् गतौ' (अ० प० अ०) । पचाद्यच् (३।१।१३४) । ['समयः शपथे भाषा-संपदोः कालसंविदोः । सिद्धान्ताचारसंकेतनियमावसरेषु च ॥ क्रियाकारे च निर्देशे–' इति हैम ३।५४१–४२ ] ॥ (४) ॥*॥ चत्वारि 'सामान्यकालस्य' ।

अथ पक्षतिः ।

**प्रतिपद् द्वे इमे स्त्रीत्वे**

पक्षतिः, प्रतिपत् ( =प्रतिपद् । २ स्त्री ), 'परिवा तिथि' के २ नाम हैं ।

अथेति ॥ पक्षस्य मूलम् । 'पक्षात्तिः' ( ५।२।२५ ) । 'सर्वतोऽक्तिन्नर्थात्–' ( वा० ४।१।४५ ) इति ङीपि तु पक्षती । 'पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्तिथौ' [ इति मे० ६३।१२९ ] ॥ (१) ॥*॥ प्रतिपद्यते उपक्रम्यतेऽनया मासादि । संपदादित्वात् ( वा० ३।३।१०८ ) क्विप् । दान्ता । 'प्रतिपत्स्त्री तिथौ मतौ' [ इति मे० ७८।४९ ] ॥ (२) ॥*॥ द्वे 'प्रतिपत्तिथेः' ।

**तदाद्यास्तिथयो द्वयोः ॥१॥**

तिथिः ( पु स्त्री ), 'प्रतिपत् द्वितीया आदि तिथियों' का १ नाम है ।

तदाद्या इति ॥ सा प्रतिपद् आद्या यासां ताः । 'अत सातत्यगमने' ( भ्वा० प० से० ) 'ऋतन्यञ्जि–' ( उ० ४।२ ) इत्यतेरिथिन् । पृषोदरादित्वात् ( ६।३।१०९ ) अल्लोपः ॥ (१) ॥*॥ द्वयोरित्यत्र पुनस्त्वातिथिनक्षत्र एव संबध्यते ॥ एकं 'सामान्यतिथेः' ।

**घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।**

घस्रः (पु), दिनम्, अहः ( =अहन् । २ न ), दिवसः, वासरः ( २ पु न ), 'दिन' के ५ नाम हैं ।

घस्र इति ॥ घसत्यन्धकारम् । 'घस्लृ अदने' ( भ्वा० प० अ० ) 'स्फायितञ्चि–' ( उ० २।१३ ) इति रक् । 'घस्रस्तु दिवसे हिंस्रे' [ इति मे० १२५।३० ] ॥ (१) ॥*॥ दीयते क्षीणं भवति । 'दीङ् क्षये' (दि० आ० अ०) दिवादि । 'इण्सिञ्जिदीङ्–' ( उ० ३।२ ) इति नक् । बाहुलकाद्ध्रस्व । द्यति तमो, निर्व्यापारस्थितिं चेति वा । द्यते [ 'दो अवखण्डने', दि० प० अ० ] किनन् (उ० २।४९ ) ॥ (२) ॥*॥ न जहाति । 'नञि जहातेः' ( उ० १।१५८ ) इति कनिन् । 'रोऽसुपि' ( ८।२।६९ ) इति र । यत्तु—'अहन्' ( ८।२।६८ ) इति रुत्वम्—इति मुकुटेनोक्तम् । तन्न । रत्वस्य रुत्वापवादत्वात् ॥ (३) ॥*॥ दीव्यन्त्यत्र । 'दिवादिभ्य कित्' ( उ० ३।१२१ ) इत्यसच् ॥ (४) ॥ * ॥ वासयति वसतेर्ण्यन्तात् 'अतिकमि-भ्रमि–' (उ० ३।१३२) इत्यरप्रत्ययः । 'वासरस्तु पुमान्नागप्रभेददिनयोरपि'[1] ॥ (५) ॥*॥ पञ्च 'दिनस्य' ।

**प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥**
**प्रभातं च**

प्रत्यूषः ( =प्रत्यूषस्, पु न ), अहर्मुखम्, कल्यम्, उषः ( =उषस् ), प्रत्युषः ( =प्रत्युषस् ), प्रभातम् (५ न ), 'प्रातः काल' के ६ नाम हैं ।

प्रत्यूष इति ॥ प्रत्यूषति रुजति कामुकान् । 'ऊष रुजायाम्' ( भ्वा० प० से० ) । 'इगुपध–' (३।१।१३५) इति क । 'प्रत्यूषोऽहर्मुखे वसौ' [ इति विश्वः १७२।२१ ] ॥ (१) ॥*॥ अह्नो मुखम् ॥ (२) ॥*॥ कलयति [ 'कल गतौ संख्याने च', चु० प० से० ] चेष्टाम् । 'अघ्न्यादयश्च' (उ० ४।११२ ) इति कलेर्यक् । तत प्रज्ञादिणि ( ५।४।३८ ) काल्यम् अपि । 'कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवर्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ॥ उपायवचनेऽपि स्यात्त्रिषु मद्ये तु योषिति' [इति मे० ११३।८-९] ॥(३)॥*॥ ओषत्यन्धकारम् । 'उष दाहे' (भ्वा० प० से०) । 'उषः कित्' (उ० ४।२३४) इत्यसि. । अस्योपसर्गनिवृत्तये प्रति । 'उषः प्रत्युषसि क्लीबं पितृप्रस्वां च योषिति' ॥ (४) ॥*॥ (५) ॥*॥ भाति प्रवृत्तम् । प्रभातम् । आदिकर्मणि ( ३।४।७१ ) क्त ॥ (६) ॥*॥ षट् 'प्रभातस्य' ।

**दिनान्ते तु सायः**

दिनान्तः, सायः ( २ पु ), 'दिनान्त' के २ नाम हैं ।

दिनेति ॥ दिनस्यान्तः । स्यति समापयति दिनम् । 'षोऽन्तकर्मणि' (दि० प० अ०) । 'श्याद्व्यधा–' (३।१।१४१) इति णः । 'सायः शराहे दिनान्ते च' [इति मे० ११७।६४] ॥ * ॥ मान्तमव्ययं [ 'सायम्' ] स्वरादिषु पठ्यते ॥ (१) ॥ * ॥ एकं 'दिनान्तस्य' ।

1. 'पक्षतिश्च' इति पा० ।

1. 'वासरस्तु पुमान्नागविशेषे दिवसेऽपि च' इति मेदिनी (१३८।१५३) ।

संध्या पितृप्रसूः ।

**सन्ध्या, पितृप्रसू ( २ स्त्री ), 'सायंकाल' के २ नाम हैं।**

सध्येति ॥ सम्यग् ध्यायन्त्यस्याम् । 'ध्यै चिन्तायाम्' (भ्वा० प० अ०) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । 'संध्या पितृप्रसूनवन्तरयोर्युगसन्धिषु' [इति मे० ११७।६०] ॥ * ॥ निर्यवार [ 'सन्धा' ] अपि । सधीयतेऽनुसधीयतेऽस्याम् । डुधाञ् ( जु० उ० अ० ) अङ् (३।३।१०६)। 'सध्या पितृप्रसू सधा' इति शब्दार्णव ॥ ( १ ) ॥ * ॥ पितॄन् प्रसूते । क्विप् ( ३।२।७६ ) ॥ ( २ ) ॥ * ॥ द्वे 'सध्यायाः' ।

प्राह्णापराह्णमध्याह्नास्त्रिसंध्यम्

**त्रिसन्ध्यम् ( न ) । 'प्रातःकाल, मध्याह्नकाल और सायकाल, इन तीनों के समूह' का १ नाम है।**

प्राह्णेति ॥ अह शब्दस्तदवयवे । प्रथम च तदहश्च प्राह्ण । 'राजाह–' ( ५।४।९१ ) इति टच् । 'अह्नोऽह्न–' ( ५।४।८८ ) इत्यह्नादेश । 'अह्नोऽदन्तात्' ( ८।४।७ ) इति णत्वम् ॥ (१) ॥*॥ अह्नोऽपरम्–अपराह्ण । 'पूर्वापर–' (२।२।१) इत्येकदेशिसमास ॥ (१) ॥*॥ अह्नो मध्यम् 'सख्याविसाय–' (६।३।११०) इति ज्ञापकात्समास । 'रात्राह्नाहा पुंसि' ( २।४।२९ ) । मध्य च तदहश्चेति वा ॥ * ॥ तिसृणा सध्याना समाहार । 'आवन्तो वा' (वा० २।४।३०) इति पाक्षिकी क्लीबता, पक्षे त्रिसध्यी ॥ (१) ॥ * ॥ एक दिनाद्यन्तमध्यानाम् ।

अथ शर्वरी ॥ ३ ॥

निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥

**शर्वरी, निशा, निशीथिनी, रात्रि, त्रियामा, क्षणदा, क्षपा, विभावरी, तमस्विनी, रजनी, यामिनी, तमी ( १२ स्त्री ), 'रात' के १२ नाम हैं।**

अथेति ॥ शृणाति चेष्टा । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'कृगॄशॄवृञ्चतिभ्य ष्वरच्' (उ० २।१२१) । 'षिद्गौरा—' ( ४।१।४१ ) इति ङीष् । 'शर्वरी यामिनीस्त्रियो' [इति मे० १३८।२२०] ॥ * ॥ प्रज्ञाद्यणि शार्वर्यपि । 'शर्वरी शार्वरी शर्या' इति शब्दार्णव ॥ ( १ ) ॥ * ॥ नितरा श्यति तनूकरोति व्यापारान् । 'शो तनूकरणे' (दि० प० से०) । 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति क ।'निशा दारुहरिद्राया स्यात्त्रियामाहरिद्रयो' इति विश्व [ १६८।१४ ] ॥ * ॥ 'निशीथिनी निशा निट् च श्यामा तुङ्गी तमा तमी' इति नामनिधानात् 'निट्' । पृषोदरादित्वात् ( ६।३।१०९ ) शान्तापि [ 'निशा' इति] ॥ (२) ॥ * ॥ निशीथोऽस्त्यस्याम् । इनि (५।२।११५) ॥ (३)॥*॥ राति सुखम् । 'रा दाने'(अ० प० से०)।'राशदिभ्या त्रिप्'(उ० ४।६७)॥*॥ 'कृदिकारात्–'(ग० ४।१।४५ ) इति ङीषि रात्रीत्यपि । 'रात्री रात्रिस्तमस्विनी' इति शब्दार्णव ॥ (४) ॥*॥ त्रयो यामा यस्या । आद्यन्तयोरर्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात् । यद्वा—त्रीन्धर्मादीन् यापयति निरवकाशीकरोति कामप्रधानत्वात्। अन्तर्भावितण्यर्थायाते 'अर्तिस्तुसु–' (उ० १।१४० ) इति मन् ॥ ( ५ ) ॥ * ॥ क्षणम् उत्सव निर्व्यापारस्थितिं वा ददाति [ 'डुदाञ् दाने', जु० प० अ० ] । क ( ३।२।३) । 'क्षणदो गणके, रात्रौ क्षणदा क्षणद, जले' [ इति मे० ७६।२२ ] ॥ (६) ॥*॥ क्षपयति चेष्टाम् । 'क्षै क्षये' (भ्वा० प० से०) । अस्माण्ण्यन्तान्मित पचाद्यच् ॥ (७) ॥ * ॥ विभाति नक्षत्रादिभि । क्वनिप् ( ३।२।७४ ) । 'वनो र च' ( ४।१।७ ) इति ङीप्रौ । 'विभावरी निशाराम्यो 'कुट्टन्या चक्रयोपिति । विवादे वस्त्रकुट्या च'[2] ॥(८) ॥*॥ तमोऽस्त्यस्याम् । 'अस्मायः–' ( ५।२।१२१ ) इति विनि ॥ ( ९ ) ॥*॥ रजन्त्यनुरक्ता भवन्ति रागिणोऽस्याम् । 'क्षिपे किच्च' (उ० २।१०७) इति चकारादनि । कित्त्वान्नलोप ( ६।२।२४ ) । ङीप् ( ग० ४।१।४५ ) । 'रजनी नीलिनीरात्रिहरिद्राजतुकासु च' [ इति मे० ९१।१४ ] । ङीपभावे रजनिरपि ॥ ( १० ) ॥ * ॥ भीतिहेतुत्वान्निन्दिता यामा यस्या । निन्दायामिनि (५।२।११५) ॥ ( ११ ) ॥*॥ ताम्यन्त्यस्याम् । 'तमु ग्लानौ' ( दि० प० से०) । इन् ( उ० ४।११८ ) । 'कृदिकाराद्–' (ग० ४।१।४५) इति ङीप् ॥*॥ पक्षे तमि ॥ * ॥ पचाद्यचि 'तमा' अपि[3] [४।१।४] ॥ (१२) ॥*॥ द्वादश 'रात्रेः' ।

तमिस्रा तामसी रात्रिर्

**तमिस्रा ( स्त्री ), 'अँधेरी रात' का नाम तमिस्रा है।**

तमिस्रेति ॥ तमो बहुलमस्त्यस्याम् । 'ज्योत्स्नातमि-

---

१ 'निशा' शब्दस्यात्र हरिद्रार्थकतया 'विभवारी'त्यनेन पुनरुक्तिर्निरासया ।

२ 'विभावरी तमस्विन्या हरिद्राया विभावरी । विवाहवस्त्रगुण्ठ्या च कुट्टन्या चक्रयोपिति ॥" इति विं० लो० ( ३२६।२९९ ) पाठ । मेदिन्या[redacted] । '—कुट्टन्या वक्रयोपिति । विवादवस्त्रगुण्ठ्या च" इति पाठ ( १४४। २९६–९७ ) ।

३ दीर्घेकारान्ते माघप्रयोगो यथा—'स तमी तमोभिरभिगम्य ताम्' इति ।

आबन्तप्रयोगो यथा—'के भूपयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमस कुत श्री । किमाह सीता दशवक्त्रनीता हारा महादेवरता तमात ॥ ( पक्षे–हा राम हा देवर तात मात ) इति विदग्धमुखमण्डनम् ।

सा–' ( ५।२।११४ ) इति निपातिता । 'तमिस्रं तिमिरे कोपे पुंसि स्त्री तु तमस्ततौ'[1] । कृष्णपक्षनिशायां च ॥(१) ॥ * ॥ ज्योत्स्नादिभ्य उपसंख्यानात् ( वा० ५।२।१०३ ) मत्वर्थेऽण् । 'तामसो निशि दुर्गायां तामसो भुजगे खले'[2] [ इति मे० १७१।२५ ] ॥ ( २ ) ॥ * ॥ द्वे 'अत्यन्धकाररात्रेः' ।

ज्यौत्स्नी चन्द्रिकयान्विता ।

ज्यौत्स्नी स्त्री, 'उजेली चाँदनी रात' का नाम 'ज्यौत्स्नी' है ।

ज्यौत्स्नीति ।। ज्योत्स्नास्त्यस्याम् । प्रागवदण् ( वा०५।२।१०३ ) [ 'ज्यौत्स्नी'[3] पटोलिकायां स्याज्ज्योत्स्नायुक्तनिशि स्त्रियाम्' इति मे० ६३।९ ]॥(१) एकं 'ज्योत्स्नावद्रात्रेः' ।

आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥

पक्षिणी (स्त्री), 'वर्तमान और आगे वाले दिन से युक्त रात' का एक नाम है । तुल्यन्याय से वर्तमान रात्रि और दूसरी रात्रि के सहित दूसरे दिन का भी यह नाम है ।

आगामीति ॥ आगामिवर्तमाने च ते अहनी च । इति कर्मधारये टच् ( ५।४।९१ ) । सरेफ[-हर्युक्ता-]पाठे तु समासान्तविधेरनित्यताश्रयणीया । आगामिवर्तमाने अहनी युक्ते यस्यामिति बहुव्रीहिर्वा । पूर्वापरदिने पक्षाविव स्तो यस्याम् । 'अत इनि–' ( ५।२।११५ ) ॥ * ॥ निशीत्युपलक्षणम् । तेन पूर्वोत्तररात्रियुक्तदिनमपि पक्षिणीति हरदत्तादयः । 'पक्षिणी पूर्णिमायां स्याद्विहग्यां शाकिनीभिदि । आगामिवर्तमानाहर्युक्तरात्रावपि स्त्रियाम् ॥'[ इति मे० ४९। ६२–६३ ] ॥ (१) ॥*॥ एकं 'दिनद्वयमध्यगतरात्रेः' ।

गणरात्रं निशा बह्व्यः

गणरात्रम् ( न ), 'रात्रियों के समूह' का नाम 'गणरात्र' है ।

गणेति ॥ गणानां बह्वीनां रात्रीणां समाहारः । गणशब्दस्य संख्यात्वात् (१।१।२३) 'तद्धितार्थ–' (२।१।५१) इति द्विगुः । 'अहः सर्वैकदेश–' (५।४।८७) इत्यच् । 'रात्राह्नाहाः पुंसि' ( २।४।२९ ) इति पुंस्त्वं तु न । 'संख्यापूर्वं रात्रि' इति लिङ्गानुशासनसूत्रेण [ १३१ ] क्लीबत्वविधानात् । 'भवति नपुंसकयोग संख्यापूर्वस्य रात्रशब्दस्य' इति वररुचिवचनाच्च । 'रात्रं प्राक् संख्ययान्वितम्' [अ० ३।५। २५] इति वक्ष्यमाणत्वाच्च । एतेन स्वामिमुकुटयोर्नपुंसकत्वमसमर्थनमभ्रम परास्त ॥ ( १ ) ॥ * ॥ एकं 'रात्रिसमूहस्य' ।

प्रदोषो रजनीमुखम् ।

प्रदोषः ( पु ), रजनीमुखम् ( न ), 'रात के पहले हिस्से' के २ नाम हैं ।

प्रदोष इति ॥ दुष्यति । 'दुष वैकृत्ये' (दि० प० अ०)। पचाद्यच् (३।१।१३४) । टाप् (४।१।४) । ['दोषा रात्रौ भुजेऽपि च' इति मे० १६६।१५ ] । प्रारम्भो दोषायाः । प्रादिसमासः (२।२।१८) । प्रारब्धा दोषा यस्मिन्निति वा । 'गोस्त्रियो–' ( १।२।४८ ) इति ह्रस्वः ॥ * ॥ 'दोषा' इत्यव्ययमप्यस्ति । 'नक्तं दोषा च रजनौ' [अ० ३।४।६] इति वक्ष्यते । [ प्रदोषः कालदोषयोः' इति हैम ३।७७९] ॥ ( १ ) ॥ * ॥ रजन्या मुखमिव ॥ ( २ ) ॥ * ॥ द्वे 'रात्रिप्रारम्भस्य' ।

अर्धरात्रनिशीथौ द्वौ

अर्धरात्रः, निशीथः ( २ पु ), 'आधीरात' के २ नाम हैं ।

अर्धेति ॥ अर्धं रात्रेः । 'अहः सर्वैकदेश–' (५।४।८७) इत्यच् ॥ (१) ॥*॥ निशेरतेऽस्मिन् । 'शीङ् स्वप्ने' (अ० आ० से०)। 'निशीथगोपीथावगथाः' (उ० २।९) इति थक् । 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' [ इति मे० ७३। २० ] ॥ ( २ ) ॥ * ॥ द्वाविति । समावित्याकृष्यते ॥ द्वे 'रात्रिमध्यस्य' ।

द्वौ यामप्रहरौ समौ ॥ ६ ॥

यामः, प्रहरः ( २ पु ), 'प्रहर' के २ नाम हैं ( दिन और रात के आठवें हिस्से अर्थात् तीन घण्टे का १ 'प्रहर' होता है )।

द्वाविति ॥ याति ['या प्रापणे', अ० प० अ०] । 'अर्तिस्तुसु–' ( उ० १।१४० ) इति मन् । यत्तु—'यातेर्मग्' इति मग्—इति मुकुटेनोक्तम् । तन्न । उक्तसूत्रस्योत्प्रेक्षितत्वेन निर्मूलत्वात् । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' [ इति मे० १०९।२४ ] ॥ (१) ॥*॥ प्रह्रियते ढक्कादिरस्मिन् । 'पुंसि संज्ञायाम्–' ( ३।३।११८ ) इति घः ॥ ( २ ) ॥*॥ द्वे 'प्रहरस्य' ।

स पर्व-संधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।

पर्व (=पर्वन्, न), सन्धिः ( पु ) ये दो नाम ( या 'पर्वसन्धि' पु ) यह एक नाम ) 'प्रतिपद् और पूर्णिमा या अमावास्या के मध्यभाग' के हैं ।

स इति ॥ प्रतिपत्पञ्चदश्योर्यदन्तरम् स संधिः । स एव पर्व अपि । 'प्रतिपत्पञ्चदश्योस्तु संधिः पर्व प्रदिक् ककुप्' इति दुर्गः । 'संधिसमितो यजेत' इत्यादौ प्रसिद्धः स एव ।

१. '—तमिस्रा च तमस्ततौ' इति विश्वः ( १४२। २०९ ), 'कोपे स्त्री तु—' इति मेदिनी (१३४।१६१-६२)।

२. 'खगे' इति पाठः ।

३. 'ज्योत्स्नी पटोलिका सा च रात्रिश्चन्द्रिकयाऽन्विता' इति नानार्थरत्नमाला ( ६५५ ) च । सम्प्रत्युपलभ्यमानकोशेषु ओकारघटित एव पाठः प्राप्यते ।

'पर्व क्लीव महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदो संधौ विषुवत्प्रभृतिष्वपि॥' [इति मे० ८९।८८]॥(१)॥*॥ 'पर्वसंधि' इत्येक नाम, इति प्राञ्च ॥ एक 'पर्वमधे'।

**पक्षान्तौ पञ्चदश्यौ द्वे**

पक्षान्त (पु), पञ्चदशी (स्त्री), 'पूर्णिमा या अमावास्या तिथि' के २ नाम हैं।

पक्षेति ॥ द्वे पञ्चदश्यौ पूर्णिमामावास्ये पक्षस्यान्तौ ॥ (१) ॥*॥ एवम् 'पक्षान्तस्य'।

**पौर्णमासी तु पूर्णिमा ॥ ७ ॥**

पौर्णमासी, पूर्णिमा (२ स्त्री), 'पूर्णिमा' अर्थात् 'शुक्लपक्षकी अन्तिम तिथि' के दो नाम हैं।

पौर्णेति ॥ पूर्णो मास्तोऽस्याम्। बहुव्रीहौ कृते स्वार्थेऽण्। प्रज्ञादे (५।४।३८) आकृतिगणत्वात्। 'सास्मिन्पौर्णमासी' (४।२।२१) इति निर्देशाद्वा। यद्वा—माश्चन्द्र। पूर्णो मा पूर्णमा। तस्येयम्। यद्वा—'महाराजप्रोष्ठपदाट्ठञ्' (४।२।३५) इति सूत्रे 'तदस्मिन्वर्तते' इत्यर्थे 'पूर्णमासादण्' उपसंख्यानादण्। ['पौर्णमासः पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ' इति मे० १७४।५८] ॥ (१) ॥*॥ 'पूरी आप्यायने' (दि० आ० से०)। भावे क्त (३।३।११४)। पूर्णं चन्द्रस्य पूरणम्। तेन निर्वृत्ता पूर्णिमा। भावप्रत्ययान्तात् 'तेन निर्वृत्तम्' इत्यर्थे इमप् (वा० ४।४।२०)। टाप् (४।१।४) ॥ (२) ॥*॥ द्वे 'पूर्णिमायाः'।

**कलाहीने सानुमतिः**

अनुमति (स्त्री), 'जिसमें चन्द्रमा की कला कुछ क्षीण हो, उस पूर्णिमा' का अर्थात् 'प्रतिपद्युक्त पूर्णिमा' का १ नाम है।

कलेति ॥ सा पूर्णिमा उदयकाले प्रतिपद्योगात्कलाहीने चन्द्रे। अनुमन्यते—अनुमति। क्तिच् (३।३।१७४)। 'अथानुमतिरूनेन्दुपूर्णिमानुज्ञयोरपि' [इति मे० ६८।१८६] ॥ (१) ॥*॥ एक 'सानुमत्याः'।

**पूर्णे राका निशाकरे।**

राका (स्त्री), 'जिसमें चन्द्रमा की कला कुछ परिपूर्ण हो, उस पूर्णिमा' का अर्थात् 'शुद्ध पूर्णिमा' का १ नाम है।

पूर्ण इति ॥ चन्द्रे पूर्णे तु। राति शुभम्। 'रा दाने' (अ० प० अ०)। 'कृदाधारा–' (उ० ३।४०) इति क। बाहुलकाद्ध्रस्व। 'राका नद्यन्तरे कच्छ्वां नवजातरजस्त्रियाम्। सपूर्णेन्दुतिथौ' [इति मे० ३।३२] ॥ (१) ॥*॥ एकम् 'राकायाः'।

**अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ ८ ॥**

अमावास्या, अमावस्या (२ स्त्री), दर्श, सूर्येन्दुसङ्गमः (२ पु), 'अमावास्या' अर्थात् 'कृष्णपक्ष की अन्तिम तिथि' के ४ नाम हैं।

अमेति ॥ अमा सह वसतोऽस्या चन्द्रार्कौ। 'अमावस्यदन्यतरस्याम्' (३।१।१२२) इति ण्यत्, पक्षे वृद्ध्यभावश्च निपात्यते ॥*॥ नामैकदेशे नामग्रहणात् 'अमा' अपि ॥*॥ वसतेरिन्प्रत्यये (उ० ४।११८) ततो ङीपि (ग० ४।१।४५) अमावसी ॥*॥ 'इणजादिभ्यः' (वा० ३।३।१०८) इतीणि अमावासी ॥*॥ 'मसी परिणामे' (दि० प० से०)। अमा चन्द्रसूर्यौ साहचर्येण मस्यत परिच्छिन्तोऽस्या मासम्। अमामासी। इण् (वा० ३।३।१०८) ॥*॥ अमामसी। इन् (उ० ४।११८) ॥*॥ 'दर्शोमाऽमावसी च स्यात्' इति रभस। 'अप्यमावस्यमावासी चामामस्यप्यमामसी' इति शब्दार्णव ॥ (१) ॥*॥ (२) ॥*॥ दृश्यते शास्त्रेण। 'पुंसि संज्ञायाम्' (३।३।११८) इति घ। 'पक्षान्तेऽर्घौ दर्शने च दर्शः सूर्येन्दुसंगमे'[1] ॥ (३) ॥*॥ सूर्येन्दू संगच्छतोऽस्मिन्। घ (३।३।११८) ॥ (४) ॥*॥ चत्वारि 'दर्शस्य'।

**सा दृष्टेन्दुः सिनीवाली**

सिनीवाली (स्त्री), 'जिसमें चन्द्रमा की कला पूर्णतया क्षीण नहीं हुई हो, उस अमावास्या' का अर्थात् 'चतुर्दशीयुक्त अमावास्या' का १ नाम है।

सेति ॥ चतुर्दशीयोगाद्दृष्टचन्द्रा सती सा अमा सिनीवाली। एन विष्णुना सह वर्तते 'सा' लक्ष्मी। तद्योगात्। सिनी चन्द्रकला। व्रीह्यादित्वात् (५।२।११६) इनि। सिनी वलति धारयति। 'कर्मण्यण्' (३।२।१)। यत्तु—'स्त्रियाः पुंवत्–' (६।३।३४) इति न पुंवत्त्वम्। 'संज्ञापूरण्योश्च' (६।३।३८) इति निषेधात्–इति मुकुट। तन्न। सिनीवालीत्यत्र सामानाधिकरण्याभावात्, असंज्ञात्वात्, अभाषितपुंस्कत्वाच्च। यदपि—सिनी चन्द्रकला सा बाला-ल्पास्–इति तेन विगृहीतम्। तदपि न। बालेत्यस्य विशेषणत्वेन पूर्वनिपातप्रसङ्गात्। स्वामी तु—सिनी सिता बालास्त्यस्याम्–इत्याह। तन्न। पुंवद्भावप्रसङ्गात्। ['सिनीवाली तु दृष्टेन्दुकलामादुर्गयो स्त्रियाम्' इति मे० १५७।१६६] ॥ (१) ॥*॥ एकम् 'सिनीवाल्याः'।

**सा नष्टेन्दुकला कुहूः।**

कुहूः (स्त्री), 'जिसमें चन्द्रमा की कला पूर्णतया क्षीण हो गयी हो, उस अमावास्या' अर्थात् 'शुद्ध अमावास्या' का १ नाम है।

सेति ॥ उदये अमायोगान्नष्टचन्द्रकला सा अमा कुहूः[2]।

---

१ 'दर्शः सूर्येन्दुसंगमे पक्षान्तेऽर्घौ दर्शने च' इति हैम (२।५६१)।

२ 'या पूर्वामावास्या (सा) 'सिनीवाली' योत्तरा सा 'कुहू'रिति श्रुति। अयमर्थ—चतुर्दश्या अन्तिम

कुहयति। 'कुह विस्मापने' (चु० उ० से०) चुरादिः। 'नृतिशृध्योः कूः' (उ० १।९१) इति कूप्रत्ययो बाहुलकादिहापि ॥*॥ मृगय्वादित्वाद् ह्रस्वोऽपीत्यन्ये। 'धेनूररज्जुकुहूमरयुतनुकरेणव स्त्रियाम्' इति विन्ध्यवासी ॥*॥ 'कुहूः स्त्री कोकिलालापनष्टेन्दुकलदर्शयोः' [ इति मे० १७५।२ ] ॥ (१) ॥*॥ एकम् 'कुह्वाः'।

**उपरागो ग्रहः**

**उपरागः, ग्रहः ( २ पु ), 'सूर्यग्रहण या चन्द्रग्रहण' के २ नाम हैं।**

उपराग इति ॥ उपरज्यतेऽनेन। 'रञ्ज रागे' (भ्वा० उ० अ०)। 'हलश्च' ( ३।३।१२१) इति घञ्। 'घञि च भावकरणयोः' ( ६।४।२७ ) इति नलोपः। भावे वा घञ् (३।३।१८)। 'उपरागस्तु पुंसि स्याद् राहुग्रासेऽर्कचन्द्रयोः। दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते ॥' [ इति मे० २५। ५३] ॥ (१) ॥*॥ ग्रहणं ग्रहः। 'ग्रहवृदृ-' (३।३।५८) इत्यप्। 'ग्रहो [२]निग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥' [इति विश्व १७९।२, मे० च १७५।३ ] ॥ ( २ ) ॥*॥ द्वे 'ग्रहणस्य'।

**राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥**

**सोपप्लवोपरक्तौ द्वौ**

**सोपप्लवः, उपरक्तः ( २ पु ), 'ग्रहण लगने पर राहु से ग्रस्त ( कुछ कटे हुए ) सूर्य या चन्द्रमा' के २ नाम हैं।**

राह्विति ॥ 'उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि।' [इति मे० १६१।५७]। सहोपप्लवेन। 'वोपसर्जनस्य' (६। ३।८२) इति सभावः ॥ (१) ॥*॥ उपरज्यते स्म। कर्मणि क्तः (३।२।१०२,३।४।७०)। 'उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः' [ इति मे० ६८।१९१ ] ॥ ( २ ) ॥*॥ इमौ द्वौ 'राहुणा ग्रस्ते सूर्ये' च।

**अग्न्युत्पात उपाहितः।**

**अग्न्युत्पातः, उपाहितः (२ पु), 'आकाश में अग्निविकार, तारा टूटना, धूमकेतु नाम की तारा का उदय होना और उसके उपद्रव, सूर्यग्रहणादि में आग्नेयमण्डल से उत्पन्न तेजोविशेष' इनके २ नाम हैं।**

अग्न्युत्पात इति ॥ अग्नेरुत्पतनम् उत्पातो वैकृतम् ॥ (१) ॥*॥ उप आसन्नम् आहितं फलं यस्य। 'उपाहितोऽग्न्युत्पाते पुमानारोपिते त्रिषु' [ इति मे० ६८।१८७ ]॥ (२) ॥ * ॥ द्वे 'आकाशादिष्वग्निविकारस्य'।

**एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥**

**पुष्पवन्तौ ( =पुष्पवत्, नि० द्विव० ) 'सूर्य और चन्द्रमा इन दोनों' का १ नाम है।**

एकयेति ॥ 'पुष्प विकसने'(दि० प० से०)। भावे घञ् ( ३।३।१८ )। पुष्पो विकासः प्रकाशश्च। तद्वन्तौ। मतुप् (५।२।९४) एकयोक्त्या साधारणवचनेन। प्रत्येकं 'पुष्पवान्' इति न प्रयोक्तव्यमिति भावः। अकारान्तोऽपि पुष्पवन्तशब्दः। 'अव रक्षणे' (भ्वा० प० से०)। 'जृविशिभ्यां झच्' (उ० ३।१२६) इति बाहुलकादवतेरपि झच्। 'झोऽन्तः' ( ७।१।३ )। पुष्पस्यावन्तौ इति विग्रहे शकन्ध्वादिः (वा० ६।१।९४)। 'रविशशिनौ पुष्पवन्ताख्यौ' इति नाममाला। 'पुष्पवन्ताभ्याम्, पुष्पवन्तयोः' इत्यादि। [ 'पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ' इत्यभि० चि० म० २।३८ ] ॥ (१) ॥ * ॥ एकम् 'समुच्चितसूर्यचन्द्रयोः'।

**अष्टादश निमेषास्तु काष्ठा**

**निमेषः ( पु ), ( आँख के पलक गिरने में जितना समय लगे उसे 'निमेष' कहते हैं। ) काष्ठा ( स्त्री ), 'अट्ठारह निमेष के बराबर समय' का 'काष्ठा' यह एक नाम है।**

अष्टादशेति ॥ 'क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम्' इत्यादिशास्त्रसिद्धा निमेषाः। तेऽष्टादश काष्ठा। काशते। [ 'काशृ दीप्तौ', भ्वा० आ० से० ]। 'हनिकुषि-' ( उ० २।२ ) इति क्थन्। 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्याद्दिशि स्थानमात्रे च काष्ठमाख्यातमिन्द्रिये' ॥' इति विश्वः [४१।८] ॥ (१) ॥*॥ एकम् 'काष्ठायाः'।

**त्रिंशत्तु ताः कला।**

**कला ( स्त्री ), 'तीस काष्ठा के बराबर समय' का १ नाम है।**

त्रिंशदिति ॥ ताः काष्ठा त्रिंशत् कला। कलयति। 'कल संख्याने' (चु० उ० से०)। पचाद्यच् (३।१।१३४)। ['कला स्यादंशशिल्पयोः। कलने मूलरैवृद्धौ षोडशांशे विधोरपि ॥' इति हैम २।४८८-८९] ॥ (१) ॥ * ॥ एकम् 'कलायाः'।

**तास्तु त्रिंशत्क्षणः**

**क्षणः ( पु ), 'तीस कला के बराबर समय' का १ नाम है।**

प्रहरः। अमावस्याया अष्टौ प्रहरास्चेति नवप्रहरात्मकश्चन्द्रक्षयकालः शास्त्रसिद्धः। तत्राद्यप्रहरद्वये चन्द्रस्य सूक्ष्मता, अन्तिमप्रहरद्वये कृत्स्नक्षयः। अतोऽमावस्याया आद्यप्रहरः 'सिनीवाली'-संज्ञः, अन्त्यप्रहरद्वयं 'कुहू'-संज्ञकम्। मध्यप्रहरपञ्चकं 'दर्श'-संज्ञकम्'। इत्यमरविवेकव्याख्यायां महेश्वर आह।

१ 'राहुग्रस्तार्के' इति पा०।

२ 'ग्रहोऽनुग्रह—' इति पा०।

१. '—भिन्धने' इति पा०।

ता इति ॥ ता कला । क्षणोति 'क्षणु हिंसायाम्' (त० उ० मे०) । अच् (३।१।१३४) । 'क्षणः पर्वोत्सवेऽपि स्यात्तथा मानेऽप्यनेहम'[1] ॥ (१) ॥ * ॥ एकम् 'क्षणस्य' ।

ते तु मुहूर्त्तो द्वादशास्त्रियाम् ॥ ११ ॥

मुहूर्त, ( पु न ) 'बारह क्षण' अर्थात् 'दो घड़ी के बराबर के समय' का १ नाम है।

ते स्त्विति ॥ ते तु क्षणा (द्वादश) । 'हुर्छा कौटिल्ये' ( भ्वा० प० से० ) । बाहुलकात् 'अञ्जिघसि–' (उ० ३। ८९) इति क्तो मुडागमश्च । 'रल्लोप' (६।४।२१) इति छलोप । 'हलि च' (८।२।७७) इति दीर्घ । 'लिङ् चोर्ध्व-मौहूर्तिके' ( ३।३।१६४ ) इति निर्देशाद्वा मुहूर्त ॥ (१) ॥ * ॥ एवम् 'मुहूर्तस्य' ।

ते तु त्रिंशदहोरात्र

अहोरात्र (पु), 'दिन-रात' अर्थात् 'तीस मुहूर्त या साठ घड़ी' का १ नाम है।

ते स्त्विति ॥ ते तु मुहूर्ता । अहश्च रात्रिश्च तयो समाहार । 'अह सर्वैकदेश–' (५।४।८७) इत्यच् । 'रात्राह्नाहा पुंसि' ( २।४।२९ ) । यत्तु—'अह्ना सहिता रात्रि' इति विग्रह प्रदर्श्य 'अहोरात्र–' इत्युपन्यस्त मुकुटेन । तन्न । तथा सत्यजभावप्रसङ्गात् । अह पूर्वाद्रात्रिशब्दाद् द्वन्द्वे[2] एवाज्विधानात् । 'गणरात्रवदज्' इति दृष्टान्तोऽप्यसमत । चकारात्संख्याव्ययादेरप्यज्विधानात् । अत्र तदादित्वाभावात् । यदपि–समाहारे क्लीवमप्यहोरात्रम्–इत्युक्तम् । तदपि न । समाहारेऽपि रात्राह्नाहा पुंसि' (२।४।२९) इत्यनेन परत्वात्पुंस्त्वविधानात् । यदपि–वामनलिङ्गानुशासने 'द्विगुरपि पात्राद्यदन्त ' इति नपुंसकत्वेन 'अहोरात्र द्विरात्रम्' इत्युदाहृतम्–इति समतिप्रदर्शन कृतम् । तदपि न । 'रात्र प्राक्सङ्ख्यायान्वितम्' [अ० ३।५।२५] इति द्विरात्रस्य नपुंसकत्वेऽपि अहोरात्रस्य तदयोगात् ॥ (१) ॥ * ॥ एकम् 'अहोरात्रस्य' ।

पक्षस्ते दश पञ्च च ।

पक्ष ( पु ) 'पन्द्रह दिन-रात या पक्ष' का १ नाम है।

पक्ष इति ॥ ते [दशपञ्च] अहोरात्रा । पक्ष्यते । 'पक्ष परिग्रहे' ( भ्वा०, चु० प० से० ) । कर्मणि घञ् ( ३।३। १९)। 'पक्षो मासार्धके गेहे[3] पार्श्वसाध्यविरोधयो । केशादे परतो वृन्दे बले सखिसहाययो ॥ चुल्लीरन्ध्रे पतत्र च [4]राजकुञ्जरपार्श्वयो ' [इति मेदिनी १६६।१८–१९] ॥ (१) ॥ * ॥ एकम् 'पक्षस्य' ।

पक्षौ पूर्वापरौ शुक्लकृष्णौ

शुक्लः, कृष्णः ( २ पु ), ये 'पक्ष के दो भेद' हैं। ( इसमें उजेले पक्ष को 'शुक्ल' और अँधेरे पक्ष को 'कृष्ण' कहते हैं )।

पक्षाविति ॥ शुक्लपक्ष पूर्वसज्ञ ॥ (१) ॥ * ॥ कृष्णपक्षोऽपरसज्ञ ॥ (१) ॥ * ॥ क्रमेणैकैकम् 'शुक्लकृष्णपक्षयो ' ।

मासस्तु तावुभौ ॥ २ ॥

मास ( पु ), 'दो पक्ष, महीना' का १ नाम है।

मास इति ॥ तौ पक्षौ । मस्यते परिमीयतेऽयम्, अनेन वा । 'मसी परिमाणे' (दि० प० से०) । कर्मणि घञ् (३। ३।१९) । 'हलश्च' (३।३।१२१) इति वा ॥ (१) ॥*॥ एकम् 'मासस्य' ।

द्वौ द्वौ मार्गादिमासौ स्याद् ऋतुः

ऋतु (पु), 'ऋतु' का १ नाम है। मार्गशीर्ष अर्थात् अगहन से दो दो महीनों की 'हेमन्त' आदि एक-एक ऋतु होती हैं, इस प्रकार एक वर्ष में ६ ऋतुएँ होती हैं।

द्वाविति ॥ इयर्ति, ऋच्छति वा । 'अर्तेश्च–' ( उ० १। ७२ ) इति तु । चात् किस्वम् । [ 'ऋतुः स्त्रीकुसुमे मासि वसन्तादिषु धारयो ' इति विश्व ५८।२०] ॥ * ॥ मार्गादीना युगैर्हेमन्तादीनृतून् वक्ष्यति [अ० १।४।२०] । तदेकदेशमयनपरिच्छेदार्थमनुवदति—द्वौ द्वाविति ॥ (१) ॥*॥ एकम् 'ऋतो' ।

तैरयनं त्रिभि ।

अयनम् ( न ), 'अयन' का १ नाम है। यह ३ ऋतु ( या ६ मास ) का होता है।

तैरिति ॥ तैर्ऋतुभि । अयतेऽर्कोऽनेन [ 'अय गतौ', भ्वा० आ० से० ] । ल्युट् (३।३।११७) । यत्तु—'अयतेऽर्कोऽनेन' इति विगृह्य 'इण् गतौ' (अ० प० अ०) इति धातोरुपन्यसन—मुकुटेन कृतम् । तदसगतम् । इति स्पष्टमेव । 'अयन पथि मानोरप्युदग्दक्षिणतो गतौ' [इति विश्व ८७। २६, मे० च ८४।२८ ] ॥ (१) ॥*॥ एकम् 'अयनस्य' ।

अयने द्वे गतिरुदग्दक्षिणार्कस्य

सूर्य के गतिभेद से यह 'अयन' दो प्रकार का होता है, उसमें जब सूर्य की गति कुछ उत्तर की तरफ होती है उसे 'उत्तरायणम्' (न), और जब सूर्य गति कुछ दक्षिण की तरफ होती है तो उसे 'दक्षिणायनम्' ( न ), कहते हैं। ( 'उत्तरायण' में मकर से मिथुन राशितक और 'दक्षिणायन' में कर्क सेधनु राशितक सूर्य की संक्रान्ति रहती है' )।

१ मेदिन्या 'क्षण पर्वोत्सवव्यापारेषु मानेऽप्यनेहस' ( ४५।४ ) इति ।

२ अत एव 'अहर्ग्रहण द्वन्द्वार्थं द्रष्टव्यम्' इति 'अह-सर्वैक–' इति सूत्रस्थ भाष्य सङ्गच्छते ।

३ 'पार्ष्णिग्रहे साध्यविरोधयो ' इति पा० ।

४ 'वाजे कुञ्जरपार्श्वयो ' इति पा० ।

अयने इति ॥ अयने तु द्वे। अर्कस्योत्तरा गतिः दक्षिणा च। उत्तरदक्षिणाख्ये द्वे अयने तु वत्सरः—इति वक्तव्ये 'अर्कस्य' इति ग्रहणं चान्द्रत्वव्यावृत्त्यर्थम्। पक्षादिकं तु चान्द्रमुक्तम्। अयनं तु न चान्द्रं किं तु सौरमेव ॥ (१) ॥ * ॥ एकैकम् 'अयनद्वयस्य'।

वत्सरः ॥ १३ ॥

वत्सरः (पु) 'द्वे अयने तु वत्सरः'—दो अयन का एक 'वत्सर' (वर्ष) होता है। (आगे श्लो० २० देखिए)

वत्सर इति ॥ वसन्त्यस्मिन् [ 'वस निवासे', भ्वा० प० अ० ]। 'वसेश्च' ( उ० ३।७१ ) इति सरप्रत्ययः। 'सः स्यार्धधातुके' ( ७।४।४९ ) इति सस्य तः। [ एकं वर्षस्य' ]।

समरात्रिन्दिवे काले विषुवद्विषुवं च तत्।
पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा [ ४२ ]
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे [ ४३ ]

विषुवत्, विषुवम् (२ न), 'जब रात-दिन दोनों बराबर हो जाते हैं, उस समय' के २ नाम हैं (जब तुला और मेष की सूर्यसंक्रान्ति होती है, तब दिन-रात बराबर होते हैं)।

[ पौषी (स्त्री), 'पुष्य नक्षत्र से युक्त पूर्णिमा' अर्थात् 'पौष मास की पूर्णिमा' का १ नाम है। पौषः (पु), 'पूस महीना' अर्थात् जिसमें 'पौषी' पूर्णिमा हो, उसका १ नाम है। इसी तरह माघ आदि ग्यारह महीनों को भी समझना चाहिये, अर्थात् मघा नक्षत्र से पूर्णिमा 'माघी' महीना 'माघः' १, पूर्वोत्तरफाल्गुनी नक्षत्र से युक्त पूर्णिमा 'फाल्गुनी', मास 'फाल्गुनः' २, चित्रा नक्षत्र से युक्त पूर्णिमा 'चैत्री' मास 'चैत्रः' ३, विशाखा नक्षत्र से युक्त पूर्णिमा 'वैशाखी' मास 'वैशाखः' ४, ज्येष्ठा नक्षत्र से युक्त पूर्णिमा 'ज्यैष्ठी' मास 'ज्येष्ठः' ५, पूर्वोत्तराषाढा नक्षत्र से युक्त पूर्णिमा 'आषाढी' मास 'आषाढः' ६, श्रवण नक्षत्र से युक्त पूर्णिमा 'श्रावणी' मास 'श्रावणः' ७, पूर्वोत्तराभाद्रपद नक्षत्र से युक्त पूर्णिमा 'भाद्रपदी' मास 'भाद्रपदः' ८, अश्विनी नक्षत्र से युक्त पूर्णिमा 'आश्विनी' मास 'आश्विनः' ९, कृत्तिका नक्षत्रसे युक्त पूर्णिमा 'कार्त्तिकी' मास 'कार्त्तिकः' १० और मृग नक्षत्र से युक्त पूर्णिमा 'मार्गी' मास 'मार्गः' ११ होते हैं, इनमें पूर्णिमा के वाचक 'माघी' आदि ११ शब्द स्त्री० और मास के वाचक 'माघ' आदि ११ शब्द पुं० हैं ]।

समेति ॥ रात्रिश्च दिवा च रात्रिन्दिवम्। 'अचतुर—' ( ५।४।७७ ) इत्यादिना साधु। तत् समं यस्मिन् तादृशे काले तुलामेषावच्छिन्ने। विषु साम्येऽव्ययम्। ततो मतुप् ( ५।२।९४ )। 'संज्ञायाम्' ( ८।२।११ ) इति वत्वम् ॥ (१) ॥ * ॥ 'वप्रकरणेऽन्यत्रापि'[१] (भा० वा० ५।२।१०९) इत्युक्तेर्वः। तेन विषुवम्[२]। 'विषुवान् समरात्रिवासरः' इति पुंस्काण्डे बोपालितः ॥ * ॥ विषुणोऽपि। विषु नानारूपं गमनं विष्वक्। तदस्यास्तीति विग्रहे 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' ( ग० ५।२।१०० ) इति पामाद्यन्तर्गणसूत्रेण नप्रत्ययः। णत्वम् ( ८।४।२ ) ॥ (२) ॥ * ॥ द्वे 'समरात्रिन्दिवकालस्य'।

मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥

मार्गशीर्षः, सहाः (=सहस्), मार्गः, आग्रहायणिकः (४ पु), 'अगहन महीने' के ४ नाम हैं।

मार्गेति ॥ मृगशिरसा युक्ता पौर्णमासी। 'नक्षत्रेण युक्तः कालः' ( ४।२।३ ) इत्यण्। 'अचि शीर्षः' (६।१।६२)। मार्गशीर्षी पौर्णमास्यस्मिन्मासे। 'साऽस्मिन्पौर्णमासी' ( ४।२।२१ ) इत्यण्। एतेन 'पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा। नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥'[३] इति क्वचित्पठ्यमानं व्याख्यातम् ॥ (१) ॥ * ॥ सहते। 'षह मर्षणे' ( भ्वा० उ० अ० )। असुन् ( उ० ४।१८९ ) सान्तः। [ 'सहो बले ज्योतिषि च पुंसि'[४] हेमन्तमार्गयोः' इति मे० १७३।४३] ॥ * ॥ पचाद्यजन्तोऽपि। 'मार्गे सहः सहा' इति शब्दार्णवः ॥ (२) ॥ * ॥ एकदेशप्रयोगात् मृगोऽपि। 'मृगशिरा मृगः' इति रुद्रकोषः। तद्युक्ता पौर्णमासी मार्गी। साऽस्मिन्नस्ति। [ 'मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि' इति हैमः २।४२ ] ॥ (३) ॥ * ॥ आग्रहायण्या युक्ता पौर्णमास्यस्मिन्। 'आग्रहायण्यश्वत्थाट्ठक्' (४।२।२२) ॥ * ॥ ज्योत्स्नादित्वात् (वा० ५।२।१०३) अणि 'आग्रहायण' अपीति पुरुषोत्तमः[५] ॥ (४) ॥ * ॥ चत्वारि 'मार्गशीर्षस्य'।

पौषे तैषसहस्यौ द्वौ

पौषः, तैषः, सहस्यः (३ पु), 'पौष मास' के ३ नाम हैं।

पौष इति ॥ पुष्येण तिष्येण च युक्ता पौर्णमास्यस्मिन्। 'नक्षत्रेण—' ( ४।२।३ ) इत्यण्। 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः' (वा० ६।४।१४९)। ङीप् (४।१।१५)। ततः 'साऽस्मिन्' (४।२।२१) इत्यण्। [ 'पौषो मासप्रभेदे स्यात् पौषं तु महयुद्धयोः' इति हैमः २।५८० ] ॥ (१) ॥ * ॥ (२) ॥ * ॥

१ भाष्ये तु "वप्रकरणे 'अन्येभ्योऽपि दृश्यते' इति वक्तव्यम्" इत्येव पाठः।

२ 'विषुप (व) विषुण विषुव' इति अमरविवेकव्याख्याने महेश्वरः।

३ श्लोकोऽयमत्रैव प्रक्षिप्तेषु पठितः।

४. 'सहा' इति पा०।

५ पुरुषोत्तमकृते त्रिकाण्डशेषे नेदं लभ्यते।

सहसि बले साधु । 'तत्र साधु' ( ४।४।९८ ) इति यत् ॥ (३) ॥ * ॥ त्रीणि 'पौषस्य'।

**तपा माघे**

तप ( तपस् ), माघ (२ पु), 'माघ मास' के २ नाम हैं।

तपा इति ॥ तपन्त्यस्मिन् । असुन् (उ० ४।१८९) । सान्त । तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयो ' [इति मे० १७१।१२३-२४] ॥ (१) ॥ * ॥ मघया युक्ता पौर्णमास्यस्मिन् ॥ ( २ ) ॥ * ॥ द्वे 'माघमासस्य'।

**अथ फाल्गुने।**

**स्यात्तपस्य फाल्गुनिकः**

फाल्गुन, तपस्य, फाल्गुनिक (३ पु) 'फाल्गुन मास' के ३ नाम हैं।

अथेति ॥ फल्गति निष्पादयति। 'फल निष्पत्तौ' (भ्वा० प० से०) । 'फलेर्गुक्च' (उ० ३।५६) इत्युनन् गुगागमश्च । 'फल्गुनस्त्वर्जुने मासे नक्षत्रे फल्गुनी स्मृता' इति गोवर्धनानन्द ॥*॥ प्रज्ञाद्यण् (५।४।३८) वृद्धि (७।२।११७) । 'फाल्गुनस्त्वर्जुने मासे फाल्गुनी चास्य पूर्णिमा' इति धरणि ॥*॥ फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी । सास्मिन्नस्ति फाल्गुन फाल्गुनिकश्च' । 'फाल्गुनस्तु गुडावेरो नदीजार्जुनभूरुहे । तपस्यसंज्ञमासे तत्पूर्णिमायां तु फाल्गुनी ॥' [ इति मे० ८९।९५-९६ ] । 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य' (४।२।२३) इति ठक् । पक्षेऽण् [४।२।२१] ॥ (१)॥ * ॥ (३) ॥ * ॥ तपति साधु । 'तत्र साधु' ( ४।४।९८ ) इति यत् । [ 'तपस्य फाल्गुने पार्थे तपस्या नियमस्थितौ' इति हैम ३।५१९ ] ॥ (२) ॥*॥ त्रीणि 'फाल्गुनमासस्य'।

**स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥**

चैत्र, चैत्रिक, मधु (३ पु), 'चैत्र मास' के ३ नाम हैं।

स्यादिति ॥ चित्रया युक्ता पौर्णमास्यस्मिन् । अणठञौ ( ४।२।२१, २३ ) । [ चैत्रं मृते देवकुले ना भूभृन्मासभेदयो ' इति मे० १२५।३७ ] (१) ॥ * ॥ (२) ॥ * ॥ मन्यते एन मधु । 'मन ज्ञाने' (दि० आ० अ०) । 'फलिपाटि-' ( उ० १।१८ ) इत्युधश्चान्तादेश । 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति ॥' [ इति मे० ७९।११-१२ ] ॥ (३) ॥*॥ त्रीणि 'चैत्रस्य'।

**वैशाखे माधवो राधः**

वैशाख, माधव, राध (३ पु), 'वैशाख मास' के ३ नाम हैं।

वैशाख इति ॥ विशाखया युक्ता पौर्णमास्यस्मिन्नस्ति । [ 'वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तित ' इति मेदिनी २०।१२ ] ॥ ( १ ) ॥*॥ मधु मकरन्द । सोऽस्मिन्नस्ति । 'मधोर्ञ च' ( ४।४।१२९ ) इति ञ । (२) ॥*॥ राधा विशाखा । तद्वती पौर्णमासी राधी । सास्मिन्नस्ति ॥ ( ३ ) ॥*॥ त्रीणि 'वैशाखस्य'।

**ज्येष्ठे शुक्रः**

ज्येष्ठ, शुक्र ( २ पु ), 'ज्येष्ठ मास' के २ नाम हैं।

ज्येष्ठ इति । पूर्ववदण्द्वयेन ज्यैष्ठ ॥*॥ संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावे ज्येष्ठोऽपि । 'ज्येष्ठो मासि च वृद्धे च ज्येष्ठा च गृहगोधिका' इति त्रिकाण्डशेष [३।३।१०७] । ['ज्येष्ठ' स्यादग्रजे श्रेष्ठे मासभेदातिवृद्धयो । ज्येष्ठा भे गृहगोधायाम्' इति हैम २।१०७-८] ॥ (१) ॥*॥ विरहिण शोचन्त्यस्मिन् । 'शुच शोके' (भ्वा० प० से०) । 'ऋजेन्द्र-' (उ० २।२८) इति रक्, चकारस्य ककारश्च । 'शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरोगभिदो क्लीबम्' [ इति मेदिनी १२९। ९२-९३ ] ॥ ( २ )॥*॥ द्वे 'ज्येष्ठमासस्य'।

**शुचिस्त्वयम्।**

**आषाढे**

शुचि, आषाढ ( २ पु ), 'आषाढ मास' के २ नाम हैं।

शुचिरिति ॥ अयमिति शुचे पुरस्थाभिव्यक्तयर्थम् । शोचन्ति विरहिणोऽस्मिन् । 'इगुपधात्कित्' (उ० ४।१२०) इतीन् किच्च ॥ ( १ ) ॥*॥ अषाढया युक्ता पौर्णमास्यस्मिन् । 'आषाढो व्रतिनां दण्डे मासे मलयपर्वते । स्त्री पूर्णिमायाम्' [इति मे० ४४।६-७] । आषाढाभिराख्यात, इति विग्रहे तु 'अषाढक' अपि । आख्यानण्यन्तात् ( वा० ३ १।२६ ) 'क्वुन् शिल्पिसंज्ञयो' ( उ० २।३२ ) । 'स्यादाषाढे त्वषाढक.' इति शब्दार्णव ॥ ( २ ) ॥ * ॥ द्वे 'आषाढस्य'।

**श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥**

श्रावण, नभा ( =नभस् ), श्रावणिक (३ पु), 'श्रावण मास' के ३ नाम हैं।

श्रावण इति ॥ 'स्त्रीपुसयोर्ऋक्षभेदे श्रवण श्रुतिकर्णयो ' इति रभस । श्रवणेन युक्ता पौर्णमासी श्रवणा । 'लुबविशेषे' ( ४।२।४ ) इति प्राप्तो लुप् यद्यपि 'पौर्णमास्यां नेष्यते' इत्युत्सर्ग, 'विभाषा फाल्गुनी-' (४।२।२३) इति लिङ्गात्, तथापि श्रवणशब्दादिष्यत एव । तत्रैव ( ४।२। २३) सूत्रे 'श्रवणा' इति निर्देशात् । 'अबाधकान्यपि निपातनानि' इति 'श्रावणी' इत्यपि । तत 'सास्मिन्' ( ४।२। २१ ) इत्यणि श्रावण । 'श्रावणो मासि पाखण्डे दध्याल्या श्रावणा मता' इति हैम [ ३।२४०, मेदिन्यपि ५०।८१ ]

१. 'फल्गुनालस्तु फाल्गुन ' इति त्रिकाण्डशेषात् 'फल्गुनाल ' इत्यप्येक नाम ।

॥ ( १ ) ॥ * ॥ विरहिणो नभ्यति, नभ्नाति, नभते, वा नभाः । ['णभ हिंसायाम्' दि० प० से०, क्र्या० प० से०, भ्वा० आ० से०[1] ] । असुन् ( उ० ४।१८९ ) । स्वामी तु—न भासते मेघच्छन्नत्वात्—इत्याह । तन्न । नभासौ, नभास, नभाभ्याम्, नभाभि, नभा सु, इत्यादिरूपप्रसङ्गात् । 'नभ. खं श्रावणो नभा ' इत्यनुपपत्तेश्च । ह्रस्वदीर्घोपधयो. शब्दभेदात् । 'भासते इत्यर्थकथनमात्रम्' इत्यभिप्रेत्य 'भस दीप्तौ' ( जु० प० से० ) इति जुहोत्यादे 'न वभस्ति' इति व्युत्पत्त्याश्रयणे तु 'अत्वसन्तस्य–' ( ६।४।१४ ) इति दीर्घो न स्यात् । 'प्रवृषेणे त्रिषु नभा.[2] क्लीब व्योम्नि पुमान्घने । घ्राणश्रावणयोस्तु विमनन्तो पतद्ग्रहे ॥' [इति मे० १७१।२६-२७ ] ॥ ( २ ) ॥ * ॥ 'विभाषा फाल्गुनी–' ( ४।२।२३ ) इति ठकि श्रावणिक ॥ ( ३ ) ॥*॥ त्रीणि 'श्रावणमासस्य' ।

**स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।**

**नभस्यः, प्रौष्ठपदः, भाद्रः, भाद्रपदः ( ४ पु ), 'भादों मास' के ४ नाम हैं ।**

स्युरिति॥ नभा अभ्रम् । तत्र साधुर्नभस्य ॥(१)॥*॥ प्रोष्ठपदाभिर्युक्ता प्रौष्ठपदी । भद्रा भद्रपदा । ताभिर्युक्ता भाद्री भाद्रपदी च पौर्णमासी । तत 'सास्मिन्—' (४।२।२१) इत्यण् ॥ ( २ ) ॥*॥ ( ३ ) ॥*॥ ( ४)॥*॥ चत्वारि 'भाद्रपदमासस्य' ।

**स्यादाश्विन इषोऽप्याश्वयुजोऽपि**

**आश्विनः, इषः, आश्वयुजः ( ३ पु ), 'आश्विन मास' ( क्वार ) के ३ नाम हैं ।**

स्यादिति ॥ अश्विन्या •युक्ता पौर्णमास्यस्मिन्नस्ति ॥ ( १ ) ॥ * ॥ 'इष गतौ' ( दि० प० से० ) एषणमिट् यात्रा । क्विप् ( ३।२।१७८ ) सास्मिन्मासे जिगीषूणामस्ति । अर्शआद्यच् ( ५।२।१२७ ) ॥ ( २ ) ॥*॥ अश्वयुजा युक्ता पौर्णमास्यस्मिन् । अण्द्वयम् ( ४।२।३, २१ ) ॥*॥ सज्ञापूर्वकत्वाद्वृद्ध्यभावे अश्वयुजोऽपि । 'आश्विनोऽश्वयुजश्चेष ' इत्यमरमाला ॥ ( ३ ) ॥*॥ त्रीणि 'आश्विनमासस्य' ।

**स्यात्तु कार्तिके ॥ १७ ॥**

**बाहुलोर्जौ कार्तिकिकः**

**कार्तिकः, बाहुलः, ऊर्जः, कार्तिकिकः ( ४ पु ), 'कार्तिक मास' के ४ नाम हैं ।**

स्यादिति ॥ कृत्तिकाभिर्युक्ता पौर्णमास्यस्मिन्॥ (१) ॥*॥ बहुला कृत्तिका । अण्द्वयम् (४।२।३, २१)॥(२) ॥*॥ ऊर्जयति उत्साहयति जिगीषून् । 'ऊर्ज बलप्राणनयो ' ( चु० प० से० ) ण्यन्तात् ( ३।१।२६ ) पचाद्यच् ( ३।१।१३४ ) । 'ऊर्ज. कार्तिके बले' इति हैम [ २।६७ ] ॥ ( ३ ) ॥*॥ 'विभाषा फाल्गुनी–' ( ४।२।२३) इति ठकि कार्तिकिक ॥(४)॥*॥ चत्वारि 'कार्तिकमासस्य' ।

**हेमन्तः**

**हेमन्तः ( पु ) 'हेमन्त ऋतु' का १ नाम है ( यह अगहन और पौष मास में होती है ) ।**

हेमन्त इति ॥ हन्ति । 'हन्तेर्मुट् हि च' ( उ० ३।१२९ ) इति झच् हिरादेशो मुडागम । गुण (७।३।८४) ॥*॥ 'हेमा' अपि । 'सर्वत्राण् च–' (४।३।२२) इति सूत्रे यद्भाष्यम् 'हेमन्तस्य तलोपवचनानर्थक्य हेम्न प्रकृत्यन्तरस्य सत्त्वात्' इति । हिनोति वर्धयति बलम् । 'हि गतौ वृद्धौ च' ( स्वा० प० अ० ) । अन्तर्भाविणर्यर्थात् 'अन्येभ्योऽपि—' ( ३।२।७५ ) इति मनिन् ॥ ( १ ) ॥ * ॥ एकम् 'मार्गपौषाभ्या निष्पन्नस्य ऋतो ' ।

**शिशिरोऽस्त्रियाम् ।**

**शिशिरः ( पु न ), 'शिशिर ऋतु' का १ नाम है ( यह माघ और फाल्गुन मास में होती है ) ।**

शिशिर इति ॥ 'शश प्लुतगतौ' (भ्वा० प० से०) । 'अजिरशिशिर–' ( उ० १।५३ ) इति किरजन्तो निपातित । शशन्ति धावन्ति यस्मिन्पथिका । 'शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' इति विश्व [१३५।१२८] ॥ ( १ ) ॥ * ॥ एकम् 'माघफाल्गुनाभ्या [ निष्पन्नस्य ] ऋतो ' ।

**वसन्ते पुष्पसमयः सुरभिः**

**वसन्तः, पुष्पसमयः, सुरभिः ( ३ पु ), 'वसन्त ऋतु' के ३ नाम हैं ( यह चैत्र और वैशाख मास में होती है ) ।**

वसन्त इति ॥ वसन्त्यत्र मदनोत्सवा । 'तृभूवहिवसि–' ( उ० ३।१२८ ) इति झच् ॥ ( १ ) ॥ * ॥ पुष्पाणा समय ॥ ( २ ) ॥*॥ सुष्ठु रभन्ते रभसयुक्ता भवन्त्यत्र। 'रभ राभस्ये' (भ्वा० आ० अ०) । इन् (उ० ४।११८) । 'सुरभिर्हेम्नि चम्पके । जातीफले मातृभेदे रम्ये चैत्रवसन्तयो ॥ सुगन्धौ गवि शल्लक्याम्' इति हैम [३।४८९-९०] ॥ ( ३ ) ॥ * ॥ त्रीणि 'चैत्रवैशाखाभ्या [ निष्पन्नस्य ] ऋतो.' ।

**ग्रीष्म ऊष्मकः ॥ १८ ॥**

**निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।**

**ग्रीष्मः, ऊष्मकः, निदाघः, उष्णोपगमः, उष्णः, ऊष्मागमः, तपः ( ७ पु ), 'ग्रीष्म ऋतु' के ७ नाम हैं ( यह ज्येष्ठ और आषाढ मास में होती है ) ।**

---

१. (भ्वा० प० से, दि० प० से०, क्र्या० आ० से०) इति प्राक्तन. पाठ नभ्यति, नभ्नाति, नभते—इत्युल्लिखितप्रयोगक्रमविरुद्धत्वात्, आत्मनेपद-परस्मैपद-निर्देशाशुद्धत्वाच्च न समीचीन ।

२. 'नभ ' इति पा० ।

ग्रीष्म इति ॥ ग्रसते रसान् । 'ग्रसु अदने' (भ्वा० आ० अ०) । आतो मक्, धातोर्ग्रीभाव, पुगागमश्च 'ग्रीष्म' (उ० १।१४९ ) इत्युणादिसूत्रेण निपातित । 'ग्रीष्म ऊष्मर्तुभेदयो' [ इति मे० १०८।१० ] ॥ ( १ ) ॥ * ॥ ऊषति रुजति । ऊष रुजायाम्' (भ्वा० प० से० ) । 'अन्येभ्य –' (३।२।७५) इति मनिन् । [ 'ऊष्माणस्तु निदाघोष्णग्रीष्मा शपमहा अपि' इति हैम २।२६२] । यावादित्वात् (५।४। २९ ) कन् ॥ * ॥ मकि क्षदन्त [ ऊष्म ] अपि । 'ऊष्मो घर्मेऽशुणि तथा ज्येष्ठे, ऊष्मा स्त्रिया त्विपि' इति बोपालित ॥ (२) ॥*॥ नितरा दह्यतेऽत्र । दह भस्मीकरणे' ( भ्वा० प० अ० ) । हल्श्च ( ३।३।१२१) इति घञ् । न्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम् । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' [ इति विश्व २९।९, मे० च २६।८ ] ॥ ( ३ ) ॥*॥ उष्णमुपगममत्र ॥ (४) ॥*॥ ओषति । उष दाहे' ( भ्वा० प० से० ) । इणसिञ्जिदीङुष्यविभ्यो नक्' ( उ० ३।२ ) । 'ऊष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गक [ इति मे० ४५।३ ] ॥ ( ५ ) ॥*॥ 'ऊष रुजायाम्' ( भ्वा० प० से० ) । मनिन् ( ३। २।७५) । आगच्छति । पचाद्यच् (३।१।१३४) । ऊष्मा तप आगमोऽत्र ॥ * ॥ 'ऊष्मा' अपि । 'ऊष्मातपनिदाघयो' इति नान्ते बोपालित ॥ ( ६ ) ॥*॥ तपति । पचाद्यच् ( ३।१।१३४ ) ॥ ( ७ ) ॥ * ॥ सप्त 'ज्येष्ठापाढाभ्या [ निष्पन्नस्य ] ऋतो' ।

**स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा,**

**प्रावृट्** ( =प्रावृष्, स्त्री ), **वर्षा** ( स्त्री, नि० ब० व० ), 'वर्षा ऋतु' के २ नाम हैं ( यह श्रावण और भादों मास में होती है )।

स्त्रियामिति ॥ वर्षण वृट् । 'वृषु सेचने' ( भ्वा० प० से० ) । सपदादित्वात् (वा० ३।३।१०८) क्विप् । प्रकृष्टा वृडत्र । 'नहिवृति–' ( ६।३।११६ ) इति दीर्घ ॥ ( १ ) ॥*॥ वर्षं वर्षणमस्त्यस्ति । अर्शआद्यच् ( ५।२।१२७ ) । टाप् (४।१।४) । भूम्नि, बहुत्वे । तेन नित्यबहुवचनान्त ॥ ( २ ) ॥*॥ वर्षर्तोर्द्वे 'श्रावणभाद्राभ्या [निष्पन्नस्य] ऋतो' ।

**अथ शरत्स्त्रियाम् ॥ १९ ॥**

**शरत्** ( =शरद्, स्त्री ), 'शरद ऋतु' का १ नाम है ( यह आश्विन और कार्तिक मास में होती है )।

अथेति ॥ शीर्यन्तेऽस्या पाकेनौपधय । 'शृ हिंसायाम्' ( क्र्या० प० से० ) । 'शृदृभसोऽदि' ( उ० १।१३० ) । [ 'शरत् स्त्री वत्सरेऽप्यृतौ' इति मे० ७७।३९ ] ॥ * ॥ भागुरिमते टापि शरदा च । 'जरद्ववेच्छरदया प्रावृट् प्रावृपया सह' इति विश्व[1] ॥ (१) ॥*॥ एकम् 'आश्विनकार्तिकाभ्या [ निष्पन्नस्य ] ऋतो' ।

**षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।**

मार्गशीर्ष अर्थात् अगहन महीने से हर दो-दो महीनों में हेमन्त आदि एक-एक ऋतु होती है। 'ऋतु' शब्द संस्कृत में पुल्लिङ्ग है।

षडिति ॥ अमी हेमन्तादय । 'ऋ गतौ' [ जु० प० अ० ] । 'अर्तेश्च' (उ० १।७२) इति तु , चार्त्विकत् । यत्तु मुकुटेनोक्तम्—'सैत्वादय इति तुन्'–इति । तन्न । गुणप्रसङ्गात्, अपाणिनीयत्वाच्च । ( १ ) ॥*॥ एकम् 'हेमन्तादीना षण्णाम्'[2]।

**संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥ २० ॥**

**संवत्सर, वत्सर, अब्द** ( ३ पु), **हायन** (पु न), **शरत्** (=शरद्, स्त्री ), **समा** ( स्त्री०, ब० व० ), 'वर्ष, साल' के ६ नाम हैं ( यह १२ महीने का होता है। पीछे श्लो० १३ में 'वत्सर' कहा ही गया है फिर इस श्लोक में भी 'वत्सर' कहने का तात्पर्य यह है कि पहले 'अयन' के प्रसंग में 'द्वे अयने तु वत्सर' इस आधार पर सौर 'वत्सर' का उल्लेख है और यहाँ हेमन्तादि के प्रसंग में 'द्वादशमासा संवत्सर' इस आधार पर चान्द्र 'वत्सर' का उल्लेख है )।

संवत्सर इति ॥ संवसन्त्यृतवोऽत्र । 'वसेश्च' (३।७१)। 'सपूर्वाच्चित्' ( उ० ३।७२ ) इति सरप्रत्यय । 'स स्यार्धधातुके' ( ७।४।४९ ) इति त ॥ ( १ ) ॥ * ॥ एव वत्सरोऽपि ॥(२)॥*॥ आप्यते । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । 'अब्दादयश्च' (उ० ४।९८) इति दन् ह्रस्वत्व च । 'अब्दः संवत्सरे वारिवाहमुस्तकयो पुमान्' [ इति मे० ७४।२] ॥ ( ३ ) ॥*॥ भावाञ्जहाति [ 'ओहाक् त्यागे', जु० प० अ० ] जिहीते [ 'ओहाङ् गतौ, जु० आ० अ० ] वा । 'हश्च व्रीहिकालयो' । ( ३।१।१४८ ) इति ण्युट् । 'हायनः स्त्री' इति पाठे शरदा सम्बन्ध । 'हायनो न स्त्रिया वर्षे पुस्यर्चिर्व्रीहिभेदयो' [ इति मे० ६४।५८ ] ॥ ( ४ ) ॥ * ॥ शृणाति । 'शृ हिंसायाम्' ( क्र्या० प० से ) । 'शृदृभसोऽदि' ( उ० १।१३० ) इत्यादि ॥*॥ प्रज्ञाद्यणि ( ५।४।३८ ) शारदोऽपि । 'समायोपिति, शरदः' इति रत्नकोप ॥ (५) ॥*॥ 'षम ष्टम वैक्लव्ये' ( भ्वा० प० से० ) । समन्ति विक्लव कुर्वन्ति सर्वम् । पचाद्यचि (३।१।१३४) टाप् (४।१।४) ।

---

१ विश्वे तु वचनमिद प्रायो न लभ्यते । त्रिकाण्डशेषे तु 'कालप्रभात शरदा' इति ।

२ 'आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतु स्मृत ।' इति महेश्वर ।

'बहुवचननिर्देशात्प्रायेणायं बहुवचनान्त ' इति ध्वनयति। क्वचिद्वचनान्तरमपि। 'समा समा विजायते' (५।२।१२) इति सूत्रात्। 'समायां समायाम्' इति तत्र भाष्याच्च। समान्ति सह वर्तन्ते ऋतवोऽस्यामिति वा। 'मा माने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ्। 'समा समाम्'(५।२।१२) इति निर्देशान्मलोप। 'समाः संवत्सरे स्त्रियाम्। सर्वमायुमसानेदु समं स्यादभिधेयवत्॥' [इति मे० ११०।३५ ] ॥ (६) ॥७॥ षद् 'संवत्सरस्य'।

**मासेन स्यादहोरात्रः पैत्रः**

**मनुष्यों के एक महीने का 'पैत्र' अहोरात्रः' (पु), अर्थात् 'पितरों का दिनरात' होता है।**

मासेनेति ॥ नृणां मासेन। पितृणामयं पैत्रोऽहोरात्र। तत्र कृष्णपक्षो दिनम्। शुक्लपक्षो रात्रि[१]।

**वर्षेण दैवतः।**

**मनुष्यों के एक वर्ष या उत्तरायण और दक्षिणायन का 'दैवः अहोरात्रः' (पु) अर्थात् 'देवताओं का एक दिन-रात' होता है।**

वर्षेणेति ॥ नृणां वर्षेण। देवतानामयं दैवतोऽहोरात्र। तत्रोत्तरायणं दिनम्। दक्षिणायनं रात्रि[२]।

**दैवे युगसहस्रे द्वे ब्राह्मः**

**देवताओं के दो हजार युग का 'ब्राह्मः अहोरात्रः' (पु) अर्थात् 'ब्रह्मा का दिन-रात' होता है।**

दैव इति ॥ देवानां युगसहस्रद्वयेन ब्रह्मणोऽयम् 'ब्राह्मोऽजातौ' (६।४।१७१) ब्राह्मोऽहोरात्र। दैवं षष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्य वर्षम्। तैर्द्वादशभि सहस्रैर्मानुषचतुर्युगम्'। तच्च देवानामेकं युगम्। तत्सहस्रं ब्रह्मणो दिनं भूतानां स्थितिकाल.। तावत्येव रात्रि प्रलयकाल।

**कल्पौ तु तौ नृणाम् ॥ २१ ॥**

**वही ब्रह्मा की दिन-रात मनुष्यों का 'कल्पौ' (पु० द्व० भी होता है), 'कल्प' अर्थात् स्थिति और प्रलय का काल है।**

कल्पाविति ॥ ये दैवे युगसहस्रे तौ। कल्पयत स्थितिं प्रलय च। 'कृपू सामर्थ्ये' (भ्वा० आ० से०)। ण्यन्तात् (३।१।१२) पचाद्यच् (३।१।१३४)। 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' [इति मे० १०२।२ ] ॥ (१) ॥ ७ ॥ एकम् 'ब्रह्मणो दिनस्य'।

**मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः।**

**देवताओं के एकहत्तर युग का 'मन्वन्तरम्' (न) एक 'मन्वन्तर' अर्थात् चौदह मनुओं में से प्रत्येक मनु का स्थितिकाल होता है।**

मन्वन्तरमिति ॥ 'मनोरन्तरमवकाश ' इति विग्रह ॥७॥ एकाधिका सप्तति। सा च किंचिदधिकेति बोध्यम्। एकम् 'मन्वन्तरस्य'[१]।

---

१ तदुक्तं मनुना—"पित्र्ये रात्र्यहनी मास प्रविभागस्तु पक्षयो। कर्मचेष्टास्वह कृष्ण शुक्ल स्वप्नाय शर्वरी॥" इति (११६६)। अयमाशय —यथा आगतानां मते दिनारम्भो निशीथात् (रात्रेरुत्तरार्धभागात्) भवति, तथैवात्रापि ज्ञेयम्। एवञ्च पितृणां सूर्योदयकाल कृष्णपक्षाष्टम्या उत्तरार्धभागारम्भे, मध्याह्नकालोऽमावस्याया अन्तिमक्षणे, सायंकाल शुक्लपक्षाष्टम्या. पूर्वार्धसमाप्तिक्षणे, निशीथकालश्च पूर्णिमाया अन्तिमक्षणे भवतीति बोध्यम्।

२. तदुक्तं मनुना—"दैवे रात्र्यहनी वर्षं प्रविभागस्तयो पुन.। अहस्तत्रोदगयनं रात्रि स्यादृक्षिणायनम्॥" इति (१।६७)। अत्रापि पूर्वोक्त एव नियम, तेन देवानां सूर्योदयकालो मेषसंक्रमणाद्यक्षणे, मध्याह्नकालो मिथुनसंक्रमणस्य चरमक्षणे, सायंकाल. कन्यासंक्रमणस्यान्तिमक्षणे, निशीथकालश्च धनु संक्रमणस्यान्तिमक्षण इति बोध्यम्।

१ श्रीमद्भागवते चतुर्युगनामानि तन्मानञ्चेत्थम्—"कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्। दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम्॥ चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्यातानि सहस्राणि द्विगुणानि शतानि च॥ सन्ध्यांशयोरन्तरेण य काल शतसंख्ययोः। तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते॥" इति (३।११। १८।२०)। मनुरप्याह—"ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासत । एकैकशो युगानां तु क्रमशस्तान्निबोधत॥ चत्वार्याहु सहस्राणि वर्षाणां तत्कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविध॥ इतरेषु ससन्ध्येषु ससंध्यांशेषु च त्रिषु। एकापायेन वर्तन्ते सहस्राणि शतानि च॥ यदेतत्परिसंख्यातमादावेव चतुर्युगम्। एतद्द्वादशसाहस्रं देवानां युगमुच्यते॥ दैविकानां युगानां तु सहस्रं परिसंख्यया। ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च॥ तद्वै युगसहस्राणां ब्राह्मं पुण्यमहर्विदु। रात्रिं च तावतीमेव तेऽहोरात्रविदो जना॥" इति (१।६८-७३)। युगस्य पूर्वा संध्या, उत्तरश्च संध्यांश। तदुक्तं विष्णुपुराणे—"तत्प्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते। संध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि य॥ सन्ध्यासन्ध्यांशयोरन्तर्यं कालो मुनिसत्तम। युगाख्य स तु विज्ञेय कृतत्रेतादिसंज्ञक॥" वर्षसंख्या चात्र दिव्यमानेन, तस्यैवानन्तरप्रकृतत्वात्. "दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम्। चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे॥" इति (म० मुक्ता०)।

२ तदुक्तं मनुना—"यत्प्राग्द्वादशसाहस्रमुदितं दैविकं युगम्। तदेकसप्ततिगुण मन्वन्तरमिहोच्यते॥" इति (१।

**संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २५ ॥**

संवर्तः, प्रलयः, कल्पः, क्षयः, कल्पान्तः (५ पु), 'प्रलय-काल' के ५ नाम हैं।

---

७९) । विष्णुपुराणे चतुर्दश मनव उक्तास्तन्नामानि यथा—"मनुः स्वायंभुवो नाम मनुः स्वारोचिषस्तथा । औत्तमिस्तामसिश्चैव रैवतश्चाक्षुषस्तथा ॥ एते तु मनवोऽतीताः सप्तमस्तु रवेः सुतः । वैवस्वतोऽयं यस्यैतत् सप्तमं वर्तते युगम् ॥ सावर्णिर्दक्षसावर्णो ब्रह्मसावर्ण इत्यपि । धर्मसावर्णरुद्रस्तु सावर्णो रौच्यभौत्यवत् ॥" इति ।

### कालमानबोधकविवरणम्

| | | | | |
|---|---|---|---|---|
| १ निमेषः* | | $\frac{४}{९}$ विपला | | $\frac{८}{४५}$ सेकेण्ड |
| १८ निमेषाः | | १ काष्ठा (८ विपलाः) | | ३ $\frac{१}{५}$ सेकेण्ड |
| ३० काष्ठाः | | १ कला ( ४ पला. ) | | १ मिनट ३६ सेकेण्ड |
| ३० कलाः | | १ मुहूर्तः (घटीद्वयम्) | | ४८ मिनट |
| ३० मुहूर्ताः | | १ अहोरात्रः (मानुष.) | | २४ घण्टा |
| १५ अहोरात्राः | | १ पक्षः ( ,, ) | | १ दिनम् (पैत्र्यम्) |
| २ पक्षौ | | १ मासः ( ,, ) | | १ अहोरात्रः (पैत्र्यः) |
| १२ मासाः | | १ वर्षम् (मानुषम्) | | १ ,, (दिव्य.) |
| ३६० दिव्याहोरात्राः | | ३६० वर्षाणि(मानुषाणि) | | १ वर्षम् ( दिव्यम् ) |
| ४००० दिव्यवर्षाणि | | १४४००००मानुषवर्षाणि | | सत्ययुगस्य मुख्यमानम् |
| ४०० | ,, | १४४००० | ,, | ,, संध्यामानम् |
| ४०० | ,, | १४४००० | ,, | ,, संध्यांशमानम् |
| ४८०० | ,, | १७२८००० | ,, | ,, पूर्णं मानम् |
| ३००० | ,, | १०८०००० | ,, | त्रेतायुगस्य मुख्यं मानम् |
| ३०० | ,, | १०८००० | ,, | ,, संध्यामानम् |
| ३०० | ,, | १०८००० | ,, | ,, संध्यांशमानम् |
| ३६०० | ,, | १२९६००० | ,, | ,, पूर्णं मानम् |
| २००० | ,, | ७२०००० | ,, | द्वापरयुगस्य मुख्य मानम् |
| २०० | ,, | ७२००० | ,, | ,, संध्यामानम् |
| २०० | ,, | ७२००० | ,, | ,, संध्यांशमानम् |
| २४०० | ,, | ८६४००० | ,, | ,, पूर्णं मानम् |
| १००० | ,, | ३६०००० | ,, | कलियुगस्य मुख्य मानम् |
| १०० | ,, | ३६००० | ,, | ,, संध्यामानम् |
| १०० | ,, | ३६००० | ,, | ,, संध्यांशमानम् |
| १२०० | ,, | ४३२००० | ,, | ,, पूर्णं मानम् |
| १२००० | ,, | ४३२०००० | ,, | चतुर्युगानां पूर्णं मानम् |
| १२०००×७१ =८५२००० | ,, | ४३२००००×७१ =३०६७२०००० | ,, | १ मन्वन्तरमानम् |
| १२०००×१००० =१२०००००० | ,, | ४३२००००×१००० =४३२०००००० | | ब्रह्मणो १ दिनमानम् |
| ,, | ,, | ,, | ,, | ,, १ रात्रिमानम् |
| २४०००००० | ,, | ८६४०००००० | ,, | ,, १ अहोरात्रमानम् |

*"अक्षिपक्ष्मपरिक्षेपो 'निमेषः' परिकीर्तितः ।" इत्युक्तलक्षणोऽक्षिपरिस्पन्दनकालो निमेषः ।

संवर्त इति ॥ संवर्तते जगदत्र । 'हलश्च' (३।३।१२१) इति घञ् । 'संवर्तः प्रलयेऽक्षद्रौ' इति हैम [३।३२८] ॥ (१) ॥*॥ प्रलीयतेऽत्र 'लीङ् श्लेषणे' (दि० आ० अ०) । 'एरच्' (३।३।५६)। 'प्रलयो मृतौ । संहारे नष्टचेष्टत्वे' इति हैम [ ३।५२४–२५ ] ॥ ( २ ) ॥ * ॥ 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । कल्प्यन्ते विरुद्धलक्षणया क्षीयन्तेऽत्र । 'पुंसि–' ( ३।३।११८ ) इति घः । 'कल्पो विकल्पे कल्पद्रौ संवर्ते ब्रह्मवासरे । शास्त्रे न्याये विधौ' इति हेमचन्द्रः [ २।२९६ ] ॥ (३) ॥ * ॥ क्षीयन्ते प्राणिनोऽत्र । 'क्षि क्षये' ( भ्वा० प० से० ) । 'एरच्' ( ३।३।५६ ), 'पुंसि' (३।३।११८) इति घो वा । 'क्षयो गेहे च कल्पान्तेऽपचये रुजि' इति हैम [२।३५१] ॥ (४) ॥*॥ कल्पस्यान्तोऽवधिः । 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' इति शाश्वतः [ २०१ ] ॥ (५) ॥*॥ पञ्च 'प्रलयस्य' ।

**अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् ।**
**कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम् ॥ २६ ॥**

पङ्कम् (न पु), पाप्मा ( =पाप्मन्, पु ), पापम्, किल्बिषम्, कल्मषम्, कलुषम्, वृजिनम्, एनः ( =एनस् ), अघम्, अंहः ( =अंहस् ), दुरितम्, दुष्कृतम् ( १० न ), 'पाप' के १२ नाम हैं।

अस्त्रीति ॥ पच्यते दुःखमनेन । 'पचि व्यक्तीकरणे, विस्तारे वा' ( भ्वा० आ० से० ) । करणे घञ् ( ३।३।१९ ) । कुत्वम् (७।३।५२) । यद्वा—पञ्चनं पङ्को व्यक्तीकरणम्, विस्तारो वा । तं करोति । 'तत्करोति–' ( वा० ३।१।२६ ) इति णिच् । ततः पचाद्यच् ( ३।१।१३४ ) । 'पङ्कोऽघे कर्दमे' इति हैम [ २।१२ ] ॥ ( १ ) ॥ * ॥ आप्नोति व्याप्नोति लोकान् । 'आप्लृ व्याप्तौ' ( स्वा० प० अ० ) । 'नामन्सीमन्–' (उ० ४।१५१) इति सूत्रेण निपातितः ॥ (२) ॥ * ॥ पात्यस्मादात्मानम् । 'पा रक्षणे' ( अ० प० अ० ) । 'पानीविषिभ्यः पः' ( उ० ३।२३ ) । भीमादित्वात् ( ३।४।७४ ) अपादाने । यद्वा—पिबति भक्षयति कर्तारम् । 'पा पाने' (भ्वा० प० अ०) ॥ (३) ॥*॥ केलयति क्रीडयति विषयेषु । 'किल श्वैत्यक्रीडनयोः' ( तु०

---

"सत्ययुगमितवर्षाधिका एकसप्ततिचतुर्युगमिता ( ३०८४४८००० ) एतन्मितवर्षास्तदवकाश इति पुराणम् ।" इति वाच० ( ४७३६ ) । अत्र म० म० शि० द०—"नामनिधाने सर्वज्ञश्रीनारायणचरणाः 'दैविकानां युगानां तु सहस्रं ब्रह्मणो दिनम् । मन्वन्तरं तथैवैकं तस्य भागाश्चतुर्दश ॥' इत्यनेन स्फुटमेवोक्तवन्तः । तथा चैकस्य मन्वन्तरस्य ३०८५७१४२८ वर्षाणि ६ मासाः २५ दिनानि ४२ घटिकाः साग्राण्येकपञ्चाशतपलानि भवन्तीति मुकुटाशयः ।" इति ।

प० से० )। 'किलेर्बुक्च' (उ० १।५०) इति टिषच् बुगागमश्च। [ 'किल्बिषं पापरोगयो । अपराधेऽपि' इति मे० १६८।३४ ] ॥ ( ४ ) ॥*॥ शुभं कर्म स्यति समाप्तं करोति। 'षोऽन्तकर्मणि' (दि० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। पृषोदरादित्वात् (६।३।१०९) लत्वपरत्वे। 'कल्मषं किल्बिषे क्लीबं पुंसि स्यान्नरकान्तरे' [इति मे० १६७।३३ ] ॥ ( ५ ) ॥*॥ कलयति वशीकरोति। 'कल गतौ, संख्याने च' (चु० उ० से०)। 'पुंसिकिलिभ्य उषच्' (उ० ४।७५)। 'कलुषं त्वाविले पापे' [ इति मे० १६८।३४ ] ॥ (६) ॥*॥ वृज्यते। 'वृजी वर्जने' ( अ० आ० से० )। 'वृजे किच्च' ( उ० २।८७ ) इतीनच्। 'वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु' [ इति मे० ९२।३४ ] ॥ ( ७ ) ॥*॥ गम्यतेऽनेन। एति गच्छति प्रायश्चित्तेनेति वा। 'इण् गतौ' ( अ० प० से० )। 'इण आगसि' ( उ० ४।१९८ ) इत्यसुन्, नुडागमश्च। [ 'एनः पापापराधयोः' इति मे० १७१।१९ ] ॥ ( ८ ) ॥*॥ अङ्घते गच्छति दानादिना। 'अघि गतौ' ( भ्वा० आ० अ० )। पचाद्यच् (३।१।१३४)। आगमशास्त्रस्यानित्यत्वान्न नुम्। 'अघं तु स्याद् व्यसनैनसो' इति हैम [२।५३] ॥(९) ॥*॥ अमति गच्छति। 'अम गत्यादिषु' (भ्वा० प० से०)। 'अमेर्हुक्च' ( उ० ४।२१३ ) इत्यसुन्, हुगागमश्च। यद्वा—अंहति। 'अहि गतौ' (भ्वा० प० से०)। असुन् ( उ० ४। १८९)। 'अङ्हः' इति केचित्पठन्ति। तत्र 'अघि गतौ'(भ्वा० आ० से० ) धातुर्बोध्यः ॥ ( १० ) ॥*॥ इणो भावे क्त (३।३।११४)। दुष्टमित गमनमनेन ॥ (११) ॥*॥ दुष्टं कृतं करणमनेन। 'इदुदुपधस्य-' ( ८।३।४१ ) इति षः ॥ ( १२ ) ॥*॥ द्वादश 'पापस्य'।

**स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः।**

धर्मः (पु न), पुण्यम्, श्रेयः ( =श्रेयस् ), सुकृतम् ( ३ न ), वृषः ( पु ), 'धर्म' के ५ नाम हैं।

स्यादिति ॥ धरति विश्वम्। 'धृञ् धारणे' (भ्वा० उ० से० )। 'अर्तिस्तुसु-' ( उ० १।१४० ) इत्यादिना मन्। 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥'[इति मे० १०९।१६]॥(१) ॥*॥ पुनाति ['पूञ् पवने', क्र्या० उ० से०]। 'पूञो यण् णुग्घ्रस्वश्च' (उ० ५।१५) इति यत् णुक् ह्रस्वश्च। यद्वा—पुणति। 'पुण कर्मणि शुभे' ( तु० प० से० )। 'इगुपध-' ( ३।१।१३५ ) इति कः। पुणमर्हति। तत्र साधुर्वा। यत् (४।४।९८)। [ 'पुण्यं तु सुन्दरे। सुकृते पावने धर्मे' [इति हैम २।३७५] ॥ (२) ॥*॥ अतिशयेन प्रशस्यम्। 'द्विवचन-' ( ५।३।५७ ) इतीयसुन्। 'प्रशस्यस्य श्रः' ( ५।३। ६० )। 'श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्। श्रेयसी करिपिप्पल्यामभयापाठयोरपि ॥' इति मे० १७३। ४२-४३] ॥ (३) ॥*॥ सुष्ठु कृतम्। प्रादिसमासः (२। २।१८)।[ 'सुकृतं तु शुभे पुण्ये क्लीबं सुविहिते त्रिषु' इति मे० ६७।१७२] ॥ (४) ॥*॥ वर्षति फलम्। 'वृषु सेचने' ( भ्वा० प० से० )। इगुपधलक्षणः ( ३।१।१३५ ) कः। 'वृषो गव्याखुधर्मयोः। पुराशिभेदयोः शृङ्ग्या वासके शुक्लेऽपि च। श्रेष्ठे स्यादुत्तरस्थश्च' इति हैम [ २।५८४-८५] ॥ (५) ॥*॥ पञ्च 'धर्मस्य'।

**मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः ॥ २४ ॥**
**स्यादानन्दथुरानन्दशर्मशातसुखानि च।**

मुत् ( =मुद् ), प्रीतिः ( २ स्त्री ), प्रमदः, हर्षः, प्रमोदः, आमोदः, संमदः, आनन्दथुः, आनन्दः (७ पु), शर्म (=शर्मन्), शातम्, सुखम् ( ३ न ), 'हर्ष' के १२ नाम हैं।

मुदिति ॥ मोदनम् मुत्। 'मुद हर्षे' ( भ्वा० आ० से०)। सम्पदादि (वा० ३।३।१०८) ॥ (१) ॥*॥ 'प्रीञ् तर्पणे' ( क्र्या० उ० से० )। भावे क्तिन् ( ३।३।९४ )। [ 'प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्' इति मे० ५६।३४] ॥ (२) ॥*॥ 'मदी हर्षे' ( दि० प० से० )। 'प्रमदसम्मदौ हर्षे' (३।३।६८) इत्यप्। 'प्रमदः संमदे मत्ते स्त्रियामुन्मदयोषिति'[इति मे० ७७।३५] ॥ (३) ॥*॥ (७) ॥*॥ 'हृष तुष्टौ' (दि० प० से०)। घञ्। (३।३। १८) ॥ ( ४ ) ॥*॥ प्रमोदामोदौ घञन्तौ। 'आमोदो गन्धहर्षयोः' [ इति विश्व ७९।१७, मे० च ७६।२१ ] ॥ ( ५ ) ॥*॥ ( ६ ) ॥*॥ 'टुनदि समृद्धौ' ( भ्वा० प० से०)। 'ट्वितोऽथुच्' (३।३।८९) ॥ (८) ॥*॥ आनन्दो घञन्तः ॥ ( ९ ) ॥ * ॥ शृणाति अशुभम्। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५)। भावे वा ॥ ( १० ) ॥*॥ स्यति दुःखम्। 'शो तनूकरणे' (दि० प० अ०)। बाहुलकात्तन् (उ० ३।८५) भावे वा। यत्तु—स्यते सौत्रात्—इत्युक्तं मुकुटेन। तन्न। तस्य गणपठितत्वात्। सौत्रस्य तस्यादर्शनात् ॥ 'अनुपसर्गाल्लिम्प-' (३।१।१३८) इति सूत्रपठितात् 'साते' पचाद्यचि ( ३।१। १३४) 'सातम्' दन्त्यादि। यत्तु—सिनोत्यशुभम्। सातम्। 'षै क्षये' (भ्वा० प० अ०)—इत्युक्तं मुकुटेन। तन्न। सिनोतीति विग्रहोक्तधातूपन्यासस्य विरुद्धत्वात्। यदपि—स्यति दुःखम्। सातम्। 'षोऽन्तकर्मणि' (दि० प० अ०)—इति स्वामिनोक्तम्। तदपि न। स्यतेः क्ते 'द्यतिस्यति-' (७।४।४०) इतीत्वप्रसङ्गात्। तनस्त्वविधानात्। बाहुलकस्य त्वगतिकगतित्वात्। अत्र तूक्तगतेः सत्त्वात् ॥ (११) ॥ * ॥ शोभनानि खान्यनेन। 'सुख, दुःख, तत्क्रियायाम्' ( चु० उ० से० )। भावेऽच् ( ३।३।५६ ) वा। [ 'सुखं

१ '-मुत्तमयोषिति' इति पा०।

शर्मणि नावे च सुखा पुर्यां प्रचेतस' इति विश्व २२।३, मे० च २०।८ ] ॥ (१२) ॥*॥ द्वादश 'आनन्दस्य'।

**श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥**
**भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।**
**शस्तं च**

**श्वःश्रेयसम्, शिवम्, भद्रम्, कल्याणम्, मङ्गलम्, शुभम्, भावुकम्, भविकम्, भव्यम्, कुशलम् (१० न), क्षेमम्, शस्तम् (२ पु न), 'कल्याण' के १२ नाम हैं।**

श्वःश्रेयसमिति ॥ श्व आगामि श्रेयोऽत्र । श्वःश्रेयसम् । श्वसोऽवसीय श्रेयस' (५।४।८०) इत्यच् समासान्त । 'श्वःश्रेयसं तु कल्याणे परमात्मनि शर्मणि' [इति मे० १७४।६४] ॥*॥ श्वोवसीयसमपि वोध्यम् ॥ (१) ॥*॥ शेतेऽनेन । शिवम् । 'शीङ् स्वप्ने' (अ० आ०से०) । 'सर्वनीघृष्व-' (उ० १।१५३) इति वन्, ह्रस्वश्च निपातित । 'शिवं तु मोक्षे क्षेम सुखे जले। शिवो योगान्तर वेदे गुग्गुली वालके[१] हरे। पुण्डरीकद्रुमे कीले' [इति हैम २।५५०-५१] ॥(२)॥*॥ भन्दत । 'भदि कल्याणे' (भ्वा० आ० से०)। 'ऋज्रेन्द्र-' (उ० २।२८) इति रनि निपात्यते । 'भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके । करिजातिविशेषे ना क्लीव मङ्गलमुस्तयोः ॥ काञ्चने च स्त्रिया रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे प्रसारिण्या कट्फलानन्तयोरपि ॥ त्रिषु श्रेष्ठे च[२] साधौ च न पुंसि करणान्तरे' [इति मे० १२७।७०-७२] ॥*॥ पचाद्यचि (३।१।१३४) भन्दम् । 'भन्द[३] भद्रं शिवं तथा' इति त्रिकाण्डशेष [१।४।३२] । [ 'भन्दं कल्याणे सौख्ये च' इति हैम २।२३३ ] ॥ (३) ॥*॥ कल्यं नीरुजत्वमाणयति । 'कर्मण्यण्' (३।२।१) । कल्ये प्रातःकाले अण्यत । 'अण शब्दे' (भ्वा० प० से०)। 'अकर्तरि-' (३।३।१९) इति घञ्वा । 'कल्याणं हेम्नि मङ्गले' [इति हैम ३।२०२] ॥ (४) ॥*॥ 'मगि सर्पणे' (भ्वा० प० से०) । मङ्गति, मङ्ग्यते वा । 'मङ्गेरलच्' (उ० ५।७०) । 'मङ्गलं पुन । कल्याणे, मङ्गलो भौमे मङ्गला श्वेतदूर्विका' [इति हैम ३।७१३] ॥ (५) ॥*॥ शोभत । 'शुभ शोभायाम्'[४] (भ्वा० आ० से०)। 'इगुपध-' (३।१।१३५) इति क ॥*॥ शु पूजित भाति। 'आत-' (३।२।३) इति वो वा । 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डो वा । 'शुभो योगे शुभं भद्रे [शुभा कान्तीच्छयोर्मता' इति हैम २।३१६] ॥ (६) ॥*॥ भवनशीलम् । 'भू प्राप्तौ' (चु० आ० से०)। 'लषपतपद-' (३।२।१५४) इत्युकञ् ॥ (७) ॥*॥ 'भवो भद्राप्तिसत्तयो' इत्यजय । भवो भद्राप्तिरत्रास्ति । 'अत इनिठनौ' (५।२।११५) ॥ (८) ॥*॥ भवति । 'भव्यगेय-' (३।४।६८) इति साधु । ['भव्यं शुभे च सत्ये च योग्ये भाविनि तु त्रिषु । कर्मरङ्गतरौ पुंसि स्त्रिया करिमणोमयो ॥ क्लीवमस्थनि' इति मे० ११६।४२-४३] ॥ (९) ॥*॥ कुत्सितं शलते संवृणोति[१] । 'शल चलने संवरणे च' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४)। [यद्वा—कुश्यति । कुश संश्लेषणे कृशादित्वात् किलच्[२]]। 'कुशलं क्षेमपुण्ययो । पर्याप्तौ कुशलोऽभिज्ञे'[३] [इति हैम ३।६७३]॥(१०)॥*॥ क्षयत्यशुभम् । 'क्षि क्षये' (भ्वा० प० अ०)। मन् (उ० १।१४०) । अस्त्रियामिति क्षेममाध्वान्वयि । यत्तु—क्षिणोत्यशुभमिति विगृह्य 'क्षि क्षये' इति धातोरुपन्यसन मुकुटेन कृतम् । तदसंगतम् । 'क्षेमस्तु मङ्गले। लब्धसरक्षणे मोक्षे क्षेमोमाधनहर्यपि' [इति हैम २।३२२-२३] ॥ (११) ॥*॥ 'शसु स्तुतौ' (भ्वा० प० से०)। शस्यते स्म । क्त (३।२।१०२) ।—शस्यते । भावे क्त (३।३।११४)—इति मुकुट । 'शस्तं क्षेमे प्रशस्ते च' [इति हैम २।२०३, विश्व ५८।२७, मे० च ५८।६२] ॥ (१२) ॥*॥ द्वादश 'कल्याणमात्रस्य'।

**अथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ २६ ॥**

**'पाप, पुण्य' शब्द और 'सुख' शब्द से 'शस्त' शब्दतक १३ शब्द द्रव्यविशेष में प्रयुक्त होने पर त्रिलिङ्ग होते हैं।**

अथेति ॥ पापपुण्यशब्दौ सुखादि च शस्तान्तं शब्दजातं द्रव्ये वर्तमानं त्रिषु बोध्यम् । तत्र स्त्रियां कल्याणी । अन्ये टावन्ता ।

***मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।***
***प्रशस्तवाचकान्यमूनि***

**मतल्लिका, मचर्चिका (२ नि० स्त्री), प्रकाण्डम् (नि० न), उद्ध, तल्लज (२ पु), ये ५ किसी द्रव्यवाचक शब्द के साथ समस्त होकर अन्त में रहने से उसकी श्रेष्ठता को प्रकट करते हैं। इनका स्वतन्त्र प्रयोग नहीं होता।**

१ 'वालुके' इति पाठ ।

२ 'साधौ स्यान्न' इति पा० ।

३ त्रिकाण्डशेषे तु 'भद्रं भल्लं शिवं तथा' इति पाठो लभ्यते । तट्टीकाया च 'भल्लम्' इत्यस्य स्थाने 'भद्रम्' इत्यपि नामेति लिखितम् ।

४ 'शुभ दीप्तौ' इत्येव पाठ सर्वत्र तस्मादत्र 'शोभायाम्' इत्युक्ति समानार्थापेक्षया बोध्या ।

१ स्वामी तु 'कुशान् लाति, कुत्सितं श्यति वा कुशलम्' इत्येव विगृहीतवान् ।

२ कोष्ठस्थ पाठ क्वचिदधिक ।

३. 'कुशलो विज्ञे' इति पा० ।

मतल्लिकेति। मतल्लिकादयो नियतलिङ्गा, [ न तु विशेष्यनिघ्ना [1] ] अव्युत्पन्नाश्चेति प्राञ्च । व्युत्पत्तिरपि संभवति । मतं मतिमलति । 'अल भूषणादौ' ( भ्वा० प० से० ) । ण्वुल् (३।१।१३३), क्वुन् (उ० २।३२ ) वा । पृषोदरादित्वात् ( ६।३।१०९) अस्य ल ॥ ( १ ) ॥*॥ मं शंभु चर्चति । 'चर्च अध्ययने' (चु० उ० से० ) । ण्वुल् ( ३।१।१३३ ), क्वुन् (उ० २।२८) वा । 'म पुन. शम्भौ' इति हैम [ १।११ ] ॥ ( २ ) ॥ * ॥ प्रकृष्टं काण्डमवमरो, रमो वास्य । प्रगत काण्डो धर्मोऽस्मादिति वा । 'प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरो ' इति विश्वः [४५।२९, हैमश्च ३।१८७] ॥ (३) ॥ * ॥ उद्धशब्दस्तु 'सघोद्धौ गणप्रशसयो' (३।३।८६) इति निपातितः । उत्पूर्वात् हन्तेरप्, टिलोप, घत्व च निपात्यते । 'उद्धो हस्तपुटे वह्नौ श्लाघाया देहजागिते' इति हैम [ २।५३ ] ॥ ( ४ ) ॥*॥ प्रशस्त पुरुष = पुरुषमतल्लिका । ब्राह्मणमर्चिका । गोप्रकाण्डम् । मनुष्योद्ध ॥ * ॥ लजतीति लज । 'लज कान्तौ' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । तद्वत्लज तल्लज । कुमारीतल्लज ॥ ( ५ ) ॥ * ॥ प्रकाण्ड पुस्यपि । 'अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयो '। मतल्लिकादीना रूढिशब्दत्वात् 'प्रशमावचनैश्च' ( २।१।६६ ) इति समास । कृष्णसर्पवाप्यभावादिवदेते नित्यसमासा । उद्धस्त्वसमस्तोऽपीति स्वाम्यादय । पञ्च 'प्रशस्तस्य' ।

अयः शुभावहो विधिः ॥ २७ ॥

अयः ( पु ) 'शुभकारक भाग्य' का १ नाम है ।

अय इति ॥ एत्यनेन सुखम् । 'इण् गतौ–' ( अ० प० से० ) । 'पुंसि संज्ञायाम्' (३।३।११८) इति घ ॥ (१) ॥*॥ एकम् 'शुभावहविधे ' ।

दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।

दैवम्, दिष्टम्, भागधेयम्, भाग्यम् ( ४ न ), नियतिः ( स्त्री ), विधिः ( पु ), 'भाग्य' के ६ नाम हैं ।

दैवमिति ॥ देवादागतम् । 'तत आगत ' ( ४।३।७४ ) इत्यण् ॥ ( १ ) ॥ * ॥ दिश्यते उपदिश्यते स्म । 'दिश अतिसर्जने' ( तु० उ० अ० ) । क्त (३।२।१०२) ॥*॥ 'भाग्यैकदेशयोर्भाग.' इति रुद्र । भाग एव । 'भागरूपनामभ्यो धेय ' (वा० ५।४।३५)। ['भागधेयं मत भाग्ये भागप्रत्यययो पुमान्' इति मे० १२२।१२५ ] ॥ (३) ॥*॥ भज्यते । 'भज सेवायाम्' ( भ्वा० उ० अ० ) । 'ऋहलोर्ण्यत्' (३।१।१२४) । 'चजो –'(७।३।५२) इति कुत्वम् । —'भागाद्यच्च' ( ५।१।४९ ) इति स्वामी । 'भाग्यं कर्म शुभाशुभम्' [इति हैम २।३७८] ॥ (४) ॥ * ॥ नियम्यतेऽनया । क्तिन् ( ३।३।९४ ) । नियच्छति । 'क्तिच्क्तौ च–' ( ३।३।१७४ ) इति क्तिच् वा । अत एव 'स्त्री' इति विधानं सार्थकम् । 'नियतिर्नियमे दैवे' इति विश्व [ ६९।१५९, मे० च ६३।१२१ ] ॥ (५) ॥*॥ विधीयतेऽनेन । डुधाञ् [जु० उ० अ०] 'उपसर्गे घो कि' (३।३।९२) । 'विधिर्ब्रह्मविधानयो । विधिवाक्ये च दैवे च प्रकारे कालकल्पयो ॥' [ इति हैम २।२५२–५३ ] ॥ ( ६ ) ॥*॥ षट् 'प्राक्तनशुभाशुभकर्मण ' ।

हेतुर्ना कारणं बीजम्

हेतुः ( पु ), कारणम्, बीजम् ( २ न ), 'कारण' के ३ नाम हैं ।

हेतुरिति ॥ हिनोति व्याप्नोति कार्यम् । 'हि गतौ' (स्वा० प० अ०) । 'कमिमनि–' (उ० १।७२) इति तुन् ॥ (१) ॥ * ॥ कार्यतेऽनेन । ण्यन्ताल्ल्युट् (३।३।११७) ॥ —करोतीति 'ल्युट् च' (३।३।११५) इति चकाराल्ल्युट्– इति मुकुटस्त्वसंगत । 'कारण घातने हेतौ करणे, कारणा पुन । यातना कार्मण मन्त्रादियोगे कर्मकारके ॥' इति हैम. [ ३।२०६ ] ॥ (२) ॥ * ॥ विशेषेण जायतेऽनेन । 'उपसर्गे च संज्ञायाम्' ( ३।२।९९ ) इति डः । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घ । यद्वा–वीयते । 'व्येञ् संवरणे' (भ्वा० उ० अ०) । सपदादि क्विप् (वा० ३।३।१०८) । विर्यं संवृत जायते जनयति । अन्तर्भावितण्यर्थ । 'अन्येष्वपि–' ( ३।२।१०१ ) इति ड । विशेषेण ए कामात्, इना वा जायते । विशिष्टा ई लक्ष्मीर्जायतेऽस्मादिति वा । वजति कार्यं गच्छति । 'वज गतौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) । पृषोदरादित्वात् ( ६।३।१०९ ) ईत्वम् । ववयोरभेदाद्बीजम् । 'बीज तु रेतसि । स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे ॥' इति हैम [२।७४] ॥ (३) ॥*॥ त्रीणि 'कारणस्य' ।

निदानं त्वादिकारणम् ॥ २८ ॥

निदानम् ( न ), 'मूल कारण' का १ नाम है ।

निदानमिति ॥ नितरा दीयतेऽसाधारणतया जन्यतेऽनेन । 'डुदाञ् दाने' ( जु० उ० अ० ) । 'करणा–' ( ३।३।११७ ) इति ल्युट् । 'निदानं कारणे शुद्धौ तपसः फलयाचने । वत्सदाम्न्यवसाने च' [ इति हैम ३।४१५] ॥ (१) ॥ * ॥ आदिर्मुख्यं कारणम् ॥ ( २ ) ॥ * ॥ द्वे 'मुख्यकारणस्य' ।

क्षेत्रज्ञ आत्मा पुरुषः

क्षेत्रज्ञः, आत्मा ( =आत्मन् ), पुरुषः ( ३ पु ), 'शरीर के अधिष्ठातृ देव' के ३ नाम हैं ।

१. कोष्ठस्थ. पाठः क्वचिदधिक' ।

क्षेत्रज्ञ इति ॥ क्षीयते इति क्षेत्रं शरीरम् । तज्जानाति । 'ज्ञा अवबोधने' ( क्र्या० प० अ० ) । 'आतोऽनु—' ( ३।२।३) इति क । यत्तु—क्षेत्रं जानाति–इति मुकुट । तन्न । 'एतद्यो वेत्ति–' इति भगवत्यस्तगीता [ १३।१ ]विरोधात् । 'क्षेत्रज्ञावात्मनिपुणौ' इति हैम [३।१५०]॥ (१) ॥ * ॥ अतति । 'अत सातत्यगमने' ( भ्वा० प० से० )। 'सातिभ्या मनिन्मनिणौ' ( उ० ४।१५३ ) इति मनिण् । [ आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयो ॥ स्वभावे' इति हैम. २।२६१-६२ ] ॥ ( २ ) ॥ * ॥ पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । 'पुर कुषन्' ( उ० ४।७४ ) । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घत्वे 'पूरुष' अपि । पूरयति । 'पूरी आप्यायने' ( दि० आ० से० ) । बाहुलकात्कुषन् । 'पुरुषस्त्वात्मनि नरे पुन्नागे च' इति हैम [ ३।७८१ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'आत्मन' ।

प्रधानं प्रकृतिः स्त्रियाम् ।

**प्रधानम् ( न ), प्रकृतिः ( स्त्री ), 'सत्त्वगुण, रजोगुण और तमोगुण की साम्यावस्था' के २ नाम हैं ।**

प्रधानमिति ॥ प्रधत्तेऽत्र सर्वम् । ल्युट् (३।३।११७), प्रधत्ते सर्वमात्मनीति वा । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । प्रकृष्टं धानमनेन वा । 'प्रधानं प्रकृतौ बुद्धावुत्तमे[1] परमात्मनि । महामात्रे' इति हैम [ ३।४१६ ] ॥ ( १ ) ॥ * ॥ प्रकृष्टा कृति कार्यं यस्या., प्रकरोतीति वा । क्तिन् ( ३।३।१७४ ) । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयो । योनौ लिङ्गे पौरवर्गे' [ इति मे० ६३। १३२ ] ॥ ( २ ) ॥ * ॥ द्वे 'मायाया' ।

**विशेषः कालिकोऽवस्था**

**अवस्था ( स्त्री ), 'समयकृत विशेष' अर्थात् 'उम्र' का १ नाम है ।**

विशेष इति ॥ कालकृतो धर्मो यौवनादिविशेषोऽवस्था । कालेन निर्वृत्त । 'निर्वृत्तेऽक्षद्यूतादिभ्य' (४।४।१९) इति ठक् । अवपूर्वात्तिष्ठतेरङ् ( ३ ३।१०६ ) । 'व्यवस्थायाम्' ( १।१।३४ ) इति ज्ञापकात् ॥ (१) ॥ * ॥ एकम् 'कालावस्थाया' ।

गुणाः सत्त्वं रजस्तमः ॥ २९ ॥

**सत्त्वम्, रज· ( =रजस् ), तमः ( तमस् ३ । न ), ये ३ 'प्रकृति के धर्म' हैं । उनका क्रमश· 'सत्त्वगुण, रजोगुण, और तमोगुण' यह १-१ नाम है ।**

गुणा इति ॥ सतो भाव सत्त्वम् । सीदन्त्यस्मिन् गुणादय इति वा । सदेस्त्वन् (उ० ४।१०५)। 'सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयो । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु' [इति हैम २।५५३]॥(१)॥*॥ रञ्जयति । 'भूरञ्जिभ्या कित्'(उ० ४।२१७) इत्यसुन् । ['रजो रेणुपरागयो । स्त्रीपुष्पे गुणभेदे च' इति हैम २।६०१-२ ]॥ (२) ॥*॥ ताम्यत्यनेन । 'तमु ग्लानौ' (दि० प० से०) । असुन् ॥*॥ कप्रत्यये 'रजतमौ' अदन्तपुलिङ्गावपि । 'पुष्पे वेशे गुणे चैव रजोऽस्य रजसा सह' इत्युत्पलिनी । 'रजोऽथ रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजय ॥ ( ३ ) ॥*॥ 'त्रयाणां गुणानामपि' एकैकम् ।

**जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ॥**

**जनुः ( =जनुस् ), जननम्, जन्म ( =जन्मन् । ३ न ), जनि, उत्पत्तिः ( २ स्त्री ), उद्भवः ( पु ), 'उत्पत्ति' अर्थात् 'पैदा होने या जन्म लेने' के ६ नाम हैं ।**

जनुरिति ॥ जननम् । 'जनी प्रादुर्भावे' ( दि० आ० से० ) । 'जनेरुसि' (उ० २।११५)॥(१)॥*॥ ल्युटि (३। ३।११५) जननम् । यत्तु—'जन जनने' (जु० प० से०)—इति मुकुटेनोक्तम् । तन्न । तस्य छान्दसत्वात् । [ 'जननी तु दयामात्रोर्जननं वंशजन्मनो ' इति मे० ८७।६६]॥ (२) ॥ * ॥ मनिनि ( उ० ४।१४५ ) जन्म ॥ * ॥ 'इषियुधीन्धि–' (उ० १।१४५) इति मनि जन्मशब्दोऽदन्त पुल्लिङ्ग । 'क्लीबोऽपि' इत्युज्ज्वलदत्त ॥ ( ३ ) ॥ * ॥ 'जनिघसिभ्यामिण्' (उ० ४।१३०) । 'जनिवध्योश्च' ( ७। ३।३५) इति वृद्धिनिषेध । उत्पत्तिसाहचर्याज्जने स्त्रीत्वम्॥ (४) ॥ * ॥ उत्पदनम् । 'पद गतौ' (दि० आ० अ०) । क्तिन् ( ३।३।९४ ) ॥ (५) ॥ * ॥ उद्भवनम् । 'ऋदोरप्' ( ३।३।५७ ) ॥ (६) ॥ * ॥ षट् 'जननस्य' ।

**प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥**

**प्राणी ( =प्राणिन् ), चेतन', जन्मी ( =जन्मिन् ), जन्तु', जन्यु', शरीरी ( =शरीरिन् । ६ पु ), 'प्राणी' के ६ नाम हैं ।**

प्राणीति । प्राणा सन्त्यस्य । 'अत इनि–'(५।२।११५) इतीनि ॥ (१) ॥*॥ चेतयते, चेतति [ 'चित सचेतने', चु० आ० से०, 'चिती सञ्ज्ञाने', भ्वा० प० से० ] वा । नन्द्यादि (३।१।१३४) । 'चेतनः स्यात्सहृदयप्राणिनोश्चेतना तु धी ' [ इति हैम ३।४०२ ] ॥ ( २ ) ॥ * ॥ जन्मास्यास्ति । 'अत इनि–' ( ५।२।११५ ) । नान्तात्तु व्रीह्यादित्वात् ( ५।२।११६ ) ॥ (३) ॥ * ॥ जायते । 'कमिगमिजनि–' ( उ० १।७३ ) इति तुन् ॥ (४) ॥*॥ 'यजिमनि–' ( उ० ३।२० ) इति युच् । जन्यु [ 'जन्युः स्याज्जन्तुमात्रे च पावके परमेष्ठिनि' इति हैम २।३६६] ॥ ( ५ ) ॥*॥ शरीरमस्यास्ति । इनि ( ५।२।११५ ) ॥ ( ६ ) ॥*॥ षट् 'प्राणिन.' ।

---

१. 'बुद्धावुत्ताने' इति पा० ।

**जातिर्जातं च सामान्यम्**

**जातिः ( स्त्री ), जातम्, सामान्यम् ( २ न ), 'जाति' के ३ नाम हैं।**

जातिरिति ॥ जायते । 'जनी प्रादुर्भावे' ( दि० आ० से० ) । क्तिच्क्तौ च–' ( ३।३।१७४ ) इति क्तिच् । 'जनसन–' ( ६।४।४२ ) इत्यादिनात्वम् । 'तितुत्र–' ( ७।२।९ ) इति नेट् । 'जातिः सामान्यगोत्रयोः । मालत्यामामलक्यां च चुल्ल्यां काम्पिल्लजन्मनोः ॥ जातीफले छन्दसि च' इति हैमः [२।१७१-७२] ॥(१)॥*॥ क्ते (३।३।१७४) जातम् । 'जातं व्यक्तौघजन्मसु । क्लीबं, त्रिलिङ्गमुत्पन्ने' [ इति मे० ५५।१८-१९ ] ॥ ( २ ) ॥ * ॥ समानानां भावः । 'गुणवचन–' ( ५।१।१२४ ) इति ष्यञ् ॥ (३) ॥*॥ त्रीणि 'घटत्वादिजातेः' ।

**व्यक्तिस्तु पृथगात्मता ।**

**व्यक्तिः, पृथगात्मता ( २ स्त्री ), 'व्यक्ति' के २ नाम हैं।**

व्यक्तिरिति ॥ व्यज्यतेऽनया । 'अञ्जू व्यक्त्यादौ' ( रु० प० से० )। 'स्त्रियां क्तिन्' ( ३।३।९४ ) । व्यनक्ति वा । क्तिच् (३।३।१७४) ॥ (१) ॥*॥ पृथगात्मा यस्य, तस्य भावः । तल् ( ५।१।११९ ) ॥ ( २ ) ॥*॥ द्वे 'घटादिव्यक्तेः' ।

**चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥ ३१ ॥**

इति कालवर्गः ॥ ४ ॥

**चित्तम्, चेतः (चेतस्), हृदयम्, स्वान्तम्, हृत् (=हृद्), मानसम्, मनः ( =मनस् । ७ न ), 'मन या चित्त' के ७ नाम हैं।**

चित्तमिति ॥ 'चिती संज्ञाने' ( भ्वा० प० से० ) । भावे क्तः (३।३।११४) । 'श्वीदित –'(७।२।१४) इतीण्निषेधः ॥(१)॥*॥ असुनि (उ० ४।१८९) चेतः ॥(२)॥*॥ ह्रियते विषयैः 'वृहो पुग्दुकौ च' (उ० ४।१००) इति कयन् दुगागमश्च । हरति आहरति विषयानिति वा । ['हृदयं वक्षसि स्वान्ते बुक्कायाम्' इति हैम ३।५४६]॥(३)॥*॥ 'स्वन शब्दे'(भ्वा० प० से०)। स्वन्यते स्म । 'क्षुब्धस्वान्त–' ( ७।२।१८ ) इति मनसि निपातितम् । [ स्वान्तं चेतसि गह्वरे' इति मे० ५९।६९] ॥ ( ४ ) ॥*॥ हृदयस्य 'पदन्नस्–' ( ६।१।६३ ) इति हृदादेशः । प्रभृतिग्रहणस्य प्रकारार्थत्वात्क्वचित्स्वादावपि । हरते क्विप् ( ३।२।१७८ ) । तुक् ( ६।१।७१ ) । व्यत्ययेन तस्य द इत्यन्ये । [ 'हृत् क्लीबं बुक्कचित्तयोः' इति मे० ७५।१७ ] ॥ (५) ॥*॥ मन्यतेऽनेन । असुन् (उ० ४।१८९) । प्रज्ञादौ (५।४।३८) मानसम् । [ 'मानसं स्वान्तसरसो' इति हैम ३।७९५ ] ॥ (६)॥*॥ तदभावे मनः । [ 'मनश्चित्ते मनीषायाम्' इति मे० १७२।३० ] । अर्धर्चादि (२।४।३१) अयम्–इत्येके । तदा 'मनाः' इत्यपि ॥ (७) ॥*॥ सप्त 'मनसः' ।

इति कालवर्गविवरणम् ॥ ४ ॥

## अथ धीवर्गः ॥ ५ ॥

**बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।**
**प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥**

**बुद्धिः, मनीषा, धिषणा, धीः, प्रज्ञा, शेमुषी, मतिः, प्रेक्षा, उपलब्धिः, चित् (=चिद्), संवित् (=संविद्), प्रतिपत् (=प्रतिपद्), ज्ञप्तिः, चेतना ( १४ स्त्री ), 'बुद्धि' के १४ नाम हैं।**

बुद्धिरिति ॥ बुध्यतेऽनया । बोधनं वा । क्तिन् (३।३।९४)॥(१)॥*॥ 'ईष गतिहिंसादर्शनेषु'(भ्वा० आ०से०)। 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यप्रत्ययः । मनस ईषा । शकन्ध्वादित्वात् ( वा० ६।१।९४ ) टेः पररूपम् ॥ (२) ॥*॥ धृष्णुवन्त्यनया । 'ञिधृषा प्रागल्भ्ये'(स्वा० प० से०)। 'धृषेर्धिष् च संज्ञायाम्' ( उ० २।८२ ) इति युच् ॥ (३) ॥ * ॥ ध्यायन्त्यनया । ध्यानं वा । 'ध्यायतेः संप्रसारणं च' ( वा० ३।२।१७८ ) इति क्विप् । 'हलः' (६।४।२) इति दीर्घः । [ 'धीर्ज्ञानभेदे बुद्धौ च–' इति मे० ७८।२ ] ॥ (४) ॥*॥ प्रज्ञायतेऽनया । प्रज्ञानं वा । 'ज्ञा अवबोधने' (क्र्या० प० अ०) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । [ 'प्रज्ञस्तु पण्डिते वाच्यलिङ्गो, बुद्धौ तु योषिति' इति मे० ३३।२ ] ॥*॥ अत्रापि । 'प्रज्ञा श्रद्धा धरा शक्तिः पण्डा संवेदनं धियः' इति शब्दार्णवात् ॥ (५) ॥*॥ शेते । शेः विच् ( ३।२।७५ ) । मोहः । तं मुष्णाति । शमुषी । 'मुष स्तेये' (क्र्या० प० से०) । मूलविभुजादित्वात् ( वा० ३।२।५ ) कः । गौरादित्वात् (४।१।४१) ङीष् ॥ (६)॥*॥ मन्यतेऽनया । मननं वा । 'मन ज्ञाने' ( दि० आ० अ० ) । क्तिन् (३।३।९४)।['मतिर्बुद्धीच्छयोः' इति हैम २।१८९] ॥(७) ॥*॥ प्रकृष्टमीक्षणम् अनया । 'गुरोश्च–' (३।३।१०३) इत्यः । टाप् (४।१।४) । 'प्रेक्षा धीरीक्षणं नृत्तम्' इति हैम [२।५७९]॥(८) ॥*॥ उपलम्भनम् । उपलभ्यतेऽनया वा । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०)। षित्वात् ( ३।३।१०४ ) अङि प्राप्ते आबादित्वात् ( वा० ३.३।९४ ) बाहुलकाद्वा क्तिन् । [ 'उपलब्धिर्मतौ प्राप्तौ' इति हैम ४।१५७ ] ॥ (९) ॥ * ॥ 'चिती संज्ञाने' ( भ्वा० प० से० ) । संपदादित्वात् ( वा० ३।३।१०८ ) क्विप् । चित् तान्ता ॥ ( १० ) ॥ ॥ संवेदनम् । 'विद ज्ञाने' (अ० प० से० ) । ['संवित् संभाषणे ज्ञाने संग्रामे नाम्नि तोषणे । क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि ॥' इति हैम. २।२३९ ] ॥ (११) ॥*॥ प्रतिपदनम् । 'पद गतौ'

(दि० आ० से०)। सम्पदादित्वात् (वा० ३।३।१०८) क्विप्। करणे वा। [ 'प्रतिपत्तिर्विदि स्त्रियौ' इति हैम ३।३६४ ] ॥ (१२) ॥*॥ 'ज्ञप मिच्च' (चु० प० से०) चुरादि। ण्यन्तत्वाद्युचि ( ३।३।१०७ ) प्राप्ते आवादित्वात् ( वा० ३।३।९४ ), बाहुलकाद्वा क्तिन्। यदा तु चुरादीना णिज-भावे सामान्यापेक्ष ज्ञापकम्। तदा क्तिन् न्याय्य एव। 'ति-तुत्र–' (७।२।९) इति नेट्॥ (१३) ॥*॥ 'चित सचेतने' ( चु० आ० से० ) चुरादि। 'ण्यासश्रन्थ –' (३।३।१०७ ) इति युच्। 'चेतना सविदि स्त्रियाम्। वाच्यवत्प्राणयुक्ते' [ इति मे० ८७।६३–६४ ] ॥ ( १४ ) ॥*॥ चतुर्दश 'बुद्धे'।

**धीर्धारणावती मेधा**

**मेधा ( स्त्री ), 'धारणा शक्तिशाली बुद्धि' का १ नाम है।**

धीरिति॥ धारणाशक्तियुक्ता धी। 'मेधृ सगमे' (भ्वा० उ० से०)। मेधते सगच्छते सर्वमस्याम्। 'गुरोश्च–' (३।३।१०३ ) इत्यकार। [ 'मेधा बुद्धौ, क्रतौ पुमान्' इति मे० ७९।१३ ] ॥ (१) ॥*॥ एकम् 'धारणावद्बुद्धे'।

**सङ्कल्पः कर्म मानसम्।**

**अवधानं समाधानं प्रणिधानं तथैव च [ ४४ ]**

**संकल्प ( पु ), 'संकल्प, मानसिक कर्म' का १ नाम है।**
**[ अवधानम्, समाधानम्, प्रणिधानम् (३ न), 'समाधान' के ३ नाम हैं ]।**

सङ्कल्प इति। इदमिद कुर्यामिति मनस कर्म व्यापार। सङ्कल्पनम्। 'कृपू सामर्थ्ये' (भ्वा० आ० से०)। भावे घञ् (३।३।१८) ॥ (१) ॥*॥ एकम् 'मनोव्यापारस्य'।

**चित्ताभोगो मनस्कारः**

**चित्ताभोग, मनस्कार (२ पु), 'सुखादि में मन के लगे रहने' के २ नाम हैं।**

*चित्तेति॥ चित्तस्य मनस आभोगस्तदेकप्रवणता पूर्णता* वा। 'आभोगो वारुणच्छत्रे पूर्णतायत्नयोरपि' [इति विश्व २६।३०, मे० च २३।२९]। 'भुज पालनाभ्यवहारयो' (रु० प० अ०)। भावे घञ् ( ३।३।१८ ) ॥ ( १ ) ॥*॥ मनस कारो व्यापारविशेष। 'डुकृञ्' ( त० उ० अ० )। भावे घञ् (३।३।१८)। 'अत कृकमि–' (८।३।४६) इति सत्वम्॥ (२) ॥*॥ द्वे 'मनस. सुखादौ तत्परत्वस्य'।

**चर्चा सङ्ख्या विचारणा॥ २॥**

**विमर्शो भावना चैव वासना च निगद्यते [ ४५ ]**

**चर्चा, सङ्ख्या, विचारणा (३ स्त्री), 'प्रमाणों के द्वारा किसी विषय के विचार करने' के ३ नाम हैं।**

**[ विमर्श (पु), भावना, वासना (२ स्त्री), 'बीती हुई बात आदि के संस्कार' के ३ नाम हैं ]।**

चर्चेति॥ 'चर्च अध्ययने' ( चु० उ० से० )। चुरादिण्यन्ताद्भावे 'चिन्तिपूजि–' (३।३।१०५) इत्यङ्। ['चर्चा स्याच्चर्ममुण्डाया चिन्तास्थासकयोरपि' इति हैम २।५८ ] ॥ ( १ ) ॥*॥ सङ्ख्यानम्। 'चक्षिङ ख्याञ्' (२।४।५४)। 'आतश्च–'(३।३।१०६) इत्यङ्। 'संख्यैकादौ विचारे च'॥ (२) ॥*॥ 'चर असशये'[1] ( चु० उ० से० ) चुरादि। 'ण्यास–' (३।३।१०७ ) इति युच्॥ (३) ॥*॥ त्रीणि 'विचारस्य'।

**अध्याहारस्तर्क ऊहः**

**अध्याहार, तर्क, ऊह (३ पु), 'तर्क' के ३ नाम हैं।**

अध्याहार इति॥ अध्याहरणम्। अध्याङ्पूर्वो 'हृञ्' (भ्वा० उ० अ०)। भावे घञ् (३।३।१८)॥(१)॥*॥ अपूर्वोत्प्रेक्षण तर्कणम्। 'तर्क भाषार्थ' [चु० प० से०] चुरादौ 'पटपुट–'इति दण्डके पठित। भावे घञ् (३।३।१८)। कृन्तति, कृन्तते वा। अच्(३।१।१३४)घञौ (३।३।१९)। पृषोदरादित्वात् ( ६।३।१०९ ) वर्णविपर्यय। 'तर्को वितर्के काङ्क्षायामूहकर्मविशेषयो' इति हैम [२।९]॥ (२) ॥*॥ ऊहनम्। 'ऊह वितर्के' (भ्वा० आ० से०)। भावे घञ् (३।३।१८ ) ॥ (३) ॥*॥ त्रीणि 'तर्कस्य'।

**विचिकित्सा तु संशयः।**

**संदेहद्वापरौ च**

**विचिकित्सा ( स्त्री ), संशय, सन्देह, द्वापर (३ पु), 'सन्देह' के ४ नाम हैं।**

विचिकित्सेति॥ 'कित सशये' ( भ्वा० प० से० )। 'गुप्तिज्किद्भ्य सन्' ( ३।१।५ )। 'अ प्रत्ययात्' ( ३।३।१०२ )। विचिकित्सा॥ (१) ॥*॥ 'शीङ् [ स्वप्ने ] (अ० आ० से०)। 'एरच्' (३।३।५६)। सशय॥ (२) ॥*॥ 'दिह उपचये' ( अ० उ० अ० )। सदेहनम्। घञ् ( ३।३।१८ ) ॥ (३) ॥*॥ द्वौ परौ प्रकारौ यस्य। 'सर्वनामसङ्ख्ययो –' (वा० २।२।३५) इति द्विशब्दस्य पूर्वनिपात। पृषोदरादित्वात्(६।३।१०९)आत्वम्। [ 'द्वापरं सशये युगे' इति हैम ३।६०० ] ॥ (४) ॥*॥ चत्वारि 'एकधर्मिणि विरुद्धानेककोटयवगाहिज्ञानस्य'।

**अथ समौ निर्णयनिश्चयौ॥ ३॥**

**निर्णय, निश्चय ( २ पु ), 'निश्चय' के २ नाम हैं।**

अथेति॥ 'णीञ् प्रापणे' (भ्वा० उ० अ०)। निर्णयनम्। 'एरच्' ( ३।३।५६ )। 'उपसर्गादसमासेऽपि–' (८।४।१४) इति णत्वम्॥ (१) ॥*॥ 'चिञ् चयने' ( स्वा० उ० अ० )। निश्चयनम्। 'ग्रहवृदृ–' (३।३।५८) इत्यप्॥ (२) ॥*॥ द्वे 'निश्चयस्य'।

---

१ 'चर सशये' इत्येव पाठ सि० कौ०।

मुक्तिरिति ॥ मोचनम् । 'मुच्लृ मोक्षणे' ( तु० उ० अ० ) । क्तिन् ( ३।३।९४ ) । 'मुक्तिर्मोचनमोक्षयोः' इति हैम [ २।१९१ ] ॥ (१) ॥ * ॥ केवलस्य भाव । 'गुणवचन–' ( ५।१।१२४ ) इति ष्यञ् । (२) ॥*॥ निर्वान्त्यत्र । भावे वा । 'क्तोऽधिकरणे च–' ( ३।४।७६ ) इति, 'नपुंसके भावे–' ( ३।३।११४ ) इति वा क्त । 'निर्वाणोऽवाते–' ( ८।२।५० ) इति निष्ठानत्वम् । यद्वा–अधिकरणे भावे वा ल्युट् [ ३।३।११७, ११४ ] । बन्धान्निर्गमनमित्यर्थः । 'निर्वाणं मोक्षनिर्वृत्योर्विधाने करिमज्जने' इति हैम [३।२२२] ॥ (३) ॥*॥ अतिशयेन प्रशस्य श्रेय । 'श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते तु वाच्यवत्' [ इति मे० १७३।४२ ] ॥ (४) ॥*॥ नितरां श्रेय निःश्रेयसम् । 'अचतुर–' ( ५।४।७७ ) इति निपातितम् । 'निःश्रेयसं तु कल्याणमोक्षयोः शंकरे पुमान्' [ इति मे० १७४।५६ ]॥(५)॥*॥ अविद्यमानं मृतं मरणमत्र । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः ॥' [ इति मे० ५९।७७ ] ॥ (६) ॥*॥ 'मोक्ष अवसाने' (चु० उ० से०)। अवसानं क्षेपः । चुरादि । 'एरच्' ( ३।३।५६ ), घञ् ( ३।३।१८ ) वा । 'मोक्षो निःश्रेयसे वृक्षविशेषे मोचने मृतौ' इति हैम [२।५८३] ॥ (७) ॥*॥ अपवर्जनम् । 'वृजी वर्जने' (अ० आ० से०) । घञ् । 'अपवर्गस्त्यागमोक्षयोः । क्रियावसाने[3] साकल्ये' इति हैम [ ४।४७-४८ ]॥(८)॥ *॥ अष्टौ 'मोक्षस्य' ।

**अथाज्ञानमविद्याऽहंमतिः स्त्रियाम् ।**

अज्ञानम् ( न ), अविद्या, अहम्मति ( २ स्त्री ), 'अज्ञान' के ३ नाम हैं ।

अथेति ॥ ज्ञानविरुद्ध । मुज्ञाननिवर्त्यत्वात् (१) ॥*॥ 'विद ज्ञाने' ( अ० प० से० )। वेदनम् । 'संज्ञाया समज–' (३।३।९९) इति क्यप् । अविद्या विद्याविरुद्धा ॥ (२) ॥*॥ अहमिति विभक्तिप्रतिरूपकमव्ययमहंकारार्थम् । अहंप्रधाना मति ॥ (३) ॥*॥ त्रीणि 'अज्ञानस्य' ।

**रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥**
**गोचरा इन्द्रियार्थाश्च**

रूपम् ( न ), शब्द , गन्ध , रस , स्पर्श ( ४ पु ), ये ५ 'नेत्रादि एक-एक इन्द्रिय के एक-एक विषय' के नाम हैं ।

रूपमिति ॥ रोपयति विमोहयति । 'रुपु विमोहने' (दि० प० से०) । अम् ( ३।३।१३४ ) । 'अन्येषामपि–' (६।३।१३७) इति दीघ । यद्वा–'रूप रूपकरणे' (चु० उ० से०) इति चौरादिकस्यायमप्यर्थः । यद्वा–रूयते स्तूयते । 'रु शब्दे' (अ० प० अ०) । 'खष्पशिल्प–' (उ० ३।२८) इति पप्रत्ययो दीर्घश्च निपातित । 'रूपं तु श्लोकशब्दयोः । पशावाकारे[1] सौन्दर्ये, नाणके नाटकादिके ॥ ग्रन्थावृत्तौ स्वभावे च' इति हैम [२।३०१–२] ॥ (१) ॥*॥ शप्यते आक्रुश्यते । 'शप आक्रोशे' (भ्वा०, दि० उ० अ०)। 'शाशपिभ्यां ददनौ' (उ० ४।९७) इति दन् । 'शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ' इति हैम [२।२३८] ॥ (१)॥*॥ गन्धयति 'गन्ध अर्दने' ( चु० आ० से० ) । अच् ( ३।१।१३४ ) । 'गन्धः सबन्धलेशयोः । गन्धकामोदगर्वेषु[2]' इति हैम [२।२४२–४३]॥(१)॥*॥ रस्यते । 'रस आस्वादने' (चु० प० से०) चुरादि । 'एरच्' (३।३।५६), घञ् (३।३।१८) वा । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः ॥ देहधातुप्रभेदे च पारदस्वादयो पुमान्' इति हैम[3] ॥ ( १ ) ॥*॥ 'स्पृश संस्पर्शने' (तु० प० से०)। 'अकर्तरि च–' (३।३।१९) इति घञ् । 'स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि' इति हैम [२।५६८]॥ (१) ॥*॥ विषिन्वन्ति निबध्नन्तीन्द्रियाणि । 'षिञ् बन्धने' (स्वा० उ० अ०) । पचाद्यच् (३।१।१३४) । 'परिनिवि–' (८।३।७०) इति षत्वम् । 'विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयोः । शब्दादौ जनपदे च' इति हैम [३।५३६–३७] ॥ (१) ॥ * ॥ गाव इन्द्रियाणि चरन्त्येषु । 'करणाधिकरणयो' [३।३।११७] इत्यधिकारे 'गोचरसंचर–' (३।३।११९)इति निपातित ॥ (२)॥*॥ इन्द्रियैरर्थ्यन्ते । 'अर्थ याच्ञायाम्' ( चु० आ० से० )। कर्मणि घञ् (३।३।१९)॥ (३) ॥*॥ पञ्चानामपि प्रत्येकं त्रीणि 'विषयाणाम्' ।

**हृषीकं विषयीन्द्रियम् ।**

हृषीकम्, विषयि (=विषयिन्), इन्द्रियम् (३ न), 'इन्द्रियों' के ३ नाम हैं ।

हृषीकमिति ॥ हृष्यत्यनेन । 'हृषु अलीके'(भ्वा० प० से०) । 'अलिहृषिभ्यां कित्' ( उ० ४।१७ ) इति करणे ईकन् ॥ ( १ ) ॥ * ॥ विषयोऽस्यास्ति । इनि ( ५।२।११५)। [ 'विषयी विषयासक्ते वाच्यवत् क्लीबमिन्द्रिये । पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च ॥' इति मे० ९८।१०८–९] ॥ (२) ॥*॥ इन्द्रस्यात्मनो लिङ्गम् । 'इन्द्रियमिन्द्रलिङ्गम्–' (५।२।९३) इत्यादिना घच् निपातित । 'इन्द्रियं तु चक्षुरादिषु रेतसि' इति हैम [ ३।५११ ] ॥ (३) ॥*॥ त्रीणि 'इन्द्रियाणाम्' ।

१ विधाते' इति पा० ।
२ 'च' इति पा० ।
३ 'क्रियावसानसाफल्येऽपि' इति पा० ।

१ 'पशावाकारे' इति पा० ।
२ 'मोदगर्वेषु' इति पा० ।
३ पाठोऽयं हैमे नास्ति । मेदिन्यां तु (१७०।९–१०) समुपलभ्यते ।
४ 'वर्गान्तरे' इति पा० ।

**कर्मेन्द्रियं तु पाय्वादि**

कर्मेन्द्रियम् (न), 'काम करने वाली गुदा आदि इन्द्रियों' का १ नाम है।

कर्मेति ॥ कर्मसाधकमिन्द्रियं कर्मेन्द्रियमुच्यते ॥ (१) ॥*॥ पायति शोषयति तैलमिति पायु । 'पै शोषणे' (भ्वा० प० अ० )। 'कृवापाजि–' ( उ० १।१ ) इत्युण् । 'आतो युक्–' (७।३।३३)। 'पायूपस्थे पाणिपादौ वाक्चेतीन्द्रियसंग्रहः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रिया ' ॥ इति कामन्दकीये ॥ एकं 'गुह्यादीन्द्रियस्य' ।

**मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥**

धीन्द्रियम् ( न ), 'मन, नेत्र आदि ज्ञानेन्द्रिय' का १ नाम है।

मन इति ॥ धीसाधनमिन्द्रिय धीन्द्रियम् ॥ ( १ ) ॥*॥ 'मन कर्णौ तथा नेत्र रसना च त्वचा सह । नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते ॥' एकं 'ज्ञानेन्द्रियस्य' ।

**तुवरस्तु कषायोऽस्त्री**

तुवरः ( पु ), कषायः ( पु न ), 'कषाय, कसाव' के २ नाम हैं।

तुवर इति ॥'तु 'सौत्रो धातु. [हिंसार्थः, अ० प० अ०]। तवीति हिनस्ति रोगान् । 'छित्वरछत्वर–' ( उ० ३।१ ) इत्यादिना ष्वरच् । [ 'तुवरस्तु कषाये स्यात्काश्याढक्यो-स्तुवर्यपि' इति मे० १३।१६४]॥*॥ दीर्घादिरपि [तूवर ]। 'नरेऽश्मश्रुणि शृङ्गाभ्यां रहिते गवि तूवरः । काले प्रासे कषाये च रसे पुंव्यञ्जने च्युते ॥' इत्युत्पलिनी । 'नापि कषायस्तुवर ' इति बोपालित । 'पुंसि कषायस्तुवरम्' इति क्लीबकाण्डे रत्नकोष. ॥ ( १ ) ॥ * ॥ कषति कण्ठम् । 'कष हिंसायाम्' ( भ्वा० प० से० ) । बाहुलकादाय । 'कषायः सुरभौ रसे । रागवस्तुनि निर्यासे क्रोधादिषु विलेपने' इति हैम. [३।५१३-१४] ॥ (२) ॥*॥ अस्त्रीत्युभयान्वयि । उक्तकोषाभ्याम् 'कुवरस्तु कषायोऽस्त्री' इत्येके पठन्ति ॥ द्वे 'कषायरसस्य' ।

**मधुरो**

मधुरः (पु), 'मधुर रस' का १ नाम है (पानी, दूध आदि में मधुर रस है )।

मधुर इति ॥ मधु माधुर्यमस्यास्ति । 'ऊषसुषि–' (५।२।१०७) इति र. । ['मधुरं विषम्] मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि । मधुरा मधुरापुर्यां यष्टीमेदामधूलिषु[1] । मधुकुक्कुटिकायां[1] च मिश्रेयाशतपुष्पयो.' इति हैमः [ ३। ६२२-२४ ]॥ ( १ ) ॥ * ॥ एकं 'मधुरस्य' ।

**लवणः**

लवणः ( पु ), 'खारे या नमकीन रस' का १ नाम है ( नमक, सोडा आदि में 'लवण' रस है )।

लवण इति ॥ लुनाति जाड्यम् । 'लूञ् छेदने' (क्र्या० उ० से०)। नन्द्यादिल्यु (३।१।१३४) । 'लवणाल्लुक्' (४। ४।२४) इति लिङ्गाण्णत्वम् । 'लवणो राक्षसे रसे । अब्धि-भेदे लवणा त्विट्' इति हैम[2] ॥(१ ) ॥*॥ एकम् 'लवणस्य' ।

**कटुः**

कटुः ( पु ), 'कड़ुए रस' का १ नाम है ( मिर्चा, कालीमिर्च आदि में कटु रस है )।

कटुरिति ॥ कटत्यावृणोति तीक्ष्णतया मुखम् । 'कटे वर्षावरणयो' ( भ्वा० प० से० ) । कटिवटिभ्या च (उ० १। ८ ) इत्यु । 'कटुवकार्ये मत्सरे च दूषणे च कटू रसे । तिक्ते प्रियङ्गुसुरभौ कटुका राजिकास्वपि' इति हैम. [२। ८४] ॥ ( १ ) ॥ * ॥ एक 'कटो' ।

**तिक्तः**

तिक्तः ( पु ) 'तीते रस' का १ नाम है ( नीम, चिरायता आदि में तिक्त रस है )।

तिक्त इति ॥ तेजयति रस । 'तिज निशाने' (चु० प० से०) । सामान्यापेक्षज्ञापकाच्चुरादीना णिजभावे 'गत्यर्था-कर्मक–' (३।४।७२) इति क्त । पक्षान्तरे तु संज्ञापूर्वकत्वाद् गुणाभाव । 'तिक्तस्तु सुरभौ रसे । तिक्ता तु कटुरोहिण्या तिक्तं पर्पटकौषधे' इति हैम [ २।१७३-७४ ] ॥ ( १ ) ॥ * ॥ एक 'तिक्तस्य' ।

**अम्लश्च**

अम्लः ( पु ), 'खट्टे रस' का १ नाम है ( इमली, नींबू आदि में 'अम्ल रस' है )।

अम्ल इति ॥ अम्ब्यते शब्द्यते भोक्तृभि । 'अबि शब्दे' (भ्वा० प० से०) । 'मृशक्यविम्य क्ल.' (उ० ४।१०८) । अम्ल ॥*॥ 'अम रोगे' (चु० उ० से०) । अमति रुजत्यरुचिम् । बाहुलकात् क्ले अम्लोऽपि । 'अम्लो रसेऽम्लवेतसे । (अम्ली चाङ्गेर्याम्)' इति हैम· [२।४८६] ॥(१) ॥*॥ एकम् 'अम्लस्य' ।

---

१. 'यष्टीमोदामधूलिषु' इति पा० ।

१. 'मधुकर्कटिकायाम्' इति पा० ।

२. 'लवणो राक्षसे बले । अब्धिभेद लवणा त्विट् लवणं नामचिह्नयो ॥' इति हैमपाठः ( ३।२३४ ) ।

रसा पुंसि

रस (पु), अर्थात् उपर्युक्त मधुरादि छह रस हैं और ये पुंल्लिंग हैं।

रसा इति ॥ रस आस्वादने ( चु० उ० से० ) अद न्त । रस्यन्ते आस्वाद्यन्ते । एरच् (३।३।५६) घञ (३।३।१९) वा । तुवरादय षट रसशब्दवाच्या । तत्र तुव रकषाययोरस्त्रीत्वस्योक्तत्वादितरेषां लिङ्गनिर्णयमाह— पुंसि इति । गुणमात्र वर्तमाना मधुरादय षट् पुंसि इत्यर्थ । तद्वत्सु षडमी त्रिषु ॥ ९ ॥

ये छह रसों के वाचक 'तुवर, मधुर, आदि ७ नाम स्वतः रसवाचक रहने पर पुंल्लिंग हैं, किन्तु द्रव्यवाचक अर्थात् रसवाले पदार्थ के अर्थ में प्रयुक्त होने पर त्रिलिङ्ग हैं।

*तद्वत्स्विति ॥ अमी षट् । षण्णामपि वाचकास्तुवरा* दय सप्तापि गुणिनि त्रिलिङ्गा इत्यर्थ । कटुशब्दात्स्त्रियाम् वोतो गुण— ( ४।१।४४ ) इति वा ङीप [ कट्वी ]।

विमर्दोत्थे परिमलो गन्धे जनमनोहरे।

परिमल (पु), 'किसी पदार्थ के सघर्ष अर्थात् रगड़ से उत्पन्न जनमनोहर गन्धविशेष या बहुल के गन्ध' का १ नाम है।

विमर्दोत्थ इति ॥ सुरतादिविमर्दोत्थे माल्यादिगन्धे चप णसमुद्भवे चन्दनादिगन्धे च जनानां मनोहरे परिमल । मल धारणे ( भ्वा० आ० से० )। मल्यते । कर्मणि घञ् (३।३।१९) । सर्पापूर्वकत्वाद्वृद्ध्यभाव । खनो घ च (३।३।१२५) इति घो वा । चित्करणात् अन्येभ्योऽपि— इत्य भ्युपगमात्। यद्वा—मन्त धारयति जनमनांसि पचाद्यच (३।३।१३४ ) । स्य त्परिमलो[1] विमर्दोत्थितमनोहरगन्धयो र्मापि । सुरतोपमर्दविकसच्छरी[2]रसङ्गादिसौरभे पुंसि ॥ [इति मे० १५६।१५६]॥ (१) ॥*॥ एकं परिमलस्य ।

आमोद सोऽतिनिर्हारी

आमोद (पु), 'अत्यन्त बढ़िया गन्ध या कस्तूरी के गन्ध का १ नाम है।

आमोद इति ॥ स परिमलोऽतिनिर्हारी अत्यन्तमनो हरश्चेत् । आसमन्तान्मोदयति इत्यामोद । मुद हर्ष ( भ्वा० आ० से० ) ण्यन्त । अच ( ३।१।१३४ )। 'आमोदो गन्धहर्षयो [ इति मे० ७६।२१ ]॥ (१) ॥*॥ एकं सुगन्धस्य ।

वाच्यलिङ्गत्वमागुणात् ॥ १० ॥

यहाँ से 'गुणे शुक्लादय पुंसि (१।५।१७) के पूर्वतक सब शब्द त्रिलिङ्ग हैं।

१ स्यात् परिमलोऽतिमर्दात् इति पा०।

२ च्छरीररागादिसौरभे इति पा०।

वाच्येति ॥ आगुणात् गुणे शुक्लादय पुंसि [अ० १।५।१७ ] इत्यत प्राक । अत पर वाच्यलिङ्गता इत्य धिक्रियते।

समाकर्षी तु निर्हारी

समाकर्षी (=समाकर्षिन्) निर्हारी (=निर्हारिन्। २ त्रि) 'दूरस्थ सुगन्धित पदार्थ' के २ नाम हैं।

समाकर्षीति ॥ समाकर्षत्यवश्य मन । आवश्यका— (३।३।१७० ) इति णिनि । यद्वा—समाकर्षणशील । सुप्य जातौ— ( ३।२।७८ ) इति णिनि ॥ ( १ ) ॥*॥ एव निर्हारी ॥ (२) ॥*॥ द्वे 'दूरगामिगन्धस्य ।

सुरभिर्घ्राणतर्पण ।

इष्टगन्ध सुगन्धि स्यात्

सुरभि, घ्राणतर्पण, इष्टगन्ध, सुगन्धि (४ त्रि), 'सुगन्धि' के ४ नाम हैं।

सुरभिरिति ॥ सुष्ठु रभन्तेऽत्र सुरभि । इन् (उ० ४।११८ ) ॥ ( १ ) ॥ * ॥ घ्राण तर्पयति । नन्द्यादिल्यु ( ३।१।१३४ ) ॥ ( २ ) ॥*॥ इष्टो गन्धोऽस्य । इष्ट गन्ध सुगन्धी स्यात् त्रिषु क्लीब तु वालुके [इति मे० ८२।४३ ] ॥ ( ३ ) ॥ * ॥ सुष्ठु गन्धोऽस्य । गन्धस्येत्— (५।४।१३५) इति समासान्त इकार । 'सुगन्धि स्यादि ष्टगन्धे त्रिषु[1] क्षीरे नपुंसकम् [ इति मे० ८१।३९ ]॥ (४) ॥ * ॥ चत्वारि 'इष्टगन्धस्य ।

आमोदी मुखवासन ॥ ११ ॥

आमोदी (=आमोदिन्), मुखवासन (२ त्रि), 'मुख को सुगन्धित करने वाले पान आदि के २ नाम हैं।

आमोदीति । आमोदयति । सुप्यजातौ— (३।२।७८) इति णिनि ॥ ( १ ) ॥*॥ मुखं वासयति । नन्द्यादिल्यु (३।१।१३४) ॥ ( २ ) ॥*॥ द्वे मुखवासनगुटिकादे ।

पूतिगन्धिस्तु दुर्गन्ध

पूतिगन्धि, दुर्गन्ध (२ त्रि), 'दुर्गन्ध, बदबू के २ नाम हैं।

पूतीति ॥ पूयी विशरणे दुर्गन्धे च ( भ्वा० आ० से० )। पूयते । पूति । क्तिन् ( ३।३।९४ )। पूतिदुष्टो गन्धोऽस्य । गन्धस्येत्— ( ५।४।१३५ ) इतीकार ॥ (१) ॥ * ॥ दुर्गन्धे त्विकारो नेति विशेष ॥ ( २ ) ॥*॥ द्वे दुर्गन्धस्य ।

विस्रं स्यादामगन्धि यत् ।

विस्र ( त्रि ), 'बिना पके हुए मांस आदि के गन्ध' का १ नाम है।

१ त्रिषु क्लीब तु वालुके इति पा०।

विस्रमिति ॥ विस्यति ॥ 'विस प्रेरणे' (दि० प० से०)। 'स्फायि–' ( उ० २।१३ ) इति बाहुलकाद्रक्। 'विम उत्सर्गे' इति तु भट्टः। 'विस्रमते' इति वा। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः। बवयोरभेद ॥ ( १ ) ॥*॥ आमोऽपक्वो मल । तस्येव गन्धोऽस्य। 'उपमानाच्च' ( ५।४।१३७ ) इति समासान्त इत् ॥ ( २ ) ॥ * ॥ द्वे 'अपक्वमासादिगन्धस्य'।

शब्दार्णवे तु 'कस्तूरिकायामामोद कर्पूरे मुखवासन। वकुले स्यात्परिमलश्चम्पके सुरभिस्तथा ॥' इति ॥

**शुक्ल-शुभ्र-शुचि-श्वेत-विशद-श्येत-पाण्डराः ॥ १२ ॥**
**अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ।**

शुक्लः, शुभ्रः, शुचिः, श्वेतः, विशदः, श्येतः, पाण्डरः, अवदातः, सितः, गौरः, वलक्षः, धवलः, अर्जुनः ( १३ त्रि ), **'सफेद, उजले' के १३ नाम हैं।**

शुक्लेति ॥ शोकति मनोऽस्मिन्। 'शुक' गतौ'(भ्वा० प० से०)। 'ऋज्रेन्द्र–' (उ० २।२८) इति निपातित । 'शुक्लो योगान्तरे सिते। नपुंसकं तु रजते' [इति मे० १४८।५३]॥ (१) ॥ * ॥ शोभते। 'शुभ दीप्तौ, शोभायां वा' ( भ्वा० आ० से० )। 'स्फायि–' (उ० २।१३) इति रक्। 'शुभ्र दीप्तेऽभ्रके सिते' इति हैम [२।४७६]॥ (२) ॥*॥ 'शुच दीप्तौ (?)'। इक् (वा० ३।३।१०८)॥(३)॥*॥ 'श्विता वर्णे' ( भ्वा० आ० से० ) भ्वादि। श्वेतम्। घञ् (३।३।१८)। 'श्वेतो द्वीपाद्रिभेदयो । श्वेता वराटिकाकाष्ठपाटलाद्यास्विनीप् च। क्लीबं रूप्येऽन्यवच्छुक्ले' [इति मे० ५९। ६७–६८] ॥ ( ४ ) ॥ * ॥ विशीयते। 'षद्लृ शातने' (भ्वा०, तु० प० अ०)। अच् ( ३।१।१३४ )। 'विशदः पाण्डरे[2] व्यक्ते' इति हैम [ ३।३६७ ] ॥ ( ५ ) ॥*॥ श्यायते। 'श्यैङ् गतौ' ( भ्वा० आ० अ० )। 'हृश्याभ्यामितन्' (उ० ३।९३) ॥ (६) ॥*॥ पण्डते मनोऽस्मिन्। 'पडि गतौ' (भ्वा० आ० से०)। बाहुलकादरो दीर्घश्च ॥ ( ७ ) ॥ * ॥ अवदायते स्म। 'दैप् शोधने' ( भ्वा० प० अ०)। कर्मणि क्तः (३।२।१०२, ३।४।४०)। 'अवदातं तु विमले मनोज्ञे सितपीतयो' इति हैम [ ४।९६ ] ॥ (८) ॥*॥ सिनोति मन । 'षिञ् बन्धने' ( स्वा० उ० अ० )। 'अञ्जिघृसिभ्य क्तः' ( उ० ३।८९ ) । 'सितस्त्ववमिते बद्धे वर्णे सिता तु शर्करा' इति हैम [२।२१०] ॥ (९) ॥*॥ गुरते उद्युङ्क्ते मनोऽस्मिन्। 'गुरी उद्यमने' ( तु० आ० से०)। 'ऋज्रेन्द्र–' ( उ० २।२८ ) इति निपातितः। 'गौरः श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि । विशदे गौरं तु श्वेतसर्षपे पद्मकेसरे ॥' इति हैम [२।४२५]। यत्तु–'गोरते' इति स्वामी, 'गोरति' इति मुकुटश्च। तन्न। 'गुरी उद्यमने' [ तु० आ० से० ] इति धातुमुपन्यस्योक्तरूपोपन्यासस्यासंभवात् ॥ ( १० ) ॥ * ॥ अवलक्ष्यते। घञ् ( ३। ३।१९ )। 'वष्टि भागुरि –' इत्यल्लोप । यद्वा—वलति। 'वल् चलने' ( भ्वा० प० से० )। क्विप् (३।२।१७८)। वल्। अक्षत्यस्मात्। 'अक्षू व्याप्तौ संघाते च' (भ्वा० प० से० )। घञ् ( ३।३।१९ )। वल् चासौ अक्षश्च। यद्वा—वलं क्षायति। 'क्षै क्षये' (भ्वा० प० अ०)। 'आतोऽनुप–'(३।२। ३ ) इति क ॥ ( ११ ) ॥*॥ धावति मनोऽत्र। 'धावु गतिशुद्ध्यो' ( भ्वा० उ० से० )। वृषादित्वात् (उ० १। १०६) कलच्। बाहुलकाद् ह्रस्व । यद्वा–धवन धव। 'धूञ् कम्पने' ( क्या० उ० से० )। 'ऋदोरप्–' (३।३।५७)। धव लाति। 'ला दाने' ( अ० प० अ० )। 'आतोऽनुप–' ( ३।२।३ ) इति क । 'अथ धवलो महोक्षे सुन्दरे सिते। धवली गौ' इति हैम [३।६९२-९३] ॥ ( १२ ) ॥*॥ अर्ज्यते। 'अर्ज अर्जने' ( भ्वा० प० से० )। 'अर्जेर्णिलुक् च'(उ० ३।५१) इत्युनन्। 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयो । मातुरेकसुतेऽपि स्याद्धवले[1] पुनरन्यवत् ॥ नपुंसकं तृणे नेत्ररोगे[2] स्यादर्जुनी गवि ॥'[इति मे० ८४।३०-३१]॥ ( १३ ) ॥*॥ त्रयोदश 'शुक्लवर्णस्य'।

शब्दार्णवे तु 'श्वेतस्तु समपीतोऽस्मी रक्तेतरजपारुचि । वलक्षस्तु सितश्याव कदलीकुसुमोपम । अर्जुनस्तु सित कृष्णवेशवान् कुमुदच्छवि ॥' इत्युक्तम्।

शुद्धशब्दोऽप्यत्र। तथा च धरणि —'शुद्धः शुक्ले च पूते च केवले च प्रयुज्यते' इति।

**हरिणः पाण्डुरः पाण्डुः**

हरिणः, पाण्डुरः, पाण्डुः ( ३ त्रि ), **'पीलापन लिए सफेद रंग' के ३ नाम हैं।**

हरिण इति ॥ हरति मन । 'श्यास्त्याहृञविभ्य इनच्' ( उ० २।४६ )। 'हरिणौ पाण्डुसारङ्गौ हरिणी चारुयोषिति। सुवर्णप्रतिमाया च हरितावृत्तभेदयो' इति हैम [३। २४६ ] ॥ ( १ ) ॥ * ॥ पाण्डुत्वमस्यास्ति। 'नगपासुपाण्डुभ्यो र'[3]। 'पाण्डुरो वर्णतद्वतो । पाण्डुरं तु मरुबके'

१. सि० कौ० प्रभृतिष्वेतद्धात्वनुपलम्भात् 'ऋज्रेन्द्र—' इत्युणादिसूत्रोदाहरणे "शुचेश्चस्य क शुक्र, पक्षे ल शुक्ल" इत्युक्तेश्चात्र 'शुच शोके' ( भ्वा० प० से० ) इति धातुर्बोध्यः।

२. 'पाण्डुरे' इति पा०।

१. 'पुल्लिङ्गो धवलेऽन्यवत्' इति पा०।

२. 'नेत्रपदे चाप्यर्जुनी' इति पा०।

३. 'नगपांसुपाण्डुभ्यश्च' (५।२।१०७) इति वार्तिकस्य फलितार्थकथनमेतत् प्रतीयते।

इति हैम [ ३।६१२ ] ॥ (२) ॥ * ॥ पण्ड्यते ज्ञायते । 'पडि गतौ' (भ्वा० आ० से०) । मृगय्वादित्वात् (उ० १। ३७) कु । पृषोदरादित्वात् (६।३।१०९) दीर्घं । 'पाण्डुस्तु पीतभागार्धं केतकीधूलिसंनिभ' इति शब्दार्णव । 'पाण्डु कुन्तीपतौ सिते' इति हैम [२।१२४] ॥ (३) ॥ * ॥ त्रीणि 'पीतमवलितशुक्लस्य' ।

ईषत्पाण्डुस्तु धूसरः ॥ १३ ॥

ईषत्पाण्डु, धूसर ( त्रि ), 'धूसर' के २ नाम हैं।

ईषदिति ॥ धूनोति चेत । 'धू विधूनने'[१] (स्वा० आ० से० ) । 'कृधूमदिभ्य क्सर' ( उ० ३।७३ ) । बाहुलकादपत्वम् । यद्वा—धूसनम् । 'धूस कान्तौ' (चु० प० से० ) चुरादि । 'एरच्' ( ३।३।५६ ) । धूस राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति क । 'धूसरो किंनरीभद, ना खरे, त्रिषु पाण्डुरे [इति मे०१३५। १७०] । 'धूसरस्तु सित पीतलेशवान्बकुलच्छवि' इति शब्दार्णव ॥ ( १ ) ॥ * ॥ एक 'धूसरवर्णस्य' ।

कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।

कृष्ण, नील, असित, श्याम, काल, श्यामल, मेचक (७ त्रि), 'काले' के ७ नाम हैं।

कृष्ण इति ॥ कर्षति मन । 'कृषेर्वर्णे' ( उ० ३।४ ) इति नक् । 'कृष्णः काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ। कृष्णा तु नील्या द्रौपद्यां पिप्पलीद्राक्षयोरपि ॥ कृष्ण तु मरिचे लोहे' इति हैम [ २।१३८ ३९ ] ॥ (१) ॥ * ॥ नीलति । 'णील वर्णे' (भ्वा० प० से०) । 'इगुपध–' (३। १।१३५ ) इति क । 'नीलो वर्णे मणौ शैले निधिवानरभेदयो । नील्योषध्यां लाञ्छने च' इति हैम [२५०७] ॥ (२) ॥ * ॥ सितविरुद्धोऽसित ॥ (३) ॥*॥ श्यायते मनोऽस्मात् । 'श्यैङ् गतौ' ( भ्वा० आ० अ० ) । 'इषियुधीन्धि–' (उ० १।१४५) इति मक् । 'श्यामोऽम्बुदे शितौ। हरिते प्रयागवटे कोकिले वृद्धदारवे[२] । श्याम सैन्धवे मरिचे श्यामा सोमलतानिशो ' इति हैम (२।३४१ ४२) ॥ (४) ॥*॥ कल्यते काल । कल सख्याने' (भ्वा० आ० से०) । घञ् ( ३।३।१९ ) । 'कालः पुन कृष्णवर्णे महाकालकृतान्तयो ॥ मरणानेहसो काली कालिकाक्षीरकीटयो । मातृभेदोमयोर्नव्यमेघौघपरिवादयो ॥ काला कृष्णत्रिवृन्नील्योर्मञ्जिष्ठायाम्' इति हैम [ २।४९०-९१ ] ॥ (५) ॥ * ॥ श्याम श्यामत्वमस्यास्तीति । सिध्मादित्वात् ( ५।२।९७ ) लच् । 'श्यामलः पिप्पले श्यामे' इति हैम [ ३।७२३ ] ॥ ( ६ ) ॥ * ॥ मचति[१] मिश्रीभवति[२] वर्णान्तरेण । 'मच मुचि कल्कने' ( भ्वा० आ० से० ) । 'कुञादिभ्य सज्ञाया वुन्' ( उ० ५।३५ ) । 'पचिमच्योरिच्चोपधायाः' ( उ० ५।३७) इतीत्वे लघूपधगुण ( ७।३।८६ ) । 'मेचक श्यामले कृष्णे तिमिरे बर्हिचन्द्रके' इति हैम ( ३।८२७ ) ॥ (७) ॥*॥ सप्त 'कृष्णस्य' । शब्दार्णवे तु 'मेचकः कृष्णनील स्यादतसीपुष्पसंनिभ' इत्युक्तम् ।

पीतो गौरो हरिद्राभः

पीत, गौर, हरिद्राभः ( ३ त्रि ), 'पीले' के ३ नाम हैं।

पीत इति ॥ पीयते पिबति वर्णान्तरम् ['पा पाने', भ्वा० प० अ० ] । औणादिक क्त [उ० ३।८९ ] । 'पीतं पाने हरिद्रायां स्त्रियां, गौरेऽभिधेयवत्' [ इति मे० ५६।३४ ] । यत्तु—पीयते वर्णान् । पातेर्बाहुलकात् 'अञ्जिघृषिभ्य क्त' ( उ० ३।८९ ), 'घुमास्थागा–' ( ६।४।६६ ) इत्यादिना ईत्वम्—इति मुकुटेनोक्तम् । तदसबद्धमिति स्फुटमेव ॥ (१) ॥ * ॥ ( २ ) ॥ * ॥ हरिद्रेवाभा दीप्तिरस्य ॥ ( ३ ) ॥ * ॥ त्रीणि 'पीतवर्णस्य' ।

पालाशो हरितो हरित् ॥ १४ ॥

पालाश, हरित, हरित् ( ३ त्रि ), 'हरे' के ३ नाम हैं।

पालाश इति ॥ पलाशस्य पत्रस्यायम् । 'तस्येदम्' (४। ३।१२०) इत्यण् ॥ * ॥ 'पत्रं पलाश ना रक्ष शठीहरितकिंशुके' इति रुद्रात् ह्रस्वादि [पलाश ] अपि । तत्र सज्ञापूर्वकत्वाद् वृद्ध्यभाव । यद्वा—पलमश्नाति । 'अश भोजने' ( क्र्या० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । तत प्रज्ञाद्यण् (५।४।३८) । 'पलाश किंशुके शट्याम्' [इति विश्व १६९।२३] । 'हरिद्वर्णो राक्षसश्च पलाशं छदने स्मृतम्'[३] इति हैम' ॥–'शेषे' (४।२।९२) इत्यस्य विधित्वाङ्गीकारादण् इत्याहु । तन्न । 'तस्येदम्' [४।३।१२०] इति सिद्धे शेषत्वाभावात् ॥ (१) ॥*॥ हरति । 'हृश्याभ्यामितन्' (उ० ३।९३) । 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' [इति मे० ६७।१०५ ] ॥ (२) ॥ * ॥ 'हृसृरुहियुषिभ्य इति' (उ० १।९७) । हरित् । [ 'हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयो । अस्त्रियां स्यात्तृणे च' इति मे० ६७।१७४-७५] ॥ (३) ॥ * ॥ त्रीणि 'हरितवर्णस्य' ।

१ 'धू विधूनने' इत्यस्य तौदादिकत्वादत्र च 'धूनोति' इति विग्रहदर्शनात् 'धुञ् कम्पने' ( स्वा० उ० से० ) इत्यस्य पाठ उचित ।

२ 'वृद्धदारके' इति पा० ।

१ 'मच कल्कने' इत्यस्य भौवादिकात्मनेपदित्वकथनात् 'मचते' इति पठितुमुचित ।

२ धातोरस्य मिश्रीभवनमर्थं कथञ्चिदेवोपलब्धु शक्य, सिद्धान्तकौमुद्या 'कल्कन दम्भ शाठ्य च, कथनमित्यन्ये' इति तदर्थोल्लेखात् ।

३ हैमे त्वय पाठ —'हरिद्वर्णे राक्षसे च पलाश छेदने स्मृतम्' ( १०७।७६२ ) ।

**रोहितो लोहितो रक्तः**

रोहितः, लोहितः, रक्तः ( ३ त्रि ), 'लाल' के ३ नाम हैं।

रोहित इति ॥ रोहति । 'रुह बीजजन्मनि प्रादुर्भावे च' ( भ्वा० प० अ० ) । 'रुहे रश्च लो वा' ( उ० ३।९४ ) इतीतन् ॥ (१) ॥ * ॥ 'लोहितो मङ्गले नदे । वर्णभेदे लोहितं तु कुङ्कुमे रक्तचन्दने ॥ गोशीर्षे रुधिरे युद्धे' इति हैम [ ३।३१०–११ ] ॥ ( २ ) ॥ * ॥ रजति स्म । 'रञ्ज रागे' ( भ्वा० उ० अ० ) । क्त ( ३।२।१०२ ) । यद्वा–रज्यते स्म । 'रञ्ज प्रतियत्ने' ( चु० उ० से० ) । 'अनित्य-ण्यन्तादचुरादयः' इति णिजभावे क्त (३।२।१०२) । 'अतो लोपः' ( ६।४।४८ ) । 'चो. कु' ( ८।२।३० ) । 'रक्त नील्यादिरञ्जिते । कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरणे' इति हैम. [२।१९३] ॥ (३) ॥०॥ त्रीणि 'रक्तवर्णस्य' ।

**शोणः कोकनदच्छविः ।**

शोणः ( त्रि ), 'लाल कमल के समान सुर्ख लाल' का १ नाम है।

शोण इति ॥ शोणयति । 'शोणृ वर्णे' (भ्वा० प० से०)। पचाद्यच् ( ३।१।१३४ ) । 'शोण कृशानौ स्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये' [ इति मे० ४७। ३१–३२ ] ॥ (१) ॥ * ॥ कोकनद रक्तोत्पलमिव छविर्यस्य ॥ (२) ॥ * ॥ द्वे 'शोणवर्णस्य' ।

*अव्यक्तरागस्त्वरुणः*

अरुणः ( त्रि ), किञ्चित् लोहित अर्थात् 'गुलाबी' रंग का १ नाम है।

अव्यक्तेति ॥ अव्यक्तो रागो यस्य । किंचिल्लोहित. ॥ (१) ॥*॥ ऋच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'अर्तेरुनन्' (उ० ३।६०) । 'अरुणः कृष्णलोहित.' इत्यमरमाला । 'अरुणोऽव्यक्तरागेऽर्के सध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना, गुणिनि त्रिषु ॥ अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च ॥' [इति मे० ४७।३३–३४] ॥ (२) ॥ * ॥ द्वे 'अरुणवर्णस्य' ।

**श्वेतरक्तस्तु पाटलः ॥ १५ ॥**

पाटलः ( त्रि ), 'सफेदी लिये हुए लाल रंग' का १ नाम है।

श्वेतेति ॥ श्वेतरक्त ॥(१)॥०॥ पाटयति । 'पट गतौ' (भ्वा० प० से०) । ण्यन्ताद् वृषादित्वात् (उ० १।१०६) कलच् । पाटलाकुसुमाभ. पाटल । 'पाटलं तु 'कुङ्कुमश्वेतरक्तयो । पाटलः स्यादाशुव्रीहौ पाटला पाटलिद्रुमे' इति हैमः [ ३।७०१ ] ॥ (२) ॥ * ॥ द्वे 'श्वेतरक्तवर्णस्य' ।

१. 'कुसुमश्वेत' इति पा० ।

**श्यावः स्यात्कपिशः**

श्यावः, कपिशः ( २ त्रि ), 'फीके रङ्ग' के २ नाम हैं।

श्याव इति ॥ श्यायते । श्यैङ् गतौ' (भ्वा० आ० अ०)। बाहुलकात् 'कृमृगृदभ्यो व ' (उ० १।१५५) ॥ (१) ॥*॥ कपिवर्णविशेष । सोऽस्यास्ति । लोमादित्वात् (५।२।१००) श । कपिर्मर्कट । तद्वर्णत्वादिति वा । 'कपिशस्त्रिषु श्यामे,' स्त्री माधव्या, सिह्लके पुमान्' [ इति मे० १६३।१८ ] ॥ (२) ॥ * ॥ द्वे 'कृष्णपीतस्य' ।

**धूम्रधूमलौ कृष्णलोहिते ।**

धूम्रः, धूमलः, कृष्णलोहितः, (३ त्रि), 'कालेपन से युक्त लाल रंग' के ३ नाम हैं।

धूम्रेति ॥ धूम राति । क ( ३।२।३ ) । पृषोदरादि. ( ६।३।१०९ ) ॥ ( १ ) ॥ * ॥ धूम लाति । 'रा, ला, आदाने' ( अ० प० अ० ) । क ( ३।२।३ ) ॥ ( २ ) ॥ * ॥ कृष्णमिश्रो लोहित ॥ (३) ॥०॥ त्रीणि 'कृष्णलोहितस्य' ।

**कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥**

कडारः, कपिलः, पिङ्गः, पिशङ्गः, कद्रुः, पिङ्गलः ( ६ त्रि ), 'भूरे' के ६ नाम हैं।

कडार इति ॥ गर्डति । 'गड सेचने' (भ्वा० प० से०)। 'गडे कड च' ( उ० ३।१३२ ) इत्यारन् । यद्वा–कडनम् । कड । 'खनो घ च' (३।३।१२५) इति घ' । कडमृच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'कर्मण्यण्' ( ३।२।१ ) । [ 'कडारः पिङ्गले दासे' इति मे० १३२।१३० ] ॥ (१) ॥ * ॥ 'कबृ वर्णे' (भ्वा० आ० से०) । 'कबे पश्च' (उ० १।५५ ) इति इलच्प्रत्यय । पकारश्चान्तादेश । कपिं वर्ण लातीति वा । *'पुण्डरीककरिण्यां तु शिंशिपागोविशेषयोः ।* स्त्री रेणुकाया कपिला वर्णे ना कुक्कुरे मुनौ ॥ अनले वासुदेवे च कपिल. परिकीर्तित २' ॥ (२) ॥*॥ पिञ्जयति । 'पिजि वर्णे' ( अ० आ० से० ) । अच् ( ३।१।१३४ ) । न्यङ्क्वादि ( ७।३।५३ ) । 'पिङ्गा गोरोचनाहिङ्गुनाडि-३ काचण्डिकासु च । पिङ्गो शम्भा पिशङ्गे ना बालके तु नपुंसकम् ।' [इति मे० २२।९-१०] ॥ (३) ॥*॥ पेशति । 'पिश अवयवे' ( तु० उ० से० ) । 'पिडादिभ्य कित्' (उ० १।१२१ ) इत्यङ्गच् ॥ ( ४ ) ॥ * ॥ कन्दति । 'कदि आह्वाने रोदने च' (भ्वा० प० से०) । मृगय्वादित्वात् (उ०

१. 'श्यावे' इति पा० ।

२. हैमे त्वयं पाठ —'कपिलो वह्निपिंगयो । कुक्कुरे मुनिभेदे च कपिला शिंशपातरौ । पुण्डरीककरिण्यां च रेणुकागोविशेषयो. ॥' ( ३।६६५–६६ )

३. 'हिङ्गुनालिका' इति पा० ।

१।३७) साधु । 'कद्रुस्त्रिपु स्वर्णपिङ्गे नागाना मातरि स्त्रियाम्' [इति मे० १२३।१२] ॥ (५) ॥ ॥ पिञ्जति । 'पिजि वर्णे' ( अ० आ० से० ) । वृषादित्वात् ( उ० १। १०६ ) कलच् । 'न्यङ्क्वादीनां च' (७।३।५३) इति कुत्वम् । पिङ्ग लातीति वा । 'पिङ्गलः कपिले वह्नौ रुद्रेऽर्कपारिपार्श्विके । दर्पौ मुनौ निधेर्भेदे पिङ्गला कुमुदस्त्रियाम्॥' [ इति हैम ३।७०४५ ] ॥ (६) ॥ ॥ षट् 'कपिलवर्णस्य' ।

शब्दार्णवे तु 'नितपीतहरिद्रक्त कह्लारतृणवह्निवत् । अथ लूक्तिपीताङ्गः कपिलो गोविभूषण ॥ हरिताशेऽधिकेऽसौ तु पिशङ्ग पद्मधूलिवत् । पिशङ्गस्त्वसितावेशात् पिङ्गो दीपशिखादिपु ॥ पिङ्गलस्तु परच्छाय पिङ्गे शुक्लाङ्गखण्डवत्' इति ।

**चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।**

चित्रम्, किर्मीर, कल्माप, शबल, एत, कर्बुर ( ६ त्रि ), 'चित कबरे' के ६ नाम हैं।

चित्रमिति ॥ चीयते । 'चिञ् चयने'(स्वा० उ० अ०)। 'अमिचिमिदि-' ( उ० ४।१६४ ) इति क्र । चित्त भायते वा । 'त्रैङ् पालने' ( भ्वा० आ० अ० ) । क (३।२।३) । 'चित्रकिर्मीर-' इति समासमकृत्वा पृथक्पृथग्भेददर्शनं 'गुणे शुक्लादय पुंसि' इत्यस्य बाधनार्थम् । 'चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायाया सर्पनक्षत्रनदीभेदेपु च स्त्रियाम्। तिलकालेऽयये क्लीव कर्बुराद्भुतयोरपि । तद्युक्तोस्त्वन्यलिङ्गम्' [ इति मे० १२५।३४-३५ ] । नामलिङ्गानुशासने तु नानार्थपुस्तकाष्टेऽस्य पठित । तदनुरोधेनेहापि 'चित्रकिर्मीर-' इति समस्त केचित्पठन्ति ॥(१)॥*॥ कीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) । 'गम्भीरादयश्च' इति किरतेरीरन्, मुडागम । 'किर्मीरो ना नागरङ्गे [कर्बुरे राक्षसान्तरे' इति मे० १३२।१३५ ] ॥ (२) ॥ ॥ कलयति विवप् । (३।२।१७८) । कल् । मापयत्यभिभवति वर्णान् । माप । 'मष हिंसायाम्' (भ्वा० प० से०) । 'हन्त्यर्थाश्च' इति चुरादौ पाठात् णिच् । कल् चासौ मापश्च । 'कल्माषः कर्बुरे कृष्णे' इति मूर्धन्यान्ते रभस । 'कल्मापो राक्षसे कृष्णे शबलेऽपि' इति हैम [ ३।७७३ ] ॥ ( ३ ) ॥ * ॥ शपत्याक्रोशति वर्णान् । 'शप आक्रोशे' (भ्वा० उ० अ०)। 'शपेर्वश्च' (उ० १।१०५) इति कल, वत्व च ॥ (४) ॥*॥ एति वर्णान् । एवेर्वर्ण तन् ( उ० ३।८६ ) । 'एतः कर्बुर आगते' [ इति हैम २।१६२ ] ॥ (५) ॥ * ॥ 'कर्व हिंसायाम्' (भ्वा० प० से०) । 'मद्गुरादयश्च' (उ० १।४१) इति निपातनादुरच् । बवयोरभेदात्कर्बुर । 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसो । कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत् ॥' [ इति मे० १३१।१२२ ] ॥ (६)॥*॥ षट् 'नानावर्णस्य' ।

**गुणे शुक्लादयः पुंसि**

'शुक्ल' आदि सब शब्द गुणवाचक रहने पर पुंल्लिङ्ग ही होते हैं।

गुण इति ॥ यद्यपि 'शुक्ल रूपम्' इत्यादौ विशेष्यनिघ्नतैवेष्यते, तथापि विशेष्यानुपादाने प्राप्तस्य 'सामान्ये नपुंसकम्' इत्यस्यापवादोऽयम् । पटस्य शुक्ल इत्यादि बोध्यम् ।

अपवादान्तरमाह—

**गुणिलिङ्गास्तु तद्वति ॥ १७ ॥**

इति धीवर्ग ॥ ५ ॥

किन्तु वही शुक्लादि शब्द गुणिवाचक होते पर त्रिलिङ्ग होते हैं ( जैसे—शुक्लः पट, शुक्ला साटी, शुक्लं वस्त्रम् इत्यादि )।

गुणीति ॥ विशेष्यस्यानुपादाने यदेव यल्लिङ्गं प्रतिपिपादयिषितम्, तल्लिङ्गा इत्यर्थ । यथा शुक्लम्, शुक्ल , शुक्ला, इत्यादि ।

इति धीवर्गविवरणम् ॥ ५ ॥

## अथ शब्दादिवर्गः ॥ ६ ॥

**ब्राह्मी तु[1] भारती भाषा गीर्वाग्वाणी सरस्वती ।**

ब्राह्मी, भारती, भाषा, गीः ( = गिर् ), वाक् ( =वाच् ), वाणी, सरस्वती (७ स्त्री) 'शब्द ब्रह्म की 'अधिष्ठात्री देवी सुरभारती' के ७ नाम हैं।

ब्राह्मीत्यादि ॥ ब्रह्मण इयम् । 'ब्राह्मोऽजातौ' ( ६।४। १७१ ) इति टिलोपे 'टिड्ढा-' ( ४।१।१५ ) इति ङीप् । 'ब्राह्मी तु भारती । शाकभेदे पङ्कगण्डी हञ्जिका[2] सोमवल्ल्यपि । ब्रह्मशक्ति' इति हैम [ ३२२-२३ ] ॥ (१) ॥ * ॥ बिभर्ति । 'भृमृदृशि-' ( उ० ३।११० ) इत्यतच् । तत, प्रज्ञादिभ्यश्च ( ५।४।३८ ) ङीप् ( ४।१।१५ ) । भरतस्येयमिति वा । 'अथ भारती । वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयो ' [इति मे० ६४।१३९-४०] ॥ (२) ॥*॥ भाष्यते । 'भाष व्यक्तायां वाचि' ( भ्वा० आ० से० ) । 'गुरोश्च हल' (३।३।१०३) इत्यप्रत्यय ॥ (३) ॥ * ॥ गृणात्येताम् । 'गॄ शब्दे' (क्र्या० प० से०) । सम्पदादित्वात् (वा० ३।३।१०८) क्विप् । [ 'गीः स्त्री भाषासरस्वत्यो' इति मे० १२४।२३] ॥*॥ मागुरिमते गिरापि । 'ब्राह्मी वचन वाचा जल्पित गदित गिरा' इति शब्दार्णव ॥ (४)

१. 'वह्नौ' इति पा० ।
२. 'नागरङ्गे च' इति पा० ।

१. 'ब्राह्मी गौर्भारती' इत्यपि क्वचित् पाठ ।
२. 'हिञ्जिका' इति पा० ।

।।*।। उच्यते । वाक् । 'वच् परिभाषणे' (अ० प० अ०) । 'क्विब्वचि–' (वा० ३।२।१७८) इत्यादिना क्विप्, दीर्घोऽसंप्रसारणं च । ['वाग्वाचे भारत्या वचने स्त्रियो' इति मे० २८१९ ] ।। (५) ।।*।। वण्यते । 'वण शब्दे' ( भ्वा० प० से० ) । इञ् ( वा० ३।३।१०८ ) । 'कृदिकारात्–' (ग० ४।१।४५ ) इति ङीप्¹ । घञि ( ३।३।१९ ) गौरादित्वात् ( ४।१।४१ ) वा ।। (६) ।। * ।। सरोऽस्त्यस्या । मतुप् (५।२।९४) । 'सरस्वती सरिद्भिदि । वाक्यापगाया स्त्रीरत्ने गोवाग्देवतयोरपि' इति हैम [४।१३४-३५] ।। (७) ।। * ।। सप्त [ शब्दब्रह्मण ] 'अधिष्ठातृदेवताया.' ।

**व्याहार उक्तिर्लपितं भाषितं वचनं वचः² ॥ १ ॥**

व्याहारः (पु), उक्तिः (स्त्री), लपितम्, भाषितम्, वचनम्, वचः (=वचस् । ४ न), 'वचन' अर्थात् बोलने के ६ नाम हैं।

व्याहार इति ॥ व्याहरणम् । व्याङ्पूर्वाद्धृञो [ भ्वा० उ० अ० ] भावे घञ् ( ३।३।१८ ) ।। ( १ ) ।।*।। 'वच परिभाषणे' (अ० प० अ०) । क्तिन् (३।३।९४) । सप्रसारणम् (६।१।१५) ।। ( २ ) ।।*।। 'लप व्यक्ताया वाचि' (भ्वा० प० से०) । भावे क्त (३।३।११४)।। (३)।।*।। 'भाष व्यक्ताया वाचि' (भ्वा० आ० से०) । भाषण भाषितम् । भावे क्त (३।३।११४) ।। (४) ।।*।। वचे [अ० प० अ०] भावे ल्युट् (३।३।११५) ।। (५) ।।*।। असुनि (उ० ४।१९९) वच. ।।(६)।।*।। षट् 'भाषणस्य' ।

केचित् 'ब्राह्म्याद्यास्त्रयोदश ( वचनस्य ) पर्याया' इत्याहु. ।

**अपभ्रंशोऽपशब्दः स्यात्**

अपभ्रंशः, अपशब्दः (२ पु), 'भ्रष्ट अर्थात् असंस्कृत शब्द' के २ नाम हैं।

अपभ्रंश इति ॥ संस्कृतादपभ्रश्यति । 'भ्रंशु अध पतने' (दि० प० से०) । पचाद्यच् (३।१।१३४) । ['अपभ्रंशस्तु पतने भाषाभेदापशब्दयो ' इति मे० १६४।३१] ।।(१) ।।*।। अपभ्रष्ट शब्दोऽपशब्द ।।(२)।।*।। द्वे 'व्याकरणानिष्पन्नस्य गावीत्यादे' ।

**शास्त्रे शब्दस्तु वाचकः ।**

शब्दः ( पु ), 'व्याकरण आदि शास्त्रों में जो वाचक है' उनका १ नाम है।

शास्त्र इति ॥ शास्त्रे व्याकरणादौ यो वाचक साधुः स शब्द , स एव निरुपपदेन शब्दशब्देन व्यवह्रियते ।। (१) ।। * ।। एकं 'वाचकस्य' ।

**तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥२॥**

वाक्यम् (न), 'वाक्य' अर्थात् 'तिङ्-सुबन्त के समुदाय अथवा कारक से युक्त क्रिया' का १ नाम है।

तिङिति ॥ तिङन्ताना चय — 'पचति पठ्य' 'पचति भवति' पाको भवतीत्यर्थ. । सुबन्ताना चय । 'प्रकृतिसिद्धमिद हि महात्मनाम्' इत्यादि । 'भवति' इत्यध्याहारस्य भाष्यकारमते आवश्यकत्वाभावात्स वाक्यम् । क्रियेत्यादि³।

---

१ ह्रस्वान्तोऽपि वाणिशब्द । तथा च हैम.— 'वाणिरम्बुदे । व्यूतौ मूल्ये सरस्वत्याम्' ( २।१५५ ) । विश्वश्च—'वाणि स्याद् द्यूतिभारत्योर्वाणि मूल्ये बलाहके' ( ४९।२४ ) ।

२. त्रयोदश नामानि वचनस्य, तत्रापि सरस्वत्यन्तानि नामानि वचनाधिष्ठात्र्या देव्या अपि, व्याहारादीनि तु अधिष्ठेयस्यैवेति महेश्वर ।

१ पातञ्जलमहाभाष्ये "-तिङ्समानाधिकरणे प्रथमा' इत्युक्त्वा 'वृक्ष , प्लक्ष ' इत्यादौ अनभिधानात् प्रथमाविभक्त्यसिद्धिमाशङ्क्य 'अत्राप्यभिधानमस्ति । कथम् ? पदद्वयस्येतत्—अस्तिर्भवन्तीपर प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति । वृक्ष , प्लक्ष । 'अस्ती'ति गम्यते ।" इत्युक्तम् । तत्रश्च "वृक्ष इत्यत्रापि तिङैकत्वस्याभिधानादनवकाशत्वात्सिद्धाभिहितेऽप्येकत्वादौ प्रथमा भवति" इति कैयटोऽप्याह । तस्मादिदं च 'अनभिहिते' इति सूत्रव्याख्यावसरे 'नीलमिदं न तु रक्तम्' इत्यादौ 'विशेषणान्तरनिवृत्तितात्पर्येऽस्तिक्रियाया अनावश्यकत्वात्'इति मनोरमोक्तिर्भ्यप्यासत्यलवबोधमूलिका । अत एव 'शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्' इति योगसूत्र( ३।१७ )भाष्ये वेदव्यासेनापि सर्वपदेषु वाक्यशक्ति 'वृक्ष' इत्युक्ते 'अस्ति' इति गम्यते, न च सत्ता पदार्थो व्यभिचरति इत्युक्तम् । एतदेव तत्सूत्रव्याख्याने 'वस्तुतस्तु.........' इति वचनेन नागेशभट्टोऽपि समर्थितवान् । तत क्रियाध्याहारो विधेय एव । 'त्रय काला ' इत्यत्रापि 'सन्ति' इत्येवाध्याहार्यम् । इत्येतत् 'अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्' इति योगसूत्र(४।१२)-भाष्ये स्पष्टम् । अत एव तिङ्सुबन्तचय 'चैत्र पचति' इत्यादिरिति बुधमनोहरोक्तं संगच्छते ।

२ 'क्रिया वा' इत्यत्र 'वा'शब्द चेदर्थकत्वेन बोध्य इति शेषत्वेनाध्याहार्य 'कारकान्वितक्रियाबोधकसुप्तिङन्तचयो वाक्यम्' इति तदर्थ । अत्रैवं विग्रहो बोध्य —'सुप् च तिङ् च सुप्तिङ्, सुप्तिङ् च' सुप्तिङ् च' इति विगृह्य द्वन्द्वसमासे 'सरूपाणामेकशेष—' इत्येकशेषं कृत्वा 'षष्ठीतत्पुरुषे द्वन्द्वान्ते श्रूयमाण प्रत्येकमभिसम्बध्यते' इति प्रत्येकसम्बन्धे 'सुबन्तचय , तिङन्तचय , सुप्तिङन्तचयश्च वाक्यम्' इति तदर्थः । एषा त्रयाणामपि क्रमेणोदाहरणानि । सुबन्तचयो यथा—छात्रेण पठितव्यम् । तिङन्तचयो यथा— पचति भवति । सुप्तिङन्तचयो यथा—छात्र पचति ....। निरर्थकपदसमुदायेऽतिव्याप्तिनिरासाय 'क्रिया वा' इति,

वाशब्द समुच्चये । 'कारकान्वितक्रियाबोधक 'घटमानय' इत्यादि तिङ्सुप्चयात्मकमपि वाक्यम्' इत्यर्थ । केचित्तु—भाष्यकारमतेन प्रथम पक्ष 'एकतिङ् वाक्यम्' ( वा० २।१।१ ) इति वार्तिकाभिप्रायेणापरा—इत्याहु यत्तु—पूर्वं शब्दारम्भस्य वाक्यस्य लक्षणम् । 'क्रिया-' इत्यादि त्वर्थारम्भस्य-इत्याहु । तत्तु 'वचोऽशब्दसंज्ञायाम्' (७।३।६७) 'इति कुत्वनिषेधकसूत्रस्याननुगुणम्'। 'उच्यते' इति वाक्यम् । वचे ( अ० प० अ० ) ण्यत् ( ३।१।१२४ ) । 'वचो –' (७।३।५२) इति कुत्व शब्दसंज्ञायाम् । अन्यत्र तु वाच्यम् । [ 'वाच्य तु कुत्सिते हीने वचनार्हे च वाच्यवत्' इति मे० ११६।५५ ] ॥ (१) ॥*॥ एक वाक्यस्य'।

**श्रुतिः स्त्री वेद आम्नायस्त्रयी**

श्रुति ( स्त्री ), वेद , आम्नाय ( २ पु ), त्रयी ( स्त्री ), 'वेद' के ४ नाम हैं।

श्रुतिरिति ॥ श्रूयते । 'श्रु श्रवणे' (भ्वा० प० अ०) । कर्मणि क्तिन् (३।३।९४) । श्रूयते धर्मोऽनया' इति वा । 'श्रुयजीषिस्तुभ्य करणे' ( वा० ३।३।९४ ) इति क्तिन् । 'श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयो स्त्रियाम्' [इति मे० ५८।६६] ॥ (१) ॥*॥ विदन्त्यनेन धर्मम् । विद ज्ञाने' (अ० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'वेदः श्रुतौ च 'विष्णौ च' [इति मे० ७५।१५] ॥ (२) ॥*॥ आम्नायते अभ्यस्यते । 'म्ना अभ्यासे' (भ्वा० प० अ०) । कर्मणि घञ् ( ३।३।१९ ), 'आमनन्त्युपदिशन्ति धर्माधर्मौ' इति वा । 'श्याद्व्यधा–' ( ३।१।१४१ ) इति ण । 'आम्नायः कुल आगमे । उपदेशे च' इति हैम [ ३।५११ ] ॥ (३) ॥*॥ ( यत्तु )—त्रीणि वेदस्य । त्रयीति । त्रय्या धर्मस्त्रयीधर्म । तया त्रय्या विधिर्विधीयमानो यज्ञादिस्तद्विधि । 'विधानमृग्यजु साम्ना त्रयीधर्मं विदुर्बुधा '। एवम् । —इति मुकुट । तन्न । 'तानि धर्माणि', 'धर्मेण पापमपनुदति', 'वेदोऽखिलो धर्ममूल धर्ममूलमिद स्मृतम्', 'अथातो धर्मजिज्ञासा', 'चोदनालक्षणोऽर्थो धर्म', 'श्रेयान्स्वधर्म', 'धर्मक्षेत्रे कुरुक्षेत्रे', 'धर्म प्रोज्झितकैतव', 'धर्मस्य ह्यापवर्ग्यस्य', 'धन च धर्मैकफलम्', 'धर्मादर्थश्च', 'धर्मो रक्षति रक्षित', 'धर्माधर्मौ तद्विपाका', 'धर्म जिज्ञासमानेन' इत्यादिषु बहुषु ग्रन्थेषु धर्मशब्दस्यैव प्रयोगदर्शनात् । देवदत्तो दत्त , इतिवदेते प्रयोगा सन्त्विति चेत् । न । वैषम्यात् । देवदत्तशब्दस्यानेकस्थले प्रयोगो दृष्ट । क्वचिद्दत्तशब्दस्यापि प्रयोगे दृष्टे पूर्वपदलोपादिक कल्प्यते । प्रकृते तु धर्मशब्दस्यैव प्रयोगो दृष्ट । 'एव त्रयीधर्मम्' इत्यादौ च क्वचित्त्रयीधर्मशब्दस्यापि प्रयोगे लब्धे षष्ठीसमास कल्प्यते । प्रतिपाद्यप्रतिपादकभाव सम्बन्ध षष्ठ्यर्थ । तान्त्रिकसौगतादिधर्मव्यावृत्त्यर्थमिद धर्मस्य विशेषण सगच्छते । 'धर्मस्य च चतुर्दश' इति नियमात् । अतस्त्रय्यन्तानि चत्वारि वेदस्य नामानि' । न च 'वेदास्त्रयस्त्रयी' इत्यनेन पौनरुक्त्य शङ्क्यम् । सामान्यविशेषरूपेणोभयसभवात् । 'ब्राह्मणक्षत्रियवैश्या द्विजा , विप्रोऽपि द्विज ' इति यथा । न च 'धर्ममस्त्रियाम्' [अ० १।४।२४] इत्यनेन पौनरुक्त्यम् । तत्र धर्मपर्यायाणामभिधानात् । इह तु धर्मस्वरूपस्य धर्मप्रमाणस्य चाभिधानात् । यदपि—समासे गुणीभूतस्यापि त्रयीशब्दस्य बहुविवक्षावशात्तच्छब्देन परामर्श —इत्युक्तम् । तदपि न । तन्मते त्रयीधर्मशब्दस्य विधेयत्वात्तदेकदेशस्य त्रयीशब्दस्यानुवाद्यत्वासभवात् । वेदस्यैव तच्छब्देन परामर्शसभवाच्च । यदपि—यथा शब्दानुशासनम्—इति दृष्टान्तप्रदर्शनम् । तदप्येतेन प्रत्युक्तम् । वेदस्यैव परामर्शसभवात् । त्रीणि 'वेदस्य' ।

**धर्मस्तु तद्विधिः ।**

धर्म (पु), 'धर्म' अर्थात् 'वेदोक्त यज्ञादि कर्म' का १ नाम है।

धर्म इति ॥ तेन वेदेन विधीयते यज्ञादि । एतेन वेदविहितत्व धर्मत्वम्, वेदश्च धर्मे प्रमाणम्-इत्युक्तम् । धरति लोकान् । ध्रियते वा जनैरिति धर्म, 'अर्तिस्तुसु–' ( उ० १।१४० ) इत्यादिना धृञो [ भ्वा० उ० अ० ] मन् ॥(१) ॥*॥ ( एक 'वेदविहितकर्मण' ) ।

**स्त्रियामृक् सामयजुषी**

ऋक् ( =ऋच्, स्त्री ), साम ( =सामन् ), यजु ( यजुस् । २ न ), ये क्रमश तीनों वेदों ( ऋग्वेद, सामवेद और यजुर्वेद ) के नाम हैं।

---

केवले 'पचति इत्यादावतिव्याप्तिवारणार्थं 'सुप्तिङ्चय' इति पदम् । मन्मतेऽपि कर्त्रादिविशिष्टक्रियाबोधकत्वात् इति मञ्जूषोक्त्या एकमेवेद 'वाक्य'लक्षणम् । एव स्वीकार एव वार्तिकवाक्यस्य 'समर्थ पदविधि' इति सूत्रोक्त चव सङ्गच्छते । असत्त्वभावप्रत्ययानामप्याख्यातत्वेन अभिधानचिन्तामणौ 'सविशेषमाख्यात वाक्यम्' (२।१५६) इत्येक लक्षणमुक्त्वा त्याद्यन्त पदमाख्यातम्, तत् प्रयुज्यमानमप्रयुज्यमान वा । प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणै सहितम् 'उच्यते इति वाक्यम्' । यथा 'धर्मो वो रक्षतु ।' अप्रयुज्यमानमाख्यात यथा—शील ते स्वम्', अप्रास्तीति गम्यते । अनयोरर्थात्प्रकरणाद्वाऽऽख्यातादेरवगमादप्रयोग । 'आख्यातमि'त्यत्र चैकत्वस्य विवक्षितत्वात् 'ओदन पच तव भविष्यति' इत्यादौ वाक्यभेद । इति व्याख्यान हेमचन्द्राचार्येरैत्यल पल्लवितेन ।

१ '–वृत्ते च' इति मेदिन्या पाठ ।

१ 'ऋक् स्त्री साम यजुश्चेति वेदास्ते तु त्रयस्त्रयी' इति वैजयन्ती ( ८५।२४ ) वचनात्, 'त्रयी त्रिवेद्या त्रितये' इति ना० र० मा० (७८४) वचनाच्चेति बोध्यम् ।

स्त्रियामिति ॥ ऋच्यन्ते स्तूयन्ते देवा अनया । 'ऋच स्तुतौ' ( तु० प० से० ) । क्विप् ( वा० ३।३।१०८ ) ॥ (१) ॥*॥ स्यति पापम्। 'षोऽन्तकर्मणि'(दि० प० अ०)। मनिन् (उ० ४।१५३ ३।२।७४) । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' ॥ (१) ॥ * ॥ इज्यतेऽनेन । 'अर्तिपृवपि–' (उ० २।११७) इत्युस् ॥ ( १ ) ॥*॥ प्रत्येकमेकैकं 'वेदानाम्' ।

इति वेदास्त्रयस्त्रयी ॥ ३ ॥

उपर्युक्त तीनों वेदों का 'त्रयी' ( स्त्री ) यह १ नाम है ।

इतीति ॥ इति एते त्रयो वेदास्त्रयी । त्रयोऽवयवा यस्या सा संहति । त्रिशब्दात् 'सङ्ख्याया अवयवे तयप्' ( ५।२।४२) । 'द्वित्रिभ्या तयस्य–' ( ५।२।४३ ) इत्ययच् । 'टिड्ढा–' (४।१।१५) इति ङीप् । 'त्रयी त्रिवेद्या त्रितये पुरन्ध्रया सुमतावपि' इति हैम [ २।३६६ ] ॥ (१) ॥*॥ एकं 'वेदत्रयसंघातस्य' ।

शिक्षेत्यादि श्रुतेरङ्गम्

शिक्षा ( स्त्री ), आदि ('आदि शब्द से 'कल्प, व्याकरण, निरुक्त, ज्योतिष और छन्दः इन ५ का संग्रह है') को श्रुत्यङ्गम् ( न ) अर्थात् 'वेदों का अंग' कहते हैं ।

शिक्षेति ॥ श्रुतेर्वेदस्य शिक्षेत्याद्यङ्गम् । 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषा गतिः । छन्दोविचितिरित्येतै षडङ्गो वेद उच्यते' ॥ शिक्ष्यते स्थानादिकमनया । 'शिक्ष विद्योपादाने' (भ्वा० आ० से०)। 'गुरोश्च–' (३।३।१०३) इत्यप्रत्यय ॥*॥ अङ्ग्यते ज्ञायतेऽनेन। 'अगि गतौ' (भ्वा० प० से० ) । घ' (३।३।११८) घञ् (३।३।१२१) वा ॥ (१) ॥ * ॥ एकं 'वेदाङ्गस्य' ।

ओंकारप्रणवौ समौ ।

ओङ्कारः, प्रणवः ( २ पु ), 'ॐकार' के २ नाम हैं ।

ओकारेति ॥ अवति । 'अवतेष्टिलोपश्च' (उ०१।१४२) इति मन्प्रत्ययस्यैव टिलोप । 'ज्वरत्वर–'(६।४।२०) इत्यूठौ । गुण (७।३।८४) । 'वषट्कार' ( १।२।३५ ) इति लिङ्गात्सुमुदायादपि कारप्रत्यय (वा० ३।३।१०८)॥(१) ॥ * ॥ प्रणूयते स्तूयते । 'णु स्तुतौ' ( अ० प० अ० ) । 'ऋदोरप्' (३।३।५७) । 'उपसर्गात्–' ( ८।४।१४ ) इति णत्वम् ॥ (२) ॥ * ॥ द्वे 'ॐकारस्य' ।

इतिहासः पुरावृत्तम्

इतिहासः (पु), पुरावृत्तम् (न), 'इतिहास' के २ नाम हैं ।

इतीति ॥ 'इतिह' इति पारम्पर्योपदेशेऽव्ययम् । तदास्तेऽस्मिन् । 'आस उपवेशने' ( अ० आ० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् ॥ (१) ॥ * ॥ पुरावृत्तमाचष्टे पुरावृत्तम् । आख्यानण्यन्तात् ( वा० ३।१।२६ ) पचाद्यच् ( ३।१।१३४ ) ॥ (२) ॥ * ॥ द्वे 'पूर्वचरितप्रतिपादकग्रन्थस्य' ।

उदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥

उदात्तः (पु), आदि ( आदि पद से 'अनुदात्त और स्वरित' का संग्रह है ), को 'स्वराः' (पु), अर्थात् 'स्वर' कहते हैं ।

उदात्तेति ॥ 'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रय । चतुर्थं प्रचिनो नोक्तो यतोऽसौ छान्दस स्मृत ॥' स्वरन्ति शब्दायन्ते । 'स्वृ शब्दोपतापयो' (भ्वा० प० अ०) । पचाद्यच् (३।१।१३४) । यद्वा—स्वर्यन्ते अर्था एभि । 'पुंसि–' ( ३।३।११८ ) इति घ । यद्वा—स्वेन राजन्ते । 'राजृ दीप्तौ' ( भ्वा० उ० से० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१) इति ड । स्वरा अच । तद्धर्मत्वादुदात्तादयोऽपि । 'स्वरो नासासमीरे स्यान्मध्यमादित्रिकस्वरे । उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान् ॥' इति विश्वमेदिन्यौ[1] ॥(१) ॥*॥ उत् उच्चैरादीयते उच्चार्यते स्म। क्त (३।२।१०२)। 'अच उपसर्गात्त' ( ७।४।४७ ) । 'उदात्तो दातृमहतोर्हद्ये च स्वरभिद्यपि' इति हैम [ ३।२६७ ] ॥ * ॥ एकं 'स्वराणाम्' ।

आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।

आन्वीक्षिकी, दण्डनीतिः ( २ स्त्री ), ये दोनों क्रम से 'तर्कविद्या' और 'अर्थशास्त्र' के नाम हैं ।

आन्वीक्षिकीति ॥ अनु श्रवणोत्तरमीक्षणं परीक्षणम्–अन्वीक्षा । सा प्रयोजनमस्या । 'प्रयोजनम्' (५।१।१०९) इति ठक् ॥ (१) ॥*॥ दम्यतेऽनेन । 'दमु उपशमे' (दि० प० से०) । 'अमन्ताड्ड' (उ० १।११४)। दण्डो नीयते प्रोच्यतेऽनया दण्डनीति । क्तिन् (३।३।९४) । यद्वा–दण्डं लयति दण्ड्यान्प्रति प्रापयति । क्विप् (३।३।१७४)। आन्वीक्षिकीसाहचर्यात्स्त्रीत्वम् ॥ (१) ॥ * ॥ एतौ द्वौ क्रमात्तर्कविद्याया न्यायरूपायाम् , अर्थशास्त्रे च वर्तेते । अर्यते गम्यते । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'उषिकुषि–' (उ० २।३ ) इति थन् । अर्थस्य भूम्यादे शास्त्रम् । एकैकं 'दण्डनीते' ।

आख्यायिकोपलब्धार्था

आख्यायिका, उपलब्धार्था ( २ स्त्री ), 'आख्यायिका' के २ नाम हैं ।

---

[1] विश्वमेदिन्योस्त्वेवं पाठ —स्वरोऽकारादिमात्रासु मध्यमादिषु च ध्वनौ । उदात्तादिष्वपि प्रोक्त स्वरो नासासमीरणे ॥' इति विश्व ( १२५।६ ) ।

'स्वरो नासासमीरणे । उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान् ।' ( इति मेदिनी १२९।९४–५५ ) ।

आख्येति ॥ आचष्टे । 'चक्षिङ् ख्याञ्' (२।४।५४) । ण्वुल् ( ३।१।१३३ ) ॥ (१) ॥*॥ उपलब्धो ज्ञातोऽर्थो यस्या सा । एकं 'ज्ञातमत्यार्थसूताया कथाया' ।

**पुराणं पञ्चलक्षणम् ॥ ५ ॥**

**पुराणम्** ( न ), 'पुराण अर्थात् पाँच लक्षणों से युक्त ग्रन्थ' का १ नाम है।

पुराणमिति ॥ पुरा भवम् । 'सायंचिरम्–' (४।३।२३) इति ट्युटयुलौ । 'पूर्वकालैक–' (२।१।४९) इति सूत्रे निपातनात्तुडभाव । यद्वा–पुरापि नव पुराणम् । 'पुराणप्रोक्तेपु–' ( ४।३।१०५ ) इति सूत्रे निपातितम् । यद्वा–पुरा अतीतानागतावर्थावणति । 'अण शब्दे' (भ्वा० प० से०) । पचाद्यच् । 'पुराणं पञ्चलक्षणे । पणे' पुंसि, त्रिषु प्रत्ने'[इति मे० ४९।६३-६४ ] ॥ (१) ॥ * ॥ पञ्च लक्षणान्यस्य । 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । सूर्याद्वेश्चैव संस्थानं पुराणं पञ्चलक्षणम्' ॥ क्वचिदिह 'वंशानुचरितं चैव' इति तृतीयपादे पाठान्तरम् ॥(२)॥*॥ द्वे 'व्यासादिप्रणीतमत्स्यपुराणादे' ।

**प्रबन्धकल्पना कथा**

**कथा** ( स्त्री ), 'कथा' अर्थात् 'वाक्यविस्तारकी कल्पना वाले ग्रन्थ' का १ नाम है।

प्रबन्धेति ॥ प्रबन्धस्य कल्पना रचना स्तोकसत्या ॥ (१) ॥*॥ 'कथ वाक्यप्रबन्धे' (चु० उ० से०) । 'चिन्तिपूजिकथि–' (३।३।१०५) इत्यङ् । कथा कादम्बर्यादि ॥ (२) ॥ * ॥ द्वे 'कथायाः' ।

**प्रवल्हिका प्रहेलिका ।**

**प्रवल्हिका, प्रहेलिका** ( २ स्त्री ), 'पहेली, बुझौवल' के २ नाम हैं।

प्रवेति ॥ प्रवल्हते आच्छादयति । 'वल्ह वल्ह परिभाषणहिंसाच्छादनेषु' (भ्वा० आ० से०) । दन्त्योष्ठ्यादिर्हन्ति 'क्वुन् शिल्पिसंज्ञयो –'(उ० २।३२) । ण्वुल् (३।१।१३३) वा ॥ (१) ॥ * ॥ प्रहेलयति अभिप्रायं सूचयति । 'हिल भावकरणे'(तु० प० से०)। ण्वुल् (३।१।१३३)। 'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यार्थसंबन्धं कथ्यते सा प्रहेलिका'[२] ॥ * ॥ यद्वा–प्रवल्हतेरिनि ( उ० ४।११८ ) प्रवल्हि, तत 'कृदिकारात्' ( ग० ४।१।४५ ) इति ङीष् । उभाभ्यां स्वार्थे कन् । 'प्रहेलिका प्रवल्ही च प्रश्नदूती विपादिका' इत्युत्पलिनी ॥(२)॥*॥ द्वे 'दुर्विज्ञानार्थस्य प्रश्नस्य' ।

**स्मृतिस्तु धर्मसंहिता**

**स्मृति** ( स्त्री ), 'स्मृतिशास्त्र' अर्थात् 'मनु आदि के बनाये हुए धर्म-ग्रन्थ' का १ नाम है।

स्मृतिरिति ॥ वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृति । 'स्मृतिर्धर्मशास्त्रस्मरणयो स्त्रियाम्' [इति मे० ५९।७४] ॥ (१) ॥ * ॥ धर्मबोधार्थं रचिता संहिता । सपूर्वाद्दधाते [ जु० उ० अ० ] कर्मणि क्ते 'दधातेर्हि' (७।४।४२) ॥ (२) ॥ * ॥ द्वे 'मन्वादिस्मृते' ।

**समाहृतिस्तु संग्रहः ॥ ६ ॥**

**समाहृति** ( स्त्री ), **संग्रहः** ( पु ), 'संग्रह ग्रन्थ' के २ नाम हैं।

समेति ॥ समाहरणम् ['हृञ् हरणे', भ्वा० उ० अ०]। क्तिन् ( ३।३।९४ ) ॥ ( १ ) ॥*॥ संग्रहणम् । [ 'ग्रह उपादाने', क्र्या० उ० से० ] 'ग्रहवृद–' ( ३।३।५८ ) इत्यप् । 'विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययो । निबन्धो य समासेन संग्रह तं विदुर्बुधा (?)॥ 'संग्रहो वृहदुद्यमे मुष्टिसंक्षेपयोरपि' इति मेदिनी[१] ॥ (२) ॥ द्वे 'संग्रहस्य' ।

**समस्या तु समासार्था**

**समस्या, समासार्था** ( २ स्त्री ), 'समस्या' के २ नाम हैं।

समेति ॥ समसनम् । 'असु क्षेपणे'(दि० प० से०) । ण्यत् ( ३।१।१२४ ) । संज्ञापूर्वकत्वाद्वृद्ध्यभाव । यद्वा–सम ऋतम् । तद्विषयिणीच्छा समस्या । तत्प्रयोज्यत्वाच्छन्दोऽपि सा । समशब्दात्क्यचि ( ३।१।८ ) 'सर्वप्रातिपदिकेभ्य' (वा० ७।१।५१) इति सुगागमे 'अ प्रत्ययात्' (३।३।१०२ ) इत्य, टाप् ( ४।१।४ ) ॥ (१) ॥ * ॥ समसनं समास । घञ् ( ३।३।१८ ) । समासोऽर्थो यस्या पूरणसाकाङ्क्षा । कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमाना । यथा 'शतचन्द्रं नभस्तलम्' इति । तत्र 'दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन–' इत्यादिना सा पूर्यते ॥ (२) ॥*॥ 'असमासार्था' इति पाठे तु अपरिपूर्णार्था इत्यर्थ ॥ द्वे 'समस्यायाः' ।

---

१ हेमचन्द्राचार्येणाभिधानचिन्तामणौ षोडशपणानामपि 'पुराण'संज्ञोक्ता, तद्यथा—'पुराणं प्रत्नशास्त्रयो । पुराणं षोडशपणे' इति । ( ३।२२७ ) ।

२. एतदुदाहरणं यथा—'सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनं सर्पो नैव विलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारितस्तीक्ष्णास्यो न च नाथकर्त्रामिह ये जानन्ति ते पण्डिता ।' अत्र पूर्वं परस्परविरुद्धार्थप्रतीतावपि 'मत्कुण'-र्थस्वीकारेऽविरुद्धार्थता स्फुटैवेति दिशाऽन्यत्रापि ज्ञेयम् ।

१ वस्तुतस्तु हैमकोशस्योऽयं पाठ ( ३।८१४ ) । मेदिनीपाठस्त्वित्थम्—'संग्रहो वृहदुत्तुङ्गे ग्रहसंक्षेपयोरपि ।' ( १७।२५ )

किंवदन्ती जनश्रुतिः ।

किंवदन्ती, जनश्रुतिः ( २ स्त्री ), 'लोगों में बात-चीत के चलने, लोकापवाद या लोकोक्ति' के २ नाम हैं ।

किंवदन्तीति ॥ कोऽपि वादः । किंपूर्वाद्वदे. [ 'वद व्यक्तायां वाचि', भ्वा० प० से० ] 'भूजृवहिवसि–' (उ० ३।१२८) इति झच् । 'झोऽन्त' ( ७।१।३ ) । गौरादित्वात् (४।१।४१ ) ङीप् । यद्वा–'किंवदन्ति' इत्याख्यायमाना ' अनुकरणशब्दादाख्यातण्यन्तात् (वा० ३।१।२६) 'अच इ' (उ० ४।१३९ ) । 'कृदिकारात्–' (ग० ४।१।४५) इति ङीप् ॥ (१) ॥*॥ जनेभ्य श्रूयते । क्तिन् ( ३।३।९४ ) ॥ (२) ॥ * ॥ द्वे 'लोकप्रवादस्य' ।

वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्

वार्ता, प्रवृत्तिः (२ स्त्री), वृत्तान्तः, उदन्तः (२ पु), 'बात' के ४ नाम हैं ।

वार्तेति ॥ वृत्तिर्लोकवृत्तम् । तदस्त्यस्याम् । 'वृत्तेश्च' ( वा० ५।२।१०१ ) इति वार्तिकेन ण । यत्तु–'प्रज्ञाश्रद्धा–' ( ५।२।१०१ ) इत्यादिना ण –इति मुकुटेनोक्तम् । तन्न । 'तत्र वृत्तिशब्दस्य पाठोऽप्रामाणिक.' इत्युक्तवार्तिकेनैव ज्ञापितत्वात् । 'वार्ता तु वर्तने वार्तिवृत्तौ कृष्याद्युदन्तयोः । निःसारारोग्ययो क्लीबम्' [इति मे० ५८।५६-५७] ॥(१)॥*॥ प्रवर्तते व्याप्नोति । वृते (भ्वा० आ० से०) क्तिन् ( ३।३।१७४ ) । 'प्रवृत्तिर्वृत्तवृत्तान्तप्रवाहेषु प्रवर्तने' इति हैम [ ३।२९६ ] ॥ (२) ॥ * ॥ वृत्तोऽनुवर्तनीयो गवेषणीयोऽन्त समाप्तिर्यस्य । 'वृत्तान्तस्तु प्रकरणे कार्त्स्न्ये वार्ताप्रकारयो ' इति हैम [ ३।३३४ ] ॥ (३) ॥ * ॥ उद्गतोऽन्तो यस्य । 'उदन्तः साधुवार्तयो ' [ इति मे० ६१।९६ ] ॥ (४) ॥ * ॥ चत्वारि 'वार्तायाः' ।

अथाह्वयः ॥ ७ ॥

आख्याह्वे अभिधानं च नामधेयं च नाम च ।

आह्वयः ( पु ), आख्या, आह्वा ( २ स्त्री ), अभिधानम्, नामधेयम्, नाम ( =नामन् । ३ न ), 'नाम' के ६ नाम हैं ।

अथेति ॥ आह्वयन्त्याह्वा । 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति के प्राप्ते 'प्रसारणिभ्यो डो वक्तव्य.' ( वा० ३।२।३ ) इति ड. । तैर्यायते प्राप्यते । 'या प्रापणे' ( अ० प० अ० ) । घञर्थे क ( वा० ३।३।५८ ) । 'अन्यत्रापि–' (वा० ३।२।४८) इति डो वा । यद्वा–आह्वानमाह्व । संपदादि ( वा० ३।३।१०८ )। तस्या अय ॥ (१) ॥*॥ आख्यानम् । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (२) ॥ * ॥ एवमाह्वा ॥ (३) ॥ * ॥ अभिधीयते । कर्मणि ल्युट् ( ३।३।११३ ) ॥ ( ४ ) ॥ * ॥ म्नायते । 'म्ना अभ्यासे' (भ्वा० प० से० ) । यद्वा–नम्यतेऽभिधीयतेऽर्थोऽनेन । 'णम प्रह्वत्वे शब्दे च' ( भ्वा० प० अ० ) । 'नामन्सीमन्–' (उ० ४।१५१) इति निपातितः । 'भागरूपनामभ्यो धेय ' (वा० ५।४।३६) इति स्वार्थे वा धेय ॥ (५) ॥ * ॥ (६) ॥ * ॥ षट् 'नाम्न.' ।

हूतिराकारणाह्वानम्

हूतिः, आकारणा ( २ स्त्री ), आह्वानम् ( न ), 'बुलाने या पुकारने' के ३ नाम हैं ।

हूतिरिति ॥ ह्वानम् । ह्वेञ (भ्वा० उ० अ०) क्तिन् ( ३।३।९४ ) ॥ (१) ॥*॥ आकारणम् । कृञो ण्यन्तात् (३।१।२६) युच् (३।३।१०७) ॥ (२) ॥ * ॥ [ 'ह्वेञ् स्पर्धायां शब्दे च',भ्वा० प० अ० इत्यस्मात्] ल्युटि (३।३।११५) आह्वानम् ॥ (३) ॥ * ॥ त्रीणि 'आह्वानस्य' ।

संहूतिर्बहुभिः कृता ॥ ८ ॥

संहूतिः ( स्त्री ), 'बहुत लोगों के एक साथ पुकारने' का १ नाम है ।

संहूतिरिति ॥ बहुकर्तृका (हूति ) चेत् संहूति ॥ (१) ॥ * ॥ एक 'बहुकर्तृकाह्वानस्य' ।

विवादो व्यवहारः स्यात्

विवादः, व्यवहारः ( २ पु ), 'विवाद या झगडा' अर्थात् 'लेन-देन आदि किसी विरुद्ध विषय को लेकर परस्पर विरुद्ध भाषण करने' के २ नाम हैं ।

विवाद इति ॥ विरुद्धो वाद ॥ ( १ ) ॥ * ॥ 'वि नानार्थेऽवसन्देहे हरणं हार उच्यते । नानासन्देहहरणाद्व्यवहार इति स्मृत ॥' इति कात्यायन । 'व्यवहारः स्थितौ पणे । तुलेऽर्थे' इति हैम: [ ४।२८७-८८ ] ॥ (२) ॥ * ॥ द्वे 'ऋणादिन्यायस्य' ।

उपन्यासस्तु वाङ्मुखम् ।

उपन्यासः ( पु ), वाङ्मुखम् ( न ), 'बात को प्रारम्भ करने' के २ नाम हैं ।

उपेति ॥ उपन्यसनम् । 'असु क्षेपणे' (दि० प० से० ) । घञ् ( ३।३।१८ ) ॥ (१) ॥ * ॥ वाचो मुखमिव मुखमुपक्रम ॥ (२) ॥ * ॥ द्वे 'वचनोपक्रमस्य' ।

उपोद्घात उदाहारः

उपोद्घातः, उदाहारः ( २ पु ), 'कही जाने वाली बात की सिद्धि के लिये भूमिका बाँधने' के २ नाम हैं ।

उपोद्घात इति ॥ उप समीपे उद्धननं ज्ञापनम् । भावे घञ् (३।३।१८) ॥ (१) ॥ * ॥ उदाहरणम् । घञ् (३।३।१८ ) ॥ (२) ॥*॥ द्वे 'वक्ष्यमाणोपयोग्यर्थवर्णनस्य' । प्रकृतोपपादकस्य दृष्टान्तादेरित्यन्ये ।

शपनं शपथः पुमान् ॥ ९ ॥

शपनम् ( न ), शपथः ( पु ), 'शपथ' के २ नाम हैं ।

शपनमिति ॥ 'शप आक्रोशे' (दि० उ० अ०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'शीङ्शप–' (उ० ३।११३) इत्यथ। 'शपथः कारः आक्रोशे शपने च सुतादिभिः' इति हैम [३।३४९] ॥ (२) ॥*॥ द्वे 'सुतस्पर्शादिना शपथकरणस्य'।

**प्रश्नोऽनुयोगः पृच्छा च**

प्रश्न, अनुयोग (२ पु) पृच्छा (स्त्री), 'प्रश्न' के ३ नाम हैं।

प्रश्न इति ॥ प्रच्छनम्। 'यजयाच–' (३।३।९०) इति नङ्। 'प्रश्ने चा–' (३।२।११७) इति लिङ्गात्सम्प्रसारणम् ॥ (१) ॥*॥ अनुयोजनम्। युजे [ 'युजिर् योगे', रु० प० अ०] घञ् (३।३।१८) ॥ (२) ॥*॥ प्रच्छनम्। 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यङ्। सम्प्रसारणम् (६।१।१६)॥ (३) ॥*॥ त्रीणि 'प्रश्नस्य'।

**प्रतिवाक्योत्तरे समे।**

प्रतिवाक्यम्, उत्तरम् (२ न), 'उत्तर, जवाब' के २ नाम हैं।

प्रतीति ॥ प्रतिवचनम्। ण्यत् (३।१।१२४) ॥ (१) ॥*॥ उत्तरणम्। 'ऋदोरप्' (३।३।५७)। [ 'उत्तरं प्रवरोर्ध्वयोः। उदीच्यप्रतिवचसोरुत्तरस्तु विराटजे' इति हैम ३।५५८ ] ॥ (२) ॥*॥ द्वे 'उत्तरस्य'।

**मिथ्याभियोगोऽभ्याख्यानम्**

मिथ्याभियोग (पु) अभ्याख्यानम् (न), 'किसी पर झूठा आक्षेप करने' के २ नाम हैं।

मिथ्येति ॥ मिथ्या चासावभियोगश्च ॥ (१) ॥*॥ चक्षिङ् (अ० आ० से०) अभ्याङ्पूर्वाद्भावे ल्युट् ( ३।३।११५)॥(२)॥*॥ द्वे 'शतं मे धारयसि' इत्यादि 'मिथ्याविवादस्य'।

**अथ मिथ्याभिशंसनम् ॥ १० ॥**

**अभिशापः**

मिथ्याभिशंसनम् (न), अभिशाप (पु), 'किसी के ऊपर पापविषयक झूठा सन्देह करने' के २ नाम हैं।

अथेति ॥ अभिशंसे ( भ्वा० प० से० ) भावे ल्युट् (३।३।११५) ॥ ( १ ) ॥*॥ अभिशपनम्। घञ् ( ३।३।१८) ॥ ( २ ) ॥*॥ द्वे 'मिथ्यारोपस्य सुरापानादिविषयस्य'।

**प्रणादस्तु शब्दः स्यादनुरागजः।**

प्रणाद (पु), प्रेम से कहे हुए शब्द 'वाहवाही या शाबासी देने' का १ नाम है।

प्रणाद इति ॥ प्रणदनम्। घञ् (३।३।१८)। 'प्रणादस्तु पुमांस्तारशब्दे च श्रवणामये। अनुरागकृते शब्दे प्रणादः सीत्कृते नृणाम्' इति शब्दार्णवः ॥ (१) ॥*॥ एकं प्रीतिविशेषजनितस्य 'मुखकण्ठादिशब्दस्य'।

**यशः कीर्तिः समज्ञा च**

यश (=यशस्, न), कीर्ति, समज्ञा (२ स्त्री), 'कीर्ति' के ३ नाम हैं।

यश इति ॥ अश्नुते व्याप्नोति। 'अशू व्याप्तौ' ( स्वा० आ० से०)। 'अशेर्देवने युट् च' (उ० ४।१९१) इत्यसुन् ॥ (१) ॥*॥ कीर्त्यते। 'कॄत संशब्दने' ( चु० प० से० )। 'ऊतियूति–' (३।३।९७) इति निपातितः। 'कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च' [इति विश्वः ६१।६६]॥(२) ॥*॥ सम्यक् सर्वैर्ज्ञायते। 'ज्ञा अवबोधने' (क्र्या० प० से०)। घञर्थे क ( वा० ३।३।५८ ) ङो [३।२।४८] वा ॥*॥ 'समाज्ञा' इति समाङ्पूर्वाज्ज्ञः ['ज्ञा अवबोधने',क्र्या० प० से०]'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥*॥ 'समज्या' इति पाठे [सम्पूर्वकात्] 'अज गतौ' (भ्वा० प० से०)।'संज्ञायां समज–' (३।३।९९) इति क्यप्। 'क्यपि प्रतिषेधः' (वा० २।४।५६) इति न वीत्वम् ॥ (३) ॥*॥ त्रीणि 'कीर्तेः'।

**स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥**

स्तव (पु), स्तोत्रम् (न), नुति, स्तुति (२ स्त्री), 'स्तुति' के ४ नाम हैं।

स्तव इत्यादि ॥ स्तूयतेऽनेन। 'ऋदोरप्' (३।३।५७) ॥ (१) ॥*॥ 'दाम्नी–' (३।२।१८२) इति ष्ट्रनि स्तोत्रम् ॥ (२) ॥*॥ क्तिनि (३।३।९४) स्तुतिः ॥ ( ३ ) ॥*॥ 'णु स्तुतौ' (अ० प० अ०)। नुतिः ॥ (४) ॥*॥ चत्वारि 'स्तुतेः'।

**आम्रेडितं द्विस्त्रिरुक्तम्**

आम्रेडितम् (न), 'एक ही शब्द को दो या तीन बार कहने' का १ नाम है।

आम्रेडितमिति ॥ आम्रेड्यते आधिक्येनोच्यते स्म। 'म्रेडृ उन्मादे' ( भ्वा० प० से० )। क्त (३।२।१०२)। यथा 'सर्प सर्प' इति ॥ (१) ॥*॥ एकं 'द्विस्त्रिरुक्ते'।

**उच्चैर्घुष्टं तु घोषणा।**

उच्चैर्घुष्टम् (न), घोषणा (स्त्री), 'ऊँचे स्वर से घोषणा करने' के २ नाम हैं।

उच्चैर्घुष्टमिति ॥ उच्चैर्घुष्यते स्म। 'घुषिर् शब्दे' (चु० उ० से०)। क्त (३।२।१०२)। 'घुषिरविशब्दने' (७।२।२३) इतीण्निषेधः। विशब्दनं स्वाभिप्रायप्रकाशनम्। तच्च प्रकृते नाभिप्रेतम् ॥ ( १ ) ॥*॥ 'ण्यास–' (३।३।१०७) इति युच् ॥ (२) ॥*॥ द्वे 'उच्चैः शब्दनस्य'।

**काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः।**

काकुः ( स्त्री ), 'शोक, डर या काम इत्यादि के कारण विकृत ध्वनि से बोलने' का १ नाम है।

काकुरिति ॥ आदिना कामक्रोधादेर्ग्रहः । कक्यते । 'कक लौल्योपतापयो.' [ भ्वा० आ० से ] ॥ ( * ) ॥ बाहुलकादुण् [ ३।३।१ ] ॥ ( १ ) ॥*॥ एक 'शोकादिना विकृतशब्दस्य'।

**अवर्णाक्षेपनिर्वादपरीवादापवादवत्।**
**उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥१३॥**

अवर्णः, आक्षेपः, निर्वादः, परीवादः, अपवादः, उपक्रोशः ( ६ पु ), जुगुप्सा, कुत्सा, निन्दा ( ३ स्त्री ), गर्हणम् ( न ), 'निन्दा, शिकायत' के १० नाम हैं।

अवर्णेति ॥ यथा अवर्णादयो निन्दायाम्, तथोपक्रोशादयोऽपीत्यर्थः । वर्ण्यते । 'वर्ण वर्णने' (चु० प० से०) । घञ् (३।३।१८) । वर्ण प्रशंसा । तद्विरुद्धोऽवर्णः । 'वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना ना स्त्रिया भेदरूपाक्षरविलेपने' [इति मे० ४६।२६]॥ (१) ॥*॥ 'क्षिप प्रेरणे' (तु० उ० से०) । घञ् ( ३।३।१८ ) । 'आक्षेपो भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृत' [ इति मे० १०२।१४] ॥ ( २ ) ॥*॥ निरादिपूर्वाद्वदे ( भ्वा० प० से० ) घञ् (३।३।१८) । 'निर्वाद. स्याल्लोकवादपरिनिष्ठितवादयो ' [इति मे० ७७।३४] ॥ ( ३ ) ॥*॥ 'उपसर्गस्य घञि–' (६।३।१२२) इति (वा) दीर्घ । 'परिवादोऽपवादे स्याद्वीणावादनवस्तुनि' [इति मे० ७८।४९] ॥ ( ४ ) ॥*॥ 'अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि' [ इति विश्व. ८०।४०, मे० च० ७७।४५] ॥ (५) ॥*॥ 'क्रुश आह्वाने' (भ्वा० प० से०) । घञ् (३।३।१८) ॥ (६) ॥*॥ 'गुप गोपनकुत्सनयो ' ( भ्वा० आ० से० ) । गुपेर्निन्दाया सन् (३।१।५) । 'अ प्रत्ययात्' ( ३।३।१०२) ॥ (७) ॥*॥ 'कुत्स अवक्षेपणे' (चु० आ० से०) । 'गुरोश्च–'(३।३।१०३) इत्य. ॥ (८) ॥*॥ 'णिदि कुत्सायाम्' (भ्वा० प० से) । 'गुरोश्च–' ( ३।३।१०३ ) इत्य । 'निन्दा स्यादपवादेऽपि कुत्सायामपि योषिति' [ इति मे० ७५।७] ॥ (९) ॥*॥ 'गर्ह गल्ह कुत्सायाम्' (भ्वा० आ० से०) । ल्युट् ( ३।३।११५) ॥ (१०) ॥*॥ दश 'निन्दाया '।

**पारुष्यमतिवादः स्यात्**

पारुष्यम् ( न ), अतिवादः ( पु ), 'कटु वचन या कड़ाई से बोलने' के २ नाम हैं।

पारुष्यमिति ॥ परुषो निष्ठुरभाषी । तस्य भावः पारुष्यम् । ब्राह्मणादित्वात् ( ५।१।१२४ ) ष्यञ् । 'पारुष्यं परुषत्वे च दुर्वाक्ये पुंसि गीर्पतौ' [इति मे० ११९।९४] ॥ ( १ ) ॥*॥ अतिक्रम्योक्तिरतिवाद ॥ ( २ ) ॥*॥ द्वे 'अप्रियवचस'।

**भर्त्सनं त्वपकारगीः।**

भर्त्सनम् ( न ), अपकारगी. ( =अपकारगिर्, स्त्री ), 'फटकारने' के २ नाम हैं।

भर्त्सनमिति ॥ अपकारार्था गी ॥ (१) ॥*॥ 'भर्त्स तर्ज भर्त्जने' (चु० आ० से०) । ल्युट् ( ३।३।११५ ) ॥ (२) ॥ * ॥ द्वे 'चौरोऽसि घातयिष्यामि त्वाम्' इत्यादि 'अपकारार्थवाक्यस्य'।

**यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ॥ १४ ॥**

परिभाषणम् (न ), 'शिकायत करते हुए दोष को कहने' का १ नाम है।

य इति ॥ उपालम्भो द्वेधा—गुणाविष्करणपूर्वको निन्दापूर्वकश्च । आद्यो यथा—'महाकुलीनस्य तव किमुचितमिदम्' । द्वितीयस्तु—'वन्धकीसुतस्य तवोचितमेवेदम्' इति । तत्र यो द्वितीय स परिभाषणम् । 'भाष व्यक्तायां वाचि' ( भ्वा० आ० से० ) । ल्युट् (३।३।११५) ॥*॥ अप्रत्यये (३।३।१०२) । 'परिभाषा' अपि । 'परिभाषाश्च ततो भविष्यन्ति' इति 'हेतुमति च' (३।१।२६) इति सूत्रे भाष्यात् । 'परिभाषणं सनिन्दोपालम्भे नियमेऽपि च' [इति मे० ५३।११४] ॥ (१) ॥*॥ एक 'सनिन्दभाषणस्य'।

**तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति।**

आक्षारणा ( स्त्री ), 'परपुरुषगमन या परस्त्रीगमनविषयक दोष लगाने' का १ नाम है।

तत्रेति ॥ 'क्षर सचलने' (भ्वा० प० से०) । प्रयोजकण्यन्ताद्युच् (३।३।१०७) । ल्युटि (३।३।११५) 'आक्षारणम्' अपि । 'क्षरणाक्षारणाक्रोशा साभिशापाभिमैथुना ' (इति दुर्ग[१]) । क्लीवमपि । 'नीचमाक्षारण य स आक्रोशो मैथुनं प्रति' इति शब्दार्णव ॥ (१) ॥*॥ एक 'परस्त्रीनिमित्त पुंसः, परपुरुषनिमित्त स्त्रियाश्च आक्रोशनस्य'।

**स्यादाभाषणमालापः**

आभाषणम् ( न ), आलाप ( पु ), 'प्रेम से बात करने' के २ नाम हैं।

स्यादिति ॥ आभाषे[२] (भ्वा० आ० से०) ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'लप व्यक्तायां वाचि' ( भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'सभाषणस्य'।

---

१. कोष्ठस्थः पाठ निर्णयसागरीय ।

२. आङ्पूर्वकाद् 'भाष व्यक्तायां वाचि' इत्यस्मादिति यावत् ।

प्रलापोऽनर्थकवचः ॥ १५ ॥

प्रलाप ( पु ), निरर्थक 'बडबडाने' का १ नाम है।

प्रलाप इति ॥ प्रलपनम् । घञ् (३।३।१८) ॥ (१) ॥ * ॥ एक 'प्रयोजनशून्यस्योन्मत्तादिवचनस्य'।

**अनुलापो मुहुर्भाषा**

अनुलाप ( पु ), मुहुर्भाषा ( स्त्री ), 'एक ही विषय को बार-बार कहने' के २ नाम हैं।

अनुलाप इति ॥ मुहु पुन पुनर्भाषणम् । घञ् ( ३।३। १८) ॥ (१) ॥ * ॥ अनुलपनम् । तन् ( ३।३।१८ ) ॥ (२) ॥ * ॥ द्वे 'वारवार भाषणस्य'।

**विलापः परिदेवनम् ।**

विलाप ( पु ), परिदेवनम ( न ), 'रोते हुए बोलने' के २ नाम हैं।

विलाप इति ॥ विलपनम् । घञ् ( ३।३।१८ ) । (१) ॥ * ॥ परिदेवनम् । दिवु परिदेवने (चु० आ० से०) चुरादि । ल्युट् (३।३।११५) ॥ * ॥ युचि ( ३।३।१०७ ) 'परिदेवना' अपि ॥ (२) ॥ * ॥ द्वे 'अनुशोचनोक्ते'।

**विप्रलापो विरोधोक्तिः**

विप्रलाप (पु), विरोधोक्ति (स्त्री), 'परस्पर विरुद्ध बात कहने' के २ नाम हैं।

विप्रलाप इति ॥ विरुद्ध प्रलाप । 'विप्रलापो विरुद्धोक्तावनर्थकवचस्यपि' इति हैम [ ४।२१७ ] ॥ ( १ ) ॥ * ॥ विरोधस्य उक्ति ॥ ( २ ) ॥ * ॥ द्वे 'अन्योन्यविरुद्धवचनस्य'।

**संलापो भाषणं मिथः ॥ १६ ॥**

संलाप ( पु ), 'परस्पर बात करने' का १ नाम है।

सलाप इति ॥ सलपनम् । घञ् ( ३।३।१८ ) ॥ (१) ॥ * ॥ मिथोऽन्योन्य प्रति भाषणम् । आलापस्त्वेकेनापि क्रियते । एक 'मिथोभाषणस्य'।

**सुप्रलापः सुवचनम्**

सुप्रलाप ( पु ), सुवचनम ( न ), 'मीठे वचन' के २ नाम हैं।

सुप्रेति ॥ सुष्ठु प्रकृष्ट लपनम् । घञ् ( ३।३।१८ ) ॥ ( १ ) ॥ * ॥ ( २ ) ॥ * ॥ द्वे 'शोभनवचनस्य'।

**अपलापस्तु निह्नवः ।**

**चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा । [ ४६ ]**

**अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम् [ ४७ ]**

अपलाप , निह्नव ( २ पु ), 'असल विषय को छिपाने के लिये मुकर जाने' के २ नाम हैं।

[ चोद्यम ( न ), आक्षेप , अभियोग ( २ पु ), ये तीन 'आक्षेप' के तथा शापः, आक्रोशः ( २ पु ), दुरेषणा ( स्त्री ), ये तीन 'शाप देने' के और चाटु, चटु (२ पु न), ये दो 'मुँहदेखी बात कहने' के एवं श्लाघा (स्त्री), यह एक 'प्रेम से झूठी स्तुति करने' के नाम हैं ][१]।

अपलाप इति । अपलपनम् । घञ् (३।३।१८)। 'अपलापः प्रेम्ण्यपह्नवे' [ इति विश्व १०५।२५, मे० च १०३। २३ ] ॥ (१) ॥ * ॥ निह्नवनम् । 'ह्नुङ् अपनयने' (अ० आ० अ० ) । 'ऋदोरप्' (३।३।५७) । [ निह्नवः स्यादविश्वासेऽपलापे निकृतावपि' इति हैम ३।७३८ ] ॥ (२) ॥ * ॥ द्वे धार्यमाणे 'न धारयामि' इत्यादि 'निह्नवोक्ते'।

**संदेशवाग् वाचिकं स्यात्**

सन्देशवाक् ( =सन्देशवाच्, स्त्री ), वाचिकम् ( न ), 'संदेश वचन' के २ नाम हैं।

सदेशेति ॥ सदिश्यते । घञ् (३।३।१८) । सदेशोऽर्थ । तस्य वाक् ॥ (१) ॥ * ॥ सदिष्टोऽर्थो यथोच्यते सा वाचिकम् । 'वाचो व्याहृतार्थायाम्' ( ५।४।३५ ) इति ठक् ॥ (२) ॥ * ॥ द्वे 'सदेशवचनस्य'।

**वाग्भेदास्तु त्रिषूत्तरे ॥ १७ ॥**

यहाँ से लेकर 'त्रिषु तद्वति' ( ३।६।२२ ) तक सब शब्द त्रिलिङ्ग हैं।

वाग्भेदा इति ॥ उत्तरे वक्ष्यमाणा वाग्भेदा रुशत्यादय सम्यगन्ता [ अ० १ ७।१८-२२ लिङ्गत्रये बोध्या ] ।

**रुशती वागकल्याणी**

रुशती ( त्रि ), यह एक नाम 'अकल्याण करने वाली वाणी' का है।

रुशतीति ॥ 'रुश हिंसायाम्' ( तु० प० अ० ) तालव्यान्तस्तौदादिक । शत्रन्तात् ङीप् । 'आच्छीनद्यो –' (७। १।८०) इति नुमो विकल्प । रुशती हिंसा । रुशम् शब्द । रुशद्वचनम् । मुकुटस्तु ( 'उषती' इति पाठे ) 'उष दाहे' (भ्वा० प० से०) इत्यस्य शत्रन्तस्य 'उषती' इति रूपमाह। तन्न । तस्माच्छपि ( ३।१।६८ ) 'पुगन्त–' ( ७।३।८६ ) इति गुणस्य 'शप्श्यनोर्नित्यम्' (७।१।८१) इति नुमश्च प्रसङ्गात् ॥ (१) ॥ * ॥ एकम् 'अकल्याणवाच'।

**स्यात् कल्या तु शुभात्मिका ।**

कल्या ( त्रि ), यह एक नाम 'मांगलिक वाणी' का है।

स्यादिति ॥ कलासु साधु । 'तत्र साधु' (४।४।९८) इति यत् ॥ * ॥ 'काल्या' अपि–इति स्वामी । तत्र काले साधु ॥ (१) ॥ * ॥ एक 'शुभवचनस्य'।

---

१ कोष्ठस्थ पाठ निर्णयसागरीय ।

**अत्यर्थमधुरं सान्त्वम्**

सान्त्वम् ( त्रि ), यह एक नाम 'अत्यन्त मधुर वचन' का है।

अत्यर्येति ॥ सान्त्वयति । 'षान्त्व सामप्रयोगे' ( चु० प० से० ) चुरादि । पचाद्यच् ( ३।१।१३४ ) । ['सान्त्वं सामनि दाक्षिण्ये' इति हैम २।५५४ ] ॥ ( १ ) ॥ * ॥ एकं 'सान्त्ववचनस्य'।

**सगतं हृदयंगमम् ॥ १८ ॥**

सङ्गतम्, हृदयङ्गमम् (२ त्रि), 'संगतियुक्त वचन, मौके की बात' के २ नाम हैं।

सगतमिति ॥ संगच्छते स्म । 'गत्यर्था–' ( ३।४।७२ ) इति कर्तरि क्त ॥ (१) ॥ * ॥ हृदय गच्छति । 'गमश्च' (३।२।४७) इति खच् ॥ (२) ॥ * ॥ द्वे 'युक्त्या मिलितस्य वचनस्य'।

**निष्ठुरं परुषम्**

निष्ठुरम्, परुषम् ( २ त्रि ), 'निष्ठुर या कर्कश वचन' के २ नाम हैं।

निष्ठुरमिति ॥ नितिष्ठति । 'मद्गुरादयश्च' ( उ० १। ४१ ) इति कुरच् । 'उपसर्गात्सुनोति–' ( ८।३।६५ ) इति षत्वम् ॥ (१) ॥ * ॥ पिपर्ति पूरयति अलबुद्धि करोति । 'पॄ पालनपूरणयो' ( जु० प० से० ) । 'पॄनहि–' (उ० ४। ७५ ) इत्युषच् । 'परुषं 'कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि' इति हैम. [३।७८०] ॥ (२) ॥*॥ द्वे 'कर्कशवचनस्य'।

**ग्राम्यमश्लीलम्**

ग्राम्यम्, अश्लीलम् ( २ त्रि ), 'भौंड आदि के कहे हुए लज्जाजनक वचन' के २ नाम हैं।

ग्राम्यमिति ॥ ग्रामे भवम् । 'ग्रामाद्यखञौ' (४।२।९४) इति यत् । 'ग्राम्यं स्त्रीकरणे क्लीबेऽश्लीलप्राकृतयोस्त्रिपु' [इति मे० ११४।१८] ॥ (१) ॥*॥ श्रियं लाति । 'आतोऽनुप–' ( ३।२।३ ) इति क । तद्भिन्नम् । कपिलकादित्वात् ( वा० ८।२।१८ ) लत्वम् ॥ (२) ॥ * ॥ द्वे 'भण्डादिवचनस्य'।

**सूनृतं प्रिये। सत्ये**

सूनृतम् ( त्रि ), 'सत्य और प्रिय वचन' का १ नाम है।

सूनृतमिति ॥ प्रीणाति । 'प्रीञ् तर्पणे' ( क्र्या० प० अ० ) । 'इगुपध–' ( ३।१।१३५ ) इति क ॥ * ॥ सत्सु साधु। यत् (४।४।९८) ॥*॥ प्रियं यत्सत्यम् तस्मिन्। सुष्ठु नृत्यन्त्यनेन । घञर्थे क. ( वा० ३।३।५८ ), यद्वा–'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वाद्गुणाभावः । 'अन्येषामपि–' (६।३।१३७) इति दीर्घ । यत्तु—मूलविभुजादित्वात् क ( वा० ३।२।५ ) । इति मुकुटेनोक्तम् । तन्न । तस्य कर्तरि विधानात् । 'सूनृतं मङ्गलेऽपि स्यात्प्रियसत्ये वचस्यपि' [ इति मे० ६७।१७४ ] ॥ (१) ॥ * ॥ एकं 'सत्यस्य'।

**अथ संकुलक्लिष्टे परस्परपराहते ॥१९॥**

सङ्कुलम्, क्लिष्टम्, परस्परपराहतम् ( ३ त्रि ), 'विरुद्धार्थक या बेमेलकी बात' के ३ नाम हैं।

अथेति ॥'सकुलति । 'कुल संस्त्याने'(भ्वा० प० से०)। क ( ३।१।१३५ ) । 'संकुल त्रिपु विस्पष्टवाचि व्याप्ते' [इति मे० १५५।१४३] ॥ ( १ ) ॥*॥ क्लिश्यते स्म । 'क्लिशू विबाधने' ( क्र्या० प० से० ) । क्तः ।–( ३।२। १०२) । 'यस्य विभाषा–' (७।२।१५) इतीडभाव –इति मुकुट । वस्तुतस्तु 'क्लिशः क्त्वानिष्ठयो' ( ७।२।५० ) इति वेट् ॥ ( २ ) ॥*॥ पराऽघानि । हन्तेः कर्मणि क्तः (३।२।१०२) । परस्परेण पराहतम् ॥ (३) ॥*॥ 'माता मे वन्ध्या' इतिवत् ॥ त्रीणि 'विरुद्धार्थस्य वचनस्य'।

**लुप्तवर्णपदं ग्रस्तम्**

लुप्तवर्णपदम्, ग्रस्तम् ( २ त्रि ), 'रोगी, बालक या असमर्थ के कहे हुए अधूरे वचन' के २ नाम हैं।

लुप्तेति ॥ लुप्तो वर्ण पदं वा यत्र पदे वाक्ये वा ॥ (१) ॥*॥ ग्रस्यते स्म । 'ग्रसु अदने' (भ्वा० आ० से०) । क्त (३।२।१०२) । 'ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते' [ इति विश्व ५८।२६ ] ॥ (२) ॥ * ॥ द्वे 'अशक्त्यादिनाऽसंपूर्णोच्चारितस्य'।

**निरस्त त्वरितोदितम्।**

निरस्तम्, त्वरितोदितम् (२ त्रि), 'शीघ्रता से कहे हुए वचन' के २ नाम हैं।

निरस्तमिति ॥ त्वरितमुदितम् ॥ ( १ ) ॥*॥ निरस्यते स्म । 'असु क्षेपणे' ( दि० प० से० ) । क्त ( ३।२। १०२) । 'निरस्तः प्रेषितशरे' संत्यक्ते त्वरितोदिते । निष्ठ्यूते प्रतिहते च' इति हैम [३।२८४] ॥ ( २ ) ॥*॥ द्वे 'शीघ्रोच्चारितस्य वचस'।

**अम्बूकृतं सनिष्ठेवम्**

अम्बूकृतम्, सनिष्ठेवम् ( २ त्रि ), 'थूक का छींटा उड़ाते हुए कहे गये वचन' के २ नाम हैं।

अम्बूकृतमिति ॥ निष्ठेवनम् । 'ष्ठिवु निरसने' (भ्वा०

१. 'कठिने इति पा०।

१. लघूपधगुणस्य दुर्वारत्वात् 'सकुलति' इति पाठश्चिन्त्यः।

२. 'प्रेरितशरे' इति पा०।

प० से०)। घञ् (३।३।१८)। लघूपधगुण (७।३।८६)। 'सनिष्ठीवम्' इति पाठे तु पृषोदरादित्वात् (६।३।१०९) ईकारः। सह निष्ठेवेन श्लेष्मकणादिनिर्गमेनेति सनिष्ठेवम्॥ (*)॥ अम्बुशब्द उपचारात्तद्वति। अनम्बु यम्बु अकारि। च्वि (५।४।५०)। 'च्वौ च' (७।४।२६) इति दीर्घः। क्त (३।२।१०२)॥ (१)॥*॥ एकं 'श्लेष्मनिर्गमसहित-वचनस्य'।

**अबद्धं स्यादनर्थकम् ॥२०॥**

**अबद्धम्, अनर्थकम् (२ त्रि), 'अनर्थक वचन' अर्थात् 'बिना मतलब की बात' के २ नाम हैं।**

अबद्धमिति॥ न बध्यते स्म। 'बन्ध बन्धने' (क्र्या० प० अ०)। क्त (३।२।१०२)॥ (१)॥*॥ न अर्थो यस्य। 'अर्थान्नञः' [ग०] इत्युर प्रभृतिषु (५।४।१५१) पाठान्नित्य कप् समासान्तः। अनर्थकं जरद्गववादिवाक्यम्। 'अबध्यं स्याद्' इति पाठः। इति कौमुदी। 'अबध्यमबद्धं स्यादनर्थकवचस्यपि' इति [हैमे ३।५०६, मेदिन्या ११८।७१ च] दर्शनात्॥(२)॥*॥ द्वे 'समुदायार्थशून्यस्य वचनस्य'।

**अनक्षरमवाच्यं स्याद्**

**अनक्षरम्, अवाच्यम् (२ त्रि), 'नहीं कहने योग्य वचन' के २ नाम हैं।**

अनक्षरमिति॥ न प्रशस्तान्यक्षराणि यस्मिन्। अक्षराणामप्राशस्त्यं चार्थद्वारकम्॥ (१)॥*॥ न वचनार्हम्। ण्यत् (३।१।१२४)। 'वचोऽशब्दसंज्ञायाम्' (७।३।६७) इति न कुत्वम्॥ (२)॥*॥ द्वे 'निन्दावचनस्य'।

**आहतं तु मृषार्थकम्।**

**श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम् [ ४९ ]**

**आहतम्, मृषार्थकम् (२ त्रि), 'सर्वथा झूठे वचन' के २ नाम हैं।**

**[ श्राव्यम्, हृद्यम्, मनोहारि (=मनोहारिन्), विस्पष्टम्, प्रकटोदितम् (५ त्रि), 'स्पष्ट वचन' के ५ नाम हैं। ]**

आहतमिति॥ आहन्यते स्म। क्त (३।२।१०२)। 'आहतं गुणिते चापि ताडिते च मृषार्थके। स्यात्पुरातनवस्त्रेऽपि नववस्त्र वितानयोः' [इति मे० ६०।९०-९१]॥(१) मृषार्थो यस्य॥*॥ एकम् 'एष वन्ध्यासुतो याति' इत्यादिकस्य 'मृषावचनस्य'।

**'सोल्लुण्ठनं तु सोत्प्रासम्।**

**सोल्लुण्ठनम्, सोत्प्रासम् (२), 'हँसी की बात' के २ नाम हैं।**

सोल्लुण्ठनमिति॥ 'लुठि आलस्ये प्रतीघाते च' (भ्वा० प० से०)। ल्युट् (३।३।११५)। उल्लुण्ठनेन सहितम्॥ (१)॥*॥ उत्प्रासनम्। 'असु क्षेपणे' (दि० प० से०)। घञ् (३।३।१८)। उत्प्रास उपहासः। तत्सहितम्॥ (२)॥*॥ द्वे 'सोपहासस्य' [ वचनस्य ]।

**मणितं रतिकूजितम्।'**

**मणितम्, रतिकूजितम् (२ त्रि), 'रति-काल में किये हुए शब्द' के २ नाम हैं।**

मणितमिति॥ 'मण कूजने' (भ्वा० प० से०)। भावे क्त (३।३।११४)॥ (१)॥*॥ रतौ कूजितम्॥ (२)॥*॥ द्वे 'रतिकूजितस्य'।

**अथ म्लिष्टमविस्पष्टम्**

**म्लिष्टम्, अविस्पष्टम् (२ त्रि) 'अस्पष्ट वचन' के २ नाम हैं।**

म्लेति। म्लेच्छ्यते स्म। 'म्लेच्छ अव्यक्ते शब्दे' (भ्वा० प० से०)। 'क्षुब्धस्वान्त-' (७।२।१८) इति निपातितम्। 'म्लिष्टं विस्पष्टव्यक्तवाचि म्लाने' [इति मे० ३५।२४]॥ (१)॥*॥ न विस्पश्यते स्म। 'स्पश बाधनस्पर्शनयोः' [भ्वा० उ० से०] (*) कर्मणि क्त (३।२।१०२)। '-अविस्पष्ट-' (७।२।१८) इति निर्देशादिडभावः॥ (२)॥*॥ द्वे 'अप्रकटवचनस्य'।

**वितथं त्वनृतं वचः॥ २१॥**

**वितथम्, अनृतम् (२ त्रि), 'झूठे वचन' के २ नाम हैं।**

वितथमिति॥ विगतं तथा = सत्यं यस्माद्वितथम्। 'अच्' (५।४।७५) इति योगविभागात्समासान्तोऽच्। यद्वा—वितन्यते। बाहुलकात्कथन्। 'अनुदात्तो-' (६।४।३७) इति नलोपः॥ (१)॥*॥ न ऋतम्। 'अनृतं कृषावसत्येऽपि' [इति मे० ५९।७८]॥(२)॥*॥ द्वे 'असत्यवचसः'।

**सत्यं तथ्यमृतं सम्यग**

**सत्यम्, तथ्यम्, ऋतम्, सम्यक् (=सम्यञ्च्। ४ त्रि), 'सत्य वचन' के ४ नाम हैं।**

सत्यमिति॥ सति साधु सत्यम्। 'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति' [इति मे० ११७।६१]॥ (१)॥*॥ तथा = सत्ये साधु तथ्यम्॥(२)॥*॥ अर्यते स्म। 'ऋ गतौ' (भ्वा० प० अ०)। क्त (३।२।१०२)। ['ऋतं शिलोञ्छे पानीये पूजिते दीप्तसत्ययोः' इति हैम २। १६१]॥ (३)॥*॥ समञ्जति सगच्छते। 'अञ्चु गतौ' (भ्वा० प० से०)। क्विन् (३।२।५९) सम्यक्। सम्यक् पुंसि, स्त्रियां समीची॥ (४)॥*॥ चत्वारि 'सत्यवचसः'।

**अमूनि त्रिषु तद्वति।**

**'रुपती' से लेकर यहाँ तक सब शब्द द्रव्यवाचक होनेपर त्रिलिङ्ग होते हैं।**

१ 'च नाऽऽनके' इति पा०।

अमूनीति ॥ अमूनि [सत्य-तथ्यादीनि] उपचारात्तद्वति वर्तमानानि त्रिषु। 'त्रिषूत्तरे' [अ० १।६।१७] इत्यनेन वाग्विशेषपराणां त्रिलिङ्गत्वमुक्तम्। अनेन तु वक्तृपराणाम्–इति विशेषः।

**शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥२२॥**

**स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः।**

**आरवारावसंरावविरावाः**

शब्दः, निनादः, निनदः, ध्वनिः, ध्वानः, रवः, स्वनः, स्वानः, निर्घोषः, निर्ह्रादः, नादः, निस्वानः, निस्वनः, आरवः, आरावः, संरावः, विरावः (१७ पु) 'शब्द' के १७ नाम हैं।

शब्द इति ॥ शब्दनम्। 'शब्द शब्दकरणे' (चु० उ० से०)। 'एरच्' (३।३।५६)। घञ् (३।३।१८) वा॥ (१) ॥*॥ 'णद अव्यक्ते शब्दे' (भ्वा० प० से०)। 'नौ गदनद–' (३।३।६४) इत्यप्॥ (२) ॥*॥ पक्षे घञ् (३।३।१८)॥ (३) ॥*॥ 'ध्वन शब्दे' (भ्वा० प० से०)। 'खनिकषि–' (उ० ४।१४०) इति इः॥ (४) ॥*॥ घञि ध्वानः (३।३।१८)॥ (५) ॥*॥ रवणम्। 'रु शब्दे' (अ० प० से०)। 'ऋदोरप्' (३।३।५७)॥ (६) ॥*॥ 'स्वनहसोर्वा' (३।३।६२) इत्यप्घञौ॥ (७) ॥*॥ (८) ॥*॥ 'घुष घुष्टौ' (भ्वा० उ० से०)। 'ह्राद अव्यक्ते शब्दे' (भ्वा० आ० से०)। घञ् (३।३।१८)॥ (९) ॥*॥ (१०) ॥*॥ 'विभाषा ङि रुप्लुवोः' (३।३।५०) इति घञ्॥ (११) ॥*॥ (१२) ॥*॥ (१३) ॥*॥ (१५) ॥*॥ पक्षे अप् (३।३।५७)॥ (१४) ॥*॥ 'उपसर्गे रुवः' (३।३।२२) इति घञ्॥ (१६) ॥*॥ (१७) ॥*॥ सप्तदश 'शब्दस्य'।

**अथ मर्मरः ॥२३॥**

**स्वनिते वस्त्रपर्णानाम्**

मर्मरः (पु), 'कपड़े या सूखे पत्तों के शब्द' का १ नाम है।

अथेति ॥ वस्त्राणां पर्णानां च स्वनिते मर्मरः। शब्दानुकरणमिति स्वामी। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'कृदरादयश्च' (उ० ५।४१) इत्यरन् मुगागमो गुणश्च–इत्यन्ये। मर्म राति वा। कः (३।२।३)। 'मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ तथा। पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि'[१]॥ (१) ॥*॥ एकं 'वस्त्रपर्णध्वनेः'।

**भूषणानां च शिञ्जितम्।**

**निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥ २४ ॥**

शिञ्जितम् (न), निक्वाणः, निक्वणः, क्वाणः, क्वणः (४ पु), क्वणनम् (न), 'आभूषणों की ध्वनि' के ६ नाम हैं।

भूषणानामिति ॥ भूषणानां ध्वनौ। 'शिजि अव्यक्ते शब्दे' (अ० आ० से०) तालव्यादिः। भावे क्तः (३।३।११४)॥*॥ 'गुरोश्च–' (३।३।१०३) इत्यप्रत्यये 'शिञ्जा' अपि–इति स्वामी॥ (१) ॥*॥ 'नौ' (३।३।६०) इति 'अनुपसर्गे' (३।३।६१) इति चानुवर्तमाने 'क्वणो वीणायां च' (३।३।६५) इत्यप्॥ (३) ॥*॥ (५) ॥*॥ पक्षे घञ् (३।३।१८)॥ (२) ॥*॥ (४) ॥*॥ ल्युट् (३।३।११५)॥ (६) ॥*॥ (यत्तु–) पञ्च वीणाया अन्यस्य च किन्नरादेः क्वणने–इति मुकुटः। तन्न। अपिशब्देन पूर्वान्वयस्य बोधनात्। अतः षडपि 'भूषणध्वनेः'[१]।

**वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः।**

इन 'निक्वाण' आदि शब्दों में 'प्र' आदि उपसर्ग जोड़ने से बने हुए 'प्रक्वाणः, प्रक्वणः' आदि नाम 'वीणादिके शब्द' के हैं।

वीणाया इति ॥ प्रादेरिति। उपसर्गात्। 'वीणायां च' (३।३।६५) इत्यनेन सोपसर्गादपि विधानात्। आदिशब्दादुपक्वणादयः॥*॥ इमे 'वीणाक्वणनस्य'।

**कोलाहलः कलकलः**

कोलाहलः, कलकलः (२ पु०), 'कोलाहल, शोरगुल' के २ नाम हैं।

कोलाहल इति ॥ 'कुल संस्त्याने' (भ्वा० प० से०)। कोलनम्। कोलः एकीभावः। तमाहलति। 'हल विलेखने' (भ्वा० प० से०)। अच् (३।१।१३४)। कः (३।२।३) वा॥ (१) ॥*॥ 'कल शब्दे' (भ्वा० आ० से०)। घञ् (३।३।१८)। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। कलादपि कलः। (यत्तु–) कोलाम्सूकरानाहते त्रासयति–इति स्वाम्याह। तन्न। 'आङो यमहनः' (१।३।२८) इत्यकर्मकात् स्वाङ्गकर्मकाच्च हन्तेरात्मनेपदविधानात्। यदपि–'आभीक्ष्ण्ये द्विर्भावः' (८।१।४) इति। तदपि न। तस्य तिङव्ययकृन्मात्रविषयत्वात्। 'कलकल उक्तः कोलाहले तथा सर्जनिर्यासे'[२] [इति मे० १५५।१५०]॥ (२) ॥*॥ द्वे 'बहुभिः कृतस्य महाध्वनेः'।

१. पाठोऽयं किञ्चित्परिवर्तनेन हैमस्य प्रतीयते। तत्र हि–'मर्मरो वसनान्तरे। शुष्कपत्रध्वनौ चापि मर्मरी पीतदारुणि' (३।६२७)।

१. अग्निपुराणे तु 'भूषणानां च शिञ्जितम्। वीणाया निक्वणः क्वाणः' इति विभागो दृश्यते।

२. 'सालनिर्यासे' इति पा०।

**तिरश्चां वाशितं रुतम् ॥२५॥**

वाशितम् ( न ), 'पक्षियोंके चहचहाने' अर्थात् 'शब्द करने' का १ नाम है।

तिरश्चामिति ॥ तिरोऽञ्चन्ति ते तिर्यञ्चः । तेषां यद्रुतम् तद्वाशितम् । 'वाशृ शब्दे' (दि० आ० से०) ताल्व्यान्तः । भावे क्तः (३।३।११४) । 'वाशिता करिणीनार्योर्वाशितं भाविते रुते'(?) । ("वासिता करिणीनार्योर्वासितं सुरभीकृते । ज्ञानमात्रे खगाराव वासितं वस्त्रवेष्टिते' इति विश्वकोषा'दिदशनेन तु दन्त्यवानपि ) ॥ (१) ॥ * ॥ एकं 'पक्षिशब्दस्य' ।

**स्त्री प्रतिश्रुत्प्रतिध्वाने**

प्रतिश्रुत् ( स्त्री ), प्रतिध्वान ( पु ), 'प्रतिध्वनित शब्द' के २ नाम हैं।

स्त्रीति ॥ 'श्रु श्रवणे' ( भ्वा० प० से० ) । सम्पदादित्वात् (वा० ३।३।१०८) क्विप् । प्रति प्रथमशब्दं लक्ष्यीकृत्य श्रूयते प्रतिश्रुत् ॥ (१) ॥ * ॥ ( २ ) ॥ * ॥ द्वे 'प्रतिध्वने' ।

**गीतं गानमिमे समे ।**

इति शब्दादिवर्गः ॥ ६ ॥

गीतम्, गानम् ( २ न ), 'गाना' के २ नाम हैं।

गीतमिति ॥ गीयते । भावे क्तल्युटौ ( ३।३।११४-११५ ) । 'गीतं शब्दितगानयोः' इति हैमः [२।१६९ ] ॥ (१) ॥ * ॥ (२) ॥ * ॥ द्वे 'गानस्य' ।

इति शब्दादिवर्गविवरणम् ॥ ६ ॥

## अथ नाट्यवर्गः ॥ ७ ॥

**निषादर्षभगान्धारषड्जमध्यमधैवताः ।**
**पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥**

निषाद०, ऋषभ, गान्धार, षड्ज, मध्यम, धैवत, पञ्चम ( ७ पु ), ये ७ 'वीणा आदिके तार तथा प्राणियोंके कण्ठसे निकले हुए स्वरोंके भेद' हैं।

निषादेति ॥ निषीदति मनोऽस्मिन् । 'षद्लृ विशरणगत्यवसादनेषु' ( भ्वा०, तु० प० अ० ) । 'हलश्च' ( ३।३।१२१ ) । इति घञ् । 'सदिरप्रतेः' ( ८।३।६६ ) इति षत्वम् । 'निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे' [इति मे० ७७।३४ ] ॥ ( १ ) ॥ * ॥ ऋषति बलीवर्दस्वरसादृश्यं गच्छति । 'ऋषी गतौ' ( तु० प० से० ) । 'ऋषिवृषिभ्यां कित्' (उ० ३।१२३) । इत्यभच् । 'ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः ॥ उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति । शूकशिम्ब्यां सिरालायां विधवायां क्वचिन्मता' [ इति मे० १०७।११-१२, 'ऋषभः स्यादादिजिने' इति हैमः ३।४।८१ ]॥(१)॥*॥ गन्धारदेशे भवः । अण् (४।३।५३)। 'गान्धारो रागसिन्दूरस्वरेषु नीवृदन्तरे' इति हैमः [३।५८५] ॥(१)॥*॥ षड्भ्यो जातः । 'पञ्चम्याम्–' (३।२।९८) इति डः । 'नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः' ॥ (१) ॥*॥ मध्ये भवः । 'मध्यान्मः' ( ४।३।८ ) । 'तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः । नाभिं प्राप्तो महानादो मध्यस्थस्तेन मध्यमः' । 'मध्यमो मध्यजे स्वरे । देहमध्ये मध्यदेशे (मध्यमा कर्णिकाङ्गुलिः । राकारजस्वला चापि)' इति हैमः [ ३।५००-१ ] । 'मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् ॥ स्त्रियां दृष्टरजोनायां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथा' [ इति मे० १११।४९-५१ ] ॥ (१) ॥ * ॥ धीमतामयं धैवतः, पृषोदरादिः ( ६।३।१०९ ) । 'संज्ञायाम्' ( ८।२।११ ) इति वा वत्वम् ॥ ( १ ) ॥ * ॥ 'वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्धसु । विचरन्पञ्चमस्थानप्राप्त्या पञ्चम उच्यते' । तज्जन्यत्वात्स्वरः पञ्चमः । पञ्चानां पूरणः 'तस्य पूरणे–' (५।२।४८) इति डट् । 'नान्तात्–' (५।२।४९) । इति मट् । 'पञ्चमो रागभेदे स्यात्स्वरभेदे च पञ्चमी । पाण्डवानां च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु'[इति मे० १११।४८-४९]।'पञ्चमो रुचिरे दक्षे[पञ्चानामपि पूरणे । रागभेदे पञ्चमी तु द्रौपद्याम्–'इति हैमः ३।४९८-९९] ॥(१)॥*॥ अमी सप्त स्वरास्तन्त्रीतः कण्ठाच्चोच्चरन्ति । 'दारवी गात्रवीणा च द्वे वीणे स्वरधारिके' इति वचनात् वंशमुरजादयस्तु अनुकरणमात्रोपयोगिन इति भावः । नारदः—'षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् ॥ अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः' ॥ इति । एकैकं 'स्वराणां पृथक्पृथक्' ।

**काकली तु कले सूक्ष्मे**

काकली ( स्त्री ), 'मधुर ध्वनि' का १ नाम है।

काकलीति ॥ ईषत्कलः काकली । 'ईषदर्थे च' (६।३।१०५) इति कोः कादेशः । गौरादित्वात् (४।१।४१)ङीप् । अन्ये तु—'कल' (भ्वा० आ० से० ) इन् (उ० ४।११८) । कलिः शब्द ईषदत्रेति काकलिः । तत 'कृदिकारात्–' (ग० ४।१।४५ ) इति ङीप् । अत एव 'सावृदितं काकलिभिः कुलीनैः' इत्यभिनन्दप्रयोगः संगच्छते—इत्याहुः ॥ (१) ॥*॥ एकं 'सूक्ष्मध्वने' ।

१ कोष्ठस्थः पाठः निर्णयसागरीयः ।
२ आदिपदेन मेदिन्यादेरपि संग्रहः ।

१ 'पूरणे' इति पा० ।
२ अष्टाध्यायीपाठे चकारो न दृश्यते ।

ध्वनौ तु मधुरास्फुटे ।
कलः

कलः ( त्रि ), 'अस्पष्ट मधुर ध्वनि' का १ नाम है।

ध्वनाविति ॥ मधुरः श्रुतिसुखः । स चासावस्फुटोऽव्यक्ताक्षरश्च । तादृशे ध्वनौ कलः । 'कड मदे' ( भ्वा० प० से०) । कडति माद्यत्यनेन । 'हलश्च' ( ३।३।१२१ ) इति घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । डलयोरेकत्वस्मरणम् । यद्वा—कलनम् । 'कल सङ्ख्याने' (भ्वा० आ० से०) । 'खनो घ च' ( ३।३।१२५ ) इति घः । यद्वा—कलते । पचाद्यच् (३।१।१३४)। 'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः ॥ कलं शुक्रे त्रिष्वजीर्णे 'नाव्यक्तमधुरध्वनौ' [इति मे० १४५।५-६]॥(१) ॥ * ॥ एकम् 'अव्यक्तमधुरध्वने'।

मन्द्रस्तु गम्भीरे

मन्द्रः ( त्रि ), 'गम्भीर ध्वनि' का १ नाम है।

मन्द्र इति ॥ गम्भीरे मेघादिध्वनौ । मन्दते । 'मदि स्तुत्यादौ' ( भ्वा० अ० से० ) । 'स्फायि–' ( उ० २।१३ ) इति रक् ॥ (१) ॥ * ॥ एकं 'गम्भीरशब्दस्य'।

तारोऽत्युच्चैः

तारः ( त्रि ), 'अत्यन्त ऊँचे शब्द' का १ नाम है।

तार इति ॥ तारयति अतिक्रामयत्यन्याञ्शब्दान् । 'बहुलमेतन्निदर्शनम्' इति चुरादिगणसूत्रात्स्वार्थे णिच् । पचाद्यच् ( ३।१।१३४ ) ॥ (१) ॥ * ॥ एकम् 'उच्चशब्दस्य'।

त्रयस्त्रिषु ॥ २ ॥

नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः [ ५० ]
स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते [ ५१ ]

कल, मन्द्र, तार, ये तीनों शब्द त्रिलिङ्ग ( विशेष्यनिघ्न ) हैं।

[ मनुष्योंके हृदयमें बाइस प्रकार की ध्वनियाँ रहती हैं, उसमें कण्ठके बीच वाली को 'मन्द्रः' ( त्रि ) और शिरके बीच में रहनेवाली को 'तारः' ( त्रि ), कहते हैं ]।

त्रय इति ॥ त्रयः कलमन्द्रतारा. [ त्रिषु लिङ्गेषु विशेष्यनिघ्ना इति भाव. ] ।

समन्वितलयस्त्वेकतालः

एकतालः ( पु ), 'गति और बाजाओं के एक लय को स्वरमें मिलाने' का १ नाम है।

समन्वितेति ॥ सम्यगन्वितो लयो नृत्यगीतवाद्यानां साम्यं यत्र स. । एक. समस्तालो मानमस्येत्येकताल. ॥ (१) ॥ * ॥ एकं 'गीतवाद्यलयसाम्यस्य'।

१. 'मूलविवृद्धौ' इति पा० । २. 'चाव्यक्त' इति पा० ।

वीणा तु वल्लकी ।
विपञ्ची

वीणा, वल्लकी, विपञ्ची ( ३ स्त्री ), 'वीणा' के ३ नाम हैं।

वीणेति ॥ वेति जायते स्वरोऽस्याम् । 'वी गत्यादिषु' (अ० प० अ०) । 'रास्नासास्ना–' ( उ० ३।१५ ) इत्यादिना नप्रत्ययो णत्वं गुणाभावश्च निपातित. । 'वीणा विद्युति वल्लक्याम्' [ इति मे० ४७।२८ ] ॥ (१) ॥ * ॥ वल्लते । 'वल वल्ल संवरणे' ( भ्वा० आ० से० ) । क्वुन् ( उ० २।३२ ) । गौरादित्वात् ( ४।१।४२ ) ङीष् ॥ (२) ॥ * ॥ विपञ्चयति विस्तारयति शब्दम् । 'पचि विस्तारे' (चु० प० से०) । ण्यन्तादच् ( ३।१।१३४ ) । गौरादि ( ४।१।४१ ) । 'विपञ्ची केलिवीणयो' [ इति मे० २८।१७ ] ॥ (३) ॥ * ॥ त्रीणि 'वीणाया.'।

सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥

परिवादिनी ( स्त्री ), 'सितार' अर्थात् 'सात तारवाली वीणा' का १ नाम है।

सेति ॥ सैव सप्तभिस्तन्त्रीभिरुपलक्षिता परिवदति स्वरान् । 'सुपि–' ( ३।२।७८ ) इति णिनि ॥ (१) ॥*॥ एकं 'सितार इति ख्यातस्य'।

ततं वीणादिकं वाद्यम्

ततम् ( न ), 'वीणा आदि बाजाओं' का १ नाम है।

ततमिति ॥ वीणादि यद्वाद्यं वादनीयम् तत्ततम् । आदिना मैरन्ध्रीरावणहस्तकिन्नरादि । तन्यते 'तनिमृङ्भ्यां किच्च' (उ० ३।८८) इति तन् । 'अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु सदागतौ'[१] [इति मे० ५५।२०-२१]॥(१) ॥*॥ एकं 'वीणादिवाद्यस्य'।

आनद्धं मुरजादिकम् ।

आनद्धम् ( न ), 'जो चमड़ेसे मढ़े गये हों, उन मुरज आदि बाजाओं' का १ नाम है।

आनद्धमिति ॥ आनह्यते स्म मुखे चर्मणा बध्यते स्म । 'णह बन्धने' (दि० उ० अ०) । क्त (३।२।१०२) । 'नहो ध.' (८।२।३४) । आदिपदात्पटहादि । 'आनद्धं मुरजादौ च क्लीबं स्यात्सहिते त्रिषु' [ इति मे० ८०।२७ ] ॥ (१) ॥ * ॥ एकं 'मुरजादिवाद्यस्य'।

वंशादिकं तु शुषिरम्

शुषिरम् ( न ), 'वंशी आदि बाजाओं' का १ नाम है।

वंशेति ॥ वंशो वेणु । आदिपदात्काहलादि । शुषिश्छिद्रमस्यास्ति । 'ऊषशुषि–' ( ५।२।१०७ ) इति रः । 'शु-

१. 'समीरणे' इति पा० ।

पिर वशादिवाद्ये विवरेऽपि'नपुसकम्। शुषिरो न स्त्रिया गर्ते, वह्नौ, रन्ध्रान्विते त्रिषु' [ इति मे० १३९।२२९ ] । 'सूर्म्यं सुषिरामिव' 'इति [महाभाष्य-]प्रयोगात् दन्त्याद्यपि [सुषिरम्] । प्राच्यास्तु 'तालव्याद्येव'[२] इत्याहु ॥ ( १ ) ॥*॥ एक 'वशवाद्यस्य' ।

कास्यतालादिक घनम् ॥ ४ ॥

घनम् (न), 'घडी घण्टा आदि बाजाओं' का १ नाम है।

कास्येति ॥ कास्यमयस्ताल कास्यताल । आदिना घण्टादि घन निबिडत्वात् । हन्यते । 'हन हिंसागत्यो '(अ० प० अ० ) । 'मूर्तौ घन ' (३।३।७७) इत्यप् घनादेशश्च । 'घन सान्द्र दृढ दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । सङ्घे मुस्त घन मध्यनृत्तवाद्यप्रभेदयो ' इति हैम [ २।२६५ ] ॥ ( १ ) ॥*॥ एक 'कास्यतालादे ।

चतुर्विधमिद वाद्यवादित्रातोद्यनामकम् ।

वाद्यम्, वादित्रम्, आतोद्यम् ( ३ न ), 'पूर्वोक्त तत १, आनद्ध २, सुषिर ३ और घन ४, इन चार प्रकारके बाजाओं' नाम है।

चतुरिति ॥ इद ततादि चतुर्विध वाद्यादित्रिकनामकम् । वाद्यते ध्वन्यते । वदे ( भ्वा० प० से० ) ण्यन्तात् ( ३।१।२६ ) 'अचो यत् (३।१।९७) ॥ (१) ॥ * ॥ 'भूवादिगृभ्यो णित्रन् ( उ० ४।१७१ ) ॥ ( २ ) ॥*। आसमन्तात्तुद्यते ताड्यते । 'तुद व्यथने (तु० उ० अ० ) । ण्यत् (३।१।१२४) ॥ (३) ॥*॥ त्रीणि ततादिचतुष्टयस्य ।

मृदङ्गा मुरजा.

मृदङ्ग , मुरज ( २ पु ), 'मृदङ्ग' के २ नाम है।

मृदङ्गा इति ॥ मृद्यते । मृद क्षोदे'(क्र्या० प० से०)। 'विडादिभ्य कित् (उ० १।१२१) इत्यङ्गच । मृत् अङ्गमस्येति वा । 'मृदङ्गो घोषवाद्ययो ' इति हैम [३।१२८]। ( १ ) ॥ * ॥ मुराद्वेष्टनाज्जात । 'मुर सवेष्टने' ( तु० पञ्चम से० ) तुदादि । 'पञ्चम्याम्-' (३।२।९८) इति ड । कण्ठले निश्न जातमस्येति वा ॥ (२) ॥*॥ द्वे 'मृदङ्गस्य' ।

निषादेति भेदास्त्वङ्क्याऽऽलिङ्ग्योर्ध्वकास्त्रय. ॥५॥

त्यवसादनपु' ( ऽङ्क्यथ, ऊर्ध्वक (३ पु), ये ३ 'मृदङ्ग

१२१ ) । इति घञ् .

त्वम्। 'निषाद स्वरभेदे। मूषिके ना स्त्रिया नल्योपधौ' इति ७७।३४ ] ॥ ( १ ) ॥ *

गच्छति । 'ऋषी गतौ' ( तु० स्यस्थेयमुक्ति ।

कित्' (उ० ३।१२३) । इत्यमच् ंयो । सुषिरोऽग्नौ सरन्ध्रे

स्वरभिद्गृपयो वर्णर-धकुम्भीरपुच्छये वे—'सुषिर विवरे वाद्ये

इति, 'सूर्म्यं सुषिरा-

शंना दमरमदि-

कारश्चिन्त्य ।

१ कोष्ठस्थ पाठ निर्णयसागरीय ।

२ आदिपदन मेदिन्यादेरपि सग्रह ।

भेदा इति ॥ तेषा भेदास्तु त्रय । अङ्के उत्सङ्गे भव । शरीरावयवाद्यत् ( ४।३।५३ ) ॥ ( १ ) ॥*॥ आलिङ्ग्यते । 'लिगि गतौ' ( भ्वा० प० से० ) । ण्यत् (३।१।१२४ ) ॥ ( १ ) ॥ * ॥ ऊर्ध्व कायति शब्दायते । 'कै शब्दे' (भ्वा० प० से०)।'सुपि'(३।२।४) इति [योगविभागेन] क । तदुक्तम्-'हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वक । आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिणवामगा ' इति ॥*॥ ऊर्ध्वशब्द निवकारम् [ऊर्ध्वम्] अपि केचित् पठन्ति ॥ ( १ ) ॥*॥ प्रत्येकमेकैकम् ।

स्याद्यश पटहो ढक्का

यश पटह (पु), ढक्का ( स्त्री ), 'नगाड़ा' के २ नाम है।

स्यादिति ॥ यशोऽर्थ पटह । शाकपार्थिवादि (वा० २।१।६९) ॥ (१) ॥ * ॥ 'ढक्' इति कायति । 'कै शब्दे' ( भ्वा० प० से० ) । 'आतोऽनुप-' (३।२।३) इति 'सुपि (३।२।४) इति वा क ॥ (२) ॥*॥ द्वे 'यश पटहस्य' ।

भेर्यामानकदुन्दुभी ।

भेरी ( स्त्री ), आनक, दुन्दुभि ( २ पु ), 'भेरी' के ३ नाम है।

भेर्यामिति ॥ बिभ्यत्यस्य रवात् । 'ञिभी भये' (जु० प० से० ) । स्फायितञ्चि- ( उ० २।१३ ) इति रक् । गौरादित्वात् ( ४।१।४१ ) ङीष् ॥ * ॥ 'वङ्क्र्यादयश्च (उ० ४।६६ ) इति रिप्रत्यय रि अपि ॥ ( १ ) ॥*॥ आनित्यनन वादकान् । क्वुन् ( उ० २।३२ ) । आनयति प्राणयति सोत्साहान् करोति योधान् । ण्वुल् (३।१।१३३) वा। 'आनक पटह भेर्या मृदङ्गे ध्वनदम्बुदे [इति मे० ५।४७] ॥ (२) ॥*॥ 'दुन्दु इति शब्देन भाति । बाहुलकादिः । यद्वा-दामुभति शब्देन । 'उभ पूरणे' ( तु० प० से० ) । पृषोदरादि (६।३।१०९)। यत्त्वौणादिक इ -इति कौमुदी। तन्न । आतो लोपस्याप्रसङ्गात् । ['दुन्दुभिस्तु भया क्षितिसुत विषे । अक्षबिन्दुत्रिकद्वन्द्वे' इति हैम ३।४८५-८६ ] ॥ ( ३ ) ॥ * ॥ स्वामी तु 'भेरी स्त्री दुन्दुभि पुमान्' इति पठति ॥ द्वे 'भेर्या' ।

आनकः पटहोऽस्त्री स्यात्

आनक , पटह ( २ पु ), 'पटह' के २ नाम है।

आनक इति ॥(१)॥*॥ पटेन हन्यते । ड (वा० ३।२।१०१) । 'पट इति शब्द जहाति [ 'ओहाक् त्यागे' जु० प० अ० ]।'आतोऽनुप-'(३।२।३) इति क इति वा। 'पटहो ना समारम्भे आनक पुनपुसकम्' [इति मे० १७६।१९] । अस्त्रीति पूर्वान्वयि । 'उपवास गृह देह लोह पटहमित्यपि'

१ 'भेरि' इत्यर्थ ।

२. त्रीणि' इत्यवगन्तव्यम् ।

इति पुंनपुंसकाधिकारे चन्द्रगोम्युक्तः ॥ ( २ ) ॥ * ॥ द्वे 'पटहस्य' ।

**कोणो वीणादिवादनम् ॥ ६ ॥**

कोणः ( पु ), 'वीणा, बेला, सारङ्गी या इसराज आदि बजानेके लिये काठकी बनाई हुई धनुही' का १ नाम है।

कोण इति ॥ वीणादि वाद्यते येन धनुराद्याकृतिना स कोणः । कुण्यते । 'कुण शब्दोपकरणयोः' (तु० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'द्वयोस्तु कोणो वीणादेर्वादनं सारिका च सा' इति शब्दार्णवः । 'कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामस्रो[1] च लगुडेऽपि च' इति मे० [४५।८-९] । 'कोणो वीणादिवादने । लगुडेऽस्रौ[2] लोहिताङ्गे' इति हैमः [२।१३९] ॥*॥ (१) ॥ * ॥ एकं 'वीणादिवादनस्य' ।

**वीणादण्डः प्रवालः स्यात्**

वीणादण्डः, प्रवालः ( २ पु ), 'वीणादण्ड' के २ नाम हैं।

*वीणेति* ॥ *वीणाया दण्डः* ॥ ( १ ) ॥ * ॥ प्रकर्षेण वल्यते मन्नियते । 'वल संवरणे' ( भ्वा० प० से० ) । घञ् ( ३।३।१९ ) । 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे' इति हैमः [ ३।६९७ ] ॥ (२) ॥*॥ द्वे 'वीणादण्डस्य' ।

**ककुभस्तु प्रसेवकः ।**

ककुभः, प्रसेवकः ( २ पु ), 'वीणाके नीचेवाले, चमडा आदिमें ढके हुए भाण्ड' के २ नाम हैं।

ककुभ इति ॥ कं वातं स्कुभ्नाति । स्कुभे [3]मौत्रान्मूलविभुजादित्वात् ( वा० ३।२।५ ) कः । पृषोदरादित्वात् (६।३।१०९) सलोपः । यद्वा—कश्च कुश्च ककू । ते भाति । 'भा दीप्तौ' ( अ० प० अ० ) अन्तर्भावितण्यर्थः । 'आतोऽनुप–'(३।२।३) इति कः । 'ककुभो रागभेदेऽपि[4]वीणाङ्गेऽर्जुनपादपे' [इति विश्वः १०९।३०, मे० १०७।१३ च] ॥ (१) ॥ * ॥ प्रसेव्यते । 'षेवृ सेवने' (भ्वा० आ० से०) । क्वुन् ( उ० २।३२ ) । अचि (३।१।१३४) प्रसेव अपि । 'प्रसेवस्तु वीणाङ्गस्यूतयोर्दृतौ' [ इति हैमः ३।७४१ ] ॥ ( २ ) ॥*॥ द्वे 'वीणादण्डाधःस्थितशब्दगाम्भीर्यार्थचर्मावनद्धदारुमयभाण्डस्य' । वीणाप्रान्तस्थवक्रकाष्ठविशेषस्येत्यन्ये ।

**कोलम्बकस्तु कायोऽस्याः**

कोलम्बकः ( पु ), 'वीणाका ढांचा' अर्थात् 'ताररहित वीणाके दण्डादि समुदाय' का १ नाम है।

*कोलम्बक इति ॥ अस्या वीणायाः काय अलावुदण्डककुभसमुदायस्तन्त्रीरहितः* । 'कुल संस्त्याने' (भ्वा० प० से०)। बाहुलकादम्बच् । तत कन् ( ५।३।९७ ) । यद्वा—कुलेर्विच् ( ३।२।७५ ) । अम्बते अम्ब्यते वा । 'अबि शब्दे' (भ्वा० आ० से०) । ण्वुल् ( ३।१।१३३ ) । क्वुन् (उ० ३।३२) वा । कोल् चासावम्बकश्च ॥(१)॥*॥ एकं 'तन्त्रीहीनवीणायाः' ।

**उपनाहो निबन्धनम् ॥ ७ ॥**

उपनाहः ( पु ), निबन्धनम् ( न ) 'जहाँ वीणाका तार बाँधा जाता है, उस जगह' के २ नाम हैं।

उपनाह इति ॥ उपनह्यतेऽनेनास्मिन् वा । 'णह बन्धने' ( दि० उ० अ० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'उपनाहो व्रणालेपपिण्डे वीणानिबन्धने' [इति विश्वः १८१-२८, मे० १७७।२८ च ] ॥ ( १ ) ॥ * ॥ निबध्यतेऽनेनास्मिन्वा । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'करणाधिकरणयोश्च' (३।३।११७) इति ल्युट् ॥ (२) ॥*॥ द्वे 'यत्र तन्त्र्यो निबध्यन्ते तस्योर्ध्वभागस्य' ।

**वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ।**
**मर्दलः पणवोऽन्ये च**

डमरुः, मड्डुः, डिण्डिमः, झर्झरः, मर्दलः, पणवः ( ६ पु ) आदि 'डमरु, मड्डु अर्थात् जलतरङ्ग, डुगडुगी, झांझ, मर्दल, ढोल आदि बाजाओं' का क्रमशः १-१ नाम है।

वाद्येति ॥ 'डम्' इति शब्दमियर्ति । मृगय्वादित्वात् ( उ० १।३७ ) अर्तेः [ 'ऋ गतौ' जु० प० से० ] कुः । गणपाठादेव गुणः ॥ ( १ ) ॥*॥ स एव महान् मड्डुः । 'टुमस्जो शुद्धौ' ( तु० प० अ० ) । 'भृमृशी–' ( उ० १।७ ) इत्यादिना उः । पृषोदरादित्वात् (६।३।१०९) जस्य डः ॥ ( १ ) ॥ * ॥ 'डिण्डि' इति शब्दं मिनोति प्रकाशयति । डः ( वा० ३।२।१०१ ) ॥ ( १ ) ॥*॥ झर्झशब्दं राति । 'आत –' (३।२।३) इति कः । यद्वा—'झर्झ शब्दे' (भ्वा०, तु० प० से० ) । अरन् (*) । 'झर्झरः स्यात्कलियुगे वाद्यभाण्डे नदान्तरे । झल्लरी झर्झरी च द्वे केशचक्रे तु वाद्यके'[1] [ इति मे० १३४।१५८-५९] ॥ (१) ॥*॥ मर्दमुपमर्दं लाति । 'आत –' (३।२।३ ) इति कः ॥ (१) ॥ * ॥ पण व्यवहारं वाति गच्छति । कः ( ३।२।३ ) ॥ ( १ ) ॥ * ॥ अन्ये गोमुखहुडुकादयः । ['गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने' [इति मे० २०।८] ।'हुडुकं[2] मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि' [ इति हैमः ३।१०९ ] । एकैकं 'वाद्यविशेषाणां पृथक् पृथक्' ।

१. 'मस्रौ' इति पा० ।
२. 'लगुडेऽस्त्रौ' इति पा० ।
३. 'स्तम्भुस्तुम्भु–'(३।१८२) इतिसूत्रीयादित्याशयः ।
४. 'वीणाङ्गे' इति पा०

१. 'झल्ली च द्वे हुडक्के बालवक्त्रके' इति पा० ।
२. 'हुडुक्को' इति पा० ।

नर्तकीलासिके समे ॥ ८॥

नर्तकी, लासिका ( २ स्त्री ), 'नाचनेवाली' के २ नाम हैं।

नर्तकीनि ॥ नृत्यति । 'नृती गात्रविक्षेपे'(दि० प० से०)। 'शिल्पिनि ष्वुन्' ( ३।१।१४५ ) । षित्त्वात् ( ४।१।४१ ) ङीष । 'नर्तकः केवले[१] पोटगलचारणयोनटे । नर्तकी लासिकाया च करेण्वामपि योषिति [इति मे० ९।१०८] ॥ ( १ ) ॥ * ॥ लसति । 'लस श्लेषण-क्रीडनयो' (भ्वा० प० से० ) ण्वुल् (३।१।१३३) । अनयो क्रियोपाधिकतया वाच्यलिङ्गत्वात्पुंस्त्वनिर्देशस्यौत्सर्गिकत्वात् 'नर्तको लासक समौ' इति वक्तव्ये स्त्रीनिर्देशो ङीष्टापोर्विवेकार्थ । 'लासकी केकिनर्तकौ' इति हैम [३।९०] ॥ (२) ॥*॥ द्वे 'नर्तक्या'।

विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।

तत्त्वम् ( न ), 'विलम्बसे नाचने, गाने और बजाने' का १ नाम है। ओघः ( पु ), 'जल्दी २ नाचने, गाने और बजाने' का १ नाम है। घनम् ( न ), 'सामान्य समय ( मध्यम गति ) में नाचने, गाने और बजाने' का १ नाम है।

विलम्बितमिति ॥ विलम्बन्ते करचरणादयोऽत्र । 'लबि अवस्रंसने' ( भ्वा० आ० से० ) ॥ ( १ ) ॥*॥ द्रवन्ति शीघ्र गच्छन्त्यत्र । 'द्रु गतौ' ( भ्वा० प० अ० ) । उभयत्रापि क्तोऽधिकरणे च–'(३।४।७६) इति क्त । यत्तु–'भावे क्त' ( ३।३।११४ )—इति मुकुट । तन्न । अन्यपदार्थस्य नृत्यस्यालाभप्रसङ्गात् । 'द्रुतं त्रिषु ' शीघ्रे विलीने विद्राणे' [ इति मे० ५५।२५ ] ॥ ( २ ) ॥ * ॥ तयोर्मध्ये भवत्वान्मध्यम् । 'अ माप्रतिके'(४।३।९) इत्य । 'मध्य वलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे[२] त्रिषु' [इति मे० ११६।४४] । (३) ॥*॥ एषु यथाक्रम तत्त्वादित्रयम् । तनन तत् । सपदादित्वात् ( वा० ३।३।१०८ ) क्विप् । तदस्यास्ति । 'वप्रकरणेऽन्यत्रापि'[३] (वा० ५।२।१०९) इति व । 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वान्न जश्त्वम् । 'तत्त्वं परात्मनि । वाद्यभेदे स्वरूपे च' इति हैम (२।५३५) ॥ (१) ॥ * ॥ ओचनम् । 'उच समवाये' (दि० प० से०) । घञ् (३।३।१८) । पृषोदरादित्वात् (६।३।१०९) ध । 'ओघो वेगे जलस्य च । वृन्दे परम्पराया च द्रुतनृत्योपदेशयो.' [इति मे० २६।२-३ ]॥ (२) ॥*॥ हननम् । 'हन हिंसागत्यो ' ( अ० प० अ० ) । 'मूर्तौ घन ' (३।३।७७) इत्यप् घनादेशश्च ।['घन मध्यनृत्तवाद्यप्रभेदयो '[४]इति हैम २।२६५]॥ ( ३ ) ॥ * ॥ तत्त्वादिक्रमेणैकं 'विलम्बितद्रुतमध्याना नृत्यगीतवाद्यानाम्' ।

तालः कालक्रियामानम्

तालः ( पु ), 'ताल' अर्थात् 'जिसमें समय और क्रिया की कमी-बेशी का प्रमाण रहता है, उस'का १ नाम है।

ताल इति ॥ तलनम् । 'तल प्रतिष्ठाकरणयो ' ( चु० प० से० ) । घञ् (३।३।१८) । 'ताल: करतलेऽङ्गुष्ठमध्यमाभ्या च समिते । गीतकालक्रियामाने कराम्फाले द्रुमान्तरे ॥ वाद्यभाण्डे च कारयस्य त्सरौ ताली जटौषधौ[१]। क्लीब तु हरिताले स्यात्' इति [२]विश्व-मेदिन्यौ [ मे० १४६।२३-२४] ॥(१)॥*॥ कालस्य क्रियया आवापनिष्क्रमादिकया मान परिच्छेदनम् ॥ * ॥ एक 'तालस्य'।

लयः साम्यम्

लयः ( पु ) 'लय' अर्थात् 'जिसमें गाने बजाने और हाथ, भ्रू आदि चलाकर भाव दिखलानेके लिये समय और क्रिया की कमी-बेशीका प्रमाण रहता है, उस'का १ नाम है।

लय इति ॥ गीतवाद्यपादादिन्यासाना क्रियाकालयो साम्य लय । लयनम् । 'लीङ् श्लेषणे' (दि० आ० अ०) । 'एरच्' ( ३।३।५६ ) । यत्तु—'लय गतौ' 'एरच्—' इति मुकुटेनोक्तम् । तन्न । लयधातोरिकारान्तत्वाभावात् । 'लय[३]स्तूर्यत्रयीसाम्ये सश्लेषणविलासयो '[४] इति हैम [२।३८४] ॥ (१) ॥ * ॥ एक 'गानतन्त्रीलयस्य'।

अथास्त्रियाम् ॥ ९॥

ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।

ताण्डवम् ( पु न ), नटनम्, नाट्यम्, लास्यम्, नृत्यम् ( =नृत्तम् ), नर्तनम् ( ५ न ), 'नाचने' के ६ नाम हैं।

अथेति ॥ अस्त्रिया ताण्डवम्, इत्यन्वय । तण्डुना प्रोक्तं ताण्डवम् । 'तेन प्रोक्तम्' ( ४।३।१०१ ) इत्यण् । 'ताण्डवं तृणभिन्नाट्यभेदयो ' इति हैम मेदिन्यौ[५] [हैम ३।७३७] ॥ (१)॥ * ॥ 'नट अवस्कन्दने' ( भ्वा० प० से० ) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ नटस्य धर्म । ष्यञ् ( ५।१।

१. 'केलके' इति पा० ।

२. 'ऽधमेऽन्यवत्' इति पा० ।

३. 'अन्येभ्योऽपि दृश्यते' इति वक्तव्यम् ।

४. 'मध्ये नृत्तवाद्यप्रकारयो:' इति पा० ।

१ 'तालग्रजटौषधौ' इति मे० पा० ।

२. विश्वे त्वेवं पाठ —'ताल करतलेऽङ्गुष्ठमध्यमाभ्या च समिते । गीतकालक्रियामाने ताल खड्गादिमुष्टिषु । द्रुमभेदे कराम्फाले ताल तु हरितालके । वाद्यभाण्डे च कारयस्य तालश्छदिषि कम्पने ॥' ( १५०।१६–१७ )

३. 'लयस्तौर्य' इति पा० ।

४ 'विनाशयो ' इति पा० ।

५. मेदिन्या—'ताण्डवोऽस्त्री तृणान्तरे । भवेदुद्धतनृत्ये च'(१६०।३६–३७) इत्येव पाठादत्र 'हैम ' एतावदेव वक्तव्यमासीत् ।

१२४ )। नटेर्ण्यत् (३।१।१२४) वा। 'नाट्यं तौर्यत्रिके लास्ये' [ इति मे० ११५।३४ ] ॥ ( ३ ) ॥ * ॥ 'लस श्लेषणक्रीडनयोः' (भ्वा० प० से०)। ण्यत् (३।१।१२४)। 'लास्यं तौर्यत्रिके मतम्। नृत्ये च' इति वि॰श्वः[1] ॥ ( ४ ) ॥ * ॥ 'नृती [ गात्रविक्षेपे' ] (दि० प० से०)। 'ऋदुपधाच्च–' (३।१।११०) इति क्यप् ॥ ( ५ ) ॥ भावे क्ते ( ३।३।११४ ) 'नृत्तम्' अपि ॥*॥ ल्युट् (३।३।११५) नर्तनम् ॥ (६) ॥*॥ [2]'नृत्य स्यात्सततेऽपि च'। 'शाश्वते त्रिषु'। षट् 'नृत्यस्य'।

**तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥**

तौर्यत्रिकम्, नाट्यम् ( २ न ), 'नाचना, गाना और बजाना, इन तीनोंके समुदाय' के २ नाम हैं।

तौर्येति ॥ नृत्यगीतवाद्यं तौर्यत्रिकम्। 'तुरि त्वरायाम्' (जु० प० से०)। 'ऋहलोर्ण्यत्' ( ३।१।१२४ )। गुणं बाधित्वा [3]'बाहुलकात् 'हलि च' ( ८।२।७७ ) इति दीर्घ.। तूर्यं मुरजादि। तत्र भवं तौर्यं शब्द। नयोऽस्या यस्य त्रिकम्। 'संख्याया अतिशदन्ताया कन्'(५।१।२२)। 'संख्याया संघासद्ध–' ( ५।१।५८ ) इति वा। 'तौर्योपलक्षित त्रिकम्' इति विग्रह. ॥ ( १ ) ॥ * ॥ इदमेव नृत्यादित्रयं नाट्यमपि। नटस्येदम्। 'छन्दोगौक्थिक–' ( ४।३।१२९ ) इति ञ्यः ॥ (२) ॥ * ॥ द्वे 'नाट्यस्य'।

**भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः।**

**स्त्रीवेषधारी पुरुषः**

भ्रकुंसः, भ्रुकुंसः, भ्रूकुंसः ( ३ पु ), 'स्त्री का रूप बनाकर नाचने वाले पुरुष' के ३ नाम हैं।

भ्रकुंस इति ॥ य. पुरुषः स्त्रीवेषधारी नृत्यति तस्मिन् भ्रकुंसादित्रयम्। 'पटपुट–' इति दण्डकोक्त'कुसि'धातोरचुरादिण्यन्तात् [ ३।१।२५ ]। 'एरच्' (३।३।५६)। भ्रुवौ-र्भ्रुवा वा कुंसो भाषणमस्य। भ्रुवा कुंसयति वा। अच् (३।१।१३४)। 'इको ह्रस्वोऽङ्यो गालवस्य' (६।३।६१) इति सूत्रे 'इयङुवङ्भाविना न' (वा० ६।३।६१) इति निषेधोत्तरं पठितस्य 'अभ्रुकुंसादीनाम्' इति वार्तिकस्य ह्रस्वनिषेधपर्युदासपरतया, अकारादेशपरतया च व्याख्यानद्वयाद्रूपत्रयम्। पृषोदरादित्वात् ( ६।३।१०९ ) ऋवर्णवानपि [ भृकुंसः ]। 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्च भृकुंसवत्' इति शब्दार्णवः ॥ ( ३ ) ॥ * ॥ त्रीणि 'स्त्रीवेषधारिणो नृत्यस्य'[1]।

**नाट्योक्तौ**

'नाट्योक्तौ' इस पद का 'अङ्गहारः' ( १।७।१६ ) के पहले तक अधिकार होने से आगे कहे जानेवाले नामों का प्रयोग नाटक में ही होगा, अन्यत्र नहीं।

नाट्यौक्ताविति ॥ 'नाट्योक्तौ' इत्यधिकार प्रागङ्गहारात् [ श्र० १।७।१६ ]।

**गणिकाज्जुका ॥ ११ ॥**

अज्जुका ( स्त्री ) 'गणिका' का १ नाम है।

गणिकेति ॥ गणिका अज्जुका ज्ञेया। 'गणिका [2]यूथिवेश्येभीतर्कारीषु ना तु दैवज्ञे' [ इति मे० ७।८० ] ॥ * ॥ 'अर्ज अर्जने' ( भ्वा० प० से० )। [3]'समि कसे –' ( उ० २।१८७ ) इति बाहुलकादुकन्, रस्य ज. ॥ ( १ ) ॥*॥ एकम् 'अज्जुकायाः'।

**भगिनीपतिरावुत्तः**

आवुत्तः ( पु ), 'बहनोई' अर्थात् 'बहनके पति' का १ नाम है।

भगिनीति ॥ आपत्नमाप्। संपदादिक्विप् (वा० ३।३।१०८ )। आपमुत्तनोति। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड.। आवुत्त ॥ ( १ ) ॥ * ॥ भगिन्याः पति.। एकं 'भगिनीपतेः'।

**भावो विद्वान्**

भावः ( पु ), 'विद्वान्' का १ नाम है।

भाव इति ॥ भावयति परिभावयति। पचाद्यच् ( ३।१।१३४ )। 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु। रत्यादौ च' [ इति मे० १५१।२०-२१ ] ॥ (१) ॥ * ॥ एकं 'विदुषः'।

**अथावुकः।**

**जनकः**

आवुकः ( पु ), 'पिता' का १ नाम है।

अवेति ॥ अवति। 'अव रक्षणे' ( भ्वा० प० से० )। बाहुलकादुकण्। णित्त्वादुपधावृद्धि (७।२।११६) ॥ (१) ॥ * ॥ 'जनकः पितृनृपयोः' [ इति हैमः ३।४२ ]। एकं 'जनकस्य'।

१. मेदिन्या ( ११६।५३–५४ ) पाठोऽयमुपलभ्यते। विश्वे त्वेवं पाठ —'लास्यं तौर्यत्रिके नाट्ये लास्ये ग्रस्ते फले गुणे' ( ११८।४९ )।

२. 'नित्यं स्यात् सततेऽपि च। शाश्वते त्रिषु' इति मेदिनी ( ११५।३४–३५ )।

३. अगतिकगतिबाहुलक कल्पयित्वा गुणाभावस्य पुनर्दीर्घविधानस्य च कल्पने गौरवादत्र लाघवात् 'तुरी गतित्वरणहिंसनयोः' इति दैवादिकादेव धातो. 'तूय'शब्दसिद्धिः साधीयसी प्रतिभाति।

१ नृत्यस्य स्त्रीवेषधारणासम्भवादत्र 'नर्तकस्य' इति पाठो युक्त।

२. 'यूथीवेश्ये' इति पा०।

३. 'समि कस उकन्' इति सूत्रस्वरूपम्।

युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥

कुमार, भर्तृदारक, ( २ पु ) 'युवराज' के २ नाम हैं।

युवराज इति ॥ युवा चासौ राजा च । 'राजा–' (५।४।९१ ) इति टच् ॥ * ॥ कुमारयति । 'कुमार क्रीडायाम्' (चु० उ० से०) । अच् (३।१।१३४) । 'कुमारोऽश्वानुचारके । युवराजे शिशौ स्कन्दे शुके वरुणपादपे ॥ कुमारं जात्यकनके कुमारी त्वपराजिता । नदीभिद्रामतरणी कन्यका नवमाल्युमा ॥ जम्बूद्वीपविभागश्च' इति हैम [३।५७४-७६] ॥ ( १ ) ॥*॥ ध्रियते । 'दृङ् आदरे' तुदादि [आ० अ०] । ण्वुल् (३।१।१३३) । भर्तुः राज्ञो दारकः ॥ (२) ॥*॥ द्वे 'युवराजस्य'।

राजा भट्टारको देवः

भट्टारक, देव ( २ पु ), 'राजा' के २ नाम हैं।

राजेति ॥ भटति । 'भट परिभाषणे' ( भ्वा० प० से० ) । क्विप् (३।२।१७८) । भट् चासौ तारकश्च । पृषोदरादित्वात् (६।३।१०९) ष्टुत्वनिषेधो न । यद्वा–टलति । 'टल विप्लवे' (भ्वा० प० से०) । ण्वुल् ( ३।१।१३३ ) । रलयोरेकत्वस्मरणम् । भट् चासौ टारकश्च । भट्टं स्वामित्वमृच्छति वा । 'ऋ गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) । ततः स्वार्थे कन् ( ५।३।७७ ) । 'भट्टारको नृपे नाट्यवाचा, देवे तपोधने' इति मेदिनी [ १७।२०५ ] ॥ (१) ॥*॥ दीव्यति । अच् ( ३।१।१३४ ) । 'देवं हृषीके देवस्तु नृपतौ तोयदे सुरे' इति हैम [२।५३८] ॥ ( २ ) ॥*॥ द्वे 'राज्ञः'।

तत्सुता भर्तृदारिका ।

भर्तृदारिका ( स्त्री ), 'राजकुमारी' का १ नाम है।

तत्सुतेति । भर्तुः राज्ञो दारिका ॥ ( १ ) ॥*॥ एकं 'राज्ञः सुतायाः'।

देवी कृताभिषेकायाम्

देवी ( स्त्री ), 'पटरानी' का १ नाम है।

देवीति । अच् ( ३।१।१३४ ) । टित्वात् ङीप् (४।१।१५) । 'देवी कृताभिषेकायां तेजनीस्पृक्वयोरपि'[1] इति हेमचन्द्र [२।५३८] ॥(१)॥*॥एकं 'बद्धपट्टाया राज्ञ्याः'।

इतरासु तु भट्टिनी ॥ १३ ॥

भट्टिनी ( स्त्री ), 'राजाकी दूसरी सामान्य स्त्रियों' का १ नाम है।

इतरास्विति ॥ भटे (भ्वा० प० से०) । तनि ( बाहुलकात् ) भट्टः । सोऽस्त्यस्याः पतित्वेन । भट्टिनी । इनि (५।२।११५) । 'भट्टिनी द्विजभार्यायां, नाटचोक्त्या[2] राजयोषिति' [ इति विश्व ९५।१३१ ] ॥ (१)॥ *॥ एकम् 'इतरराज्ञ्याः'।

अत्र विशेषः शब्दार्णवे–'गणिकानुचरैरज्जुकेति नाम्ना नृपेण सा । युवराजस्तु सर्वेण कुमारो भर्तृदारकः ॥ भट्टारको वा देवो वा वाच्यो भृत्यजनेन सः । ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च ॥ वयस्य राजन्निति वा विदूषक इम वदेत् । अभिषिक्ता तु राज्ञासौ देवीत्यन्या तु भोगिनी ॥ भट्टिनीत्यपरैरन्या नोचैर्गोस्वामिनीति सा'[1] इति ।

अब्रह्मण्यमवध्योक्तौ

अब्रह्मण्यम् ( न ), 'सर्वथा अवध्य ब्राह्मण इत्यादिको मारनेके दोषको कहने' का १ नाम है।

अब्रह्मण्यमिति ॥ वधं नार्हति, इत्युक्तौ । ब्रह्मणि साधु । 'तत्र साधुः' (४।४।९८) इति यत् । 'ब्रह्मण्य[2] स्याद्ब्रह्मसाधुब्रह्मदारुशनैश्वरे' [इति मे० ११९।९६] । ततो नञ्समासः ( २।२।६ ) ॥ (१) ॥ *॥ 'अवध याच्ञायाम्' इत्येके। एकं 'वध्यस्य ब्राह्मण देवोंपोक्ते'।

राजश्यालस्तु राष्ट्रियः ।

राष्ट्रिय ( पु ), 'राजाके साले' का १ नाम है।

राजेति ॥ राष्ट्रेऽधिकृतः । 'राष्ट्रावारपाराद्घखौ' ( ४।२।९३ ) इति घः ॥ ( १ ) ॥*॥ एकं 'राज्ञः श्यालस्य'।

अम्बा माता

अम्बा ( स्त्री ), 'माता' का १ नाम है।

अम्बेति ॥ अम्ब्यते शब्द्यते । 'अबि शब्दे' (भ्वा० आ० से० ) । 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यः ॥ ( १ ) ॥ * ॥ नाट्योक्तौ' [अ० १।७।११] इत्यधिकारस्य प्रायिकत्वादम्बादीनां केषांचिदन्यत्रापि[3] प्रयोगः । एकं 'मातुः'।

अथ बाला स्याद्वासूः

वासू ( स्त्री ), 'कुमारी' का १ नाम है।

अथेति ॥ बाला कुमारी वासूः वास्यते स्वगृहे । वसे ( भ्वा० प० अ० ) ण्यन्ताद्बाहुलकादूः ॥ ( १ ) ॥ * ॥ एकं 'कुमार्याः'।

---

१ 'तेजनीपृक्कयोरपि' इति पा० ।

२. 'नाट्योक्तौ' इति पा० ।

१ साहित्यदर्पणे ( ६।४४२ ) विश्वनाथमहापात्रेण विषयोऽयं सविस्तरं प्रतिपादितः ।

२ 'ब्रह्मण्य' इति पा० ।

३ अन्यत्रापि नाट्यभिन्नेऽप्यम्बाशब्दप्रयोगः यथा—'जगदम्ब विचित्रमत्र किम्' ( इत्याद्यशङ्कराचार्यः ), 'अम्बा प्रणाम्योपनतानताङ्गी' ( श्रीहर्षः ) इत्यादि । अथ च नाट्येऽपि मातृशब्दप्रयोगः, यथा—'एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः' ( वेणीसंहारः )।

आर्यस्तु मारिषः ॥ १४ ॥

मारिषः ( पु ), 'अपनेसे श्रेष्ठ या सूत्रधार के पार्श्ववर्त्ती' का १ नाम है।

आर्य इति ॥ अर्तुं योग्य.। 'ऋ गतौ'(भ्वा० प० अ०)। 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) । 'कर्तव्यमाचरन्काममकर्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स तु आर्य इति स्मृत' इति वसिष्ठ । ['आर्यो सज्जनसौविदौ' इतिहैम- २।३४९] ॥*॥ मर्षणात्सहनात् मारिष.। पृषोदरादि. (६।३।१०९)। हिंसानिवारकत्वाद्वा। 'रिष हिंसायाम्' (भ्वा० प० से०)। 'इगुपध–' ( ३।१।१३५ ) इति क । प्रतिषेधार्थकमाशब्देन समास.। 'मारिषः शाकभिद्यार्ये नाट्योक्तौ पुंसि मारिष' इति मूर्धन्यान्ते रभस.। मार्षश्च। 'आर्ये मारिषमार्षकौ' इति शब्दार्णवात्। 'मारिषः शाकभिद्यार्ये नाट्योक्त्या पुंसि, योषिति। दक्षाम्बायाम्' [ इति मे० १६८।४३-४४ ] ॥ (१) ॥ * ॥ एकं 'मान्यस्य'।

अत्तिका भगिनी ज्येष्ठा

अत्तिका ( स्त्री ), 'बड़ी बहन' का १ नाम है।

अत्तिकेति ॥ अत्ता माता। सैव। 'राज्ञाया कन्' (५।३।९७)। 'अत्तिका चान्तिका तथा' इति द्विरूपकोशादन्तिकापि। 'अन्तिकं निकटे वाच्यलिङ्गं स्त्री सातलौषधौ। चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्या कीर्त्यतेऽन्तिका'[इति मे० ४।४४ ] ॥ (१) ॥ * ॥ एकं 'ज्येष्ठभगिन्याः'।

निष्ठा निर्वहणे समे।

निष्ठा ( स्त्री ), निर्वहणम् ( न ), 'नाटक की 'निर्वहण' नामक पाँचवीं सन्धि-विशेष या आरम्भ किये हुए विषय को पूरा करने' के २ नाम है।

निष्ठेति ॥ नियत स्थानम्। निष्ठा। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ्। 'उपसर्गात्सुनोति–' (८।३।६५) इति ष। 'निष्ठोत्कर्षव्यवस्थयो। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते' [ इति हैम २।१०८ ] ॥ (१) ॥ * ॥ निर्वाहो निर्वहणम्। मुख-प्रतिमुख-गर्भ-विमर्श-निर्वहणाख्या पञ्च नाटक संधयः[३]। तत्र पञ्चमस्य नामेदं। प्रस्तुतकथासमापनस्येत्यन्ये। 'निर्वहणं तु निष्ठा स्त्री सहारश्च समापने' इति शब्दार्णव। समे इति। समानार्थे, न तु समानलिङ्गे। शब्दार्णवे लिङ्गभेददर्शनात्। निष्ठा निर्वहणे वर्तते, इति योजना ॥ (२) ॥ * ॥ द्वे 'निर्वहणस्य'।

हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥ १५ ॥

हण्डे ( अ ), 'नीचको बुलाने' का १ नाम है। हञ्जे (अ), 'चेटी ( दासी ) को बुलाने' का १ नाम है। हला ( अ ), 'सखीको बुलाने' का १ नाम है।

हण्ड इति ॥ नीचा प्रत्याह्वानं हण्डे। चेटीं प्रति हञ्जे। सखीं प्रति हला। त्रीण्यव्ययानि। हिण्डते। 'हिडि गत्यनादरयो.' ( भ्वा० आ० से० )। बाहुलकादेप्रत्ययः, इतोऽकारश्च ॥ (१) ॥*॥ हञ्जे इत्यत्र डस्य जोऽपि ॥ (२) ॥*॥ हलति। 'हल विलेखने' (भ्वा० प० से०)। बाहुलकादाप्रत्यय ॥ (३) ॥*॥ हलाशब्दष्टावन्तोऽपि सखीपर्याय। तत्र पचाद्यच् ( ३।१।१३४ )। 'बाला वामू सखी हला' इति स्त्रीकाण्डे बोपालितात्। 'प्रत्येकमेकैकम्'।

अङ्गहारोऽङ्गविक्षेपः

अङ्गहारः, अङ्गविक्षेपः ( २ पु ) 'नृत्य-विशेष' के २ नाम हैं।

अङ्गेति ॥ अङ्गस्य स्थानात् स्थानान्तरे नयनमङ्गहारः। अङ्गस्य हरणम्। 'हृञ् हरणे' ( भ्वा० उ० अ० )। घञ् (३।३।१८)। अङ्गुल्यादिविन्यासः ॥ (१) ॥*॥ अङ्गानां विक्षेपः। 'क्षिप प्रेरणे' ( तु० उ० अ० )। घञ् ( ३।३।१८ )। 'अङ्गहारस्त्वङ्गहारिर्द्वित्रादिमान्विकान्विका' इति शब्दार्णव ॥ (२) ॥ * ॥ द्वे 'नृत्यविशेषस्य'।

व्यञ्जकाभिनयौ समौ।

व्यञ्जकः, अभिनयः ( २ पु ), 'संकेत आदि से मन के अभिप्राय को प्रकट करने' के २ नाम हैं।

व्यञ्जकेति ॥ व्यनक्ति। 'अञ्जू व्यक्त्यादौ' ( रु० प० से० )। ण्वुल् ( ३।१।१३३ ) ॥ (१) ॥ * ॥ अभिनयत्यर्थम्। पचाद्यच् ( ३।१।१३४ )। वाचिकाङ्गिकाहार्यसात्त्विकभेदाच्चतुर्विध ॥ ( २ ) ॥ * ॥ द्वे 'मनोगतभावाभिव्यञ्जकस्य'।

निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥१६॥

आङ्गिकम् ( त्रि ), 'अङ्ग के द्वारा किये कटाक्ष आदि' का नाम है। सात्त्विकम् ( त्रि ), 'सत्त्वगुणसे उत्पन्न स्तम्भ आदि गुणों' का १ नाम है।

निर्वृत्ते इति ॥ अङ्गेन निर्वृत्तं भ्रूविक्षेपादि। सत्त्वेन मनोवृत्त्या निर्वृत्त स्तम्भादि। 'निर्वृत्तेऽक्षद्यूतादिभ्य.' ( ४।४।१९ ) इति प्राग्वहतीयष्ठक् ॥ (१) ॥ * ॥ (२) ॥ * ॥ 'स्तम्भ स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथु। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका गुणा.' [सा० द० ३।१३५-३६]। क्रमेणैकैकम्।

---

१. 'नाट्योक्तौ'—इति पा०।

२. 'शतलौषधौ' इति पा०।

३. तदुक्तं विश्वनाथेन—'मुख प्रतिमुखं गर्भो विमर्श उपसंहृतिः। इति पञ्चास्य भेदा स्युः'' इति सा० द० ( ६।७५–७६ )।

**शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।**
**बीभत्सरौद्रौ च रसाः**

शृङ्गार, वीर, करुण, अद्भुत, हास्य, भयानक, बीभत्स, रौद्र (८ पु), ये ८ 'शृङ्गार, वीर आदि' 'रस' (पु) अर्थात् 'रस' हैं।

शृङ्गारेति ॥ शृङ्गारादयोऽष्टौ रसाः। 'चशब्दाच्छान्तोऽपि नवमः । वात्सल्यं दशमः । रस्यन्ते। 'रस आस्वादने' चुरादयदन्तः । कर्मणि घञ् ( ३।३।१९ ) । 'रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः ॥ देहधातुप्रभेदे च पारदस्वादयोः पुमान्। स्त्रियां तु रसनापाठाशल्लकीकङ्गुभूमिषु इति विश्व मेदिन्यौ[२] [मे० १७०।९-१०] ॥*॥ एकैकं 'शृङ्गारादिरसानाम्'।

**शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥**

शृङ्गार, शुचि, उज्ज्वल, (३ पु), 'शृङ्गार रस' के ३ नाम हैं।

शृङ्गार इति ॥ शृङ्गं प्राधान्यमियर्ति। 'कर्मण्यण्' (३।२।१)। 'शृङ्गारो गजमण्डने। सुरते रसभेदे च शृङ्गारं नागसम्भवे। ( चूर्णे लवङ्गपुष्पे च ) इति हैमः [ ३।६५०-५१ ] ॥ (१) ॥*॥ उत्तमयुवप्रकृतिकत्वेन जुगुप्सारहितत्वाच्छुचिः । शोचन्त्यनेन वा । 'इगुपधात्कित्' ( उ० ४। १२० ) इतीन्। 'शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढानुपहतेपूपधाशुद्धमन्त्रिणि । शृङ्गारे च'[३] इति हेमचन्द्रः [२। ६१-६२ ] ॥ ( २ ) ॥*॥ उच्चैर्ज्वलति प्रकाशते । अच् ( ३।१।१३४ ) । न तु 'ज्वलति-' ( ३।१।१४० ) इति णः । तत्र 'अनुपसर्गात्' इत्यनुवृत्तेः । 'उज्ज्वलस्तु विकासिनि । शृङ्गारे विशदे दीप्तेऽपि' इति हैमः [ ३।६६३ ] ॥ (३) ॥ * ॥ त्रीणि 'शृङ्गारस्य'।

**उत्साहवर्धनो वीरः**

उत्साहवर्द्धन, वीर, (२ पु), 'वीररस' के २ नाम हैं।

उत्साहेति ॥ उत्साहेन वर्धते। 'वृधु वृद्धौ' (भ्वा०आ० से०)। युच् ( ३।२।१४९ )। उत्साहं वर्धयतीति वा। ल्यु ( ३।१।१३३ ) ॥ (१) ॥*॥ वीरयति। 'शूर वीर विक्रान्तौ' चुरादिः । पचाद्यच् ( ३।१।१३४ )। यद्वा-विशेषेण ईर्ते ईरयति वा। 'ईर गतौ ( अ० आ० से० )। क (३।१।१३५)। अजति वा रक् (उ० २।१३)। 'वीरो जिने भटे श्रेष्ठे वीरं शृङ्गचा नतेऽपि च। वीरा गम्भारिकारम्भातामलक्येलवालुषु॥ मदिराक्षीरकाकोलीकाष्ठोदुम्ब'-रिकासु च[१]। पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि' इति हेमचन्द्रः [ २।४६९-७० ] ॥ (२) ॥*॥ द्वे 'वीररसस्य'।

**कारुण्यं करुणा घृणा।**
**कृपा दयानुकम्पा स्यादनुक्रोशोऽपि**

कारुण्यम् (न), करुणा, घृणा, कृपा, दया, अनुकम्पा (५ स्त्री), अनुक्रोश (पु), 'करुणरस या दया' के ७ नाम हैं।

कारुण्यमिति ॥ करुणः करुणावान्। तस्य भावः । ब्राह्मणादित्वात् ( ५।१।१२४ ) ष्यञ् ॥ ( १ ) ॥ * ॥ करणम्। 'कृवृदारिभ्य उनन्' (उ० ३।५३)। 'करुणो रसवृक्षयोः । करुणा तु कृपायां स्यात्' इति हैमः [३।२०५] ॥ (२) ॥*॥ घ्रियन्तेऽनया। 'घृ सेचने' (भ्वा० प० अ०)। बाहुलकान्नक्। 'घृणा तु स्याज्जुगुप्सायां करुणायाम्' इति हैमः [ २।१४२ ] ॥ (३) ॥ * ॥ क्रपणम्। 'कृप कृपायाम्' ( भ्वा० आ० से० )। 'कृपेः सम्प्रसारणं च' ( ग० ३।३।१०४ ) इति भिदादिपाठादङ्। 'कृपो द्रोणश्यालके स्याद्द्रोणपत्न्यां कृपी स्मृता[२]। कृपा दयायाम्' [ इति मे० १०२।३-४ ] ॥ (४) ॥*॥ दयते रक्षत्यनया। 'दय दानगतिहिंसारक्षणेषु'। भिदाद्यङ् ( ३।३।१०४ ) ॥ ( ५ ) ॥ * ॥ अनुकम्पनम्। 'कपि किंचिच्चलने' ( भ्वा० आ० से० )। 'गुरोश्च-' ( ३।३।१०३ ) इत्यः ॥ (६) ॥*॥ अनुक्रोशन्त्यनेन। 'कुश आह्वाने रोदने च' (भ्वा०प०अ०)। 'हलश्च' ( ३।३।१२१ )। इति घञ् ॥ (७) ॥ * ॥ सप्त 'करुणरसस्य'।

**अथो हसः ॥ १८ ॥**
**हासो हास्यं च**

हस, हास (२ पु), हास्यम् (न), 'हास्यरस' के ३ नाम हैं।

अथेति ॥ हसनम्। 'हसे हसने' (भ्वा० प० से०)। 'स्वनहसोर्वा' ( ३।३।६२ ) इत्यप्। हसः ॥ (१) ॥*॥ घञि ( ३।३।१८ ) हासः ॥ ( २ ) ॥ * ॥ ण्यति ( ३।१।१२४) हास्यम् ॥*॥ धात्वर्थनिर्देशे ण्वुलि ( वा० ३।३। १०८) हसिकाऽपि। 'तत्र हासो हसो हास्यं घर्घरं हासिका स्त्रियाम्' इति शब्दार्णवः ॥(३)॥*॥ त्रीणि 'हास्यरसस्य'।

**बीभत्सं विकृतं त्रिष्विदं द्वयम्।**

बीभत्सम्, विकृतम् (२ त्रि), 'बीभत्स रस' के २ नाम हैं।

१ तथा च विश्वनाथः—'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥' इति, 'स्फुटं चमत्कारितया वत्सलं च रसं विदुः' इति च ( सा० द० ३।१८२, २५१ )।

२ विश्वे स्त्रीत्वाद्यपाठाभावादिति मेदिनीत्येव पाठो युक्तः।

३ हैमपाठे 'च' इति नास्ति।

१ 'गोष्ठोदुम्बरिकासु च' इति पा०।

२ 'मता' इति पा०।

बीभत्समिति ॥ बधे ['वध बन्धने', भ्वा० प० अ०] निन्दायां सन् (३।१।६)। भावे घञ् (३।३।१८)। यद्वा— 'अ प्रत्ययात्' (३।३।१०२)। बीभत्साऽस्त्यत्र। अर्शआद्यच् (५।२।११७)। 'बीभत्सो नार्जुने, क्रूरघृणात्मविकृते त्रिषु' [इति मे० १७२।२९]॥ (१) ॥*॥ विकरणम्-विकृतम्। जुगुप्साप्रभवत्वात्। 'विष्ठाकामज उद्वेगी क्षोभणो रुधिरादिजः। बीभत्सो द्विविध'। बीभत्सादिद्वयं सद्वति त्रिलिङ्गम्। प्रज्ञादिण (५।४।३८) वैकृतोऽपि। 'विकृतो वैकृतोऽथाग्रहायण्यामग्रहायणम्' इति शब्दार्णवात्। 'विकृतं त्रिषु बीभत्से रोगितेऽसंस्कृतेऽपि च' इति 'विश्व (!)॥ (२) ॥*॥ द्वे 'बीभत्सस्य'।

**विस्मयोऽद्भुतमाश्चर्यं चित्रमपि**

विस्मयः (पु), अद्भुतम्, आश्चर्यम्, चित्रम् (३ त्रि), **'आश्चर्य या अद्भुतरस' के ४ नाम हैं।**

विस्मय इति ॥ विस्मयनम्। 'स्मिङ् ईषद्धसने' (भ्वा० आ० अ०)। 'एरच्' (३।३।५६)। 'विस्मयोऽद्भुतदर्पयो.' इति हैम [३।५३७]॥ (१) ॥*॥ अत् आश्चर्यार्थेऽव्ययम्। तस्य भवनम्। 'अदिभुवो डुतच् (उ० ५।१) ॥ (२)॥*॥ आ इति पर्यन्ते अभिनीयते। 'आश्चर्यमनित्ये' (६।१।१४७) इति साधु ॥ (३) ॥*॥ चित्रयति। 'चित्र चित्रकरणे' (चु० उ० से०) ण्यन्तात् पचाद्यच् (३।१।१३४)। 'चित्रं खे तिलकेऽद्भुते। आलेख्ये कर्बुरे चित्रा त्वाखुपर्णीसुभद्रयो.। गोडुम्ब्याम्परसोर्दन्त्या नक्षत्रोरगभेदयो।' इति हेमचन्द्र [२।४३०-३१]। (४) ॥*॥ चत्वारि 'अद्भुतस्य'।

अथ भैरवम् ॥ १९ ॥

**दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्।**
**भयंकरं प्रतिभयम्**

भैरवम्, दारुणम् भीषणम्, भीष्मम्, घोरम्, भीमम्, भयानकम्, भयङ्करम् प्रतिभयम्, (९ त्रि), **'भयानक रस' के ९ नाम हैं।**

भयेति ॥ भीरोरिदम्। 'तस्येदम्'(४।३।१२०) इत्यण्। 'भैरवः पुंसि शङ्करे, भीषणे त्रिषु। (रागभेदे च)'[इति मे० १६०।४६]॥ (१) ॥*॥ दारयति चित्तम्। 'दॄ भये' (भ्वा० प० से०)। 'कॄवृदारिभ्य उनन्' (उ० ३।५३)। 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति विश्व-मेदिन्यो[२] (मे० ४८।५२) ॥ (२) ॥*॥ भीषयते। ल्यु. (३।१।१३४)। युच् (३।३।१०७)। वा। 'भीषणं[१] रसे शल्लक्यां, ना गाढे दारुणे त्रिषु' [इति मेदिनी ५०।७०]॥ (३) ॥*॥ बिभेत्यस्मात्। 'भिय. षुग्वा' (उ०१।१४५)। इति मक् षुगागमश्च। 'भीष्मो रुद्रे च गाङ्गेये राक्षसे च भयंकरे' इति हैम. [२।३३५]॥ (४) ॥*॥ 'भीमादयोऽपादाने' (३।४।७४)। मकि षुगभावे। 'भीमो वृकोदरे घोरे शङ्करेऽप्यम्लवेतसे' इति हैम. [२।३३४]॥ (५) ॥*॥ घोरयति। 'घुर भीमार्थशब्दयो.' (तु० प० से०)। ण्यन्तात् (३।१।२६)। अच् (३।१।१३४)। हन्ति वा। हन्तेर्घुरच्च (उ० ५।६४) इत्यच्प्रत्ययो घुरादेशश्च। 'घोरो हरे दारुणे च' इति हैम [२।४२७]॥ (६) ॥*॥ बिभेत्यस्मात्। 'ञिभी भये' (जु० प० अ०)। 'आनक. शीङ्भिय' (उ० ३।८२)। 'भयानकः स्मृतो व्याघ्रे रसे राहौ भयकरे' [इति मे० १७।२०६]॥ (७) ॥*॥ भयं करोति। 'मेघर्तिभयेषु कृञ' (३।२।४३) इति खच् ॥ (८) ॥*॥ प्रतिगतं भयेन। प्रादिसमास (वा० २।२।१८)। प्रति गतं भयमस्मिन्। 'प्रादिभ्यो धातुजस्य—' (वा० २।२।२४) इति वा। 'प्रतिभयं भये भीष्मे' इति हैम. [४।२३२]॥ (९) ॥*॥ नव 'भयानकरसस्य'। भेदेन कीर्तनं त्वेषां धर्ममात्रपरत्वात्। भैरवादयस्तु धर्मे धर्मिणि च वर्तन्ते इति भेदः।

**रौद्रं तूग्रम्**

रौद्रम्, उग्रम् (२ त्रि), **'उग्ररस' के २ नाम हैं।**

रौद्रमिति ॥ रुद्रस्येदम्। अण् (४।३।१२०)। यत्तु—रुद्रो देवताऽस्य—इति मुकुटेनोक्तम्। तन्न। मन्त्रहवि स्वामिन्या एव देवतात्वात्। 'रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्याम्' इति हैमः [२।४६२]॥ *॥ 'उच समवाये' (दि० प० से०)। 'ऋज्रेन्द्र—' (उ० २।२८) इति रन्। 'उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि, त्रिषूत्कटे। स्त्री वचाक्षुद्रयो' [इति मे० १२३।९-१०]॥ (२) ॥*॥ द्वे 'उग्ररसस्य'। महत क्रोधस्य इति मुकुट.। तन्न। रसप्रकरणात् क्रोधस्य [अ० १।७।२६] वक्ष्यमाणत्वाच्च।

अमी त्रिषु ॥ २० ॥

**चतुर्दश**

**'अद्भुतम्' यहाँ से लेकर 'उग्रम्' यहाँतक १४ शब्द 'रस' के अर्थ में प्रयुक्त होने पर पुंल्लिङ्ग है और 'रसवाले' के अर्थ में प्रयुक्त होने पर त्रिलिंग हैं।**

अमीति ॥ अमी अद्भुताद्याश्चतुर्दश तद्वति त्रिषु। स्त्रिया रौद्री भैरवी।

१. पाठोऽयं विश्वे नास्ति, मेदिन्या (६५।१५९) तूपलभ्यते।
२. विश्वे एतद्वचसोऽनुपलब्धे'मेदिनी'त्येव पाठो युक्तः।

१. 'भीषणो' इति पा०।

**दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।**

दर, त्रास (२ पु), भीति, भी. (२ स्त्री), साध्वसम्, भयम् (२ न), 'डर' के ६ नाम हैं ।

दरेति ॥ दीर्यतेऽस्मात् । 'दॄ भये' (भ्वा० प० से०) । अप् (३।३।५७) । 'दरः स्याद्भयगर्तयो । दरी तु कन्दरे' इति हैम [२।४४१-४२] ॥ (१) ॥ * ॥ 'त्रसी उद्वेगे' (दि० प० से०) । घञ् (३।३।१८) । 'त्रासो भये मणे[१]-र्दोषे' इति हैम [२।५९५] ॥ (२) ॥ * ॥ 'ञिभी भये' (जु० प० से०) । क्तिन् (३।३।९४) । 'भीतिर्भये स्त्रियाम् । भीतं भये भीतियुते त्रिषु'[२] [इति मे० ५६।४०] ॥ (३) ॥ * ॥ सपदादित्वात् (वा० ३।३।१०८) क्विपि भी ॥ (४) ॥ * ॥ (यत्तु-) साध्नसत्यति । अच् (३।१।१३४)—इति मुकुट । तन्न । अण (३।२।१) प्रसङ्गात् । तस्मात् 'साध्वनामसनम्' ॥ (५) ॥ * ॥ 'अज्विधौ भयादीनामुपसंख्यानम्' (वा० ३।३।५६) । 'भय भीतौ भयवरे । कुब्जकपुष्पे' इति हैम [२।३७६-७७] ॥ * ॥ बाहुलकादडि भिया । 'स्यादर्तनमृतीया च गर्हा, चाथ भयं भिया । (त्रासोस्त्रासौ दरो भीतमातङ्को भीश्च साध्वसम्[३])' इति शब्दार्णवात् । 'आशङ्का साध्वस दर । भिया च' इति हैमाच्च[४] ॥ (६)॥ षट् 'भयस्य' ।

**विकारो मानसो भावः**

भाव (पु), 'रत्यादिरूप मन के विचार-विशेष' का १ नाम है ।

विकार इति ॥ मनोविकारो रत्यादिर्भाव । भावयति करोति रसान् इति । 'भावोऽभिप्रायवस्तुनो' इति हैम [२।५४५] ॥ (१) ॥ * ॥ एक 'मनोविकारस्य' ।

**अनुभावो भावबोधकः ॥ २१ ॥**

अनुभाव (पु), 'मन के विकार के प्रकाशक रत्यादिसूचक रोमाञ्च आदि' का १ नाम है ।

अन्विति ॥ भावस्य सूचको गुणक्रियादि । 'अनुभावयति' इत्यनुभाव । 'अनुभाव प्रभावे स्यान्निश्चये भावसूचने' इति मेदिनी [१६१।५५] ॥ (१) ॥*॥ एक 'रत्यादिसूचकरोमाञ्चादे' ।

१ 'मणिदोषे' इति पा० ।

२ 'भीतिर्भये स्त्रिया भीत भयेऽथ भीयुते त्रिषु' इति पा० ।

३ कोष्ठस्थ पाठ निर्णयसागरीय ।

४ हैमे पाठोऽयं नोपलभ्यते । उपलभ्यते त्वभिधानचिन्तामणौ (२।२१५) ।

**गर्वोऽभिमानोऽहंकार**

गर्व, अभिमान, अहङ्कार (३ पु), 'अभिमान, घमण्ड' के ३ नाम हैं ।

गर्व इति ॥ 'गर्व माने' (चु० आ० से०) । घञ् (३।३।१८) ॥ (१) ॥ * ॥ अभि सर्वतो मान । 'अभिमानोऽर्थादिदर्पे[१] ज्ञाने प्रणयहिंसयो '[इति मे० ९४।६२]॥ (२) ॥ * ॥ 'अहम्' इति करणमहङ्कार ॥ (३) ॥*॥ त्रीणि 'अहंकारस्य' ।

**मानश्चित्तसमुन्नतिः ॥**

**दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मद [ ५२ ]**

मान (पु), चित्तसमुन्नति (स्त्री), 'मान, चित्तोन्नति' के २ नाम हैं ।

[ दर्प, अवलेप, अवष्टम्भ, चित्तोद्रेक, स्मय, मद (६ पु), 'घमण्ड' के ६ नाम हैं ] ।

मान इति ॥ (मत्समो नास्ति, इति) मननम् । 'मनु अवबोधने' (त० आ० से०) । घञ् (३।३।१०) । 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे' इति हैम [२।२८१]॥ (१) ॥*॥ चित्तस्य समुन्नति ॥ (२) ॥ * ॥ द्वे अतियोग्यमपि प्रति चित्तोत्कर्षप्रत्ययस्य' । गर्वादय पञ्चापि पर्याया इति तु युक्तम् ।

**अनादरः परिभवः परिभावस्तिरस्क्रिया ॥ २२ ॥**

**रीढावमाननावज्ञावहेलनमसूर्क्षणम् ।**

अनादर, परिभव, परिभाव (३ पु), तिरस्क्रिया, रीढा, अवमानना, अवज्ञा (४ स्त्री), अवहेलनम्, असूर्क्षणम् (२ न), 'अनादर' के ९ नाम हैं ।

अनादर इति ॥ न आदर ॥ (१) ॥ * ॥ 'परौ भुव –' (३।३।५५) इति घञो वैकल्पिकत्वात् 'ऋदोरप्' (३।३।५७) ॥ (२) ॥ * ॥ 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घ ॥ (३) ॥ * ॥ तिरस्करणम् । 'कृञ श च' (३।३।१००) इति श । 'तिरसोऽन्यतरस्याम' (८।३।४२) इति सत्वम् ॥ (४) ॥ * ॥ रेहणम् । 'रिह वधे' (तु० प० से०) । औणादिक क्त । स्त्रीत्व लोकात् ॥ (५) ॥ * ॥ अवमाननम् । मनेर्ण्यन्ताद्युच् (३।३।१०७) ॥ (६) ॥ ॥ अवज्ञानम् । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (७) ॥ * ॥ अवहेलनम् । 'हेडृ अनादरे' (भ्वा० आ० से०) । घञ् (३।३।१८) । डलयोरेकत्वम् । 'घञन्ता पुंसि' इत्यस्य बाधनात् क्लीबत्वम् ॥ (८) ॥ * ॥ 'सुर्क्ष आदरे' (भ्वा० प० से०)

१. 'दर्पेऽज्ञाने' इति पा० ।

सरेफः[1]। 'नर्लुं सूर्क्षेत्' । 'तत्तन्नसूर्क्ष्यम्' इति ( तैत्तिरीयब्राह्मणे ) । दर्शनात् । तस्माल्ल्युट् ( ३।३।११५ ) । नञ्समास. । 'अत्र मुकुटस्य वृथाक्लेश उपेक्षणीय ॥' (९) ॥*॥ नव 'परिभवस्य' ।

मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा

मन्दाक्षम् (न), ह्रीः, त्रपा, व्रीडा लज्जा, (४ स्त्री) 'लज्जा' के ५ नाम हैं।

मन्दाक्षमिति ॥ मन्दमक्षं वागाद्यत्र ॥ (१) ॥ ॥ 'ह्री लज्जायाम्' (जु० प० अ०) । सपदादि [वा० ३।३।१०८] क्विप् ॥ (२) ॥ * ॥ 'त्रपूष् लज्जायाम्' ( भ्वा० आ० से० ) । षित्त्वात् ( ३।३।१०४ ) अङ् । 'त्रपा लज्जाकुलटयो.' इति हैम [ २।२९९ ] ॥ (३) ॥*॥ 'व्रीड लज्जायाम्' (दि० प० से०) । 'गुरोश्च–' ( ३।३।१०३ ) इत्यप्रत्यये व्रीडा ॥ * ॥ घञि ( ३।३।१८ ) 'व्रीड' अपि । 'गण्डूषगर्जभुजजागरहारकीलज्वालालाजटारुभसवर्तवगर्वशृङ्गाः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठवाणकरकाश्च समासमयाश्च ॥' इति स्त्रीपुंलिङ्गकथने रभस ॥ ( ४ ) ॥ * ॥ लज्जनम् । 'ओलस्जी व्रीडने' ( तु० प० से० ) । अप्रत्यय. (३।३।१०३) । 'भला जश् झशि' ( ८।४।५३) ॥ (५) ॥ * ॥ पञ्च 'लज्जायाः' ।

सापत्रपान्यतः ॥ २३ ॥

अपत्रपा ( स्त्री ), 'पिता आदि दूसरे से लज्जा करने' का १ नाम है।

सेति ॥ सा लज्जा अन्यतश्चेत् सापत्रपा अयं ह्रीमात्रेऽपि । 'ह्रीर्लज्जापत्रपा व्रीडा' इति रत्नकोषात् ॥ ( १ ) ॥ * ॥ एकं 'पित्रादेः पुरतो जातलज्जायाः' ।

क्षान्तिस्तितिक्षा

क्षान्तिः, तितिक्षा ( २ स्त्री ), 'दूसरेकी उन्नति को सहन करने' के २ नाम हैं।

क्षान्तिरिति ॥ क्षमणम् । 'क्षमू सहने' दिवादिः [आ० अ०] । अस्या. षित्त्वात्क्तिन् (३।३।९४) । 'अनुनासिकस्य क्वि–' ( ६।४।१५ ) इति दीर्घ ॥*॥ भ्वादेस्तु षित्त्वात् अङ् ( ३।३।१०४ ) । तदुक्तम् 'अषित क्षाम्यन्ते क्षान्ति. षितस्तु क्षमतेः क्षमा' इति । [क्षमः शक्ते हिते युक्ते क्षमावति । क्षमा क्षान्तौ क्षितौ' इति हैम ३।३२१] ॥ ( १ ) ॥*॥ तिजेः (भ्वा० आ० से० ) क्षमायां सन् ( ३।१।१५) तदन्तादप्रत्यये ( ३।३।१०२ ) टाप् ( ४।१।४ ) ॥ (२) ॥*॥ द्वे 'क्षमायाः' ।

१. "न सुष्ठु उक्षणम्–असूक्षणमिति लक्षणयाऽवज्ञा गम्यते । यत्कौटिल्यः—अयमुच्चैं सिञ्चति, दीर्घश्चारायण प्राव्राजीत् । असूर्क्षणमित्येके । सूर्क्ष्यते, 'यस्य हल' इति यलोपात्" इति स्वामी ।

अभिध्या तु परस्य विषये स्पृहा ।

अभिध्या ( स्त्री ), 'दूसरे की सम्पत्ति आदि को चाहने' का १ नाम है।

अभिध्येति ॥ अभिध्यानम् । 'ध्यै आध्याने' ( भ्वा० आ० से० ) । 'आतश्च–' ( ३।३।१०६ ) इत्यङ् ॥ (१) ॥ * ॥ परस्य विषये चौर्यादिना स्पृहा । 'परस्वविषयस्पृहा' इति पाठे परस्वे विषयेण चौर्यादिना लिप्सा–इति मुकुट. । वस्तुतस्तु–परस्वविषयविषयिणीच्छेत्यर्थः ॥ ( १ ) ॥*॥ एक 'परद्रव्येच्छायाः' ।

अक्षान्तिरीर्ष्या

अक्षान्तिः, ईर्ष्या ( स्त्री ), 'ईर्ष्या' अर्थात् 'दूसरे की सम्पत्ति को नहीं सहने' के २ नाम हैं।

अक्षान्तिरिति ॥ न क्षमणम् । क्षाम्यते क्तिनि नञ्समासः ॥ ( १ ) ॥*॥ ईर्ष्यणम् । 'ईर्ष्य ईर्ष्यायाम्' (भ्वा० प० से० ) । 'गुरोश्च–' ( ३।३।१०३ ) इत्य. (२) ॥*॥ द्वे 'परोत्कर्षासहिष्णुत्वस्य' ।

असूया तु दोषारोपो गुणेष्वपि ॥ २४ ॥

असूया (स्त्री), 'औद्धत्यसे किसी के गुण-विषयक काम में भी दोष निकालने' का १ नाम है।

असूयेति ॥ असूयनम् । 'असूञ् असूयायाम्' । कण्ड्वादित्वाद्यकि ( ३।१।२७ ) 'अ प्रत्ययात्' ( ३।३।१०२ ) इत्य । 'असूया त्वभ्यसूया च' इति शब्दार्णव. ॥ ( १ ) ॥*॥ एकम् 'अर्थदानादिषु गुणेषु दम्भकत्वादिरूपदोषारोपणस्य' ।

वैरं विरोधो विद्वेषः

वैरम् ( न ), विरोधः, विद्वेषः ( २ पु ), 'वैर करने' के ३ नाम हैं।

वैरमिति ॥ वीरस्य कर्म । '–वैरमैथुनिकयो' ( ४।३।१२५) इति निर्देशात् । युवादित्वात् ( ५।१।१३० ) वाण् ॥ ( १ ) ॥*॥ विरोधनम् । विद्वेषणम् । 'रुधिर् आवरणे' (रु० उ० अ०) । 'द्विष अप्रीतौ' ( अ० उ० से० ) । घञ् (३।३।१८) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'वैरस्य' ।

मन्युशोकौ तु शुक् स्त्रियाम् ।

मन्युः, शोकः ( २ पु ), शुक् ( =शुच्, स्त्री ), 'शोक' के ३ नाम हैं।

मन्य्विति ॥ 'मन ज्ञाने' (दि० आ० अ०) । 'मनिजनिदसिभ्यो युः' (उ० ३।२०) । 'मन्युर्दैन्ये क्रतौ क्रुधि' इति हैम [२।३७९] ॥ (१) ॥*॥ 'शुच शोके' ( भ्वा० प० से० ) । घञ् ( ३।३।१८ ) ॥ ( २ ) ॥*॥ संपदादित्वात् (वा० ३।३।१०८) क्विप् ॥ (३) ॥*॥ त्रीणि 'शोकस्य' ।

**पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥**

पश्चात्तापः, अनुतापः, विप्रतीसारः ( ३ पु ), 'पछताने' के ३ नाम हैं।

पश्चादिति ॥ पश्चात्तपनम् । अनुतपनम् । 'तप संतापे' (भ्वा० प० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥(२) ॥*॥ विप्रतिसरणम् । 'सृ गतौ' (भ्वा० प० अ०) । घञ् (३।३।१८) । 'उपसर्गस्य घञि–' ( ६।३।१२२ ) इति वा दीर्घ । 'विप्रतीसार उद्दिष्टः कौकृत्येऽनुशये रुषि' इति मे० [१४४।३०७] ॥*॥ [पक्षे ह्रस्वतृतीय (विप्रतिसार) अपि । 'विप्रतिसारस्त्वनुशये रुषि । कौकृत्ये' इति हैम ५।४९] ॥ (३) ॥*॥ त्रीणि 'किञ्चित्कृत्वा पश्चात्तापस्य' ।

**कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।**

कोपः, क्रोधः, अमर्षः, रोषः, प्रतिघः (५ पु), रुट् ( =रुष् ), क्रुध् ( २ स्त्री ), 'क्रोध' के ७ नाम हैं।

कोपेति ॥ 'कुप क्रोधे' (दि० प० से० ) । 'क्रुध कोपे' (दि० प० अ०) । घञ् (३।३।१८) भावे ॥ (१) ॥*॥ (२) ॥*॥ 'मृष तितिक्षायाम्' ( दि० उ० से० ) । घञ् (३।३।१८) । नञ्समास (२।२।६) ॥ (३) ॥*॥ 'रुष हिंसायाम्' (भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (४) ॥*॥ (५) ॥ प्रतिहननम् । 'अन्यत्रापि–' (वा० ३।२।४८) इति डे न्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम् । 'प्रतिघौ रुट्प्रतीघातौ' इति हैम [ ३।१३५ ] ॥*॥ रुट्क्रुधौ संपदादी ( वा० ३।३।१०८ ) ॥*॥ टापि ( भागुरिमतेन ) 'क्रोधो भामः क्रुधा रुषा' इति शब्दार्णव ॥ ( ६ ) ॥*॥ ( ७ ) ॥*॥ [ 'भामः क्रोधे रवौ दीप्तौ' इति मे० १०९। २१] ॥ सप्त 'कोपस्य' ।

**शुचौ तु चरिते शीलम्**

शीलम् ( न ), 'शील' अर्थात् 'आचरण शुद्ध रखने' का १ नाम है।

शुचाविति ॥ 'शुचौ' इति भाषितपुंस्कत्वात्पुंवद्भाव (७।१।७४) ॥*॥ 'शील समाधाने' ( भ्वा० प० से० ) । ण्यन्तात् ( ३।१।२६ ) घञ् ( ३।३।१८ ) । यद्वा–'शीङो धुक्लुक्वलञ्वालन' (उ० ८।३८) इति लक् । अर्धर्चादि (२।४।३१) । 'शीलं स्वभावे सद्वृत्ते' इति विश्व [१५०। २४] । चरित्रमात्रेऽपि शीलम् । 'निष्ठा च शील चारित्रं चारित्रं चरितं तथा' इति रत्नकोषात् । ( १ ) ॥*॥ एक 'सुस्वभावस्य' ।

**उन्मादश्चित्तविभ्रमः ॥ २६ ॥**

उन्मादः, चित्तविभ्रमः ( २ पु ), 'पागलपन' के २ नाम हैं।

उन्माद इति ॥ उन्मदनम् । 'मदी हर्षे' (दि० प० से०)। घञ् (३।३।१८) ॥ ( १ ) ॥ * ॥ चित्तस्य विभ्रमोऽनवस्थानम् ॥ (२) ॥*॥ द्वे 'चित्तविभ्रमस्य' ।

**प्रेमा ना प्रियता हार्दं प्रेम स्नेहः**

प्रेमा (=प्रेमन्, पु), प्रियता (स्त्री), हार्दम्, प्रेम ( =प्रेमन् २ न ), स्नेहः ( पु ), 'प्रेम' के ५ नाम हैं।

प्रेमेति ॥ प्रीणाति प्रिय । 'प्रीञ् तर्पणे' ( क्र्या० उ० से० ) । 'इगुपध–' (३।१।१३५) इति क । तस्य भाव । 'पृथ्वादिभ्य इमनिच्–' (५।१।१२२) । 'प्रियस्थिर–' (६। ४।१५६) इति प्रादेश । ['प्रेमा ना वासवे वाते] प्रेमास्त्री स्नेहनर्मणो' [ इति मे० ८९।९४ ] ॥ ( १ ) ॥*॥ तल् ( ५।१।११९ ) । प्रियता ॥ (२) ॥*॥ हृदयस्य कर्म । युवादित्वात् (५।१।१३०) अण् । 'हृदयस्य हृल्लेख–' (६। ३।५० ) इति हृदादेश ॥ ( ३ ) ॥*॥ प्रमणम् । 'प्रीञ् तर्पणे' ( क्र्या० उ० से० ) । मनिन् ( ३।२।७५) । प्रेम नान्तं क्लीबम् ॥ ( ४ ) ॥ * ॥ स्नेहनम् । 'ष्णिह प्रीतौ' ( दि० प० से० ) । घञ् ( ३।३।१८ ) । 'स्नेहः प्रेम्णि घृतादिके' [ इति हैम २।६१८ ] ॥ (५) ॥ * ॥ पञ्च 'स्नेहस्य' ।

**अथ दोहदम् ।**

**इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ॥२७॥ कामोऽभिलाषस्तर्षश्च**

दोहदम् ( न ), इच्छा, काङ्क्षा, स्पृहा, ईहा, तृट् (=तृष्), वाञ्छा, लिप्सा ( ७ स्त्री ), मनोरथः, कामः, अभिलाषः, तर्षः ( ४ पु ), 'इच्छा, चाहना' के १२ नाम हैं।

अथेति ॥ दोहमाकर्षं ददाति । 'आतोऽनुप–'(३।२।३) इति क । अयमिच्छामात्रवाच्यपि विशेषेण गर्भिणीच्छाया प्रयुज्यते । 'दोहदो गर्भलक्षणे । अभिलाषे तथा गर्भे' इति हैम [७७।६०-६१]॥(१)॥*॥ एषणम् । इच्छा । 'इच्छा' (३।३।१०१) इति सूत्रेण इषे ['इषु इच्छायाम्', तु० प० से०] शप्रत्यये निपातित ॥ ( २ ) ॥*॥ 'काक्षि वाञ्छि इच्छायाम्' (भ्वा० प० से०) । 'गुरोश्च–' ( ३।३।१०३ ) इत्य ॥ (३) ॥*॥ (७) ॥*॥ 'स्पृह ईप्सायाम्' ( चु० उ० से०) । भिदादेराकृतिगणत्वादङ् (३।३।१०६) ॥(४) ॥*॥ 'ईह चेष्टायाम्' (भ्वा०आ०से०) । 'गुरोश्च–'(३।३। १०३) इत्य । ['ईहोद्यमवाञ्छयो' इति मे० १७५।२]॥ (५)॥*॥ तर्पणम् । 'ञितृष पिपासायाम्' (दि० प०से०)। संपदादि क्विप् ( वा० ३।३।१०८ ) । ['तृट् लिप्सायामुदन्याया स्मरपुत्र्यामपि स्त्रियाम्' इति मे०१६६।१४] ॥*॥ [ 'तृषा लिप्सातृषो स्त्रियाम्' इति मेदिनी १६६।१३ वचनाद् भागुरिमतेन टावन्तोऽपि 'तृषा' शब्द ] ॥ (६) ॥*॥ घञि (३।३।१८) । 'तर्षो लिप्सोदन्ययो.' [इति मे०१६८। १३ ] ॥ (१२) ॥*॥ लभे सन्नन्ताद (३।३।१०२) ॥

(८) ॥*॥ मन एव रथोऽत्र । मनो रथ इव वा ॥ (९) ॥ * ॥ कामनम् । 'कमु कान्तौ' ( भ्वा० आ० से० ) । घञ् (३।३।१८) । 'कामः स्मरेच्छयो पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्' [इति मे० १०८।५] ॥ (१०) ॥ * ॥ अभिलपणम् । 'लष कान्तौ' ( भ्वा० उ० से० ) । घञ् ( ३।३।१८ ) ॥ ( ११ ) ॥ * ॥ द्वादश 'इच्छायाः' ।

सोऽत्यर्थं लालसा द्वयोः ।

लालसा ( पु स्त्री ), 'लालसा' अर्थात् 'अधिक चाहना' का १ नाम है ।

स इति ॥ स तर्षो महांश्चेत् । 'लल ईप्सायाम्' ( चु० आ० से० ) । औणादिकोऽसच् । यद्वा—'लस कान्तौ' ( चु० उ० से० ) । भृशं लसनम्, इत्यर्थे यङन्ताद. (३।३।१०२) । टाप् (४।१।१०२) । पक्षे तु लालस । स्त्रीनिर्देश आवन्तता-सूचनार्थः । 'लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयो.' इति विश्व-मेदिन्यौ[1] [ मे० १७२।३४ ] ॥ (१) ॥*॥ एकम् 'अतिप्रीते' ।

उपाधिर्ना धर्मचिन्ता

उपाधिः ( पु ), धर्मचिन्ता ( स्त्री ), 'धर्मविषयक चिन्ता' के २ नाम हैं ।

उपाधिरिति ॥ समीप आधे. । उपपन्न आधिर्वा । 'उपाधिस्तु धर्मध्याने विशेषणे । कुटुम्बव्यापृते छद्मनि' इति हैम' [३।३७१] ॥ (१) ॥ * ॥ धर्मस्य चिन्ता ॥ (२) ॥ * ॥ द्वे 'धर्मविचारस्य' ।

पुंस्याधिर्मानसी व्यथा ॥ २८ ॥

आधिः ( पु ), 'मानसिक दुःख' का १ नाम है ।

पुंसीति ॥ आधीयते दु खमनेन । 'डुधाञ्' ( जु० उ० अ० ) । 'उपसर्गे घो. कि.' ( ३।३।९२ ) । [ 'आधिर्मनोर्तौ व्यसनेऽधिष्ठाने बन्धकाशयो.' इति हैम २।२४२ ] ॥ (१) ॥ * ॥ एकं 'मनःपीडायाः' ।

स्याच्चिन्ता स्मृतिराध्यानम्

चिन्ता, स्मृतिः ( २ स्त्री ), आध्यानम् ( न ), 'याद करने' के ३ नाम हैं ।

स्यादिति ॥ चिन्तनम् । 'चिति स्मृत्याम्' ( चु० प० से० ) । 'चिन्तिपूजि–' (३।३।१०५) इत्यङ् । यत्तु—अप्रत्यये कार्ये 'चिन्तिपूजि–' इत्यङ्विधानं गुणाभावार्थम्, तत्सामर्थ्याण्णिलोपाभावोऽपि, इति 'चिन्तया' इत्यपि–इति मुकुटेनोक्तम् । तन्न । 'भिदा' इत्यादौ ङित्त्वस्य चरितार्थत्वेन 'व्यवधा' इत्यत्रातोलोपार्थत्वेनोत्तरार्थत्वेन सामर्थ्यविरहात्॥

(१) ॥*॥ स्मरणम् । 'स्मृ आध्याने' (भ्वा० प० अ०) । क्तिन् ( ३।३।९४ ) । 'स्मृतिः स्मरणधीच्छासु शास्त्रे' इति हैमः [ २।२१३ ] ॥ ( २ ) ॥ * ॥ उपधीयते । 'ध्यै चिन्तायाम्' (भ्वा० प० अ० ) । ल्युट् ( ३।३।११५ ) ॥ ( ३ ) ॥*॥ त्रीणि 'स्मरणस्य' ।

उत्कण्ठोत्कलिके समे ।

उत्कण्ठा, उत्कलिका ( २ स्त्री ), 'उत्कण्ठा' के २ नाम हैं ।

उत्कण्ठेति ॥ 'कठि शोके' (भ्वा० आ० से०) । उत्कण्ठनम् । 'गुरोश्च–' ( ३।३।१०३ ) इत्य' ॥ (१) ॥*॥ *उत्कले कृञादिभ्यो वुन् ( उ० ५।३५ )* । क्वुन् ( उ० २। ३२ ) वा । [ 'उत्कलिका तु हेलाया तरङ्गोत्कण्ठयोरपि' इति हैम ४।४ ] ॥ ( २ ) ॥ * ॥ स्त्रीत्वेनापि साम्यम् । द्वे कामादिजस्मृतेः' । 'चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुन । उत्कण्ठोत्कलिके तस्मिन्, अभिध्या तूभयोरपि' इति शब्दार्णव ।

उत्साहोऽध्यवसायः स्यात्

उत्साहः, अध्यवसायः ( २ पु ), 'उत्साह' के २ नाम हैं ।

उत्साह इति ॥ उत्सहनम् । 'षह मर्षणे' (भ्वा० आ० से०) । घञ् ( ३।३।१८ ) । 'उत्साहस्तूद्यमे सूत्रे' [ इति विश्वः १८०।१७, मे० १७६।१५८ ] ॥ (१) ॥*॥ अध्यवसानम् । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । घञ् ( ३। ३।१८ ) । 'आतो युक्' ( ७।३।३३ ) ॥ ( २ ) ॥ * ॥ द्वे 'उत्साहस्य' ।

स वीर्यमतिशक्तिभाक् ॥ २९ ॥

वीर्यम् ( न ), 'सामर्थ्ययुक्त उत्साह' का १ नाम है ।

स इति ॥ स उत्साहः अतिशक्तिभाक् । वीरे साधु । 'तत्र साधु' ( ४।४।९८ ) इति यत् । ['वीर्यं तेज प्रभावयोः । शुक्रे शक्तौ च' इति हैमः २।३८५ ] । 'अतिशयशक्तिर्वीर्या' इति त्वमरमालायां स्त्रीत्वम् ॥ (१) ॥*॥ एकम् 'अतिशयिताध्यवसायस्य' ।

कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।

कुसृतिर्निकृतिः शाठ्यम्

कपटः ( पु न ), व्याजः, दम्भः, उपधिः ( ३ पु ), छद्म ( =छद्मन् ), कैतवम् (२ न), कुसृतिः, निकृतिः ( २ स्त्री ), शाठ्यम् ( न ), 'धूर्तता, कपट, दगाबाजी' के ९ नाम हैं ।

कपट इति ॥ के मूर्ध्नि पट इवाच्छादकः । यद्वा—पटतीति पट. । 'पट गतौ' (भ्वा० प० से०) । पचाद्यच् (३। १।१३४ ) । कस्य ब्रह्मणोऽपि पटो व्यापक. ॥ (१) ॥*॥ व्यजन्ति क्षिपन्त्यनेन । 'अज गतिक्षेपणयोः' ( भ्वा० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । निष्ठाया

---

१. विश्वे तु 'लालसो लालसाऽपि स्याद्याच्ञतृष्णातिरेकयो.' ( १७५।१८ ) इत्येवं पाठः ।

सेट्त्वाच्च कुत्वम् । 'व्याजः शाठ्येऽपदेशे च' इति विश्व[1]॥ ( २ ) ॥ * ॥ दम्यतेऽनेन । 'दम्भु दम्भने' ( स्वा० प० से० ) । घञ् ( ३।३।१८ ) । 'दम्भः कल्के कैतवे च' इति हैमचन्द्र [ २।३१३ ] ॥ (३) ॥ * ॥ उपधीयत आरोप्यतेऽनेन । 'उपसर्गे घो किः' ( ३।३।९२ ) । 'उपधिर्व्याजचक्रयो'[ इति हैम ३।२७२ ] ॥ (४) ॥ * ॥ छाद्यतेऽनेन । 'छद अपवारणे' ( चु० उ० से० ) । मनिन् (३।२।७५) । 'इस्मन्त्रन् क्विषु च' (६।४।९७) इति ह्रस्व । [छद्म शाठ्येऽपदेशे घातिकर्मणि' इति हैम २।२६७]॥(५) ॥*॥ कितवस्य कर्म । युवादित्वात् ( ५।१।१३० ) अण् । 'कैतवं द्यूतदम्भयो'[2] इति हैम [३।७३४]॥ (६) ॥*॥ कुत्सिता सृति । 'सृ गतौ' (भ्वा० प० से०) । क्तिन् (३।३।९४)। 'कुगति–' ( २।२।१८ ) इति समास ॥ (७) ॥*॥ निकृष्टा कृति क्रिया परप्रतारणरूपा । यद्वा—पराभीष्टस्य निकर्तनम् । 'कृती छेदने' (तु० प० से०) । 'इक् कृष्यादिभ्य' ( वा० ३।३।१०८) इतीक् । 'निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्' इति विश्वमेदिन्यौ[3]॥ (८) ॥*॥ शठति । 'शठ कैतवे' (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) । शठस्य कर्म । ब्राह्मणादित्वात् ( ५।१।१२४) ष्यञ् । यद्वा—शठनम् । 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (९) ॥*॥ नव 'कपटस्य' ।

**प्रमादोऽनवधानता ॥ ३० ॥**

प्रमाद (पु), अनवधानता ( स्त्री ), 'असावधानी' के २ नाम हैं।

प्रमाद इति ॥ 'मदी हर्षे' ( दि० प० से० ) । भावे घञ् ( ३।३।१८ ) । "प्रमाद समदे मत्ते स्त्रियामुन्मदयोरिति' ॥ ( १ ) ॥*॥ न अवधानमस्य । तस्य भाव ॥ (२) ॥*॥ द्वे 'अविमृष्टकृत्यस्य' ।

**कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।**

कौतूहलम्, कौतुकम्, कुतुकम्, कुतूहलम् (४ न), 'कौतूहल' अर्थात् 'खेल, तमाशा, जादू,' के ४ नाम हैं।

कौतूहलमिति ॥ कुतू चर्मनिर्मितस्नेहपात्र हलति । 'हल विलेखने' ( भ्वा० प० से० ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) क । यद्वा—हलति । पचाद्यच ( ३।१।१३४)। कृत्वा हलम् । प्रज्ञाद्यणि (५।४।३८) कौतूहलम् ॥ (१) ॥*॥ ( अणभावे ) 'कुतूहलं कौतुके स्यात्प्रशस्तेऽपि च दृश्यते' [इति मे० १५६।१५२] ॥ ( ४ ) ॥*॥ कुतू कायति । 'कै शब्दे' (भ्वा० प० अ०) । 'आतोऽनुप–'(३।२।३ ) इति क । उपपदसमास (२।२।१९) । 'इको ह्रस्वोऽङ्यो–' (६।३।६१) इति ह्रस्व । प्रज्ञाद्यण् ( ५।४।३८ ) वा । यद्वा—कुत्वा भवम् । अध्यात्मादित्वात् (वा० ४।३।६० ) ठञ् । 'इसुसुक्–' ( ७।३।५१ ) इति क । 'केऽण' ( ७।४।१३ ) इति ह्रस्व । संज्ञापूर्वकत्वात्पक्षे वृद्ध्यभाव । यत्तु–'तुज हिंसायाम्' (भ्वा० प० से०) । कु तुजति । 'मूलविभुज–' ( वा० ३।२।५ ) इति क । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम्–इति मुकुटेनोक्तम् । तन्न । कुत्वे आन्तरतम्याज्जस्य गत्वप्रसङ्गात् । ['कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतस्याने मङ्गलोद्वाहसूत्रयो । गीतादौ भोगकाले च' इति हैम ३।२९-३० ] ॥*॥ (३) ॥*॥ चत्वारि 'कौतुकस्य' ।

**स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा ॥३१॥**
**हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ।**

विलास, विब्बोक, विभ्रम (३ पु), ललितम् (न), हेला, लीला ( २ स्त्री,) ये ६ 'स्त्रियोंके शृङ्गार, भाव अर्थात् रत्यादि और मनोविकारसे उत्पन्न क्रियाविशेष' है, इनका 'हाव' ( पु ), 'हाव' यह १ नाम है।

स्त्रीणामिति ॥ शृङ्गाराद्रत्यादे भावान्मनोविकाराच्च जाता ( स्त्रीणाम् ) क्रियाश्चेष्टा अलकाराख्या विलासादिका हावशब्दवाच्या । ह्वनम् । 'हु दानादनयो' ( जु० प० अ० ) । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इत्यविषये घञ ( ३।३।१८ ) । यत्तु—मुकुट आह—शृङ्गारभावो रति । तज्जा–इति । तन्न । 'शृङ्गारभाव' इति समुदायस्य रतिवाचकत्वाभावात् । यदपि—हु हवने–इत्युक्तम् । तदपि न । एतादृशस्य धातोरभावात् । यदपि–उत्कार्षे भरतस्य सम्मतिरपन्यस्ता । अलकारश्च नाट्यज्ञैर्ज्ञेया भावरसाश्रया । यौवनेऽभ्यधिका स्त्रीणा विकारा वक्त्रगात्रजा ' इति । तत्रापि 'भावरसाश्रया' इत्यनेनास्मदुक्त एवार्थो लभ्यते, न भवदुक्त । यत्तु—ह्वयन्त्यनेनेति हाव –इति स्वामिनोक्तम् । तन्न । ह्वेञो ['ह्वेञ् स्पर्द्धायां शब्दे च', भ्वा० आ० अ०] घञि सम्प्रसारणाविधानात् ॥ (१) ॥*॥ विलसनम् । 'लस श्लेषणे' (भ्वा० प० से०)। घञ् (३।३।१८)। "विलासोऽङ्गे विशेषो य प्रियाप्तावासनादिषु'[1] । 'विलासो

१. हैमस्योऽय पाठ ( २।७८ ) । विश्वे तु 'व्याज शाठ्यापदेशयो' (३२।६) इत्येव पाठ ।

२ एतदग्रे 'कैतव कितवे धूर्तौ' इति पाठ क्वचिदुपलभ्यते, तत्तु हैमे न दृश्यते ।

३ विश्वे तु 'निकृतिर्भर्त्सने क्षेपे वदन्ति शठशाठ्ययो' ( ६०।६५ ) इत्येव पाठ ।

४, मेदिन्या ( ७७।३५ ) तु 'प्रमद' इति पाठो दृश्यते ।

१ 'यानस्थानासनादीना मुखनेत्रादिकर्मणाम् । विशेषस्तु विलास स्यादिष्टसदर्शनादिना ॥' इति सा० द० (३।१४१) ।

हावभेदे स्याल्लीलायामपि पुंस्ययम्'[इति मे० १७२।३९] ॥ ( १ ) ॥*॥ विवानम् । 'वा गतौ' (अ० प० अ०) । विर्गतिविशेष. । ( यत्तु– ) 'अपष्ट्वादय.' इति कु –इति मुकुट । तन्न । तादृशसूत्रादर्शनात् । 'मृगय्वादयश्च' ( उ० १।३७) इति तुचितम् । उच्यते समवैत्यत्र । 'उच समवाये' (दि० प० से०) ' 'हलश्च' (३।३।१२१) । इति घञर्थे । यद्वा–'कः' ( वा० ३।३।५८ ) । 'ओक उच के' ( ७।३। ६४ ) इति निपातित. । विवोरोक स्थानम् । 'विब्बो[२]-कोऽभिमतप्राप्तावपि गर्वादनादर' ॥ (१) ॥*॥ विभ्रमणम् । 'भ्रमु अनवस्थाने' (दि० प० से०)। घञ् (३।३।१८)। 'नोदात्तोपदेश–' (७।३।३४) इति न वृद्धि । चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो[३] मत' । 'अथ विभ्रम । शोभायां संशये हावे' इति हैम [३।५०३-४] । 'विभ्रमो भ्रान्तिहावयो[४]' [ इति विश्व ११३।३९, मे० ११२।५२ च] ॥ ॥ ( १ ) ॥ * ॥ 'लल ईप्सायाम्' ( चु० आ० से० ), 'लड विलासे' ( भ्वा० प० से० ) वा । डलयोरभेद, भावे क्त' (३।३।११४) । 'अनाचार्योपदिष्टं स्याल्ललितं[५] रतिचेष्टितम्' । ['ललितमीप्सिते । तद्विते हारभेदे च' इति हैम ३।३०९-१०] ॥*॥ 'हिल भावकरणे' (तु० प० से० ) । 'हेडृ अनादरे' (भ्वा० आ० से०) । भावे घञ् (३।३।१८) 'स्याद्भावसूचको हावो हेलाऽत्यन्तानुभावनम्'[६] । 'प्रौढेच्छा सुरते हेला' इति वा । ['हेला लियामवज्ञाया विलासे वीरयोषिताम्' इति मे० १४९।५७] ।. (१) ॥*॥ लयनम् ।

१. एतदग्रे 'वीतसो बन्धनोपाये मृगाणामपि पक्षिणाम् । तेषामेव च विश्वासहेतौ प्रावरणेऽपि च ॥' इति क्वचिल्लिखित पाठो न प्रकृतोपयोगी, स तूपयुक्तत्वादग्रे (अ० २।१०।२६) व्याख्याया लिखित एव ।

२. 'बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादर' इति सा० द० (३।१४३) ।

३. 'त्वरया हर्षरागादेर्दयितागमनादिषु । अस्थाने भूषणादीनां विन्यासो विभ्रमो मत ॥' इति सा० द० ( ३।१४७ ) ।

४. एतदनन्तर 'विभ्रमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्' इति पाठ. क्वचिदुपलभ्यते । परंतु मेदिनीविश्वयोस्तु 'विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्' इत्येव पाठदर्शनादत्रानुपयुक्तत्वं तस्य स्फुटमेव ।

५. 'सुकुमारतयाऽङ्गाना विन्यासो ललितं भवेत्' इति सा० द० (३।१४८) ।

६. 'हेलाऽत्यन्तसमालक्ष्यविकार स्यात् स एव च ।' इति सा० द० (३।१३२), अत्र 'स' इति पदेन पूर्वोक्तो भावो ग्राह्यः ।

ली. । 'लीङ् श्लेषणे' ( दि० आ० अ० ) । संपदादित्वात् ( वा० ३।३।१०८ ) क्विप् । लियं लाति । 'ला आदाने' (अ० प० अ०) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'प्रियस्यानुकृतिर्लीला[१] श्लिष्टा वाग्वेषचेष्टितै.' । 'लीला केलिविलासश्च शृङ्गारभावजा क्रिया' [इति हैम. २।५२०] ॥ (१) ॥*॥ इति शब्दार्णवात्प्रकारार्थादन्येऽपि ज्ञेया. । 'लीला विलासो विच्छित्तिर्विभ्रम. किलकिञ्चितम् । मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥ विहृतं चेति मत्तव्या दश स्त्रीणा स्वभावजा ' इति नाटकरत्नकोश. । विच्छेदनम् । 'च्छिदिर् द्वैधीकरणे' ( रु० उ० अ० ) । क्तिन् (३।३।९४) । 'मण्डनानादरन्यासो विच्छित्ती रूपदर्पतः[२]' । [ 'विच्छित्तिरङ्गरागे स्याद्भावविच्छेदयोरपि' इति विश्वः ७०।१६८]॥(१)॥*॥किलकिञ्चितमत्र । हर्षाद्रुदितगीतादिव्यामिश्रं किलकिञ्चितम्[३]'। स्वामी तु—किलिकिञ्चितम्—इति पाठं मन्यते। यदाह 'किलीति कण्ठकूजितम् वा' । 'यथा—किलिकिलाराव ' इति ॥(१)॥*॥ मोटनम् । 'मुट प्रमर्दने' (तु० प० से०) । घञ् ( ३।३।१८ ) । बाहुलकाद्वस्तुट् । भृशादि ( ३।१।१२ ) क्यङन्ताद्भावे क्त (३।३।११४) । 'मोट्टायितं[४] प्रियं स्मृत्वा साङ्गभङ्गविजृम्भणम्'। यत्तु—मोट्टनम् । मोट्ट —इति मुकुट. । तन्न । मोट्टधातोरदर्शनात् । यदपि—लोहितादि ( ३।१।१३ ) क्यषन्ताद्भावे क्त –इति । तदपि न । 'लोहितादिडाज्भ्यः क्यष्वचनम्', 'भृशादिष्वितराणि' इति वार्तिकविरोधात् ॥ (१) ॥*॥ कुट्टनम् । 'कुट्ट छेदनादौ' ( चु० प० से० ) । घञ् ( ३।३।१८ ) । कुट्टेन निर्वृत्तम् । भावप्रत्ययान्तादिमप् (वा० ४।४।२०) । ततो ण्यन्तात् (वा० ३।१।२६) । भावे क्त ( ३।३।११४ ) ॥ तारकादित्वात् (५।२।३६) इतच् वा । 'दु खोपचारः सौख्येऽपि हर्षात्कुट्टमितं[५] मतम्' ॥ ( १ ) ॥*॥ विहरणम् ।

१. 'अङ्गैर्वेषैरलङ्कारै प्रेमभिर्वचनैरपि । प्रीतिप्रयोजितैर्लीला प्रियस्यानुकृतिं विदु ॥' इति सा० द० (३।१४०)।

२. 'स्तोकाऽप्याकल्परचना विच्छित्ति कान्तिपोषकृत् ।' इति सा० द० (३।१४२) ।

३. 'स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् । साकर्यं किलकिञ्चितमभीष्टतमसगमादिजाद्धर्षात् ॥' इति सा० द० (३।१४४) ।

४ 'तद्भावभाविते चित्ते वल्लभस्य कथादिषु । मोट्टायितमिति प्राहु कर्णकण्डूयनादिकम् ॥' इति सा० द० (३। १४५) ।

५. केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात् । प्राहुः कुट्टमितं नाम शिरःकरविधूननम् ॥' इति सा० द० (३।१४६) ।

भावे क्त ( ३।३।११४ )। 'वक्तव्यभाषण व्याजाद्विहृतं' दर्शितेङ्गितम्' ॥ ( १ ) ॥ * ॥ इति । [ एकैकं 'स्त्रीणां शृङ्गारभावजन्यक्रियायाः' ]

द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च ॥ ३२ ॥

द्रव, केलि, परीहास (३ पु), क्रीडा, खेला (२ स्त्री), नर्म (=नर्मन्, न), 'क्रीडामात्र' के ६ नाम हैं।

द्रवेति ॥ द्रवणम् । 'द्रु गतौ' (भ्वा० प० अ०)। 'ऋदो रप्' ( ३।३।५७ )। '[2]द्रवो विद्रवनर्मणो । प्राद्रवे रसगत्योश्च' इति हैम [२।५३५-३६] ॥ (१) ॥*॥ केलनम् । 'किल क्रीडायाम्' (तु० प० से०)। 'केलृ चलने' ( भ्वा० प० से० ) वा । इन् (उ० ४।११८)। (केली इति स्त्रियामपि । 'केलीपु तद्‌गतगुणाक्षिपीय' इति नैषधात् (३।२७) इति मुकुट [3]) ॥(२)॥*॥ परिहसनम् 'हसे हसने' (भ्वा० प० से० )। घञ् ( ३।३।११८ )। 'उपसर्गस्य घञि—' ( ६।३।१२२ ) इति दीर्घः ॥ ( ३ ) ॥ * ॥ क्रीडनम् । 'क्रीडृ विहारे' ( भ्वा० प० से० )। गुरोश्च—' ( ३।३।१०३ ) इत्य । 'क्रीडा केलिप्रकारे स्यात्खेलावज्ञानयोरपि [ इति विश्व ४४।२०, मे० ४०।३ च ] ॥ ( ४ ) ॥*॥ खेलनम् । 'खेलृ चलने' (भ्वा० प० से०)। 'गुरोश्च—' (३।३।१०३ ) इत्य । मुकुटस्तु 'खेला' इत्यस्य स्थाने 'लीला' इति पठति ॥ ( ५ ) ॥ * ॥ नरणम् । 'नृ नये' ( भ्वा० प० से० )। मनिन् ( ३।२।७५ ) ॥ ( ६ ) ॥ * ॥ षट् 'क्रीडायाः' ।

व्याजोऽपदेशो लक्ष्यं च

व्याज, अपदेश (२ पु), लक्ष्यम् (न), 'बहाना करने' के ३ नाम हैं।

व्याज इति ॥ (१) ॥*॥ अपदेशनम् । 'दिश अतिसर्जने'(तु० उ० अ०)। घञ् (३।३।१८) ['अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि' इति मे० १६४।३१ ] ॥ (२) ॥ * ॥ लक्षणम् । 'लक्ष आलोचने' ( चु० आ० से० )। ण्यत् (३।३।१२४)। 'लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्' इति मेदिनी [ ११६।५३ ] ॥ * ॥ घवन्तोऽपि । सङ्ख्यायां च न ना लक्षं क्लीबं व्याजशरव्ययोः' इति मूर्धन्यान्ते रभसात् ॥ (३) ॥*॥ त्रीणि 'स्वरूपाच्छादनस्य' ।

क्रीडा खेला च कूर्दनम् ।

क्रीडा, खेला ( २ स्त्री ), कूर्दनम् ( न ), 'लड़कपन के खेल' के ३ नाम हैं।

क्रीडेति ॥ ( १ ) ॥ * ॥ खेलनम् । 'गुरोश्च—' (३।३।१०३ ) इत्य ॥ ( २ ) ॥*॥ 'कुर्द क्रीडायाम्' (भ्वा० प० से० )। ल्युट् (३।३।११५)। 'वोरुपधाया —' ( ८।२।७६ ) इति दीर्घः । यत्तु—'स्फूर्ज' इति लिङ्गात् कुर्दादीनां न दीर्घः (इति धर्मदास )। 'वौं' इति विधेर्निरस्यत्वम्—इति कश्चित् (पूर्णचन्द्र) आह । तन्न । 'स्फूर्जं' इति स्वरूपनिर्देशार्थं दीर्घानुच्चारणात् । दीर्घविधेः सत्वाच्च । यदि 'विधिप्राप्तं कृत्वैव निर्देष्टव्यम्' इति नियमः स्वीक्रियते तदा 'एधिरेचोरेत्वाभावस्याज्ञापकत्वं स्यात्' एत्वस्य लक्षणप्राप्तत्वात् । अत एव 'दीर्घाभावस्तु चिन्त्यः' इति स्वामिग्रन्थोऽपि[1] सगच्छते ॥ ( ३ ) ॥ * ॥ त्रीणि 'कन्दुकादिक्रीडनस्य' ।

घर्मो निदाघः स्वेदः स्यात्

घर्म, निदाघ, स्वेद (३ पु), 'घाम' या 'पसीने' के ३ नाम हैं।

घर्म इति ॥ जिघर्त्यङ्गमनेन । 'घृ क्षरणदीप्त्योः' (जु० प० अ० )। 'घर्म-' ( उ० ११४९ ) इति निपातितः । यत्तु—घरति' इति विग्रहप्रदर्शनं मुकुटेन कृतम् । तत्तु 'घृ क्षरणे' इति धातुपन्यसनेन विरुध्यते । घरत्यङ्गमनेन वा । 'घृ सेके' ( भ्वा० प० अ० )। 'घर्मः स्यादातपे ग्रीष्मेऽप्यूष्मस्वेदाम्बुनोरपि' इति मे० १०९।१२] ॥ (१) ॥*॥ निदह्यतेऽनेन । 'हलश्च' ( ३।३।१२१ ) इति घञ् । न्यङ्क्वादि (७।३।५३) ॥ ( २ ) ॥*॥ स्विद्यतेऽनेनाङ्गम् । घञ् (३।३।१२१)। 'स्वेदो घर्मे स्वेदने च' इति हैम [२।२४१] ॥ ( ३ ) ॥*॥ त्रीणि 'प्रस्वेदहेतोस्तापस्य' ।—'अङ्गजलस्य'—इति मुकुटः । तन्न । स्वकृतकरणविग्रहविरोधात् । न हि जलेन प्रस्विद्यते । वस्तुतस्तु—भावकर्मव्युत्पत्त्या सोऽप्यर्थः ।

प्रलयो नष्टचेष्टता ॥३३॥

प्रलय (पु), नष्टचेष्टता (स्त्री), 'बेहोशी' के २ नाम हैं।

प्रलय इति ॥ प्रलयनम् । 'लीङ् [ सश्लेषणे' ] (दि० आ० अ०)। 'एरच्' ( ३।३।५६ )। 'प्रलयो मृत्युकल्पान्तमूर्च्छापायेषु पुंस्ययम्' [ इति मे० ११९।९० ] ॥ (१)

---

१ साहित्यदर्पणे 'विहृत'स्थाने विकृतेति पाठः, तल्लक्षणं यथा—'वक्तव्यकालेऽप्यवचो व्रीडया विकृतं मतम्' इति सा० द० (३।१५०)।

२ नाट्यस्य पञ्चसन्धिषु 'विमर्शाख्यस-धेरेकमङ्गं 'द्रवः', तल्लक्षणं यथा—'द्रवो गुरुव्यतिक्रान्तिः शोकवगादिसंभवा।' इति सा० द० (६।३८५)।

३ कोष्ठस्थः पाठः निर्णयसागरीयः ।

१ 'कुर्दनमित्येके, कुर्द क्रीडायाम्' इत्यनन्तरमुक्तं' इति शेषः ।

॥*॥ नष्टा चेष्टा यस्य । तस्य भावः । तल् (५।१।११९) ॥ (२) ॥*॥ 'द्वे 'सात्त्विकभावस्य' मूर्च्छापरपर्यायस्य । हर्षशोकादिभिः सकलचेष्टानाशस्येत्यर्थः ।

**अवहित्थाकारगुप्तिः**

अवहित्था, आकारगुप्तिः (२ स्त्री), 'अपने आकारको छिपाने' के २ नाम हैं।

अवेति ॥ अवहि· स्थितिरवहित्था । 'सुपि स्थः' (३।२।४) इत्यत्र 'स्थः' इति योगविभागात् कः । पृषोदरादि (६।३।१०९) ॥ (१) ॥*॥ आकारस्य शोकादिजनितमुखम्लान्यादेर्गोपनम् । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे 'आकारगोपनस्य' ।

**समौ संवेगसंभ्रमौ ।**

संवेगः, सम्भ्रमः (२ पु), 'हर्ष आदिके कारण शीघ्रता करने' के २ नाम हैं।

समाविति ॥ संवेजनं सचलनम् । 'ओविजी भयचलनयोः' (तु० आ० से०) । घञ् (३।३।१८) ॥ (१) ॥*॥ सम्भ्रमणम् । घञ् (३।३।१८) । 'संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि' [ इति विश्व. ११३।३९ ] ॥ (२) ॥*॥ द्वे 'हर्षादिना कर्मसु त्वरणस्य' ।

**स्यादाच्छुरितकं हासः सोत्प्रासः**

आच्छुरितकम् (न), 'साभिप्राय हँसने' का १ नाम है।

स्यादिति ॥ उत्प्रासनम् । 'असु क्षेपणे' (दि० प० से०)। 'अस गतिदीप्त्यादानेषु' (भ्वा० उ० से० ) वा । घञ् (३।३।१८) । उत्प्रासेनाधिक्येन क्षेपणेन वा सहितः सोत्प्रासः । आच्छुरणं परच्छेदनम् । 'छुर छेदने' (तु० प० से०) । भावे क्त. (३।३।११४) । स्वार्थे कन् (५।३।७७) । भावे 'स्यादाच्छुरितकं हासनखराघातभेदयोः' [इति विश्व २११।२३०] ॥ (१) ॥*॥ एकं 'परस्यामर्षजनकहासस्य' ।

**स मनाक् स्मितम् ॥ ३४ ॥**

स्मितम् (न), 'साभिप्राय मुस्कुराने' का १ नाम है।

स इति ॥ स हासो मनागल्पः । 'स्मिङ् ईषद्धसने' (भ्वा० आ० अ०) । भावे क्त (३।३।११४)। 'ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्' ॥ (१) ॥ एकम् 'ईषद्धासस्य' ।

**मध्यमः स्याद्विहसितम्**

विहसितम् (न), 'सावरण हँसने' का १ नाम है।

मध्यम इति ॥ स हासो मध्यमो महत्त्वाल्पत्वहीनः । 'हसे हसने' (भ्वा० प० से०) । भावे क्त. (३।३।११४) । आकुञ्चितकपोलाक्षं सस्वनं निस्वनं तथा । प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः' ॥ (१) ॥*॥ एकं 'मध्यमहासस्य' ।

**रोमाञ्चो रोमहर्षणम् ।**

रोमाञ्चः (पु), रोमहर्षणम् (न), 'रोमाञ्च होने' के २ नाम हैं।

रोमाञ्च इति ॥ रोम्णामञ्चनं पूजनम् । घञ् (३।३।१८) । 'चजोः-' (७।४।५२) इति सूत्रे 'निष्ठायामनिटः'[१] इति पूरितत्वादस्मात् 'अञ्चु पूजायाम्' (७।२।५३) इति क्त्वानिष्ठयोरिड्विधानान्न कुत्वम् । यत्तु—'न क्वादेः' (७।३।५९) इति योगविभागान्न कुत्वम्—इति भाषावृत्त्युपन्यसनं मुकुटस्य । तन्न । तस्य वार्तिककृता प्रत्याख्यानात् । यथोत्तरं मुनीनां प्रामाण्यात् ॥ (१) ॥*॥ रोम्णां हर्षणम् ॥ (२) ॥*॥ पुलक-कण्टक-रोमविक्रिया-रोमोद्गमाश्चात्रैव । ['पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे । असुराज्यां मणिदोषे गल्वर्के तालके कृमौ' ॥ इति हैम ३।६६-६७ ] । [ 'कण्टकः क्षुद्रवैरिणि । वेणौ द्रुमाङ्गे रोमाञ्चे' इति हैम ३।१७ । 'पुलकः पुं' । रोमाञ्चकण्टकौ रोमविक्रिया रोमहर्षणम् । रोमोद्गम उद्धर्षणमुल्लासनकमित्यपि' । इति अभि० चि० २।२१९-२० च]। द्वे 'रोमाञ्चस्य' ।

**क्रन्दितं रुदितं क्रुष्टम्**

क्रन्दितम्, रुदितम्, क्रुष्टम् (३), 'रोने' के ३ नाम हैं।

क्रन्दितमिति ॥ 'क्रदि रोदने' (भ्वा० प० से०) । क्त (३।३।११४) । 'अथ क्रन्दितमाह्वाने रुदिते च नपुंसकम्' [ इति मे० ६१।१०३ ] ॥ (१) ॥*॥ 'रुदिर् अश्रुविमोचने' (अ० प० से०) । भावे क्तः (३।३।११४) ॥ (२) ॥*॥ 'क्रुश रोदने' (भ्वा० प० से०) । क्त. (३।३।११४) । [ 'क्रुष्टं रोदनरावयोः' इति मे० ३४।६ ] ॥ (३) ॥*॥ त्रीणि 'रोदनस्य' ।

**जृम्भस्तु त्रिषु जृम्भणम् ॥ ३५ ॥**

जृम्भः (त्रि), जृम्भणम् (न), 'जम्हाई' के २ नाम हैं।

जृम्भ इति ॥ 'जृभि गात्रविनामे' (भ्वा० आ० से०)। घञ् (३।३।१८) । 'गुरोश्च-' (३।३।१०३) इत्यः । 'जृम्भा विकासजृम्भणयोस्त्रिषु' [ इति मे० १०६।४ ] । घञन्तस्यैव क्लीबत्वमपि । लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित ' इति वक्ष्यमाणत्वात् । यत्तु—जृम्भं तु, अस्त्रियौ भयादिपाठात्—इति मुकुटेनोक्तम् । तन्न । 'अस्त्रियौ' इत्युक्तत्वेन क्लीबत्वस्याविधानात् ॥ (१) ॥*॥ ल्युटि (३।३।११५) जृम्भणम् ॥ (२) ॥*॥ द्वे 'मुखादिविकासस्य' ।

---

१. 'निष्ठायामनिटः इति वार्तिकेन' इति शेषः ।

**विप्रलम्भो विसंवादः**

विप्रलम्भ, विसंवाद (२ पु), 'ठगपने से बात करने' के २ नाम हैं।

विप्रेति ॥ विशेषेण प्रलम्भनम्। 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०)। विरुद्ध सम्यक् वदनम्। घञ् (३।३।१८) ॥ ( १ ) ॥*॥ ( २ ) ॥*॥ द्वे 'अङ्गीकृतासंपादनस्य'।

**रिङ्खणं स्खलनं समे।**

रिङ्खणम्, स्खलनम् (२ न), 'धर्ममार्गसे प्रतिकूल चलने, रेंगने, जगह के चिकनी होने से या अन्य किसी कारण से पैर फिसल जाने' के २ नाम हैं।

रिङ्खणमिति ॥ 'रिगि गतौ' (भ्वा० प० से०)। 'स्खल सञ्चलने' (भ्वा० प० से०)। भावे ल्युट् (३।३।११५) ॥ ( १ ) ॥*॥ ( २ ) ॥*॥ 'रिखि गतौ' (भ्वा० प० से०) इत्येके (तन्मते रिङ्खणम्)। द्वे 'धर्मादेश्चलनस्य'—इति स्वामी, बालानां हस्तपादगमनस्य—इत्यन्ये, 'पिच्छिलादौ पतनस्य' इत्यपरे।

**स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥३६॥**

निद्रा (स्त्री), शयनम् (न), स्वाप, स्वप्न, संवेश (३ पु), 'नींद' के ५ नाम हैं।

स्यादिति ॥ निद्राणम्। 'द्रा कुत्सायां गतौ' (अ० प० से०)। 'आतश्चोप–' (३।३।१०६) इत्यङ्। निन्दनम्, निन्द्यतेऽनया, इति वा। 'निन्देर्नलोपश्च' (उ० २।१७) इति रग्, इति वा ॥ ( १ ) ॥*॥ 'शीङ् स्वप्ने' (अ० आ० से०)। भावे ल्युट् (३।३।११५)। 'शयनं सुरते निद्रायामप्योश्च नपुंसकम्' [ इति मे० ९३।३७ ] ॥ (२) ॥*॥ 'ञिष्वप् शये' (अ० प० अ०)। घञ् (३।३।१८)। 'स्वापः शयननिद्रयोः। स्पर्शाज्ञतायामज्ञाने [ इति मे० १०२।१२ ] ॥ ( ३ ) ॥*॥ 'स्वपो नन्' (३।३।९१)। 'स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' [ इति मे० ८४।८२ ] ॥ ( ४ ) ॥*॥ संवेशनम्। 'विश प्रवेशने' (तु० प० अ०)। घञ् (३।३।१८)। 'संवेशः स्वापस्त्रीरतबन्धयोः' ॥ ( ५ ) ॥*॥ 'सुप्ति' अप्यत्र। ['सुप्तिः स्पर्शाज्ञतानिद्राविश्रम्भे शयने स्त्रियाम्' इति मे० ५९।७२ ] ॥*॥ पञ्च 'निद्रायाः'।

**तन्द्री प्रमीला**

तन्द्री, प्रमीला (२ स्त्री), 'तन्द्रा होने' अर्थात् 'अधिक थकावट आदि के कारण शरीरेन्द्रियोंके शिथिल होने या नींद के आदि और अन्त में आलस्य होने' के २ नाम हैं।

तन्द्रीति ॥ तत्पूर्वाद्द्राते 'स्पृहिगृहि–' (३।२।१५८) इत्यादिना 'तन्द्रा' इति निपात्यते। तन्द्रायाः करणम्। 'तत्करोति–' (ग० ३।१।२६) इति ण्यन्ताद् 'अच इः' (उ० ४।१३९)। तन्द्रिः। 'कृदिकारात्–' (ग० ४।१।४५) इति ङीप् वा 'तन्द्री निद्राप्रमीलयोः' [ इति मे० १२५।४२ ]। णिजभावे 'तन्द्रा' इत्यपि। मुकुटस्तु—इन्द्रियाणां तननं द्रात्यस्याम्। तन्द्रधातौ सौत्रान्मूर्च्छार्थात् 'तन्द्रेरिदीतौ' इति ह्रस्वेकारप्रत्यये तन्द्रिः। ङीपि तन्द्री। दीर्घेकारप्रत्यये लक्ष्मीशब्दवच्च—इत्याह। तन्न। द्रातिना विगृह्य सौत्रधातोरुपन्यासस्य विरुद्धत्वात्। 'तदो नान्तत्वनिपातनाभ्युपगमविरोधात्'। 'तन्द्रेरिदीतौ' इति सूत्रस्यादर्शनाच्च। ईप्रत्ययविधायकाभावाच्च। (यदपि–) तन्द्रिस्तन्द्री तन्द्रीस्तन्द्रा—इति रूपचतुष्टयम्। इत्युक्तम्। तदपि न। दीर्घविसर्गान्ते प्रमाणाभावात् ॥ ( १ ) ॥*॥ प्रमीलनम्। 'मील निमेषणे' (भ्वा० प० से०)। 'गुरोश्च—' (३।३।१०३) इत्य ॥ ( २ ) ॥*॥ द्वे 'अत्यन्तश्रमादिना सर्वेन्द्रियासामर्थ्यस्य'।

**भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्।**

भ्रकुटि, भ्रुकुटि भ्रूकुटि (३ स्त्री), 'क्रोध आदि से भौंह को टेढ़ा करने' के ३ नाम हैं।

भ्रकुटिरिति ॥ 'कुट कौटिल्ये' (तु० प० से०)। 'इगुपधात्कित्' (उ० ४।१२०) इतीन्। 'भ्रुवो कुटि' भ्रकुसवत्त्रैरूप्यम्'। पृषोदरादित्वाद्दूकारे 'भ्रूकुटी' इत्यपि ॥ ( ३ ) ॥*॥ त्रीणि 'क्रोधादिना ललाटसंकोचनस्य'।

**अदृष्टिः स्यादसौम्येऽक्षिण**

अदृष्टि (स्त्री), 'क्रूरतापूर्वक देखने' का १ नाम है।

अदृष्टिरिति ॥ विरुद्धा दृष्टिः ॥ ( १ ) ॥*॥ असौम्येऽसुन्दरे ॥ एकं 'क्रूराया दृष्टेः'।

**संसिद्धिप्रकृती त्विमे ॥ ३७ ॥**

**स्वरूपं च स्वभावश्च निसर्गश्च**

संसिद्धि, प्रकृति (२ स्त्री), स्वरूपम् (न), स्वभाव, निसर्ग (२ पु), 'स्वभाव' के ५ नाम हैं।

संसिद्धीति ॥ संसेधनम्। 'षिधु संराद्धौ' (दि० प० अ०)। क्तिन् (३।३।९४)। [ 'संसिद्धिः प्रकृतौ सिद्धौ मदोद्यायामपि स्त्रियाम्' इति मे० ८१।३८ ] ॥ (१) ॥*॥ प्रकरणम्। 'डुकृञ्' (त० उ० अ०)। क्तिन् (३।३।९४) ॥ ( २ ) ॥*॥ इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्तम्। स्वं रूपम् ॥ ( ३ ) ॥*॥ स्वो भावः ॥ ( ४ ) ॥*॥ विसर्जनम्। 'सृज विसर्गे' (तु० प० अ०)। घञ् (३।३।१८)। 'निसर्गः सृष्टौ स्वभावे च' इति हैमः [३।१२२] ॥ ( ५ ) ॥*॥ पञ्च 'स्वभावस्य'।

---

१ "अन्ये तु अदृष्टि इत्यनेन संबध्नन्ति। यदाहु—भ्रुकुटि दृगसौम्या स्यात्" इति स्वाम्याह।

२ क्वचित् चरहितः पाठः।

अथ वेपथुः।

**कम्पः**

वेपथुः, कम्पः ( २ पु ), 'काँपने' के २ नाम हैं।

अथेति ॥ वेपनम्। 'टुवेपृ कम्पने'(भ्वा० आ० से०)। 'ट्वितोऽथुच्' (३।३।८९) ॥ ( १ ) ॥*॥ 'कपि किञ्चिच्चलने' ( भ्वा० आ० से० )। घञ् (३।३।१८) ॥ (२) ॥ * ॥ द्वे 'कम्पस्य'।

अथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

क्षणः, उद्धर्षः, महः, उद्धवः, उत्सवः ( ५ पु ), 'उत्सव' के ५ नाम हैं।

अथेति ॥ क्षणोति दुःखम्। 'क्षणु हिंसायाम्' (त० उ० से० )। पचाद्यच् (३।१।१३४)। [ 'क्षणः कालविशेषे स्यात् पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः' इति हैम. २।१३७ ] ॥ ( १ ) ॥*॥ उद्धर्षयति। 'हृषु अलीके' ( भ्वा० प० से० ) णिजन्त । अच् ( ३।१।१३४)। उद्गतो हर्षोऽस्मिन्निति वा ॥ ( २ ) ॥*॥ महनम्। 'मह पूजायाम्' ( भ्वा० प० से० )। घञ् ( ३।३।१८ )। संज्ञापूर्वकत्वाद्वृद्ध्यभाव । घ ( ३।३।११८) वा। यद्वा–महति। अच् ( ३।१।१३४ )। 'मही नद्यन्तरे भूमौ मह उत्सवतेजसो.' [ इति मे० १७५ ]। (यत्तु–) महात्तेऽनेन 'पुंसि–' (३।३।११८) इति घ-इति मुकुट। तन्न। 'हलश्च' (३।३।१२१) इति घञ्प्रसङ्गात् ॥ ( ३ ) ॥*॥ उद्धुनोति दुःखम्। 'धूञ् कम्पने' ( स्वा० उ० अ० )। अच् ( ३।१।१३४)। 'उद्धवो यादवभिदि महे च क्रतुपावके' [इति मे० १५६।३२ ] ॥ ( ४ ) ॥*॥ उत्सुवति। 'षू प्रेरणे' (तु० प० से० )। अच् ( ३।१।१३४ )। 'उद्धवो मह उत्सेके इच्छाप्रसरकोपयो' [ इति विश्व. १६५।३३ ] ॥ ( ५ ) ॥ * ॥ पञ्च 'उत्सवस्य'।

इति स्वर्गवर्गः ॥

इतीति ॥ स्वर्गप्रधानो वर्ग । एतत्पर्यन्तं स्वर्गसंगतार्थनिरूपणात्।

इति नाट्यवर्गविवरणम् ॥ ७ ॥

## अथ पातालभोगिवर्गः ॥ ८ ॥

**अधोभुवनपातालबलिसद्मरसातलम्।**

**नागलोकः**

अधोभुवनम्, पातालम्, बलिसद्म, रसातलम् ( ४ न ), नागलोकः ( पु ), 'पाताल' के ५ नाम हैं।

अध इति ॥ अधश्च तद्भुवनं च ॥ * ॥ 'अध.' अपि। 'अधोऽव्ययं स्यात्पाताले' इति त्रिकाण्डशेषात् [ १।८।१ ] ॥ ( १ ) ॥ * ॥ पतन्त्यत्र पापात्। 'पतिचण्डिभ्यामालञ्' ( उ० १।११७ )। 'पातालं वडवानले। रसातले[1] च' इति हैमः [३।७००-१] ॥ ( २ ) ॥*॥ बले. सद्म ॥ (३) ॥ * ॥ रसायास्तलमधः ॥ ( ४ ) ॥*॥ नागानां लोकः ॥ (५) ॥ * ॥ अधोलोक फणिभुवनादय. अप्यत्र ॥*॥ पञ्च 'पातालस्य'।

अथ कुहरं शुषिरं विवरं बिलम् ॥ १ ॥

**छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः।**

कुहरम्, शुषिरम्, विवरम्, बिलम्, छिद्रम्, निर्व्यथनम्, रोकम्, रन्ध्रम्, श्वभ्रम् ( ९ न ), वपा, शुषिः ( २ स्त्री ), 'बिल' के ११ नाम हैं।

अथेति ॥ कुं हरति। 'हरतेरनुद्यमनेऽच्' (३।२।९)। यद्वा–'कुह विस्मापने' (चु० आ० से०)। इगुपधत्वात् (३।१।१३५) क । कुहं राति। 'रा दाने' (अ० प० अ०)। 'आतोऽनुप–' ( ३।२।३ ) इति क.। 'कुहरं गह्वरे च्छिद्रे क्लीबं नागान्तरे पुमान्' [इति मे० १३२।१३६] ॥ (१) ॥*॥ शोषणम्। 'शुष शोषणे' (दि० प० अ०)। 'इगुपधात्कित्' ( उ० ४।१२० )। शुषिरस्यास्ति। ऊषशुषि–' ( ५।२।१०७ ) इति र.। 'शुषिरं वंशादिवाद्ये विवरेऽपि नपुंसकम्। शुषिरो न स्त्रियां मर्ते वह्नौ रन्ध्रान्विते त्रिषु'[2] [इति मे० १३९।२२९] ॥ (२) ॥*॥ विवृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। पचाद्यच् (३।१।१३४)। यद्वा–विव्रियते। 'ग्रहवृदृनिश्चिगमश्च'(३।३।५८) इत्यप्। विगतो वरोऽस्माद्वा। वीना पक्षिणा वरं वा। 'विवरं दूषणे गर्ते' [इति मे० १३८।२१७] ॥ (३) ॥*॥ बिलति भिनत्ति। 'बिल भेदने' (तु० प० से०)। 'इगुपध–' ( ३।१।१३५ ) इति क। बिल्यते वा। 'कृत्यल्युटो बहुलम्' ( ३। ३। ११३ ) इति सूत्रे 'कृल्लुट' इति 'इगुपध–' ( ३।३। १३५) इति क। घजर्थे कः (वा० ३।३।५८) वा। 'खनो घ च' (३।३।१२५) इति घे संज्ञापूर्वकत्वाद्गुणाभावो वा। 'बिलं छिद्रे गुहायां च पुमानुच्चैःश्रवो हये' [ इति मे० १४८।४९] ॥ (४) ॥*॥ छिद्रयते। 'छिद्र भेदने' ( चु० उ० से०)। घञ् (३।३।१८)। यद्वा–छिद्यते 'छिदिर् द्वैधीकरणे' (रु० उ० अ०)। 'स्फायि–' ( उ० २।१३ ) इति रक्। 'छिद्रं विवररन्ध्रवत्। गर्ते दोषे' इति हैम. [ २। ४३४] ॥ (५) ॥*॥ 'व्यथ भयचलनयो.' ( भ्वा० आ० से)। भावे ल्युट् ( ३।३।११५ )। निश्चयेन व्यथनं भयं चलनं वा यत्र। यत्तु—अधिकरणे ल्युट् ( ३।३।११६ )–इति मुकुट आह। तन्न। व्यथनमिति भावप्रत्यये बहुव्रीहिणा गतार्थत्वात् ॥ (६) ॥*॥ रोचतेऽत्र। 'रुच दीप्तौ' (भ्वा०

१. क्वचित् 'च'रहितः अपि पाठः।

२. 'मूषिके ना स्त्रियां नल्यौषधौ' इति पा०।

वा० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । निष्ठायां सेट्त्वान्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम् । यत्तु मुकुट —रोचते प्रकाशते । घ ( ३।३।११८ )—इत्याह । तन्न । कर्तरि घस्याविधानात् । 'रोकं द्रव्यभेदे ना वि (ना-रेऽप्या) विले चले'। रोकोऽस्त्री' इति हेमचन्द्र [२।१५-१६] ॥ (७) ॥*॥ रमणम् । सपदादि ( ३।३।१०८ ) । सञ्ज्ञापूर्वकत्वान्न दीर्घ । रम क्रीडा धरति । मूलविभुजादि (वा० ३।२।५ ) । रन्धयति । 'रध हिंसासराद्ध्योः' ( दि० प० से० ) । बाहुलकाद्रन् वा । 'रन्ध्रं तु दूषणे च्छिद्रे' इति विश्व[1]-मेदिन्यौ [ मे० १२८।७८ ] ॥ (८) ॥*॥ श्वभ्रयति । 'श्वभ्र गतौ' (चु० प० से०) । ध्यन्तात्पचाद्यच् । शु शोभनमभ्रं व्योमास्य वा । ताल्व्यादि[2] ॥(९) ॥*॥ उप्यतेऽत्र । 'डुवप्' ( भ्वा० उ० अ० ) । भिदादि ( ३।३। १०४ ) । [ 'वपा विवरमेदसो' इति मे० १०२।१० ] ॥ (१०) ॥*॥ शुप्यत्यत्र । 'शुष शोषणे' (दि० प० अ०) । 'इगुपधात्कित्' ( उ० ४।१२० ) । 'शुषिः शोषे विलेऽस्त्री स्यात्' इति मेदिनी [ १६७।२८ ] ॥*॥ सुष्ठु स्यति । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । बाहुलकात् किः । ( सुषिः ) । विवराभिधायिनि शुषिरादौ शास्त्रेषु दन्त्यतालव्यौ' इत्यूष्मविवेक ॥(११)॥*॥ एकादश बिलस्य' ।

**गर्तावटौ भुवि श्वभ्रे**

गर्त', अवट ( २ पु ), 'गडे' के २ नाम हैं ।

गर्तेति ॥ गिरति 'गॄ निगरणे' (तु० प० से०) । 'हसिमृग–' (उ० ३।८६) इति तन् । स्त्रियां टाप् (४।१।५) । 'घरट–कुसर–गर्त–शृङ्गा' इति स्त्रीपुंसप्रकरणे रभसात् । 'गर्तोऽवटे कुकुन्दरे । त्रिगर्तांशे[4]' इति हैम [ २।१६७ ६८ ] ॥ ( १ ) ॥*॥ अवत्यस्मात् । 'अव रक्षणादौ' ( भ्वा० प० से० ) । 'शकादिभ्योऽटन्' ( उ० ४।८१ ) । इन्दतोऽपि [ अवटि ] । 'दर्मेऽपि पवित्रमव[5]टिरवटेऽपि' इति हलायुध [ ५।१६ ] । 'अवटः कूपविलयोर्गर्ते[6] कुहकजीविनि' इति हैम [ ३।१५१ ] ॥ ( २ ) ॥*॥ द्वे 'रन्ध्रमात्रस्य' ।

**सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥**

शुषिरम् ( त्रि ), 'छेदवाली चीज़' का १ नाम है ।

सरन्ध्र इति ॥ शुषिरस्यास्ति 'ऊपशुषि–' ( ५।२। १०७) इति र ॥ (१) ॥*॥ एकं 'सरन्ध्रस्य'[1] ।

**अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।**

अन्धकारः ( पु न ), ध्वान्तम्, तमिस्रम् , तिमिरम्, तमः (=तमस् । ४ न), अन्धकार के ५ नाम हैं ।

अन्धेति ॥ 'अन्ध दृष्ट्युपघाते' (चु० उ० से०) चुरादि । अन्धनम् । घञ् ( ३।३।१८ ) । अन्धं करोति । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ ध्वन्यते । 'ध्वन शब्दे' ( भ्वा० प० से० ) । 'क्षुब्धस्वान्त–' (७।२।१८) इति निपातितम् ॥ (२) ॥*॥ तमोऽस्त्यत्र । भावप्रधानो निर्देश । 'ज्योत्स्नातमिस्रा–' ( ५।२।११४ ) इति साधु ॥*॥ तमिस्राऽस्त्याश्रयत्वेनास्येति वा ( ५।२।१२७ ) । 'तमिस्रं तिमिरे कोपे, तामस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च' इति विश्व-मेदिन्यौ[2] [१४७।२०९; १३४।१६१-६२ ] ॥ (३) ॥ * ॥ तिम्यति । 'तिम आर्द्रीभावे' ( दि० प० से० ) । बाहुलकात् किरच् । 'तिमिरं ध्वान्ते नेत्रामयान्तरे' [ इति मे० १३४।१६२ ] ॥ ( ४ ) ॥ * ॥ ताम्यत्यनेन । 'तमु ग्लानौ' (दि० प० से०) । असुन् ( ४।१८९ ) । [ 'तमो ध्वान्ते गुणे शोके क्लीव, वा ना विधुन्तुदे' इति मे० १७१। २४ ] ॥ * ॥ ( उ० ३।११७ असचि ) तमसमपि । 'तमसं तु निशाचम' इति त्रिकाण्डशेषात् [ १।८।२] ॥(५) ॥*॥ पञ्च 'अन्धकारस्य' ।

**ध्वान्ते गाढेऽन्धतमसम्**

अन्धतमसम् (न) 'बहुत अधिक अन्धकार' का १ नाम है ।

ध्वान्त इति ॥ अन्धयति । अन्ध च तत्तमश्च । 'अवसमन्धेभ्यस्तमस' ( ५।४।७९ ) इत्यच् ॥ ( १ ) ॥*॥ एक 'घनान्धकारस्य' ।

**क्षीणेऽवतमसम्**

अवतमसम् ( न ), 'थोड़े अन्धकार' का १ नाम है ।

क्षीण इति ॥ क्षीणे तु ध्वान्ते । अव हीनं तम । अच् ( ५।४।७९ ) ॥ (१) ॥*॥ एक 'क्षीणतमस' ।

**तमः ॥ ३ ॥**

**विष्वक्संतमसम्**

संतमसम् (न), 'सर्वत्र फैले हुए अन्धकार' का १ नाम है ।

तम इति ॥ विष्वक् सर्वत तम समन्तात्तम । अच् ( ५।४।७९ ) ॥ ( १ ) ॥*॥ एक 'व्यापकतमस' ।

---

१ 'नावि विले चरे'—इति पा० ।

२. विश्वे तु पाठोऽयं नोपलभ्यते ।

३ वक्ष्यमाण'सुषि'वद्दन्त्यादावपि । तथा सति 'सुष्ठु श्वभ्रम्' इति विग्रहो बोध्य ।

४. 'त्रिगर्तांशेऽपि' इति पा० ।

५. 'मवधि' इति पा० ।

६ 'कूपविलयो' इति पा० ।

१ 'सिद्धस्यानुवादाच्छ्वभ्र सरन्ध्रमेव । यत्कात्य — 'श्वभ्रगर्तावटागाधा भुवो विवरवाचका ।' इति स्वामी ।

२ विश्वे 'तमिस्रा च' इति पाठ । मेदिन्यां च 'स्त्री तु तमस्ततौ' इति पाठ ।

*नागाः काद्रवेयाः*

**नागः, काद्रवेयः ( २ पु ), 'नाग' के २ नाम हैं।**

नागा इति ॥ नगे भवा. । 'तत्र भव' ( ४।३।५३ ) इत्यण् । यद्वा—*न गच्छन्ति । अगा । न अगाः । सुप्सुपा*[1] (२।१।४) इति समास । अनञ्त्वाश्च नलोप [2]['नागो मतङ्गजे सर्पे पुनागे नागकेसरे । क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च ॥ देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः । नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे ॥' इति हैम. २।३४-३६] (१) ॥*॥ कद्र्वा अपत्यानि । 'स्त्रीभ्यो ढक्' (४।१।१२०) । 'ढे लोपोऽकद्र्वा' (६।४।१४७) इति टिलोपाभावे 'ओर्गुण' (६।४।१४६) । यत्तु—स्वामी—शुभ्रादित्वात् (४।१।१२३) ढक् । न तु 'स्त्रीभ्यो ढक्' । कद्रुकमण्डल्वोश्छन्दस्यूङ्निषेध.—इत्याह । तन्न । 'संज्ञायाम्' (४।१।७२) इति लोकेऽप्यूङ्विधानात् ॥ (२) ॥*॥ सर्पेभ्योऽन्ये देवयोनयोऽमी । द्वे 'फणालाङ्गूलवतो नराकारसर्पस्य' ।

तदीश्वरः ।

**शेषोऽनन्तः**

शेषः, अनन्तः ( २ पु ), 'शेष' अर्थात् 'नागोंके राजा' के २ नाम हैं।

*तदिति ॥ तेषामीश्वर । शिष्यते । 'शिष्लृ विशेषणे'* (रु० प० अ०) । घञ् (३।३।१८) । '**शेषोऽ**नन्ते वधे सीरिण्युपयुक्तेतरेऽपि च । **शेषा** निर्माल्यदाने स्यात्' इति हैम [ २।५८६-८७ ] ॥ (१) ॥*॥ न अन्तोऽस्य । '**अनन्तः** केशवे शेषे पुमान्, [3]निरवधौ त्रिषु' [इति मे० ६०।८१] ॥ (२) ॥*॥ द्वे 'नागानां स्वामिनः' ।

*वासुकिस्तु सर्पराजः*

**वासुकिः, सर्पराजः ( २ पु ), 'वासुकि' अर्थात् 'साँपोंके राजा' के २ नाम हैं।**

वासुकिरिति ॥ वसु *रत्नं के मूर्ध्नि यस्य । वसु कायति* वा । 'कै शब्दे' ( भ्वा० प० अ० ) । कः ( ३।२।३ ) । वसुकः तस्यापत्यम् । *'अत इञ्'* (४।१।९५) ॥ (१) ॥*॥ सर्पाणां राजा । 'राजा–' (५।४।९१) इति टच् ॥ (२) ॥*॥ द्वे 'नागराजस्य' ।

*अथ गोनसे ॥ ४ ॥*

तिलित्सः स्यात्

गोनसः, तिलित्सः ( २ पु ), 'पनस जातिके साँप या छोटे जाति के सर्प-सामान्य' के २ नाम हैं।

अघेति ॥ गौरिव नासिका यस्य । 'अञ्नासिकायाः' (५।४।११८) इत्यच्, नसादेश. ॥*॥ गोनासोऽप्यत्र । '**गोना**[1]-**सगोनसौ**' इति त्रिकाण्डशेषात् [ १।८।५ ] ॥ (१) ॥*॥ तेलति । 'तिल गतौ' (भ्वा० प० से०) । तिलति ।'तिल स्नेहने' ( तु० प० से० ) । 'तिल इदुक् च' इति स इदुगागमश्च—इति मुकुट. । तन्न । उज्ज्वलदत्तादिधृतसूत्राभावात् । तैलनम् । तिल् । संपदादिक्विप् (वा० ३।३।१०८) । तिलमेति । 'इण् गतौ' (अ० प० अ०)। क्विप् (३।२।१७८) । तुक् (६।१।७१) । तिलित् । तिलितं स्यति । 'षोऽन्तकर्मणि' (दि० प० अ०) । क. (३।२।३) । यद्वा—तैलनम् । तिलिः । कृष्यादित्वात् (वा० ३।३।१०८) इक् । तिलिं गतिं त्सरति । 'त्सर छद्मगतौ' (भ्वा० प० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०२ ) इति ड ॥ ( २ ) ॥*॥ 'गोनसी मण्डली वोडः' इति तु विक्रमादित्यः । द्वे 'सर्पविशेषस्य' ।

अजगरे शयुर्वाहस इत्युभौ ।

अजगरः, शयुः, वाहसः ( ३ पु ), 'अजगर साँप' के ३ नाम हैं।

अजेति ॥ गिरति । 'गॄ निगरणे' ( तु० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । अजस्य गर । अजो निरयो गरो विषं यस्येति वा । यत्तु—अजं छागमपि गिरति । पचाद्यच्—इति मुकुट । तन्न । कर्मण्यण. प्रसङ्गात् । '**अजगरः** स्मृतः सर्पभेदेऽपि कवचे बुधै ' ॥ (१) ॥*॥ शेते । 'शीङ् स्वप्ने' (अ० आ० से०) । 'भृमृदृशि–' (उ० १।७) इत्यु ॥ (२) ॥*॥ वहति । 'वहियुभ्या णित्' (उ० ३।११९) इत्यसच् । णित्वाद्वृद्धि । वाहं गतिं स्यति–इति वा । 'आतोऽनुप–' (३।२।३) इति कः । '**वाहसोऽ**जगरे वारिनिर्याणसुनिषण्णयोः' इति हैम. [३।७९८] ॥ (३) ॥*॥ त्रीणि 'अजगरस्य' ।

**अलगर्दो जलव्यालः**

अलगर्दः, जलव्यालः ( २ पु ), 'डोंड साँप या पानी में रहनेवाले सब साँप' के २ नाम हैं।

अलेति ॥ लगति । 'लगे सङ्गे' (भ्वा० प० से०) । क्विप् (३।२।१७८) । अर्दयति । अच् (३।१।१३४) । लक् चासावर्दश्च । *लग्न. सन् पीडक इत्यर्थ. । निर्विषत्वात्तद्भिन्नोऽलगर्द* । यद्वा—अलति । 'अल भत्यादौ' (भ्वा० प०से०)। गर्दति । 'गर्द शब्दे' (भ्वा० प० से०)। अच् (३।१।१३४) । अलश्चासौ गर्दश्च ॥ * ॥ '**अलगर्धः**' इति तु मुकुट । अलं गृध्यति । 'गृधु अभिकाङ्क्षायाम्' (दि० प० से०) । पृषोदरादि. (६।३।१०९) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ जलस्थो व्याल. ॥ (२) ॥*॥ द्वे 'जलव्यालस्य' ।

---

१. 'सह सुपा' इति वक्तव्यम् ।

२. 'नलोपो नञः' इति सूत्रेणेत्याशयः ।

३. 'पुमाननवधौ' इति पा० ।

१. 'गोनासाय नियोजितागदरजाः' ( विद्धशाल० ) इति 'गोनासोऽपि' इति स्वामी ।

**समौ राजिलडुण्डुभौ ॥ ५ ॥**

राजिल, डुण्डुभ (२ पु), 'दोनों तरफ मुखवाले साँप' के २ नाम हैं।

समाविति ॥ राजी रेखाऽस्यास्ति । सिध्मादित्वाल्लच (५।२।९७) । यद्वा—राजिं लाति । 'ला दाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ 'डुण्डु' इत्यनुकरणशब्दः । तं भणति तेन भाति इति वा । 'अन्येभ्योऽपि–' (वा० ३।२।१०२) इति डः । लण्ड्यते । 'ओ लडि उत्क्षेपणे' (चु० प० से०) । घञ् (३।३।१८) । डलयोरैकत्वम् । उभति । 'उभ पूरणे' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । डुण्डुश्चासावुभश्च । पृषोदरादि (६।३।१०९) । यत्त—'डुडि तुडि निमज्जने' । घञ् (३।३।१८) । डुण्डेन भाति । 'आतोऽनुप–' (३।२।३) इति कः । 'कर्तृकरणे कृता–' (२।१।३२) इति समासः । पृषोदरादि (६।३।१०९) । तवर्गतृतीयादिरपि । अत एव 'दो दो दो लश्च' इति नरसिंह—इति मुकुट । 'दण्ड भाषणे' । 'दुण्डुभ' इत्येके—इति स्वामी । तन्न । उक्तधातनामदर्शनात् । 'आतोऽनुप–' (३।२।३) इति कस्य कर्मण्युपपदे विधानात् । परत्वादुपपदसमासस्य (२।२।१९) न्याय्यत्वाच्च ॥ (२) ॥*॥ द्वे 'निर्विषस्य द्विमुखस्य सर्पस्य' ।

**मालुधानो मातुलाहिः**

मालुधान, मातुलाहि (२ पु), 'रस्सीनुमा चितकबरे साँप' के २ नाम हैं।

मात्विति ॥ मालुरोषधी । तत्र धानमस्य । 'मालुधानश्चित्रसर्पे महापद्मे च दृश्यते' इत्युत्पलिनी । 'मालुधानो मातुलाही मालुधानो लतान्तरे' इति विश्वः[१] ॥ (१) ॥*॥ मातुलयति । कः । मूलविभुजादि (वा० ३।२।५) । मातुलश्चासावहिश्च ॥ (२) ॥*॥ द्वे 'चित्रसर्पस्य' ।

**निर्मुक्तो मुक्तकञ्चुकः ।**

निर्मुक्त, मुक्तकञ्चुक (२ पु), 'जिसने केंचुल छोड़ दी हो उस साँप' के २ नाम हैं।

निर्मुक्त इति ॥ अमोचि । मुक्तः कञ्चुकः । नास्ति मुक्तोऽस्य । 'निर्निश्चयनिषेधयोः' [इति मे० १८४।६६] । 'निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि' [इति विश्व ६४।१०३] ॥ (१) ॥*॥ मुक्तः कञ्चुको येन ॥ (२) ॥*॥ द्वे 'मुक्तत्वचः सर्पस्य' ।

**सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ॥ ६ ॥**
**आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।**
**कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥**
**दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।**
**उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥**
**लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा [५३]**
**कुम्भीनसः फणधरो हरिर्भोगधरस्तथा [५४]**
**अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका [५५]**

सर्प, पृदाकु, भुजग, भुजङ्ग, अहि, भुजङ्गम, आशीविष, विषधर, चक्री (=चक्रिन्), व्याल, सरीसृप, कुण्डली (=कुण्डलिन्), गूढपात् (=गूढपाद्), चक्षुःश्रवा (=चक्षुःश्रवस्), काकोदर, फणी (=फणिन्), दर्वीकर, दीर्घपृष्ठ, दन्दशूक, बिलेशय, उरग, पन्नग, भोगी (=भोगिन्), जिह्मग, पवनाशन (२५ पु), 'साँप' के २५ नाम हैं।

[लेलिहान, द्विरसन, गोकर्ण, कञ्चुकी (=कञ्चुकिन्), कुम्भीनस, फणधर, हरि, भोगधर (८ पु), 'साँप' के ८ नाम ये भी हैं। भोग (पु) 'साँप के शरीर' का १ नाम है। आशी (=आशीः), अहिदंष्ट्रिका (२ स्त्री), 'साँप के दाँत' के २ नाम हैं]।

सर्प इति ॥ सर्पति । 'सृप्लृ गतौ' (भ्वा० प० अ०) । अच् (३।१।१३४) 'इगुपध–' (३।१।१३५) इति को वा । 'नोक्तमनित्यम्' इति गुणः । यद्वा—सर्पणम् । भावे घञ् । सर्पः सोऽस्यास्ति । अर्शआद्यच् (५।२।१२७) । स्त्रियां जातित्वान्ङीष् (४।१।६३) ॥ (१) ॥ ॥ पर्दते । 'पर्द कुत्सिते शब्दे' (भ्वा० आ० से०) । 'पर्देर्नित्सम्प्रसारणमल्लोपश्च' (उ० ३।८०) इति काकुः प्रत्ययः । पिपर्ति स्वम् । 'पिपर्तेर्दाकिः ह्रस्वश्च' (?) इति वा । 'पृदाकुर्वृश्चिके व्याघ्रे सर्पे चित्रकयोः पुमान्' [इति मे० ११।१२६] ॥ (२) ॥*॥ 'भुजो कौटिल्ये' (तु० प० से०) । इगुपधत्वात् (३।१।१३५) कः । भुजं सन् गच्छति । 'अन्यत्रापि–' (वा० ३।२।४८) इति डः ॥ (३) ॥*॥ 'भुजेन कौटिल्येन गच्छति' वा । 'गमेः सुपि' 'खच्च डिद्वा' (वा० ३।२।३८) इति खचि डित्त्वे टिलोपे भुजगः । 'भुजंगः सर्पपिङ्गयोः' इति हैम [३।१२७] ॥ (४) ॥*॥ आहन्ति । 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ० ४।१३८) इतीन् डित् । 'अहिर्वृत्रासुरे सर्पे पुमि' [इति मे० १७५।२] ॥ (५) ॥*॥ खच्यडित्त्वे भुजगमः ॥ (६) ॥*॥ 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति' । तत्र विषमस्य । पृषोदरादित्वात् (६।३।१०९) दीर्घसलोपौ । केचित्त्वीकारान्तमाशीशब्दमाहुः । 'आशीविष

१ मेदिनीस्थोऽयं पाठः (९७।१०१) । विश्वे तु—'मालुधानश्चित्रसर्पे मालुधानी लतान्तरे' इति पाठः (९८।१६२) ।

कलामिन्दोः' इति राजशेखरः ॥ (७) ॥*॥ विषस्य धरः ॥ (८) ॥*॥ चक्रमस्यास्ति । 'अत इनि.' (५।२।११५)। 'चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि' इति हैम [२। २६६] ॥ (९) ॥*॥ व्याडति । 'अड उद्यमे' (भ्वा० प० से०) व्याङ्पूर्वः । अच् ( ३।१।१३४ ) । [ 'व्याडो हिंस्रपशौ सर्पे' इति मे० ४२।२५ ] ॥*॥ डलयोरेकत्वस्मरणाद् व्यालोऽपि। 'व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोः' इति विश्व-मेदिन्यौ' ॥ ( १० ) ॥*॥ कुटिलं सर्पति । 'नित्यं कौटिल्ये गतौ' ( ३।१।२३ ) इति यङ् । पचाद्यच् (३।१।१३४) । 'यङोऽचि च' (२।४।७४) । 'संसार-सारङ्ग-सरीसृप-सस्य-सादृशः.' इति द्विरूपे ऊष्मविवेकः ॥ ( ११ ) ॥*॥ कुण्डलं कुण्डलाकारतास्त्यास्ति । इनिः ( ५।२।११५ ) । मत्तु मुकुटः—यस्तु कुण्डलमनुकरोतीति कुण्डलशब्दात् प्रातिपदिकाद्धात्वर्थेणिजन्तात् घञर्थे के (वा० ३।३।५८ ) कुण्डल कुण्डलन कुण्डलानुकरणम् । तदस्यास्तीति इनिः (५।२।११५) । 'कुण्डली' इति ब्रूमहे—इत्याह । तन्न । परिगणनात् काभावात् । प्राचामेव फलितार्थस्य लाभात् । 'कुण्डली वरुणे सर्पे मयूरे कुण्डलान्विते' [इति हैम ३।३९५] ॥ ( १२ ) ॥*॥ गूढाः पादा अस्य । पृषोदरादिः (६।३।१०९) । 'पादानामपि विज्ञेये द्वे शते द्वे च विंशती' इत्यागमः । यद्वा—गूढं पादयति । 'पद गतौ' (दि० आ० अ०) । ण्यन्तात् (३।१।२६) क्विप् (३।२।१७८) ॥ (१३) ॥*॥ चक्षुः श्रवः कर्णोऽस्य । सान्तः ॥*॥ अत एव 'गोकर्णः' अपि । [ 'गोकर्णः प्रमथान्तरे । अङ्गुष्ठानामिकोन्माने मृगेऽश्वतरसर्पयोः ॥' इति हैम २।२०३-४ ] ॥ (१४) ॥*॥ काकस्येवोदरमस्य । यद्वा—ईषदकति । 'अक कुटिलायां गतौ' ( भ्वा० प० से० ) । 'ईषदर्थे' (६।३।१०५) । कोः कादेशः । काकम्—ईषत्कुटिलगतिमद्-उदरमस्य ॥ ( १५ ) ॥*॥ फणास्यास्ति । व्रीह्यादि ( ५।२।११६ ) । फणोऽस्यास्ति वा । 'अत इनि.—' (५।२।११५) ॥ (१६) ॥*॥ दर्व्याकारः फण एव करो यस्य, प्रहारसाधनत्वात् । दर्वी फणं करोति, इति वा । 'कृञो हेतु—' (३।२।२०) इति टः ॥ (१७) ॥*॥ दीर्घं पृष्ठमस्य ॥ ( १८ ) ॥*॥ गर्हितं दशति । 'लुपसद—' ( ३।१।२४ ) इति यङ् । 'जपजभ—' ( ७।४।८६ ) इति नुकि अनुस्वारः । 'यजजप—' ( ३।२।१६६ ) इत्यूकः । 'दन्दशूकस्तु पुल्लिङ्गो राक्षसे च सरीसृपे' [ इति मे० १६।१९४ ] ॥ (१९) ॥*॥ बिले शेते । 'अधिकरणे शेते' (३।२।१५) इत्यच् । 'शयवास—' (६।३।१८ ) इत्यलुक् । 'बिलेशयो मूषिकेऽहौ' इति हैमः [ ४। २३४] ॥ (२०) ॥*॥ उरसा गच्छति । 'उरसो लोपश्च' (वा० ३।२।४८) इति डः ॥ ( २१ ) ॥*॥ पन्नं पतितं यथा तथा गच्छति । 'सर्वत्रपन्नयोः' (वा० ३।२।४८) इति डः । 'पन्नगश्चौपधीभेदे तथैव पवनाशने' [ इति मे० २४। ३९] ॥ ( २२ ) ॥*॥ भोगः फणो वक्रगतिर्वास्यास्ति । इनिः (५।२।११५) । 'भोगी भुजङ्गमेऽपि स्याद् ग्राममात्रे नृपे पुमान् । विहाय महिषीमन्यराजयोषिति भोगिनी' [ इति मे० ९०।२-३ ] ॥ ( २३ ) ॥*॥ जिह्मं कुटिलं गच्छति । 'अन्येभ्योऽपि—' ( वा० ३।२।१०१ ) इति डः । 'जिह्मगोऽहौ च मन्दगे' इति विश्वः[1] ॥ (२४) ॥*॥ पवनोऽशनं यस्य ॥ (२५) ॥*॥ पञ्चविंशतिः 'सर्पमात्रस्य' ।

त्रिष्वाहेयं विषास्थ्यादि

आहेयम् ( त्रि ), 'साँप के विष, हड्डी, शरीर, केँचुल, श्वेत आदि, सर्प-सम्बन्धी पदार्थमात्र' का १ नाम है ।

त्रिष्विति ॥ अहेः अवयवम् । 'सखिकुक्षि— ( ४।२।५६ ) इति ढञ् । स्त्रियां 'टिड्ढा— (४।१।१५) इति ङीप् ॥ (१) ॥*॥ आदिना कञ्चुकादि ॥ एकं 'सर्पविषास्थ्यादेः' ।

स्फटायां तु फणा द्वयोः ।

स्फटा ( स्त्री ), फणा ( स्त्री पु । २ स्त्री पु ), 'साँप के फण' के २ नाम हैं ।

स्फटायामिति ॥ स्फटति । 'स्फट विकसने' ( तु० प० से० ) चौरादिकः । णिजभावे पचाद्यच् (३।१।१३४)॥*॥ 'फटा' इति क्वचित्पाठः । पृषोदरादिः ( ६।३।१०९ ) । [ 'फटा तु कितवे फणे' इति हैम २।९६] ॥ ( १ ) ॥*॥ फणति । 'फण गतौ' ( भ्वा० प० से० ) । अच् ( ३।१। १३४) ॥ (२) ॥*॥ 'द्वयोः'[2] इत्यनेन 'स्फटा' अपि संबध्यते—इति स्वामी ॥ द्वे 'फणायाः' ।

समौ कञ्चुकनिर्मोकौ

कञ्चुकः, निर्मोकः ( २ पु ), 'साँप के केंचुल' के २ नाम हैं ।

समाविति ॥ कच्यते । 'कचि दीप्तिबन्धनयोः' ( भ्वा० आ० से० ) । बाहुलकादुकन् । 'कञ्चुको वारबाणे स्यान्निर्मोके कवचेऽपि च । वधाय कण्ठीलाङ्गस्थितवस्त्रे च चोलके । कञ्चुक्यपामार्गे च' इति विश्व-मेदिन्यौ[3] [ १२।१२६-२७, ६।६९-६२ ] ॥ ( १ ) ॥*॥ निश्चयेन मुच्यते ॥ कर्मणि घञ् (३।३।१९) । 'निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके' [ इति मे० १०।१११ ] ॥ ( २ ) ॥*॥ द्वे 'सर्पत्वचः' ।

---

१. हैमस्थोऽयं पाठः ( २।५२२ ) । विश्व-मेदिन्योस्तु भिन्नः पाठः ।

१. पाठोऽयं मेदिन्यामविकलमुपलभ्यते ( २४।३३ ) ।

२. 'द्वयोर्वर्तमानायां स्फटायां फणापि द्वयोः, फटेत्येके । दर्विः, कफेलश्च' इति स्वामी ।

३. विश्वे—'औषधौ कञ्चुकी च' इति पाठः, मेदिन्यां च '—भेदे' इत्येवं 'च'रहितः पाठः ।

क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥

क्ष्वेड ( पु ), गरलम् , विषम् ( २ न ), 'विष, ज़हर' के ३ नाम हैं।

क्ष्वेड इति ॥ क्ष्वेडति मोहयति । अच् (३।१।१३४) । ञिक्ष्विदाऽव्यक्ते शब्देन वा । ञिक्ष्विदा स्नेहनमोचनयोः । 'मोहनयो' इत्येके ( भ्वा० प० से०,दि० प० से० ) । हलश्च' (३।३।१२१ ) इति घञ् । पृषोदरादि (६।३।१०९ ) । 'क्ष्वेडा ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहिताकर्पणफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः [ इति मे० ४०। ५-६] ॥ (१) ॥*॥ गिरति जीवम् । 'गॄ निगरणे ( तु० प० से० ) । अच् ( ३।१।१३४ ) । गरं लाति । 'ला दाने ( अ० प० अ० ) । कः ( ३।२।३ ) । मावपरत्वं, 'गरशब्दस्य । गिरतेर्बाहुलकादलच् वा । गरलं पन्नगविषे तृणपूलकमानयोः इति हेम [ ३।६८० ] ॥ (२) ॥*॥ वेवेष्टि कायम् । विष्लृ व्याप्तौ (जु० उ० अ०), 'विष विप्रयोगे' (क्र्या० प० से०) वा । इगुपध-' ( ३ १।१३५)इति कः । 'गरलं विषमम्भसि च, स्त्रियामतिविषायाम्' इत्यूष्मविवेकाऽमूधन्यान्तम् । पुंसि क्लीबे च इति विषेणापि सवघ्यते— इति कश्चित् ॥ (३) ॥*॥ त्रीणि विषमात्रस्य' ।

पुंसि क्लीबे च काकोलकालकूटहलाहलाः ।
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥१०॥
दारदो वत्सनाभश्च विषभेदा अमी नव ।

काकोल, कालकूट, हलाहल ( ३ पु न ), सौराष्ट्रिक, शौक्लिकेय, ब्रह्मपुत्र, प्रदीपन, दारद, वत्सनाभ ( ६ पु ), 'काकोल, कालकूट आदि स्थावर विष' के ११ नाम हैं।

पुंसीति ॥ ईषत् कोलति । 'कुल संस्त्याने (भ्वा० प० से०) । अच् (३।१।१३४) । 'ईषदर्थे' (६।३।१०५) इति को कादेशः । 'काकोलो' नरकान्तरे, ना कुलाले द्रोणकाके, विषभेदे च न स्त्रियाम् [ इति मे० १५०।७४ ] ॥ ( १ ) ॥*॥ कालमपि कूटयति । 'कूट परिदाहे (चु० उ० से०)। 'कर्मण्यण् ( ३।२।१ ) । कालस्य कर्मणो मृत्योर्वा कूटो राशिरिव—इति वा ॥(१)॥*॥ हलति जठरम् । हल विलेखने'(भ्वा० प० से०) । न हलति आहलति वा अच् (३।१। १३४) । अहलम्—आहलम् वा । तत कर्मधारय । हाला इव, हलतीति वा । हलमिव हलति । अच् (३।१।१३४) । प्रज्ञाद्यण् ( ५।३।३८ ) । 'हालाहलं हालहलं वदन्त्यपि हलाहलम्' इति द्विरूपकोषः । 'गोनासगोनसौ³, हालाहलं विषम्' इति त्रिकाण्डशेषः [१।८।५ ] । 'हलाहलस्तु हयलालोरगे विषे । ज्येष्ठया च इति हेम [ ४।३१३-१४ ] ॥ (१) ॥ एते त्रय क्लीबपुंसो ॥ * ॥ सौराष्ट्रे देशभेदे भवः । अध्यात्मादित्वात् (वा० ४।३।६० ) ठञ् । 'सौराष्ट्रिक' इति पाठः—इति मुकुटः । सुराष्ट्रे भव' इति तु स्वामी ॥ ( १ ) ॥*॥ शुक्लिके देशे भवः । 'दृतिकुक्षि-( ४।३।५६ ) इति योगविभागाड्ढञ् ॥ (१) ॥*॥ ब्रह्मणः पुत्रः । [ ब्रह्मपुत्रः क्ष्वेडभेदे² नदभेदे च पुंस्ययम्' इति मे० १४३।२६५ ] ॥ ( १ ) ॥*॥ प्रदीपयति । णिच् (३।१। २६) । नन्द्यादिल्युः ( ३।१।१३४ ) ॥ (१) ॥*॥ दरदि देशे भवः । 'दारदो विषभेदे स्यात्पारदे हिङ्गुले पुमान्' [ इति मे० ७६।३१ ] ॥ (१) ॥*॥ वत्सान् नभ्नाति । णभ हिंसायाम् ( भ्वा० प० से० ) । कर्मण्यण् (३।२। १) । वत्सस्य नाभिरिव नाभिरस्यति वा । 'अच् प्रत्यन्ववपूर्वात्— (५।४।७५) इति योगविभागादच् ॥ (१) ॥*॥ प्रत्येकं स्थावरविषभेदानाम्' ।

विषवैद्यो जाङ्गुलिकः

विषवैद्य, जाङ्गलिक ( २ पु ), 'विष को दूर करनेवाले वैद्य' के २ नाम हैं।

विषेति ॥ विद्यामधीते वेत्ति वा । 'तदधीते तद्वेद' (४। २।५९) इत्यण् । विषस्य वैद्य ॥ ( १ ) ॥*॥ जाङ्गुली विषविद्यामधीते वेद वा । वसन्तादित्वात् (४।२।६३) ठक् । 'परीक्षितं समस्तीयाज्जाङगुलीभिर्भिषग्वृत ॥' जाङ्गुल्या दीव्यतीति वा । तेन दीव्यति—' ( ४।४।२ ) इति ठक् ॥ (२) ॥*॥ द्वे गारुडिकस्य' ।

व्यालग्राह्यहितुण्डिकः ॥ ११ ॥

इति पातालभोगिवर्गः । ८ ॥

व्यालग्राही ( =व्यालग्राहिन् ), आहितुण्डिक ( २ पु ), 'साँप पकड़नेवाले या सँपेरा' के २ नाम हैं।

व्यालेति ॥ व्यालं गृह्णाति । 'नन्दिग्रहि-' (३।१।१३४) इति णिनि ॥ (१) ॥*॥ अहेस्तुण्डं मुखम् । तेन दीव्यति-' ( ४।४।२ ) ठक् । सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभावे अहितुण्डिक ' अपि । 'व्यालग्राहोऽहितुण्डिकः ' इत्यमरमाला ॥ (२) ॥*॥ द्वे 'सर्पग्राहिणः' ।

इति पाताल भोगिवर्गविवरणम् ॥ ८ ॥

१ 'गरं लाति गरलं श्यामश्यामलवत्' इति स्वामी ।
२ 'काकोलं' इति पा० ।
३ गोनासगोनसशब्दौ सर्पार्थवाचकतया न प्रकृतोपयोगिनौ प्रतीयेते ।

१ 'सुराष्ट्रशुक्लिकदरत्सु देशेषु भवा सौराष्ट्रिकादय' इति स्वामी ।
२ 'त्वं विप्र ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितः ।' इति याज्ञ० स्मृ० ( २।११० ) ।
३ 'क्षेत्रभेदे' इति पा० ।

## अथ नरकवर्गः ॥ ९ ॥

**स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।**

नारकः, नरकः, निरयः ( ३ पु ), दुर्गतिः ( स्त्री ), 'नरक' के ४ नाम है।

स्यादिति ॥ नरति, नृणाति वा । 'नॄ नये' ( भ्वा०, क्र्या० प० से० )। 'कृञादिभ्यः संज्ञायां वुन्' (उ० ५।३५) । 'नरकः पुंसि निरयदैत्यराजप्रभेदयोः' इति विश्व-मेदिन्यौ[१]॥ (२) ॥*॥ प्रज्ञाद्यण् (५।४।३८) नारकः । यत्तु-'अन्यधामपि-'(६।३।१३७) इति दीर्घत्वम्-इति स्वामि-मुकुटौ। तन्न। क्षणि श्रुद्धसभवात् । उत्तरपदपरत्वाभावाच्च। यदपि-नराः कायन्त्यत्र । मूलविभुजादित्वात् (वा० ३।२।५) क न-रकः—इति तु स्वामी—इति मुकुटः । तन्न । अधिकरणे उक्तवार्तिकाप्रवृत्तेः । 'कर्तरि कृत्' (३।४।६७) इति बाधात् ॥ ( १ ) ॥*॥ निर्गतोऽयात् ॥ ( ३ ) ॥*॥ दुष्टा गतिः । 'दुर्गतिः नरक निःस्वताया च' इति हैम [३।२६८] ॥ (४) ॥*॥ चत्वारि 'नरकस्य' ।

**तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥**

**संहारः कालसूत्रं चेत्याद्याः**

तपनः, अवीचिः ( +स्त्री ), महारौरवः, रौरवः, संहारः ( ५ पु ), कालसूत्रम् ( न ), आदि 'भिन्न-भिन्न नरक-विशेष' का १-१ नाम है।

तदिति ॥ तस्य नरकस्य भेदा । तपति । ल्यु (३।१।१३४) । 'तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे' [इति मे० ८७।६९] ॥ (१) ॥*॥ 'वीचिः स्वल्पतरङ्गे स्याद-वकाशे सुखेऽपि च' इति विश्व [३०।७] । नास्ति वीचि सुखमत्र । 'अवीचिस्त्वन्तरङ्गे[२] नरकान्तरे' इति हैम. [३।१३६ ] ॥ ( १ ) ॥ * ॥ रुरुर्नाम प्राणि(मृग)विशेषः । तस्यायम् । 'तस्येदम्' (४।३।१२०) इत्यण् । महतो रुरोर-यम् ॥ (१) ॥*॥ 'रौरवो नरके घोरे' इति मेदिनी [१६१।४९] ॥ (१) ॥*॥ हरण हार । घञ् (३।३।१८) । सम्यग् हारोऽत्र ॥*॥ सम्यग् घातोऽत्र [ 'संघातः पुंसि घाते च सहतौ नरकान्तरे' इति मेदिनी ६६।१६७ ] इत्येके ॥ ( १ ) ॥ * ॥ कालान्ययोमयानि सूत्राण्यत्र ॥ ( १ ) ॥ * ॥ आद्यशब्देन तामिस्रान्धतामिस्रासिपत्रवनादयः । पृथक् पृथगेकैकं 'नरकभेदानाम्' ।

**सत्त्वास्तु नारकाः ।**

**प्रेताः**

नारकः, प्रेतः ( २ पु ), 'नरक के प्राणियों' के २ नाम हैं।

सत्त्वा इति ॥ नरकस्थाः सत्त्वा जन्तवः । नरके भवाः । 'तत्र भवः' (४।३।५३) इत्यण् । प्राग् । 'इण् गतौ' (अ० प० अ०) । 'गत्यर्था-' (३।४।७२) इति क्त । 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' [इति मे० ५६।३७] ॥ (१) ॥*॥ द्वे 'नरकस्थप्राणिनाम्' ।

**वैतरणी सिन्धुः**

वैतरणी ( स्त्री ), 'यमलोक के समीप बहनेवाली वैतरणी नाम की नदी' का १ नाम है।

वैतेति ॥ नारकी नदी । विगतास्तरणिर्यत्र तत्र भवा । अण् (४।३।५३) । विगता तरणिर्नौर्यत्र वा । प्रज्ञाद्यण् (५।४।३८) । वितरणेन दानेन लङ्घ्यते इति वा । 'शेषे' (४।२।९२) इत्यण् । 'नारका जन्तवः प्रेता नदी वैतरणी स्मृता' इति त्रिकाण्डशेषः[१] । 'वैतरणी नद्यां प्रेतानां, मातु-मातरि' [ इति मे० ५३।१०८ ] ॥ ( १ ) ॥ * ॥ एकं 'वैतरण्याः' ।

**स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥**

अलक्ष्मी', निर्ऋतिः ( २ स्त्री ), 'नरक की अशोभा' के २ नाम हैं।

स्यादिति ॥ लक्ष्मीविरुद्धा ॥ (१)॥*॥ नियता ऋति-र्घृणा यस्याः । 'ऋतिर्गतौ घृणायां च स्पर्धायां च शुभेऽपि च' इति रभसः । निर्गता ऋतेः शुभात्—इति वा । 'निर्ऋतिः स्यादलक्ष्म्यां स्त्री, दिशां पालान्तरे पुमान्' [इति मे० ६२।११७] ॥ (२) ॥*॥ द्वे 'नारकीयाया अलक्ष्म्याः' ।

**विष्टिराजूः**

विष्टिः, आजूः (२ स्त्री), 'बलात्कार से नरक में ढकेलने' के २ नाम हैं।

विष्टिरिति ॥ विशति क्लेशम् । 'विश प्रवेशने' (तु० प० अ० ) । क्तिच् ( ३।३।१७४ ) । यद्वा—विष्णाति । 'विष विप्रयोगे' (क्र्या० प० से०) । 'क्तिच्क्तौ च-' (३।३।१७४) इति क्तिच् । यद्वा,-विष्यते । कर्मणि क्तिन् (३।३।९४) । यत्तु—वेतनेन विमुच्यतेऽनेन । 'विष्लृ विप्रयोगे' । करणे क्तिन्-इति मुकुटो व्याख्यत् । तन्न । विग्रहादिप्रदर्शनस्य परस्परविरुद्धत्वात् । ल्युटा क्तिनो बाधप्रसङ्गाच्च । 'विष्टिः कर्मकरे मूल्ये भद्राजूप्रेषणेषु च' इति हैमः [२।२०१ ] ॥ ( १ ) ॥ * ॥ आजवते । 'जु गतौ' (भ्वा० आ० अ०) । 'क्विब्वचिप्रच्छि-' (वा० ३।२।१७८) इति क्विब्दीर्घौ । आ अज्यते वा । 'आजूर्वेतनयोर्विष्टिः कर्मकृत्कर्मणोरपि' इति शाश्वतः [५०७] इति स्वामी । यत्तु—आजू रेफान्तापि, इति पञ्चिका स्वामी च—इति मुकुट ।

---

१. मेदिनीस्थोऽयं पाठः ( ९।१०९ ) । विश्वे तु 'नरको निरये दैत्ये' ( ६।५० ) इत्येवं पाठ ।

२. 'अवीचिस्तु तरङ्गे' इति पा० ।

१. त्रिकाण्डशेषे तु नेदं दृश्यते ।

तन्न। पूर्वप्रदर्शितस्वाम्युक्तविग्रहद्वयेनापि रेफान्तताया अलाभात् ॥ (२) ॥*॥ द्वे स्त्रियौ। द्वे निर्मूल्यकर्मकरणे-इति मुकुट। नरके हठात्प्रक्षेपस्य-इति स्वामी। 'भद्राख्यकरणस्य' इत्यन्ये।

**कारणा तु यातना तीव्रवेदना।**

कारणा, यातना, तीव्रवेदना (३ स्त्री) 'नरकके दुःख' के या 'कठोर दुःख' के ३ नाम हैं।

कारणेति ॥ 'कॄञ् हिंसायाम्' (क्र्या० उ० से०)। 'यत निकारोपस्कारयोः' (चु० उ० से०)। आभ्या णिच् (३।१।२६)। 'ण्यासश्रन्थ-' (३।३।१०७) इति युच्। 'कारणं करणे हेतुवधयोश्च नपुंसकम्। स्त्री यातनायां च' [इति मे० ४८।४३] ॥ (१) ॥*॥ (२) ॥*॥ 'विद वेदनाख्यानविवासेषु' (चु० आ० से०)। णिच् (३।१।२६)। युच् (३।३।१०७)। तीव्रा चासौ वेदना च ॥(३) ॥*॥ त्रीणि तीव्रदुःखस्य'। 'नरकरुज'-इति स्वामी।

**पीडाबाधाव्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥**
**स्यात्कष्टं कृच्छ्रमाभीलम्**

पीडा, बाधा, व्यथा (३ स्त्री), दुःखम्, अमानस्यम् प्रसूतिजम्, कष्टम्, कृच्छ्रम्, आभीलम् (६ न), 'दुःख' के ९ नाम हैं।

पीडेति ॥ 'पीड अवगाहने' चौरादिकः (प० से०)। भिदाद्यङ् (३।३।१०४)। 'पीडार्तिमर्दनोत्तसक्षमासु सरलद्रुमे' इति हैम [२।१२६] ॥ (१) ॥*॥ 'बाधृ विलोडने' (भ्वा० आ० से०)। 'गुरोश्च-' (३।३।१०३) इत्य। 'बाधा दुःखे निषेधे च' इति मेदिनी [७९।१०] ॥*॥ 'आबाधा' इति वा छेदः। 'आबाधा वेदना दुःखम्' इति हलायुधः [ २।४ ] ॥ (२) ॥*॥ 'व्यथ भयसंचलनयो' (भ्वा० आ० स०)। 'घटादयः षितः' इति षित्त्वातिदेशादङ् (३।३।१०४) ॥ (३) ॥*॥ दुष्टानि खान्यस्मिन्। यद्वा-दुर्निन्दितं खनति। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः। यद्वा-दुःखयति। 'सुख दुःख तत्क्रियायाम्' चुरादि (उ० से०)। पचाद्यच् (३।१।१३४) ॥ (४) ॥*॥ मानसे साधु। 'तत्र साधुः' (४।४।९८) इति यत्। मानस्याद्भिन्नम्। 'प्रसूतिजममानस्य कृच्छ्रं कष्टं कलाफलम्' इति वाचस्पति ॥*॥ अमनसो भाव आमनस्यम्। ब्राह्मणादित्वात् (५।१।१२४) ष्यञ्-इति स्वामी ॥ (५) ॥*॥ प्रसूतेर्जातम्। 'पञ्चम्याम्-' (३।२।९८) इति डः ॥ (६) ॥*॥ द्वे वैमनस्यस्य-इति स्वामी। षडपि मनःपीडार्था-इति सभ्या। 'दुःखप्रसूतिजे क्लीबे पीडा बाधा च वेदना' इति माला। कषति। 'कष हिंसायाम्' (भ्वा० प० से०)। क्त (३।३।१७४)। 'कृच्छ्रगहनयोः कषः' (७।२।२२) इतीडभावः। 'कष्टं तु गहने कृच्छ्रे' [इति मे० ३४।६] ॥ (७) ॥*॥ कृन्तति। 'कृती छेदने' (तु० प० से०)। 'कृतेश्छः क्रू च' (उ० २।२१) इति रक् छश्च। 'कृच्छ्रमंहसि। कष्टे सान्तपने' इति हैम' [ २।४१७-१८ ] ॥ (८) ॥*॥ आ समन्ताद् भियं लाति। क (३।२।३)। 'आभीलं भीषणे कृच्छ्रेऽपि' इति हैम [ ३।६६१ ] ॥ (९) ॥*॥ त्रीणि 'शरीरपीडायाः'। नवापि 'दुःखस्य' इत्येके।

**त्रिष्वेषां भेद्यगामि यत् ॥**

**इति नरकवर्गः ॥ ९ ॥**

**इनमें 'दुःख' इत्यादि शब्द किसीके विशेषण होनेपर त्रिलिङ्ग होते हैं।**

त्रिष्विति ॥ एषां मध्ये यद्भेद्यगामि द्रव्यगामि तत्त्रिषु। दुःखा सेवा। दुःखः सुतो निर्गुणः। सर्वं दुःखं विवेकिनः।

इति नरकवर्गविवरणम् ॥ ९ ॥

## अथ वारिवर्गः ॥ १० ॥

**समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः।**
**उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥**
**रत्नाकरो जलनिधिर्यादःपतिरपांपतिः।**

समुद्रः, अब्धिः, अकूपारः, पारावारः, सरित्पतिः, उदन्वान् (=उदन्वत्), उदधिः, सिन्धुः, सरस्वान् (=सरस्वत्), सागर, अर्णव, रत्नाकरः, जलनिधिः, यादःपतिः, अपांपति (१५ पु), 'समुद्र' के १५ नाम हैं।

समुद्र इति ॥ समुनत्ति। 'उन्दी क्लेदने' (र० प० से०)। 'स्फायि-' (उ० २।१३) इति रक्। समीचीना उद्रा जलचरविशेषा यस्मिन्निति वा। सह मुद्रया मर्यादया वर्तते इति वा ॥ (१) ॥*॥ आपो धीयन्तेऽत्र। 'कर्मण्यधिकरणे च' (३।३।९३) इति धाञ [ 'डुधाञ् धारणपोषणयो' जु० उ० आ० ] कि। [ 'अब्धिर्ना सरसि वारिधौ' इति मे० ७८।२ ] ॥ (२) ॥*॥ कु पृथ्वीं पिपर्ति। 'पॄ पालनपूरणयो' (जु० प० से०)। 'कर्मण्यण्' (३।२।१)। 'अन्येषामपि-' (६।३।१३७) इति दीर्घः। नञ्समासः (२।२।१८)। यद्वा-न कूपमृच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। अगाधत्वात् खनितुमशक्य। कुश्च उश्च कवौ पिपर्ति। 'पॄ पालनपूरणयो' (जु० प० से०)। 'कर्मण्यण्' (३।२।१)। तद्भिन्न। [ 'अकूपारः कूर्मराजसमुद्रयो' इति हैम ४।२४४ ] ॥ (३) ॥*॥ पारमावृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। 'कर्मण्यण्' (३।२।१)। पारावारावस्य स्त इति वा। अर्शआद्यच् (५।२।१२७)। 'पारावारः पयोराशौ पारावारं तटद्वये' [ इति हैम ४।२७८ ] ॥ * ॥ पारमपारमस्येति पवर्गादिमध्य ['पारापार']-इति कश्चित् ॥ (४) ॥*॥ सरितां पतिः ॥ (५) ॥*॥

उदकानि सन्त्यत्र । 'उदन्वानुदधौ च' ( ८।२।१३ ) इति मत्वन्तो निपातितः ॥ ( ६ ) ॥*॥ उदकानि धीयन्तेऽत्र । 'कर्मण्यधिकरणे च' ( ३।३।९३ ) इति किः । 'पेषंवासवाहनधिषु च' (६।३।५८) इत्युद । 'उदकस्य—' (६।३।५७) इति वा ॥ (७)॥*॥ स्यन्दन्ते आपोऽत्र । 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० ) । 'स्यन्दे संप्रसारणं धश्च' ( उ० १।११ ) इत्यु । 'सिन्धुर्वमथुदेशाब्धिनदे ना, सरिति स्त्रियाम्' इति विश्व-मेदिन्यौ[1] ॥ (८)।*॥ 'सरो नीरे तडागे च' इति रुद्रः । सरो नीरं सन्त्यस्मिन् । मतुप् ( ५।२।९५) । 'तसौ मत्वर्थे' (१।४।१९) इति भत्वम् । 'सर[2]स्वांस्तु नदे वार्धौ ना, त्वर्थद्रसिके त्रियाम् । वाणीस्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि । मनुपत्न्यामपि' [ इति मे० ७०।२२३-२४] ॥ (९) ॥*॥ सगरस्य राज्ञोऽयम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । न गरो येनामुनेन मणिना वा सह तेन वा ॥ (१०) ॥*॥ अर्णांस्यत्र सन्ति । 'अर्णसो लोपश्च' ( वा० ५।२।१०९ ) इति वः सलोपश्च ॥ (११) ॥*॥ रत्नानामाकर ॥ ( १२ ) ॥ * ॥ जलानि निधीयन्तेऽत्र । 'कर्मण्यधिकरणे च' (३।३।९३) इति किः । जलानां निधिरिति वा ॥ ( १३ ) ॥ * ॥ यादसां जलजन्तूनां पतिः ॥ (१४) ॥*॥ अपांपति[3] ॥ (१५)॥*॥ पञ्चदश 'समुद्रस्य' ।

**तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २ ॥**

क्षीरोदः, लवणोदः ( २ पु ), 'क्षीरसमुद्र, खारा समुद्र आदि' का १-१ नाम है ।

तस्येति ॥ क्षीरमुदकं यस्य । 'उत्तरपदस्य च' ( वा० ६।३।५७) इत्युद ॥ ( १ ) ॥ * ॥ एवं लवणोदः, इक्षुरसोद , सुरोदः, दधिमण्डोदः, स्वादूद , घृतोद । पृथक्पृथगेकैकं 'समुद्रविशेषाणाम्' ।

**आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।**
**पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥**
**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।**
**अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशंवरम् ॥ ४ ॥**
**मेघपुष्पं घनरसः**

१. मेदिन्यामेव ( ८०।२५ ) उपलभ्यते । विश्वे तु 'सिन्धु समुद्रे नद्यां च नदे देशेभदानयोः' ( ८२।१३ ) इत्येवं पाठः ।

२. 'सरस्वांश्च नदे चाब्धौ मान्यवद्रसिके' इति पा० ।

३. 'याद.पति , पाथःपति'रित्येके । 'सुगममेव हि मध्यमपापते' इति दर्शनात्समासे बाहुलकात् षष्ठ्या अलुक् । इति स्वामी ।

आपः ( =अप् , नित्य स्त्री० ब० व० ), वाः ( =वार् ), वारि, सलिलम्, कमलम्, जलम्, 'पयः (=पयस् ), कीलालम्, अमृतम्, जीवनम्, भुवनम्, वनम्, कबन्धम्, उदकम्, पाथः ( =पाथस् ), पुष्करम्, सर्वतोमुखम्, अम्भः ( =अम्भस् ), अर्णः ( =अर्णस् ), तोयम्, पानीयम्, नीरम्, क्षीरम्, अम्बु, शंवरम् । मेघपुष्पम् ( २५ न ), घनरसः ( पु ), 'पानी' के २७ नाम हैं ।

आप इति ॥ आप्नुवन्ति, आप्यन्ते वा । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । 'आप्नोतेर्ह्रस्वश्च' (उ० २।५८) इति क्विप् ह्रस्वत्व च ॥ * ॥ असुनि ( उ० ४।२०८ ) आपःसान्तं क्लीबं च । 'कबन्धमुदकमापो नीरवार्वारिनारम् । क्लीबमपि' इति संसारावर्तात् ॥ ( १ ) ॥*॥ वारयति । वृञो ण्यन्तात् ( ३।१।२६ ) क्विप् (३।२।१७८) । वार् क्लीबमुक्तसंसारावर्तात् ॥ (२) ॥*॥ 'वसिवपि—' ( उ० ४।१२५ ) इनीञि वारि च । [ 'वारि ह्रीबेरनीरयोः । वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि' इति हैमः २।४५५ ] ॥ (३) ॥*॥ सलति । 'षल गतौ' ( भ्वा० प० से० ) । 'सलिकलि—' ( उ० १।५४ ) इतीलच । रलयोरेकत्वम् । 'सरिलं सलिरं सलिलम्' इति वाचस्पतिः ॥(४) ॥*॥ कम्यते । 'कमु कान्तौ' (भ्वा० आ० से० ) । वृषादित्वात् ( उ० १।१०६ ) कलच । 'कमला श्रीर्जलं पद्मं कमलं कमलो मृग' इति धरणिदर्शनात् 'कमलम्' इत्येकं नाम । 'कमलं क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे । कमला श्रीवरनार्यो' इति हेमचन्द्र [३।६६४-६५] ॥ ( ५ ) ॥ * ॥ जलति । 'जल अपवारणे' ( चु० प० से० ) । पचाद्यच् (३।१।१३४) । 'जलं गोक[1]लले नीरे ह्रीबेरेऽप्यन्यवज्जडे' इति मेदिनी [ १४६।१८ ] ॥ ( ६ ) ॥ * ॥ पयते पीयते वा । 'पय गतौ' ( भ्वा० आ० से० ) । 'पीङ् पाने' ( दि० आ० अ० ) वा । असुन् ( उ०४।१८९ ) । 'पयः क्षीरे च नीरे च' इति हैम [२।५९८ ] ॥ ( ७ ) ॥*॥ कीलां ज्वालामलति वारयति । 'अल भूषणादौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । और्वाग्नेः कीलां लाति वा । 'कीलालं रुधिरे तोये' इति हैम. [ ३।६७३ ] ॥ ( ८ ) ॥ * ॥ न मृतं मरणमस्त्यस्मिन् । प्राणस्यापोमयत्वात् । 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः । अमृता मागधीपथ्यागुडूच्यामलकीषु च' [इति मे० ५९।७७-७८] ॥ ( ९ ) ॥*॥ जीव्यतेऽनेन । 'जीव प्राणधारणे' (भ्वा० प० से०) । करणे ल्युट् (३।३।११६ ) । 'जीवनं वर्तते नीरप्राणधारणयोरपि[2] । जीवनी जीवना चापि जीवन्तीभेदयोः क्रमात्' [ इति मे० ८७।

१. 'गोकलने' इति पा० ।

२. 'जीवनं वर्तने जीवप्राणधारणयोरपि' इति पा० ।

६८-६९] ॥ (१०) ॥*॥ भूयते। 'भू प्राप्तौ' (चु० अ० से०)। 'भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ० २।८०) इति क्युन्। यद्वा—भवन्त्युत्पद्यन्तेऽनेन। करणे ल्युट् (३।३।११६)। संज्ञापूर्वकत्वाद्गुणाभाव। 'भुवनं विष्टपेऽपि स्यात्सलिले गगने जने' [इति मे० ९०।१०२] ॥(११) ॥*॥ वन्यते सभज्यते सेव्यते वा। 'वन सभक्तौ' (भ्वा० प० से०)। 'वनु याचने' (तु० आ० से०) वा। कर्मणि घञ (३।३।१९)। संज्ञापूर्वकत्वाद्वृद्ध्यभाव। यत्तु—भुवनवद्बाहुलत्वात् क्युनि 'अनुदात्तोपदेश—' (६।४।३७) इत्यादिना नलोपे वनम्—इत्युज्ज्वलदत्त—इति मुकुट। तन्न। 'अनुदात्तोपदेश—' (६।४।३७) इत्यनुनासिकलोपस्य झलादि ङ्किति विधानात् क्युनि तदप्रसङ्गात्। अन्यथा वन्यन इत्यादावपि प्रसङ्गात्। 'वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने' इति हैम [२।२८६] ॥ (१२) ॥*॥ क सुख बध्नाति। 'बन्ध बन्धने' (क्र्या० प० अ०)। 'कर्मण्यण्' (३।२।१)। 'कबन्धं सलिले रुण्डे' इति शाश्वतादिदमेक नाम। 'कबन्धोऽस्त्री क्रियायुक्त[१]मपमूर्धकलेवरे। क्लीब जले, पुस्युदरे [२]राहुरक्षोविशेषयो' [इति मे० ८१।३०-३१] ॥*॥ केचित्तु—'कमन्धम्' इति पठित्वा द्वे नामनी—इत्याहु ॥ (१३) ॥*॥ उनत्ति। 'उन्दी क्लेदने' (रु० प० से०)। 'उदक—' (उ० २।३९) इत्युणादिसूत्रेण साधु। यत्तु—उन्दति—इति विगृहीतवन्तौ स्वामि मुकुटौ। तच्चिन्त्यम्। उन्दे रौधादिकत्वात् ॥ (१४) ॥*॥ पाति। 'पा रक्षणे' (अ० प० अ०)। 'उदके थुट् च' (उ० ४।२०४) इत्यसुन् थुट्। यत्तु—पीयते—इति विग्रहप्रदर्शन स्वामिमुकुटाभ्या कृतम्। तन्न। 'पातेर्बले जुट्' इत्यनुवृत्तिविरोधात्। तत्र पातेर्ग्रहणम्, न पिबते ॥ (१५) ॥*॥ पुष्णाति। 'पुष पुष्टौ' (क्र्या० प० से०)। 'पुष कित्' (उ० ४।४) इति करन्। 'पुष्करं पङ्कजे व्योम्नि पय करिकराग्रयो। ओषधीद्वीपविहगतीर्थराजोरगान्तरे। पुष्कर तूर्यवक्त्रे च। काण्डे खड्गफलेऽपि च' [इति विश्व १३७।१५३-५४] ॥ (१६) ॥*॥ सर्वतो मुखान्यस्य। सर्वदिग्गमनात्। 'सर्वतोमुख उग्रे च क्षेत्रज्ञ ब्रह्मणो पुमान्। नपुसक तु पानीये सुरसद्मन्यपि स्मृतम्' [इति मे० २१।१९-२०] ॥ (१७) ॥*॥ आप्नोति, आप्यते वा। 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। 'उदके नुम्भौ च' (उ० ४।२१०) इत्यसुन् ह्रस्वो भान्तादेशो नुमागमश्च। अम्भते वा। 'अभि शब्दे (भ्वा० आ० से०)। असुन् (उ० ४।१८९)। यत्तु—अमति इति विग्रहप्रदर्शन स्वामि-मुकुटाभ्यां कृतम्। यच्च—अमेर्भुक् च—इति सूत्रोपन्यसन मुकुटेन कृतम्। तन्न। तदुक्तसूत्रस्योज्ज्वलदत्तादावनुपलम्भात्। अस्मदुपन्यस्तस्योपलम्भाच्च ॥ (१८) ॥*॥ ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। 'उदके नुट् च' (उ० ४।१९७) इत्यसुन् नुडागमश्च। यत्तु—ऋणोति—इति विगृहीतं स्वामिना। तन्न। 'अर्तेरुच्च' इत्यत 'अर्ते' इत्यनुवृत्ते स्वादेस्तत्राग्रहणात् ॥ (१९) ॥*॥ तौति। तु सौत्र[१] आवरणार्थ। औणादिको य (४।११२) ॥ (२०) ॥*॥ पीयते। 'पा पाने' (भ्वा० प० से०)। अनीयर् (३।१।९६)। पायते वा। 'पै शोषणे' (भ्वा० प० अ०)। 'पानीयं पेयजलयो' इति हैम [२।५२७] ॥(२१)॥*॥ नीयते। 'णीञ प्रापणे' (भ्वा० उ० से०)। 'स्फायि—' (उ० २।१३) इति रक्। निर्गत राद्धनेर्वा। 'निरादय —'(वा० २।२।१८) इति समास। 'अग्नेरार' इति (तैत्तिरीय)श्रुते। निष्क्रान्तो रोऽस्मात्। 'प्रादिभ्यो धातुजस्य—' (वा० २।२।२४) इति बहुव्रीहि। 'अङ्कचोऽग्नि' इति [मनु-]स्मृते [९।३२१]। यत्तु—'ढ्रलोपे—' (६।३।१११) इति दीर्घेण 'नीरम्' इति स्वामी—इति मुकुट। तन्न। नयति 'नीरम्' इति स्वामिग्रन्थादुक्तार्थानवगमात्। निश्चयेन राति सुखम्। 'रा दाने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति को वा ॥*॥ 'क्षीरस्वामिरिन्नारम्' इति ससारावर्तसमते 'नार' इति पाठे—नरस्येदम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'आपो वै नरसूनव' इति [मनु] स्मृते [१।१०]। ['नारस्तर्णकनीरयो' इति मेदिनी १२६।५३] ॥ (२२) ॥*॥ क्षियति। 'क्षि निवासगत्यो' (तु० प० अ०)। 'घुसिचि(क्षि)मीना दीर्घश्च' (उ० ३।२५) इति क्रन् दीर्घत्व च। यद्वा—घस्यते। घसे किच्च' (उ० ४।३४) इतीरन्। 'गमहनजन—' (६।४।९८) इत्युपधालोप। यत्तु—क्षयति—इति विग्रहप्रदर्शन मुकुटेन कृतम्। तन्न। उपन्यस्तधातोस्तादृशरूपाभावात्। 'क्षीरं पानीयदुग्धयो' इति हैम [२। ४१४] ॥ (२३) ॥ अम्बते। 'अबि शब्दे' (भ्वा० आ० से०)। बाहुलकादु। यत्तु—अम्बति इति स्वामिना विगृहीतम्। तच्चिन्त्यम्। अस्यात्मनेपदित्वात् ॥ (२४) ॥*॥ श वृणोति। 'वृञ वरणे' (स्वा० उ० से०)। पचाद्यच् (३।१।१३४)। शत्र संवरण राति—इति वा। सवयति। 'षव सबन्धने'। 'शव च' (चु० प० से०)। बाहुलकादरन्, इति वा। दन्त्यादिस्तालव्यादिश्च। 'शवरं सलिले, पुंसि मृगदैत्यविशेषयो। 'शंवरी चाखुपर्ण्यां स्यात्' इति विश्व[२]

१ 'व्यपमूर्ध' इति पा०।

२ 'बाहुरक्षोविशेषयो' इति पा०।

१ "तु ('तुरुस्तुशम्यम सार्वधातुके') इति सौत्रो धातु (अ० प० अ०) गतिवृद्धिहिंसासु। अय च लुग्विकरण इति स्मरन्ति।" इति सि० कौ०।

२ पाठोऽयमेदिन्याम् (१३८।१९-२०) उपलभ्यते। विश्वे (१३३।१०२)त्वेव पाठ—'शवर सलिल चित्तबौद्धव्रतविशेषयो। शवरो दैत्यहरिणमत्स्यशैलजिनान्तरे ॥'

॥ (२५) ॥*॥ मेघस्य पुष्पमिव । 'मेघपुष्पं पिण्डाभ्राम्बुनादेये ना हरेहंये' [ इति मे० १०३।२८ ] ॥ ( २६ ) ॥*॥ घनस्य रस । 'पुंलिङ्गः स्याद् घनरसः सान्द्रनिर्यासनीरयोः.' इति रभसः । 'नारं घनरस पुमान्' इति शब्दार्णवः । 'अप्स्वपि शंव-(शम्ब) रपिप्पलकुशकमलकाण्डविषवनपयांसि । घनरसमम्बु क्षीर घृतममृतं जीवनं भुवनम्' इति रत्नकोषात् क्लीबमपि ॥ ( २७ ) ॥ ० ॥ दकशब्दोऽप्यत्र । 'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च' इति हलायुधात् [ ३।२६ ] ॥ * ॥ सप्तविंशति 'जलस्य' ।

त्रिषु द्वे आप्यमम्मयम् ।

आप्यम्, अम्मयम् ( २ त्रि ) 'पानी के विकार' अर्थात् 'पानी से बने पदार्थ—बर्फ, शर्बत आदि' के २ नाम हैं ।

त्रिष्विति ॥ अपां विकारः । 'तस्य विकारः' ( ४।३।१३४ ) इत्यणन्ताच्चतुर्वर्णादित्वात् ( वा० ५।१।१२४ ) स्वार्थे ष्यञ् । स्त्रियाम् आप्या ॥ (१)॥*॥ 'एकाचो नित्यम्' ( वा० ) इति मयट् । स्त्रियामम्मयी ॥ ( २ ) ॥*॥ द्वे 'जलविकारस्य' ।

भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः

भङ्गः, तरङ्गः ( २ पु ), ऊर्मिः, वीचिः (२ पु स्त्री), 'पानी की तरङ्ग, लहर' के ४ नाम हैं ।

भङ्ग इति ॥ भज्यते । 'भञ्जो आमर्दने' ( रु० प० अ० ) । कर्मणि घञ् ( ३।३।१९ ) । 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योः' । इति हैम [ २।३९ ] ॥ ( १ ) ॥ * ॥ तरति । 'तॄ प्लवनसन्तरणयोः' ( भ्वा० प० से० ) । 'तरत्यादिभ्यश्च' ( उ० १।२० ) इत्यङ्गच् ॥ ( २ ) ॥*॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०) । 'अर्तेरुच्च' (उ० ४।४४) इति मिः । अर्तेरुदादेशः (रपर) । 'वा स्त्रियाम्' इति काकाक्षिगोलकन्यायेनोर्मिवीचिभ्यां संबध्यते । 'पुंलिङ्गस्त्रीलिङ्गयोर्वीचिमूर्मिणर्यष्टिमुष्टय.', 'अशनिभ्रुटिश्मिपाटलिशाल्मलितरणिश्रेण्यूर्मयः' । 'वस्तिश्च' इति वामन । 'ऊर्मिः पीडाजवोत्कण्ठाभङ्गप्रकाशवधीषिषु । वस्त्रसंकोचलेखायाम्' इति हैम [ २।३२० ] ॥ ( ३ ) ॥ * ॥ वयति, ऊयते वा । 'वेञ् तन्तुसंताने' (भ्वा० उ० अ०) । 'वेञो डिच्च' ( उ० ४।७२ ) इतीचि । यत्तु—अनिति । 'वा गतिगन्धनयोः' ( अ० प० अ० ) । 'वाते कित्'—इति मुकुट । तन्न । तथा सति 'विः' इति रूपप्रसङ्गात् । 'वातेर्डिच्च' ( उ० ४।१३४ ) इति सूत्रे 'जनिघसिभ्यामिण्' (उ० ४।१३०) इति सूत्रात् 'इण्' इत्यनुवृत्ते 'वीचिर्नित्यं स्त्री' इति स्वामी । 'वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः.' [ इति मे० २८।१० ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'तरङ्गस्य' ।

ओषधौ शंबरीमाहुः.' ।

अथोर्मिषु ॥ ५ ॥

महत्सूल्लोलकल्लोलौ

उल्लोलः, कल्लोलः ( २ पु ), 'बड़ी तरङ्ग' के २ नाम हैं ।

अथेति ॥ उत् लोडयति । 'लोडृ उन्मादे' ( भ्वा० प० से० ) ॥ णिच् (३।१।२६) । पचाद्यच् ( ३।१।१३४ ) । डलयोरेकत्वम् । यत्तु—लोलयतीति लोलः । पचाद्यच् (३।१।१३४) । उद्गतश्चासौ लोलश्चेति उल्लोलः, इति स्वामी—इति मुकुट । तन्न । ऊर्ध्वं लोलयति इति स्वामिना विगृहीतत्वात् । स्वकृतनिर्वचनविरोधाच्च ॥ ( १ ) ॥ * ॥ कं जलम् । तस्य लोल उन्माद । 'वा पदान्तस्य' (८।४।५९) इत्यनुस्वारस्य लकारः । कल्लन्तेऽनेन नद्य । 'कल्ल अव्यक्ते शब्दे' (भ्वा० आ० से०) । बाहुलकादोलच्—इति वा ॥ ( २ ) ॥ * ॥ द्वे 'महातरङ्गस्य' ।

स्यादावर्तोऽम्भसां भ्रमः ।

आवर्तः ( पु ), 'चक्कोह' भँवर अर्थात् 'पानीके गोलाकार घूमने' का १ नाम है ।

स्यादिति ॥ आवर्तनम् । 'वृतु वर्तने' (भ्वा० प० से०) । भावे घञ् ( ३।३।१८ ) । 'आवर्तश्चिन्तने वारिभ्रमे चावर्तने पुमान्' [ इति मे० ६०।९२ ] ॥ ( १ ) ॥*॥ एकं 'जलाना भ्रमणस्य' ।

'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः ॥ ६ ॥

पृषत् ( न ), बिन्दुः, पृषतः ( २ पु ), विप्रुट् ( =विप्रुष्, स्त्री ), 'बूँद, टोप' के ४ नाम हैं ।

पृषन्तीति ॥ पर्षति । 'पृषु सेचने' (भ्वा० प० से०) । 'पृषद्बृहन्महत्–' (उ० २।८४) इति साधु । बहुवचनमतन्त्रम् । 'पृषन्मृगे पुमान्, बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' [ इति मे० ६४।१३६] ॥ (१) ॥* ॥ बिन्दति । 'बिदि अवयवे' (भ्वा० प० से०) । बाहुलकादु । 'बिन्दुर्दन्तक्षतान्तरे । भ्रुवोर्मध्ये ¹रूपकाथ्यकृतौ च पृषते पुमान् । वेदितव्यन्यलिङ्गः स्यात्' [ इति मे० ७५।१०-११ ] ॥ ( २ ) ॥ * ॥ पर्षन्ति । 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच् । 'पृषतस्तु मृगे बिन्दौ स्वरोहिते । श्वेतबिन्दुयुतेऽपि स्यात्' इति हैमः [३।३००] ॥ ( ३ ) ॥ * ॥ 'प्रुषु प्लुषु दाहे' ( भ्वा० प० से०) । संपदादित्वात् (वा० ३।३।१०८) भावे क्विप् । विगता रुद्धा वा प्रुट् दाहोऽस्मात् ॥ (४) ॥*॥ चत्वारि 'जलकणस्य' ।

चक्राणि पुटभेदाः स्युः

चक्रम् ( न ), पुटभेदः ( पु ), 'गोलाकार होकर जल के नीचे जाने' के २ नाम हैं ।

१. मेदिन्यां 'रूपकार्यप्रकृतौ' इति पा० ।

वक्राणीति ॥ वञ्चन्ति । 'वञ्चु गतौ' (भ्वा० प० से०)। 'स्फायितञ्चि-' ( उ० २।१३ ) इति रक् । 'न्यङ्क्वादीनां च' ( ७।३।५३ ) इति कुत्वम् । 'वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः' इति हैम ( २।४६४ ) । 'वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् । त्रिषु क्रूरे च कुटिले' [ इति मे० १२७। ६५) । स्वामी तु–चक्राकारेण यान्त्यम्भ –इति विगृह्णन् चक्रादित्व [ चक्रम् ] मन्यते । 'चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि' इति चादौ मेदिनी [१२५।३१-३२]॥ (१) ॥ * ॥ पुट सश्लिष्ट भिन्दन्ति । 'भिदिर् विदारणे' ( रु० उ० अ० ) । 'कर्मण्यण्' ( ३।२।१ ) । 'पुटभेदस्तु नगरातोद्ययोस्तटिनी मुखे' इति हैम. [४।१४८] ॥ (२) ॥ * ॥ द्वे 'चक्राकारेण जलानामघोयानस्य' ।

भ्रमाश्च जलनिर्गमाः ।

भ्रमः, जलनिर्गमः ( २ पु० ), 'जल निकलने के मार्ग' अथवा 'नदी आदि में निम्नस्थ जल के ऊपर निकलने' के २ नाम हैं ।

भ्रमा इति ॥ भ्रमन्ति जलान्यत्र । 'हलश्च' ( ३।३। १२१ ) इति घञ् । 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि' [ इति मे० १०९।२० ] ॥ (१) ॥ * ॥ निर्गमनानि । 'गम्लृ गतौ' (भ्वा० प० अ०) । 'ग्रहवृदृनिश्चिगमश्च' ( ३।३।५८ ) इत्यप् । करणे वा । 'खनो घ च' ( ३।३।१२५ ) इति घ । जलानां निर्गमा ॥ ( २ ) ॥ * ॥ द्वे 'जलनिःसरणजालकस्य' । नद्यादौ अधःस्थजलस्योर्ध्वनिःसरणस्येत्यन्ये । स्वामी तु–चत्वार्येकार्थानि– इत्याह ।

कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥

कूलम्, रोधः, तीरम्, प्रतीरम् ( ४ न ), तटम् ( त्रि ), 'नदीके किनारे' के ५ नाम हैं ।

कूलमिति ॥ कूलयति । 'कूल आवरणे' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । 'कूलं तटे सैन्यपृष्ठे तडागस्तूप [ प ] योरपि' इति हैम [२।४९३] ॥ (१) ॥ * ॥ रुणद्धि । 'रुधिर् आवरणे' ( रु० अ० से० ) । असुन् ( उ० ४।१८९ ) ॥ * ॥ अदन्त [रोध] अपि । 'रोधः प्रोक्तश्च रोधसि' इति संसारावर्तात् । तत्राच् ( ३। १।१३४ ) ॥ ( २ ) ॥ * ॥ तीरयति । 'पारतीर कर्मसमाप्तौ' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । यत्तु मुकुट —तीर्यते तरणकर्म समाप्यतेऽनेनात्र वा । चुरादिण्यन्तात् 'एरच्' (३।३।५६)—इत्याह । तन्न । 'अजब्भ्यां स्त्रीखलनाः' (वा० ३।३।१२६) इति ल्युट्प्रसङ्गात् । 'पुंसि सञ्ज्ञायाम्–' (३।३।११८) इति घप्रसङ्गाच्च । तीरो वङ्गे तीरं पुनस्तटे' इति हैम [ २।४४१ ] ॥ ( ३ ) ॥ * ॥ 'एवं पारम् । प्रतीरमित्युपसर्गान्तरनिवृत्त्यर्थम् ॥ ( ४ ) ॥ * ॥ तटति । 'तट उच्छ्राये' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । स्त्रियां तटी । 'जाते –' (४।१।६३) इति ङीष् ॥ ( ५ ) ॥ * ॥ पञ्च 'तीरस्य' ।

पारावारे परार्वाची तीरे

पारम् ( न ) 'नदीके उधरवाले किनारे' का १ नाम, तथा अवारम् ( न ), 'नदीके इधरवाले किनारे' का १ नाम है ।

पारेति ॥ पार तीरं पारम् । 'पारं प्रान्ते परतटे' इति हैम [ २।४४८ ] ॥ ( १ ) ॥ * ॥ अर्वाक् तीरम् अवारम् । अव अर्यते । 'ऋ गतौ' (भ्वा० प० अ०) । कर्मणि घञ् ( ३।३।११९ ) । न वार् अस्त्यत्र–इति वा । अर्शआद्यच् ( ५।२।१२७ ) ॥ ( १ ) ॥ * ॥ एकैकं 'परतीरावरतीरयो' ।

पात्रं तदन्तरम् ।

पात्रम् (न), 'दोनों किनारोंके मध्य भाग' का १ नाम है ।

पात्रमिति ॥ तयो पारावारयोरन्तरं मध्यम् । पिबन्त्यत्र पान्त्यस्माद्वा । पिबते ['पा पाने' भ्वा० प०अ०]पातेः [ 'पा रक्षणे' अ० प० अ० ] वा ष्ट्रन् (उ० ४।१५९) । 'पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुवर्तिनि' इति हैम [ २।४४९-५० ] ॥ ( १ ) ॥ * ॥ एकं 'तटमध्यवर्तिप्रवाहस्य' ।

द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥

द्वीपम्, अन्तरीपम् ( २ पु न ), 'टापू' के २ नाम हैं ।

द्वीप इति ॥ द्विर्गता अन्तर्गता वा आपोऽत्र । 'ऋक्पूर–' (५।४।७४) इत्य समासान्त. । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६।३।९७) । काकाक्षिवत्'अस्त्रियाम्' इत्युभाभ्यां सबध्यते ॥ (१) ॥ * ॥ ( २ ) ॥*॥ द्वे 'जलमध्यस्थस्थानस्य' ।

तोयोत्थितं तत्पुलिनम्

पुलिनम् ( न ), 'पानीसे शीघ्र निकले हुए किनारे' का १ नाम है ।

तोय इति ॥ पुलति[1] । 'पुल महत्त्वे' (भ्वा० प० से०)। 'तलिपुलिभ्यां च' ( उ० २।५३ ) इतीनन् । [3]त्रिकाण्डशेषे तु 'पुलिनं द्वीपमुच्यते' इत्यभिहितम् ॥ (१) ॥ * ॥ एकं 'जलादचिरनिर्गततटस्य' ।

---

१ अनुपदमेव पठितम् ।

२. अत्र 'पोलति' इति पाठ उचित ।

३. त्रिक ण्डशेषे वचनमिदं नोपलभ्यते ।

सैकतं सिकतामयम् ।

सैकतम्, सिकतामयम् ( २ न ), 'रेतीले स्थान या किनारे' के २ नाम हैं।

सैकतमिति ॥ सिकता सन्त्यस्मिन् । 'सिकताशर्कराभ्यां च' ( ५।२।१०४ ) इति मत्वर्थेऽण् ॥ ( १ ) ॥*॥ सिकतानां विकारः । 'मयड्वैतयो–' ( ४।३।१४३ ) इति मयट् ॥ ( २ ) ॥ * ॥ द्वे 'वालुकामयतटस्य' ।

निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥

निषद्वरः, जम्बालः, पङ्कः (पु न), शादः, कर्दमः (२ पु), 'कीचड़, पङ्क' के ५ नाम हैं।

निषेति ॥ निषीदन्त्यत्र । 'षद्लृ विशरणगत्यवसादनेषु' (भ्वा०, तु० प० अ०) । 'नौ सदे' (उ० २।१२२) इति ष्वरच् । 'सदिरप्रतेः' ( ८।३।६६ ) इति षत्वम् । यद्वा–निषदनम् । संपदादि क्विप् ( वा० ३।३।१०८ ) । निषद आसनस्य वरः आवारकः । 'वृञ् आवरणे' (चु० उ० से०) आधृषीय. । पचाद्यच् (३।१।१३४)। 'निषद्वरः स्मरे' पङ्के निशाया तु निषद्वरी' इति विश्वः [१४४।२३८] ॥ (१) ॥ * ॥ जमति । 'जमु अदने' ( भ्वा० प० से० ) । बाहुलकाद्बालन् । यद्वा–'जम्भ अदने' इति धातुः । भावे घञ् ( ३।३।१८ ) । जम्भम् आलाति । 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'जम्बालः शैवले पङ्के' [ इति मे० १५१।९१-९२ ] ॥ (२) ॥*॥ पच्यते । 'पचि विस्तारे' ( चु० प० से० ) । कर्मणि घञ् ( ३।३।१९ ) । 'हलश्च' ( ३।३।१२१ ) इति करणे वा । 'पङ्कोऽस्त्री कर्दमे पापे' इति मेदिनी [ ३।२९ ] ॥ (३) ॥ * ॥ शीयन्तेऽस्मिन्नस्मिन्नेन वा । 'शद्लृ शातने' ( भ्वा०, तु० प० अ० ) । घञ्(३।३।१२१)। यद्वा–शीयते नश्यति । 'ज्वलितिकसन्तेभ्यो णः' ( ३।१।१४० ) । यद्वा–श्यति । 'शो तनूकरणे' ( दि० प० अ० ) । 'शाशपिभ्यां ददनौ' (उ० ४।९७) इति द । 'शादः कर्दमशष्पयोः' इति हैमः [ २।२३८ ] ॥ (४) ॥*॥ कर्दति । 'कर्द कुत्सिते शब्दे' ( भ्वा० प० से० ) । 'कलिकर्दोरमः' ( उ० ४।८४ ) ॥ ( ५ ) ॥ * ॥ पञ्च 'कर्दमस्य' ।

जलोच्छ्वासाः परीवाहाः

जलोच्छ्वासः, परीवाहः ( २ पु ), 'बढ़े हुए पानी के निकलनेके मार्ग' अर्थात् 'कनवाह' के २ नाम हैं।

जलोच्छ्वासा इति ॥ जलान्युच्छ्वसन्ति परिवहन्त्येभि. । 'श्वस प्राणने' ( अ० प० से० ) । 'वह प्रापणे' ( भ्वा० उ० अ० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'उपसर्गस्य घञि–' ( ६।३।१२२ ) इति वा दीर्घ. । यद्वा–जलानामुच्छ्वसनम् । परिवहनम् । भावे घञ् (३।३।१८)॥ ( १ ) ॥ * ॥ 'परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि' [ इति मे० १७७।३३ ] ॥ (२) ॥*॥ द्वे 'प्रवृद्धजलस्य निर्गममार्गस्य' । 'समधिकजलस्य सर्वतो वहनस्य'वा ।

कूपकास्तु विदारकाः ।

कूपकः, विदारकः ( २ पु ), 'सूखीसी नदियोंमें थोड़ी देर में कुछ पानी इकट्ठा होनेके लिये किये गये गड्ढे' के २ नाम हैं।

कूपका इति ॥ कुत्सिता कूपा । 'कुत्सिते' (५।३।७४) इति कः । कूपस्य प्रतिकृतिः इति वा । 'इवे प्रतिकृतौ' (५।३।९६ ) इति कन् । 'कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे । उदपाने सितायां च (कूपिकाम्भोगतोपले)' [ इति विश्वः १०।९५ ] ॥ (१) ॥*॥ विदार्यन्ते । 'दॄ विदारणे' (क्र्या० प० से०) । णिच् (३।१।२६) । बाहुलकात्कर्मणि ण्वुल् । यद्वा–विदार्यन्ते । कर्मणि घञ् (३।३।१९) । कुत्सिता विदारा । कुत्सायां कः ( ५।३।७४ ) ॥ ( २ ) ॥ * ॥ द्वे 'शुष्कनद्यादौ [ जलार्थं ] कृतगर्तस्य' ।

नाव्यं त्रिलिङ्गं नौतार्ये

नाव्यम् ( त्री ), 'नावसे पार होने योग्य नदी आदि' का १ नाम है।

नाव्यमिति ॥ नावा तार्यम् । 'नौवयोधर्म–' ( ४।४।९१) इति यत् । 'वान्तो यि–' (६।१।७९) इत्यवादेशः ॥ ( १ ) ॥ * ॥ एकं 'नौतरणयोग्यजलस्य' ।

स्त्रियां नौस्तरणिस्तरिः ॥ १० ॥

नौः, तरणिः, तरिः ( ३ स्त्री ), 'नाव' के ३ नाम हैं।

स्त्रियामिति ॥ नुद्यते । 'णुद प्रेरणे' (तु० उ० अ०) । 'ग्लानुदिभ्यां डौः' ( उ० २।६४ ) । यद्वा–नयति । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः । नम् अवति । क्विप् ( ३।२।७६ ) । 'ज्वरत्वर–' (६।४।२०) इत्यूठौ वृद्धि ( ६।१।८९ ) ॥ ( १ ) ॥ * ॥ तरन्त्यनया । 'तॄ प्लवनतरणयोः' (भ्वा० प० से०) । 'अर्तिसृधृधम्यश्यवितॄभ्योऽनिः' (उ० २।१०२)। 'तरणिस्तरणेऽर्केंऽशौ कुमार्योषधिनौकयोः । यष्टावब्धौ' इति हैमः [ ३।२१५ ] ॥ ( २ ) ॥ * ॥ 'अच इः' ( उ० ४।१३९ ) । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीप् वा । तरणी । तरी । 'तरिर्दशायां वेडायां वस्त्रादीनां च पेटके' इति हैमः [ २।४३८ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'नौकायाः' ।

---

१. 'निषद्वरस्तु जम्बाले' इति पा० ।

१. 'नौकायाम्' इति पा० ।

उडुपं तु प्लवः कोलः

उडुपम् ( पु न ), प्लव, कोल ( ३ पु ), 'छोटी नाव' या 'तैरनेके लिये घड़ा, कनस्तर, तुम्बी आदि से बनाये गये साधन-विशेष' के ३ नाम हैं।

उडुपमिति ॥ उडुनो जलात् पाति। 'पा रक्षणे' (अ० प० अ०)। 'सुपि स्थ' (३।२।४) इत्यत्र 'सुपि' इति योगविभागात् क। उडूनीव पाति इति वा। 'उडुपश्चन्द्र-भेलयो' इति धरणि ॥ (१) ॥*॥ प्लवते। 'प्लुङ् गतौ' (भ्वा० आ० अ०)। पचाद्यच् (३।१।१३४)। 'प्लवः प्लक्षे प्लुतौ कपौ। शब्दे कारण्डवे म्लेच्छजातौ भेलक-भेकयो'। क्रमनिम्नमहीभाग कुलके जलवायसे। जलान्तरे प्लव गन्धतृणे मुस्तकभिद्यपि' इति हैम [२।५४१-४३]॥ (२) ॥*॥ कोलति। 'कुल संस्त्याने' (भ्वा० प० से०)। 'ज्वलिति-' (३।१।१४०) इति ण। 'पोतृप्लवकयोः कोडः कोल तु बदरीफलम्' इति शाश्वत। 'कोलो भेलक उत्सङ्गेऽङ्कपाल्या चित्रके किरौ। कोलं तु बदरे कोला-पिप्पल्या 'चव्यभपजे' इति हैम [२।४९३-९४] ॥ (३) ॥*॥ त्रीणि 'तृणादिनिर्मिततरणसाधनस्य'।

स्रोतोऽम्बुसरणं स्वतः।

स्रोत (=स्रोतस्, न), 'सोता' अर्थात् 'पानीके प्राकृतिक निस्सरण' का १ नाम है।

स्रोत इति ॥ स्रवति। 'स्रु गतौ' (भ्वा० प० अ०)। 'स्रुरिभ्या तुट् च' (उ० ४।२०२) इत्यसुन् तुडागम। स्रोतो दन्त्यादि। 'स्रोत सच स्वतस्सलिलम्' इति दन्त्या-दिपूर्ष्मविवेकात्। 'स्रोतोऽम्बुवेग इन्द्रिये' [इति मे० १७३। ४६] ॥ (१) ॥*॥ एकम् 'अकृत्रिमजलवहनस्य'।

आतरस्तरपण्यं स्यात्

आतर ( पु ), तरपण्यम् ( न ), 'खेवाई' अर्थात् 'नावके भाड़े या उतराई' के २ नाम हैं।

आतर इति ॥ आतरत्यनेन। 'पुंसि सज्ञायाम्' (३। ३।११८) इति घ। यत्तु—'ऋदोरप्' (३।३।५७)—इति मुकुट। तन्न। परत्वाल्लघुट प्रसङ्गात्। 'आतरस्तरपण्य स्यादनुत्तरम्' इति पालितः ॥ (१) ॥ * ॥ तरणम्। 'ऋदोरप्' (३।३।५७)। तरस्य पण्यम् ॥ (२) ॥*॥ द्वे 'नद्यादितरणे देयमूल्यस्य'।

द्रोणी काष्ठाम्बुवाहिनी ॥११॥

द्रोणी, काष्ठाम्बुवाहिनी ( २ स्त्री ), 'काठकी बनाई गई छोटी नाव' अर्थात् 'डोंगी' के २ नाम हैं।

द्रोणीति ॥ द्रवति। 'द्रु गतौ' (भ्वा० प० अ०)। 'वहिश्रि-' (उ० ४।५१) इति नि। 'कृदिकारात्-' (ग० ४।१।४५) इति ङीप्। 'द्रोणि काष्ठाम्बुसेचनी, द्रुणिश्च' इति रूपरत्नाकरात् द्रुणिरपि। 'द्रुण हिंसागत्यो' (तु० प० से०)। 'इगुपधात् कित्' (उ० ४।१२०)। [ङीपि द्रुणी। द्रुण्यम्बुद्रोणीकच्छप्यो' इति मेदिनी ४६।१७]। 'द्रोणी काष्ठाम्बुवाहिन्या गवादन्यामपीष्यते' [इति मे० ४६।१८] ॥ (१) ॥ * ॥ पुनःपुनरम्बु वहति। 'बहुलमाभीक्ष्ण्ये' (३।२।८१) इति णिनि ॥ (२) ॥*॥ द्वे 'काष्ठपाषाण-कृतनौकाकाराम्बुसेचन्या'।

सांयात्रिकः पोतवणिक्

सांयात्रिकः, पोतवणिक् ( =पोतवणिज्। २ पु ), 'नाव या जहाजके व्यापारी' के २ नाम हैं।

सायेति ॥ समुदिताना गमन द्वीपान्तरगमन वा सयात्रा। सा प्रयोजनमस्य। तदस्य 'प्रयोजनम्' (५।१। १०९) इति ठञ् ॥ (१) ॥*॥ पोतेनोपलक्षितो वणिक् ॥ (२) ॥*॥ द्वे 'वहित्रगामिनो वणिज'।

कर्णधारस्तु नाविकः।

कर्णधार, नाविकः ( २ पु ), 'पतवार पकड़नेवाले' के २ नाम है।

कर्णेति ॥ 'कर्ण श्रोत्रमरित्र च' इति दुर्ग। तं धरति। 'धृञ् धारणे' (भ्वा० उ० अ०)। 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ नावा तरति। 'नौद्व्यचष्ठन्' (४।४।७) ॥ (२) ॥*॥ द्वे 'नाविकस्य'। 'नौपृष्ठदण्डधारकस्य' इत्यन्ये।

नियामकाः पोतवाहाः

नियामकः, पोतवाह (२ पु), 'मगर, मछली आदि दुष्ट जलजन्तुओंसे जहाजकी रक्षाके लिये जहाजके ऊँचे हिस्सेपर बैठनेवाले' के २ नाम हैं।

नियेति ॥ नियच्छन्ति पोतम्। 'यम नियमने' (भ्वा० प० अ०)। ण्वुल् (३।१।१३३)। 'नियामकः पोतवाहे कर्ण-धारे नियन्तरि' [इति विश्व १७।१८८] ॥ (१) ॥*॥ पोत वहन्ति। 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ द्वे 'वहित्रवाहकस्य'।

कूपको गुणवृक्षकः ॥ १२ ॥

कूपक, गुणवृक्षक ( २ पु ), 'मस्तूल' के २ नाम हैं।

कूपेति ॥ कूपे कायति। 'कै शब्दे' (भ्वा० प० अ०)। 'सुपि-' (३।२।४) इति क ॥ (१) ॥*॥ गुणाना रज्जूनां वृक्ष। 'सज्ञाया कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे 'नौ-मध्यस्थरज्जुबन्धनकाष्ठस्य'। नौबन्धनकीलकस्येत्यन्ये।

१ 'च विभेपजे' इति पा०।

नौकादण्डः क्षिपणी स्यात्

नौकादण्डः (पु), क्षिपणी (स्त्री), 'डाँडे' २ नाम हैं।

नौकेति ॥ नौकाया दण्ड. ॥ (१) ॥*॥ क्षिप्यतेऽनया। 'क्षिपे. किच्च' (उ० २।१०७) इत्यनि ॥*॥ बाहुलकाद् गुणे क्षेपणिरपि। 'क्षेपणं प्रेरणे, नौकादण्डजालमिदो स्त्रियाम्' [ इति मे० ४८।४५ ] ॥(२)॥*॥ द्वे 'नौकापार्श्वद्वयवद्धचालनकाष्ठस्य'।

अरित्रं केनिपातकः।

अरित्रम्, केनिपातकः (२ पु), 'पतवार' के २ नाम हैं।

अरित्रमिति ॥ ऋच्छत्यनेन। 'ऋ गतौ' (भ्वा० प० अ०)। 'अर्तिलूधू–' (३।२।१८४) इतीत्र ॥ (१) ॥*॥ के जले निपातोऽस्य। 'हलदन्तात्–' (६।३।९) इत्यलुक्। 'शेषात्–' (५।४।१५४) इति कप्। 'संज्ञायां कन्' (५।३।७५) वा ॥ (२) ॥*॥ द्वे 'नौपृष्ठस्यचालनकाष्ठस्य'।

अभ्रिः स्त्री काष्ठकुद्दालः

अभ्रिः (स्त्री), काष्ठकुद्दालः (पु), 'जहाज आदि के कतवार आदिको हटाने के लिये काष्ठके बनाये कुदाल' के २ नाम हैं।

अभ्रिरिति ॥ अभ्रति। 'अभ्र गतौ' (भ्वा० प० से०)। इन् (उ० ४।११८ ॥ (१) ॥*॥ कुम् उद्दालयति। 'दल विशरणे' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। शाकपार्थिवादि (वा० ६।१।९४)। काष्ठस्य कुद्दाल. ॥(२)॥*॥ द्वे 'पोतादेर्मलापनयनार्थं काष्ठादिरचितकुद्दालस्य'।

सेकपात्रं तु सेचनम् ॥ १३ ॥

यानपात्रं तु पोतोऽब्धिभवे त्रिषु समुद्रियम् [ ४६ ]
सामुद्रिको मनुष्योऽब्धिजाता सामुद्रिका च नौः [४७]

सेकपात्रम्, सेचनम् (२ न), 'नाव, जहाज इत्यादिमें एकत्रित हुए पानीको फेंकने के लिये चमड़ा आदिके थैले या मशक' के २ नाम हैं।

[ पोतः (पु), 'जहाज' का १ नाम है। समुद्रियम् (त्रि), 'समुद्रमें होनेवाले पदार्थ' का १ नाम है। सामुद्रिकः (पु), 'समुद्रके मनुष्य' का १ नाम है। सामुद्रिका (स्त्री), 'समुद्र में जानेवाली नाव' का १ नाम है।]

सेकेति ॥ सेकस्य पात्रम् ॥ (१) ॥*॥ सिच्यतेऽनेन। 'करणा–' (३।३।११५) इति ल्युट्। 'सेचनं रक्षणे सेके नौकाया.[1] सेकभाजने' इति विश्व-मेदिन्यौ [ ८८।४०, ९४। ५६ ] ॥ (२) ॥*॥ द्वे 'नौस्थजलनि.सारणपात्रस्य'।

१. विश्वे 'नौकासेचनभाजने' इति पा०।

क्लीबेऽर्धनावं नावोऽर्धे

अर्धनावम् (न), 'नावके आधे हिस्से' का १ नाम है।

क्लीब इति ॥ नावोऽर्धम्। 'अर्धं नपुंसकम्' (२।२।२) इति तत्पुरुषः। 'नावो द्विगो' (५।४।९९) 'अर्धाच्च' (५। ४।१००) इति टच् ॥ (१) ॥*॥ एकम् 'अर्धनौकायाः'।

अतीतनौकेऽतिनु त्रिषु।

अतिनु (त्रि), 'नावकी अपेक्षा अधिक वेग से चलने वाले मनुष्य या पानीके बहाव आदि' का १ नाम है।

अतीतेति ॥ अतीता नौर्येन। 'उर प्रभृतिभ्य–' (५। ४।१५१) इति कप् ॥ (१) ॥*॥ नावमतिक्रान्तम्। 'अत्यादय –' (वा० २।३।१८) इति तत्पुरुष। अतिनौः पुमान् स्त्री वा ॥ (२) ॥*॥ द्वे 'नौकामतिक्रान्तजलादे.'।

त्रिष्वागाधात्

यहाँसे लेकर 'अगाधमतलस्पर्शं' (१।१०।१५)' के पहले तक 'त्रिषु' शब्द का अधिकार होनेसे सब शब्द त्रिलिङ्ग हैं।

त्रिष्विति ॥ अगाधम् [ अ० १।१०।१५ ] अभिव्याप्य त्रिषु।

प्रसन्नोऽच्छः

प्रसन्नः, अच्छः (२ त्रि), 'साफ, निर्मल पानी आदि' के २ नाम हैं।

प्रसन्न इति ॥ प्रासदत्। 'षद्लृ विशरणादौ' (भ्वा०, तु० प० अ०)। 'गत्यर्थ–' (३।३।७२) इति क्त.। 'प्रसन्ना स्त्री सुरायां 'स्यादच्छसतुष्टयोस्त्रिषु'[1] [ इति मे० ८९।८६ ] ॥ (१) ॥*॥ 'छो छेदने' (दि० प० अ०)। न च्छ्यति दृष्टिम्। 'सुपि–' (३।२।४) इति क.। न च्छाद्यते वा। 'अन्येष्वपि–' (३।२।१०१) इति ड। 'अच्छो भल्लूके स्फटिकेऽमलेऽच्छा'[2]ऽभिमुखेऽव्ययम्' इति हैम. [२। ६२] ॥ (२)॥*॥ द्वे 'निर्मलस्य'।

कलुषोऽनच्छ आविलः ॥ १४॥

कलुषः, अनच्छः, आविलः (३ त्रि), 'गन्दे पानी आदि' के २ नाम हैं।

कलुष इति ॥ लुषति। 'लुष हिंसायाम्' 'इगुपध–' (३।१।१३५) इति क.। कस्य जलस्य लुषो घातकः। 'कलुषं त्वाविले पापे' इति विश्व ॥ (१)॥*॥ भिन्नोऽ-

१. 'स्यात् स्वच्छसतुष्टे' पा०।

२ 'च्छोऽभिमुखेऽव्ययम्' इति पा०।

३ पाठोऽयं मेदिनीस्थ (१९८।३४)। विश्वे तु नोपलभ्यते।

च्छात् । नञ्तत्पुरुष । 'नलोपो नञः' (६।३।७३) । 'तस्मान्नुडचि' ( ६।३।७४) ॥ (२) ॥ * ॥ आविलति । 'विल भेदने' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क. ॥ ( ३ ) ॥ * ॥ त्रीणि 'मलिनजलस्य' ।

निम्नं गभीरं गम्भीरम्

निम्नम्, गभीरम्, गम्भीरम् ( ३ त्रि ), 'गम्भीर, गहरे' के ३ नाम हैं।

निम्नमिति ॥ निमनति । 'म्ना अभ्यासे' (भ्वा० प० अ०) । 'आतश्च' (३।१।१३६) इति क ॥(१)॥*॥ गाते जलजन्तवोऽत्र । गच्छन्ति वा । गाङ् गतौ' (भ्र० आ० अ०), 'गम्लृ गतौ' (भ्वा० प० से०)। 'गभीरादयश्च' इति 'गम्भीरगम्भीरौ' ( उ० ४।३५ ) इति वा निपातितौ ॥ ( २ ) ॥ * ॥ ( ३ ) ॥ * ॥ त्रीणि 'गम्भीरस्य' ।

उत्तानं तद्विपर्यये ।

उत्तानम् ( त्रि ), 'थाह, उथला या छिछिल' का १ नाम है।

उत्तानमिति ॥ उद्गतस्तानो विस्तारोऽस्मात् ॥ (१) ॥ * ॥ तस्य गम्भीरस्य विपर्यये । 'उत्तानमगभीरे स्यादूर्ध्वास्यशयिते त्रिषु' [इति मे० ८५।४०] ॥ (१) ॥ * ॥ एकम् 'उत्तानस्य' ।

अगाधमतलस्पर्शे

अगाधम्, अतलस्पर्शम् ( २ त्रि ), 'अथाह, बहुत गहरे' के २ नाम हैं।

अगाधमिति ॥ नास्ति गाध स्थितिरत्र । 'नञोऽस्त्यर्थानाम्–' ( वा० २।२।२४) इति बहुव्रीहि ॥ (१)॥*॥ तलस्याधोभागस्य स्पर्श, न सोऽत्र । 'अगाधमतलस्पर्शे त्रिषु, श्वभ्रे नपुंसकम्' [इति मे० ८०।२७] ॥ (२) ॥*॥ द्वे 'अतिनिम्नस्य' ।

कैवर्ते दाशधीवरौ ॥ १५ ॥

कैवर्तः, दाशः, धीवरः ( ३ पु ), 'मल्लाह' के ३ नाम हैं।

कैवर्त इति ॥ के जले वर्तन्ते । 'वृतु वर्तने'(भ्वा० आ० से०) । पचाद्यच् ( ३।१।१३४ ) । केवर्तनाना मत्स्यानामयं घातक । 'तस्येदम्' ( ४।३।१२० ) इत्यण् ( १ ) ॥*॥ दशति मत्स्यान् । 'दश दशने' (भ्वा० प० अ०) । 'दशेश्च' (उ० ५।११) इति टटनौ न आ च । यद्वा–दाश्यते मूल्यमस्मै । 'दाशृ दाने' (भ्वा० उ० से०) । घञ् (३।३।१८)। 'दाशो क्षपे, धीवर एव दाशः' इति धर्मदासालन्यान्त । 'कैवर्तभृत्ययोर्दासो दासो धाणा च चेटिका' इति रभाड्न्यान्त [दास.] । 'दासो भृत्ये च शूद्रे च [१]ज्ञानेऽर्थिनि च धीवरे' [ इति मे० १७०।४ ] ॥ ( २ ) ॥ * ॥ दधाति मत्स्यान् । 'छित्वरछत्वर–' ( उ० ३।१ ) इति निपातित ॥ ( ३ ) ॥*॥ त्रीणि 'धीवरस्य' ।

आनायः पुंसि जालं स्यात्

आनायः ( पु ), जालम् ( न ), 'जाल' के २ नाम हैं।

आनाय इति ॥ नयनम् । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । 'श्रिणीभुव –' ( ३।३।२४ ) इति घञ् । आसमन्तान्नायोऽनेन । आनयन्ति मत्स्यान् अनेन । 'जालमानाय.' (३।३।१२४) इति घञन्तो निपातितो वा ॥ (१) ॥*॥ जले क्षियते । 'क्षेपे' ( ४।२।९२ ) इत्यण् । जलति घनीभवति । 'जल धान्ये' (भ्वा० प० से०) 'ज्वलिति–'( ३।१।१४० ) इति ण । 'जालं वृन्दगवाक्षयो । क्षारकानायदम्भेषु, नीपे ना, स्त्री तु घोषके' इति रभस ॥ (२) ॥*॥ द्वे [१]'शणसूत्रजालस्य' ।

शणसूत्रं पवित्रकम् ।

शणसूत्रम्, पवित्रकम् ( २ न ), 'सुतलीके बने हुए जाल' के २ नाम हैं।

शणेति । शणति । 'शण गतौ' (भ्वा० प० से०)।पचाद्यच् ( ३।१।१३४ ) । शणस्य सूत्रम् ॥ ( १ ) ॥ * ॥ पवित्रमुपवीतम् । तदिव । 'इवे प्रतिकृतौ' ( ५।३।९६ ) इति कन् । पवित्राद्विपरीतलक्षणया संज्ञाया कः (५।३।७५) ( २ ) ॥ * ॥ द्वे 'शणसूत्रजालस्य' ।

मत्स्याधानी कुवेणी स्याद्

मत्स्याधानी, कुवेणी ( २ स्त्री ), 'मछलियोंको पकड़कर रखनेवाले बर्तन' के २ नाम हैं।

मत्स्येति ॥ मत्स्या आधीयन्तेऽत्र । 'डुधाञ् धारणपोषणयो ' (जु० उ० अ०) । 'करणाधिकरणयो –' (३।३।११७ ) इति ल्युट् ॥ ( १ ) ॥ * ॥ कुत्सितं वेणन्त्येऽस्या मत्स्या. । 'वेणृ गतौ' ( भ्वा० उ० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । गौरादिङीष् ( ४।१।४१ ) ॥ ( २ ) ॥ * ॥ द्वे 'मत्स्यस्थापनपात्रस्य' ।

बलिशं मत्स्यवेधनम् ॥ १६ ॥

बलिशम्, मत्स्यवेधनम् ( २ न ), 'बंसी अर्थात् लोहेके बने हुए मछली फँसानेके साधन-विशेष' के २ नाम हैं।

बलिशमिति ॥ बलिनो मत्स्यान् श्यति । 'शो तनूकरणे' (दि० प० अ०) । 'आतोऽनुप–' (३।२।३) इति क ॥ * ॥ डलयोरैक्याद् 'बडिशम्' अपि । स्त्रियां बडिशापचये तु बडिशी ॥ (१) ॥*॥ विध्यतेऽनेन । 'विध विधाने' (तु० प० से०) । 'करणा–' ( ३।३।११७ ) इति ल्युट् । मत्स्याना वेधनम् ॥ (२) ॥*॥ द्वे 'मत्स्यवेधनस्य' ।

१. 'ज्ञातात्मनि च' इति पा० ।

१. अग्रे 'द्वे शणसूत्रजालस्य' इति वक्ष्यमाणतयाऽत्र 'द्वे जालमात्रस्य' इत्युचितम् ।

**पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः।
विसारः शकली च**

पृथुरोमा ( =पृथुरोमन् ), झषः, मत्स्य, मीनः, वैसारिणः, अण्डजः, विसारः, शकली ( =शकलिन् । ८ पु ), 'मछली' के ८ नाम हैं।

पृथ्विति ॥ पृथूनि रोमाण्यस्य । रोम पक्षोऽत्र–इति स्वामी । वल्कलम्–इति सर्वधर. ॥ ( १ ) ॥ * ॥ झषति 'झष हिंसार्थ.' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) यद्वा–झष्यते । 'खनो घ च' ( ३।३।१२५ ) इति घ । मुकुटस्तु—'पुंसि' (३।३।११८) इति घ –इत्याह । तन्न । 'हलश्च' (३।३।१२१) इति घस्तत्रयाधरत्वात् । 'करणाधिकरणयो –' ( ३।३।११७ ) इत्यनुवर्तनाच्च । 'झषा नागबलायां स्त्री, तापमत्स्याटवीषु ना' [ इति मे० १६६।१२ ] ॥ ( २ ) ॥*॥ माद्यति । 'मदी हर्षे' ( दि० प० से० ) । 'ऋतन्यञ्जि–' (उ० ४।२) इति स्यन् । 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' [ इति मे० ११६।४५ ] ॥ ( ३ ) ॥*॥ मीनाति, मीयते वा । 'मीञ् हिंसायाम्' (क्र्या० उ० से०) । 'फेनमीनौ' (उ० ३।३) इति निपातित । [मीनो राश्यन्तरे झषे' इति मे० ८३।१५] ॥ (४) ॥*॥ विविधं सरति । 'सृ गतौ' (भ्वा० प० अ०) ग्रहादित्वाण्णिनि । विसारी । 'विसारिणो मत्स्ये' (५।४।१६) इति स्वार्थेऽण् ॥ ( ५ ) ॥*॥ अण्डाज्जायते स्म । 'जनी प्रादुर्भावे' (दि० आ० से०) । 'पञ्चम्यामजातौ' ( ३।२।९८ ) इति ड । **'अण्डजो** मृगनाभौ, ना' सरटेऽहौ खगे झषे' इति मेदिनी [ ३१।१८ ] ॥ ( ६ ) ॥*॥ विशेषेण सरति । 'सृ गतौ' ( भ्वा० प० अ० ) । 'व्याधिमत्स्यबलेषु' ( वा० ३।३।७ ) इति घञ् ॥ ( ७ ) ॥ * ॥ शकलमस्यास्ति । अत इनि. ( ५।२।११५ ) । **'शकलं** वल्कलेऽर्धे च' इति तालव्यादावजयः ॥ ( ८ ) ॥*॥ अष्टौ 'मत्स्यसामान्यस्य' ।

**अथ गडकः शकुलार्भकः ॥ ७ ॥**

गडकः, शकुलार्भकः ( २ पु ), 'गडक मछली' के २ नाम हैं ।

अथेति ॥ गडति । 'गड सेचने' (भ्वा० प० से०) । 'क्वुन् शिल्पसंज्ञयो.' ( उ० २.३२ ) । ( [२]पचाद्यचि ३।१।१३४, गडोऽपि ) । **'गडो** मीनान्तराययो' [इति हैम २।११७] ॥ ( १ ) ॥ * ॥ शकुलोऽत्र मत्स्यमात्रे– इति स्वामी । तस्यार्भक. ॥ (२) ॥*॥ द्वे 'मत्स्यविशेषस्य' ।

**सहस्रदंष्ट्रः पाठीनः**

सहस्रदंष्ट्रः, पाठीनः ( २ पु. ), 'पहिना मछली' अर्थात् 'बहुत दाँत वाली पहिनानामक एक प्रकार की मछली या पोठिया मछली के २ नाम हैं।

सहेति ॥ सहस्रं दंष्ट्रा यस्य ॥ ( १ ) ॥ * ॥ पाठीं पृष्ठं नमयति । 'णम प्रह्वत्वे' ( भ्वा० प० अ० ) । णिच् (३।१।२६) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घ । अवश्यं पठति । 'पठ व्यक्तायां वाचि' (भ्वा० प० से०) । आवश्यके णिनि ( ३।३।१७० ) । पाठी द्विज. । तस्येन इवापेक्षित , हव्यकव्ययो प्रशस्तत्वाद्वा । **'पाठीनो** गुग्गुलद्रुमे । पाठके मीनभेदे च' इति हैम [ ३।४१९-२० ] ॥ ( २ ) ॥ * ॥ द्वे 'बहुदंष्ट्रस्य मत्स्यस्य' ।

**उलूपी शिशुकः समौ ।**

उलूपी ( =उलूपिन् ), शिशुकः (२ पु), 'सूंस' के २ नाम हैं।

उलूपीति ॥ उ विस्मयजनकं रूपमस्यास्ति । अत इनिः ( ५।२।११५ ) । रलयोरैक्यम् । ओ शंभो रूप–उरूपमस्यास्ति, इति वा ॥ ( १ ) ॥ * ॥ शिशु शिशुमार. । तस्य प्रतिकृतिरिव । 'इवे प्रतिकृतौ' ( ५।३।९६ ) इति कन् । **'शिशुकः** शिशुमारे स्याद्बालकोलूपिनोरपि' [ इति मे० १४।१६४ ] ॥ ( २ ) ॥ * ॥ द्वे 'शोशु इति ख्यातमत्स्यविशेषस्य' ।

**नलमीनश्चिलिचिमः**

नलमीनः, चिलिचिमः (२ पु), 'नरकटमें रहने वाली एक प्रकार की मछली' के २ नाम हैं।

नलेति ॥ नलवनस्थो मीन. । नडाभो मीन इति वा ॥ * ॥ 'तलमीन ' इति केचित्पठन्ति ॥ ( १ ) ॥ * ॥ 'चिल विलसने' (तु० प० से०) । 'इगुपधात्कित्' (उ० ४।१२० ) । वीप्साया द्वित्वम् ( ८।१।४ ) । चिलिं चिलिं विलास मिमीते । 'माङ् माने' (जु० आ० अ०) । 'आतोऽनुप–' ( ३।२।३ ) इति क । ( पृषोदरादि ) ( ६।३।१०९ ) । चीकारोऽदन्त [ चिलिचिम ] । 'नलमीनश्चिलीचिमो वृहन्मीनोऽब्धिजस्तिमि ' इति रत्नमाला । 'लक्ष्मणा सारसी क्रौञ्ची नलमीनश्चिलीचिमिः' इति बोपालिताच्चतुरिकारवान्मध्यदीर्घ इदन्तोऽपि ॥ ( २ ) ॥*॥ द्वे 'नलवनचारिणो मत्स्यविशेषस्य' ।

**प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥**

प्रोष्ठी ( स्त्री ), शफरी ( पु स्त्री ), 'सहरी या पोटिया मछली' के २ नाम हैं।

प्रोष्ठीति ॥ प्रकृष्ट ओष्ठोऽस्या । 'ओत्वोष्ठयोः' (वा० ६।१।९४) इति पररूपम् । 'नासिकोदरौष्ठ–' ( ४।

१. 'स्यात्' इति पा० ।
२. कोष्ठस्थ. पाठः निर्णयसागरीयः ।

१।५५) इति 'जाते –' (४।१।६३) इति वा, ङीप् । द्वयो इत्यनेन सम्बन्धात् 'प्रोष्ठ' अपि ॥ ( १ ) ॥ * ॥ शफ राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' (३। २।३ ) इति क । 'जाते –' (४।१।६३) इति ङीष् । पुंसि शफर ॥ ( २ ) ॥ * ॥ द्वे 'मत्स्यविशेषस्य' ।

क्षुद्राण्डमत्स्यसंघातः पोताधानम्

पोताधानम् ( न ), 'अण्डे से निकले हुए मछलियों के छोटे-छोटे बच्चों के समुदाय' का १ नाम है ।

क्षुद्रेति ॥ क्षुद्रादण्डाज्जाता मत्स्या –क्षुद्राण्डमत्स्या । तेषा सघात ॥ (१) ॥*॥ पोते वहित्रे आधीयते । धाञ (जु० उ० अ०) कर्मणि ल्युट् (३।३।११३), यद्वा–पोतोऽर्भक आधीयतेऽत्र । अधिकरणे ल्युट् ( ३।३।११७ ) ॥ ( २ ) ॥ * ॥ द्वे 'अण्डादचिरनिर्गतमत्स्यसङ्घस्य' ।

अथो झषाः ।

रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥
तिमिङ्गिलादयश्च

अथ मछलियों के 'भेद' को कहते हैं अर्थात् वक्ष्यमाण शब्द पर्याय नहीं हैं ।

रोहितः, मद्गुरः, शालः, राजीवः, शकुलः, तिमिः, तिमिङ्गिलः ( ७ पु ) 'रोहू, मोंगरा, शाल, धरारी, शकुल, तिमि, तिमिङ्गिल' आदि 'मछलियों के भेद' हैं ।

अथविति ॥ अथो झषविशेषा उच्यन्ते । रोहति । 'रुह बीजजन्मनि प्रादुर्भावे च' ( भ्वा० प० अ० ) । 'रुहे रश्च लो वा' ( उ० ३।९४ ) इतीतन् । रोहणम् । घञ् (३।३। १८ ) । रोहो जातोऽस्य । तारकादित्वात् ( ५।२।३६ ) इतज्वा । 'रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे लोहितकद्रुमे'[१] [इति मे० ६५।१४६-४७] ॥ (१) ॥*॥ मज्जति । 'टुमस्जो शुद्धौ' (तु० प० अ०) । 'मद्गुरादयश्च' ( उ० १।४१ ) इति निपातित ॥ (१) ॥*॥ शाडयते । 'शाडृ श्लाघायाम्' (भ्वा० आ० से०) । कर्मणि घञ् ( ३।३।१९ ) । डलयोरैक्यम् । 'शालो झषे, धीवर एव दाश' इत्यूष्मभेदात्तालव्यादि [शाल ]। ('कैवर्त[२] इव बद्धराजीवोत्पलसालो वसन्तकाल' इति वासवदत्ताश्लेषाद्दन्त्यादिश्च[साल ]। कैवर्तपक्षे–सालो मत्स्यभेद । वसन्तपक्षे–साल पुष्पम्) । साल पुष्पे क्लीब वृक्षे तु पुमान् । 'पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयो' इति रभसे तु दन्त्यादि [ साल ] । 'शालो हाले मत्स्यभेदे शालोकस्तत्प्रदेशयो.' इति हैम [२।५२३-२४ ] ॥ ( १ ) ॥*॥ राजी रेखास्यास्ति । 'अन्यत्रापि दृश्यते' ( ५।२।१०९ ) इति व. । 'अथ राजीवो मीनसारङ्गभेदयो । राजीवमब्जे' इति हैम [ ३।७४७ ] ॥ ( १ ) ॥ * ॥ शक्नोति गन्तु वेगेन । 'शक्लृ शक्तौ' (स्वा० प० अ०) । बाहुलकादुलच् ॥ (१) ॥*॥ ताम्यति । 'तमु ग्लानौ' (दि० प० से०) । 'क्रमितमिशतिस्तम्भामत इच्च' ( उ० ४।१२२ ) इतीन् ॥ (१) ॥ * ॥ तिमिं गिरति । 'गॄ निगरणे' ( तु० प० से० ) । 'मूलविभुजा–' (वा० ३।२।५) इति क । 'अचि विभाषा' ( ८।२।२१ ) इति ल । 'गिलेऽगिलस्य' (वा० ६।३।७०) इति नुम् ॥ ( १ ) ॥ * ॥ आदिशब्दात् तिमिङ्गिलगिलनन्दोवर्तादय. ॥*॥ पृथगेकैकम् 'मत्स्यविशेषाणाम्' ।

अथ यादांसि जलजन्तवः ।

यादः ( =यादस्, न ), जलजन्तुः ( पु ), 'जलमें रहनेवाले जीव' के २ नाम हैं ।

अथेति ॥ यान्ति वेगेन । 'या प्रापणे' (अ० प० अ०)। असुन् ( उ० ४।१८९ ) । बाहुलकाद्दुक् । यद्वा–याति । क्विप् ( ३।२।१७८ ) । यामत्ति । 'अद भक्षणे' ( अ० प० अ० ) । असुन् ( उ० ४।१८९ ) । या दस्यति वा । 'दसु उपक्षये' (दि० प० से०) । क्विप् ( ३।२।१७८ ) । साहचर्यस्य सर्वत्रानियामकत्वात् 'सान्त–' ( ६।४।१० ) इति दीर्घ ॥ ( १ ) ॥ *॥ जलाना जन्तव ॥ (२) ॥*॥ द्वे 'जलचरमात्रस्य' ।

तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥

शिशुमारः, उद्रः, शंकुः, मकरः ( ४ पु ), आदि 'जलमें रहनेवाले जीव' हैं ।

तद्भेदा इति ॥ तेषा जलजन्तूना भेदा उच्यन्ते ॥ शिशून् मारयति । 'मृङ् प्राणत्यागे' (तु० आ० अ०) । णिच् (३। २।२६) । 'कर्मण्यण्' ( ३।२।१ ) । 'शिशुमारोऽम्बुसंभूतजन्तौ तारात्मकाच्युते' इति विश्व-मेदिन्यौ [ १४६।२६०, १४४।२९९] ॥(१)॥*॥ उनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) । 'स्फायि–' ( उ० २।१३ ) इति रक् ॥ (१) ॥ * ॥ शङ्कतेऽस्मात् । 'शकि शङ्कायाम्' ( भ्वा० आ० से० ) । 'खरुशङ्कुपीयु–' (उ० १।३६) इति निपातित । 'शङ्कुः पत्रशिराजाले संख्याकीलकशंभुषु । यादोऽस्त्रभेदयोर्मेढ्रे' इति हैम. [ २।१८ ] ॥ ( १ ) ॥ * ॥ कृणाति । 'कॄ हिंसायाम्' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४)। मनुष्याणा कर । पृषोदरादि ( ६।३।१०९ ) । यद्वा– मङ्कते । 'मकि भूषायाम्' (भ्वा० आ० से०) । अच् (३।१।१३४ ) । आगमशास्त्रस्यानित्यत्वान्न नुम् । मक राति । 'रा दाने' ( अ० प० अ० ) । क ( ३।२।३ ) । 'मकरो निधौ । नक्रे राशिविशेषे च' इति हैम [ ३।६२१-२२ ] ॥ (१) ॥ * ॥ आदिना ग्राहकुम्भीरादय ॥*॥ पृथक्पृथक् 'जलजन्तुविशेषाणाम्' ।

१ 'रोहितकद्रुमे' इति पा० ।
२. कोष्ठस्थ पाठ निर्णयसागरीय ।

स्यात्कुलीरः कर्कटकः

कुलीरः, कर्कटकः ( २ पु ), 'केकड़े' के २ नाम हैं।

स्यादिति ॥ कुलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'गम्भीरादयश्च' इतीरन् । कौ लीयते । 'लीङ् श्लेषणे' ( दि० आ० अ० ) । बाहुलकाद् रक् । यद्वा—कुलमस्यास्ति । अत इनि (५।२।११५) । तमीरयति । 'कर्मण्यण्' (३।२।१) । जनकभक्षकत्वात् । लयनम्—ली । संपदादि (वा० ३।३।१०८) । कुत्सिता ली । तां राति वा ॥ (१) ॥*॥ कृणाति । 'कॄ हिंसायाम्' ( क्र्या० प० से० )। 'अन्येभ्योऽपि—' ( ३।२।७५ ) इति विच् । कटति । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४)। कर् चासौ कटश्च । 'अहरादीनां पत्यादिषु वा रेफः' (वा० ८।२।७०) । ततः स्वार्थे कन् ( ५।३।७४ ) । 'कर्क' इति सौत्रो धातुः । 'दाकादिभ्योऽटन्' (उ० ४।८१) वा । कर्कं श्वेतवर्णं टलति । 'टल गतौ' (भ्वा० प० से०) । डः (वा० ३।२।१०१ ) वा । कर्कटः । 'अथ कर्कटः । कुलीरे करणे स्त्रीणां राशौ खगे' इति हैमः [३।१५४] ॥ (२) ॥ * ॥ द्वे 'कुलीरस्य' ।

कूर्मे कमठकच्छपौ ।

कूर्मः, कमठः, कच्छपः ( ३ पु ), 'कछुए' के ३ नाम हैं।

कूर्म इति ॥ कुत्सित कौ वा ऊर्मिर्वेगोऽस्य । 'अच्प्रत्यन्वव—' ( ५।४।७५ ) इत्यत्र 'अच्' इति योगविभागादच् समासान्तः । 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः' इति रभसः ॥ (१) ॥*॥ काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'कमेरठः' (उ० १।१००) । के जले मठति, इति वा । 'मठ मदनिवासयोः' (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' [ इति मे० ३९।१२ ] ॥ ( २ ) ॥ * ॥ कच्छेन पिबति । 'पा पाने' (भ्वा० प० अ०) । 'सुपि—' (३।२।४) इति योगविभागात् कः । 'कच्छपी वल्लकीभेदे दुली क्षुद्रगदान्तरे । पुंसि विध्यन्तरे कूर्मे मल्लबन्धान्तरेऽपि च' इति विश्व¹-मेदिन्यौ ॥ ( ३ ) ॥ * ॥ त्रीणि 'कूर्मस्य' ।

ग्राहोऽवहारः

ग्राहः, अवहारः ( पु ), 'ग्राह' अर्थात् 'घड़ियाल' के २ नाम हैं।

ग्राह इति ॥ गृह्णाति । 'ग्रह उपादाने' ( क्र्या० उ० से० ) । 'विभाषा ग्रहः' ( ३।१।१४३ ) इति णः । 'ग्राहो ग्रहे जलचरे' इति हैमः [ २।६११ ] ॥ ( १ ) ॥ * ॥ अवहरति । अवपूर्वो हृञ् [ 'हृञ् हरणे' भ्वा० प० अ० ] । 'श्याद्व्यधा—' ( ३।१।१४१ ) इति णः । 'अवहारस्तु युद्धादिविश्रान्तौ ग्राहचौरयोः । निमन्त्रणोपनेतव्ये' इति हैमः [ ४।२४३-४४ ] ॥ ( २ ) ॥ * ॥ द्वे 'ग्राहस्य' ।

नक्रस्तु कुम्भीरः

नक्रः, कुम्भीरः ( २ पु ), 'नाक' अर्थात् 'ग्राह के भेद, जलचर-विशेष' के २ नाम हैं।

नक्र इति ॥ कामति दूरस्थलम् । 'क्रमु पादविक्षेपे' (भ्वा० प० से० ) । 'अन्यत्रापि—' (वा० ३।२।४८) इति डः । 'नभ्राड्—' (६।३।७५) इति नलोपो न । 'नक्रं नासाग्रदारुणोः । नक्रो यादसि' इति हैमः [ २।४४६ ] ॥ (१) ॥ * ॥ कुम्भिनं हस्तिनमीरयति । 'कर्मण्यण्' (३।२।१)॥ ( २ ) ॥ * ॥ द्वे 'नक्रस्य' ।

अथ महीलता ॥ २१ ॥

गण्डूपदः किंचुलुकः

महीलता (स्त्री), गण्डूपदः, किम्चुलुकः ( २ पु ), 'केंचुआ' के ३ नाम हैं।

अथेति ॥ मह्या लतेव । कृशत्वदीर्घत्वाभ्याम् ॥ (१) ॥*॥ गण्डवो ग्रन्थयः पदान्यस्य ॥ (२) ॥ * ॥ किंचिच्चुलुम्पति । 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' (वा० ३।१।३५ ) इति वार्तिकलिङ्गिश्चुलुम्पधातुः । 'अन्येभ्योऽपि—' ( वा० ३।२।१०१ ) इति डः । 'टेः' (६।४।१४३) इति उकारमकारपकाराणां लोपः । ततः 'संज्ञायां कन्' ( ५।३।७५ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'केचुवा' इति ख्यातस्य ।

निहाका गोधिका समे ।

निहाका, गोधिका ( २ स्त्री ), 'गोह' के २ नाम हैं।

निहाकेति ॥ नियतं जहाति भुवम् । 'नौ हश्च' ( उ० ३।४४) इति हाकः ['ओहाक् त्यागे' जु० प० अ०] कन् । बाहुलकान्न ह्रस्वः ॥ ( १ ) ॥ * ॥ गुध्यति । 'गुध परिवेष्टने' ( दि० प० से० ) । ण्वुल् (३।१।१३३) । (पचाद्यचि ३।१।१३४) गोधापि । 'गोधा तलनिहाकयोः' [इति मे० ७९।६ ] ॥ ( २ ) ॥ * ॥ द्वे 'गोह' 'जलगोधिका' इति ख्यातायाः ।

रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २२ ॥

रक्तपा, जलौका, जलौकसः (=जलौकस् नि० ब०, ३ स्त्री), 'जोंक' के ३ नाम हैं।

रक्तपेति ॥ रक्तं पिबति । 'आतोनुप—' ( ३।२।३ ) इति कः । 'रक्तपा स्याज्जलौकायां डाकिन्यां, ना तु राक्षसे' [ इति मे० १०३।२१ ] ॥ ( १ ) ॥ * ॥ जलमोकोऽस्याः । 'ओक उच कें' ( ७।३।६४ ) इति निपातितोऽदन्त

---

१. पाठोऽयमविकलं मेदिन्याम् ( १०३।१६ ) उपलभ्यते । विश्वे त्वेवं पाठः—'कच्छपी वल्लकीभेदे दुली क्षुद्रगदान्तरे । मल्लबन्धविशेषेऽपि कच्छपः कुणपी पुनः ॥' (१०५।१९-२०) ।

घोकशब्द ॥ (२) ॥*॥ सान्तोऽपि । 'जलोरगी जलोका तु जलौका च जलौकसि' इति संसारावर्ताद् बहुवचनं प्रायिकम् । 'जलौकापि जलोका स्याज्जलूका जलजन्तुका' इति तारपाल ॥ ( ३ ) ॥ * ॥ त्रीणि 'जलूकायाः' [ 'जोंक' इति ख्यातायाः ] ।

मुक्तास्फोटः स्त्रियां शुक्तिः

मुक्तास्फोट (पु), शुक्ति (स्त्री), 'सितुही, सीप' के २ नाम हैं।

मुक्तेति ॥ मुक्ता स्फुटन्त्यत्र । 'स्फुट विकसने' ( तु० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् ॥ (१) ॥ * ॥ शुच्यति शोचति शोच्यति, वा । 'शुच्य अभिषवे' (भ्वा प० से०) । 'शुच शोके' (भ्वा० प० से०) । शुक्ति गतौ वा । क्तिच् ( ३।३।१७४ ) । 'शुक्तिः कपालशकले घाते शङ्खनकेऽपि' च । नख्यश्चावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम्' [ इति मे० ५९।६६-६७ ] ॥ ( २ ) ॥ * ॥ द्वे 'शुक्तिकायाः' ।

शङ्खः स्यात्कम्बुरस्त्रियौ ।

शङ्ख, कम्बु (२ पु न), 'शंख' के २ नाम हैं।

शङ्ख इति ॥ शं खनति जनयति । 'खनु अवदारणे' (भ्वा० उ० से०) । 'अन्येष्वपि–' ( वा० ३।२।१०१ ) इति ड । शं खमस्य–इति वा । शाम्यत्यलक्ष्मी वा । 'शमु उपशमे' (दि० प० से०) । अन्तर्भावितण्यर्थः । 'शमेः खः' (उ० १।१०२) । 'शङ्खः कम्बौ न योषित्' ना भालास्थिनिधिभिन्नखे' [इति मे० २०।५] ॥ (१) ॥*॥ काम्यते । 'कमु कान्तौ' ( भ्वा० आ० से० ) । 'जम्वादयश्च' ( उ० ४।१०२ ) इति निपातितः । 'कम्बुर्वलयशङ्खयोः । गजे शम्बूके कर्बूरे ग्रीवायामस्थिकेऽपि[२] च' इति हैम [२।३०७] ॥ ( २ ) ॥ * ॥ एतौ पुनपुंसके । द्वे 'शङ्खस्य' ।

क्षुद्रशङ्खाः शङ्खनकाः

क्षुद्रशङ्ख, शङ्खनक (२ पु), 'छोटे शंख' के २ नाम हैं।

क्षुद्रेति ॥ क्षुद्राश्च ते शङ्खाश्च ॥ (१) ॥*॥ शङ्कन्ते । 'शकि शङ्कायाम्' ( भ्वा० आ० से० ) । कर्तरि 'अनुदात्तेतश्च हलादेः' (३।२।१४९) इति युच् । 'संज्ञायां कन्' (५।३।७५) ।—शङ्खस्य नखा इव (शङ्खनखाः)—इति तु मुकुट । शं खनन्ति । 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति युच् । ल्युट् वा । स्वार्थे कन्[३] (५।३।७५) । (शङ्खनकाः)—इत्यन्ये ॥ ( २ ) ॥ * ॥ द्वे 'सूक्ष्मशङ्खानाम्' ।

शम्बूका जलशुक्तयः ॥ २३ ॥

शम्बूक (पु), जलशुक्ति (स्त्री), 'घोंघा, दोहना या पानी में होने वाली हर तरह की सीप' के २ नाम हैं।

शम्बूका इति ॥ शाम्यति । 'शम उपशमे' ( दि० प० से० ) । 'उलूकादयश्च' ( उ० ४।४१ ) इति निपातितः । 'शम्बूकपिण्याकमधूकफेन' इत्यमरमालायां पुल्लिङ्गे । ['शम्बूको गजकुम्भान्ते घोङ्घे च शूद्रतापसे । जलजन्तुविशेषे च— ] शम्बूका न नपुंसके' इति मेदिन्यां [ १३।१६२-६३ ] द्विलिङ्गता । 'शम्बूकः शम्बुकश्चैव पूर्वं कान्तस्तु सर्वदा । ककारेण विना सोऽपि (शम्बु) दृश्यते ग्रन्थविस्तरे' इत्युत्पलिनी ॥ ( १ ) ॥*॥ जलजाः शुक्तयः ॥ ( २ ) ॥*॥ द्वे 'सर्वजलशुक्तिकानाम्' ।

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

भेक, मण्डूक, वर्षाभू, शालूर, प्लव, दर्दुर (६ पु), 'मेंढक' के ६ नाम हैं।

भेके इति ॥ बिभेति । 'ञिभी भये' ( जु० प० अ० ) । 'इणभीका–' ( उ० ३।४३ ) इति कन् । 'भेको मण्डूकमेघयोः' [ इति मे० ३।३० ] ॥ (१) ॥ * ॥ मण्डयति जलाशयम् । मण्डते वा । 'मडि भूषायाम्' (भ्वा० प० से०)। 'शलमण्डिभ्यामूकण्' ( उ० ४।४२ ) । 'मण्डूकी मण्डूकपर्ण्यां मण्डूको भेकशोणयोः[१]' इति हैम [ ३।७९ ] ॥ ( २ ) ॥ * ॥ वर्षासु भवति । 'भुवः संज्ञान्तरयोः' ( ३।२।१७९ ) इति क्विप् । 'वर्षाभूः स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान्' इति विश्वमेदिन्यौ[२] ॥ (३) ॥*॥ शाडते । 'शाडृ गतौ' (भ्वा० आ० से०) । 'खर्जिपिञ्जादिभ्य ऊरोलचौ' (उ० ४।९०) इत्यूर । डलयोरैक्यम् । शालते वा । 'शाल कत्थने' ( भ्वा० आ० से० ) । 'परिसरङ्कलासस्वेदमालूर–' इत्युत्पलविवेकाद्दन्त्यादि [ सालूर ] अपि ॥ ( ४ ) ॥*॥ प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । अच् (३।१।१३४) । 'प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे [ जलान्तरे प्लवं गन्धतृणे मन्दनभिद्यपि ।' इति हैम २।५४१-४३ । 'प्लवः स्यात् प्लवते भेले भेकेऽवौ श्वपचेऽपि च । शाखामृगे च कूलके प्रवणे पर्कटीद्रुमे । कारण्डवाख्यविहगे शब्दे प्लुतगतौ पुमान् ॥– ] कैवर्तीमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्' [इति मे० १५८।१६-१८] ॥(५)॥*॥ दृणाति शब्देन कर्णौ । 'दॄ विदारणे' ( क्र्या० प० से० ) ।

---

१ 'शङ्खनखेऽपि' इति पा० ।

२ 'ग्रीवाया नलकेऽपि च' इति पा० ।

३ "शङ्खनका इत्यसत्" इति क्षी० स्वा० ।

१ 'मण्डूको भेकशोणकौ' इति पा० ।

२ पाठोऽयम्मेदिन्या (१०७।१८) । विश्वे (१०९।३३) त्वेवं पाठ—'वर्षाभू पुनर्नवायां प्लवे किञ्चुलुकेऽपि ना।'

'मुकुरदर्दुरौ' ( उ० १।४० ) इति निपातितः । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयो । दर्दुरी[1] चण्डिकायां स्याद् ग्रामजाले नपुंसकम्' [ इति मे० १३४-१६७ ] ॥ ( ६ ) ॥*॥ षट् 'मण्डूकस्य' ।

शिली गण्डूपदी

शिली, गण्डूपदी ( २ स्त्री ), 'केंचुए की स्त्री या केंचुए के भेद की छोटी जाति' के २ नाम हैं।

शिलीति ॥ शिलति । 'शिल उञ्छे' (तु० प० से०) । 'इगुपध–' ( ३।१।१३५ ) इति कः । 'जातेरस्त्री–' ( ४। १।६३) इति ङीप् । [ 'शिलमुञ्छे स्याद्, गण्डूपद्यां शिली मता । स्तम्भशीर्षे शिलादारुणो, शिला तु प्रस्तरे मता । तथा मनः शिलायां च द्वाराध स्थितदारुणि' इति मे० १४८। ५१-५२ ] ॥ (१) ॥ * ॥ ( २ ) ॥*॥ द्वे क्षुद्रकिंचुलकजातः' । 'किञ्चुलकभार्यायाः'–इति स्वामी ।

भेकी वर्षाभ्वी

भेकी, वर्षाभ्वी ( २ स्त्री ), 'बेंगुची, मेंढक की स्त्री या मेंढक के भेद की छोटी जाति-विशेष' के २ नाम हैं।

भेकीति ॥ 'वर्षाभ्वी' इत्यसाधु । ङीब्विधायकाभावात् स्त्रियामपि 'वर्षाभूः' इत्येव । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादव । अन्ये तु—गौरादित्वात् ( ४। १।४१ ) ङीषमिच्छन्ति । अत एव भागुर्यमरमालयो 'वर्षाभ्वी' इति दृश्यते ॥ ( १ ) ॥*॥ (२) ॥ * ॥ द्वे मण्डूक्याः' । क्षुद्रमण्डूकस्येत्यन्ये ।

कमठी दुलिः ॥ २४ ॥

कमठी, दुलिः ( २ स्त्री ), 'कछुई' के २ नाम हैं।

कमठीति ॥ 'जाते –' (४।१।६३) इति, 'पुंयोगात्–' ( ४।१।४८ ) इति वा ङीप् । कमठी ॥ ( १ ) ॥ * ॥ दोलति । 'दुल उत्क्षेपे' ( चु० प० से० ) । आधृषीयः । 'इगुपधात्–' (उ० ४।१२०) इति किः । 'दुलिः स्त्रियाम् । कमठ्यां, ना मुनौ' [ इति मे० १४७।२६-२७ ) ॥ (२) ॥ * ॥ द्वे 'कच्छप्याः' ।

मद्गुरस्य प्रिया शृङ्गी

शृङ्गी ( स्त्री ), 'मगर की स्त्री' का १ नाम है।

मद्गुरस्येति ॥ मद्गुरो मत्स्यभेदः । योग्यतया सादृश्याद्वा तस्य प्रिया स्त्री । शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से० ) । 'शृणातेर्ह्रस्वश्च' ( उ० १।१२६ ) इति गन् ह्रस्वत्वं कित्त्वं नुडागमश्च । 'पुंयोगात्–' (४।१।४८) इति 'जाते –' ( ४।१।६३ ) इति वा ङीष् । 'मद्गुरी' इत्यपि । 'भार्या भेकस्य वर्षाभ्वी, शृङ्गी स्यान्मद्गुरस्य तु । शिली गण्डूपदस्यापि, दुलिः स्यात्कमठस्य तु' इत्यमरमाला । ['शृङ्गी स्वर्णमीनविशेषयोः । विषायामृषभौषध्याम्' इति हैमः २।५०-५२ ] ॥ ( १ ) ॥*॥ एकं 'मद्गुरस्त्रियाः' ।

दुर्नामा दीर्घकोशिका ।

दुर्नामा ( =दुर्नामन्, स्त्री ), दीर्घकोशिका ( स्त्री ), 'जोंक के समान जलचर-विशेष' के २ नाम हैं।

दुर्नामेति ॥ दुर्निन्दितं नामास्याः । 'अनो बहुव्रीहेः' (४। १।१२) इति ङीप् न । [ 'दुर्नाम क्लीबमर्शसि । स्याद्दीर्घकोषिकायां स्त्री' इति मे० ९६।८४ ] ॥ * ॥ 'डाबुभाभ्याम्–' (४।१।१३) ॥*॥ 'अन उपधा–' ( ४।१।२८) इति वा ङीप् । दुर्नाम्नी । क्षुभ्नादित्वात् ( ८।४।३९ ) न णत्वम् ॥ ( १ ) ॥ * ॥ दीर्घः कोशो यस्याः । 'जातेः–' ( ४।१।६३ ) इति ङीप् । 'संज्ञायां कन्' ( ५।३।७५ ) । 'केऽणः' (७।४।१३) इति ह्रस्वः । [मूर्धन्यषान्ता (दीर्घकोषिका) च ] । 'तालव्या मूर्धन्याश्चैते शटी च परिवेशः । विश्वक्सेनो भेषः प्रतिष्कशः कोशविशादौ च' इत्यूष्मविवेक ॥ (२) ॥*॥ द्वे 'झिनाद्री' इति ख्यातस्य 'जलूकाकारस्य जलचरस्य' ।

जलाशया जलाधाराः

जलाशयः, जलाधारः ( २ पु ), 'तालाब, पोखरा, बावली आदि' के २ नाम हैं।

जलेति ॥ जलम् आशयो हृदयम् अस्य । जलम् आशेते तिष्ठति अत्र, इति वा । 'पुंसि' ( ३।३।११८ ) इति घः । 'जलाशयो जलाधारे स्यादुशीरे नपुंसकम्' [इति मे० १२१। ११८ ] ॥ (१) ॥ * ॥ आध्रियतेऽत्र । 'धृङ् अवस्थाने' ( तु० आ० अ० ) । 'अध्यायन्याय–' (३।३।१२२) इति घञ् । जलस्याधाराः ॥ (२) ॥*॥ द्वे 'तडागादीनाम्' ।

तत्रागाधजला ह्रदः ॥ २५ ॥

ह्रदः (पु), 'अथाह जलवाले तालाब आदि' का १ नाम है।

तत्रेति ॥ तत्र तेषु मध्ये । अगाधं जलं यत्र स जलाशयः । ह्रादते । 'ह्राद अव्यक्ते शब्दे' (भ्वा० आ० से०)। पचाद्यच् ( ३।१।१३४ ) । पृषोदरादित्वात् (६।३।१०९) ह्रस्वः ॥ ( १ ) ॥ * ॥ एकम् 'अगाधजलकूपस्य' ['दह' इत्याख्यस्य ] ।

आहावस्तु निपानं स्यादुपकूपजलाशये ।

आहावः ( पु ), निपानम् ( न ), 'सुखपूर्वक गौ आदि के जल पीने के लिये कूएँ के पास बनाये हुए हौज' के २ नाम हैं।

आहाव इति ॥ आहूयन्तेऽत्र । 'ह्वेञ् स्पर्धायां शब्दे च' ( भ्वा० उ० अ० ) । 'निपानमाहावः' ( ३।३।७४ ) ॥ ( १ ) ॥ * ॥ नियतं पिबन्त्यस्मिन् । 'करणा–' ( ३।३।

---

१. 'दर्दुरा' इति मेदिनीस्थः पाठः ।

११७ ) इति ल्युट् ॥ ( २ ) ॥*॥ द्वे 'कूपसमीपरचितजलाधारस्य'।

पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥

अन्धु, प्रहि, कूप ( ३ पु ), उदपानम् ( न पु ), 'कूआँ, इनारा' के ४ नाम हैं।

पुंसीति ॥ अम्यते । 'अम गत्यादौ' (भ्वा० प० से०)। 'अजिदृशिकम्यमि–' ( उ० १।२७ ) इति कु धुक् च । यद्वा–अन्धयति । 'अन्ध दृष्ट्युपघाते' ( चु० उ० से० ) । मृगय्वादित्वात् ( उ० १।३७ ) कु ॥ (१) ॥*॥ प्रह्रियते । 'प्रे हरतेः कूपे' ( उ० ४।१३५ ) इति इः डिच्च ॥ (२) ॥*॥ कौति । 'कु शब्दे' (अ० प० से०) । 'कुयुभ्यां च' (उ० ३।२७) इति पो दीर्घश्च । कुत्सिता ईषद्वा आपोऽत्र । 'ऋक्पूर–' ( ५।४।७४ ) इत्य । 'ऊदनोः –' (६।३।९८) इत्यत्र दीर्घनिर्देशादन्यत्राप्यूत् इति वा । कूप कूपकूप्माने गर्तान्धु[1] गुणवृक्षके' [इति मे० १०२।३] ॥ (३) ॥ * ॥ उदकं पिबन्त्यस्मिन् । अधिकरणे ल्युट् ( ३।३।११७)। 'उदकस्योद –' (६।३।५७) ॥ ( ४ ) ॥*॥ तुल्याने च उचित ॥ * ॥ चत्वारि 'कूपस्य'।

नेमिस्त्रिकास्य

नेमि, त्रिका ( २ स्त्री ), 'घुरई, गड़ारी' के २ नाम हैं।

नेमिरिति ॥ अस्य कूपस्य । नयन्त्यनया । 'नियो मिः' ( उ० ४।४३ ) । नेमिना तिनिशे, कूपत्रिकाचक्रान्तयोः स्त्रियाम्' [इति मे० १०९।१७] ॥ (१) ॥ * ॥ तिस्रोऽस्त्ययोऽस्या । संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' (५।१।५८) इति कन् । त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये' इति विश्व-मेदिन्यौ [ ६।४६,३।२६ ] ॥ ( २ ) ॥*॥ द्वे 'कूपस्योपरि रज्ज्वादिधारणाधदारुयन्त्रस्य'।

वीनाहो मुखबन्धनमस्य यत् ।

वीनाह (पु), 'कूएँ के जगत' का १ नाम है।

वीनाह इति ॥ विनह्यतेऽनेन । 'णह बन्धने' ( दि० उ० अ० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'उपसर्गस्य घञि' ( ६।३।१२२ ) इति दीर्घः ॥ ( १ ) ॥ * ॥ एकं 'कूपमुखे इष्टकादिभिर्बद्धस्य ।

पुष्करिण्यां तु खातं स्यात्

पुष्करिणी ( स्त्री ), खातम् (न), 'पोखरी, छोटी तलैया' के २ नाम हैं।

पुष्करेति ॥ पुष्कराणि सन्त्यस्याम् । 'पुष्करादिभ्यो देशे' (५।२।१३५) इतीनिः । 'पुष्करिणी नद्या[2] सरोजिन्या जलाशये' [ इति मे० ५२।१०४ ] ॥ (१) ॥ * ॥ अखानि । 'खनु अवदारणे' (भ्वा० उ० से०) । क्त (३।२।१०२) । 'जनसनखनाम्–' ( ६।४।४२ ) इत्यात्वम् ॥ (२) ॥*॥ द्वे 'समचतुरस्रखातस्य'।

अखातं देवखातकम् ॥ २७ ॥

अखातम्, देवखातकम् ( २ न ), 'अकृत्रिम या देवमन्दिर के आगे वाले पोखरा, तालाब आदि' के २ नाम हैं।

अखातमिति ॥ खाताद्भिन्नम् ॥ ( १ ) ॥ * ॥ देवेन खातम् ॥ ( २ ) ॥*॥ 'अखातो देवखातक.' इति पुस्काण्डेऽमरदत्तात् पुंस्यपि ॥ * ॥ द्वे 'अकृत्रिमजलाशयस्य'। देवद्वारस्यजलाशयस्येत्यन्ये ।

पद्माकरस्तडागोऽस्त्री

पद्माकर, तडाग ( २ पु ), 'कमल उत्पन्न होने के चेत्र तालाब आदि' के २ नाम हैं।

पद्मेति ॥ पद्मानामाकरः ॥ (१) ॥ * ॥ तड्यते । 'तड आघाते' (चु० प० से०) । 'तडागादयश्च' इति निपातितः । 'तडागस्तु जलाधारविशेषे यन्त्रकूपके'[1] इति मेदिनी [ २४।३४ ] । पिनाकादित्वात् ( उ० ४।१५ ) 'तडाक' इति कश्चित् ॥ * ॥ तटम् अकति, अगति वा । 'अक अग कुटिलायां गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । ( तटाक , तटाग ) इत्येके ॥ ( २ ) ॥ * ॥ द्वे 'सपद्मागाधजलाशयस्य'।

कासारः सरसी सरः ।

कासार (पु), सरसी ( स्त्री ), सर (=सरस्, न ), 'कृत्रिम (किसी के खुदवाये हुए) कमल के उत्पत्तिस्थान तालाब आदि' के ३ नाम हैं।

कासार इति ॥ कासते । 'कासृ शब्दे'(भ्वा० आ० से०)। 'तुषारादयश्च' (उ० ३।१३९) इत्यारन् । यद्वा–ईषत् सारोऽस्य । 'ईषदर्थे' (६।३।१०५) इति को कादेशः । कासोऽस्यास्तीति वा । अर्शआद्यच् । कासमृच्छति । 'ऋ गतौ'(भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) इति वा ॥ ( १ ) ॥ * ॥ स्रियते । 'सृ गतौ' (भ्वा० प० से०) । कमण्यसुन् (उ० ४।१८९) । [ 'सरो नीरतडागयोः' इति मे० १७३।४४ ] ॥ ( ३ ) ॥ * ॥ तत एव महत्त्वे गौरादित्वात् ( ४।१।४१ ) ङीष् । [ 'सरसी विश्वकासारे' इति मे० १७३।४४ ] ॥ ( २ ) ॥*॥ त्रीणि 'कृत्रिमपद्माकरस्य'। पञ्चापि सरोमात्रस्येत्यन्ये ।

---

१ 'गर्ताम्बु' इति पा० ।
२ 'वेम्या' इति पा० ।

१. 'यन्त्रकूटके' इति पा० ।

**वेशन्तः पल्वलं चाल्पसरः**

वेशन्तः (पु), पल्वलम्, अल्पसरः (=अल्पसरस्। २ न), 'पानी के छोटे-छोटे गढ़े' के ३ नाम हैं।

वेशन्त इति ॥ विशन्त्यत्र भेकादय.। 'विश प्रवेशने' (तु० प० अ०)। 'जृविशिभ्या झच्' (उ० ३।१२६)॥ (१) ॥*॥ पलति पल्यते वा। 'पल गतौ' (भ्वा० प० से०)। 'सानसिपर्णसि–' (उ० ४।१०७) इति वलच्। 'वेशन्तः पल्वलोऽस्त्री' इति वाचस्पतिः॥ (२) ॥*॥ अल्पं च तत्सरश्च ॥ (३) ॥*॥ त्रीणि 'स्वल्पसरोवरस्य'।

**वापी तु दीर्घिका ॥ २८ ॥**

वापी, दीर्घिका (२ स्त्री), 'बावली' के २ नाम हैं।

वापीति ॥ उप्यते पद्माद्यस्याम्। 'डुवप् बीजतन्तुसन्ताने' (भ्वा० उ० अ०)। 'वसिवपियजिराजि–' (उ० ४।१२५) इतीञ्। 'कृदिकारात्–' (ग० ४।१।४५) इति वा ङीप्। 'वाप्यां वापिरपि स्मृता' इति द्विरूपकोप ॥ (१) ॥*॥ दीर्घेव। 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे 'वाप्या'।

**खेयं तु परिखा**

खेयम् (न), परिखा (स्त्री), 'किले आदि के चारों ओर की खाईं' के २ नाम हैं।

खेयमिति ॥ खन्यते। 'खनु अवदारणे' (भ्वा० उ० से०)। 'ई च खन.' (३।१।१११) इति यत् ॥ (१) ॥*॥ परितः खन्यते, इति। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड. ॥ (२) ॥*॥ द्वे 'दुर्गादिपरितःखातस्य'।

**आधारस्त्वम्भसां यत्र धारणम्।**

आधारः (पु), 'पानी के बाँध' का १ नाम है।

आधार इति ॥ आध्रियते जलमस्मिम्। 'अध्यायन्याय–' (३।३।१२२) इति घञ्। 'आधारश्चाधिकरणेऽप्यालवालेऽम्बुधारणे' [इति मे० १३१।११३] ॥ (१) ॥*॥ एकं 'बांध' इति ख्यातस्य।

**स्यादालवालमावालमावापः**

आलवालम् आवालम् (२ न), आवापः (पु), 'थाला' अर्थात् 'गांछी या पौधे को सींचने के लिये उनकी जड़में मिट्टी आदि से बनाये हुए घेरे' के ३ नाम हैं।

स्यादिति ॥ आ समन्ताज्जलस्य लवम् आलाति। 'ला आदाने' (अ० प० अ०)। मूलविभुजादित्वात् (वा० ३।२।५) क ॥*॥ लवमालाति। तद्भिन्नम्। नञ्समासे (अलवाल·) ह्रस्वादि.–इत्यन्ये ॥ (१) ॥*॥ आवलतेऽम्भोऽनेन। 'वल संवरणे' (भ्वा० प० से०)। 'अलश्च' (३।३।१२१) इति घञ्। आ ईषत् वाला वृक्षा अत्र वा ॥ (२) ॥*॥ आवपन्ति जलमत्र। 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'आवापो भाण्डपचने[1] परिक्षेपालवालयो.' [इति विश्वः १०५।१७] ॥ (३) ॥*॥ त्रीणि 'वृक्षमूलकृतजलाधारस्य'।

**अथ नदी सरित् ॥ २९ ॥**

**तरङ्गिणी शैवलिनी तटिनी ह्रदिनी धुनी।**
**स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥ ३० ॥**
**कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती [५८]**

नदी, सरित्, तरङ्गिणी, शैवलिनी, तटिनी, ह्रदिनी, धुनी, स्रोतस्वती, द्वीपवती, स्रवन्ती, निम्नगा, आपगा (१२ स्त्री), 'नदी'के १२ नाम हैं।

[*कूलङ्कषा, निर्झरिणी, रोधोवक्रा, सरस्वती* (४ स्त्री), 'नदी' के ४ नाम ये भी हैं]।

अथेति ॥ नदति। 'णद अव्यक्ते शब्दे' (भ्वा० प० से०)। पचादिषु (३।१।१३४) 'नदट्' इति टित्त्वनिपातनात् 'टिड्ढा–' (४।१।१५) इति ङीप्। ['नदी सरिति, शोणादौ ना' इति मे० ७४।६] ॥ (१) ॥*॥ सरति। 'सृ गतौ' (भ्वा० प० से०)। सृर्तेरिनि. (उ० १।९७) ॥ (२) ॥*॥ तरङ्गा. सन्त्यस्याम्। अत इतिः (५।२।११५) ॥ (३) ॥*॥ शैवलमस्त्यस्याम् ॥ (४) ॥*॥ तटमस्त्यस्या ॥ (५) ॥*॥ ह्रदा सन्त्यस्याम्। ह्रादिनी' इत्यन्ये ॥ (६) ॥*॥ धुनोति वेतसादीन्। क्विप् (३।२।१७८)। पृषोदरादित्वात् (६।३।१०९) नुक्। नान्तत्वान्ङीप् (४।१।५) ॥ (७) ॥*॥ स्रोतांसि सन्त्यस्याम्। मतुप् (५।२।९४) ॥*॥ 'अस्माया–' (५।२।१२१) इति विनौ तु 'स्रोतस्विनी' इत्यपि ॥ (८) ॥*॥ द्वीपमस्त्यस्याम्। मतुप् (५।२।९४) ॥ (९) ॥*॥ स्रवति। 'लट शतृ–' (३।२।१२४)। 'उगितश्च' (४।१।६) इति ङीप्। 'शप्श्यनो–' (७।१।८१) इति नुम् ॥ (१०) ॥*॥ निम्नं गच्छति। 'गम्लृ गतौ' (भ्वा० प० अ०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड ॥ (११) ॥*॥ अपां समूह आपम्। तेन गच्छति। ड (वा० ३।२।४८) ॥–॥ अपः गच्छति। ड. (वा० ३।२।१०१)। ह्रस्वादिरपि [अपगा]। 'विद्यादगारमागारमपगामापगामपि' इति द्विरूपकोप ॥ (१२) ॥*॥ द्वादश 'नद्याः'।

**गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा।**
**भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥**

१ 'भाण्डपवने' इति पा०।

गङ्गा, विष्णुपदी, जह्नुतनया, सुरनिम्नगा, भागीरथी, त्रिपथगा, त्रिस्रोता (=त्रिस्रोतस्), भीष्मसू (८ स्त्री), 'गङ्गा नदी' के ८ नाम हैं।

गङ्गेति ॥ गच्छति । 'गत् गम्यद्यो (उ० १।१२३) (१) ॥ * ॥ विष्णु पद स्थान यस्या । गौरादि (४। १।४१)। विष्णुपद नभाऽब्जयो । विष्णुपदस्तु क्षाराद विष्णुपदी सुरापगा । इति हेम० [४।१५०-५१] ॥ (२) ॥ * ॥ जह्नो राजर्षेस्तनया ॥ (३) ॥ * ॥ सुराणां निम्नगा । कुम्भादि (८।४।३९) ॥ (४) ॥*॥ भगीरथस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (५) ॥*॥ त्रीन् पथो गच्छति । ड (वा० ३।२।४८) यद्वा—त्रयाणां पथां समाहार त्रिपथम् । तेन गच्छति । ड (३।२।४८)॥ (६) ॥*॥ त्रीणि स्रोतांसि यस्या । [ त्रिस्रोता जह्नुकन्याया स्रोतस्वत्यन्तर स्त्रियाम् इति म० १७३।५४ ] ॥ (७) ॥ * ॥ भीष्म सुत । 'षूङ् प्राणिप्रसवे (अ० आ० अ०)। क्विप् (३।२।१७८) ॥ (८) ॥ * ॥ अष्टौ 'भागीरथ्या'।

**कालिन्दी सूर्यतनया यमुना शमनस्वसा।**

कालिन्दी, सूर्यतनया, यमुना, शमनस्वसा (=शमनस्वसृ, ४ स्त्री), 'यमुना नदी' के ४ नाम हैं।

कालिन्दीति ॥ कलिन्दस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥ * ॥ सूर्यस्य तनया ॥ (२) ॥*॥ यच्छति । यम उपरमे (भ्वा० प० अ०)। अजियमिशीङ्भ्यश्च' (उ० ३।६१) इत्युनन् ॥ (३) ॥*॥ शमनस्य स्वसा ॥ (४) ॥ * ॥ चत्वारि यमुनाया'।

**रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥**

रेवा, नर्मदा, सोमोद्भवा, मेकलकन्यका (४ स्त्री), 'नर्मदा नदी' के ४ नाम हैं।

रेवति ॥ रेवते । 'रेवृ प्लवगतौ' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४) ॥ (१) ॥ * ॥ नर्म ददाति द्यति वा । 'डुदाञ् दाने' (जु० उ० अ०)। 'दो अवखण्डने' (दि० प० से०) वा । 'आतोऽनुप-' (३।२।३) इति क ॥ 'नर्मदं केलिसचिव नर्मदा सरिदन्तरे' इति विश्वमेदिन्यौ [७९।१८,७६।२३] ॥ (२) ॥*॥ सोमात्सोमवशाज्जात् पुरुरवस उद्भवति । तेनावतारितत्वात् । यद्वा—सोमोऽमृतमुद्भवत्यस्या । स्वर्गप्रदत्वात् । अप् (३।३।५७)। सोमाद्रुद्राद्भवति । पचाद्यच् (३।१।१३४) ॥ (३) ॥*॥ मेकलस्य ऋषेरद्रेर्वा कन्यका ॥ (४) ॥ * ॥ चत्वारि 'नर्मदाया'।

**करतोया सदानीरा**

करतोया, सदानीरा (२ स्त्री), 'पार्वतीके विवाह-कालमें कन्यादानके जल से निकली हुई नदी-विशेष' के २ नाम हैं।

करेति ॥ करस्य तोयम् । तदत्रास्ति । अर्शआद्यच् (५।२।१२७)। गौरीविवाह शंकरहस्तच्युतम् ॥ (१) ॥*॥ सदा नीरं यस्या । 'प्रथम कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्य करतोयाम्बुवाहिनी' इति स्मृत.[1] ॥ (२) ॥ * ॥ द्वे 'गौरीविवाहे कन्यादानोदकाज्जातनद्या.'।

**बाहुदा सैतवाहिनी।**

बाहुदा, सैतवाहिनी (२ स्त्री), 'कार्तवीर्यद्वारा निकाली हुई नदी विशेष' के २ नाम हैं।

बाहुदेति ॥ बाहु छिन्न दत्तवती लिखितस्य ऋषे.। डुदाञ् (जु० उ० अ०)। 'आतोऽनुप-' (३।२।३) इति क । यद्वा—बहुदस्य कार्तवीर्यस्येयम् । तेनावतारितत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । अजादित्वात् (४।१। ४) टाप् ॥ (१) ॥ * ॥ सितानि वाहनानि यस्यार्जुनस्य । तस्येयम् । यद्वा—सितस्यार्जुनस्येयम् । सैती चासौ वाहिनी नदी[2] च ॥ (२) ॥ * ॥ द्वे 'कार्तवीर्यावतारितनद्या.'।

**शतद्रुस्तु शुतुद्रिः स्याद्**

शतद्रु, शुतुद्रि (२ स्त्री), 'सतलज नदी' के २ नाम हैं।

शतेति ॥ शतधा[3] द्रवति । 'द्रु गतौ' (भ्वा० प० अ०)। 'हरिमितयोर्द्रुव' (उ० १।३४)। 'शत च' (उ० १।२५) इत्युडित् ॥ (१) ॥ * ॥ शु पूजित तुदति । 'तुद व्यथने' (तु० उ० अ०)। 'इगुपधात्कित्' (उ० ४।१२०) इतीन् । बाहुलकादुक् । 'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि' इति हि श्रुति । यत्तु मुकुट—शतद्रुरेव पृषोदरादित्वात् (६। ३।१०९) आदिवर्णविकारे 'शतद्रु' इति स्वामी', शित तीक्ष्ण द्रुता शितद्रु इति कौमुदी—इत्याह । तन्न । 'एतदवुध्यमाना शितद्रु शितद्रुर्वेत्याहु' इत्यनेन (स्वामिग्रन्थेन) तेनास्यार्थस्य दूषितत्वात् । व्युत्पत्त्यन्तरस्य दुरत्वाच्च ॥ (२) ॥ * ॥ द्वे 'शतद्र्वा'।

---

१ याज्ञवल्क्यस्मृति 'बालम्भट्टी' टीकायामस्य स्मृतिवचनस्य दर्शनादस्या जलस्य सदा पवित्रत्वात् 'सदानीरा' इत्यन्वर्थं नामेति बोध्यम् । 'अत एव' सदातोया इत्यपि नाम।

२ सिताया शर्कराया अयम् अण्, सैतो मधुररस, त वहति, वह—णिनि । इति वाच० (५३३२)।

३ 'वशिष्ठशापाच्छतधा द्रुता' इति स्वामी।

**विपाशा तु विपाट् स्त्रियाम् ॥ ३३ ॥**

विपाशा, विपाट् (=विपाश् । २ स्त्री), 'विपाशा नदी' के २ नाम हैं।

विपाशेति ॥ पाशं विमोचयति । 'सत्यापपाश-' (३।१।२५) इत्यादिना 'पाशान्मोचने' इति णिच् । पचाद्यच् (३।१।१३४) ॥ (१) ॥ * ॥ तस्मादेव 'क्विप् च' (३।२।७६) इति क्विपि विपाट् ॥ (२) ॥ * ॥ द्वे 'पापमोचिन्याः' ।

**शोणो हिरण्यवाहुः[1] स्यात्**

शोणः, हिरण्यवाहुः (२ पु), 'सोन नामक नद' के २ नाम हैं।

शोण इति ॥ शोणति । 'शोणृ वर्णगत्योः' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'शोणः कृशानौ स्योनाके[2] लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये' [इति मे० ४७।३१-३२] ॥ (१) ॥ * ॥ हिरण्यं वाहावस्य ॥ * ॥ हिरण्यं वहति । 'कर्मण्यण्' (३।२।१) । अदन्त [ हिरण्यवाह ] ॥ (२) ॥ * ॥ द्वे 'नदविशेषस्य' ।

**कुल्याल्पा कृत्रिमा सरित् ।**

कुल्या (स्त्री), 'कृत्रिम नदी' अर्थात् 'नहर' का १ नाम है।

कुल्येति ॥ कुले प्राणिगणे कुटुम्बे दायत्ये वा साधु । 'तत्र साधुः' (४।४।९८) इति यत् । 'कुल्या नदी कुल्यमस्थि कुल्या वारिप्रणालिका' इति धरणेर्नदीमात्रेऽपि । [ कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । कुल्या-पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ । कुलोद्भवे कुलहिते त्रिषु माष्ये पुनः पुमान् ॥' इति मे० ११४।१४-१५] ॥ (१) ॥*॥ एकं 'कृत्रिमस्वल्पनद्याः' ।

**शरावती वेत्रवती चान्द्रभागी सरस्वती ॥ ३४ ॥ कावेरी**

शरावती, वेत्रवती, चन्द्रभागा, सरस्वती, कावेरी (५ स्त्री), 'शरावती आदि प्रत्येक नदी' का १-१ नाम है।

शरावतीति ॥ शरा सन्त्यस्याम् । मतुप् (५।२।९४)। 'शरादीनां च' (६।३।१२०) इति दीर्घ ॥ (१) ॥*॥ वेत्रमस्त्यस्याम् । मतुप् (५।२।९४) ॥ (१) ॥ * ॥ चन्द्रभागयोः पर्वतयोरियम् । तत्प्रभवत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'टिड्ढा-' (४।१।१५) इति ङीप् प्राप्त 'चन्द्रभागान्नद्याम्' (ग० ४।१।४५) इति बाह्वादिगणसूत्रान्न भवति । स्वरूपयोरविशेषात् । 'तापी तु तपती सैव्या, चान्द्रभागी तु चन्द्रिका । चान्द्रभागा, शारदा तु कश्मीरेषु सरस्वती' इति शब्दार्णवः । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । 'चन्द्रभागा चान्द्रभागा चान्द्रभागी च सा मता । चन्द्रभागी च सैवोक्ता' इति द्विरूपकोषः ॥ (१) ॥ * ॥ सरांसि सन्त्यस्याम् । मतुप् (५।२।९४) । 'सरस्वान्तु नदे वार्धौ ना,ऽन्यवद्रसिके, स्त्रियाम् । वाणी-स्त्रीरत्नवाग्देवी-गो-नदीषु नदीभिदि । मतुपत्न्यामपि' [ इति मे० ७०।२२३-२४ ] ॥ (१) ॥ * ॥ कस्य जलस्य वेर शरीरम् । तस्येयम् ईपङ्गेरसत्रा वा । 'कावेरी स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः' [ इति विश्व १४३।२२४] ॥ (१) ॥*॥ (पृथक्-पृथक् 'नदीविशेषाणाम्') ।

**सरितोऽन्याश्च**

और भी (कौशिकी, गण्डकी, चर्मण्वती, गोदावरी आदि) नदियाँ हैं।

सरित इति ॥ अन्या कौशिकी-गण्डकी-चर्मण्वती-गोदावर्यादय ।

**संभेदः सिन्धुसंगमः ।**

संभेदः, सिन्धुसंगमः (२ पु), 'नदियों के संगम' के २ नाम हैं।

समिति ॥ संभिद्यन्ते मिलन्त्यत्र । 'भिदिर् विदारणे' (रु० उ० अ०) । 'हलश्च' (३।३।१२१) इति घञ् । 'संभेदः स्फुटने गङ्गे' [ इति मे० ७७।४३ ] ॥ (१)॥*॥ सिन्ध्वो सगम ॥ * ॥ एक 'नद्यादिसंगमस्य' ।

**द्वयोः प्रणाली पयसः पदव्याम्**

प्रणाली (पु स्त्री), 'पनारे या नाले' का १ नाम है।

द्वयोरिति ॥ नल्यते । 'णल बन्धने' (भ्वा० प० से०) । कर्मणि घञ् (३।३।१९) । 'उपसर्गात्-' (८।४।१४) इति णत्वम् । गौरादिङीष् (४।१।४१॥ (१) ॥*॥ एकं 'कृत्रिमजलनिःसारणमार्गस्य' ।

**त्रिषु तूत्तरौ ॥ ३५ ॥**

**देविकायां सरय्वां च भवे दाविकसारवौ ।**

दाविकः, सारवः (२ त्रि), 'देविका और सरयू नदी में होनेवाले पदार्थ' का क्रमशः १-१ नाम है।

त्रिष्विति ॥ दीव्यति । 'दिवु क्रीडादौ' (दि० प० से०) । ण्वुल् (३।१।१३३) । देविकायां नद्याम् । सरति । 'सर्तेरयु' (उ० ३।२२) । 'अयू' इत्येके[1] [सरयू] । सरय्वां च भवे । 'तत्र भवः' (४।३।५३) इत्यण् । 'देविकाशिंशपा-'

1. 'हिरण्यवाह.' इति पा० ।
2. 'श्योनाके' इति पा० ।

1 एके—भट्टोजिदीक्षिता । तथा च 'सर्तेरयु' (उ० ३।२२) इति सूत्रव्याख्याने—'सरयुर्नदी । अयूरिति पाठान्तरम् । सरयू ।' इति ।

( ७।३।१ ) इत्यचामादेरात्त्वम् । 'दाण्डिनायन–' ( ६।४।१७४ ) इति लोपः । स्त्रियां 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् ॥ ( १ ) ॥*॥ नमेणैकैकं 'देविकासरयूद्भवयो'।

**सौगन्धिकं तु कह्लारम्**

**सौगन्धिकम्, कह्लारम् ( २ न ), 'सायंकालमें फूलनेवाले श्वेतकमल' के २ नाम हैं।**

सौगन्धिकमिति ॥ सुगन्ध्येव । स्वार्थे 'विनयादिभ्यष्ठक्' (५।४।३४) । शोभनो गन्धः प्रयोजनमस्य । 'प्रयोजनम्' ( ५।१।१०९ ) इति ठक्, इति वा । 'सौगन्धिकं तु कह्लारे पद्मरागे च वस्तुनि' [इति विश्व २०।२१८] । [पुंल्लिङ्गो गन्धपाषाणे सुगन्धिव्यवहारिणि' [ इति मे० १८।२२४ ]॥ ( १ ) ॥ * ॥ कस्य जलस्य हार इव । के ह्लादते वा । अच् (३।१।१३४) । पृषोदरादि (६।३।१०९) ॥ (२) ॥*॥ द्वे 'शुक्लकह्लारस्य' । 'मुण्टी' इति ख्यातस्य इत्यन्ये ।

**हल्लकं रक्तसंध्यकम् ॥ ३६ ॥**

**हल्लकम्, रक्तसन्ध्यकम् (२ न), 'लाल कह्लार या त्रिकालमें फूलनेवाले रक्तपुष्प-विशेष' के २ नाम हैं।**

हल्लकमिति ॥ हल्लति । 'हल्ल विकसने' । ण्वुल् ( ३।१।१३३ ) । यद्वा–हलनम् । सपदादिः ( वा० ३।३।१०८ ) । हलं लाति । 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'संज्ञायां कन्' (५।३।७५) ॥ (१) ॥*॥ रक्तं संध्येव । इवार्थे कन् ( ५।३।९६) । 'केऽणः' ( ७।४।१३ ) । रक्तान् सन्धीन् अकति । 'अक कुटिलायां गतौ' (भ्वा० प० से०) । मूलविभुजादि ( वा० ३।२।५ ) इति वा ॥ (२) ॥*॥ द्वे 'रक्तकह्लारस्य', द्वे 'रक्तवर्णत्रिकालविकासितपुष्पस्य' वा ।

**स्यादुत्पलं कुवलयम्**

**उत्पलम्, कुवलयम् (२ न), 'श्वेत कमल या सामान्यतः कमल और कुमुदमात्र' के २ नाम हैं।**

स्यादिति ॥ उत्पलति । 'पल गतौ (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) ॥ (१) ॥ * ॥ कोर्वलयमिव । शोभाकरत्वात् । 'कुवलं तूत्पलं कुवम्' इति त्रिकाण्डशेष [१।१०।२६] । तत्र कौ वलते । 'वल संवरणे' (भ्वा० आ० से०) । पचाद्यच् ( ३।१।१३ ) । [ 'कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले' इति विश्व १५४।६६ ] ॥*॥ 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डे कुवम् । यद्वा—कुवते । 'कुङ् शब्दे' ( तु० आ० से० ) कुटादि । पचाद्यचि ( ३।१।१३४ ) उवङ् (६।४।७७) ॥ (२) ॥*॥ द्वे 'कमलकुमुदादीनां' सामान्येन । अत एव 'इन्दीवरे मामपून्ये उत्पलं कुष्टभूरुहे' इति रभस, 'श्याम शितिकण्ठनील कुवलयमिन्दीवरं च नीलाब्जम्' इति नाममाला च ।

**अथ नीलाम्बुजन्म च ।**

**इन्दीवरं च नीलेऽस्मिन्**

**नीलाम्बुजन्म (=नीलाम्बुजन्मन्), इन्दीवरम् ( २ न ), 'नील कमल' के २ नाम हैं।**

अथेति ॥ नीलं च तदम्बुजन्म च ॥ (१) ॥ * ॥ इन्दति । 'इदि परमैश्वर्ये' ( भ्वा० प० से० ) । इन् (उ० ४।११८) । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् । इन्दी लक्ष्मी । तस्या वरमिष्टम् । 'इन्दीवरं कुवलये शतावर्यां च योषिति' ] इति मे० १४०।२४९ ] ॥*॥ 'कुवलयं स्यादिन्दीवारमित्यपि' इति व्याडेरिन्दीवारमपि ॥ (२) ॥*॥ द्वे 'नीलोत्पलस्य' ।

**सिते कुमुदकैरवे ॥ ३७ ॥**

**कुमुदम्, कैरवम् ( २ न ), 'श्वेत कमल, कुमुद या कोईं' के २ नाम हैं।**

सिते इति ॥ कौ मोदते । 'मुद हर्षे' ( भ्वा० आ० से० ) । मूलविभुजादि (वा० ३।२।५) । 'इगुपध–' (३।१।१३६ ) इति को वा । 'कुमुदं कैरवे रक्तपद्मे, स्त्री कुम्भिकौपधौ । गम्भार्यां, पुंसि दिङ्नागे नागशाखामृगान्तरे' [ इति मे० ७६।२५-२६ ] ।*॥ [ क्विपि (३।२।१७८) कुमुद् । 'कुमुद् त्रिषु स्यात्कृपणे कैरवे तु नपुंसकम्' इति मे० ७६।२५ ] ॥ ( १ ) ॥*॥ के जले रौति । 'रु शब्दे' ( अ० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) । 'तत्पुरुषे कृति–' ( ६।३।१४ ) इत्यलुक् । केरवस्य हंसस्येदं प्रियम् । 'कैरवं चन्द्रकान्तं गर्दभं कुमुदं कुमुदे' इति माधव । [ 'कैरव कितवे रिपौ । नपुंसकं च कुमुदे, चन्द्रिकायां तु कैरवी' इति मे० १६०।३५ ] । 'चन्द्रकान्तं तु कैरवे । चन्द्रकान्तो रत्नभेदे' [इति हैम ४।११२] ॥ (२) ॥*॥ द्वे 'शुक्लोत्पलस्य' ।

**शालूकमेषां कन्दः स्यात्**

**शालूकम् ( न ), 'कमलमात्र के कन्द या जड़' का १ नाम है।**

शालूकमिति ॥ एषां सौगन्धिकादीनां कन्दो मूलम् । शल्यते, शलति[1] वा । 'शल चलनसंवरणयो' (भ्वा० आ० से०) । 'शलिमण्डिभ्यामूकण्' ( उ० ४।४२ ) । वृद्धि. (७।२।११६) च ॥ (१) ॥*॥ एकम् 'उत्पलकन्दस्य' ।

**वारिपर्णी तु कुम्भिका ।**

**वारिपर्णी, कुम्भिका ( २ स्त्री ), 'पुरइन या जलकुम्भी' के २ नाम हैं।**

वारीति ॥ वारिणि पर्णान्यस्याः । 'पाककर्ण–' ( ४।१।६४ ) इति ङीष् । यद्वा–वारि पिपर्ति । 'पृ पालनपूर-

१. 'शल चलन-संवरणयो.' इत्यात्मनेपदिधातो. शलतीति प्रयोगासम्भवादत्र शल गताविति पठितुमुचितम् ।

णयोः' ( जु० प० से० ) । 'घापॄवस्यज्यतिभ्यो नः' ( उ० ३।६ ) । 'जाते–' ( ४।१।६३ ) इति ङीप् । अत एव 'कुम्भीको वारिपर्णं स्यात्–' इत्येके पठन्ति ॥ (१)॥*॥ कुम्भोऽस्त्यस्याः । ठन् ( ५।२।११५ ) ॥ (२) ॥*॥ द्वे 'जलकुम्भिकायाः' ।

**जलनीली तु शेवालं शैवलः**

'जलनीली (स्त्री), शेवालम् (न), शैवलः (पु), 'सेवार' के ३ नाम हैं।

जलेति ॥ जलं नीलयति । 'नील वर्णे' ( भ्वा० प० से० ) । णिच् ( ३।१।२५ ) । 'कर्मण्यण्' ( ३।२।१ ) ॥ ( १ ) ॥ * ॥ जले शेते तिष्ठति । 'शीङो धुक्लुक्वलञ्वालनः' ( उ० ४।३८ ) । 'शेवलश्चैव शेवाल शैवलो जलनीलिका' ( इति वाचस्पति ) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'शैवालस्य' ।

अथ कुमुद्वती ॥ ३८ ॥

**कुमुदिन्याम्**

कुमुद्वती, कुमुदिनी ( २ स्त्री ), 'कोई' के २ नाम हैं।

अथेति ॥ कुमुदान्यत्र देशे सन्ति । 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४।२।८७) । 'झय' (८।२।१०) 'इति वत्वम् । [ 'कुमुद्वती कैरविण्यां दयितायां कुशस्य च' इति हैम ४।११० ] ॥ (१) ॥*॥ 'पुष्करादिभ्य –' ( ५।२।१३५ ) इतीनौ कुमुदिनी ॥ ( २ ) ॥ * ॥ द्वे 'कुमुदयुक्तदेशस्य' । 'कुमुदलतायाः' इत्यन्ये ।

**नलिन्यां तु बिसिनीपद्मिनीमुखाः ।**

नलिनी, बिसिनी, पद्मिनी ( ३ स्त्री ) आदि, 'कमलिनी या कमल-समूह' के ३ नाम हैं।

नलिन्यामिति ॥ नडाः सन्त्यत्र । 'पुष्करादिभ्य –' ( ५।२।१३५ ) इतीनि । डलयोरैक्यम् । यद्वा –नलमत्रास्ति । 'खलादिभ्य ' ( वा० ४।२।५१ ) इतीनि [ 'नलः पोटगले राज्ञि पितृदेवे नदीश्वरे ।–] नली मन शिलाया तु नलिनेऽपि' नल मतम् ॥' इति विश्व १४९।६ ] । 'नलिनी पुनः । पद्माकरे गङ्गाब्जिन्यो ' इति हैम [३।४१४]॥(१) ॥*॥ बिसमस्त्यस्याः । पूर्ववदिनि (वा० ४।२।५१)॥(२) ॥*॥ एवं पद्मिनी । मुखशब्दादाद्यर्थात् मृणालिनी कमलिनी पुटकिनीत्यादयः । 'पद्मिनी पद्मसंघाते स्त्रीविशेषे सरोऽम्बुजे'[2] इति मेदिनी [ ८९।८६ ] । 'पद्मिनी योषिदन्तरे । अब्जेऽब्जिन्या सरस्या च' इति हैम [ ३।४१८ ] ॥ (३) ॥ * ॥ (त्रीणि 'पद्मसङ्घातस्य' कमलिन्या इत्यन्ये ) ।

१. 'मलिने तु' इति पा० ।

२. 'सरोरुहे' इति पा० ।

वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥३९॥

सहस्रपत्त्रं कमलं शतपत्त्रं कुशेशयम् ।

पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥

बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।

पद्मम्, नलिनम्, अरविन्दम्, महोत्पलम्, सहस्रपत्त्रम्, कमलम्, शतपत्त्रम्, कुशेशयम्, पङ्केरुहम्, तामरसम्, सारसम्, सरसीरुहम्, बिसप्रसूनम्, राजीवम्, पुष्करम्, अम्भोरुहम् ( १६ पु न ), 'कमल' के १६ नाम हैं।

वेति ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'अर्तिस्तुसु–' ( उ० १।१४० ) इति मन् । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचारिण्टीपद्मनीषु च' [ इति मे० १०९।१८-१९ ] ॥ ( १ ) ॥ * ॥ नलति । 'णल गन्धे' ( भ्वा० प० से० ) इनन्[1] । (उ० २।४९) । 'नलिनं [2]नलिकातोयपद्मनीलेषु' [इति हैम ३।४१४] ॥ ( २ ) ॥ * ॥ अरं शीघ्रं लिप्सया विन्दति । 'गवादिषु विन्देः–' ( वा० ३।१।१३८ ) इति श । 'शे मुचादीनाम्' (७।१।५९) इति नुम् । अराकाराणि पत्राणि विन्दति वा ॥ (३) ॥ * ॥ महच्च तदुत्पलं च । 'उत्पलं कुष्ठभकृद्दे । इन्दीवरे मांसशून्ये' इति हैम [३।६६२–६३] । ( ४ ) ॥ * ॥ सहस्रं पत्त्राण्यस्य ॥ ( ५ ) ॥ * ॥ कं जलमलति । 'अल भूषणादौ' ( भ्वा० प० से० ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) कः । यद्वा–काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'वृषादिभ्यः –' (उ० १।१०६) इति कलच् । 'कमलं क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे । कमला श्रीवरनार्योः' इति हैम [ ३।६६४–६५ ] ॥ ( ६ ) ॥ * ॥ शतं पत्त्राण्यस्य । 'शतपत्त्रः शिखण्डिनी । दार्वाघाटे सारसे च कमले तु नपुंसकम्' इति [3]विश्व-मेदिन्यौ ॥ ( ७ ) ॥*॥ कुशे जले शेते । 'अधिकरणे शेतेः' (३।२।१५) इत्यच् । 'शयवास–' ( ६।३।१८ ) इत्यलुक् ॥ ( ८ ) ॥ * ॥ पङ्के रोहति । 'रुह प्रादुर्भावे' ( भ्वा० प० अ० ) । 'इगुपध–' ( ३।१।१३६ ) इति क । 'तत्पुरुषे कृति' (६।३।१४) इत्यलुक् ॥ ( ९ ) ॥*॥ 'तामरं घृतमर्णश्च' इति रुद्र । तत्र सरति । 'षम स्वप्ने' ( अ० प० से० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१७१ ) इति ड । यद्वा–तस्यते । 'तमु काङ्क्षायाम्'

१. 'बहुलमन्यत्रापि' इत्युणादिसूत्रेणेनच्, न त्विनन् इति ।

२. 'नीलिकातोया' इति पा० ।

३ मेदिनीस्थोऽयं पाठ ( १४४।२९७-९८ ) । विश्वे तु—'शतपत्त्रो राजकीरे दार्वाघाटमयूरयो । राजीवे शतपत्त्रं तु' ( १४७।२६९ ) इति पाठः ।

( दि० प० से० ) । घञ (३।३।१९) । 'नोदात्तोपदेशस्य–' ( ७।३।३४ ) इति निषेधस्यानित्यत्वान्न वृद्धिनिषेध । रस्यते । 'रस आस्वादने' चुरादावदन्त । 'एरच' ( ३।३।५६ ) । नाम न तद्रसं च । तामरसं पद्मे ताम्रकाञ्चनयोरपि [ इति मे० १७३।२३ ] ॥ ( १० ) ॥ * ॥ सरसि भवम । 'तत्र भव' ( ४।३।५३ ) इत्यण । 'सारसं सरसीरुहे । सारस पुष्कराख्येन्दो' इति हैम [ ३।८०२ ] ॥ ( ११ ) ॥*॥ सरस्या रोहति । 'इगुपध–' (३।१।१३५) इति क । ( १२ ) ॥ * ॥ बिसस्य प्रसूनम् ॥ ( १३ ) ॥ * ॥ केमरस्य राज्यस्यास्ति । 'अन्येभ्योऽपि दृश्यते' ( वा० ५।२।१०९ ) इति ड । 'राजीवं नलिने, ना तु भेदे हरिणमीनयो' [ इति मे० १६१।४८ ] ॥ (१४) ॥*॥ पुष्णाति । 'पुष पुष्टौ' ( दि० प० अ० ) । 'पुष कित्' ( उ० ४।४ ) इति करन् । पुष्कर² द्वीपतीर्थाहिखगरागौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे' इति हैम [ ३।६१४–१५ ] ॥ ( १५ ) ॥ * ॥ अम्भसि रोहति ॥ ( १६ ) ॥*॥ षोडश 'पद्मसामान्यस्य' ।

**पुण्डरीकं सिताम्भोजम्**

पुण्डरीकम्, सिताम्भोजम् ( २ न ), 'श्वेत कमल' के २ नाम हैं।

पुण्डेति ॥ पुण्डयति । 'मडि भूषायाम्' । 'पुडि च' ( भ्वा० प० से० ) । 'कर्व (फर्फ)रीकादयश्च' (उ० ४। २०) इत्यरीकन् । पुण्डरीक सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिग्वर्गे¹ कोषकारान्तरेऽपि च' [ इति मे० १६१।२०० ] ॥ (१) ॥*॥ सित शुक्लं च तदम्भोज च ॥ ( २ ) ॥*॥ द्वे 'शुभ्रकमलस्य' ।

**अथ रक्तसरोरुहे ॥ ४१ ॥**

**रक्तोत्पलं कोकनदम्**

रक्तोत्पलम्, कोकनदम् ( २ न ), 'लाल कमल' के २ नाम हैं।

अथेति ॥ रक्त च तत्सरोरुह च ॥ (१) ॥*॥ रक्त च तदुत्पल च ॥ (२) ॥ * ॥ कोकाश्चक्रवाकाश् नदति । 'णद अव्यक्ते शब्दे' (भ्वा० प० से०) । अन्तर्भावितण्यर्थ । मूलविभुजादि ( वा० ३।२।५ ) । 'अथ कोकनद रक्तकुमुदे रक्तपङ्कजे' इति मेदिनी [ ७८।४७ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'रक्तकमलस्य' ।

**नाला नालम्**

नाला ( स्त्री ), नालम् ( न ), 'कमल के डठल' के २ नाम हैं।

नालेति ॥ नलति । 'णल बन्धे' ( भ्वा० प० से० ) । 'ज्वलिति–' ( ३।१।१४० ) इति ण । 'नाल न ना पद्मदण्डे नाली शाकनलम्बके¹' [ इति मे० १४७।२८ ] ॥ ( १ ) ॥ * ॥ ( २ ) ॥ * ॥ द्वे 'उत्पलादिदण्डस्य' ।

**अथास्त्रियाम् ।**

**मृणालं बिसम्**

मृणालम्, बिसम् ( २ पु न ), 'कमल आदि के डंठल' के २ नाम हैं।

अथेति ॥ मृण्यते 'मृण हिंसायाम्' ( तु० प० से० ) । 'तमिविशिबिडिमृणि–' (उ० १।११८) इति कालन् । अपचयविवक्षाया गौरादित्वात् ( ४।१।४१ ) ङीषि 'मृणाली' इत्यपि । 'मृणाल नलदे क्लीब, पुनपुंसकयोर्बिसे ।' इति मेदिनी [१५४।१२५] ॥ (१) ॥ * ॥ बिस्यति । 'बिस प्रेरणे' (दि० प० से०) । 'इगुपध–' ( ३।१।१३५ ) इति क । 'मृणाले तु बिस बिशम्' इति द्विरूपकोश ॥ ( ४ ) ॥ * ॥ द्वे 'अब्जादीना मूलस्य' ।

**अब्जादिकदम्बे षण्डमस्त्रियाम् ॥ ४२ ॥**

षण्डम् ( न पु ), 'कमल के फूल, पत्ती, डण्ठल, जड़ आदि सब अवयवमात्र' का १ नाम है।

अब्जेति ॥ सनोति । 'षणु दाने' ( तु० उ० से० ) । 'अमन्ताड्ड' (उ० १।१।१४)। बाहुल्कात्सत्वाभाव । 'षण्ड स्मृतो बलीवर्दे षण्ड तु कानने भवेत्' इति मूर्धन्यादावजम । 'षण्ड पद्मादिसघाते न स्त्री स्याद् गोपतौ पुमान्' [ इति मे० ४२।२६ ] । 'षडि रुजाया सघाते च' ( भ्वा० आ० से० ) । घञ् ( ३।३।१८ ) । 'तालव्यो मूर्धन्योऽब्जादिकदम्बे षाण्डशब्दोऽयम् । मूर्धन्य एव वृषभे पूर्वाचार्यैर्विनिर्दिष्ट' इत्यूष्मविवेक । 'मकुरमुकुरौ दर्पणे, षण्ड समूहे, दारदोऽम्बुधौ' इति सारस्वतकोश ॥ ( १ ) ॥*॥ एकम् 'अब्जादीना समूहस्य' ।

**करहाट' शिफाकन्दः**

करहाट, शिफाकन्द ( २ पु ), 'कमल की जड़' के २ नाम हैं।

करेति ॥ कर हाटयति । 'हट दीप्तौ' (भ्वा० प० से०)। ण्यन्त । 'कर्मण्यण' (३।२।१) । (यत्तु)—क जल रहति त्यजति । करह पद्मम् । ततो हटति बहिर्गच्छति—इति मुकुट । तन्न । 'करहहाट' इति प्रसङ्गात् । ( अटतीति विग्रहेऽपि ) वृद्धिप्रसङ्गाच्च । 'करहाट पद्मकन्दे देशद्रुमविशेषयो' इति हैम [ ४।५९ ] ॥ ( १ ) ॥*॥ शिफा मूलतरुप्ररोह तत्सहित कन्दो मूलम् ॥ * ॥ 'शिफा' इति

१ 'खगराजीपधा तरे' इति पा० ।

२ 'दिङ्नागे इति पा० ।

१ 'शाककदम्बके' इति पा० ।

'कन्दम्' इति च पृथक् नामनी इत्यन्ये ॥ ( २ ) ॥ * ॥ द्वे 'पद्मकन्दस्य'।

किञ्जल्कः केसरोऽस्त्रियाम् ।

किञ्जल्कः, केसरः ( २ पु न ), 'कमल के केसर' ( पराग ) के २ नाम हैं।

किंजल्क इति ॥ किंचिज्जलति । 'जल अपवारणे' (चु० प० से० ) । बाहुलकात्कः ॥ (१) ॥*॥ के जले सरति । 'सृ गतौ' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । 'हलदन्तात्–' ( ६।३।९ ) इत्यलुक् । दन्त्यसः [केसर.] । ( "सवितृ, किसलयकसरसभाः' इति सभेदात् ) ॥ * ॥ के शीर्यते । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'ऋदोरप्' (३।३।५७) । 'तालव्यश: [केशरः] । 'केसरं हिङ्गुनि क्लीबं, किंजल्के न स्त्रियां, पुमान्। सिंहच्छटायां पुंनागे बकुले नागकेसरे'[2] [इति मे० १३३।१४२] ॥ (२) ॥*॥ द्वे 'पद्मकेसरस्य'।

संवर्तिका नवदलम्

संवर्तिका ( स्त्री ), नवदलम् (न), 'कमल के नये पत्ते' के २ नाम हैं।

समिति ॥ संवर्तते । 'वृतु वर्तने' (भ्वा० आ० से०) । 'हुयामाश्रुभसिभ्यस्त्रन्' ( उ० ४।११९ ) इतीन् । 'संवर्तिर्नवपत्रिका' इति बोपालित. । तत स्वार्थे कन् ( ५।३।७५ ) ॥ ( १ ) ॥ * ॥ नवं च तद्दलं च ॥ ( २ ) ॥ * ॥ द्वे 'पद्मादीनां नवपत्रस्य'।

बीजकोषो वराटकः ॥ ४३ ॥

इति वारिवर्गः ॥ १० ॥

बीजकोशः, वराटकः (२ पु ), 'कमलगट्टे' के २ नाम हैं।

बीजेति ॥ बीजस्य कोषः पात्रमाधारः । तालव्यान्तः [ बीजकोशः ] अपि ॥ ( १ ) ॥ * ॥ व्रियते दलैः । 'वृञ् आवरणे' । 'अन्येभ्योऽपि–' इत्याटच् । ततः स्वार्थे कन् ( ५।३।७५ ) । यद्वा—वरं दलवरणम् अटति । 'अट गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । ततः स्वार्थे कन् ( ५।३।७५ ) । वराटकः पद्मबीजकोशे रज्जौ कपर्दके' ( इति मे० १६।२०२ ) ॥ (२) ॥ * ॥ द्वे 'पद्मबीजस्य'।

इति वारिवर्गविवरणम् ॥ १० ॥

उक्तान् वर्गान् संगृह्णाति—

स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।
पातालभोगिनरकं वारि चैषां च संगतम् ॥ ४४ ॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
[3]स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ ४५ ॥

मैंने ( अमरसिंहने ) 'स्वर् १, व्योम २, दिक् ३, काल ४, धी ५, शब्दादि ६, नाट्य ७, पातालभोगि ८, नरक ९ और वारि १०' इन दस वर्गों तथा इनके प्रसङ्ग से प्राप्त 'देवता, राक्षस, मेघ, विद्युत्' आदि को कहा है। ('शब्दादि' के 'आदि' शब्द से रस, गन्ध, · ' का संग्रह है')।

श्रीअमरसिंह के बनाये हुए, नाम ('स्वर्, स्वर्ग, नाक ···') और लिङ्ग ('पुंल्लिङ्ग, स्त्रीलिङ्ग, नपुंसकलिङ्ग और अव्ययादि') को बतलानेवाले 'नामलिङ्गानुशासन' अर्थात् 'अमरकोष' नामक इस ग्रन्थ में 'स्वर्' आदि का यह प्रथम काण्ड (भाग) अङ्ग ( भेद और उपभेद ) के सहित समर्थित होकर सम्पूर्ण हुआ।

उक्तमिति ॥ अत्रैकादश[4] वर्गा. ।

इति श्रीवघेलवंशोद्भवश्रीमहीधरविषयाधिपश्रीकीर्तिसिंहदेवाज्ञया श्रीभट्टोजिदीक्षितात्मजश्रीभानुजी-दीक्षितविरचितायाममरटीकायां व्याख्यासुधायां प्रथमकाण्डः संपूर्णतामगात् ।

इति श्रीमदमरसिंहविरचितेऽमरकोषे प्रथमं काण्डं समाप्तम् ।

---

१. कोष्ठस्थः पाठः निर्णयसागरीय. ।

२. 'केशरं हिङ्गुनि प्रोक्तं केशरो नागकेशरे ।' इति विश्व. ( १४१।१९४ ) ।

३. स्वादिशब्देनात्र पातालवर्गो विवक्षितो यतः नाट्यवर्गान्तं स्वर्गवर्ग. तदुत्तर काण्डसमाप्ति यावत् पातालवर्ग. इति प्रथमे काण्डे द्वयोरेव वर्गयोर्व्यवस्थेति मुकुटाशय. ।

४. 'मङ्गलाचरण-प्रतिज्ञा-परिभाषा-श्लोकानामेकं पृथग्वर्गं मत्वा 'अत्रैकादशवर्गा' इत्युक्तिसङ्गतिर्बोध्या' इति यत् कैश्चित्समाहितं तन्न, स्वर्व्योमेतिमूलविरुद्धत्वात्, पातालवर्गस्य भोगिवर्गस्य च पृथग्गणनयैवैकादशवर्गोक्तिसंगतेश्च ।

॥ श्रीः ॥

# अमरकोषः

## सटिप्पण 'रामाश्रमी' ( व्याख्यासुधा ) संस्कृतव्याख्यया प्रकाशाख्यहिन्दीव्याख्यया चोपेतः

## द्वितीयं काण्डम्

### अथ भूमिवर्गः

**वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।**
**नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥**

इस द्वितीय काण्ड में अङ्गों और उपाङ्गों के सहित 'पृथ्वी पुर, पर्वत, वनौषधि, मृगादि ( 'आदि' शब्द से 'पक्षी, कीट' आदि का संग्रह है अथवा 'मृगादि' शब्द सिंहवाचक है ), मनुष्य, ब्रह्म, क्षत्रिय, वैश्य और शूद्र; ये १० वर्ग अर्थात् 'भूमिवर्ग' १, पुरवर्ग २, शैलवर्ग ३, वनौषधिवर्ग ४,…… ……' कहे गये हैं ।

वर्गा इति ॥ इह द्वितीयकाण्डे । वर्गा उक्ता वदितुमारब्धा । 'आदिकर्मणि क्तः' (३।४।७१) । कीदृशा -साङ्गोपाङ्गैः, पृथिव्यादिभिरुपलक्षिता । तत्राङ्गानि मृदादीनि । उपाङ्गानि खिलादीनि । आपणादीनि विपण्यादीनि । शिलादीनि मनःशिलादीनि । वृक्षादीनि पुष्पादीनि । मृगशब्द आरण्यपशुमात्रपर । 'आरण्या पशवो मृगा' इति स्मृते. । आदिशब्देन पक्षिकीटादीना ग्रहणम् । तस्य चाङ्गोपाङ्गानि पक्षिपक्षादीनि । यद्वा—मृगानत्तु शील यस्य स मृगादी सिंह. ।

**भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ।**
**धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः ॥ २ ॥**
**सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ।**
**गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ ३ ॥**
**विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा [ १ ]**
**भूतधात्री रत्नगर्भा जगती सागराम्बरा [ २ ]**

– भूः (=भूर्, अ०), भूमि., अचला, अनन्ता, रसा, विश्वम्भरा, स्थिरा, धरा, धरित्री, धरणी, क्षोणी, ज्या, काश्यपी, क्षितिः, सर्वंसहा, वसुमती, वसुधा, उर्वी, वसुन्धरा, गोत्रा, कुः, पृथिवी, पृथ्वी, क्ष्मा, अवनि., मेदिनी, मही ( २७ स्त्री ), 'पृथ्वी' के २७ नाम हैं ।

[ विपुला, गह्वरी, धात्री, गौ. ( =गो ), इला, कुम्भिनी, क्षमा, भूतधात्री, रत्नगर्भा, जगती, सागराम्बरा ( ११ स्त्री ), 'पृथ्वी' के ११ नाम ये भी हैं ]।

भूरिति ॥ भवति । कर्तरि क्विप् (३।२।१७८) । 'भूः स्थानमात्रे कथिता धरण्यामपि योषिति' (इति मे० १०६। १)। यत्तु—'भवत्यस्या सर्वम्' इति भू । बहुलवचनात् (३। ३।११३ )—अधिकरणे क्विप् ( ३।३।१७८ ) —इत्याह मुकुट । तन्न । उक्तरीत्या निर्वाहात् । 'अद्भ्यः पृथिवी' इति श्रुतिविरोधाच्च ॥ ( १ ) ॥ * ॥ भवति । 'भुव. कित्' (उ० ४।४५) इति मि ।—'भुव मिमन्'—इति मुकुट. । तन्न । तादृशसूत्रादर्शनात् । 'कृदिकारात्—' (ग० ४।१।४५) इति ङीप् वा । 'भूमि क्षितौ स्थानमात्रे' इति हैमः [ २। ३३५] ॥ (२) ॥*॥ न चलति । 'चल कम्पने' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । अचला सन्त्यस्याम्, इनि वा । अच् (५।२।१२७ ) । 'अचलस्तु गिरिकीलयो. । अचला भुवि' इति हैम [३।६५९-६०] ॥ ( ३ ) ॥*॥ नास्त्यन्तोऽस्या । यद्वा—अनन्तोऽस्ति धारको यस्याः । 'अनन्त केशवे शेषे पुमान्, अनवधौ त्रिपु । अनन्ता च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्यो स्यादनन्त सुरवर्त्मनि' [ इति मे० ६०।८१-८३ ] ॥ ( ४ ) ॥ * ॥ 'रसोऽस्यामस्ति । अर्शआद्यच् ( ५।२।१२७ ) । रस्यते वा । 'रस आस्वादने' चुरादावदन्त । घञ् (३।३।११३) । अच् (३। ३।५६ ) वा । यत्तु—घञर्थे को ( ३।३।५८ ) वा—इति मुकुट । तन्न । परिगणनात् । अच. सत्त्वाच्च । [ 'रसा

तु रसनापाठासल्लकीक्षितिवङ्कषु [ इति हैम २।६०१ ]॥ ( ५ ) ॥ *॥ विश्व । बिभर्ति [ 'डुभृञ् धारणपोषणयो' जु० उ० अ० ] 'सञ्ज्ञाया भृतृवृजि–' (३।२।४६) इति खच् । 'विश्वम्भरोऽच्युते शक्रे पुंसि, विश्वम्भरा भुवि' [ इति मे० १४४।२१५ ] ॥ ( ६ ) ॥ * ॥ तिष्ठति । अजिरादित्वात् (उ० १।५३) किरच् । 'स्थिरा भूशालपर्ण्योर्ना धनौ मोक्षेऽचले त्रिषु' [ इति मे० १२९।९७ ] ॥ (७) ॥*॥ धरति विश्वम् । 'धृञ् धारणे' (भ्वा० उ० अ०) । यद्वा–ध्रियते । 'धृङ् अवस्थाने' ( तु० आ० अ० ) । पचाद्यच् ( ३।१।१३४ ) । धरा अस्त्यस्या वा । 'धरः कूर्माधिपे गिरौ । कर्पासतूलेऽथ धरा मेदोभूमिजरायुषु' इति हैम. [ २ ४४२-४३ ] ॥ ( ८ ) ॥ * ॥ 'अविन्नादिभ्य इत्नोत्नौ' ( उ० ४।१७३ ) । गौरादिङीष् ( ४।१।४१ ) ॥ (९) ॥ * ॥ 'अर्तिसृधृ–' ( उ० २।१०२ ) इत्यनि । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीप् ।—गौरादित्वान्ङीष् (४।१।४१)—इति मुकुटस्य प्रमादः । [ 'धरणोऽहिपतौ लोके स्तने धान्ये दिवाकरे ।- ] धरणं धारणे मानविशेषे धरणी भुवि' इति हैम [ इति हैम ३।२१८-१९ ] ॥ ( १० ) ॥ * ॥ क्षौति । 'टुक्षु शब्दे' ( अ० प० अ० )। बाहुलकान्नि । ( 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष्वा ) ॥ ( ११ ) ॥ * ॥ जिनाति । 'ज्या वयोहानौ' (क्र्या० प० अ०) । मव्यादित्वाद्यगन्तो (उ० ४।११२) निपातितः । 'ज्या मौर्वी ज्या वसुंधरा' इति शाश्वतः [६२९] । [ 'ज्या तु मातरि क्ष्मामौर्व्यो' इति हैम १।११-१२ ] ॥ ( १२ ) ॥ * ॥ कश्यपस्येयम् । 'काश्यप उक्तो मुनिमृगयोर्भेदे च काश्यपी क्ष्मायाम्' इति मेदिनी [ १०३। १८ ] ॥ (१३) ॥*॥ क्षियति । 'क्षि निवासगत्योः' (तु० प० अ० ) । 'क्तिच्क्तौ च–' इति ( ३।३।१७४ ) क्तिच् । यत्तु—क्षियन्त्यत्र—इति मुकुटः । तन्न । 'अजब्भ्याम्–' ( वा० ३।३।१२६ ) इति ल्युटा बाधात् । 'क्षितिर्गेहे भुवि क्षये' इति हैम [ २।१६४ ] ॥ (१४) ॥*॥ सर्वं सहते । 'षह मर्षणे' ( भ्वा० आ० अ० ) । 'पूः सर्वयोः–' ( ३।२। ४१ ) इति खच् । [ सर्वंसह सहिष्णौ स्यात्सर्वंसहा पुनः क्षितौ' इति हैम ४।३५९ ] ॥ ( १५ ) ॥*॥ वसु धनमस्त्यस्याम् । मतुप् (५।२।९४) ॥ (१६) ॥*॥ वसु ददाति । 'आतोऽनुप–' ( ३।२।३ ) इति क ॥ ( १७ ) ॥ * ॥ ऊर्णोति, ऊर्णूयते वा । 'ऊर्णुञ् आच्छादने' ( अ० उ० से० ) । 'महति ह्रस्वश्च' ( उ० १।३१ ) इत्युः, नुलोपः, ह्रस्वः च । 'वोतो गुणवचनात्' (४।१।४४) इति ङीष् ॥ (१८) ॥*॥ वसु धारयति । 'सञ्ज्ञाया भृतृवृजि–' (३।२। ४६) इति खच् । 'खचि ह्रस्वः' ( ६।४।९४ ) ॥ (१९) ॥ * ॥ गोत्रा शैला सन्त्यस्याम् । अर्शआद्यच् ( ५।२। १२७ ) । गां जलं त्रायते वा । 'त्रैङ् पालने' ( भ्वा० आ० अ० ) । 'आतोऽनुप–' (३।२।३) इति क ॥ (२०) ॥*॥ कुवते । 'कुङ् शब्दे' (भ्वा० आ० अ०) । मितद्र्वादित्वाद् ( वा० ३।२।१८० ) डुः ॥ ( २१ ) ॥*॥ प्रथते । 'प्रथ विस्तारे' (भ्वा० आ० से०) । 'प्रथे: षिवन् संप्रसारणं च' ( उ० १।१४९ ) । षित्त्वात् ( ४।१।४१ ) । ङीष् ॥*॥ 'पथ्वम्' इत्येके । पृथवी । 'पृथिवी पृथवी पृथ्वी' इति शब्दार्णव. ॥ (२२) ॥*॥ ('प्रथिम्रदि–') (उ० १।२८) इति कुप्रत्यये संप्रसारणे 'वोतो गुण–' (४।१।४४) इति ङीषि पृथ्वी । 'पृथ्वी भूमौ महत्यां च स्वक्पन्यां कृष्णजीरके' [इति मे० १५९।१९] ॥ ( २३ ) ॥*॥ क्षमते । 'क्षमूष् सहने' ( भ्वा० आ० से० ) । 'क्षमेरुपधालोपश्च' (उ० ५। ६५) इत्यच् । यत्तु—पृषोदरादित्वात् ( ६।३।१०९ ) अरलोपः । बाहुलकान्मन् टिलोपश्च—इति मुकुट । तन्न । उक्तरीत्या निर्वाहात् ॥*॥ पचाद्यचि (३।१।१३४) क्षमा च । [ 'क्षमा भूमौ तितिक्षायां स्त्रियां, युक्ते नपुंसकम् । वाच्यवच्छक्तहितयो ' इति मे० १०८।४-५ ] ॥ ( २४ ) ॥*॥ अवति अव्यते वा । 'अव रक्षणादौ' ( भ्वा० प० से० ) । 'अर्तिसृधृ–' (उ० २।१०२) इत्यनि ॥ ( २५ ) ॥*॥ मेदमस्त्यस्याम् । अत इनि (५।२।११५) । 'मलघ्नी मेदकुष्ठहा' इति शालिहोत्रः । मेद्यति वा । 'ञिमिदा–'(दि० प० से०) । ग्रह्यादित्वात् (३।१।१३४) इनि ॥ (२६) ॥ * ॥ मह्यते । 'मह पूजायाम्' चुरादावदन्त । 'ण्यन्तात् अच इः' (उ० ४।१३९) । महि । 'कृदिकारात्–' ( ग० ४।१।४५) इति ङीप् । यत्तु—महान्ते भूतान्यस्याम्, मह्यते वा । 'पुंसि–' (३।३।११८) इति घ । गौरादिङीष् (४।१। ४१ )—इति मुकुट । तन्न । 'हलश्च' (३।३।१२१) इति घञ्प्रसङ्गात् । कर्मणि घस्याप्रसङ्गाच्च । 'करणाधिकरणयो' अनुवर्तनात् । 'वीचि पङ्क्तिर्मही वेल्लिरित्याद्या ह्रस्वदीर्घयो ' इति वाचस्पति । यद्वा—महीयते । 'महीङ् पूजायाम्' कण्ड्वादियगन्त । 'क्विप् च' (३।२।७६) इति क्विप्यल्लोपयलोपौ । 'कृदिकारात्–'(ग० ४।१।४५) इति ङीप् । तदभावे विशप –इति वक्ष्यित् । तन्न । 'कारग्रहणात्' इत्युक्तत्वात् । 'मही नद्यन्तरे भूमौ मह 'उत्सवतेजसो ' इति हैम[2] ॥ (२७) ॥*॥ सार्वविभक्ति 'भूमे' ।

**मृन्मृत्तिका**

मृत् ( =मृद् ), मृत्तिका ( २ स्त्री ), 'मिट्टी' के २ नाम हैं ।

मृदिनि ॥ मृद्यते । 'मृद क्षोदे' ( क्र्या० प० से० ) ।

---

१ 'उत्सवतेजसो' इति पा० ।

२ पाठोऽयंमेदिन्याम् ( १७५।७ ) वर्तते । हैमे तु 'मही भुवि नदीभेदे' ( २।६१४ ) इत्येव पाठ ।

संपदादिः (वा० ३।३।१०८) ॥ (१) ॥*॥ स्वार्थे 'मृद-स्तिकन्' (५।४।३९) ॥ ( २ ) ॥*॥ द्वे 'मृद'।

**प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।**

मृत्सा, मृत्स्ना ( २ स्त्री ), 'अच्छी मिट्टी' के २ नाम हैं।

प्रशस्तेति ॥ मृच्छब्दात् 'सस्नौ प्रशंसायाम्' ( ५।४।४०) ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'प्रशस्तमृद'।

**उर्वरा सर्वसस्याढ्या**

उर्वरा (स्त्री), 'उपजाऊ मिट्टी' का १ नाम है।

उर्वरेति ॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०)। पचाद्यच् (३।१।१३४) । यद्वा—ईर्यते । 'ऋ गतौ' (क्र्या० प० से०) । 'ऋदोरप्' (३।३।५७) । उरुणाभरा । यद्वा—ऊर्व्यते । 'उर्वी हिंसायाम्' ( भ्वा० प० से० ) । 'खनो घ च' (३।३।१२५) इति घ । 'उपधायां च' ( ८।२।७८ ) इति दीर्घस्तु संज्ञापूर्वकत्वान्न । उर्वं राति । क (३।२।३)। यद्वा—'संपदादिक्विप्' ( वा० ३।३।१०८ ) । 'राल्लोपः' (६।४।२१) । उर् चासौ वरा च । उर्वु वरा वा । 'उर्वरा तु भूमात्रे सर्वसस्याढ्यभुव्यपि' इति हैम [३।५६०]॥(१) ॥*॥ सर्वाणि च तानि सस्यानि च । तैराढ्या मृत् । एकं 'सस्याढ्यभूमेः'।

**स्यादूषः क्षारमृत्तिका ॥ ४ ॥**

ऊषः ( पु ), क्षारमृत्तिका (स्त्री), 'खारी मिट्टी' अर्थात् 'सावी मिट्टी, रेह' के २ नाम हैं।

स्यादिति ॥ ऊषति । 'ऊष रुजायाम्' ( भ्वा० प० से०) । 'इगुपध-' (३।१।१३५) इति क । ['ऊष क्षारमृत्तिकायां प्रभातेऽपि पुमानयम् । तत्संध्यायां च रन्ध्रे च चन्दनाद्रौ श्रवोबिले' इति मेदिनी १६५।५] ॥ (१) ॥*॥ क्षारयति । 'क्षर संचलने' (भ्वा० प० से०) । णिच् ( ३।१।२६) । पचाद्यच् (३।१।१३४) । क्षारा चासौ मृत्तिका च ॥ (२) ॥*॥ द्वे 'क्षारमृत्तिकायाः'।

**ऊषवानूषरो द्वावप्यन्यलिङ्गौ**

ऊषवान् (=ऊषवत्), ऊषरः (२ त्रि), 'खारी मिट्टीवाले स्थान' अर्थात् 'ऊसर, या रेहचट जमीन' के २ नाम हैं।

ऊषेति ॥ ऊषोऽस्त्यस्मिन् । मतुप् (५।३।९४) ॥(१) ॥*॥ 'ऊषसुषि-' (५।२।१०७) इति र ॥ (२) ॥*॥ द्वे 'क्षारमृद्विशिष्टस्य'।

**स्थलं स्थली ।**

स्थलम् (न), स्थली (स्त्री), 'स्थल' के २ नाम हैं। ('भूमिमात्र' का 'स्थलम्', 'अकृत्रिम भूमि' का 'स्थली' तथा 'कृत्रिम भूमि' का 'स्थला' नाम है)।

स्थलमिति ॥ स्थलति । 'ष्ठल स्थाने' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । यत्तु—स्थल्यतेऽत्र । 'घञर्थे कः' (वा० ३।३।५८)—इति मुकुटः । तन्न । परिगणनात् ॥ (१) ॥*॥ स्थली अकृत्रिमा । 'जानपद-' (४।१।४२) इति ङीप् । कृत्रिमा स्थला । स्थलं तूभयसाधारणम् ॥ (२) ॥*॥ द्वे 'स्थलस्य'।

**समानौ मरुधन्वानौ**

मरुः, धन्वा (=धन्वन् । २ पु), 'मरुस्थल' के २ नाम हैं।

समानाविति ॥ म्रियन्तेऽस्मिन्भूतानि । 'भृमृशी-'(उ० ११७ ) इत्यु । 'मरुर्ना गिरिधन्वनो' [ इति मे० १२८।७५] ॥ (१) ॥*॥ धन्यतेऽस्मात् '—धविर्गत्यर्थः सौत्रः' इति मुकुटः तन्न । [धातुपाठे 'धवि गत्यर्थः' इति भ्वादौ दर्शनात्] 'कनिन् युवृषि-' (उ० १।१५६) इति कनिन् । 'धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च' ( इति मे० ८८।७८] ॥ (२) ॥*॥ द्वे 'निर्जलदेशस्य'।

**द्वे खिलाप्रहते समे ॥ ५ ॥**

**त्रिषु**

खिलम्, अप्रहतम् ( २ त्रि ), 'बिना जुती हुई जमीन' के २ नाम हैं।

द्वे इति ॥ खिलति । 'खिल उञ्छे' ( तु० प० से० ) । 'इगुपध-' ( ३।१।१३५ ) इति क । खिल्यते वास्मिन् । 'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वान्न गुणः । [ 'खिलमप्रहते क्लीबं सारसंक्षिप्तवेधसोः' इति मे० १४६।१३] ॥ (१) ॥*॥ न प्रहन्यते स्म । 'हन हिंसागत्योः' (अ० प० अ०) । कर्मणि क्तः ( ३।२।१०२ ) ॥ ( २ ) ॥*॥ समे समानार्थे । द्वे 'हलाद्यकृष्टस्य' । ( 'त्रिषु लिङ्गत्रये । स्त्रियां खिला अप्रहता) ।

**अथो जगती लोको विष्टपं भुवनं जगत् ।**

जगती (स्त्री), लोकः (पु), विष्टपम्, भुवनम्, जगत् (३ न), 'भूतल जगत्' ५ नाम हैं।

अथेति ॥ गच्छति । 'गम्लृ गतौ' (भ्वा० प० अ०)। 'पृषद्बृहन्महज्जगत्-'(उ० २।८४) इति निपातितः । शतृवद्भावात् 'उगितश्च' (४।१।६) इति ङीप् । 'जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च'॥ [इति मे० ६२।१०९](१) ॥*॥ लोक्यते । 'लोकृ दर्शने' ( भ्वा० आ० से० ) । घञ् (३।३।१४)। 'लोको विश्वे जने' इति हैम [२।१६]॥(२) ॥*॥ विशन्त्यत्र । 'विश प्रवेशने'(तु० प० अ०)। 'विटपविष्टपविशिपोलपाः'(उ०३।१४५)॥*॥ पादिपाठे तु—पिष्यते पिष्यते, वात्र । 'पिषृ[2] गतौ' । 'पिष्लृ संचूर्णने' ( रु० प० अ०) वा । ('भुवनं) पिष्टप पुमान्' इति बोपालितः ॥

१ कोष्ठस्थ पाठः निर्णयसागरीय.।

२. तालव्यान्तः 'अवयवार्थकः तौदादिकः', गत्यर्थस्तु दन्त्यान्तः चौरादिक इति बोध्यम्।

(३) ॥ भवन्त्यस्मिन् । 'रञ्जे क्युन्' (उ० २।७९) 'भूसूधुभ्रस्जिभ्य–' (उ० २।८०) इति क्युन् । ['भुवन पिष्टपेऽपि स्यात्सलिले गगने जने' इति मे० ९०।१०२] ॥ (४) ॥*॥ यत्तु—जङ्गम्यते–इति स्वामिना विगृहीतम् । यच्च पुन पुनर्वृद्धिक्षयौ गच्छति–इति मुकुटेन । तन्न । 'वर्तमाने बृहत्–' ( उ० २।८४ ) इति सूत्रे यङर्थस्य वृत्तिकृद्भिर नुक्ते । गत्यर्थाना कौटिल्य एव यङ्विधानाच्च । 'जगत् स्याद्विष्टपे क्लीब वायौ ना, जङ्गमे त्रिषु' [इति मे० ६२। १०९] ॥ ( ५ ) ॥*॥ एव महाभूत पृथ्वी, पञ्चमहाभूते न्द्रियविषयात्मक तु जगत्' इति पृथ्वीजगतोर्भेद । पञ्च 'भूतलस्य' ।

**लोकोऽयं भारतं वर्षम्**

**भारतम् ( न ), 'हिन्दुस्तान' का १ नाम है ।**

लोक इति ॥ अय जम्बूद्वीपनवमाश[१] । भरतस्य राज्ञ इदम् । 'तस्येदम्' (४।३।१२०) इत्यण । 'महर्षिव्यासरचिते जम्बूद्वीपे च भारतम्' इति रभस ॥ ( १ ) ॥*॥ वृष्यते 'वृषु सेचने' ( भ्वा० प० से० ) । 'भयादीनामुपसङ्ख्यानम्' (वा० ३।३।५६) इत्यच् । 'पुनपुमकयोर्वर्षं जम्बूद्वीपाब्द-वृष्टिषु' इति रुद्र । 'वर्षं स्थान विदु प्राज्ञा इम लोक च भारतम् इति भार्गव । 'उत्तर यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारत नाम भारती यत्र सतति ' । 'वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु' [इति मे० १६७। २४] ॥ एव 'भारतवर्षस्य' ।

**शरावत्यास्तु योऽवधेः ॥ ६ ॥**

**देशः प्राग्दक्षिणः प्राच्यः**

**प्राच्य' ( पु ), 'शरावती नदी के पूर्व और दक्षिण वाले देश' का १ नाम है ।**

शरेति ॥ शरावत्या[२] नद्या मर्यादाया । प्राचा सहितो दक्षिणो देश । प्राच्या भव । 'द्युप्रागपाग्–' (४।२।१०१) इति यत् ॥ (१) ॥*॥ एक 'प्राच्यदेशस्य' ।

**उदीच्यः पश्चिमोत्तरः ।**

**उदीच्य (पु), 'शरावती नदी के पश्चिम और उत्तर वाले देश' का १ नाम है ।**

उदीच्य इति ॥ तत एवावधे । पश्चिमेन सहित उत्तरो देश उदीच्या भव' । 'द्युप्राग्–' (४।२।१०१) इति यत् ॥ (१) ॥*॥ एकम् 'उदीच्यदेशस्य' ।

**प्रत्यन्तो म्लेच्छदेशः स्यात्**

**प्रत्यन्त, म्लेच्छदेश (२ पु), 'म्लेच्छ देश' अर्थात् 'कामरूप आदि' के २ नाम हैं ।**

प्रत्यन्त इति ॥ गतिगतोऽन्तम् । 'अत्यादय क्रान्ताद्यर्थे–' (वा० २।२।१८) इति समास ॥ ( १ ) ॥*॥ म्लेच्छाना' देश ॥ ( २ ) ॥*॥ 'चातुर्वर्ण्यव्यवस्थान यस्मिन्देशे न विद्यते । त म्लेच्छविषय प्राहुरार्यावर्तमत परम्' ॥ द्वे 'शिष्टाचाररहितपाशादिदेशस्य' ।

**मध्यदेशस्तु मध्यमः ॥ ७ ॥**

**मध्यदेश, मध्यम (पु), 'मध्यदेश' के २ नाम हैं ।**

मध्येति ॥ मध्यश्चासौ देशश्च ॥ (१) ॥*॥ मध्ये भव । 'मध्यान्म ' (४।३।८) ॥ (२) ॥*॥ 'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेश प्रकीर्तित ' इति मनु (२।२१) । विनशन कुरुक्षेत्रम् । द्वे 'मध्यदेशस्य' ।

**आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः ।**

**आर्यावर्त (पु), पुण्यभूमि (स्त्री), 'विन्ध्याचल और हिमालय पहाड़ के बीचवाले देश' के २ नाम हैं ।**

आर्येति ॥ आर्या आ समन्तात् वर्तन्तेऽत्र । 'हलश्च' (३।३।१२१) इति घञ ॥ (१) ॥*॥ पुण्यस्य भूमि । पुण्या चासौ भूमिश्च, इति वा ॥ ( २ ) ॥*॥ 'आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् । तयोरेवान्तर गिर्योरार्यावर्तं विदुर्बुधा ' इति मनु (२।२२) । हिमप्रधानोऽग हिमाग । 'हिमाल्यो इति पाठे तु हिमेन अल्यते । 'अल भूषणादौ' ( भ्वा० प० से० ) । घञ् ( ३।३।१५ ) । द्वे विन्ध्यहिमागमध्यदेशस्य' ।

**नीवृज्जनपदः**

**नीवृत्, जनपद' (२ पु), 'मनुष्यों के ठहरने की जगह—ग्राम, नगर' के २ नाम हैं ।**

नीवृदिति ॥ नियतो वर्तते । अधिकरणस्य कर्तृत्वविवक्षाऽत्र । 'वृतु वर्तने' ( भ्वा० आ० से० ) । क्विप (३।२। १७८) । 'नहिवृति–' (६।३।११६) इति दीर्घ । यत्तु—नियमेनावश्यतया, नियत वा वर्तन्ते वसन्ति जना अत्र' इति पुंसि [२]बाहुलकात् सपदादित्वात् (वा० ३।३।१०८),

१ 'हिमवान् हेमकूटश्च निषधो मेरुरन्तगे । नील श्वेतश्च शृङ्गीवान् गन्धमादनमष्टमम् ॥' इति सीमाविच्छिन्नान्यन्यानीलावृत्यादीन्यष्टौ वर्षाणि ।' इति क्षी० स्वा० अष्टवर्षाणा नामान्याह तत्रैद भारत मिलित्वा नव वर्षाणि ।

२ 'एङ् प्राचा देशे' इति सूत्रस्य 'काशिका' वचनमत्र क्षी० स्वा० उद्धृतम्—'प्रागुदञ्चौ विभजते हस क्षीरोदके यथा । विदुषा शब्दसिद्धयर्थं सा न पातु शरावती ।' इति ।

१ कृष्णसारस्तु चरति मृगो यत्र स्वभावत । स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्तत पर ॥ इति मनु ( २।२३ ) ।

२ 'पुंसि सज्ञाया घ प्रायेण' इति सूत्रेण ।

'अन्येभ्योऽपि दृश्यते' ( ३।२।१७८ ) इति वा अधिकरणे क्विप्-इति मुकुटः। तन्न। बाहुलकस्यागतिकगतित्वात्॥ ( १ )॥*॥ जन पदं वस्तु यत्र। 'भवेज् जनपदो जानपदोऽपि जनदेशयो' इति विश्व-मेदिन्यौ[1]॥ ( २ )॥*॥ द्वे 'जननिवासस्थानस्य'।

देशविषयौ तूपवर्तनम्॥ ८॥

देशः, विषयः ( २ पु ), उपवर्तनम् ( न ), 'देश' अर्थात् 'ग्राम के समुदाय' के ३ नाम हैं।

देशेति॥ दिशति। 'दिश अतिसर्जने' (तु० उ० अ०)। पचाद्यच् (३।१।१३४)। दिश्यते वा। घञ् (३।३।१४)॥ (१)॥*॥ विसिनोति। 'षिञ् बन्धने' (स्वा० उ० अ०)। पचाद्यच् (३।१।१३४)। 'परिनिविभ्य–' (८।३।७०) इति षत्वम्।—विषीयन्तेऽस्मिन्निति। 'एरच्' (३।३।५६)–इति विग्रहे तु मूर्धन्योऽनुपपन्नः। 'सिनसय' ( ८।३।७० ) इति क्तान्तयो सूत्रेऽनुवादात्। 'विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयो। शब्दादौ जनपदे च' इति हैम [३।५३६–७]॥ ( २ )॥*॥ उपवर्ततेऽत्र।—ल्युट् ( ३।३।११४ ) इति मुकुटः। तन्न। घञो ल्युडपवादत्वात्। अत –'अन्यत्रापि–' ( उ०२।७८ ) इति युच्॥ (३)॥*॥ त्रीणि 'ग्रामसमुदायलक्षणस्य स्थानमात्रस्य'।

त्रिष्वागोष्ठात्

यहाँ से लेकर 'गोष्ठं गोस्थानकं' ( २।९।१२ ) के पहले तक 'त्रिपु' का अधिकार होने से सब शब्द त्रिलिङ्ग हैं।

*त्रिष्विति॥ (आगोष्ठात्) गोष्ठशब्दमभिव्याप्य।*

नडप्राये नड्वान्नड्वल इत्यपि।

नड्वलः ( २ त्रि ), 'नरसल या नरकट जिस देशमें अधिक हों, उस देश' के २ नाम हैं।

नडेति॥ नडा प्राया यत्र। 'कुमुदनडवेतसेभ्यो ड्मतुप्' ( ४।२।८७ )। 'झयः' ( ८।२।१० ) इति 'मादुपधाया' ( ८।२।९ ) इति वा वत्वम्॥ ( १ )॥*॥ नडा सन्त्यस्मिन्। 'नडशादाड् ड्वलच्' (४।२।८८)॥ (२)॥*॥ द्वे 'नडाधिकदेशस्य'।

कुमुद्वान्कुमुदप्राये

कुमुद्वान् (=कुमुद्वत्, त्रि), 'जिस देशमें कुमुद अधिक हों, उस देश' का १ नाम है।

कुमुद्वानिति॥ कुमुदानि सन्त्यत्र॥ (१)॥*॥ कुमुदानि प्रायाण्यत्र। एकं 'कुमुदबहुलदेशे'।

वेतस्वान्बहुवेतसे॥ ९॥

वेतस्वान् (=वेतस्वत्, त्रि), 'जिस देशमें वेंत अधिक हों, उस देश' का १ नाम है।

वेतेति॥ वेतसाः सन्त्यत्र॥ (१)॥*॥ बहवो वेतसा यत्र। एकं 'बहुवेतसदेशे'।

शाद्वलः शादहरिते

शाद्वलः ( त्रि ), 'नई घासोंसे हरा भरा स्थान या देश' का १ नाम है।

शाद्वल इति॥ शीयते। 'शद्लृ शातने' (भ्वा०, तु० प० अ०)। ज्वलादित्वात् (३।१।१४०) ण। शीयतेऽस्मिन्निति वा। 'हलश्च' (३।३।१२१) इति घञ्। शादो बालतृणमस्मिन्। ड्वलच् (४।२।८८)॥ (१)॥*॥ शादैर्बालतृणैर्हरितः। एकं 'नवतृणप्रचुरस्य'।

सजम्बाले तु पङ्किलः।

पङ्किलः ( त्रि ), 'कीचड़वाले देश या स्थान' का १ नाम है।

सजम्बेति॥ जम्बालेन पङ्केन सह। 'पङ्कोऽस्मिन्नस्ति'। पिच्छादित्वात् ( ५।२।१०० ) इलच्॥ ( १ )॥*॥ द्वे 'सकर्दमस्य'।

जलप्रायमनूपं[1] स्यात्पुंसि कच्छस्तथाविधः॥ १०॥

जलप्रायम्, अनूपम् ( २ त्रि ), कच्छः ( पु ), 'बहुत जलवाले स्थान' के ३ नाम हैं।

जलेति॥ जलं प्रायं यत्र॥(१)॥*॥ अनुगता आपोऽत्र। 'ऋक्पूर–' (५।४।७४) इत्य। 'ऊदनोर्देशे' ( ६।३।९८ )। ['अनूपो महिषे नाम्बुप्रायदेशे तु वाच्यवत्' इति मेदिनी १०२।१३]॥ (२)॥*॥ तथाविधो जलप्राय। कं जलं छयति परिच्छिनत्ति। 'छो छेदने' (दि० प० अ०)। 'आतोऽनुप–' ( ३।२।३ ) इति क। 'कच्छमनूपम' इति बोपालित। 'कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च। कच्छास्तु देशे, कच्छा स्यात्परिधानपराञ्चले। चीर्यां वाराह्याम्' इति हैम २१६३–४]। 'त्रिषु' [ अ० २।१।९ ] इत्यस्य बाधनार्थं 'पुंसि' इति॥ (३)॥*॥ त्रीणि 'जलाधिकदेशस्य'।

स्त्री शर्करा शर्करिलः शार्करः शर्करावति।

शर्करा (नि० स्त्री), शर्करिलः, शार्करः, शर्करावान् (=शर्करावत्। ३ त्रि), 'अधिक बालूवाले या छोटे-छोटे कङ्कड़से युक्त बालूवाले प्रदेश' के ४ नाम हैं।

---

१. मेदिनीस्थोऽयं पाठ. ( ७८।४८ )। विश्वे तु—'भवेज्जनपदो देशे जने जानपदोऽपि च' इति पाठ।'

१. अनूपदेशलक्षणं यथा—'नानाद्रुमलतावीरुन्निर्झरप्रान्तशीतलैः। वनैर्व्याप्तमनूपं तत्सस्यैर्व्रीहियवादिभिः॥' इति महे०।

स्त्रीति ॥ [ 'शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे। उपलायां शर्करायुग्देशे च शकलेऽपि च ॥' इति हैम ३।६४२–४३ ] शर्करा (अश्मप्राया मृत्) अस्त्यत्र। 'देशे लुबिलचौ च' (५।२।१०५)॥(१)॥*॥(२)॥*॥ 'सिकताशर्कराभ्यां च' (५।२।१०४) इत्यण्। [ 'शार्करं स्याद् दुग्धफेने शर्करान्वितदेशयो' इति मेदिनी १३८।२२३] ॥ (३) ॥*॥ 'अन्यतरस्याम्' (५।२।९६) ग्रहणान्मतुप्[१](५।२।९४) च ॥ (४) ॥*॥ चत्वारि 'अश्मप्रायमृदधिकस्य वालुकायुक्तदेशस्य'।

**देश एवादिमौ**

उपर्युक्त चारों में आदिम 'शर्करा' और 'शर्करिलः' ये २ नाम केवल रेतीले प्रदेश के ही हैं।

देशे इति ॥ (तत्र) आदौ भवौ। 'मध्यान्म' (४।३।८) इत्यत्र 'आदेश्च' इति वचनान्म[२] ॥ आदिमौ शर्कराशर्करिलौ देश एव नान्यत्र। 'शार्कर, शर्करावान्' इतीमौ तु 'देशादेशयो'।

**एवमुन्नेयाः सिकतावति ॥ ११ ॥**

इसी तरह 'सिकता' आदि शब्दोंसे भी तर्क कर समझ लेना चाहिये।

एवमिति ॥ एवं 'सिकता', 'सिकतिल.' इतीमौ देश एव। 'सैकत', 'सिकतावान्' इति तु देशादेशयो.। केचित्तु सिकताशर्कराशब्दौ बहुवचनान्तावाहु ॥ (४) ॥ * ॥ चत्वारि 'वालुकाबहुलदेशस्य'।

**देशो नद्यम्बुवृष्टयम्बुसंपन्नव्रीहिपालितः।**
**स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥**

नदीमातृक', देवमातृक (२ त्रि), 'नदी, नहर आदि के पानीसे सींचनेपर तथा वर्षा होने पर जहाँ अन्न पैदा हो उस देश' का क्रमशः १–१ नाम है।

देश इति ॥ नद्यम्बुभिर्वृष्टयम्बुभिश्च संपन्नैर्धान्यैः पालित। नदी माताऽस्य। 'नद्यृतश्च' (५।४।१५३) इति कप ॥ (१) ॥*॥ देवो माताऽस्य। 'देवो मेघे सुरे राज्ञि' [इति मे० १५८।१२] ॥ (१) ॥*॥ क्रमेण एकैकं 'नद्यम्बुभिर्वृष्टयम्बुभि संपन्नदेशस्य'।

१ वस्तुतस्तु 'देशे लुबिलचौ च' इति सूत्रे 'च' कारग्रहणान्मतुप' इति पाठ साधीयान्, अत एवोत्तसूत्रे 'चादण्मतुप च' इति सिद्धान्तकौमुद्यामुक्तम्।

२ 'आदेश्च' इति वचनस्य 'मध्यान्म' इति सूत्रभाष्येऽनुपलब्धे 'सार्यचिर—' इति सूत्रोक्तेन 'अग्रादिपश्चिमाड्डिमच्' इति वार्तिकेन 'आदि'शब्दात् 'डिमच्'प्रत्यये 'आदिम'शब्दसाधुत्व सि० कौ० सम्मतमिति।

**सुराज्ञि देशे राजन्वान्स्यात्**

राजन्वान् (=राजन्वत्, त्रि), 'धर्मात्मा, शीलवान् और सदाचारी राजासे पालित देश' का १ नाम है।

सुराज्ञीति ॥ शोभनो राजा यत्र। 'न पूजनात्' (५।४।६९) इति टचोऽभाव –इति मुकुट। तन्न। बहुव्रीहौ टचोऽप्रसङ्गात्। मतुप् (५।२।९४)। प्रशंसायाम् (वा० ५।२।९४) 'राजन्वान् सौराज्ये' (८।२।१४) इति साधु ॥ (१) ॥*॥ एक 'स्वधर्मपरराजयुक्तदेशस्य'।

**ततोऽन्यत्र राजवान्।**

राजवान् (=राजवत्, त्रि), 'सामान्य राजासे पालित देश' का १ नाम है।

तत इति ॥ अन्यत्र राजमात्रयुक्तदेशे ॥ (१) ॥*॥ एकं 'सामान्यराजयुक्तदेशस्य'।

**गोष्ठं गोस्थानकम्**

गोष्ठम्, गोस्थानकम् (२ न), 'गौओं के रहनेके स्थान, गोशाला आदि' के २ नाम हैं।

गोष्ठमिति ॥ गावस्तिष्ठन्ति यत्र। 'घञर्थे–'(वा० ३।३।५८) इति क। 'अम्बाम्ब–' (८।३।९७) इति षत्वम्। 'गोष्ठं गोस्थानके, गोष्ठी सभासंलापयोः स्त्रियाम्' [ इति मे० ३९।४] ॥ (१) ॥*॥ गवां स्थानम्। स्वार्थे क[१] (५।३।७५) ॥ (२) ॥*॥ द्वे 'गवां स्थानस्य'।

**तत्तु गौष्ठीनं भूतपूर्वकम् ॥१३॥**

गौष्ठीनम् (न), 'जहाँ पहले गौ रहती हो, उस स्थान' का १ नाम है।

तत्त्विति ॥ पूर्वं भूतं गोष्ठम्। 'गोष्ठात्खञ भूतपूर्वे' (५।२।१८) इति खञ् ॥ (१) ॥*॥ एकं 'भूतपूर्वगोष्ठस्य'।

**पर्यन्तभूः परिसरः**

पर्यन्तभूः (स्त्री), परिसरः (पु), 'नदी और पहाड़ आदिके पासकी भूमि' के २ नाम हैं।

पर्यन्तेति ॥ पर्यन्ते भू. ॥(१)॥*॥ परित सरन्त्यत्र। 'पुंसि' (३।३।११८) इति घ। [ 'परिसर प्रान्तभू–दैवयोर्मृतौ' इति हैम ४।२७६] ॥(२)॥*॥ द्वे 'नद्यादिसमीपभूमे.'।

**सेतुराली स्त्रियां पुमान्।**

सेतुः (पु), आलिः (स्त्री), 'पुल' के २ नाम हैं।

सेतुरिति ॥ स्त्रियां वर्तमानायाम् आलौ सेतु (पुमान्)। सिनोति, सीयते वा। 'षिञ् बन्धने' (स्वा० उ० अ०)।

१ 'संज्ञायां कन्' इत्यनेन 'कन्'विधानादत्रापि 'क' इत्यत्र 'कन्' एव युक्त।

'सितनि-'(उ० १।६।९) इति तुन् ॥ (१) ॥*॥ आ अलत्यम्भ.। 'अल वारणे' (भ्वा० प० से०) । इन् (उ० ४। ११८) । यद्वा-अल्यतेऽनया । 'इणजादिभ्यः' ( वा० ३।३। १०८) ॥ (२) ॥*॥ द्वे 'सेतो', 'पुल' इति ख्यातस्य ।

वामलूरश्च नाकुश्च वल्मीकं पुनपुंसकम् ॥ १४ ॥

वामलूरः, नाकुः ( २ पु ), वल्मीकम् ( पु न ), 'बामी, बम्बीर, दिमकाण' अर्थात् 'दीमकों द्वारा इकट्ठा की हुई मिट्टी के ढेर' के ३ नाम हैं।

वामेति ॥ वामैर्वाम वा लूयते । 'लूञ् छेदने' (क्र्या० उ० से०) । बाहुलकाद्रक् । (१) ॥*॥ न अकति । 'अक कुटिलायां गतौ' ( भ्वा० प० स० ) । बाहुलकादु. । यद्वा-नम्यते भूरनेन । 'णम प्रह्वत्वे शब्दे च' (भ्वा० प० अ०)। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ० १।१८) इत्यु', नाकिश्च । इकार उच्चारणार्थं । [ 'नाकुर्मुन्यन्तरे पुम्वीधर-वल्मीकयो पुमान्' इति मे० ३।२७ ] ॥ ( २ ) ॥*॥ वलन्ते प्राणिनोऽत्र । 'अलीकादयश्च' (उ० ४।२५) इति निपातितः । ['व (द)ल्मीको नाकुवाल्मीक्यो रोगभेदे' इति हैम ३।९३] ॥ (३) ॥*॥ त्रीणि 'पिपीलिकादिनिष्कासितमृत्पुञ्जस्य' ।

अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥१५॥

अयनम्, वर्त्म ( =वर्त्मन् । २ न ), मार्गः, अध्वा (=अध्वन्), पन्थाः ( =पथिन् ३ पु ), पदवी, सृतिः, सरणिः, पद्धतिः, पद्या, वर्तनी, एकपदी ( ७ स्त्री ), 'मार्ग, रास्ते' के १२ नाम हैं।

अयनमिति ॥ अयन्ते ईयते वाऽनेन । 'करणा-' ( ३। ३।११७) इति मुकुट । तन्न । घञो ल्युडपवादत्वात् । आतो युच् (उ० २।७८) कर्मणि वा ल्युट् (३।३।११३) । 'अयनं पथि गेहेऽर्कस्योदग्दक्षिणतो गतौ' इति हैम [३।३८०]॥ (१)॥*॥ वृत्तं तत् । वर्ततेऽत्र वर्तन्तेऽनेन वा । मनिन्(उ० ४॥१४५)॥ (२)॥*॥ मृज्यते वितृणीक्रियते पादैः । 'मृजू शुद्धौ'(अ० प० से०)। मार्ग्यते । 'मार्ग अन्वेषणे' (चु० उ० से०)वा । यत्तु-मृग्यतेऽनेन-इति मुकुटेनोक्तम् । तन्न । अल्लोपस्य स्थानिवत्त्वाल्लक्षणाभावान्नोपधावृद्धिः स्यात् । 'मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि' इति हैम. [ २। ४२]॥(३)॥*॥ अत्ति बलम् (पथिकानाम्)। 'अद भक्षणे' (अ० प० अ०) । 'अदेर्ध च' (उ० ४।११६) इति क्वनिप्, धश्चान्तादेश । यत्तु-अत्यते सततं गम्यते अनेन इति मुकुटेनोक्तम् । तन्न । उक्तसूत्रविरोधात् । अततेर्धक्वनिपोरविधानात् [ 'अध्वा ना पथि संस्थाने स्यादवस्कन्दकालयो.' इति मे० ८५।३५ ] ॥ ( ४ ) ॥*॥ पथन्तेऽनेन । 'पथे गतौ' (भ्वा० प० स०) । पथिमथिभ्यामिनि.' । पतन्त्यनेन इति वा । 'पतस्थ च' [उ० सू० ४।१२] इतीनि., थोऽन्तादेशश्च ॥ * ॥ 'पथ' इत्यदन्तोऽपि । 'वाट. पथश्च मार्गश्च' इति त्रिकाण्डशेषः [२।१।१९] ॥ ( ५ ) ॥ * ॥ पद्यतेऽनया । 'पद्यटिभ्यामिव.' । 'कृदिकारात्-' ( ग० ४।१।४५ ) इति ङीष् ॥ ( ६ ) ॥ * ॥ सरन्त्यनया । 'सृ गतौ' (भ्वा० प० अ०) ।—क्तिन् ( ३।३।९४ )-इति मुकुट. । तन्न । 'अजब्भ्याम्-' ( वा० ३।३।१२६ ) इति ल्युट्प्रसङ्गात् । ( अत. ) करणस्यापि कर्तृत्वविवक्षायां 'क्तिच्क्तौ च' (३।३।१७४) इति क्तिच् । 'सृतिर्गतौ पथि' इति हैमः [ २।२१२ ] ॥ ( ७ ) ॥*॥ 'अर्ति-' (उ० २।१०२) इत्यनि. । 'सरणि. श्रेणिवर्त्मनो.' इति दन्त्यादौ रभस. । 'शुभ शुभे प्रदीप्ते च, शरणि पथि चावलौ' इति तालव्यादौ वजयात्तालव्यादिरपि [ शरणि. ] । तत्र 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । बाहुलकादनि ॥ ( ८ ) ॥ * ॥ पादाभ्यां हन्यते । 'हन हिंसागत्यो.' ( अ० प० अ० ) । क्तिन् ( ३।३।९४ ) । 'हिमकाषिहतिषु च' ( ६।३।५४ ) इति पद्भाव. । 'पद्धति. पथि पङ्क्तौ च' इति हैम [ ३। २९४ ] ॥ (९) ॥*॥ पादाय हिता । 'शरीरावयवाद्यत्' ( ५।१।६ ) । 'पद्यत्यतदर्थे' (६।३।५३) इति पद्भावः । 'पदव्यसिमन्दश्यम्' (४।४।८७) इति वा ॥ ( १० ) ॥*॥ वर्तन्तेऽनया । 'वृतेश्च' ( उ० २।१०६ ) इत्यनि. । 'वर्तनी पथि । वर्तने तर्कुपिण्डे च' इति हैम. [ ४।४४० ] ॥*॥ 'चात् (२।१०६ उणादिसूत्रेण)मुट्' इत्येके[२] । तत्र वर्त्मनि ॥ ( ११ ) ॥*॥ एक. पादोऽस्याम् । 'कुम्भपदीषु च' ( ५। ४।१३९ ) इति निपातित. । यद्वा-'सङ्ख्यासुपूर्वस्य' ( ५। ४।१४० ) इति पादस्यान्तलोप. । 'पादोऽन्यतरस्याम्' (४। १।८) इति वा ङीप् । 'पाद. पत्' (६।४।१४०)॥*॥ अत्र पक्षे 'एकपाद्' इत्यपि रूपान्तरम् । 'एकपद तत्काले नपुंसक, वर्त्मनि स्त्री स्यात्' [ इति मे० ७७।४६ ]॥ (१२) ॥ * ॥ द्वादश 'मार्गस्य' ।

अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ।

अतिपन्था ( =अतिपथिन् ), सुपन्थाः ( =सुपथिन् ), सत्पथः ( ३ पु ), 'अच्छे मार्ग' के ३ नाम हैं।

अतीति ॥ 'स्वती पूजायाम्' । 'कुगति-' (२।२।१८) इति समास. । 'न पूजनात्' (५।४।६९) ॥ ( १ ) ॥*॥

१. 'वा' इति पा० ।

२. 'वृतेश्च' इत्युणादिसूत्रे 'च'ग्रहणान्मुट्प्रत्ययो 'गोवर्धनमते, अत एवोक्तसूत्रस्य 'वर्तनि.' इत्युदाहरणं दत्वा 'गोवर्धनस्तु चकारान्मुट् । वर्त्मनिः । इत्याह ।' इत्युक्तं सि० कौ० ।

( २ ) ॥ * ॥ सश्चासौ पन्थाश्च । 'सन्महत्–' ( उ० २।१६१ ) इति तत्पुरुष 'ऋक्पूर्–' ( ५।४।७४ ) इत्य ॥ ( ३ ) ॥ * ॥ त्रीणि 'शोभनमार्गस्य' ।

**व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥१६॥**

व्यध्व , दुरध्व , विपथ , कदध्वा (=कदध्वन् ), कापथ (५ पु ), 'खराब मार्ग' के ५ नाम हैं ।

व्यध्व इति ॥ विरुद्धोऽध्वा । 'प्रादयो गताद्यर्थे' (वा० २।२।१८ ) इति समास । 'उपसर्गादध्वन' ( ५।४।८५ ) इत्यच् ॥ ( १ ) ॥ * ॥ दुष्टोऽध्वा ॥ ( २ ) ॥ * ॥ विरुद्ध पन्था ऋक्पूर्–' (५।४।७४) इत्य.-इति मुकुट. । तन्न । ( 'पथ सख्याऽव्ययाद' ) ( वा० २।४।३० ) इति 'क्लीबताप्रसङ्गात् । अत विरुद्ध पथ' इति विग्रहीतव्यम् । ( ३ ) ॥ * ॥ कुत्सितोऽध्वा । 'कुगति– ( ३।२।१८ ) इति समास । का कत्तत्पुरुषेऽचि (६।३।१०१) ॥ (४) ॥ * ॥ ईषदर्थे च (६।३।१०५) इति कादेश । कुमार्गोऽपीपन्मार्गो भवति । कुत्सित पथ । वाट पथश्च मार्गश्च इति त्रिकाण्डशेषात् [ २।१।१९ ] अदन्त पथशब्द । पथशब्देन समासेन पुस्त्व निर्वाह्यम् । पथिनृशब्देन समासे का पथ्यक्षयो ( ६।३।२०४ ) इति कादेशे 'पथ सख्याऽव्ययाद ( वा० २।४।३० ) इति क्लीबत्व भवति । 'सत्पथस्तु सुपन्था स्याद् व्यध्वो विपथकापथो' इति रभसोऽप्यवम् । [ कापथ , कुत्सितपथे उशीरे क्लीबमिष्यते' इति मे० ७३।१८] ॥ * ॥ कुत्सितार्थकुशब्दस्य पथशब्देन समासे कुपथ अपि ॥ ( ५ ) ॥ * ॥ पञ्च 'दुर्मार्गस्य' ।

**अपन्थास्त्वपथं तुल्ये**

अपन्था ( =अपथिन्, पु ), अपथम् ( न ), 'मार्गाभाव ( कुमार्ग या खराब रास्ते )' के २ नाम हैं ।

अपन्था इति ॥ पथोऽभाव । 'नञ्' (२।२।६) इति तत्पुरुष ॥ ( १ ) ॥ * ॥ 'पथो विभाषा' (५।४।७२) इत्य । 'अपथ नपुसकम्' ( २।४।३० ) ॥ (२) ॥ * ॥ द्वे 'मार्गाभावस्य' ।

**शृङ्गाटकचतुष्पथे ।**

शृङ्गाटकम्, चतुष्पथम् ( २ न ), 'चौरास्ता या चौक' के २ नाम हैं ।

शृङ्गेति ॥ शृङ्ग प्राधान्यमटति । 'अट गतौ' (भ्वा० प० से० ) । कर्मण्यण्' ( ३।२।१ ) । 'सज्ञाया कन्' (५।३।७५ ) । [ 'शृङ्गाटक भवेद्वारिकण्टके च चतुष्पथे' इति मे० १८।२१९] ॥ ( १ ) ॥ * ॥ चतुर्णां पथा समाहार । 'तद्धितार्थो–' (२।१।५१) इति समास । 'ऋक्पूर्–' (५।४।७४ ) इति समासान्त । 'इदुदुपधस्य–' ( ८।३।४१ ) इति षत्वम् । 'पथ सख्या–' (वा० २।४।३०) इति क्लीबत्वम् । ['चतुष्पथ चतुर्मार्गसगमे, ब्राह्मणे तु 'ना' इति मे० ७४।२७ ] ॥ ( २ ) ॥ * ॥ द्वे 'चतुष्पथस्य' ।

**प्रान्तरं दूरशून्योऽध्वा**

प्रान्तरम् ( न ), 'जिसमें बहुत दूरतक छाया और पानी नहीं मिले, उस रास्ते' का १ नाम है ।

प्रान्तरमिति ॥ प्रकृष्टमन्तरमत्र । 'प्रादिभ्य –' (वा० २।२।२४ ) इति बहुव्रीहि ['प्रान्तर कोटरेऽरण्ये दूरशून्यपथेऽपि च' इति हैम ३।६१० ] ॥ ( १ ) ॥ * ॥ दूरश्चासौ शून्यश्च ॥ एक 'दूरशून्यच्छायाजलादिवर्जितमार्गस्य' ।

**कान्तारं वर्त्म दुर्गमम् ॥ १७ ॥**

कान्तारम् (पु न ), 'चोर, कण्टक और झाड़ी इत्यादिसे दुर्गम रास्ते' का १ नाम है ।

कान्तारमिति ॥ कस्य जलस्य सुखस्य वान्त । कान्त मृच्छति । 'ऋ गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१ ) [ 'कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि' इति मे० १३२।१३४ ] ॥ ( १ ) ॥ * ॥ एक 'चोराद्युपद्रवैर्दुर्गममार्गस्य' ।

**गव्यूतिः स्त्री क्रोशयुगम्**

गव्यूति ( स्त्री ), 'दो कोस लम्बे रास्ते या स्थान' का १ नाम है ।

गव्यूतिरिति ॥ गोर्यूतौ छन्दस्युपसख्यानम्' 'अध्वपरिमाणे च' ( वा० ६।१।७९ ) इत्यवादेश । 'धन्वन्तरसहस्र तु क्रोश , क्रोशद्वय पुन । गव्यूत, स्त्री तु गव्यूतिर्गोरुत गोमत च तत्' इति वाचस्पति । 'धनुर्हस्तचतुष्टयम्' द्वाभ्या धनु सहस्राभ्या गव्यूति पुसि भाषित ' इति शब्दार्णव ॥ ( १ ) ॥ * ॥ क्रोशयोर्युगम् ॥ ( २ ) ॥ * ॥ द्वे 'क्रोशद्वयपरिमितस्य' ।

**नल्वः किष्कुचतुःशतम् ।**

नल्व (पु), 'चार हजार हाथ लम्बे रास्ते या रस्सी आदि' का १ नाम है ।

नल्व इति ॥ किष्कूणा हस्तानां चतु शती । 'चतु शतम्' इति तु पात्रादित्वात् ( वा० २।४।३० ) । चतुर्गुण शतम्, इति वा । शाकपार्थिवादि ( वा० २।१।६९ ) । नल्यते । 'णल बन्धने' ( भ्वा० प० से० ) । उल्वादित्वात् ( उ०

१ पथ सख्याव्ययादे ' इति वार्तिकेनेत्याशय ।

१. मेदिन्या 'चतुर्मार्गे सगमे ब्राह्मणेऽपि ना' इति पाठ ।

४।९५ ) वः । कात्यस्तु[1] 'नल्व हस्तशतम्' इत्याह । एक 'चतुःशतहस्तपरिमितस्य' ।

**घण्टापथः संसरणम्**

घण्टापथः (पु), संसरणम् (न), 'राजमार्ग' का १ नाम है।

घण्टेति ॥ घण्टापर्लक्षित पन्था. । शाकपार्थिवादि (वा० २।१।६९) । यद्वा—घण्टाना पन्था. । घण्टाग्रहण वादित्राणा तद्वता हस्त्यादीना चोपलक्षणम् । 'ऋक्पूर्–' (५।४।७४) इत्य. ॥ (१) ॥ * ॥ सम्भूय सरन्त्यत्र, अनेन, वा । 'सृ गतौ' (भ्वा० प० अ०) ।—'करणा–' (३।३।११७) इति ल्युट्–इति मुकुट । तन्न । घस्य ल्युडपवादत्वात् । बाहुलकाद्वा ल्युट् (३।३।११३) । युच् (उ० २।७८) तु युक्त ॥ (२) ।*॥ 'दश धन्वन्तरो राजमार्गो घण्टापथ. स्मृत ' इति चाणक्य. । द्वे 'राजमार्गस्य' ।

तत्पुरस्योपनिष्करम् ॥ १८ ॥

**द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी [ ३ ]**
**दिवस्पृथिव्यौ गङ्गा तु रुमा स्याल्लवणाकरः [ ४ ]**

उपनिष्करम् (न), 'गाँव के राजमार्ग' का १ नाम है।

[ द्यावापृथिव्यौ, रोदस्यौ, द्यावाभूमी, रोदसी, दिवस्पृथिव्यौ (५ स्त्री, नि० द्विव०), ये ५ नाम 'आकाश और पृथ्वीके समुदाय' के तथा गञ्जा, रुमा (२ स्त्री), लवणाकरः (पु), ये ३ नाम 'खारा समुद्र' के हैं ]।

तदिति ॥ तत् संसरणम् । पुरस्य चेद्भवति तदा । उपनिष्किरन्ति निस्सरन्ति सैन्यान्यत्र । 'कॄ विक्षेपे' (तु० प० से०) । 'ॠदोरप्' (३।३।५७) इति मुकुट । तन्न । अपो बाधकस्य ल्युटोऽपि 'पुंसि' (३।३।११८) इति घस्यापवादत्वात् । यद्वा—उपनि कीर्यते सैन्यैर्हन्यते । 'कॄञ् हिंसायाम्' (क्र्या० उ० से०) । 'कर्मण्यण्' (३।२।१) । 'इदुदुपधस्य–' (८।३।४१) इति ष ॥ (१) ॥ * ॥ एकं 'पुरमार्गस्य' ।

इति भूमिवर्गविवरणम् ॥ १ ॥

## अथ पुरवर्गः ॥ २ ॥

**पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।**
**स्थानीयं निगमः**

पूः (=पुर्, स्त्री), पुरी, नगरी (२ स्त्री न), पत्तनम्, पुटभेदनम्, स्थानीयम् (३ न), निगमः (पु), 'नगर' के ७ नाम हैं।

१. 'किष्कुर्हस्तस्तेषा चतुःशती नल्वमिति माला । कात्यस्तु—नल्व ( विदा )हस्तशतमित्याह ।' इति क्षी० स्वा० ॥ मुकुटस्तु 'नल्वो विश हस्तशतम्' इति व्याख्यातवान् ।

पूरिति ॥ पिपर्ति । 'पॄ पालनपूरणयो' (जु० प० से०)। 'भ्राजभास–' (३।२।१७७) इति क्विप् । 'उदोष्ठ्य' (७।१।१०२) इत्युत्वम् ।—'हलि च' (८।२।७७) इति दीर्घ –इति मुकुट. । तन्न । 'र्वो –' (८।२।७६) इत्यस्य विषयात् । पूर्यते । 'पुर अग्रगमने' (तु० प० से०) । सम्पदादिक्विप् (वा० ३।३।१०८) वा । यत्तु—पिपर्ति, पूरयति वा इति विगृह्य 'पॄ पालन' इति धातुमुपन्यस्य 'भ्राजभास–' इति क्विप्–इति मुकुट. । तन्न । उक्तधातो. 'पूरयति' इति रूपासम्भवात् । 'पूरी आप्यायने' (चु० उ० से०) इत्यस्माद्युक्तसूत्रेण क्विपोऽविधानात् । सवत्र दीर्घोच्चारणश्रवणप्रसङ्गाच्च । ['पू शरीरे नगर्यां च' इति हैम. १।१३] ॥ (१) ॥ * ॥ यदपि—'पॄ पालने' इत्यस्माद् 'ऋदोरप्' (३।३।५७)। पूर्वविप्रतिषेधेन गुणाद्रुत्वम्—इत्युक्तम् । तदपि न । पूर्वविप्रतिषधे प्रमाणाभावात् । 'पिपर्ति' इत्यादावतिप्रसङ्गाच्च । पुरति । 'इगुपध–' (३।१।१३५) इति क. । कर्मण. कर्तृत्वविवक्षात्र । गौरादित्वात् (४।१।४१) 'जाते –' (४।१।६३) इति वा ङीष् ॥ (२) ॥ * ॥ नगा सन्त्यत्र । 'नगपांसुपाण्डुभ्यो र' (वा० ५।२।१०७)॥ (३) ॥ * ॥ पक्षे क्लीबत्वं पत्तनसाहचर्यात् ॥ * ॥ पतन्ति जना यत्र । 'पीपतिभ्या तनन्' (उ० ३।१५०) ॥ * ॥ 'पट्टन पुटभेदनम्' इति वाचस्पति' । बाहुलकात् पटेस्तनन् ॥ (४) ॥ * ॥ पुटानि पात्राणि भिद्यन्तेऽत्र । 'भिदिर् विदारणे' (रु० उ० अ०) ।—अधिकरणे ल्युट् (३।३।११७)—इति मुकुट । तन्न । 'हलश्च' (३।३।१२१) इति घञो ल्युडपवादत्वात् । युच् (उ० २।७८) तूचित ॥ (५) ॥*॥ स्थानाय हितम् । 'तस्मै हितम्' (५।१।५) इति छ ॥ (६) ॥ * ॥ नितरां गच्छन्त्यत्र । 'गोचर–' (३।३।११९) इति निपातित । 'निगमा. पूर्वणिग्वेदनिश्चयाध्ववणिक्पथा ' इति हैम [ ३।४९७ ]॥ (७) ॥ * ॥ सप्त 'नगरस्य' ।

अन्यत्तु यन्मूलनगरात् पुरम् ॥ १ ॥

**तच्छाखानगरम्**

शाखानगरम् (न), मूलनगर अर्थात् राजधानी या महानगर के अतिरिक्त जो छोटे-छोटे नगर हैं उनका यह १ नाम है।

अन्यदिति ॥ मूलनगर राजधानी । ततोऽन्यत् यत्तु पुरम् । शाखेव नगरम् ॥ (१) ॥ * ॥ एक 'शाखानगरस्य' ।

**वेशो वेश्याजनसमाश्रयः ।**

वेशः, वेश्याजनसमाश्रयः (२ पु), 'वेश्याओं के वासस्थान'के २ नाम हैं।

प्रदेशेऽपि' इति हैम [ ३।५२१ ] ॥ ( १५ ) ॥*॥ एवम् आलय ॥ (१६) ॥*॥ षोडश 'गृहस्य' ।

**वास' कुटी द्वयोः शाला सभा**

वास (पु), कुटी (पु स्त्री), शाला, सभा (२ स्त्री), **'सभाभवन या बैठकखाना' के ४ नाम हैं।**

वास इति ॥ वसन्त्यत्र 'हलश्च'(३।३।१२१) इति घञ्। 'वासो वेश्मन्यवस्थाने वासा स्यादाटरूषके[1]' इति हैम [२।६०५]॥(१७)॥*॥ कुटति कुटिलीभवति। 'कुट कौटिल्ये' (तु० प० से०)।'इगुपध-'(३।१।१३५)इति क ।'इगुपधात् किम्' (उ० ४।१२०) इति, इति 'कृदिकारात्-' (ग० ४।१।४५ ) इति ङीप् वा। 'कुट कोट्टे शिलाकुट्टे[2] घटे गेहे कुटी मुरा। चित्रगुच्छा कुम्भदासी' इति हैम [२।८५]। [ 'कुट कोटे पुमानस्त्री घटे, स्त्रीपुंसयोर्गृहे। कुटी स्यात्कुम्भदास्या तु सुरायां चित्रगुच्छके' इति मेदिनी [३४।६-७] ॥(१८)॥*॥ शालन्त्यत्र। 'शाल गतौ' (भ्वा० प० से०)। 'हलश्च' ( ३।३।१२१ ) इति घञ्। 'शालो हाले मत्स्यभेदे शालीस्त्वन्तरप्रदेशयोः । स्कन्धशाखायाम्' इति हैम [२।५२३-२४] ॥ (१९)॥*॥ सह भान्त्यत्र। 'अन्येभ्योऽपि-' (वा० ३।३।१०१)इति ड.। 'सभा द्यूतसमूहयोः। गोष्ठ्यां सभ्येषु शालायाम्' इति हैम [२।३१७] ॥ (२०) ॥*॥ चत्वारि 'सभागृहस्य'।

**संजवनं त्विदम् ।**
**चतुःशालम्**

संजवनम्, चतुःशालम् (२ न), **'चौतरफा घरवाले स्थान' के २ नाम हैं।**

सजेति ॥ सजवन्त्यत्र। 'जु गतौ' सौत्र । अधिकरणे ल्युट् (३।३।११८) ॥ (१) ॥*॥ चतस्रः शालाः समाहृताः। 'आवन्तो वा' (वा० २।४।३०) इति वा क्लीबत्वम् ॥ * ॥ एकम् 'अन्योन्याभिमुखशालाचतुष्टयगृहस्य'।

**मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥**

पर्णशाला (स्त्री), उटज (पु न), **'पत्तोंसे बनाई हुई मुनियों की कुटी' के २ नाम हैं।**

मुनीनामिति ॥ पर्णनिर्मिता शाला। शाकपार्थिवादि ( वा० २।१।६९ ) ॥ ( १ ) ॥ * ॥ 'उटस्तृणपर्णादि' इति देशीकोश । उटाज्जायते। 'पञ्चम्याम्-' (३।२।९८) इति ड ॥ ( २ ) ॥ * ॥ द्वे 'मुनीनां गृहस्य'।

**चैत्यमायतनं तुल्ये**

चैत्यम्, आयतनम् (२ न), **'यज्ञस्थान विशेष' के २ नाम हैं।**

१. 'स्यादटरूषके' इति पा०।
२ 'कुट कोटे शिलाकुट्टे' इति पा०।

चैत्यमिति ॥ चीयते। 'चित्याग्निचित्ये च' (३।१।१३२) इति साधु। चित्याया इदम्। 'तस्येदम्' (४।३।१२०) इत्यण्।—तस्येदम्—इति विग्रहप्रदर्शनं मुकुटस्य प्रमादः। चित्याया स्त्रीलिङ्गत्वात्। 'चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे' इति रुद्र ॥ ( १ ) ॥ * ॥ आयतन्तेऽत्र। 'यती प्रयत्ने' (भ्वा० आ० से०)। अधिकरणे ल्युट् ( ३।३।११८ ) ॥ ( २ ) ॥ * ॥ द्वे 'यज्ञस्थानस्य'। उद्देश्यवृक्षस्येत्यन्ये।

**वाजिशाला तु मन्दुरा ।**

वाजिशाला, मन्दुरा (२ स्त्री), **'अस्तबल' के २ नाम हैं।**

वाजीति ॥ वाजिनां शाला ॥ ( १ ) ॥ * ॥ मन्दन्तेऽत्र। 'मदि स्तुत्यादौ' ( भ्वा० आ० से० )। 'मन्दिवाशि-' ( उ० १।३८ ) इत्युरच्। 'मन्दुरा वाजिशालायां शयनीयार्थवस्तुनि' [इति मे० १३७।२००] ॥ (२) ॥ * ॥ द्वे 'अश्वशालायाः'।

**आवेशनं शिल्पिशाला**

आवेशनम् (न), शिल्पिशाला (स्त्री), **'कारीगरोंके घर' के २ नाम हैं।**

आवेशनमिति ॥ आविशन्त्यत्र। 'विश प्रवेशने' (तु० प० अ०)। 'करणा-'(३।३।११८) इति ल्युट्। युच् (उ० २।७८) वा। 'आवेशनं शिल्पिशाले[1] भूतावेशप्रवेशयोः' इति विश्वमेदिन्यौ [९९।१७२, ९५।६८] ॥ (१) ॥*॥ शिल्पिनां शाला ॥*॥ शिल्पस्य शाला—इति तु स्वामी। ( २ ) ॥ * ॥ द्वे 'स्वर्णकारादीनां शालायाः'।

**प्रपा पानीयशालिका ॥ ७ ॥**

प्रपा, पानीयशालिका (२ स्त्री), **'पौंसरा, प्याऊ या पानी रखनेकी जगह' के २ नाम हैं।**

प्रपेति ॥ प्रपिबन्त्यस्याम्। 'पा पाने' ( भ्वा० प० अ० )। 'आतश्चोप-' (३।३।१०६) इत्यङ् ॥ (१)॥*॥ पानीयस्य शाला। स्वार्थे कन् ( ५।३ ) ॥ ( २ ) ॥*॥ द्वे 'जलशालायाः' [ 'पौसरा, प्याऊ' इति ख्यातायाः । ]

**मठश्छात्रादिनिलयः**

मठ (पु), **'विद्यार्थियों या संन्यासियों के रहनेकी जगह' का १ नाम है।**

मठ इति ॥ मठन्त्यत्र। 'मठ मदनिवासयोः' ( भ्वा० प० से० )। 'हलश्च' (३।३।१२१) इति घञ्। सञ्ज्ञापूर्वकत्वान्न वृद्धिः। यद्वा—मठति निवासयति। पचाद्यच् ( ३।३।१३४ ) ॥ ( १ ) ॥ * ॥ छात्रोऽन्तेवासी आदिर्येषां

१ 'शिल्पिगृहे'—इति पाठो विश्वस्य।

परिव्राजक-क्षपणकादीनां तेषां निलय । बौद्धानां तु विहारोऽस्त्री ॥ * ॥ एकं 'शिष्याणां गृहस्य = मठस्य' ।

गञ्जा तु मदिरागृहम् ।

गञ्जा (स्त्री), मदिरागृहम् (न), 'कलवरिया या मदिरा के घर' के २ नाम हैं।

गञ्जेति ॥ गञ्जन्त्यस्याम् । 'गजि शब्दार्थे' ( भ्वा० प० से० ) । 'गुरोश्च हलः' (३।३।१०३) इत्य । 'गञ्जा खनौ सुरागृहे । गञ्ज स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम्' इति विश्व[1]-मेदिन्यौ ॥ (१) ॥*॥ मदिराया गृहम् ॥ ( २ ) ॥ * ॥ द्वे 'मद्यसंधानगृहस्य' ।

गर्भागारं वासगृहम्

गर्भागारम्, वासगृहम् ( २ न ), 'घर के बीच के हिस्से' अर्थात् 'तहखाने' के २ नाम हैं।

गर्भेति ॥ गर्भ इवागारम् ॥ ( १ ) ॥ * ॥ वासस्य गृहम् ॥ (२) ॥ * ॥ द्वे 'गृहमध्यभागस्य' ।

अरिष्टं सूतिकागृहम् ॥ ८ ॥

कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम् [ ५ ]

अरिष्टम्, सूतिकागृहम् ( २ न ), 'सौरीके घर' अर्थात् 'जिसमें लड़का जन्मा उस घर' के २ नाम हैं।

[ कुट्टिमः ( पु न ), 'पत्थर या संगमरमर आदि के बने हुए फर्श' का १ नाम है ]।

[ चन्द्रशाला ( स्त्री ), शिरोगृहम् ( न ), 'अटारी या घर के ऊपरी छत' के २ नाम हैं ]।

अरिष्टमिति ॥ नास्ति रिष्टमत्र । न रिष्यते स्म हिंस्रे इति वा । 'रिष हिंसायाम्' (भ्वा० प० से०) । क्त (३।२।१०२) । 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' इति विश्व-मेदिन्यौ[2] ॥ ( १ ) ॥*॥ सूतैव सूतिका । 'सूतकादीनाम्[3] वा' (वा० ७।३।४४) । सूतिकाया गृहम् ॥ (२)॥*॥ द्वे 'प्रसवस्थानस्य', चत्वारः पर्यायाः, इत्यन्ये ।

वातायनं गवाक्षः

वातायनम् (न), गवाक्षः ( पु ), 'झरोखे' के २ नाम हैं।

वातेति ॥ ईयतेऽनेन । 'इण् गतौ' (अ० प० अ०) । करणे ल्युट् ( ३।३।११८ ), युच् ( उ० २।७८ ) वा । वातस्यायनम् ॥ ( १ ) ॥ * ॥ गवामक्षीव । 'अक्ष्णोऽदर्शनात्' ( ५।४।७६ ) इत्यच् । गावो जलानि किरणा वाक्षन्ति व्याप्नुवन्ति एनमनेन वा । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) । अकर्तर्यर्थे घञ् ( ३।३।१९ ) । यत्तु-'इन्द्राक्षयो समासे च' इत्यवङ्-इति स्वामिनोक्तम् । तन्न । एतद्वचनस्यादर्शनात् । 'गवाक्षी शक्रवारुण्यां गवाक्षो जालके कपौ' [इति मे० १६८।३१] ॥ ( २ ) ॥*॥ द्वे 'जालकस्य' ।

अथ मण्डपोऽस्त्री जनाश्रयः ।

मण्डपः (पु न), जनाश्रयः (पु), 'मण्डप' के २ नाम हैं।

अथेति ॥ मण्डन मण्ड । 'मडि भूषायाम्' ( भ्वा० प० से० ) । घञ् (३।३।१८) । मण्ड पाति । 'पा रक्षणे' ( अ० प० अ० ) । 'आतोऽनुप-' (३।२।३) इति कः । मण्ड पिबति' वा ॥ (१) ॥*॥ जनानामाश्रय ॥ (२) ॥ * ॥ द्वे 'स्त्रीदासोचितमण्डपस्य' ।

हर्म्यादि धनिनां वासः

हर्म्यम् ( न ), आदि ('आदि शब्द से 'स्वस्तिकम्, अट्टालिकम्, वासगृहम्। ३ न),'''' 'धनियों के रहने के स्थान' के नाम हैं।

हर्म्येति ॥ हरति मन । 'हृञ् हरणे' (भ्वा० उ० अ० ) । अघ्न्यादित्वात् ( उ० ४।११२ ) यत् मुट् च ॥ (१) ॥ * ॥ आदिना स्वस्तिकादि ॥ एकं 'धनवतां वासगृहस्य' ।

प्रासादो देवभूभुजाम् ॥९॥

प्रासादः ( पु ), 'देवताओं और राजाओं के निवासस्थान या कोठे' का १ नाम है।

प्रासेति ॥ देवानां भूभुजां च गृहम् । प्रसीदति मनोऽत्र । 'हलश्च' (३।३।१२१) इति घञ् । 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घं । बाह् धा ॥ ( १ ) ॥*॥ एकं 'देवानां राज्ञां च गृहस्य' ।

सौधोऽस्त्री राजसदनम्

सौधः ( पु न ), राजसदनम् ( न ), 'राजा के घर' के २ नाम हैं।

सौध इति ॥ 'सुधा स्त्री लेपने मूर्वां स्नुहि गङ्गेष्टिकामृते' । सुधा लेपोऽस्यास्ति । ज्योत्स्नादित्वात् (वा० ५।२।१०३ ) अण् ॥ ( १ ) ॥ * ॥ राज्ञः सदन योग्यत्वात् ।

---

१ मेदिनीस्थोऽयं पाठः (३०।८)। विश्वे तु—'गञ्जा खानौ सुरागेहे स्याद्भाण्डागाररीढयोः । गञ्ज' इति भिन्नः पाठः ( ३३।११-१२ ) ।

२ मेदिनीस्थोऽयं पाठः (३३।३२-३३) । विश्वे तु—'अरिष्टं फेनिले निम्बे लशुने काककङ्कयो । अरिष्टं सूतिकागारे तक्रे चिह्ने शुभाशुभे ॥' ( ३१। ४८ ) इति भिन्नपाठः ।

३. भाष्ये तु—'वा सूतिकापुत्रिकावृन्दारकाणाम्' इत्येवं वार्तिकस्वरूपम् ।

१ विग्रहोऽयमत्र न समुचितः प्रकृतार्थविरुद्धत्वात् ।

यद्वा-सदनाना राजा । राजदन्तादि ( २।२।३१ ) ॥ (२) ॥*॥ द्वे 'राजगृहस्य' ।

**उपकार्योपकारिका ।**

उपकार्या, उपकारिका ( २ स्त्री ), 'तम्बू, कनात, सामियाना' के २ नाम हैं ।

उपेति ॥ उपक्रियते । कर्मणि 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) । [ 'उपकार्या राजसद्मन्युपकारोचितेऽन्यवत्' इति मे० १२१।११८] ॥ (१) ॥*॥ उपकरोति ण्वुल् (३।१।१३३ ) । [ 'उपकारिकोपकर्त्र्यां पिष्टभेदे नृपालये' इति मे० १८। २२५]॥*॥ 'उपकार्युपकारिका' इति द्विरूपकोशदर्शनादुपकार्यपि । तत्र उपचारयति पचाद्यचि( ३।१।१३४) गौरादि (४।१।४१) ङीष् । यत्तु—उप अधिक करोतीति विगृह्य 'कर्मण्यण्' (३।२।१) इत्युक्त मुकुटेन । तन्न । निपातानामसत्त्वार्थकत्वेन कारकत्वायोगात् ॥ ( २ ) ॥*॥ द्वे 'राजगृहसामान्यस्य' ।

**स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥१०॥**
**विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ।**

स्वस्तिकः, सर्वतोभद्रः, नन्द्यावर्तः, आदि ( 'आदि' शब्द से 'रुचकः, वर्द्धमानः, ' ), विच्छन्दकः (४ पु), 'धनियों के गृहों' के १-१ नाम हैं ।

स्वस्तिक इत्यादि ॥ स्वस्ति क्षेम कायति । 'कै शब्दे' (भ्वा० प० अ०) । 'आतोऽनुप-'( ३।२।३ ) इति क । [ 'स्वस्तिको मङ्गलद्रव्ये चतुष्पथे गृहभेदयो ' इति मे० १४। १६७] ॥ ( १ ) ॥*॥ सर्वतो भद्रमत्र ॥ ( १ ) ॥*॥ नन्दयतीति नन्दी आवर्तोऽत्र । ['नन्द्यावर्तं पुमान्वेश्मप्रभेदे भगवद्द्रुमे' इति मे० ६९।२०२] ॥ ( १ ) ॥ * ॥ विशिष्टच्छन्दोऽत्र । यद्वा–विशिष्टाञ्छन्दयति साभिलाषान् करोति । ण्वुल् ( ३।१।१३३ ) वुन् ( उ० २।३२ ) वा ॥*॥ 'विच्छर्दक ' इति पाठ–इति स्वामी । तत्र 'उच्छृदिर् दीप्तौ' (रु० उ० से०) । ण्वुल् (३।१।१३३) ॥ (१) ॥ * ॥ आदिना रुचक वर्धमानादिपरिग्रह ॥ 'ईश्वरगृहविशेषाणां' पृथगेकैकम् ।

**स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥**
**शुद्धान्तश्चावरोधश्च**

अन्तःपुरम्, अवरोधनम् ( २ न ), शुद्धान्तः, अवरोधः (२ पु), 'रनिवास' के ४ नाम हैं ।

स्त्र्येति ॥ स्त्रीणामगारम् । अन्तरभ्यन्तरे पुरं गृहम् ॥ (१) ॥*॥ अवरुध्यन्तेऽत्र । ल्युट् (३।३।११७) ॥ (२) ॥*॥ घञि (३।३।१४) त्ववरोध । [ अवरोधस्तिरोधाने राजदारेषु तद्गृहे' इति मे० ८१।४०] ॥ ( ४ ) ॥ * ॥ शुद्धा उपधाशुद्धा रक्षका अन्ते समीपेऽस्य ॥ (३) ॥ * ॥ चत्वारि 'राज्ञां स्त्रीगृहस्य' ।

**स्यादट्टः क्षौममस्त्रियाम् ।**

अट्टः ( पु ), क्षौमम् ( न पु ), 'अटारी' के २ नाम हैं ।

स्यादिति ॥ अट्टयते । 'अट्ट अतिक्रमणे' (भ्वा० आ० से०) । कर्मणि घञ् (३।३।१४)। अटयति वा । अच् (३।१।१३४)॥ (१) ॥*॥ क्षुवन्त्यत्र । 'टुक्षु शब्दे' (अ० प० से०)। 'अर्तिस्तु-' (उ० ११।१३७) इति म' ॥*॥ प्रज्ञाद्यणि (५।४।३८) 'क्षौम ' अपि ॥ (२) ॥*॥ द्वे 'हर्म्याद्युपरिगृहस्य' ।

**प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥**

प्रघाणः, प्रघणः, अलिन्दः (३ पु), 'पटेहर' अर्थात् 'चौकठ की बाहरी जगह' के ३ नाम हैं ।

प्रघाणेति ॥ प्रहण्यते । 'अगारैकदेशे प्रघण प्रघाणश्च' ( ३।३।७९ ) ॥ ( १ ) ॥ * ॥ 'प्रघणोऽलिन्दके ताम्रकलशे लोहमुद्गरे' इति हैम [ ३।२२४ ] ॥ ( २ ) ॥*॥ अल्यते भूष्यते । 'अल भूषणादौ' (भ्वा० प० से०) । बाहुलकात्किन्दच् ॥ * ॥ प्रज्ञाद्यणि 'आलिन्द ' अपि । 'गृहैकदेशे आलिन्द प्रघाण प्रघणस्तथा' इत्यमरमाला । 'अलिन्दस्त्वल्पपिण्डिका' इति सुभूति. ॥ (३) ॥*॥ त्रीणि 'द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्य' ।

**गृहावग्रहणी देहली**

गृहावग्रहणी, देहली ( २ स्त्री ), 'देहरी या दरवाजे के नीचे वाले भाग' के २ नाम हैं ।

गृहेति ॥ गृहमवगृह्यतेऽनया । 'ग्रह उपादाने' ( क्र्या० उ० से० ) । 'करणा-' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ देहनम् । 'दिह उपचये' (अ० उ० अ०)। भावे घञ् (३।३।१३)। देहं गोमयाद्युपलेपं लाति । 'ला दाने'(अ० प० अ०) । 'आतोऽनुप-' (३।२।३) इति क । गौरादि ( ४।१।४१ ) ॥ ( २ ) ॥ * ॥ द्वे 'उदुम्बरस्य' ।

**अङ्गनं चत्वराजिरे ।**

अङ्गनम्, चत्वरम्, अजिरम् ( ३ न ), 'आँगन, चबूतरे' के ३ नाम हैं ।

अङ्गनमिति ॥ अङ्गन्त्यत्र । 'अगि गतौ' ( भ्वा० प० से० )। 'करणा-'(३।३।११७) इति ल्युट् । 'अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता' इति नान्तवर्गे विश्व [९१।७४]। 'अङ्गणम्' इति पाठे तु पृषोदरादि (६।३।१०९) ॥ (१) ॥*॥ चत्यते । 'चते याचने' (भ्वा० उ० से०) । 'कृगृशृवृञ्चतिभ्य ष्वरच्' ( उ० २।१२१ ) । 'चत्वर स्यात्पथा श्लैषे स्थण्डिलाङ्गनयोरपि' इति हैम [२।५८७] ॥(२) ॥*॥ अजन्त्यत्र । 'अज गतौ' (भ्वा० प० से०)। 'अजिर-

शिशिर–' ( उ० १।५३ ) इति किरच् ॥ ( ३ ) ॥*॥ त्रीणि 'प्राङ्गनस्य' ।

**अधस्ताद्दारुणि शिला**

**शिला ( स्त्री ), 'दरवाजे के दोनों खम्भों के नीचे वाले काठ, लोहे या पत्थर' का १ नाम है।**

अध इति ॥ शिलति । 'शिल उञ्छे' (तु० प० से०)। 'इगुपध–' (३।१।१३५ ) इति क.। 'शिल उञ्छे स्त्रियां प्रावद्वाराध स्थितदारुणो' इति तालव्यादौ रभस ॥ * ॥ 'तलदारु शिली योषित् 'नासा दार्वूर्ध्वमस्य यत्' इति बोपालितात् 'शिली' इत्यपि ॥ (१) ॥*॥ एकं 'द्वारस्तम्भाध स्थितकाष्ठस्य'।

**नासा दारूपरि स्थितम् ॥ १३ ॥**

**नासा ( स्त्री ), 'दरवाजे के दोनों खम्भों के ऊपरवाले काठ, लोहे या पत्थर' का १ नाम है।**

नासेति ॥ नासयते । 'णासृ शब्दे' (भ्वा० आ० से०)। 'गुरोश्च–'(३।३।१०३)इत्य । 'विज्ञेया नासिका नासा नासा द्वारोर्ध्वदारु च' इति दन्त्यान्ते रुद्र । नासा दारूपरि द्वारस्य । 'अधोदारु[1] शिला स्त्रियाम्–' इति नाममाला ॥ (१) ॥*॥ 'स्तम्भद्वारस्थकाष्ठस्य', 'उपरिभित्तिधारकस्य काष्ठस्य' वा एकम् ।

**प्रच्छन्नमन्तर्द्वारं स्यात्**

**प्रच्छन्नम्, अन्तर्द्वारम् ( २ न ), 'खिड़की' के २ नाम हैं।**

प्रच्छन्नमिति ॥ प्रकर्षेण छन्नं द्वारम् । 'कुगति–' (२।२।१८) इति समास ॥ (१) ॥*॥ अन्त स्थितं द्वारम् । शाकपार्थिवादि ( २।१।६९ )। एकं[3] 'सौधादौ गुप्तद्वारस्य' (खिड़की) इति स्वामी ।

**पक्षद्वारं तु पक्षकः।**

**पक्षद्वारम् ( न ), पक्षकः ( पु ), 'मुख्य द्वार' के २ नाम हैं।**

पक्षेति ॥ पक्षे पार्श्वे द्वारम् ॥ (१) ॥*॥ पक्ष इव । 'इवे प्रतिकृतौ'(५।३।९६) कन् । संज्ञायां(५.३।९७) वा । [ 'पक्षकस्तु पुमान्पार्श्वद्वारे च पार्श्वमात्रके' इति मे० १०। ११४] ॥ (२) ॥*॥ द्वे 'पार्श्वद्वारस्य'। 'प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तदुच्यते' इति कात्यात् पूर्वान्वयी—इत्यन्ये ।

१. 'नासा—' इति द्वितीयपादस्य तु द्वितीयचरणे उपयोगित्वम् ।

२. 'अधो दारु......' इति वचनम् एतत्पूर्वचरणोपयुक्तं न स्वत्र ।

३. अत्र 'द्वे' इत्युचितम् ।

**वलीकनीध्रे पटलप्रान्ते**

**वलीकम्, नीध्रम्, पटलप्रान्तम् ( ३ न ), 'छान्ह, ओरी, या घोड़मुहाँ' के ३ नाम हैं।**

वलीकेति ॥ वलत्यावृणोति भित्त्यादि । 'अलीकादयश्च' ( उ० ४।२५ ) इति निपात । 'वलीक पटलप्रान्ते' इति पुस्काण्डे बोपालितात् पुस्त्वमपि ॥ ( १ ) ॥*॥ नितरा ध्रियते । 'धृङ् अवस्थाने'(तु० आ० अ०)। 'निश्चयेन धरति जलम्' इति वा । 'धृञ् धारणे' (भ्वा० उ० अ०) । मूलविभुजादि (वा० ३।२।५) । 'अन्येषामपि–' (६।३।१३७) इति दीर्घं । निश्चयेन इन्धे । 'ञि इन्धी दीप्तौ' (रु० आ० से०) । 'स्फायि–' ( उ० २।१३ ) इति रक् । मुकुटोक्ता करणव्युत्पत्तिस्तु नादर्तव्या, 'कर्तरि कृत्' (३।४।६७) इति वाक्यशेषात् । 'नीध्र नेमौ वलीकेन्द्वो रेवतीभेऽपि कानने' [इति विश्व १३०।६०] ॥ (२) ॥*॥ पटलस्य छदिष. प्रान्ते ॥ (३) ॥*॥ त्रीणि 'पटलप्रान्ते गृहाच्छादनस्य' ।

**अथ पटलं छदिः ॥ १४ ॥**

**पटलम् ( न ), छदिः ( =छदिस्, स्त्री ), 'छावना, छाजन' के २ नाम हैं।**

अथेति ॥ पट लाति । 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति क । पटति उदकं वा । 'पट गतौ' (भ्वा० प० से०) अन्तर्भावितण्यर्थ. । वृषादिः (उ० १।१०६) । 'पटल तिलके नेत्ररोगे छदिषि संचये । पिटके परिवारे च' इति हैम [३।६९८]॥(१)॥*॥ छादयति । 'छद अपवारणे' चुरादि. । 'अर्चिशुचि–'(उ०२।१०८)इतीसि । 'इस्मन्–' (६।४।९७) इति ह्रस्व. ।—'साहचर्यात् सान्त क्लीबम्'–इति मुकुट । तन्न । 'छदि स्त्रियाम्' इति लिङ्गानुशासनसूत्रात् ॥(२)॥*॥ 'पटम्' 'चालम्' अप्यत्र । द्वे 'छादनस्य' ।

**गोपानसी तु वलभी छादने वक्रदारुणि ।**

**गोपानसी, वलभी ( २ स्त्री ), 'धरन, बंची या छाने के लिये दिये हुए टेढ़े काष्ठ' के २ नाम हैं।**

गोपेति ॥ गोपायति । 'गुपू रक्षणे' (भ्वा० प० से०) । बाहुलकात्सट् प्रत्यय । अल्लोप( ६।४।४८ )यलोपौ (६।१।६६) । यद्वा–गवा गोभिर्वा पानं गोपानं किरणानां किरणैर्वा शोषणम् । तत् स्यति निवर्तयति । 'षो अन्तकर्मणि'(दि० प० अ०)। 'आतोऽनुप–'(३।२।३)इति क । गौरादि (४।१।४१)॥ (१)॥*॥ वलति । 'वल संवरणे' (भ्वा० प० से०) । बाहुलकादभच् । गौरादि । 'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि' इति रभस. ॥(२)॥*॥ वक्राणि दारूणि यस्मिन्। द्वे[1] 'कुड्येषु छादनार्थं दत्तस्य वक्र-

१. 'वलभीछादने' इति कृते समासे तु गोपानसी इति एकमेव नाम ।

काष्ठस्य' (छज्जा) इति ख्यातस्य । पटलाधारवंशपञ्जरस्य इत्यन्ये ।

**कपोतपालिकायां तु विटङ्कं पुनपुंसकम् ॥ १५ ॥**

कपोतपालिका ( स्त्री ), विटङ्कम् ( न पु ), 'कबूतर आदि पक्षियों के लिये लकड़ी आदि के बनाए हुए घर' के २ नाम हैं।

कपोतेति ॥ पालयति । 'पाल रक्षणे' (चु० प० से) । ण्वुल (३।१।१३३) । कपोतानां पालिका । कपोतान्पालयति । 'कर्मण्यण्' (३।२।१) । ङीप (४।१।१५) । 'संज्ञायां कन्' (५।३।७५) इति वा ॥ (१) ॥*॥ विशेषेण टङ्क्यन्तेऽत्र । 'टकि बन्धने' (चु० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् ।—कर्मण्यच (३।३।५६) वा–इति मुकुटस्य प्रमाद ॥ (२) ॥*॥ द्वे 'गृहप्रान्त रचितपक्षिस्थानस्य' ।

**स्त्री द्वार्द्वारं प्रतीहार**

द्वा (=द्वार्, स्त्री ), द्वारम् ( न ), प्रतीहार ( पु ), 'दरवाजे' के ३ नाम हैं।

स्त्रीति ॥ द्वारयति । 'वृ वरणे' णिजन्त । क्विप्(३।२।७५) । यद्वा–द्वार्यते । सम्पदादि[1] (३।३।१०८) ॥ ( १ ) ॥*॥ पचाद्यच् (३।१।१३४) द्वारम् । 'द्वार निर्गमेऽभ्युपाये' इति हैम [२।४४२] ॥ ( २ ) ॥*॥ प्रतिह्रियते आव्रियते । कर्मणि घञ् (३।३।१४), 'उपसर्गस्य घञि–' ( ६।३।१२२ ) इति वा दीर्घं । 'प्रतीहारो द्वारि द्वा स्थे द्वा स्थिताया तु योषिति' [इति मे० १४२।२८०] ॥ (३) ॥*॥ त्रीणि द्वारस्य' ।

**स्याद्वितर्दिस्तु वेदिका ।**

वितर्दि, वेदिका ( २ स्त्री ), 'वेदी, चौतरा' के २ नाम हैं।

स्यादिति ॥ विगता तर्दिर्हिंसाऽस्या । 'तर्द हिंसायाम्' (भ्वा० प० से० ) । 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) इतीन् ॥ (१) ॥*॥ विदन्त्यस्याम् । इन्नन्तात् 'कृदिकारात्–'(ग० ४।१।४५) इति वा ङीप् । स्वार्थे कन् (५।३।७५) ॥ ( २ ) ॥*॥ द्वे 'प्राङ्गणादिषु कृतस्योपवेशस्थानस्य' ।

**तोरणोऽस्त्री बहिर्द्वारम्**

तोरण ( पु न ), बहिर्द्वारम् ( न ), 'तोरण, बाहरी फाटक' के २ नाम हैं।

तोरेति ॥ तुरन्त्यत्र । 'तुर त्वरणहिंसनयो' ( ) । अधिकरणे ल्युट ( ३।३।११७ ) । 'तोलयन्त्यत्र' इति वा । 'तुल उन्माने' ( चु० प० से० ) । रलयोरेकत्वम् । तुतुरत्यनेन । 'तुर त्वरणे' जौहोत्यादिक ॥ ( १ ) ॥*॥ बहिर्द्वारात् । [ 'अपपरि–' (२।१।१२) इति समासः ] । 'बहिश्च तद्द्वारं च' इति वा ॥ (२) ॥*॥ द्वे 'द्वारबाह्यभागस्य' ।

**पुरद्वारं तु गोपुरम् ॥१६ ॥**

पुरद्वारम्, गोपुरम् ( २ न ), 'नगरके बड़े फाटक' के २ नाम हैं।

पुरेति ॥ पुरस्य द्वारम् ॥(१)॥*॥ गापायति । 'गुपू रक्षणे' (भ्वा० प० से०)। व हुलकादुरच् । यद्वा–पोलति । 'पुल महत्त्वे' (भ्वा० प० से०) । इगुपधत्वात् क (३।१।१३५ ) । रलयोरभेद । गोभि पुरम् । गा पुरति । 'पुर अग्रगमने'(तु० प० से०) घञर्थं । मूलविभुजादित्वात् (वा० ३।२।५) क ॥ (२) ॥*॥ द्वे 'नगरद्वारस्य ।'

**कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्**

हस्तिनखः ( पु ), 'सुखपूर्वक चढ़नेके लिये राजद्वार या नगरद्वारपर बनाई हुई ढालू जमीन' का १ नाम है।

कूटमिति ॥ हस्तिनो नख इव । हस्तिना न खन्यते । इति वा । 'खनु अवदारणे' (भ्वा० उ० से०) । 'अन्येभ्योऽपि–'( वा० ३।२।१०२ ) इति ड ॥ ( १ ) ॥*॥ एकं 'पुरद्वारेऽवतारणार्थं कृतस्य क्रमनिम्नस्य मृत्कूटस्य' ।

*अथ त्रिषु ।*

**कपाटमररं तुल्ये**

कपाटम्, अररम् ( २ त्री ), 'किवाड़' के २ नाम हैं।

अथेति ॥ क वात शिरो वा पाटयति । 'पट गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' ( ३।२।१ ) ॥*॥ 'कवाटम्' इत्यन्ये । तत्र क वात वटति । 'वट वेष्टने' (भ्वा० प० से०) । स्त्रियाम् 'टिड्ढा–' ( ४।१।१५) इति ङीप् । 'कुङ् शब्दे' (तु० आ० अ०) । 'ऋदोरप्' ( ३।३।५७ ) । कव शब्दमटतीति वा ॥ (१) ॥*॥ इयर्ति । 'अर्तिकमि–'(उ० ३।१३२) इत्यरन् । स्त्रियाम् गौरादिङीष् (४।१।४१)—इति पञ्जिका । 'कपाटश्च कवाटश्च त्रिषु स्यादररं न ना' इति वाचस्पति । 'अरर छदकपाटयो ' इति विश्व मेदिन्यौ ॥*॥ ऋच्छति । क्विप् (३।२।७५)। अरम् ऋच्छति। 'सर्वधातुभ्य –' (उ० ४।११८) इतीनि 'अररि ' इदन्तोऽपि । ( 'अरर पुन । कपाटोऽररि कवाट ' इति हैम ) ॥ (२) ॥*॥ द्वे 'कपाटस्य' ।

---

1. 'सम्पदादिभ्य क्विप्' इति वार्तिकेन क्विप्प्रत्यय इति तत्त्वम् ।

1. विश्वे (१३४।१०८) 'अरर कपाटे छदनेऽपि च' इति भिन्नपाठोपलब्धे 'हैम-मेदिन्यौ' ( ३।५५१, १३०।११० ) इति पठितुमुचितम् ।

2. कोष्ठस्थ पाठ निर्णयसागरीय ।

वेश्मेति ॥ वेश्मनो भू ॥ (१) ॥ * ॥ वसन्त्यत्र । 'वसेस्तुन्नगारे णिच्च' (उ० १।७५) इति तुन् । ['वास्तु स्याद् गृहभूपुर्योगृ्हे सीमसुरङ्गयो' इति हैम २।१९९] ॥ ( २ ) ॥ * ॥ द्वे 'गृहरचनावच्छिन्नभूमे' ।

**ग्रामान्त उपशल्यं स्यात्**

**ग्रामान्तम्, उपशल्यम् ( २ न ), 'गाँवके पासवाली जमीन' के २ नाम हैं।**

ग्रामेति ॥ ग्रामस्यान्त समीपम् ॥ (१) ॥*॥ शल्यमुपगत । प्रादिसमास (वा० २।२।१८) ॥ ( २ ) ॥*॥ ग्रामग्रहण चोपलक्षणम्[१] । अत एव 'उपकण्ठोपशल्ये द्वे' इति त्रिकाण्डशष [ २।२।७ ] ॥*॥ द्वे 'ग्रामादिसमीपदेशस्य' ।

**सीमसीमे स्त्रियामुभौ ।**

**सीमा (=सीमन्), सीमा ( २ स्त्री ), 'सिवान, सीमा, सरहद' के २ नाम हैं।**

सीमेति ॥ सीयते । 'षिञ् बन्धने' (स्वा० उ० अ०)। 'नामन्सीमन्–' ( उ० ४।१५१ ) इत्यादिना निपातित, 'मन' (४।१।११ ) इति न ङीप ॥ (१) ॥*॥ 'डाबुभाभ्याम्–' ( ४।१।१३ ) इति पक्षे डाप । [ 'सीमा घाट स्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्' इति मे० ९४।५५] ॥ (२) ॥*॥ 'आघाटशब्दोऽप्यत्र' ॥ * ॥ द्वे 'सीमाया' । घरवार्यकार्यानि—इत्यन्ये ।

**घोष आभीरपल्ली स्यात्**

**घोष ( पु ), आभीरपल्ली ( स्त्री ), 'अहीरोंके झोपडे या गाँव' के २ नाम हैं।**

घोष इति ॥ घोषन्ति गावोऽत्र । 'घुषिरविशब्दने' ( भ्वा० प० से० ) । 'हलश्च' ( ३।३।१२१) इति घञ । 'घोष आभीरपल्ल्या स्याद् गोपालध्वनिघोषके। कास्ये चाम्बुदनादे ना घोषा मधुरिकौषधौ' [इति मे० १६६।११]॥ (१) ॥*॥ आभीराणा पल्लि । [२]'कुटिग्रामकयो पल्लि' इति शाश्वत [६७८] ॥ (२) ॥ * ॥ द्वे 'गोपग्रामस्य' ।

**पक्कण शवरालय ॥ २० ॥**

**पक्कण, शवरालय ( २ पु ), 'कोल, भील, किरात आदि म्लेच्छ जातियोंके घर' के २ नाम है।**

पक्कण इति ॥ पचन्ति । क्विप् (३।२।१७८) । कण न्ति । 'कण शब्दे' ( भ्वा० प० से० )। पचाद्यच् (३।१। १३४ ) । पच कणा यत्र । पाककलहाद्येव प्रधान तत्र नान्यत् ॥ ( १ ) ॥ * ॥ शव रान्ति शवरा । तेषामालय ॥ ( २ ) ॥ * ॥ द्वे 'भिल्लग्रामस्य' ।

इति पुरवर्गविवरणम् ॥२॥

१ तथा च शिशुपालवधे–'शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातलचूर्णगर्भा' इति (५।८) ।
२ 'कुटी' इति पा० ।

## अथ शैलवर्गः ॥ ३ ॥

**महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।**
**अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥**

**महीध्र, शिखरी (=शिखरिन्), क्ष्माभृत्, अहार्य, धर, पर्वत, अद्रि, गोत्र, गिरि, ग्रावा ( =ग्रावन् ), अचल, शैल, शिलोच्चय ( १३ पु ), 'पहाड' के १३ नाम हैं।**

महीध्र इति ॥ मही धरति । 'धृञ् धारणे' ( भ्वा० उ० अ० ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) क ॥ (१) ॥*॥ शिखरमस्यास्ति । अत इनि (५।२।११५) । 'शिखरी स्यादपामार्गे शैलपादपयो पुमान्' [इति मे० ९८। ११२ ] ॥ ( २ ) ॥ * ॥ क्ष्मा बिभर्ति । 'डुभृञ् धारण पोषणयो' ( जु० उ० अ० ) । 'क्विप् च' ( ३।२।७६ ) इति क्विप् ॥ ( ३ ) ॥*॥ ह्रियते । 'हृञ हरणे' (भ्वा० उ० अ० ) । 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) । न हार्य । 'अहार्यो हर्तुमशक्ये शैलेऽपि' इति हैम [ ३।५०९ ] ॥ ( ४ ) ॥*॥ धरति । 'धृञ् धारणे' (भ्वा० उ० अ०) । पचाद्यच् ( ३।१।१३५ )। 'धर कूर्माधिपे गिरौ । कार्पासतूलेऽथ धरा मेदोभूमिजरायुषु' इति हैम [२।४४२-४३]॥ (५) ॥ * ॥ पर्वाणि सन्त्यत्र । 'तप् पर्वमरुद्भ्याम्' ( वा० ५।२।१२२) यद्वा–पर्वति । 'पर्व पूरणे' (भ्वा० प० से०)। 'भृमृदृशि–' (उ० ३।११०) इत्यतच् । ['पर्वत पादपे पुंसि शाकमत्स्यप्रभेदयो । देवमुन्यन्तरे शैले' इति मेदिनी ६३। १२७-२८ ] ॥ ( ६ ) ॥ * ॥ अत्ति, अद्यते वा । 'अद भक्षणे' (अ० प० अ०) । 'अदिशदिभूशुभिभ्य क्रिन्' (उ० ४।६५) । 'अद्रिस्तु पर्वते । सूर्ये शाखिनि च' इति हैम [२। ४०४-५ ] ॥ ( ७ ) ॥ * ॥ गा त्रायते । 'त्रैङ् पालने' ( भ्वा० आ० अ० ) । 'आत –' ( ३।२।३ ) इति क । 'गोत्र क्षेत्रेऽन्वये छत्रे सभाव्ये बोधवर्त्मनो । वने नाम्नि च गोत्रोऽद्रौ, गोत्रा भुवि गवा गणे इति हैम [ २।४२४ ] ( ८ ) ॥*॥ गिरति । 'गॄ निगरणे' ( तु० प० से० ) । बाहुलकादि । 'ऋत इद्धातो' ( ७।१।१०० ) । 'गिरि पूज्येऽक्षिरुजि कन्दुके । शैले गैरेयके गीर्णावपि' इति हैम [ २।४२१-२२ ] ॥ ( ९ ) ॥ * ॥ ग्रसते । 'ग्रसु अदने' (भ्वा० आ० से०) । 'अन्येभ्योऽपि–' ( ३।२।७५ ) इति वनिप् । पृषोदरादि ( ६।३।१०९ ) ॥ ( १० ) ॥ * ॥ न चलति । 'चल कम्पने' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । 'अचलस्तु गिरिकीलयो । अचला भुवि' इति हैम [ ३।६५९-६० ] ॥ ( ११ ) ॥ * ॥ प्रचुरा शिला सन्त्यत्र । ज्योत्स्नादित्वादण् ( वा० ५।२। १०३ ) ॥ 'शैलो भूभृति शैल तु शैलेये तार्क्ष्यशैलके' इति हैम [ २।५२७ ] ॥ ( १२ ) ॥*॥ शिलाभिरुच्चीयते ।

'चिञ् चयने' ( स्वा० उ० अ० ) । 'एरच्' (३।३।५६)॥ ( १३ ) ॥ * ॥ त्रयोदश 'पर्वतसामान्यस्य' ।

**लोकालोकश्चक्रवालः**

लोकालोकः, चक्रवालः ( २ पु ), 'सात द्वीपोंवाली पृथ्वी को घेरे हुए पहाड़' के २ नाम हैं।

लोकेति ॥ 'लोकृ दर्शने' (भ्वा० आ० से०) । भावे घञ् ( ३।३।१३ ) । न लोक । लोकालोकौ प्रकाशान्धकारावत्र स्तः । अन्तर्बहिः सूर्यकिरणानां स्पर्शास्पर्शाभ्याम् ॥ (१) ॥ * ॥ चक्रं भूमण्डलं वलते । 'वल वेष्टने' (भ्वा० आ० से०) । 'कर्मण्यण्' (३।२।१) । डलयोरेकत्वस्मरणात् 'चक्रवाडः' अपि । यद्वा—चक्राकारेण वाडते । 'वाड् आप्लाव्ये' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३५) । 'चक्रवालमस्यास्ति' इति वा । अर्शआद्यच् (५।२।१२७) । 'चक्रवालोऽद्रिभेदे स्याच्चक्रवालं तु मण्डले' इति हैम [ ४। ३०१ ] ॥ ( २ ) ॥ * ॥ द्वे 'सप्तद्वीपवत्या भूमेः' ।

**त्रिकूटस्त्रिककुत्समौ ।**

त्रिकूटः, त्रिककुत् ( =त्रिककुद् । २ पु ), 'त्रिकूट पहाड़' के २ नाम हैं।

त्रिकूट इति ॥ त्रीणि कूटान्यस्य । 'त्रिकूटं सिन्धुलवणे त्रिकूट. पर्वतान्तरे' इति हैम[१] ॥ ( १ ) ॥ * ॥ त्रीणि ककुदसदृशानि शृङ्गाण्यस्य । 'त्रिककुत् पर्वते' ( ५।४। १४७ ) ॥ ( २ ) ॥ * ॥ द्वे 'लङ्काधिष्ठानपर्वतस्य' ।

**अस्तस्तु चरमक्ष्माभृत्**

अस्तः, चरमक्ष्माभृत् ( २ पु ), 'अस्ताचल' के २ नाम हैं।

अस्त इति ॥ असति स्म । 'अस दीप्तौ' ( भ्वा० उ० से० )। 'गत्यर्था—' ( ३।४।७२ ) इति क्त । यद्वा—अस्यते स्म । 'असु क्षेपणे' ( दि० प० से० ) । क्त (३।४।७२) । 'अस्तं क्षिप्तेऽप्यवसिते त्रिषु, ना पश्चिमाचले' इति विश्व-[२] मेदिन्यौ ॥ ( १ ) ॥*॥ चरन्त्यत्र । 'चर गतौ' ( भ्वा० प० से० ) । 'चरेरम' ( उ० ५।६९ ) ॥ ( २ ) ॥*॥ द्वे 'पश्चिमपर्वतस्य' ।

**उदयः पूर्वपर्वतः ॥ २ ॥**

उदय', पूर्वपर्वतः ( २ पु ), 'उदयाचल' के २ नाम हैं।

उदय इति ॥ उद्यन्ति ग्रहा अस्मात् । 'इण गतौ'(अ० प० अ०)। 'एरच्' (३।३।५६)। 'उदय पर्वतोन्नत्यो' इति हैम [ ३।५१२ ] ॥ (१) ॥ * ॥ पूर्व. पर्वतः ॥ (२) ॥ * ॥ द्वे 'उदयाचलस्य' ।

**हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः ।**
**गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥**

हिमवान् ( =हिमवत् ), निषधः, विन्ध्यः, माल्यवान् (=माल्यवत् ), पारियात्रकः ( ५ पु ), गन्धमादनम् ( न ), हेमकूटः ( पु ), 'हिमालय, निषध आदि पहाड़ों' का क्रमशः १-१ नाम है। ( अन्य शब्दसे 'मन्दरः, मलयः, सह्यः, चित्रकूटः, मैनाकः ( ५ पु );' ' ' ' का संग्रह है )।

हिमेति ॥ हिममस्मिन्नस्ति । मतुप् ( ५।२।९५ ) ॥ ( १ ) ॥ * ॥ निषीदति । पचाद्यच् ( ३।१।१३४ ) । पृषोदरादि (६।३।१०९)। 'निषध. कठिने देशे तद्राजे पर्वतान्तरे' इति विश्व-मेदिन्यौ [८३।२२, ८१।३३] ॥ (१) ॥*॥ विरुद्धं ध्यायति । 'ध्यै चिन्तायाम्'(भ्वा० प० अ०)। 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः । पृषोदरादिः (६।३।१०९) । यद्वा–वि इध्यते । 'ञि इन्धी दीप्तौ' (रु० आ० से० ) । ण्यत् ( ३।१।१२४ ) अन्तर्भावितण्यर्थं । शकन्ध्वादि ( ६।१।९४ ) । वीन्धे वा । अघ्न्यादि. (उ० ४।१२२ ) । 'विन्ध्या स्त्रियां लवल्यां स्यात्पुंसि व्याधाद्रिभेदयो' [इति मे० ११६।५५]॥ ( १ ) ॥*॥ माल्याकारताऽस्यास्ति । मतुप् ( ५।२।९५ ) ॥ ( १ ) ॥*॥ परितो यात्रया दृश्यते। 'तत्रे' ( ४।२।९२ ) इत्यण् । स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ गन्धेन मादयति । 'मदी हर्षे' (दि० प० से०) । णिजन्त. । नन्द्यादि ( ३। १।१३४ ) । 'स्याद्गन्धमादनो भृङ्गे गन्धके वानरान्तरे । स्त्री सुराया नगे न स्त्री चिरजीवि[१] द्विकाजयो.' [ इति मे० १००।१३४ ]॥ ( १ ) ॥ * ॥ हेम्न कूटो राशिः ॥ ( १ ) ॥ * ॥ आदिशब्दात् मलय-दर्दुर-चित्रकूट-मैनाक-महादि-संग्रहः ।

**पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।**

पाषाणः, प्रस्तरः, ग्रावा (=ग्रावन्), उपलः, अश्मा (=अश्मन् । ५ पु ), शिला, दृषत् ( =दृषद् । २ स्त्री ), 'पत्थर' के ७ नाम हैं।

पाषाणेति ॥ पिनष्टि ।'पिष्लृ सञ्चूर्णने' (रु० प० अ०)। बाहुलकादानच् । पृषोदरादि ( ६।३ १०९) । 'मूर्ध-न्यष । पषत्यनेन । 'पष बाधे ग्रन्थे च' ( ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । अणति । 'अण शब्दे' ( भ्वा० प० से० )। अच् (३।१।१३४)। पाषश्चासावणश्च । यत्तु—

१. मेदिनीस्थोऽयं पाठ (३६।४३) । हैमे (३।१६०) तु–'त्रिकूटं सिन्धुलवणे त्रिकूट' स्यात्सुवेलके' इत्येव पाठ ।

२ मेदिनीस्थोऽयं पाठ. (५४।२) । विश्वे (५८।२६) तु—'अस्तं क्षिप्ते गते प्रोक्तमस्त. पश्चिमभूधरे' इति भिन्न पाठः ।

१. विश्वे 'च नगान्तरे' इति पा० ।

२ 'चिरजीविककाकयो.' इति पा० ।

पर्येणित् इत्यानच इति मुकुट । तन्न । उक्तसूत्रादानमात् ॥ (१) ॥*॥ प्रस्तृणाति । स्तृञ् आच्छादने ( क्र्या० उ० अ० )। पचाद्यच् (३।१।१३४)। प्रस्तरो ग्रावणि मणौ इति हैम[१] ॥ (२) ॥*॥ गिरति गृणाति वा । गॄ निगरणे ( तु० प० से० ) गॄ शब्दे ( क्र्या० प० से० ) वा । 'अन्येभ्योऽपि– (३।२।७५) इति वनिप् । पृषोदरादि (६।३।१०९)। यद्वा गरति । गृ सेके (भ्वा० प० अ०)। भुज विभुजादि (वा० ३।२।५)। अवति । अव रक्षणादौ (भ्वा० प० से०) । बाहुलकात्कनि । ग्रावाणावश्मा च । ग्रावा तु प्रस्तरे पृथ्वीधरे पुंसि इति मेदिनी [८७।५८]॥(३)॥*॥ उप लाति । ला दाने (अ० प० अ०) । आतश्चोप– (३।१।१३६ ) इति क । यद्वा–पलति । पल गतौ ( भ्वा० प० से०)। अच (३।१।१३४)। ओ शमो पलो वोपल । उपलो ग्रावरत्नयो । उपला तु शर्करायाम् इति हैम [३।६६२]॥(४)॥*॥ अश्नुते । अशूङ् व्याप्तौ सघाते च (स्वा० आ० से०) । अन्येभ्योऽपि– ( ३।२।७५ ) इति मनिन् ॥ (५) ॥*॥ शिलति । शिल उञ्छे (तु० प० से०) ताल व्यादि । इगुपध– (३।१।१३५) इति क ॥ (६) ॥*। दृणाति । दॄ विदारणे (क्र्या० प० से०)। दृणाते पुग्घ्रस्वश्च ( उ० १।१३१ ) इत्यादि । दृषत्पाषाणमात्रके । निष्पेषणाधपट्टेऽपि [इति हैम २।२२९ ३०] । ( कषाय कूष्माण्डो महिष) वृषमध्योपदपद इत्यूष्मभेदा मूर्धन्यमध्य ॥ (७) ॥*॥ सप्त पाषाणस्य ।

**कूटोऽस्त्री शिखरं शृङ्गम्**

कूट ( पु न ) शिखरम् शृङ्गम् ( २ न ) 'पहाड़की चोटी' के ३ नाम हैं।

कूट इति । कूटयति । कूट दाहे ( चु० उ० से० ) । पचाद्यच् (३।१।१३४) । यत्तु— इगुपध– (३।१।१३५) इति क –इति मुकुट । तन्न । कूटेश्चुरादि वेन णिजन्तत्वा दिगुपधत्वासम्भवात् । णिजभाव वा । कूटयते वा घञ् ( ३।३।१४)। कूट पूर्वाऽरयन्त्रयो । मायादम्भाद्रिशृङ्गेषु सीरा ङ्गेऽनृततुच्छयो । निश्चलेऽयोघने [२]राशौ इति हैम [२।८५ ८६] ॥ (१) ॥*॥ शिखाऽस्यास्ति । शिखाया ह्रस्वश्च (वा० ५।२)इति र । शिखा राति इति वा । ङ्यापो – (६।३।६३)इति ह्रस्व । शिखर पुलकाग्रयो । पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च । [३]गिरिवृक्षाग्रकक्षासु इति हैम [३।६४६ ४७] । अस्त्री इति पूर्वोत्तराभ्या सबध्यते ॥(२)॥*॥ शृणाति । शॄ हिंसायाम् (क्र्या० प० से०)। शृणातेर्ह्रस्वश्च ( उ० १।१२६ ) इति गन्नुड्ह्रस्वौ । शृङ्ग प्रभु त्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयो श्चाथ शृङ्ग कूर्चशीर्षके[१] । स्त्री विषाया स्वर्णमीनभेदयो ऋषभौषधौ इति मेदिनी [२३।२५।२६] ॥ (३) ॥*॥ त्रीणि पर्वताग्रस्य ।

**प्रपातस्त्वतटो भृगु ॥ ४ ॥**

प्रपात , अतट , भृगु ( ३ पु ), 'पहाडसे गिरने योग्य स्थान' के ३ नाम हैं।

प्रपात इति ॥ प्रपत त्यस्मात् । पत्लृ गतौ ( भ्वा० प० से० )। अकर्तरि– ( ३।३।१४ ) इति घञ । प्रपातो निर्झरे भृगौ । अवटे पतने कच्छे इति हैम [ ३।२९२ ९३ ] ॥ ( १ ) ॥ * ॥ न तटमत ॥ ( २ ) ॥ * ॥ भृज्जति भृज्ज्यते वा । भ्रस्ज पाके ( तु० उ० अ० ) । प्रथिम्रदिभ्रस्जा सम्प्रसारण सलोपश्च ( उ० १।२८ ) । न्यङ्क्वादित्वात् कुत्वम् ( ७।३।५३ ) । भृगु सानौ जमदग्निप्रपातयो । शुक्र रुद्रे च इति हैम [ २।४१ ] । प्रपातस्तु तटो भृगु इति पाठ प्रपत्यते यतस्तटात् स भृगु ॥ (३) ॥*॥ त्रीणि पर्वतात्पतनस्थानस्य ।

**कटकोऽस्त्री नितम्बोऽद्रे**

कटक ( पु न ) पहाडके मध्यभाग' का १ नाम है।

कटक इति ॥ कटति कट्यते वा । कटे वर्षावरणयो ( भ्वा० प० से० ) । क्वुन् शिल्पिसज्ञयो ( उ० २।३२ ) । कटकस्त्वद्रिनितम्बे बाहुभूषणे । (सेनाया राजधान्या च ) इति हैम [ ३।१६ ] ॥ ( १ ) ॥*॥ एक पर्वतमध्यभागस्य मेखल रूपस्य ।

**स्नु प्रस्थ सानुरस्त्रियौ[२]।**

स्नु (पु) प्रस्थ , सानु ( २ पु न ) 'पहाड़ की समतल भूमि के किसी एक भाग के ३ नाम हैं।

स्नुरिति ॥ स्नौति जलम् स्नाति वा । ष्णु प्रस्रवणे ( अ० प० अ० )। ष्णा शौचे ( अ० प० से० ) वा । मितद्र्वादित्वात् ( वा० ३ २।१८० ) डु ॥ (१) ॥*॥ प्रतिष्ठन्तेऽत्र । घञर्थे क ( वा० ३।३।१०८ ) । प्रस्थोऽस्त्रिया मानभेदे सानावुच्छ्रितवस्तुनि [ इति मे० ७२।९ ] ॥ (२) ॥*॥ सनोति । षणु दाने ( त० उ० से० ) । दृसनिजनि ( उ० १।३ ) इति ञुण । सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रिवे[३] विदे [इति मे० ८४।२२ ] ॥ (३)

---

१ हैमे तु— प्रस्तर प्रस्तरे ग्राणि मणौ च (३।६०७ ) इत्येव पाठ ।

२ निश्चले योघने इति पा० ।

३ वृक्षाग्र पर्वताग्र च इति पा० ।

१ शृङ्ग स्यात् कूर्चशीर्षके । इति पा० ।

२ सानुरस्त्रियाम् इति महेश्वरसम्मत पाठ ।

३ मार्गाग्र्यकोविदे इति पा० ।

॥*॥ द्वित्वात्प्रस्थोऽप्यस्त्री । त्रीणि 'पर्वतसमभूभागस्य' ।

**उत्सः प्रस्रवणम्**

**उत्सः ( पु ), प्रस्रवणम् ( न ) 'पहाड़से गिरे हुए अधिक जलके इकट्ठा होनेवाले स्थान' के २ नाम हैं।**

उत्स इति ॥ उनत्ति जलेन । 'उन्दी क्लेदने' (रु० प० से० ) । 'उन्दिगुधिकुषिभ्यश्च' ( उ० ३।६८ ) इति सः । 'कित्' इत्यनुवृत्तेर्नलोप । 'उन्दति' इति मुकुटेन कृतं विग्रहप्रदर्शनं प्रामादिकम् । उन्दे रौधादिकत्वात् ॥ ( १ ) ॥*॥ प्रस्रवन्त्यापोऽस्मात् । 'स्रु गतौ' (भ्वा० प० अ०) । 'भीमादय –' (३।४।७४) इति 'कृत्यल्युट –' (३।३।११३) इति वाऽपादाने ल्युट् ।' (२) ॥*॥ द्वे 'यतो जलं स्रवति तस्य स्थानस्य' ।

**वारिप्रवाहो निर्झरो झरः ॥ ५ ॥**

**वारिप्रवाहः, निर्झरः, झरः ( ३ पु ), 'झरना' के ३ नाम हैं।**

वारीति ॥ वारिण प्रवाह ॥*॥ निर्झरणम् । 'झृष् वयोहानौ' ( दि० प० से० )। 'ऋदोरप्' ( ३।३।५७ ) । यत्तु–निर्झरत्यनेन–इति विग्रहप्रदर्शनं मुकुटेन कृतम् । तन्न । करणेऽपो दुर्लभत्वात् । ल्युटा बाधात् । शरपि दुर्लभः । झृषो दैवादिकत्वात् ॥ ( १ ) ॥*॥ एवं झरः ॥ पित्वात् (३।३।१०४) अङि 'झरा' ॥*॥ अच इ '(उ० ४।२३९)। 'झरि ' ॥*॥ ततो ङीषि ( ग० ४।१।४५ ) 'झरी' च ॥ (२) ॥*॥ उपसर्गान्तिरनिवृत्त्यर्थो निर् ॥*॥ द्वे 'उत्साश्रिगंतजलप्रवाहस्य' । पञ्चापि पर्याया इत्यन्ये ।

**दरी तु कंदरो वा स्त्री**

**दरी ( स्त्री ), कन्दरः ( पु स्त्री ), 'पहाड़ की कन्दरा' के २ नाम हैं।**

दरीति ॥ दणाति । 'दॄ विदारणे' (क्र्या० प० से०)। पचादौ ( ३।१।१३४ ) 'दरट्' इति पाठात् 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् । 'दरोऽस्त्री साध्वसे गर्ते कंदरे तु दरी स्मृता । दराऽव्यय मनागर्थे' [ इति मे० २६।४६-४७ ] ॥ (१) ॥*॥ कं जलम् । तेन दीर्यते । 'ऋदोरप्' (३।३।५७) । [ 'कन्दरोऽङ्कुशे । विवरे च गुहाया च' इति हैम० ३।५६२-६३ ] ॥ * ॥ स्त्रियां टाप् ( ४।१।४ ) ॥ (२) ॥*॥ द्वे 'कृत्रिमस्य गुहाकारस्य गिरिविवरस्य' ।

**देवखातबिले गुहा ।**

**गह्वरम्**

**देवखातम्, बिलम् ( २ न ), गुहा (स्त्री), गह्वरम् ( न ), 'स्वभाव ही से बने हुए बिल या गुफा' के ४ नाम हैं।**

देवेति ॥ अकृत्रिमे पर्वतस्य बिले । बिलति । 'बिल भेदने' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क ॥ ( १ ) ॥*॥ गूहति । 'गुहू संवरणे' ( भ्वा० प० से० ) । 'इगुपध–' ( ३।१।१३५) इति कः । यत्तु—गुह्यतेऽनया । भिदाचङ् ( ३।३।१०४ )—इति मुकुट । तन्न । 'अजब्भ्याम्' ( वा० ३।३।१२६ ) इति वार्तिकविरोधात् । 'गुह षाण्मातुरे गुहा । सिंहपुच्छया च गर्ते च पर्वतादेश्च गह्वरे' [इति मे० १७५।४] ॥ (२) ॥*॥ गाह्यते । 'गाहू विलोडने' (भ्वा० आ० से०) । 'छित्वरछत्वर–' (उ० ३। १) इति ष्वरजन्तं निपात्यते । ['अथ गह्वरम् । गुहागहनदम्भेषु निकुञ्जे तु पुमानयम्' इति मे० १३३।१४८-४९]॥ ( ३ ) ॥*॥ केचित्तु—'देवखाते बिल गुहा' इति कारयान् 'गह्वर बिलदम्भयो ' इति शाश्वतात् [६५६] च [बिलरन्ध्रे गुहाया च' इति हैमत (२।५१५) च]चत्वारि नामानि–इत्याहु । त्रीणि 'अकृत्रिमस्य गिरिविलस्य' ।

**गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ ६ ॥**

**दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः [ ६ ]**

**गण्डशैलः ( पु ), 'पहाड़से गिरी हुई चट्टान' का १ नाम है।**

**[ दन्तकः ( पु ), पहाड़के टेढ़े स्थानसे बाहर निकली हुई बड़ी चट्टान का एक नाम है। ]**

गण्डेति ॥ 'गण्ड कपोले पिटके' इति विश्व [४३।८]। गण्ड इव शैला । शैलशब्दस्तदवयवे वर्तते । 'विशेषणं विशेष्येण–' (२।१।५७) इति समास । शैलाना गण्डा इव इति वा । राजदन्तादि ( २।२।३१ ) । 'गण्डशैलो ललाटे स्याच्च्युतस्थूलोपले गिरे ' [इति मे० १५६।१५३] ॥ ( १ ) ॥*॥ एकं 'गिरे पतितस्थूलपाषाणस्य' ।

**खनिः स्त्रियामाकरः स्यात्**

**खनिः ( स्त्री ), आकरः ( पु ), 'खान' अर्थात् 'रत्न, धातु और कोयला आदिके निकलनेके स्थान' के २ नाम हैं।**

खनिरिति ॥ खन्यते । 'खनु अवदारणे'(भ्वा० उ० से०)। 'खनिकषि–' (उ० ४।१४०) इति इ ॥*॥ 'कृदिकारात्–' (ग० ४।१।४५)इति वा ङीष् ॥*॥ 'इवजादिभ्य.' (वा० ३।३।१०८ ) इनीञ् । 'खनिरेव मता खानि.' इति द्विरूपकोश ॥ ( १ ) ॥*॥ आकुर्वन्त्यत्र । 'डुकृञ्' ( त० उ० अ० ) । आकीर्यन्ते धातवोऽत्र । 'कॄ विक्षेपे'(तु० प० से०)। 'पुंसि संज्ञायाम्' (३।३।११९) इति कः । 'आकरो निकरे खनौ' [इति हैम २।५५६] ॥ (२) ॥*॥ द्वे 'रत्नाद्युत्पत्तिस्थानस्य' ।

पादाः प्रत्यन्तपर्वताः ।

पाद, प्रत्यन्तपर्वत (२ पु), 'आसपासकी छोटी पहाड़ी' के २ नाम हैं।

पादा इति ॥ पद्यते एभि । 'पद गतौ' ( दि० आ० अ० ) । हलश्च' (३।३।१२१) इति घञ् । 'पादो मूलेऽम्बुतुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते इति हैम [ २।२२३ ]॥ (१) ॥*॥ प्रत्यन्ते महाद्रीणां समीपे ये क्षुद्रा पर्वता ॥ ( २ ) ॥*॥ द्वे 'पर्वतसमीपस्थाल्पपर्वतानाम्' ।

[१]उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥

पहाड़ के पास की भूमि के निचले भाग' का 'उपत्यका' यह १ नाम तथा 'पहाड़ के ऊपरवाले स्थान' का अधित्यका यह १ नाम है।

उपेति ॥ उप आसन्ना । अधि आरूढा । 'उपाधिभ्यां त्यकन्नासन्नारूढयो' ( ५।२।३४ ) इति त्यकन् ॥ ( १ ) ॥*॥ एकैकम् 'अद्रेरधऊर्ध्वभूमे' ।

धातुर्मन'शिलाद्यद्रे'

धातु (पु), 'पहाड़से निकले हुए मैनसिल आदि धातु' का १ नाम है।

धातुरिति ॥ दधाति शोभाम् । 'सितनि-' ( उ० १। ६९ ) इति तुन् ॥ (१) ॥*॥ 'सुवर्णरूप्यताम्राणि हरितालं मनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवा' ॥ * ॥ एक 'मनःशिलादिधातो' ।

गैरिकं तु विशेषतः ।

गैरिकम् (न), 'गेरू' अर्थात् 'पहाड़से निकले हुए लाल रंगके धातु-विशेष' का १ नाम है।

गैरीति ॥ गिरौ भवम् इति विग्रहे गिरिकशब्दादण् (४।२।५३) । अव्ययदिकन्यायात्, अध्यात्मादित्वात् ( वा० ४।३।६० ) ठञ् वा । गैरिकं तु विशेषेण धातुः । धातुशब्देनैव प्रसिद्धत्वात् । 'गैरिकं धातुस्वर्णयो' [इति मे० ७।८४] ॥ (१) ॥*॥ एक 'धातुविशेषस्य' ।

निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

निकुञ्ज, कुञ्ज (२ पु न), 'कुञ्ज' अर्थात् 'लता या झाड़ी आदिसे आच्छादित स्थान विशेष' के २ नाम हैं।

निकुञ्जेति ॥ कावजनि । 'जनी प्रादुर्भावे' (दि० आ० से०) । 'सप्तम्यां जनेर्डः' ( ३।२।९७ ) । 'पृषोदरादि.' ( ६।३।१०९ ) ।—कुञ्जन्त्यत्र । 'कुजि[१] अव्यक्ते शब्दे' ( भ्वा० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ्—इति मुकुट । तन्न । 'कुजिधातोर्धातुपाठेऽदर्शनात् । यत्तु 'न्यङ्क्वादे' इति कुत्वाभाव –इति । तदपि न । 'न्यङ्क्वादे' इत्यस्य कुत्वविधायकत्वात् । निरत्रोपसर्गान्तरव्यावृत्यर्थम् । कुञ्जिरावरणार्थो लोकात्–इति क्षीरस्वामी । 'कुञ्जोऽस्त्रिया[२] निकुञ्जेऽपि हनौ दन्ते च दन्तिनाम्' इति विश्व [३३।१२]॥(१)॥*॥(२)॥*॥ द्वे 'लतादिभि पिहितस्य स्थानस्य' ।

इति शैलवर्गविवरणम् ॥ ३ ॥

## अथ वनौषधिवर्गः ॥ ४ ॥

अटव्यरण्यं विपिनं गहनं काननं वनम् ।

अटवी (स्त्री), अरण्यम्, विपिनम्, गहनम्, काननम्, वनम् (५ न) 'वन, जङ्गल' के ६ नाम हैं।

अटवीति ॥ अटन्त्यत्र । 'अट गतौ' (भ्वा० प० से०)। 'शकटिभ्यामवि' ( ) । 'कृदिकारात्–' ( ग० ४।१। ४५ ) इति ङीष् । यत्तु मुकुट —अटा वय पक्षिणोऽत्र । पूर्ववन्ङीप् । सज्ञाशब्दत्वात् 'अनुपसर्जनात्' इति स्त्रीप्रत्ययस्य न निषेध —इत्याह । तन्न । अटविशब्दस्य कृदन्तत्वाभावात् । 'सज्ञाशब्दत्वात्' इति हेतोरप्रयोजकत्वात् समुदायस्यानुपसर्जनत्वाच्च ॥ ( १ ) ॥ * ॥ अर्यते । 'ऋ गतौ' ( भ्वा० प० से० ) । 'अर्तेर्निच्' ( उ० ३।१०२ ) इत्यन्य ॥ (२) ॥*॥ वेपन्तेऽत्र । 'टुवेपृ कम्पने' (भ्वा० आ० से०)। 'वेपितुह्योर्ह्रस्वश्च' ( उ० २।५२ ) इतीनन् । विशेषेण पिपत्यत्र वा । 'पि गतौ' ( तु० प० से० ) । बाहुलकात् ॥ (३) ॥*॥ गाह्यते । 'गाहू विलोडने' ( भ्वा० आ० से० ) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । 'कृच्छ्रगहनयो –' ( ७।२।२२ ) इति निर्देशाद्ध्रस्व । 'गहनं[३] वनदु खयो । गह्वरे कलिले चापि' इति हैम [ ३। ३९८ ] ॥ (४) ॥*॥ कानयति दीपयति स्मरादि । 'कनी दीप्तिकान्तिगतिषु' (भ्वा० प० से०) । युच् (उ० २।७८) । ल्युट् ( ३।१।१३४ ) वा । 'क जलम् अनन जीवनमस्य' इति वा । 'काननं तु ब्रह्मास्ये विपिने गृहे' इति हैम [ ३।

---

१ गिरेरित्यधिकृत्य 'अधोभूमिरुपत्यका' इति हेमचन्द्र ( अभि० चिन्ता० ४।१०१ ) । 'अद्रे' इत्यस्य सम्बन्धिमात्रोपलक्षकत्वेनान्यत्रापि प्रयोग, तद्यथा—'समुद्रोपत्यका हैमी पर्वताधित्यका पुरी' इति भट्टि ( ५।८९ ), 'मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यका' इति रघु ( ४।४६ ) ।

१ धातुपाठे भ्वादौ 'अथ चवर्गीयान्ता व्रज्यन्ता परस्मैपदिनो द्विसप्तति ।' इत्युक्तत्वया 'गुजि अव्यक्ते शब्दे', 'अर्च पूजायाम्' इत्यनयोर्मध्ये 'कुजि' धातोरपि सत्तास्वीकार एव द्विसप्ततिसंख्याया पूर्त्या नेयमुक्ति सम्यक् प्रतिभाति ।

२ अस्त्रियाम्' इति क्वचिन्न दृश्यते ।

३ 'वनगुह्ययो' इति पा० ।

३९४ ] ॥ (५) ॥*॥ वनति । 'वन संभक्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥ यत्तु—वन्यते । अच्—इति मुकुट । तन्न । कर्मणि पचाद्यचोऽसंभवात् ।"वनं नपुसकं नीरे निवासालयकानने' [इति मे० ८४।१९] ॥ (६) ॥*॥ षट् 'अरण्यस्य' ।

**महारण्यमरण्यानी**

महारण्यम् ( न ), अरण्यानी ( स्त्री ), 'बड़े जङ्गल' के २ नाम हैं।

महेति ॥ महच्च तदरण्यं च । 'सन्महत्–' (२।१।६१) इति समास' ॥ (१) ॥*॥ महदरण्यम् । 'हिमारण्ययोर्महत्त्वे' ( वा० ४।१।४९ ) इति ङीषानुकौ ॥ (२) ॥*॥ द्वे 'महतो वनस्य' ।

**गृहारामास्तु निष्कुटाः ॥ १ ॥**

गृहारामः, निष्कुटः ( २ पु ), 'घरके पासमें लगाये हुए जङ्गल' के २ नाम हैं।

गृहेति ॥ गृहस्यारामाः ॥ ( १ ) ॥*॥ कुटाद् गृहान्निष्क्रान्ता ।'निरादय –'(वा० २।२।१८) इति समास । 'निष्कुटस्तु गृहोद्याने स्यात्केदारकवाटयो.' [ इति मे० ३७।४७ ] ॥ ( २ ) ॥*॥ द्वे 'गृहसमीपोपवनस्य' ।

**आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।**

आरामः (पु), उपवनम् (न), 'किसीके लगाये हुए उद्यान या बगीचे' के २ नाम हैं।

आरेति ॥ आरमन्त्यत्र । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ उपगत वनम् । 'प्रादयो गताद्यर्थे' (वा० २।२।१८) इति समास. ॥ (२) ॥*॥ एवकारादकृत्रिमवनव्युदास. ॥*॥ द्वे 'कृत्रिमवृक्षसमूहस्य' ।

**अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥**

वृक्षवाटिका ( स्त्री ), 'मन्त्रियों या वेश्याओंके गृह के उपवन' का १ नाम है।

अमेति ॥ वट्यते । 'वट वेष्टने' ( भ्वा० प० से० ) । 'संज्ञायाम्' ( ३।३।१०९ ) इति ण्वुल् । 'वुञ्' इति मुकुटस्य प्रमाद. । टाप् (४।१।४) । 'प्रत्ययस्थात्–' (७।३।४४) इतीत्वम् । वृक्षाणा सा ॥ (१)॥*॥ एकं 'मन्त्रिणो वेश्यायाश्च गृहस्योपवनस्य' ।

**पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ।**

आक्रीडः ( पु ), उद्यानम् ( न ), 'प्रमदाओं या मित्रोंके साथ क्रीडा करनेके लिये लगाये हुए साधारण वन या बगीचे' के २ नाम हैं।

पुमानिति ॥ आक्रीडन्त्यत्र । 'क्रीड़ विहारे' ( भ्वा० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'क्षेयमाक्रीडमुद्यानम्' इत्यमरमालाया तु क्लीबमुक्तम् ॥ (१)॥*॥ उद्यान्त्यत्र । 'या प्रापणे' ( अ० प० अ० ) । अधिकरणे ल्युट् ( ३।३।११७ ) । 'उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने' [इति हैम ३।३८८] ॥ (२) ॥*॥ द्वे 'राज्ञ. सर्वोपभोग्यवनस्य' ।

**स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥**

प्रमदवनम् ( न ), रानियों की क्रीडाके लिये लगाये हुए वन या फुलवारी' का १ नाम है।

स्यादिति ॥ प्रमदाना वनम् । 'ङ्यापो –' (६।३।६३) इति ह्रस्व.[1] ॥ (१) ॥*॥ एकं 'यत्र सस्त्रीको राजा क्रीडति तस्य' ।

**वीथ्यालिरावलिः पंक्तिः श्रेणी**

वीथी, आलिः, आवलिः, पंक्तिः, श्रेणी ( ५ स्त्री ), 'कतार, पंक्ति' के ५ नाम हैं।

वीति ॥ विध्यते । 'विथृ याचने' (भ्वा० आ० से०) । 'इगुपधात्कित्–' (उ० ४।१२०) इतीन् । बाहुलकाद्दीर्घः । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति वा[2] ङीप् । 'वीथी वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके' इति हैम' [ २।२२४]॥(१)॥*॥ आलति । 'अल भूषणादौ' (भ्वा० प० से० ) । आङि इन् ( उ० ४।११८ ) । 'आलि. सख्यावलीसेत्वनर्थेषु[3] विशदाशये' इति हैम [२।४८७ ] ॥ (२) ॥ * ॥ आ वलति । 'वल संवरणे' ( भ्वा० प० से० ) । आङि । इन् ( उ० ४।११८ ) ॥ ( ३ ) ॥*॥ पच्यते । 'पचि विस्तारे' (भ्वा० आ० से०) । क्तिन् (३।३।१७४) । 'पङ्क्तिश्छन्द श्रेण्यो ' इति हैम' [२।१८०] ॥ (४) ॥*॥ श्रीयते । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । वहिश्रि–' ( उ० ४।५१ ) इनि नि । 'श्रेण्यालश्च कारसहतौ' इति हैम [ २।२५७ ] ॥ (५) ॥*॥ पञ्च 'सान्तपङ्क्ते ' ।

**लेखास्तु राजयः ।**

लेखा, राजिः (२ स्त्री), 'रेखा, लकीर' के २ नाम हैं।

लेखा इति ॥ लिख्यते । 'लिख अक्षरविन्यासे' ( तु० प० से० ) । भिदादौ (३।३।१०४) पाठादङ्गुणौ । 'लेखो

---

१. 'कक्ष्यकं कुन्दिल वार्क्षं वनी गहनमित्यपि' इति वैज० ( ४५१ ) वचनाद् 'वनी' शब्दोऽपि गौरादित्वाद् बोध्य. ।

१ 'सान्त पुरस्य प्रमदावन—' इति वैज० (४५।३) वचनानुरोधात् ह्रस्वाभावे प्रमदावनमित्यपि । तथा च प्रयोग —'प्रविष्ट. प्रमदावनम्' इति भट्टि. ।

२ ङीपोऽभावे ह्रस्वान्तो 'वीथि ' इत्यपि । तथा च प्रयोग —'सिद्ध मुखे नवसु वीथिषु कश्चिदश्व—' इति शिशु० व० ( ५।६० ) ।

३ 'सेतुष्वनर्थे' इति पा० ।

लेख्ये दैवते च लेखा राज्या लिपावपि' इति हैम [२।२५] ॥*॥रलयोरेकत्वस्मरणात् 'रेखा' अपि ॥(१)॥*॥ राजति। 'राजृ दीप्तौ'(भ्वा० उ० से०)। इन् (उ० ४।११८)। 'वपि वसि–' (उ० ४।१२५) इतीञ् वा। 'राजी रेखायां पङ्क्तौ च' इति हैम [ २।७५ ]॥(२)॥*॥ द्वे 'निरन्तरपङ्क्तयपङ्क्तिसाधारणायाः'।

**वन्या वनसमूहे स्याद्**

वन्या ( स्त्री ), 'वनके समूह' का १ नाम है।

वन्येति ॥ वनानां समूहः। 'पाशादिभ्यो यः' ( ४।२।४९)। [ 'वन्य त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयो' इति मे० ११६।५४ ] ॥ (१) ॥*॥ एकं 'वनसमूहस्य'।

**अङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥**

अङ्कुर (पु), अभिनवोद्भित् (=अभिनवोद्भिद्, स्त्री), 'अङ्कुर' के २ नाम हैं।

अङ्कुर इति ॥ अङ्कयत। अकि लक्षणे ( भ्वा० आ० से०)। मन्दिवाशिमथि–'(उ० १।३८)इत्युरच्। 'अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे'इति हैम [३।५५१]॥*॥ खर्जूरादित्वात् ऊरः 'अङ्कूरवाङ्कुरः प्रोक्तः' इति हलायुधः [२।३०] ॥ ( १ ) ॥ * ॥ उद्भिनत्ति भुवम्। 'भिदिर् विदारणे' (रु० उ० अ०)। 'सत्सूद्विष–' (३।२।६१) इति क्विप्। अभिनवश्चासावुद्भिच्च ॥ (२) ॥*॥ द्वे 'नूतनाङ्कुरस्य'।

**वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।**

**अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥**

वृक्ष, महीरुह, शाखी ( =शाखिन् ), विटपी ( विटपिन् ), पादप, तरु, अनोकह, कुट, साल, पलाशी ( =पलाशिन् ), द्रु, द्रुम, अगम ( १३ पु ), 'पेड' के १३ नाम हैं।

वृक्ष इति ॥ वृक्षति। 'वृक्ष वरणे ( )। पचाद्यच् ( ३।१।१३४ ) वृश्च्यते वा। ओव्रश्चू छेदने' ( तु० प० से० )। सक् ( उ० ३।६६ ) ॥ (१) ॥*॥ मह्यां रोहति। 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ०)। —मूलविभुजादित्वात् (वा० ३।२।५) कः—इति मुकुटः। तन्न। 'इगुपध–' ( ३।१।१३५ ) इत्यस्य सत्त्वात् ॥ (२) ॥*॥ शाखाऽस्यास्ति। व्रीह्यादित्वात्(५।२।११६) इनिः। यद्वा—अवश्यं शाखति। 'शाखृ व्याप्तौ' (भ्वा० प० से०)। आवश्यके णिनिः (३।३।१७०)। 'शाखी स्यात्पादपे वेदे तुरुष्काख्यजने पुमान्' [इति मे० ९३।४१]॥(३)॥*॥ विटपः शाखाविस्तारोऽस्यास्ति। 'अत इनि–' ( ५।२।११५ ) ॥ (४) ॥*॥ पादैः पिबति। 'पा पाने' ( भ्वा० प० अ०)। 'सुपि–' ( ३।२।४ ) इति कः। 'पादपः पादपीठेऽद्रौ पादुकाया तु पादपा' इति विश्वः [१०५।१६] ॥ (५) ॥*॥ तरति। तरन्त्यनेन इति वा। 'तॄ प्लवनसंतरणयोः' (भ्वा० प० से० )। 'भृमृशीङ्–' ( उ० १।७ ) इत्युः ॥ ( ६ ) ॥*॥ अनसः शकटस्याकं गतिं हन्ति। 'अन्येष्वपि–' ( ३।२।१०१ ) इति इन्तेर्डः ॥ (७) ॥*॥ कुटति। 'कुट कौटिल्ये' ( तु० प० से० )। पचाद्यच् ( ३।१।१३४ ), 'इगुपध–' ( ३।१।१३५ ) इति को वा। मुकुटस्तु—'कौति शब्दायते पक्ष्यत्र' इति। 'क्वणेठः' बाहुल्कात् अन्येभ्योऽपि ■ कुटादित्वात् ( १।२।१ ) ङित्वे गुणाभावः। बाहुल्कान्नेत्वादेशः—इति वदन् टवर्गद्वितीयं मन्यते। तत्र 'कौति' इति विगृह्य कुटादित्वोक्तिः प्रामादिकी। आदादिकस्य 'कौति' इति रूपसंभवात्। तौदादिकस्य 'कुवते' इति रूपस्य संभवात् ॥ (८) ॥*॥ सल्यते। 'षल गतौ' ( भ्वा० प० से० )। 'अकर्तरि–' ( ३।३।१४ ) इति घञ्। मुकुटस्तु—सलति। वायुना चलति। 'ज्वलितिकसन्तेभ्यो णः' ( ३।१।१४० )—इत्याह। तन्न। दन्त्यादेस्तत्र पाठाभावात्। तालव्योष्मादेस्तत्र पाठात्। 'पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः' इति दन्त्यादौ रभसः। 'सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि' [ इति हैम २।५२७ ] ॥ (९) ॥*॥ पलाशानि सन्त्यस्य। अत इनिः (५।२।११५)। 'पलाशी वृक्षरक्षसोः' इति विश्व-मेदिन्यौ [१००।१८४, ९७।९१]॥ ( १० ) ॥*॥ द्रवत्यूर्ध्वम्। 'द्रु गतौ' (भ्वा० प० अ०)। मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः ॥ (११) ॥*॥ 'समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायाद् द्रुः शाखाऽस्यास्ति। 'द्युद्रुभ्यां मः' (५।२।१०८)। 'द्रुमस्तु पादपे पारिजाते किंपुरुषेश्वरे' इति हैम [ २।३२९ ] ॥ (१२)॥*॥ न गच्छति। 'गम्लृ गतौ' (भ्वा० प० अ०)। पचाद्यच् (३।१।१३४)॥(१३)॥*॥ त्रयोदश 'वृक्षस्य'।

**वानस्पत्यः फलैः पुष्पात्**

वानस्पत्य ( पु ), 'फूलकर फलनेवाले पेड' का १ नाम है ( जैसे—आम, लीची, अमड़ा आदि )।

वानेति ॥ वनस्य पतिः। 'पारस्करप्रभृतीनि–'(६।१।१५७ ) इति सुट्। वनस्पतौ भवः। 'दित्यदित्या–'(४।१।८५ ) इति ण्यः ॥ ( १ ) ॥*॥ पुष्पाज्जातैः फलैर्हेतुभिः ॥ ॥ एकं पुष्पाज्जातफलोपलक्षितवृक्षस्य'।

**तैरपुष्पाद्वनस्पतिः।**

वनस्पति (पु), 'बिना फूले फलनेवाले पेड' का १ नाम है।

तैरिति ॥ 'वनस्पतिर्ना द्रुमात्रे विना पुष्पं[1] फलिद्रुमे'

---

१ 'विनापुष्पफलद्रुमे' इति पाठः ( सह सुपेति योगविभागात् समासः )।

[ इति मे० ७०।२१८ ] ॥ (१) ॥*॥ एकम् 'आम्रादिवृक्षस्य'।

**ओषधिः फलपाकान्ता**

ओषधिः (स्त्री), 'फलकर पकनेके बाद नष्ट होनेवाले उद्भिद्' का १ नाम है (जैसे—धान, चना, जौ, गेहूं आदि)।

ओषेति ॥ ओष. प्लोषो दीप्तिर्वा धीयतेऽत्र । 'डुधाञ् धारणपोषणयो '(जु० उ० अ०)।'कर्मण्यधिकरणे च'(३।३।९३) इति किः ॥*॥ ['कृदिकारात्–'(ग० ४।१४५) इति ङीपि 'ओषधी' अपि ] ॥ (१) ॥*॥ फलपाक एवान्तो यस्या. । रूपभेदात्स्त्रीत्वम् । एकं 'व्रीहियवादे'।

**स्यादवन्ध्यः फलेग्रहिः ॥ ६ ॥**

अवन्ध्यः, फलेग्रहिः (२ त्रि), 'अपने-अपने समय में फलनेवाले पेड़ आदि' के २ नाम हैं।

स्यादिति ॥ फलानि गृह्णाति । 'ग्रह उपादाने'(क्र्या० उ० से०)। 'फलेग्रहिरात्मम्भरिश्च' (३।२।२६) इति साधु ॥ (२) ॥*॥ द्वे 'फलसमये फलग्राहकस्य'।

**वन्ध्योऽफलोऽवकेशी च**

वन्ध्यः, अफलः, अवकेशी (=अवकेशिन्। ३ त्रि), 'नहीं फलनेवाले पेड़ आदि' के ३ नाम हैं।

वन्ध्य इति ॥ 'वन्धस्तवाधो च वन्धने' । वन्धे साधु । 'तत्र साधु.' (४।४।९८) इति यत् । यत्तु मुकुट.—दिगादित्वात् (४।३।५४) यत्–इत्याह । तन्न । अस्य सूत्रस्य 'तत्र भव.' (४।३।५३) इत्यत्र पाठात् । 'तत्र साधु.' इत्यस्य 'प्राग्घिताद्यत्'(४।४।७५) इत्यधिकारे पाठात् ॥ (१)॥*॥ न फलान्यस्य ॥ (२) ॥*॥ अवसन्ना केशा यस्य सोऽवकेशो निष्केश । सोऽस्ति दृष्टान्तत्वेनास्य । अत इनि (५।२।११५)। स यथा निष्केश । एवमयं निष्फल । अवकं शून्यमीष्टे तच्छील । 'सुप्यजातौ–' (३।२।७८) इति 'णिनि' इति वा ॥ (३) ॥*॥ त्रीणि 'ऋतावपि फलरहितस्य'।

**फलवान्फलिनः फली ।**

फलवान् (=फलवत्), फलिनः, फली (=फलिन्। ३ त्रि), 'फले हुए पेड़ आदि' के ३ नाम हैं।

फलेति ॥ फलान्यस्य सन्ति । मतुप् (५।२।९५)॥(१)॥*॥ 'फलबर्हाभ्यामिनच्' (वा० ५।२।१२२) ॥ (२) ॥*॥ अत इनि (५।२।११५) ॥ (३)॥*॥ त्रीणि 'फलसहितवृक्षस्य'।

१ 'ओषध्यो जातिमात्रे स्यु' (२।४।१३६) इति वक्ष्यमाणत्वात्, तस्य 'ओषं धयत्योषधी फलपाकान्ता जाति.' इति क्षी० स्वा० व्याख्यानाच्चेत्यवधेयम्।

**प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥ फुल्लश्चैते विकसिते**

प्रफुल्लः, उत्फुल्लः, संफुल्लः, व्याकोशः, विकचः, स्फुटः, फुल्लः, विकसितः (८ त्रि), 'फूले हुए पेड़-लता आदि' के ८ नाम हैं।

प्रफुल्लवति ॥ फलति । 'ञिफला विशरणे'(भ्वा० प० से०)। 'क्तीत क्त' (३।२।१८७)। 'आदितश्च' (७।२।१६) इतीडभाव । 'अनुपसर्गात्फुल्लक्षीव–' (८।२।५५) इति तस्य ल ॥ (७) ॥*॥ प्रादिसमास. (वा० २।२।१८)। प्रफुल्लति वा। 'फुल्ल विकसने' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' (वा० ८।२।५५)। 'उत्फुल्लं करणे स्त्रीणामुत्ताने च 'विकस्वरे' [ इति विश्व १५८।१११ ] ॥ (२) ॥*॥ (३) ॥*॥ व्यावृत्त. कोशः संकोचोऽस्मात् । 'प्रादिभ्यो धातुजस्य–' (वा०।२।२।२४) इति समास. ॥*॥ मूर्धन्यान्तो वा ॥ (४)॥*॥ कचति । 'कच वन्धने' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। विगत. कचोऽस्मात् । 'विकच क्षेपणे केतौ ना केशे स्फुटितेऽन्यवत्' [ इति मे० २८।१८ ] ॥ (५) ॥*॥ स्फुटति । 'स्फुट विकसने' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति क । 'स्फुटो व्यक्तप्रफुल्लयो.। सिते व्याप्ते' इति हैमः [२।१०१-२] ॥ (६) ॥*॥ व्यकासीत् । 'कस गतौ' (भ्वा० प० से०)। 'गत्यर्था–' (३।४।७२) इति क्त ॥ (८) ॥*॥ अष्टौ 'प्रफुल्लितवृक्षस्य'।

**स्युरवन्ध्यादयस्त्रिषु ।**

'अवन्ध्यः' से 'विकसित.' शब्दतक सब शब्द त्रिलिङ्ग हैं।

स्युरिति॥ अवन्ध्यादयो विकसितान्तास्त्रिलिङ्गाः स्यु।

**स्थाणुर्वा ना ध्रुवः शङ्कुः**

स्थाणुः (पु न), ध्रुवः, शङ्कुः (२ पु), 'ठूंठ, ठूँठे पेड़' के ३ नाम हैं।

स्थेति ॥ तिष्ठतीति स्थाणु. । यत्तु सुभूति —धेन्वादित्वान्नु, णत्व च–इत्याह । तन्न । 'स्थो णु' (उ० ३।३७) इति सूत्रस्य सत्त्वात् । धेन्वादिसूत्राभावाच्च । 'वा ना' इति पुंस्त्वम् । रूपभेदात् क्लीबत्वम् । 'स्थाणुरस्त्री' इति वा पाठ. । 'स्थाणु कीले हरे पुमान् । अस्त्री ध्रुवे' इति मे० [ ४७।३२ ] ॥ (१) ॥*॥ ध्रुवति । 'ध्रुव गतिस्थैर्ययो' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति क । 'ध्रुवो वटे । वसुयोगभिदो. शभौ शङ्कावुत्तानपादजे ।

१. 'उत्ताले च विकस्वरे' इति पा०।

स्थिरे नित्ये निश्चिते च ध्रुव स्रोऽजस्रतर्कयो । ध्रुवा मूर्वाशालिपर्ण्योः स्रुग्भेदे गीतभिद्यपि' इति हैम [२।५३९-४०]॥ ( २ ) ॥ * ॥ शङ्कतेऽस्मात् । 'शकि शङ्कायाम्' (भ्वा० आ० से० ) । 'खरुशङ्कु-' ( उ० १।३६ ) इति साधु । 'शङ्कु पत्रशिराजाले सत्याकीलकशसुपु । यादोऽस्त्रभेदयोर्मेढ्रे' इति हैम [२।१८] ॥ (३) ॥ * ॥ त्रीणि 'शाखापत्ररहिततरो'।

ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥

क्षुप (पु), 'गाछी, या जिसकी डाल आदि छोटी हों' उस पेड़ आदि' का १ नाम है।

ह्रस्वेति ॥ शाखा च शिफा=मूलं च ते । ह्रस्वे शाखाशिफे यस्य ॥ * ॥ क्षौति । 'टु क्षु शब्दे' (अ० प० से०)। बाहुलकात्पोऽगुणश्च ॥ ( १ ) ॥ * ॥ एकं 'सूक्ष्मशाखामूलस्य शाखोटकादे' [ गाछी इत्याख्यस्य] ।

अप्रकाण्डे स्तम्बगुल्मौ

स्तम्ब, गुल्म ( २ पु ), 'बिना डालवाले पेड़ आदि' के २ नाम हैं।

अप्रकाण्ड इति । न प्रकाण्डोऽस्य ॥ * ॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' ( भ्वा० प० से० ) । 'स्थः स्तोऽम्बजबकौ' ( उ० ४।९६ ) । 'स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयो' [ इति विश्व १०६।३, मे० ब०१०५।८ ]॥ ( १ ) ॥ * ॥ गुडति । 'गुड रक्षायाम्' (तु० प० से०)। बाहुलकान्मक्। डलयोरैक्यम् । 'गुल्म सेनाघट्टभिदो सैन्यरक्षणरुग्भिदो । स्तम्ब, स्त्रियामामलक्येलावनीवस्त्रवेश्मसु' [ इति मे० १०९।११ ] ॥ ( २ ) ॥ * ॥ द्वे 'स्कन्धरहितस्य'।

वल्ली तु व्रततिर्लता ।

वल्ली, व्रतति, लता (३स्त्री),'लता, लतर' के ३ नाम हैं।

वल्लीति ॥ वल्लते । 'वल वल्ल संवरणे' (भ्वा० आ० से० ) । 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) । ['कृदिकारात्-', ( ग० ४।१।४५) इति वा ङीष्] ।—पचाद्यच् (३।१।१३४)। गौरादित्वात् (४।१।४१)ङीष् इति मुकुटोक्तिश्चिन्त्या । 'वल्ली स्यादजमोदाया लताया कुसुमान्तरे' इति हैम [ २।५२१ ] ॥ * ॥ [ वेल्ल (भ्वा० प० से०) धातोरिनि 'वेल्लि' इत्यपि । वल एव ] । 'वल्ली तु वेल्लि सरणो' इति वाचस्पति ॥ ( १ ) ॥ * ॥ प्रतनोति । 'तनु विस्तारे' ( त० उ० से० ) । 'क्तिच्क्तौ च संज्ञायाम्' ( ३।३।१७४ ) । पृषोदरादित्वात् ( ६।३।१०९ ) पस्य वो वा । 'प्रततिर्व्रततिस्तथा' इति हलायुध [२।२५] ॥ * ॥ यद्वा—व्रतमिव करोति । व्रतशब्दात् 'तत्करोति–' ( ग० ।३।१।२६ ) इति ण्यन्तादबाहुलकादति । 'व्रततिस्तु प्रतानिन्या विस्तारेऽपि' इति हैम [३।३१३]॥ ( २ ) ॥ * ॥ लतति । 'लति' सौत्रो धातुर्वेष्टनार्थ । पचाद्यच् ( ३।१।१३४ ) । 'लता ज्योतिष्मती दूर्वा शाखावल्लीप्रियङ्गुषु । स्पृक्कामाधव्यो कस्तूर्याम्' इति हैम [२।१९५] ॥ (३) ॥ * ॥ त्रीणि 'लतामात्रस्य'।

लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥

वीरुत् ( =वीरुध् ), गुल्मिनी ( २ स्त्री ), उलप (पु), 'बहुत डालोंसे युक्त लता' के ३ नाम हैं।

लतेति ॥ शाखापत्रसंचयः प्रतानः । सोऽस्त्यस्याः । सा प्रतानिनी । ईदृशी लतावीरुदादिशब्दत्रयवाच्या ॥ * ॥ विरुणद्धि । 'रुधिर् आवरणे' (रु० उ० अ०) । क्विप् ( ३।२।१७८) । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घं । '—नहिवृति–' ( ६।३।११६ ) इति दीर्घं । न्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम्—इति [1]स्वाम्युक्तिश्चिन्त्या । रुधेस्तत्रादर्शनात् कुत्वादर्शनाच्च । 'वीरुल्लताविटपयो स्त्रियाम्' [इति मे० ८१।३६] ॥ ( १ ) ॥ * ॥ गुल्म प्रतानोऽस्त्यस्याः । 'अत इनि–' (५।२।११५) वा ॥ (२) ॥ * ॥ वलति । 'वल संवरणे'(भ्वा० आ० से०)। विटपविष्टपविशिपोलपा '(उ० ३।१४५)इति 'वले सम्प्रसारणं कपश्च' ॥ —उल्यते । उल सौत्र आवरणार्थो दाहार्थो वा । 'कपश्चाक्षवर्मणस्य' ( उ० ३।१४४ ) इति कपो वा । 'विटपाद्य' इत्यप –इति स्वामि-मुकुटौ । तन्न । तादृक्सूत्राभावात् । 'उलपस्तु गुल्मिनीतृणभेदयो' इति हैम [३।४६९] ॥(३) ॥ * ॥ इति त्रीणि 'शाखादिभिर्विस्तृतवल्ल्या'।

नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।

उच्छ्राय, उत्सेध, उच्छ्रय (३ पु), 'पेड़ आदिकी ऊँचाई' के ३ नाम हैं।

नगेति ॥ नगस्य तरो ॥ * ॥ आरोहणम् । भावे घञ् ( ३।३।१८ )। दैर्घ्यम् । 'आरोहो दैर्घ्ये उच्छ्राये । आरोहणे गजारोहे स्त्रीकट्या मानभिद्यपि' इति हैम [ ३।७६२ ]। आदिना गिरिदेवालयादिग्रह ॥ * ॥ उच्छ्रयणम् । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'उदि श्रयति–'(३।३।४९) इति घञ् ॥ (१) ॥ * ॥ उत्सेधनम् । 'षिध गत्याम्' (भ्वा०

---

१ 'विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्र व्रततीततीरिव' इति शिशु० व० (१।५) प्रयोगाद्दीर्घान्तोऽपि ।

२ व्युपसर्गपूर्वकरुध-दीप्तावितिभ्वादिधातो 'नहिवृति—'इति दीर्घं, वीरुदित्यस्य न्यङ्क्वादिगणे पाठात् चस्य घत्वं ( न तु कुत्वं ) चेति स्वाम्याशयमननुवर्तमानैनैव खण्डनमिदं प्रस्तुतमिति प्रतीयते ।

प० से० ) । 'भावे' ( ३।३।१८ ) इति घञ् । 'उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संमहनेऽपि' च' [इति मे० ८०।२९ ] (२) ॥*॥ श्रिओ याहुल्कात् 'एरच्' (३।३।५६ )अपि ॥ (३) ॥*॥ त्रीणि 'वृक्षादिदैर्घ्यस्य' ।

**अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥**

प्रकाण्डः ( पु न ), स्कन्धः ( पु ), 'कन्धा, पेड आदिकी शाखा की जड़' के २ नाम हैं।

अस्त्रीति ॥ प्रकाण्डयते । 'कड भेदने' चुरादि । 'एरच्' (३।३।५६) । पृषोदरादि (६।३।१०९) । काम्यते । 'कमु कान्तौ' ( भ्वा० आ० से० ) । णिङ् ( ३।१।३० )। 'वरण्डादयश्च' ( ) इति डो वा । 'प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः' इति विश्व [ ४५।२९ ] ॥ ( १ ) ॥*॥ स्कन्द्यते । 'स्कन्दिर् गतिशोषणयोः' (भ्वा० प० अ०)। कर्मणि घञ् (३।३।१९)। पृषोदरादिः (६।३।१०९) । यत्तु मुकुटेन—उणादौ स्कन्दिर् धातोः 'कन्देरच् स्वाङ्गे' ( उ० ४।२०७ ) इत्यच् प्रत्ययो धश्चान्तादेश —इत्युक्तम् । तन्न । तत्रामुनो विधानात् । अचोऽविधानात् । 'स्कन्धः स्यान्नृपतावसे सपरायसमूहयोः । कायेर[2] तरुप्रकाण्डे च आशादौ छन्दसो भिदि' इति धान्तेषु मेदिनी [८०।२२-२३]॥ (२)॥*॥ द्वे 'मूलमारभ्य शाखावधिभागस्य' ।

**समे शाखालते**

शाखा, लता ( २ स्त्री ), 'डाल' के २ नाम हैं।

समे इति ॥ शाखति । 'शाखृ व्याप्तौ'(भ्वा० प० से०)। पचाद्यच् ( ३।१।१३४ )। यत्तु—शाख्यते वृक्षोऽनया । 'गुरोश्च–' (३।३।१०३) इत्य —इति मुकुट. । तन्न । 'अजव्याम्–' ( वा० ३।३।१२६ ) इति वार्तिकविरोधात् । 'शाखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' इति हैम [ २।२७] ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'शाखाया' ।

**स्कन्धशाखाशाले**

स्कन्धशाखा, शाला ( २ स्त्री ), 'सबसे पहले फूटनेवाली डाल' के २ नाम हैं।

स्कन्धेति ॥ स्कन्धजा शाखा ॥ (१) ॥*॥ शलति । 'शल चलने' (भ्वा० प० से०)। 'ज्वलिति–' (३।१।१४०) इति ण. । 'शाला [3]तरुस्कन्धशाखा शाला भवनमिष्यते'इति शाश्वत' [ ४९४ ] ॥ ( २ ) ॥*॥ द्वे 'स्कन्धात्प्रथमोत्पन्नशाखायाः' ।

**शिफाजटे ।**

शिफा, जटा ( २ स्त्री ), 'सोर' अर्थात् 'जमीनके भीतर फैली हुई पेड़की जड़' के २ नाम हैं।

शिफेति ॥ शेते । 'शीङ् स्वप्ने' ( अ० आ० से० ) । बाहुलकात् फक् ह्रस्वश्च । 'शिफा जटाया सरिति मासिकाया च मातरि' [ इति विश्व. १०६।२ ] ॥ ( १ ) ॥*॥ जटति । 'जट सघाते' ( भ्वा० प० से० )। पचाद्यच् (३।१।१३४ ) ॥ ( २ ) ॥*॥ द्वे 'तरुमूलस्य जटाप्रस्य' ।

**शाखाशिफावरोहः स्यात्**

अवरोहः ( पु ), 'डालकी जड़' का १ नाम है।

शाखेति ॥ वटादे शाखाया अवलम्बिनी शिफा ॥ *॥ अवरोहति लम्बते । 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ० ) । पचाद्यच् (३।१।१३४) । 'अवरोहोऽवतरणेऽप्यारोहे च लतोद्गमे' [इति मे० १७७।२७] ॥ (१)॥ ॥ एकं 'शाखामूलस्य' ।

**मूलाच्चाग्रं गता लता ॥ ११ ॥**

लता ( स्त्री ), 'वृक्षके ऊपर चढ़नेवाली लता' का १ नाम है।

मूलादिति ॥ मूलादूर्ध्वं गता शिफा लता । यत् मुकुटस्तु—'प्रसङ्गादवरोहस्यापरमाह । तरुमूलात्प्रभृति वृक्षाग्रपर्यन्तं गता गुडूच्यादिलताप्यवरोह ' इत्याह ॥ (१) ॥*॥ एकं 'वृक्षाग्रगामिन्या लतायाः' ।

**शिरोऽग्रं शिखरं वा ना**

शिर (=शिरस्), अग्रम् (२ न),शिखरम् (पु न), 'फुनगी' अर्थात् 'पेड़ आदिके सबसे ऊपरके हिस्से' के ३ नाम हैं।

शिर इति ॥ श्रियते । 'श्रीञ् सेवायाम्' ( भ्वा० उ० से० ) । 'श्रयते स्वाङ्गे शिर किच्च' ( उ० ४।१९४ ) इत्यसुन् धातो शिरादेशश्च । यत्तु—शेते स्वाङ्गोपरि तिष्ठति । 'शीङ किच्च' इत्यसुन् शिरादेशश्च—इति मुकुट । तन्न । उज्ज्वलदत्तादिधृतसूत्रादर्शनात् । 'शिर प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' [ इति मे० १७३।४१ ] ॥ ( १ ) ॥*॥ अगति । 'अग कुटिलायां गतौ' ( भ्वा० प० से० )। 'ऋज्रेन्द्राग्रवज्र–' ( उ० २।२८ ) इति साधु । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' [ इति मे० १२३।३-४ ] ॥ ( २ ) ॥*॥ शिखा राति । 'रा दाने' ( अ० प० अ० ) । क' ( ३।२।३ ) । 'शिखरोऽस्त्री द्रुमाग्रे चाद्रिश्रृङ्गपुलकाग्रयोः'[1] [ इति मे० १३९।२२६ ] ॥ (३) ॥*॥ त्रीणि 'शिखरस्य' ।

---

१ 'संहननेऽपि च' इति पा० ।

२ 'कायें' इति पा० ।

३. 'शाला तरो स्कन्धशाखा—' इति च पाठः शाश्वते ।

१. 'द्रुमाग्रेऽद्रिश्रृङ्गे पुलककक्षयो ' इति पा० ।

मूलं बुध्नोऽङ्घ्रिनामकः ।

मूलम् (न), बुध्न, अङ्घ्रिनामक ('पैरके वाचक सब शब्द' । २ पु), 'पेड़ आदिकी जड़' के ३ नाम हैं।

मूलमिति ॥ मूलति । 'मूल प्रतिष्ठायाम्' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति क । 'मूलं शिफाद्ययोः । भे निकुञ्जेऽन्तिके वा ना' [इति मे० १४८।४५-४६] ॥ (१) ॥*॥ बध्नाति बध्यते वा । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'बन्धेर्ब्रधिबुधी च' (उ० ३।५) इति नक् । 'बुध्नो ना मूलरुद्रयोः' [इति मे० ८४।२०] ॥ (२) ॥*॥ अङ्घ्रेर्नाम नाम यस्य । 'अङ्घ्रिर्ना पादमूलयोः' [इति मे० १२३।६] ॥ (३) ॥ * ॥ त्रीणि 'मूलमात्रस्य' ।

सारो मज्जा नरि

सार., मज्जा (मज्जन् । २ पु), 'लकड़ीके बीचका हीर' अर्थात् 'सारिल लकड़ी' के २ नाम हैं।

सारविति ॥ सरति कालान्तरम् । 'सृ गतौ' (भ्वा० प० अ०) । 'सृ स्थिरे' (३।३।१७) इति घञ् । 'सारो बले मज्जनि च स्थिरांशे, न्याय्ये च नीरे च धने च सारम् । वरेऽप्ययम् सारमुदाहरन्ति' [इति विश्व १२७।२३] ॥ (१) ॥*॥ मज्जति । 'टुमस्जो शुद्धौ' (तु० प० अ०) । 'श्वन्नुक्षन्–' (उ० १।१५९) इति साधु ॥ * ॥ समौ समानलिङ्गौ । 'नरि' इति वा पाठ । पुंसीत्यर्थ ॥ * ॥ 'लज्जावद्राजवन्मज्जा मांससारास्थिसारयोः' इति भागुरेरा न्तोऽपि । 'मज्जाक्ता मज्जया सह' इति द्विरूपकोषाच्च ॥ (२) ॥*॥ द्वे 'वृक्षादेः स्थिरांशस्य' ।

त्वक् स्त्री वल्क वल्कलमस्त्रियाम् ॥ १२ ॥

त्वक् (=त्वच्, स्त्री), वल्कम्, वल्कलम् (२ पु न) 'पेड़ आदिके छिल्के' के ३ नाम हैं।

त्वगिति ॥ त्वचति । 'त्वच संवरणे' (तु० प० से०)। क्विप् (३।२।१८०) यद्वा-तनोति, तन्यते वा । 'तनु विस्तारे' (त० उ० से०) । 'तनोतेरनश्च व' (उ० २।६३) चाच्चिक् । ['त्वक स्त्री चर्मणि वल्के च गुडत्वचि विशेषत' इति मे० २७।६] ॥ (१) ॥*॥ वलति । 'वल संवरणे' (भ्वा० आ० से०) । 'शुल्कवल्कोल्का' (उ० ३।४२) इति कन् । यद्वा-'वल्क परिभाषणे' (चु० प० से०) । वल्कयति । पचाद्यच् (३।१।१३४) । ['वल्कं वल्कलशल्कयोः' इति मे० ४।३४] ॥ (२) ॥ * ॥ वलते । बाहुलकात्कल । वल्कं लाति [श्यामलवत्] इति तु स्वामी । यत्तु—वलते कलच्—इति मुकुट । तन्न । उक्तसूत्रादर्शनात् ॥ (३) ॥*॥ त्रीणि 'त्वचः' ।

१ 'मूलवित्तेऽन्तिके वा ना' इति पा० ।

काष्ठं दारु

काष्ठम्, दारु (२ न), 'लकड़ी' के २ नाम हैं।

काष्ठमिति ॥ काशते । 'काशृ दीप्तौ' (भ्वा० आ० से०)। 'हनिकुषिनीरमिकाशिभ्य क्थन्' (उ० २।२) । 'तितुत्र–' (७।२।९) इति नेट् । 'काष्ठं दारुणि काष्ठा च प्रकर्षे स्थानमात्रके । दिशि दारुहरिद्रायां कालमानप्रभिद्यपि' इति हैम [२।१०५] ॥ (१) ॥ * ॥ दीर्यते । 'दॄ विदारणे' (क्र्या० प० से०) । 'दृसनिजनि–' (उ० १।३) इति ञुण् । 'पुनपुंसकयोर्दारु' इति त्रिकाण्डशेष [५।८] । 'दारु स्यात्पित्तले काष्ठे देवदारौ नपुंसकम्' [इति मे० १२६।४७] ॥ (२) ॥*॥ द्वे 'काष्ठमात्रस्य' ।

इन्धनं त्वेध इध्ममेधः समित् स्त्रियाम् ।

इन्धनम्, एध. (=एधस्), इध्मम् (३ न), एध[१] (पु), समित् (=समिध् । स्त्री), 'जलावन, इंधन' के ५ नाम हैं।

इन्धेति ॥ इन्धेऽग्निरनेन । 'ञि इन्धी दीप्तौ' (रु० आ० से०) । 'करणा–' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ एधतेऽनेन । असुन् (उ० ४।१८९) ॥ यत्तु-बाहुलकान्नलोपो गुणश्च—इति मुकुट । तन्न । 'एधतेरुभयासम्भवात् ॥ (२) ॥*॥ इध्यतेऽनेन । 'ञि इन्धी दीप्तौ' (रु० आ० से०) । 'इषियुधीन्धि–' (उ० १।१४२) इति मक् । 'अनिदिताम्–' (६।४।२४) इति नलोप ॥ (३) ॥*॥ एधे 'हलश्च' (३।३।१२१) इति करणे घञ् । 'ञि इन्धी' (रु० आ० से०) 'अवोदैधौद्म–' (६।४।२९) इति निपातो वा । एध पुंस्ययम्[२] ॥(४)॥*॥ समिध्यतेऽनया । सम्पदादि (वा० ३।३।१०८) ॥ (५) ॥ * ॥ त्रीणि 'अग्निसंदीपनतृणकाष्ठादे' । द्वे 'यागादौ हूयमानस्य काष्ठस्य' । पञ्चापि पर्याया इति स्वामी ।

निष्कुहः कोटरं वा ना

निष्कुह (पु), कोटरम् (पु न), 'पेड़ के खोंड़रा' के २ नाम हैं।

नीति ॥ निश्चयेन कुह्यते । 'कुह विस्मापने' (चु० आ० से०) । पचाद्यच् (३।१।१३४)—निश्चयेन कुहयति । 'कुह विस्मापने' । 'इगुपध–' (३।१।१३५) इति क—इति मुकुट । तन्न । कुहेश्चुरादावदन्तादात्मनेपदित्वात् ॥ (१) ॥ * ॥ कुटन कोट । 'कुट कौटिल्ये (तु० प० से०) ।

१ 'एध वृद्धौ' (भ्वा० आ० से०) इति धातोरेव प्रयोगसाधुतायाम् 'इन्धेर्बाहुलकान्नलोप, गुण' इति मुकुटकल्पन गौरवावहमेवेत्यादायो व्यज्यते व्याख्यासुधाकर्त्रा ।

२ 'पुमानेध समित् स्त्रियाम्' इति वैजयन्ती (९१। ९६) ।

भावे घञ् (३।३।१८)। कोटं राति। 'रा दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति क ॥ (२) ॥*॥ द्वे 'वृक्षादिरुग्धम्य' ।

वल्लरिर्मञ्जरिः[1] स्त्रियौ ॥ १३ ॥

वल्लरिः, मञ्जरिः (२ स्त्री), 'मञ्जरीः बौर, मोंजर' के २ नाम हैं।

वल्लेति ॥ वल्लते। 'वल्ल संवरणे' (भ्वा० आ० से०)। क्रिप् (३।२।१८०)। ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। 'अच इः' (उ० ४।१३९)। वल् चासावृरिश्च। यद्वा–वल्ले संपदादित्वात् (वा० ३।३।१०८) क्विप्। वल्लमृच्छति। 'अच इः' (उ० ४।१३९) ॥ (१)॥*॥ मृजुत्वमृच्छति। 'अच इः' (उ० ४।१३९)। शकन्ध्वादि (वा० ६।१।९४) ॥ (२) ॥*॥ द्वे 'तुलस्यादेरभिनवोद्भिदि' ।

पत्त्रं पलाशं छदनं दलं पर्णं छदः पुमान्। ✓

पत्त्रम्, पलाशम्, छदनम्, दलम्, पर्णम् (५ न), छदः (पु), 'पत्ता' के ६ नाम हैं।

पत्त्रमिति ॥ पतति। 'पत्लृ गतौ' (भ्वा० प० से०)। ष्ट्रन् (उ० ४।१५९)। 'पत्त्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' [इति मे० १२६।५५] ॥ (१) ॥ * ॥ 'पल्मुस्मानमामयो' [इति मे० १४७।२१]। पलं मांसमश्नाति। 'अश भोजने' (क्र्या० प० से०)। 'कर्मण्यण्' (३।२।१)। मुकुटस्तु—'पल गतौ' (भ्वा० प० से०)। 'घञर्थे क.' (३।३।५८)। पलति रक्षति जलादे.। 'पाल रक्षणे' पचादि (३।१।१२४)। पलं चलनमश्नुते व्याप्नोति–इत्याह। तन्न। 'घञर्थे क' इति न.। स्याग्नापाथ्यधिहनियुध्यर्थम्' इति परिगणनात्। 'पाल रक्षणे' इति धातोरसत्त्वात्। पचाद्यजन्तस्य 'पलं चलनम्' इति वाक्यासंभवात्। 'पलाशं छदने मतम्। ना नी किंशुकरक्ष सु पुंसि स्याद्धरिते त्रिषु' इति मेदिनी [१६४।२३-२४]। 'पलाश किंशुकेऽस्रपे। हरिते, पलाश पत्त्रे' इति हैम ॥ (२) ॥*॥ छद्यतेऽनेन। 'छद अपवारणे' (चु० उ० से०)। 'आधृषाद्वा' (ग० ३।१।२५) इति णिजभावे पक्षे करणे ल्युट् (३।३।११७)। 'छदनं च दले पक्षे पिधाने' [इति मे० ८७।६५] ॥ (३) ॥ * ॥ दलति। 'दल विदारणे' (चु० उ० से०)। पचाद्यच् (३।१।१३४)। 'दलमुत्सेधखण्डयो। शस्त्रीच्छेदेऽप्यद्रव्ये पत्त्रे' [इति मे० १४७।२६] ॥ (४) ॥*॥ पिपर्ति। 'पॄ पालनपूरणयो' (जु० प० से०)। 'कृपृविपिधाभ्यो नः'[1]। यद्वा–पृणति। 'पृण प्रीणने' (तु० प० से०)। पचाद्यच् (३।१।१३४)। यद्वा–पर्णयति। 'पर्ण हरितभावे' (चु० उ० से०)। पचाद्यच् (३।१।१३४)। यत्तु मुकुट —पिपर्ति प्रीणयति। 'पृ प्रीणने'। पचाद्यचि (३।१।१३४) वा पर्णम्—इत्याह। तन्न। असंभवात्। 'पर्णस्त्रिपर्णे पर्णं तु पत्त्रे' इति हैमः [२।१४९] ॥ (५) ॥ * ॥ छाद्यतेऽनेन। णिजभावे 'पुंसि संज्ञायाम्' (३।३।११९) इति घः। णिजन्तस्यापि छाद्यतेऽनेन। 'छादेर्घे–' (६।४।९६) इति ह्रस्व। 'छद पलाशे गरुति ग्रन्थिपर्णतमालयो' [इति मे० ७४।५]। 'पुमान्' इति विशेषणं यान्तक्लीबभ्रमनिरासार्थम् ॥ (६) ॥*॥ 'पट् पत्त्रमात्रस्य' ।

पल्लवोऽस्त्री किसलयम्

पल्लवः, किसलयम् (२ पु न), 'नये पल्लव' के २ नाम हैं।

पल्लव इति ॥ पल्यते। संपदादि (वा० ३।३।१०८)। लूयते। 'ऋदोरप्' (३।३।५७)। पल् चासौ लवश्च। पद्भ्यां लूयते वा 'ऋदोरप्' (३।३।५७)। पादवाचक पच्छब्दोऽस्ति। 'तौलि' (८।४।६०)। 'पल्लव किसले[2] बले। विटपे विस्तरेऽलक्तारागे शृंगारपिङ्गयो' [इति हैम ३।७४१-४२]। व्याडिस्तु–'पुंसि क्लीवे च पल्लव' ॥ (१) ॥*॥ किंचित्सलति। 'षल गतौ' (भ्वा० प० से०)। बाहुलकात् कयन् प्रत्यय। पृषोदरादिः (६।३।१०९) (२) ॥ * ॥ द्वे 'नवपल्लवस्य' ।

विस्तारो विटपोऽस्त्रियाम् ॥ १४ ॥

विस्तारः, (पु), विटपः (पु न), 'पेड़के फैलाव' के २ नाम हैं।

विस्तेति ॥ विस्तरणम्। 'स्तृञ् आच्छादने' (स्वा० उ० अ०)। 'प्रथने वावशब्दे' (३।३।३३) इति भावे घञ्। 'विस्तारस्ततो विटपे' ॥ (१) ॥*॥ विटान् पाति। 'पा रक्षणे' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति क। यद्वा–विटाना पानम्। 'पा पाने' (भ्वा० प० अ०)। 'घञर्थे क' (वा० ३।३।५८)। यद्वा–विटति, विटचते वा। 'विट आक्रोशे' (भ्वा० प० से०)। 'विटपविष्टप–' (उ० ३।१४५) इति कपन्। यत्तु— वटयते वेष्टयतेऽनेन। 'वट वेष्टने' (भ्वा० प० से०)। 'विटपादयश्च' इति सूत्रमुपन्यस्त मुकुटेन। तन्न। एतादृशसूत्रादर्शनात्। 'विटपो न

---

१. 'वल्लरी मञ्जरी स्त्रियौ' इति स्वामिमुकुट-सम्मत पाठ.। तथा च हैमः (३।६२८-२९)—'मञ्जरी तिलकद्रुमे। वल्लर्या स्थूलमुक्तायाम्'।

१ इदं सूत्र नोणादिसूत्रपाठे लभ्यते, किन्तु 'धापृवस्यज्यतिभ्यो न.' इति सूत्रं दृश्यते, सि० कौ० चास्योदाहरणं 'पर्णं पत्त्रम्' इत्युक्तम्।

२. 'किसले वटे' इति पा०।

स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना' [इति मे० ।७३।२२ ] ॥ ( २ ) ॥ * ॥ द्वे 'शाखादिविस्तारस्य'। केचित्तु—उक्तमेदिनीकोपादेव पल्लवादिचतुष्टयमेकार्थं माहु। 'शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्' इति रभसाच्च। स्कन्धादूर्ध्वं तरोः शाखा वटपो' विटपो मत' इति कात्याच्च।

वृक्षादीनां फलं सस्यम्

फलम्, सस्यम् ( २ न ), पेड़, लता आदि के 'फल' के २ नाम हैं।

वृक्षादीति॥ आदिना लतागुल्मादिग्रह। केचित्तु 'वृक्षादीनाम्' इति पूर्वेणापि सम्बध्नन्ति। फलति। 'फल निष्पत्तौ' ( भ्वा० प० से० )। पचाद्यच् ( ३।१।१३४ )। फलं निष्पन्नं सस्यवद्रवाद्यम्। 'फलं हेतुकृते जातीफले फलकसस्ययोः। [त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः' इति हैम २।५१०-११] ॥*॥ ससति। 'षस स्वप्ने' (अ० प० से०)। माछाससिभ्यो यः' ( उ० ४।१०९ ) ॥*॥ तालव्यादिपाठे तु 'शसु हिंसायाम्' ( भ्वा० प० से० )। शस्यते। तकिशसिचति–' (वा० ३।१।९७) इति यत्।—'वृषपि' इति मुकुटोक्तिश्चिन्त्या। 'अचो यत्' (३।१।९७) इत्यत्र हरीतक्यादीनामुपसंख्यानात्। पसेश्चिदन्त्यस्य 'तकि–' (वा० ३।१।९७) इत्यत्राग्रहणाच्च॥ ( २ ) ॥*॥ द्वे फलस्य।

वृन्तं प्रसवबन्धनम्।

वृन्तम्, प्रसवबन्धनम् ( २ न ), 'भेंटी' अर्थात् 'पेड़ आदिके फल या फूलकी जड़' के २ नाम हैं।

वृन्तमिति॥ वृणाति। वृञ् वरणे' (क्र्या० उ० से०)। बाहुलकात् 'अञ्जिघृसि–' (उ० ३।८९) इति क्त, नुम् च। मुकुटस्तु वृणोतेर्नुक्च इति सूत्रं कल्पितवान्।—बाहुल्यान्न णत्वम् इति चिन्त्यम्। अनुस्वारं प्रति णत्वस्य (णत्वं प्रति परसवर्णस्य ) असिद्धत्वात्। 'वृन्तं प्रसवबन्धे च' घटीधाराढ्यायो ' [इति मे० ५८।६०] ॥ (१) ॥*॥ प्रसूयते। 'षु प्रसवे' (भ्वा० प० अ०)। 'ऋदोरप्' ( ३।३।५७ ) । बध्यतेऽनेन। 'बन्ध बन्धने' (क्र्या० प० अ०)। करणे ल्युट् ( ३।३।११७ )। प्रसवस्य पुष्पफलपत्रस्य बन्धनम्॥ (५) ॥*॥ द्वे 'पुष्पादिमूलाधारवृन्तस्य'।

आमे फले शलाटुः स्यात्

शलाटु ( त्रि ), 'कच्चे फल' का १ नाम है।

आम इति॥ शलति। 'शल चलनसंवरणयो' (भ्वा० प० से० )। पचाद्यच् (३।१।१३४)। अटति। 'अट गतौ' (भ्वा० प० से०)। मृगय्वादित्वात् ( उ० १।३७ ) कु। शलश्चासावटुश्च। तालव्यादि। 'शटीशटितं शलाटु' इत्यूष्मभेदात्॥ (१) ॥*॥ एकम् 'अपक्वफलस्य'।

शुष्के वानम्।

वानम् ( त्रि ), 'सूखे फल' का १ नाम है।

शुष्क इति॥ 'फले' इत्येव॥ वायति स्म। 'वै ओवै शोषणे' (भ्वा० प० अ०)। 'गत्यर्थाकर्मक–' (३।४।७२) इति कर्तरि क्त। 'ओदितश्च' ( ८।२।४५ ) इति नत्वम्। वन्यते। 'वनु याचने' ( त० आ० से० ), घञ् (३।३।१८) वा। 'वानं शुष्कफले शुष्के सीवने गमने वटे। जलसप्लुत'- वानोर्मिमुरङ्गासौरभेषु च' इति हैम [२।२८८] ॥ (१) ॥*॥ एकं 'शुष्कफलस्य'।

उभे त्रिषु॥ १५॥

शलाटु' तथा 'वानम्' दोनों शब्द त्रिलिङ्ग हैं।

उभे इति॥ उभे शलाटुवाने त्रिषु॥ स्त्रियां 'वा नी' ॥*॥ क्षारको जालकं क्लीबे

क्षारको जालकं क्लीबे

क्षारक (पु), जालकम् ( न ), 'नई कली या कलियों के समूह के २ नाम हैं।

क्षारक इति॥ क्षरति। 'क्षर संचलने' ( भ्वा० प० से०)। ण्वुल् (३।१।१३३)। 'क्षारको रसे। कोरके पक्ष्यादि पात्रे' इति हैम [३।२१-२२]। 'क्षारकः पक्षिमत्स्यादिपिटके जालकेऽपि च' [इति विश्व ९१८४] ॥ (१) ॥*॥ जालमिव। 'इवे प्रति–' ( ५।३।९६ ) इति कन्। 'जालकं कोरके दम्भे कुलायानाययोरपि। न पुंसि मोचनफले स्त्रियां तु वसनान्तरे। गिरिसारजलौकायामपि स्याद्विधवास्त्रियाम्। भटानामसमरचिताङ्गुरक्षिण्यां च जालिका' [ इति मे० ८।९२-९४] ॥ (२) द्वे 'नवकलिकावृन्दस्य'।

कलिका कोरकः पुमान्[२]।

कलिका ( स्त्री ), कोरक ( पु ), 'कोंढ़ी' अर्थात् 'बिना खिले हुए फूल' के २ नाम हैं।

कलिकेति॥ कलयति 'कल गतौ संख्याने च' (चुरादि)। 'अच इः' (उ० ४।१३९)। स्वार्थे कन् ( ५।३।७५ ) ॥ (१) ॥*॥ कुर्यते। 'कुर शब्दे' (तु० प० से०)। 'कृषादिभ्यः संज्ञायाम्–' (उ० ५।३५) इति वुन्। 'कोरकोऽस्त्री

१ 'वटपो' इति पा०। २ 'वन्धेऽस्त्री' इति पा०।

१ 'जलसप्लव' इति पा०।

२ पुमानिति पुंसि प्रचुरप्रयोगदर्शनादुक्तं न तु लिङ्गान्तरनिषेधार्थम्। 'तथा हि विश्व —'कोरकः कुड्मले न स्त्री' ( १२।६५ )। प्रयोगो यथा माघे— समुपहरन् विचकार कोरकाणि' ( ७।२६ )।

कुड्मले स्यात्कक्कोलकमृणालयोः' [इति मे० ७७५] ॥ ( २ ) ॥*॥ द्वे 'अविकसितकलिकायाः'।

**स्याद् गुत्सकस्तु स्तबकः**

**गुत्सकः, स्तबकः ( २ पु ), 'शीघ्र खिलनेवाली कली' (अथवा 'फूल या फल आदि के गुच्छे') के २ नाम हैं।**

स्यादिति ॥ गुध्यते। 'गुध परिवेष्टने' (दि० प० से०)। 'उन्दिगुधिकुपिभ्यश्च' (उ० ३।६८) इति स वित्। स्तबके हारभेदे च गुत्स स्तम्बेऽपि कीर्तितः' इति दन्त्यान्तेषु रुद्रः ॥*॥ श्रीभोजस्तु 'शस्यादिभ्यष्ठक्' इत्याह। स्वार्थे कन् (५।३।७५)। 'पुष्पादिस्तबके गुच्छो मुक्ताहारकलापयोः' इति चवर्गान्ते रन्तिदेवः ॥ ( १ ) ॥ * ॥ स्तूयते। 'ष्टुञ् स्तुतौ' ( अ० प० अ० )। 'क्वुञादिभ्य–' (उ० ५।३५ ) इति वुन्। यद्वा–तिष्ठति। 'स्थ स्तोऽम्बजबकौ' (उ० ४।९६) ॥ (२) ॥*॥ द्वे 'विकासोन्मुखकलिकायाः' इति मुकुटः ॥ कलिकादिकदम्बस्येत्यन्ये।

**'कुड्मलो मुकुलोऽस्त्रियाम् ॥१६॥**

**कुड्मलः, मुकुलः ( २ पु न ) 'अधखिली कली' के २ नाम हैं।**

कुड्मल इति ॥ कुट्यते, कुटति वा। 'कुट छेदने' 'कौटिल्ये'(तु० प० से०) वा। 'कुटिकुषिभ्यां क्मलच्'(उ० १।१०९) इति क्मलच् ॥*॥ बाहुलकात् 'कुडे.' (तु० प० से०) अपि (वर्मनि 'कुड्मल')। ['कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मे० १५०।७८] ॥ ( १ ) ॥ * ॥ मुञ्चति कलिकात्वम्। 'मुच्लृ मोक्षणे' (तु० उ० अ०)। बाहुलकादुलच् ॥—'मुञ्चेरुलक् कत्वमुत्व चात' इति [२]स्वामिमुकुटौ। तन्न। तादृशसूत्राभावात्। ( २ ) ॥*॥ द्वे 'ईषद्विकासोन्मुखकलिकायाः'।

**स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्[३]।**

**सुमनसः (=सुमनस्, नि० स्त्री ब० ), पुष्पम्, प्रसूनम्, कुसुमम् ( ४ न ), 'फूल' के ५ नाम हैं।**

स्त्रिय इति ॥ सुष्ठु मन्यन्ते आभि। 'मन ज्ञाने'(दि० प० से० )। असुन् ( उ० ४।१८९ )। मुकुटस्तु–'सुप्रीत मनो आभि.' इति विगृह्य 'प्रादिसमास.' इत्याह। तन्न।[४] अन्यपदार्थत्वालाभात्। 'भूम्नि स्त्रिया सुमनस' इति रत्नकोष। 'सुमना' पुष्पमालत्यो स्त्रियां ना धीरदेवयो' इति 'मेदिन्यादेरेकत्वमपि। 'पुष्पं सुमना कुसुमम् इति नाममाला ॥ (१) ॥*॥ पुष्प्यति। 'पुष्प विकसने' (दि० प० से० )। पचाद्यच् (३।१।१३४)। 'पुष्पं विकास आर्तवे। धनदस्य विमाने च कुसुमे नेत्ररुज्यपि' इति इति हैम [ २।३००] ॥ ( २ ) ॥*॥ प्रसूयते स्म। 'पुङ् प्राणिप्रसवे' (दि०आ० से०)। 'स्वादय ओदित.' ( ग० ३।३।१ )। 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम्। 'प्रसून तु प्रसूते फलपुष्पयो' इति हैम [३।४१६] ॥ (३)॥*॥ कुस्यति। 'कुस संश्लेषणे' (दि० प० से०)। 'कुसेरुम्भोमेदेता' (उ० ४।१०६ ) इत्युम। संज्ञापूर्वकत्वान्न गुण। 'कुसुम स्त्रीरजोनेत्ररोगयो. फलपुष्पयो' [ इति हैम ३।२९२ ] ॥ (४) ॥*॥ 'सर्वसाधुममानेषु सम स्यादभिधेयवत्' [ इति मे० ११०। ३४-३५] ॥ * ॥ चत्वारि 'पुष्पसामान्यस्य'।

**मकरन्दः पुष्परसः**

**मकरन्दः, पुष्परसः ( २ पु ), 'फूलके रस' के २ नाम हैं।**

मकरन्द इति। मकरमपि द्यति। कामजनकत्वात्। 'दो अवखण्डने' (दि० प० अ०)। 'आतोऽनुप– (३।२।३) इति क। पृषोदरादि ( ६।३।१०९ )। यद्वा–मकरमप्यन्दति। 'अदि बन्धने (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। शकन्ध्वादि (वा० ६।१।९४)। यत्तु–'गतिकारकोपपदानाम्–' (प० २।२।१९) इत्युक्ते. सुबुत्पत्ते प्राक् समासे प्रध्ययनवत् पररूपत्वम्–इति मुकुट। तन्न। उत्तरदले विभक्त्यनुत्पत्तावपि पूर्वदले विभक्तिसत्त्वात्। अन्यथा 'राजदर्शी' 'चर्मकार' इत्यादौ नलोपो न स्यात्। दृष्टान्तोऽप्यसगत। 'प्राध्ययनम्' इत्यस्यैवेष्टत्वात् ॥ (१) ॥*॥ पुष्पस्य रस ॥ (२) ॥*॥ द्वे 'पुष्पमधो'।

**परागः सुमनोरजः ॥ १७ ॥**

**परागः (पु), सुमनोरजः (=सुमनोरजस्, न ) 'फूलके परागके २ नाम हैं।**

पराग इति ॥ परा गच्छति। 'गम्लृ गतौ' ( भ्वा० प० अ० )। 'अन्येष्वपि–'(वा० ३।२।४९) इति ड। 'पराग सुमनोरेणौ धूलीस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने' [इति मे० २४।४०-४१] ॥ ( १ ) ॥*॥ सुमनसा रज ॥ (२) ॥*॥ द्वे 'पुष्परेणो'।

---

१ 'कुड्मलो' इति पा०।

२ स्वामिग्रन्थे तु नेदं वचो दृश्यते, किन्तु तत्र 'मुञ्चति कलिकात्व मुकुल' इत्येव पाठो दृश्यते।

३ 'सुमम्' इति पा०।

४. 'प्रादिसमास' इत्यस्य 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप.' इति तात्पर्यत्वे न काचित् क्षति.।

१. 'आदि'शब्देन 'सुमना प्राज्ञदेवयो'। इति हैमस्य ( ३।८०२ ), 'सुमना पुष्पमालत्योस्त्रियां कोविदेऽपि च' इति विश्वप्रकाशस्य च (१७८।५५) संग्रहः। बहुत्वे यथा— 'दधति सुमनसो वनानि बह्वी' इति 'आरण्याः सुमनस ईयिरे न भृङ्गैः' इति च ( ७।२,८।१० ) माघप्रयोगौ। एकत्वे यथा—'वेश्या श्मशानसुमना इव वर्जनीया' इति शूद्रकप्रयोग.।

द्विहीनं प्रसवे सर्वम्

'द्विहीन' इस शब्दसे अब विशेषतया लिङ्गनिर्देश करते हैं, आगे कहे जानेवाले पेड़, लता और औषधके वाचक शब्द यदि फूल, फल, जड़ और पत्ते के वाचक हों तो वे नपुंसकलिङ्गमें प्रयुक्त होते हैं।

द्वीति ॥ द्वाभ्यां स्त्रीपुंसाभ्यां हीनं फलं पुष्पे पत्रे च। वक्ष्यमाणमश्वत्थादि फलपुष्पादिषु वर्तमानं नपुंसकं लिङ्गं ज्ञेयमित्यर्थः। विकारावयवयोरुत्पन्नस्य प्रत्ययस्य 'फले लुक्' (४।३।१६३)। 'पुष्पमूलेषु बहुलम्' (वा० ४।३।१६६) इति लुक्।

हरीतक्यादयः स्त्रियाम्।

*'हरीतकी, कर्कटी' आदि शब्द (फल आदि अर्थमें प्रयुक्त होनेपर भी) स्त्रीलिङ्ग ही रह जाते हैं अर्थात् नपुंसकलिङ्ग नहीं होते।*

हरीति ॥ पूर्वोक्तापवादः। 'स्त्रियाम्' इति हरीतक्याः फलम्। हरीतक्यादिभ्यश्च'(४।३।१६७) इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' (१।२।५१) हरीतक्यादिषु व्यक्ति' (वा० १।२।५२) इति लिङ्गमेव प्रकृतिवत्। न सङ्ख्या। आदिना 'कोशातकी (द्राक्षा) बदरी कण्टकारिका' इत्यादयः ॥

आश्वत्थ-वैणव-प्लाक्ष नैयग्रोधैङ्गुद फले ॥ १८ ॥

बार्हत च

आश्वत्थम्, वैणवम्, प्लाक्षम्, नैयग्रोधम्, ऐङ्गुदम्, बार्हतम् (६ न), 'पीपल, बाँस, पाकड़, वट और भटकटैयाके फल' के क्रमशः १-१ नाम हैं।

आश्वत्थेति ॥ अश्वत्थस्य फलम्। आश्वत्थम्। 'प्लक्षादिभ्योऽण्' (४।३।१६४) ॥ (१) ॥*॥ वेणोः। 'बिल्वादिभ्योऽण्' (४।२।१३६)। [ मयट् (४।३।१४३) प्राप्ते अण् ] विधेर्नाणो लुक् ॥ (१) ॥*॥ 'न्यग्रोधस्य च केवलस्य' (७।३।५) इत्यैच् ॥ (१) ॥*॥ इङ्गुद्या इदम् ॥ (१) ॥*॥ बृहत्या फलम् ॥ (१) ॥*॥ 'अश्वत्थादिफलानाम्' पृथक्पृथगेकैकम्।

फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्।

जम्बूः (स्त्री), जम्बु, जाम्बवम् (२ न), 'जामुनके फल' के ३ नाम हैं।

फले इति ॥ जमति। जमु अदने' (भ्वा० प० से०)। 'कन्दूरम्भूजम्बू–' (उ० १।९३) इत्यनेन कूप्रत्ययो वुगागमश्च निपातितः। 'जम्बूः स्यात्पादपान्तरे। तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम्' [ इति मे० १०५।४ ]। जम्ब्वाः फलम्। जम्ब्वा वा' (४।३।१६५) इत्यण्। तस्य विधानसामर्थ्यान्न लुक्। पक्षे 'ओरञ्' (४।३।१३९) तस्य 'लुप् च' (४।३।१६६) इति वा लुप्। 'लुपि युक्तवत्–' (१।२।५१)। पक्षे 'फले लुक्' (४।३।१६३)। लुपि जम्बूः (१) ॥*॥ लुकि 'ह्रस्वो नपुंसके–' (१।२।४८) इति ह्रस्वे जम्बु ॥ (२) ॥*॥ अणि जाम्बवम् ॥ (३) ॥*॥ त्रीणि 'जम्बूफलस्य'।

पुष्पे जातिप्रभृतयः स्वलिङ्गाः

जाति (स्त्री) प्रभृति 'यूथिका, मल्लिका' आदि शब्दके पुष्प अर्थमें प्रयुक्त होने पर पूर्ववत् लिङ्ग रहते हैं अर्थात् उनका नपुंसकलिङ्ग नहीं होता।

पुष्प इति ॥ जात्याः पुष्पम्। जातिः। 'पुष्पमूलेषु बहुलम्' (वा० ४।३।१६६ इति 'अनुदात्तादेरञ्' (४।३।१४०) अण (४।३।१३५) न लुप्। 'यूथिकाशेफालिकामल्लिकाद्याः'।

व्रीहयः फले ॥ १९ ॥

व्रीहय (पु), बहुवचनशब्दोपादान से यहाँ व्रीहि, 'यव, मुद्ग, माष, प्रियङ्गु, गोधूम, चणक, आदि' शब्द फल अर्थ में प्रयुक्त होनेपर भी पूर्ववत् लिङ्ग रहता है अर्थात् नपुंसकलिङ्ग नहीं होता, ऐसा समझना चाहिए।

व्रीति ॥ यवानां फलानि। यवाः। 'अवयवे च प्राण्योषधि–' (४।३।१३५) इत्यण्। फलपाकशुषाम्—' (वा० ४।३।१६६) इति लुप्। माषाः। मुद्गाः ॥

विदार्याद्यास्तु मूलेऽपि

विदारी (स्त्री), आदि ('आदि' शब्दसे शालपर्णी, अंशुमती, गम्भारी, आदि) शब्दके 'मूल, फल और फूल' अर्थमें प्रयुक्त होनेपर भी पूर्ववत् लिङ्ग रहता है अर्थात् नपुंसकलिङ्ग नहीं होता।

वीति ॥ विदार्या भूकूष्माण्ड्या मूलं पुष्पं फलमपि। विदारी। गम्भारी। शालपर्णी।

पुष्पे क्लीबेऽपि पाटला।

पाटला (स्त्री न), 'पाटलाके फूल' अर्थमें यह स्त्रीलिङ्ग और नपुंसकलिङ्ग दोनों होता है।

पुष्प इति ॥ पाटलायाः पुष्पम्। लुपि (वा० ४।३।१६६) पाटलम्। 'पाटलं कुसुमे वर्णेऽप्याशुव्रीहिश्च' पाटल इति शाश्वतात् [ ४५५ ] पुंल्लिङ्गोऽपि।

बोधिद्रुमश्चलदल पिप्पल कुञ्जराशन ॥ २० ॥

अश्वत्थे

बोधिद्रुम, चलदल, पिप्पल, कुञ्जराशन, अश्वत्थ (५ पु), 'पीपलके पेड' के ५ नाम हैं।

१ 'व्रीहौ च' इति पा०।

बोधीति ॥ बुध्यते । 'बुध अवगमने' (दि० आ० अ०) 'सर्वधातुभ्य इन्' (उ० ४।११८) । 'नोक्तमनित्यम्' इति न गुणनिषेधः । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' [इति मे० ७९।११ ] रत्नकोषेऽपि 'पिप्पलो बोधिरश्वत्थः' इति । बोधिश्चासौ द्रुमश्च ॥ (१) ॥*॥ चल दलमस्य ॥ (२) ॥ * ॥ पिप्पलं जलमस्यास्ति । मूले सिक्तत्वात् । अर्शआद्यच् ( ५।२।१२७ ) । 'पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ' [ इति मे० १५३।१११ ] ॥ (३) ॥*॥ कुञ्जरेणाद्यते । 'अद भोजने' ( अदा० प० से० ) कर्मणि ल्युट् ( ३।३।११३ ) ॥ ( ४ ) ॥ * ॥ शाल्मलिवटाद्यपेक्षया न श्वश्चिरं तिष्ठति ।'सुपि स्थः'(३।२।४) इति क । पृषोदरादि ( ६।३।१०९ ) । यद्वा,—अश्वत्थं जलमस्यास्ति । अर्शआद्यच् ( ५।२।१२७ ) । 'आपः प्रजाहितं शीतमश्वत्थं पवनं विषम्' इति वैद्यरत्नमाला । 'अश्वत्थः पिप्पलद्रौ स्यादश्वत्था पूर्णिमा मता'[1] [ इति मे० ७३।१५ ] ॥ (५) ॥ * ॥ पञ्च 'पिप्पलवृक्षस्य' ।

अथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।
तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥

कपित्थः, दधित्थः, ग्राही (=ग्राहिन्), मन्मथः, दधिफलः, पुष्पफलः, दन्तशठः ( ७ पु ), 'कैंथ' के ७ नाम हैं।

अथेति ॥ कपयस्तिष्ठन्त्यत्र । पृषोदरादिः (६।३।१०९) ॥ * ॥ अमरमालायां पवर्गतृतीयमध्य ( कपित्थ ) अपि पृषोदरादि ॥ (१) ॥*॥ दधिवर्णो द्रवस्तिष्ठत्यस्मिन् ॥ ( २ ) ॥ * ॥ गृह्णाति । 'ग्रह उपादाने'(क्र्या० प० से)। ग्रह्यादित्वात् ( ३।१।१३४ ) णिनि ॥ ( ३ ) ॥ * ॥ मननम् । 'मन ज्ञाने' (दि० आ० अ०) । संपदादि. (वा० ३।३।१०८) । 'मथ वधे' 'गमादीनाम्' ( ६।४।४० ) इति नलोप. । तुक् (६।१।७१) ।मथति । 'मथे विलोडने'(भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । मतो मथ । 'मन्मथ कामचिन्तायां कपित्थे कुसुमायुधे' [ इति विश्व ७६।१३ ] ( ४ ) ॥ * ॥ दधि फलेऽस्य ॥ (५) ॥ * ॥ पुष्पयुक्तं फलमस्य ।' ( ६ ) ॥ * ॥ दन्तानां शठ इव । अपकारित्वात् ॥ ( ७ ) ॥ * ॥ सप्त 'कपित्थस्य' 'कैंथ' इति ख्यातस्य ।

उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।

उदुम्बरः, जन्तुफलः, यज्ञाङ्गः, हेमदुग्धकः ( ४ पु ), 'गूलर' के ४ नाम हैं।

उद्विति ॥ उल्लङ्घितमम्बरमनेन । उदतिशयेनाम्बते वा । 'अबि शब्दे' ( भ्वा० आ० से० ) बाहुलकादरन् । पृषोदरादि (६।३।१०९) । 'उदुम्बरस्तु देहल्यां वृक्षभेदे च षण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रे ऽपि[1] स्यान्नपुंसकम्' इति मेदिनी [१४०।२४९-५०] । मुकुटस्तु मेदिनीसमतया टवर्गतृतीयमध्यम् [ उडुम्बरम् ] अप्याह । तन्न । तत्र मध्यवर्ण नियमाभावात् । आद्यन्तयोरेव नियमात् ॥ ( १ ) ॥*॥ जन्तवः फलेऽस्य ॥ (२) ॥*॥ यज्ञमङ्गति । अगिर्गत्यर्थः (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ हेमवर्णं दुग्धमस्य ॥ ( ४ ) ॥*॥ चत्वारि 'उदुम्बरस्य' ।

कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥

कोविदारः, चमरिकः, कुद्दालः, युगपत्रकः ( ४ पु ), 'कचनार' के ४ नाम हैं।

*कोवीति ॥ कुं भूमिं विदारयति । 'दृ विदारणे' (क्र्या०* प० से०) । 'कर्मण्यण्' ( ३।२।१ ) पृषोदरादि. ( ६।३।१०९ ) ॥ ( १ ) ॥*॥ चमरमस्यास्ति । 'अत इनिठनौ' ( ५।२।११५ ) ॥ ( २ ) ॥ * ॥ कुमुद्दालयति । 'दल विदारणे' (चु० उ० से०) । कर्मण्यण' (३।२।१) । शकन्ध्वादि. ( वा० ६।१।९४ ) । [ 'कुद्दालः स्यात्पुमान्भूमिदारणे युगपत्रके' इति मे० १५० १५०।८]॥(३)॥*॥ युगं युग्मं पत्रमस्य ॥ ( ४ ) ॥ * ॥ चत्वारि 'कोविदारस्य' 'कचनार' इति ख्यातस्य ।

सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।

सप्तपर्णः, विशालत्वक् (=विशालत्वच्), शारदः, विषमच्छदः ( ४ पु ), 'सतवना, छितवन' अर्थात् 'सात पत्तेवाले वृक्ष-विशेष, 'सप्तपर्ण' के ४ नाम हैं।

सप्तेति ॥ काण्डे काण्डे सप्त पर्णान्यस्य ॥ (१) ॥*॥ विशाला त्वगस्य ॥(२)॥*॥ शरदि पुष्प्यति ।'कालात्साधुपुष्प्यत्–' (४।३।४३) इत्यण् ॥*॥ शारदी ङ्यन्तापि । 'शारदी तोयपिप्पल्यां सप्तपर्णे च शारदी' इति दन्त्यान्तेषु रुद्रः । [ शारदोऽब्दे, स्त्रियां तोयपिप्पलीसप्तपर्णयोः । सस्ये क्लीबे, शरज्जातनूतनाप्रतिभे त्रिषु' इति मे० ७७।४० ] ॥ (३) ॥*॥ विषमाश्छदा यस्य ॥ ( ४ ) ॥*॥ चत्वारि 'सप्तपर्णस्य' 'छतवनी' इति ख्यातस्य ।

आरग्वधे राजवृक्षसंपाकचतुरङ्गुलाः ॥ २३ ॥
आरेवतव्याधिघातकृतमालसुवर्णकाः ।

आरग्वधः, राजवृक्षः, संपाकः, चतुरङ्गुलः, आरेवतः, व्याधिघातः, कृतमालः, सुवर्णकः ( ८ पु ), 'अमलतास' के ८ नाम हैं।

आरगिति ॥ आ रगणम्' 'रगे शङ्कायाम्' (भ्वा० प० से० ) । संपदादि ( वा० ३।३।१०८ ) । आरगं

१ 'पूर्णिमातिथौ' इति पा० ।

१. 'ताम्रेतु स्या' इति पा० ।

रोगशङ्कामपि हन्ति । 'कर्मण्यण् ( ३।२।१ ) । 'बहुल तणि' ( वा० २।४।५४ ) इति हन्तेर्वधोऽदन्त । 'व्य- ल्लोपो' ( वा० ६।४।४८ ) इत्यल्लोप । 'रञ्ज राग' ( भ्वा०, दि० उ० अ० ) । सपदादि ( वा० ३।३। १०८) । आरज रोगरागमपि हन्ति । यत्तु मुकुट —आस- मन्तात् रुज वधति छिनत्ति । 'वध छेदनसेवनपूरणेषु' । पृषो दरादि (६।३।१०९)—इत्याह । तन्न । उक्तधातो पाणि नीये कुत्राप्यदर्शनात् । यत्तु—वधि प्रकृत्यन्तरम्—इति 'जनि- वध्योश्च' ( ७।३।३५ ) इति सूत्रेऽपि वृत्ति । तन्न । मुनि- त्रयविरोधात्, इति प्रपञ्चित मनोरमामण्डने । यदपि स्वा- मिनोक्तम्—आ समन्ताद् रुजा वधोऽत्र—इति । तदपि न । व्यधिकरणबहुव्रीहिश्च—पृषोदरादि( ६।३।१०९ )त्वकल्प- नप्रसङ्गात् ॥ * ॥ स्वम्ब [ आरग्वध ] अपि, ह्रस्वादि [अरग्वध ]अपि । 'आरग्वधोऽथ सपाक कृतमालस्तथारग्वध' इति रत्नकोषात् ॥ ( १ ) ॥ * ॥ राजा चासौ वृक्षश्च । वृक्षाणा राजा । राजदन्तादि ( २।२।३१ ) इति वा । रोगाणा राजान वृश्चति इति वा । 'ओव्रश्चू छेदने'(तु० प० से० ) । बाहुलकात् सक् ॥ ( २ ) ॥ * ॥ सम्यक् पाको ऽस्य । दन्त्यादि । 'सपाकस्तर्कके, धृष्टे त्रिषु ना चतुरङ्गुले' [ इति मे० १४।१६६ ] ॥ * ॥ श कल्याण पाकोऽस्य इति ( शपाक ) तालव्यादिरपि ॥ * ॥ स्वामी तु— शमी शिविम् अकति, इति विगृह्य शम्याक' इति पाठ मन्यते ॥ ( ३ ) ॥ * ॥ चतस्रोऽङ्गुल्य प्रमाण- मस्य पर्वण । तद्योगाद् वृक्षोऽपि ॥ ( ४ ) ॥ * ॥ आरेवयति नि सारयति मल सारकत्वात् । 'रेवृ, प्लव, गतौ' ( भ्वा० आ० से० ) । णिच् ( ३।१।२६ ) । विच् ( ३।२।७५ ) । अतति । 'अत सातत्यगमने' (भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । आरेव चासावतश्च ॥ ( ५ ) ॥ * ॥ व्याधीन् हन्ति । 'कर्मण्यण ( ३।२।१ ) । 'हनस्तोऽचिण्णलो' ( ७।३।३२ ) ॥ ( ६ ) ॥*॥ कृता मालाऽस्य पुष्पै ॥ ( ७ ) ॥*॥ शोभनो वर्णोऽस्य ॥*॥ सुष्ठु पर्णान्यस्य, इति वा पाठ । [ 'सुपर्ण स्वर्णचूडे च गरुडे कृतमालके । सुपर्णी कमलिन्या च वैनतेयस्य मातरि' इति मे० ५१।८५-८६] ॥ ( ८ ) ॥ * ॥ अष्टौ 'सोनालु धनबहेड' इति ख्यातस्य ।

**स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भला ॥ २४ ॥**

**जम्बीर, दन्तशठ, जम्भ, जम्भीर, जम्भल, (५ पु), 'जम्बीरी नींबू' के ५ नाम हैं ।**

स्युरिति ॥ जम्यते । 'जमु अदने' (भ्वा० प० से० )। 'गम्भीरादयश्च' (उ० ४।३५) इति साधु । 'जम्बीर प्रस्थ पुष्पे स्यात्तथा दन्तशठद्रुमे' [ इति मे० १२४।१५७ ] ॥ ( १ ) ॥*॥ दन्ताना शठ इव । [ 'स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां तु योषिति' इति मे० ४०।१९-२० ]॥ ( २ ) ॥*॥ जम्भ- यत्यम्लत्वात् । 'जभी गात्रविनामे' ( भ्वा० आ० से० ) । पचाद्यच ( ३।१।१३४ ) । 'रधिजभो–' ( ७।१।६१ ) इति नुम् । 'जम्भ स्याद्दानवान्तरे । दन्तभोजनयोरंसे हनौ जम्बीरतूनयो ' [ इति हैम २।३१२ ] ॥ (३) ॥ * ॥ गम्भीरादित्वात् ( उ० ४।३५ ) ईरन् ॥ ( ४ ) ॥ * ॥ वृषादित्वात् ( उ० १।१०६ ) कलच् । [ 'जम्भल पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च' इति मे० १५१।९३ ] ॥ (५) ॥ * ॥ पञ्च 'जम्बीरस्य', 'जम्भेरी' इति ख्यातस्य ।

**वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः ।**

**वरण, वरुण, सेतु, तिक्तशाक, कुमारक, (५ पु) 'वरण' के ५ नाम हैं ।**

वरेति ॥ वृणोति । 'वृञ वरणे' (स्वा० उ० से० ) । कर्तरि ल्युट ( ३।३।११३ ) । कर्तरि ल्युट् (३।३।११३) ( ३।३।११० ) वा ॥ ( १ ) ॥*॥ 'कृवृदारिभ्य उनन्' (उ० ३।५३)। 'वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययो ' [इति विश्व ५०।३१] ॥ ( २ ) ॥ * ॥ सिनोति, सीयते वा । 'षिञ् बन्धने' ( स्वा० उ० अ० ) । 'सितनि—' (उ० १। ६९) इति तुन् । 'सेतुर्नाली कुम रवे' ॥ (३) ॥*॥ तिक्त शाकोऽस्य । शाकत्व चास्य पत्राणा शाकमध्ये पाठात् । 'तिक्तशाकस्तु खदिरे वरणे पत्त्रसुन्दरे' [ इति मे० १६। १९५] ॥ ( ४ ) ॥ * ॥ कुमारश्चिररतरुणत्वात् । कुमा रयति । 'कुमार क्रीडायाम्' ( चु० उ० से० ) । पचाद्यच् ( ३।१।१३४ ) । कुमार इव इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ ( ५ ) ॥ * ॥ पञ्च 'वरणस्य' ।

**पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥**

**पुंनाग, पुरुष, तुङ्ग, केसर, देववल्लभ (५ पु), 'नाग- केसर वृक्ष' के ५ नाम हैं ।**

पुंनेति ॥ पुमान् नाग इव । 'उपमित व्याघ्रा–' (२। १।५६)इति समास । पुनागो नृश्रेष्ठ । प्राधान्यात्स इव । 'पुन्नागस्तु सितोत्पले । जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमा- न्तरे' [इति मे० २५।४३-४४ ] ॥ ( १ ) ॥*॥ पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । पुर कुषन्' ( उ० ४। ७४)। यत्तु— पिपर्ति' इति विगृह्य पुर कुषन्' इत्युपन्यस्त मुकुटेन । तद्भ्रमात् । 'पुरुषस्त्वात्मनि नरे पुंनागे च' [इति हैम ३।७८१ ] ॥ ( २ ) ॥*॥ तुज्यते । 'तुजि हिंसा- याम्' ( भ्वा० प० से०, चु० उ० ) । घञ् (३।३।१८) । न्यङ्क्वादि ( ७।३।५३ ) । उच्चत्वाद्वा । 'तुङ्ग पुनाग- नगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्राया वर्वरा-

यामपीष्यते' इति हैमः [ २।३३ ] ॥ (३) ॥*॥ प्रशस्ता. केशरा अस्य । अर्शआद्यच् ( ५।२।१२७ ) । 'केशरो नागकेसरे । तुरंगसिंहयोः स्कन्धकेशेषु बकुलद्रुमे । पुंनागवृक्षे किंजल्के स्यात्केसरं तु हिङ्गुनि' इति हैमः [३।५७८-७९ ] ( ४ ) ॥ * ॥ देवाना वल्लभः ॥ ( ५ ) ॥ * ॥ पञ्च 'पुंनागस्य', गुर्जरदेशे 'संदेशरा' इति ख्यातस्य ।

**पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।**

पारिभद्रः, निम्बतरुः, मन्दारः, पारिजातकः (४ पु), 'बकायन' के ४ नाम हैं ।

पारीति ॥ पारमस्यास्ति । अत इनि (५।२।११५)। पारि पारं गतं भद्रमस्य, परिणो भद्रमस्य, इति वा । प्रज्ञाद्यण् (५।४।३८) । 'पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि' [इति मे० १४३।२८२] ॥ (१) ॥*॥ नियमयति । 'मम उपरमे' ( भ्वा० प० से० ) । 'पृषोदरादि (६।३।१०९) । निंबति । 'णिबि सेचने' (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) । बवयोरैक्यम् । कर्मणि घञ् ( ३।३।१९ ) वा । निम्बश्चासौ तरुश्च । शाकपार्थिवादि ( वा० २।१।६९) ॥ ( २ ) ॥*॥ मन्दा अरा यस्य । मन्दमृच्छति वा । 'ऋ गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१)। यद्वा—मन्दते । 'मदि स्तुत्यादौ' (भ्वा० आ० से०) । 'अङ्गिमदिमन्दिभ्य आरन्' ( उ० ३।१३४ ) । [ 'मन्दार स्यात् सुरद्रुमे । पारिभद्रेऽर्कपर्णे च' इति मे० १३६।१९६-९७ ] ॥ ( ३ ) ॥ * ॥ पारि पारं गत जातं जन्मास्य । पारिणः समुद्राज्जातो वा । स्वार्थे कन् (५।३।७५)॥(४) ॥*॥ चत्वारि 'निम्बतरो' 'बकायिनी' इति ख्यातस्य ।

**तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥**
**वञ्जुलश्चित्रकृच्च**

तिनिशः, स्यन्दनः, नेमिः, रथद्रुः, अतिमुक्तकः, वञ्जुलः, चित्रकृत् ( ७ पु ), 'तिनिश' के ७ नाम हैं ।

तिनीति ॥ अतिशयेन नेशति । 'णिश समाधौ' (भ्वा० प० से०) 'इगुपध—, (३।१।१३५) इति कः । यद्वा,— अति क्रान्तो निशा । 'अत्यादय—' ( वा० २।२।१८ ) इति समासः । पृषोदरादि ( ६।३।१०९ ) ॥ ( १ ) ॥*॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० ) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् 'स्यन्दनं तु स्मृतं क्लीबे रथाङ्गे तिनिशे नरि' इति रभस । स्यन्दनं तु स्रुतौ नीरे' तिनिशे ना, रथेऽस्त्रियाम्' [ इति मे० ९३।४८ ] ॥ (२) ॥ * ॥ नयति । 'णीञ् प्रापणे' ( भ्वा० प० से० ) 'नियो मि.' (उ० ४।४३) । 'पुलिङ्गस्तिनिशे नेमिश्चक्रप्रान्ते स्त्रियामपि, इति रुद्र. । 'ढ्लोपे—' ( ६।३।१११ ) इति दीर्घ ॥ ( ३ ) ॥ * ॥ रथस्य द्रु. । तत्रोपयुक्तत्वात् ॥ ( ४ ) ॥*॥ अतिशयितो मुक्तो विस्तारोऽस्य । कप्(५।४।१५४)। ( ५ ) ॥*॥ वञ्चते । 'वञ्चु गतौ' (भ्वा० प० से०) ॥ बाहुलकादुलो जत्वं च । 'वञ्जुल पुंसि तिनिशे वेतसाशोकयोरपि' [ इति मे० १५४।१२९ ] ॥ ( ६ ) ॥ * ॥ चित्रं करोति । अतिदाढर्येऽपि लघुत्वात् । क्विप् ( ३।२।७६ ) ॥ * ॥ सप्त 'तिनिशस्य' ।

**अथ द्वौ पीतनकपीतनौ ।**
**आम्रातके**

पीतनः, कपीतनः, आम्रातकः, ( ३ पु ), 'अमड़ा' के ३ नाम हैं ।

अथेति ॥ पीत करोति । 'तत्करोति—' ( वा० ३।१।२६ ) इति णिच् । 'बहुलमन्यत्रापि—' (उ० २।७८) इति युच् [ 'पीतनं पीतदारुणि । कुङ्कुमे हरिताले च पुमानाम्रातके मत ' इति मे० ८९।९२-९३ ] ॥ ( १ ) ॥ * ॥ तनोति । 'तनु विस्तारे' (त० उ० से०) । पचाद्यच् ( ३।१।१३४) कपीनां कपिवर्णस्य वा तन' । 'अन्येषामपि—' (६।३।१३७ ) इति दीर्घं । यद्वा,—यः लक्ष्म्यास्तन ईतनः, कपीनां कपेर्वा ईतनः । [ 'कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च । अश्वत्थे च' इति मे० ९५।७३] ॥ (२) ॥*॥ आम्रमतति 'अत सातत्यगमने' ( भ्वा० प० से० ) 'कुलादिभ्यो वुन्' (उ० ५।३५) ॥*॥ ह्रस्वादिरपि [अम्रातक.] अम्लत्वमतति । रलयोरैक्यम् । 'कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकी' इति त्रिकाण्डशेष [ २।४।९ ] ॥ (३) ॥ * ॥ त्रीणि 'अम्रातकस्य' 'अंबाडा' इति ख्यातस्य ।

**मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥**
**वानप्रस्थमधुष्ठीलौ**

मधूकः, गुडपुष्पः, मधुद्रुमः, वानप्रस्थः मधुष्ठीलः, (५ पु) 'महुआ' के ५ नाम हैं ।

मह्वीति ॥ मह्यते मन्यते वा । 'मह पूजायाम्' (भ्वा० प० से०) 'मन ज्ञाने' (दि० आ० अ०)वा । 'उलूकादयश्च' ( उ० ४।४१ ) इति साधु ॥ ( १ ) ॥ * ॥ गुड इव पुष्पमस्य ॥ (२) ॥*॥ मधुनामा द्रुम ॥ (३) ॥ * ॥ वनप्रस्थे वनैकदेशे भव । 'तत्र भव ' (४।३।५३) इत्यण् । 'वानप्रस्थो मधूकेऽपि स्यात्तृतीयाश्रमे पुमान् [इति मे० ७४ २९ ] ॥ ( ४ ) ॥ * ॥ मधु ष्ठीवति । 'ष्ठिवु निरसने' (भ्वा० प० से०) । 'इगुपध—' ( ३।१।१३५ ) इति कः । पृषोदरादिः । ( ६।३।१०९ ) । मधु ष्ठीले गर्भेऽस्य' इति वा ॥ ( ५ ) ॥ * ॥ पञ्च 'मधूकस्य' 'महुआ' इति ख्यातस्य ।

जलजेऽत्र मधूलकः ।

मधूलक*, (पु), 'पानी में या पहाड़पर होनेवाले महुए' का एक नाम है।

जलेति ॥ अत्र मधूके । मधु लाति । 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घः । स्वार्थे कन् ( ५।३ ७५ ) ॥ ( १ ) ॥ * ॥ 'गिरिजेऽत्र' इति मूलपाठ –इति सुभूत्यादयः । 'गौरधाक्षो मधूकोऽन्यो गिरिजः सोऽल्पपत्रक' इति माधवः । 'मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रक' इति स्वामी ॥ एकं 'जलजमधूकस्य'।

पीलौ गुडफलः स्रंसी

पीलु, गुडफल, स्रंसी ( स्रंसिन्। ३ पु ), 'पीलुनामक वृक्षविशेष' के ३ नाम हैं।

पीलाविति ॥ पीलति । 'पील प्रतिष्टम्भे' ( भ्वा० प० से० ) । मृगय्वादित्वात् ( उ० १।३७ ) उः [ 'पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे। अस्थिखण्डे च तालस्य काण्डपादपभेदयो ' इति मे० १४७।३२ ] ॥ ( १ ) ॥*॥ गुड इव फलमस्य ॥ (२) ॥*॥ स्रंसयति मलम् । 'स्रंसु अधःपतने' (भ्वा० आ० से०) । आवश्यके णिनिः ( ३। ३।१७० ) ॥ (३) ॥ * ॥ त्रीणि गुर्जरदेशे 'पीलु' इति ख्यातस्य ।

तस्मिंस्तु गिरिसंभवे ॥ २८ ॥

अक्षोटकर्परालौ द्वौ

अक्षोट, कर्पराल* (२ पु), 'पहाड़ी पीलु' के २ नाम हैं।

तस्मिन्निति ॥ तस्मिन् पीलौ गिरिजे । अक्ष्णोति । 'अक्षू व्याप्तौ संघाते च' ( भ्वा० प० से० ) । बाहुलकादोटः । 'अक्षस्येवोटा पर्णान्यस्य, इति वा ॥ ( १ ) ॥*॥ कर्परमालाति । 'अल भूषणादौ' (भ्वा० प० से०) । कर्मण्यण् (३।२।१) । यद्वा,–कर्परोऽस्यास्ति । सिध्मादित्वात्(५।२। ९७ ) लच् ॥*॥ 'कन्दराल, इति वा पाठः । पूर्ववत् ॥ ( २ ) ॥*॥ द्वे 'पर्वतपीलोः' 'अखरोट' इति ख्यातस्य ॥

अङ्कोटे तु निकोचकः ।

अङ्कोट, निकोचक* (२ पु), 'ढेरानामक वृक्ष-विशेष' के २ नाम हैं।

अङ्कोट इति—अङ्कयते 'अकि लक्षणे' ( भ्वा० आ० से० ) । बाहुल्कादोटः ॥ (१) ॥ * ॥ निकुच्यते । 'कुच शब्दे तारे' ( भ्वा० प० से० ) 'कृञादिभ्यो वुन्' ( उ० ५।३५ ) ॥ ( २ ) ॥ * ॥ 'अङ्कोल' अपि ॥ * ॥ द्वे 'अङ्कोलस्य' 'ढेरा' इति ख्यातस्य ॥

पलाशे किंशुकः पर्णो वातपोथः

पलाश, किंशुक, पर्ण, वातपोथ (४ पु), 'पलाश' के ४ नाम हैं।

पलेति ॥ प्रशस्तानि पलाशान्यस्य । अर्शआद्यच् (५।२ १२७) । यद्वा,–पलं मांसमश्नाति । 'अश भोजने' (क्र्या० प० से० ) । 'कर्मण्यण्' (३।२।१) । 'पलाशः किंशुके ऽस्मृपे । हरिते पलाशं पत्रे इति हैमः[1] ॥ ( १ ) ॥ * ॥ किंचित् शुक इव । शुकतुण्डाभपुष्पत्वात् ॥ ( २ ) ॥*॥ पृणति । 'पृण प्रीणने' (तु० प० से०) अच् (३।१।१३४)। यद्वा,–प्रशस्तानि पर्णान्यस्य । अर्शआद्यच् ( ५।२।१२७ )। यद्वा,–पिपर्ति । पृ पालनपूरणयोः' (जु० प० से०) 'कॄवृजॄषिद्रुपन्यनिस्वपिभ्यो नित्' ( ) । 'पर्णं पत्रे किंशुके ना' [इति मे० ४६।२०] ॥ (३) ॥ * ॥ वातं पोथयति 'पुथ हिंसायाम्' ( दि० प० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (४) ॥ * ॥ चत्वारि 'पलाशस्य'।

अथ वेतसे ॥ २९ ॥

रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।

वेतस*, रथ*, अभ्रपुष्प, विदुल, शीत*, वानीर, वञ्जुलः (७ पु), 'बेंत' के ७ नाम हैं।

अथेति ॥ अयनम् ॥ 'इण् गतौ' ( अ० प० अ० ) । 'नपुंसके' ( ३।३।११४ ) इति क्तः । वा विकल्पयेतं ज्ञानं स्यति । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । 'अतोऽनुप–' ( ३।२।३ ) इति कः । यद्वा,–ऊयते । 'वेञ् तन्तुसन्ताने' भ्वा० उ० अ०) । 'वेञस्तुट् च' (उ० ३।११८) इत्यसच् । बाहुलकादात्वं न । यत्तु—'वेतसवाहसपनसा ' इत्यसनि निपातनादेव तुट्–इत्याह मुकुटः । तन्न । उणादिषु तत्सूत्रादर्शनात् ॥ (१) ॥*॥ रम्यतेऽत्र । 'रमु क्रीडायाम्' ( भ्वा० आ० अ० ) । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' ( उ० २।२ ) । 'रथो स्यन्दनवानीरौ' इत्यजयः । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि ॥ च' [इति मे० ७२ १२] ॥ (२) ॥ * ॥ अभ्रमिव अभ्रसमये वा पुष्पमस्य ॥ ( ३ ) वेत्ति, विद्यते, वा । बाहुलकादुलच् गुणाभावश्च । 'विदुलस्तु पुमानम्बुवेतसे वेतसेऽपि च' [ इति मे० १५४।१३२ ] ॥ (४) ॥*॥ शीतमस्यास्ति । अच् (५।२।१२७) । वेतसे बहुवारे ना गुणे शीतं हिमे त्रिषु' इति रभसः । क्लीबलिङ्गमपि । 'शीतं तुषारवानीरबहुवारद्रुमेषु च' इत्यजयात् ॥ ( ५ ) ॥*॥ वायति । 'ओवै शोषणे ( भ्वा० प० अ० ) क्विप् (३।२।१७८) । वा शुष्कम् आ समन्तान्नीरमस्य ॥ (६) ॥ * ॥ वजति 'वज गतौ' ( भ्वा० प० से० ) । बाहुलकादुलच्, नुम् च 'वञ्जुलः पुमि तिनिशे वेतसाशोकयोरपि' इति मे० १५४।१२९ ] ॥ (७) ॥ * ॥ सप्त 'वेत' इति ख्यातस्य ।

---

1 हैमे तु—'पलाशः किंशुके शटी । हरिद्वर्णे राक्षसे च पलाशं छदने स्मृतम्।' इति पाठः ( ३।७६२ ) ।

**द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥**

**परिव्याधः, विदुलः (२ पु), नादेयी (स्त्री), अम्बुवेतसः (पु), 'जलवेंत' के ४ नाम हैं।**

द्वाविति ॥ परिविध्यते। 'व्यध ताडने' (दि० प० अ०)। घञ् (३।३।१९)। 'परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले' [इति मे० ८२।४७] ॥ (१) ॥ * ॥ नद्या भवा। 'नद्यादिभ्यो ढक्' (४।२।९७)। 'नादेयी नागरङ्गे स्याज्जयायां जलवेतसे। भूमिजम्ब्वां च जम्ब्वां च काकुण्ठेऽपि च योषिति' [इति विश्व १२३।१०५]¹ (३) ॥ * ॥ अम्बुनि जातो वेतसः। शाकपार्थिवादि (वा० २।१।६९) ॥ (४) ॥ * ॥ चत्वारि 'जलजातवेतसस्य'।

**शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः।**

**शोभाञ्जनः, शिग्रुः, तीक्ष्णगन्धकः, अक्षीवः, मोचकः (५ पु), 'सहिजन' के ५ नाम हैं।**

शोभेति ॥ शोभामनक्ति। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' (रु० प० से०)। कर्तरि ल्युट् (३।३।११३)। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्वा ॥ * ॥ प्रज्ञादणि (५।४।३८) 'शौभाञ्जन' ॥ * ॥ सुष्ठु भा तामनक्ति। ल्युट् (३।३।११३)। प्रज्ञादणि (५।४।३८) दन्त्यादि ('सौभाञ्जन') अपि ॥ (१) ॥ * ॥ शिनोति। 'शिञ् निशाने' (स्वा० उ० अ०)। 'जस्वादयश्च' (उ० ४।१०२) इति निपातितः। 'शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे' [इति मे० १२९।९०] ॥ (२) ॥ * ॥ तीक्ष्णो गन्धोऽस्य। 'शेषाद्विभाषा' (५।४।१५४) इति कप् ॥ (३) ॥ * ॥ आक्षीवते, आक्षीवयति वा। 'क्षीवृ मदे' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४) ॥ * ॥ ह्रस्वादि [अक्षीवम्] अपि। 'अक्षीवं वशिरे, शिग्रौ ना,-ऽमत्ते पुनरन्यवत्' [इति मे० १५९।३०] ॥ (४) ॥ * ॥ मोचयति। 'मुच्लृ मोक्षणे' (तु० प० अ०)। णिच् (३।१।२६)। अच् (३।१।१३४)। 'मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः' [इति मे० २७।८] । तत स्वार्थे कन् (५।३।७५) ॥ (५) ॥ * ॥ पञ्च 'शिग्रोः' 'सहिजन' इति ख्यातस्य।

**रक्तोऽसौ मधुशिग्रुः स्यात्**

**मधुशिग्रुः (पु), 'लाल फूलवाले सहिजन' का १ नाम है।**

रक्त इति ॥ असौ शोभाञ्जनः। रक्तपुष्पः। मधुप्रधानः शिग्रुः—इति मुकुटः। रक्तो मधुकरः। 'रक्तवर्णानाम्' इति दर्शनात्। मधुर्मधुरः। शिग्रुः—इत्येके ॥ (१) ॥ * ॥ एकं 'मधुशिग्रोः' 'मगुना' इति ख्यातस्य।

**अरिष्टः फेनिलः समौ ॥ ३१ ॥**

**अरिष्टः, फेनिलः (२ पु), 'रीठा' के २ नाम हैं।**

अरीति ॥ न रिष्टमस्मात्। 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः' [इति मे० ३५।३२] ॥ * ॥ रिष्टोऽपि। 'रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले' [इति मे० ३५।२६] ॥ (१) ॥ * ॥ फेनोऽस्यास्ति। 'फेनादिलच्च' (५।२।९९)। ['फेनिलोऽरिष्टपादपे। फेनिल मदनफले बदरे फेनवत्यपि' इति हैम ३।७०९] ॥ (२) ॥ * ॥ द्वे 'अरिष्टस्य' 'रीठा' इति ख्यातस्य।

**बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि।**

**बिल्वः, शाण्डिल्यः, शैलूषः, मालूरः, श्रीफलः (५ पु), 'बेल' के ५ नाम हैं।**

बीति ॥ बिलति। 'बिल भेदने' (तु० प० से०)। उल्वादि (उ० ४।९५)। ['बिल्व फले श्रीफले ना' इति मे० १५९।२४] ॥ (१) ॥ * ॥ शण्डते। 'शडि रुजायाम्' (भ्वा० आ० से०)। 'सलि—' (उ० १।५४) इत्यादिनेलच्। शाण्डिलस्य गोत्रापत्यम्। 'गर्गादिभ्यो यञ्' (४।१।१०५) शाण्डिल्य इव, इति। शण्डयति रुजं करोति वा। इलचि (उ० १।५४) स्वार्थे ष्यञ् (वा० ५।१।१२४)। शाण्डिल्य पावकान्तरे। बिल्वे मुनौ च' इति हैम [३।५३९] ॥ (२) ॥ * ॥ शिलूषस्यापत्यम्। शैलूष इव इति वा। 'नटे बिल्वे च शैलूष' इति तालव्यादिमूर्धन्यान्ते रभसः ॥ (३) ॥ * ॥ मां लक्ष्मीं परेषां लुनाति। 'लूञ् छेदने' (क्र्या० उ० से०)। बाहुलकादुरक् ॥ (४) ॥ * ॥ श्रीप्रदं श्रीप्रियं वा फलमस्य। शाकपार्थिवादि (वा० २।१।६९)। 'श्रीफल पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम्' [इति मे० १५५।१३८] ॥ (५) ॥ * ॥ पञ्च 'बिल्ववृक्षस्य'।

**प्लक्षो जटी पर्कटी स्यात्**

**प्लक्षः, जटी (=जटिन् १ पु), पर्कटी (स्त्री), 'पाकड़' के ३ नाम हैं।**

प्लेति ॥ प्रक्षरति 'क्षर संचलने' (भ्वा० प० से०)। 'अन्येभ्योऽपि—' (वा० ३।२।१०१) इति ड। कपिलकादि (वा० ८।२।१८)। यद्वा—प्लक्ष्यते। 'प्लक्ष भक्षणे' (भ्वा० उ० से०)। कर्मणि घञ् (३।३।१९)। प्लक्षति अधो गच्छति वा। अच् (३।१।१३४)। 'प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशने' [इति मे० १६६।१७] ॥ (१) ॥ * ॥ जटति। 'जट संघाते' (भ्वा० प० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८), ङीप् (ग० ४।१।४५)

---

१. 'जयाया च काकुण्ठे च समीक्ष्यते' इति पा०।

वा। जटा स्त्रनक्चे मूल मारया प्लक्षे पुनर्जटी [ इति म० ३४।१४ ]। रुद्र तु— गदभाण्डे जटीप्लक्षौ ॥ (२) ॥*॥ पृच्यते। पृची सम्पर्के (रु० प० से०)। बाहुलकात् कट। गौरादित्वीष (४।१।४१)। पर्कटी नूतनपल्ले पुगा दे प्लक्षपादपे [इति मे० ३७।४७]। गाश्वते पि-विन्ने या पर्कटी प्लक्ष प्लक्ष पिप्पलपादप [५२६] ॥ (३) ॥ ॥ त्रीणि प्लक्षस्य पाकर इति ख्यातस्य।

न्यग्रोधो बहुपाद्वट ॥३२॥

न्यग्रोध, बहुपात (=बहुपाद्), वट (३ पु), 'बट, बरगद' के ३ नाम हैं।

न्यगिति॥ यक रणद्धि। रुधिर आवरणे (रु० उ० अ०)। कमण्यण (३।२।१)। न्यग्रोधस्तु पुमान् श्याम वटयोश्च शमीतरौ। न्यग्रोधो तुरविनायाम् [ इति मे० ८१।३२ ] ॥ ( १ ) ॥ ॥ बहव पादा अस्य। न यागु पूर्वस्य (५।४।१४०) ॥ (२) ॥*॥ वटति। वट वेष्टने (भ्वा० प० से०)। अच (३।१।१३४)। वटी निपु गुण पुमि स्यान्यग्रोधरूपदयो [इति मे० ७५।२३] ॥ (३) ॥*॥ त्रीणि वटस्य।

गालव शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ।

गालव, शाबर, लोध्र, तिरीट, तिल्व, मार्जन (६ पु), 'लोध' के ३ नाम हैं।

गालेति॥ गालवस्यापत्यम्। ऋष्य धन- ( ४।१।११४ ) इत्यण। गन्त नेत्रमल वाधति। लोध्रे शोषण (भ्वा० प० अ०)। आतोऽनुप- (३।२।३) इति का वा। गालवो मुनिभेदे स्याल्लोध्रवृक्षे च कीर्तित ॥ (१)॥*॥ शबराणामयम्। तस्येदम् (४।३।१२०) इत्यण। शाबरो शूकशिम्ब्या स्यात् पुसि पापापराधयो। लोध्रे च [इति मे० १३९।२२५] इति तालव्यादि ॥*॥ दन्त्यादि [सा बरी ] अपि। साबराख्यापराधे च लोध्रे पापे च पठ्यते इति द न्त्यादावजय ॥(२)॥ ॥ रुणद्धि। रुधिर आवरण (रु० उ० अ०)। बाहुलकादरन। लूद्रादय इति रन—इति मुकुट। त न। तादृशसूत्र भावात्। कपिलिकादि ( वा० ८ २।१८ )। [ रोध्रोऽपि लत्वाभाव। रोध्रो ना शाबर नलीवमपराध च विल्वप इति मे०१२८।८०]॥(३)॥*॥ तीयते अनेन। कृतॄविम्य कीटन (उ० ४।१८५)। इत्वम् (७।१।१००)। रपरत्वम् (१।१।५१)॥(४)॥*॥ तिलत्यनेनाङ्गम्। तिल स्नेहने (तु० प० से०)। उल्वादि (उ० ४।९५) ॥ ( ५ ) ॥*॥ माष्टचनेन। मृजू शुद्धौ (अ० प० से०)। ल्युट (३।३।११७)—न यादिल्यु (३।१।१३४)— इति मुकुट। त न। तस्य कर्तरि विधानात्। मार्जन न द्वयोर्माष्टौ पुमि स्या लोध्रशाखिनि [ इति मे० ९०।५] ॥ (६)॥*॥ पट श्वेतलोध्रस्य। आद्यो श्वेत लोध्रे परा रक्तलोध्र —इति स्वामी।

आम्रश्चूतो रसाल

आम्र, चूत रसाल (३ पु), 'आम' के ३ नाम हैं।

आम्र इति॥ अम्यत। अम गत्यादौ ( भ्वा० प० से०)। अमिनम्योर्दीर्घश्च (उ० २।१९) इति रक दीर्घश्च ॥ (१)॥*॥ चूष्यते स्म। चूष पाने (भ्वा० प० से०)। क्त (३।२।१०२)। पृषोदरादि (६।३।१०९)। च्योतति रसम् इति वा। च्युतिर क्षरण ( भ्वा० प० से०)। अच (३।१।१३४) ॥ (२) ॥ ॥ रसमलति। अल भूषणादौ ( भ्वा० प० से० )। कमण्यण ( ३।२।१ )। [ रसाल इक्षौ चूते च इति हैम ३।७१९] ॥ (३) ॥ । त्रीणि आम्रवृक्षस्य।

असौ सहकारोऽतिसौरभ ॥ ३३ ॥

कामाङ्गो मधुदूतश्च माकन्द पिकवल्लभ । [७]

सहकार (पु), 'सुगन्धियुक्त आम का १ नाम है।

[ कामाङ्ग, मधुदूत, माकन्द, पिकवल्लभ (४ पु), 'आम' के य ४ नाम और भी हैं ] ॥ ७॥

असाविति॥ सह कारयति मेलयति द्वद्वम्।[1] अच (३।१।१३४ ) ॥ ( १ ) ॥*॥ अतिशयित सौरभमस्य ॥*॥ एवम् अतिसौरभ आम्रस्य।

कुम्भोलूखलक क्लीबे कौशिको गुग्गुलु पुर।

कुम्भम्, उलूखलकम् ( २ न ), कौशिक, गुग्गुलु, पुर (३ पु), 'गुग्गुल' के ५ नाम हैं।

किमिति॥ कुम्भादूखलकम् इति सघातविगृहीतम्। कामुके वाररनार्या च कुम्भ क्लीबे ॥ गुग्गुलौ इति रभस। उलूखल गुग्गुलौ च क्लीबमुक्तमुलूखलम् इति रुद्र। कुम्भोलूखलक कुम्भ कुम्भोलु खलक वरम् इति वाचस्पति ॥*॥ कमुम्भति। उम्भ पूरण (तु० प० से०)। कमण्यण (३।२।१)। शक ध्वादि (वा० ६।१।९४) ॥ (१)॥*॥ ऊर्ध्व खम् उलूखलम्। पृषोदरादि (६।३।१०९)। उलूख लाति। ला दाने (अ० प० अ०)। आतोऽनुप- (३।२।३) इति क। तत स्वार्थे कन(५।३।७५)॥ (२) ॥ ॥ कुम्भादुलूखलकाच्चेत्यपृथगित्यशीर्ता नर्यातिम् ॥ * ॥ कोश भव। अध्यात्म दिठञ (वा० ४।३।६०)। कौशिको नकुले व्यालग्राहे गुग्गुलुघूकयो। [2]कोशजोलूकयोश्च स्याद्

१ आम्रश्चूता रसालश्च सचेष्टो मदिरासख।
कामाङ्ग सहकारश्च परपुष्टमहोत्सव॥
इति स्वामी।

२ कोशजोलूकयोश्च इति पा०।

विश्वामित्रभुजावपि । कौशिकी चण्डिकायां च नदीभेदे च योषिति' [ इति मे० ७।७७-७८ ] ॥ ( ३ ) ॥ * ॥ गोजति । 'गुज स्तेये' ( भ्वा० प० से० ) । क्विप् ( ३। २।१७८ ) । गुजो व्याधेर्गुडति । 'गुड रक्षणे' ( तु० प० से० ) । बाहुलकादु । डलयोरेकत्वम् ॥ ( ४ ) ॥ * ॥ पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क । 'पुर पाटलिपुत्रेऽङ्के गुग्गुलौ तु पुमानयम्' इति रभस । यत्तु—पिपर्ति । पुर । 'इगुपध–' इति क । 'उदोष्ठ्यपूर्वस्य' ( ७।१।१०२ ) इत्युत्–इति स्वाम्याह । तन्न । 'प्रीञ् तर्पणे कान्तौ च' ( क्र्या० उ० से० ) । इत्यस्य तत्र ग्रहणात् । 'प्रीणातीति प्रिय' इति वृत्तिकृता विगृहीतत्वात् । 'प्रीणातीति प्रिय' इत्युक्त्वा 'इगुपधज्ञाप्रीकिर क' इति माधवोक्तेश्च ॥ ( ५ ) ॥ * ॥ पञ्च 'गुग्गुलवृक्षस्य' ।

**शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥**

**शेलुः, श्लेष्मातकः, शीतः, उद्दालः, बहुवारकः ( ५ पु ), 'लसोड़ा' के ५ नाम हैं ।**

शेलुरिति ॥ शिलति । 'शिल उञ्छे' (तु० प० से०) । बाहुलकादु ॥ (१) ॥ * ॥ श्लेष्म नाशयति । 'अत सातत्यगमने' (भ्वा० प० से०) । 'वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २।३२) ॥ (२) ॥ * ॥ श्यायते स्म । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । 'गत्यर्थाकर्मक–' ( ३।४।७२ ) इति क्त । 'द्रवमूर्ति– ( ६।१।२४ ) इति सम्प्रसारणम् । 'हल' ( ६।४।२ ) इति दीर्घ ॥ (३) ॥ * ॥ उद्दालयति । 'दल विशरणे' ( भ्वा० प० से० ) । णिच् (३।१।२६) । अच् ( ३।१।१३४ ) ॥ ( ४ ) ॥ * ॥ बहून् वारयति । 'वृञ् वरणे' (स्वा० उ० से०) । णिजन्त (३।१।२६) । 'वुन् शिल्पिसंज्ञयो' ( उ० २।३२ ) ॥ ( ५ ) ॥ * ॥ पञ्च 'उद्दालकस्य' 'बहुआर' इति 'लसोडा' इति ख्यातस्य ।

**राजादनं पियालः स्यात्सन्नकद्रुर्धनुष्पटः ।**

**राजादनम् ( न ), पियालः, सन्नकद्रुः, धनुष्पटः (३ पु), 'चिरौंजी, पियार' के ४ नाम हैं ।**

राजेति ॥ राजभिरद्यते । 'अद भक्षणे' (अ० प० अ०)। कर्मणि ल्युट् (३।३।११३) । 'राजादनं क्षीरिकायां पियाले किंशुकेऽपि च' [इति मे० ९८।१०३] ॥ * ॥ 'राजानतम्' इति पाठे राजानमतति, इति वा ल्यु ( ३।१।१३४ ) । 'राजादन प्रसरको राजातन' इति वाचस्पति ॥ ( १ ) ॥ * ॥ पीयते । 'पीयु' सौत्रो धातु । 'पीयुक्वणिभ्यां कालन् ह्रस्व.–' ( उ० ३।७६ ) ॥ * ॥ बाहुलकात् प्रीणाते कालनि प्रियालश्च । 'प्रियालश्च पियालक.' इति माधव. ॥ ( २ ) ॥ * ॥ सन्नो लीनः कद्रुवर्णोऽस्य ॥ ( ३ ) ॥ * ॥ दधन्ति धारयन्ति । 'धन धान्ये' ( जु० प० से० ) । 'भृमृशी–' ( उ० १।७ ) इत्यु । 'धनु पियालद्रुम' इति रूपरत्नाकर । 'धनु पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्तेषु मेदिनी [८३।११] ॥ * ॥ उसि (२।११७) वा । 'धनु पियाले ना, न स्त्री राशिभेदे शरासने' इति सान्तेषु च मेदिनी [१७१।२६] ॥ * ॥ पटति । 'पट गतौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) । 'पटः प्रियालवृक्षे ना मुचेले पुनपुसकम्' इति रभस ॥ * ॥ 'धनुष इव पटो विस्तारोऽस्य, समस्तं नाम' [ धनुष्पट ] इति स्वामी ॥ ( ४ ) ॥ * ॥ चत्वारि 'प्रियालस्य' 'चार' [चिरौंजी] इति ख्यातस्य ।

**गंभारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥**

**श्रीपर्णी भद्रपर्णी च काश्मर्यश्चापि**

**गम्भारी, सर्वतोभद्रा, काश्मरी, मधुपर्णिका, श्रीपर्णी, भद्रपर्णी ( ६ स्त्री ), काश्मर्यः ( पु ), 'गंभार' के ७ नाम हैं ।**

गमिति ॥ कं जलं बिभर्ति । 'डुभृञ् धारणपोषणयो' (जु० उ० अ०) । 'कर्मण्यण्' (३।२।१) । पृषोदरादित्वात् गत्वम् ॥ * ॥ 'कभारी' इत्यपि ॥ (१) ॥ * ॥ सर्वतो भद्रं यस्या । 'सर्वतोभद्र इत्युक्तं काव्यचित्रे गृहान्तरे । निम्बे ना सर्वतोभद्रा गभारी नटयोषितो.' इति मेदिनी [ १४५। ३०८ ] ॥ ( २ ) ॥ * ॥ काशते । 'काशृ दीप्तौ' ( भ्वा० आ० से० ) । 'अन्येभ्योऽपि–' (३।२।७५) इति मनिन् । 'वनो र च' (४।१।७) इति ङीब्रौ ॥ (३) ॥ * ॥ मध्विव पर्णान्यस्या । 'पाककर्ण–' (४।१।६४) इति ङीप् । स्वार्थे कन् (५।३।७५) ॥ (४) ॥ * ॥ श्रीयुक्तानि पर्णान्यस्या. । 'श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शाल्मली हठे' इति हैमः [ ३।२४१ ] । 'श्रीपर्णी काश्मरीकुम्भ्यो क्लीबे पद्माग्निमन्थयो' [ इति मे० ५१।८२ ] ॥ ( ५ ) ॥ * ॥ भद्राणि पर्णान्यस्या ॥ (६) ॥ * ॥ काश्मरीशब्दोऽस्त्यस्य । 'अन्येभ्योऽपि दृश्यते' ( वा० ५।२।१२० ) इति यप् ॥ ( ७ ) ॥ * ॥ सप्त 'काश्मर्या' 'खभारी' इति ख्यातस्य ।

**अथ द्वयोः ।**

**कर्कन्धूर्बदरी कोली**

**कर्कन्धूः, बदरी, कोली ( ३ स्त्री ), 'बेर' के ३ नाम हैं ।**

अधेति ॥ कर्क कण्टक दधाति । 'डुधाञ्–' (जु० उ० अ०) । 'अन्दूदृम्भू–' (उ० १।९३) इति निपातितः कूप्रत्ययान्त ॥—शकन्ध्वादित्वात् (वा० ६।१।९४) पररूपम्—इति स्वामी चिन्त्य[1] ॥ ( १ ) ॥ * ॥ बदति । 'वद स्थैर्ये'

---

१ कर्काणाम् अन्धु कर्कन्धुरिति विगृह्य ह्रस्वान्तपाठं

( भ्वा० प० से० ) । 'दिवि भ्रमि–' ( उ० ३।११७ ) इत्यमर । गौरादिङीष् ( ४।१।४१ ) । यत्तु– 'द्वयो' इत्युक्त कर्कन्धूरदरश्च–इति मुकुट । तन्न । बदरी कोले,' कर्कन्धु तु तत्फले' इति मदिनी ।[ १३७।२०७]-विरोधात् ॥ (२) ॥*॥ कोलति घनीभवति । कुल सस्त्याने' (भ्वा० प० से० ) । अच ( ३।१।१३४ ) । गौरादिङीष् ( ४।१। ४१) । मुकुटस्तु—इन ( उ० ४।११८ ) प्रत्यये वा ङीप ( ग० ४।१।४५ )—इत्याह । तन्न । कोल्या फले अण् ( ४।३।१३४ ) लुगी ( ४।३।१६४ ) ङीपो लुकि (१।२ ४९) च कालि' इति रूपापत्ते । ( 'कोलम्' इति रूपानुपपत्ते ) ॥*॥ इनि ( उ० ४।११८ ) (कालि ) ह्रस्वान्तोऽपि ॥ (३) ॥*॥ कौ वलति । 'वल प्राणने' ( भ्वा० प० से० ) । अच (३।१।१३४) । कुवलीशब्दोऽप्यत्र ॥*॥ त्रीणि 'बदर्या [वृक्षस्य] ।

कोलं कुवलफेनिले ॥ ३६ ॥

**सौवीर बदरं घोण्टापि**

**कोलम्, कुवलम् फेनिलम्, सौवीरम्, बदरम् ( ५ न ), घोण्टा ( स्त्री ), 'बेर के फल या बनबेर' के ६ नाम हैं।**

कोलमिति ॥ कोलीकुवलीबदरीणा फलेऽण् ( ४।३। १३४) लुगी (४।३।१६४)। 'लुक् तद्धितलुकि'(१।२।४९) इति ङीपो लुक । 'कोल कालिपके कर्कोटे पिप्पलीचव्ययो स्त्रियाम् [ इति मे० १४५।१० ] ॥ (१) ॥*॥ [कुवल] कोत्पले मुक्ताफले च बदरीफले' इति मे० १५०।७८ ] । (२) ॥*॥ फनोऽस्यास्ति । फेनादिलच्च' (५।२।९९) ॥ ( ३ ) ॥*॥ सुवीरदेशे भवम् । तत्र भव ' (४।३।५३) इत्यण् । स्रोतोऽञ्जने तु सौवीर बदरे काञ्जिकेऽपि च' इति दन्त्यादौ रभस ॥ ( ४ ) ॥ * ॥ ( ५ ) ॥ * ॥ घोणते । घुण भ्रमणे' ( भ्वा० आ० से० ) बाहुलकाट्ट । 'घोण्टा तु बदरीपूगवृक्षयोरपि योषिति' [ इति मे० ३४। १३]। बदरीसदृशाकारा वृक्ष सूक्ष्मफलो भवेत् । अटव्या मव सा घोण्टा गोपघण्टेति चोच्यते' [ इति शब्दर० इति वाच० पृ० २७०६] ॥ (६) ॥*॥ षट् 'कर्कन्धूफलस्य' । स्वामी तु—आद्यास्त्रयो वृक्षार्था । अन्ये फलार्था । घोण्टा तूभयाथा—इत्याह । स्वामी तु घोण्टाकोले व्यत्यासेन पठति ।

अथ स्यात्स्वादुकण्टकः ।

**विकङ्कत स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३१ ॥**

**स्वादुकण्टक , विकङ्कत , स्रुवावृक्ष , ग्रन्थिल , व्याघ्रपात (=व्याघ्रपाद् । ५ पु), 'कटाय' के ५ नाम हैं।**

अथेति ॥ कण्टकोऽस्यास्ति । अर्शआद्यच्(५।२।१२७)। स्वादुश्चासौ कण्टकश्च ॥ ( १ ) ॥*॥ विकङ्कते । 'ककि गत्यर्थ ' ( भ्वा० आ० से० ) । अतच् प्रत्यय ॥ ( २ ) ॥*॥ स्रुवाया वृक्ष । 'स्रुवा द्वयोर्होमपात्रे सल्लक्यामूर्वयो स्त्रियाम्' [ इति मे० १५९।२९] ॥ ( ३ ) ॥*॥ ग्रन्थि रस्यास्ति पिच्छादित्वात्लच् ( ५।२।९७ ) ॥ (४) ॥*॥ व्याघ्रस्य पादा इव पादा मूलान्यस्य । 'पादस्य लोप –' (५।४।१३८) इत्यकारलोप ॥ ( ५ ) ॥*॥ पञ्च विकङ्कतस्य' 'कठेर' इति ख्यातस्य ।

**ऐरावतो नागरङ्गः**

**ऐरावत , नागरङ्ग (२ पु), 'नारङ्गी वृक्ष' के २ नाम हैं।**

ऐरेति ॥ इरावत्या विद्युत इवायम् । तस्येदम्' (४।३। १२० ) इत्यण् । 'ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे । नागभेदे च पुसि स्याद्विद्युत्तद्भेदयो स्त्रियाम् । नपुसके महेन्द्रस्य ऋजुदीर्घशरासने [ इति मे० ८८।१९२ ९३ ]॥(१) ॥*॥ नागा रजन्त्यत्र । 'रञ्ज रागे' ( भ्वा० उ० अ०)। 'हलश्च' ( ३।३।१२१ ) इति घञ् । नागस्य सिन्दूरस्येव रङ्गोऽस्य इति वा ॥*॥ नागरङ्गे तु नारङ्गो नार्यङ्ग स्तनवासन ' इति वाचस्पति । 'नारङ्ग पिप्पलीरसे । यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च' [ इति मे० २४। ३७] ॥ ( २ ) ॥*॥ द्वे 'नारङ्गी' इति ख्यातस्य ।

नादेयी भूमिजम्बुका ।

**नादेयी, भूमिजम्बुका ( २ स्त्री ), 'भूमिजम्बू' अर्थात् 'एक प्रकार के कन्द' के २ नाम हैं। ( किन्हीं आचार्यों का मत है कि उपर्युक्त २ नाम और ये २ नाम, चारों नाम नारङ्गी के ही हैं )।**

नेति ॥ नद्या भवा । नद्यादिभ्यो ढक' (४।२।९७) । 'नादेयी नागरङ्गे स्याज्जपायां जलवेतसे । भूमिजम्ब्वा जपाया[3] च काकमुष्ठे च समीरयत' इति विश्व [ १२३। १०५] ॥ ( १ ) ॥ * ॥ भूमेजम्बू ह्रस्वत्वात्स्वार्थे कन् ( ५।३।८६ ) ॥ ( २ ) ॥*॥ द्वे नारङ्गस्य', चत्वारि 'नारङ्गस्य' इत्यन्ये ।

---

मत्वा स्वामिना प्रदर्शित साधुत्वप्रकार सिद्धा तकौमुदीसम्मतत्वात चिन्त्य प्रतिभाति ।

१ कोली इति पा० ।

२ 'गोपघोण्टे ति पा० ।

१ 'यज्ञपात्रे शल्लकी इति पा० ।

२ 'लकुचद्रुमे' इति पा० ।

३ 'जवाया इति पा० ।

**तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥३८॥**

तिन्दुकः, स्फूर्जकः, कालस्कन्धः, शितिसारकः (४ पु), 'तेंदुआ नामक वृक्ष' के ४ नाम हैं।

तीति ॥ तिम्यति । 'तिम आर्द्रत्वे' (दि० प० से०)। मृगय्वादि (उ० १।३७) । 'संज्ञायां कन्' (५।३।७५) ॥ (१) ॥*॥ स्फूर्जति । 'टुओ स्फूर्जा वज्रनिर्घोषे' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ काल स्कन्धो यस्य । 'कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे' इति विश्व [८४।३८] ॥ (३) ॥*॥ शिति काल. सारो मज्जा यस्य ॥ (४) ॥*॥ चत्वारि 'तिन्दुकस्य' 'तेंदुँ' इति ख्यातस्य ।

**काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके ।**

काकेन्दुः, कुलकः, काकपीलुकः, काकतिन्दुकः (४ पु), 'कुचिला' के ४ नाम हैं।

केनि ॥ काकाना काकवर्णो वा तिन्दु ॥ (४) ॥*॥ पृषोदरादि (६।३।१०९) ॥ (१) ॥*॥ कुलस्य गृहस्य प्रतिकृतिरिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । 'कुलकं तु पटोले स्यात्स्वरब्लोकमहतो' । पुंसि वल्मीकका-केन्दुकुलश्रेष्ठेषु कथ्यते' इति विश्वमेदिन्यौ[२] ॥ (२) ॥*॥ काकैः पील्यते । पील प्रतिष्टम्भे' (भ्वा० प० से०) । बाहुलकादुः । 'काकाना पीलुरिव' इति वा ॥ (३) ॥*॥ चत्वारि 'कटुतिन्दुकस्य', 'कुचिला' इति ख्यातस्य इत्यन्ये ।

**गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥ ३९ ॥**

गोलीढः, झाटलः, घण्टापाटलिः, मोक्षः, मुष्ककः (५ पु), 'काला पाढर या लोध-विशेष' के ५ नाम हैं।

गोलीति ॥ गोभिर्लिह्यते स्म । 'लिह आस्वादने' (अ० उ० अ०) । क्त (३।२।१०२) ॥ (१) ॥*॥ झाटं संघातं लाति । 'आतोऽनुप-' (३।२।३) इति क ॥ (२) ॥*॥ अहानि । घण्टा । बाहुलकाढ्नोऽटो घत्व च । 'पट गतौ' (भ्वा० प० से०) । घञ् (३।३।१८) । पाट लाति । बाहु-लकाद्वि । घण्टा चासौ पाटलिश्च ॥*॥ स्वामी तु (घण्टा, पाटलि इति ) नामद्वयमाह ॥ (३) ॥*॥ मोक्षयति रोगम् । मुचे (तु० प० अ०) सन्नन्तादकर्माण्णिजन्तादच् (३।१।१३४) । 'मोक्षस्तु मुक्तिपाटलिमोचने' । [इति मे० १६७।२२]। यत्तु—'मोक्ष अवसाने' चुरादि –इति मुकुट. । तन्निर्मूलम्[१] ॥ (४) ॥*॥ मुष्णाति रोगम् । 'मुष स्तेये' (क्र्या० प० से०) । 'सृवृभूशुषिमुषिभ्य कक्' (उ० ३। ४१) । स्वार्थे कन् (५।३।७५) । यत्तु—'मुष्णाति' इति विगृह्य 'मुष खण्डने-' इत्युपन्यस्तम् । तदयुक्तम् । तस्य (दि० प० से०) दन्त्यान्तत्वात् । क्र्यादिषु पाठाभावाच्च । 'मुष्को मोक्षकवृक्षे स्यात् सघाते वृषणेऽपि च' [इति मे० ३।३१] ॥ (५) ॥*॥ पञ्च 'लोध्रविशेषस्य' ।

**तिलकः क्षुरकः श्रीमान्**

तिलकः, क्षुरकः, श्रीमान् (=श्रीमत् । ३ पु), 'तिलकवृक्ष' के ३ नाम हैं।

तिलेति ॥ तिलति । 'तिल स्नेहने' (तु० प० से०) । 'क्वुन् शिल्पिसंज्ञयो' (उ० २।३२) तिल इव, इति वा । कन् (५।३।९६)। 'तिलको द्रुमभेदेऽश्वभेदे[३] च तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' [इति मे० ९।१००-१०१] ॥ (१) ॥*॥ क्षुरति । 'क्षुर विलेखने' (तु० प० से०) । क्वुन् (उ० २।३२) । 'क्षुरक कोकि-लाक्षे स्याद् गोक्षुरे तिलकद्रुमे' [इति मे० ६।७२] ॥ (२) ॥*॥ श्रीरस्त्यस्य । मतुप् (५।२।९४) । 'श्रीमांस्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु' [इति मे० ६६।१६३] ॥ (३) ॥*॥ त्रीणि 'तिलकस्य' ।

**समौ पिचुलझावुकौ ।**

पिचुलः, झावुकः (२ पु), 'झाऊवृक्ष' के २ नाम हैं।

सेति ॥ 'पिचु स्यात्तूलकर्पयो' इति धरणि । पिचु तूलं लाति । 'पिचुलो झावुकेऽपि स्यान्निचुले[४] जलवायसे' [इति मे० १५३-११२] ॥ (१) ॥*॥ 'झा' इति शब्द वेति गच्छति । 'वी गत्यादिषु' (अ० प० अ०) । मितद्र्वादित्वात् (वा० ३।२।१८०) डु । तत 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे 'झावुकस्य' 'झाऊ' इति ख्यातस्य ।

**श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ ॥ ४० ॥**

श्रीपर्णिका, कुमुदिका, कुम्भी (३ स्त्री), कटर्यः, कट्फलः (२ पु), 'कायफर' के ५ नाम हैं।

श्रीति ॥ श्री पर्णेषु यस्या । 'पाककर्णपर्ण-' (४।१। ६४) इति ङीप्। स्वार्थे कन् (५।३।७५)। 'श्रीपर्णी काश्म-

१. तदुक्तं साहित्यदर्पणे—'छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् । द्वाभ्यां तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥ कलापकं चतुर्भिश्च पञ्चभिः कुलकं स्मृतम् ।' इति (६। ५७८)।

२ मेदिनीस्थोऽयं पाठः (६।६७-७०) । विश्वे तु—'कुलकं तु पटोले स्याच्छ्लोकसम्बद्धगुच्छके । कुलकः स्यात् कुलश्रेष्ठे वल्मीके काकतिन्दुके ॥' इति पाठ (७।५९)।

१ तादृशधातूपलब्ध्यभावात् ।

२. 'सहते' इति पा० ।

३. 'द्रुमरोगाश्वभेदेषु' इति पा० ।

४. 'इज्जले' इति पा० ।

रीकुम्भ्यो क्लीबे पद्माग्निमन्थयो' [इति मे० ५१।८२] ॥ (१) ॥ * ॥ कौ मोदते । 'मुद हर्षे' (भ्वा० आ० से०)। 'इगुपध-'( ३।१।१३५ ) इति क । स्वार्थे कन् ( ५।३।७५) । 'कुमुद कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गंभार्यां पुंसि दिङ्नागे 'नागशाखामृगान्तरे' [ इति मे० ७६।२५-२६ ] ॥ ( २ ) ॥*॥ कुम्भीव कुम्भी रसाधारत्वात्। 'पृश्निकाया च कुम्भी स्यात्पाटलौ कट्फलेऽपि च' इति रन्तिदेव ॥ ( ३ ) ॥*॥ केटनम् । 'किट त्रासे' ( भ्वा० प० से० ) । घञ् ( ३।३।१८) । केट राति अतितिक्तत्वात् पतुर्वर्णादित्वात् ( वा० ५।१।१२४) ष्यञ् ॥ (४) ॥*॥ कटति । 'कटे वर्षावरणयो '(भ्वा० प० से०)। क्विप् (३।२।१७८) । कट् फलमस्य ॥ (५) ॥*॥ पञ्च 'कुम्भ्या', 'कायफल' इति ख्यातस्य ।

**क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।**

**क्रमुक', पट्टिकाख्य, पट्टी (=पट्टिन्), लाक्षाप्रसादनः ( ४ पु ), 'पठानीलोध' के ४ नाम हैं।**

नेति ॥ क्रामति । 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। बाहुलकादु । 'क्रमुक पट्टिकालोध्रे गुवाके'भद्रमुस्तके'[इति विश्व ७।५५]। यत्तु-'शिल्पिसंज्ञयो -' (उ० २।३२) इति कुनि वा-इत्याह मुकुट । तन्न । 'क्रमक' इति रूपापत्तेः ॥ ( १ ) ॥ * ॥ पट्टिका आख्या यस्य ॥ ( २ ) ॥ * ॥ पट्टोऽस्यास्ति । अत इनि-' ( ५।२।११५ ) । 'पट्ट पेषणपाषाणे व्रणादीना च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयो' [इति मे० ३४।२१] ॥*॥ यद्वा-पट्टिशब्दात् क्तिजन्तान्ङीप् (ग० ४।१।४५) । ['पट्टि स्त्री पट्टभेदे स्याल्ललाटे³ क्रमुकद्रुमे' इति मे० ३५।२२। 'पट्टी ललाटभूषाया पट्टी लाक्षाप्रसादने'⁴ इति टवर्गान्ते विश्व ३७।१५]॥(३) ॥*॥ लाक्षा प्रसीदत्यनेन। युच ( उ० २।७८ ) करणे। लाक्षा प्रसादयति वा । 'कृत्यल्युट –' (३।३।११३) इति ल्युट् ॥ (४) ॥*॥ चत्वारि 'लोहितलोध्रभेदस्य' ।

**नूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥ तूलं च**

**नूदः, यूप., क्रमुक, ब्रह्मण्यः ( ४ पु ), ब्रह्मदारु, तूलम् ( २ न ), 'सहतूल या तूत' के ६ नाम हैं।**

नूद इति ॥ नुदति पापम् । 'णुद प्रेरणे' ( तु० उ० अ० ) । 'इगुपध-' ( ३।१।१३५ ) इति क । पृषोदरादि (६।३।१०९)।—'अन्येषामपि' (६।३।१३७) इति दीर्घ-इति मुकुट । तन्न । तत्र 'उत्तरपदे' इत्यधिकारात् ।—'घञर्थे क'—इत्यपि न । यद्वा-नुदति । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । मूलविभुजादि (वा० ३।२।५)। कर्मण कर्तृत्वम् । यद्वा-नूयते । 'णू स्तुतौ' (तु० प० से०) कुटादि । बाहुलकाद् ॥ * ॥ 'तूद' इति स्वामी । तत्र 'तुद व्यथने' (तु० उ० अ०) । 'इगुपध-' ( ३।१।१३५ ) इति क । पृषोदरादि (६।३।१०९) ॥ (१) ॥*॥ युव-त्यनेन । 'यु मिश्रणामिश्रणयो '(अ० प० से०)। 'कुयुभ्यां च' (उ० ३।२७) इति पो दीर्घश्च । मुकुटस्तु--'यूप वृद्धौ' (भ्वा० प० से०) । इगुपधत्वात् (३।१।१३५) क । यवते वा । 'यूप्वोर्लोपश्च' इति पवतेरूपन् धात्वन्तलोप —इति वदन् 'यूप' इति पाठं मन्यते । किंतु 'यूप्वोर्लोपश्च' इति सूत्रमुज्ज्वलदत्तादौ न दृश्यते ॥ ( २ ) ॥ * ॥ क्रामति । 'क्रमु पादविक्षेपे' ( भ्वा० प० से० ) । बाहुलकादुकन् । 'क्रमुको भद्रमुस्तके । गुवाके पट्टिकालोध्रे' इति हैम [५०।१६-१७] ॥ (३)॥*॥ ब्रह्मणि वैदिके साधु । 'तत्र साधु' (४।४।९८) इति यत् । 'ये चाभावकर्मणो'(६।४।१६८) इत्यन् प्रकृत्या । [ब्रह्मण्यो ब्रह्मसाधौ स्याद् ब्रह्मण्यश्च शनैश्चरे' इति विश्व १२१।८४ ] ॥ ( ४ ) ॥*॥ ब्रह्मणो ब्रह्मणि वा दारु ॥ (५) ॥ * ॥ तूलयति, तूल्यते वा । 'तूल निष्कर्षे' (भ्वा० प० से०) । 'इगुपध-' (३।१।१३५)इति क । घञ् (३।३।१९) वा । 'पुल्लिङ्गस्तु पिचौ तूल क्लीब स्याद् ब्रह्मदारुणि'इति रुद्र ॥ (६)॥*॥ षट् 'अश्वत्थाकारस्य' पारसपिप्पल' इति ख्यातस्य । 'तूत' इति ख्यातस्य इत्यन्ये ।

**नीपप्रियककदम्बास्तु हलिप्रिये ।**

**नीप , प्रियकः, कदम्ब', हलिप्रिय' ( ४ पु ), 'कदंब वृक्ष' के ४ नाम हैं।**

नीपेति । नयति, नीयते वा । 'णीञ् प्रापणे'(भ्वा० उ० अ०)। 'पानीविषिभ्य प' (उ० ३।२३)। बाहुलकाद्गुणाभावः । 'नीप कदम्बबन्धूकनीलाशोकद्रुमेषु' च' [इति मे० १०२।८] ॥ (१) ॥*॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । 'क्वुन् शिल्पिसंज्ञयो ' (उ० २।३२) । 'प्रियक पीतसारके² । नीप चित्रमृगे चालौ प्रियगौ कुङ्कुमेऽपि च' [इति मे० १०।११८–१९] ॥ (२) ॥*॥ कदति। 'कद' सौत्रो हिंसार्थ । 'कृकदिकडिकटिभ्योऽम्बच्' ( उ० ४।८२ ) ।—'कदेर्णिद्वा' इत्यम्बच्—इति मुकुट । तन्न । तादृशसूत्राभावात् । 'कदम्ब निकुरम्बे स्यान्नीपसर्षपयो

१ 'नागे शाखामृगान्तरे' इति पा० ।
२ 'भद्रे मुस्तकपूगयोः ।' इति पा० ।
३. 'ललाटे कुम्भिकाद्रुमे' इति पा० ।
४. 'प्रसाधने' इति पा० ।

१. 'द्रुमेष्वपि' इति पा० ।
२. 'पीतशालके' इति पा० ।

पुमान्' [ इति मे० १०५।९ ] ॥ ( ३ ) ॥ * ॥ हलिन प्रिय । सुराया अभिव्यागमनात् ॥ ( ४ ) ॥ * ॥ चत्वारि 'कदम्ब' इति ख्यातस्य ।

**वीरवृक्षोऽरुष्करोऽग्निमुखो भल्लातकी त्रिषु ॥ ४२ ॥**

**वीरवृक्षः, अरुष्करः ( २ पु ), अग्निमुखी ( स्त्री ), भल्लातकी ( त्रि ), 'भिलावा' के ४ नाम हैं।**

वीरेति ॥ वीर इव वृक्षो दु स्पर्शत्वात् । 'वीरवृक्षस्तु भल्लातकार्जुनद्रुमयो पुमान्' [ इति मे० १६९।५५ ] ॥ (१) ॥ * ॥ अरुर्व्रणं करोति । दिवाविभा–' (३।२।२१) इति ट । 'नित्य मम सेऽनुत्तरपदस्थस्य' (८।३।४५) इति ष । 'अरुष्करो व्रणकृति त्रिषु, भल्लातके पुमान्' [ इति मे० १४०।२४०] ॥ ( २ ) ॥ * ॥ अग्निरिव मुखमस्या, गौरादि (४।१।४१) । भवेदग्निमुखो देवे त्रिप्रे भल्लातके स्त्रियाम्' [ इति मे० २०।१३ ] ॥ ( ३ ) ॥ * ॥ भल्ल इवातति । 'अत सातत्यगमने (भ्वा० प० से०) । ण्वुल् (उ० २।३२) । 'जाते –' (४।१।५३) इति ङीष् ॥ (४) ॥ * ॥ चत्वारि 'भल्लातक्या', 'भिलावा' इति ख्यातस्य ।

**गर्दभाण्डे कंदरालकपीतनसुपार्श्वकाः ।**
**प्लक्षश्च**

**गर्दभाण्डः, कंदरालः, कपीतनः, सुपार्श्वकः, प्लक्षः ( ५ पु ), 'लाही पीपल' के ५ नाम हैं।**

गर्दति ॥ 'गर्दभो गन्धभिदपि' [ इति मे० १०७।१५ ] । गर्दभमभिति (?) । 'अम गत्यादिषु' ( भ्वा० प० से० ) । 'जमन्ताड्डः' ( उ० १।११४ ) ॥ (१) ॥ * ॥ कदरा लाति । 'आत –' (३।२।३) इति क । 'कंदराल पुमान् गर्दभाण्डे प्लक्षतरावपि' [इति मे० १५६।१५१] ॥ (२) ॥ * ॥ या लक्ष्म्यामत ईतन । कपीना कपेर्वर्णस्य वा ईतन । 'कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च ॥ अश्वत्थे च' इति विश्व ॥ (३) ॥ * ॥ शोभन पार्श्वमस्य ॥ (४) ॥ * ॥ प्रक्षरति । 'क्षर सचलने' (भ्वा० प० से०)। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । कपिलिकादित्वात् (वा० ८।२।१८ ) लत्वम् । 'प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्रके' इति हैम. [ २।५७९ ] ॥ ( ५ ) ॥ * ॥ पञ्च 'प्लक्षस्य' गेहीं' इति ख्यातस्य ।

**तिन्तिडो चिञ्चाम्लिका**

**तिन्तिडी, चिञ्चा, अम्लिका ( ३ स्त्री ), 'इमली' के ३ नाम हैं।**

तिन्तीति ॥ तिम्यति । 'तिम आर्द्रीभावे' ( दि० प० से० ) । 'अलीकादयश्च' ( उ० ४।२५ ) इति निपात । 'तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रिया' इति वाचस्पति । ['तिन्तिडी चुक्रचिञ्चयो.' इति हैम ३।१८५] ॥ ( १ ) ॥ * ॥ 'चिम्' इत्यव्यक्तं शब्द चिनोति । 'चिञ् चयने' ( स्वा० उ० अ० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड. ॥ ( २ ) ॥ * ॥ अम्लो रसोऽस्या-स्ति । अत –' ( ५।२।११५ ) इति ठन् । 'अम्लीका चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिला' इति चन्द्र । [ 'अम्लिका तिन्तिडीकायामुद्गारचाङ्गेरिकासु च' इति मे० ५।४६ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'चिञ्चाया' ।

**अथो पीतसालके ॥ ४३ ॥**
**सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।**

**पीतसालकः, सर्जकः, असनः, बन्धूकपुष्पः, प्रियकः, जीवकः ( ६ पु ), 'विजयसार' के ६ नाम हैं।**

अथेति ॥ पीत सारोऽस्य रलयोरैक्यम् ॥ ( १ ) ॥ * ॥ सृजति । 'सृज विसर्गे' (तु० प० अ०) । ण्वुल् (३।१।१३३)। यद्वा–सर्ज्यते । 'सर्ज अर्जने' (भ्वा० प० से०)। ण्वुल् (उ० २।३२) ॥ (२) ॥ * ॥ अस्यति रजम् । 'असु क्षेपणे' ( दि० प० से० ) । ल्यु (३।१।१३४)। 'प्रियको जीवकोऽसन'[1] इति रत्नकोश । 'असन क्षेपणे क्लीब पुंसि स्याज्जीवकद्रुमे' [इति मे० ८४।२९] । प्रज्ञाद्यण् ( ५।४।३८) । 'पीठेऽसनकन्धयो क्लीबमासन ना तु जीवके' इति रुद्र-रभसौ ॥ (३) ॥ * ॥ बन्धूकस्येव पुष्पमस्य ॥ (४) ॥ * ॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । ण्वुल् (उ० २।३२) । 'प्रियक पीतसारके । नीपे चित्रमृगे चाणौ प्रियंगौ कुङ्कुमेऽपि च' [इति मे० १०।११८-१९] ॥ (५) ॥ * ॥ जीवयति । 'जीव प्राणधारणे' ( भ्वा० प० से ) । ण्वुल् ( ३।१।१३३) । 'जीवक प्राणके पीतसारकृपणयो-[2] रपि । कूर्चशीर्षे च पुंसि स्यात्' [ इति मे० ८।९५ ] ॥ (६) ॥ * ॥ षट् 'जीवकस्य', 'विजयसार' इति ख्यातस्य ।

**साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः ॥ ४४ ॥**

**सालः, सर्जः, कार्श्यः, अश्वकर्णकः, सस्यसंवरः ( ५ पु ), 'शाल या सखुआ' के ५ नाम हैं।**

सेति ॥ सल्यते । 'षल गतौ' (भ्वा० प० से०)। कर्मणि घञ् ( ३।३।१९ ) । सारो दार्ढ्यमतिशयितमस्य । अर्श-

---

१ 'वीरवृक्षो भल्लातककुभद्रुमयो' इति पा० ।

२ मेदिनीस्थोऽयं पाठः ( ९५।७३ ) । विश्वे तु कपीतनमिति पाठ उपलभ्यते ( ९७।१५० ) ।

१ 'वृन्दावने तु विकसितकन्दलदशनैर्वोपति दरीमुखैश्च कन्दलदशनै.' इत्युज्ज्वल० ( वाच० पृ० ५४० ) दर्शना-त्तालव्यमध्योऽपि ।

२. 'पीतशालकृपणयो-' 'पीतशालक्षपणयो' इति च पा० ।

आद्यच्(५।२।१२७)वा । 'पुंसि भूम्न्यमात्रेऽपि सालो वरणसर्जयो' इति दन्त्यादौ रभस ॥ (१) ॥*॥ सर्ज्यते । 'षर्ज अर्जने' (भ्वा० प० से०) । नन्द्यादच् (३।१।१३४)॥ (२) ॥*॥ कृपति । 'कृष विलेखने' (तु० उ० अ०) । 'इगुपध-' (३।१।१३५) इति क । चातुर्वर्ण्यादित्वात् (वा० ५।१।१२४) ष्यञ् ॥ (३) ॥*॥ अश्वकर्ण इव पत्रमस्य ॥ (४) ॥ * ॥ सस्यं सव्रियते । 'वृञ् वरणे' (स्वा० उ० से० ) । 'ग्रहवृदृ-' (३।३।५८) इत्यप् ॥ (५) ॥*॥ पञ्च 'सालस्य' 'शालवृक्षस्य' ।

**नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।**

**नदीसर्ज, वीरतरु, इन्द्रद्रु, ककुभ, अर्जुनः (५ पु), 'अर्जुनवृक्ष' के ५ नाम हैं ।**

नेति ॥ नद्याः सर्जः ॥ (१)॥*॥ वीरश्चासौ तरुश्च । दृढकाष्ठत्वात् ॥ (२) ॥*॥ इन्द्रस्य, इन्द्र इव वा द्रुः ॥ (३)॥ 'ककुप् स्त्रिया प्रवेणीदिक्शोभासु चम्पकस्रजि' [इति मे० १०७।१३ ] । ककुभो दिश सन्त्यस्य । बहुविस्तारत्वात् । अर्शआद्यच् (५।२।१२७) । 'ककुभो रागभेदेऽपि वीणाङ्गेऽर्जुनपादपे' [इति मे० १०७।१३] ॥ (४) ॥*॥ अर्ज्यते । 'अर्ज अर्जने' (भ्वा० प० से०) । 'अर्जेणिलुक् च' (उ० ३।५८) इत्युनन् ॥*॥ 'पार्थस्तु ककुभे जिष्णौ' इति विश्वात् [ ७६।९ ] पार्थोऽपि ॥ (५) ॥*॥ पञ्च 'अर्जुनवृक्षस्य' 'कौपीतक' इति ख्यातस्य ।

**राजादनः फलाध्यक्षः क्षीरिकायाम्**

**राजादन, फलाध्यक्ष (२ पु), क्षीरिका (स्त्री), 'खिरिनीके पेड़' के ३ नाम हैं ।**

राजेति ॥ राजभिरद्यते । 'अद भक्षणे' (अ० प० अ०) । कर्मणि ल्युट् (३।३।११४) । 'राजादनः क्षीरिकायां पियाले किंशुकेऽपि च' [ इति मे० ९८।१०३ ] । 'राजादनं पियालद्रौ क्षीरिकायां त्रिपत्रके' इति हैमात् [ ४।१९४ ] पुंल्लिङ्गोऽपि ॥ (१) ॥*॥ फलानामध्यक्ष ॥ (२) ॥*॥ क्षीरमस्त्यस्याः । 'अत –' (५।२।११५) इति ठ ॥ (३) ॥ * ॥ त्रीणि 'क्षीरिकायाः' 'खिरनी' इति ख्यातस्य ।

**अथो द्वयोः ॥ ४५ ॥**

**इङ्गुदी तापसतरुः**

**इङ्गुदी (स्त्री पु), तापसतरु (पु), 'इङ्गुदी या इङ्गुआके पेड़' के २ नाम हैं ।**

अथेति ॥ इङ्गनम् । 'इगि गतौ' (भ्वा० प० से०) । घञ् (३।३।१८)। इङ्गं द्यति । 'दो अवखण्डने' (दि० प० अ०) । 'आतोऽनुप-' (३।२।३) इति क । पृषोदरादि (६।३।१०९) । 'जाते –' (४।१।५३) इति ङीप् ॥ (१) ॥*॥ तपस्विन उपयुक्तस्तरु ॥ (२) ॥*॥ द्वे 'इङ्गुद्याः' 'इङ्गुआ' इति ख्यातस्य । 'जियापूता' इति ख्यातस्य–इति मुकुट ।

**भूर्जे चर्मिमृदुत्वचौ ।**

**भूर्ज, चर्मी (=चर्मिन्), मृदुत्वच् (=मृदुत्वच् । ३ पु), 'भोजपत्रके पेड़' के ३ नाम हैं ।**

भ्विति ॥ ऊर्जनभूर्जः । 'ऊर्ज बलप्राणनयो' (चु० प० से०) । घञ् (३।३।११८)। भूर्जोऽस्य ॥ (१)॥*॥ प्रशस्तं चर्मास्यास्ति । व्रीह्यादित्वात् (५।२।११६) इनि । 'चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गिरिटावपि [इति मे० ८७। ६३] ॥ (२) ॥*॥ मृदुस्त्वगस्य ॥ (३) ॥*॥ त्रीणि 'भोजपत्रवृक्षस्य' ।

**पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥४६॥**

**पिच्छिला, पूरणी, मोचा (३ स्त्री), स्थिरायु (=स्थिरायुस्, पु), शाल्मलिः (स्त्री), 'सेमलके पेड़' के ५ नाम हैं ।**

पीति ॥ पिच्छा शाल्मलिनिर्यासोऽस्या अस्ति पिच्छादित्वात् (५।२।१००) इलच् ॥ (१) ॥*॥ पूरयति । 'पूरी आप्यायने' (चु० उ० से०) । ल्युट् (३।३।११४) । 'टिड्ढा-' (४।१।१५) इति ङीप् । यत्तु मुकुट —'र्वो –' (८।२।७६) इत्यादिना दीर्घ —इत्याह । तन्न । हल्पदान्तयोरभावात् । धातोर्दीर्घोपधत्वाच्च । 'पूरणं पूरके त्रिषु । क्लीबं पिष्टप्रभेदे च पूरणी शाल्मलिद्रुमे । ( पटारम्भकसूत्रेषु )' [इति मे० ४९।६४-६५] ॥ (२) ॥*॥ मुञ्चति रसम् । 'मुच्लृ मोक्षणे' (तु० उ० अ०) । पचाद्यच् (३।१। १३४) । 'मोचं शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयो ' [इति मे० ८७।८] ॥ (३) ॥*॥ स्थिरमायुर्यस्याः । 'षष्टिवर्षसहस्राणि वने जीवति शाल्मलि' इति वचनात् ॥ (४) ॥*॥ शालयति । 'शाल सन्नने' (भ्वा० आ० से०) णिजन्त । क्विप् (३।२।१७८) । मल्यते । 'मल धारणे' (भ्वा० आ० से०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । शाल् चासौ मलिश्च ॥ (५) ॥ - ॥ पञ्च शाल्मल्याः 'सेंवर' [सेमल] इति ख्यातस्य ।

**पिच्छा तु शाल्मलीवेष्टे**

**पिच्छा (स्त्री), शाल्मलीवेष्टः (पु), 'मोचरस' के २ नाम हैं ।**

पीति । पतितुमिच्छति । 'पत्लृ गतौ'(भ्वा० प० से०) सन्नन्त । पचाद्यच् (३।१।१३४) । पृषोदरादि (६।३। १०९) । यद्वा–पिच्छ(य)ति, पिच्छयते, वा । 'पिच्छ बाधे' (चु० प० से०) । अच् (३।१।१३४) । घञ् (३। ३।१८) वा ॥ (१) ॥*॥ शाल्मल्या वेष्ट । 'क्वाथ

कषायो निर्यूपो निर्यासो वेष्टकस्तथा' इति रभसः ॥ (२) ॥*॥ द्वे 'शाल्मलिनिर्यासस्य' 'सेंवरीगोंद' इति ख्यातस्य।

रोचनः कूटशाल्मलिः।

**रोचनः, कूटशाल्मलिः (२ पु), 'काला सेमर'के २ नाम हैं।**

रोचेति ॥ रोचते। 'रुच दीप्तौ' (भ्वा० आ० से०)। 'अनुदात्तेतश्च–' (३।२।१४९) इति युच्। 'रोचना रक्तकह्लारे गोपित्त कवरयोषितो'[1]। रोचनः कूटशाल्मल्या पुंसि स्याद्रोचके त्रिषु' [इति मे० ९१।१६-१७] ॥ (१) ॥*॥ कूटश्चासौ शाल्मलिश्च ॥ (२) ॥*॥ द्वे 'कृष्णशाल्मले'। 'कुत्सितशाल्मले.' इत्येके।

चिरबिल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥

**चिरबिल्वः, नक्तमालः, करजः, करञ्जकः (४ पु), 'करञ्ज' के ४ नाम हैं।**

चिरेति ॥ 'चिरं बिलति': 'बिल भेदने'(तु० प० से०)। बाहुलकात् ॥ * ॥ 'चिरिबिल्व' इत्यन्ये ॥ (१) ॥*॥ नक्तं मालो धारणमस्य। नक्तमा अलति वा। 'अल भूषणादौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४) ॥*॥ 'रक्तमाल' इति स्वामी ॥ (२) ॥*॥ करेण जन्यते। 'अन्यत्रापि–' (३।२।१०१) इति ड। कं सुखं जलं वा रञ्जयति। 'कर्मण्यण्' (३।२।१)—'रजरज–' (३।२।१४२) इति निर्देशादविडत्यपि नलोप। मल्लापूर्वकत्वाच वृद्धि।–णिलोपस्य स्थानिवत्त्वान्नोपधावृद्धि —इति मुकुट। तन्न। एवमपि णिनिमित्तवृद्धेर्दुर्वारत्वात्। 'करज स्याद्व्याघ्रनखे करञ्जनखयो पुमान्' [इति मे० ३१।२१] ॥ (३) ॥*॥ कं रञ्जयति। 'कर्मण्यण्' (३।२।१)। ('शापकसिद्धं न सर्वत्र' इत्युक्तेर्नलोपाभाव)। स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ चत्वारि 'करञ्जवृक्षस्य'।

प्रकीर्यः पूतिकरजः पूतीकः कलिमारकः।

**प्रकीर्यः, पूतिकरजः, पूतिकः, कलिमारकः (४ पु), 'काँटेदार करञ्ज पेड़' के ४ नाम हैं।**

प्रकीति ॥ प्रकीर्यते। 'कॄ विक्षेपे' (तु० प० से०)। अघ्न्यादित्वात् (उ० ४।११२) यक्।— ण्यति पूर्वविप्रतिपेधाद्दीर्घपरत्वे च–इति मुकुट। तन्न। पूर्वविप्रतिपेधस्य निर्मूलत्वात्। 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिपेधेन' (वा० ७.१।१००) इति वचनाच्च। 'प्रकीर्यः पूतिकरजे विप्रकीर्णे[2] तु वाच्यवत्' [इति विश्व १२१।८७] ॥ (१) ॥*॥ पूतिश्चासौ करजश्च ॥ (२) ॥*॥ पुनाति। 'पूञ् पवने' (क्र्या० उ० से०)। 'तिन्तिडीकादयश्च' (उ० ४।२०) इतीकन् तुक्च ॥*॥ ('पूतिक' इति पाठे पूतिं कायति। 'पूतीकः पूतिक' इति माधव') ॥ (३) ॥*॥ कलिं मारयति। यदाहेन्दु —'पूतीकरञ्ज. सुमनास्तथा कलहनाशन.।' मुकुटस्तु—कलिं करोति। 'कर्मण्यण्' (३।२।१) स्वार्थे कन् (५।३।७५)। कलिकारक –इत्याह ॥ (४) ॥ * ॥ चत्वारि 'कण्टकवत्करञ्जस्य'।

करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥

**षड्ग्रन्थः (पु), मर्कटी, अङ्गारवल्लरी (२ स्त्री) 'करञ्जके भेद' का १-१ नाम है।**

षडिति ॥ षड् ग्रन्थयो यस्य। 'अच्' 'प्रत्यन्ववपूर्वात्–' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच्। षड् ग्रन्था यस्य वा। 'षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्' [इति मे० ७३।२४] ॥ (१) ॥ * ॥ मर्कति 'मर्क' सौत्रो धातु। 'शकादिभ्योऽटन्' (उ० ४।८१)। गौरादि (४।१।४१)। 'अथ मर्कटी। करञ्जभिच्छूकशिम्ब्यो. पुंसि वानरलूतयो' [इति मे० ३७।५२] ॥ (१) ॥ * ॥ अङ्गारवर्णपर्णा वल्लरी ॥ (१) ॥ * ॥ एकैकं 'करञ्जभेदानाम्'।

रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः।

**रोही (=रोहिन्), रोहितकः, प्लीहशत्रुः, दाडिमपुष्पकः (४ पु) 'गुलनार या लाल करञ्ज' के ४ नाम हैं।**

रोहीति ॥ अवश्यं रोहति 'आवश्यका–' (३।३।१७०) इति णिनि। 'रोही रोहितकेऽश्वत्थवटपादपयो. पुमान्' [इति मे० ९१।१८ (१) ॥*॥ रोहितो वर्णोऽस्यास्ति। अर्शआद्यच् (५।२।१२७)। स्वार्थे कन् (५।३।७५)। 'रोहित कुङ्कुमे रक्ते ऋजुशक्रशरासने। पुंसि स्यान्मीनमृगयोर्भेदे ना रोहितद्रुमे'[2] [इति मे० ६५।१४६-४७] ॥ (२) ॥*॥ 'प्लीहशत्रुर्यंनतिरक्तश्च रोहित' इति माधव'। प्लीह्न शत्रु ॥ (३) ॥*॥ दाडिमस्य पुष्पमिव पुष्पमस्य ॥ (४) ॥*॥ चत्वारि 'रोहितकस्य' 'रोहिड' 'गुलनार' इति ख्यातस्य।

गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥

**गायत्री (स्त्री)। बालतनयः, खदिरः, दन्तधावनः (३ पु), कत्था, खैर' के ४ नाम हैं।**

गायेति ॥ गायन्त त्रायते। 'त्रैङ् पालने' (भ्वा० आ० अ०)। 'आतोऽनुप–' (३।२।३) इति क। 'गायत्री

१. 'वारयोषितो' इति पा०।

२. विनिकीर्णे' इति पा०।

१. कोष्ठस्थ पाठ निर्णयसागरीय.।

२ 'भेदे रोहितकद्रुमे' इति पा०।

खदिरे स्त्री स्यात्' इति रभस । 'गायत्री त्रिपदादेवीच्छन्दोभित्खदिरेषु च' [ इति मे० १३३।१५० ] ॥*॥ 'वह्निगायत्रिणौ तथा इति वैद्यकाम्नातोऽपि । व्रीह्यादित्वात् ( ५।२।११६ ) इनि ॥ ( १ ) ॥ * ॥ बालास्तनया पत्त्राण्यस्य ॥ * ॥ 'बालपत्त्रश्च' इति मूलपाठ –इत्यन्ये । 'बालपत्त्रो यवास खदिरश्च' इति प्राञ्च[1]। आह च–'खदिरो रक्तसारश्च गायत्री दन्तधावन । कण्टकी बालपत्त्रश्च जिह्वाशल्य क्षितिक्षम'[2] ॥ ( २ ) ॥*॥ खदति । 'खद स्थैर्ये हिंसाया च'(भ्वा० प० से०)। 'इषिमदिमुदिखिदि–'[3] ( उ० १।५१ ) इति किरच । 'खदिरो शाकभेदे स्त्री ना चन्द्रे दन्तधावने' [ इति मे० १३३।१४६] ॥ (३) ॥*॥ दन्तान् धावति । 'धावु गतिशुद्ध्योः' (भ्वा० उ० से०) । ल्युट (३।३।११४) ॥ (४) ॥*॥ चत्वारि 'खदिरस्य' ।

**अरिमेदो विटखदिरे**

अरिमेद', विटखदिर' ( २ पु ), 'बदबू करनेवाले कत्थे' के २ नाम हैं ।

अरीति ॥ अरिरिव मेद स्नेहोऽस्य ॥ ( १ ) ॥*॥ विड्गन्धि खदिर ॥ (२) ॥*॥ द्वे 'दुर्गन्धिखदिरस्य' ।

**कदरः खदिरे सिते ।**

**सोमवल्कोऽपि**

कदर', सोमवल्क' ( २ पु ), 'सफेद कत्थे' के २ नाम हैं ।

कदेति ॥ दृणाति । 'दॄ विदारणे' (क्र्या० प० से०) पचाद्यच् ( ३।१।१३४ ) । कस्य जलस्य दर । 'कदर श्वेतखदिरे क्रकचव्याधिभेदयो ' [इति मे० १३१।१२१] ॥ (१) ॥ * ॥ सोम इव वल्कोऽस्य । 'सोमवल्कस्तु धवलखदिरे कट्फलेऽपि च' [ इति मे० १८।२२३ ] ॥ ( २ ) ॥*॥ द्वे 'श्वेतखदिरस्य' ।

**अथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥**

**एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।**

**चञ्चु पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥**

व्याघ्रपुच्छ', गन्धर्वहस्तक', एरण्ड', उरुबूक', रुचक', चित्रक , चञ्चु , पञ्चाङ्गुल', मण्ड', वर्द्धमान', व्यडम्बकः ( ११ पु ), 'एरण्ड, रेड' के ११ नाम हैं ।

अथेति ॥ व्याघ्रस्य पुच्छमिव पुच्छमस्य ॥ (१) ॥*॥ गन्धर्वस्य मृगभेदस्य हस्त इव (हस्त ) पत्त्रमस्य ॥ (२) ॥ * ॥ वा ईरयति वायुम् । 'ईर गतौ कम्पने च' ( अ० आ० से० ) । अस्माण्णिजन्ताद्बाहुलकादण्डच ॥ (३) ॥*॥ उरुं महान्तं वायु वायति । 'ओवै शोषणे' ( भ्वा० प० अ० ) । 'उलूकादयश्च' ( उ० ४।४१ ) इत्यूक । 'वपुर' प्रमक्रो, निचुलो हिज्जल, एरण्ड उरुबूक ' इति वोपालित । 'उरुबूकोरुबुकव्याघ्रदलाश्च' इति रभस ॥ ( ४ ) ॥ *॥ रोचते । 'रुच दीप्तौ' ( भ्वा० आ० से० ) । 'कञ्चक शिलिसंज्ञयो ' ( उ० २।३२ ) इति क्वुन् ॥ (५) ॥*॥ चित्रयति । 'चित्र चद् गुनादौ' ( चु० उ० से० ) । क्वुन (उ० २।३२ ) । 'चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु' [ इति मे० ८।८८ ] ॥ ( ६ ) ॥*॥ चञ्चति । 'चञ्चु गत्यर्थं' ( भ्वा० प० से० ) । यत्तु—'चकि, मकि, गतौ' इति धातुपाठ्यमन मुकुटस्य । तच्चिन्त्यम् । बाहुल्कादु । 'चञ्चुस्त्रोत्या स्त्रिया पुंसि गोनाडीके व्यडम्बके' [इति मे० २७।५] ॥ (७) ॥ * ॥ पञ्चाङ्गुलयोऽस्य । 'तत्पुरुषस्याङ्गुले –' (५।४।८६) इत्यच् । यत्तु—'द्वित्रिभ्याम्–' (५।४।१०२ ) । इत्ययच्–इति मुकुटेनोक्तम् । तच्चिन्त्यम् ॥ ( ८ ) ॥ * ॥ मण्डयति । 'मडि भूषायाम्' ( भ्वा० प० से० ) । णिच् (३।१।२६) । पचाद्यच् ( ३।१।१३४ ) । 'आमलक्या स्त्रिया मण्ड एरण्डे मोचपिच्छयो ' इति रभस । 'मण्ड पञ्चाङ्गुले शाके पुंमि[1] क्लीब तु मस्तुनि । आमलक्या स्त्रिया मण्डायास्त्रिशा मारपिच्छयो ' [ इति मे० ४२। २१ २२] ॥*॥ अवारप्रतेपोऽपि । 'अमण्डपञ्चाङ्गुलवर्धमानगन्धर्वहस्ता ' इति हारावली ॥ * ॥ आवारादिरपि । 'गन्धर्वहस्तकोऽमण्ड आमण्डो व्याघ्रपुच्छक ' इति वारपाल ॥*॥ 'आदण्ड इत्येके (दीर्घदण्डत्वात्)—इति स्वामी ॥ (९) ॥*॥ वर्धते[2] । 'वर्ध छेदनपूरणयो '(चु० प० से०)। चानश ( ३।२।१२९ ) । 'वर्धमान प्रभभेदे शरावैरण्डविष्णुषु' [ इति मे० ९८।१०५ ] ॥ ( १०,) ॥*॥ व्यड मरुमम्बयति । 'अबि शसने' (भ्वा० आ० से० ) । णिच् (३।१।२६) । ण्वुल् ( ३।१।१३३ ) ॥*॥ 'व्यडम्बन ' इति स्वामी । तत्र ल्युट् (३।३।११४) । 'युच्' ( उ० २।७८ ) वा ॥ (११) ॥*॥ एकादश 'एरण्डस्य' ।

**अल्पा शमी शमीरः स्यात्**

शमीर (पु), 'छोटी शमी' का १ नाम है ।

अल्पेति ॥ अल्पा शमी । 'कुटीशमीशुण्डाभ्यो र (५। ३।८८) ॥ (१) ॥*॥ एकम् 'अल्पशम्या' ।

---

१ 'बालपत्त्रो यवास खदिरश्चेतिद्विपर्ययषु धन्वन्तरिपाठमदृष्ट्वा 'बालपुत्र'भ्रान्त्या ग्रन्थकृद् 'बालतनय'माह इति स्वामीवचनादत्र 'प्राञ्च' इत्यनेन 'धन्वन्तरि'रभिमत , अतो 'बालपत्त्र' इत्येव पाठ सम्यक् ।

२ इद वच स्वामिनोक्तं स्वव्याख्यायाम् ।

३ अनेन सूत्रेण 'खिदिर'शब्दस्य सिद्धिर्न तु 'खदिर' शब्दस्य, तस्मादत्र 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा ' इत्यस्योणादिसूत्रस्योपन्यासो युक्त ।

१ 'शाकभेदे क्लीब' इति पा० ।

२ चौरादिकस्य णिजन्तपरस्मैपदित्वाद्वर्धते इति रूप तु 'वृधु वृद्धौ' ( भ्वा० आ० से० ) इत्यस्य धातोर्ज्ञेयम् ।

**शमी सक्तुफला शिवा ।**

**शमी, सक्तुफला, शिवा ( ३ स्त्री ), 'शमी' के ३ नाम हैं।**

शमीति ॥ शमयति रोगान् । पचाद्यच् (३।१।१३४)। गौरादिः (४।१।४१) । शमी सक्तुफलायां च शिम्बिकायां च 'वल्गुलो'[1] [ इति मे० ११०।३१] ॥(१) ॥*॥ सक्तुवत् फलमस्याः । अजादि ( ४।१।४ ) ॥ ( २ ) ॥*॥ शिवं करोति । 'तत्करोति-'(वा० ३।१।२६) इति णिच् । पचाद्यच् (३।१।१३४) । 'शिवा झाटामलौषधी । अभयामलकीगौरीफेरुसक्तुफलासु'[2] च' [इति मे० १५९।२५-२७]॥ ( ३ ) ॥*॥ त्रीणि 'शम्याः' ।

**पिण्डीतको मरुवकः श्वसनः करहाटकः ॥ ५१ ॥**
**शल्यश्च मदने**

**पिण्डीतकः, मरुवकः, श्वसनः, करहाटकः, शल्यः, मदनः ( ६ पु ), 'मयनफल' के ६ नाम हैं।**

पिण्डीति । पिण्डी तनोति । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति ड । 'संज्ञायां कन्' (५।३।७५) । 'पिण्डीतकः स्यात्तगरे मदनाख्यमहीरुहे' [ इति मे० १६। १९९] ॥ (१) ॥*॥ मरु वाति मरुन् ( उ० २।३२ ) ॥ (२) ॥*॥ निर्जलेऽपि श्वसिति । नन्द्यादिः (३।१।१३४)। 'श्वसनं श्वसिते पुंसि मारुते मदनद्रुमे' [इति मे० ९३।३८] ॥ ( ३ ) ॥*॥ कर हाटयति । 'हट दीप्तौ' ( भ्वा० प० से० ) । णिच् (३।१।२६) 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (५।३।७५) । 'करहाट शिफाकन्दे पद्मस्य मदनद्रुमे' [इति मे० ३७।५७] ॥ (४) ॥*॥ शलति । 'शल गतौ' (भ्वा० प० से०) । अन्न्यादित्वात् (उ० ४।११२) यक् । 'क्ष्वेडाङ्कुरे शल्यं ना श्वाविन्मदनद्रुमे' इति तालव्यादौ रभस. ॥ ( ५ ) ॥ * ॥ मदयति । 'मदी हर्षग्लेपनयोः' (भ्वा० प० से०) । ल्यु. (३।१।१३४) । 'मदनः स्मरवसन्तद्रुमभिद्धत्तूर[3]रसिक्थके' [इति मे० ९०।२] ॥ (६) ॥*॥ षट् 'मदनस्य' 'मयनफलाख्यवृक्षस्य' ।

**शक्रपादपः पारिभद्रकः ।**
**भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥**
**पूतिकाष्ठं च सप्त स्युर्देवदारुणि**

**शक्रपादपः, पारिभद्रकः, (२ पु), भद्रदारु, द्रुकिलिमम्, पीतदारु, दारु, पूतिकाष्ठम्, देवदारु ( ६ न ), 'देवदारु' के ८ नाम हैं।**

शक्रेति ॥ शक्रस्य पादपः ॥ (१) ॥*॥ पारि निष्ठां प्राप्तं भद्रमस्य । 'पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि' [ इति मे० १४३।२८२ ] ॥ ( २ ) ॥ * ॥ भद्र दारु । 'भद्रदारुणि च क्लीबम्' इत्यमरमाला । 'पुनपुंसकयोर्दारु.' इति त्रिकाण्डशेषात् [ ३।५।८ ] पुंस्यपि ॥ ( ३ ) ॥*॥ किलति । 'किल श्वैत्यक्रीडनयो.' ( तु० प० से० ) । बाहुलकाद् किमच् । द्रुश्चासो किलिम च ॥ ( ४ ) ॥*॥ पीत च तद्दारु च ॥ ( ५ ) ॥*॥ दीर्यते । 'दॄ विदारणे' ( क्र्या० प० से० ) । 'दृसनिजनि-' ( उ० १।३ ) इति ञुण् । 'पुनपुंसकयोर्दारु' इति त्रिकाण्डशेष. [ ३।५।८ ] ॥ (६) ॥*॥ पूति च तत्काष्ठ च ॥ (७) ॥*॥ देवस्य दारु ॥ (८) ॥*॥ अष्ट 'देवदारुवृक्षस्य' ।

**अथ द्वयोः ।**

**पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ॥ ५४ ॥**
**कृष्णवृन्ता कुबेराक्षी**

**पाटलिः ( पु ), पाटला, अमोघा, काचस्थाली, फलेरुहा, कृष्णवृन्ता, कुबेराक्षी ( ६ स्त्री ), 'पाढर' के ७ नाम हैं।**

अथेति ॥ पाति । क्विप् (३।२।१७८) । टलति । 'टल वैक्लव्ये' ( भ्वा० प० से० ) । सर्वधातुभ्य इन्' (उ० ४। ११८) । पाश्चासौ टलिश्च ॥ ( १ ) ॥*॥ पाट लाति । 'आतोऽनुप-' ( ३।२।३ ) इति कः । 'पाटला पाटली स्त्री स्यादस्याः पुष्पे पुनर्न ना' [ इति मे० १५३।१०९ ] ॥ ( २ ) ॥*॥ न मोघा । 'अलिप्रिया विशालाप्राप्यमोघा पाटलिर्द्वयो' इति वाचस्पति. ॥*॥ 'मोघा स्त्री पाटलावृक्षे मोघं त्रिषु निरर्थके' इति रुद्रात् 'मोघा' अपि । मोहयति । पचाद्यच् (३।१।१३४) न्यङ्क्वादि. (७।३।५३ ) ॥ (३) ॥*॥ काचस्य कार्ष्ण्यस्य स्थाली पात्रम् ॥ * ॥ स्वामी तु 'काला' 'स्थाली' इति पठति । कालो वर्णोऽस्या अस्ति । अर्शआद्यच् ( ५।२।१२७ ) अजादि. (४।१।४) । 'काला तु कृष्णवृन्ताश्यामञ्जिष्ठानीलिकासु'[1] च' [इति मे० १४५। ७-८ ] ॥*॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' ( भ्वा० प० अ० ) । 'स्थाचतिमृजेरालज्वालजालीयच.' ( उ० १। ११६ ) । 'स्थाली स्यात्पाटलोखयो.' [ इति मे० १४९। ५५ ] ॥ ( ४ ) ॥*॥ फले रोहति । 'इगुपध-' ( ३।१। १३५) इति कः । 'तत्पुरुषे कृति-' ( ६।३।१४ ) इत्यलुक् ॥ ( ५ ) ॥*॥ कृष्णं वृन्तमस्याः । 'कृष्णवृन्ता पाटलाया माषपर्ण्यां च योषिति' [ इति मे० ६८।१९६ ] ॥ ( ६ ) ॥*॥ कुबेरस्येवाक्षि यस्याः । 'अक्ष्णोऽदर्शनात्' ( ५।४। ७६) इत्यच् । गौरादि. ( ४।१।४१ ) । मुकुटस्तु—'बहु-

१ 'वागुली' इति, 'गुगुली इति च पा० ।
२. 'फलास्वपि' इति पा० ।
३. 'धुस्तूररसिक्थके' इति पा० ।

१. कृष्णात्रिवृताश्यामञ्जिष्ठानीलिनीषु च' इति पा० ।

व्रीहौ सविथ–' ( ५।४।११३ ) इत्यादिना पच्—इत्याह। तन्न। अस्वाङ्गत्वात् वृक्षस्याप्राणित्वात्॥ (७) ॥*॥ सप्त 'पाटलाया' पाडली इति ख्यातस्य।

श्यामा तु महिलाह्वया।

लता गोवन्दनी गुन्द्रा प्रियंगुः फलिनी फली ॥ ५५ ॥

विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सः।

श्यामा, महिलाह्वया, लता, गोवन्दनी, गुन्द्रा, प्रियङ्गु, फलिनी, फली, विष्वक्सेना, गन्धफली, कारम्भा ( ११ स्त्री ), प्रियक ( पु ), 'कङ्गुनी, टांगुन' के १२ नाम हैं।

श्यामेति ॥ श्यामा वर्णोऽस्त्यस्याः। अर्शआदि ( ५।२।१२७ )। श्यामो वटे प्रयागस्य वारिदे वृद्धदारके। पिके च कृष्णहरिता पुंसि स्यात्तद्वति त्रिषु। मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ। अप्रसूताङ्गनायां च प्रियङ्गौ वाऽपि वल्गुली'। यमुनया त्रियामायां कृष्णात्रिवृतिकौषधौ। नीलिकायाम् [ इति मे० ११०।३१।३४ ] ॥ ( १ ) ॥*॥ महिलाया आह्वय आह्वयो यस्याः। '–सप्तम्युपमान– ( ६।२।२ ) इति साधु ॥ ( २ ) ॥*॥ लतति। लति' सौत्रो धातुः। पचाद्यच् (३।१।१३४)। 'प्रियङ्गुलतयालता। स्पृक्काज्योतिष्मतीवल्लीलताकस्तूरि-कासु च [ इति मे० ५७।५१-५२ ] ॥ (३) ॥*॥ गवि भूमौ वन्द्यते। 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०)। कर्मणि ल्युट् ( ३।३।११३ ) ॥ ( ४ ) ॥*॥ गुन्द्रयति। 'गुद्रि क्षोदे' ( ) अच् (३।१।१३४)। गुन्द्रस्तेजनके स्त्री तु पियङ्गौ भद्रमुस्तके [इति मे० १२४।२४] ॥ (५) ॥*॥ प्रियं गच्छति। मृगय्वादौ (उ० १।३७) निपातः। 'प्रियङ्गुः स्त्री राजिकाकणयोरपि। [3]फलिन्यां कङ्गुसस्ये च'[इति मे० २४।४३] ॥ (६) ॥*॥ फलमस्त्यस्याः। 'अत –' (५।२।११५) इतीनिः। 'फलिन्यग्निशिखायां स्त्री फलिन्यां फलिने त्रिषु' [इति मे० ८९।९५]॥(७)॥*॥ गौरादित्वात् (४।१।४१) ङीष्। 'फली फलिन्याम्' ॥ (८) ॥*॥ विष्वक् सिनोति। 'षिञ् बन्धने' ( स्वा० उ० अ० )। 'कृवृजृसि–' ( उ० ३।१० ) इति नः।—अच् ( ३।१।१३४ )—इति मुकुटोक्तिश्चिन्त्या। विष्वक्सेना फलिन्यां स्याद् विष्वक्सेनो जनार्दने' [ इति मे० ९८।१०९ ] ॥ (९) ॥*॥ गन्धवत् फलमस्याः। 'पाककर्ण–' (४।१।६४) इति ङीप्। गन्धफल्यपि गुन्द्रायां चम्पकस्य च कोरके' [ इति मे० १५६।१५३] ॥ (१०) ॥*॥ ईषद् रम्भा। 'ईषदर्थे' ( ६।३।१०५ ) इति को वा ॥ (११) ॥*॥ प्रीणाति। प्रीञ् तर्पणे' (क्र्या० उ० से०)। क्वुन् (उ० २।३२) 'प्रियक पीतसारके'। नीपे चित्रमृगे चालौ प्रियङ्गौ कुसुमेऽपि च' [ इति मे० १०।११८-१९ ] ॥ ( १२ ) ॥*॥ द्वादश 'प्रियङ्गुवृक्षस्य'।

मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥

स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः।

शोणकश्चारलौ

मण्डूकपर्ण, पत्रोर्ण, नट, कट्वङ्ग, टुण्टुक, स्योनाक, शुकनास, ऋक्ष, दीर्घवृन्त, कुटन्नट, शोणक, अरलु, ( १२ पु ), 'सोनापाठा' के १२ नाम हैं।

मण्डूकेति ॥ मण्डूक इव पर्णमस्य ॥ (१) ॥*॥ पत्रै ऊर्णाऽस्य। 'पत्रोर्णं धौतकौशेये क्लीबं स्याच्छोणके पुमान्' [ इति मे० ४१।६२ ] ॥ (२) ॥*॥ नटति। 'नट नृतौ' ( भ्वा० प० से० )। पचाद्यच् ( ३।१।१३४ ) ॥ (३) ॥*॥ कटु-अङ्गान्यस्य ॥ (४) ॥*॥ 'टुण्टु' इति कायति। 'कै शब्दे' ( भ्वा० प० अ० )। 'आतोऽनुप–' (३।२।३) इति कः। 'टुण्टुकः शोणकाल्पयोः' [ इति मे० ८।९७ ]॥ (५) ॥*॥ सीव्यति। 'षिवु तन्तुसन्ताने' (दि० प० से०)। बाहुलकात्। अन्तरङ्गत्वात् ऊठ् ( ६।४।१९ )। 'स्योनः[2] किरणसूर्ययोः' [ इति विश्व ८६।१० ] तेनाकति, अक्यते, वा। 'अक कुटिलायां गतौ'(भ्वा० प० से०)। अच् (३।१।१३४) घञ् (३।३।१९) वा ॥*॥ श्यायते। श्यैङ् गतौ' (भ्वा० प० अ०)। पिनाकादौ (उ० ४।१५) निपातितः। 'श्योनाकः[3] तालव्यादिरपि ॥ (६) ॥*॥ शुकनासा इव पुष्पमस्यास्ति। अर्शआद्यच् (५।२।१२७) ॥ (७) ॥*॥ ऋषति। 'ऋषी गतौ' ( तु० प० से० )। 'स्नुव्रश्चिकृत्यृषिभ्यः कित्' ( उ० ३।६६ ) इति सः। 'ऋक्षः [4]पर्वतराजे स्याद्भल्लूके शोणके पुमान्' [इति मे० १६६।६] ॥ (८) ॥*॥ दीर्घं वृन्तमस्य ॥ ( ९ ) ॥*॥ कुटन् वक्रीभवन् नटति[5]। 'नट स्पन्दने' पचाद्यच् ( ३।१।१३४) ॥ (१०) ॥*॥ शोणति। शोणृ वर्णे' ( भ्वा० प० स० )। पचा-

१ 'वागुजी' इति पा०।

२ 'लता पियङ्गुशाखयोः। पृक्का' इति पा०।

३ 'फल्या स्त्री फलिनि त्रिषु' इति पा०।

१. पीतशालके इति पा०।

२ 'स्यून' इति पा०।

३ यथा–श्योनाको दीपनः पाके—इति भा० म०' इति वाच० ( पृ० ५१४८ )।

४ 'पर्वतभेदे' इति पा०।

५ 'नटति' इति विग्रहानुरोधात् धातुपाठे 'नट अवस्यन्दने' इति पाठाच्चात्र 'णट नृत्तौ' ( भ्वा० प० से० ) इति पाठो युक्तः।

चच् ( ३।१।१३४ ) । [ 'शोण- कृशानौ श्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये' इति मे० ४७। ३१-३२ ] । स्वार्थे कन् ( ५।३।७५ ) ॥*॥ स्वामी तु—शवति । शोनक.—इत्याह ॥ ( ११ ) ॥ * ॥ इयर्ति । 'अर्तेररु.' ( उ० ४।७९ ) । कपिलिकादि. ( वा० ८।२। १८ ) ॥ ( १२ ) ॥*॥ द्वादश 'शोणकस्य' ।

तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥

अमृता च वयस्था च

तिष्यफला, आमलकी, ( त्रि ), अमृता, वयस्था ( स्त्री ), 'आँवला' के ४ नाम हैं।

तिष्येति ॥ 'तिष्यमामलके लक्ष्मीर्नित्य हरितगोमये । नित्यं शते च पद्मे च नित्यं शुक्ले च वासरि' इति श्रवणात् तिष्यं मङ्गल्यं फलमस्याः । अजादित्वात् (४।१।४) टाप् । तिष्ये कलियुगे फलमस्या. सेवया, इति वा ॥ (१) ॥*॥ आमलते । 'मल धारणे' (भ्वा० आ० से०) । वुन् (उ० २।३२) । 'जाते -' ( ४।१।५३ ) इति ङीप् । गौरादित्व-कल्पनं तु चिन्त्यम् ॥ ( २ ) ॥ * ॥ न म्रियन्तेऽनया । 'तनिमृङ्भ्यां किच्च' ( उ० ३।८८ ) इति तन् । 'अमृता मागधीपथ्यागुडूच्यामलकीषु च' [ इति मे० ५९।७७-–७८] ॥ ( ३ ) ॥*॥ वयो यौवनं तिष्ठत्यनया । 'घजर्थे कः' (वा० ३।३।५८) । 'वयस्था तु स्त्रियां ब्राह्मीगुडूच्या-मलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु' [इति मे० ७३।२२–२३] ॥*॥ कायस्थाऽपि । 'कायस्था । तु हरीतक्यामलक्योश्च प्रकीर्तिता' इति रभस ॥ ( ४ ) ॥*॥ चत्वारि 'आमलक्या.' ॥

त्रिलिङ्गस्तु बिभीतकः ।

नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥

विभीतकः ( त्रि ), अक्षः, तुषः, कर्षफलः, भूतावासः, कलिद्रुमः ( ५ पु ), 'बहेडा' के ६ नाम हैं।

भीति ॥ विगतं भीत रोगभयमस्मात् । 'जाते.–' (४।-१।५३) इति ङीप् । गौरादित्वकल्पनं त्वयुक्तम् । विशिष्ट भीतमस्माद्वा, भूतकल्योराश्रयत्वात् ॥ (१) ॥*॥ अक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'अक्षो[1] ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षे रावणौ सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीब तुत्थे सौवर्चले-न्द्रिये' [इति मे० १६५।२–३]॥(२)॥*॥ तुष्यति । 'तुष तुष्टौ' ( दि० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः ।—'घञर्थे क ' (वा० (३।३।५८)—इत्युक्तिश्चिन्त्या । परिगणनात् 'धान्यत्वचि तुषः पुसि विभीतकतरावपि' इति मूर्धन्यान्ते रुद्र. ॥ ( ३ ) ॥*॥ कर्ष. फलमस्य ॥ (४ ) ॥*॥ भूतानामावासः ॥ (५) ॥ * ॥ कलेर्द्रुम. ॥ (६) ॥*॥ षट् 'विभीतकस्य' 'बहेडा' इति ख्यातस्य ।

अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ।

हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥

अभया, अव्यथा, पथ्या, कायस्था, पूतना, अमृता, हरीतकी, हैमवती, चेतकी, श्रेयसी, शिवा ( ११ स्त्री ), 'हर्रे' के ११ नाम हैं।

अभेति ॥ न भयमस्याः । 'अभया स्त्री[1] हरीतक्यामुशीरे च नपुंसकम् । निर्भये वाच्यलिङ्गं स्यात् इति मेदिनी [११८।६९–७०] (१) ॥*॥ न व्यथा यस्याः । 'अव्यथो निर्व्यथे सर्पे चारटीपथ्ययो स्त्रियाम्' इति मेदिनी [ ७३। १९ ] (२) ॥*॥ पथोऽनपेता । 'धर्मपथ्यर्थन्यायादनपेते' (४।४।९२) इति यत् । 'पथ्या स्त्री हरीतक्यां हिते त्रिषु' इति मेदिनी' [ ११५।३५ ] ॥ (३) कायस्तिष्ठत्यनया । 'घञर्थे क ' (वा० ३।३।५८) । 'कायस्था तु हरीतक्यामलक्योश्च प्रकीर्तिता' इति रभस । 'कायस्थ परमात्मनि । तज्जातिविशेषे ना हरीतक्यां तु योषिति' इति मेदिनी [७३।१७-१८] ॥ (४) ॥*॥ पूतं करोति 'तत्करोति–' (वा० ३।१।२६) इति णिच् 'बहुलमन्यत्रापि'(उ० २।७८) इति युच् । 'पूतना तु हरीतक्यां दानवीरोगभेदयो ' इति मेदिनी [८९।९३] ॥ (५) ॥*॥ अमृता व्याख्याता) ॥ (६) ॥*॥ हरिर्वर्ण इतो यस्याम् । 'संज्ञायां कन्' (५।३।-७५) । गौरादि ( ४।१।४१ ) ॥ (७) ॥*॥ हिमवति जाता । 'तत्र जात ' ( ३।३।२५ ) इत्यण् । 'हैमवत्यभया-स्वर्णक्षीर्यो श्वेतवचोभयो.' इति विश्व-मेदिन्यौ [७४।२१९, ७१।२३०] ॥ ( ८ ) ॥*॥ चेतयति । 'चिति संज्ञाने' (भ्वा० आ० से०) । ण्वुल् (३।१।१३३) गौरादिः (४।१।-४१) ॥ ( ९ ) ॥*॥ अतिप्रशस्ता । ईयसुन् (५।३।५७) 'प्रशस्यस्य श्र.' (५।३।६०) । 'उगितश्च' (४।१।६) इति ङीप् । 'श्रेयसी करिपिप्पल्यामभयापाठयोरपि' इति मेदिनी [१७३।४३] ॥ (१०) ॥*॥ शिवं करोति । 'तत्करोति–' ( वा० ३।१।२६ ) इति णिच् । पचाद्यच् ( ३।१।१३४ ) 'शिवो मोक्षे महादेवे कीलकग्रहयोगयो. । वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् । [2]सुखे क्षेमे जले क्लीब शिवा झाटामलोपधौ । अभयामलकीगौरीफेरसक्तुफलासु च' इति मेदिनी [ १५९।२५-२७ ] ॥ ( ११ ) ॥ * ॥ एकादश 'हरीतक्या.' ।

१. अक्षो ज्ञातार्थशकट······ । रुद्राक्षेन्द्राक्षयो. सर्पे–' इति पा० ।

१. 'अभय तु···मुशीरे तु···लिङ्गं स्यात्' इति पा० ।
२. '–सुखक्षेमजले···सक्तुफलास्वपि' इति पा० ।

**पीतद्रुः सरलः पूतिकाष्ठं च**

पीतद्रुः, सरलः ( २ पु ), पूतिकाष्ठम् ( न ), 'सरलनामक काष्ठ ( वृक्ष )-विशेष' के ३ नाम हैं।

पीति ॥ पीतश्चासौ द्रुश्च ।—पीतये चक्षुपाय्यम् । 'पा पाने' ( भ्वा० प० से० ) । 'प विच्च' इति त. । 'घुमास्था–' (६।४।६६) इतीत्वम्–इति मुकुट । तच्चिन्त्यम् । उक्तसूत्रादर्शनात् । क्तप्रत्ययेन गतार्थत्वाच्च ॥ (१) ॥*॥ सरति । 'सृ गतौ' (भ्वा० प० अ०) । बाहुलकादलच् । 'सरल. पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी [ १५३।१४३ ] ॥ ( २ ) ॥*॥ पूते. पावनस्य काष्ठम् । 'पूतिकाष्ठ च सरलदेवदारुमहीरुहो.' इति मेदिनी [४०।२०] ॥ (३) ॥*॥ त्रीणि 'सरला' इति ख्यातस्य ।

अथ द्रुमोत्पलः ।

**कर्णिकारः परिव्याधे**

द्रुमोत्पल', कर्णिकारः, परिव्याधः ( ३ पु ), 'कठचम्पा' के ३ नाम हैं।

अथेति ॥ द्रुमे उत्पल तदाकार पुष्पमस्य ।—'सप्तमी–' (२।१।४०) इति योगविभागात् समास —इति मुकुटोक्ति श्चिन्त्या । बहुव्रीहिविग्रहस्य प्रदर्शनात् ॥ (१) ॥*॥ कर्णिकामियर्ति । 'ऋ गतौ' (जु० प० अ०) । 'कर्मण्यण्' (३।२।१) । 'कर्णिकार पुमानारग्वधद्रौ च द्रुमोत्पले' इति मेदिनी [ १४१।२५४ ] (२) ॥*॥ परिविध्यति । 'व्यध ताडने' ( दि० प० अ० ) । 'श्याद्व्यधा–' (३।१।१४१) इति ण । 'परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले' इति मेदिनी [ ८२।४७ ] ॥ (३) ॥*॥ त्रीणि 'कर्णिकारस्य' 'कठचम्पा इति ख्यातस्य ।

**लकुचो लिकुचो डहुः ॥ ६० ॥**

लकुच', लिकुचः, डहुः ( ३ पु ), 'बड़हर' के ३ नाम हैं।

लेति ॥ लक्यते । 'लक आस्वादने' ( ) । बाहुलकादुच ॥ (१) ॥*॥ पृषोदरादित्वात् (६।३।१०९) इत्वेलिकुचोऽपि ॥ (२) ॥*॥ दहति, लोहति, वा । 'दह भस्मीकरणे' ( भ्वा० प० अ० ) । 'लुहिर् अर्दने' ( भ्वा० प० से० ) । मृगय्वादित्वात् ( उ० १।३७ ) निपातित ॥*॥ 'अडहु ' इत्यपि—इति स्वामी ॥ (३) ॥*॥ त्रीणि 'लिकुचस्य' 'बडहर' इति ख्यातस्य ।

**पनसः कण्टकिफलः**

पनस', कण्टकिफल. ( २ पु ), 'कटहल' के २ नाम हैं।

पनेति ॥ पनाय्यते स्तूयते 'वेतसवाहस'– इत्यसजन्तो निपातित । 'पनस कण्टकिफले कण्टके वानरान्तरे । स्त्रिया रोगप्रभेदे स्यात्' इति मेदिनी [१७२।२७–२८] । 'पणस' इत्यपि पाठ ॥ (१) ॥*॥ कण्टका: सन्त्यस्य । 'अत –' (५।२।११५) इतीनि । कण्टकिफलमस्य ॥ ( २ ) ॥*॥ द्वे 'पनसस्य' 'कटहर' इति ख्यातस्य ।

**निचुलो हिज्जलोऽम्बुजः ।**

निचुल', हिज्जलः, अम्बुजः (३ पु), किसी के मत से 'स्थलवेत' के, किसी के मत से 'जलवेत' के और किसी के मतसे 'समुद्रफल' के ३ नाम हैं।

नीति ॥ निचोलति । 'चुल समुच्छ्राये' (चु० प० से०) चुरादीना णिज्वा । 'इगुपध–' ( ३।१।१३५ ) इति क. । यत्तु—'निचोल्यते' इति विगृह्य 'घनर्थे कः' ( वा० ३।३।५८) इत्युक्त मुकुटेन । तन्न । परिगणनविरोधात् । अन्तरङ्गत्वेन-(णिजाश्रय)-गुणप्रसङ्गाच्च । 'निचुलस्तु निचोले स्याद्धिज्जलाख्यमहीरुहे' इति मेदिनी [१५२।१०२]॥(१) ॥*॥ हिनोति । 'हि गतौ वृद्धौ च' (स्वा० प० अ०) क्विप् ( ३।२।१७८ ) हित् जलमस्य ॥ * ॥ 'इज्जल ' इत्यपि पाठ । एति । 'इण् गतौ' (अ० प० अ०) । क्विप् (३।२।१७८) तुक् ( ६।१।७१ ) इत् जलमस्य । 'निचुलेज्जलहिज्जला ' इति रभस ॥ (२) ॥*॥ अम्बुनि जात । 'जनी प्रादुर्भावे'(दि० आ० से०) 'सप्तम्या जनेर्ड' (३।२।९७)॥ (३) ॥*॥ त्रीणि 'स्थलवेतसस्य', 'वानीरे कविभेदे स्यान्निचुल स्थलवेतसे' इति शब्दार्णवात् । 'समुद्रफलस्य' इत्यन्ये ।

**काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला ॥ ६१ ॥**

काकोदुम्बरिका, फल्गु, मलपू. जघनेफला ( ४ स्त्री ), 'कठूमर, कालागूलर' के ४ नाम हैं।

केति ॥ काकप्रिया उदुम्बरी । 'सज्ञाया कन्' ( ५।३।७५ ) ॥ ( १ ) ॥*॥ फलति । 'फल निष्पत्तौ' ( भ्वा० प० से०) । 'फलिपाटि–' ( उ० १।१८ ) इति साधु । 'फलवसारेऽभिधेयवत् । नदीभेदे मलप्वा स्त्री' इति मेदिनी [ २२।१०-११ ] ॥ ( २ ) ॥*॥ 'मल पापे च किट्टे च वर्चस्के कृपणे मल ' इति धरणि । मलात् पापात् पुनाति । 'पूञ् पवने' ( क्र्या० प० से० ) । क्विप् ( ३।२।१७८ ) मल यवते । 'यु जुगुप्सायाम्' ( चु० आ० से० ) । क्विप् ( ३।२।१७८ ) बाहुलकाद्दीर्घ । यद्वा—मलते । 'मल धारणे' ( भ्वा० आ० से० ) बाहुलकादयू । 'मलयू ' इति वा पाठ ॥ ( ३ ) ॥*॥ जघने फल यस्या । 'अमूर्धम–'

१. सूत्रमिद नोपलभ्यते । अतश्चात्र 'अत्यर्तिचमित- मिरमिनमिरमिलभिनभितपिपतिपनि–' ( उ० ३।११७ ) इति सूत्रेणासच् प्रत्ययो बोध्य. ।

( ६।३।१२ ) इति सप्तम्या अलुक् ॥ (४) ॥*॥ चत्वारि 'मलत्रा:' 'कदम्बरी' इति ख्यातस्य ।

**अरिष्टः सर्वतोभद्रहिङ्गुनिर्याससालकाः ।**
**पिचुमर्दश्च निम्बे**

अरिष्टः, सर्वतोभद्रः, हिङ्गुनिर्यासः, मालकः, पिचुमर्दः, निम्बः ( ६ पु ), 'नीम' के ६ नाम हैं ।

अरीति ॥ न रिष्टमशुभमस्मात् । 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' इति मेदिनी [ ३६।३२-३३ ]॥ (१) ॥*॥ सर्वतो भद्रं यस्मात् । 'सर्वतोभद्र इत्युक्त काव्यचित्रे गृहान्तरे । निम्बे ना सर्वतोभद्रा गम्भारीनटयोषितो ' इति मेदिनी [ १४५।३०८ ] ॥ (२) ॥*॥ हिङ्ग्वाकारो हिङ्गुगन्धो वा निर्यासोऽस्य । 'हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च' इति मेदिनी [ १७३।६९ ] ॥ ( ३ ) ॥*॥ मलते । 'मल धारणे' ( भ्वा० आ० से० ) ण्वुल् ( ३।१।१३३ ) । परस्मैपदं वुन्प्रत्ययविधानं च चिन्त्यम् ॥ ( ४ ) ॥ * ॥ पिचु कुष्ठभेदं मर्दयति । 'मृद क्षोदे' ( क्र्या० प० से० ) णिच् ( ३।१।२६) 'कर्मण्यण्' ( ३।२।१ ) ॥*॥ पिचु मन्दयति, इति 'पिचुमन्द' इति स्वामी ॥ (५) ॥*॥ निम्बेति स्वास्थ्यम् । 'णिवि सेचने' ( भ्वा० प० से० ) पचाद्यच् ( ३।१।१३४ ) बवयोरेकत्वम् ॥ (६) ॥*॥ षट् 'नीम्ब' इति ख्यातस्य ।

**अथ पिच्छिलाऽगुरुशिंशपा ॥ ६२ ॥**

पिच्छिला (स्त्री), अगुरु ( न ), शिंशपा (स्त्री), 'शीशम' ( सिसँव ) के ३ नाम हैं ।

अथेति ॥ पिच्छाऽस्त्यस्या । पिच्छादित्वात् ( ५।२।१००) इलच् । 'पिच्छिल' विजिलेऽप्यवत् । स्त्री पोतिकाशिंशपयोः शाल्मलीसिन्धुभेदयो.' [इति मे० १५३।११५]॥ (१)॥*॥ न गुरुरस्मात् । 'अगुरु क्लीबे शिंशपायां जोङ्गके, लघुनि त्रिषु' इति रुद्र ॥ (२) ॥*॥ शीघ्र शीर्यं वा पाति । 'आत.–' (३।२।३) इति क १ पृषोदरादि ( ६।३।१०९) यद्वा,–'शिम्' इत्यव्ययवर्तं शब्द शब्देन वा शपति । 'शप आक्रोशे' (भ्वा० उ० अ०) पचाद्यच् (३।१।१३४)। शिम्बाभि शपति इति वा । 'देविकाशिंशपा– (७।३।१)। इति निर्देशाद्वाद्यक्लोप । द्वितालव्या शिंशपा । 'श्वभ्रस्तया श्वगुरुशाश्वतशिंशपाश्च' इति ऊष्मभेदात् ॥*॥ अगुरुसारा शिंशपा 'अगरुशिंशपा' इत्येक नाम–इति स्वामी । तन्न । उक्तरुद्रविरोधात् ॥ ( ३ ) ॥ * ॥ त्रीणि 'सिसँव' इति ख्यातस्य ।

**कपिला भस्मगर्भा सा**

कपिला, भस्मगर्भा ( २ स्त्री ), 'कपिलवर्णवाले शीशम' के २ नाम हैं ।

केति ॥ सा कपिलवर्णपुष्पा सती भस्मगर्भोच्यते। भस्म गर्भे यस्या शुक्लसारत्वात् ॥ ( १ ) ॥*॥ एक 'कपिलवर्णाया ' ।

**शिरीषस्तु कपीतनः ।**
**भण्डिलोऽपि**

शिरीषः, कपीतनः, भण्डिलः (३ पु) 'सिरस' के ३ नाम हैं ।

शीति ॥ शृणाति शीर्यते वा । 'शॄ हिंसायाम्'(क्र्या० प० से०) । 'शॄपृभ्यां कित्' (उ० ४।२७) इतीषन् ॥(१) ॥*॥ तनोति । 'तनु विस्तारे' (त० उ० से०) । अच् (३।१।१३४) । यास्तन ईतन । कपीना कपेर्वर्णस्य वा ईतन ॥ (२) ॥*॥ भण्डति । 'भडि कल्याणे' (चु० प० से०)। 'सलिकल्यनि–' ( उ० १।५४ ) इतीलच् ।—बाहुलकात्–इति मुकुटस्तु चिन्त्य. ॥*॥ रलयोरेकत्वात् भण्डिरोऽपि । 'भण्डिरो भण्डिलो ना' इति वाचस्पति. ॥ ( ३ ) ॥*॥ त्रीणि 'शिरीषस्य' 'सिरीस' इति ख्यातस्य ।

**अथ चाम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥**

चाम्पेय चम्पकः, हेमपुष्पकः (३पु) 'चम्पा' के ३नाम हैं ।

अथेति ॥ चम्पाया अपत्यम् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) । 'चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे' इति मेदिनी [ ११८।८३ ] ॥ (१) ॥*॥ चम्पयति चम्प्यते वा । 'चपि गत्याम्' (चु० प० से०), क्वुन् (उ० २।३२) ॥ (२) ॥*॥ हेमवर्णं पुष्पमस्य । [ 'हेमपुष्पं तु चम्पके । अशोकद्रौ जपापुष्पे' इति हैम ४।२१८-१९ ] । कन् ( ५।३।७५ ) ॥ (३) ॥*॥ त्रीणि 'चम्पकस्य' ।

**एतस्य कलिका गन्धफली स्यात्**

गन्धफली(स्त्री), 'चम्पाकी कली' का १ नाम है ॥

एतेति ॥ गन्ध फल साध्यमस्या । 'पाककर्ण–' (४।१।५४ ) इति ङीष् । 'प्रियंगौ स्त्री गन्धफली चम्पकस्य च कोरके' इति रुद्र ॥ ( १ ) ॥ * ॥ एक 'चम्पककलिकाया ।

**अथ केसरे ।**
**वकुलः**

केसर', वकुलः, ( २ पु ), 'मौलसरी' के २ नाम हैं ॥

अथेति ॥ केसरा सन्त्यस्य । अर्शआद्यच् ( ५।२।१२७ ) । के जले सरति । 'सृ गतौ' (भ्वा० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) वा । 'केसरं हिङ्गुनि क्लीबं किञ्जल्के न स्त्रियां पुमान् । सिंहच्छटायां पुंनागे बकुले नाग-

१. 'पिच्छिल.' इति पा० ।

केसरे' इति मेदिनी' [ १३३।१४२ ] ॥ (१) ॥*॥ वकुते 'वकि गत्यर्थ' ( भ्वा० आ० से० )। बाहुलकादुलच । 'आगमशासनमनित्यम्' इति न नुम् ॥ (२) ॥*॥ द्वे 'वकुलस्य' 'मौलेसरी' इति ख्यातस्य ।

**वंजुलोऽशोके**

वंजुल', अशोक ( २ पु ), 'अशोक' के २ नाम हैं।

वञ्चिर्वानि ॥ वजति 'वज गतौ' (भ्वा० प० से० )। 'बाहुलकादुलच' नुन् ॥ ( १ ) ॥ * ॥ न शोकोऽस्मात्। 'अशोकस्त्रिषु नि शोके पुंसि कङ्केलिपादप। स्त्रियां तु कटु रोहिण्यां पारदे स्यान्नपुंसकम्' इति मेदिनी [ ४।४० ] ॥ (२) ॥*॥ द्वे 'अशोकस्य'।

**समौ करकदाडिमौ ॥ ६४ ॥**

करक, दाडिम ( २ पु ), 'अनार' के २ नाम हैं।

समाविति ॥ करोति दोषाभावम् 'वृञादिभ्यो वुन्' ( उ० ५।३५ )। 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले, न स्त्री करङ्के च कमण्डलौ' इति मेदिनी [५।५४-५५] ॥ (१) ॥*॥ दलन दाल । 'दल विदारणे' (भ्वा० प० से०)। घञ् ( ३।३।१८ ) दालेन निर्वृत्त । भावप्रत्ययान्तादिमप्' ( वा० ४।४।२० ) डलयोरेकत्वम् । 'दाडिमस्तु त्रिलिङ्ग स्यादेलायां करके त्रिषु' इति मेदिनी [ १११।४४ ] ॥*॥ दाडिम्बोऽपि । 'दाडिम्बसारपिण्डी रस्वाद्वम्लश्च शुकवल्लभा' इति रभसात् ॥ ( २ ) ॥*॥ द्वे 'दाडिमस्य'।

**चाम्पेय केसरो नागकेसरः काञ्चनाह्वयः ।**

चाम्पेय, केसर, नागकेसर, काञ्चनाह्वय ( ४ पु ), 'नागचम्पा' पुष्पवृक्ष के ४ नाम हैं।

*चेति ॥ चम्पाया अपत्यम् । 'चाम्पेयश्चम्पके स्वर्णे* किञ्जल्के नागकेसरे' इति मेदिनी [ ११८।८३ ] ॥ (१) ॥*॥ केसरा सन्त्यस्य । अर्शआद्यच् ( ५।२।१२७ ) ॥ ( २ ) ॥ * ॥ नागाख्य केसर । 'स्वर्णभस्मपर्यायो नागकेसर षट्पदप्रिय' इति रभस ॥ ( ३ ) ॥*॥ काञ्चन स्याह्वयम् आह्वा यस्य ॥ (४) ॥*॥ चत्वारि 'चाम्पेयस्य'।

**जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥**

जया, जयन्ती, तर्कारी, नादेयी, वैजयन्तिका ( ५ स्त्री ), 'जाही, अरणी या गनियार' के ५ नाम हैं।

जयेति ॥ जयति । 'जि जये' ( भ्वा० प० अ० )। पचाद्यच् (३।१।१३४) 'जया जयन्तीतिथिभित्पथ्योमातरम-

---

१ मेदिन्यां तु 'केशर' 'नागकेशरे' इति तालव्यमध्य पाठ । हैमे तु दन्त्यमध्य ।

ङीषु च। अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे' इति मेदिनी [ ११४।२४-२५ ] ॥ ( २ ) ॥ * ॥ 'तृभूवहि–' ( उ० ३।१२८ ) इति झच । षित्' इत्यनुवृत्तेर्ङीष् (४।१।४१)। 'जयन्ती वृक्षभिद्यौर्योरिन्द्रपुत्रीपताकयो । पुमान्द्रौ हरे भीमे' इति मेदिनी [६२।११०] ॥ (२) ॥*॥ तर्कं मृच्छति । 'ऋ गतौ' ( भ्वा० प० अ० )। 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ नद्यां भवा । 'नद्यादिभ्यो ढक्' (४।२।९७) 'टिड्ढा–' । (४।१।१५) इति ङीप् । ['नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां जवायां च वाङ्गुष्ठे च समीर्यते ॥' इति विश्व १२३।१०५ ] ॥ (४) ॥*॥ विजयन्तस्येयम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । स्वार्थे कन् ( ५।३।७५ )। यद्वा—वैजयन्ती पताकेव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन ॥ (५) ॥*॥ पञ्च 'वैजयन्तिकाया' 'अरणी' इति ख्याताया । 'जाही' इति ख्याताश इत्यन्ये ।

**श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका । जया**

श्रीपर्णम् (न), अग्निमन्थ , (पु), कणिका, गणिकारिका (२ स्त्री), जय (पु), 'जयपर्ण' के और किसी के मत से अरणी के ५ नाम हैं। किसी के मत से उपर्युक्त 'जया से' 'जय' पर्यन्त १० नाम 'अरणी' के ही हैं।

श्रीति ॥ श्री पर्णेषु यस्य । 'श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शाल्मली हठे' इति हैम [ ३।२४१ ] ॥ ( १ ) ॥ * ॥ अग्नि मथ्नाति । 'मन्थ विलोडन' ( क्र्या० प० से० )। कर्मण्यण्' (३।२।१) ॥ ( २ ) ॥*॥ कणति । 'कण शब्दे' (भ्वा० प० से०)। क्वुन् ( उ० २।३२ )। कणा सन्त्यस्या वा । 'अत –' ( ५।२।११५ ) इति ठन । 'कणिका सूक्ष्मवस्तुनि । अग्निमन्थे' इति हैम [ ३।११ ] ॥ (३) ॥*॥ गणनम् । 'गण सख्याने' ( चु० उ०से० )। इञ् वृप्यादिभ्य' ( वा० ३।३।१०८ )। गणिं करोति । 'कर्मण्यण' ( ३।२।१ ) ङीप् ( ४।१।१५ ) स्वार्थे कन् ( ५।३।७५ )। यद्वा—गणयति । ऋच्छति । ण्वुल (३।१।१३३) गणिका चासावारिका च ॥ (४) ॥*॥ जयति । पचाद्यच ( ३।१।१३४ )। 'जया जयन्तीतीथिभित्पथ्योमातस्सखीषु च। अग्निम ये ना जयन्ते विजये च युधिष्ठिरे' इति मेदिनी [ ११४।२४-२५ ] ॥ ( ५ ) ॥ ५ ॥ पञ्च *जयपर्णस्य' । 'अरणी' इति ख्याताया इत्येके । 'दशाप्यरणिपर्याया'* इति स्वामी ॥

***अथ कुटज शक्रो वत्सको गिरिमल्लिका ॥ ६६ ॥***

कुटज, शक्र, वत्सक ( ३ पु ), गिरिमल्लिका ( स्त्री ), 'कोरैया' के ४ नाम हैं।

अथेति ॥ कूटे शृङ्गे जायते स्म । 'सप्तम्यां जनेर्डः' (३।२।९७) । पृषोदरादिः (६।३।१०९) ॥*॥ प्रज्ञादौ ( ५।४।३८ ) कौटजश्च । 'कौटजः कुटज कोटौ' इति चन्द्रः । [ 'कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि' इति मे० ३१।२३ ] ॥ ( १ ) ॥*॥ शक्नोति । 'शक्लृ शक्तौ' ( स्वा० प० अ० ) । 'स्फायितञ्चि' ( उ० २।१३ ) इति रक् । 'शक्रः पुमान् देवराजे कुटजार्जुनभूरुहो' [ इति मे० १२९।८७ ] ॥ ( २ ) ॥ * ॥ वदति । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । 'वृनृवदिवचिहनिकमिकषिभ्यः स.' ( उ० ३।६२ ) । तत. 'संज्ञायां कन्' ( ५।३।७५ )॥ (३) ॥ * ॥ गिरिमल्लीव । इवार्थे कन् (५।३।९६) ॥ (४) ॥*॥ चत्वारि 'कुटजस्य' 'कुरैया' इति ख्यातस्य ॥

**एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ।**

**कलिङ्गम्, इन्द्रयवम्' भद्रयवम्, ( ३ न ), 'इन्द्रयव के ३ नाम हैं ।**

एतेति ॥ कलिं गच्छति । अन्तर्भावितण्यर्थाद्गमे 'अन्य त्रापि–' ( वा० ३।२।४८ ) इति ड ।–'खच्च डिद्वा–' (३।२।३८)–इति मुकुट' ।–कलिं गायति—इति स्वामी ॥ (१) ॥*॥ यवाकारबीजत्वाद्यवम् । इन्द्रसंज्ञस्य वृक्षस्य यवम् ॥ ( २ ) ॥ * ॥ भद्र च तद्यवं च ॥ (३) ॥*॥ 'कलिङ्गेन्द्रयव' पुमान्' इत्यमरमालादर्शनादिन्द्रयवः पुमानपि' । तत्रैव स्त्रीकाण्डपाठात् कलिङ्गा च ॥ * ॥ त्रीणि 'इन्द्रयवस्य' कुटजबीजस्य ।

**कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ६७ ॥**

**कृष्णपाकफलः, अविग्नः, सुषेणः, करमर्दकः ( ४ पु ), 'करौंदा, करवन' के ४ नाम हैं ।**

कृष्णेति ॥ कृष्ण पाकोऽस्य । कृष्णपाकं फलमस्य ॥ (१) ॥*॥ आ विजते स्म । 'ओविजी भयचलनयो' (तु० प० से०) आङ्पूर्व. । 'गत्यर्थाकर्मक–' (३।४।७२) इति क्त । 'श्वीदितः–' (७।२।१४) इतीण्निषेध । 'ओदितश्च' (८।२।४५) इति नत्वम् ॥ * ॥ केचित्तु 'वञ्पूर्व' इत्याहु' ॥ (२) ॥*॥ शोभना सेना यस्य । 'एति संज्ञायामगात्' (८।३।९९) इति षत्वम् । 'रषाभ्याम्–' (८।४।१) इति णत्वम् । मुकुटस्तु—सुष्ठु सिनोति । 'षिञ् बन्धने ( स्वा० उ० अ० ) । 'कृतृस्र्विपिमिद्भ्यो न'–इत्याह । उज्ज्वलदत्तादौ तृणादिसूत्रस्थ 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' ( ३।१० ) इति पाठो दृश्यते । [ 'सुषेण' करमर्दे स्याद्विष्णुसुग्रीववैद्ययोः' इति मेदिनी ५१।८४ ] ॥ ( ३ ) ॥ * ॥ करं मृद्नाति । 'मृद क्षोदे' (क्र्या० प० से०) । 'कर्मण्यण' (३।२।१) । स्वार्थे कन् (५।३।७५) । 'मकरन्दः करमर्द क्षिरीषो मूर्धपुष्पक' इति शुभाङ्गः ।—करो मर्दकोऽस्य—इति मुकुटः । तन्न । उक्तवोधविरोधात् ॥ (४) ॥*॥ चत्वारि 'करमर्दकस्य' 'करौंदा' इति ख्यातस्य ।

**कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि**

**कालस्कन्ध', तमालः, तापिच्छः, ( ३ पु ), 'तमाल' के ३ नाम हैं ।**

कालेति ॥ काल स्कन्धोऽस्य । 'कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे' इति मेदिनी [८२।४५] ॥ (१) ॥ * ॥ ताम्यति । 'तमु ग्लानौ' ( दि० प० से० ) 'तमिविधि–'(उ० १।११८) इति कालन् । 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी [१५२।९७] ॥ तापिनं छादयति । 'छद अपवारणे' (चु० उ० से०) । कर्मण्यण्' (३।२।१) । पृषोदरादि (६।३।१०९) यत्तु—'तत्पुरुषे कृति–' (६।३।१४) इत्यमोऽलुकि 'तापिंछ–' इति मुकुट । तन्न । अलौकिकविग्रहेऽम प्रवेशाभावात्' ॥ (२) त्रीणि 'तमालस्य'

**अथ सिन्दुक' ।**

**सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥**

**सिन्दुकः, सिन्दुवारः, इन्द्रसुरसः, ( ३ पु ), निर्गुण्डी, इन्द्राणिका (२ स्त्री), 'सिंधुआर' के ५ नाम हैं ।**

अथेति ॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० ) 'स्यन्दे संप्रसारणं धश्च' ( उ० १।११ ) इत्यु' । बाहुलकादत्र धो न ॥ * ॥ मुकुटस्तु धमिच्छति । स्वार्थे 'संज्ञायां कन् ( ५।३।७५ ) तदुक्तम् [ स्वामिव्याख्याने ] 'सिन्दुवार श्वेतपुष्प सिन्दुक. सिन्धुवारित' । नीलपुष्पः सीतसहो निर्गुण्डी नीलसिन्धुकः' इति ॥ (१) ॥*॥ सिन्दु वृणोति, वारयति वा । 'वृञ् वरणे' (स्वा० उ० से०) । 'वृञ् आवरणे' (चु० उ० से०) वा । 'कर्मण्यण्' (३।२।१) ( २ ) ॥ * ॥ शोभनो रसोऽस्य । इन्द्रस्य सुरस. ॥ * ॥ 'इन्द्रसुरिसः' इति स्वामी' ॥ (३) ॥*॥ निर्गुडति । 'गुड रक्षायाम्' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क । पृषोदरादि (६।३।१०९) । गुडाद्विष्टनान्निर्गता,

१. स्वामी तु द्वयोर्भेदमाह, यथा—"इन्द्रयवं कुटजफलं भद्रयवं तु कुटजबीजम् । यदाह–'फलानि तस्येन्द्रयवा बीजं भद्रयवास्तथा ।" इति । एतत्प्रमापकवचनेन 'भद्रयवेन्द्रयवशब्दयोः' पुस्त्वमपि सिद्धम् ॥

१. काव्यकल्पलतायां 'रविमिव तापिच्छविराजितं वनम्' इति श्लेषान्निरनुस्वारस्यैव समर्थनाच्च ॥

२. "इन्द्रस्य सुरसो यस्मिन्, दिव्य इत्यर्थ.' इत्येवं स्वाम्युक्तया इकारमध्यत्वोक्तिरत्र चिन्त्या ॥

इति स्वामी । गौरादि ( ४।१।४१ ) । मुकुटस्तु—'गुडि' अपठितोऽपि भ्वादेराकृतिगणत्वाद् द्रष्टव्य'–इत्याह । निर्गुण्डी नीलशेफाल्या सिन्दुवारद्रुमेऽपि च' इति मेदिनी [ ४२।३० ] ॥ (४) ॥*॥ इन्द्रस्य जन्या 'इन्द्रवरुण–' (४।१।४९ ) इति ङीपानुकौ, जन्यजनकभावलक्षणोऽपि च पुयो गस्तत्र गृह्यते ।—इन्द्रमानयति । अनेर्ण्यन्तात् 'कर्मण्यण्' (३।२।१) । ङीप ४।१।१५) । कन (५।३।७५) ह्रस्वत्वम् (७।४।१३) च—इति मुकुट । 'इन्द्राणी करणे स्त्रीणा पौलोमीसिन्दुवारयो' इति मेदिनी [४७।३५] ॥ (५) ॥*॥ पञ्च 'सिन्दुवारस्य' 'स्योडी' इति ख्यातस्य ।

**वेणी खरा गरी देवताडो जीमूत इत्यपि ।**

**वेणी, खरा, गरी ( ३ स्त्री, ) देवताड, जीमूत (२ पु), 'देवताल' अर्थात् 'बन्दाली' एक तरहके गुजराती वृक्ष के ५ नाम हैं ।**

वेणीति ॥ वेणीव । 'देवताडेऽपि वेणी स्यात्प्रवेण्यामपि योषिति' इति रभस ॥ ( १ ) ॥ * ॥ तीक्ष्णत्वात् खरा । 'देवताडे खरा तीक्ष्णे त्रिषु स्याद् गर्दभे पुमान्' इति रभस ॥ ( २ ) ॥*॥ गृणाति । 'गॄ शब्दे' (क्र्या० प० से० ) । पचाद्यच । ( गौरादि ) ( ४।१।४१ ) । 'गरी खरायां करणे क्लीब नागविषे विषे' [ इति मे० १२४।२२] ॥*॥ गरं विषमागिरति । भूयकविषघ्नत्वात् । 'गरागरी' इत्येकमाहु ॥*॥—गराभागिरति । 'गरागरी' इति तु स्वामी ॥ तदुक्तम् [ स्वामिव्याख्याने ]—'जीमूतको देवताडो वृन्तकोशो गरागरी' इति ॥ (३) ॥*॥ 'देवो मेघे सुरे राज्ञि स्यात्पुंसकमिन्द्रिये इति मेदिनी [ १५८। १२] ॥ देवमिन्द्रिय ताडयति । 'तड आघाते' (चु० प० से०) । 'कर्मण्यण्' (३।२।१) । 'देवताड मैहिकेये जीमूते च हुताशने' इति मेदिनी [ ४३।४० ] ॥ ( ४ ) ॥*॥ जीमूत इव 'जीमूतोऽद्रौ भूतिकरे[१] देवताडे पयोधरे' इति मेदिनी [६५।१११] ॥ (५) ॥*॥ पञ्च 'देवतालस्य' ।

**श्रीहस्तिनी तु भुरुण्डी**

**श्रीहस्तिनी, भुरुण्डी ( २ स्त्री ), 'एक तरह के शाकविशेष' के २ नाम हैं ।**

श्रीति ॥ श्रिया हस्त । श्रीहस्तो विद्यतेऽस्या । 'अत –' (५।२।११५) इतीनि । हस्त गृह्णाति, हस्तयति, अवश्य श्रिय हस्तयति । 'आवश्यका–' (३।३।१७०) इति णिनि , इति वा ॥ (१) ॥*॥ भुव रुण्डयति आच्छादयति 'रुटि लुटि स्तेयकरणे' (भ्वा० प० से०) इत्यत्र माधवी याया वृत्तौ 'रुडि, लुडि, इत्यपरे' इति पाठान्तरमुपन्यस्तम् । 'कर्मण्यण्' ( ३।२।१ ) ॥ (२) ॥*॥ हस्तिकर्णपत्रा शाकविशेष इति स्वामी । द्वे ( माषादिक्षेत्रभवाया वकुलपुष्पाभलोहितपुष्पाया 'हस्तिकर्णाभपत्रस्य' 'शिरीहथिनी' इति ख्याताया ) ।

**तृणशून्यं तु मल्लिका ॥ ६९ ॥**
**भूपदी शीतभीरुश्च**

**तृणशून्यम् (न), मल्लिका, भूपदी , शीतभीरु (३स्त्री) 'छोटी वेला' के ४ नाम हैं ।**

तृणेति ॥ 'इतो धत्तूराग्रतानि पुष्पाणि' इति स्वामी । तृणशून्ये स्थाने साधु । 'तत्र साधु '(४।४।९८) इति यत् । 'हलो यमाम्—' (८।४।६४) यलोप । 'तृणशून्य मल्लिकाया लयर स्यात्केतकीफले' इति 'विश्व मेदिन्यौ [ १२४। ११९, १२२।११९] ॥ * ॥—'तृणशूले गुल्मे साधु तृण शून्यम्'—इति तु स्वामी ॥ (१) ॥*॥ मल्लते गन्धम् । मल्यते वा । 'मल्ल धारणे' (भ्वा० आ० से०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । वा ङीप् (ग० ४।१।४५) । स्वार्थे कन् (५।३।७५) । 'मल्लिको हसभिद्यपि । मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयो ' इति मेदिनी [१२।१३८] ( २ ) ॥*॥ भुवि पदमस्या । गौरादि (४।१।४१) ॥ (३) ॥*॥ शीताद्भीरु ॥२॥ 'शतभीरु ' इति वा पाठ । शत वियोगिनो भीरवोऽस्या । 'मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदायन्ती[२] भूपदी तृणशून्यकम्' इति वाचस्पति ॥(४)॥*॥ चत्वारि 'मल्लिकाया ', 'वेल्लि' इति ख्याताया ।

**सैवास्फोता वनोद्भवा ।**

**आस्फोता (स्त्री), 'जङ्गली बेला' का १ नाम है ।**

सैवेति ॥ आस्फोटयति । 'स्फुटिर विकसने' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । पृषोदरादित्वात् ( ६।३।१०९ ) टस्य तो वा । 'आस्फोता विष्णुक्रान्ताया वनमल्ल्यर्कपर्णयो ' इति रभस । 'आस्फोतस्तु पुमानर्कपर्णे स्यात्कोविदारके । आस्फोता गिरिकर्ण्या च वनमल्ल्या च योषिति' इति मेदिनी [ ६०।९२-९३] ॥ (१) ॥*॥ एक 'वनमल्ल्या ' ।

**शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥७०॥**

**शेफालिका, सुवहा, निर्गुण्डी, नीलिका, (४ स्त्री), 'काली सेवारी' के ४ नाम हैं ।**

शेफेति ॥ शेरते शेफा अलयोऽस्याम् । वा ङीप् ( ) । स्वार्थे कन्–'(५।३।७५)॥(१)॥*॥ सुष्ठु वहत्यामोदम् ।

१ 'भृतिकरे' इति पा० ।

१ विदद्वे तु केतकयाश्च फले मृतम्' इति पा०

२ स्वामी तु 'मदयन्ती' शब्दमाह ।

'वह प्रापणे' (भ्वा० उ० अ०)। पचाद्यच् (३।१।१३४) 'सुवहा सल्लक्येलापर्णीगोधापदीषु वीणायाम्। रास्नाशेफालिकयो. स्त्री, सुखवाह्योऽन्यलिङ्ग. स्यात्' [इति मे० १७७।२५-२६] ॥ (२) ॥ * ॥ नीलवर्णा। 'नीलादोषधौ' 'प्राणिनि च' (वा० ४।१।४२) इति ङीप्। स्वार्थे कन् (५।३।७५)। 'नीलिका नीलिनीक्षुद्ररोगशेफालिकासु च' [इति मेदिनी १०।११२] ॥ (४) ॥ * ॥ चत्वारि 'कृष्णपुष्पाया निर्गुण्ड्या.' 'न्यवारी' इति ख्यातायाः।

## सितासौ श्वेतसुरसा भूतवेशी

श्वेतसुरसा, भूतवेशी (२स्त्री), 'सफेद फूलवाली नेवारी' के २ नाम हैं।

सितेति ॥ शोभनो रसोऽस्याः। श्वेता चासौ सुरसा च ॥ (१) ॥*॥ भूतानि विशति। 'विश प्रवेशने' (तु० प० अ०) 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ द्वे 'श्वेतनिर्गुण्ड्याः'।

अथ मागधी।

## गणिका यूथिकाम्बष्ठा

मागधी, गणिका, यूथिका, अम्बष्ठा (४ स्त्री), 'जूही' के ४ नाम हैं।

अथेति ॥ मगधे देशे भवा। 'तत्र भवः' (४।३।५३) इत्यण्। 'मागधो मगधोद्भूते शुक्लजीरकवन्दिनो'। वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली ॥ यूथी'भाषाविशेषश्च' हैमः [३।३७५-७६] ॥ (१) ॥*॥ चित्ताकर्षकत्वाद् गणिकेव। 'गणिका यूथीवेश्येभीतकरीषु ना तु दैवज्ञे' इति मेदिनी [७।८०] ॥ (२) ॥*॥ यूथमस्त्यस्याः। 'अत इनिठनौ' (५।२।११५) 'यूथिका[२]म्रातके पुष्पविशेषेऽपि च योषिति' इति मे० [१२।१४४] ॥ (३) ॥*॥ अम्बेव मातेव तिष्ठति। 'सुपि स्थः' (३।२।४) इति क.। 'अम्बाम्ब- (८।३।९७) इति षत्वम्। 'ङ्यापो.-' (६।३।६३) इति ह्रस्व।—अम्बे तिष्ठति—इति स्वामी। 'अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च'। 'अम्बष्ठा-[३]ऽम्ललोण्यां स्यात्पाठायूथिकयोरपि' इति विश्वमेदिन्यौ [४२।१३, ३९।११] ॥ (४) ॥*॥ चत्वारि 'यूथिकायाः' 'जूही' इति ख्यातायाः।

## सा पीता हेमपुष्पिका ॥७१॥

हेमपुष्पिका (स्त्री), 'पीले फूलवाली जूही का १ नाम है'।

सेति ॥ हेमवर्णं पुष्पमस्याः। 'पाककर्ण-' (४।१।६४) इति ङीष्। 'स्याद्धेमपुष्पिका यूथ्यां चम्पको हेमपुष्पक.' [इति मेदिनी १९।२३४] ॥ (१) ॥*॥ एकं 'तस्या एव पीतपुष्पायाः'।

## अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता।

अतिमुक्तः, पुण्ड्रकः (२ पु), वासन्ती, माधवी लता, (२स्त्री), वसन्त ऋतु में फूलने वाले कुन्द-विशेष, या माधवी के ४ नाम हैं।

अतीति ॥ अतिक्रान्तो मुक्ता शौक्ल्यात्। 'अत्यादयः' (वा० २।२।१८)। इति तत्पुरुषः। 'गोस्त्रियो.-' (१।२।४८) इति ह्रस्वः। यद्वा,-मुक्तान् विरक्तान्। 'अतिमुक्तस्तु ना तु संज्ञा वासन्त्यां तिनिशेऽपि च' [इति मे० ६७।१८३] (१) ॥ * ॥ पुण्डति पुण्ड्यते वा 'मुडि खण्डने' 'पुडि च' (भ्वा० प० से०)। 'स्फायि-' (उ० २।१३) इति रक्। स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ वसन्ते पुष्यति। 'कालात्साधुपुष्प्यत्-' इत्यण्। 'वासन्ती माधवीयूथ्योरुष्ट्रनावहिते त्रिषु' [इति मे० ६५।१५३] ॥ (३) ॥*॥ मधौ पुष्यति। 'माधवोऽब्जे मधौ राधे वसन्ते न स्त्रियां मिसौ। वासन्ती कुट्टनीमद्यमधुशर्करासु[१] स्त्रियाम्' इति मेदिनी [१६०।४६-४७]। रन्तिदेवोऽपि 'वैशाखे माधव. कृष्णे माधवी चातिमुक्तके' ॥ (४) ॥*॥ (५) ॥*॥ पञ्च 'कुन्दभेदस्य'।

## सुमना मालती जातिः

सुमनाः (=सुमनस्), मालती, जातिः (३ स्त्री), 'चमेली' के ३ नाम हैं।

स्विति ॥ सुष्ठु मन्यते। 'मन ज्ञाने'(दि० आ० अ०) असुन् (उ० ४।१८९)। यद्वा,-शोभनं मनोऽस्याम्। 'स्त्रियः सुमनसो भूम्नि पुष्पं, जातौ तु भेदत। विदुष्यपि यदा दृष्टस्तदा भेदेन शिष्यते' इति व्याडि. ॥*॥ 'सुमनायावत प-त्रेण' इति सुश्रुतदर्शनात् टाबन्ता[सुमना]अपि ॥ (१) ॥*॥ मा लक्ष्मी लतति। 'लत' सौत्रो वेष्टनार्थ.। मूलविभुजादित्वात् (वा० ३।२।५) क.। गौरादि. (४।१।४१)। मालं तनोति वा। 'अन्येभ्योऽपि-' (वा० ३।२।१००) इति ड.। 'मालती युवतौ काकमाच्या जातिविशल्ययो.। ज्योत्स्नायां निशि नद्यां च' [इति हेम. ३।३०४-५] ॥ (२) ॥*॥ जायते। 'जनी प्रादुर्भावे' (दि० आ० से०)। क्तिच् (३।३।१७४)। 'जनसन-' (६।४।४२) इत्यात्वम्। वा ङीष् (ग० ४।१।४१) यत्तु—जायते प्रीतिरनयेति बाहुलकाज्जनेः कर्तरि क्तिच्—इत्याहु। तन्न। 'अनया' इति करणविग्रहं प्रदर्श्य 'कर्तरि' इति कथनं व्याहतम्। 'बाहुलकात्'

१. 'यूथि' ह्रस्वोऽपि पा०।
२. 'यूथिका म्लानके' इति पा०।
३. 'चाम्ललोण्या' इत्युभयत्र पा०।

१. 'मधुशर्करावासन्तीकुट्टनीमदिरासु च' इति पा०।

इति च। 'क्तिच्क्तौ च–' ( ३।३।१७४ ) इति सूत्रस्य सत्त्वात्। जाति स्त्री गोत्रजन्मनो। अश्मन्तिवामलक्योश्च सामान्यच्छन्दसोरपि। जातीफले च मालत्याम्' [ इति मे० ५५।१९-२० ] ॥ (३) ॥•॥ त्रीणि 'जाते' 'चँबेली' इति ख्यातायाः।

सप्तला नवमालिका ॥ ७२ ॥

सप्तला, नवमालिका ( २ स्त्री ), 'वसन्ती नेवारी' के २ नाम हैं।

सप्तेति ॥ सप्त पर्णानि मनोबुद्धीन्द्रियाणि वा लाति। ला दाने ( अ० प० अ० )। 'आतोऽनुप–' ( ३।२।३ ) इति कः। अथ सप्तला।'नवमालाचर्मकषागुञ्जासु पाटली स्त्रियाम्' [ इति मे० १५५।१४३-४४ ] ॥ ( १ ) ॥•॥ नवा स्तुत्या मालाऽस्याः। कप् ( ५।४।१५४ ) ॥ (२) ॥•॥ द्वे नवमालिकायाः।

माध्यं कुन्दम्

माध्यम्, कुन्दम् (२ पु न) 'कुन्द' के २ नाम हैं।

मेति ॥ माघे साधु, तत्र साधु ( ४।४।९८ ) इति यत्।—माघ भवम्। दिगादित्वात् (४।३।५४) यत्–इति प्राञ्चः ॥ ( १ ) ॥•॥ कु भुवं दायति, द्यति वा। 'दैप् शोधने' ( भ्वा० प० अ० ) 'दो अवखण्डने' ( दि० प० अ० ) वा। आत–' ( ३।२।३ ) इति कः। पृषोदरादि ( ६।३।१०९ ) कुणति। कुण शब्दे ( तु० प० से० )। 'कन्दादयश्च' ( उ० ४।९८ ) इति दो वा। यत्तु—'तत्पुरुषे–' ( ६।३।१४ ) इति द्वितीयाया अलुक्–इति मुकुटः। तन्न। अलौकिकविग्रहे द्वितीयाया अप्रवृत्तात्। षष्ठ्या प्रवृत्ताच्च। 'माध्यः कुन्दः कुरुण्टक' इति पुस्काण्डे रत्नकोषात् पुंस्त्वमपि। कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेपु ना' [ इति मे० ७४।३ ] ॥ (२) ॥•॥ द्वे 'कुन्दस्य'।

रक्तकस्तु बन्धूको बन्धुजीवकः।

रक्तक, बन्धूक, बन्धुजीवक (३ पु), 'दुपहरिया नामक पुष्पवृक्ष' के ३ नाम हैं।

रक्तेति ॥ रक्तपुष्पत्वाद्रक्तः। स्वार्थे कन् (५।३।७५)। [ 'रक्तकोऽम्लानबन्धूकरक्तवस्त्रानुरागिषु' इति मे० १२।१४५ ] ॥ ( १ ) ॥•॥ बध्नाति चित्तम्। 'बन्ध बन्धने' (क्र्या० प० अ०)। 'उलूकादयश्च'(उ० ४।४१) इत्यूकः। 'बन्धूक बन्धुजीवे स्याद्बन्धूकं [२]पीतसारके' [इति म० ११।१२८ ] बन्धुरिव जीवं जलमस्य ॥ ( ३ ) ॥•॥ त्रीणि 'बन्धूकस्य' 'दोपहरिया' इति ख्यातस्य।

१. 'नवमाली' इति पा०।

२ 'पीतशालके' इति पा०।

सहा कुमारी तरणिः

सहा, कुमारी, तरणि (३ स्त्री), 'घीकुआर' के ३ नाम हैं।

सहेति ॥ आतपं सहते। 'षह मर्षणे' ( भ्वा० आ० से० )। अच् (३।१।१३४) टाप् (४।१।४)। 'सहो बले ना स्त्रियां स्यात्स्त्रियां तु नखभेषजे। दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च' [ इति मे० १७६।१०-११ ] ॥(१)॥•॥ कुमारीव। यद्वा,– कुमारयति। 'कुमार क्रीडायाम्' (चु० उ० से० )। अच् (३।१।१३४)। गौरादि (४।१।४१)। यद्वा,–कामयते। 'कमु कान्तौ' (भ्वा० आ० से०)। 'कमेरिदुच्चोपधायाः'(उ० ३।१३८) इत्यारन्। 'वयसि प्रथमे' ( ४।१।२० ) इति ङीप्। 'कुमारी [१]रामतरुण्या नवमाल्ये नदीभिदि। कन्याऽपराजितागौरीजम्बूद्वीपेषु च स्मृता' [ इति विश्व १३९।१७५ ] ॥ ( २ ) ॥•॥ तरत्यनया 'तॄ प्लवनतरणयोः ( भ्वा० प० से० )। 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः' (उ० २।१०२) 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' [ इति मे० ४८।५० ] ॥(३)॥•॥ त्रीणि 'कुमार्याः' 'घीउकुआरी' इति ख्यातायाः।

अम्लानस्तु महासहा ॥ ७३ ॥

अम्लान (पु), महासहा (स्त्री), 'कटसरैया' के २ नाम हैं।

अम्लेति ॥ न म्लायति स्म। 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः। 'संयोगादेरातो धातोर्यण्वतः' (८।२।४३) इति नत्वम्। 'अम्लानस्त्वमले भिंटीभेदे' इति हैम [ ३।३८० ] 'अम्लानो महासहायां ना [२]वाच्यलिङ्गस्तु निर्मले' इति मेदिनी [८५।३२] ॥ (१) ॥•॥ महती चासौ सहा च। सन्महत्–' (२।१।६१) इति तत्पुरुषः। 'आन्महतः–' (६।३।४६) इत्यात्वम्।—महतो विमर्दस्य सहा वा–इति मुकुटः। तन्न। असामानाधिकरण्येनात्वाप्रसङ्गात्। महासहा माषपर्ण्यामम्लानेऽपि च योषिति' [ इति मे० १७७।३४ ] (२) ॥•॥ द्वे 'महासहायाः' 'कटसरया'–'सामान्यस्य'।

तत्र शोणे कुरवकः

कुरवक (पु), 'लाल कटसरैया का १ नाम है।

तत्रेति ॥ तत्राम्लाने शोणे रक्ते। कुत्सितं ईषद्वालीना अल्पमकरन्दत्वाद् रवोऽत्र। बहुव्रीहित्वाच्च कादेशः [३]कुरवकः शोणाम्लानझिंटीप्रभेदयोः' [ इति म० १५।१८२ ] ॥•॥ कु ईषद्रौति। संज्ञायां क्वुन् (उ० २।३२)। उवङ्

१ 'रामतरणीनवमाल्यानदी—' इति विश्व पाठ।

२ नान्यलिङ्गस्तु निर्मले इति पा०।

३ मेदिन्यां तु कुरवक ' इति पा०। विश्वे तु 'स्मृतः कुरवकः शोणाम्लानझिण्टीप्रभेदयोः ( १७।१८२ ) इत्येकोकारवान् पाठ।

( ६।४।७७ ) उकारद्वयवान् ( कुरुवकः ) इति मुकुट. ॥ (१) ॥*॥ एकम् 'रक्तवर्णायाः' [महासहाया ] ।

**तत्र पीते कुरण्टकः ।**

कुरण्टकः (पु), 'पीले फूलवाली कटसरैया' का १ नाम है।

तत्रेति ॥ रुण्टति । 'रुटि स्तेयकरणे' ( भ्वा० प० से० ) । ण्वुल् (३।१।१३३) ववुन् ( उ० २।३२ ) वा । कुत्सितः कोर्वा रुण्टकः । 'कुगति-' ( २.२।१८ ) इति समासः । 'कुरुण्टकः[1] पीतपुष्पाम्लानझिंटिकयोः पुमान्' [इति मे० १५।१८३] ॥*॥-कुर्यते । 'कुर छेदने' (तु० प० से०) । बाहुलकादण्टः । स्वार्थे कन् (५।३।७५)। ] 'कुरण्टी' दारुपुत्र्या ना झिंट्यम्लानप्रभेदयोः' [इति मे० ३६।१८ ] । इदमेकोकारवान्-इति कश्चित् । तन्न 'कुर शब्दे' (तु० प० से०) इति पाठात् युक्तम् ॥ (१)॥*॥ रक्तपीतपुष्पयुक्त-'कुरण्टक.' 'कुटसरैया'-इति ख्यातायाः एकेकम् ।

**नीला झिण्टी[3] द्वयोर्बाणा दासी चार्तगलश्च सा ।।७४।।**

बाणा, दासी (२स्त्री), आर्तगलः (पु), 'काली 'कटसरैया' के ३ नाम हैं।

नीलेति ॥ वण्यते । 'वण शब्दे' (भ्वा० प० से०) । कर्मणि घञ् (३।३।१९) । 'बाणा तु बाणमूले स्त्री नीलझिंट्यां पुनर्द्वयोः' [इति मे० ४६।२७] ॥ ( १ ) ॥*॥ दस्यते । 'दसु उपक्षये' ( दि० प० से० ) । कर्मणि घञ् । (३।३।१९) । गौरादि (४।१।४१) । 'दासी बाणाभुजिष्ययोः' [इति मे० १७०।४] ॥ (२) ॥*॥ आर्तं क्षीणो गलति । 'गल अदने' ( भ्वा० प० से० ) अच् ( ३।१।१३४ ) ॥ (३) ॥*॥ त्रीणि 'नीलझिंटिकायाः' ।

**सैरीयकस्तु झिंटी स्यात् ।**

सैरेयकः (पु) झिण्टी (स्त्री ), 'कटसरैया' के २ नाम हैं।

सैरीयेति ॥ सीरे भव । 'तत्र भवः' ( ४।३।५३ ) इत्यण् । कर्षः । तत्र भव । 'वृद्धाच्छः' (४।२।११४) । 'संज्ञायां कन्' ( ५।३।७५ ) । 'सैरेयक' इति पाठे 'नद्यादिभ्यो ढक्' ( ४।२।९७ ) । 'सैरीयकः सहचरः सैरेयश्च सहाचरः' । पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत् । पीतः कुरण्टको ज्ञेयो रक्तः कुरवकः स्मृतः । नील आर्तगलो दासी बाणा ओदनपाक्यपि' ॥ (१) ॥*॥ 'झिम्' इति रटति अच् ( ३।१।१३४ ) । पृषोदरादि (६।३।१०९) ।

गौरादिङीष् ( ४।१।४१ ) ॥ ( २ ) ॥*॥ द्वे झिंटीसामान्यस्य' ।

**तस्मिन् कुरवकोऽरुणे ।**

कुरवकः ( पु ), 'लाल कटसरैया' का १ नाम है।

तस्मिन्निति ॥ तस्मिन् सैरेयके ॥ ( १ ) ॥*॥ एक 'रक्तकुरण्टकस्य' ।

**पीता कुरण्टका झिंटी तस्मिन् सहचरी द्वयोः ॥ ७५ ॥**

कुरण्टकः ( पु ), सहचरी ( स्त्री पु ), 'पीली कटसरैया' के २ नाम हैं।

पीतेति ॥ सह चरति । पचाद्यौ 'चरट्' इति टित्वनिपातनात् ङीप् ( ४।१।१५ ) । यत्तु—'भिक्षासेना-' (३।२।१७ ) इति चकारस्यानुक्तसमुच्चयार्थत्वात् 'चरेष्टः'-इत्याह मुकुटः । तन्न । तत्र प्रमाणाभावात् । [ 'भवेत्सहचरो भिंट्या द्वयोरनुचरे त्रिषु' इति मे० १४४।२९९ ] ॥ (१) ॥*॥ 'अन्येषामपि-' ( ६।३।१३७ ) इति दीर्घत्वे 'सहाचरः' इत्यपि स्वामी-इति मुकुटः । तदपि न । आद्येव सिद्धत्वात् ॥ ( २ ) ॥*॥ द्वे 'पीतकुरण्टकस्य' ।

**ओड्रपुष्पं जवापुष्पं**

ओड्रपुष्पम्, जवापुष्पम् ( २ न ), 'ओड़उल, गुड़हल' के २ नाम हैं।

ओड्रेति ॥ आ ईषदुनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) 'स्फायितञ्चि-' (उ० २।१३) इति रक्, बाहुलकाद्ध्रस्य डत्वम् । ओड्रं पुष्पमस्य । यत्तु—'उड श्लेषणे' । बाहुलकाद्रन्—इति मुकुटः । तन्न । धातुपाठे उडेरदर्शनात् । [ 'ओड्रस्तु तरुभेदे स्यात्' इति मे० १२१।११] ॥ (१) ॥*॥ जवति 'जु' सौत्रो धातुर्गतौ वेगे च अच् ( ३।१।१३४) ॥ ( १ ) ॥*॥ जपति । अच् ( ३।१।१३४ )। 'जवाया तु जपा स्मृता' इति धर्मदासः । 'ओड्रपुष्पेऽपि वृक्षेऽपि जवाशब्दः प्रकीर्तितः' इति त्रिकाण्डशेषः ॥ (२) ॥*॥ द्वे 'जपायाः' 'ओडर' इति ख्यातायाः ।

**वज्रपुष्पं तिलस्य यत् ।**

वज्रपुष्पम् ( न ), 'तिलके फूल' का १ नाम है।

वज्रेति ॥ वज्रमिव पुष्पम् ॥ (१) ॥*॥ तिलस्य ( यत् ) पुष्पम् ॥ * ॥ एक तिलपुष्पस्य' ।

**प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥**

**करवीरे**

प्रतिहासः, शतप्रासः, चण्डातः, हयमारकः 'करवीरः (५ पु) 'कनइल, कनेर पुष्प वृक्ष' के ५ नाम हैं ॥

---

१. 'कुरण्टकः पीतपुष्पाम्लानझिण्टीकयो'-इति पा० ।

२. 'कुरुण्टो दारुपुत्र्यां-' इति पा० ।

३. अत्र सामान्याया झिण्ट्या विवरणमनुक्त्वा विशेषनील्यादिभेदकथनस्य सर्वपद्धतिविपरीतत्वात्पूर्वं सैरीयकस्तु……स्यात्' इति पठित्वैव नीला झिण्टी……सा' इत्यस्य पठनं समुचितं प्रतीयते ।

१ ('ओड्रा पुम्भि नीवृति । ओड्र स्यात्तो जवापुष्पे' इति मेदिनी) इति कोष्ठान्तर्गतो निर्णयसागरीयः पाठोऽत्र चिन्त्यः, मेदिन्या तदनुपलम्भात् ।

प्रतीति ॥ प्रतीपो ह्रासो विकासोऽस्य ॥ (१) ॥•॥ शन प्रासा कुन्ता इव पत्त्राण्यस्य । शन पुष्पाणि प्रास्यति वा । 'असु क्षेपणे' ( दि० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) ॥ ( २ ) ॥ * ॥ चण्डमतति । 'अत सातत्यगमने' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) ॥ ( ३ ) ॥ * ॥ हयानां मारक ॥ ( ४ ) ॥•॥ कर वीरयति । 'वीर विक्रान्तौ' (चु० उ० स०) । 'कर्मण्यण्' (३।२।१)। 'करवीर. कृपाणे स्याद्दैत्यभेदाश्वमारयो । करवीर्यदिती-[1] श्रेष्ठगवीपुत्रवतीषु च' [ इति मे० १४१।२५५ ] ॥ (५) पञ्च 'करवीरस्य' 'कनेर' इति ख्यातस्य ॥

करीरे तु क्रकरग्रन्थिलावुभौ।

करीर., क्रकर', ग्रन्थिल (३ पु), करील' के ३ नाम हैं।

करीति ॥ किरति । 'कॄ विक्षेपे' ( तु० प० से० ) 'कॄगॄपृकटिपटिशौटिभ्य ईरन्' ( उ० ४।३० ) । यत्तु-'कगृशौण्डिभ्य ईरच्—इति मुकुट । तन्न । उणादिवृत्तिषु तत्पाठ स्यादर्शनात् । कण्टिमीरयति वा । 'वंशाङ्कुर करीरोऽस्त्री वृक्षभिद्घटयो पुमान् । करीरी चीरिकाया च दन्तमूले च दन्तिनाम्' [ इति मे० १२१।१२५ ] ॥ (१) ॥•॥ 'क्र' इति करोति । अच् (३।१।१३४) । ट (३।२।२०) वा । 'क्रकर करीरवृक्षे दीन क्रकचे च पक्षिभेदे च' ॥ ( २ ) ॥•॥ ग्रन्थिरस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । ग्रन्थि लाति वा । 'ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान् । सग्रन्थौ त्रिषु' [ इति मे० १५१।८५ ] ॥ ( ३ ) त्रीणि 'करीरस्य' 'करील' इति ख्यातस्य ।

उन्मत्त कितवो धूर्तो धत्तूरः कनकाह्वय• ॥७४॥
मातुलो मदनश्च

उन्मत्त, कितव, धूर्त, धत्तूर', कनकाह्वय, मातुल, मदन' (७ पु), 'धतूरे' के ७ नाम हैं ॥

उन्मत्त इति ॥ उन्मत्तयति । 'तत्करोति—' (वा० ३।१।२६) इति णिच् । पचाद्यच् ( ३।१।१३४ ) 'उन्मत्त उन्मादवति धुस्तूरमुचुकुन्दयो ' [ इति मे० ६१।१०१ ] ॥ (१) ॥*॥ वितथा सत्यस्य ग्राहका । अर्शआद्यच् (५।२।१२७) । कितान् निवसतो वञ्चति 'वञ्चु गतौ' (भ्वा० प० से०) 'अन्येभ्योऽपि—' (वा० ३।२।१०१) इति ड । 'कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये' [ इति विश्व १६४।३० ] ॥ ( २ ) ॥ * ॥ धूर्व्यते स्म । 'धुर्वी हिंसायाम्' ( भ्वा० प० से० ) कर्मणि क्त ( ३।२।१०२ ) ।—धूर्वति—इति तु प्राञ्च । तत्र कर्तरि क्तो दुर्लभ । 'मतिबुद्धिपूजार्थेभ्यश्च' ( ३।२।१८८ ) इति चकाराद्वा बोध्य । यद्वा,-धूर्वण धूर्तम् । भावे क्त (३।३।११३) । तदस्यास्ति । अर्शआद्यच् (५।२।१२७) । 'धूर्तं तु खण्डलवणे[1] धुस्तूरे ना विट त्रिषु' [ इति मे० ५३।२८ ] ॥ (३) ॥•॥ धयति धातून् । 'धेट् पाने' (भ्वा० प० अ०) बाहुलकादूरच । पृषोदरादि ( ६।३।१०९ ) । "धत्तूरस्तु स्मृतो धूर्तो देविता-[2]'कितव शठ ' इति स्वामी ॥ * ॥ धूस्तूयति । धूस कान्तिकरणे' ( चु० प० से० ) । त्रिः ( ३।२।१७८) तूर्यते । 'तूरी त्वरणहिंसयो ' ( दि० आ० से० ) । इगुपधत्वात् क ( ३।१।१३५ ) । धुस्तूरो धुस्तूर धुस्तुरस्तु पुण्डरीको धूस्तूर कनकाह्वय.' इति शब्दार्णव—इति मुकुट ॥ (४) ॥ कनकमाह्वयो यस्य । 'कनक हेम्नि पुंसि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीय चम्पकेऽपि च [ इति मे० ५।५३-५४ ] ॥ (५) ॥•॥ मास्ति नास्ति तुला यस्य । मा श्रीस्तुलाऽस्य, इति वा । कनकनामत्वात् । 'मातुलो व्रीहिभिन्मातृभ्रात्रोश्च मदनद्रुमे । धत्तूरे' [इति मे० १५६।१२३] ॥ (६) ॥•॥ मदयति । 'मदी हर्षग्लेपनयो ' ( भ्वा० प० से० ) । ल्यु ( ३।१।१३४ ) । 'मदन स्मरवसन्तद्रुमिद्धत्तूरसिक्थके'[3] [ इति मे० १०।३ ] ॥ (७) ॥•॥ सप्त 'धत्तूरस्य' ।

अस्य फले मातुलपुत्रकः।

मातुलपुत्रक' ( पु ), 'धतूरे के फल' का १ नाम है।

अस्येति ॥ मातुलस्य पुत्र इव। कन् ( ५।३।९६ ) 'मातुलपुत्रक इत्यपि मामकतनये[4] फले च धूर्तस्य'[ इति मे० १९।२३६] ॥ (१) ॥• । एकं 'धत्तूरफलस्य' ।

फलपूरो बीजपूरः

फलपूर', बीजपूर, (२ पु), 'बिजौरा नींबू' के २ नाम हैं।

फलेति ॥ फलेन पूर्यते । 'पूरी आप्यायने' (दि० आ० स०) 'इगुपध—' ( ३।१।१३४) इति क । कर्मणि घञ् ( ३।३।१९ ) वा । मुकुटस्तु—फल बीज च पूरयति । क —इत्याह । तत्रागुणित । इगुपधत्वाभावाण्णिजन्तस्य । (१) ॥•॥ एव बीजपूर• ॥ (२) ॥•॥ द्वे 'मातुलिङ्गस्य' 'बिजौरा' इति ख्यातस्य ।

रुचको मातुलुङ्गके ॥ ७ ॥

रुचक, मातुलुङ्गक' ( २ पु ) 'मातुलिङ्ग' के दो नाम हैं।

१ '—दितिश्रेष्ठ—' इति पा० ।

१. साम्प्रत मेदिन्यामुपलभ्यमान '—खण्डलवणे—' इत्येव पाठोऽपि विश्व ( ५८।२२) हैम ( २।१७८ )- योरनुरोधादुचित, न तु 'खण्डलवणे' इत्यय पाठ ।

२ 'स्वामि'व्याख्याने 'धत्तूरक स्मृत —' इत्यय पाठ ।

३ मेदिन्या '—धुस्तूरसिक्थके' इति पाठ ।

४ मेदिन्या क्वचित्—'मातुलतनये—' इति पाठ ।

रुचेति ॥ रोचते । 'रुच दीप्तावभिप्रीतौ च ( भ्वा० आ० से० ) अन्तर्भावितण्यर्थ । क्वुन् ( उ० २।३२ )। 'रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययो । सौवर्चलेऽपि मङ्गल्य-¹ द्रव्ये चाप्युत्कटेऽपि च' [ इति मे० १२।१४७–४८ ] ॥ (१) ॥*॥ मीनात्यरुचिम् 'मीङ् हिंसायाम्' (क्र्या० उ० अ०)। बाहुलकात्तुन् । लुङ्ग्यते । 'लुजि भासार्थ (चु० प० से०) । घञ् (३।३।१९) न्यङ्क्वादि (७।३।५३) मातुश्चासो लुङ्गश्च । स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे 'मातुलिङ्गस्य' । स्वामी तु चतुर्णां पर्यायतामाह । तदुक्तम्—'फलपूरो बीज पूरः केसरी बीजपूरक । बीजक केसराम्लश्च मातुलुङ्गश्च पूरक' । अनेकार्थे—'सौवर्चलं मातुलुङ्गं शिलाचन्दनपेषणी² । ग्रीवाभरणकं चेषु चतुर्षु रुचकं स्मृतम्'—इति ।

**समीरणो मरुबकः प्रस्थपुष्पः फणिज्झकः ।**

**जम्बीरोऽपि**

**समीरणः, मरुवकः, प्रस्थपुष्पः, फणिज्झकः, जम्बीरः (५ पु), 'मरुवा' के ५ नाम हैं ।**

समीति ॥ समीरयति 'ईर गतौ' (अ० आ० से०) । ल्यु । 'समीरणस्तु पवने पथिके च फणिज्झके' [इति मे० ५३।१११] ॥ ( १ ) ॥*॥ मरो वाति । क्वुन् । ( उ० २।३२ ) । 'भवेन्मरुवकः पुष्पभिच्छल्यद्रुफणिज्झके³ [इति मे० १७।२०७] ॥ ॥ * ॥ प्रस्थे मानो पुष्प्यति । 'पुष्प विकसने' (दि० प० से०) । अच् (३।१।१३४) ॥ (३) ॥*॥ फणी जातोऽस्मात् । फणासमपत्रपुष्पवात् । फणी उज्झको वर्जकोऽस्य—इति केचित् । उभौ पृषोदरादी (६।३।१०९) ॥ (४) ॥*॥ जम्यते । 'जमु अदने' (भ्वा० प० से०) विच् ( ३।२।७५ ) । वीरयति । अच् (३।१।१३४)। जम् चासौ वीरश्च⁴। "जंबीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे' [इति मे० १३४।१५७] ॥ (५) ॥*॥ पञ्च 'जम्बीरस्य' 'मरुआ' इति ख्यातस्य ।

**अथ पर्णासे कठिञ्जरकुठेरकौ ॥ ७९ ॥**

**पर्णासः, कठिञ्जरः, कुठेरकः ( ३ पु ), 'पर्णास, या बवई' के ३ नाम हैं ।**

अथेति ॥ पर्णान्यस्यति । 'असु क्षेपणे' (दि० प० से ) 'कर्मण्यण्' ( ३।२।१ ) । यद्वा,—पर्णैरसति । 'अस दीप्तौ' ( भ्वा० उ० से० ) । पचाद्यच् ( ३।१।१३४ ) ॥ (१) ॥*॥ कठिनं जरयति । 'जॄष्' (दि० प० से०) ण्यन्तः । 'कर्मण्यण्' (३।२।१)। पृषोदरादि (६।३।१०९) ॥ (२) ॥*॥ कुण्ठति । 'कुठ प्रतीघाते' 'कुठि च' (भ्वा० प० से०) । 'पति-कठिकुठि' (उ० १।५८) इत्येरक् । आगमशास्त्रस्यानित्यत्वान्न नुम् ॥—'कुट गुट प्रतीघाते' च' इत्यतो 'दर्दुरादयश्च' (उ० १।१४०) इति दृक् । पृषोदरादित्वात् ( उ० ६।३।१०९ ) अनुषङ्गलोप —इति मुकुट' । तन्न । कुठ-धातो सत्त्वे पृषोदरादित्वकल्पनावैयर्थ्यात् । दृक्कल्पनाऽपि व्यर्था । एरका सिद्धत्वात् ॥ (३) ॥*॥ त्रीणि 'पर्णासस्य' ।

**सितेऽर्जकोऽत्र**

**अर्जकः ( पु ), 'सफेद बवई' का १ नाम है ।**

सीति ॥ अत्र पर्णासे । अर्जयति । 'अर्ज सर्ज अर्जने' (भ्वा० प० से०)। 'ऋज गतिस्थानार्जनोपार्जनेषु' (भ्वा० आ० से०) वा ण्यन्त. । ण्वुल् ( ३।१।१३३ ) ॥ (१) ॥*॥ एकं 'श्वेतपर्णासस्य' ।

**पाठी तु चित्रको वह्निसंज्ञकः ।**

**पाठी (=पाठिन्), चित्रकः, वह्निसंज्ञकः (३ पु), (अग्निवाचक) 'चीत'के ३ नाम हैं ।**

पेति । पाठोऽस्यास्ति । 'अत —' ( ५।२।११५ ) इतीनि ॥ (१) ॥*॥ चित्तं बुद्धि त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ०) । 'आतोऽनुप—' (३।२।३) इति कः । स्वार्थे कन् (५।३।७५) । 'चित्रकं तिलके ना तु व्याघ्रभिच्चत्रकन्नुपाठिषु' [इति मे० ८।८८] ॥ (२) ॥*॥ वह्निसंज्ञा यस्य । वह्निपर्यायनामक इत्यर्थः ॥ ( ३ ) त्रीणि 'चित्रकस्य' 'चीता' इति ख्यातस्य ।

**अर्काह्ववसुकास्फोतगणरूपविकीरणाः ॥ ८० ॥**

**मन्दारश्चार्कपर्णो**

**अर्काह्वः, वसुकः, आस्फोतः, गणरूपः, विकीरणः, मन्दारः, अर्कपर्णः ( ७ पु ), 'एकवन, आक, मन्दार' के ७ नाम हैं ।**

अर्केति ॥ अर्क आह्वा यस्य । 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' [इति मे० ७२।१६] ॥ (१) ॥*॥ वसति । 'वस निवासे' (भ्वा० प० अ०) । 'शॄस्वृस्निहि—' (उ० १।१०) इत्युः । स्वार्थे कन् (५।३।७५) । 'वसुक रोमके पुंसि शिवमल्ल्यर्कपर्णयो.' [इति मे० १३।१५३] । बाहुलकात् 'भृमृ—' [ उ० मू०··· ] इत्यु'—इति मुकुटः । तन्न । उक्तसूत्रे वसतेर्ग्रहणात् । ( २ ) ॥ * ॥ आस्फो-

१. –'माङ्गल्यद्रव्ये—' इति पा० ।

२ स्वामिव्याख्याने '—मातुलुङ्गस्तु'-इति, '—शिलाचन्दनपेषणी—' इति च पाठ ।

३ '–पुष्पविशेषे मदनद्रुमे' इति पाठ. ।

४. 'जम्बीर·' इति पा० ।

५. मूले 'जम्बीरः' टीकायां'जंबीर.'अत्र बीजं मृग्यम् ।

टयति । 'स्फुटिर् विकसने'। ( भ्वा० प० से० ) । अच् (३।१।१३४) । पृषोदरादि (६।१।१०९) 'आस्फोतस्तु पुमानर्कपर्णे स्यात् कोविदारके। आस्फोता गिरिकर्ण्या च वनमल्ल्या च योषिति' [इति मे० ६०।९२-९३] ॥ (३) ॥*॥ नानात्वादगणा बहूनि रूपाण्यस्य ॥ (४) ॥*॥ विकिरति। 'कॄ विक्षेपे' (तु० प० से०)। 'कॄपृ–' (उ० २। ८१) इति वयुन्। इत्वम् (७।१।१००) रपरत्वम् (१।१।५१) बाहुलकाद्दीर्घ ॥*॥ विविधः किरणोऽस्य—इत्यन्ये ॥ (५) ॥*॥ मन्दान् इयर्ति। अण् (३।२।१) मन्दैरर्यते वा। घञ् (३।३।१९)। 'मन्दार[1] स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयो' [ इति मे० १३६।१९६-९७ ] ॥ (६) ॥*॥ अर्कस्येव तीक्ष्णानि पत्राण्यस्य ॥ (७) ॥*॥ सात 'अर्कस्य' 'आक' इति ख्यातस्य।

**अत्र शुक्लेऽलर्कप्रतापसौ।**

अलर्क', प्रतापस (२ पु), 'सफेद फूलवाले एकवन' के २ नाम हैं।

अलेति ॥ अस्मिन् शुक्ले। अलति। 'अल भूषणादौ (भ्वा० प० से०) क्विप् (३।२।७६)। अल् चासावर्कश्च। 'अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे' [ इति मे० ४१-४५ ]। अलयति-इति मुकुट। तन्न। णावुपधावृद्धिप्रसङ्गात्॥ (१) ॥*॥ प्रताप चक्षुस्तेज स्यति। 'षोऽन्तकर्मणि' ( दि० प० अ० )। क (३।२।३)। प्रहृतातापसा येन वा ॥ (२) ॥*॥ द्वे श्वेतार्कस्य'।

**शिवमल्ली पाशुपत एकाष्ठीलो बुको वसु ॥८१॥**

शिवमल्ली ( =शिवमल्लिः ), पाशुपत', एकाष्ठील', बुक', वसु' (५ पु), 'गुल्मा' के ५ नाम हैं।

शिवेति ॥ शिवप्रिया मल्ली ॥ (१) ॥*॥ पशुपतेरयम्। तत्प्रियत्वात्। 'पाशुपतो वकपुष्पे स्यात्पशुपत्यधिदैवते च तद्भक्ते' [ इति मे० ७०।२१३ ] ॥ (२) ॥*॥ एकमस्थि लाति। 'सुषामादित्वात्' (८।३।९८) षत्व दीर्घत्वं च। 'एकाष्ठीला[1] वनतिक्तकौषधौ पुंसि बकपुष्पे [ इति मे० १५५।१४९ ] ॥ (३) ॥*॥ वाति। बाहुलकात् कुक्। बुनोऽकारस्योत्व वा॥*॥ 'बक' इति पाठे वयन् ( उ० २।३२ )। 'वकस्तु बकपुष्पे स्यात्कङ्के श्रीदे च रक्षसि' [ इति मे० ३।३० ] ॥ (४) ॥*॥ वस्ते, वसति वा। 'शृस्वृस्निहित्रप्यसिवसि–' (उ० १।१०) इत्यु। 'वसुर्ना देवभेदाग्निभायोत्त्रबकराजसु।[इति मे० १७०।६ ] ॥ (५) ॥*॥ पञ्च 'गुल्मा' इति ख्यातस्य 'बकपुष्पस्य'।

**वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि।**

वन्दा, वृक्षादनी, वृक्षरुहा, जीवन्तिका, (४ स्त्री), 'वन्दा, बाँदा' के ४ नाम हैं।

वन्देति ॥ वन्द्यते। 'वदि अभिवादनस्तुत्योः' ( भ्वा० आ० से० )। 'गुरोश्च' ( ३।३।१०३ ) इत्य। ( 'वन्दा लतान्तरे स्मृता। भिक्षुवयामपि · वन्दा च' इति मेदिनी ७५।१० ) ॥ (१) ॥*॥ वृक्षमत्ति। 'अद भक्षणे' ( अ० प० अ० ) ल्युट ( ३।३।११३ )। 'वृक्षादनी[2] तु वन्दाया विदारीकन्दकेऽपि च' इति विश्वमेदिन्यौ [ ९७।१५३, ९८।१११ ] ॥ (२) ॥*॥ वृक्ष रोहति। मूलविभुजादित्वात् (३।२।५) क। वृक्षे रोहति इति वा। 'इगुपध–' ( ३।१।१३५ ) इति क ॥ (३) ॥*॥ जीवति। 'रुहिनन्दिजीविप्राणिभ्य षिदाशिषि' (उ० ३।१२७) इति झच। षित्वात् (४।१।४१) ङीष्। कन् (५।३।७५)। 'जीवन्तिका गुडूच्या च जीवाख्यशाकवन्दयो' [ इति मे० १६।१९१ ] ॥ (४) ॥*॥ चत्वारि 'वृक्षोपरिजातलताविशेषस्य'।

**वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥ ८२ ॥**
**जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि।**

वत्सादनी, छिन्नरुहा, गुडूची, तन्त्रिका, अमृता, जीवन्तिका, सोमवल्ली, विशल्या, मधुपर्णी (९ स्त्री), 'गिलोय गुडुच' के ९ नाम है।

---

१. विश्वे पुस्तकद्वये 'मन्दार पारिभद्रार्कपर्णयो। सुरद्रुमेऽपि' (१३८।१६६), 'मदारो द्विरदे धूर्ते (१३९। १६९) इति पठितत्वेन 'मन्दार-मदारे'तिशब्दद्वयस्योपलब्ध्याऽत्रापि 'मन्दार ······ पर्णे च' एतावानेव पाठ समुचित। मेदिन्या यद्यपि 'मन्दारो हस्तिधूर्तयो' इत्यपि पाठस्तदग्रे लभ्यते, किन्तु उक्तविश्वानुरोधादत्रापि 'मदारो हस्तिधूर्तयो' इति पठितव्ये लेखकादिप्रमादात् 'मन्दारो हस्तिधूर्तयो' इति पाठो लिखित। अत एव हैमे मन्दार शब्दार्थकथनप्रसङ्गे 'मन्दारस्त्रिदशद्रुमे। पारिभद्रेऽर्कपर्णे च ( ३।६२५–२६ ) इत्येवोक्तम्, न तु तस्य 'हस्तिधूर्त'वप्यर्थो कथितौ, एवमेव नानार्थरत्नमालायामपि 'मन्दार' शब्दार्थकथने 'मन्दार पारिभद्रेऽर्कपर्णे कल्पमहीरुहे' (पृ० ९९ प० १८९८) इत्येवोक्त, न तु हस्ति धूर्तौ वप्यर्थौ तस्योक्ताविति। एव चात्रापि मन्दारो हस्तिधूर्तयो'रिति पाठोऽधिक एवेत्यवधेयम् ॥

१. वनतिक्तिकौषधौ पुंसि बकपुष्पे च' इति पा०।

२ विश्वे 'वृक्षादनी स्मृता वन्दाविदारीगन्धयोरपि इति पा० ॥

वत्सेति ॥ वत्सैरद्यते । 'अद भक्षणे' (अ० प० अ०)। ल्युट् ( ३।३।११३ ) ॥ ( १ ) ॥ ॥ छिन्ना रोहति । 'इगुपध–' ( ३।१।१३५ ) इति क । 'ङ्यापो –' (६।३। ६३) इति ह्रस्वः ॥ ( २ ) ॥*॥ गुडति । 'गुड रक्षणे' (तु० प० से०) । बाहुलकात्कूचट् ॥ (३)॥*॥ तन्त्रयति । 'तन्त्रि कुटुम्बधारणे' ( चु० उ० से० ) । ण्वुल् ( ३।१। १३३ ) ॥ (४) ॥*॥ न मृतमस्याः । 'अमृता मागधी-पथ्यागुडूच्यामलकीषु च' [ इति मे० ५९।७७ ] ॥ (५) ॥*। जीवति । झच ( उ० ३।१२७ ) । 'जीवन्तिका गुडूच्यां च जीवाख्यशाकवन्दयो' इति मेदिनी [ १६। १९१ ] ॥ (६) ॥ * ॥ सोमस्य वल्ली ॥ (७) ॥*॥ विगतं शल्यमस्याः । 'विशल्याऽग्निशिखादन्तीगुडूची-त्रिपुटासु च' [इति मे० १२०।१०७]॥ (८) ॥*॥ मधु-मयानि पर्णान्यस्याः । 'पाककर्ण–' ( ४।१।६४ ) इति ङीष् ॥ (९) ॥*॥ नव 'गुडूच्या' ।

मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥

मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।

मूर्वा, देवी, मधुरसा, मोरटा, तेजनी, स्रुवा, मधूलिका, मधुश्रेणी, गोकर्णी, पीलुपर्णी ( १० स्त्री ), 'मूर्वा' अर्थात् 'चिनार, चुरनहार, धनुष के लिए उपयोगी लताविशेष' के १० नाम हैं।

मूर्वेति ॥ मूर्वति । 'मुर्वी बन्धने' (भ्वा० प० से०) । अच् ( ३।१।१३४ ) ॥ ( १ ) ॥*॥ दीव्यति । पचादौ ( ग० ३।१।१३४ ) 'देवट्' इति निपातनात् (४।१।४५) ङीप् । मुकुटोक्तं गौरादित्वं चिन्त्यम् । 'देवी कृताभिषेकायां तेजनीस्पृक्क'मोरपि'[इति मे० १५८।१२] ॥ (२) ॥*॥ मधु रसोऽस्याः । 'भवेन्मधुरसा द्राक्षामूर्विकादुग्धिकासु च' [ इति मे० १७४।६० ] ॥ ( ३ ) ॥ * ॥ मुरति । 'मुर संवेष्टने' । 'शकादिभ्योऽटन्' ( उ० ४।८१ ) । [मोरट तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः । सप्तरात्रात्परक्षीरे] मूर्विकायां तु मोरटा' [ इति मे० २७।५३-५४ ] ॥ ( ४ ) ॥ ॥ तेजति । 'तिज पालने' ( भ्वा० प० से० ) । ल्युट् (३।३। ११३) ॥ (५) ॥*॥ स्रवति । 'स्रु गतौ' (भ्वा० प० अ०) अच् (३।१।१३४) ॥ * ॥ मञ्जपूर्वत्वादुगुणाभावे स्रुवाऽपि । 'स्रुवा द्रुर्वाहोमपात्रे² सरलवीमूर्वयो स्त्रियाम्' [इति मे० १५९।२९] ॥(६)॥*॥ मधु लाति । 'आतोऽनुप–' (३।२।३) इति क । 'अन्येषामपि–' (६।३।१३७) इति दीर्घ ॥ (७) ॥*॥ मधुन श्रेणिरत्र ॥ (८) ॥*॥ गो कर्ण इव, गो कर्णो यस्याः, इति वा । 'पाककर्ण–' (४।१।६४) इति ङीष् । 'गोकर्णोऽश्वतरेऽपि¹ स्यान्मृगसर्पगणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधी' इति विश्वः [ ५३।७०-७१ ] ॥ (९) ॥*॥ पीलोरिव पर्णान्यस्याः । 'पाककर्ण–'(४।१।६४) इति ङीष् । 'पीलुपर्णी चिम्बिकायां² मूर्वायामोषधीभिदि' [इति मे० ५२।१०४]॥ (१०) ॥*॥ दश 'मूर्वायाः' 'मुहार' इति ख्यातायाः ।

पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥८४॥

एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।

पाठा, अम्बष्ठा, विद्धकर्णी, स्थापनी, श्रेयसी, रसा, एकाष्ठीला, पापचेली, प्राचीना, वनतिक्तिका ( १० स्त्री), 'पाठा या पाढर' के १० नाम हैं।

पाठेति ॥ पठ्यते । 'पठ व्यक्तायां वाचि' ( भ्वा० प० से० ) । कर्मणि घञ् (३।३।१९) । 'पाठस्तु पठने ख्यातो विद्धकर्ण्यां तु योषिति' [इति मे० ३९।७] ॥ (१) ॥*॥ अम्बष्ठाऽम्बष्ठल्लोण्यां स्यात् पाठायूथिकयोरपि' [इति मे० ३९।११]॥(२) ॥*॥ विद्धौ कर्णौ यस्याः ॥*॥—अविद्धोऽच्छिद्रः पर्णरूपः कर्णोऽस्याः —इति मुकुटः ॥ (३) ॥*॥ स्थापयति । ल्युट् (३।३।११३) । 'स्थापनं रोपणे, पुंसि³ वने, पाठौषधौ स्त्रियाम्' [इति मे० ९४।५२]॥(४)॥*॥ अतिशयेन प्रशस्ता । 'प्रशस्यस्य श्रः' (५।३।६०) । 'श्रेयसी करिपिप्पल्यामभयापाठयोरपि [ इति मे० १७३।४२ ] ॥ (५ ) ॥*॥ रस्यते । 'रस आस्वादने' (चु० उ० से०) । कर्मणि घञ् (३।३।१९)। अल्लोपस्य स्थानिवत्वान्न वृद्धिः । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान् । स्त्रियां तु रसनापाठाशल्लकीकङ्गुभूमिषु' [इति मे० १७०।९-१०] ॥ ( ६ ) ॥*॥ ( ७ ) ॥*॥ पापे चलति । 'चल विलसने' (तु० प० से०) । पचादौ 'चेलट्' इति निपातनात् ङीप् (४।१।१५)। गौरादित्वकल्पनं मुकुटकृतं व्यर्थम् । पचेर्यङ्लुगन्तादपि 'पापक्ति' इति पापचो वायुः । तमीरयति वा । अण् ( ३।२।१ ) ॥ ( ८ ) ॥*॥ प्राचि भवा । 'विभाषाञ्चे' (५।४।८) इति ख- ॥ (९) ॥*॥ वने तिक्ता । स्वार्थे कन् ( ५।३।७५ ) ॥ ( १० ) ॥*॥ दश 'पाठा' इति ख्यातायाः ।

१. 'पृक्कयोरपि' इति पा० ।

२. 'यज्ञपात्रे शल्लकी' इति पा० ।

१ 'तरे सर्पे सारङ्गे प्रमथान्तरे' इति पा० ।

२. 'चिम्बिकायां' इति पा० ।

३. 'पुंसवने' इति पा० ।

कटु: कटंवराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।

कटु, कटंवरा, अशोकरोहिणी, कटुरोहिणी, मत्स्यपित्ता, कृष्णभेदी, चक्राङ्गी, शकुलादनी (८ स्त्री), 'कुटकी' के ८ नाम हैं।

केति ॥ कटति । 'कटे वर्षावरणयो' ( भ्वा० प० से० ) । 'भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १।१०) इत्यत्र चकारादु । —'वटिकटिभ्यां च' इत्यु —इति मुकुट । तन्न । उज्ज्वलदत्तादिषु तत्सूत्रस्यादर्शनात् । 'कटु स्त्री कटुरोहिण्यां लताराजिकयोरपि । [नपुंसकमकार्ये स्यात्पुंल्लिङ्गे रसमात्रके । त्रिषु तद्वत्सुगन्धोग्र मत्सरेऽपि खरेऽपि च इति मे० ३३।४-५] ॥ (१) ॥*॥ कम्बति । अथ (३।२।११४) । कट (रोगम्) वृणोति । 'वृञ् वरण' (स्वा० उ० से० । 'संज्ञायां भृतृ-' ( ३।२।४६ ) इति खच् । 'अरुर्द्विषत्-' (६।३।६७) इति मुम् ॥ * ॥—'कटम्भरा' इति पाठ—इत्यन्ये । 'कटम्भरा प्रसारण्यां रोहिण्यां गजयोषिति । कलम्बिकायां[१] गोलायां वर्षाभूमूर्वयोरपि' [इति मे० १४१। २५६] ॥ (२) ॥*॥ अशोक इव रोहति । 'कर्तर्युपमाने' (३।२।७९) इति णिनि । 'अशोकरोहिणी शक्ता चक्राङ्गी शकुलादनी' इति निघण्टु ॥ * ॥ व्यस्तमपीद नाम । 'अशोक कटुरोहिण्यामशोको वञ्जुलद्रुमे' इति रभस । 'अशोकस्त्रिषु निःशोके पुंसि वञ्जुलपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम्' [इति मे० ४।१०] ॥*॥ 'रोहिणी कटुरोहिण्याम्' इति रुद्र । 'रोहिणी कण्ठरुग्भिदि । [२]भभित्कटम्भरासोमवल्केषु लोहितागवो' [ इति मे० ५०।७४ ] ॥ ( ३ ) ॥ * ॥ कटुश्चासौ रोहिणी च । 'कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी' इति निघण्टु ॥ (४) ॥*॥ मत्स्यानां पित्तमिव । तद्वत्स्वादुत्वात् ॥ (५) ॥*॥ कृष्णो वर्णेन भेदश्छेदोऽस्या । कृष्णं मलं भिनत्ति वा । 'कर्मण्यण्' (३।२।१) । ङीप् (४।१।१५)। 'कृष्णभेदा चण्डरुहा' इति निघण्टु ॥ ( ६ ) ॥ * ॥ चक्राकारमङ्गमस्या । गौरादि ( ४।१।४१ ) । 'अङ्गगात्र-' इति निर्मूलम् । 'चक्राङ्गो मानसौकसि । चक्राङ्गी कटुरोहिण्याम्' इति मेदिनी [२४।३३] ॥ (७) ॥*॥ शकुलैर्मत्स्यैरद्यते । अतेः कर्मणि ल्युट् (३।३।११३) । 'शकुलादनी स्त्रियां कृष्णभेदे कटुरसावयो' [इति मे० १०१।१४७] ॥ (८)॥*॥ अष्टौ 'कटुरोहिण्याः' 'कुटकी' इति ख्यातायाः ।

आत्मगुप्ताजडाऽव्यण्डा कण्डूरा प्रावृषायणी ॥ ८६ ॥
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।

आत्मगुप्ता, अजडा, अव्यण्डा, कण्डूरा, प्रावृषायणी, ऋष्यप्रोक्ता, शूकशिम्बि, कपिकच्छु, मर्कटी (९ स्त्री), 'केवाँच' के ९ नाम हैं।

आत्मेति ॥ आत्मना गुप्ता । दु स्पर्शत्वात् । 'कर्तृकरणे-' ( २।१।३२ ) इति समास ॥ ( १ ) ॥ * ॥ जडयति । 'तत्करोति-' (वा० ३।१।२६) इति णिजन्तादच् (३।१। १३४) । 'जडा स्त्रियाम् । शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु' [ इति मे० ४१।१३-१४ ] । मुकुटस्तु—कण्डवादिना दौःस्थ्यजनमादिन्द्रियाणि जडयति स्तम्भयति । 'जल अपवारणे' ( चु० प० से० )—इत्यवोचत् । तन्न । णौ वृद्धिप्रसङ्गात् । जडति वा । डलयोरैक्यात् ॥*॥—न जहाति नूतनम् । अजहा । 'ज्ञेया जाङ्गलिका सैव साऽजहा प्रावृषायणी' इतीन्दु —इति स्वामी ॥ ( २ ) ॥*॥ न विगतमण्डमस्या । 'अव्यण्डा वृषभी गुप्ता' इतीन्दु । मुकुटस्तु—अधिकमण्ड बीजमस्या, अधिकममति । 'अम रोगे' (भ्वा० प० से०)। 'अमन्ताड्ड' (उ० १।११४) वा । अव्यण्डा—इत्याह । तन्न मूलं मृग्यम् ॥ ( ३ ) ॥ * ॥ कण्डूं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप-' (३।२।३) इति क ॥*॥ पृषोदरादित्वात् (६।३।१०९) ह्रस्वत्वमपि । 'कपिकच्छूश्च कण्डूरा कण्डुरा शूकशिम्बिका' इति दु । मुकुटस्तु—कण्डूरस्त्यस्या । 'कण्डूकच्छूभ्यां ह्रस्वश्च' इति रो ह्रस्वत्वं च—इत्याह । तन्न । उक्तवार्तिकस्यादर्शनात् ॥ ( ४ ) ॥*॥ प्रावृषा तु [२]'जलार्णवे' इति त्रिकाण्डशेष । प्रावृषामेति, अयते वा । कर्तरि ल्युट् (३। ३।११३) । 'कृत्यच' ( ८।४।२९ ) इति णत्वम् ॥ (५) ॥ * ॥ ऋष्यैर्मृगैः प्रोक्ता । ऋषिभिरप्रोक्ता, इति वा । 'ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिम्बिषु' [इति मे० ६८। १९२] ॥ (६) ॥*॥ शूकयुक्ता शिम्बि । 'शाम्यच्छुशाकुशिशिराणि च शूकशिम्बि' इत्यूष्मविवेकात् द्वितालव्या । 'शूकशिम्बिस्तु मर्कटी । शूकशिम्बा च' इति वाचस्पति ॥ (७) ॥*॥ कपीनां कच्छू । कण्डूहेतुत्वात् ॥ (८) ॥*॥ मर्कटीव । विविधचेष्टाहेतुत्वात् । 'अथ मर्कटी । करञ्जभिच्छूकशिम्ब्यो पुंसि वानरलूतयो' [इति मे० ३७।५२]॥ (९) ॥*॥ नव 'मर्कट्याः' 'केवाच' इति ख्यातायाः ।

---

१ 'कलविङ्कायां' इति पा० ।
२ 'तडित्कटम्भरा' इति पा० ।

१ 'जहात्यङ्गा' इति पा० ।
२ 'जलार्णवे' इति पा० ।

चित्रोपचित्रा न्यग्रोधी द्रवन्ती शंवरी वृषा ॥ ८७ ॥
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।

चित्रा, उपचित्रा, न्यग्रोधी, द्रवन्ती, शंवरी, वृषा, प्रत्यक्श्रेणी, सुतश्रेणी, रण्डा, मूषिकपर्णी (१० स्त्री), 'मूसाकर्णी' के १० नाम हैं।

चित्रेति ॥ चित्रं रूपमस्या. । 'चित्राखुपर्णीगोडुम्बासुभद्रास्वस्तिकासु च। मायाया सर्वनक्षत्रनदीभेदेषु च स्त्रियाम्' [इति मे० १२५।३४] ॥ (१) ॥*॥ उपगता चित्राम् ॥ (२) ॥*॥—न्यग् रुणद्धि । बहुमूलत्वात् । अच् (३।१।१३४)। गौरादि (४।१।४१)—इति प्राञ्च । न्यञ्चं रुणद्धि, इति वा । 'कर्मण्यण्' ( ३।२।१ ) । '[ न्यग्रोधस्तु पुमान्व्योमवटयोश्च शमीतरौ ] । न्यग्रोधी तूपचित्रायाम्' [ इति मे० ८१।३२ ] ॥ (३) ॥*॥ द्रवति । 'द्रु गतौ' ( भ्वा० प० से० ) । 'लट शतृ–' (३।२।१२४) ॥ (४) ॥*॥ श वृणोति । 'वृञ् वरणे' (स्वा० उ० से०)। 'शमि धातो —' (३।२।१४) इत्यच् । गौरादि (४।१।४१)। मुकुटस्तु—खच् ( ३।२।४६ )— इत्याह । [शवरं सलिले पुंसि मृगदैत्यविशेषयो. ।] शवरी चाखुपर्ण्यां स्यात्' [ इति मे० १३८।२१९–२०] ॥ ( ५ ) ॥ * ॥ वर्षति । 'वृषु सेचने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति क । [वृषो धर्मे बलीवर्दे शृंङ्ग्या पुराशिभेदयो. । श्रेष्ठे स्यादुत्तरस्थश्च न्यासमूषिकशुक्रले । तथा वास्तुस्थानभेदे पुमानेष[1] प्रकीर्तित । वृषा मूषिकपर्ण्या च, यतीनामासने वृषी' इति मे० १६७।२५–२७] ॥ ( ६ ) ॥*॥ प्रतीची श्रेणी यस्या. ॥ (७) ॥*॥ सुताना श्रेणी यस्या. ॥ (८) ॥*॥ रमन्तेऽत्र । 'रमु क्रीडायाम्' (भ्वा० आ० अ०) । 'अमन्ताड्डः' ( उ० १.११४ ) । 'रण्डा मूषिकपर्ण्यां च विधवाया च योषिति' [इति मे० ४२।२३] ॥*॥ स्वामी तु—चण्ड्यते । 'चण्डा' । 'प्रत्यक्श्रेणी वृषा चण्डा पुत्रश्रेण्याखुपर्णिका' इति निघण्टु –इत्याह ॥ (९) ॥*॥ मूषिक पर्णमस्या । मूषिककर्णाकारपत्रत्वात् । 'पाककर्ण–' (४।१।५४) इति ङीप् ॥ ( १० ) ॥ दश 'मूषिकपर्ण्या' 'मूसाकर्णी' इति ख्याताया ।

अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥
प्रत्यक्पर्णी कीशपर्णी किणिहीखरमञ्जरिः ।

अपामार्गः, शैखरिकः, धामार्गवः, मयूरकः (४ पु), प्रत्यक्पर्णी, कीशपर्णी, किणिही, खरमञ्जरी (४ स्त्री), 'चिचिड़ा' के ८ नाम हैं।

अपेति ॥ अपमार्जन्त्यनेन । 'हलश्च' (३।३।१२१) इति घञ् । निष्ठायामनिट्त्वात् कुत्वम् ( ७।३।५२ ) । 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घ । अपकृष्ट आसमन्तात् मार्गोऽस्य, इति वा ॥ (१) ॥ * ॥ शिखरे प्रायेण भवति । अध्यात्मादित्वात् (वा० ४।३।६०) ठक् ॥ (२) ॥*॥ धाम्नोऽर्ज । धामार्ग वाति । 'आतोऽनुप–'(३।२।३) इति क । 'धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके' [इति मे० १६१।२९] ॥ * ॥—'अधामार्गव '[1] 'अधामार्गवोऽपामार्ग कोशातकी च इति द्व्यर्थ—इति स्वामी ॥ (३) ॥ * ॥ मयूरप्रतिकृति । 'इवे प्रतिकृतौ' ( ५।३।९६ ) इति कन् । 'मयूरकोऽप्यपामार्गे क्लीवं तुत्थाञ्जने पुन.' [ इति मे० १७।२०६ ] ॥ ( ४ ) ॥*॥ प्रत्यञ्चि पर्णान्यस्या । 'पाककर्ण–' ( ४।१।५४ ) इति ङीप् ॥ (५) ॥ * ॥ कपिरोमतुल्यानि लोमशानि पर्णान्यस्या ॥ * ॥ 'केशपर्णी' इति स्वामी ॥ ( ६ ) ॥ * ॥ किणिनो व्रणान् जिहीते । 'ओहाङ् गतौ' (जु० आ० अ०) । 'आतोऽनुप–' (३।२।३) इति क । गौरादि ( ४।१।४१ ) । किणिनो व्रण न् हन्ति वा । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड ॥ ( ७ ) ॥ * ॥ खरा मञ्जरिरस्या. ॥ * ॥ गौरादि ( ४ । १ । ४१ ) वा ॥ ( ८ ) ॥ * ॥ अष्टौ 'अपामार्गस्य' ।

हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥
अङ्गारवल्ली बालेयशाकवर्बरवर्धकाः ।

हञ्जिका, ब्राह्मणी, पद्मा, भार्गी, ब्राह्मणयष्टिका, अङ्गारवल्ली (६ स्त्री), बालेयशाकः, वर्बरः, वर्धकः (३ पु), 'ब्रह्मनेटी, भारङ्गी' के ९ नाम हैं।

हञ्जीति ॥ हन्ति रोगान् । पचाद्यच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । 'अङ्गारवल्ली हञ्जी च वर्दो वर्वरकस्तथा' ( इति निघण्टुः ) ॥*॥ भनक्ति रोगान् । 'भञ्जो आमर्दने' ( रु० प० अ० ) । ण्वुल् (३।१।१३३) वा । पृषोदरादिः (६।३।१०९) (फञ्जिका, इति वा–इति मुकुट.) ॥ (१) ॥*॥ ब्रह्मण इयम् । 'ब्राह्मण ब्रह्मसंघाते वेदभागे नपुंसकम् । भूमिदेवे तु पुल्लिङ्ग फञ्जिकापृक्कयो स्त्रियाम्' [ इति मे० ५०।६७–६८ ] ॥ ( २ ) ॥ * ॥ पद्माकारं पुष्पमस्या. । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचारटीपन्नगीषु[2] च' [इति मे० १०९।१८–१९] ॥ (३) ॥*॥ भर्जनम् ।



१. स्वामिव्याख्याने तु अकारहीनो 'धामार्गव' इत्येवोपलभ्यते ।

२. '—श्रीचारटीपन्नगेषु च' इति पा० ।

'भ्रस्ज पाके' (तु० उ० से०) । घञ (३।३।१८) 'भ्रस्जो रोपधयो रमन्यतरस्याम्' (६।४।४७) इति रमागम । 'चजो —' (७।३।५२) इति कुत्वम् । 'भृजी भजने' (भ्वा० आ० से०) वा । घञ (३।३।१८)। भर्गोऽस्त्यस्या । ज्योत्स्नाद्यण (वा० ५।२।१०३) ॥ (४) ॥*॥ ब्राह्मण यष्टिरिव । तादृशप्रकाण्डत्वात् 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (५) ॥*॥ अङ्गारवद्वल्लयस्या । समासान्तविधेरनित्यत्वान्न कप ॥ (६) ॥*॥ बालेयस्य शाक । गदभभक्ष्यशाकत्वात् ॥(७)॥ वर्वति । 'वृञ् वरणे'(स्वा० उ० से०) यङ्लुगन्त । पचाद्यच (३।१।१३४) ॥ (८) ॥*॥ वर्धते । 'वृधु छेदने' (भ्वा० आ० से०) । ण्वुल (३।१।१३३) ॥ (९) ॥*॥ नव 'भार्ग्या'।

मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥ ९० ॥

मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।

मञ्जिष्ठा, विकसा, जिङ्गी, समङ्गा, कालमेषिका, मण्डूकपर्णी, भण्डीरी, भण्डी, योजनवल्ली (९ स्त्री), 'मँजीठ' के ९ नाम हैं।

मञ्जीति ॥ मञ्जौ शोभने वर्णे तिष्ठति । सुपि स्थ' (३।२।४) इति क । अम्बाम्ब—' (८।३।९७) इति षत्वम् । पृषोदरादि (६।३।१०९) । यद्वा—अतिशयेन मञ्जु । 'अतिशायने तमबिष्ठनौ' (५।३।५५)॥(१)॥*॥ विकसति । कस गतौ (भ्वा० प० स०) । अच् (३।१।१३४) ॥*॥—विकषति । 'कष हिंसायाम्' (भ्वा० प० से०) । (विकषा)—इति मुकुट ॥(२)॥*॥ जिङ्गति । 'जिगि गतौ इति केचित्पठन्ति । गौरादि (४।१।४१) ॥ (३) ॥ * ॥ समन्ततोऽङ्गति । 'अगि गतौ' (भ्वा० प० से०) । अच (३।१।१३४) ॥ (४)॥*॥ काले मिश्यते । 'मिश शब्दे' (भ्वा० प० से०)। कर्मणि घञ (३।३।१९)। गौरादि (४।१।४१) । स्वार्थे कन् (५।३।७५) ॥*॥ काल वर्णं मिषति । मिष स्पर्धायाम्' (तु० प० से०) । पूर्ववत् । मूर्धन्यषा इति वा । मञ्जिष्ठा कालमेषी च' इति निघण्टु ॥ (५) ॥*॥ मण्डूकवत् पर्णमस्या । 'पाककर्ण—' (४।१।६४) इति ङीष् । मण्डूकपर्णी मञ्जिष्ठा ब्राह्म्योर्नातु शोणक' [ इति मे० ५३।११५ ] ॥ (६) ॥*॥ भण्डति । भण्ड आमण्डने' ।— 'भडि गतौ'—इति स्वामी । बाहुलकादीरन् । गौरादि (४।१।४१)। भण्डीरी ॥ * ॥ प्रज्ञाद्यण् (५।४।३८) । हेमपुष्पी च भाण्डीरी' इति रभस ॥ (७) ॥ * ॥ पचाद्यच् (३।१।१३४) । गौरादि (४।१।४१) 'भण्डी योजनवल्ल्यपि । रक्ता भण्डीरिका च इतीन्दु ॥ (८) ॥ * ॥ योजनगामिनी वल्ली ॥ (९) ॥ * ॥ नव 'मञ्जिष्ठाया' 'मँजीठ' इति ख्याताया ।

यासो यवासो दु स्पर्शो धन्वयास कुनाशक ॥ ९१ ॥

रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ।

यास, यवास, दु स्पर्श, धन्वयास, कुनाशक (५ पु), रोदनी, कच्छुरा, अनन्ता, समुद्रान्ता, दुरालभा (५ स्त्री), 'जवासा' के १० नाम हैं।

येति ॥ यसनम् । 'यसु प्रयत्ने' (दि० प० से०)। भावे घञ् (३।३।१८)। यासोऽस्त्यस्य। अर्शआद्यच (५।२।१२७)। याति । बाहुलकादसच वा ॥ (१) ॥*॥ यौति । 'यु मिश्रणामिश्रणयो' (अ० प० से०) । कृतन्यञ्जि—' (उ० ४।२) इत्यास ॥ (२) ॥ * ॥ दु खेन स्पृश्यते । 'स्पृश स्पर्शने' (तु० प० अ०)। घञ् । (३।३।१९) । खल् (३।३।१२६) वा । 'दु स्पर्शो धन्वयासे ना कण्टकार्यां स्त्रिया त्रिषु । खरस्पर्शे [ इति मे० १६४।२१ ] ॥ (३) ॥*॥ धन्वनो यास मरुभवत्वात् ॥ (४) ॥*॥ कु नाशयति । 'णश अदर्शने' (दि० प० अ०) ण्यन्त । पचाद्यच् (३।१।१३४) । स्वार्थे कन् ॥ (५) ॥*॥ रोदयति । 'रुदिर् अश्रुविमोचने' (अ० प० से०) । ल्युट् (३।३।११३) । 'रोदन क्रन्दनेऽस्रेऽपि दुरालम्भौषधौ स्त्रियाम्' [ इति मे० ९१।१७] ॥*॥ रोदनी' (इति स्वामी) ॥ (६) ॥*॥ कच्छू राति । रा दाने' (अ० प० अ०) । आत—' (३।२।३) इति क । पृषोदरादित्वात् (६।३।१०९) ह्रस्व । कच्छुरा शूकशिम्ब्या च शठीदु स्पर्शयोरपि' [ इति मे० १३२।१२६ ] ॥ (७) ॥ * ॥ नान्तोऽस्या । 'अनन्ता च विशल्याया शारिवादूर्वयोरपि । कणादुरालभापथ्यालाङ्गल्यामलकीषु च । (विश्वम्भराशुक्लयो स्याद् )' [ इति मे० ६०।८२–८३ ] ॥ (८) ॥*॥ समुद्रान्तोऽस्त्यस्या । अर्शआद्यच् (५।२।१२७) । समुद्रोऽन्तोऽस्या । 'समुद्रान्ता तु कार्पासीपृक्कादुरालभासु च' [ इति मे० ७१। २२५] ॥ (९) ॥*॥ दु खेनालभ्यते । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०) । ईषद्दु सुषु—' (३।३।१२६) इति खल् । आगमशास्त्रस्यानित्यत्वान्न नुम् ॥ (१०) ॥*॥ दश 'धन्वयासस्य यवासा' इति ख्यातस्य ।

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ॥ ९२ ॥

क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ।

पृश्निपर्णी, पृथक्पर्णी, चित्रपर्णी, अङ्घ्रिपर्णिका, क्रोष्टुविन्ना, सिंहपुच्छी, कलशि, धावनि, गुहा (९ स्त्री), 'पिठिवन' के ९ नाम हैं।

पृश्नीति ॥ पृश्निरल्पं पर्णमस्या । 'पाककर्ण–' (४।१।५४) इति ङीष् ॥ (१) ॥*॥ पृथगमस्तं पर्णमस्या । ङीष् (४।१।५४) ॥ (२) ॥*॥ चित्रं पर्णमस्या ॥ (३) ॥*॥ अङ्घ्रेरालभ्य पर्णान्यस्या । ङीष् (४।१।५४)। स्वार्थे कन् (५।३।७५) ॥ * ॥—अङ्घ्रि मूलमारभ्य वल्लिरस्या । 'अङ्घ्रिवल्लिका'—इति मुकुट ॥ (४) ॥*॥ क्रोष्टुभिर्विन्ना विचारितेव । दत्तेव. इति वा ॥ (५) ॥*॥ सिंहपुच्छमस्या ,सिंहपुच्छाकारपुष्पत्वात् । 'उपमानात् पक्षाच्च पुच्छाच्च'(वा० ४।१।५) इति ङीष् ॥(६) ॥*॥'कलशुके त्रिप्वजीर्णे [ 'वाग्रक्तमधुरध्वनौ' इति मे० १४५।६]। कलं द्यति । 'दो तनूकरणे' (दि० प० अ०) । इन् (उ० ४।११८) । बाहुलकादाकारलोप ॥ (७) ॥*॥ धावति । 'धावु गतिशुद्धयो' (भ्वा० उ० से०) । बाहुलकादनि ॥ (८) ॥ * ॥ गूहति । 'गुहू संवरणे' (भ्वा० उ० से०) । 'इगुपध–' ( ३।१।१३५ ) इति क ॥ (९) ॥*॥ नव 'सिंहपुच्छपा ' 'पिठवनी' इति ख्याता ।

**निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ॥९३॥**
**प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि।**

निदिग्धिका, स्पृशी, व्याघ्री, बृहती, कण्टकारिका, प्रचोदनी, कुली, क्षुद्रा, दुःस्पर्शा, राष्ट्रिका ( १० स्त्री ), 'भटकटैया, रेंगनी' के १० नाम हैं।

निदीति ॥ निदिह्यते स्म । 'दिह उपचये' (अ० उ० अ०) । क्त. (३।२।१०२) । टाप् (४।१।४) स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ स्पृशति । 'स्पृश स्पर्शने' (तु० प० अ०) । 'इगुपध–' (३।१।१३५) इति क ।—'स्पृश बाधनस्पर्शनयो.'—इति मुकुटोक्त निर्मूलम् । गौरादि (४। १।४१)॥(२)॥*॥ व्याजिघ्रति । 'उपभित व्याघ्रादिभि –' ( २।१।५६ ) इति लिङ्गात् 'आतश्चोपसर्गे' (३।१।१३६) इति कः । न तु 'पाघ्रा–' ( ३।१।१३७ ) इति श । गौरादि ( ४।१।४१ ) ॥(३)॥*॥ बृहति । 'बृह वृद्धौ' (भ्वा० प० अ०) । 'वर्तमाने पृषद्बृहत्–' (उ० २।८४) इति निपात. । उगित्वात् ङीप् ( ४।१।६ ) । 'क्षुद्राया क्षुद्रवार्ताक्यां बृहती छन्दसि वर्त्मनि' इति शाश्वत ॥(४) ॥*॥ कण्टकानियर्ति । 'ऋ गतौ' (जु० प० अ०) । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (५।३।७५) ॥ (५) ॥*॥ प्रचोदयति । 'चुद सचोदने' (चु० प० से०) । ल्युट् (३। ३।११३) ॥ (६) ॥*॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति क । गौरादिः ( ४।१।४१ ) ।—णिजन्तेन विगृह्य 'क'—इत्यभिधान मुकुटस्य चिन्त्यम् । णिजन्तस्येगुपधत्वाभावात् अनुपयोगाच्च ॥ (७) ॥*॥ क्षुणत्ति । 'क्षुदिर् संपेषणे' (रु० उ० अ०) । 'स्फायि–' (उ० २।१३) इति रक् । यत्तु—'क्षुद सप्रेरणे'—इति धातुरन्यस्तो मुकुटेन । स धातुपाठे न लभ्यते । 'क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिस्रामक्षिकामात्रयोरपि' [इति मे० १२४।१८] ॥ ( ८ ) ॥*॥ दुस्पृश्यते । 'ईषद्दुर्–' (३।३।१२६) इति खल् ॥ (९) ॥*॥ 'राष्ट्रं स्यात्सूपवर्तने' । उपद्रवे क्लीबपुंसो ' [ इति मे० १२८।७८–७९ ] । राष्ट्रमस्त्यस्या. । 'अत –' ( ५।२।११५ ) इति ठन् ॥ ( १० ) ॥*॥ दश 'कण्टकारिकाया ' 'भटकटा' इति ख्याताया ।

**नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥९४॥**
**रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी।**

नीली, काला, क्लीतकिका, ग्रामीणा, मधुपर्णिका, रञ्जनी, श्रीफली, तुत्था, द्रोणी, दोला, नीलिनी ( ११ स्त्री ), 'नील' के ११ नाम हैं।

नीलीति ॥ 'नीलादोषधौ' ( वा० ४।१।४२ ) इति ङीष् । 'नीली रुग्भेदनील्योः' [इति मे० १४७।२९] ॥ ( १ ) ।*॥ कल्यते । 'कल क्षेपे' ( चु० प० से० ) । कर्मणि घञ् (३।३।१९) । यत्तु—कर्मणि 'एरच्' (३।३।५६)—इति मुकुटेनोक्तम् । तन्न । कलधातोरिवर्णान्तत्वाभावात् । वृद्ध्यभावप्रसङ्गाच्च । व्यस्तत्वे 'कल्यते' इति विग्रहप्रदर्शनस्यासंभवाच्च । वर्णत्वाभावान्न ङीप् । 'काला तु कृष्णत्रिवृतामञ्जिष्ठानीलिकासु[2] च' [इति मे० १४५। ८] ॥ (२) ॥*॥ क्लीतक क्योऽस्त्यस्या । कपिलिकादित्वात् (वा० ८।२।१८) लत्वम् । 'अत –' (५।२।११५) इति ठन् । 'क्रीतक विनिमय ' इति स्वामि-मुकुटौ ॥ ( ३ ) ॥*॥ ग्रामे भवा । 'ग्रामाद्यखञौ' ( ४।२।९४ ) । 'ग्रामीणा नीलिकाया स्त्री ग्रामोद्भूतेऽभिधेयवत्' [इति मे० ४८।४६] ॥ ( ४ ) ॥ * ॥ मधुराणि पर्णान्यस्या । 'पाककर्ण–' (४।१।५४) इति ङीष् । 'मधुपर्णी तु गम्भार्या[3] नीलीसञ्ज्ञौषधावपि' [इति मे० ५२।१०५] ॥ (५) ॥*॥ रञ्जयति । ल्युट् (३।३।११३) । णिलोपस्य स्थानिवद्भावात् 'असनयोश्च' इति नलोपो न । रज्यतेऽनया, इति विग्रहे तु 'करणा–' (३।३।११७) इति ल्युट् भवत्येव । 'रञ्जेः क्युन्' ( उ० २।७९ ) इति वा । "गुडा[4]रोचनिकानीली-

१. 'स्पृता' इति पा० ।

१ 'स्यादुपवर्तने' इति पा० ।
२. '—कृष्णात्रिवृता ·····नीलिनीषु च' इति पा० ।
३ 'गाम्भीर्या' इति पा० ।
४. 'गुण्डारोचनिका' इति पा० ।

मञ्जिष्ठासु च रञ्जनी। रजनी नीलिनीराजिहरिद्राजतुकासु[२] च' [ इति मे० ९११३-१४ ] ॥ ( ६ ) ॥*॥ श्रीमत् फलमस्या । श्रीफः पुंसि मालूरे धात्रीनीलिकयो स्त्रियाम्' [इति मे० १५४।१३८] ॥ (७) ॥*॥ तुद्यते । 'तुद व्यथने' (तु० उ० अ०)। 'पातृतुदि-' (उ० २।७) इति थक। तुत्थयति वा। तुत्थ आवरणे'। पचाद्यच् ( ३।१।१३४ ) । तुत्थमञ्जनभेदे स्यान्नीली[३]सूक्ष्मैलयो स्त्रियाम्' [इति मे० ७२।८] । (८) ॥*॥ द्रवति । 'द्रु गतौ' ( भ्वा० प० अ० )। 'वहिश्रि-' (उ० ४।५१) इति नित् ॥*॥ तूणी'—इति स्वामी । 'तूण पूरणे' ( चु० आ० से० ) । तूण्यतेऽनया । 'हलश्च' (३।३।१२१) इति घञ् । गौरादि (४।१।४१) । तूणी नील्या निषङ्गे ना' [ इति मे० ४६।१६ ] ॥ ( ९ ) ॥*॥ दोलयति । 'दुल उत्क्षेपे' ( चु० प० से० ) । पचाद्यच् । 'दोला नील्या यानान्तरेऽपि च' [ इति मे० १४७।२७ ] ॥ * ॥ मेला' [इत्येके] इति स्वामी । 'तुत्था श्रीफलिका मेला सारवाही च रञ्जनी इति निघण्टु ॥(१०)॥*॥ नीलो वर्णोऽस्त्यस्या । अत -' ( ५।२।११५ ) इनीति ॥ (११) ॥*॥ एकादश नील्या' 'नील' इति ख्यातस्य ।

**अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५**
**कालमेषी कृष्णफला वाकुची पूतिफल्यपि ।**

अवल्गुज ( पु), सोमराजी, सुवल्लि, सोमवल्लिका, कालमेषी, कृष्णफला, वाकुची, पूतिफली (८ स्त्री), 'वाकुची, बकुची' के ८ नाम हैं।

अवेति ॥ अवल्गोरङ्गाज्जात ॥ (१) ॥*॥ सोम इव सोमेन वा राजति । 'राजृ दीप्तौ' (भ्वा० उ० से० ) । '-उपमाने' ( ३।२।७९ ) इति 'सुप्यजातौ-' (३।२।७८) इति वा णिनि ॥ ( २ ) ॥ ॥ शोभना वल्लिरस्या ॥ ( ३ ) ॥*॥ सोमस्य वल्लि । स्वार्थे कन् (५।३।७५)॥ (४) ॥*॥ काल मिषति[४]। मिष स्पर्धायाम्' ( तु० प० से० ) । कर्मण्यण्' ( ३।२।१ ) ॥ ( ५ ) ॥*॥ कृष्ण फलमस्या । अजादित्वात् (४।१।४) टाप् ॥ (६) ॥*॥ वातं वोचयति । 'कुच शब्दे तारे' ( भ्वा० प० से० ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) क । पृषोदरादि (६।३।१०९) ॥*॥ सुकुटस्तु—वाच गुञ्जति । 'वागुजी' इत्याह । 'गुजि अव्यक्ते शब्दे' ( भ्वा० प० से० ) । पूर्ववत् । गौरादि (४।१।४१) ॥ ( ७ ) ॥*॥ पूति फलेऽस्या । 'पाककर्ण-' (४।१।६४) इति ङीप् ॥(८)॥*॥ अष्टौ 'बकुची' इति ख्यातायाः ।

**कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥**
**उषणा पिप्पली शौण्डी कोला**

कृष्णा, उपकुल्या, वैदेही, मागधी, चपला, कणा, उषणा, पिप्पली, शौण्डी, कोला ( १० स्त्री ), 'पीपरि' के १० नाम हैं।

कृष्णेति ॥ कृष्णो वर्णोऽस्त्यस्या । अर्शआद्यच् (५।२।१२७ ) । 'कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति' [ इति मे० ४५।८ ] ॥ ( १ ) ॥*॥ उपकोलति । 'कुल संस्त्याने बन्धुषु च' ( भ्वा० प० से० ) अघ्न्यादि (उ० ४।११२ ) ॥*॥ उपगता कुल्याम्, इति वा ॥ ( २ ) ॥*॥ विदेहेषु भवा । 'वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च' [इति मे० १७७।२४] ॥ (३) ॥*॥ मगधेषु भवा । 'मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे । पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकवन्दिनो' [ इति मे० ८१।३४-३५ ]॥ ( ४ ) ॥*॥ चपति । 'चप सान्त्वने' (भ्वा० प० से०)। वृषादित्वात् ( उ० १।१०६ ) कलच् । 'चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च' [ इति मे० १५१।८७-८८ ] ॥ (५) ॥*॥ कणति । 'कण शब्दे' (भ्वा० प० से०) अन्तर्भावितण्यर्थ । पचाद्यच् ( ३।१।१३४ ) । 'कणा जीरककुम्भीरमक्षिकापिप्पलीषु च' [ इति मे० ४५।५ ] ॥(६) ॥*॥ ओषति । 'उष दाहे' ( भ्वा० प० से० ) । बाहुलकात् क्युन् ( उ० २।७८ ) ॥*॥ ['ऊषणम्' इति] दीर्घादिरपि । ऊषति । 'ऊष रुजायाम्' (भ्वा० प० से०) । 'ऊषण मरिचे क्लीब कणायामूषणा स्त्रियाम्' [इति मे० ४७।३६ ] ॥ (७) ॥*॥ पिपर्ति । 'पॄ पालनपूरणयो' ( जु० प० से०)। बाहुलकादलच् । पृषोदरादि । गौरादि (४।१।४१)। 'पिप्पल सलिले वस्त्रच्छेदभेदे च ना तरौ । निरंशुके[१] पक्षिभेदे कणाया पिप्पली स्मृता' [ इति मे० १५३।१११-१२]।(८)॥*॥ शुण्डाया मद्यपानगृहे भवा । शौण्डी मत्ते च विख्याते पिप्पल्या तु भवेत्स्त्रियाम्' [ इति मे० ४२।२५-२६] ॥ ( ९ ) ॥*॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । 'कोल कोलफले क्लीब पिप्पलीचव्ययो स्त्रियाम्' [इति मे० १४५।११] ॥ ( १० ) ॥*॥ दश 'पिप्पल्या' ।

१ 'नलिनी' इति पा० ।

२ 'रजनी शब्दार्थकत्वात् 'रजनी ... यासु च' इत्यस्य प्रकृतानुपयोगी।

३ 'नीलसूक्ष्मै' इति पा० ।

४ 'कालेन मिष्यते स्पर्द्धते कालमेषी कृष्णफलत्वात्' इति स्वामी ।

१ 'निरंशुके' इति पा० ।

**अथ करिपिप्पली।**

**कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥**

**करिपिप्पली, कपिवल्ली, कोलवल्ली, श्रेयसी (४ स्त्री), वशिरः (पु), 'गजपीपरि' के ५ नाम हैं।**

अथेति ॥ करीव पिप्पली। बृहत्त्वात् ॥ (१) ॥*॥ कपिरिव वल्ली ॥*॥ कोल इव वल्ली। तयोस्तुल्यरोमत्वात् ॥ (२) ॥*॥ (३) ॥*॥ अतिशयेन प्रशस्ता। 'श्रेयसी करिपिप्पल्यामभयापाठयोरपि' [ इति मे० १७३। ४३ ] ॥ (४) ॥*॥ वस्ते। 'वस' आच्छादने' ( अ० आ० से० )। बाहुलकादिरच् ॥*॥ तालव्यपाठे तु—वष्टि। 'वश कान्तौ'[1] ( अ० प० से० )। संज्ञापूर्वकत्वान्न सम्प्रसारणम्। 'वशिर पुमान्। किणिहीहस्तिपिप्पल्यो क्लीबेऽब्धिलवणे स्मृत.' [ इति मे० १३७।२०८ ] ॥ (५) ॥*॥ पञ्च 'गजपिप्पली' इति ख्यातायाः।

**चव्यं तु चविकम्**

**चव्यम्, चविकम् ( २ न ), 'चाभ, चव्य' के २ नाम हैं।**

चेति ॥ चर्व्यते। 'चर्व अदने' ( भ्वा० प० से० )। ण्यत् ( ३।१।१२५ )। पृषोदरादि' (६।३।१०९)। 'चव्य तु चविके क्लीबं वचायामपि योपिति' [ इति मे० ११८। २१ ] ॥ ( १ ) ॥ क्वुन् ( उ० २।३२ )। चविकम् ॥ ( २ ) ॥*॥ [ 'चव्या' इति ] स्त्रियामपि। 'चव्या कोला च चविका चव्यं कुञ्जरपिप्पली'इति हट्टचन्द्रः ॥(१) ॥*॥ द्वे 'चव्य' इति ख्यातस्य। केचित्तु पूर्वान्वयमाहुः। यदाह चन्द्रनन्दनः— 'चव्या कोलाथ चविका श्रेयसी गज-पिप्पली। चपवनः कोलवल्ली तु चव्य कुञ्जरपिप्पली'। अत्र पक्षे 'तु'स्थाने 'च' पाठ्य.।

**काकचिचागुञ्जे तु कृष्णला।**

**काकचिञ्चा, गुञ्जा, कृष्णला ( ३ स्त्री ), 'गुंजा, लाल घुंघुची, करेजनी' के ३ नाम हैं।**

काकेति ॥ काकवर्णा चिञ्चा ॥*॥ गौरादि ( ४।१। ४१ ) इति स्वामी ॥ ( १ ) ॥*॥ गुञ्जति। 'गुजि अव्यक्ते शब्दे' (भ्वा० प० से०)। पचाद्यच् ( ३।१।१३४)। 'गुञ्जा तु काकचिचायां पटहे च कलध्वनौ' [ इति मे० ३०।९ ] ॥ ( २ ) ॥*॥ कृष्णं वर्णं लाति ॥(३) ॥*॥ त्रीणि 'गुञ्जायाः' 'घोगची' इति ख्यातायाः।

**पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥**
**गोकण्टको गोक्षुरको वनशृंगाट इत्यपि।**

**पलङ्कषा, इक्षुगन्धा, श्वदंष्ट्रा (३ स्त्री), स्वादुकण्टकः, गोकण्टक, गोक्षुरक, वनशृङ्गाटः (४ पु), 'गोखरू' के ७ नाम हैं।**

पलमिति ॥ पलं मांसं कषति। 'कष हिंसार्थ' (भ्वा० प० से० )। मूलविभुजादित्वात् ( वा० ३।२।५ ) कः। पृषोदरादि ( ६।३।१०९ )—'तत्पुरुषे–' ( ६।३।१४ ) इति द्वितीयाया अलुक्—इति मुकुट। तन्न। अलौकिकविग्रहेऽमांऽप्रवेशात्। 'पलङ्कषा गोक्षुरके स्त्रियां राक्षापलाशयो.' इति मूर्धन्यान्तेषु रभस। यत्तु—'कषंति' इति विगृह्य 'पृषोदरादि '(६।३।१०९) – इत्युक्तम्। तच्चिन्त्यम्। कपिनैव सिद्धत्वात्। अच्प्रत्ययविधानमपि चिन्त्यम्। कर्मण्यण प्रसङ्गात्। 'पलङ्कषा गोक्षुरके रास्नागुग्गुलुकिंशुके। तु(मु)ण्डीरीलाक्षयोश्च स्त्री राक्षसे तु पलङ्कष'[1] [ इति 'विश्व १७३।३४, मे० प १६९।५४ ५५] ॥ (१) ॥*॥ इक्षुगन्ध इव गन्धोऽस्याः। समासान्तो विधिरनित्य। 'इक्षुगन्धा काण्डेक्षौ कोकिलाक्षे क्रोष्ट्र्या काशे च गोक्षुरे' [इति मे० ८२।४४]॥ ( २ ) ॥*॥ शुनो दंष्ट्रेव। संज्ञापूर्वकत्वान्न दीर्घ ॥(३) ॥*॥ स्वादु कण्टकोऽस्य ॥ ( ४ ) ॥*॥ गोर्धेनो पृथिव्या वा कण्टक। 'गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे' [ इति मे० १५।१८६ ] ॥ ( ५ ) ॥*॥ क्षुरति। 'क्षुर विलेखने' ( तु० प० से० )। 'इगुपध–' ( ३।१।१३५ ) इति क, स्वार्थे कन् (५।३।७५)। गोर्गौर्वा क्षुरक ॥(६) ॥*॥ वनस्य शृङ्गाट इव। 'श्वदंष्ट्रो गोक्षुरस्त्रिकण्टकपुट. श्वदंष्ट्रा स्वादुकण्टक' इति रभस ॥ ( ७ ) ॥*॥ सप्त 'गोक्षुरस्य' 'गोखुरू' इति ख्यातस्य।

**विश्वा विषा प्रतिविषातिविषोपविषारुणा ॥ ९९ ॥**
**शृङ्गी महौषधं च**

**विश्वा, विषा, प्रतिविषा, अतिविषा, उपविषा, अरुणा, शृङ्गी (७ स्त्री), महौषधम् (न), 'अतीस' के ८ नाम हैं।**

वीति ॥ विशति। 'विश प्रवेशने' ( तु० प० अ० )। 'अशू प्रुषि–' (उ० १।१५१) इति क्वन्। 'विश्व समस्ते जगति, विश्वे देवेषु[2], नागरे। विश्वा चातिविषायां स्यात्' [इति त्रि० १६३।११] ॥ ( १ ) ॥*॥ वेवेष्टि। 'विष्लृ व्याप्तौ' ( जु० उ० से० )। 'इगुपध–' (३।१।१३५) इति क। 'विष जलेऽतिविषायां स्त्रियां, क्ष्वेडे तु न स्त्रियाम्' [ इति मे० १६७।२५ ] ॥ ( २ ) ॥*॥ प्रतीपं विष-

---

1. मूले तालव्यमध्यस्य पाठात् 'वश कान्तौ' इत्यंशो 'मेदिनी'स्थस्य अनन्तरंपठ नीय आसीत्।

1. विश्वे तु '—गोक्षुरकरास्ना··· तुण्डीरीलाक्षयोश्चापि राक्षसेऽपि पलङ्कष' इति पा०।

2. 'विश्वदेवेऽपि' इति पा०।

मस्या ॥ ( ३ ) ॥*॥ विषमविक्रान्ता ॥ ( ४ ) ॥*॥ विषमुद्गता ॥ (५) ॥*॥ अरणो वर्णोऽस्या । 'अरणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च' [ इति मे० ४७।३३-३४] ॥ (६) ॥*॥ शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से० ) । 'शृणातेर्ह्रस्वश्च' ( उ० १।१२६ ) इति गन् किन् नुट् च । गौरादि ( ४।१।४१ ) । 'शृङ्गी विषायामृषभे स्वर्णमीनविशेषयो' इति विश्व [ २५।२२ ] ॥(७) ॥*॥ महच्च तदौषध च । 'महौषध तु शुण्ठ्या स्याद्विषाया लशुनेऽपि च' [इति मे० ८२।४८] ॥ (८) ॥*॥ अष्टौ 'अतिविषाया' 'अतीस' इति ख्यातस्य ।

अथ क्षीरावी दुग्धिका समे ।

क्षीरावी, दुग्धिका (२ स्त्री), 'दुधिया घास' के २ नाम हैं।

अवतीति ॥ क्षीरमवति । 'अव रक्षणादौ ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) ॥ ( १ ) ॥*॥ दुग्धमस्त्यस्या । ठन् ( ५।२।११५ ) ॥ ( २ ) ॥*॥ द्वे 'दुग्धिकाया' 'दुधी' इति ख्याताया ।

शतमूली बहुसुताऽभीरुरिन्दीवरी वरी' ॥ १०० ॥
ऋष्यप्रोक्ताभीरुपत्रीनारायण्य' शतावरी ।
अहेरुः

शतमूली, बहुसुता, अभीरु, इन्दीवरी, वरी, ऋष्यप्रोक्ता, अभीरुपत्री, नारायणी, शतावरी, अहेरु ( १० स्त्री ), 'शतावर' के १० नाम हैं ।

शतेति ॥ शत मूलान्यस्या ॥ (१) ॥*॥ बहव सुता यस्या ॥ (२) ॥*॥ न भीरु । स्थिरपत्रत्वात् ॥ (३) ॥*॥ नीलोत्पलाकारपुष्पत्वाद् इन्दीवरमस्त्यस्या । अर्शआद्यच् ( ५।२।१२७ ) । 'इन्दीवर कुवलये शतावर्यां तु योषिति' [ इति मे० १४०।२४९ ] ॥ ( ४ ) ॥*॥ वृणोति (गन्धेनेन्द्रियम्) । पचाद्यच् (३।१।१३४) । गौरादि ( ४।१।४१ ) ॥ (५) ॥*॥ ऋष्यै प्रोक्ता । 'ऋष्यप्रोक्ता शतावर्यं तिबलाशूकशिम्बिषु'[इति मे० ६८।१९२]॥ (६) ॥*॥ अभीरूणि पत्राण्यस्या । पाककर्ण-' (४।१।६४) इति ङीष् ॥ (७) ॥*॥ नारायणाज्जाता । 'नारायणोऽच्युतेऽभीरुगौर्योर्नारायणी मता'[इति मे० ५२।९८]॥ ( ८ ) ॥*॥ शतेनावृणोति । पचाद्यच् ( ३।१।१३४ ) । गौरादि ( ४।१।४१ ) । 'शतावरी तु शच्या[2] स्यादिन्दीवर्यामपि स्त्रियाम्' [ इति मे० १४४।२९८ ] ॥ (९)॥*॥ न हिनोति । 'हि गतौ' (स्वा० प० अ०) । बाहुलकाद्रु ॥ ( १० ) ॥*॥ दश 'सहस्रमूल्या' 'शतावरी' इति ख्याताया ।

१ 'वरा' इति स्वामिसम्मत पा० ।
२ 'शुण्ठ्या' इति पा० ।

अथ पीतद्रुकालेयकहरिद्रवः ॥ १०१ ॥
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ।

पीतद्रुः, कालेयकः, हरिद्रः (३ पु), दार्वी, पचंपचा, दारुहरिद्रा, पर्जनी (४ स्त्री), 'दारुहल्दी' के ७ नाम हैं।

अथेति ॥ पीतं द्रवति । 'द्रु गतौ' (भ्वा० प० अ०) । मितद्र्वादित्वात् (वा० ३।२।१८०) डु । यत्तु—मुकुटेनोक्तम्— 'अपघ्नादय' इति कु —इति । तन्न । टिलोपस्यालाभात् । एतादृशसूत्राभावाच्च ॥ (१) ॥*॥ कलेरयम् । 'सर्वत्राग्निकलिभ्या ढक्' (वा० ४।२।८) । स्वार्थे कन् (५।३।७५) ॥*॥ 'कालीयक' इति वा पाठ । कालस्य वर्णं स्यायम् । 'वृद्धाच्छ' (४।२।११४)। 'निर्दिष्टा वै कटङ्कटेरी म च कालेयक स्मृत । कालीयको दारुनिशा' इति रुद्र ॥ (२) ॥*॥ हरि पिङ्ग पीतो वा द्रुरस्य । 'हरिद्रु पीतचन्दनम्' इति निघण्टु ॥ (३) ॥*॥ दीर्यते । 'दॄ विदारणे' (क्र्या० प० से०)। 'दृगति–'(उ० १।३) इति वुण् । 'वोतः–' ( ४।१।४४ ) इति '–गौरादिभ्य –' (४।१।४१) इति वा ङीष् । 'दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ' [ इति मे० १५८।११ ] ॥ (४) ॥*॥ पचति । पचाद्यच् ( ३।१।१३४ ) । पृषोदरादि. ( ६।३।१०९ )। 'पीतदारु पचंपचा' इति निघण्टु (५) ॥*॥ दारुश्चासौ हरिद्रा च॥ (६) ॥*॥ पिपर्ति । 'पृ पालनपूरणयो.' (जु० प० से०)। विच् (३।२।७५) । पर् चासौ जनी च । पर पालक स्वास्थ्य जनयति वा । 'जनी प्रादुर्भावे'(दि० आ० से०)ण्यन्त । 'कर्मण्यण्' (३।२।१) ॥ (७) ॥*॥ सप्त 'पर्जन्या' 'दारहलदी' इति ख्याताया ।

वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥१०२॥

वचा, उग्रगन्धा, षड्ग्रन्था, गोलोमी, शतपर्विका (५ स्त्री), 'घुड़वच या वच' के ५ नाम हैं ।

वेति ॥ वक्ति । वचेरन्तर्भावितण्यर्थात् पचाद्यच् (३।१।१३४) । 'वच कीरे वचौषधौ । शारिकाया च' [ इति मे० २८।९ ] ॥ ( १ ) ॥*॥ उग्रो गन्धोऽस्या । 'उग्रगन्धाऽजमोदायां वचायां छिक्किकौषधौ' [ इति मे० ८२।४५ ] ॥ ( २ ) ॥*॥ षड् ग्रन्था ग्रन्थयो यस्या । 'षड्ग्रन्था तु वचाया स्त्री स्यात्करञ्जान्तरे पुमान्' [ इति मे० ७३।२४ ] ॥ ( ३ ) ॥*॥ गोर्लोमास्या । गोशब्दो गोलोमसदृशे लाक्षणिक । अच् (५।४।७५) योगविभागात् समासान्त । गौरादिङीष् ( ४।१।४१ ) । 'गोलोमी श्वेतदूर्वाया स्याद्वचाभूतकेशयो' [ इति मे० १११।४२] ॥ ( ४ ) ॥*॥ शत पर्वाण्यस्या सन्ति । व्रीह्यादित्वात् ( ५।२।११६ ) ठन् । डावन्तात्स्वार्थे कन् ( ५।३।७५ ) वा । 'शतपर्विका तु[1] दूर्वाया वचायामपि योषिति' [इति

१. 'तु' इति पाठो नोपलभ्यते ।

मे० ११।२३३] ॥ ( ५ ) ॥ * ॥ पञ्च 'वचायाः' 'वच' इति ख्यातायाः ।

शुक्ला हैमवती

हैमवती (स्त्री), 'खुरासानी वच' का १ नाम है ।

शुक्लेति ॥ हिमवति भवा । 'हैमवत्यभयास्वर्णक्षीर्यो श्वेतवचोमयो' [ इति मे० ७१।२३० ] ॥ (१) ॥*॥ एकं 'श्वेतमूलवचायाः' ।

वैद्यमातृसिंह्यौ तु वाशिका ।

वृषोऽटरूष सिंहास्यो वासको वाजिदन्तकः ॥१०३॥

वैद्यमाता, सिंही, वाशिका ( ३ स्त्री ), वृषः, अटरूषः, सिंहास्यः, वासकः, वाजिदन्तकः (५ पु), 'अडूसा, वासक' के ८ नाम हैं ।

वैद्येति ॥ वैद्यस्य मातेव ॥ ( १ ) ॥*॥ हिनस्ति । 'हिसि हिंसायाम्' ( रु० प० से० ) । पचाद्यच् (३।१।१३४) । पृषोदरादि (६।३।१०९) । गौरादि ( ४।१।४१) । 'सिंही तु कण्टकार्यां स्याद् [वार्ताकी वासकेऽपि च' इति मे० १७६।१२]। 'सिंही स्वर्भानुमातरि । वासा-वृहत्यो क्षुद्रायाम्' [इति हैम. २।६१७-१८] ॥(२)। *॥ वाशयते । 'वाशृ शब्दे' ( दि० आ० से० ) । 'गुरोश्च-' (३।३।१०३) इत्य । स्वार्थे कन् । यद्वा–उश्यते । 'वश कान्तौ' ( अ० प० से०) । 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् ॥ * ॥ दन्त्यान्त [ वासिका ] अपि । वासयति । पचाद्यच् ( ३।१।१३४ ) । [ वासो वेश्मन्यवस्थाने वासा स्यादटरूपके' इति हैम २।६०५ ] । 'वासो गृहेऽप्यवस्थाने वासा स्यादटरूपके' इति रुद्र ॥ (३) ॥*॥ वर्षति मधु । 'वृषु सेचने' (भ्वा० प० से०) । 'इगुपध-' (३।१।१३५) इति क । 'वृष स्याद्वासके धर्मे सौरभेये च शुक्ले' इति मूर्धन्यान्ते विश्व [ १७१।१-२ ] । यत्तु–वृष्यते पीयते । 'वृष पाने' । 'घञर्थे क' (वा० ३।३।५८)—इति मुकुटेनोक्तम् । तन्न । धातुपाठेऽदर्शनात् । परिगणनाच्च ॥ (४) ॥*॥ अटान् गच्छतो रोषति । 'रुष हिंसायाम्' ( भ्वा० प० से०)। मूलविभुजादि (वा० ३।२।५) । अटं रुषति । 'रुष मिश्रणे' ( भ्वा० प० से० ) । 'इगुपध-' ( ३।१।१३५) । इति के 'दीर्घोकारवान् [ अटरूषकः ] अपि । 'वैद्यमाताटरूषकः । सिंहास्यो वाजिदन्तकः' इति रभस । 'वृषो वासाटरूपकः' इति माधव ॥(५)॥*॥ सिंह आस्यमस्य । सिंहास्यसदृशपुष्पत्वात् ॥ (६) ॥*॥ वासयति । ण्वुल् ( ३।१।१३३ ) । वस्ते आच्छादयति वा ॥ ( ७ ) ॥*॥ वाजी दन्तोऽस्य । वाजिदन्ताभकेसरत्वात् । तादृशपुष्पत्वाद्वा ॥ ( ८ ) ॥*॥ अष्टौ 'अटरूषस्य' 'अरडूसा' (अडूसा) इति ख्यातस्य ।

आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ।

आस्फोटा, गिरिकर्णी, विष्णुक्रान्ता, अपराजिता (४ स्त्री), 'अपराजिता' के ४ नाम हैं ।

आस्फोटेति ॥ आस्फोटयति । 'स्फुटिर् विकसने' (भ्वा० प० से०) ण्यन्त । अच् (३।१।१३४) । पृषोदरादि: ( ६।३।१०९ ) । 'आस्फोता गिरिकर्ण्यां च वनमल्लयां च योषिति' [इति मे० ६०।९२-९३] ॥(१)॥*॥ गिरिर्वालमूषिका कर्णोऽस्याः, तत्कर्णतुल्यपत्रत्वात् ॥ (२) ॥ * ॥ विष्णुना क्रान्ता ॥ ( ३ ) ॥ * ॥ न पराजिता । अपराजित ईशाजेष्ठयन्तरे ( ? ) नाऽजिते त्रिषु । गिरिकर्णीजयादुर्गाशालपर्णीषु योषिति' [इति मे० ७१।२३१] ॥ ( ४ ) ॥ * ॥ चत्वारि 'विष्णुक्रान्तायाः' । स्वामी तु—वामकपर्यायानिमान् मन्यते ।

इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥

इक्षुगन्धा (स्त्री), काण्डेक्षुः, कोकिलाक्षः, इक्षुरः, क्षुरः (४ पु), 'तालमखाना' के ५ नाम हैं ।

ईति ॥ इक्षु गन्धोऽस्य । इक्षुशब्द इक्षुगन्धसदृशे लाक्षणिकः । 'इक्षुगन्धा कोकिलाक्षे क्रोष्ट्रया काशे च गोक्षुरे' [ इति मे० ८२।४४ ] ॥ (१) ॥*॥ काण्डेनेक्षुरिव ॥ (२) ॥*। कोकिलोऽक्षि यस्य । कोकिलशब्दः कोकिलाक्षिसदृशे लाक्षणिकः । 'अक्ष्णोऽदर्शनात्' ( ५।४।७६ ) इत्यच् ॥ (३) ॥*॥ इक्षुमिक्षुगन्धं राति । 'आतोऽनुप-' ( ३।२।३ ) इति क. ॥ ( ४ ) ॥*॥ क्षुर इव । 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वः [ १२६।१२ ] ॥ (५) ॥*॥ पञ्च 'कोकिलाक्षस्य' 'तालमखाना' इति ख्यातस्य ।

शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ।
मिश्रेयोऽपि

शालेयः, शीतशिवः (२ पु), छत्रा, मधुरिका, मिसिः (३ स्त्री), मिश्रेयः ( पु ) 'सोआ या वनसौंफ' के ६ नाम हैं ।

शेति ॥ शालीनां भवनं क्षेत्रं शालेयम् । तदस्यास्ति । अर्शआद्यच् (५।२।१२७) । 'शालेयः स्यान्मिसौ पुमान् । त्रिषु शाल्युद्भवे क्षेत्रे' [ इति मे० १२०।१०८ ] ॥ (१) ॥ * ॥ शीतमस्यास्ति । अच् ( ५।२।१२७ ) । शिवमस्यास्ति । अच् ( ५।२।१२७) । शीतश्चासौ शिवश्च । 'अथ शीतशिवं क्लीवं शैलेयमणिमन्थयोः । पुंसि सक्तुफलावृक्षे

१. मूले दीर्घमध्यस्यैव पाठात् पूर्वमस्यैव व्याख्योचिता ततो ह्रस्वमध्यस्येति ।

तथा मधुरिकौषधौ' [इति मे० १६२।६३-६४] ॥ (२) ॥ * ॥ छत्त्रमस्यास्ति। छत्त्राकारस्तवकत्वात्। 'छत्त्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयो। नपुंसकं चातपत्रे [इति मे० १२५।३८] ॥ ( ३ ) ॥*॥ मधुरो रसोऽस्त्यस्या। अच (५।२।११५)। 'मधुरा शतपुष्पाया मिश्रेया-नगरीभिदो। मधुकुक्कुटिकामेदामधूलीयष्टिकासु च। क्लीबं विषे पुंसि रसे तद्वत्स्वादुप्रियेऽन्यवत्' [इति मे० १३६।१९४-९५]॥ (४) ॥*॥ मस्यते। 'मसी परिमाणे' (दि० प० से०)। इन् (उ० ४।११८)। बाहुलकादत्त इ। 'स्यान्मास्या शतपुष्पाया मधुराया मिसि स्त्रियाम्' इति दन्त्यान्ते रभस। मिसि स्त्री मधुरामास्यो शतपुष्पाजमोदयो' [इति मे० १७०।८] ॥*॥ सोमनन्दी तु 'मिशी' 'मिशि' इति तालव्यान्ते आह। मि(मे)शति। 'मिश शब्दे'(भ्वा० प० से०)।'इगुपधात् कित्'(उ०४।१२०) इति इन्। ङीप् ( ग० ४।१।४५ ) वा ॥ ( ५ ) ॥*॥ मिश्रयति। अच् (३।१।१३४)। ईयते[1]। 'इण् गतौ' (अ० प० अ०)। 'अचो यत्' (३।१।९७)। मिश्रा चासावेया च। शकन्ध्वादि ( वा० ६।१।९४ ) ॥ (६) ॥*॥ पट 'मधुरिका' 'वनसोंफ' इति ख्यातायाः।

अथ सीहुण्डो वज्रद्रुः स्नुक्स्नुही गुडा ॥१०५॥
समन्तदुग्धा

सीहुण्ड, वज्र (२ पु), स्नुक्, स्नुही, गुडा, समन्तदुग्धा (४ स्त्री), 'सेंहुड' के ६ नाम हैं।

अथेति॥ 'सी' इति हुण्डते। 'हुडी वरणे (भ्वा० आ० से०)। पचाद्यच (३।१।१३४)।—सिंहतुण्डस्यापभ्रंशोऽयम्—इति स्वामी। पृषोदरादि। 'वज्रद्रुम सिहुण्डोऽथ' इति रभसात् द्रम्वादि [सिहुण्ड] अपि ॥ (१) ॥*॥ 'वज्रद्रु स्नुक स्नुही' इति पाठ।—वज्रनामा द्रु—इति मुकुट। स्वामी तु—'वज्र स्नुक् स्त्री स्नुही गुडा'—इति पठति। 'वज्रा स्नुह्या गुडूच्या च वज्री स्नुह्यन्तरे स्मृता' [इति मे० १२८।८१] ॥ ( २ ) ॥*॥ (स्नुह्यति)। 'ष्णुह उद्गिरणे' (दि० प० से०)। क्विप् (३।२।१७८)। 'वा द्रुह-'(८।२।३३) इति कुत्वम् ॥*॥ भागुरिमते टाप्। 'स्नुही च स्नुहा स्नुग्भा स्नुड्' इत्यमरदत्त ॥ (३) ॥*॥ 'इगुपधात् कित्' (उ० ४।१२०)। वा ङीप (ग० ४।१।४५) ॥ ( ४ ) ॥ * ॥ गुडति। 'गुड वेष्टने' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति क। 'गुडो गोलेक्षुविकृती स्नुहीगुडिकयोर्गुडा' इति रुद्र। 'गुडश्च स्नुहीगुड-योर्गुड ऐक्षवगोलयो' इत्यजय। [ गुड कुञ्जरसन्नाहे गोलकेक्षुविकारयो। गुडा तु गुडिकास्नुह्यो' इति हैम २।११७-१८ ] ॥ ( ५ ) ॥*॥ समन्ताद् दुग्धमस्या ॥ (६) ॥*॥ पट 'सेहुण्ड' इति ख्यातस्य।

अथो वेल्लममोघा चित्रतण्डुला।
तण्डुलश्च क्रिमिघ्नश्च विडङ्गं पुंनपुंसकम् ॥ १०६ ॥

वेल्लम् ( न ), अमोघा, चित्रतण्डुला (२ स्त्री), तण्डुल, कृमिघ्न (२ पु),विडङ्गम् (पु न), 'वायविडङ्ग' के ६ नाम हैं।

अथवेति॥ वेल्लति। 'वेल्ल चलने' (भ्वा० प० से०)। अच् (३।१।१३५)। 'अथ वेल्ल कृमिघ्नतण्डुलौ' इति रभस ॥ (१) ॥*॥ न मोघा। अमोघ सफले वाच्यवत् स्त्री पथ्याविडङ्गयो' [इति मे० २६।७] ॥*॥ मोघापि। 'कृमिघ्न तण्डुल मोघा' इति वाचस्पति ॥ (२) ॥*॥ चित्रास्तण्डुला अस्या ॥ (३) ॥ * ॥ तड्यते। तड आघाते' (चु० प० से०)। 'सानसिवर्णसि-' (उ० १। १०१) निपात। 'तण्डुल स्याद्विडङ्गेऽपि' धान्यादिनिकरे पुमान्' [इति मे० १५२।९६] ॥ * ॥ तन्तु कृमिसूत्र लाति। क ( ३।२।३ )।—'तन्दूल'—इति मुकुट ॥ (४) ॥*॥ कृमीन् हन्ति। 'अमनुष्यकर्तृके च' (३।२।५३) इति ठक् ॥ (५) ॥ * ॥ विडति। 'विड भेदने' (तु० प० से०)। 'विडादिभ्य कित्' (उ० १।१२१) इत्यङ्गच्। 'विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुनपुंसकम्' [इति मे० २५।४७] ॥ (६) ॥*॥ पट 'विडङ्गस्य'।

बला वाट्यालक

बला (१ स्त्री),वाट्यालक (पु),'खरिआरा' के २ नाम हैं।

बेति॥ बलति। [2]'बल संवरणे' (भ्वा० आ० से०)। पचाद्यच ( ३।१।१३४ )। बलमस्त्यस्या इति वा। अर्श आद्यच ( ५।२।११५ )। 'बलयुक्तेऽन्यलिङ्ग [3]स्याद्बला वाट्यालके स्त्रियाम्' [इति मे० १४७।३८] ॥ ( १ ) ॥*॥ वाटीमलति। 'अल भूषणादौ' ( भ्वा० प० से० )। 'कर्मण्यण्' ( ३।२।१ )। स्वार्थे कन् (५।३।७५)। वाट्या आलक ॥ ( २ ) ॥ * ॥ द्वे 'बलाया' 'बलिआर' इति ख्यातस्य।

घण्टारवा तु शणपुष्पिका।

घण्टारवा, शणपुष्पिका ( २ स्त्री ), 'सन, सनई' के २ नाम हैं।

१ एतदनन्तर 'ईङ् गतौ' ( दि० आ० अ० )—इति पाठ क्वचिदुपलभ्यते।

१ 'विडङ्गे च' इति पा०।

२ 'बल प्राणने' ( भ्वा० प० से० ) इति पाठो युक्तः। 'बल संवरणे' इति तु चिन्त्य प्रकृतविरोधात्।

३ 'स्याद्वाट्यालके तु योषिति' इति पा०।

घण्टेति ॥ घण्टेवारौति । अच् (३।१।१३४) ॥ (१) ॥*॥ शण' पुष्पं यस्या. । शणशब्दस्तत्पुष्पसदृशे लाक्षणिक' । 'पाककर्ण–' (४।१।६४) इति ङीष् । स्वार्थे कन् ( ५।३।७५ ) ॥ (२) ॥*॥ द्वे 'शणपुष्पिकाया.' 'घण्टा' इति ख्यातायाः ।

**मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥**

**मृद्वीका, गोस्तनी, द्राक्षा, स्वाद्वी, मधुरसा (५ स्त्री), 'दाख, मुनक्का' के ५ नाम हैं।**

मृद्वीति ॥ मृद्नाति । मृद्यते वा । 'मृद क्षोदे' (क्र्या० प० से०) । 'किङ्किणीकादयश्च' इति निपात ॥(१)॥*। गौ' स्तनोऽस्या । गोस्तनसदृशे गोशब्दो गौण । 'स्वाङ्गाच्चोपसर्जनात्–' ( ४।१।५४ ) इति ङीष् । 'गोस्तनो हारभेदे ना द्राक्षाया गोस्तनी स्त्रियाम्' [ इति मे० ८७। ५९] ॥ ( २ ) ॥ *॥ द्राङ्क्ष्यते । 'द्राक्षि काङ्क्षायाम्' (भ्वा० प० से०) । कर्मणि घञ् ( ३।३।१९ ) । आगमशासनमनित्यम् ॥ (३) ॥*॥ स्वदते । स्वद आस्वादने' (भ्वा० आ० से०) । 'कृवापा–' ( उ० ११ ) इत्युण् । 'वोतो गुण–' (४।१।४४ इति ङीप् ॥ (४) ॥*॥ मधु रसोऽस्या' । भवेन्मधुरसा द्राक्षामूर्वीकादुग्धिकासु च' [इति मे० १७४।६०] ॥ ( ५ ) ॥*॥ पञ्च 'द्राक्षाया.' 'दाख' इति ख्याताया: ।

**सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।**

**त्रिभण्डी रोचनी**

**सर्वानुभूतिः, सरला, त्रिपुटा, त्रिवृता, त्रिवृत्, त्रिभण्डी, रोचनी (७ स्त्री), 'सफेद निशोथ' के ७ नाम हैं।**

सर्वेति ॥ सर्वा अनुभूतयोऽस्याम् । सर्वैरनुभूयते । कर्मणि क्तिन् ( ३।३।९४ ) इति वा ॥ ( १ ) ॥ * ॥ सरति । 'सृ गतौ'(भ्वा० प० से०)। बाहुलकादलन् ॥*॥ 'सरणा' इति पाठे युच् ( ३।२।१५० ) । 'सर्वानुभूति सरला त्रिपुटा रेचनी सरा' इति वाचस्पति. ॥ (२) ॥*॥ त्रय' पुटा यस्या । 'त्रिपुटा मल्लिकाया च सूक्ष्मैला-त्रिवृतो स्त्रियाम्' [ इति मे० ३६।४४ ] ॥*॥ 'त्रिपुटी' इत्यपि । 'त्रिपुटी महती स्वाजा' इति वाचस्पतिः ॥ (३) ॥*॥ *त्रिभिरवयवैर्वृता ॥ ( ४ ) ॥ * ॥* त्रीनवयवान् वृणोति । 'वृञ् वरणे' (भ्वा० उ० से०) । क्विप् ( ३।२। १७८) । तुक् (६।१।७१) ॥ ( ५ ) ॥*॥ त्रीन् दोषान् भण्डते । 'भडि परिभाषणे' (भ्वा० आ० से०) । 'कर्मण्यण्' ( ३।२।१ ) ॥ (६) ॥*॥ रोचते । 'रुच दीप्तावभिप्रीतो च' ( भ्वा० आ० से० ) । ल्युट् ( ३।३।११३ ) ॥*॥ 'रेचनी' इति पाठे 'रिचिर् विरेचने' ( रु० उ० अ० ) । 'रेचनी त्रिवृतादन्त्योः । रोचनी कर्कशे 'स्मृता' [इति [2]मे० ९१।१६] ॥ ( ७ ) ॥ * ॥ सप्त 'शुक्लत्रिधारा' इति ख्याताया ।

**श्यामापालिन्द्यौ तु सुषेणिका ॥ १०८ ॥**

**काला मसूरविदलार्धचन्द्रा कालमेषिका ।**

**श्यामा, पालिन्दी, सुषेणिका, काला, मसूरविदला, अर्धचन्द्रा, कालमेषिका (७ स्त्री), 'काला निशोथ' के ७ नाम हैं।**

श्येति ॥ श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०)। 'इषियुधि–' (उ० १।१४५) इति मक् ॥ ( १ ) ॥*॥ पालयति । 'पाल रक्षणे' ( चु० प० से० ) । बाहुलकात् किन्दच् । गौरादि. ( ४।१।४१ ) ॥ (२) ॥*॥ सुष्ठु सेनया याति । सेनाशब्दात् 'सत्यापपाश–' (३।१।२५) इति णिच् । पचाद्यच् । 'एति संज्ञायामगात्' (८।३।९९) इति षत्वम् । स्वार्थे कन् ( ५।३।७५ ) ॥ (३) ॥*॥ कालयति । 'कल विल[3] क्षेपे' (चु० प० से०) ण्यन्त. । पचाद्यच् (३।१।१३४) ॥ (४) ॥*॥ मसूरवद् विदलमस्या ॥ ( ५ ) ॥*॥ अर्धश्चन्द्रो यस्या । एतद्विदलस्यार्धचन्द्राकारत्वात् ॥ (६) ॥*॥ काल मिषति । 'मिष स्पर्धायाम्' ( तु० प० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (७) ॥*॥ सप्त 'श्यामत्रिधारा' इति ख्याताया ।

**मधुकं क्लीतकं यष्टीमधुकं मधुयष्टिका ॥ १०९ ॥**

**मधुकम्, क्लीतकम्, यष्टीमधुकम् (३ न), मधुयष्टिका (स्त्री), 'मुलहठी, जेठीमधु' के ४ नाम हैं।**

मेति ॥ मध्विव । 'इवे–' (५।३।९६) इति कन् । 'मधुकं क्लीतके खगे । वन्यान्तरे[4] ना' [ इति मे० ११। १३६] ॥ ( १ ) ॥ * ॥ क्लीबनं । 'क्लीबृ अधार्ष्ट्ये' (भ्वा० आ० से०) । भावे क्त (३।३।११४) । आगमशासनमनित्यम् । क्लीतमधार्ष्ट्यं कलति[5] । 'कल क्षेपे' (चु० प० से०) । 'चुरादिभ्यो णिज्वा' इति णिजभाव । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । यत्तु— 'क्लीवृ मदे' इत्युक्तं मुकुटेन । तत् 'क्षीवृ मदे' इत्यस्य भ्रमात् । यद्वा–संपदादिक्विप् ( वा० ३।३।१०८ ) ।

१. 'स्त्रियाम्' इति पा० ।

२. 'रेचनी त्रिवृता दन्ती गुडरोचनिकासु च' इति विश्व (१९६।१३२) ।

३. अयं न प्रकृतोपयुक्त. ।

४. 'वेतयन्तरे' इति पा० ।

५. चुरादेः 'कलति' इति विग्रहो न संभवति तस्मात् 'कलयति' इति पाठो युक्तः ।

बाहुलकाद्वलोप । क्ली क्लीबत्व तकति । वृष्यत्वात् । 'तक हसने' ( भ्वा० प० से० ) । मूलविभुजादित्व ( वा० ३। २१५ ) ॥ ( २ ) ॥ * ॥ यष्टी मध्विवास्या । वप् (५।४।१५४) ॥ (३) ॥*॥ मधुयष्टीव । 'इवे–' (५। ३।९६) इति वन् । मधुयष्टी च यष्टी च यष्टीमधुत्रमेव च' इति वाचस्पति ॥ (४) ॥*॥ चत्वारि "यष्टिमधुकस्य' 'जेठीमधु' इति ख्यातस्य ।

विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च यासिता ।

विदारी, क्षीरशुक्ला, इक्षुगन्धा, क्रोष्ट्री ( ४ स्त्री), 'कृष्ण भूमिकूष्माण्ड' के ४ नाम हैं ।

वीति ॥ विदारयति । 'दृ विदारणे' ( क्र्या० प० से० ) ण्यन्त । पचाद्यच ( ३।१।१३४ ) । गौरादि ( ४।१।४१ ) । 'विदारी शालपर्ण्या च रोगभेदेक्षुगन्धयो' [ इति मे० १३८।२१७ ] ॥ ( १ ) ॥ * ॥ क्षीरमिव शुक्ला ॥ (२) ॥ * ॥ इक्षुर्गन्धाऽस्या । इक्षुशब्दस्तद्गन्धसदृशे गौण । समासान्तविधेरनित्यत्वान्नेत्वम् ॥(३) ॥*॥ क्रोशति । 'क्रुश आह्वाने [रोदने च'](भ्वा० प० से०) । 'सितनि–' (उ० १।६९) इति तुन् । स्त्रिया च' (७।१।९६) इति तृज्वत् । 'ऋन्नेभ्यो ङीप्' (४।१।५) । मुकुटस्तु—'ष्ट्रनि पिरवान ङीप—इत्याह । 'क्रोष्ट्री शृगालिकाकृष्णविदारीलाङ्गलीपु च' [ इति मे० १२४। २० ] ॥ ( ४ ) ॥ * ॥ चत्वारि' कृष्णभूकूष्माण्डस्य' । मुकुटस्तु—शुक्लस्य—इत्याह । तन्न । 'कृष्णविदारी' इति मेदिनीविरोधात् । एतेन—या सिता शुक्ला—इत्यपास्तम् । या असिता' इति छेत्तुमुचितत्वात् । स्वामी तु—विदार्यादित्रय पठित्वा 'कृष्णो भूकूष्माण्डोऽय प्राच्यदेशेषु' इत्युक्त्वा 'क्रोष्ट्री तु या सिता' इति पठित्वा शुक्लो भूकूष्माण्ड' इत्युक्त्वा 'अन्या क्षीरविदारी–' इति श्लोकपपाठ । तत्र विभागत्रयमनुचितम् । उक्तमेदिनीविरोधात् ।

अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ॥११०॥

क्षीरविदारी, महाश्वेता, ऋक्षगन्धिका ( ३ स्त्री), 'शुक्ल भूमिकूष्माण्ड' के ३ नाम हैं ।

अन्येति ॥ क्षीरवती विदारी ॥ (१) ॥*॥ महती चासौ श्वेता च ॥ (२) ॥*॥ ऋक्षान् गन्धयति । 'गन्ध अर्दने' ( चु० आ० से० ) । मूलविभुजादि (वा० ३।२। ५) । वन् (५।३।७५) । यद्वा–ऋक्षो गन्धोऽस्या । ऋक्ष शब्दस्तद्गन्धसदृशे गौण ॥ (३) ॥*॥ अन्या असितायाः शुक्ला—कृष्णा—इति मुकुटोक्त चिन्त्यम् । त्रीणि 'शुक्लभूकूष्माण्डस्य' ।

लाङ्गली शारदी तोयपिप्पली शकुलादनी ।

लाङ्गली, शारदी, तोयपिप्पली, शकुलादनी ( ४ स्त्री ), 'जलपीपरि' के ४ नाम हैं ।

लेति ॥ लाङ्गलाकारोऽस्त्यस्या । अर्शआद्यच् (५। २।१२७)। गौरादि (३।१।४१)। 'लाङ्गली तोयपिप्पल्या क्लीब तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेषयो' [ इति मे० १५४।१२८ ] ॥ (१) ॥*॥ शरदि भवा । 'सन्धिवेला–' (४।३।१६) इत्यण् । 'शारदो वत्सरे नवे । शारद्भवे पीतमुद्गे शालीनेऽप्यथ शारदी । सप्तपर्णाम्बुपिप्पल्यो' इति हैम [ ३।३६७ ] ॥ (२) ॥*॥ तोयस्य पिप्पलीव ॥ (३) ॥*॥ शकुलैरद्यते । 'अद भक्षणे' (अ० प० अ०) । कृत्यल्युट–' ( ३।३।११३ ) इति ल्युट् । टिड्ढा–' ( ४।१।१५ ) इति ङीप । युचि (उ० २।७८) तु गौरादित्वम् ( ४।१।४१ ) । 'शकुलादनी स्त्रिया कृष्णभेदीकटुकशाकयो' [ इति मे० १०१।१४७ ] ॥ ( ४ ) ॥*॥ चत्वारि 'जलपिप्पली' इति ख्यातस्य शाकभेदस्य ।

खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥१११॥

खराश्वा, कारवी ( २ स्त्री ), दीप्य , मयूर , लोचमस्तक ( ३ पु ), 'अजमोदा' के ५ नाम हैं ।

खरेति ॥ खरमश्नुते । खरैरश्यते वा । 'अशूङ् व्याप्तौ सघाते च' (स्वा० आ० वे०)। अश भोजने' (क्र्या० प० से०) वा । उल्वादयश्च (उ० ४।९५) इति व । 'अशिप्रुषि–' (उ० १।१५१) इति क्वन् वा ॥ (१) ॥*॥ केन जलेन रौति । 'रु शब्दे' (अ० प० अ०) । पचाद्यच (३। १।१३४)। करवस्य मयूरस्ययम् । 'तस्येदम्' (४।३।१२०) इत्यण् । यत्तु—कारारियम्' कारवस्येय वा–इति व्याख्यात मुकुटेन । तन्न । वृद्धत्वाच्छप्रसङ्गत्वात् । 'कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके' [इति मे० १६०।३३] ॥ (२)

---

१ 'कृदिकारादक्तिन' इति ङीपो वैकल्पिकत्वाद् 'यष्टि' इत्यपि साधु ।

२ वस्तुतस्तु—'क्षीरमिव शुक्ला' इति स्वयमुल्लिखितस्य 'क्षीरशुक्ला'शब्दविग्रहस्य, क्रोष्ट्री शृगालिकाक्षीरविदारीलाङ्गलीपु च' इति मेदिन्या (१२४।२०) क्रोष्ट्री क्षीरविदारिका' इति हैमोक्ते (२।४०६) च विरोधात् मुकुटोक्ति सम्यगेव । अत्र च क्षी० स्वा० सम्मत 'क्रोष्ट्री तु याऽसिता' इति पाठो मा० दी० सम्मत 'या असिता' इति च्छेदश्चापि सम्यगेव प्रतिभाति । एतदङ्गीकारणेव वाच० 'क्रोष्ट्री क्षीरशुक्ला इक्षुगन्धाना' श्वेतविदारीपर्यायत्व 'महाश्वेता क्षीरविदारी ऋक्षगन्धिका'दीना कृष्णविदारीपर्यायत्व सगच्छते । एवञ्च विदारी'प्रभृतिनामत्रय शुक्लकूष्माण्डस्य, 'क्रोष्ट्री प्रभृतिनामचतुष्क तु कृष्णकूष्माण्डस्येति तत्त्वम् ।

॥ * ॥ दीपनम् । घञ् (३।३।१८) । दीपे साधुः । 'तत्र साधु' (४।४।९८) इति यत् ॥ * ॥ 'दीपकः' अपि । 'अलंकारे यवान्यां च दीपको लोचमस्तके' इति रभसः । ['दीपकं चाप्यलङ्कारे दीपको दीप्तिकारके' इति विश्वः १०।१००] ॥ (३) ॥ * ॥ मीनाति रोगम् । 'मीञ् हिंसायाम्' (क्र्या० उ० अ०) । 'मीनातेरूरन्' (उ० १।६७)। मुकुटस्तु—मिनोति प्रक्षिपत्यग्निमान्द्यमिति खर्जूरादित्वात् ऊरच्—इत्याह । तन्मन्दम् । 'मीनातेरूरन्' इति सूत्रस्य सत्त्वात् । 'मयूरो नीलकण्ठेऽपि स्यान्मयूरशिखौषधौ' इति रभसः । [ 'मयूरो बर्हिचूडायामपामार्गे शिखण्डिनि' इति विश्वः १४१।२००, मे० १३७।१९९ च]॥ (४) ॥ * ॥ लोच्यते । 'लोचृ दर्शने' (भ्वा० आ० से०) । घञ् (३।३।१९) । यद्वा—लोचयति । 'लोचृ भासने' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । लोचो दर्शनीयो भासमानो वा मस्तकोऽस्य । मुकुटस्तु—लुच्यते—इति विगृहीतवान् । तन्न । 'लुञ्च अपनयने' (भ्वा० प० से०)। अस्मात् घञि नलोपविधायकाभावात् ।—'लोचमर्कटः' इत्यपि—इति स्वामी ॥ (५) ॥ * ॥ पञ्च 'मयूरशिखायाः'।

**गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।**

**गोपी, श्यामा, शारिवा, अनन्ता, उत्पलशारिवा (५ स्त्री), 'शारिवा, स्वार' के ५ नाम हैं।**

गोपीति ॥ गोपायति । 'गुपू रक्षणे' (भ्वा० प० से०)। आयाभावे पचाद्यच् (३।१।१३४) । गौरादिङीष् (४।१।४१) ॥ * ॥ केचित्तु अजादित्वात् (४।१।४) टापमाहुः । 'गोपी श्यामा गोपवल्ली गोपा गोपालिका च सा' इति वाचस्पतिः ॥ (१) ॥ * ॥ श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । 'इषियुधि—' (उ० १।१४५) इति मक् ॥ (२) ॥ * ॥ शारणम् । 'शॄ हिंसायाम्' (क्र्या० प० से०) । [1]'कॄगॄशॄपॄकुटि—' (उ० ४।१४२) इतीण् । शारिरस्त्यस्याः । 'अन्येभ्योऽपि—' (वा० ५।२।१०९) इति वः ॥ (३) ॥ * ॥ न अन्तोऽस्याः । ['अनन्ता केशवे शेषे पुमाननवधौ त्रिषु ।] अनन्ता च विशल्यायां शारिवादूर्वयोरपि' [ इति मे० ६०।८१-८२] ॥ (४) ॥ * ॥ उत्पलमस्त्यस्याः । उत्पलाकारपुष्पत्वात् । अर्शआद्यच् (५।२।१२७) । यद्वा—उद्गत पलमनया । उत्पला चासौ शारिवा च ॥ (५) ॥ * ॥ पञ्च 'उत्पलशारिवायाः' 'गुलीभर' इति ख्यातस्य ।

**योग्यमृद्धिः सिद्धिलक्ष्म्यौ**

**योग्यम् (न), ऋद्धिः, सिद्धिः, लक्ष्मी (३ स्त्री), 'सिद्धिनामक औषध-विशेष' के ४ नाम हैं।**

योग्यमिति ॥ युज्यते । 'युजिर् योगे' (रु० उ० अ०)। 'ऋहलोर्ण्यत्' (३।१।१२४)। यद्वा—योगाय प्रभवति । 'योगाद्यच्च' (५।१।१०२) । 'योग्यः प्रवीणे योगार्हे योग्याभिज्ञतेषु वाच्यवत् । क्लीबमृद्ध्योषधौ पुष्ये[1] नाराचभ्यासार्कयोषितोः' [इति मे० ११६।४९] ॥ (१) ॥ * ॥ ऋध्नोति । 'ऋधु वृद्धौ' (स्वा० प० से०) । क्तिन् (३।३।१७४) । 'ऋद्धिः स्यादोषधीभेदे समृद्धावपि योषिति' [इति मे० ७९।५] ॥ (२) ॥ * ॥ सिध्यति । 'षिधु संराद्धौ' (दि० प० अ०) । क्तिन् (३।३।१७४) । 'सिद्धिस्तु मोक्षे निष्पत्तियोगयोः' इति हैमः [२।२५८] । [ 'सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिषु' इति मे० ८०।२५] ॥ (३) ॥ * ॥ लक्ष(य)ति । लक्ष्यते वा । 'लक्ष दर्शने' (चु० प० से०) । 'लक्षेर्मुट् च' (उ० ३।१६०) इती । 'लक्ष्मी संपत्तिशोभयोः । ऋद्ध्योषधौ च पद्मायां वृद्धिनाम्न्योषधेऽपि च' [ इति मे० ११०।२८ ] ॥ (४) ॥ * ॥ चत्वारि 'ऋद्ध्याख्यौषधे' ।

**वृद्धेरप्याह्वया इमे ॥ ११२ ॥**

**वृद्धिः (स्त्री), पूर्वोक्त (योग्यम्, ऋद्धि, सिद्धि, लक्ष्मीः) चार शब्द 'वृद्धिनामक औषध-विशेष' के ५ नाम हैं।**

वृद्धेरिति ॥ इमे उक्ताश्चत्वारो वृद्ध्याख्यौषधेरप्याह्वया नामानि ॥ (४) ॥ * ॥ वर्धतेऽनया । 'वृधु वृद्धौ' (भ्वा० आ० से०)। क्तिन् (३।३।१७४) । 'वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे । कालान्तरे चाभ्युदये समृद्धावपि योषिति' [ इति मे० ८०।१८-१९ ] ॥ (५) ॥ * ॥ पञ्च 'वृद्ध्यौषधे' ।

**कदली वारणबुसा रम्भा मोचांशुमत्फला ।**
**काष्ठिला**

**कदली, वारणबुसा, रम्भा, मोचा, अंशुमत्फला, काष्ठिला (६ स्त्री), 'केला' के ६ नाम हैं।**

कदेति ॥ कन्दते । कन्द्यते वा । 'कदि आह्वाने रोदने च' (भ्वा० आ० से०) । वृषादित्वात् (उ० १।१०६) साधु (आगमशासनमनित्यम्) । केन वायुना दल्यते वा । 'दल विशरणे' (भ्वा० प० से०) । 'पुंसि संज्ञायां घः प्रायेण' (३।३।११८) इति घ । गौरादि (४।१।४१) । यत्तु—'घञर्थे क' (वा० ३।३।५८)—इति मुकुट । तन्न । परिगणनात् । मुकुटस्तु—वदे सौत्रात् 'कदल्यादयः' इत्यलच्—

---

1. अनेन सूत्रेण 'शिरि' शब्दस्य सिद्धिर्न तु 'शारि' शब्दस्य, तस्मादत्र 'श्वः शकुनौ' (उ० ४।१२७) इति सूत्रोपन्यासो युक्तः ।

1. नानार्थरत्नमाला (प० ८२४) नुरोधान्मेदिनीस्थ 'पुष्य—' इति पाठ उपेक्ष्य । परं वैजयन्त्या (२३५।६७) अयं पुण्यार्थक उक्तः ।

इत्याह । तन्न । कदे सोऽस्य धातोरभावात् । उज्ज्वलदत्ताद्युणादिवृत्तिपूक्तसूत्रस्यादर्शनात् । 'कदला कदली पृश्न्या कदली-कदलौ पुन । रम्भावृक्षेऽथ कदली पताकामृगभेदयो । कदला डिम्भिकायां च शाल्मलीमृगहेऽपि च' [इति मे० १५०।७० ७१] ॥*॥ अजादित्वात् (४।१।४) टापि कदला । 'कदलश्च कदल्यमी' इति व्याडि ॥ (१) ॥*॥ वारणानां बुसा । बुस्यति बुस्यते वा । 'बुस उत्सर्गे' ( दि० प० से० ) । इगुपध-' ( ३।१।१३५ ) इति क । भिदादङ् ( ३।३।१०४ ) वा । 'धवर्ये च' इति परिगणनान्नेह प्रवर्तते ॥*॥ 'बुषा' इति मूर्धन्यान्त इति केचित् ॥ (२) ॥*॥ रभति । 'रभ राभस्ये' (भ्वा० आ० अ०) । पचाद्यच् (३।१।१३४) । 'रभेरशब्लिटो' (७।१।६३) इति नुम् । रभ्यते वा । घञ् (३।३।१९) । मुकुटस्तु—'रभन्तेऽनया । 'घञर्थे च '(वा० ३।३।५८) इत्याह । तन्न । परिगणनात् कस्याप्राप्ते । सति तु के 'अनिदिताम्–' (६।४।२४) इति नलोपप्रसङ्गाच्च ।'रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे [ इति मे० १०६।७ ] ॥ (३) ॥*॥ मुञ्चति । 'मुच्लृ मोक्षणे (तु० प० अ०)। पचाद्यच् (३।१।१३४) । [ मोच शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयो ' इति मे० २७।८ ] ॥ ( ४ ) ॥ * ॥ अंशुमन्ति सूक्ष्मावयववन्ति फलान्यस्याः । यद्वा—अंशुमानिव फलान्यस्याः । अजादि (४।१।४) । 'कदली सुकुमारा च रम्भा भानुफला मता' इति धन्वन्तरि ॥ (५) ॥*॥ काष्ठिना ह्लयते । 'ह्ल संवरणे' (तु० प० से०) । घञ् (३।३।१९) ॥ (६) ॥*॥ षट् 'कदल्या' ।

मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥

मुद्गपर्णी, काकमुद्गा, सहा (३ स्त्री), 'मूँगवर्णी, मुगौनी, वनमूंग' के ३ नाम हैं।

मुद्गेति ॥ मुद्ग पर्णमस्या । मुद्गशब्देन मुद्गपर्णसदृश पर्णं लक्ष्यते । 'पाककर्ण-' (४।१।६४) इति ङीष् ॥ ( १ ) ॥*। ईषत् कम् । 'ईषदर्थे' ( ६।३।१०५ ) इति को कादेश । काकेनेपञ्जलेन मुद गच्छति । 'गमश्च'[१](३।२।४७) इति ड । यद्वा—काका मुद्गा हर्षप्राप्ता यस्याम् ॥ ( २ ) ॥*॥ सहते । 'षह मर्षणे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । 'सहो बले न स्त्रिया स्यात् स्त्रियां तु नखभेपजे । दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीपु च' [इति मे० १७६।१० ११] ॥ (३)॥*॥ त्रीणि 'काकमुद्गाया' 'मुगौनी' इति ख्यातायाः ।

वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षणी ।

वार्ताकी, हिङ्गुली, सिंही, भण्टाकी, दुष्प्रधर्षिणी (५स्त्री), 'वनभंटा' के ५ नाम हैं।

वार्तेति ॥ वार्तमारोग्यमाकयति । 'अक कुटिलायां गतौ' (भ्वा० प० से०) ण्यन्त. । 'कर्मण्यण्' (३।२।१) । यद्वा—वार्तं फल्गु अकं यस्याः । 'जाते –' ( ४।१।६३ ) इति ङीष् । 'वार्तिङ्गणस्तु वार्ताङ्गो वार्ताकं शाकबिल्वक' इति रभसात् पुंस्यपि ॥*॥ 'वार्ता वार्तिङ्गणे वृत्तौ' इति विश्वात् [६०।४६] 'वार्ता' अपि ॥*॥ 'वार्ताकरेवा गुणसमायुक्ता' इति वैद्यकात् [ 'वार्तिङ्गणश्च वार्ताकु वार्ताकं शाकबिल्वव । क्लीबे वङ्गं च वार्ताकी स्यान्महावृहतीत्यपि' इति त्रिकाण्डशेषात् (२।४।२८) 'वार्ताकु' अपि ] ॥ (१)॥*॥ हिङ्गु लाति । 'आतोऽनुप–' ( ३।२।३ ) इति क । गौरादि ङीष् ( ४।१।४१ ) । 'हिङ्गुलो वर्णद्रव्ये ना भण्टाक्या तु हिङ्गुली' [ इति मे० १५५।१४६ ] ॥ (२) ॥*॥ हिनस्ति । 'हिसि हिंसायाम्' (रु० प० से०)। पचाद्यच् । पृषोदरादि (६।३।१०९) । 'सिंहस्तु राशिभेदे मृगाधिपे । श्रेष्ठे स्यादुत्तरस्थश्च सिंही स्वर्भानुमातरि । वासावृहत्यो क्षुद्रायाम्' इति हैम [२।६१७-१८] ॥(३) ॥*॥ भटयते । भण्यते वा । 'भट भृतौ'(भ्वा० प० से०)। 'भण शब्दे' (भ्वा० प० से०) वा । 'पिनाकादयश्च' (उ० ४।१५) इति साधु ॥ (४) ॥*॥ दु खेन प्रधृष्यते । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से० ) । कर्मणि ल्युट् (३।३।११३ ) ॥*॥ आभीक्ष्ण्ये णिनौ ( ३।२।८१ ) तु 'दुष्प्रधर्षिणी' ॥(५) ॥*॥ पञ्च 'भण्टाक्या' ।

नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥ ११४ ॥
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ।

*नाकुली, सुरसा, रास्ना, सुगन्धा, गन्धनाकुली, नकुलेष्टा,* भुजङ्गाक्षी, छत्राकी, सुवहा (९ स्त्री), 'रास्ना, रासना' के ९ नाम हैं।

नेति ॥ नकुलानामियम् । प्रियत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । न आकुलत्वं यया वा । 'नाकुली कुक्कुटीकन्दे रास्नायां चव्यके[१] स्त्रियाम्' [इति मे० १५२।१०१] ॥(१)॥*॥ शोभनो रसोऽस्याः । 'सुरसं तु त्रिपु स्वादौ, पर्णासे तु नपुंसकम् । स्त्री रास्नानागमात्रोश्च' [ इति मे० १७३।४६ ] ॥ ( २ ) ॥*॥ राति । रायते वा । रस्यते वा । 'रा दाने' (अ० प० अ०) । 'रस आस्वादने' ( चु० उ० से०) । 'रास्नासास्ना–'(उ० ३।१५) इति साधु ।— 'रास्नादय' इत्यानुपूर्वी मुकुटोक्तोज्ज्वलदत्तादिषु नास्ति ।

१ अनेन सूत्रेण 'खच्'प्रत्ययस्य विधानात् डचोऽविधानाच्चात्र 'अन्तात्यन्ताध्वदूर—' इतिसूत्रस्थेन 'डप्रकरणेऽन्येष्वपि दृश्यते' इति वार्तिकेन डप्रत्ययो वाच्य ।

१- 'चविके' इति पा० ।

'रास्ना तु स्याद्भुजगाक्ष्यामेलापर्ण्यामपि स्त्रियाम्' [इति मे० ८३।१७]॥(३) ॥*॥ शोभनो गन्धः सुगन्धः। 'कुगति-' ( २।२।१८ ) इति समासः। सुगन्धोऽस्त्यस्याः। मुकुटस्तु—शोभनो गन्धोऽस्याम्। अर्शआद्यच् ( ५।२।१२७ ) —इत्याह। तन्न। 'गन्धस्येत्-' (५।४।१३५ ) इतीत्प्रसङ्गात्। बहुव्रीहिणोक्तार्थत्वादचोऽप्रसङ्गात्। मत्वर्थे बहुव्रीहिविधानात् ॥*॥ स्वामी तु—रास्नासुगन्धयो स्थाने 'नागसुगन्धा' इति पठित्वा 'सर्पसुगन्धा' इति व्याख्यत्॥ (४) ॥*॥ गन्धवती नाकुली ॥ (५) ॥*॥ नकुलानामिष्टा ॥ (६) ॥*॥ भुजंगानक्षति। 'अक्षू व्याप्तौ'(भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। यद्वा—भुजगोऽक्षि यस्याः। 'अक्ष्णोऽदर्शनात्' ( ५।४।७६ ) इत्यच्। 'जाते –' ( ४।१।६३ ) इति—'गौरादि'–' ( ४।१।४१ ) इति वा ङीप्। भुजंगशब्दस्य भुजंगाक्षिसदृशे लक्षणा ॥(७)॥*॥ छत्रमकति। 'अक कुटिलायां गतौ' ( भ्वा० प० से० )। 'कर्मण्यण्' (३।२।१) ॥ (८) ॥*॥ सुष्ठु वहति। पचाद्यच् (३।१।१३४)। 'सुवहा सल्लकीयेलापर्णीगोधापदीषु वीणायाम्। रास्नाशेफालिकयो स्त्री सुखवाह्येऽन्यलिङ्गः स्यात्' [ इति मे० १७७।२५-२६ ] ॥ ( ९ ) ॥*॥ नव 'रासना' इति ख्याताया ।

विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५ ॥

**विदारिगन्धा, अंशुमती, सालपर्णी, स्थिरा, ध्रुवा (५ स्त्री), 'सरिवन' के ५ नाम हैं।**

विदेति। विदार्या गन्धः। विदारिगन्ध। 'ङ्यापो –' (६।३।६३)इति ह्रस्वः। सोऽस्त्यस्याः। मुकुटस्तु–विदारीगन्ध इव गन्धोऽस्याः—इति विवव्रार। तच्चिन्त्यम्। 'उपमानाच्च' (५।४।१३७) इतीकारप्रसङ्गात् ॥ (१) ॥*॥ अंशव सन्त्यस्याः। दीर्घमूलत्वात्। 'अंशुमान् भास्करे सालपर्ण्यामंशुमती स्मृता' [ इति मे० ६८।१८ ] ॥ ( २ ) ॥*॥ *सालः पर्णमस्याः। सालशब्दस्य सालपर्णसदृशे लक्षणा* ॥*॥ तालव्यशा [शालपर्णी] अपीत्येके ॥ ( ३ ) ॥*॥ तिष्ठति, 'अजिरशिशिर–' ( उ० १।५३ ) इति साधु। अन्तर्भावितण्यर्थो वा। तिष्ठति। 'स्थिरा भूशालपर्ण्योर्ना शनौ मोक्षेऽचले त्रिषु' [इति मे० १२६।९७] ॥(४)॥*॥ ध्रुवति। 'ध्रुव स्थैर्ये' (तु० प० अ०)। ध्रुवो वटे। वसुयोगभिदो शंभौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुव खेऽजस्रतर्कयोः। ध्रुवा मूर्वाशालपर्ण्योः स्रुग्भेदे गीतभिद्यपि' [ इति हैमः २।५३९-४० ] ॥ (५) ॥*॥ पञ्च 'शालपर्ण्याः'।

तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च।

**तुण्डिकेरी, समुद्रान्ता, कार्पासी, बदरा (४ स्त्री) 'कपास' के ४ नाम हैं।**

तुण्डीति ॥ तुण्डिकान्शरीराणि ईरयति। 'ईर गति प्रेरणयो.'(अ० आ० से०)। 'कर्मण्यण्' (३।२।१)॥ (१) ॥*॥ समुद्रोऽन्तो यस्याः। यद्वा–मुद्रया सह वर्तमानोऽन्तः समीपं यस्याः। आच्छादकत्वात्॥ ( २ ) ॥*॥ करोति क्रियते वा। 'कृञ पास' ( उ० ५।४५ )। जातित्वात् (४।१।६३) गौरादित्वात् (४।१।४१) वा ङीप्। पृषोदरादि (६।३।१०९)—इति मुकुटोक्तिस्तु चिन्त्या। कर्पासोदाब्दस्य ह्रस्वादित्वात्। दीर्घादित्वे प्रामाणिके तु प्रज्ञाद्यणा (५।४।३८) *सिद्धत्वात्* ॥ (३) ॥*॥ बदति। 'बद स्थैर्ये' (भ्वा० प० से०)। बाहुलकादरः [ 'बदरा स्यादेलापर्ण्या विष्णुक्रान्तौषधावपि' इति हैम ३।६१८]॥(४) ॥*॥ चत्वारि 'कार्पास्याः' 'कपास' इति ख्यातस्य।

भारद्वाजी तु सा वन्या

**भारद्वाजी (स्त्री), 'वनकपास या नर्मा' का १ नाम है।**

भारेति ॥ भरद्वाजस्य मुनेरियम्। तेन निर्मितत्वात्। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१)॥*॥ सा कर्पासी वन्या चेत्तदा भारद्वाजी। 'वनकर्पासिकायां तु सहा चन्दनबीजिका। भारद्वाजी महावीर्या कुण्ठला कुण्ठनाशिनी' इति वाचस्पतिः। एकं 'वनकर्पास्याः' 'नर्मा' इति ख्याताया।

शृङ्गी तु ऋषभो वृषः ॥ ११६ ॥

**शृङ्गी (स्त्री), वृषभः, वृषः (२ पु), 'काकरासिंगी' के ३ नाम हैं।**

शृङ्गीति ॥ शृणाति गदम्। शॄ हिंसायाम्' ( क्र्या० प० से०)। 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन् नुम् च। गौरादित्वात् (४।१।४१)ङीप्। 'ऋषभेऽतिविषायां च शृङ्गी मद्गुरवल्लभा' इति रुद्रजयौ।['शृङ्गी विषायामृषभे स्वर्णमीनविशेषयोः' इति विश्व २५।२२ ] ॥(१) ॥*॥ ऋषति।'ऋषी गतौ' (तु० प० से०)। 'ऋषिवृषिभ्यां कित्' (उ० ३।१२३ ) इत्यभच्। 'ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः' [ इति मे० १०७। ११] ॥ ( २ ) ॥*॥ वर्षति। वृषु सेचने' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति क ॥ (३) ॥*॥ त्रीणि 'ऋषभाख्यौषधे' 'काकडासिंगी' इति ख्याताया.।

गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका।

**गांगेरुकी, नागबला, झषा, ह्रस्वगवेधुका (४ स्त्री), 'गँगेरन' के ४ नाम हैं।**

गेति ॥ गाङ्गु जलमीरयति । 'ईर गतौ क्षेपणे च'(अ० आ० से०) । 'मृगय्वादयश्च ( उ० १।३७ ) इति साधु । कन (५।३।७५) । गौरादि ( ४।१।४१ ) ॥ (१) ॥*॥ नागानां हस्तिनां बला ॥ (२)॥*॥ भषति वातम् । 'झष हिंसार्थे (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) । 'झषा नागबलायां स्त्री तालमत्स्यादवीपु ना' [ इति मे० १६६।१५ ] ॥ (३) ॥*॥ गवि भूमावेवते । 'एधृ वृद्धौ' (भ्वा० आ० से०) । बाहुलकात् । 'संज्ञायां कन्' (५।३।७५) । ह्रस्वा चासौ गवेधुका च ॥ (४) ॥*॥ चत्वारि 'बलाया' 'ककही' 'गंगेरण' इति ख्यातायाः ।

धामार्गवो घोषकः स्यात्

धामार्गव, घोषक ( २ पु ), 'सफेद फूलवाली तरोई' के २ नाम हैं।

धामेति ॥ धाम ऋच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'अन्येष्वपि-' (३।२।७५) इति विच् । धामार् चासौ गौश्च । गोरतद्धितलुकि' ( ५।४।९२ ) इति टच् । 'धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके'[इति मे० १६१। ५९ ] ॥ * ॥ घोषति । घुषिर् विशब्दने' ( भ्वा० प० से० ) । पचाद्यच ( ३।१।१३४ ) । स्वार्थे कन् ( ५।३। ७५ ) । घोष आभीरपल्ल्यां स्याद् गोपालध्वानघोषके । कांस्ये धान्युदनादे ना घोषा मधुरिकौषधौ' [ इति मे० १६६।११ ] ॥ (२) ॥*॥ द्वे 'घोषवल्ल्या' 'श्वेतपुष्पतोरयी' इति ख्यातायाः ।

महाजाली स पीतकः ॥ ११७ ॥

महाजाली (स्त्री),'पीले फूलवाली तरोई' का १ नाम है।

महेति ॥ जाल्यति । 'जल आच्छादने' चुरादि । पचाद्यच् (३।१।१३४)। गौरादि (४।१।४१)। महती चासौ जाली च ॥ (१) ॥*॥ एकं 'पीतघोषवल्ल्याः' 'घीया' इति ख्यातायाः ।

ज्यौत्स्नी पटोलिका जाली

ज्यौत्स्नी, पटोलिका, जाली ( ३ स्त्री ), 'चिचिड़ानामक तरकारी' के ३ नाम हैं।

ज्योत्स्नीति॥ ज्योत्स्नाऽस्त्यस्याः । 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' ( वा० ५।२।१०१ ) इत्यण् । 'ज्योत्स्नी पटोली ज्योत्स्नावन्निशो ' इति हैम [ २।२६९ ७० ] ॥*॥ संज्ञापूर्वकत्वात् वृद्ध्यभाव 'ज्योत्स्नी' अपि ॥(१)॥*॥ पटति । 'पट गतौ' ( भ्वा० प० से० ) । 'कपिगडिगण्डि-' (उ० १।६६) इत्योलच् । गौरादि ( ४।१।४१ ) । स्वार्थे कन् (१।३।७५) । 'पटोल वस्त्रभेदे नौषधौ ज्योत्स्निका तु योषिति' [ इति मे० १५२।१०६ ] ॥ ( २ ) ॥*॥ जलति। 'जल धान्ये' (भ्वा० प० से०) । 'ज्वलिति-'(३।१।१४०) इति ण । 'जाते-' (४।१।६३) इति '-गौरा-' ( ४।१। ४१) इति वा ङीप् । 'जाल गवाक्ष आनाये क्षारके दम्भ-[1]वृन्दयो । जालो नीपद्रुमे जाली पटोलिकौषधौ स्त्रियाम्' [इति मे० १४६।१९]॥ (३) ॥*॥ त्रीणि 'पटोलिकायाः' 'छिछिंडा' 'तोरयी' इति ख्यातस्य ।

नादेयी भूमिजम्बुका ।

नादेयी, भूमिजम्बुका ( २ स्त्री ), 'भुई जामुन' के नाम हैं।

नादेति ॥ नद्यां भवा । 'नद्यादिभ्यो ढक्'(४।२।९७)। 'नादेयी[2] नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां च जम्ब्वां च अङ्कुष्ठेऽपि च योषिति' [ इति मे० ११९।८६ ८७ ] ॥ ( १ ) ॥*॥ भूमिलग्ना जम्बुका । शाकपार्थिवादि ( २।१।६९ ) । भूमिलग्नफलत्वात् ॥ ( २ ) ॥ * ॥—प्रागुक्तापि भ्रमात्पुनरिहोक्ता-इति स्वामी । द्वे 'भूमिजम्बुकायाः' ।

स्याल्लाङ्गलिक्यग्निशिखा

लाङ्गलिकी, अग्निशिखा ( २ स्त्री ), 'करिहारी' के २ नाम हैं।

स्यादिति ॥ लाङ्गलं पुष्पविशेषोऽस्त्यस्याः । ठन् (५। २।११५ ) । 'जाते -' ( ४।१।६३ ) इति '-गौरादि-' (४।१।४१) इति वा ङीप् । लाङ्गलवत् खनति भूमिम् । 'तेन दीव्यति-' ( ४।४।२ ) इति ठक् । 'टिड्ढा-' (४।१। १५ ) इति ङीप् ॥ ( १ ) ॥ * ॥ अग्नेरिव शिखाऽस्याः । अग्निज्वाला लाङ्गलिकी' इति वाचस्पतिः । ['अग्निशिखा लाङ्गलिक्याम्' इति हैम ४।४४]॥( २ ) ॥ * ॥ द्वे 'लाङ्गल्याः' 'करिहारी' इति ख्यातायाः।

काकाङ्गी काकनासिका ॥ ११८ ॥

काकाङ्गी, काकनासिका ( २ स्त्री ), 'कौवाठोठी' के २ नाम हैं।

काकेति ॥ काकस्येवाङ्गं नासारूपं फलमस्याः । गौरादि ( ४।१।४१ ) ॥ ( १ ) ॥ * ॥ काकस्येव नासिका यस्याः ॥ ( २ ) ॥ * ॥ द्वे 'काकजङ्घायाः' 'कौवाठोठी' इति ख्यातायाः ।

---

१ 'ध्वनि' इति पा० ।

१. 'दन्तवृन्दयो ' इति पा० ।

२ 'नादेयी ''''जयायामम्बुवेतसे । भूमिजम्ब्वां जवायाञ्च व्यङ्गुष्ठेऽपि च—' इति पा० ।

**गोधापदी तु सुवहा**

गोधापदी, सुवहा (२ स्त्री), 'लजालू' के २ नाम हैं।

गोधेति ॥ गोधाया इव पादो मूलमस्या। 'कुम्भपदीषु च' (५।४।१३९) इति साधु ॥ (१) ॥ * ॥ सुवहति। पचाद्यच् (३।१।१३४)। 'गोधापदी तु सुवहा त्रिफला हंसपद्यपि' इति कोषान्तरम् ॥ (२) ॥ * ॥ द्वे 'हंसपद्या'।

**मुसली तालमूलिका।**

मुसली, तालमूलिका (२ स्त्री), 'मुसलीकन्द' के २ नाम हैं।

मुसेति ॥ मुस्यति। 'मुस खण्डने' (दि० प० से०)। वृषादिः (उ० १।१०६)। 'मुसल' स्यादयोग्रे च पुनपुंसकयोः स्त्रियाम्। तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' [इति मे० १५४।१२४] ॥ (१) ॥*॥ तालो मूलमस्याः। तालशब्दस्तालमूलसदृशे लाक्षणिक। 'पाककर्ण-' (४।१।६४) इति ङीप्। स्वार्थे कन् (५।३।७५) ॥ (२) ॥ * ॥ द्वे 'मुसली' इति ख्यातायाः।

**अजशृङ्गी विषाणी स्यात्**

अजशृङ्गी, विषाणी (२ स्त्री), 'मेढासीङ्गी' के २ नाम हैं।

अजेति ॥ अज. शृङ्गमस्या। अजशब्दोऽजशृङ्गसदृशे लाक्षणिक.। गौरादि (४।१।४१) ॥ (१) ॥ * ॥ फलस्याजशृङ्गसदृशत्वात् विषाणमस्त्यस्या। अर्शआद्यच् (५।२।११५)। गौरादिङीप् (४।१।४१)।' विषाणी क्षीरकाकोल्यामजशृङ्ग्या च योषिति। कुष्ठनामौषधे क्लीव त्रिषु शृङ्गेभदन्तयो' [इति मे० ५०।७७-७८] ॥ (२) ॥ * ॥ द्वे 'अजशृङ्ग्या' 'मेढासीगी' इति ख्यातायाः।

**गोजिह्वादर्विके समे ॥ ११९ ॥**

गोजिह्वा, दर्विका (२ स्त्री), 'गोभी' के २ नाम हैं।

गोजीति ॥ गोजिह्वेव ॥ (१) ॥ * ॥ दर्वीव। 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥*॥ 'दार्विका' इति पाठे दारयति। 'दॄ विदारणे' (क्र्या० प० से०)। उल्वादित्वात् (उ० ४।९५) साधु। 'दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ' [इति मे० १५८।९] ॥ (२) ॥ * ॥ द्वे 'गोजिह्वायाः' 'गोभी' इति ख्यातायाः।

**ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि**

ताम्बूलवल्ली, ताम्बूली, नागवल्ली (३ स्त्री), 'नागवेल, पान' के ३ नाम हैं।

तेति ॥ ताम्यति। 'तमु ग्लानौ' (दि० प० से०)। क्विप् (३।२।१७८)। 'अनुनासिकस्य-' (६।४।१५) इति दीर्घ। वोलति। 'बुल् मज्जने' (चु० प० से०)। चुरादीनां णिज्वा। 'इगुपध-' (३।१।१३५) इति कः। ताम् चासो बुली च। पृषोदरादि (६।३।१०९)। ताम्बूलाख्या वल्ली। शाकपार्थिवादि (वा० २।१।६९) ॥ (१) ॥ * ॥ गौरादि (४।१।४१)। 'ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' [इति मे० १५२।६७] ॥ (२) ॥ * ॥ नागलोकस्य वल्ली ॥ (३) ॥ * ॥ त्रीणि 'नागवेली' इति ख्यातायाः।

**अथ द्विजा।**

**हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥**

द्विजा, हरेणुः, रेणुका, कौन्ती, कपिला, भस्मगन्धिनी (६ स्त्री), 'रेणुकाबीज' के ६ नाम हैं।

अथेति ॥ द्विर्जाता। 'जनी-' (दि० आ० से०)। 'अन्येष्वपि-' (३।२।१०१) इति ड। 'द्विजो विप्रक्षत्रियवैश्ये दन्ते विहंगमे। द्विजा भार्गीरेणुकयो' इति हेमचन्द्रः [२।७१] ॥ (१) ॥ * ॥ हरति। 'कृहृभ्यामेणुः' (उ० २।१)। 'ढ्रलोपे-' (६।३।१११) इति दीर्घ। 'कपायेऽपि हरेणुर्ना रेणुकायां स्त्रियां भवेत्' इति रुद्र ['हरेणुः कुलयोषायां रेणुकायां सतीनके' इति हैम. ३।२४७] ॥ (२) ॥ * ॥ रेणुरस्या अस्ति। व्रीह्यादित्वात् (५।२।११६) ठन्। 'इसुसुक्तान्तात्कः' (७।३।५१)। रेणुरेव। 'संज्ञायाम्-' (५।३।७५) इति कन् वा। मुकुटस्तु—रेणु करोति। ड (वा० ३।२।१०१)। टाप् (४।१।४)। रेणुका। पृषोदरादि (६।३।१०९)—इत्याह। तत्र 'पृषोदरादि' इत्युक्तिश्चिन्त्या। 'रेणुकापि हरेणौ च जामदग्न्यस्य मातरि' [इति मे० १२।१४९] ॥ (३) ॥ * ॥ 'कुन्तिषु देशेषु भवा। 'तत्र भव' (४।३।५३) इत्यण् ॥ (४) ॥*॥ कपिलो वर्णोऽस्त्यस्या। अर्शआद्यच् (५।२।१२७)। 'कपिला रेणुकायां च शिंशपागोविशेषयो। पुण्डरीकस्त्रिरिण्या स्त्री वर्णभेदे त्रिलिङ्गकम्। नानले वासुदेवे च मुनिभेदे च कुक्कुरे' [इति मे० १४९।६६-६७] ॥ (५) ॥ * ॥ भस्मनो गन्ध.। भस्मगन्धोऽस्त्यस्या। 'अत -' (५।२।११५) इतीनि ॥ (६) ॥*॥ षट् 'हरेणुकायाः'।

**एलावालुकमैलेयं सुगन्धि हरिवालुकम्।**

**वालुकं च**

एलावालुकम्, ऐलेयम्, सुगन्धि, हरिवालुकम्, वालुकम् (५ न), 'एलुआ' के ५ नाम हैं।

१ 'मूषलं'— इति पा०।

एलेति ॥ एलयति । 'इल प्रेरणे' (चु० प० से०) । पचाद्यच् ( ३।१।१३४ ) । टाप् ( ४।१।४ ) । एला इव वलति । 'वल प्राणने' (भ्वा० प० से०) । बाहुलकादुण् । स्वार्थे कन् (५।३।७५)॥ * ॥ 'एलवालुकम्' इति स्वामी । तत्र 'ङ्यापो —' (६।३।६३) इति ह्रस्वः ॥ (१) ॥*॥ इलाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (२) ॥ * ॥ शोभनो गन्धोऽस्य । 'गन्धस्येत्–' (५।४।१३५) इतीत्त्वम् ॥ ( ३ ) ॥ * ॥ हरिवर्णं वालुकम् ॥ ( ४ ) ॥ * ॥ [ 'वालुका सिकतासु स्याद् वालुकं स्वेलवालुके' इति मे० ११।१३२ ] ॥ (५) ॥ * ॥ पञ्च 'वालुकगन्धद्रव्यस्य' ।

अथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ॥ १२१ ॥

पालङ्की ( स्त्री ), मुकुन्द', कुन्द', कुन्दुरुः (३ पु), 'पालक' के ४ नाम हैं।

अथेति ॥ पालनम् । 'पाल रक्षणे' (चु० प० से०)। संपदादि (वा० ३।३।१०८ ) । पाला अङ्क्यते । 'अङ्क पदे लक्षणे च' ( चु० उ० से० ) अदन्त । 'अचो यत्' ( ३।१।९७ ) ॥ ( १ ) ॥ * ॥ मुक्तिं ददाति । 'दाञ्–' ( जु० उ० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । पृषोदरादि (६।३।१०९)। 'मुकुन्दः पारदे विष्णौ रत्नभेदे च कुन्दुरौ' [ इति मे० ७७।२८ ] ॥ ( २ ) ॥ * ॥ कुं भूमिमुनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादि (वा० ६।१।९४) । 'कुन्दो माध्येऽस्त्री¹ मुकुन्दभ्रमिनिध्यन्तरेषु ना' [इति मे०७४।३]॥ ( ३ ) ॥ * ॥ कुमुनत्ति । उन्दयति वा । 'जन्वादयश्च' ( उ० ४।१०२ ) इति साधु ॥ ( ४ ) ॥ * ॥ चत्वारि 'कुन्दस्य', 'पालक' इति ख्यातशाकस्य, 'कुन्दुरु' इति ख्यातस्य वा ।

वालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ।

वालम्, ह्रीबेरम्, बर्हिष्ठम्, उदीच्यम्, केशाम्बुनाम (५ न), 'नेत्रबाला' के ५ नाम हैं।

वेति ॥ वालयति । 'वल संवरणे' (भ्वा० आ० से०) ण्यन्तः । पचाद्यच् (३।१।१३४) । 'वालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ । [नारिकेले हरिद्राया मल्लिकाभिधपि स्त्रियाम् ॥ ] वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पुनपुंसकम् । अलङ्कारान्तरे मेध्ये वाली वाला त्रुटौ स्त्रियाम्' [ इति स्पर्शादौ मे० १४७।३९-४० ] ॥ (१) ॥ * ॥ ह्रीयुक्तं बेरमस्य । 'बेर कलेवरे क्लीबं वार्ताकी कुङ्कुमेऽपि च' [ इति मे० १२९।८५ ] ॥ ( २ ) ॥ * ॥ बर्हिषि कुशे तिष्ठति । 'सुपि स्थः' ( ३।२।४ ) इति कः । 'अम्बाम्ब–' (८।३।९७) इति षत्वम् ॥ ( ३ ) ॥ * ॥ उदीचि जातम् । 'द्युप्रागपा–' ( ४।२।१०१ ) इति यत् ॥ (४) ॥ * ॥ केशाम्बुनोर्नाम नाम यस्य ॥ ( ५ ) ॥*॥ पञ्च 'ह्रीबेरस्य' 'नेत्रबाला' इति ख्यातस्य ।

कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयम्

कालानुसार्यम्, वृद्धम्, अश्मपुष्पम्, शीतशिवम्, शैलेयम् (५ न), 'शिलाजीत' के ५ नाम हैं।

केति ॥ कालेनानुस्रियते । 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (१) ॥*॥ वर्धते स्म । 'वृधु वृद्धौ' (भ्वा० आ० से०)। 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः । 'वृद्धो जीर्णे प्रवृद्धे च त्रिषु क्लीबं तु शैलजे' [ इति मे० ८०।१८ ] ॥ (२) ॥ * ॥ अश्मनः पुष्पमिव । अश्मप्रभवत्वात् ॥ ( ३ ) ॥ * ॥ शीतं च तच्छिवं च ॥ ( ४ ) ॥ * ॥ शिलाया भवम् । 'नद्यादिभ्य –' ( ४।२।९७ ) इति ढक् । 'शैलेयं तालपर्ण्यां च सैन्धवे । शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम्' [ इति मे० १२०।१०९ ] ॥ (५) ॥*॥ पञ्च 'शैलेयस्य' 'शिलाजित' इति ख्यातस्य ।

तालपर्णी तु दैत्या गन्धकुटी मुरा ।
गन्धिनी

तालपर्णी, दैत्या, गन्धकुटी, मुरा, गन्धिनी (५ स्त्री), 'मुरा, ममोरफली' के ५ नाम हैं।

तालेति ॥ तालं पर्णमस्याः । तालशब्दस्तालपर्णसदृशे लाक्षणिकः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (१) ॥ * ॥ दितेरियम् । 'दित्यदित्या–' (४।१।८५) इति ण्यः ॥ ( २ ) ॥ ॥ गन्धस्य कुटीव ॥ ( ३ ) ॥ * ॥ मुरति । 'मुर वेष्टने' (तु० प० से०) । इगुपधत्वात् (३।१।१३५) कः । ['मुरा गन्धद्रव्ये दैत्यान्तरे पुमान्' इति मे० १२८।७७] ॥ ( ४ ) ॥*॥ प्रशस्तो गन्धोऽस्याः । 'अत इनिठनौ' ( ५।२।११५ ) ॥ ( ५ ) ॥ * ॥ पञ्च 'मुराख्यसुगन्धिद्रव्यस्य' ।

गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।

गजभक्ष्या, सुवहा, सुरभी, रसा, महेरणा, कुन्दुरुकी, सल्लकी, ह्लादिनी (८ स्त्री), 'सलई' के ८ नाम हैं।

गजेति ॥ गजैर्भक्ष्यते । ण्यत् ( ३।१।१२४ ) ॥ * ॥ घञि (३।३।१९) 'गजभक्षा' वा ॥ (१) ॥*॥ सुवहति । पचाद्यच् ( ३।१।१३४ ) ॥ ( २ ) ॥ * ॥ सुष्ठु रभते । 'सर्वधातुभ्य इन्' (उ० ४।११८) । आगमानि-

१. 'मुकुन्दो निधिभिद्विष्णु–' इति पा० ।

स्यत्वान्न नुम् (७।१।६३)। 'सुरभि सल्लकीमातृभिन्मुरा-गोषु योषिति' [इति मे० १०७।२२]॥ (३)॥*॥ रस्यते 'रस आस्वादने'(चु० उ० से०)अदन्त । घञ् (३।३।१९)। 'रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च ॥ [ रसा तु रसनापाठा-सल्लकीक्षितिकङ्गुषु' इति हैम २।६००-१ ] ॥ ( ४ ) ॥*॥ महदीरणमस्याः । महमुत्सवमीरयति वा । स्यु (३।१।१३४)॥ (५)॥*॥ कुन्दुरुरिव प्रतिकृति । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । गौरादि (४।१।४१) ॥ (६) ॥*॥ सलति । 'षल गतौ' ( भ्वा० प० से० ) । क्वुन् (उ० २।३२) । पृषोदरादि (६।३।१०९) । गौरादि (४।१।४१) । सल्लकृत्य लक्यते वा । 'लक आस्वादने' । क्वुन् (उ० २।३२) ॥*॥ 'सल्लकी मिल्लकी ह्लादा' इति रुद्र' ॥*॥ 'श्वाविद्‌द्रुभेदौ शल्लक्यौ' इति तालव्यादौ रभस । तत्र 'शल चलने' (भ्वा० प० से०) धातु ॥ (७) ॥*॥ ह्लादयत्यवश्यम् । 'ह्लादी सुखे च' ( भ्वा० आ० से० ) । 'आवश्यका-' (३।३।१७०) णिनि ॥ (८) ॥*॥ अष्टौ 'कुन्दुरुक्याः' 'सालइ' इति ख्यातायाः ।

अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥ १२४ ॥

**अग्निज्वाला, सुभिक्षा, धातकी, धातुपुष्पिका ( ४ स्त्री ), 'धव' के ४ नाम हैं ।**

अग्नीति ॥ अग्नेर्ज्वालेव । रक्तपुष्पत्वात् ॥ (१) ॥*॥ सुष्ठु भिक्ष्यते । घञ् ( ३।३।१९ ) ॥ (२) ॥*॥ धातु करोति । 'तत्करोति-' ( वा० ३।१।२६ ) इति ण्यन्तात् ण्वुल् ( ३।१।१३३ ) । गौरादि (४।१।४१) ॥ (३) ॥*॥ धातु पुष्पमस्याः । दीपिक कप्(५।४।१५४)॥ (४) ॥*॥ चत्वारि 'धातक्याः' 'धवा' इति ख्यातायाः ।

पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुला

**पृथ्वीका, चन्द्रवाला, एला, निष्कुटिः, बहुला ( ५ स्त्री ), 'बड़ी इलायची' के ५ नाम हैं ।**

पृथ्वीति ॥ प्रथते । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । 'फर्फरीकादयश्च' (उ० ४।२०) इति साधु ॥ (१) ॥*॥ चन्द्रस्य कर्पूरस्य वालेव । कर्पूरगन्धित्वात् ॥ (२) ॥*॥ एलयति । 'इल प्रेरणे' (चु० प० से०) । पचाद्यच् ( ३।१।१३४ ) ॥ ( ३ ) ॥*॥ निश्चिता कुटि कौटिल्यमस्याः । निष्क्रान्ता कुटेर्वा ॥ *॥ 'कृदिकारात्-' (ग० ४।१।४५) इति वा ङीप् [निष्कुटी] ॥ (४) ॥ *॥ बहूनि बीजानि लाति । 'आतोऽनुप-' ( ३।२।३ ) इति क । 'बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्य-वत्प्राज्यकृष्णयोः' [ इति मे० १५३।११७-१८ ] ॥ (५) ॥*॥ पञ्च 'एलायाः' 'एलायची' इति ख्यातायाः ।

अथ सा ।

सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ॥१२५॥

**उपकुञ्चिका, तुत्था, कोरङ्गी, त्रिपुटा, त्रुटिः ( ५ स्त्री ), 'छोटी इलायची' के ५ नाम हैं ।**

अथेति ॥ उपकुञ्चति । 'कुञ्च कौटिल्याल्पीभावयो' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) ॥ ( १ ) ॥*॥ तुदति । 'तुद व्यथने' ( तु० उ० अ० ) । 'पातृतुदि-' (उ० २।७) इति थक् । 'तुत्थमञ्जनभेदे स्यात्त्री नीली-सूक्ष्मैलयो स्त्रियाम्' [इति मे० ७२।८] ॥ ( २ ) ॥*॥ कुरति । 'कुर शब्दे' (तु० प० से०) । बाहुलकादङ्गच् । गौरादि ( ४।१।४१ ) ॥ (३) ॥*॥ त्रय पुटा यस्या । 'त्रिपुटा मल्लिकायां च सूक्ष्मैलात्रिवृतो स्त्रियाम् । सतीनके च तीरे च त्रिपुट समुदाहृत ' [इति मे० ३६।४४] ॥ ( ४ ) ॥ * ॥ त्रुटति । 'त्रुट छेदे' ( तु० प० से० ) । 'इगुपधात्-' ( उ० ४।१२० ) इतीन् । 'त्रुटि स्त्रीसंशये स्वल्पे सूक्ष्मैलाकालमानयोः' [इति मे० ३४।१६] ॥ (५) ॥ * ॥ पञ्च 'सूक्ष्मैलायाः' ।

व्याधिः कुष्ठं पारिभाव्यं व्याप्यं पाकलमुत्पलम् ।

**व्याधिः (पु), कुष्ठम्, पारिभाव्यम्, व्याप्यम्, पाकलम्, उत्पलम् ( ५ न ), 'कूठ' ( औषधि-विशेष ) के ६ नाम हैं ।**

व्येति ॥ विगत आधिरनेन । 'कौबेरं भास्वरं कुष्ठ पारिभाव्य गदाह्वयम्' इति रभस । 'व्याधि कुष्ठे च रोगे ना' [ इति मे० ७९।१५ ] ॥ ( १ ) ॥ * ॥ कुष्णाति रोगम् । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'हनिकुषि-' (उ० २।२) इति क्थन् । 'कुष्ठं रोगे पुष्करेऽस्त्री' [इति मे० ३९।३] ॥ ( २ ) ॥ * ॥ परिभावे साधु । 'तत्र साधु' (४।४।९८) इति यत् । स्वार्थेऽण् (५।४।३८) ॥ (३) ॥*॥ व्याप्यते । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४)॥*॥ वाप्या भवम् । 'वाप्यम्' इति क्वचित्पाठ । उप्यते । 'डुवप् बीजसंताने' (भ्वा० प० अ०) । ण्यत् (३।१।१२४) वा ॥ * ॥ 'आप्यम्' इति च ॥ (४) ॥ * ॥ पाकं लाति । 'पाकल कुष्ठभेषज्ये पुंसि स्यात्कुञ्जर-ज्वरे' [इति मे० १५२।१०८] ॥ (५) ॥*॥ उत्पलति । 'पल गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । 'उत्पला तुपपर्पट्या[1] क्लीवं कुष्ठप्रसूनयो.' [इति मे० १४९।९२]॥ (६) ॥*॥ षट् 'कुष्ठस्य' 'कूठ' इति ख्यातस्य ।

---

१. 'उत्पली तुपपर्पट्या ' इति पा० ।

मृत्स्नाऽस्त्यस्या क्षेत्रत्वेन । अर्शआद्यच् (५।२।१२७)। 'मृत्स्ना मृत्सातुवर्यौ स्त्री' [ इति मे० ८३।१६ ]॥ ( ३ ) ॥*॥ तुवरोऽस्त्यस्या । ठन् (५।२।११५)। टाप् (४।१।४) ॥ * ॥ 'वार्षिका मल्लिका तूवर्याढकी वच्छुरा छोटी' इति बोपालितात् तूवरी' च ॥ ( ४ ) ॥ * ॥ मृतमाल्यति । 'अल भूषणादौ' (भ्वा० प० से०) ण्यन्त । अण् (३।२।१)। 'सञ्ज्ञाया कन्' (५।३।७५) ॥ *॥ 'अजिता तुवरा स्तुत्या मृत्स्ना मृत्तालकम्' इति कोशाद् द्वितकार च । मृदि ताल प्रतिष्ठाऽस्य ॥ ( ५ ) ॥ * ॥ सुराष्ट्रे जातम् । जनी–' (दि० आ० से०) । सप्तम्या जनेर्ड' (३।२।९७) ॥ (६) ॥ * ॥ षट् 'तुवरिकाया' 'तुवर्' इति ख्याताया ।

कुटन्नट दाशपुर वानेयं परिपेलवम् ॥ १३१ ॥
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ।

कुटन्नटम्, दाशपुरम्, वानेयम्, परिपेलवम्, प्लवम्, गोपुरम्, गोनर्दम्, कैवर्तीमुस्तकम् ( ८ न ), 'छोटा नागरमोथा, कैवर्तीमुस्तक, जलमोथा' के ८ नाम हैं।

किवति ॥ कुटन् वक्रीभवन् नटति । 'नट स्पन्दने' ( चु० प० से० )। अच् (३।१।१३४) ॥ ( १ ) ॥*॥ दाशान् कैवर्तान् पिपर्ति । 'पॄ पालनपूरणयो' (जु० प० से०)। मूलविभुजादित्वात् (वा० ३।२।५) क ॥*॥ 'दशपूरम्' इति, दशपुर' इति च क्वचित् पाठ । दश पूरयति 'पूर पूर्तौ' कर्मण्यण् ( ३।२।१ ) । यत्तु– दश पूरयति—इति विगृह्य इगुपधत्वात् (३।१।१३५) 'क'— इत्याह मुकुट । तन्न । 'णिजन्तस्येगुपधत्वाभावात् । अकारान्तेऽस्मिन्नुपपदात्सोपपदो विप्रतिषेधेन' (३ २।१) इति वार्तिकाद् अण्प्रसङ्गाच्च ॥*॥ दश पुरोऽस्या । 'ऋक्पूर-ब्धूर्–' ( ५।४।७४ ) इति समासान्त । 'दशपूर दशपुर प्लवन जीविताह्वयम्' इति वाचस्पति ॥ (२) ॥*॥ वने पानीये जायते । 'नद्यादित्वात्–' (४।३।९७) ढक ॥ * ॥ वन्य च । 'परिपेलव प्लव वन्यं तत् कुटन्नटसशब्दम् । जायते मण्डूकाकार शैवालदलसञ्चये । कैवर्तीमुस्तके क्लीब शोणके वा कुटन्नट इत्य-जय ॥ ( ३ ) ॥ * ॥ परित पेलव मृदु ॥ (४) ॥*॥ प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । अच (३।१।१३४) । 'प्लव कारण्डवे भेके कुलके भेलके कपौ । शब्दे प्लुतिगतौ प्लक्षे चण्डालजलकाकयो । प्लव गन्धतृणे प्रोक्त कैवर्तीमुस्तकेऽपि च' [इति विश्व १६२।५–६] । प्लवगो वानर भेके सारथौ चोष्णदीधिते' [इति मे० २४।४०] ॥ (५) ॥*॥ गा जल पिपर्ति । 'पॄ पालने' (जु० प० से०)। मूलविभुजादि (३।२।५) । गोर्जल पुरमस्य, इति वा ॥ ( ६ ) ॥*॥ गा जल नर्दयति । 'नर्द शब्दे' ( भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (७) ॥*॥ कवर्तीना जाति कैवर्ती । कैवर्त्या मुस्तकम् ॥ (८) ॥*॥ अष्टौ 'कैवर्तीमुस्तकस्य' 'मोथा' इति ख्यातस्य ।

ग्रन्थिपर्णं शुकं बर्हिपुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥

ग्रन्थिपर्णम्, शुकम्, बर्हिपुष्पम्, स्थौणेयम्, कुक्कुरम् (५ न), 'कुकरौन्हा या गठिवन' के ५ नाम हैं।

ग्रन्थीति ॥ ग्रन्थौ पर्णान्यस्य । ग्रन्थय इव पर्णान्यस्य इति वा ॥ (१) ॥*॥ शोचति । शुच शोके' (भ्वा० प० से०) । शु गतौ' ( ) वा । 'शुकवल्कोल्का' ( उ० ३।४२) इति निपात । 'ग्रन्थिपर्णे शिरीषे च शुक[1] स्यात्' इति विश्व । [ ४।२६ ] । 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि, ग्रन्थिपर्णे नपुसकम्' [इति मे० ४।३७] ॥ * ॥—शुकस्येव बर्हाणि पर्णान्यस्य ('शुकबर्हम्') इत्येक नाम—इत्येके ॥ ( २ ) ॥ * ॥ बर्ह परत्र प्रशस्तमस्य । इनि ( ५।२।११५ ) ॥ पुष्प्यति । 'पुष्प विकसने' (दि० प० से०) । अच् ( ३।१। १३४) । 'बर्हिपुष्पम्' इत्येक नाम—इत्येके ॥*॥ 'बर्ह-पुष्पम्' इत्यन्ये ॥*॥'बर्हम्' इति पृथग् नाम, इति कश्चित् ॥ ( ३ ) ॥*॥ स्थूणाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१। १२०) ॥(४)॥*॥ कुक्कुरोऽस्यास्ति । कुक्कुरशब्दस्तद् गन्धे लाक्षणिक । अर्शआद्यच् ( ५।२।१२७ ) ॥ ( ५ ) ॥ * ॥ 'मरुत् इत्यप्यन्येति । 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुसकम्' [ इति मे० ६४।१४३ ] ॥*॥ पञ्च ग्रन्थिपर्णस्य' 'कुक्कुरवद्रा' इति ख्यातस्य ।

मरुन्माला तु पिशुना स्पृक्का देवी लता लघु ।
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३३ ॥

मरुन्माला, पिशुना, स्पृक्का, देवी, लता' लघु, समुद्रान्ता, वधू कोटिवर्षा, लङ्कोपिका ( १० स्त्री ), 'असबरग, स्पृक्का, असरक, एक तरह का शाक-विशेष' के १० नाम हैं।

मरुदिति ॥ मरुद्भिर्मल्यते । 'मल धारणे ( भ्वा० आ० से० ) । घञ ( ३।३।१९ ) । व्यस्त समस्त च नामेदम् । 'स्पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघु । समुद्रान्ता वधू कोटिवर्षा लङ्कोपिका मरुत् । मुनिर्माल्य-वती माला मोहना कुटिला लता' इति वाचस्पति । म्रियते । 'मृङ प्राणत्यागे' ( तु० आ० स० )। 'मृग्रोरुति ' (उ० १।९४) ॥*॥ मल्यते । 'मल धारणे' (भ्वा० आ० से०) । घञ् (३।३।१९) ॥ (१) ॥ *॥ पिंशति । 'पिश

[1] 'शुक' इति पा० ।

अवयवे' ( तु० प० से० ) । 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्यूनन् । 'पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' [ इति मे० ८९।९१–९२ ] ॥ ( २ ) ॥*॥ स्पृश्यते । 'स्पृश स्पर्शने' ( तु० प० अ० ) । बाहुलकात्कक् ॥*॥ पृषोदरादित्वात् ( ६।३।१०९ ) सलोपे 'पृक्का' अपि ॥ (३) ॥*॥ दीव्यति । 'देवी कृताभिषेकायां तेजनीपृक्कयोरपि' [ इति मे० १५८।१२ ] ॥ ( ४ ) ॥*॥ लतति । 'लत आघाते' सौत्र. । अच् (३।१।१३४) । 'लता प्रियङ्गुशाखयोः । पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च । माधवीदूर्वयोः–' [इति मे० ५७।५१–५२] ॥ (५) ॥*॥ लङ्घ्यते । 'लघि गतौ' ( भ्वा० आ० से० ) । 'लङ्घिबंह्योर्नलोपश्च' ( उ० १।२९ ) इत्यु । 'लघु रगुरौ च मनोज्ञे नि.सारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागरुणि पृक्कानामौषधौ तु स्त्री' [ इति मे० २६।५ ] ॥ ( ६ ) ॥ * ॥ समुद्रोऽन्तोऽस्या ॥ ( ७ ) ॥ * ॥ वहति । उह्यते वा । 'वहो धश्च' (उ० १।८३) इत्यू । 'वधू. स्त्री शारिवौषधौ । स्नुषाशटीनवोढासु भार्यापृक्काङ्गनासु च' [इति मे० ७९। १४–१५] । 'पृक्का च महिला वधू' इति त्रिकाण्डशेष [३।३।२२३] ॥ ( ८ ) ॥ * ॥ कोटिभिरग्रैर्वर्धति मधु । 'वृषु सेचने' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (९) ॥*॥ लङ्कायामुप्यते । 'डुवप्' [बीजसन्ताने] (भ्वा० उ० अ०) । क्वुन् ( उ० २।३२ ) । 'वचिस्वपि–' (६।१। १५) इति वस्य उ ॥ ( १० ) ॥*॥ दश 'स्पृक्काया' 'असबर' इति ख्यातस्य ।

## तपस्विनी जटा मांसी जटिला लोमशा मिसी ।

**तपस्विनी, जटा, मांसी, जटिला, लोमशा, मिसी ( ६ स्त्री ), 'जटामांसी' के ६ नाम हैं ।**

तपेति ॥ तपोऽस्त्यस्या । जटिलत्वात् । 'अस्मायामेधास्रजो विनिः' (५।२।१२१) इति विनि ॥ (१) ॥*॥ जटाऽस्त्यस्या । अर्शआद्यच् ( ५।२।१२७ ) । यद्वा, जटति । 'जट संघाते' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (२) ॥*॥ मन्यते । 'मनेर्दीर्घश्च' (उ० ३।६४) इति स । गौरादि ( ४।१।४१ ) । 'मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' [इति मे० १७०।८] ॥ (३) ॥*॥ जटाऽस्त्यस्या. । पिच्छादीलच् ( ५।२।१०० ) । 'जटिला पिप्पलीमांस्योर्जटायुक्ते तु वाच्यवत्' [ इति मे० १५१।९२ ] ॥ (४) ॥*॥ लोमानि सन्त्यस्याः । लोमादिश.(५।२।१००)। 'लोमशो मुनिमेषयो । [लोमान्विते स्त्रियां काकजङ्घामासीवचासु च । शूकशिम्बिमहामेदाकासीसे[1] डाकिनीभिदि

[ इति मे० १६४।२७–२८] ॥ (५) ॥*॥—मासीत्वादामिषी—इति स्वाम्युक्तो विग्रहोऽयुक्त । तथापाठस्य क्वचिददर्शनात् । मस्यति । 'मसी परिणामे' ( दि० प० से० ) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति वा ङीष् । पृषोदरादि ( ६।३। १०९) ॥ (६) ॥*॥ षट् 'जटामासी' इति ख्यातायाः ।

## त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥ १३४ ॥

**त्वक्पत्रम्, उत्कटम्, भृङ्गम्, त्वचम्, चोचम्, वराङ्गकम् ( ६ न ), 'दालचीनी' के ६ नाम हैं ।**

त्वगिति ॥ त्वगिव पत्रमस्य ॥*॥ 'त्वग्' अपि नामास्य। 'त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषत.' [इति मे० २७।६] ॥ (१) ॥*॥ अत्यन्त उत्कटगन्धित्वात् 'सम्प्रोदश्च कटच्' ( ५।२।२९ ) ॥ ( २ ) ॥ * ॥ बिभर्ति । 'भृञः किन्नुट् च' ( उ० १।१२४ ) इति गन् ॥ ( ३ ) ॥*॥ प्रशस्ता त्वगस्यास्ति । अर्शआद्यच् (५।२।१२७) ॥ (४) ॥*॥ प्रशस्तं चोचमस्यास्ति । अर्शआद्यच् (५।२।१२७)। 'त्वक्त्वचचोचशब्दा स्युर्वल्के चर्मणि पत्रके' इति धरणि. (५) ॥ * ॥ वरमङ्गमस्य । 'शेषाद्विभाषा' (५।४।१५४) इति कप् ॥ ( ६ ) ॥ * ॥ षट् 'त्वक्पत्रस्य' 'तज' इति ख्यातस्य ।

## कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ।

**कर्चूरकः, द्राविडकः, काल्पकः, वेधमुख्यकः ( ४ पु ), 'कचूर' के ४ नाम हैं ।**

केति ॥ कर्जति । 'कर्ज व्यथने' ( भ्वा० प० से० ) । खर्जादित्वात् ( उ० ४।९० ) ऊर । पृषोदरादि (६।३। १०९) । स्वार्थे कन् ( ५।३।७५ ) ॥ (१) ॥*॥ द्रविडे देशे जात । 'तत्र जात' (४।३।२५) इत्यण् । स्वार्थे कन् ( ५।३।७५ ) ॥ ( २ ) ॥*॥ कल्पे विधौ.भव । 'तत्र भव'·( ४।३।५३ ) इत्यण् । कन् ( ५।३।७५ ) ॥*॥ पाठान्तरे काले साधु । 'तत्र साधु' ( ४।४।९८ ) इति यत् । स्वार्थे कन् (५।३।७५) ॥ (३) ॥*॥ वेधे मुख्यः । स्वार्थे कन् ( ५।३।७५ ) ॥ (४) ॥*॥ चत्वारि 'कर्चूर' इति ख्यातस्य ।

## ओषध्यो जातिमात्रे स्युः

**ओषधी ( स्त्री ), 'जातिमात्र' अर्थात् 'व्रीहि ( धान्य ), यव, चना आदि' के अर्थ में प्रयुक्त होता है ।**

ओषेति ॥ जातिमात्रविवक्षायाम् 'ओषधी' शब्दप्रयोगः ।

1. 'शूकशिम्बामहामेदाकाशीशे' इति पा० ।

अजातौ सर्वमौषधम् ॥ १२५ ॥

औषधम् ( न ), 'जातिसे भिन्न' अर्थात् 'दवा आदि' के अर्थ में प्रयुक्त होता है।

अजेति ॥ द्रव्यमात्रविवक्षाया तु 'औषध'शब्दप्रयोग । 'ओषधेरजातौ' ( ५।४।३७ ) इत्यण् । 'सर्वम्' इत्यनेन—घृततैलादिकमप्यौषधशब्दवाच्यम्—इत्युक्तम् ।

शाकाख्यं पत्रपुष्पादि

शाकम् ( न ), 'साग' अर्थात् 'जिससे फल, फूल आदि ('जड़, शाखा, कन्द '' '), का बोध हो, उसका १ नाम है।

शाकेति ॥ शक्यते भोक्तुम् । 'शक्लृ शक्तौ' (स्वा० प० अ०) । घञ् (३।३।१९)। यद्वा–श्यति । 'शो तनूकरणे' (दि० प० से०) । बाहुलकात् कः ॥ (१) ॥*॥ आदिना फलनाडयग्रमूलादिपरिग्रह । 'मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक पुष्पं कवचं चैव शाक दशविध स्मृतम्' । अधिरूढक तालबीजाङ्कुरास्थिमज्जादि ।

तण्डुलीयोऽल्पमारिषः ।

तण्डुलीयः, अल्पमारिषः (२ पु), 'चौराई' के २ नाम हैं।

तेति ॥ तण्डुलाय हित । 'तस्मै हितम्'(५।१।५)इति छ । 'तण्डुलीय शाकभेदे विडङ्गतरुताप्ययो' [ इति हैम ४।२३०, मे० १२१।११९ च ] ॥ (१) ॥*॥ 'मारिष' शाकभिदार्ये नाटयोक्त्या पुंसि, योषिति । [ दक्षाम्बायाम्' इति मे० १६८।४३-४४ ] । अल्पश्चासौ मारिषश्च ॥ (२) ॥*॥ 'तण्डुलीयस्य' 'चउराई' इति ख्यातस्य ।

विशल्याऽग्निशिखाऽनन्ता फलिनी शक्रपुष्प्यपि ॥१२६॥

विशल्या, अग्निशिखा, अनन्ता, फलिनी, शक्रपुष्पी (५ स्त्री )'अग्निशिखा, इन्द्रपुष्पी' के ५ नाम हैं।

विशेति ॥ विगत शल्यमनया । 'विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च । शल्येन रहिताया च प्रियाया लक्ष्मणस्य च' इति हेमचन्द्र [४।५३८]॥(१)॥*॥ अग्नेरिव शिखा सन्तापो यस्या । 'अथाग्निशिखमुद्दिष्ट कुसुम्भे कुङ्कुमेऽपि च । लाङ्गलिक्याख्यौषधौ च विशल्यायां च योषिति'[इति मे० २१।१४]॥(२)॥*॥ न अन्तो यस्या ॥ (३) ॥ * ॥ फलानि सन्त्यस्या । इनि (५।२।११५) । 'फलिन्यग्निशिखायां स्त्री 'फलिन्या फलिने त्रिषु'[इति मे० ८९।९५] ॥ (४) ॥ * ॥ शक्रोऽर्जुनतरु पुष्पमस्या । शक्रशब्द पुष्पे लाक्षणिक 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (५) ॥ ॥ पञ्च 'अग्निशिखाया' 'इन्द्रपुष्पी' इति ख्याताया ।

१. 'फल्या स्त्री फलिनि त्रिषु' व पा० ।

स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः ।
जुङ्गः

ऋक्षगन्धा, छगलान्त्री, आवेगी (३ स्त्री ), वृद्धदारकः, जुङ्गः ( २ पु ), 'विधारा' के ५ नाम हैं।

स्यादिति ॥ ऋक्षस्येव गन्धोऽस्या. । समासान्तस्यानित्यत्वात् 'उपमानाच्च' ( ५।४।१३७ ) इतीत्र ॥ * ॥ 'ऋष्यगन्धा' इति पाठान्तरम् ॥( १ ) ॥*॥ छगलस्येवान्त्रमस्या ॥ * ॥ 'छगल' इति पृथग् नाम–इत्यन्ये । छागे तु 'छगलश्छागीवृद्धदारकयो स्त्रियाम्' इत्यनेकार्थकोश । ['छगलं नीलवस्त्रे, ना छागे, स्त्री वृद्धदारके' इति मे० १५१।९१ ] ॥ (२) ॥*॥ आवेगोऽस्त्यस्या । अर्शआद्यच् ( ५।२।१२७ ) । गौरादि (४।१।४१) ॥ (३) ॥ * ॥ वृद्धो दारकोऽस्मात् । वृद्धत्व दारयति वा । ण्वुल् ( ३।१।१३३ ) ॥ ( ४ ) ॥*॥ जुङ्गति । 'जुगि वर्जने' ( भ्वा० प० से० ) अच् ( ३।१।१३४ ) जुङ्ग्यते वा । घञ् ( ३।३।१९ ) ॥ ( ५ ) ॥ * ॥ पञ्च 'वृद्धदारकस्य' ।

ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥१२७॥

ब्राह्मी, मत्स्याक्षी, वयस्था, सोमवल्लरी ( ४ स्त्री), 'ब्राह्मी' के ५ नाम हैं।

ब्राह्मीति ॥ ब्रह्मण इयम् । 'ब्राह्मोऽजातौ' (६।४।१७१) इत्यणि टिलोप ॥ ( १ ) ॥*॥ मत्स्याक्षीव पुष्पमस्या । मत्स्यशब्द स्वावयवे गौण । 'बहुव्रीहौ–' ( ५।४।११३ ) इति षच् । ङीष् ( ४।१।४१ ) ॥ ( २ ) ॥ * ॥ वयसि तिष्ठत्यनया । 'घञर्थे क' ( वा० ३।३।५८ ) । 'वयस्था तु स्त्रिया ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलाया च काकोल्या पथ्याया तरुणे त्रिषु' [इति मे० ७३।२२] ॥ (३) ॥*॥ सोमस्य वल्लरी ॥ ( ४ ) ॥ * ॥ चत्वारि 'ब्राह्म्या' ।

पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ।

पटुपर्णी, हैमवती, स्वर्णक्षीरी, हिमावती (५ स्त्री), 'मकोय' के ५ नाम हैं।

पटि्वति ॥ पटूनि पर्णान्यस्या । 'पाककर्ण–' ( ४।१।६४ ) इति ङीष् ॥ ( १ ) ॥ * ॥ हिमवति जाता । 'तत्र जात' ( ४।३।२५ ) इत्यण् ॥ (२) ॥ * ॥ स्वर्णमिव क्षीरमस्या । गौरादि ( ४।१।४१ ) ॥ (३) ॥ * ॥ हिममस्त्यस्या । मतुप् (५।२।९४ ) । 'शरादीना च' (६।३।१२० ) इति दीर्घ ॥ ( ४ ) ॥ * ॥ 'हिमवर्ण पयस्तस्या हिमवद्भूमिसंभवा । सा नागजिह्विकाकारा तन्मूलं वणिजौषधम्' ॥ * ॥ चत्वारि 'स्वर्णक्षीर्या' 'मको' इति ख्याताया ।

**हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥१३८॥**

हयपुच्छी, काम्बोजी, माषपर्णी, महासहा ( ४ स्त्री ), 'माषपर्णी, वनउड़द' के ४ नाम हैं।

हयेति ॥ हयपुच्छमिव पर्णान्यस्याः । गौरादिः ( ४।१।४१) ॥ (१) ॥*॥ कम्बोजे देशे भवा । 'तत्र भवः' (४।३।५३) इत्यण् ॥ (२) ॥ * ॥ माषस्येव पर्णान्यस्याः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (३) ॥*॥ महती सहा । 'आन्महतः–' (६।३।४६) इत्यात्वम् । 'महासहा माषपर्ण्यामम्लानेऽपि च योषिति' (इति मे० १७७।३४)॥ (४) ॥*॥ चत्वारि 'माषपर्ण्याः' ।

**तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।**

तुण्डिकेरी, रक्तफला, बिम्बिका, पीलुपर्णी ( ४ स्त्री ), 'कुंदुरुन, कुन्दरु' के ४ नाम हैं।

तुण्डीति ॥ तुण्डं चञ्चुरस्ति येषाम् । 'अतः–' (५।२।११५) इति ठन् । तुण्डिकानीरयति । 'ईर प्रेरणे' (अ० आ० से० ) । 'कर्मण्यण्' ( ३।२।१ ) ॥*॥ (तुण्डकेरी) इति पाठान्तरे प्रशस्तं तुण्डम् । 'प्रशंसायां कन्' (      )। तुण्डकमीर्ते । अण् (३।२।१) ॥ ( १ ) ॥*॥ रक्तं फलमस्याः । अजादिटाप् ( ४।१।४ ) ॥ ( २ ) ॥*॥ बिम्ब कायति । 'कै शब्दे' ( भ्वा० प० से० ) । 'आतोऽनुप–' (३।२।३) इति क । 'ङ्यापो –'(६।३।६३) इति ह्रस्व ॥ ( ३ ) ॥*॥ पीलोरिव पर्णमस्याः । पीलुशब्दः स्वावयवे गौणः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (४) ॥*॥ चत्वारि 'तुण्डिकेर्याः' 'कुन्दूरी' इति ख्यातायाः ।

**बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका ॥ १३९ ॥**

बर्बरा, कबरी, तुङ्गी, खरपुष्पा, अजगन्धिका ( ५ स्त्री ), 'बबई, बबईनामक शाक-विशेष' के ५ नाम हैं।

बर्बेति ॥ वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) । 'कृगृ–'(उ० २।१२१) इति ष्वरच् । अनित्य षित्वात् ङीप् । 'बर्बरः पामरे केशे चक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकभेदपुष्पभिदो स्त्रियाम्' [इति मे० १३७।२०९]॥ (१) ॥*॥ वृणोति । अच् (३।१।१३४) । गौरादि· (४।१।४१)। कस्य शिरसो वरी । 'कवरं लवणाम्लयोः । कवरी केशविन्यासशाकयोः' इति हैमः [३।५६७-६८] ॥ (२) ॥*॥ तुञ्जति । 'तुजि हिंसायाम्' ( भ्वा० प० से० ) । अच् (३।१।१३५) । न्यङ्क्वादि· (७।३।५३) । 'तुङ्गः पुनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्रायां बर्बरायामपीष्यते' [इति हैमः २।३३] ॥ (३) ॥*॥ खरं पुष्पमस्याः ॥ ( ४ ) ॥*॥ अजस्येव गन्धोऽस्याः । अजशब्दः स्वगन्धे लाक्षणिकः ॥ (५) ॥*॥ पञ्च 'खरपुष्पायाः' ।

**एलापर्णी [illegible] सुवहा रास्ना युक्तरसा च सा ।**

एलापर्णी, सुवहा, रास्ना, युक्तरसा ( ४ स्त्री ), 'एलापर्णी' के ४ नाम हैं।

एलेति ॥ एलाया इव पर्णान्यस्याः । 'पाक–' (४।१।६४) इति ङीष् ॥ ( १ ) ॥ * ॥ सुवहति । अच् ( ३।१।१३४) । 'सुवहा शल्लक्येलापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गः स्यात्'[इति मे० १७७।२५-२६] ॥ ( २ ) ॥*॥ रासते । 'रासृ शब्दे' (भ्वा० आ० से०) । रास्यते वा । 'रास्नासास्ना–' (उ० ३।१५) इति साधुः ॥ (३) ॥*॥ युक्तो रसो यस्याः ॥ (४) ॥*॥ चत्वारि 'एलापर्ण्याः' ।

**चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका ॥१४०॥**

चाङ्गेरी, चुक्रिका, दन्तशठा, अम्बष्ठा, अम्ललोणिका (५ स्त्री ), 'नोनी, चूक' (शाक-विशेष) के ५ नाम हैं।

चेति ॥ "[1]चाङ्गस्तु शोभने दक्षे' [इति मे० २२।५] । चाङ्गमीरयति । 'ईर् गतौ' (अ० आ० से०) । 'कर्मण्यण्' (३।२।१) ॥ (१)॥*॥ चुक्कयति । 'चुक्क व्यथने'(चु० प० से०) । 'ऋज्रेन्द्र–' (उ० २।२८) इति साधु । स्वार्थे कन् (५।३।७५) । चुक्रमिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् वा ॥ (२) ॥ * ॥ शठति । 'शठ हिंसाक्लेशकैतवे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) दन्तानां शठा । 'स्याद्दन्तशठो जम्बीरे कपित्थे [2]करमर्दके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां च योषिति'[इति मे० ४०।१९-२०] ॥ (३) ॥*॥ अम्बे तिष्ठति । । 'सुपि–' (३।२।४) इति क । 'अम्बाम्ब–' (८।३।९७) इति षत्वम् । 'अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च । अम्बष्ठाप्यम्ललोण्यां स्यात् पाठायूथिकयोरपि' [ इति मे० ३९।११ ] ॥ (४) ॥*॥ अम्ललेभ्य ऊना । स्वार्थे कन् ( ५।३।७५ ) । पृषोदरादित्वात् (६।३।१०९) ण ॥ (५) ॥*॥ पञ्च 'अम्ललोणिकायाः' 'लोनिजा' इति ख्यातायाः ।

**सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।**

सहस्रवेधी, चुक्रः, अम्लवेतसः, शतवेधी ( ४ पु ), 'अमलबेत' के ४ नाम हैं।

सहेति ॥ सहस्रं शतं वा वेधितुं शीलमस्य । 'विध विधाने' ( तु० प० से० ) । 'सुपि–' ( ३।२।७८ ) इति णिनि ॥ (१) ॥*॥ चुक्रयत्यनेन । 'ऋज्रेन्द्र–' (उ० २।२८) इति साधुः ॥ ( २ ) ॥ * ॥ अम्लश्चासौ वेतसश्च ।

१. 'चङ्ग' इति पा० ।

२. 'कर्मरङ्गके' इति पा० ।

नम्रत्वात् ॥ (३) ॥*॥ चत्वारि 'अम्लवेतसस्य' 'अम्लवेद' इति ख्यातस्य ।

नमस्कारी गण्डकाली समङ्गा खदिरेत्यपि ॥१४१॥

नमस्कारी, गण्डकाली, समङ्गा, खदिरा ( ४ स्त्री ), 'लजालु, छुईमुई' के ४ नाम हैं।

नमेति ॥ नमस्करणशीला । 'सुपि–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ गण्डेषु ग्रन्थिषु काली ॥ (२)॥*॥ समङ्गेति । 'अगि गतौ' (भ्वा० प० से०) । अच् ( ३।१। १३४) ॥ ( ३ ) ॥*॥ खदति । 'खद स्थैर्ये' (भ्वा० प० से० ) । 'अजिरशिशिर–' ( उ० १।५३ ) इति साधु । 'खदिरा' शाकभेदे स्त्री ना चन्द्रे दन्तधावने' [इति मे०१३३। १४६] ॥ (४) ॥*॥ चत्वारि 'खदिरायाः' 'हातजोडी' इति ख्यातायाः ।—नव 'लजालू' इति ख्यातस्य—इति मुकुटः ।

जीवन्ती जीवनी जीवा जीवनीया मधुः स्रवा ।

जीवन्ती, जीवनी, जीवा, जीवनीया, मधु, स्रवा ( ६ स्त्री ), 'जीवन्ती' के ६ नाम हैं।

जीवेति ॥ जीवति । 'जीव प्राणधारणे' ( भ्वा० प० से० ) । शता[2] ( ३।२।१२४ ) 'उगितश्च' ( ४।१।६ ) इति ङीप् । 'जीवन्ती जीवनीशम्योर्गुडूची[3]वन्दयोरपि' [ इति मे० ६२।११२ ] ॥ (१) ॥ * ॥ जीव्यतेऽनया । 'करणा–' ( ३।३।११७ ) इति ल्युट्, युच् (उ०२।३७) वा । 'जीवनी जीवना चापि जीवन्तीभेदयोः क्रमात्' [इति मे० ८७।६९] ॥ (२) ॥*॥ जीवयति । पचाद्यच् (३।१।१३४)।'जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु । स्त्री तु जीविते' [इति मे० १५८।८-९] ॥ (३) ॥*॥ जीवनाय हिता । 'तस्मै हितम्' ( ५।१।५ ) इति छ ॥ ( ४ ) ॥*॥ मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'फलिपाटि–' ( उ० १।१८ ) इत्यु धश्च । 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्या तु योषिति' [इति मे० ७९।११-१२] ॥(५)॥*॥ स्रवति । 'स्रु गतौ' ( भ्वा० प० से०) । अच् (३।१।१३४) ॥ * ॥ 'मधुस्रवा' इत्येकं नाम—इत्यन्ये ॥ ( ६ ) ॥ * ॥ षट् 'जीवन्तिकायाः' गुर्जरदेशे 'डोडी' इति ख्यातायाः ।

कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥

कूर्चशीर्ष, मधुरक, शृङ्ग, ह्रस्वाङ्ग, जीवक (५ पु), 'जीवक' के ५ नाम हैं।

कूर्चेति ॥ कूर्चं श्मश्रु । तद्वच्छीर्षमस्य ॥ (१) ॥*॥ मधुर एव । स्वार्थे कन् ( ५।३।७५ ) । 'स्याद्ध्रस्वाङ्गो मधुरको मुकुरश्चिरजीवक' इति रभसः ॥ (२) ॥ * ॥ शृणाति । 'शॄ हिंसायाम्'(क्र्या० प० से०)। 'शृणातेर्ह्रस्वश्च' ( उ० १।१२६ ) इति गन् नुट् च । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात् कूर्चशीर्षके । स्त्री विषाया स्वर्णमीनभेदयोर्ऋषभौषधौ' [इति मे० २३।२५-२६] ॥(३)॥*॥ ह्रस्वान्यङ्गान्यस्य ॥ (४) ॥*॥ जीवयति । ण्वुल् (३।१।१३३) । 'जीवकः प्राणके [1]पीतसारकृपणयोरपि । कूर्चशीर्षे च पुंसि स्यादा जीवे जीविका मता । त्रिषु सेविनि वृद्धयाजीविनोराहितुण्डिके' [ इति मे० ८।९५-९६ ] ॥ (५) ॥ * ॥ पञ्च 'अष्टवर्गान्तर्गतजीवकस्य' इति मुकुटः ।

किराततिक्तो भूनिम्बोऽनार्यतिक्तः

किराततिक्त , भूनिम्ब , अनार्यतिक्त ( ३ पु ), 'चिरायता' के ३ नाम हैं।

किरेति ॥ किरातदेशोऽस्ति जन्मस्थानमस्य । अर्शआद्यच् (५।२।१२७)। किरातश्चासौ तिक्तश्च ॥ (१) ॥*॥ भुवो निम्ब इव ॥ (२) ॥*॥ अनार्यप्रियश्चासौ तिक्तश्च । शाकपार्थिवादि (वा० २।१।७८) ॥ (३) ॥*॥ 'चिरातिक्त' अपि । 'किरातश्चिरातिक्तश्च भूनिम्बहिमकावपि' इति रभसः ॥*॥ त्रीणि 'भूनिम्बस्य' 'चिरायता' इति ख्यातस्य ।

अथ सप्तला ।

विमला सातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥

सप्तला, विमला, सातला, भूरिफेना, चर्मकषा ( ५ स्त्री ), 'सेहुड, थूहर' के ५ नाम हैं।

अथेति ॥ सप्त लाति । 'आतोऽनुप–' (३।२।३) इति क । 'अथ सप्तला । [2]वनमालाचर्मकषापागुञ्जासु पाटली स्त्रियाम्' [ इति मे० १५५।१४३-४४ ] ॥ ( १ ) ॥*॥ विगता मला यया । 'स्याद्विमला स्त्रियाम् । [3]सातलायां भुवो भेदे निर्मले त्वभिधेयवत्' [ इति मे० १५४।१३१ ]॥

१ 'खादिरी' इति पा० ।

२. शतृप्रत्ययेनेत्यर्थः ।

३ 'वृन्दयोरपि' इति पा० ।

१ 'पीतशाल' इति पा० ।

२ 'नवमाली' इति पा० ।

३ 'शातलायाम्' इति पा० ।

( २ ) ॥*॥ सातं सुखं लाति । 'आतोऽनुप-' (३।२।३) इति क. ॥ ( ३ ) ॥ ८ ॥ भूरयः फेना यस्याः ॥ (४) ॥*॥ चर्मण. कषा ॥ (५) ॥*॥ पञ्च 'सप्तलाया.', 'सीहुण्ड'भेदस्य 'चर्मघासस्य' इत्यन्ये ।

## वायसोली स्वादुरसा वयस्था

वायसोली, स्वादुरसा, वयस्था ( ३ स्त्री ), 'काकोली' के ३ नाम हैं ।

वायेति ॥ वायसान् ओलण्डति । 'ओलडि उत्क्षेपणे' (चु० प० से०) । 'अन्येष्वपि-' (वा० ३।२।१०१) इति डः । शकन्ध्वादि. (वा० ६।१।९४) ॥ (१) ॥*॥ स्वादु रसोऽस्या. ॥ ( २ ) ॥ * ॥ वयसि स्थीयतेऽनया । 'घञर्थे क.' (वा० ३।३।५८) । 'वयस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु' [इति मे० ७३।२२-२३] ॥ ( ३ ) ॥*॥ त्रीणि 'वयस्थायाः.' 'ककोडी' इति ख्यातायाः ।

अथ मकूलकः ।

## निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥

मकूलकः, निकुम्भः ( २ पु ), दन्तिका, प्रत्यक्श्रेणी, उदुम्बरपर्णी ( ३ स्त्री ), 'दन्तीनामक औषध' के ५ नाम हैं ।

मकेति ॥ मङ्क्यते । 'मकि मण्डने' (भ्वा० आ० से० ) । पिञ्जादिभ्य ऊलच् ( उ० ४।९० ) । स्वार्थे कन् । आगमशासनस्यानित्यत्वान्न नुम् ॥ * ॥ पृषोदरादित्वात् ( ६।३।१०९ ) उत्वे 'मुकूलक.' अपि-इत्यन्ये ॥ ( १ ) ॥*॥ कुं भूमिं बिभर्ति । 'संज्ञायां भृतृ-' ( ३।२।४६ ) इति खच् । 'खच्च डिद्वा' (३।२।३८) । नियतः कुम्भ. । 'प्रादयो गता-' ( २।२।१८ ) इति समासः । 'निकुम्भ. कुम्भकर्णस्य तनये दन्तिकौषधौ' [इति मे० १०७।१७] ॥ (२) ॥*॥ दाम्यति । दम्यते वा । 'दमु उपशमे' (दि० प० से०) । 'हसिमृग्रिण्-' ( उ० ३।८६ ) इति तन् । स्वार्थे कन् ( ५।३।७५ ) । 'दन्तोऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम्' [ इति मे० ५५।२३ ] ॥ ( ३ ) ॥*॥ प्रत्यञ्ची श्रेण्यस्या. । समासान्तानित्यत्वान्न कप् ॥ (४) ॥*॥ उदुम्बरस्येव पर्णान्यस्या. । 'पाककर्ण-'(४।१।६४) इति ङीप् ॥ (५) ॥*॥ पञ्च 'वज्रदन्त्या.' ।

## अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।

अजमोदा, उग्रगन्धा, ब्रह्मदर्भा, यवानिका ( ४ स्त्री ), 'अजमोदा, अजवाइन' के ४ नाम हैं ।

अजेति ॥ अजं मोदयति । 'मुद हर्षे' (भ्वा० आ० से०) ण्यन्त. । 'कर्मण्यण्' (३।२।१) । अजादित्वात् (४।१।४) टाप् । अजेन मोदते मोद्यते वा । पचाद्यच् (३।१।१३४) । घञ् (३।३।१८) वा ॥ (१) ॥ * ॥ उग्रो गन्धोऽस्याः । 'उग्रगन्धा वचाक्षेत्रयवान्याश्छिक्किकौषधौ' इति हैम. [४।१५६] ॥ (२) ॥*॥ ब्रह्मणा दृभ्यते । 'दृभी ग्रन्थे' (तु० प० से०) । घञ् ( ३।३।१९ ) । 'कर्तृकरणे कृता-' ( २।१।३२) इति समासः ॥ (३) ॥*॥ दुष्टो यवः । 'इन्द्रवरुण-' (४।१।४९) इति ङीषानुकौ । इवार्थे (५।३।९६) स्वार्थे (५।३।७५) वा कन् ॥*॥['यमानिका' इति] यमकारपाठे यमेनानिति । 'अन प्राणने' (अ० प० से०) । ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ 'यवानीद्वयस्य' द्वे द्वे नामनी ।—चत्वार. पर्याया.—इत्येके ।

## मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥

पुष्करम्, काश्मीरम्, पद्मपत्रम् ( ३ न ), 'पुष्करमूल' के ३ नाम हैं ।

मूल इति ॥ पौष्करे मूले, इत्यन्वय. । पुष्णाति, पुष्यति वा । 'पुष पुष्टौ' (दि० प० अ०, क्रया० प० से०) । 'पुष. कित्' ( उ० ४।४ ) इति करन् । 'पुष्करं पङ्कजे व्योम्नि पय.करिकराग्रयो. । ओषधिद्वीपविहगतीर्थराजोरगान्तरे । पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च' [इति विश्व. १३७।१५३-५४] ॥ (१) ॥*॥ कश्मीरेषु भवम् । 'तत्र भव.' (४।३।५३) इत्यण् ॥ (२) ॥*॥ पद्मस्येव पत्त्रमस्य ॥*॥ 'पद्मवर्णम्' इति क्वचित् पाठ ॥ ( ३ ) ॥ * ॥ त्रीणि 'पुष्करमूलस्य' ।

## अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ।

अव्यथा, अतिचरा, पद्मा, चारटी, पद्मचारिणी ( ५ स्त्री ), 'पद्मचारिणी, स्थलकमलिनी' के ५ नाम हैं ।

अव्येति ॥ न व्यथते । 'व्यथ दु.खसचलनयो.' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । 'अव्यथो निर्व्यथे सर्पचारटीपथ्ययो. स्त्रियाम्' [ इति मे० ७३।१५ ] ॥ ( १ ) ॥ * ॥ अति चरति । अच् ( ३।१।१३४ ) ॥ ( २ ) ॥ * ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'अर्तिस्तु-' (उ० १।१४०) इति मन् ॥ (३) ॥*॥ चारयति । 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ (४)॥*॥ पद्मे चरितु शीलमस्या. । 'सुपि-' (३।२।७८) इति णिनि. ॥ ( ५ ) ॥*॥ पञ्च 'पद्माख्यस्य' ।

## काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥१४६॥

काम्पिल्यः, कर्कशः, चन्द्रः, रक्ताङ्गः ( ४ पु ), रोचनी ( स्त्री ), 'कबीला' के ५ नाम हैं ।

---

१. 'पथ्याली तरुणे त्रिषु' इति पा० ।

१. 'तीर्थराजो' इति पा० ।

केति ॥ कम्पिलाया अदूरभव । सकाशादित्वात् (४।२।८०) ण्य ॥*॥ कम्पते । 'कपि किंचिच्चलने' (भ्वा० आ० से०) । बाहुलकादिल्ल । 'प्रज्ञाद्यण्' (५।४।३८) । क जल पीलयति श्लेष्मघ्नत्वात् । 'पील प्रतिष्टम्भे' (भ्वा० प० से०) । कपूर्वात् 'इगुपध-' (३।१।१३५) इति क — इति मुकुट । तन । ण्यन्तस्यगुपधत्वाभावात् । अण्यन्ताद-ण्यण प्रसङ्गाच्च । —इत्थं निर्यकारम् [ 'काम्पल्ल' ] मन्यते—इत्येक ॥ ( १ ) ॥ * ॥ करे कषति । 'कष शब्दे' ( ) । पचाद्यच् (३।१।१३४) । अन्तर्भावितण्यर्थो वा । टकन्ध्वादि. ( वा० ६।१।९४ ) ॥ ( २ ) ॥ * ॥ चन्दति । 'चदि आह्लादने' (भ्वा० प० से०) ।'स्फायितञ्चि–' (उ० २।१३) इति रक् । 'चन्द्र. कर्पूरकाम्पिल्लसुधांशुस्व-र्णवारिषु [इति मे० १२५।३१] ॥ (३) ॥*॥ रक्तमङ्ग-मस्य । 'रक्ताङ्गस्तु महीसुते । कम्पिल्ले स्त्री तु जीवन्त्या क्लीब विद्रुमधीरयो.' [इति मे० २५।४५-४६] ॥(४)॥*॥ रोचते । रुच दीप्तौ' ( भ्वा० आ० से० ) । 'कृत्यल्युट –' (३।३।११३) इति ल्युट् । रोचनी ककंशे स्त्रियाम्' [ इति मे० ९१।१६ ] ॥ * ॥ रेचनी इति क्वचित् पाठ ॥ (५) ॥*॥ पञ्च रोचन्या ' 'कपीला' इति ख्याताया ।

प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दक ।
पद्माट उरणाख्यश्च

प्रपुन्नाड , एडगज , दद्रुघ्न , चक्रमर्दक ,पद्माट , उरणाख्य ( ६ पु ), 'चकवड़' के ६ नाम हैं।

प्रपुनेति ॥ पुमास नाडयति । 'नड भ्रंशे' चुरादि । 'कर्मण्यण् (३।२।१)। मस्यानुस्वारे (८।२।१२३)परसवर्ण (८।४।५८)। प्रकृष्ट प्रगतो वा पुन्नाड ॥ (१) ॥ * ॥ एडो मेष एव गजो यस्य । भञ्जकत्वात् । यद्वा–एलनम् । 'इल प्रक्षेपे स्वप्ने च' (तु० प० से०) । घञ् (३।३।१८)। डलयोरेकत्वम् । एडे स्वप्ने गजति । 'गज मदे शब्दे च' ( भ्वा० प० से० ) । अच (३।१।१३४) ॥ (२) ॥*॥ दद्रु हन्ति । 'अमनुष्यकर्तृके च' ( ३।२।५३ ) इति टक् । 'अत्पूर्वस्य' (८।४।२२) इति नियमान्न णत्वम् ।—क्षुभ्ना-दित्वात् ( ८।४।३९ )—इति मुकुटस्तु चिन्त्य ॥ ( ३ ) ॥*॥ चक्र दद्रु मृद्नाति । 'मृद क्षोदे' (क्र्या० प० से०)। 'कमण्यण्' (३।२।१)। स्वार्थे कन् (५।३।७५) ॥ ( ४ ) ॥ * ॥ पद्ममिव पद्मा वा पद्मसमूह वाऽटति । 'अट गतौ' ( भ्वा० प० से० )। अण् ( ३।२।१ ) ॥ ( ५ ) ॥*॥ उरणस्य मेषस्याख्याऽस्य ॥*॥ उरणस्याक्षीवाक्षि यस्य । तत्तुल्यपुष्पत्वात् । 'अक्ष्णोऽदर्शनात्' ( ५।४।७६ ) इत्यच् –इति स्वामी ॥ (६) ॥*॥ षट् 'पद्माटस्य' 'पुआड' इति ख्यातस्य ।

पलाण्डुस्तु सुकन्दक ॥ १४७ ॥

पलाण्डु , सुकन्दक- ( २ पु ), 'प्याज' के २ नाम हैं।

पलेति ॥ पलति । 'पल रक्षणे' (भ्वा० प० से० )। बाहुलकाद् आण्डुप्रत्यय ॥ (१) ॥ * ॥ शोभनमतीव वा कन्दयति । मक्षकजातिभ्रशकत्वात् । 'कदि रोदने' (भ्वा० प० से०) । अच् (३।१।१३४) । स्वार्थे कन् (५।३।७५)। ण्वुल् (३।१।१३३)वा ॥ (२)॥*॥ द्वे 'पलाण्डो.' 'प्याज' इति ख्यातस्य ।

लतार्कदुद्रुमौ तत्र हरिते

लतार्क , दुद्रुम ( २ पु ), 'हरे प्याज' के २ नाम हैं।

लतेति ॥ लतासु अर्क्यते अर्च्यते, विरुद्धलक्षणया निन्द्यते वा । 'अर्क स्तवने ( भ्वा० प० से० ), 'अर्च पूजायाम्' (भ्वा० प० से०) वा । घञ् ( ३।३।१९ ) ॥ (१) ॥*॥ दुष्टो द्रुम ॥ (२) ॥ * ॥ तत्र पलाण्डौ हरिते पालाशे ॥*॥ द्वे 'हरितवर्णपलाण्डो '।

अथ महौषधम् ।

लशुनं गृञ्जनारिष्टमहाकन्दरसोनका. ॥ १४८ ॥

महौषधम्, लशुनम् ( २ न ), गृञ्जन , अरिष्ट , महाकन्द, रसोनक ( ४ पु ), 'लहसुन' के ६ नाम हैं।

अथेति ॥ महच्च तदौषध च । 'महौषध तु शुण्ठ्या स्याद्विषाया लशुनेऽपि च' [इति मे० ८२।४८] ॥(१) ॥*॥ अश्नाति अश्नुते वा । 'अश भोजने' (क्र्या० प० से०)। अशूङ् व्याप्तौ' ( स्वा० आ० से० ) । 'अशर्लश् च' ( उ० ३।५७) इत्युनन् ॥ ( २ ) ॥ * ॥ गृञ्जते = भक्ष्यत्वेन भण्यते रोगेषु । 'गृजि शब्दे' ( भ्वा० प० से० ) । कर्मणि ल्युट् । 'गृञ्जनम् । 'विषदिग्धपशोर्मांसे क्लीब, पुंसि रसो-नके' [इति मे० ८७।५८-५९] । 'लशुन गृञ्जन चैव पला-ण्डुकवकानि च। वृन्ताकारालिकालाबुजातीया जातिदूषितम्' इति । श्वेतकन्द पलाण्डुविशेषो गृञ्जनम् । 'लशुन दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लताकश्चापरा-जिता । गृञ्जन यवनेष्टश्च पलाण्डोर्दश जातय ' इति सुश्रु-तेनोक्तत्वात् । 'गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । दीर्घनालाग्रपत्रत्वात् भिद्यतेऽसौ पलाण्डुत ' [ ? ] ॥ (३) ॥*॥ न रिष्टमशुभमस्मात् । 'अरिष्टो लशुने निम्बे फेनिले काकङ्कयो । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' [इति मे० ३५।३२-३३] ॥ ( ४ ) ॥ * ॥ महत् कन्दमस्य ॥ (५) ॥*॥ रसे आस्वादने ऊन्यते पातक-

१. 'विषदग्ध' इति पा० ।

हेतुत्वात् । 'कन परिहाणे' (चु० उ० से०) । 'एरच्' (३।३।५६)। घञ् ( ३।३।१९ ) वा । स्वार्थे कन् (५।३। ७५), क्वुन् (उ० २।३२) वा ॥ (६) ॥*॥ षट् 'लशुन' इति ख्यातस्य ।

पुनर्नवा तु शोथघ्नी

पुनर्नवा, शोथघ्नी ( २ स्त्री ), 'गदहपुर्ना' के २ नाम हैं।

पुनरिति ॥ पुनरभीक्ष्णं नवा । नूयते वा । 'ऋदोरप्' (३।३।५७) । क्षुभ्नादि. (८।४।३९) ॥ (१) ॥*॥ शोथं हन्ति । 'अमनुष्य–' (३।२।५३) इति टक् । 'टिड्ढा–' (४।१।१५) इति ङीप् ॥ (२) ॥ * ॥ द्वे 'पुनर्नवायाः' 'गदहपूर्णा' इति ख्यातायाः ।

वितुन्नं सुनिषण्णकम् ।

वितुन्नम्, सुनिषण्णकम् ( २ न ), 'विसखपरिया' के २ नाम हैं।

वीति ॥ विगत तुन्नं व्यथनमस्मात् । 'वितुन्नं सुनिषण्णे च शैवाले च नपुंसकम्' [इति मे० ६२।२६] ॥ (१) ॥*॥ सुष्ठु निषण्णमस्मात् ॥ (२) ॥*॥ द्वे 'वितुन्नस्य' 'विषखपरिका' इति ख्यातस्य ।

स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥ १४९ ॥

वातकः, शीतलः, ( २ पु ), अपराजिता, शणपर्णी ( २ स्त्री ), 'पटुआ, पटसन' के चार नाम हैं।

स्यादिति ॥ वातं करोति । 'अन्येभ्योऽपि–'(वा० ३। २।१०१ ) इति ड ॥ ( १ ) ॥ * ॥ शीतं लाति । 'आतोऽनुप–'(३।२।३)इति क. ॥*॥ 'शीतलवातक' इत्यपि नाम । 'शणपर्णी शीतलवातक.' इति धन्वन्तरिः ॥ (२) ॥*॥ न पराजिता । 'अपराजित ईशाजेप्ठ्यन्तरे नाऽजिते त्रिषु ।' 'गिरिकर्ण्यजिताशुद्धाऽश्मपर्णीषु ओषधौ' [इति मे० ७१।२३१] ॥ (३) ॥*॥ शण पर्णान्यस्याः । शणशब्द शणपर्णसदृशे लाक्षणिक. । 'पाककर्ण–' (४।१।६४) इति ङीप् ॥ * ॥–अशन इव पर्णमस्याः [ अशनपर्णी ]–इति कश्चित् ॥ (४) ॥*॥ चत्वारि 'शणपर्ण्या.' 'पटसण' इति ख्यातस्य ।

पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।

पारावताङ्घ्रिः, कटभी, पण्या, ज्योतिष्मती, लता (५ स्त्री ), 'मालकांगनी' के ५ नाम हैं।

पारेति ॥ पारावत इवाङ्घ्रिरस्याः ॥(१)॥*॥ कटं-वङ्गाति।'अन्येभ्योऽपि–'(वा० ३।२।१०१) इति ड । गौरादि (४।१।४१) ॥ (२) ॥*॥ पण्यते । 'पण व्यवहारे' (भ्वा० आ० से०) । 'अवद्यपण्य–' ( ३।१।१०१ ) इति साधु. ॥ (३) ॥*॥ ज्योतिरस्त्यस्याः । मतुप् (५।२।९४)॥ (४) ॥*॥ लतति । 'लति सौत्र' । अच् (३।१।१३४) ॥(५) ॥*॥ पञ्च 'ज्योतिष्मत्याः' 'मालकांगणी' इति ख्यातायाः ।

वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥ १५० ॥

वार्षिकम् ( न ), त्रायमाणा, त्रायन्ती, बलभद्रिका ( ३ स्त्री ), 'त्रायमाणा' के ४ नाम हैं।

वेति ॥ वर्षासु भवं जातं वा । 'वर्षाभ्यष्ठक्' ( ४।३। १८) । 'वार्षिकं त्रायमाणायां क्लीबं वर्षाभवे त्रिषु [इति मे० १३।५७] ॥ (१)॥*॥ त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ०)। शानच् (३।२।१२४), शानन् (३।२।१२९) वा । ['त्रायमाणा वार्षिकं स्त्री रक्ष्यमाणेऽभयप्रदे' इति मे० ५२।९६] ॥ (२) ॥*॥ त्राणम् । त्रा. । सम्पदादि. ( वा० ३।३।१०८ )। त्रा अयति । 'इ गतौ' (भ्वा० प० से०) । शता ( ३।२।१२४ ) ङीप् ( ४।१।६ ) । 'शप्-श्यनो.–' (७।१।८१) (इति नुम्) ॥ (३)॥*॥ बलेन भद्रा । स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ चत्वारि 'त्रायमाण' इति ख्यातस्य ।

विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेति च ।

विष्वक्सेनप्रिया, गृष्टिः, वाराही, बदरा (४ स्त्री), 'वाराही कन्द' के ४ नाम हैं।

वीति ॥ विष्वक्सेनस्य प्रिया ॥ (१)॥*॥ गृह्णाति । क्तिच् (३।३।१७४) । पृषोदरादि (६।३।१०९)। यत्तु– 'गर्धति हिनस्ति रोगम्.' 'गृधु हिंसायाम्' क्तिच् ( ३।३। ९४ )–इति व्याख्यातं मुकुटेन । तन्न । उक्तधातोरदर्शनात्, कर्तरि क्तिनोऽसंभवाच्च ।'अथ गृष्टि सकृत्सूतगवीबदरयो. स्त्रियाम्' [ इति मे० ३४।११ ] ॥ * ॥ 'घृष्टि' इति पाठान्तरम् । घर्षति । 'घृषु संघर्षे' ( भ्वा० प० सें० ) । क्तिच् ( ३।३।१७४ ) । 'घृष्टि. स्त्री घर्षणस्पर्धाविष्णु-क्रान्तासु ना किरौ' [ इति मे० ३४।१२ ]॥ (२) ॥*॥ वराहस्येयम् । प्रियत्वात् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । 'वाराही मातृभेदे स्याद्विष्वक्सेनप्रियौषधौ' [इति मे० १७६।२२ ] ॥ ( ३ ) ॥ * ॥ बदति । 'बद स्थैर्ये' (भ्वा० प० से०) । बाहुलकादरन् । 'ब(व)दरा गृष्टि-कार्पास्योरेलापर्ण्यां स्त्रियां, पुमान् । कर्पासस्यास्थिन, बदरी कोले, क्लीबं तु तत्फले' [इति मे० १३७।२०७] ॥ (४) ॥ * ॥ चत्वारि 'वाराहीकन्द' इति ख्यातायाः ।

मार्कवो भृङ्गराजः स्यात्

मार्कवः, भृङ्गराजः ( २ पु ), 'भँगराज' के २ नाम हैं।

मार्केति ॥ मारयति । क्विप् (३।२।१७८) । 'मारि

केशशोकल्यनाशने'। कूयते। 'कुङ् शब्दे' (भ्वा० आ० अ०)। 'ऋदोरप्' (३।३।५७) ॥ (१) ॥*॥ भृङ्ग इव राजते। 'राजृ दीप्तौ' (भ्वा० उ० से०)। अच् (३।१।१३४)। [ 'अथ भृङ्गराज उक्त पक्षिविशेषे च मार्कवे भ्रमरे' इति मे० ३२।३५ ] 'भृङ्गरज.' इति पाठे भृङ्ग इव रजोऽस्य। सान्तोऽदन्तोऽपि। रजश्शब्दस्य द्वैविध्यात्। 'स्यान्मार्कवो भृङ्गरज. भृङ्गराज. सुजागर.' इति रभसात् ॥ (२) ॥ * ॥ द्वे 'भृङ्गराज' इति ख्यातस्य।

**काकमाची तु वायसी ॥ १५१ ॥**

काकमाची, वायसी (२ स्त्री), 'मकाय, काकमिया' के २ नाम है।

काकात ॥ काकान् मञ्चते। 'मचि धारणोच्छ्राय-पूजनेषु' (भ्वा० आ० से०)। 'कर्मण्यण्'(३।२।१)। आगमशास्त्रस्यानित्यत्वान्न नुम् ॥ (१) ॥*॥ वायसानामियम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'काकोदुम्बरिकायां च काकमाच्यां च वायसी' [ इति मे० १७२।३८ ] ॥ (२) ॥*॥ द्वे 'काकमाच्या' 'मकोय' इति ख्यातायाः।

**शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः। अवाक्पुष्पी कारवी च**

शतपुष्पा, सितच्छत्रा, अतिच्छत्रा, मधुरा, मिसि, अवाक्पुष्पी, कारवी (७ स्त्री), 'सौंफ' के ७ नाम हैं।

शतानि ॥ शत पुष्पाण्यस्या। 'सदच्काण्ड–' (ग० ४।१।४) इति टाप् ॥ (१) ॥*॥ सित बद्ध शुभ्र वा छत्रमस्या ॥ (२) ॥*॥ छत्त्रमतिक्रान्ता। 'अत्यादय –' (वा० २।२।१८) इति समास ॥(३)॥*॥ मधुररसयस्या.। 'ऊपसुषि–' (५।२।१०७) इति र। 'मधुरा शतपुष्पाया मिश्रेयातसरीभिदोः' [ इति मे० १२६।१९४ ] ॥ (४) ॥*॥ मस्यति। 'मसी परिणामे' (दि० प० से०)। इन् (उ० ४।११८)। पृषोदरादि (६।३।१०९)। 'मिसि स्त्री मधुराशाख्यो शतपुष्पाजमोदयो.' [ इति मे० १७०।८]॥ (५) ॥*॥ अवाञ्चि पुष्पाण्यस्या.। गौरादित्वात् (४।१।४१) ङीष्। यत्तु—'पाककर्ण–' (४।१।६४) इति ङीप्–इत्याह मुकुट। तन्न। 'सदच्काण्ड–' (ग० ४।१।४) (वा० ६४) इत्यस्य तदपवादत्वात् ॥ (६) ॥ * ॥ के आरौति। पचाद्यच्। (यत्तु मुकुट आह—कारोरियम्–अण्)–कारवी इति। तन्न। 'वृद्धाच्छ'(४।२।११४) इत्यस्याणपवादत्वात्। 'कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके' [इति मे० १६०।३३] ॥ (७) ॥*॥ सप्त 'मधुराया' 'सौंफ' इति ख्याताया.। अन्त्यद्वयम् 'उपावली' इति ख्याताया.—इत्येके।

**सरणा तु प्रसारिणी ॥ १५२ ॥**

**तस्यां कटंभरा राजबला भद्रबलेति च।**

सरणा, प्रसारिणी, कटंभरा, राजबला, भद्रबला (५ स्त्री), 'आकाशबेल' (वंवर) के ५ नाम हैं।

सरति ॥ सरति। 'सृ गतौ' (भ्वा० प० अ०)। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् ॥ * ॥ ल्युटि (३।३।११३) 'सरणी' इत्यपि। 'सरणा सरणी चार्वी कटम्भरा महाबला' इति रुद्र. ॥ (१) ॥ * ॥ प्रसार्यतेऽङ्गमनया। 'करणा–' (३।३।११३) इति ल्युट् ॥*॥ 'सारणी' इत्यपि। ('सारणा राक्षसान्तर) तद्भेदना, प्रसारण्या स्वल्पनद्या च सारिणी' [ इति मे० ५१।८३ ] ॥ (२) ॥ * ॥ कट बिभर्ति। 'सज्ञायां भृत–' (३।२।४६) इति खच् ॥ (३) ॥ * ॥ बलाना बलप्रदाना राजेव। राजदन्तादि. (२।२।३१) ॥ (४) ॥ * ॥ भद्र बलमस्या: ॥ (५) ॥ * ॥ पञ्च 'कुब्जप्रसारिणी' इति ख्याताया.।

**जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥ संस्पर्शा**

जनी, जतूका, रजनी, जतुकृत्, चक्रवर्तिनी, संस्पर्शा (६ स्त्री), 'चकवत' के ६ नाम हैं।

जनीति ॥ जायते आरोग्यमनया। 'जनिघसिभ्यामिण्' (उ० ४।१३०)। 'जनिवध्योश्च' (७।३।३५) इति न वृद्धि। 'कृदि–' (ग० ४।१।४५) इति वा ङीप्। 'जनी सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि' [इति मे० ८३।६] ॥ (१) ॥ * ॥ जायते। 'जनी–' (दि० आ० से०)। 'उलूकादयश्च' (उ० ४।४१) इति साधु ॥ * ॥ जतुशब्दात् 'संज्ञायां–' (५।३।७५) इति कनि 'जतुका' च। [जतुका जिनपत्न्यायाम्' इति मे० ८।९१] ॥ (२) ॥*॥ रज्यतेऽनया। 'रञ्ज रागे' (भ्वा० उ० अ०)। 'करणा–' (३।३।११७) इति ल्युट्।–'त्यजरज–' (३।२।१४२)इति निपातनात् क्वचिदणिङ्यपि नलोप। 'रजनी नीलिनीरात्रिहरिद्राजतुकासु च' [इति मे० ९१।१४] ॥ (३) ॥*॥ जतु करोति। क्विप् (३।२।१७८)॥ (४) ॥*॥ चक्र चक्रमिव वा वर्तितु शीलमस्या। 'सुपि–' (३।२।७८) इति णिनि. ॥ (५)॥*॥ सम्यक् स्पृशति स्पृश्यते वा। 'स्पृश स्पर्शने' (तु० प० से०)। 'पदरुज–' (३।३।१६) इति घञ्। पचाद्यच् (३।१।१३४) वा। कर्मणि घञ् (३।३।१९) वा ॥ (६) ॥*॥ षट् 'चक्रवर्तिन्या' 'चकवत' इति ख्यातस्य।

अथ शटी गन्धमूलीषड्ग्रन्थिकेत्यपि ।
कर्चूरोऽपि पलाशः

शटी, गन्धमूली, षड्ग्रन्थिका (३ स्त्री), कर्चूरः, पलाशः (२ पु), 'आमाहल्दी' के ५ नाम हैं।

अयेति ॥ शटति । 'शट रुजादौ' (भ्वा० प० से०) । अच् ( ३।१।१३३ )। गौरादि. (४।१।४१) ॥ (१) ॥*॥ गन्धं मूलमस्या ॥(२) ॥*॥ षड् बहवो ग्रन्थयोऽस्या ॥ (३) ॥*॥ कर्चति । 'कर्च गतौ' ( ) । खर्जादित्वात् (उ० ४।९०)ऊर । 'कर्चूरो' स्यात् पुमाञ्शट्या सुवर्णे तु नपुंसकम्' [इति मे० १३२।१३२] ॥*॥ 'कर्बुर' अपि ॥ ( ४ ) ॥ * ॥ पलमश्नाति । 'अश भोजने' (क्र्या० प० से० )। 'कर्मण्यण्' (३।२।१)। पले मासे आशा यस्य वा। 'पलाश किंशुक. शटी । [२]हरिद्वर्णो राक्षसश्च पलाशं छदने मतम्' इति हैम [३।७६२] ॥ (५) ॥*॥ पञ्च 'शम्या.' 'कचूर' इति ख्यातस्य ।

अथ कारवेल्लः कटिल्लकः ॥ १५४ ॥
सुषवी च

कारवेल्लः, कटिल्लकः (२ पु), सुषवी ( स्त्री ), 'करैला' के ३ नाम हैं।

अयेति ॥ 'कारो वधे निश्चये च बलौ यत्ने यतावपि । [तुषारशैलेऽपि पुमान् स्त्रिया दूत्या प्रसेवके । सुवर्णकारिकाया च बन्धनागारबन्धयो ' इति मे० १२३.१३-१४] । कारं वेल्लति । 'वेल्ल चलने' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) । ( १ ) ॥*॥ कटति । 'कटे वर्षावरणयो' (भ्वा० प० से०) । बाहुलकादिल्ल ॥*॥ कठति । 'कठ शोके' (भ्वा० प० से०) । असमादिल्लः—इत्यन्ये । स्वार्थे कन् (५।३।७५)। 'कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयो ' इति विश्व-मेदिन्यौ [ १८।१९६,१५।१७९ ] ॥ ( २ ) ॥*॥ सु सुवति ॥ 'षू प्रेरणे'(तु० प० से०)। अच् (३।१। १३४ ) । 'उपसर्गात्सुनोति–' ( ८।३।६५ ) इति ष. । गौरादिः (४।१।४१) । 'सुषवी कृष्णजीरके कारवेल्ले च जीरे च' इति हैम. [३।७५२-५३ ] ॥ (३) ॥*॥ त्रीणि 'कारवेल्लस्य' 'करेला' इति ख्यातस्य ।

अथ कुलकं पटोलस्तिक्तकः पटुः ।

कुलकम् ( न ), पटोलः, तिक्तकः, पटुः ( ३ पु ), 'परवल' के ४ नाम हैं।

अयेति ॥ कोलति । 'कुल संस्त्याने'(भ्वा० प० से०)। 'इगुपध–' ( ३।१।१३५ ) इति क । स्वार्थे कन्, वुन् (उ०२।३२) वा । 'कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते' [इति मे० ६।६९-७० ] ॥ (१)॥*॥ पटति । 'पट गतौ' (भ्वा० प० से०)। अन्तर्भावितण्यर्थो वा । 'कपिगडिगण्डि–' ( उ० १।६६ ) इत्योलच् । 'पटोलं वस्त्रभेदे, नौषधौ ज्योत्स्न्या तु योषिति' [इति मे० १५२।१०६] ॥ (२) ॥*॥ तिक्त एव । स्वार्थे कन् (५।३।७५) ॥ ( ३ ) ॥*॥ पाटयति । 'पट गतौ' (भ्वा० प० से०) । 'फलिपाटि–' (उ० १।१८) इत्यु पटिरादेशश्च । 'पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्त्रालवणयोरपि' [इति मे० ५।३२०] ॥ (४) ॥*॥ चत्वारि 'पटोलस्य', 'परवर' इति ख्यातस्य।

कूष्माण्डकस्तु कर्कारुः

कूष्माण्डकः, कर्कारु. ( २ पु ), 'कद्दीमा, तरकारीवाले कोहड़ा' के २ नाम हैं।

कि्वति ॥ कु ईषद् ऊष्मा अण्डेषु बीजेषु यस्य । पित्तलत्वात् । 'कूष्माण्डयुमाया स्त्री, पुंसि कर्कारौ च गणान्तरे । भ्रूणान्तरे' [इति मे० ४२।२७-२८] ॥ ( १ ) ॥*॥ कर्कं शुक्लवर्णमृच्छति । 'ऋ गतौ' (भ्वा० प० अ०) । बाहुलकादुण् ॥ (२) ॥*॥ द्वे 'कूष्माण्डस्य' ।

ईर्वारुः कर्कटी स्त्रियौ ॥ १५५ ॥

ईर्वारु, कर्कटी (२ स्त्री), 'ककड़ी, कांकर' के २ नाम हैं।

ईर्वेति ॥ ईरणं 'ईर गतौ' (अ० आ० से०) । सम्पदादिः ( वा० ३।३।१०८ ) । ईर वृणोति, वारयति वा । 'वृञ् वरणे' ( स्वा० उ० से० ) । बाहुलकादुण् । 'तुर्वस्त्वादिर् ईर्वारु. कर्कट्यां पठ्यते बुधै '[?]॥*॥ ह्रस्वादि [इर्वारुः] अपि । 'उन्मत्तो धुस्तुर इर्वारु. कर्कटि स्यात्' इति पुरुकाण्डे रत्नकोषात् ॥*॥ 'एर्वारु' इति पाठे भ्राङ् बोध्य ॥ * ॥ ( 'उर्वारुकमिव बन्धनात्' इति श्रुतेः पृषोदरादित्वेनात्त्वे 'उर्वारु' इति च ) ॥ (१) ॥*॥ करं कटति । 'कटे वर्षादौ' ( भ्वा० प० से० ) । इण् ( उ० ४।११८ ) । शकन्ध्वादि ( वा० ६।१।९४ ) । ङीष् (वा० ४।१।४१) वा ॥ (२) ॥*॥ द्वे 'काकडी' इति ख्याताया ।

इक्ष्वाकुः कटुतुम्बी स्यात्

इक्ष्वाकुः, कटुतुम्बी ( २ स्त्री), 'तिनलौकी, तीता कद्दू' के २ नाम हैं।

ईति ॥ इक्षुमाकरोति । भिनद्वादित्वात् ( वा०३। २।१८० ) डु. । यद्वा–इक्षुकाया जातम् 'इक्षु' इति

---

१. 'कर्बुर.' इति पा० ।
२. 'हरिद्वर्णे राक्षसे च' इति पा० ।

शब्दमकति । अक गतौ ( भ्वा० प० से० )। बाहुलका दुण । इक्ष्वाकु कटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान्' [ इति मे० ५।५० ] ।। (१) ॥*॥ कटुश्चासौ तुम्बी च ॥ (२) ॥*॥ द्वे कटुतुम्ब्याः'।

तुम्ब्यलाबूरुभे समे।

तुम्बी, अलाबू ( २ स्त्री ), 'कद्दू, लौकी' के २ नाम हैं।

त्विति ॥ तुम्बति रुचिम् । तुबि अर्दने (भ्वा० प० से०) । अच ( ३।१।१३४ ) । गौरादि ( ४।१।४१ ) । इन(उ० ४।११८) वा । कृत्- ( ग० ४।१।४५ ) इति वा ङीष ॥ ( १ ) ॥*॥ न लम्बते । लबि अवस्रसने (भ्वा० आ० से०) । नञि लम्बेर्नलोपश्च (उ० १।८७) इत्यूणित् । अलाम्बुस्तु पिण्डफला तुम्बिस्तुम्बी महाफला । तुम्बा तु यत् ऽऽलाबूनि(नि)म्बचूर्णा तु लावुका इति वाचस्पति । अलावूस्तुम्बक प्रोक्त ' इति चन्द्र ॥ (२) ॥*॥ द्वे तुम्बा इति ख्याताया ।

चित्रा गवाक्षी गोडुम्बा

चित्रा, गवाक्षी, गोडुम्बा ( ३ स्त्री ), 'जेठुई कौंकर' के ३ नाम हैं।

चित्रेति ॥ चीयते । चिञ् चयने' (स्वा० उ० अ०) । 'अमिचि-' (उ० ४।१६४) इति क्र । चित्राखुपर्णी गोडुम्बासुभद्रादिनक्षत्र सु च । मायाया सर्पनज्जनदीभेदयु च स्त्रियाम् [ इति मे० १२५।३४ ]॥ ( १ ) ॥*॥ गा भूमिमक्ष्णोति । अक्षू व्याप्तौ (भ्वा० प० से०)। कमण्यण' (३।२।१) । गवाक्षी त्विद्रवारुण्यां गवाक्षो जालके कपौ इति हैम [३।७७५] ।। (२) ॥*॥ गा भुव तुम्बति । तुबि अर्दने (भ्वा० प० से०) । मूलविभुजादिक (वा० ३।२।५) । टाप (४।१।४) । पृषोदरादि (६।३।१०९) । मुकुटस्तु—गा डुम्बयति । डुबि अदने अण (३।२।१)— इत्याह । तन्न । धातुपाठपु डुबिधातोरदर्शनात् । अणि ङीप्प्रसङ्गाच्च ॥ (३) ॥*॥ त्रीणि कर्कटीविशेषस्य'।

विशाला त्विन्द्रवारुणी ॥ १५६ ॥

विशाला इन्द्रवारुणी ( २ स्त्री ), 'इन्द्रायन' के २ नाम हैं।

विशति ॥ वि शनि । 'शल चलने' ( भ्वा० प० से० )। ज्वलिति-' ( ३।१।१४० ) इति ण । टाप (४।१।४) विशति वा अत्र वा। विश प्रवेशने ( तु० प० से० ) । 'तमिविशिविडि- (उ० १।११८) इति कालन । विशाला त्वि द्रवारुण्यामुज्जयिन्या तु योषिति । ॥*॥ नृपवृक्षभिदो पुमि पृथुलेऽप्यभिधेयवत् [ इति मे० १५४। १३३ ३४]॥(१)॥*॥ इद्र वारयति। वृञ वरणे चुरादि । 'कुवृदारि-'(उ० ३।५३) इति बाहुलकाद् ण्यन्तादप्युनन् । यत्तु मुकुट —इन्द्रवरुणौ देवते अस्या । अण (४।२।२४)। उत्तरपदस्य च' (७।३।१०) इत्युत्तरपदवृद्धि —इत्याह । तन्न । न ग्रहविपोरेव स्वामिनि देवतात्वव्यवहारात् । 'उत्तरपदस्य च' ( ७।३।१० ) इत्यस्याधिकारत्वेन वृद्धि विषयकत्वाभावाच्च ॥ ( २ ) ॥ * ॥ द्वे 'इन्द्रवारुणी इति ख्याताया ।

अर्शोघ्न शूरण कन्द

अर्शोघ्न, शूरण, कन्द ( ३ पु ), 'ओल, सूरन' के ३ नाम हैं।

अशेति ॥ अशसि हति । 'अमनुष्य- (३।२।५३) इति टक ॥ (१) ॥*॥ शूयते । शूरी हिंसायाम् (दि० आ० से० ) । बहुलम यत्रापि' (उ० २।७८) इति युच । कर्तरि ल्युट् ( ३।३।११३ ) वा । यत्तु-'शूरति—इति विगृहीत मुकुटेन । तन्न । शूरीधातोर्दिवाद्यात्मनेपदित्वात् । ॥*॥ सूयते । 'सूरी हिंसायाम् । युच् (उ० २।७८) । ल्युट (३।३।११३) या । इति द त्यादिरपि [सूरण ] ॥ ( २ ) ॥*॥ कन्दति । क दयति । क द्यते वा । अच्(३।१।१३४)। घञ् (३।३।१९) वा । क दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान् [इति मे० ७४।३] ॥ (३) ॥*॥ त्रीणि 'सूरण' इति ख्यातस्य।

गण्डीरस्तु समष्ठिला।

गण्डीर ( पु ), समष्ठिला ( स्त्री ), 'गाण्डरनामक शाक-विशेष' के २ नाम हैं।

गण्डीति ॥ गण्डति गण्ड्यते वा । गडि वदनैकदेशे ( भ्वा० प० से० ) । बाहुलकादीरन् । यद्वा—गण्डीन् ग्रन्थीनीरयति । ईर प्रेरण (अ० आ० से०) । कमण्यण (३।२।१) ॥(१) ॥*॥ समे तिष्ठति । मिथिलादयश्च (उ० १।५७) इति साधु । यद्वा—सम्यगष्ठिला बीजं यस्या । गण्डीरो ना समष्ठिला इति माला ॥ (२) ॥*॥ द्वे गाण्डरदूर्वी इति ख्यातस्यानपजशाकभेदस्य। गडिनी इति भाषा।

कलम्बी

कलम्बी ( स्त्री ), 'करेमू शाक' का १ नाम है।

केति ॥ कडति । 'कड मदे (भ्वा० प० से०)। कृक दिवडिकटिभ्योऽम्बच' (उ० ४।८२) । डलयोरेकत्वम । के जले लम्बते। लबि अवस्रसने (भ्वा० आ० से०) । पचा द्यच (३।१।१३४) । गौरादि (४।१।४१)। कलम्बी तु गतपर्वा कलम्बूर्वास्तु वीरुध इति वाचस्पति । कलम्बी शाकभेदेऽपि कदम्बशरयो पुमान्' [इति मे० १०५।९] । ॥*॥ एक करेम्बु इति ख्यातस्य ।

उपोदका

**उपोदका (स्त्री), 'पोई शाक' का १ नाम है।**

उपेति ॥ उपाधिकमुदकमस्याम्। '—उत्तरपदस्य च' (वा० ६।३।५७) इत्युदः कप् (५।४।१५४, । टाप् (४।१।४) ॥ * ॥–अपगतोदका। जाङ्गलत्वात्। 'अपोदका'—इति स्वामी॥ (१) ॥ * ॥ एकम् 'पोई' इति ख्यातस्य।

अस्त्री तु मूलकं

**मूलकम् (न पु), 'मूली' का १ नाम है।**

(अस्त्रीति।) मूलति। 'मुल प्रतिष्ठायाम्' (भ्वा० प० से०)। क्वुन् (उ० २।३२)। यद्वा—मूलयति। 'मूल रोहणे' चुरादि। अच् (३।१।१३४)। 'संज्ञायां कन्' (५।३।७५)॥ (१) ॥*॥ एकम् 'मूली' इति ख्यातस्य।

हिलमोचिका ॥१५७॥

**हिलमोचिका (स्त्री), 'हिलसाल' का १ नाम है।**

हिलेति॥ हिलति। 'हिल भावकरणे' (तु० प० से०)। 'इगुपध–'(३।१।१३५) इति क.। मोचयति। ण्वुल् (३।१।१३३)। हिला चासौ मोचिका च। 'ङ्यापो.–' (६।३।६३) इति ह्रस्वः॥ (१) ॥*॥ एकम् 'हिलसाल' इति ख्यातस्य।

वास्तूकम्

**वास्तूकम् (न), 'बथुआ साग' का १ नाम है।**

वेति॥ वसति देहे। चिरं गुणा वाऽस्मिन् वसन्ति। 'वस निवासे' (भ्वा० प० अ०)। 'उलूकादयश्च' (उ० ४।४१) इति साधु ॥*॥ वास्तौ भवम्। अध्यात्मादिठञ् (वा ४।३।६०)। 'इसुसुक्–' (७।३।५१) इति क। एव ह्रस्वमध्यम् [वास्तुकम्] अपि॥ (१) ॥*॥ एक 'बथुआ' इति ख्यातस्य।

शाकभेदाः स्युः

**यहाँतक शाक-भेदका वर्णन है।**

शाकेति॥ कलम्ब्याद्याः पञ्च शाकभेदाः स्यु.। 'शाकाख्यं पत्रपुष्पादि' [२।४।१३६] इत्यत आरभ्य च। 'मण्डूकपर्णी पालङ्क्या चिल्लिका चाप्युपोदिका। चाङ्गेरी हिलमोचा च कलम्बी शाकजातयः' इति माला।

दूर्वा तु शतपर्विका।

सहस्रवीर्याभार्गव्यौ रुहानन्ता

**दूर्वा, शतपर्विका, सहस्रवीर्या, भार्गवी, रुहा, अनन्ता (६ स्त्री), 'दूब' के ६ नाम हैं।**

दूर्वेति॥ दूर्वति, दूर्व्यते वा। 'दूर्वी हिंसायाम्' (भ्वा० प० से०)। अच् (३।१।१३४)। घञ् (३।३।१९) वा। 'उपधायां च' (८।२।७८) इति दीर्घः॥ (१) ॥*॥ शतं पर्वाण्यस्याः। 'शेषात्' (५।४।१५४) इति कप्। शतं पर्वति। 'पर्व पूरणे' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। 'शतपर्विका तु दूर्वायां वचायामपि योषिति' [इति मे० १९।२३३]॥ (२) ॥*॥ सहस्रं वीर्याण्यस्याः॥ (३) ॥*॥ भृगोरियम्। 'भार्गवी पार्वतीश्रियो। दूर्वायाम्' [इति मे० १६०।४५-४६]॥ (४) ॥*॥ छिन्नापि रोहति। 'इगुपध–' (३।१।१३५) इति कः॥ (५) ॥*॥ न अन्तो यस्याः। 'अनन्ता च विशल्यायां शारिवादूर्वयोरपि। कणादुरालभापथ्यापार्वत्यामलकीषु च। विश्वंभरागुडूच्यो. स्यादनन्तं सुरवर्त्मनि। अनन्तः केशवे शेषे पुमान्निरवधौ[1] त्रिषु' [इति मे ६०।८१-८३]॥ (६) ॥*॥ षट् 'दूर्वाया.'।

अथ सा सिता ॥१५८॥

गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः।

**गोलोमी, शतवीर्या, गण्डाली (३ स्त्री), शकुलाक्षकः (पु), 'सफेद दूब' के ४ नाम हैं।**

*अथेति॥ सा दूर्वा। सिता शुक्ला। गोलोमसु जाता।* 'तत्र जातः' (४।३।२५) इत्यण्। संज्ञापूर्वकत्वान्न वृद्धिः। 'गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयो.' [इति मे० १११।४२]॥ (१) ॥*॥ शतं वीर्याण्यस्याः॥ (२) ॥*॥ गण्डति। 'गडि वदनैकदेशे' (भ्वा० प० से०)। बाहुलकादालच्। गण्डमलति वा। 'कर्मण्यण्' (३।२।१)। 'टिड्ढा–' (४।१।१५) इति ङीप्। गौरादिः (४।१।४१) वा॥ (३) ॥*॥ शकुलस्य मत्स्यस्येवाक्षि यस्य। 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच्। स्वार्थे कन् (५।३।७५)॥ (४) ॥*॥ चत्वारि 'शुक्लदूर्वायाः'। स्वामी तु—परे द्वे दूर्वाभेदस्य—इत्याह।

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥१५९॥

**कुरुविन्दः, मेघनामा (२ पु), मुस्ता (स्त्री), मुस्तकम् (न पु), 'मोथा' के ४ नाम हैं।**

कुर्विति॥ कुरून् विन्दति। 'विदॢ लाभे' (तु० उ० अ०)। 'अनुपसर्गाल्लिम्प–' (३।१।१३८) इति श। 'कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयो पुमान्' इति विश्व–[2] मेदिन्यौ॥ (१) ॥*॥ मेघनामानि नामान्यस्य॥ (२) ॥*॥ मुस्तयति। 'मुस्त संघाते' चुरादि.। अच् (३।१।

---

१. 'पुमाननवधौ' इति पा०।

२. पाठोऽयं मेदिन्याम् (७७।४७); विश्वे तु–'कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः' इति पाठः (८१।४६)।

१३४) ॥ (३) ॥*॥ ण्वुल् (३।१।१३३)॥ (४) ॥*॥ चत्वारि 'मुस्तायाः' 'मोथा' इति ख्यातायाः ।

**स्याद्भद्रमुस्तको गुन्द्रा**

भद्रमुस्तक (पु), गुन्द्रा (स्त्री), 'नागरमोथा' के २ नाम हैं।

स्यादिति ॥ भन्दते । 'भदि कल्याणे' (भ्वा० आ० से०)। 'ऋज्रेन्द्र–' (उ० २।१८) इति साधु । भद्रं करोति वा । 'तत्करोति–'(वा० ३।१।२६)इति ण्यन्तादच् (३।१।१३४) । भद्रश्चासौ मुस्तकश्च ॥*॥ 'भद्रम्' अपि नाम । 'भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे' इति रुद्रः । [ 'भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः' ॥ इति मे० १२७।७० च ] ॥ ( १ ) ॥*॥ गां जलं द्राति । 'द्रा गतौ' ( अ० प० अ० )। 'आतोऽनुप–' (३।२।३) इति कः । पृषोदरादि (६।३।१०९) । 'गुन्द्रस्तेजनके स्त्री तु प्रियगौ भद्रमुस्तके' [ इति मे० १२४।२४ ] ॥ (२) ॥*॥ द्वे 'नागरमोथा' इति ख्यातस्य ।

**चूडाला चक्रलोच्चटा ।**

चूडाला, चक्रला, उच्चटा ( ३ स्त्री ), 'चुडाला, एक प्रकारके मोथा घास' के ३ नाम हैं।

चूडेति ॥ चूडाऽस्त्यस्याः । 'प्राणिस्थादातो लजन्यतरस्याम्' (५।२।९६)। चूडाला तूच्चटायां स्त्री चूडावति च वाच्यवत् [इति मे०१५१।९०]॥(१)॥*॥ चक्रं लाति । 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ उच्चटति । 'चट गतौ' (भ्वा० प० से० ) अन्तर्भावितण्यर्थः । अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि मुस्ताविशेषस्य' ।

**वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥**
**शतपर्वा यवफलो वेणुमस्करतेजनाः ।**

वंश, त्वक्सार, कर्मार, त्वचिसार, तृणध्वज, शतपर्वा, यवफल, वेणु, मस्कर, तेजन ( १० पु), 'बाँस' के १० नाम हैं।

वंश इति ॥—वमति । 'टुवम उद्गिरणे'(भ्वा०प०से०)। 'वृभृवमिकुम्भ्य शक्'–इति मुकुट । तन्न। उक्तसूत्रस्योज्ज्वलदत्तादिवृत्तिष्वदर्शनात् । अनुनासिकलोपस्य (६।४।३७) उपधादीर्घस्य (६।४।१५) च प्रसङ्गाच्च । कुशभृशयोर्वा त्वन्तरेण सिद्धत्वाच्च । वनति, वन्यते वा । 'वन शब्दे' (भ्वा० प० से०) । बाहुलकात् श । उश्यते, वष्टि वा । 'वश कान्तौ' (अ० प० से०) । घञ् (३।३।१९) । संज्ञापूर्वकत्वान्न वृद्धिः । अच् (३।१।१३४) । 'सस्या वस्येन' (२।१।१९) इति निर्देशान्नुम् । 'वंशो वेणौ कुले वर्गे पृष्ठा'चयवयवेऽपि च' [इति विश्व १६८।१०] ॥ (१) ॥*॥ त्वक् त्वचि वा सारोऽस्य॥(२)॥*॥ कर्म क्रियामृच्छति । 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ 'हलदन्तात्–' (६।३।९) इति वा लुक् ॥ (४) ॥*॥ तृणेषु ध्वज इव ॥ (५) ॥*॥ शतं पर्वाण्यस्य ॥ (६) ॥*॥ यव इव फलान्यस्य । 'यवफलो मांसिकायां कुटजत्वचिसारयोः' इति हैमः [ ४।३०९ ] ॥ ( ७ ) । *॥ वेणति । 'वेणृ निशामनवादित्रादानगमनज्ञानचिन्तासु' ( भ्वा० उ० से० ) । बाहुलकाडु । यद्वा—अजति । 'अजिवृरीभ्यो निच्च' ( उ० ३।३८) इति णु । 'अजेर्वी–' (२।४।५६) ।—वयन्ति ग्रोमन्ते स्वनेन । 'वी' धातोः क्षेपवादयश्च' इति नु, णत्वं च—इति सुभूतिः । तन्न । उक्तसूत्राभावात् । 'वी'धातोरादादिकत्वेन 'वयन्ति' इति रूपाभावाच्च । 'वेणुर्नृपान्तरे । त्वक्सारेऽपि च पुंसि स्यात्' [ इति मे० ४७।२६ ] ॥ (८)॥*॥ मस्क्यते अनेन वा । 'मस्क गतौ' (भ्वा० आ० से०) । बाहुलकादर । यद्वा— मङ्क्यते । 'मकि मण्डने' (भ्वा० आ० से०) अर । आगमशास्त्रस्यानित्यत्वान्न नुम् । 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६।१।१५४) इति सुट् ॥ (९) ॥*॥ तेजयति शस्त्रमग्निं वा । नन्द्यादित्वात् (३।१।१३४) । युच् (उ० २।७८) वा ॥ (१०) ॥*॥ दश 'वेणोः' ।

**वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥ १६१ ॥**

कीचक (पु), 'छिद्रमें हवाके प्रवेश करनेपर बजनेवाले बाँस' का १ नाम है।

वेणेति ॥ ये वेणवोऽनिलेनोद्धतास्ताडिताश्चालिता वा शब्दायन्ते । चीकति चीकयते वा । शब्दायते । 'चीक मर्षणे' ( चु० उ० से० ) । 'चीकयतेराद्यन्तविपर्ययश्च' (उ० ५।३६) इति वुन् ।—पृषोदरादित्वात् (६।३।१०९) आद्यन्तविपर्ययश्च—इति मुकुटः । तद् उक्तसूत्रादर्शनमूलकम् । यद्वा—'की' इत्यव्यक्तम् । चकते । 'चक तृप्तौ' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । संज्ञायां कन्' ( ५।३।७५ ) । क्वुन ( उ० २।३२ ) वा । 'कीच' इत्यव्यक्तं कायति । मूलविभुजादिक ( वा० ३।२।५ ), 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डो वा । 'कीचको दैत्यभिद्वाताहतसस्वनवंशयोः' [इति मे० ६।६८] ॥ (१) ॥*॥ एकम् 'वाताहतवेणूनाम्' ।

**ग्रन्थिर्ना पर्वपरुषी**

ग्रन्थि (पु), पर्व, परु ( २ स्त्री न ), 'बाँस आदि की गाँठ या पोर' के ३ नाम हैं।

१. 'पृष्ठस्यावयवे' इति पा० ।

ग्रन्थिरिति ॥ ग्रन्थते । 'ग्रथि कौटिल्ये' ( भ्वा० आ० से० )। 'सर्वधातुभ्य इन्'(उ० ४।११८)। 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणो.' [ इति मे० ७२।६ ] ॥ ( १ ) ॥ * ॥ पर्वति । 'पर्व पूरणे' ( भ्वा० प० से० ) । बाहुलकात्कनिन् । 'पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि' [ इति मे० ८९। ८८ ] । ( २ ) ॥ * ॥ पिपर्ति 'पॄ पालनपूरणयो.' (जु० प० से० )। 'अर्तिपृवपि–' ( उ० २।११७ ) इत्युस् ॥*॥ बाहुलकादुप्रत्यये उदन्तो [ परुः ] अपि । 'मज्जा सारो, ग्रन्थि. परु, पराग कुसुमरेणु ' इति पुस्काण्डे रत्नकोषात् ॥ ( ३ ) ॥ * ॥ त्रीणि 'वंशादिग्रन्थे ' ।

गुन्द्रस्तेजनकः शरः ।

गुन्द्रः, तेजनकः, शरः ( ३ पु ), 'सरकण्डा, सरई' के ३ नाम हैं ।

ग्विति ॥ गोदते । 'गुद क्रीडायाम्'(भ्वा० आ० से०)। बाहुलकाद्रक् । पृषोदरादिः (६।३।१०९) । 'गुन्द्रस्तेजनके स्त्री तु प्रियगौ भद्रमुस्तके' [इति मे० १२४।२४] ॥ (१) ॥ * ॥ तेजयति । 'तिज निशाने' चुरादि. । ण्वुल् (३।१। १३३ ) । क्वुन् ( उ० २।३२ ) वा ॥ ( २ ) ॥ * ॥ शृणाति । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । अच् । ( ३।१।१३४ ) । 'शरस्तेजनके बाणे दध्यग्रे ना शरं जले' [ इति मे० १२९।८६ ] ॥*॥ 'सुरस्तु मुञ्जो बाणाख्यो गुन्द्रस्तेजनकः शर.' इति वाचस्पतेर्दन्त्यादि. [ सुर. ] च । सरति । 'सृ गतौ' ( भ्वा० प० से० ) । अच् (३।१। १३४ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'शरस्य' 'सरहरी' इति ख्यातस्य ।

नडस्तु धमनः पोटगलः

नडः, धमनः, पोटगलः ( ३ पु ), 'नरसल, नरकट, नरई' के ३ नाम हैं ।

नड इति ॥ नडति । 'नड गहने (                ) । अच् ( ३।१।१३४ ) ॥ ( १ ) ॥ * ॥ धमति । 'धम ध्वाने' सौत्र. । धम्यते वा । 'बहुलम्–' (उ० २।७८) इति युच् । यत्तु—'ध्मो धमश्च' इति नप्रत्ययो धमादेशश्च—इत्याह मुकुटः । तन्न । उज्ज्वलदत्तादिष्वेतत्सूत्रस्यादर्शनात् । क्वुन् प्रकरणे दर्शनात् । सौत्रधातुना गतार्थत्वाच्च । 'धमनो नले । क्रूरे भस्त्राध्मापके च धमनी कंधरा शिरा । हरिद्रा च' इति हैमः [ ३।४१२-१३ ] ॥ ( २ ) ॥ * ॥ पोटेन सश्लेषेण । गलति । 'गल अदने' ( भ्वा० प० से० ), स्रवणे ( चु० आ० से० ) । अच् ( ३।१।१३४ ) । 'अथ पोटगलः पुंसि नले च काशमत्स्ययोः' [ इति मे० १५६। १५७ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'धमनस्य' 'नलः' इति ख्यातस्य ।

अथो काशमस्त्रियाम् ॥ १६२ ॥

इक्षुगन्धा पोटगलः

काशम् ( न पु ), इक्षुगन्धा ( स्त्री ), पोटगलः ( पु ), 'काशनामक तृण-विशेष' के ३ नाम हैं ।

अथविति ॥ काशते । 'काशृ दीप्तौ' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । 'काशस्तृणे रोगभेदे' [ इति हैम. २।५५७ ] । 'काशी वाराणसीपुरी [ न स्त्रियां तृणभेदे स्यात्' इति मे० १६२।३ ] । 'काशी काशश्च तृणवाचक.' इति शब्दभेदः । गौरादिङीष् ( ४।१।४१ ) ॥ (१) ॥*॥ इक्षुवद्गन्धोऽस्या । समासान्तविधेरनित्यत्वान्नेत्त्वम् ( ५।४। १३५ ) । 'इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे' [ इति मे० ८२।४४ ] ॥ (२) ॥ * ॥ (पोटगलो व्याख्यातः ) ॥ (३) ॥ * ॥ त्रीणि 'काशस्य' ।

पुंभूमनि तु वल्वजाः ।

वल्वजाः ( पु नित्य ब० व० ), 'बगई' का १ नाम है ।

वुमिति ॥ बलते । 'बल संवरणे' (भ्वा० आ० से०)। क्विप् ( ३।२।१७८ )। वजति । 'वज गतौ' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ )। वल् चासौ वजश्च । 'एको वल्वजः' इति (१।२।४५ सूत्रे)भाष्यकारवचनादेकत्वेऽपि ॥ (१) ॥*॥ एक 'बगड' इति ख्यातस्य ।

रसाल इक्षुः

रसालः, इक्षुः ( २ पु ). 'ईख, गन्ना, ऊख' के २ नाम हैं ।

रसेति ॥ रसेनालति, अल्यते वा=पूरयति, पूर्यते वा । 'अल भूषणादौ' ( भ्वा० प० से० ) । अच् ( ३।१। १३४ ), घञ् ( ३।३।१९ ) वा । 'रसालं सिह्लके बोले रसालश्चेक्षुचूतयो.' [इति मे० १५४।१२६-२७] ॥ (१) ॥ * ॥ इष्यते । 'इष इच्छायाम्' (तु० प० से०) । 'इषेः क्सु' ( उ० ३।१५७ ) । 'षढो. कः सि' ( ८।२।४१ ) ॥ ( २ ) ॥ * ॥ द्वे 'इक्षो.' ।

तद्भेदाः पुण्ड्रकान्तारकादयः ॥ १६३ ॥

पुण्ड्रः, कान्तारकः (२ पु), आदि 'ऊखके भेद-विशेष' हैं ।

तदिति ॥ कोपकाराद्या आदिना गृह्यन्ते । 'इक्षु- कर्कटको वंश कान्तारो वेणुनि सृत । इक्षुरन्यः पौण्ड्रकश्च रसाल सुकुमारकः' । पुण्ड्यन्ते । 'पुडि खण्डने' (भ्वा० प० से० ) । 'स्फायि–' ( उ० २।१३ ) इत्यादिना रक् ॥*॥ प्रज्ञाद्यणि ( ५।४।३८ ) । पौण्ड्र । 'पुण्ड्रेऽसौ पुण्ड्रकः सेव्यः पौण्ड्रकोऽतिरसो मधु.' इति वाचस्पतिः । 'पुण्ड्रो दैत्यविशे-

पेक्षुभेदयोरतिमुक्तके [ चित्रे कृमौ पुण्डरीके पुंभूम्नि नीवृदन्तरे' । इति मे० १२७।५९-६० ] ॥ ( १ ) ॥ * ॥ वान्त रसमृच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'कर्मण्यण्' ( ३।२।१ )। स्वार्थे कन् ( ५।३।७५ ) ण्वुल् ( ३।१।१३३ ) वा ॥ ( २ ) ॥ * ॥ द्वे 'इक्षुभेदस्य' ।

**स्याद्वीरणं वीरतरम्**

**वीरणम् , वीरतरम्** (२ न), 'गाँडर घास' के २ नाम हैं।

स्यादिति ॥ विं पक्षिणमीरयति । ल्यु (३।१।१३४)। युच् ( उ० २।७८ ) वा ।—विशिष्टजनमीरयति । 'शूर वीर विक्रान्तौ' ( चु० आ० से० )—इति मुकुट । तन्न । विग्रहप्रदर्शनधातूपन्यासनयोर्विरुद्धत्वात् ॥ ( १ ) ॥ * ॥ अच् ( ३।१।१३४ ) । अतिशयित वीरम् । 'द्विवचन–' ( ५।३।५७ ) इति तरप् । 'स्याद्वीरणे वीरतरं वीरश्रेष्ठे शरे च ना' [ इति मे० १४३।२८८ ] ॥ ( २ ) ॥ * ॥ द्वे 'तृणभेदस्य' 'गाँडर' इति ख्यातस्य ।

**मूलेऽस्योशीरमस्त्रियाम् ।**
**अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥**
**लामज्जकं लघुलयमवदाहेष्टकापथे ।**

**उशीरम्** ( न पु ), **अभयम् , नलदम् , सेव्यम् , अमृणालम् , जलाशयम् , लामज्जकम् , लघुलयम् , अवदाहम् , इष्टकापथम्** ( ९ न ) 'खस' के १० नाम हैं।

मूल इति ॥ वीरणस्य मूले । उश्यते । 'वश कान्तौ' (अ० प० से०) । वश कित् ( उ० ४।३१ ) ईरन् ॥ ( १ ) ॥ * ॥ न भयमस्मात् । 'अभया स्त्री हरीतक्यामुशीरे च नपुंसकम् । निर्भये वाच्यलिङ्गं स्यात्' [ इति मे० ११८।६९-७० ] ॥(२)॥*॥ नलं गन्धं ददाति, दयते वा । 'डुदाञ् दाने' (जु० उ० अ०), 'देङ् पालने' (भ्वा० आ० अ० ) वा । 'आतोऽनुप–' ( ३।२।३ ) इति क । 'नलदं स्यात्पुष्परसोशीरमांसीषु न द्वयो' [ इति मे० ७६।३३ ] ॥ ( ३ ) ॥*॥ सेवितुमर्हम् । 'षेवृ सेवने' (भ्वा० आ० से० ) । अर्हे ण्यत् ( ३।३।१६९ ) । 'सेव्य क्लीबमुशीरे स्यात्सेवार्हे पुनरन्यवत्' [ इति मे० ११७।६४ ] ॥ ( ४ ) ॥*॥ मृणालमिव । सादृश्येऽत्र नञ् ॥*॥ 'मृणालम्' अप्यत्र । 'मृणाल नलदे क्लीब पुनपुंसकयोर्बिसे' [इति मे० १५४।१२५ ] ॥ ( ५ ) ॥ जले आशेते । अच् ( ३।१।१३४ ) यद्वा– जलो जड आशयो यस्य । 'जलाशयो जलाधारे स्यादुशीरे नपुंसकम्' [ इति मे० १२१।११८]॥ (६) ॥ * ॥ लाति दोषान् । अच् (३।१।१३४), क्विप् (३।२।१७८) वा ।—ला मज्जा सारोऽस्य । कप् (५।४।१५४)—इति मुकुटस्तु चिन्त्य ॥ ( ७ ) ॥*॥ लङ्घ्यते रोगान् । लङ्घयते वा भूरथत्वात् । 'लघि गतौ'(भ्वा० आ० से० । 'लङ्घिबंह्योर्नलोपश्च'( उ० १।२९ )। लघु लीयते । 'लीङ् श्लेषणे'(दि० आ० अ०)। अच् (३।१।१३४) समस्त नाम ॥*॥ व्यस्त [लघु लयम्] अपि । 'लामज्जकं सुवास स्यादमृणालं लयं लघु' इति सुश्रुत । 'लामज्जकं सुनालं स्यादमृणालं लयं लघु' ॥ ( ८ ) ॥ * ॥ अवलीयते दाहोऽस्मात्।—अवदीयते दाहोऽनेन, इति–'अवदानम्' इति तु स्वामी–इति मुकुट । तन्न । स्वामिग्रन्थेऽदर्शनात् । 'अवदीयत दाहोऽनेन' इति स्वामिना व्याख्यातत्वाच्च ॥*॥ केचित्तु—'अवदाहेष्टम्' 'कापथम्' इति नामद्वयमाहु । 'लामज्जकं लघुलयमवदाहेष्टकापथे । अवदानमिन्द्रगुप्तमवदाहेष्टकापथे' इति वाचस्पति ॥ ( ९ ) ॥ * ॥ इष्टकापथमस्य । अधोवायुकरत्वात् । यद्वा–इष्टकेव दृढ पन्था यस्य, इष्टकानामपि पन्था यस्य इति वा ॥ (१०) ॥*॥ दश 'वीरणमूलस्य' 'खस' इति ख्यातस्य ।

**नलादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥**

'नल' आदि और गर्मुत्, श्यामाक (२ पु), आदि ये 'तृणधान्य' हैं।

नलेति ॥ तृणजातय । तृण्यते । 'तृणु अदने' (त० उ० से० ) । घञ् ( ३।३।१९ ) । संज्ञापूर्वकत्वाद् गुणो न । घञर्थे कस्तु परिगणनान्न ॥ ( १ ) ॥ * ॥ गिरति, गीर्यते वा । 'गृ निगरणे' ( तु० प० से० ) । 'ग्रो मुट् च' ( उ० १।९५ ) इत्युति ॥ ( १ ) ॥ * ॥ श्यायते । 'श्यैङ् गतौ' ( भ्वा० आ० अ० )। 'पिनाकादयश्च' ( उ० ४।१५) इति साधु । यद्वा–श्याम वर्णमकति । 'अक गतौ' ( भ्वा० प० से० ) । अण् ( ३।२।१ ) ॥१॥ 'श्यामाक श्यामकोऽपि च' इति हलायुध [ २।४२९ ] । तत्र मूलविभुजादिके ( वा० ३।२।५ ) शकन्ध्वादित्वम् ( वा० ६।१।९४ ) बोध्यम् । यत्तु—'श्यालुश्यूभ्यो मकन्'—इत्याह मुकुट । तन्न । तस्योणादिवृत्तावदर्शनात् ( 'साँवा' इति लोके ख्यात ) ॥ (१) ॥ * ॥ प्रमुखशब्दान्नीवाराद्या । मुकुटस्तु—अनन्तरा कुशादयो व्यवहितास्च कङ्गुकोद्रवादयो गृहीता —इत्याह । [ तन्न युक्तिसहम् ] कोद्रवादीनामेव सति हविष्यत्वाघातात् ।

**अस्त्री कुशं कुथो दर्भः पवित्रम्**

**कुशम्** ( पु न ), **कुथ , दर्भ** ( २ पु ), **पवित्रम्** ( न ), 'कुशा' के ४ नाम हैं।

अस्त्रीति ॥ कौ शेते । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । यद्वा–कुशयति । 'कुशिर श्लेषे' (   )।

'इगुपध–' (३।१।१३५) इति कः। 'कुशो रामसुते द्वीपे[1] पापिष्ठे योक्त्रमत्तयोः। कुशी[2] फाले कुशो दर्भे कुशा वल्गा कुशं जले' इति हैम. [ २।५५८ ] ॥ ( १ ) ॥*॥ कुथ्यति। 'कुथ पूतीभावे' ( श्वा० प० से० )। 'इगुपध–' (३।१।१३५) इति कः।—'कुथति'–इति स्वाम्युक्तविग्रहश्चिन्त्यः। 'कुथः स्त्रीपुंसयोर्वर्णे[3] कम्बले पुंसि बर्हिषि' [ इति मे० ७२।४ ] ॥ ( २ ) ॥ * ॥ दर्भ्यते। 'दृभी ग्रन्थे' ( तु० प० से० )। घञ् ( ३।३।१९ ) ॥ ( ३ ) ॥*॥ पूयतेऽनेन। 'पुवः संज्ञायाम्' (३।२।१८५) इतीत्र। 'पवित्रं वर्षणे कुशे। ताम्रे पयसि च क्लीवं मेध्ये स्यादभिधेयवत्' [ इति मे० १३५।१७७ ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'दर्भविशेषस्य'।

अथ कत्तृणम्।

पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥

कत्तृणम्, पौरम्, सौगन्धिकम्, ध्यामम्, देवजग्धकम्, रौहिषम् ( ६ न ), 'रोहिषनामक सुगन्धित घास' के ६ नाम हैं।

कथेति ॥ कुत्सितं तृणम्। 'तृणे च जातौ' ( ६।३। १०३ ) इति को: कदादेश: ['कत्तृणं तृणभित्पृश्न्यो.' इति मे० ४।३८] ॥(१)॥*॥ पुरे भवम्। 'तत्र भव.' (४।३। ५३)इत्यण्। 'पौरं त्रिषु पुरोद्भूते कत्तृणे पुनपुंसकम्'[इति मे० १२७।६१] ॥ ( २ ) ॥*॥ शोभनो गन्ध.। सुगन्धः प्रयोजनमस्य। 'प्रयोजनम्' ( ५।१।१०९ ) इति ठञ्। 'सौगन्धिको गन्धवणिक् सौगन्धिकं तु कत्तृणे। गन्धोत्पले[4] पद्मरागे कह्लारे' इति हैमः [ ४।४३ ] ॥ ( ३ ) ॥*॥ ध्यायन्ते पशुभि.। 'ध्यै चिन्तायाम्' ( श्वा० प० अ० )। बाहुलकान्मक्। [ 'ध्यामं दमनके गन्धतृणेऽथ श्यामले त्रिषु' इति मे० १०९।१७ ] ॥ ( ४ ) ॥ * ॥ देवैरद्यते स्म। क्तः ( ३।२।१०२ )। 'अदो जग्धिर्ल्यप्ति किति' ( २।४।३६ ) ॥ ( ५ ) ॥ * ॥ रोहति। 'रुहेर्वृद्धिश्च' ( उ० १।४७ ) इति टिषच्। 'कत्तृणे रौहिषं क्लीवं पुंल्लिङ्गो हरिणान्तरे' इति मूर्धन्यान्ते रभसः ॥ ( ६ ) ॥ * ॥ षट् 'रोहिस' इति ख्याततृणविशेषस्य।

छत्रातिच्छत्रपालघ्नौ

छत्रा ( स्त्री ), अतिच्छत्रः, पालघ्नः ( २ पु ), 'पानीमें होनेवाले तृण-विशेष' के ३ नाम हैं।

१. 'दर्भे' इति पा०।

२. 'कुशी लोहविकारे स्यात्' इति तृतीयचरणे पा०।

३. 'स्त्रीपुंसयोर्वर्णकम्बले' इति पा०।

४. 'गन्धोपले' इति पा०।

छत्त्रेति ॥ छदति, छादयति वा। 'छद अपवारणे'। त्रन् (उ० ४।१५९)। 'इस्मन्त्रन्क्विषु च' (६।४।९७) इति ह्रस्व.। 'छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः। नपुंसकं चातपत्रे' [इति मे० १२५।३८] ॥ (१) ॥*॥ अतिक्रान्तश्छत्त्रम् ॥ (२) ॥*॥ पालं क्षेत्रं हन्ति। 'अमनुष्य–' (३।२।५२) इति ठक् ॥ (३) ॥*॥ त्रीणि 'जलजतृणविशेषस्य'।

मालातृणकभूस्तृणे।

मालातृणकम्, भूस्तृणम् ( २ न ), 'घचके समान रूप तथा पानीमें होनेवाले तृण-विशेष' के २ नाम हैं।

मालेति ॥ मालाकाराणि तृणान्यस्य ॥ (१) ॥*॥ भुवस्तृणम्। पारस्करादित्वात् (६।१।१५७) सुट्। 'भूः' अव्ययं वा ॥ (२) ॥*॥ द्वे 'तृणविशेषस्य'। स्वामी तु—छत्रादिपञ्चपर्यायानाह।

शष्पं बालतृणम्

शष्पम्, बालतृणम् ( २ न ), 'नई और कोमल घास' के २ नाम हैं।

शष्पमिति ॥ शस्यते, शुष्यति वा। 'शसु हिंसायाम्' (श्वा० प० से०)। 'शुष शोषणे' (दि० प० अ०) वा। 'खष्पशिल्पशष्प—'(उ० ३।२८)इति साधुः।—'नीपादयः' इति प—इति मुकुटस्तु चिन्त्य.। उज्ज्वलदत्तादिवृत्तिषु 'नीपादय' इति सूत्राभावात्। 'शष्पं बालतृणे स्मृतम्। पुंसि स्यात् प्रतिभाहानौ' [इति मे० १०२।११] ॥ (१) ॥*॥ बालं तृणम् ॥ (२) ॥*॥ द्वे 'नवतृणस्य'।

घासो यवसम्

घासः ( पु ), यवसम् ( न ), 'गवत' अर्थात् 'बैल, घोड़ा, आदि पशुओंके खाने योग्य भूसा-घास' के २ नाम हैं।

घेति ॥ अद्यते। घञ् (३।३।१९)। 'घञपोश्च' (२।४।३८) इत्यदेर्घस्लृ।—'घस्यते'—इति विग्रहन्तौ स्वामिमुकुटौ चिन्त्यौ। घसे सर्वत्र प्रयोगाभावात्। अन्यथा 'घञपोश्च' (२।४।३८) इति सूत्रवैयर्थ्यापातात् ॥ (१) ॥*॥ यौति, यूयते वा। 'यु मिश्रणेऽमिश्रणे च' (अ० प० से०)। 'वहियुभ्यां णित्' (उ० ३।११९) इत्यसच्। संज्ञापूर्वकत्वान्न वृद्धि ॥ ( २ ) ॥ * ॥ द्वे 'गवाद्यदनीयतृणविशेषस्य'।

तृणमर्जुनम् ॥१६७॥

तृणम्, अर्जुनम् ( २ न ), 'तृणमात्र' के २ नाम हैं।

तृणमिति ॥ तृण्यते। 'तृणु अदने' (त० उ० से०)। घञ् (३।३।१९)। संज्ञापूर्वकत्वान्न गुण. ॥ (१)॥*॥ अर्ज्यते। 'अर्ज अर्जने' (श्वा० प० से०)। 'तृणाख्याया चित्'

(उ० ३।५९) इत्युनन्। 'अर्जुन ककुभ पार्थे कार्तवीर्यमयूरयो । मातुरेकसुतेऽपि स्याद् धवले ¹पुनरन्यवत्। नपुंसक तृणे नेत्ररोगे स्याद् अर्जुनीगवि। उषाया वाहुदानद्या कुट्टन्यामपि च क्वचित्' [इति मे० ८४।३०-३१] ॥ (२) ॥*॥ द्वे 'तृणमात्रस्य'।

तृणानां संहतिस्तृण्या

तृण्या ( स्त्री ), 'घासकी ढेरी' का १ नाम है।

तृणेति ॥ तृणानां संहतिः समूह । 'पाशादिभ्यो य' (४।२।४९) ॥ ॥१॥ (*) एकम् तृणसमूहस्य'।

नड्या तु नडसंहतिः।

नड्या ( स्त्री ), 'नड-समूह' का १ नाम है।

नेति ॥ नडानां संहतिः । पाशादिभ्यो य' ( ४।२।४९) ॥ (१) ॥*॥ एकम् 'नडसमूहस्य'।

तृणराजाह्वयस्तालः

तृणराज, ताल ( २ पु ) 'ताड' के २ नाम हैं।

तृणेति ॥ तृणानां राजा। राजाहःसखिभ्यष्टच्' (५।४।९१)। तृणराज इत्याह्वयो यस्य ॥ (१) ॥*॥ तालयति। 'तल प्रतिष्ठायाम्' चुरादि। पचाद्यच्(३।१।१३४)। 'ताल करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाल द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ ताली ²जटौषधौ। क्लीबं तु हरिताले स्यात् [इति मे० १४६।२३ २४] ॥*॥ तलति। अच् (३।१।१३४)। 'तलश्चपेटे तालद्रौ तलं ज्याघातवारणे। त्सरौ स्वभावाधरयोस्तलं ³चपेटाघाते च संमतम्' ॥ (२) ॥*॥ द्वे तालस्य'।

नालिकेरस्तु लाङ्गली ॥ १६८ ॥

नालिकेर, लाङ्गली ( २ पु ), 'नारियल' के २ नाम हैं।

नालीति ॥ नलति, नल्यते वा। 'णल गन्धे' (भ्वा० प० से०)। बाहुलकादिण्। केन वायुना ईर्यते। 'ईर प्रेरणे ( अ० आ० से० )। घञ् (३।३।१९)। नालिश्चासौ केरश्च ॥*॥ कपिलिकादि ( वा० ८।२।१८ ) [ नारिकेल ] ॥ (१) ॥*॥ लङ्गति। लगि गतौ (भ्वा० प० से०)। बाहुलकाद् अलच् दीर्घश्च। गौरादि (४।१।४१) ॥ (२) ॥*॥ द्वे नारिकेलस्य'।

घोण्टा तु पूगः क्रमुको गुवाकः खपुरः

घोण्टा ( स्त्री ), पूग, क्रमुक, गुवाक, खपुर (४ पु), 'सुपारी, कसैलीके पेड' के ५ नाम हैं।

घोण्टेति ॥ घोणते। 'घुण भ्रमणे' (भ्वा० आ० से०)। बाहुलकात् ट। 'घोण्टा तु बदरीपूगवृक्षयोरपि योषिति' [इति मे० ३४।१३] ॥ (१) ॥*॥ पवते, पुनाति वा। 'पूञ् पवने' (भ्वा० आ० से०)। 'छापूखडिभ्य कित्' (उ० १।१२४) इति गन्। मुकुटस्तु–पूज्यते मान्यते सेचनादिना फलद्वारेण अनेन वा। घञि कुत्वे पूग —इत्याह। तन्न। पूजश्चुरादिण्यन्तत्वेन णिलोपस्य स्थानिवत्त्वेन कुत्वाप्रसङ्गात्। 'निष्ठायामनिट' (७।३।५३) इति वार्तिकाच्च। पूग क्रमुकसंघयो' इति हैम [२।३७] ॥ ( २ ) ॥*॥ क्रामति। क्रमु पादविक्षेपे' (भ्वा० प० से०)। बाहुलकादु। 'संज्ञायां कन्' (५।३।७५)। क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि। फले कार्पासिकायाश्च पट्टिकालोध्रपूगयो' [इति मे० ५५५ ५६] ॥(३)॥*॥ गुवन्त्यनेन। स्रंसकत्वात्। 'गु पुरीषोत्सर्गे' (तु० प० अ०)। 'पिनाकादयश्च' (उ० ४।१५) इति साधु। यत्तु मुकुट —बाहुलकाद् गुणाभाव इति। तन्न। अस्य कुटादित्वात् ॥*॥ गुवाकोऽपि च गूवाक इति तारपाल। तत्र बाहुलकाद्दीर्घ ॥ (४) ॥*॥ खमिन्द्रियमाकाशं वा पिपर्ति। 'पॄ पालनपूरणयो' (जु० प० से०)। मूलविभुजादिक (वा० ३।२।५)। 'उदोष्ठ्यपूर्वस्य' ( ७।१।१०२ )। यत्तु—अचि (३।१।१३४) उत्वम् (७।१।१०२) आह मुकुट। तन्न। 'इत्वोत्वाभ्यां गुणवृद्धी–'(७।१।१०२) इति वार्तिकविरोधात्। यदपि– पूरी आप्यायने' (दि० आ० से०)।–इत्ययं धातुरुपन्यस्त। तदपि न। 'खपूर' इति रूपप्रसङ्गात्। [ खपुर क्रमुके भद्रमुस्तकेऽलसकेऽपि च' इति मे० १३३।१४५] ॥ (५) ॥*॥ पञ्च 'पूगवृक्षस्य' 'सोपारी' इति ख्यातस्य।

अस्य तु।

फलमुद्वेगम्

उद्वेगम् ( न ), 'सुपारी फल' का १ नाम है।

अस्येति ॥ अस्य पूगस्य। उद्गतो वेगोऽस्मात्। स्रंसकत्वात्। उद्विजन्तेऽनेन। 'ओविजी-' (तु० आ० से०)। 'हलश्च' (३।३।१२१) इति घञ् ॥(१)॥*॥ एकं 'क्रमुकफलस्य'।

एते च हिंतालसहितास्त्रय ॥ १६९ ॥

खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।

हिन्ताल ( पु ) के सहित पूर्वोक्त तीन शब्द ( नारिकेल, ताल, घोण्टा ) और खर्जूर ( पु ), केतकी, ताली, खर्जूरी (३ स्त्री ) को तृणद्रुम ( पु ), अर्थात् 'तृणद्रुम' कहते हैं।

एत इति ॥ एते नालिकेराद्यास्त्रयो हिंतालेन चतुर्थेन सहिता खर्जूराद्याश्च चत्वार। तृणजातीया द्रुमा। शाक-

---

१ 'पुंलिङ्गो धवलेऽन्यवत्' इति पा०।

२ 'तालजटौषधौ' इति पा०।

३ हैमे 'तलं ज्याघातवारणे। तलश्चपेटे तालद्रौ स्वभावाधरयो त्सरौ' इत्येव भिन्न एव पाठ (४०।५०१ २)।

पार्थिवादि' (वा० २।१।७८) हीनोऽल्पस्ताल'। पृषोदरादि' (६।३।१०९) ॥ (१) ॥*॥ खर्जति। 'खर्ज व्यथने' (भ्वा० प० से०)। 'खर्जिपिञ्जादिभ्य ऊरोलचौ' (उ० ४।९० ) इत्यूरः। 'खर्जूरं रूप्यफलयो खर्जूर कीटवृक्षयो.' [इति हैम० ३।५८२] ॥ (१) ॥*॥ 'जातेरस्त्री–' (४। १।६३ ) इति ङीप्। गौरादिः ( ४।१।४१ )वा। 'वनखजूरी' इति ख्याता ॥ ( १ ) ॥ * ॥ केतयति। 'कित निवासे' (भ्वा० प० से०)। क्वुन् ( उ० २।३२), ण्वुल् (३।१।१३४) वा। गौरादि (४।१।४१) ॥ (१) ॥*॥ तालयति। 'तल प्रतिष्ठायाम्' चुरादिः। अच् (३।१।१३४)। जातित्वात् ( ४।१।६३ ) गौरादित्वात् ( ४।१।४१ ) वा ङीप् ॥ (१) ॥*॥ 'तृणद्रुमभेदाना पृथक्' एकैकम्।

इति वनौषधिवर्गविवरणम् ॥ ४ ॥

## अथ सिंहादिवर्गः ॥ ५ ॥

**सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।**
**कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः [८]**
**पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः [९]**

सिंहः, मृगेन्द्रः, पञ्चास्यः, हर्यक्षः, केसरी, हरिः ( ६ पु), 'सिंह' के ६ नाम हैं।

[ कण्ठीरवः, मृगरिपुः, मृगदृष्टिः, मृगाशनः, पुण्डरीकः, पञ्चनखः, चित्रकायः, मृगद्विट् ( ८ पु ), 'सिंह' के ये भी ८ नाम हैं ]।

सिंह इति ॥ सिञ्चति । 'षिच क्षरणे' (तु० उ० अ०)। 'सिञ्चे संज्ञायां हनुमौ कश्च'(उ० ५।६२)। यद्वा–हिनस्ति। 'हिसि हिंसायाम्' ( रु० प० से० )। अच् ( ३। १।१३४)। पृषोदरादि (६।३।१०९)। 'सिंह. कण्ठीरवे राशौ सत्तमे चोत्तरस्थित। सिंही तु कण्टकार्यां स्यात्' [इति मे० १७६।११-१२]। 'सिंही स्वर्भानुमातरि। वासाबृहत्यो क्षुद्रायाम्' [इति हैम.२।६१७-१८] ॥ (१) ॥*॥ मृगाणामिन्द्र ॥(२)॥*॥ पञ्चते। 'पचि विस्तारे' (भ्वा० आ० से०)। पञ्च विस्तृतमास्यमस्य। यद्वा–मुख पादाश्च पञ्च आस्यानीव यस्य। युद्धे मुख्यत्वात् ॥ (३) ॥*॥ हरिणी पिङ्गले अक्षिणी यस्य। 'बहुव्रीहौ–'(५।४।११३) इति षच् ॥ (४) ॥*॥ केसरा स्कन्धवालाः सन्त्यस्य। 'अत.–' (५।२।११५) इतीनि.। 'केसरी तुरगे सिंहे पुनागे नागकेसरे' [ इति मे० ९६।७७ ]॥*॥ केचित् [ केशरी] इति तालव्योष्ममध्यमाहु.। के वारि शिरसि वा शीर्यते। 'शृ हिंसायाम्' (क्र्या० प० से०)। 'ऋदोरप्' (३।३। ५७)। 'हलदन्तात्–' (६।३।९) इत्यलुक्। सोऽस्त्यस्य। इनि (५।२।११५) ॥ (५) ॥*॥ हरति। 'अच इः' (उ० ४।१३९)। 'हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु। कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान्। वाच्यवत् पिङ्गहरितोः' [इति मे० १३०। ९९-१००] ॥ (६)॥*॥ षट् 'सिंहस्य'।

**शार्दूलद्वीपिनौ व्याघ्रे**

शार्दूलः, द्वीपी, व्याघ्रः ( ३ पु), 'बाघ' के ३ नाम हैं।

शार्दूति ॥ शारयति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। स्वार्थणिचः क्विप्। दूयते। 'दूङ् परितापे' ( दि० आ० से०)। अन्तर्भावितण्यर्थ.। बाहुलकाल्लुक्। यद्वा–शृणाति। पिञ्जादयूलच्(उ० ४।९०)। बाहुलकाद्दुकृद्धी। 'शार्दूलो राक्षसान्तरे। व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थित.' [इति मे० १५४।१३७] ॥ (१) ॥*॥ द्वौ वर्णो ईयते। 'इङ् गतौ' (दि० आ० अ०)। बाहुलकात् पो गुणाभावश्च। द्वीपाकाररेखावत्त्वाद् द्वीपं चर्मास्त्यस्य। 'अतः–' (५।२।११५) इतीनि ॥ (२) ॥*॥ व्याजिघ्रति। 'घ्रा' गन्धोपादाने'(भ्वा० प० अ०)। 'व्याङि घ्रातेश्च जातौ'(उ० ५।६३) इति क। यद्वा–'आतश्चोपसर्गे' (३।१।१३६) इति क। 'पाघ्रा–' (३।१।१३७) इति शो न। 'जिघ्रः संज्ञायाम्–' ( वा० ३।१।१३७ ) इति निषेधात्। 'व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयो'। श्रेष्ठे नरादुत्तरस्थः कण्टकार्यां तु योषिति' [इति मे० १२८।८४] ॥ (३) ॥*॥ त्रीणि 'बाघ' इति ख्यातस्य।

**तरक्षुस्तु मृगादनः ॥ १ ॥**

तरक्षुः, मृगादनः ( २ पु), 'चीता या तेंदुआ बाघ' के २ नाम हैं ( 'मुकुट' के मतसे 'वृक' अर्थात् 'हुंडार भेंड़िया' के ये २ नाम हैं' )।

तरेति ॥ तरं गतिं मार्गं वा क्षिणोति। 'क्षिणु हिंसायाम्' (त० उ० से०)। मितद्र्वादिडुः (वा० ३।२।१८०) ॥ (१) ॥*॥ मृगमत्ति। 'अद भक्षणे' (अ० प० अ०)। ल्यु ( ३।१।१३३ ) ॥ (२) ॥*॥ द्वे 'तेंदुआबाघ' इति ख्यातस्य–इत्यन्ये। 'हुण्डार' इति ख्यातस्य–इति मुकुटः।

**वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः।**
**दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥**

वराहः, सूकरः, घृष्टिः, कोलः, पोत्री, किरः, किटिः, दंष्ट्री, घोणी, स्तब्धरोमा, क्रोडः, भूदारः ( १२ पु), 'सूअर' के १२ नाम हैं।

वरेति ॥ वरं श्रेष्ठमाहन्ति। 'अन्येभ्योऽपि'–(वा० ३। २।१०१) इति ड.। 'वराहो नाणके किरौ। मेघे मुस्ते

गिरौ विष्णौ' इति हैम [ ३।८११-१२ ] ॥ (१) ॥*॥ सवनम् । 'षूङ् प्राणिगर्भविमोचने' (अ० आ० से०) । सपदादि० (वा० ३।३।१०८) । सुव प्रसव करोति । 'कृञो हेतु–' (३।२।२०) इति ट ॥*॥ 'तालव्या अपि दन्त्याश्च शम्बशूकरपारशव ' इति शभेद । शूकोऽस्त्यस्य । खररोमत्वात् । र । यद्वा– शूक राति । 'रा आदाने' (अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति क । यद्वा– 'शू' इति ध्वनि करोति । अच (३।१।१३४), ट (३।२।२०) वा ॥ (२) ॥*॥ घर्षति । 'घृषु सघर्षे' (भ्वा० प० से० ) । क्विच् ( ३।३।१७४ ) । 'घृष्टि स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ' इति विश्व[१] ॥ (३) ॥*॥ कोलति पीनत्वात् । 'कुल सस्त्याने' (भ्वा० प० से०) । अच (३।१।१३४) । यद्वा–कोलत्यङ्गान्यत्र । 'हलश्च' (३।३।१२१) इति घञ । 'कोलो भेलक उत्सङ्गेऽङ्कपाल्या चित्रके किरौ । कोल च बदरे कोला पिप्पल्या चव्यभेषजे' इति हैम [ ४०।४९३-९४ ] ॥ (४) ॥*॥ पोत्र मुखाग्रमस्त्यस्य । 'अत –' (५।२।११५) इतीनि ॥ (५) ॥*॥ किरति । 'कॄ विक्षेपे' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति क ॥*॥ 'किरि ' इति पाठे बाहुलकात् कि । ['अथ किर किरि । भूदार इति शूकर ' इति अभि० चि० ४।३५३ ]॥(६)॥*॥ केटति । 'किट गतौ' (भ्वा० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) ।—किर्डात—इति मुकुटश्चिन्त्य । किटेस्तौदादिकत्वाभावात् ॥ (७) ॥*॥ दंष्ट्राऽस्त्यस्य । व्रीह्यादीनि (५।२।११६) ॥ (८) ॥*॥ घोणा नासाऽस्य । व्रीह्यादि (५।३।११६) ॥ (९) ॥*॥ स्तब्धानि रोमाणि यस्य ॥ (१०)॥*॥–क्रुडति । 'क्रुड घनत्वे (तु० प० से०) । अच् (३।१।१३४)–इति मुकुट । तन्न । कुटादित्वाद् गुणाप्रसङ्गात् । क्रुडनम् । घञ् (३।३।११९) । क्रोडोऽस्यास्ति । अर्शआद्यच् (५।३।१२७) ॥ (११) ॥*॥ भुव दारयति । 'कर्मण्यण्' (३।२।१) ॥ (१२) ॥*॥ द्वादश 'शूकरस्य'।

**कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।**
**मर्कटो वानरः कीशो वनौका**

कपि, प्लवङ्ग, प्लवग, शाखामृग, वलीमुख, मर्कट, वानर, कीश, वनौका (९ पु), 'बन्दर' के ९ नाम हैं।

केति ॥ कम्पते । 'कपि चलने' (भ्वा० आ० से०) । 'कुण्ठिकम्प्योर्नलोपश्च' ( उ० ४।१४४ ) इतीन् । 'कपिर्ना सिह्लके शाखामृगे च मधुसूदने' इति विश्व मेदिन्यौ[२] ॥(१) ॥*॥ प्लवनम् । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । 'ऋदोरप्' (३।३।५७) प्लवेन गच्छति । 'गमश्च' (३।२।४७) इति खच् । खच्च डिद्वा' (वा० ३।२।३८) ॥*॥ डित्वाभावे 'प्लवगम ' च । 'प्लवंगमश्च मण्डूके तथा शाखामृगेऽपि च'[इति मे० ११२।६१]॥(२)॥*॥ 'अन्येष्वपि–'(वा० ३।३।४८ ) इति ड । 'प्लवग कपि-कयो । अर्कसूते' इति हैम [ ३।१२३ ] ॥ (३) ॥*॥ शाखाचारी मृग पशु । शाकपार्थिवादि (वा० २।१।७८) ॥ (४) ॥*॥ वलीयुक्त मुखमस्य । वली मुखेऽस्य—इति वा ॥ (५) ॥*॥ मर्कति । 'मर्क धातुर्ग्रहणे । 'शकादिभ्योऽटन्' (उ० ४।८१ ) । मुकुटस्तु—मर्के सौत्राऽऽत्यर्थाच्चुरादित्वाद्विकल्पितणिच० 'शकादिभ्योऽटन्' —इत्याह । तच्चिन्त्यम् । मर्केश्चौरादित्वाभावात् । यदपि—म्रियते । 'जटमर्कटौ' इति मृञोऽटन् ककारश्चान्तादेश —इत्युक्तम् । तदपि निर्मूलत्वादुपेक्ष्यम् ॥ (६) ॥*॥ वने भव फलादि । अण् (४।३।५३) वान राति । 'रा आदाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति क । वानम् । 'वा गत्यादौ' ( अ० प० से० ) । सपदादिक्विप् ( वा० ३।३।१०८) । विगमनेऽपि नृणाति बालकम् । 'नॄ नये' (क्र्या० प० से०) । अच् (३।१।१३४) । वा किंचित् नरो वा ॥ (७) ॥*॥ 'कौ' इति शब्दमीष्टे । 'ईश ऐश्वर्ये' (अ० आ० से०) । 'मूलविभुजा–' (वा० ३।२।१५) इति क । यद्वा–कस्य वायोरपत्यम् । 'अत इञ्' ( ४।१।९५ ) । किर्हनुमान् ईशो यस्य ॥ ( ८ ) ॥*॥ वनमोकोऽस्य ॥ (९) ॥*॥ नव 'वानरस्य'।

अथ भल्लुके ॥ ३ ॥

**ऋक्षाच्छभल्लभाल्लुकाः**

भल्लुक, ऋक्ष, अच्छभल्ल, भाल्लुक (४ पु), 'भालू' के ४ नाम हैं।

ऋक्षेति ॥ भल्लते । 'भल्ल हिंसायाम्' (भ्वा० आ० से०) । बाहुलकादु । 'सज्ञाया कन्' (५।३।७५) । यत्तु मुकुटेन— यूकादयश्च' इति सूत्रमुक्तम् । तदुज्ज्वलदत्तादौ न दृश्यते ।—भल्लति—इत्युक्ति स्वामि मुकुटयोश्चिन्त्या ॥*॥ उलूकादित्वात् (उ० ४।४१) दीर्घमध्य [भल्लूक ] अपि । 'भल्लुको भल्लुको भल्ल इत्युलूकादयश्च स ' इति पुरुषोत्तम ॥*॥ प्रज्ञादणि(५।४।३८) 'भाल्लूक' 'भाल्लुक ' च ॥ (१) ॥*॥ ऋक्षणोति । 'ऋक्ष हिंसायाम्' (स्वा० प० से०) । अच् (३।१।१३४) । 'ऋक्ष पर्वतभेदे स्याद्

१ विश्वे तु नोपलभ्यते ।

२ विश्वे तु 'घृष्टि स्याद् घर्षणे विष्णुक्रान्तास्पर्धा-किरिष्वपि' इत्येवं भिन्न एव पाठ (३७।२४) । मेदिन्या (१०२।२) एवोपलभ्यते ।

भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे च नपुंसकम्' [ इति मे० १६६।६-७ ] ।—ऋक्षति—इति स्वामी चिन्त्यः । ऋक्षे सौवादिकत्वात् ॥ ( २ ) ॥*॥ अच्छ आभिमुख्येन भल्लते । अच् ( ३।१।१३४ )—भल्लति—इत्युक्ति स्वामि-मुकुटयोश्चिन्त्या ॥*॥ संघातविगृहीतमिदं नाम । 'अच्छ स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् । आभिमुख्ये' [ इति मे० २९।१-२ ] । ['भल्लः स्यात् पुंसि भल्लूके शस्त्रभेदे तु न द्वयो । भल्लातक्या स्त्रिया भल्ली' [ इति मे० १४८।४२ ] ॥ (३) ॥*॥ भालयते । 'भल आभण्डने' चुरादिराकुस्मीय ।—भालयति—इति मुकुटश्चिन्त्यः ॥ (४) ॥*॥ चत्वारि 'भालु' इति ख्यातस्य ।

गण्डके खड्गखड्गिनौ ।

गण्डकः, खड्गः, खड्गी ( ३ पु ), 'गेंडा' के ३ नाम हैं ।

गण्डेति ॥ गच्छति । 'गम्लृ गतौ' (भ्वा० प० अ०) । 'अमन्ताड्ड' (उ० १।११४) । स्वार्थे कन् (५।३।७५) । यद्वा—गण्डति संहतो भवति । 'गडि वदनैकदेशे' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) । 'गण्डकः पुंसि खड्गे स्यात्' संख्याविद्याप्रभेदयो । अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे' इति विश्व-मेदिन्यौ [ १३।१२३, ७।८२ ] ॥ (१) ॥*॥ खडति । 'खड भेदने' (चु० प० से०) । छापूखडिभ्य कित्' ( उ० १।१२४ ) इति गन । 'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' [इति मे० २२।४]॥(२)॥*॥ खड्गः शृङ्गमस्त्यस्य । इति (५।२।११५) । 'खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु' [ इति मे० ८६।५६ ] ॥ (३) ॥*॥ त्रीणि 'गडा' इति ख्यातस्य ।

लुलापो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥

लुलापः, महिषः, वाहद्विषन्, कासरः, सैरिभः (५ पु), 'भैंसा' के ५ नाम हैं ।

लुलेति ॥ लुडति पङ्के । 'लुड संश्लेषे' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति क । डलयोरेकत्वम् । आप्नोति । 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। अच् (३।१।१३४) । लुलश्चासावापश्च । यद्वा—लुड्यन्ते । 'लुड विलोडने'( )भिदाद्यङ् (३।३।१०४) । लुला विलोडिता आपो येन । 'लुल विमर्दने' इति सौत्रो धातुर्वा ॥*॥ [ 'लुलायः' इति ] अन्तस्थयकारान्तपाठे बाहुलकादायङ्प्रत्ययः ।—'लुलिकुलिकपिभ्य आय'—इति मुकुटलिखितमूत्रमुज्ज्वलदत्तादिषु न पश्याम । यद्वा—अयते । 'अय गतौ' (भ्वा० आ० से०) । अच् (३।१।१३४) । लुलश्चासावयश्च [ 'महिषो यमवाहन' । रजस्वलो वाहरिपुर्लुलाय मैरिभो महः' इति अभि० चि० ४।३४७-४८ ] ॥ ( १ ) ॥ * ॥ महति, मह्यते वा । 'मह पूजायाम्' (भ्वा० प० से०) । 'अविमह्योष्टिषच्' ( उ० १।४५ ) । यद्वा—मंहते । 'महिङ् वृद्धौ' ( भ्वा० आ० से० )। आगमशासनस्यानित्यत्वान्न नुम् ।'टिड्ढा–'(४।१।१५) इति ङीप् ॥ (२) ॥*॥ वाहाना द्विषन् । वाहेषु द्विषन् वा । 'सप्तमी' (२।१।४०) इति योगविभागात् समास ॥ (३) ॥*॥ के जले आसरति । 'सृ गतौ' (भ्वा० आ० अ०) । अच् (३।१।१३४) । यद्वा—ईषत् सरति । स्थूलकायत्वात् । 'ईषदर्थे' (६।३।१०५) इति को कादेश ॥ (४) ॥*॥ सीरोऽस्त्येषाम् । इनि (५।२।११५)। सीरिणा कर्षकाणामिभ इव । शाकन्ध्वादि (वा० ६।१।९४)। प्रज्ञाद्यण् (५।४।३८)। यद्वा—'सीरोऽर्कहलयो पुंसि' [इति मे० १२९।९८]। सीरस्य सूर्यस्य इभ इव । पुत्रवाहनत्वात् । पूर्ववत् ॥(५) ॥*॥ पञ्च 'महिषस्य' ।

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।
सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥

शिवा ( नि० स्त्री० ), भूरिमायः, गोमायुः, मृगधूर्तकः, सृगालः, वञ्चकः, क्रोष्टा, फेरुः, फेरवः, जम्बुकः (९ पु), 'स्यार, शृगाल' के १० नाम हैं ।

स्त्रियामिति ॥ शिवं शिवा वा देवताऽस्त्यस्या । अर्श-आद्यच् (५।२।१२७) । शकुनावेदकत्वात् । 'शिवं किल. शिवा क्रोष्टा भवेदामलकी शिवा' इति शाश्वतात् [ २।१ ] शृगालेऽपि स्त्रीलिङ्ग' । चतुष्पदां द्विलिङ्गता वक्ष्यते । तदपवादोऽयम् ॥ (१) ॥*॥ भूरयो माया यस्य ॥ (२) ॥*॥ गां विकृतां वाचं मिनोति । 'डुमिञ् प्रक्षेपणे' (स्वा० उ० से०) । 'कृवापा–' (उ० १।१) इत्युण् ॥ (३) ॥*॥ मृगेषु धूर्त इव । 'संज्ञाया कन्' (५।३।७५)॥ (४) ॥*॥ सृजति मायाम् । 'सृज विसर्गे' (तु० प० अ०) । बाहुलकात् कालन् । न्यङ्क्वादिः (७।३।५३) । असृग् आलाति वा । क' (३।२।३) । पृषोदरादि (६।३।१०९) ॥*॥ 'तालव्या अपि दन्त्याश्च शम्बशम्बरशूकरा' । रसनापि च जिह्वायां शृगाल कलशोऽपि च' इति शभेद । शृङ्गं न लाति । पूर्ववत् । 'शृगालो वञ्चके दैत्ये शृगालं डमरे विदु' इति विश्व. [ १५७।१०७ ] ॥ (५) ॥*॥ वञ्च्यते । 'वञ्चु प्रलम्भने'(चु० आ० से०)। ण्वुल् (३।१।१३३)।—वञ्चयति—इति मुकुटोक्तिश्चिन्त्या । आकुस्मी-

१. प्रथमपादे 'गण्डकः खड्गिनि स्यात्.' इति पा० ।

१. 'जम्बुके' इति पा० ।

यस्य वञ्चेरात्मनेपदित्वात् । 'वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके' [इति मे० १३।१५९]॥(६)॥*॥ क्रोशति । 'क्रुश आह्वाने'(भ्वा० प० से०)। 'सितनि–'(उ० १।६९) इति तुन् । 'तृज्वत् क्रोष्टु' (७।१।९५) ॥ (७) ॥*॥ 'फे' इत्यव्यक्त रौति । मितद्र्वादित्वात् (वा० ३।२।१८०) डु । (८) ॥*॥ 'फे'इत्यव्यक्तो रवोऽस्य। मुहास्य वृषमेरु फेरवस्तारव शिवा। मृकरोऽतिरुज फेरु श्रभीरु मण्डलाहिल ' इति साहसाङ्क ॥ (९) ॥*॥ जमति । 'जमु अदने' ( भ्वा० प० से० ) । मृगय्वादि ( उ० १। ३७) ।—मितद्रवादित्वात् (वा० ३।२।१८०) डु वुक् च—इति मुकुटश्चिन्त्य । टिलोपप्रसङ्गात् । वुकोऽप्रसङ्गाच्च ॥*॥ उलूकादित्वात् (उ० ४।४१) जम्बूकश्च । 'खरोष्ट्रकपिजम्बूकवायसाजम्बरो यम ' इति वाचस्पति ॥ (१०) ॥*॥ दश 'जम्बुकस्य' ।

ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ।

ओतु , विडाल , मार्जार , वृषदंशक , आखुभुक् ( ५ पु ) 'बिलाव' के ५ नाम हैं ।

ओतुरिति ॥ अवति विष्ठाम्, आखुभ्यो गृहम् वा । 'अव रक्षणादौ' ( भ्वा० प० से० )। 'सितनि–' (उ० १। ६९) इति तुन् । 'ज्वरत्वर–' ( ६।४।२० ) इत्यूठौ दीर्घ ( ६।१।१०१ ), गुण ( ७।३।८४ ) ॥ ( १ ) ॥ *॥ वेडति, विड्यते वा । विड आक्रोश ( भ्वा० ) 'तमिविशिविडि–'( उ० १।११८ ) इति कालन । विडालो नेत्रपिण्डे स्याद् वृषदंशके पुमान्' [इति मे० १५४।१३३] ॥ (२) ॥*॥ मार्ष्टि मुखम् । 'मृजू शुद्धौ' (अ० प० से०) । 'कञ्जिमजिभ्या चित् ( उ० ३।१३७ ) इत्यारम् । 'मृजेर्वृद्धि ' ( ७।२।११४ ) । माजार ओतौ खट्वाश' [ इति मे० १३७।२०४ ] ॥ ( ३ ) ॥ * ॥ वृषान् मूषकान् दशति । 'दश दशने' (भ्वा० प० अ०) । 'कर्मण्यण्' (३। २।१) । स्वार्थे कन् (५।३।७५) ॥ ( ४ ) ॥*॥ आखून भुङ्क्ते । आखुभ्यो भुनक्ति वा । 'भुज पालनाभ्यवहारयो' ( रु० प० अ० )। क्विप् ( ३।२।१७८ ) ॥ (५) ॥*॥ पञ्च 'मार्जारस्य ।

त्रयो गौधारगौधेरगौधेया गोधिकात्मजे ॥ ६ ॥

गौधार , गौधेर , गौधेय ( ३ पु ), 'गोहरा, चन्दनगोह' अर्थात् 'काले साँप से गोह मे पैदा होनेवाले जीवविशेष' 'विसखपरा' के ३ नाम हैं ।

त्रेति ॥ गोधाया अपत्यम् । 'गोधाया ढ्रक्' ( ४।१। १२९ ) ॥ ( १ ) ॥*॥ 'आरगुदीचाम्' (४।१।१३०)॥ ( २ ) ॥ * ॥ शुभ्रादित्वात् (४।१।१२३) ढक् ॥ (३) ॥ * ॥ त्रीणि सर्पाद् गोधाया जातस्य 'चन्दनगोहा' इति ख्यातस्य ।

श्वावित्तु शल्य'

श्वाविद् , शल्य ( २ पु ), 'साही' के २ नाम हैं।

श्वेति ॥ श्वान विध्यति । 'व्यध ताडने' ( दि० प० अ० ) । क्विप ( ३।२।१७८ ) । 'नहिवृति–' ( ६।३। ११६) इति दीर्घ ॥ ( १ ) ॥*॥ शलति । 'शल चलने' ( भ्वा० प० से० ) । यत्यादित्वात् ( उ० ४।११२ ) य । शल्य तु न स्त्रिया शङ्कौ वणीव श्वेडपुतोमरे । मदनद्रुश्वाविधोर्ना [इति मे० ११७।५७] ॥ ( २ ) ॥ * ॥ द्वे 'शल्यस्य' 'सेह' इति ख्यातस्य ।

तल्लोम्नि शलली शलल शलम्।

शलली ( स्त्री ), शललम् , शलम् ( २ न ), 'साही के काँटे' के ३ नाम हैं।

तदिति ॥ तस्य श्वाविधो लोमनि । शलति । वृषादित्वात् ( उ० १।१०६ ) कलच् । गौरादित्वात् ( ४।१। ४१) जातित्वात् (४।१।६४) वा ङीप् स्त्रियाम् ॥ (१) ॥ * ॥ स्त्रीत्वाविवक्षायां शललम् [ 'तच्छलाकाया शलल शलमित्यपि' इति हैमनाममाला ४।३६२ ] । 'शलस्तु नृपाण्डयो ' इत्यमरमाला ॥ ( २ ) ॥ * ॥ पचाद्यच् । 'शल तु शल्लकीलोम्नि शलो भृङ्गे गणे विधौ' [इति विश्व १४९।८ ] ॥ ( ३ ) ॥ * ॥ त्रीणि शल्यरोम्णाम् ।

वातप्रमीर्वातमृग

वातप्रमी ( स्त्री ), वातमृग (२ पु ), 'बहुत तेज दौड़ने वाले मृग विशेष' के २ नाम हैं ।

वातेति ॥ वात प्रमिमीते—वाताभिमुखधावनात् । वातप्रमी ' (४।१) इत्युणादिसूत्रेण माङ ईप्रत्यय किन् । 'वातप्रमीर्वातमृग ' इति पुस्काण्डेऽमरमाला। 'योषिति वातप्रमी समीरमृग ' इति बोपालितात् स्त्रीत्वमप्यस्य— 'कृदिकारात्–' (ग० ४।१।४५) इति वा ङीप्—इत्येके । अन्ये तु—कारग्रहणस्य तपरार्थत्वाद्दीर्घान् ङीप् न—इत्याहु । ( १ ) ॥*॥ वात इव वातस्य वा मृग ॥ ( २ ) ॥*॥ द्वे 'मृगभेदस्य'।

कोक ईहामृगो वृक ॥ ७ ॥

कोक , ईहामृग , वृक ( ३ पु ), 'भेड़िया, हुडार' के ३ नाम हैं।

कोक इति ॥ कोकते । कुक आदाने' ( भ्वा० आ० से० ) । अच ( ३।१।१३४ ) ॥ ( १ ) ॥ * ॥ ईहा मृगेष्वस्य । ईहा मृगयन वा । 'कर्मण्यण' ( ३।२।१ ) । —मृगयति—इति मुकुटश्चिन्त्य । 'मृग अन्वेषणे' इत्यस्या-

रमनेपदित्वात्। ईहाप्रधानो मृगो वा। शाकपार्थिवादि. ( वा० २।१।७८ )। 'ईहामृगस्तु पुंसि स्यात् कोकरूपकभेदयो.' [ इति मे० २५।५२ ] ॥ (२) ॥ * ॥ वर्कते। 'वृक आदाने' ( भ्वा० आ० से० )। 'इगुपध-' ( ३।१। १३५ ) इति क.। यद्वा—वृणोति। 'वृञ् वरणे' ( स्वा० उ० से० )। 'सृवृसुपिमुषिभ्य. कक्' ( उ० ३।४१ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'वृकस्य' 'विग' इति ख्यातस्य।

मृगे कुरङ्गवातायुहरिणाजिनयोनयः।

मृगः, कुरङ्गः, वातायुः, हरिणः, अजिनयोनिः (५ पु), 'मृग, हरिण' के ५ नाम हैं।

मृग इति ॥ मृग्यते व्याधै.। 'मृग अन्वेषणे' ( चु० आ० से० )। घञ् ( ३।३।१६ )।—'घञर्थे क.' ( वा० ३।३।५८)—इति मुकुटः। तन्न। परिगणनात्। यथापि रूपसिद्धे.। अदन्तत्वाद् गुणाप्रसङ्गात्। 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयो। अन्वेषणाया याच्ञाया मृगी तु वनितान्तरे' इति विश्व-मेदिन्यौ [ २४।५, २३।१६ ] ॥ (१) ॥ * ॥ कौ रङ्गति। 'रगि गतौ' ( भ्वा० प० से० )। अच् ( ५।२।१२७ )। कौ रङ्गोऽस्त्यस्य वा ॥ (२) ॥ * ॥ वातमयते। 'अय गतौ' ( भ्वा० आ० से० )। बाहुलकादुण् ॥ * ॥ 'वानायु' इत्येके। वनमवमयते ॥ ( ३ ) ॥ * ॥ हरति मन', ह्रियते गीतेन वा। 'श्यास्त्याहृञ्विभ्य इनच्' ( उ० २।४६ )। 'हरिण पुंसि सारङ्गे विशदे त्वभिधेयवत्। हरिणी हरितायां च नारीभिद्वृत्तभेदयो.। सुवर्णप्रतिमायां च' [ इति मे० ५१।८७-८८ ] ॥ ( ४ ) ॥ * ॥ अजिनस्य योनि ॥ (५) ॥*॥ 'विश्वाची चारुलोचन' इति रभस'। पञ्च 'हरिणस्य'।

ऐणेयमेण्याश्चर्माद्यम्

ऐणेयम् ( त्रि ), 'मृगी के चमड़े, सींग आदि' का १ नाम है।

ऐणेयमिति ॥ मृग्याश्चर्मास्थिमांसादि। एण्या विकारोऽवयवो वा। 'एण्या ढञ्' ( ४।३।१५९ ) ॥ (१) ॥*॥ (एकम्) 'हरिणाजिनस्य'।

एणस्यैणम्

ऐणम् (त्रि), 'मृगके चमड़े, सींग आदि' का १ नाम है।

एणेति ॥ एणस्य मृगस्य विकारोऽवयवो वा। 'प्राणिरजतादिभ्योऽञ्' (४।३।१५४) ॥ (१) ॥*॥ [एकमेणस्य चर्मादे. ]।

उभे त्रिषु ॥ ८ ॥

'ऐणेय' और 'ऐण' तीनों लिङ्गों मे होते हैं।

उभे इति ॥ उभे ऐणेयैणे।

कदली कन्दली चीनश्चमूरुप्रियकावपि।

समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥

कदली, कन्दली (२ स्त्री), चीनः, चमूरुः, प्रियकः, समूरुः (४ पु), 'मृगविशेष' के ६ नाम हैं। 'कदली' आदि ६ शब्दों और आगे कहे जानेवाले 'कृष्णसार' आदिको 'अजिनयोनि.' ( पु ) कहते हैं ( इनके चमड़े का उपयोग होता है )।

केति ॥ षडेते हरिणभेदा अजिनयोनयः स्युः। के दलति। 'दल विशरणे' ( भ्वा० प० से० )। अच् (४। १।१३४ )।—'कन्देर्नलोपश्च' इत्यपरम्—इति मुकुटस्तु चिन्त्य.। उज्ज्वलदत्तादिपुक्तसूत्रदर्शनात्। ङीष् (४।१। ६३)। 'कदली हरिणान्तरे। रम्भायां वैजयन्त्यां च' इति हैम [ ३।६७० ]। 'रम्भावृक्षे च कदली पताकामृगभेदयो.' [ इति मे० १५०।७०-७१ ]। 'कदल त्रिषु' इत्यमरमाला ॥ ( १ ) ॥ * ॥ कन्दे सस्यमूले लीयते। 'लीङ् श्लेषणे' ( दि० आ० अ० )। 'अन्येभ्योऽपि-' (वा० ३।१।१०१ ) इति ड। यद्वा—कन्दति। 'कदि आह्वाने' (भ्वा० प० से०)। वृषादित्वात् ( उ० १।१०६) कलच्। गौरादि ( ४।१।४१ )। ("कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे')। 'कलध्वानौ कन्दली तु मृगगुल्मप्रभेदयो.' [इति मे० १५०।६९-७०]। अत एव—इमन्तावेतो—इति स्वामी चिन्त्य ॥ (२) ॥ * ॥ चिनोति। 'चिञ् चयने' ( स्वा० उ० अ० )। बाहुलकाद् नक् दीर्घश्च। 'चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे' [ इति मे० ८३।४ ]॥ ( १ ) ॥ * ॥ चमति। 'चमु अदने' (भ्वा० प० से०)। खर्जादित्वात् ( उ० ४।९० ) ऊर। पृषोदरादित्वात् (६। ३।१०९ ) अत उत्। यद्वा—चमू चम्वा वा ऊरुर्यस्य ॥ (१) ॥*॥ प्रीणाति, प्रीयते वा। 'प्रीञ् तर्पणे' (क्र्या० उ० अ० ), 'प्रीङ् प्रीणने' ( दि० आ० अ० ) वा। 'इगुपध-' (३।१।१३५) इति क.। स्वार्थे कन् (५।३।७५)॥ (१) ॥*॥ शोभनावूरू यस्य ॥ ( १ ) ॥ * ॥ 'अजिनजातीयमृगाणाम्' पृथक्।

कृष्णसाररुरुन्यङ्कुरङ्कुशंबररौहिषाः।

गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥

कृष्णसारः, रुरुः, न्यङ्कुः, रङ्कुः, शंबरः, रौहिषः, गोकर्णः, पृषतः, एणः, ऋश्यः, रोहितः, चमरः ( १२ पु ), ये १२ 'मृग के भेद' हैं।

कृष्णेति ॥ कृष्णेन सारः शबल.। 'तृतीया-' (२।१।

१. कोष्ठान्तरस्थः पाठ. निर्णयसागरीयः।

३० ) इति समासः । 'कृष्णसारः शिशपायां मृगभेदे स्नुहीतरौ' इति हैमः [ ४।२५७ ] ॥*॥ [ कृष्णशार' इति] तालव्यपाठे । कृष्णश्चासौ शारश्च । 'वर्णो वर्णेन' ( २।१।७८) इति समासः । 'शारः शबलवातयोः' इति तालव्यादौ रभसः ॥ (१) ॥*॥ रौति । रु शब्दे (अ० प० स०)। 'जन्वादयश्च ( उ० ४।१०२ ) इति साधुः । 'रुरुर्दैत्ये मृगेऽपि च' इति हैमः [ २।४६१ ] ॥ ( २ ) ॥ * ॥ नितरामङ्कति । नावञ्च' ( उ० १।१७ ) इति कुः । न्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम् । 'न्यङ्कुर्मृगे मुनौ' इति हेमचन्द्रः [ २।१० ]॥ ( ३ ) ॥ * ॥ रमते रज्यते वा । मृगय्वादित्वात् ( उ० १।३७ ) साधुः । मुकुटस्तु— रङ्कुरिति पच्छति—इति व्याख्यत् । तन्न । रङ्कुधातोर्धातुपाठेऽदर्शनात् ॥ ( ४ ) ॥ * ॥ शं वृणोति । 'वृञ् वरणे ( स्वा० उ० से० )। शमि धातोः संज्ञायाम् (३।२।१४) इत्यच् । शबरो दानवान्तरे । मत्स्यैणगिरिभेदेषु शबरो पुनराधयो' इति हैमः [ ३।६४१-४२ ] ॥ (५) ॥ * ॥ रौहिषं तृणभेदमत्ति । अण ( ४।२।९२ ) इत्यण् । 'रौहिषं कत्तृणं क्लीबे पुंसि स्याद्धरिणान्तरे [इति मे० १६८।४५]॥ ( ६ ) ॥ * ॥ गोरिव कर्णावस्य । गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ इति मेदिनी [ ४८४७ ] ॥ ( ७ ) ॥ * ॥ पृषता सन्त्यस्य । अर्शआद्यच् (५।२।१२७)। यद्वा—पर्षति । 'पृषु सेचने ( भ्वा० प० स० ) । पृषिरञ्जिभ्यां कित्' (उ० ३।१११ ) इत्यतच् । 'मृगो बिन्दुः पृषतश्चैव पृषतश्च प्रकीर्तितः' इति व्याडिः । [ 'पृषतवत्' पृषन्मृगे । बिन्दौ' इति हैमः २।१८३-८४ ] । 'पृषतस्तु मृगे बिन्दौ खरो हिते । श्वेतबिन्दुयुतेऽपि स्यात्' इति हेमचन्द्रः [३।३००]॥ ( ८ ) ॥ * ॥ एति । बाहुलकाण्णः ॥ ( ९ ) ॥ * ॥ ऋच्छति, इयर्ति वा । बाहुलकात् श्यन् ॥ * ॥ [ऋष्य ] मूर्धन्यान्तोऽपि ऋषति । 'ऋषी गतौ' ( तु० प० से० )। अघ्न्यादित्वात् ( उ० ४।११२ ) साधुः ॥ * ॥ रिष्य अपि । रिष्यते । 'रिष हिंसायाम्' ( दि० प० से० ) । अघ्न्यादि (उ० ४।११२) । 'एण कुरङ्गे मारिष्य स्यादृश्यश्चारुलोचन' इति त्रिकाण्डशेषः ॥ ( १० ) ॥ * ॥ रोहति । 'रुह बीजजन्मनि प्रादुर्भावे च'(भ्वा० प० अ०)। 'रुहे रश्च लो वा' ( उ० ३।९४ ) इतीनच् ॥ ( ११ ) ॥ * ॥ चमति, चम्यते वा । 'चमु अदने' ( भ्वा० प० से० ) । 'अतिकमिभ्रमिचमि-' (उ० ३।१३२) इत्यमरः । 'चमरः चामरे स्त्री तु मञ्जरीमृगभेदयोः' [ इति मे० १३३।१५२] ॥ (१२) ॥*॥ एते द्वादश 'मृगभेदाः' ।

गन्धर्वः शरभो रामः सृमरो गवयः शशः।
इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥ ११ ॥

गन्धर्व, शरभ, राम, सृमर, गवय, शश ( ६ पु), क्रमश 'गन्धयुक्त मृगविशेष, ८पैरोंवाला या एक प्रकारका बन्दर-विशेष, सुन्दरजातीय मृग-विशेष, बहुत भागनेवाला मृग विशेष, नीलगाय और खरहा' का १-१ नाम है। ये छह ( पूर्वोक्त 'मृगेन्द्र' आदि ) और वक्ष्यमाण ( आगे कहे जानेवाले ) 'गो, महिष' आदि पशुजाति. ( स्त्री ), 'पशुजाति' हैं अर्थात् इनकी पशुजातिमें गणना होती है ।

गन्धेति ॥ गन्धयति, गन्ध्यते वा । 'गन्ध अर्दने' चुरादिः । अच् ( ३।१।१३४ ) । घञ् ( ३।३।१६ ) वा । अर्वति । 'अर्व गतौ' ( भ्वा० प० से० ), अच् ( ३।१।१३४ ) । गन्धश्चासावर्वश्च । शकन्ध्वादिः ( वा० ६।१।९४ ) । यद्वा—गन्धे अर्वो बोधोऽस्य । 'गन्धर्वः पशुभेदे स्यात् पुंस्कोकिलतुरङ्गयोः । अन्तराभवसत्त्वे च गायने खेचरेऽपि च' इति विश्वमेदिन्यौ [ १०७।११, १०५।११ ] ॥ ( १ ) ॥ * ॥ शृणाति । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'कॄशॄशलिकलिगर्दिभ्योऽभच्' ( उ० ३।१२२ ) । 'अष्टापदे च करभे शरभः स्यान्मृगान्तरे' इति तालव्यादौ रभसः । 'शरभस्तु पशोर्भिदि । करभे वानरभिदि' [ इति मे० १०७।२१-२२ ] ॥ ( १ ) ॥ * ॥ रमते अन्तर्भावितण्यर्थो वा । ज्वलिति-' ( ३।१।१४० ) इति णः । रमन्तेऽस्मिन्ननेन वा । 'हलश्च' (३।३।१२१) इति घञ् । 'रामा योषाहिङ्गुलिन्योः[१] क्लीबं वास्तुककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे । हये च पशुभेदे च त्रिषु चारौ सितेऽसिते' [ इति मे० ११०।२६-२७ ] ॥ ( १ ) ॥*॥ सरणशील । 'सृ गतौ' ( भ्वा० प० अ० ) । 'सृघस्यदः क्मरच्' ( ३।२।१६० ) ॥ ( १ ) ॥ * ॥ गवते । 'गुङ् शब्दे' (भ्वा० आ० अ०) । बाहुलकादयः । यद्वा—गयनम् । 'ऋदोरप्' (३।३।५७)। गवं गवेन वा याति । मूलविभुजादिकः ( वा० ३।२।५ ) ॥ ( १ ) ॥*॥ शशति । 'शश प्लुतगतौ' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (१) ॥ * ॥ इत्यादयो यऽत्रोक्ता, ये च पूर्वोक्ताः सिंहादय वक्ष्यमाणाश्च ये गोमेषहस्त्यश्वादयः, सर्वे ते पशुजातयः पशुशब्दवाच्याः । पश्यति सदसद्विशेषेण । 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०)। अर्जिदृशि- (उ० १।२७) इत्यु पश्यादेशश्च । यत्तु मुकुट—पश सौत्रधातोः 'अपृष्ट्वादयः' इति कु' इति सुभूति —इत्याह । तदुक्तसूत्रास्मरणमूलकम् ।— पाशयन्तः पाशै —इति स्वाम्यप्यवम् । 'मृगभेदानाम्' पृथक् ।

१. 'पृषत् पृषतवन्मृगे' इति पा० ।

[१] 'हिङ्गुनद्यो.' इति पा० ।

उन्दुरुर्मूषिकोऽप्याखुः

अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः [ १० ]

उन्दुरुः, मूषकः, आखुः ( ३ पु ), 'चूहा, मूस' के ३ नाम हैं।

अधोगन्ता, खनकः, वृकः, पुंध्वजः, उन्दुरः (५ पु), 'चूहा, मूस' के ५ नाम और भी हैं।

उन्द्विति ॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से०)। बाहुलकादुरुः। 'कन्दुरुन्दुरुरुन्दुरः' इति शब्दार्णवः ॥ (१) ॥*॥ मुष्णाति । 'मुष स्तेये' (क्र्या० प० से०)। 'मुष्णातेर्दीर्घश्च' (उ० २।४२) इति किकन् ॥*॥ 'मूष स्तेये' (भ्वा० प० से०) दीर्घोपधोऽस्ति। मूषति । ण्वुल् (३।१।१३३)। 'भद्रमूषिक आसन्दी कुन्दुरुन्दुरुरुन्दुरः। मूषको वज्रदशनः क्रमः काण्डो बिलेशयः' इति वाचस्पतिः ॥ (२)॥*॥ आ खनति। 'खनु अवदारणे'(भ्वा० उ० से०)। 'आङ्परयोः खनिशृभ्यां डिच्च' (उ० १।३३) इत्युः। मुकुटस्तु—'आङि खनिवह्योर्नलोपश्च' इति कुर्नलोपश्च। बाहुलकादलोप—इति सूत्रमुपन्यास्थत्। तच्चिन्त्यम्। उज्ज्वलदत्तादिविरोधात् ॥ (३) ॥*॥ त्रीणि 'मूषिकस्य'।

गिरिका बालमूषिका ।

छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका [ ११ ]

गिरिका, बालमूषिका ( २ स्त्री ), 'मुसरी, छोटी चुहिया' के २ नाम हैं।

[छुछुन्दरी, गन्धमुखी, दीर्घतुण्डी, दिवान्धिका (४ स्त्री), 'छुछुन्दर' के ४ नाम हैं ]।

गिरीति ॥ गिरति। 'कृगॄशॄकुटि–' ( उ० ४।१४३ ) इति इ किच्च। 'ॠत इद्' ( ७।१।१०० )। 'संज्ञायां कन्' (५।३।७५)॥ (१) ॥*॥ *मुद्रत्वात् बाला चासौ* मूषिका च। 'खर्वाखुर्बालमूषिका' इति दुर्गः ॥(२)॥*॥ द्वे 'स्वल्पमूषकजाते'।

सरटः कृकलासः स्यात्

सरटः, कृकलासः ( २ पु ), 'गिरगिट' के २ नाम हैं।

सरेति ॥ सरति। 'सृ गतौ'(भ्वा० प० अ०)। 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ ( १ ) ॥*॥ कृकं शिरो ग्रीवा कण्ठ च लासयति चालयति। 'लस शिल्पयोगे' चुरादिः। 'कर्मण्यण्' (३।२।१) ॥*॥ द्वे 'सरटस्य' 'किर्कांट' इति ख्यातस्य।

मुसली गृहगोधिका ॥ १२ ॥

मुसली, गृहगोधिका ( २ स्त्री ), 'बिछुतिआ, छिपकिली' के २ नाम हैं।

मुसेति ॥ मुस्यति सशयम्। 'मुस खण्डने' (दि० प० से०)। वृषादित्वात् (उ० १।१०६) कलच्। गौरादित्वान्ङीष्।–जातौ ङीष् (४।१।६३)—इति मुकुट। तन्न। स्त्रीविषयत्वात्। 'मूसल'[1] स्यादयोऽग्रे च पुनपुंसकयोः स्त्रियाम्। तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' [ इति मे० १५४।१२४]॥*॥ तालव्यमध्या [मुशली] इति स्वामी ॥ (१)॥*॥ अल्पा गोधा। 'अल्पे'(५।३।८५) इति कन्। गृहस्य गोधिका। 'ज्येष्ठा स्त्री कुड्यमत्स्या च गृहगोधा गृहालिका' इति साहसाङ्कः।—'गृहगोलिका' इति पाठः सभ्यः—इति स्वामी ॥ (२) ॥*॥ द्वे 'गृहगोधायाः' 'बिछुत्तिया' इति ख्यातायाः।

लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः।

लूता ( स्त्री ), तन्तुवायः, ऊर्णनाभः, मर्कटकः ( ३ पु ), 'मकड़ी' के ४ नाम हैं।

लूतेति ॥ लुनाति। 'लूञ् छेदने' (क्र्या० उ० से०)। 'हसिमृग्रि–' (उ० ३।८६) इति तन्। सञ्ज्ञापूर्वकत्वादगुणाभाव।–बाहुलकात्तन्—इति मुकुटस्त्वेतत्सूत्राज्ञानमूलक। 'लूता लूतका' इत्यमरदत्तः। 'लूता तु रोगे पिपीलिकोर्णनाभयो' इति हेमचन्द्र [ २।१९६ ] ॥ (१) ॥*॥ तन्तून् वयति। 'वेञ् तन्तुसन्ताने' (भ्वा० उ० अ०)। 'ह्वावामश्च' (३।२।२) इत्यण् ॥*॥ तन्त्र तन्तून् वयति 'तन्त्रवाय' इति स्वामी ॥ (२) ॥*॥ ऊर्णेव तन्तुर्नाभावस्य। अच् (५।४।७५) इति योगविभागादच्। 'ङ्यापो –' (६।३।६३) इति ह्रस्व ॥*॥ मर्कति। मर्क सौत्रो धातुर्ग्रहणार्थ। शकादित्वात् (उ० ४।८१) अटन्। 'संज्ञायां कन्' (५।३।७५)। 'अथ मर्कटक सस्यभेदे वानरलूतयो' इति मेदिनी [ १७।२०८ ] ॥ (४) ॥*॥ *चत्वारि 'ऊर्णनाभस्य' 'मकड़ी' इति ख्यातस्य।*

नीलङ्गुस्तु क्रिमिः

नीलङ्गुः, क्रिमिः (२ पु), 'छोटे-छोटे कीड़ों' के २ नाम हैं।

नीति ॥ नितरां लङ्गति। 'लगि गतौ' (भ्वा० प० से०)। नीलति वा। 'नील वर्णे' (भ्वा० प० से०)। 'खरुशङ्कु–' (उ० १।३६) साधु। 'नीलङ्गुरपि नीलाङ्गु' इति द्विरूपकोशः। 'नीलङ्गुः स्यात् कृमौ पुंसि भ्रमराल्यां तु योषिति' इति मेदिनी [ २४।३८ ] ॥ (१) ॥*॥ क्रामति। 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। 'क्रमितमिशस्तम्भामत इत्' (उ० ४।१२२) इति कि ॥*॥ बाहुलकात् सम्प्रसारणमपि। 'द्रुमामये भवेत्पुंसि कीटे च क्रिमिवत् कृमिः' इति रभसः। 'क्रिमिर्ना कृमिवत् कीटे

1. 'मूषलं' इति पा०।

लाक्षाया कृमिले खरे' [इति मे० १०८।७]।। (२) ॥*॥ द्वे 'सुनकीडा' इति ख्यातस्य।

कर्णजलौका शतपद्युभे ॥ १३ ॥

कर्णजलौका, शतपदी ( २ स्त्री ), 'गोजर, कनखजूरा' के २ नाम हैं।

कर्णेति ॥ कर्णस्य जलौकेव[आदन्ता]॥*॥[कर्णजलौका.] सान्ता वा ॥(१)॥*॥ शत पादा यस्याः ।'कुम्भपदीषु च' (५।४।१३९) इति साधु ॥ (२) ॥*॥ सान्तत्वेऽपि स्त्रीत्वबोधनाय–'उभे' इति। द्वे 'कर्णजलौकाया' 'गोजर' इति ख्यातस्य।

वृश्चीकः शूककीटः स्यात्

वृश्चीक, शूककीट (२ पु), 'ऊनी वस्त्रको काटनेवाले कीड़े' के २ नाम हैं।

वृश्चीति ॥ वृश्चति। 'ओ व्रश्चू छेदने' (तु० प० से०)। 'वृश्चिकृष्यो किकन्' (उ० २।४०)। 'ग्रहिज्या–' (६।१।१६) इति सम्प्रसारणम्। 'वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः [इति मे० १३।१६०]॥ (१) ॥ ॥ शूकयुक्तः कीटः। शाकपार्थिवादि (वा० २।१।७८)॥(२) ॥*॥ द्वे 'ऊर्णादिभक्षककृमिविशेषस्य'।

अलिद्रुणौ तु वृश्चिके।

अलि, द्रुण, वृश्चिक (३ पु),'बिच्छू' के ३ नाम हैं।

अलीति ॥ अलति–दंशे समर्थो भवति। 'अल भूषणादौ' (भ्वा० प० से०)। 'सर्वधातुभ्य इन्' (उ० ४। ११८)। 'भृङ्गवृश्चिकयोरलि' इति रभसः ॥*॥ बाहुलकादिणप्रत्यये दीर्घादि [ आलि ] अपि। 'वृश्चिको द्रुण आलि स्यात्' इति पालितः ॥*॥ नान्तोऽप्यस्ति। अलं मर्षोऽस्यास्ति। 'व्रीह्यादित्वात्' (५।२।११६) इनिः। 'अव्ययानां भमात्रे टिलोपः' (वा० ६।४।१४४) इति टिलोपः। 'अथाली स्याद्वृश्चिके भ्रमरे पुमान्' [ इति मे० ८५।३४ ] ॥ (१) ॥*॥ द्रुणति। 'द्रुण हिंसागतिकौटिल्येषु (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। 'द्रुणं चापेऽलिनि द्रुणः' [ इति मे० ४६।१६ ] ॥*॥ अचि (३।१।१३४) 'द्रोण' इत्येके—इति स्वामी ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'वृश्चिकस्य' 'बीछी' इति ख्यातस्य।

पारावतः कलरवः कपोतः

पारावत, कलरव, कपोत (३ पु), 'कबूतर' के ३ नाम हैं।

पारेति ॥ परं जीवमवति। पराच्छत्रोरहङ्काराद्वा ज्ञानोपदेशेन। 'अव रक्षणादौ' (भ्वा० प० से०)। शतृप्रत्ययः (३।२।१२४)। 'द्वितीया–' (२।१।२४), 'पञ्चमी–' (२।१।३७) इति योगविभागात् समासः। परावतो दत्तात्रेयस्यायं गुरुः। 'तस्येदम्' (४।३।१२०) इत्यण् ॥*॥ 'पारापत' इति पाठः पारादप्यापतति प्रेम्णा। 'पत्लृ गतौ'(भ्वा० प० से०)। अच् (३।१।१३४)। पारावतश्च छेदश्च कपोतो रक्तलोचनः। पारावतः कलरवः' इति रभसः ॥ (१) ॥ * ॥ कलो रवोऽस्य ॥(२)॥*॥ कस्य वायोः पोत इव, को वायुः पोतो नौरिवास्य वा। पारावतः कपोतः स्यात्कपोतो विहगान्तरे' इति विश्वः[१]॥(३)॥*॥ त्रीणि 'पारावतस्य' 'परेवा' इति ख्यातस्य।

अथ शशादनः ॥ १४ ॥

पत्री श्येनः

शशादन, पत्री, श्येन (३ पु), 'बाज पक्षी' के ३ नाम हैं।

शशेति ॥ शशमत्ति। 'अद भक्षणे' (अ० प० अ०)। ल्युः (३।१।१३३), ल्युट् (३।३।११३) वा। युच् (उ० २।७८)। 'श्येने पत्रिशशादनौ' (इत्यमरमाला) ॥ (१) ॥*॥ 'अतिशयितं प्रशस्तं वा पत्त्रमस्य। 'अत –' (५।२। ११५) इतीनिः। 'श्येनाख्यो विहगे पत्त्री पत्रिणौ शरपक्षिणौ' इति शाश्वतः [२२३]॥ (२) ॥*॥ श्यायते। 'श्यैङ् गतौ (भ्वा० आ० अ०)। 'श्यास्त्याहृञविभ्य इनच् (उ० २।४६)। [ 'श्येनः पक्षिणि पाण्डुरे' इति मे० ८४।२१ ] ॥ (३)॥*॥ त्रीणि 'श्येनस्य' 'बाज' इति ख्यातस्य।

उलूके तु वायसारातिपेचकौ।

दिवान्धः कौशिको घूको दिवाभीतो निशाटनः [१२]

उलूक, वायसाराति, पेचक (३ पु), 'उल्लू' के ३ नाम हैं।

[ दिवान्ध, कौशिक, घूक, दिवाभीत, निशाटन (५ पु), 'उल्लू' के ये ५ नाम और भी हैं ]।

उल्विति ॥ उचति। 'उच समवाये' ( तु० प० से० )। 'उलूकादयश्च' (उ० ४।४१) इति साधु। 'उलूक पुंसि काकारातिन्द्रे भारतयोधिनि' [ इति मे० ५।५१] ॥ (१) ॥*॥ वायसस्य काकस्याराति ॥ (२) ॥*॥ पचति–संतपति, पच्यते वा दुःखेन। 'डुपचष् पाके'

१ अव्ययानां च' इति वार्तिकस्वरूपम्।

१ विश्वे (७४।२१७) त्वेवं पाठः —'पारावतः कलरवे शैले मर्कटतिन्दुके'।

(भ्वा० उ० अ०)। 'पचिमच्योरिच्चोपधायाः' (उ० ५। ३७) इति वुन्। अत इत्वम्। 'पुगन्त-' (७।३।८६) इति गुणः। यत्तु मुकुट'—कृञादित्वात् (उ० ५।३५) वुन्। पृषोदरादित्वात् (६।३।१०९) अत एत्वम्—इत्याह। तन्न। 'पचिमच्यो-' इति सूत्रस्य सत्त्वात्। पृषोदरादित्वकल्पनाया अन्याय्यत्वात्। 'अथ शकास्यो दिवान्धो वक्रनासिकः। हरिनेत्रो दिवाभीतो नखाशी पीयुधर्परो। काकभीरुर्नक्तचारी' इति त्रिकाण्डशेषः ॥ (३) ॥*॥ त्रीणि 'घूकस्य'।

व्याघ्राटः स्याद्भरद्वाजः

व्याघ्राटः, भरद्वाजः (२ पु), 'भर्दूल, भारद्वाज पक्षी' के २ नाम हैं।

व्याघ्रेति ॥ व्याघ्रमटति। 'अट गतौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। व्याघ्र इवाटति वा। अच् (३।१।१३४)॥(१)॥*॥ भरम् धारको वाजोऽस्य। यद्वा—भरद्वाजस्यापत्यम्। ऋष्यण् (४।१।११४)। संज्ञापूर्वकत्वाद् वृद्ध्यभावः। 'भरद्वाजो गुरौ. पुत्रे व्याघ्राटाख्यविहंगमे' [इति मे० ३२।३४] ॥ (२) ॥*॥ द्वे 'भरद्वाजपक्षिणः' 'भर्दूल' इति ख्यातस्य।

खञ्जरीटस्तु खञ्जनः ॥ १५ ॥

खञ्जरीटः, खञ्जनः (२ पु), 'खँडरिच पक्षी' के २ नाम हैं।

खञ्जेति ॥ खञ्ज इव ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। बाहुलकात् कीटन् ॥ (१) ॥*॥ खञ्जति। 'खजि गतिवैकल्ये' (भ्वा० प० से०)। नन्द्यादित्वात् (३।१।१३४) ल्युः। 'खञ्जनः खञ्जरीटे, स्त्री सर्पप्यां, खञ्जनं गतौ' [इति मे० ८६।५५] ॥ (२) ॥*॥ द्वे 'खञ्जन' इति ख्यातस्य।

लोहपृष्ठस्तु कङ्कः स्यात्

लोहपृष्ठः, कङ्कः (२ पु), सफेद 'चील' अर्थात् 'कंकहड़ा पक्षी' जिसका पंख बाण में लगाया जाता है, उसके २ नाम हैं।

लोहेति ॥ लोहमिव पृष्ठमस्य ॥ (१) ॥*॥ कङ्कते। 'ककि गतौ' (भ्वा० आ० से०)। अच् (३।१।१३४)। 'कङ्कस्तद्वद्द्विजे स्यातो लोहपृष्ठकृतान्तयो' [इति मे० २। १९] ॥ (२) ॥*॥ द्वे 'बाणोपयोगिपत्रस्य पक्षिभेदस्य' 'कंकहड' इति ख्यातस्य।

अथ चापः किकीदिविः।

चापः, किकीदिविः (२ पु), 'चास (नीलकण्ठ) पक्षी' के २ नाम हैं।

अथेति ॥ चापयति। 'चप हिंसायाम्' (चु० प० से०) स्वार्थण्यन्त, 'चप भक्षणे' (भ्वा० उ० से०) हेतुमण्ण्यन्तो वा। अच् (३।१।१३४)। 'चास.' अपि। 'इक्षुपक्षिभिदोश्चास.' इति दन्त्यान्तेषु रभसः ॥ (१) ॥*॥ 'किकी' इति दीव्यति भाषते। 'दिवु क्रीडा.दौ' (दि० प० से०)। 'कृविघृष्वि-' (उ० ४।५६) इति साधु। 'किकीदिविश्च चाप स्यात्' इति रत्नकोषः। 'चापो दिवि. किकिः स्मृत' इति व्याडि ॥ (२) ॥*॥ द्वे 'चापस्य' 'चास' इति ख्यातस्य।

कलिङ्गभृङ्गधूम्याटाः

कलिङ्गः, भृङ्गः, धूम्याटः (३ पु), 'भुचँगा पक्षी' के ३ नाम हैं।

केति ॥ के मूर्ध्नि लिङ्गं चूडाऽस्य। कलिं कलहं गच्छति वा। 'गमश्च' (३।२।४७) इति खच्। 'खच्च डिद्वा वक्तव्य' (वा० ३।२।३८)। 'कलिङ्ग' पूतिकरजे धूम्याटे भूम्नि नीवृति। न द्वयो कौटजफले महिलाया तु योषिति' [इति मे० २४।३१-३२] ॥ (१) ॥*॥ भृङ्ग इव। कृष्णत्वात्। यद्वा—बिभर्ति कुलम्। 'भृञ. किदुच्च' (उ० १।१२५) इति गन्। 'भृङ्गो धूम्याट षिङ्गयोः। मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि' [इति मे० २२। १३-१४] ॥ (२) ॥*॥ धूम्या धूमसमूह इवाटति। अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि 'भृङ्गस्य'।

अथ स्याच्छतपत्रकः ॥ १६ ॥

दार्वाघाटः

शतपत्रकः, दार्वाघाटः (२ पु), 'कठखोलवा, कठफोरवा पक्षी' के २ नाम हैं।

अथेति ॥ शत पत्राण्यस्य ॥ (१) ॥*॥ दारु आहन्ति। 'दारावाहनोऽणन्त्यस्य च ट-' (वा० ३।२। ४९)। वासार्थं दारु आघाटयति। 'घट सघाते' चुरादिः। अण् (३।२।१)॥ सुभूतिस्तु चिन्त्य। घट्टिना विगृहीतत्वात्। 'काष्ठकुट्ट शतच्छद' इति त्रिकाण्डशेष [२।५। १६] ॥ (२) ॥*॥ द्वे 'काष्ठकुट्टस्य' 'काठकोरा' इति ख्यातस्य।

अथ शारङ्गः स्तोककश्चातकः समाः।

शारङ्गः, स्तोककः, चातकः (३ पु), 'चातक पक्षी' के ३ नाम हैं।

अथेति ॥ शारयति, शार्यते वातपादिना। 'शॄ हिंसायाम्' (क्रया० प० से०) ण्यन्त। 'तरत्यादिभ्यश्च' (उ० १।१२०) इत्यङ्गच्।—शारेरङ्गच्—इति मुकुट। तन्न। उज्ज्वलदत्तादिवृत्तिष्वेतत्सूत्रादर्शनात्। 'शारङ्गश्चातके

स्यात् शबले हरिणेऽपि च' इति तालव्यादावजय ॥ * ॥ सरति। 'सृवृञोवृद्धिश्च' (उ० १।११२) इत्यङ्गच्।—'सृ गतौ' (भ्वा० प० अ०)। णिच (३।१।२६) पूर्ववत्। अण (३।२।१) वृद्धिश्च—इति मुकुटश्चिन्त्य। अणोऽप्रसङ्गात्। 'सुवृञो [उ०१।१२७] इति सिद्धत्वाच्च। णिच प्रयोजनाभावाच्च। 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' इति दन्त्यादौ रभसात्। यद्वा—सारमङ्गमस्य। शकन्ध्वादि (वा० ६।१।९४)। 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे। शबले त्रिषु' [इति मे० २५।५०-५१] ॥ (१) ॥ * ॥ स्तोकं कं जलमस्य। स्तोकं कायति वा। 'कै शब्दे' (भ्वा० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः ॥ (२) ॥ * ॥ चतति। 'चते याचने' (भ्वा० प० से०)। ण्वुल् (३।१।१३३) ॥(३) ॥ * ॥ त्रीणि चातकपक्षिणः' 'पपिहा' इति ख्यातस्य।

**कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥**

कृकवाकु, ताम्रचूड, कुक्कुट, चरणायुध (४ पु), 'मुर्गा' के ४ नाम हैं।

कृकेति ॥ कृकेन गलेन वक्ति। 'वच परिभाषणे' (अ० प० अ०)। कृके वचः कुश्च' (उ० १।६) इत्युण्। 'कृकवाकुर्मयूरेऽपि सरटे चरणायुधे' इति विश्वः [१९। २१७] ॥ (१) ॥ * ॥ ताम्रा चूडाऽस्य ॥ (२) ॥ * ॥ कोकनम। 'कुङ् आदाने' (भ्वा० आ० से०)। सपदादित्वात् द्वित्वम् (वा० ३।३।१०८)। कुटति। 'कुट कौटिल्ये' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। कुका कुटः। 'कर्तृकरणे-' (२।१।३२) इति समासः। कुत्सितं कुटति वा। को पृथिव्याः कुटो वा। पृषोदरादि (६।३।१०९) वा।—कु पृथ्वीं कुटति। इगुपधत्वात् (३।१।१३५) कः—इति मुकुटः। तन्न। अण स्तदपवादत्वात्। 'अकारान्निरुपपदात्सोपपदो विप्रतिषेधेन' (३।२।१) इति वार्तिकाद्वा। मूलविभुजादित्वम् (वा० ३।२।५) युक्तम्। 'कुक्कुटस्त्वग्निकणचर्याया पुंसि स्याच्चरणायुधे। निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे' इति विश्वमेदिन्यौ'॥ (३) ॥*॥ चरण आयुधमस्य ॥ (४) ॥ * ॥ चत्वारि कुक्कुटस्य'।

**चटकः कलविङ्कः स्यात्**

चटक, कलविङ्क (२ पु), 'गवरा, चटक पक्षी' के २ नाम हैं (यह नर होता है)।

चटेति ॥ चटति। 'चट भेदने' (भ्वा० प० से०)। क्वुन् (उ० २।३२) ॥ (१) ॥ * ॥ कलं वङ्कते। 'वकि गतौ' (भ्वा० आ० से०)। अण् (३।२।१)। पृषोदरादि (६।३।१०९)। 'कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके' [इति मे० १५।१८०] ॥ (२) ॥*॥ द्वे 'चटकस्य'।

**तस्य स्त्री चटका**

चटका (स्त्री), 'गवरैया, चटका पक्षी' का १ नाम है (यह मादा होती है)।

तस्येति ॥ चटकस्य स्त्रीति स्त्रीत्वविवक्षायां पुंयोगात्-' (४।१।४८) इति प्राप्तो ङीप् जातिलक्षणङीष् (४।१।६३) च अजादि (४।१।४) पाठाद्बाध्यते। क्षिपकादित्वात् (७।३।४५) नेत्वम् ॥ (१) ॥ * ॥ एकम् 'चटकस्त्रियाः'।

तयोः।

**पुमपत्ये चाटकैरः**

चाटकैर (पु) 'गवरा और गवरैया के पुत्र' का १ नाम है।

तयोरिति ॥ चटकायाश्चटकस्य वा पुमपत्यम्। चटकाया ऐरक्' (४।१।१२८)। 'चटकादपीति वक्तव्यम्' फलितम्। तयोश्चटकाचटकयो—इति मुकुट। तन्न। पुमान् स्त्रिया (१।२।६७) इत्यन्तरङ्गत्वेनैकशेषप्रवृत्त्या द्वन्द्वासंभवात् ॥ (१) ॥ * ॥ एकम् 'चटकपुमपत्यस्य'।

**स्त्र्यपत्ये चटकैव हि ॥ १८ ॥**

चटका (स्त्री), 'गवरा और गवरैया की पुत्री' का १ नाम है।

स्त्र्येति ॥ स्त्री च तदपत्यं चेति, तस्मिन्। 'स्त्रियामपत्ये लुग्वक्तव्यः' (वा० ४।१।१२८) इत्यैरको लुक्। 'लुक्तद्धितलुकि' (१।२।४९)। पुनष्टाप् (४।१।४) ॥ (१) ॥ * ॥ एकम् 'चटकस्त्र्यपत्यस्य'।

**कर्करेटुः करेटुः स्यात्**

कर्करेटु, करेटु (२ पु), 'अशुभ बोलनेवाले पक्षि विशेष, या टिटिहिरी' के २ नाम हैं।

कर्केति ॥ 'कर्क' इति रेटति। रेटृ भाषणे' (भ्वा० उ० से०)। मृगय्वादि (उ० १।३७)।—अपशब्द यश्च'—इति मुकुटस्तु चिन्त्य। उज्ज्वलदत्तादिष्वस्य सूत्रस्यादर्शनात् ॥ (१) ॥ * ॥ के वायौ जले वा रेटति। पूर्ववत्। 'कर्करेटुः करेटुः स्यात् करटुः कर्कराटुकः' इति रभसः ॥ (२) ॥* ॥ द्वे 'अशुभवादिपक्षिभेदस्य'।

---

१ पाठोऽयं मेदिनीये (३६।३८-३९)। विश्वे तु 'कुकुटस्ताम्रचूडे स्यात् कुक्कुभेऽग्निकणेऽपि च। निषाद शूद्रयो पुत्रे, तालमध्ये तु कुक्कुटम्' (२९-३८) इति पाठः।

कृकणक्रकरौ समौ ।

कृकणः, क्रकरः (२ पु), ये २ 'अशुभ बोलनेवाले पक्षीके भेदविशेष' हैं।

कृकेति ॥ 'कृ' इति कणति । 'कण शब्दे' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । कृकेण कण्ठेन अणति वा । 'अण शब्दे' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । शकन्ध्वादि' ( वा० ६।१।९४ ) ॥ ( १ ) ॥ * ॥ 'क्र' इति शब्दकरणशील । 'कृञो हेतुताच्छील्या-' (३।२।२०) इति ट. ॥ ( २ ) ॥ * ॥ द्वे 'अशुभपक्षिभेदस्य' ।

वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥

वनप्रियः, परभृतः, कोकिलः, पिकः (४ पु), 'कोयल'के ४ नाम हैं।

वनेति ॥ वनं प्रियमस्य ॥ ( १ ) ॥ * ॥ परेण काकेन भृतः ॥ ( २ ) ॥ * ॥ कोकते । 'कुक आदाने' ( भ्वा० आ० से० ) । 'सलिकल्यनि-' ( उ० १।५४ ) इति लच् ।—'अजिरादयश्च' इति किर —इति मुकुट । तन्न । किरचि गुणाभावप्रसङ्गात् । कोकतेरजिरादावनन्तर्भावात् उज्ज्वलदत्तादिग्रन्थेषु सूत्रन्यासादर्शनाच्च ॥ ( ३ ) ॥ * ॥ अपि कायति । 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः । 'वष्टि भागुरि.' इत्यल्लोप ॥ ( ४ ) ॥*॥ चत्वारि 'कोकिलस्य' ।

काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः [ १३ ]

काकः, करटः, अरिष्टः, बलिपुष्टः, सकृत्प्रजः, ध्वाङ्क्षः, आत्मघोषः, परभृत्, बलिभुक्, वायसः (१० पु), 'कौआ' के १० नाम हैं।

[ चिरञ्जीवी, एकदृष्टिः, मौकुलिः ( ३ पु ), 'कौआ' के ये ३ नाम और भी हैं ]।

काके इति ॥ कायति । 'कै शब्दे' (भ्वा० प० से०) । 'इण्भीका-' ( उ० ३।४३ ) इति कन् । 'काक स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोवक्षालने[1] मानप्रभेदद्वीपभेदयोः[2] । काका स्यात्काकमासायां काकोलीकाकजङ्घयो. । रक्तिकायां[3] मलय्यां च काकमाच्या च योषिति ॥ काकं सुरतबन्धे[4] स्यात् काकानामपि संहतौ' इति विश्वमेदिन्यौ [ ५।३२-३४, २।२०-२२ ] ॥ ( १ ) ॥ * ॥ करोति चकुलम् । 'शकादिभ्योऽटन्' ( उ० ४।८१ ) । के रटति । 'रट परिभाषणे' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) वा । 'करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । [ करटो वाद्यभेदेऽथ' इति मे० ३६।३६-३७ ] ॥ ( २ ) ॥*॥ न रिष्टमस्य । 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः' [ इति मे० ३५।३२ ] ॥ ( ३ ) ॥*॥ बलिना पुष्ट. ॥ ( ४ ) ॥ * ॥ सकृत् प्रजा यस्य ॥ ( ५ ) ॥ * ॥ ध्वाङ्क्षति । 'ध्वाक्षि घोरवासिते च' ( भ्वा० प० से० )। अच् ( ३।१।१३४ ) । 'ध्वाङ्क्ष काके बकेऽर्थिनि । गृहे, ध्वाङ्क्षी तु काकोल्याम्' [ इति हैम २।५७६-७७ ] ॥ ( ६ ) ॥ * ॥ 'कां, कां' इति शब्दनात् आत्मानं घोषयति । 'घुषिर् विशब्दने' ( चु० उ० से० ) । अण ( ३।२।१ ) ॥ ( ७ ) ॥ * ॥ परं बिभर्ति । 'डुभृञ्' ( जु० उ० से० ) । क्विप् ( ३।२।७५ ) ॥ ( ८ ) ॥ * ॥ बलिं भुङ्क्ते । 'भुज पालनादौ' ( रु० प० अ० ) । क्विप् ( ३।२।७५ ) ॥ (९) ॥*॥ वयते । 'वय गतौ' (भ्वा० आ० से० ) । 'वयश्च' ( उ० ३।१२० ) इत्यसच् ।—वयति—इति मुकुटश्चिन्त्य । वयतेरात्मनेपदित्वात् । 'वायसोऽगुरुवृक्षेऽपि श्रीवासध्वाङ्क्षयो पुमान्' [इति मे० १७२।३८] ॥ ( १० ) ॥ * ॥ दश 'काकस्य' ।

द्रोणकाकस्तु काकोलः

द्रोणकाक', काकोलः ( २ पु ), 'डोमकौआ' के २ नाम हैं।

द्रोणेति ॥ द्रुणति । 'द्रुण हिंसागतिकौटिल्येषु' ( तु० प० से० ) । अच् ( ३।१।१३४ ) । द्रोणाख्य' काक. । 'द्रोणी ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि' इति रुद्र' । 'द्रोणोऽस्त्रियामाढके स्यादाढकाना[1] चतुष्टये । पुमान् कृपीपतौ कृष्णकाके, स्त्री नीवृदन्तरे । तथा काष्ठाम्बुवाहिन्यां गव्यादन्यामपीष्यते' इति मे०[ ४६।१७-१८ ]॥ (१)॥*॥ काकयति । 'कक लौल्ये' ( भ्वा० आ० से० ) स्वार्थेण्यन्त. । बाहुलकादोलच् । 'काकोलं नरकान्तरे । ना कुलाले द्रोणकाके, विषभेदे तु न स्त्रियाम्' । [इति मे० १५०।७४] ॥ ( २ ) ॥*॥ 'द्रोणकाको दग्धकाको वृद्धकाको वनाश्रय ' इति त्रिकाण्डशेष । द्वे 'डोडकाक' इति ख्यातस्य ।

दात्यूहः कालकण्ठकः ।

दात्यूहः, कालकण्ठकः ( २ पु ), 'जलकौआ, धुएँसे रंगवाले कौवे' के २ नाम हैं।

देति ॥ 'दाप् लवने' ( अ० प० अ० ) । क्तिन् ( ३।३।९४ ) । दातिं मारणमूहते । 'ऊह वितर्के' ( भ्वा० आ०

१ 'शिरोवक्षालिने' इति विश्वे पा० ।
२. 'दीपभेदयो.' इति विश्वे पा० ।
३. 'रक्ते काया च कीर्तिता' इति विश्वे पा० ।
४. 'सौरतबन्धे' इति विश्वे पा० ।

१. 'आढकाचतुष्टये' इति पा० ।

से०)। अण ( ३।२।१ ) । यद्वा–दित्यौहोऽयम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण । 'देविकाशिंशपा–' ( ७।३।१ ) इत्यात्वम् । 'वाह ऊठ' (६।४।१३२) । शकन्ध्वादि (वा० ६।१९४ ) । 'दात्यूह कालकण्ठके । चातकेऽपि' इति हैम [ ३।८०७ ] ॥ ( १ ) ॥ * ॥ काले वर्षाकाले कण्ठो ध्वनिरस्य । 'कण्ठ स्वरेऽन्तिके गले' इति रुद्र । काल कण्ठोऽस्य । कप् (५।४।१५४)। 'कालकण्ठनीलकण्ठौ पीतसारे महेश्वरे । दात्यूहे ग्रामघटके खञ्जरीटे शिखावले' इति हेमचन्द्र [४।६९-७०] ॥ ( २ ) ॥*॥ द्वे 'दात्यूहस्य' ।

आतायिचिल्लौ

आतायी, चिल्ल ( २ पु ), 'चील' के २ नाम हैं।

आतेति ॥ आतायते तच्छील । ताय् सतानपालनयो' ( भ्वा० आ० से० ) । 'सुप्यजातौ–' ( ३।२।७८ ) इति णिनि । यद्यप्यत्र वृत्तिकारादिभि –'अनुपसर्गे'–इत्युक्तम् । तथा भाष्ये उपसर्गेऽपि णिनि स्वीकृत ॥*॥ स्वामी तु— आतपति–इति विगृह्णन् आतापी' इति पाठ मन्यते ॥ (१)॥*॥ चिल्लति । 'चिल्ल शैथिल्ये हावकृतौ च'(भ्वा० प० से० )। अच् (३।१।१३४) । 'चिल्ल खगे स चुल्लश्च पिल्लवत् क्लिन्नलोचने । क्लिन्नाक्षि' इति हैम [ २। ४९७-९८ ] ॥ (२) ॥*॥ द्वे 'चील' इति ख्यातस्य ।

दाक्षाय्यगृध्रौ

दाक्षाय्य, गृध्र, ( २ पु ), 'गृध्र' के २ नाम है।

दाक्षेति ॥ दक्षते । 'दक्ष वृद्धौ शीघ्रार्थे च' (भ्वा० आ० से०)। 'श्रुदक्षिस्पृहिगृहिभ्य आय्य' (उ० ३।९६) । दक्षाय्यस्यायम् । अण (४।३।१२०) ॥ (१) ॥*॥ गृध्यति । 'गृधु अभिकाङ्क्षायाम् (दि० प० से०) । 'सुसूधाञ्गृधिभ्य क्रन्' (उ० २।२४ ) । 'गृध्र खगान्तरे पुंसि वाच्यलिङ्गस्तु लुब्धके' [ इति मे० १२४।२६ ] ।—गर्धते —इति मुकुटश्चिन्त्य । गृधेर्दिवादिकत्वात् ॥ (२) ॥*॥ द्वे 'गृध्रस्य 'गीध' इति ख्यातस्य ।

कीरशुकौ

कीर, शुक ( २ पु ), 'तोता, सुग्गा' के २ नाम हैं।

कीरेति ॥ 'कि' इति ईरयति । अच् (३।१।१३४)— इगुपधत्वात् (३।१।१३५) क —इति मुकुट । तन्न । णिजन्तविग्रहप्रदर्शनादिगुपधत्वाभावात् । कीर शुके पुंभूम्नि नीवृति [ इति मे० १२४।१६ ] ॥ (१) ॥*॥ शोकति । 'शुक गतौ' ( ) । इगुपध–' (३।१। १३५) इति क । यद्वा– शोभते । शवति वा । 'शुभ दीप्तौ' ( भ्वा० आ० से०) । 'शु गतौ' ( ) वा। 'शुकवल्कोल्का ' (उ० ३।४२) इति साधु । 'शुको व्याससुते कीरे रावणस्य तु मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्' [ इति मे० ४।३७ ] ॥ (२) ॥*॥ द्वे 'कीरस्य' ।

समौ ॥ २१ ॥

सेति ॥ 'समौ' इति त्रिपु[1] योज्यम् ।

क्रुङ् क्रौञ्चः

क्रुङ्, क्रौञ्च (२ पु),'क्रौञ्च, कराकुल पक्षी'के २ नाम हैं।

क्रुङिति ॥ क्रुञ्चति । 'क्रुञ्च कौटिल्याल्पीभावयो' (भ्वा० प० से०) । 'ऋत्विग्दधृक्–' (३।२।५९) इति साधु ॥ ( १ ) ॥*॥ प्रज्ञाद्यण् ( ५।४।३८ ) । 'क्रौञ्चो द्वीपप्रभेदे[2] स्यात् पक्षिपर्वतभेदयो ' [ इति मे० २७।४ ]। स्त्रियामजादित्वाट्टाप् ॥*॥ 'क्रुञ्च ' इति पाठे घञावत् (३।१।१३४) ॥ ( २ ) ॥ * ॥ द्वे 'क्रौञ्चस्य' 'करागुळ' इति ख्यातस्य ।

अथ बक कह्वः

बक, कह्व ( २ पु), 'बगुला' के २ नाम हैं।

बकेति ॥ वङ्कते । 'वकि कौटिल्ये गतौ च' (भ्वा० आ० से०)। अच् (३।१।१३४)। आगमशास्त्रस्यानित्यत्वान्न नुम् । बवयोरैक्यम् । यद्वा–वाति, वायति वा । 'वा गत्यादौ' (अ० प० से०), 'ओ वै शोषणे' (भ्वा० प० से०) वा। वुन् (उ० २।३२) । 'आतो लोप –' (६।४।६४)। 'व' इति कायति वा । मूलविभुजादि (वा० ३।२।५)। बकति वा । अच् (३।१।१३४)। न्यङ्क्वादि (७।३।५३) । 'बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि' [इति मे० ३।३०] ॥ (१) ॥*॥ 'क' इति शब्दम्, के जले वा ह्वयति । 'ह्वेञ् स्पर्धायां शब्दे च' (भ्वा० उ० अ०)। मूलविभुजादित्वात् (वा० ३।२।५) क ॥ (२) ॥*॥ 'दीर्घजङ्घो निशैड (त ) स्याद्बकोट शुक्लवायस । कङ्केरुर्दारबलिभुक् शिखीचन्द्रविहगम ' इति त्रिकाण्डशेष [२।५।२१] ॥*॥ द्वे 'बकस्य'।

पुष्कराह्वस्तु सारस ।

पुष्कराह्व (कमळके पर्यायवाचक सब शब्द), सारस ( २ पु ), 'सारस' के २ नाम हैं ।

पुष्केति ॥ पुष्कर पद्म तस्याह्वा आह्वा यस्य ॥(१)॥*॥ सरसि भव । 'तत्र भव ' (४।२।५३) इत्यण । सारस पक्षिभेदेन्दौ क्लीब तु सरसीरुहे' [इति मे० १७३।४५] ॥ (२) ॥*॥ द्वे 'सारसस्य'।

---

१ 'आतायिचिल्लौ' इत्यादिषु त्रिष्वित्यर्थ ।

२ 'द्वीपविशेषे' इति पा० ।

कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥

कोकः, चक्रः, चक्रवाकः, रथाङ्गः ( रथाङ्ग अर्थात् पहियेके वाचक सब शब्द । ४ पु ), 'चकवा' के ४ नाम हैं।

कोकेति ॥ कोकते । 'कुक आदाने' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । 'कोकश्चक्रे वृके ज्येष्ठया खर्जूरीद्रुमभेकयोः' [ इति विश्वः ४।३० ] ॥ (१) ॥*॥ क्रियत निशया वियोगी ।—घञर्थे क.—इति मुकुट. । तन्न । परिगणनात् । वस्तुतस्तु 'ढकि लोप.' (४।१।१३३) इत्यवद् 'क कृञादीनाम्' (वा० ६।१।१२) इत्यनेनेव कः द्वित्व च । चकते । 'चक तृप्तौ' (भ्वा० आ० से०) । रक् (उ० २।१३) वा । 'चक्रः कोके पुमान्, क्लीब व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयो । जलावर्तेऽपि' [इति मे०१२५।३१-३२ ] ॥ (२) ॥*॥ चक्रशब्देनोच्यते । 'वच भाषणे' (अ० प० अ०)। घञ् (३।३।१६) ॥ (३) ॥*॥ रथाङ्गस्य चक्रस्याह्वयो नाम यस्य ॥ ( ४ ) ॥ * ॥ चत्वारि 'चक्रवाकस्य' 'चकवा' इति ख्यातस्य ।

कादम्बः कलहंसः स्यात्

कादम्बः, कलहंसः ( २ पु ), 'बत्तख पक्षी' के २ नाम हैं।

कादेति ॥ कदम्बे समूहे भवः । 'तत्र भवः'(४।३।५३) इत्यण् । 'कादम्ब. स्यात् पुमान्पक्षिविशेषे सायकेऽपि च' [इति मे० १०५।१०] ॥ (१) ॥*॥ कलो मधुरवाक् हस. । 'कलहसस्तु कादम्बे राजहसे नृपोत्तमे' [इति मे० १७३।५०] ॥ (२) ॥*॥ द्वे 'कादम्बस्य' 'बतक' इति ख्यातस्य ।

उत्क्रोशकुररौ समौ ।

उत्क्रोशः, कुररः ( २ पु ), 'कुकर पक्षी' के २ नाम हैं।

उदिति ॥ उत्क्रोशति । 'क्रुश आह्वाने' (भ्वा० प० से०) । अच् (३।१।१३४) ॥*॥ कवते । 'कुङ् शब्दे' ( भ्वा० आ० अ० )। 'कुव क्ररन्' (उ० ३।१३३) ।—कुरति । 'कुर शब्दे' (तु० प० से०) । 'कुर छेदने' (तु० प० से० ) । बाहुलकात् अरक्—इति स्वामि-मुकुटौ 'कुवः क्ररन्' इति सूत्रास्मरणमूलको ज्ञेयौ ॥ ( २ ) ॥ * ॥ द्वे 'कुररस्य' ।

हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥

हंसः, श्वेतगरुत्, चक्राङ्गः, मानसौकाः ( ४ पु ), 'हंस' के ४ नाम हैं।

हंसा इति ॥ हन्ति गच्छति । 'वृतृवदिहनि–'(उ० ३। ६२) इति स. । यद्वा–अचि ( ३।१।१३४ ), 'भवेद्वर्णागमाद्धंसः' इति सक् । 'हंसः स्यान्मानसौकसि । निर्लोभनृप-'विष्णवर्कपरमात्मन्यमत्सरे । योगभेदे मन्त्रभेदे श[1] रमरुदन्तरे । तुरगमभेदे च' [ इति मे० १७०।१२-१४ ] ॥ (१) ॥*॥ श्वेता गरुतोऽस्य ॥ (२) ॥*॥ चक्राण्यङ्गान्यस्य । 'चक्राङ्गा मानसौकाः । चक्राङ्गी कटुरोहिण्याम्' [इति मे० २४।३३] ॥ (३) ॥*॥ मानस सर ओकोऽस्य ॥ (४) ॥*॥ चत्वारि 'हंसस्य' ।

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।

राजहंसः ( पु ), 'सफेद शरीर और लाल रंगके चोंच-पैरवाले हंस' का १ नाम है।

राजेति ॥ चञ्चुसहितैश्चरणै. । शाकपार्थिवादिः(वा० २।१।७८) यद्वा–चञ्चुश्च चरणश्चेति द्वन्द्व । 'द्वन्द्वश्च प्राणितूर्य–'(२।४।२) इत्येकवत् तु न भवति । 'मुखनासिका–'(१।१।८) इति 'ह्रस्वदीर्घप्लुत' (१।२।२७) इति च निर्देशेन तस्यानित्यत्वज्ञापनात् । तैर्लोहितैरुपलक्षिता. । हसाना राजा । राजदन्तादि (२।२।३१) । 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' [इति हैम ४।३४७] ॥ (१) ॥*॥ एकम् 'राजहसस्य' ।

मलिनैर्मल्लिकाख्यास्ते

मल्लिकाक्षः ( पु ), 'सफेद शरीर और धूएँके समान धूमिल रंगके चोंच-पैरवाले हंस' का १ नाम है।

मलीति ॥ किंचिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षिताः । 'मल्लिक' इति आख्या येषा ते । मल्लते । 'मल्ल धारणे' (भ्वा० आ० से०)। 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) । स्वार्थे कन् (५।३।७५)।–'अच इ' (उ० ४।१३९)–इति मुकुट. । तन्न । मल्लेर्लन्तित्वात् । 'मल्लिको हसभेदे स्यात् तृणशून्येऽपि मल्लिका' इति रुद्र । 'मल्लिको हसभिच्चापि । मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयो.' [इति मे० १२। १३७-३८] ॥*॥–मल्लिकाकारमक्षि यस्य । शुक्लापाङ्गत्वात् ( इति 'मल्लिकाक्षः' )—इति स्वामी । 'बहुव्रीहौ सक्थ्यक्ष्णो.' (५।४।११३) इति षच् ॥ (१) ॥*॥ एकं 'हंसभेदस्य' ।

धार्तराष्ट्राः सितेतरैः ॥ २४ ॥

धार्तराष्ट्रः ( पु ), 'सफेद शरीर और काले रंगके चोंच-पैरवाले हंस' का १ नाम है।

धार्तेति ॥ कृष्णैश्चञ्चुचरणैरुपलक्षिता । धृतराष्ट्रे भवा । 'तत्र भवः' (४।३।५३) इत्यण् । 'धृतराष्ट्र. सुराज्ञि स्यात् पक्षिक्षत्रियभेदयो.' इति रभस. । [ 'धृतराष्ट्रः खगे

---

१. 'विष्णवर्के परमात्मनि मत्सरे । योगिभेदे मन्त्रभेदे शरीर'–इति पा० ।

सर्पे सुराज्ञि क्षत्रियान्तरे। धृतराष्ट्री हंसपद्याम्' इति हैम ४।२६९-७० ]॥ (१) ॥*॥ एवम् 'कृष्णचञ्चुचरणहंसस्य'।

## शरारिराटिराडिश्च

शरारि, आटि, आडि (३ स्त्री), 'आडी पक्षी' के ३ नाम हैं।

शरेति॥ शर नीरमृच्छति। शर हिंसा वा। 'ऋ गतौ' (भ्वा० प० अ०)। 'अच इः' (उ० ४।१३९)। 'गुन्द्रेर्व्वोर्ना शर नीरे' इति तालव्यादौ रभस॥*॥ कपिलिकादित्वात् (वा० ८।२।१८) लत्वे 'शरालि' अपि॥*॥ 'शरालिः' इति पाठान्तरम्। शरमतति। 'अत सातत्यगमने' (भ्वा० प० से०)। 'अज्यतिभ्यां च' (उ० ४। १३१) इतीण्॥ (१) ॥*॥ आ अटति। इन् (उ० ४।११८)॥(२)॥*॥ आ अडति। 'अड्ड उद्यमने' (भ्वा० प० से०)। इन् (उ० ४।११८)॥—'अक्ष्यडिभ्यामिण्'—इति मुकुट। तन्न। उज्ज्वलदत्तादावेनत्सूत्रादर्शनात्॥(३)॥*॥ त्रयाऽपि स्त्रीलिङ्गा। 'आडि शरालिर्वर्ण्टी गन्धोली, वारली वर्पा इति स्त्रीलिङ्गकाण्डे रत्नकोषात्॥*॥ त्रीणि 'शरार्या' 'आडी' इति ख्याताया।

## बलाका बिसकण्ठिका।

बलाका, बिसकण्ठिका (२ स्त्री), 'बगुला-विशेष' के २ नाम हैं।

बलेति॥ बल संवरणे' (भ्वा० आ० से०)। 'बलाकादयश्च' (उ० ४।१४) इति साधु। बलेनाकति वा। अच् (३।१।१३४)॥ (१) ॥*॥ बिसवत् कण्ठोऽस्या.॥ (२) ॥*॥ द्वे 'बकभेदस्य'।

## हंसस्य योषिद्वरटा

वरटा (स्त्री), 'हंसकी स्त्री' अर्थात् 'हंसिनी' का १ नाम है।

हंसेति॥ वृणीते सवने सर। 'वृङ् सभक्तौ' (क्र्या० आ० से०)। 'शकादिभ्योऽटन्' (उ० ४।८१)। 'वरटा, द्वयोर्वरट्या, स्त्री हंस्या तु, तत्पतौ पुमान्' [इति मे० ३७। ५०]॥ (१) ॥*॥ एवम् 'हंसस्त्रिया'।

## सारसस्य तु लक्ष्मणा॥ २५॥

लक्ष्मणा (स्त्री), 'सारसी' अर्थात् 'सारसकी स्त्री' का १ नाम है।

सारेति॥ लक्ष्मीरस्त्यस्या। 'लक्ष्म्या अच्च'(ग० ५। २।१००) इति न। सारस्या लक्ष्मणा, ना तु सौमित्रौ, श्रीमति त्रिपु' इति रुद्र। 'लक्ष्मणा त्वोपधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्' इति मेदिनी [ ५०।७६-७७ ]॥*॥ निर्मकारोऽपि [ लक्षण ]। 'लक्षणश्चैव सारसे' इत्यमरमाला। 'लक्षण नाम्नि चिह्नेऽथ सारस्या लक्षणा क्वचित्' [ इति मे० ५०।७६ ]॥ (१) ॥*॥ एवम् 'सारसस्त्रिया.'।

## जतुकाऽजिनपत्रा स्यात्

जतुका, अजिनपत्रा (२ स्त्री), 'चमगादड, बादुर' के २ नाम हैं।

जत्विति॥ जत्विव। 'इवे प्रतिकृतौ'(५।३।९६) इति कन्। 'रामठे जतुक चर्मपत्राजतुकतौ स्त्रियाम्' इति कवर्गतृतीयपादौ रभस.॥ (१)॥*॥ अजिनमिव पत्त्रमस्या॥ (२) ॥*॥ द्वे 'जतुकाया.' 'चामचिरैय' इति ख्याताया.।

## परोष्णी तैलपायिका।

परोष्णी, तैलपायिका (२ स्त्री), 'चपड़ानामक कीट विशेष, तेलचटा' के २ नाम हैं।

परेति॥ परं शत्रु उष्णं यस्या। गौरादि (४।१।४१)।—'आते—' (४।१।६३) इति ङीप्—इति मुकुट। तन्न। 'स्त्रीत्वाविष्टा जातिरियम्' इति स्वयमेव व्याख्यातत्वेन—'अस्त्रीविषयात्—' (४।१।६३) इति ङीपो निषेधात्॥ (१) ॥*॥ तैलं पिबति। 'पा पाने' (भ्वा० प० अ०)। ण्वुल् (३।१।१३३)॥ (२) ॥*॥ 'तनुङ्गमित्त्विन्द्रगोप, परोष्णी तैलपायिका। तैलाम्बुका खलाधारा हीरा पिप्पलिका स्त्रियाम्' इति रभस॥*॥ द्वे मुखविष्टा 'वागुलिकादिनामिकाया'।

## वर्वणा मक्षिका नीला

वर्वणा, मक्षिका, नीला (३ स्त्री), 'नीले रंगकी मक्खी' के ३ नाम हैं।

वर्वेति॥ 'वर' इति वणति। 'वण शब्दे' (भ्वा० प० से०)। अच् (३।१।१३४)। यद्वा—वर्वति। 'वर्व गतौ' (भ्वा० प० से०)। युच् (उ० २।७८)॥ (१) ॥*॥ मशति। 'मश शब्दे' (भ्वा० प० से०)। 'हनिमशिभ्यां सिकन्' (उ० ४।१५४)। मक्षति वा। 'मक्ष रोषे संघाते च' (भ्वा० प० से०)। क्वुन् (उ० २।३२), ण्वुल् (३।१।१३३) वा॥ (२)॥*॥ नीलति। 'नील वर्णे' (भ्वा० प० से०)। अच् (३।१।१३४)। 'नील' इति क्रियाशब्दोऽयं विवक्षितो न तु गुणशब्द। अतो न ङीप्। गुणविवक्षायां 'नीली' इति भवत्येव॥ (३) ॥*॥ 'नीलवर्णमक्षिकाया' एकम्। केचित्तु नामत्रयमिदमाहु। तदा तु 'वा संज्ञायाम्' (वा० ४।१।४२) इति युक्त एव ङीपभाव.।

सरघा मधुमक्षिका ॥ २६ ॥

सरघा, मधुमक्षिका ( २ स्त्री ), 'मधुमक्खी' के २ नाम हैं।

सरेति ॥ सरं गतिमन्तं घातयति। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड.। णिलोपे ( ६।४।५१ ) टिलोप. ( ६।४।१४३ )। यद्वा–रङ्घणं रघ.। 'रघि गतौ' ( भ्वा० आ० से० )। 'खनो घ च' ( ३।३।१२५ ) इति घिरकरणात् 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति घः। आगमशास्त्रस्यानित्यत्वान्न नुम्। सह रघेण गत्या वर्तते ॥ ( १ ) ॥ * ॥ मधुकर्त्री मक्षिका ॥ (२)॥*॥ द्वे 'मधुमक्षिकायाः'।

पतङ्गिका पुत्तिका स्यात्

पतङ्गिका, पुत्तिका ( २ स्त्री ), 'एक तरहकी मधुमक्खी' के २ नाम हैं।

पेति ॥ पतति। 'पतेरङ्गच् पक्षिणि' (उ० १।११९) इत्यङ्गच्। स्वार्थे कन् ( ५।३।७५ ) सञ्ज्ञायां वा ॥ (१) ॥ * ॥ पुत् कुत्सितं तायते। 'तायृ सन्तानपालनयोः' ( भ्वा० आ० से० )। बाहुलकात् क., यलोप ( ६।१। ६६ )। 'केऽणः' ( ७।४।१३ ) इति ह्रस्व.। 'प्रत्ययस्थात्–' (७।३।४४) इतीत्वम्। पुत् कुत्सितं शब्दं तनोति वा। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ )इति ड, स्वार्थे कन् ( ५।३।७५ )॥ (२) ॥ द्वे 'मधुमक्षिकाविशेषस्य'।

दंशस्तु वनमक्षिका।

दंशः (पु), वनमक्षिका ( स्त्री ), 'दंश, डँस, बड़े मच्छड़' के २ नाम हैं।

दंश इति ॥ दशति। 'दंश दशने' (भ्वा० प० अ०)। अच् ( ३।१।१३४ )। 'दंश कीटविशेषे च वर्मदंशनयोः पुमान्' [ इति मे० १६३।७ ] ॥ ( १ ) ॥ * ॥ वनस्य मक्षिका ॥ ( २ ) ॥ * ॥ द्वे 'वनमक्षिकायाः'।

दंशी तज्जातिरल्पा स्याद्

दंशी ( स्त्री ), 'मस, छोटे मच्छड़' का १ नाम है।

दशीति ॥ अल्पा दंशजातिः। अपचयविवक्षायां गौरादित्वात् ( ४।१।४१ ) ङीष्।—'जातेः–' ( ४।१।६३ ) इति ङीष्—इति मुकुट ॥ ( १ ) ॥ * ॥ एकम् 'मक्षिकाल्पजातेः'।

गन्धोली वरटा द्वयोः ॥ २७ ॥

गन्धोली ( स्त्री ), वरटा ( पु ), 'बर्रे, भिर्र, बिहिनी, गन्धयुक्त मक्खी-विशेष' के २ नाम हैं।

गन्धविति ॥ गन्धयते। 'गन्ध अर्दने' ( चु० आ० से० )। बाहुलकादोलच्। गौरादिः(४।१।४१)।[गन्धोली वरटाशुण्ठ्योर्भद्रायाम्' इति हैमः ३।६८० ] ॥ (१) ॥*॥ वृणोति। 'वृञ् वरणे' ( स्वा० उ० से० )। 'शकादिभ्योऽटन्' ( उ० ४।८१ ) ॥*॥ ङीपि ( ४।१।४१ ) 'वरटी' अपि। 'वरटा वरटीहंस्योस्तस्पतौ वरट. स्मृत.' इति तारपाल ॥ (२)॥*॥ द्वे 'वरटायाः' 'बरडे' इति ख्यातायाः।

भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः।

भृङ्गारी, चीरुका, चीरी, झिल्लिका ( ४ स्त्री), 'झींगुर' के ४ नाम हैं।

भृङ्गेति ॥ भृङ्ग भृङ्गरूपम् आ राति। 'रा दाने' ( अ० प० अ० )। मूलविभुजादि. ( वा० ३।२।५ )। गौरादि. ( ४।१।४१ )। यद्वा–बिभर्ति। 'भृङ्गारभृङ्गारौ' (उ० ३।१३६)इति साधुः। यद्वा–रूपेण भृङ्गमृच्छति। 'ऋ गतौ' ( भ्वा० प० अ० )। अण् ( ३।१।२ )। 'भृङ्गारी झिल्लिकायां च कनकालौ पुन. पुमान्' [ इति मे० १३६। १९३ ] ॥ ( १ ) ॥ * ॥ 'ची' इति रौति। 'रु शब्दे' ( अ० प० अ० )। बाहुलकात् कक् ॥ * ॥ 'झीरुका' इति मुकुट ॥ ( २ ) ॥ * ॥ चिनोति। 'चिञ् चयने' (स्वा० उ० अ०)। 'शुसिचिमीनां दीर्घश्च' ( उ० २।२५ ) इति क्रन्। 'चीरी झिल्ल्यां, नपुंसकम्। गोस्तने वस्त्रभेदे च रेखालेखनभेदयो'[ इति मे० १२५।३५-३६ ] ॥ (३) ॥ * ॥ चिल्लति। 'चिल्ल शैथिल्ये' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। पृषोदरादित्वाच्चस्य झ'। गौरादिः (४।१।४१)। स्वार्थे कन् (५।३।७५)। 'झिल्ली[१] चीर्यातपरुचोर्वर्त्यामुद्वर्तनांशके' [ इति मे० १४६।२० ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'झिल्लिकायाः' 'झिंगुरी' इति ख्यातायाः।

समौ पतङ्गशलभौ

पतङ्ग., शलभः ( २ पु ), 'फतिंगा, पतंग' के २ नाम हैं।

समाविति ॥ पतति। 'पतेरङ्गच् पक्षिणि' ( उ० १। ११९ )इत्यङ्गच्। 'पतङ्ग. शलभे शालिप्रभेदे पक्षिसूर्ययोः[२]। क्लीब सूते' इति विश्व-मेदिन्यौ [ २७।४१, २४। ४२-४३ ]॥ ( १ ) ॥*॥ शलति। 'शल चलने' (भ्वा० प० से०)। 'कृशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२)॥ ( २ ) ॥ * ॥ द्वे 'पतंगस्य' 'फणिग' इति ख्यातस्य।

खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥

खद्योतः, ज्योतिरिङ्गणः (२ पु), 'जुगनू'के २ नाम हैं।

खेति ॥ खे द्योतते। 'द्युत दीप्तौ' (भ्वा० आ० से०)। अच् ( ३।१।१३४ )। खं द्योतयति। अण् ( ३।२।१ )

१. 'झिल्ली' इति पा०।

२ विश्वे 'विहगे रवौ। पतङ्गं पारदे' इति पा०।

वा ॥ ( १ ) ॥*॥ ज्योतिर्लक्षनम् । तद्वदिङ्गति । 'इगि गतौ' ( भ्वा० प० से० ) । 'चलनशब्दार्थात्–' ( ३।२।१४८ ) इति युच् ॥ ( २ ) ॥ * ॥ द्वे 'खद्योतस्य'।

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।

द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥

मधुव्रत, मधुकर, मधुलिट्, मधुप, अली, द्विरेफ, पुष्पलिट्, भृङ्ग, षट्पद, भ्रमर, अलि ( ११ पु ), 'भौंरा, भ्रमर' के ११ नाम हैं।

मध्विति ॥ मधु व्रतं भक्ष्यं यस्य ॥ ( १ ) ॥ * ॥ मधु करोति तच्छील । 'कृञो हेतु–' ( ३।२।२० ) इति ट ॥ ( २ ) ॥ * ॥ मधु लेढि । लिह आस्वादने' ( अ० उ० अ० ) । क्विप् ( ३।२।७६ ) ॥ (३) ॥ * ॥ एव पुष्पलिट् ॥ (७) ॥ * ॥ मधु पिबति । पा पाने' (भ्वा० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ )इति क । 'पिबते सुरासीध्वो – ( वा० ३।२।८ ) इति नियमात् टक् (३।२।८ ) ॥ ( ४ ) ॥ * ॥ अलो वृश्चिककलाङ्गूलम् । तदिवास्य । अत – ( ५।२।११५ )इतीनि ॥ (५) ॥*॥ द्वौ रेफौ नाम्नि यस्य ॥ ( ६ ) ॥ * ॥ बिभर्ति । 'भृञ किदुद् च' (उ० १।१२५) इति गन् ।—'भृङ्गाङ्गभृङ्गा' इति—इति मुकुटश्चिन्त्य । उणादिषु ताहससूत्राभावात् ॥ ( ८ ) ॥ * ॥ षट् पदान्यस्य ॥ (९) ॥*॥ भ्रमति । 'भ्रमु अनवस्थाने' ( दि० प० से० ) । 'अतिकमिभ्रमिचमि–' ( उ० ३।१२१ ) इति करन् । 'भ्रमर कामुके भृङ्गे [ इति मे० १३६।१९१ ] ॥ ( १० ) ॥ * ॥ अलति । अल भूषणादौ (भ्वा० प० से०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । 'अलि सुरापुष्पलिहो ' [ इति मे० १४५।२] ॥ ( ११ ) ॥ * । एकादश 'भ्रमरस्य' ।

मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।

शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३० ॥

मयूर, बर्हिण, बर्ही, नीलकण्ठ, भुजङ्गभुक्, शिखावल, शिखी, केकी, मेघनादानुलासी ( ९ पु ), 'मोर' के ९ नाम हैं।

मेति ॥ मयते । 'मय गतौ' ( भ्वा० आ० से० ) । खर्जादित्वात् ( उ० ४।९० ) ऊर । मह्या रौति वा । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड. । पृषोदरादि (६।३।१०९) ॥ ( १ ) ॥ * ॥ बर्हमस्त्यस्य । 'फलबर्हाभ्यामिनन्' ( वा० ५।२।१२२ ) ॥ (२) ॥ * ॥ इनि (५।२।११५) ॥ (३) ॥ * ॥ नील कण्ठोऽस्य ॥ (४) ॥ * ॥ भुजङ्ग भुङ्क्ते । 'भुज पालनादौ' (रु० प० अ०)। क्विप् ( ३।२।७६ ) ॥ ( ५ ) ॥ * ॥ शिखाऽस्त्यस्य। 'दन्तशिखात् संज्ञायाम्' ( ५।२।११३ ) इति वलच् ॥ ( ६ ) ॥*॥ पक्षे व्रीह्यादित्वात् (५।२।११६) इनि । 'शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गक' [ इति मे० ९३।४२ ] ॥ ( ७ ) ॥*॥ केकाऽस्त्यस्य । व्रीह्यादित्वात् (५।२।११६) इनि ॥ (८)॥*॥ मेघनादमनुलसति तच्छील । 'लस श्लेषणक्रीडनयो.' (भ्वा० प० से०) । 'सुप्यजातौ–' (३।२।७८) इति णिनि. ॥ (९) ॥*॥ नव 'मयूरस्य' ।

केका वाणी मयूरस्य

केका ( स्त्री ), 'मोरकी बोली' का १ नाम है।

ककति ॥ क मूर्धनि कायति । 'कै शब्दे' (भ्वा० प० अ०) । 'अन्यभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । 'हलदन्तात्–' (६।३।९) इत्यलुक् ॥ (१) ॥*॥ एकम् 'मयूरवाण्या' ।

समौ चन्द्रकमेचकौ ।

चन्द्रक, मेचक (२ पु ), 'मोरकी पूँछमें स्थित नेत्राकार चमत्कार चिह्न' के २ नाम हैं।

समाविति ॥ चन्द्र इव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥(१)॥*॥ मेचको वर्णोऽस्त्यस्य । अच् (५।२।१२७)। 'बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधा ' इति कात्य । 'मेचक श्यामले कृष्णे तिमिरे बर्हिचन्द्रके' इति हैम [३।८२] ॥ (२) ॥*॥ द्वे 'पिच्छस्थचन्द्राकृते ' ।

शिखा चूडा

शिखा, चूडा ( २ स्त्री ), 'मोरके शिरकी कलगी या मुकुट' के २ नाम हैं।

शीति ॥ शेते । 'शीङो ह्रस्वश्च' (उ० ५।२४) इति ख । 'शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' [इति मे० २०।६७] ॥ (१) ॥*॥ चुड्यते । 'चुड समुच्छ्राये' (चु० प० से०)। भिदादिपाठाद् ( ३।३।१०४ ) अङ् दीर्घं । 'चूडा वलभी शिखायां बाहुभूषणे' [इति मे० ४२।१३] ॥ (२) ॥*॥ द्वे 'मयूरशिखाया ' ।

शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३१ ॥

शिखण्ड ( पु ), पिच्छम्, बर्हम् (२ न), 'मोरके पंख' के ३ नाम हैं।

शिखेति ॥ शिखिनाऽम्यते । 'अम गत्यादिषु' ( भ्वा० प० से० ) । 'अमन्ताड्ड' ( उ० १।११४ ) । शकन्ध्वादि (वा० ६।१।९४) । 'शिखण्डो बर्हचूडयो ' इति हेमचन्द्र [२।११२]॥(१) ॥*॥ पिच्छयति, पिच्छयते वा । 'पिच्छ कुट्टने' (चु० प० से०) । अच् ( ३।३।१३४ ), घञ् (३।

१ 'शिखायां' इति पा० ।

३।१९) वा। 'पिच्छा पूगत्वच्छटाकोपमोचाशाल्मलिवेष्टके। भक्तसंभूतमण्डे च पङ्क्तावश्वपदामये। स्त्रियां, पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः.' [इति मे० २९।३-४] ॥ (२) ॥*॥ बर्हति। 'बृह वृद्धौ'(भ्वा० प० से०)। अच् (३।१।१३४)। 'बर्हं पिच्छे दलेऽस्त्रियाम्'[इति मे० १७५।६] ॥ (३) ॥*॥ त्रीणि 'मयूरपिच्छस्य'।

खगे विहंगविहगविहंगमविहायसः।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥
पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजाः।
नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः।

खगः, विहंगः, विहगः, विहङ्गमः, विहायाः, शकुन्तिः, पक्षी, शकुनिः, शकुन्तः, शकुनः, द्विजः, पतत्री, पत्री, पतगः, पतन्, पत्त्ररथः, अण्डजः, नगौकाः, वाजी, विकिरः, विः, विष्किरः, पतत्रिः, नीडोद्भवः, गरुत्मान्, पित्सन्, नभसङ्गमः (२७ पु), 'पक्षी, चिड़िया' के २७ नाम हैं।

खग इति ॥ खे गच्छन्ति। 'अन्येष्वपि–' (वा० ३।२।१०१) इति डः। 'खग सूर्ये ग्रहे देवे मार्गणे च विहंगमे' [इति मे० २२।४] ॥ (१) ॥*॥ विहायसि गच्छन्ति। 'गमश्च' (३।२।४७) इति खच्। 'विहायसो विह–' (वा० ३।२।३८)। 'खच्च डिद्वा' (वा० ३।२।३८) ॥ (२) ॥*॥ (४) ॥*॥ डे (वा० ३।२।४८) तु 'विहगस्तु त्रिलिङ्ग स्यादाशुगे ना विहंगमे' [इति मे० २५।४९] ॥ (३) ॥*॥ विजहाति भुवम्। 'ओहाक् त्यागे' (जु० प० अ०)। 'वहिहाधाञ्भ्यश्छन्दसि' (उ० ४।२२१) इत्यसुन् णिच्च। क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते। तेन लोकेऽपि। यद्वा–विहाययति। 'हय गतौ' (भ्वा० प० से०)। 'हि गतौ' (स्वा० प० अ०) वा स्वार्थण्यन्त। 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९)। 'विहायाः शकुनौ पुंसि गगने पुनपुंसकम्' [इति मे० १७४।६३] ॥ (५) ॥*॥ शक्नोति। 'शक्लृ शक्तौ' (स्वा० प० अ०)। 'शके रुनोन्तोन्त्युनयः' (उ० ३।४९) इति प्रत्ययचतुष्टयम् ॥ (६) ॥*॥ पक्षावस्य स्तः। इनिः (५।२।११५) ॥ (७) ॥*॥ 'शकुनि पुंसि विगहे सौबले करणान्तरे' [इति मे० ९२।३६] ॥ (८) ॥*॥ 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहंगयोः.' इति मे० [६६।१६२] ॥ (९) ॥*॥ 'शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः। शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' [इति मे० ९३।३८-३९] ॥ (१०) ॥*॥ द्विर्जायते। 'अन्येष्वपि–'(३।२।१०१) इति ड। 'द्विजः स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना। द्विजा भार्ग्यां हरेणौ च' [इति मे० ३०।९-१०] ॥ (११) ॥*॥ पतत्रमस्त्यस्य। इनिः (५।२।११५) ॥ (१२) ॥*॥ एवं पत्री। 'पत्री श्येने पत्त्ररथे काण्डद्रुधन्विकादिषु' [इति मे० ८९।८७]॥ (१३) ॥*॥ पत्रेण पक्षेण गच्छति। ड (वा० ३।२।४८) ॥ (१४) ॥*॥ पतति। 'पत्लृ गतौ' (भ्वा० प० से०)। शतृ (३।२।१२४) ॥ (१५) ॥*॥ पत्त्रं पतत्रं रथ इव यस्य ॥ (१६) ॥*॥ अण्डाज्जायते स्म। 'पञ्चम्याम्–' (३।२।९८) इति ड। 'अण्डजो मृगनाभौ स्यात्सरटेऽहौ खगे झषे' [इति मे० ३१।१८] ॥ (१७) ॥*॥ नगो वृक्ष, नगे वा ओको यस्य। 'नगौका पुंसि शरभे पक्षिपञ्चास्ययोरपि' इति मे० [१७४।५६]—जलौकावद् 'आदन्त.' [नगौका] अपि—इति मुकुटः ॥ (१८) ॥*॥ वाजा. पक्षा सन्त्यस्य। इनि (५।२।११५)। ['वाजी बाणाश्वपक्षिषु' इति मे० ६२।२६] ॥ (१९) ॥*॥ विकिरति। 'कॄ विक्षेपे' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति क ॥ (२०) ॥*॥ वाति। 'वा गतौ' (अ० प० अ०)। 'वातेर्डिच्च' (उ० ४।१३४) इतीण्। —'वेञो डित्' (उ० ४।७२)—इति स्वामि-मुकुटौ चिन्त्यौ। ईचिप्रत्ययप्रकरणेऽस्य पाठाद् 'वीचि.' इति रूपापत्ते ॥ (२१) ॥*॥ 'विष्किर शकुनिर्वा' (६।१।१५०) इति पक्षे सुट्। 'परिनिविभ्य–' (८।३।७०) इति षत्वम् ॥ (२२) ॥*॥ पतति। 'पतेरत्रिन्' (उ० ४।६९)।—'उणादयो बहुलम्' (३।३।१) इति पतेरत्रिः —इति मुकुट एतत्सूत्राज्ञानमूलक. ॥ (२३) ॥*॥ नीडे उद्भवो येषाम् ॥ (२४) ॥*॥ गरुत. पक्षा सन्त्यस्य। मतुप् (५।२।९४)। 'झय' (८।२।१०) इति वत्वं तु न। यवादित्वात् (८।२।९) 'तसौ मत्वर्थे' (१।४।१९) इति भत्वम् ॥ (२५) ॥*॥ पतितुमिच्छव। लट्. शता (३।२।१२४)। 'सनि मीमा–' (७।४।५४) इतीस् ॥ (२६) ॥*॥ 'नभसं खं मेघवर्त्म विहायसम्' इति निगमाददन्तम्। नभस गच्छति। 'गमश्च' (३।२।४७) इति खच ॥ (२७) ॥*॥ सप्तविंशतिः 'पक्षिमात्रस्य'।

तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥३४॥
तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः।
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥३५॥

हारीतः, मद्गुः, कारण्डवः, प्लवः, तित्तिरिः, कुक्कुभः, लावः, जीवञ्जीवः, चकोरकः, कोयष्टिकः, टिट्टिभकः, वर्तकः, वर्तिकः (१३ पु), आदि (आदि शब्दसे शारिका, कपिञ्जल……), ये 'पक्षि-विशेष' हैं। [ उनमें क्रमशः 'हारिल, जलमुर्गा, करहुआ (कौवेके समान काले रङ्गके बड़े २ पैरवाला

पक्षिविशेष ), जलकौवा, तीतर, वनमुर्गा, लावा या लवा, मोरके तुल्य पंखवाला पक्षि-विशेष, चकोर-पक्षि विशेष, टिटिहरी और बतख' का १-१ नाम तथा 'बटेर' के २ नाम हैं।

तेषामिति ॥ एते पक्षिणां भेदाः । 'हारि पथिकसंतानद्यूतादिभङ्ग्यो स्त्रियाम्' [इति मे० १३०।१०१] । हारिमित ईतो वा हारोऽस्त्यस्मिन् । इनि (५।२।११५) । हारि मनोहरम् इतं गमनमस्य । यद्वा—हारयति । 'विवप्–' (३।२।१७८) । एति स्म । 'ई गतौ' (अ० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्त । हा चासावीतश्च । 'हारीतो[1] विहगान्तरे । मुनौ छद्मनि' इति हेमचन्द्र [७५। ३३८ ] । ( 'हरीयाल' इति ख्यात ) ॥ ( १ ) ॥*॥ मज्जति । । 'टुमस्जो शुद्धौ' (तु० प० अ०) । 'भृमृशी–' (उ० १।७) इत्यु । न्यङ्क्वादि (७।३।५३) । तस्य जश्त्वेन (८।४।५३) द । 'मद्गु पानीयकाकिका' इति रभस ॥ ( १ ) ॥ * ॥ रमणम् । 'कमन्ताडु' (उ० १। ११४) इति रमेर्ड । ईषद्रण्ड । 'ईषदर्थे' ( ६।३।१०५ ) इति को वा । कारण्ड वाति । 'आतोऽनुप–' ( ३। २।३ ) इति क ॥ ( १ ) ॥ * ॥ प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । अच् (३।१।१३४) ॥ 'प्लव प्लक्षे प्लुतौ भये । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जन्ववासे । जलान्तरे च गन्धतृणे मुस्तकेऽभिधेयपि' इति हेमचन्द्र [२।५४१ ४३] ॥ (१) ॥ * ॥ तित्तिरिशब्दं राति । बाहुलकात्कि । 'तित्तिरि पक्षिणि मुनौ' इति हैम [३।५९६] ॥*॥ अदन्तपक्षे 'आतोऽनुप–' (३।२।३) इति क । 'कपोतलावतित्तिरा' इति वाचस्पति ॥ ( १ ) ॥ * ॥ 'कुक' इति शब्द कौति । 'कु शब्दे' (अ० प० अ०) । बाहुलकाड्डुक् । 'कुक्कु' शब्दं भाषते । 'भाष व्यक्तायां वाचि' (भ्वा० आ० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड । वनकुक्कुटोऽयम् । ( १ ) ॥*॥ लावयति । 'लूञ् छेदने' ( क्र्या० उ० से० ) स्वार्थेण्यन्त । अच् (३।१।१३४) ॥ (१) ॥*॥ जीवं जीवयति । तद्दर्शनेन विषनाशकत्वात् । 'कृत्यल्युटो बहुलम्' (वा० ३।३।११३) इति बाहुलकात्खच् । 'जीवञ्जीव समान्तरे । द्रुमभेदे चकोरे च' इति हैम [४।३१८] ॥ (१) ॥*॥ चकति । 'चक तृप्तौ' ( भ्वा० प० से० ) । 'कठिचकिभ्यामोरन्' (उ० १।६४) । स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ क जलं धर्षितं विरायः । पृषोदरादि (६।३।१०९) । (१) ॥*॥ 'टिट्टि' शब्दं भाषते । 'टिट्टि' शब्देन भाति वा । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । कन (५।३।७५) ॥ ( १ ) ॥*॥ वर्तते । 'वृतु वर्तने' । ण्वुल् (३।१।१३३) ॥ ( १ ) ॥ * ॥—उदीचां तु स्त्रियामित्वम् । प्राचां न ( वा० ७।३।४५ ) । इति लिया रूपद्वयप्रदर्शनाय 'वर्तिका' ग्रहणम्—इति प्राञ्च ॥ वस्तुतस्तु 'वृतेस्तिकन्' ( उ० ३।१४६ ) इति तिकन्नन्तस्य मूषिकवत् पुंस्यपि 'वर्तिक' इति रूपकथनमिदम् । 'वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयो' [इति मे० १३। १५४] ॥ ( १ ) ॥ * ॥ आदिना शारिकादयो ज्ञेया । 'पक्षिजातिविशेषा' ।

गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ।

गरुत्, पक्ष, छदः ( ३ पु ), पत्रम्, पतत्रम्, तनूरुहम् ( ३ न ), 'पंख' के ६ नाम हैं।

गरुदिति ॥ गिरति । 'गॄ निगरणे' ( तु० प० से० ) । यद्वा—गृणाति । गॄ शब्दे' (क्र्या० प० से०) । 'मृग्रोरुति' (उ० १।९४) ॥ (१) ॥*॥ पक्षयति । पक्ष्यते वा । 'पक्ष परिग्रहे' (चु० प० से०) । अच् (३।१।१३४) । घञ् (३।३।१९) वा । 'पक्षस्तु मासार्धे गृहसाध्ययो । चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये । पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे' इति हैम [२।५७७-७८] ॥*॥ सान्तोऽपि । 'पक्षसी च स्मृतौ पक्षौ' इति शुभाङ्क ॥ (२) ॥*॥ छादयतेऽनेनाङ्गम् । 'छद संवरणे' (चु० उ० से०) । ण्यन्त । 'पुंसि–' ( ३।३।११८ ) इति घ । 'छादेर्घे–' ( ६।४।९६ ) इति ह्रस्व । 'गरुत्पक्षौ नरी छदम्' इति पालितात्क्लीबमपि ॥(३)॥*॥ पतत्यनेन । 'दाम्नी–' ( ३।२।१८२ ) इति ष्ट्रन् । 'पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणो' इति मेदिनी [ १२६।५५ ] ॥ ( ४ ) ॥ * ॥ पतन्तं त्रायते । 'त्रैङ् रक्षणे' ( भ्वा० आ० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति क । पतेर्बाहुलकादत्रन् वा ॥ (५) ॥ * ॥ तन्वां रोहति । 'इगुपध–' (३।१।१३५) इति क ॥ (६) ॥*॥ षट् 'पक्षस्य' ।

स्त्री पक्षतिः पक्षमूलम्

पक्षति ( स्त्री ), पक्षमूलम् (न), 'पंखकी जड़' के २ नाम हैं।

स्त्रीति ॥ पक्षस्य मूलम् । 'पक्षात्ति' (५।२।२५) ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'पक्षमूलस्य' ।

चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥

चञ्चु, त्रोटि ( २ स्त्री ), 'चोंच, ठोर' के २ नाम हैं।

चञ्चुरिति ॥ चञ्चति । 'चञ्चु गतौ' ( भ्वा० प० से० ) । बाहुलकादु । 'चञ्चूश्चञ्चुस्तथा त्रोटि'

---

[1] 'हारीतो मुनिभेदे स्यात् कैतवे विहगान्तरे' इति पा० ।

इति हलायुध । मिश्रस्वादौ(?)निपातितः । अपष्ट्वादित्वा-दित्यन्ये—इति मुकुट । तन्न । गणद्वयस्योज्ज्वलदत्तादिष्व-दर्शनात् । 'चञ्चुः पञ्चाङ्गुले त्रोटचाम्' इति हैम [२।५९] ॥ (१) ॥*॥ त्रोटचते । 'त्रुट छेदने' ( चु० आ० से० ) चुरादिः । 'अच इः' ( उ० ४।१३९ ) । 'त्रोटिश्चञ्च्वा खगान्तरे । मीनकट्फलयोः' इति हैमः [ २।९२-९३ ] ॥ (२) ॥*॥ द्वे 'पक्षितुण्डस्य' 'चोंच' इति ख्यातस्य ।

प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।

प्रडीनम्, उड्डीनम्, संडीनम् ( ३ न ), ये ३ 'पक्षियोंकी चालें' हैं, इनमें 'तिरछा या अत्यन्त उड़नेका, ऊपर उड़नेका, मिलकर उड़ने' का क्रमशः १-१ नाम है।

प्रेति ॥ प्रगमनम्, ऊर्ध्वम्, संगतम् वा डयनम् । 'डीङ् विहायसा गतौ' ( दि० आ० अ० ) । 'नपुंसके भावे क्तः' (३।३।११४) । 'स्वादय ओदितः' (दि० गणसूत्रम्) इत्यो-दित्वात् (८।२।४५) निष्ठानत्वम् ॥—प्रडीनं तिर्यग्गमनम् —इत्यन्ये ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ 'एताः' इत्यनेन हि डीनाद्या बोध्या ॥*॥ 'पक्षिणा गतिविशेषाणा पृथक्पृथगेकैकम्' ।

पेशी कोपो द्विहीनेऽण्डम्

पेशी ( पु-पेशिन्, स्त्री-पेशी ), कोप ( पु न ), अण्डम् (न), 'अण्डा' के ३ नाम हैं।

पेशीति ॥ पिंशति । 'पिश अवयवे' (तु० प० से०) । 'सुपिशिरहि–' ( उ० ४।११९ ) इतीन् । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति वा ङीप् । 'पेशी सुपक्वकणिके[1] मांस्यां खड्गपिधानके । मांसपिण्ड्यामण्डभेदे' [इति मे० १६३। १२ ] ॥ (१) ॥*॥ कुष्यति निष्क्रामत्यस्मात्स्वयमेव । 'अकर्तरि च' (३।३।१९) इति घञ् । 'कोपोऽस्त्री कुड्मले पात्रे पेश्यां शब्दादिसंग्रहे । जातिकोशोऽर्थसंघाते दिव्ये खड्गपिधानके' [इति मे० १६६।१०] ॥*॥ तालव्यान्तोऽ-प्ययम् ॥ 'कोशोऽस्त्री–' [इति मे० १६२।६] यथा पठि-तम् ॥ (२) ॥*॥ नामद्वयमिदम् ॥ स्वामी तु—पेशीना मांसखण्डानां कोशो भाण्डागारः—इति व्याचक्षाणो नामै-कमिदमिच्छति ॥*॥ द्वाभ्यां हीने क्लीब इत्यर्थः । अमत्य-स्मात् । 'अम गत्यादिषु' ( भ्वा० प० से० ) । 'ञमन्ताड्डः' (उ० १।११४) ॥ 'अण्डं मुष्के च पेश्यां स्यात्' [इति मे० ४०।१]॥(३)॥*॥ त्रीणि'अण्डस्य''अण्डा'इति ख्यातस्य ।

कुलायो नीडमस्त्रियाम् ॥ ३७ ॥

कुलाय ( पु ), नीडम् ( न पु ), 'खोंता, घोंसला' के २ नाम हैं।

कुलेति ॥ कुलं पक्षिसंतानोऽयतेऽत्र । 'अय गतौ' ( भ्वा० आ० से० )। 'हलश्च'( ३।३।१२१ ) इति घञ् । यद्वा– कौ लायो गतिरस्मात् ।—कुलान्ययन्ते निःसर-न्त्यतः । 'हलश्च'(३।३।१२१ ) इति घञ्—इति मुकुटः । तन्न । 'हलश्च' (३।३।१२१) इत्यत्र 'करणाधिकरणयो –' (३।३।११७) इत्यनुवृत्तेरपादानेऽप्राप्तेः । 'कुलायस्तु पुमान् स्थानमात्रे स्यात् पक्षिवासके' [ इति मे० ११८।१९ ]॥ ( १ ) ॥*॥ नितराम् ईड्यते । घञ् ( ३।३।१९ ) । यद्वा–निश्चिना इलन्त्यत्र । 'इल स्वप्ने' (तु० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वान्न गुणः । डलयोरेकत्वम् । 'नीडं स्थानकुलाययोः' [ इति मे० ४१। १७] ॥ (२) ॥*॥ द्वे 'पक्षिवासस्य' ।

पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।

पोत', पाकः, अर्भक', डिम्भ', पृथुक', शावक', शिशु' ( ७ पु ), 'बच्चे' के ७ नाम हैं।

पोत इति ॥ पुनाति, पवते वा । 'पूञ् पवने' (क्र्या० उ० से०)। 'पूङ् पवने' ( भ्वा० आ० से० ) वा । 'हसिमृ-ग्रिण्–'(उ० ३।८६) इति तन । स्त्रियाम् 'पोती' । 'वयसि प्रथमे' ( ४।१।२० ) इति ङीप् । 'पोत शिशौ वहित्रे च गृहस्थाने च वाससि' इति मेदिनी [ ५६।३८ ] ॥ (१) ॥*॥ पाययते । पिबन्ति वा । 'पा रक्षणे' (अ० प० अ०) । 'पा पाने'(भ्वा० प० अ०) वा । 'अर्भकपृथुकपाका वयसि' (उ० ५।५३) इति साधु । स्त्रियाम् अजादित्वात् ( ४।१। ४ ) टाप् । मुकुटस्तु—'इणभीका–' (उ० ३।४३) इति कन । पच्यते परिणम्यतेऽनेन । 'हलश्च' ( ३।३।१२१ ) इति घञि वा इत्याह । तन्न । अवयसि चरितार्थयोरन-योर्वयसि 'अर्भक–' ( उ० ५।५३ ) इत्यनेन बाधनात् । पाकः परिणतौ शिशौ । केशस्य जरसा धौवल्ये स्थाल्यादौ पचनेऽपि च' [ इति मे० ३।२९ ] । इत्येतेष्वर्थेषु शिशु-भिन्नेषु मुकुटव्याख्या युक्ता । शिशौ त्वस्मदीया—इति ध्येयम् ॥ ( २ ) ॥ * ॥ अर्यते वृद्धिं प्राप्यते । 'ऋ गतौ प्रापणेऽपि च' ( भ्वा० प० से० ) । 'अर्भकपृथुकपाका वयसि' (उ० ५।५३) इति साधु । मुकुटस्तु—सदैव इयर्ति चलति, वृद्धिं गच्छति वा । 'अर्तिगृभ्यां भ' (उ० ३।१५२) । ततः स्वार्थे कन् (५।३।७५)–इति व्याख्यत् । तन्न । 'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च' [इति मे० ५।४७] इत्यत्र बालभिन्नेऽर्थे सावकाशस्यास्य 'अर्भक-पृथुक–' (उ० ५।५३) इत्यनेन बाधनात् ॥ (३) ॥*॥ डिम्भयति । 'डिभिडिभि संघे' चुरादिः । अच्( ३।१।१३४)। 'डिम्भोऽपि बालिशे बाले' [इति मे० १०६।४]। डीङ् आ-

1. 'सुपक्वकलिके' इति पा० ।

रस्मनैपदित्वात्—'डयति–' इति स्वामी—डयनं डी । डिया भानि—इत्यादि मुकुटश्चोपेक्ष्यौ ॥ (४) ॥*॥ पर्ययति । पर्यंते वा । 'पृथ प्रक्षेपे' चुरादि । प्रथते वा । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । 'अर्भकपृथुकपाका वयसि' (उ० ५। ५३) इति साधु ।—पृथु कायति—इति स्वामि मुकुटौ चिन्त्यौ । 'पृथुक पुंसि चिपिटे शिशौ स्यादभिधेयवत्' [इति मे० ११।१२६] इत्यत्र पूर्ववदवयसि चरितार्थत्वेनास्य वयसि बाधनात् ॥(५) ॥*॥ शव्यते । 'शव गतौ' (भ्वा० प० से०) । घञ् (३।३।१९) । स्वार्थे कन् (५।३।७५) ॥ (६) ॥ ॥ श्यति, शायते वा । 'शो तनूकरणे' (दि० प० अ०) । 'श वित् सन्वच्च' (उ० १।२०) इत्यु सन्वद्भावाद्द्वित्वेत्वे ।—शाशानि प्लुतेन गच्छति । 'शश प्लुतगतौ' (भ्वा० प० से०) । 'शशिरपोरत इ' इति (कु)—इति मुकुटश्चिन्त्य । उज्ज्वलदत्तादिषु शशिरपोरत' इति सूत्रादर्शनात् ॥ (७) ॥*॥ सप्त 'शिशुमात्रस्य' ।

स्त्रीपुंसौ मिथुनं द्वन्द्वम्

स्त्रीपुंसौ (नित्य द्विव० पु), मिथुनम्, द्वन्द्वम् (२ न), 'स्त्री और पुरुषकी जोड़ी' के ३ नाम हैं।

स्त्रीति ॥ स्त्री च पुमांश्च । 'अचतुर–' (५।४।७७) इति अच् ॥ (१) ॥ * ॥ मेथति । 'मिथृ मेथृ सङ्गमे' (भ्वा० उ० से०) । 'क्षुधिपिशिमिथिभ्य कित्' (उ० ३। ५५) इत्युनन ।—बाहुलकाद्गुणाभाव —इति मुकुटस्तु एतत्सूत्राज्ञानमूलक । 'मिथुन न द्वयो राशिभेदे स्त्रीपुंसयुग्मके' [इति मे० ९०।७] ॥ (२) ॥*॥ द्वौ द्वौ । 'द्वन्द्व रहस्य–' (८।१।१५) इति साधुः । द्वन्द्व रहस्ये कलहे तथा मिथुनयुग्मयो ' [इति मे० १५८।१०] ॥ (३) ॥*॥ त्रीणि 'स्त्रीपुरुषरूपयुग्मस्य' । मुकुटस्तु द्वन्द्वस्योत्तरान्वयित्वमेव स्वीकुर्वन्नुक्तमेदिनीविरोधादुपेक्ष्य ।

युग्मं तु युगलं युगम् ॥ ३८ ॥

युग्मम्, युगलम्, युगम् (३ न), 'जोडा, सम' के ३ नाम हैं।

युग्ममिति ॥ युज्यते । 'युजिर् योगे'(रु० उ० अ०) । 'युजिरुचितिजा कुश्च' (उ० १।१४६) इति मक् । 'युग्म यमलयामले' इति रभस ॥ (१) ॥*॥ वृषादित्वात् (उ० १।१०६) कलच् । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् । युग लाति वा । युगमस्त्यस्य वा । सिध्मादित्वात् (५। २।९७) लच् ॥ (२) ॥*॥ युज्यते । घञ् (३।३।१९)। कुत्वम् (७।३।६२)। सज्ञापूर्वकत्वात्—'रथयुगप्रासङ्गम्' (४।४।७६) इति लिङ्गाद् वा गुणाभाव । 'युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च' [इति मे० २३।१७] ॥ (३) ॥ * ॥ त्रीणि 'यमलस्य' ।

समूहनिवहव्यूहसंदोहविसरव्रजाः ।
स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥

समूह', निवह', व्यूह', संदोह', विसर', व्रज', स्तोम, ओघ, निकर, व्रात, वार, संघात', सञ्चय', समुदाय', समुदय', समवाय', चय', गण' (१८ पु), संहति' (स्त्री), वृन्दम्, निकुरम्बम्, कदम्बकम् (३ न),'समूह'के २२ नाम हैं।

समूहेति ॥ समूह्यते । 'ऊह वितर्के'(भ्वा० आ० से०)। घञ् (३।३।१९) ।—'हलश्च' (३।३।१२१)—इति मुकुटस्य प्रमाद । तत्र 'करणाधिकरणयो –' इत्यस्यानुवर्तनात् ॥ (१) ॥*॥ नितरामुह्यते । 'वह प्रापणे' (भ्वा० उ० अ०) । 'पुंसि–' (३।३।११८) इति घ । 'वशो घ च' (३।३।१२५) इति वा । वहति वा । अच् (३।१। १३४) ॥ (२) ॥*॥ व्यूह्यते । घञ् (३।३।१९)। 'व्यूह स्याद्बलविन्यासे निर्माणे वृन्दतर्कयो ' [इति मे० १७५। १०] ॥ (३) ॥*॥ संदुह्यते । 'दुह प्रपूरणे' (अ० उ० अ०) । घञ् (३।३।१९) ॥ (४) ॥ * ॥ विसरति । 'सृ गतौ' (भ्वा० प० अ०) । अच् (३।१।१३४) । ['विसर प्रसरे व्रजे' इति मे० १३८।२१७] ॥ (५) ॥*॥ व्रजति । 'व्रज गतौ' (भ्वा० प० से०)। अच् (३।१।१३४) । 'व्रजो गोष्ठाध्ववृन्देषु' [इति मे० ३०।१५] । करणाधिकरणव्युत्पत्तौ तु गोचरसंचर–' (३।३।११९) इति निपातित ॥ (६) ॥*॥ स्तूयते । 'ष्टुञ् स्तुतौ' (अ० उ० अ०) । 'अर्तिस्तुसु' (उ० १।१४०) इति मन ॥ (७) ॥*॥ आ उह्यतेऽनेन। 'हलश्च'(३।३।१२१) इति घञ् । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् । 'ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयो ' इति मेदिनी [ २६। २-३ ] ॥ (८) ॥ * ॥ निकीर्यते । 'कॄ विक्षेपे' (तु० प० से० ) । 'ऋदोरप' (३।३।५७) । निकरो निवहे सारे न्यायदेयधने निधौ' [इति मे० १२५।१७२] ॥ (९) ॥ * ॥ व्रत्यते नियम्यते । 'मुण्डमिश्र–' (३।१।२१) इति ण्यन्ताद्व्रतशब्दाद् घञ् (३।३।१९) । अच् (३।३।५६) वा । 'व्रातच्फञो –' (५।३।११३) इति लिङ्गाद्वृद्धि ॥ (१०)॥*॥ वार्यते आच्छाद्यतेऽनेन । 'वृ वरणे' चुरादि । 'पुंसि–' (३।३।११८) इति घ । 'वार सूर्यादिवासरे । द्वारे हरे कुब्जवृक्षे वृन्दावसरयो क्षणे' [इति मे० १२७। ६४-६५] ॥ (११) ॥ * ॥ संहन्यते । घञ् (३।३। १९) । 'हनस्तोऽचिण्णलो ' (७।३।३२) । 'हो हन्ते –'

(७।३।५४) इति घ । 'संघातः पुंसि घाते च सहतौ नरकान्तरे' [ इति मे० ६६।१६७ ] ॥ ( १२ ) ॥ * ॥ संचीयते । 'चिञ् चयने ( स्वा० उ० अ० ) । 'एरच्' ( ३।३।५६ ) ॥ (१३) ॥ * ॥ समुदायत । 'अय गतौ ( भ्वा० आ० से० ) । आङ् । अच् (३।१।१३४) । 'समुदाय. समूहे स्याद्युद्धे' [इति मे० १२२।१३०] ॥ (१४) ॥ * ॥ समुदीयते । 'इण् गतौ' (अ० प० अ०), 'ई गतौ' ( भ्वा० प० अ० ) वा । 'एरच्' ( ३।३।५६ ) । 'मवत्समुदयः संघे समुग च समुद्गमे' [ इति मे० १२२।१३० ]॥ ( १५ ) ॥ * ॥ समवाय्यते । 'अय गतौ' ( भ्वा० आ० से० ) । घञ् ( ३।३।१९ ) ।—समवयन्त्यननास्मिन् वा । घञ् ( ३।३।१९ )—इति मुकुट. । तन्न । 'अजब्भ्याम्–' ( वा० ३।३।१२६ ) इति वार्तिकविरोधात् । बाहुलकस्यागतिकगतित्वात् ॥ ( १६ ) ॥ * ॥ चीयते । 'चिञ् चयने' (स्वा० उ० अ०) । 'एरच्' ( ३।३।५६ ) । 'चयः समूहे प्राकारमूलबन्धे' समाहृतौ' [इति मे० ११४।२१]॥ ( १७ ) ॥ * ॥ गण्यते । 'गण संघाते' (चु० उ० से०)। घञ् ( ३।३।१९ ), 'एरच्' (३।३।५६) वा । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । 'गणः प्रमथसंख्यौघे चण्डीसैन्यप्रभेदयो.' [इति मे० ४५।९] ॥ (१८) ॥ * ॥ सहन्यते । क्तिन् ( ३।३।९४ ) ॥ ( १९ ) ॥ * ॥ वृण्यते । 'वृणु भक्षणे' ( तु० प० से० ) । वृणोति वा । 'अब्दादयश्च' ( उ० ४।९८ ) इति साधुः ॥ ( २० ) ॥ * ॥ निकुरति, निकुर्यते वा । 'कुर छेदने' (तु० प० से०) । बाहुलकादम्बच् अत उत्वं च ॥ ( २१ ) ॥ * ॥ कुत्सितमम्बते, अम्ब्यते वा । 'अबि शब्दे' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ), 'को. कत्–' ( ६।३।१०१ ), घञ् ( ३।३।१९ ) वा । कदति, कद्यते वा । 'कदि' सौत्रः । बाहुलकादम्बच् । 'कदम्ब निकुरम्बे स्यान्नीपसर्षपयो. पुमान्' [इति मे० १०५।९]॥ ( २२ ) ॥*॥ द्वाविंशति 'समूहस्य' ।

वृन्दभेदाः

अब समूहों के भेद-विशेष कहते हैं ।

वृन्देति ॥ समूहविशेषा उच्यन्ते ।

सधर्मैर्वर्गः

वर्गः (पु), 'एकजातीय प्राणियों या अप्राणियोंके समूह' का १ नाम है ( जैसे—मनुष्यवर्गः, ब्राह्मणवर्गः, शैलवर्गः आदि )।

सेति ॥ सधर्मैरुपलक्षितम् । वृज्यते । 'वृजी वर्जने' (अ० आ० से० ) । घञ् ( ३।३।१९ ) । कुत्वम् (७।३।५२)॥ ( १ ) ॥ * ॥

संघसार्थौ तु जन्तुभिः ।

संघ, सार्थः (२ पु), 'एकजातीय या भिन्नजातीय प्राणिमात्रके समूह' का २ नाम है ( जैसे—पशुसङ्घः, पान्थसङ्घः, वणिक्सङ्घः आदि )।

संघेति ॥ सहन्यते । घञ् (३।३।१९) । 'संघोद्घौ गणप्रशंसयो.' (३।३।८६) इति साधु. ॥ ( १ ) ॥*॥ सरति, स्रियते वा । 'सृ गतौ' ( भ्वा० प० अ० ) । 'सर्तेर्णित्' ( उ० २।५ ) इति थन् । 'सार्थो वणिक्समूहे स्यादपि संघातमात्रके' [ इति मे० ७२।१३ ] ।—'यूथादयश्च'—इति मुकुटश्चिन्त्य. ॥ ( २ ) ॥*॥ भागुरिस्तु पर्यायतामाह —'संघसंघातपुञ्जौघसार्थयूथकदम्बका.' इति ।

सजातीयैः कुलम्

कुलम् (न), 'एकजातीय केवल प्राणियों के समूह' का १ नाम है ( जैसे—'ब्राह्मणकुलम्, ऋषिकुलम्, गोकुलम् आदि)।

सजेति ॥ सजातीयैरेव जन्मभिरुपलक्षितम् । कोलति । 'कुल संस्त्याने बन्धुषु च' ( भ्वा० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क. । 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम्' [इति मे० १४५।९]॥ ( १ ) ॥ * ॥

यूथं तिरश्चां पुंनपुंसकम् ॥ ४१ ॥

यूथम् ( न पु ), 'एक जातिके तिर्यग्जातीय ( पशुपक्षी आदि) के समूह' का १ नाम है (जैसे—मृगयूथम्, गजयूथम्, बर्हियूथम् आदि )।

यूथमिति ॥ यौति, यूयते वा । 'यु मिश्रणे' ( अ० प० से० ) । 'तिथपृष्ठगूथयूथप्रोथा.' ( उ० २।१२ ) इति साधु. । 'यूथ तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति' [ इति मे० ७२।११ ] ॥ ( १ ) ॥ * ॥

पशूनां समजः

समजः (पु), 'केवल पशुओंके समूह' का १ नाम है ( जैसे—गोसमजः आदि )।

पेति ॥ सवीयतेऽत्र । 'अज गतिक्षेपणयो.' (भ्वा० प० से०) । 'समुदोरज. पशुषु' ( ३।३।६९ ) इत्यप् । 'समज पशुवृन्दे ना विपिने तु नपुंसकम्' [ इति मे० ३१।२९ ]॥ ( १ ) ॥ * ॥ एकं 'पशुसंघस्य' ।

अन्येषां समाजः

समाजः (पु), 'पशुसे भिन्न जातिवालोंके समूह' का १ नाम है (जैसे—श्रोत्रियसमाजः, ब्राह्मणसमाजः आदि)।

१. 'प्राकारे मूलबन्धे' इति पा० ।

अन्यथामिति ॥ अन्यथा सघ । सवीयतेऽत्र । घञ् ( ३।३।१९ ) ॥ (१) ॥ * ॥ एक 'पशुभिन्नसघस्य'।

अथ सधर्मिणाम्।

स्यान्निकाय:

निकाय (पु), 'एक जातिवालों के समूह' का १ नाम है (जैसे—ब्राह्मणनिकाय, गोनिकाय, श्रमणनिकाय आदि)।

अयेति ॥ निचीयते । 'चिञ् चयने' ( स्वा० उ० अ० ) । 'सघे चानौत्तराधर्ये' ( ३।३।४२ ) इति घञ् आदे. कश्च । 'निकायस्तु पुमाँल्लक्ष्ये सधर्मिप्राणिसहतौ। [ समुच्चये सहवाना निलय परमात्मनि' इति मे० ११९। ८७-८८]॥ (१) ॥ * ॥ 'वृन्दभेदाना' पृथक्-पृथक्।

पुञ्जराशी तूत्कर. कूटमस्त्रियाम् ॥ ४२ ॥

पुञ्ज, राशि, उत्कर. ( ३ पु ), कूटम् ( न पु ), 'अन्न इत्यादिकों ढेर' क ४ नाम है ( जैसे—धान्यराशि, तृण-राशि आदि )।

पुञ्जेति ॥ पिञ्जयति, पिञ्ज्यते वा । 'पिजि हिंसा-बलादाननिकेतनेषु' (चु० प० स०) । अच् (३।१।१३४), घञ् (३।३।१९) वा । पृषोदरादि (६।३।१०९) । यद्वा—उन्नत्या पुमान् जयति । 'अन्येभ्योऽपि—'(वा० ३।२।१०१) इति ड ।—पुञ्ज्यते पुञ्ज —इति स्वामी ॥(१)॥*॥ अश्नुते । 'अशू व्याप्तौ' (स्वा० आ० से०) । अशिपणाय्यो रुडायलुकौ च ( उ० ४।१३३ ) इतीण् धातोरुडागम । यद्वा—रश्यते । रश सौत्र शब्दार्थ ।—दीप्त्यर्थ —इति स्वामी । बाहुलकादिण् । ण्यन्तात् 'अच इ' ( उ० ४। १३९ ) वा । 'राशिर्मेषादिपुञ्जयो [ इति मे० १२। १६३ ] ॥ ( २ ) ॥ * ॥ उत्कीर्यते । 'कॄ विक्षेपे' (तु० प० से० ) । 'ऋदोरप्' ( ३।३।५७ ) ॥ ( ३ ) ॥*॥ कूटयति, कूट्यते वा । 'कूट आप्रदाने' (चु० आ० से०), 'कूट दाह भस्मणे' ( चु० उ० से० ) वा । अच् ( ३।१। १३४ ), घञ् ( ३।३।१९ ) वा । 'कूट पूर्द्वारय-त्रयो । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयो । निश्चलेऽयोघने[१] राशौ' इति हेमचन्द्र [ २।८५-८६ ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'धान्यादर्युद्धिन्नवृन्दस्य ।

कापोतशौकमायूरतैत्तिरादीनि तद्गणे।

कापोतम्, शौकम्, मायूरम्, तैत्तिरम् ( ४ न ), आदि (आदिसे—कौक्कुटम्, काकम्, आदि), 'कबूतर, सुग्गा, मोर और तीतर' आदि (आदिसे—मुर्गा और कौआ आदि) के समूह का क्रमश १-१ नाम है।

केति ॥ तेषा कपोतशुकमयूरतित्तिरीणा गणे । कपोतानाम्, शुकानाम्, मयूराणाम्, तित्तिरीणा च गण । 'अनुदात्तादेरञ्' (४।२।४४)। शुकात् 'तस्य समूह '(४।२। ३७) इत्यण् । आदिना काकवर्तकोलूकादीना ग्रह । 'का-पोतो रुचके, क्लीव कपोतौघेऽञ्जनान्तरे' [ इति मे० ६१।१०४ ] ॥ (१)॥*॥ 'शौकं शुकगणे स्त्रीणा करणे' [इति मे० ४।३९] ॥ (२) ॥*॥ 'कपोतादीना गणस्य' पृथक् पृथक् ।

गृह्यासक्ता: पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥

छेक, गृह्यक (२ पु), 'पालतू पशु-पक्षी' अर्थात् 'घरमें पाले हुए तोता, मोर, मैना आदि पक्षी और मृग आदि पशुओं' के २ नाम हैं।

गृहेति ॥ छयति, छीयते वा । 'छो छेदने' (दि० प० अ०)। बाहुलकादीकन् । 'छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु' [इति मे० ३।२४]। 'छेकस्त्रिषु विदग्धेषु गृहासक्त-मृगाण्डजे' इति खवर्गादौ रभस ॥ (१) ॥*॥ गृह्यते। 'ग्रह उपादाने' (क्र्या० उ० से०) । 'पदास्वैरिबाह्याप क्षेषु च' (३।१।११९) इति क्यप्। 'गृह्य गुदे ग्रन्थभेदे क्लीब, शाखापुरे स्त्रियाम्। 'गृहासक्तमृगादौ ना, त्रिषु चास्वै-रिपक्षयो'[२] [ इति मे० ११४।१९ ]। ततोऽनुकम्पाया कन् ( ५।३।७६ ) । 'गृह्यको निध्नके छेके' [ इति मे० ७।८४ ] ॥ (२) ॥*॥ द्वे 'गृहासक्तपक्षिणाम्'।

इति सिंहादिवर्गविवरणम् ॥

इति सिंहादिवर्ग ॥ ५ ॥

## अथ मनुष्यवर्ग: ॥६॥

मनुष्या मानुषा मर्त्या मनुजा मानवा नरा ।

मनुष्य, मानुष, मर्त्य, मनुज, मानव, नर (६ पु), 'मनुष्यमात्र' के ६ नाम हैं।

मनुष्या इति ॥ मनोरपत्यम् । 'मनोर्जातावञ्यतौ षुक् च' (४।१।१६१) । स्त्रियाम् '—ह्यगवय—' (वा० ४।१। ६३) इति प्रतिप्रसवेन ङीष् (४।१।६३)। 'हलस्तद्धि-तस्य' ( ६।४।१५० ) इति यलोप । मनुषी । टिड्ढा-' (४।१।१५) इति ङीपि मानुषी । जातिविवक्षाया ङीष (४।१।६३) परत्वादजन्तत्वाद् (४।१।७३) ङीन् ॥ (१) ॥*॥( २ ) ॥ * ॥ म्रियते । 'मृङ् प्राणत्यागे'(तु० आ० अ०)। 'हसिमृग्रिण्—' (उ० ३।८६) इति तन् । स्वार्थे यत् ( वा० ५।४।३६ ) ॥ ( ३ ) ॥*॥ मनोर्जात । 'जनी

१. 'निश्चले योधने' इति पा०।

१ गृहासक्ते मृगादौ' इति पा०।

२ 'पक्षयो ' इति पा०।

प्रादुर्भावे' (दि० आ० से०) । 'पचम्याम्–' (३।२।९८) इति ड ॥ (४) ॥ * ॥ मनोरयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । यद्वा–मनोरपत्यम् । 'ब्राह्मणमाणव—' (४।२।४२) इति ज्ञापकादण् । अनि पुगभावो वा ।—' औपसख्यानिकोऽण्—इति मुकुटश्चिन्त्य । उपसंख्यानाभावात् ॥ (५) ॥*॥ नरति, नृणाति वा। 'नृ नये'(भ्वा०, क्र्या० प० से०) । अच् (३।१।१३४), 'नरोऽज्जे मनुजेऽर्जुने । क्लीव तु रामकर्पूरे' [ इति मे० १२६।४२ ] ।— नयन्ति पूर्वपुरुषानुत्तमा गतिम् । 'नयतेर्डिच्च' ( उ० २। १०० ) इति ऋन् । डित्वाट्टिलोप.—इति मुकुट. । तन्न । एवं सत्यदन्तरूपानुपपत्ते. । ऋदन्तरूपापत्तेश्च । ऋदन्तस्य वक्ष्यमाणत्वाच्च ॥ (६) ॥*॥ षट् 'मनुष्यमात्रस्य' ।

**स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥१॥**

पुमान्, पञ्चजनः, पुरुषः, पूरुषः, ना ( ५ पु ), 'पुरुष' के ५ नाम है।

स्युरिति ॥ पाति । 'पा रक्षणे' (अ० प० अ०) । 'पातेर्डुम्सुन्' ( उ० ४।१७८ ) । क्वचित् 'पूञो डुम्सुन्' इति पाठ । पुनाति । 'पूञ् पवने' (क्र्या० उ० से०) ॥ (१) ॥*॥ पञ्चभिर्भूतैर्जन्यते । घञ् (३।३।१९) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धि । यद्वा–पञ्च जना उत्पादका यस्य ॥ (२) ॥*॥ पुरति । 'पुर अग्रगमने' (तु० प० से०) । 'पुर कुषन्' ( उ० ४।७४ ) ॥ ( ३ ) ॥*॥ पृषोदरादित्वात् (६।३।१०९) दीर्घ । यद्वा–'पूरी आप्यायने' (दि० आ० से०) । बाहुल्कात्कुषन् ॥ (४) ॥ * ॥ नयति । 'नयतेर्डिच्च' (उ० २।१००) इत्यृन् ॥ (५) ॥*॥ पञ्च 'मनुष्यजातौ पुरुषस्य' ।

**स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।**
**प्रतीपदर्शिनी वामा वनिता महिला तथा ॥२॥**

स्त्री, योषित्, अबला, योषा, नारी, सीमन्तिनी, वधूः, प्रतीपदर्शिनी, वामा, वनिता, महिला (११ स्त्री), 'सामान्य स्त्री' के ११ नाम हैं।

स्त्रीति ॥ स्त्यायति गर्भोऽस्याम् । 'स्त्यायतेर्ड्रट्' (उ० ४।१६६ ) । टिलोप. ( ६।४।१४३ ) । यलोप ( ६।१।६६ ) । 'टिड्ढा–' (४।१।१५) इति ङीप् ॥ (१)॥*॥ योषति, युष्यते वा । 'युष' सौत्र सेवायाम् । 'हृसृरुहियुषिभ्य इति.' (उ० १।९७) ॥*॥ योष्यते स्म । णिजन्तात्कर्मणि क्त. (३।२।१०२) । 'स्त्री वधूर्योषिता रामा' इति त्रिकाण्डशेषः [२।६।१] ॥ (२) ॥*॥ अल्प बलमस्याः । अल्पार्थे नञ् ॥ (३) ॥*॥ योषति, योषयति वा । अच् (३।१।१३४) । युष्यते, योष्यते वा । घञ् (३।३।१९) ॥ * ॥ ['जोषा' इति] चवर्गादिपाठे जुषते, जुष्यते वा । 'जुषी प्रीतिसेवनयो' (तु० आ० से०) । अच् (३।१।१३४), घञ् (३।३।१९) वा ।—जुषति—इति मुकुटस्य प्रमाद. ॥ (४) ॥*॥ 'नृनरयोर्वृद्धिश्च' इति शार्ङ्गरवादि(४।१।७३)गणे पाठाङ्डीन् । जातिलक्षणस्य ( ४।१।६३ ) ङीषोऽपवाद', ङीन्सनियोगेन वृद्धिश्च । मुकुटस्तु—नुर्नरस्य वा धर्म आचारोऽस्या. । 'नृनराभ्यां च' ( वा० ४।४।४९ ) इत्यञ् । वृद्धि ( ७।२।११७ ) । 'टिड्ढा–' (४।१।१५) इति ङीप् । नारी । नुर्नरस्य वेयम् । 'तस्येदम्' (४।३।१२०) इत्यणि वृद्धौ (७।२।११७) नारी, इति वा—इत्याह । तन्न[1] । 'नृनराभ्याम्–' इत्यस्याप्रसिद्धत्वात् । 'तस्येदम्' (४।३।१२०) इत्यणि 'नृनरयो.' इत्यस्य वैयर्थ्यप्रसङ्गात् । ङीप्ङीनो. स्वरभेदाच्च ॥ (५) ॥*॥ सीम्नोऽन्तः । 'शकन्ध्वादि.' (वा० ६।१।९४) । सीमन्तोऽस्त्यस्या, इनि (५।२।११५) ॥ (६) ॥*॥ वहति, उह्यते वा । 'वहो धश्च' ( उ० १।८३ ) इत्यू. । मुकुटस्तु—बध्नात्यविषया । 'चमितनिबन्धिभ्य' इत्यू —इत्याह । तन्न । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (उ० १।८०) इति सूत्रे बन्धेरग्रहणात् नलोपविधेरदर्शनाच्च ॥ (७) ॥*॥ प्रतीप द्रष्टु शीलमस्या । अपाङ्गनिरीक्षणात् । 'सुप्यजातौ–' (३।२।७८) इति णिनि. ॥ (८) ॥*॥ वमति स्नेहम् । 'टुवम उद्गिरणे' ( भ्वा० प० से० ) । ज्वलादित्वात् (३।१।१४०) ण । यद्वा–वाम· कामोऽस्त्यस्या । अर्शआद्यच् (५।२।१२७) । 'वाम धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियाम्' [इति मे० ११०।२९-३०] ॥ (९) ॥*॥ वनति । 'वन सभक्तौ' ( भ्वा० प० से० ) । बाहुलकादितन् । यद्वा–वन्यते स्म । क्त. ( ३।२।१०२ ) । 'वनिता जातरागस्त्रीस्त्रियोर्स्त्री[2]त्रिषु याचिते । सेविते' [ इति मे० ६५।१५०–५१] ॥ (१०) ॥*॥ महति, मह्यते वा । 'मह पूजायाम्' (भ्वा० प० से०) । 'सलिकल्यनिमहि–' (उ० १।५४) इतीलच् । 'महिला फलिनीस्त्रियो' [ इति मे० १५३। १२२ ] ॥*॥ महस्योत्सवस्य इला भूमि, इति विग्रहे 'महेला' अपि ॥ (११) ॥*॥ एकादश 'स्त्रीमात्रस्य' ।

**विशेषास्तु**

अब स्त्रियों के भेद कहे जाते हैं।

वीति ॥ स्त्रीणा विशेषा भेदा ।

---

१. भाष्ये 'नुर्धर्म्या नारी' इति स्पष्टमुक्तेर्मुकुटोक्त युक्तमेव प्रतिभाति ।

२. 'स्त्रियोस्त्रिषु च याचिते' इति पा० ।

अङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा

अङ्गना, भीरु, कामिनी, वामलोचना, प्रमदा, मानिनी, कान्ता, ललना, नितम्बिनी, सुन्दरी, रमणी, रामा (१२ स्त्री), ये १२ 'स्त्रियोंके भेद-विशेष' हैं।

अङ्गनेत्यादि ॥ प्रशस्तान्यङ्गान्यस्या. । 'अङ्गात्कल्याणे' ( ग० ५।२।१०० ) इति न. । 'अङ्गनं प्राङ्गणे यानेऽप्यङ्गना तु नितम्बिनी' इति हैम. [३।३८२] ॥ (१) ॥*॥ भयशीला । 'ञिभी भये' (जु० प० अ०) । 'भिय. क्रुक्लुकनौ' (३।२।१७४) इति क्रु. । 'भीरुः स्यात्कातरे नार्याम्' इत्यजय. । 'भीरुरार्ते जने स्त्रियाम्' इति रभस. । 'भीरुरार्तें त्रिलिङ्ग स्याद्वरयोषिति योषिति' [इति मे० १२८।७३] ॥ (२) ॥*॥ भूयान् कामोऽस्या. । इनि (५।२।११५) । 'कामिनी भीरुवन्दयो' [इति मे० ८६। ४९] ॥ (३) ॥*॥ वाम वामो लोचने आलोचने नेत्रे वाऽस्या । यद्वा—वामे सुन्दरे लोचन चक्षुषी यस्या ॥ (४) ॥*॥ प्रमदो हर्षोऽस्त्यस्या । 'प्रमद समदे मत्ते स्त्रियामुन्मदयोषिति' [इति मे० ७७।३५] ॥ (५) ॥*॥ 'मानश्चित्तोन्नतौ गृहे । क्लीब प्रमाणे प्रस्थादौ' [इति मे० ८३। १४-१५] । मानोऽस्त्यस्या । इनि (५।२।११५) । 'मानिनी तु स्त्रिया फल्या मानी मानवति त्रिषु' [इति मे० ९०।७] ॥ (६) ॥ *॥ कम्यते स्म । 'कमु कान्तौ' (भ्वा० आ० से०) । णिङभावे क्त (३।२।१०२) । कान्ता नार्या प्रियगौ स्त्री, शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्याय-पर्यायान्त शिलासु च' [इति मे० ५४।९९] ॥ (७) ॥*॥ ललते । 'लल ईप्सायाम्' । 'चुरादीना वा णिच्' इति पक्षे ल्यु (३।१।१३४), युच् (उ० २।७८) वा । यद्वा—लडति । 'लड विलासे' ( भ्वा० प० से० ) । 'बहुलमन्यत्रापि—' (उ० २।७८) इति युच् । डलयोरेकत्वम् । 'ललना कामिनीनारीभेदजिह्वासु योषिति' इति विश्व-मेदिन्यौ[1] ॥ (८) ॥*॥ प्रशस्तियितो नितम्बो यस्या । इनि (५।२।११५) ॥ (९) ॥*॥ अतीवोनत्ति । 'उन्दी क्लेदने' (रु० प० से०) सुपूर्व. । बाहुलकादर । शकन्ध्वादि. (वा० ६।१।९४) । गौरादि. (४।१।४१) । 'सुन्दरी तरुभिन्नारीभिदो. स्त्री रुचिरेऽन्यवत्' [इति मे० १३९।२३७] ॥ (१०) ॥*॥ रमयति, रम्यते वा । अस्या वा रम्यते । ल्युट् (३।३।११३, ११७ ) ॥ ( ११ ) ॥*॥ रमते । ज्वलादित्वात् ( ३।१ १४० ) ण. ।—रमयति—इति तु मुकुटस्य प्रमाद । ण्यन्तस्य ज्वलादित्वाभावात् । मित्वाण्णिनिमित्तवृद्धचभावाच्च । 'राम. श्याम हलायुधे । पशुभेदे सिते चारौ राघवे रेणुकासुते । राम तु वास्तुके कुष्ठे रामा हिङ्गुलिनीस्त्रियो' इति हैम [ २।३३७-३८ ] ॥ ( १२ ) ॥*॥ उत्कृष्टस्त्रीविशेषाणा पृथक् पृथक् । एते द्वादश भेदा 'स्त्रीणाम्' ।

कोपना सैव भामिनी ।

कोपना, भामिनी (२ स्त्री), 'क्रोध करनेवाली स्त्री' के २ नाम हैं।

कोपेति ॥ कुप्यति तच्छीला । 'कुप क्रोधे' (दि० प० से०) । क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) इति युच् ॥ (१) ॥*॥ अवश्यं भामते । 'भाम क्रोधे' (भ्वा० आ० से०) । 'आवश्यका—' ( ३।३।१७० ) इति णिनि., ग्रह्यादिर्णिनि. (३।१।१३४) वा ॥ (२) ॥*॥ द्वे 'कोपनस्त्रिया.' ।

वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥४॥

वरारोहा, मत्तकाशिनी, उत्तमा, वरवर्णिनी (४ स्त्री), 'गुणवती स्त्री' के ४ नाम हैं।

वरेति ॥ वर आरोहो नितम्बोऽस्या. ॥ (१) ॥*॥ मत्ता क्षीबेव काशते भाति । 'कर्तर्युपमाने' (३।२।७९) इति णिनि ॥*॥ दन्त्यसपक्षे 'कस गतिशासनयो.' ( अ० आ० से०) ॥ (२) ॥*॥ उत्कर्षार्थात् 'उत्'शब्दात्तमप् (५।३।५५) । द्रव्यप्रकर्षाभावात् (५।४।११) ॥ (३) ॥*॥ वरवर्णोऽस्त्यस्या । इनि (५।२।११५) । शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । भर्तृभक्ता च या नारी सा भवेद्वरवर्णिनी' इति रुद्रः ॥ (४) ॥*॥ चत्वारि 'अत्यन्तोत्कृष्टस्त्रिया' ।

कृताभिषेका महिषी

महिषी (स्त्री), 'पटरानी' का १ नाम है।

कृतेति ॥ कृतोऽभिषेकोऽस्या: । मह्यते । 'मह पूजायाम्' ( भ्वा० प० से० ) । 'अविमह्योष्टिषच्' (उ० १।४५) । 'महिषी नृपयोषिति । सैरिभ्यामोषधीभेदे' इति हेमचन्द्रः [ ३।७८२ ] ॥ ( १ ) ॥ * ॥ एकम् 'पट्टाभिषिक्तनृपस्त्रिया' ।

भोगिन्योऽन्या नृपस्त्रियः।

भोगिनी (स्त्री), 'पटरानियोंसे भिन्न रानियों' का १ नाम है।

भोगेति ॥ अतिशयितो भोगोऽस्या । इनि ( ५।२। ११५ ) । 'विहाय महिषीमन्यराजयोषिति भोगिनी' [ इति मे० ९०।३ ] ॥ ( १ ) ॥ * ॥ एकम् 'अन्यराजस्त्रियाम्' ।

---

१. मेदिनीस्थोऽय पाठ (९१।१९) । विश्वे तु 'ललना नाडिकाभेदे जिह्वाया वरयोषिति इति पाठ. ।

पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाथ पुंभूम्नि दाराः

पत्नी, पाणिगृहीती, द्वितीया, सहधर्मिणी, भार्या, जाया (६ स्त्री), दाराः (पु नि० ब० व०),'ब्याही स्त्री'के ७ नाम हैं।

पत्न्यीत ॥ पत्युर्यज्ञे संयोगो यया। दम्पत्योः सहाधिकारात्। 'पत्युर्नो यज्ञसंयोगे' (४।१।३३)॥( १ ) ॥*॥ पाणिर्गृहीतोऽस्याः। 'पाणिगृहीती भार्यायाम्' ( वा० ४। १।५२ ) इति ङीष् ॥ ( २ ) ॥ * ॥ द्वयोः पूरणी। 'द्वेस्तीय' ( ५।२।५४ )। द्वितीया त्रिषिगेहिन्योर्द्वितीयः पूरणे द्वयो' इति हेमचन्द्र [ २।५।१९ ] ॥ (३) ॥*॥ सह धर्मोऽस्त्यस्याः। पत्या सह कर्मस्वधिकारात्। 'धर्मशीलवर्णान्ताच्च' (५।२।१३२) इनीनि। 'वोपसर्जनस्य' ( ६।३।८२ ) इति सहस्य वा सः ॥ ( ४ ) ॥ * ॥ भ्रियते, भूयते वा। 'डुभृञ् धारणपोषणयोः' ( जु० प० अ० )। 'भृ भरणादौ' ( क्र्या० प० से० ) वा ण्यत् ( ३। १।१२४ )। यत्तु—संज्ञायां भृञ ( भ्वा० उ० अ० )। 'ऋहलोर्ण्यत्' ( ३।१।१२४ )—इति स्वामी व्याख्यत्। तन्न। 'संज्ञायां समजनिषद–' ( ३।३।९९ ) इति क्यपा भाव्यं, परत्वात्। संज्ञापर्युदासः (३।१।११२) तु पुल्लिङ्गे सावकाशः। 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' ( प० ४।२।९ ) इति न्यायाद्भृञ एव क्यप्। न डुभृञः ॥ (५) ॥*॥ जायतेऽस्याम्। 'जनेर्यक्' (उ० ४।१११)। 'जायायास्तद्धि जायात्वं यदस्यां जायते पुनः' इति मनु [९।८]॥ (६) ॥ * ॥ दारयन्ति भ्रातॄन्। दॄ विदारणे ( क्र्या० प० से० )। णिजन्तः। 'दारजारौ कर्तरि णिलुक् च' ( वा० ३।३।२० ) इति घञ्। यद्यपि दारयतेः पचाद्यचा ( ३।१।१३४ ) सिद्धम्। स्वरश्च समः। 'कर्षात्वतः–' ( ६।१।१५९ ) इति घञन्तस्यान्तोदात्तत्वात्। तथापि 'अचकावशक्तौ' ( ६।२।१५७ ) इति स्वरबाधनार्थमिदम् ॥ * ॥ दारास्तु [ दारा ] अपि। 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्। क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः' इति व्याडि शुभाङ्कौ ॥ ( ७ ) ॥ *॥ सप्त 'परिणीतायाः स्त्रियाः'।

स्यात्तु कुटुम्बिनी।
पुरन्ध्री

कुटुम्बिनी, पुरन्ध्री ( २ स्त्री ), 'पति-पुत्रवाली' स्त्री के २ नाम हैं।

स्यादिति ॥ कुटुम्बमस्त्यस्याः। इनिः (५।२।११५)। 'कुटुम्बं पोष्यवर्गे च' इत्यमरमाला ॥ ( १ ) ॥*॥ 'पुरं नपुंसकं गेहे' [ इति मे० १२७।५८ ]। पुरं धारयति। 'धृञ धारणे' (भ्वा० उ० अ०)। स्वार्थण्यन्तः। 'संज्ञायां भृतॄवृ–' ( ३।२।४६ ) इति खच्। 'खचि ह्रस्वः' (६। ४।९४ )। गौरादि ( ४।१।४१ )। पृषोदरादिः ( ६। ३।१०९ )। हलन्तात् 'इगुपधात् कि'—इति मुकुट। तन्न। धरतेर्हलन्तत्वेगुपधत्वयोरभावात् ॥ ( २ ) ॥ * ॥ द्वे 'पुत्रादिमत्याः सधवायाः'।

सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥

सुचरित्रा, सती, साध्वी, पतिव्रता (४ स्त्री), 'पतिव्रता स्त्री' के ४ नाम हैं।

सुचेति ॥ शोभनं चरित्रमस्याः ॥ ( १ ) ॥ * ॥ अस्ति एकस्मिन् पत्यौ। 'अस भुवि' (अ० प० से०)। शतृ ( ३।२।१२४ )। 'श्नसोरल्लोपः' (६।४।१११)। 'उगितश्च' ( ४।१।६ ) इति ङीप्। 'सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्' [ इति मे० ५९।६८-६९ ] ॥ ( २ ) ॥ * ॥ साध्नोति परकार्यं परलोकं वा। 'साध संसिद्धौ' ( स्वा० प० अ० )। 'कृवापा–' ( उ० १।१ ) इत्युण्। 'वोतो गुण–' ( ४।१। ४४ ) इति वा ङीप् ॥ ( ३ ) ॥ * ॥ पत्यौ व्रतं नियमोऽस्याः। ॥ पतिर्व्रतमस्याः। पतिशब्दः पतिसेवायां लाक्षणिकः ॥ ( ४ ) ॥ * ॥ चत्वारि 'पतिसेवातत्परायाः'।

कृतसपत्निकाध्यूढाधिविन्ना

कृतसपत्निका, अध्यूढा, अधिविन्ना ( ३ स्त्री ), 'अनेक विवाह किये हुए पुरुषकी पहली स्त्री' के ३ नाम हैं।

कृतेति ॥ सपत्न्येव स्वार्थे कन् ( ५।३।७५ )। कृता सपत्निका यस्याः ॥ * ॥ 'कृतसापत्निका' इति क्वचित् पाठः। सपत्न्या भावः। ष्यञ् ( ५।१।१२४ )। ङीष् ( ४।१।४१ )। यलोपः ( ६।४।१५० )। स्वार्थे कन् (५। ३।७५), ह्रस्वत्वम् ( ७।४।१३ ) च। कृता सापत्निका यस्याः ॥ * ॥ क्वचित् 'कृतसापत्नका' इति पाठः। सपत्न्या आगतम्। 'तत आगतः' (४।३।७४) इत्यण्। स्वार्थे कन् (५।३।७५)। कृतं सापत्नकमस्याः। '–असुपः' ( ७। ३।४४ ) इति पर्युदासान्नेत्वम् ॥ ( १ ) ॥ * ॥ अधि उपरि ऊढमुद्वहनमस्याः। 'अध्यूढा कृतसापत्न्यनार्यामध्यूढ ईश्वरे' इति विश्व-मेदिन्यौ [ ४७।९, ४४।६ ] ॥ ( २ ) ॥ * ॥ अधि उपरि विन्नं लाभोऽस्याः। यद्वा–अधिका विन्ना लब्धा यस्याः ॥ ( ३ ) ॥ * ॥ त्रीणि अनेकभार्यस्य 'प्रथमपूढायाः'।

अथ स्वयंवरा।
पतिंवरा च वर्या च

स्वयंवरा, पतिंवरा, वर्या (३ स्त्री), 'जिसके लिये स्वयंवर किया गया हो उस कन्या' के ३ नाम हैं।

अथेति ॥ स्वयं वृणीते । 'वृङ् संभक्तौ' ( क्र्या० आ० से० )। 'संज्ञायां भृतृवृजि–' ( ३।२।४६ ) इति खच् ॥ ( १ ) ॥ * ॥ एवं पतिं वृणोति ॥ ( २ ) ॥*॥ व्रियतेऽनया । 'अवद्यपण्य–' ( ३।१।१०१ ) इत्यनिरोधे यत् । [ 'वर्या पतिंवरायां स्त्री, वरेण्ये त्रिषु, ना स्मरे' इति मे० ११५।४० ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'स्वच्छाकृतपतिवरणायाः' ।

कुलस्त्री कुलपालिका ॥ ७ ॥

कुलस्त्री, कुलपालिका ( २ स्त्री ), 'कुलीन स्त्री' के २ नाम हैं।

कुलेति ॥ कुलपालिका स्त्री । शाकपार्थिवादि ( वा० २।१।७८) ॥ ( १ )॥ * ॥ कुलं पालयति । 'पाल रक्षणे' ( चु० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । स्वार्थे कन् ( ५।३।७५ ) ॥ ( २ ) ॥ * ॥ द्वे 'अव्यभिचारवारणेन कृतकुलरक्षायाः' ।

कन्या कुमारी

कन्या, कुमारी (२ स्त्री), 'प्रथम अवस्थावाली या कुमारी लड़की' के २ नाम हैं।

केति ॥ कनति कन्यते वा । कनी दीप्तौ' ( भ्वा० प० से० ) । अघ्न्यादि ( उ० ४।११२ ) । 'कन्या नार्यां कुमार्यां च राश्यौषधिविशेषयोः ' इति हैम [ २।५२ ]। 'कन्या कुमारिकानार्योरोषधिराशिभेदयोः ' [ इति मे० ११३।७ ] ॥ ( १ ) ॥ * ॥ कम्यते । 'कमु कान्तौ ( भ्वा० आ० से० ) । कमेः किदुच्चोपधायाः ' ( उ० ३।१३८) इत्यारन् । 'वयसि प्रथमे' (४।१।२०)इति ङीप् । पूर्वत्र तु न। 'कन्यायाः कनीन च' ( ४।१।११६ ) इति लिङ्गात् । यद्वा–कुमारयति । 'कुमार क्रीडायाम्' ( चु० उ० से० ) । अच् ( ३।१।१३४ ) । कुत्सितो मारोऽस्या वा । 'कुमारः स्यात्कुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने [ इति मे० १३२।१३८-१३९ ] । 'कुमारी रामतरुणीनवमालिकानदीभिदि । कन्यापराजितागौरीजम्बूद्वीपेषु च स्मृता' इति विश्वः [ १३९। १७५ । 'जम्बूद्वीपविभागे च' इति हैम ३।५७६] ॥ (२) ॥ * ॥ द्वे 'प्रथमवयस्ककन्यायाः ' ।

गौरी तु नग्निकानागतार्तवा ।

गौरी, नग्निका, अनागतार्तवा (३ स्त्री), 'जिसे रजोधर्म नहीं हुआ हो उस स्त्री' के ३ नाम हैं।

गौरीति ॥ गूयते । 'गुङ् शब्दे' (भ्वा० आ० अ०) । 'ऋज्रेन्द्रा–' (उ० २।२८) इत्यादिना रन्नन्तो निपातितः । गौरादित्वात् ( ४।१।४१ ) ङीष् । गौरी त्वसञ्जातरजःकन्यायां शंकरभार्ययोः । रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगायां विशेषेऽपि यादसांपतियोषिति' [इति मे० १२४। २८-२९ ] ॥ ( १ ) ॥ * ॥ नजते स्म । 'ओलजी व्रीडे' ( तु० आ० से० ) ॥ 'गत्यर्था–' ( ३।४।७२ ) इति क्तः । 'ओदितश्च' ( ८।२।४५ ) इति नत्वम् । स्वार्थे कन् ( ५।३।७५ ) । 'नग्निका तु कुमार्यां स्यात् पुमान् क्षपणबन्दिनोः ' [ इति मे० ९।१०९ ] ॥ ( २ ) ॥ * ॥ अनागतमार्तवं रजोऽस्याः ॥ (३) ॥ * ॥ त्रीणि 'अदृष्टरजस्कायाः ' ।

स्यान्मध्यमा दृष्टरजाः

मध्यमा, दृष्टरजाः ( २ स्त्री ), 'जिसे पहली बार रजोधर्म हुआ हो उस स्त्री' के २ नाम हैं।

स्यादिति ॥ बाल्ययौवनयोर्मध्ये भवा । 'मध्यान्मः '(४। ३।८) । तयोर्मध्ये मा शोभा यस्याम्, वा । 'मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः । व्यक्षरच्छन्दसि तथा' [इति मे० १११।४९-५१] ॥ (१) ॥*॥ दृष्टं रजो यस्याः, यया वा ॥ ( २ ) ॥ * ॥ द्वे 'प्रथमप्राप्तरजोयोगायाः ।

तरुणी युवतिः समे ॥ ८ ॥

तरुणी, युवतिः (२ स्त्री),'जवान स्त्री' के २ नाम हैं।

तेति ॥ तरति । 'तॄ प्लवनतरणयोः' ( भ्वा० प० से० ) । 'ऋो रश्च लो वा' ( उ० ३।५४ ) इत्युनन् । 'वयसि–' (४।१।२०) इति ङीप् । नञ्स्नञीकक्–' ( वा० ४।१।१५ ) इति वा । 'तरुणी तलुनीति च' इति शब्दभेदः । ['तलुनः पवने यूनि युवत्यां तलुनी स्मृता' इति मे० ८७। ७० ] ॥ (१) ॥*॥ यौति । 'यु मिश्रणे' (अ० प० अ०)। 'कनिन्युवृषि–' ( उ० १।१५६ ) इति कनिन् । 'यूनस्तिः' (४।१।७७) । यत्तु—'यौतेः क्तिः' इति क्तिप्रत्ययान्तात् पाक्षिके ङीपि ( ग० ४।१।४५ ) 'युवती'—इति मुकुटो व्याचष्टे । तन्न । यौतेः शत्रन्तात्–' ङीपि ( ४।१।१५ ) युवतिशब्दाद्वा 'सर्वतोऽक्तिन्नर्थात्' (ग० ४।१।१५) इति ङीषा गतार्थत्वात् । उज्ज्वलदत्तादिपूक्तसूत्राभावाच्च । स्त्रीसामान्येऽप्ययम् । 'प्रमदा चेति विज्ञेया युवतिस्तु तथा स्मृता' इति भागुरिः ॥ ( २ ) ॥ * ॥ द्वे 'मध्यमवयसि वर्तमानायाः ' ।

समाः स्नुषाजनीवध्वः

स्नुषा, जनी, वधू ( ३ स्त्री ), 'पतोहू' अर्थात् 'पुत्र, भतीजा या शिष्य आदिकी स्त्री' के ३ नाम हैं।

समा इति ॥ स्नौति । 'ष्णु प्रस्रवणे' (अ० प० से०)। 'स्नुव्रश्चिकृत्यृषिभ्यः कित्' (उ० ३।६६) इति सः ॥ (१)

॥ * ॥ जायते वंशोऽस्याम् । 'जनिघसिभ्यामिण्' (उ० ४। १३०) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धि । 'कृदि-' (ग० ४।१।४५) इति वा ङीप् । 'जनो लोके जगद्भेदे पृथग्जने । जनी स्नुषावनितयो' इति हैम [२।-२६८-६९] । 'जनी सीमन्तिनी वध्वोरुत्पत्तावोषधीभिदि' [इति मे० ८३।६] ॥ (२) ॥ * ॥ वहति । 'वहो धश्च' (उ० १।८३) इत्यू । 'वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि । नवपरिणीतायां च' इति हैम [२।२५१] ॥ (३) ॥ * ॥ त्रीणि 'पुत्रभार्यायाः' ।

चिरण्टी तु सुवासिनी ।

**चिरण्टी, सुवासिनी (२ स्त्री), 'जिसे यौवनके चिह्न कुछ-कुछ मालूम पड़ रहे हों ऐसी विवाहिता स्त्री' के २ नाम हैं ।**

चिरेति ॥ चिरेणाटति पितृगेहाद्भर्तृगेहम् । अच् (३।-१।१४) पृषोदरादि (६।३।१०९) । 'वयस्यचरमे' (वा० ४।१।२०) इति ङीप् ॥ * ॥ चरति । बाहुलकादण्टप्रत्यये 'चरण्टी' इत्येके ॥ * ॥—चिरिणोति । चिरिण्टी । इति स्वामी । तत्र 'चिरि हिंसायाम्' (स्वा० प० से०) इति धातुः; पृषोदरादि । 'चिरिण्टी तु सुवासिन्यां स्याद् द्वितीयवय स्त्रियाम्' [इति मे० ३६।४२] ॥ (१) ॥ * ॥ सु अतीव वसति पितृगृहे तच्छीला । 'सुप्यजातौ-' (३।२।७८) इति णिनिः ॥ २ ॥ 'स्ववासिनी' इत्यपि पाठः । स्वेषु पित्रादिषु वसन् शीलमस्याः । 'स्ववासिन्यां चिरिण्टी स्याद् द्वितीयवयसि स्त्रियाम्' इति रुद्र ॥ (२) ॥ * ॥ द्वे 'प्राप्तयौवनायाः पितृगेहस्थायाः' ।

इच्छावती कामुका स्यात्

**इच्छावती, कामुका (२ स्त्री), 'किसी पदार्थको चाहनेवाली स्त्री' के २ नाम हैं ।**

इच्छेति ॥ इच्छाऽस्त्यस्याः । मतुप् (५।२।९४) ॥ (१) ॥ * ॥ कामयते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'लषपतपद-' (३।२।१५४) इत्युकञ् । 'कामुका कमनेऽदोऽन्यपादपे चातिमुक्तके' [इति मे० ६।६४] ॥ (२) ॥ * ॥ द्वे 'धनादीच्छायुक्तायाः' 'धनादीच्छावत्याः' वा ।

वृषस्यन्ती तु कामुकी ॥ ९ ॥

**वृषस्यन्ती, कामुकी (२ स्त्री), 'अधिक मैथुनकी इच्छा करनेवाली स्त्री' के २ नाम हैं ।**

वृषेति ॥ 'वृषो नरो वृषः काल' इत्यनेकार्थमञ्जरी । वृषं नरं शुक्रलं वेच्छत्यात्मन । 'सुप आत्मन क्यच्' (३।-१।८) । 'अश्वक्षीर-' (७।१।५१) इत्यत्र 'अश्ववृषयोर्मैथुनेच्छायाम्' इति वचनादसुक् । लटः शता (३।२।१२-४) । 'उगितश्च' (४।१।६) इति ङीप् । 'आच्छीनद्योर्नुम्' (७।१।८०) ॥ (१) ॥ * ॥ 'जानपद-' (४।१।४२) इति ङीष् । कामुकी ॥ (२) ॥ * ॥ द्वे 'मैथुनेच्छावत्याः' ।

कान्तार्थिनी तु या याति संकेतं साभिसारिका ।

**अभिसारिका (स्त्री), 'रतिके लिये अपने पति या जारके संकेत किये हुए स्थान पर जानेवाली या जार वा पतिको संकेत-स्थान पर बुलानेवाली स्त्री' का १ नाम है ।**

कान्तेति ॥ अभिसरति । 'सृ गतौ' (भ्वा० प० अ०) ण्वुल् (३।१।१३३) ॥ (१) ॥ * ॥ एकं 'भर्त्रिच्छया रतिस्थानं गच्छन्त्याः' ।

पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्यात्

**पुंश्चली, धर्षणी, बन्धकी, असती, कुलटा, इत्वरी, स्वैरिणी, पांशुला (स्त्री), 'व्यभिचारिणी स्त्री' के ८ नाम हैं ।**

पुंश्चलीति ॥ पुंसो भर्तुः सकाशाच्चलति पुरुषान्तरं गच्छति । 'चल गतौ' (भ्वा० प० से०) । अच् (३।१।-१३४) । गौरादि (४।१।४१) ।—पुमांस वृत्ताच्चालयति च्यावयति । कर्मण्यणन्ताऽङीप् (४।१।१५)—इति मुकुट । तन्न । 'चल कम्पने' इत्यनेन कम्पनादन्यत्र मित्त्वाविधानाद्वृद्धिप्रसङ्गात् । संज्ञापूर्वकत्वं वा मृग्यं ॥ (१) ॥ * ॥—कर्षति मन । 'कृष विलेखने' (भ्वा० प० अ०) । 'कृषेरादेश्च ध' (२।१०४) इत्यनि —इति स्वामी ॥ * ॥ 'धर्षणी' इति वा पाठ । धर्षयति । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०) । ल्युट् (३।३।-११३) । 'धर्षणं स्यात्परिभवे रतेऽसत्यां तु धर्षणी' [इति मे० ४९।५५] ॥ * ॥ 'घर्षणी' इति क्वचित् पाठ । 'आवश्यका-' (३।३।१७०) इति णिनि ॥ (२) ॥ * ॥ बध्नाति मनोऽत्र । 'बन्ध बन्धने' (क्र्या० प० अ०) । ण्वुल् (३।१।१३३) । गौरादि (४।१।४१) [ 'बन्धकः स्याद्विनिमये पुंश्चल्यां स्याच्च बन्धकी' इति मे० ११।१२९ ] ॥ (३) ॥ * ॥ सत्या भिन्ना ॥ (४) ॥ * ॥ अटति । 'अट गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । 'कुलं जनपदे गेहे' इति विश्व [१४९।१०] । कुलस्य अटा । शकन्ध्वादि (वा० ६।-१।९४) । '[1]कुलटा मन शिलायां नेपाल्यामपि योषिति' [इति मे० ३६।३९] ॥ (५) ॥ * ॥ एति तच्छीला 'इण्नशजि-' (३।२।१६३) इति क्वरप् । 'टिड्ढा-'

१. मेदिन्यां 'कुनटी मनः' इति पाठादस्योपन्यासोऽत्रानुपयुक्तः ।

वीरमति ॥ वीरस्य माता ॥ (१) ॥*॥ वीर सूते। पूङ् प्राणिगर्भविमोचने' ( अ० आ० मे० ) 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥(२)॥*॥ द्व वीरस्य मातरि'।

**जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥**

जातापत्या, प्रजाता, प्रसूता, प्रसूतिका (४ स्त्री) 'प्रसूति' अर्थात् 'जिसे सन्तान पैदा किये थोडे दिन बीते हों उस 'जरचा' स्त्री के ४ नाम है।

जातेति ॥ जातमपत्यमस्या ॥ (१) ॥*॥ प्रजायते स्म। अन्तर्भावितण्यर्थोऽत्र जनि । 'गत्यर्था–' (३।४।७२) इति क्त ॥ ( २ ) ॥*॥ प्राक्सविष्ट। पूङुक्त । प्राग्वत् ॥ (३) ॥*॥ स्वार्थे कन् ( ५।३।७५ ) 'सूतिकापुत्रिका–' ( वा० ७।३।४५ ) इतीत्व वा। प्रसूत कुसुमे वत्रीव त्रिपु 'सजातसूनयो' [ इति मे० ६३।१२४ ] ॥ ( ४ )॥*॥ चत्वारि प्रसूताया' ॥

**स्त्री नग्निका कोटवी स्यात्**

नग्निका कोटवी (२ स्त्री), 'नगी स्त्री' के २ नाम हैं।

स्त्रीति ॥ नजते स्म। 'ओलजी व्रीडे' ( तु० आ० से० )। गत्यर्था–' ( ३।१।७२ ) इति क्त । 'ओदितश्च' (८।२।४५) इति नत्वम्। स्वार्थे कन् (५।३।७५)॥ 'नग्नो वन्दिक्षपणयो पुंसि, त्रिपु विवाससि' [ इति मे० ८३।११ ] ॥ ( १ ) ॥ * ॥ कोटनम्। 'कुट कौटिल्ये' ( तु० प० से* )। घञ ( ३।३।१८ )। कोट वाति। आतोऽनप– ( ३।२। ) इति क। गौरादि ( ४।१।४१ ) ॥ * ॥ 'कोट्टवी इति पाठ कुट्ट छेदन' (चु० प० से०)। बाहुल्कादगुण ॥ ( २ ) ॥ * ॥ द्वे 'नग्नाया'।

**दूतीसंचारिके समे।**

दूती, सचारिका (२ स्त्री),'दूती' क २ नाम है।

दूतीति ॥ दवति। दु गतौ' ( भ्वा० प० अ० )। दुनोति। टुदु उपतापे ( भ्वा० प० अ० ) वा। दुतनिभ्या दीर्घश्च (उ० ३।९०) इति क्त। गौरादि ( ४।१।४१ ) यद्वा –दूयते। दूङ परितापे' (दि० आ० से०)। क्तिच ( ३।३।१७४ )। दूयन्तेऽनया वा। बाहुलकात् क्तिन्। कृत्- (ग० ४।१।४५) इति वा ङीप्। गौरादि ( ४।१।४१ ) वा ॥ ( १ ) ॥ * ॥ सचरति। सचारयति वा। चर गतौ' ( भ्वा० प० स० )। ण्वुल् (३।१।१३३ ) '[2]सचारिका तु युगले कुट्टनीघ्राणयोरपि' इति विश्व मदिन्यौ [ २०।२२७ १८।२० ] ॥ ( २ ) ॥*॥ द्वे 'दूत्या'।

१ 'सजातसूतयो' इति पा०।

२. विश्व तु सङ्घाटिका तु युग्मे स्यात्' इति पा०।

**कात्यायन्यर्धवृद्धा या कषायवसनाधवा ॥ १७ ॥**

कात्यायनी (स्त्री), 'अधवृद्ध, गेरुआ कपडा पहनी हुई विधवा स्त्री' का १ नाम है।

केति ॥ कतस्यापत्यम्। 'गर्गादिभ्यो यञ्' ( ४।१।१०५ )। 'सर्वत्र लोहितादि– ( ४।१।१८ ) इति ष्फ। ऋषिपत्नीसदृशत्वात्। कात्यायनो वररुचौ विशेषे च मुने पुमान। 'कषायवस्त्रविधवार्धजरत्युभयो स्त्रियाम्' [ इति मे० ९५।७५ ] ॥ ( १ ) ॥ * ॥ एक 'विशेषणत्रयवत्या'।

**सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका।**

सैरन्ध्री (स्त्री) 'जो दूसरे के घर रहे, स्वतन्त्र हो और केश झाडना गूथना आदि शिल्पकार्य करती हो, उस स्त्री' का १ नाम है।

सायिति ॥ सीर धरति। 'धृञ् धारणे' ( भ्वा० उ० अ० )। मूलविभुजादिक ( वा० ३।२।५ ) बाहुलकान्मुक्। सीरध्रस्येयम्। 'तस्येदम्' (४।३।१२१) इत्यण्। शिल्पकरणात् तत्पत्नीव। यद्वा –स्वैर स्वाच्छन्द्य धरति। प्राग्वत् क। पृषोदरादि ( ६।३।१०९ )। गौरादि (४।१।४१)। सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशास्त्रियाम्' इति दरस्यादी रभस। 'चतु षष्टिकलाभिज्ञा शीलरूपादिसेविनी। प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता' इति कात्य। ( 'सैरिन्ध्री' इति ) इकारमध्यपाठे पृषोदरादित्व ( ६।३।१०९ ) बोध्यम् ॥ ( १ ) ॥ * ॥ एक 'विशेषणत्रयवत्या'।

**असिक्नी स्यादवृद्धा या प्रेष्यान्त पुरचारिणी ॥१८॥**

असिक्नी (स्त्री)), 'जो बूढी नहीं हो, आज्ञा पाकर कहीं आया जाया करे और रनिवास में रहे उस स्त्री' का १ नाम है।

असीति ॥ सिनेति। षिञ् बन्धने' ( भ्वा० उ० अ० )। 'अञ्जिघृसिभ्य क्त' ( उ० ३।८९ )। यद्वा,– सीयते स्म। क्त ( ३।२।१०२ ) द्यतिस्यतिमास्थामित्ति किति' ( ७।४।४० ) इतीत्वम्। सिता शुक्लकेशा। नञ्ङ्कृत्ता। 'छन्दसि क्नमेके' (वा० ४।१।३९) इति तस्य क्न। नान्तत्वान्ङीप ( ४।१।५ )।— द्वे वाक्ये [ 'असिक्न्यन्त पुरप्रेष्या' इति हैमात् ३।१८५]—इत्येके ॥ असिक्नी स्यादवृद्धा या प्रेष्यान्त पुरोषिता' इति कात्य ॥ ( १ ) ॥ * ॥ एक 'कृष्णकेशादित्रिविशेषणाया'।

**वारस्त्री गणिका वेश्या रूपाजीवा**

वारस्त्री, गणिका, वेश्या, रूपाजीवा (४ स्त्री), 'वेश्या' के ४ नाम है।

१ 'काषाय'—'इति पा०।

वारेति ॥ वारस्य वृन्दस्य स्त्री, साधारणत्वात् ॥ ( १ ) ॥ * ॥ गणः समूहोऽस्त्यस्या भर्तृत्वेन । ठन् ( ५।२।११५ ) ॥ गणयति । 'गण सङ्ख्याने' ( चु० उ० से० ) । ण्वुल् ( ३।१।१३३ ) वा ॥ ( २ ) ॥ * ॥ 'वेशो वेश्यागृहे गृहे । नेपथ्ये च' [ इति मे० १६३।१४-१५ ] । वेशेन नेपथ्येन शोभते । 'कर्मवेशाद्यत्' ( ५।१।१०० ) । वेशे वेश्यावाटे भवा वा । 'दिगादिभ्यो यत्' (४।३।५४) वेश प्रवेशोऽस्त्यस्या । 'अन्येभ्योऽपि–' (वा० ५।४।१२० ) इति यद् वा । 'वेश्या वेश्यागृहे क्लीब गणिकायां तु योषिति' [ इति मे० ११७।५६ ] । ॥ * ॥ 'वेष्या' इति मूर्धन्यमध्यपाठोऽपि । वेवेष्टि । 'विष्लृ व्याप्तौ' ( जु० उ० अ० ) । अघ्न्यादि ( उ० ४।११२ ) ॥ ( ३ ) ॥ * ॥ रूपमाजीवोऽस्या ॥ ( ४ ) ॥ * ॥ चत्वारि 'वेश्यायाः' ।

अथ सा जनैः ।

सत्कृता वारमुख्या स्यात्

वारमुख्या (स्त्री) 'सौन्दर्य और गान आदि से बड़े लोगों के द्वारा प्रतिष्ठा पानेवाली वेश्या' का १ नाम है ।

अथेति ॥ वारे वेश्यावृन्दे मुख्या ॥ ( १ ) ॥ * ॥ एकम् 'जनैः सत्कृतवेश्यायाः' ।

कुट्टनी शंभली समे ॥१९॥

कुट्टनी, शम्भली (२ स्त्री), 'कुटिनी' के २ नाम हैं ।

कुट्टेति ॥ कुट्टयति । 'कुट्ट छेदने' (चु० प० से०)। ल्युट् ( ३।३।११३ ) ॥ ( १ ) ॥ * ॥ शं सुखं भलते । 'भल परिभाषणे' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । गौरादि ( ४।१।४१ ) । 'शाल्मलि शमलीशालशुक–' इति शमेदात्तालव्यादि ॥ * ॥ स भलते । इति दन्त्यादि [ संभली ] अपि ॥ ( २ ) ॥ * ॥ द्वे 'परनारीं पुंसा संयोजयित्र्याः' ।

विप्रश्निका त्वीक्षणिका दैवज्ञा

विप्रश्निका, ईक्षणिका, दैवज्ञा (३ स्त्री), 'हाथ-पैर आदि की रेखाओं को देखकर शुभाशुभ लक्षणोंको जाननेवाली स्त्री' के ३ नाम हैं ।

विप्रेति ॥ विविधः प्रश्नोऽस्त्यस्याः । ठन् ( ५।२।११५ ) ॥ ( १ ) ॥*॥ शुभाशुभयोरीक्षणमस्त्यस्याः । ठन् ( ५।२।११५ ) ॥ ( २ ) ॥ * ॥ दैवं शुभाशुभं जानाति । 'आतोऽनुप–' ( ३।२।३ ) इति क । 'दैवज्ञो गणके पुमान् । दैवज्ञेक्षणिकायां स्त्री' [ इति मे० ३३।४-५ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'लक्षणादिना शुभाशुभे जानत्याः' ।

अथ रजस्वला ।

स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि

रजस्वला, स्त्रीधर्मिणी, अविः, आत्रेयी, मलिनी, पुष्पवती, ऋतुमती, उदक्या (८ स्त्री) 'रजस्वला स्त्री' के ८ नाम हैं ।

अथेति ॥ रजोऽस्त्यस्याः । 'रज कृष्या–'(५।२।११२) इति वलच् । 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वाद्रुत्वम् ॥ ( १ ) ॥ * ॥ स्त्रीधर्मो रजोऽस्त्यस्याः । इनिः ( ५।२।११५ ) ॥ ( २ ) ॥*॥ अवति लज्जया । 'अव रक्षणादौ' ( भ्वा० प० से० ) । 'अविन्सृवृतृभ्य ई' ( उ० ३।१५८ ) ॥ * ॥ 'अविः स्त्रीधर्मिणी विद्यात्' इति कात्यात् ( अविः ) ह्रस्वान्तापि । 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) ॥ ( ३ ) ॥ * ॥ अत्रेरपत्यम् । 'इतश्चानिञः' (४।१।१२२) इति ढक् । आत्रेयीवागम्यत्वात् । 'आत्रेयो मुनिरात्रेयी पुष्पवत्या सरिद्भिदि' इति हैमः [ ३।५१० ] ॥ ( ४ ) ॥ * ॥ मलमस्त्यस्याः । इनि ( ५।२।११५ ) । 'मलिन कृष्णदोषयो । मलिनी रजस्वलायाम्' इति हैम [ ३।४२६ ] ॥ ( ५ ) ॥ * ॥ पुष्पं रजोऽस्त्यस्याः । मतुप् (५।२।९४) ॥ (६) ॥ * ॥ ऋतुरस्त्यस्याः । मतुप् (५।२।९४ ) ॥ ( ७ ) ॥ * ॥ उदकमर्हति 'संज्ञायाम्' ( ? ) इति यत् ॥ ( ८ ) ॥ * ॥ अष्टौ 'रजस्वलायाः' ।

स्याद्रजः पुष्पमार्तवम् ।

रजः, पुष्पम्, आर्तवम् (३ न), 'स्त्रियोंके रज' के ३ नाम हैं ।

स्यादिति ॥ रज्यतेऽनेन । 'भूरञ्जिभ्यां कित्' ( उ० ४।२१६ ) इत्यसुन् । 'रज क्लीवं गुणान्तरे । आर्तवे च परागे च रेणुमात्रे च दृश्यते' [ इति मे० १०२।३१-३२ ] ॥ ( १ ) ॥ * ॥ पुष्प्यते । 'पुष्प विकसने' (दि० प० से०)। घञ् ( ३।३।१९ ) । 'पुष्पं [1]विकासिकुसुमस्त्रीरज सु नपुंसकम्' [ इति मे० १०२।८ ] ॥ ( २ ) ॥*॥ ऋतुरेव । प्रज्ञाद्यण् । ( ५।४।३८) 'आर्तवं [2]स्त्रीरजे पुष्पे क्लीबं स्यादृतुजे त्रिषु' [ इति मे० १५९।३१ ] ॥ ( ३ ) ॥*॥ त्रीणि 'स्त्रीपुष्पस्य' ।

श्रद्धालुर्दोहदवती

श्रद्धालुः, दोहदवती (२ स्त्री), 'गर्भ रहने पर किसी वस्तु या कार्य को चाहनेवाली स्त्री' के २ नाम हैं ।

---

१ 'विकाशकुसुम' इति पा० ।
२. 'स्त्रीरज.पुष्पे' इति पा० ।

श्रेति ॥ श्रद्दत्ते तच्छीला। 'स्पृहिगृहि-' (३।२।१५८) इत्यालुच्। 'श्रद्धालुर्दोहदिन्या स्त्री श्रद्धायुक्ते च वाच्यवत्' [इति मे० १५४।१३६] ॥ (१) ॥ * ॥ दोहद गर्भिण्यभिलाषोऽस्त्यस्या। मतुप् (५।२।९४) ॥ (२) ॥ * ॥ द्वे (गर्भवशात्) 'अभिलाषविशेषवत्या'।

निष्कला विगतार्तवा ॥ २१ ॥

निष्कला विगतार्तवा (२ स्त्री), 'रजोधर्म से हीन स्त्री' के २ नाम हैं।

नीति ॥ 'कल शुक्रे त्रिष्वजीर्णे माव्यक्तमधुरध्वनौ' [इति मे० १४५।५६] ॥ कलान्निष्क्रान्ता। 'निरादय क्रान्ताद्यर्थे' (वा० २।२।१८) इति समास। निर्गत कल शुक्रमस्या वा। 'निष्कल तु कलाशून्य नष्टवीर्ये तु वाच्य वत्' [इति मे० १५२।१०३] ॥ (१) ॥ * ॥ विगत मार्तव रजोऽस्या ॥ (२) ॥ * ॥ द्व 'रजोहीनाया'।

आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी।

आपन्नसत्त्वा, गुर्विणी, अन्तर्वत्नी, गर्भिणी (४ स्त्री), 'गर्भवती स्त्री' के ४ नाम ह।

आपेति ॥ आपन्न सत्त्वो जन्तुरनया अस्या वा ॥ (१) ॥ * ॥ गुरुस्त्रिलिङ्ग्या महति दुर्जरालघुनोरपि' [इति मे० १२४।२५] ॥ गुरुर्दुर्जरोऽलघुर्वा गर्भोऽस्त्यस्या। व्रीह्यादीनि (५।२।११६)। सज्ञापूर्वकत्वान्न गुण (६।४।१४६)॥ यद्वा—गर्वति। गर्वेरत उच्च' (उ० २।५४) इतीनन। गौरादि (४।१।४१) ॥ (२) ॥ * ॥ अन्तरस्त्यस्या गर्भ। अन्तर्वत्पतिवनोर्नुक् (४।१।३२) इति साधु ॥ (३) ॥ * ॥ गर्भोऽस्त्यस्या। इनि (५।१।११५) ॥ (४) ॥ * ॥ चत्वारि 'गर्भिण्या'।

गणिकादेस्तु गाणिक्य गार्भिण यौवत गणे ॥ २२ ॥

गाणिक्यम्, गार्भिणम्, यौवतम् (३ न), 'वश्याओं, युवतियों आर गर्भिणियों के समूह' का क्रमश १-१ नाम है।

गेति ॥ गणिकाना समूह। गणिकायाश्च यञ् वाच्य' (वा० ४।२।४०) ॥ (१) ॥ * ॥ गर्भिणीना समूह। 'भिक्षादिभ्योऽण् (४।२।३८) भस्याढे तद्धिते' (वा० ६।३।३५) इति पुवद्भाव। नस्तद्धिते (६।४।१४४) इति टेर्लोपे प्राप्ते 'इनण्यनपत्ये' (६।४।१६४) इति प्रकृतिभाव ॥ (१) ॥ * ॥ युवतीना समूह। 'भिक्षादिभ्योऽण्' (४।२।३८)। भस्याढ तद्धिते' (वा० ६।३।३५) इति पुवद्भाव। यौते शत्रन्तात् 'उगितश्च' (४।१।६) इति ङयन्तो युवतीशब्दोऽयम्। 'यूनस्ति' (४।१।७७) इति त्यन्तस्य तु अणि (४।२।३७) विवक्षिते पुवद्भावे (वा० ६।३।३५) 'अन्' (६।४।१३७) इति प्रकृतिभावे च 'यौवनम्' इत्येव रूपम्। न च—भिक्षादिषु (४।२।३८) 'युवति' शब्दपाठसामर्थ्यान्न पुवत्त्वम्। अन्यथा पुवद्भावेन तन्निवृत्तावनुदात्तादित्वाभावात् 'अञ' (४।२।४४) अप्राप्तौ 'तस्य समूह' (४।२।३७) इत्यणि सिद्धे भिक्षादिपाठवैयर्थ्यात्—इति वाच्यम्। भिक्षादिषु 'युवति' शब्दपाठस्य ("भिक्षादिषु युवतिग्रहणानर्थक्य पुवद्भावस्य सिद्धत्वात्प्रत्ययविधौ' इत्यादिग्रन्थेन) भाष्ये (४।२।३८) प्रत्याख्यानात्। एतेन—'युवत्या अपुवत्' इति गणपाठात्—इति स्वामी—युवतीशब्दस्य भिक्षादिषु पाठाङ्गीकारकृतो मतभेद—इति मुकुटश्च प्रत्युक्त ॥(१) ॥ * ॥ एकैकम् 'समूहस्य'।

पुनर्भूर्दिधिषूरूढा द्वि.

पुनर्भू, दिधिषू (२ स्त्री), 'दो बार ब्याही हुई स्त्री' के २ नाम ह।

पुनरिति ॥ पुनर्भवति सस्कृता। क्विप् (३।२।७६)॥ (१) ॥ * ॥ दधाति पापम्। 'डुधाञ् धारणपोषणयो' (जु० उ० अ०)। धिष्यते। 'धिष शब्दे' (जु० प० से०)। 'अन्दूदृम्भू-' (उ० १।९३) इति साधु। यद्वा,—दिधिं धैर्यं स्यति। 'षोऽ तकर्मणि' (दि० प० अ०)। प्राग्वत् ॥ (२) ॥ * ॥ द्वौ वारौ ऊढा। 'द्वित्रिचतुर्भ्यः सुच्' (५।४।१८) 'अक्षता च क्षता चैव पुनर्भू सस्कृता पुन' (याज्ञवल्क्य १।६७) ॥ * ॥ द्वे 'द्विवार वृताया'।

तस्या दिधिषू पतिः।

दिधिषु (पु०), 'दो बार ब्याही हुई स्त्री के पति' का १ नाम है।

तेति ॥ तस्या दिधिष्वा। दिधिषूमात्मन इच्छति। 'सुप आत्मन क्यच्' (३।१।८)। क्विप् (३।२।१७८)। 'पुनर्भूपतिरस्त्रञ्च पुनर्भूर्दिधिपूस्तथा' इत्येषोऽप्युदन्त-इति स्वामी ॥ * ॥ मुकुटस्तु [दिधिषुम्] ह्रस्वमाह बाहुलकात् ॥ (१) ॥ * ॥ एकम् 'द्व्यूढापत्यु'।

मनुस्तु—'ज्येष्ठाया यद्यनूढाया कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा [?] दिधिषूर्मता' ( ? )इत्याह।

स तु द्विजोऽग्रेदिधिषू. सैव यस्य कुटुम्बिनी ॥ २३ ॥

अग्रेदिधिषु। (पु) 'दो बार ब्याही हुई स्त्री के द्विजाति (ब्राह्मण, क्षत्रिय और वैश्य) वर्णवाले पति' का १ नाम है।

३. 'निष्कलस्तु' इति पा०।

१ कोष्ठस्थ पाठ निर्णयसागरीय।

स इति ॥ अग्रे प्रधानं दिधिपूर्यस्य 'अग्रे' इति विभक्तिप्रतिरूपको निपातः। समासान्तविधेरनित्यत्वान्न कप् ( ५।४।१५३ ) ॥ ( १ ) ॥ * ॥ द्विज क्षत्रियादिरपि। 'दिधिपूः परपूर्वाग्रेदिधिषूस्तत्पुरर्धिकः' इति नाममाला ॥ * ॥ एकं 'पुनर्भूप्रधानभार्यस्य'।

**कानीनः कन्यकाजातः सुतः**

**कानीनः (पु), 'क्वारी स्त्री के पुत्र' का १ नाम है।**

कानीति ॥ कन्याया अपत्यम्। 'कन्यायाः कनीन च' (४।१।११६) इत्यण्। 'कानीनः कन्यकासुते। कर्णे व्यासे' इति हेमचन्द्रः [ ३।३९४ ] ॥ ( १ ) ॥*॥ कन्यकया जातः ॥ (२) ॥*॥ द्वे 'अनूढापत्यस्य'।

**अथ सुभगासुतः।**

**सौभागिनेयः**

**सुभगासुतः, सौभागिनेयः (२ पु), 'सौभाग्यवती स्त्री के पुत्र' के २ नाम हैं।**

अथेति ॥ सुभगाया सुतः ॥ ( १ ) ॥*॥ सुभगाया अपत्यम्। 'कल्याण्यादीनामिनङ्' (४।१।१२६) इति ढक्। 'हृद्भग-' (७।३।१९) इत्युभयपदवृद्धि ॥ (२) ॥*॥ द्वे 'सुभगापुत्रस्य'।

**स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥**

**पारस्त्रैणेयः (पु), 'परस्त्री के पुत्र' के २ नाम हैं।**

स्यादिति ॥ परस्त्रिया अपत्यम्। प्राग्वत्। 'अनुशतिकादीनां च' (७।३।२०) इत्युभयपदवृद्धि ॥ (१) ॥*॥ एकं 'परभार्यापुत्रस्य'।

**पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः। सुतः**

**पैतृष्वसेयः, पैतृष्वस्रीयः (२ पु), 'फूआ का पुत्र अर्थात् फुफेरे भाई' के २ नाम हैं।**

पैत्रिति ॥ पितृष्वसुरपत्यम्। 'ढकि लोपः' ( ४।१।१३३) ॥ ( १ ) ॥*॥ 'पितृष्वसुश्छण्' (४।१।१३२) ॥ (२) ॥*॥ द्वे 'पितृष्वसुः सुतस्य'।

**मातृष्वसुश्चैवम्**

**इसी प्रकार 'मौसी का लड़का अर्थात् मौसेरे भाई' के मातृष्वसेयः, मातृष्वस्रीयः (२ पु), २ नाम हैं।**

मात्रिति ॥ मातृष्वसुरपत्यम्। 'मातृष्वसुश्च' (४।१।१३४) इति प्राग्वत्। ( मातृष्वसेय। मातृष्वस्रीयः ) ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'मातृष्वसुः सुतस्य'।

**वैमात्रेयो विमातृजः ॥ २५ ॥**

**वैमात्रेय, विमातृजः (२ पु), 'सौतेली मां का लड़का' के २ नाम हैं।**

वैमेति ॥ विरुद्धा माता। 'प्रादयो गता-'(वा० २।१।१८) इति समासः। विमातुरपत्यम्। शुभ्रादित्वात् ( ४।१।१२३) ढक् ॥ (१) ॥*॥ विमातुर्जातः। 'पञ्चम्यामजातौ' ( ३।२।९८ ) इति डः ॥ ( २ ) ॥ * ॥ द्वे 'अपरमातृसुतस्य' ॥

**अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः। कौलटेयः कौलटेरः**

**बान्धकिनेयः, बन्धुलः, असतीसुतः, कौलटेरः, कौलटेयः (५ पु), 'व्यभिचारिणी स्त्री के पुत्र' के ५ नाम हैं।**

अथेति ॥ बन्धक्या अपत्यम्। 'कल्याण्यादीनामिनङ्' (४।१।१२६) इति ढक् ॥ (१) ॥*॥ बन्धून् लाति ॥ (२) ॥*॥ असत्या सुतः ॥ (३) ॥*॥ कुलटाया अपत्यम्। 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (४) ॥*॥ 'क्षुद्राभ्यो वा' (४।१।१३१) ढक् ॥ ( ५ ) ॥*॥ यत्तु-'कुलटाया वा' (४।१।१२७) इति ढक्—इति मुकुटः। तन्न। अनेनेनङो विकल्पनात् ॥*॥ पञ्च 'कुलटायाः पुत्रस्य'।

**भिक्षुकी तु सती यदि ॥ २६ ॥**

**तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः।**

**कौलटिनेयः, कौलटेयः (२ पु), 'भीख मांगने के लिये घर घर घूमनेवाली सदाचारिणी स्त्री के पुत्र' के २ नाम हैं।**

भीति ॥ कुलटाया अपत्यम्। 'कुलटाया वा' (४।१।१२७) 'इतीनङ् वा। 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) क्षुद्रात्वाभावान्न ढक्। अङ्गहीना शीलहीना हि क्षुद्रा ॥ (१) ॥*॥ ( २ ) ॥*॥ द्वे 'सत्या भिक्षार्थं गेहं गेहमटन्त्या पुत्रस्य'।

**आत्मजस्तनयः सूनुः सुतः पुत्रः**

**आत्मज, तनय, सूनु, सुत, पुत्रः (५ पु), 'पुत्र' के ५ नाम हैं।**

आत्मेति ॥ आत्मनो देहाज्जातः। 'पञ्चम्याम्-' (३।२।९८) इति डः ॥ ( १ ) ॥*॥ तनोति कुलम्। तन्यते वा। 'तनु विस्तारे' (तु० उ० से०)। 'वलिमलितनिभ्यः कयन्' (उ० ४।९९) ॥ (२) ॥*॥ सूयते। 'षुङ् प्राणिप्रसवे' ( दि० आ० से० )। 'सुव क्नित्' ( उ० ३।३५ ) इति नुः। 'सूनु पुत्रेऽनुजेऽर्के ना' [ इति मे० ८४।२५ ] ॥ (३) सूयते स्म। 'षु प्रसवे' (भ्वा० प० अ०)। क्त (३।२।१०२)।—सुवति—इति स्वामी। तन्न। दीर्घश्रवणप्र-

मङ्गात्। तस्याप्राप्तेश्च। सुनस्तु पार्थिवे पुत्रे, स्त्र्यपत्ये तु तु सुता स्मृता [ इति मे० ५६।७२ ] ॥ ( ४ ) ॥ * ॥ पुनाति पूयते वा। 'पूञ् पवने' (क्र्या० उ० से०)। 'पुवो ह्रस्वश्च' (उ० ४। १६५) इति क्त। यद्वा—पुन्नरकात्त्रायते। 'सुपि–' ( ३।२।४ ) इति क। 'पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् 'पुत्र' इति प्रोक्तः स्वयमेव स्वयम्भुवा' (मनु ९।१३८) ॥ (५) ॥ * ॥ पञ्च 'पुत्रस्य'।

**स्त्रियां त्वमी ॥ २७ ॥**

**आहुर्दुहितरं सर्वे**

दुहिता ( =दुहितृ-स्त्री ), और 'आत्मज' आदि ५ शब्द स्त्रीलिङ्ग होने पर (५ स्त्री), 'लड़की, पुत्री' के ६ नाम हैं।

स्त्रियामिति ॥ अमी आत्मजाद्याः स्त्रियां वर्तमानाः सन्तो दुहितरं वदन्ति शार्ङ्गरवादित्वात् (४।१।७३) ङीनि 'पुत्री'।– गौरादौ ( ४।१।४१ ) पुत्री —इति स्वामिनः प्रमादः। सुता तु' दुहिता पुत्री इति त्रिकाण्डशेष [२।६।७] ॥ (५) ॥*॥ दोग्धि। दुह प्रपूरणे (अ०उ० अ०) वहति। 'दह भस्मीकरणे (भ्वा० प० अ०)। 'नप्तृनेष्टृत्व– (उ० २।९५) इति साधु। स्वस्रादित्वात् (४।१।१०) न ङीप् (४।१।५) ॥ (६) ॥*॥

**अपत्यं तोकं तयोः समे।**

अपत्यम्, तोकम् (२ न), 'सन्तान' अर्थात् 'लड़के या लड़की' के नाम हैं।

अपेति ॥ न पतन्ति पितरोऽनेन। 'पत्लृ गतौ (भ्वा० प० से०)। बाहुलकात्। अघ्न्यादि (उ० ४।११२) वा ॥ ( १ ) ॥*॥ तौति। 'तु' सौत्रो हिंसावृत्तिपूर्तिषु। बाहुलकात् क। तोकं संतानसुतयोः इति हैम [२।१०] ॥ (२) ॥*॥ तयोस्तनयदुहित्रोः। समे=समानलिङ्गे।

**स्वजाते त्वौरसोरस्यौ**

औरस उरस्य (२ पु), 'अपने खास लड़के' के २ नाम हैं।

स्वेति ॥ उरो वक्षसि च श्रेष्ठे [इति मे० १७१।१९] उरसा निर्मितः। उरसोऽण् च' ( ४।४।९४ ) इत्यण् ॥ (१) ॥*॥ चाद्यत् ॥ ( २ ) ॥*॥ स्वस्माज्जातः, इति कुण्डगोलकादिवारणम् ॥*॥ द्वे 'स्वस्माज्जातस्य पुत्रस्य'।

**तातस्तु जनकः पिता ॥ २८ ॥**

तात, जनक, पिता (३ पु), 'पिता' के ३ नाम हैं।

तातेति ॥ तनोति। 'दुतनिभ्यां दीर्घश्च' (उ० ३।९०) इति क्त। 'अनुदात्त–' ( ६।४।३७ ) इति नलोपः।— 'तानपतिजतुं सुरता' इति तनोतेः क्त, नलोपदीर्घौ च इति मुकुटस्तु चिन्त्यः। तादृशसूत्राभावात्। 'तातोऽनुकम्प्ये पितरि' इति हेमचन्द्रः [२।१७३] ॥(१)॥*॥ जनयति। ण्वुल् (३।१।१३३)। 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः। जनकः पितृभूपयोः' इति हैमः [३।४२] ॥ (२) ॥*॥ पाति। 'नप्तृनेष्टृ– ( उ० २।९५ ) इति साधुः। — पिशादयः' इति तृच् इत्वं च—इति सुभूतिः। तन्न। तादृशसूत्राभावात् ॥ (३) ॥*॥ त्रीणि 'पितुः'।

**जनयित्री प्रसूर्माता जननी**

जनयित्री, प्रसू, माता, जननी, ( ४ स्त्री ), 'माता' के ४ नाम हैं।

जनेति ॥ जनयति। तृच (३।१।१३३)। 'ऋन्नेभ्यो ङीप्' ( ४।१।५ ) ॥*॥ अन्तर्भावितण्यर्थात् 'जनित्री' ॥ ( १ ) ॥ * ॥ प्रसूयते। 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥ ( २ ) ॥*॥ मान्यते। 'मान पूजायाम्' (भ्वा० आ० से० ) माति वा। माति गर्भोऽस्यां वा। 'मा माने' ( अ० प० अ० )। 'नप्तृनेष्टृ–' ( उ० २।९५ ) इति साधुः। 'माता गौर्दुर्गा जननी मही। 'मातरश्च ब्रह्माण्याद्याः' इति हैमः [२।१८९-९०]॥ (३) ॥*॥ जनयति। 'कृत्यल्युट–' ( ३।३।११३ ) इति ल्युट् ॥ ( ४ ) ॥*॥ चत्वारि 'जनन्याः'।

**भगिनी स्वसा।**

भगिनी, स्वसा (२ स्त्री), 'बहन' के २ नाम हैं।

भेति ॥ भगं कल्याणं यत्नो वा इच्छा वाऽस्त्यस्याः। इनि (५।२।११५) ॥ (१) ॥*॥ सुष्ठु अस्यति, अस्यते वा। 'असु क्षेपणे' ( दि० प० से० )। 'स्वावसे' (उ० २।९६) ऋन् ॥ (२) ॥*॥ द्वे 'स्वसुः'।

**ननान्दा तु स्वसा पत्युः**

ननान्दा (स्त्री), 'ननद' अर्थात् 'पतिकी बहन' का १ नाम है।

ननेति ॥ न नन्दति-न तुष्यति। न नन्दयति भ्रातृजायाम्' इति वा। 'नञि च नन्दे' (उ० २।९८) इति ऋन् ॥ * ॥ केचित् पूर्वसूत्रात् ( उ० २।९७ ) वृद्धिग्रहणमनुवर्तयन्ति। 'ननन्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति रभसः।—'नञि च नन्देर्दीर्घश्च' —इति मुकुटः। तन्न। उज्ज्वलदत्तादावभावात् ॥ (१) ॥*॥ एकं 'भर्तृभगिन्याः'।

**नप्त्री पौत्री सुतात्मजा ॥ २९ ॥**

नप्त्री, पौत्री, सुतात्मजा (३ स्त्री), 'नातिन' अर्थात् 'पुत्र की या पुत्री की लड़की' के ३ नाम हैं।

---

१ समदुर्दुहिता, पुत्रो द्वितीय—' इति पाठस्त्रिकाण्डशेषे ॥

नप्त्रीति ॥ न पतन्ति पितरोऽनेन । 'नप्तृनेष्टृ–' उ० २।९५ ) इति साधु । 'ऋन्नेभ्यो ङीप्' (४।१।५) । 'नप्ता, नप्त्री च पौत्रिका' इति रभस ॥ (१)॥*॥ पुत्रस्य पुत्र्याश्चापत्यम् । 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' ( ४।१ १०४) ॥ (२) ॥*॥ सुतस्य सुतायाश्चात्मजा ॥ (३) ॥*॥ त्रीणि 'सुतकन्यकयोरपत्यस्य' ।

भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।

याता (स्त्री), 'गोतिनी' अर्थात् 'पति के भाइयों की स्त्री' का १ नाम है।

मेति ॥ यतते । 'यती प्रयत्ने' (भ्वा० आ० से०) । 'यतेर्वृद्धिश्च' ( उ० ३।९७ ) इत्यृन् ॥ (१) ।*॥ एकम् 'परस्परं भ्रातृभार्याणाम्' ।

प्रजावती भ्रातृजाया

प्रजावती, भ्रातृजाया (२ स्त्री), 'भाई की स्त्री भौजाई' के २ नाम हैं।

प्रेति ॥ प्रजाऽस्त्यस्याः । मतुप् (५।२।९४) । यत्तु— जायायां प्रविश्य पुन पुनर्जायते । 'उपसर्गे च संज्ञायाम्' (३।२।९९) इति ड । प्रज पतिस्तद्योगात् मतुप् ( ५।२। ९४) 'शरादीनां च' ( ६।३।१२० ) इति दीर्घः—इति मुकुटः । तन्न । 'प्रज ' इत्यस्य सञ्ज्ञात्वेनाप्रसिद्धत्वात् । अस्मदुक्तरीत्या निर्वाहेनोक्तकल्पनाया व्यर्थत्वाच्च ॥ (१) ॥*॥ भ्रातुर्जाया । (२) ॥*॥ द्वे 'भ्रातृपत्न्या ।

मातुलानी तु मातुली ॥ ३० ॥

मातुलानी, मातुली (२ स्त्री), 'मामी' अर्थात् 'मामाकी स्त्री' के २ नाम हैं।

मेति ॥ मातुलस्य स्त्री । पुंयोगात्–' (४।१।४८) इति ङीप् 'मातुलोपाध्याय–' [वा० ४।१।४९] इत्यानुग् वा ॥ (१) ॥*॥ (२)॥*॥ द्वे 'मातुलभार्यायाः' ।

पतिपत्न्योः प्रसूः श्वश्रूः

श्वश्रूः (स्त्री), 'सास' अर्थात् 'पति या स्त्री की माता' का १ नाम है।

पेति ॥ पत्युर्माता पत्न्या श्वश्रूः । पत्न्या माता पत्यु श्वश्रूः । श्वशुरस्य स्त्री । 'श्वशुरस्योकाराकारलोपश्च' इत्यूङ् पुंयोगलक्षणङीषोऽपवाद ॥ (१) ॥*॥ एकम् 'श्वश्र्वाः' ।

श्वशुरस्तु पिता तयोः ।

श्वशुरः (पु), 'ससुर' अर्थात् 'पति या स्त्री के पिता' का १ नाम है।

श्वेति ॥ तयोः पतिपत्न्यो पिता परस्परं श्वशुरः । 'शु' इति आश्चर्ये पूजायां वा। सु आशु अश्नुते, अश्यते वा । 'अशु व्याप्तौ संघाते च' (स्वा० आ० से०)। 'शावशेराप्तौ' ( उ० १।४४ ) इत्युरन् । द्वितालव्य 'श्वश्रूः शिशुश्वशुर' इति शभेदात् ॥ (१) ॥*॥ एकम् 'श्वशुरस्य' ।

पितुर्भ्राता पितृव्यः स्यात्

पितृव्यः (पु), 'चाचा' अर्थात् 'पिताके भाई' का १ नाम है।

पित्रिति ॥ 'पितृव्यमातुल–' (४।२।३६) इति निपातित ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'पितृव्यस्य' ।

मातुर्भ्राता तु मातुलः ॥ ३१ ॥

मातुलः (पु), 'मामा' अर्थात् 'माताके भाई' का १ नाम है।

मेति ॥ ('पितृव्यमातुल–' (४।१।३६) इति निपातित । ) 'मातुलो मदनद्रुमे । धत्तूरेऽहिव्रीहिभिदोः पितुः शालेऽपि' इति हैम [ ३।७१४ ] ॥ ( १ ) ॥*॥ (२) ॥*॥ द्वे 'मातुलस्य' ।

श्यालाः स्युर्भ्रातरः पत्न्याः

श्यालः (पु), 'साला' अर्थात् 'स्त्रीके भाई' का १ नाम है।

श्येति ॥ श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । बाहुलकात्कालन् ।—उच्छिष्टमधुपर्कवाची 'श्या'शब्दः । श्या लाति । 'आतोऽनुप–' (३।२।३) इति क–इति मुकुट ॥*।—स्यामयति । 'स्यम वितर्के' चुरादिः । अच् (३।१ १३४ ) पृषोदरादित्वात् (६।३।१०९) मस्य ल.—इति स्वामी ।'स्यालमालममसूरसूरय.' इति सभेदादूष्म्यादि ।— 'स्याल वितर्के'—इति मुकुटस्य प्रमाद. । स्यालधातोरभावात् ॥ (१) ॥ * ॥ पत्यु श्याला स्यु ॥*॥ एकम् 'पत्नीभ्रातु ' ।

स्वामिनो देवृदेवरौ ।

देवा, देवरः (२ पु), 'देवर' अर्थात् 'पतिके छोटे भाई के २ नाम हैं।

देवेति ॥ पत्युर्भ्राता पत्न्या । दीव्यति । 'दिवेर्ऋ' (उ० २।९९) ॥ (१) ।*॥ देवते । 'देवृ देवने' (भ्वा० आ० से० ) 'अतिकमिभ्रमि–' ( उ० ३।१३२ ) । (२) ॥*॥ 'देवृदेवरदेवान ' इति शब्दार्णव ॥*॥ द्वे 'पत्यु कनिष्ठभ्रातु ' इति स्वामी । ज्येष्ठस्तु श्वशुर एवेति सुभूत्यादय ।

स्वस्रीयो भागिनेयः स्यात्

स्वस्रीय., भागिनेयः (२ पु), 'भांजा' अर्थात् 'बहनके लड़के' के २ नाम हैं।

स्वेति ॥ स्वसुरपत्यम् । 'स्वसुश्छ' (४।१।१४३) ॥ (१) ॥*॥ भगिन्या अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१। १२०) ॥ (२)॥ द्वे 'भगिनीसुतस्य' ।

जामाता दुहितुः पतिः ॥ ३२ ॥

जामाता (पु), 'दामाद, जमाई' का १ नाम है।

जेति ॥ जाया मिमीते । मिनोति वा । 'माङ् माने' (जु० आ० अ०) 'डुमिञ् प्रक्षेपणे' (स्वा० उ० अ०) वा । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधु ॥ (१) ॥*॥ 'विभाषा स्वसृपत्योः' (६।३।२४) इति वालुक् ॥ (२) ॥*॥ द्वे 'जामातुः'।

पितामहः पितृपिता

पितामहः, पितृपिता (२ पु), 'पिताके पिता, दादा, बाबा' के २ नाम हैं।

पितेति ॥ पितुः पिता । (२) ॥*॥ 'मातृपितृभ्यां पितरि डामहच्' 'मातरि षिच्च' (वा० ४।२।३६)। 'पितामहः पयोधौ जनके जनकस्य च' इति हैमः [४।३५८] ॥ (१) ॥*॥ द्वे 'पितामहस्य'।

तत्पिता प्रपितामहः।

प्रपितामह (पु), 'परदादा' अर्थात् 'पितामहके पिता' का १ नाम है।

तदिति ॥ तस्य पितामहस्य पिता । प्रकर्षेण पितामहः 'प्रादयो गता–' (वा० २।२।१८) इति समासः ॥ (१) ॥*॥ एकम् 'प्रपितामहस्य'।

मातुर्मातामहाद्येवम्

मातामह- (पु),'नाना' अर्थात् 'माताके पिता'का १ नाम है।

मेति ॥ मातुः पितरि डामहच् (वा० ४।२।३६) । प्रकृष्टो मातामहः (प्रमातामह ) ॥ (१) ॥*॥ एकैकम् 'मातामहस्य'।

सपिण्डास्तु सनाभयः ॥ ३३ ॥

सपिण्ड, सनाभि (२ पु), 'सात पुश्त (पीढ़ी) के भीतरवाले परिवार' के २ नाम हैं।

सेति ॥ समानः पिण्डो देहो मूलपुरुषो निर्वाप्यो वाऽस्य । 'वान्यस्मिन्सपिण्डे–' (४।१।१६५) इत्यादिनिर्देशात् समानस्य सः । यद्वा –सह पिण्डेन वर्तते। सपिण्डता तु पुरुषे सप्तमे विनिवर्तते (मनु ५।६०) ॥ (१) ॥*॥ समानो नाभिर्मूलपुरुषोऽस्य । 'ज्योतिर्जनपद–'(६।३।८५) इति समानस्य सः ॥(२)॥*॥ द्वे 'सप्तपुरुषावधिज्ञातिषु'।

समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।

समानोदर्य, सोदर्य, सगर्भ्य, सहजः (४ पु), 'सहोदर भाई' अर्थात् 'एक मातासे उत्पन्न भाई' के ४ नाम हैं।

समेति ॥ समाने उदरे शयितः 'समानोदरे शयितः' (४।४।१०८) इति यत् ॥ (१) ॥*॥ 'विभाषोदरे' (६।३।८८) इति समानस्य वा सः । 'सोदराद्यः' (४।४।१०९) ॥ (२) ॥*॥ समाने गर्भे भवः। 'सगर्भसयूथ–' (४।४।११४) इति यत्। 'सगर्भ' इति निर्देशात्सः । यद्वा,–सह तुल्ये गर्भे कुक्षौ भव । 'सह साकल्यसादृश्ययौगपद्यसमृद्धिषु' इति विश्वः [१९२।७३] ॥ (३) ॥*॥ सह तुल्य उदरे जातः । 'अन्येष्वपि–' (३।३।१०१) इति डः ॥ (४) ॥*॥ सह उदरेण वर्तते । 'वोपसर्जनस्य' (६।२।८२) इति सः । 'सोदर' 'सहोदर' चात्र । ['भ्राता तु स्यात्सहोदरः । समानोदर्यसोदर्यसगर्भ्यसहजा अपि । सोदरश्च' इति नाममाला, हैम ३।२१४–१५ ] ।—'सहस्य सोऽन्यतरस्याम्' इति पाक्षिके समावे—इति मुकुटश्चिन्त्यः, तादृशसूत्राभावात् ॥*॥ चत्वारि एकोदरोत्पन्नभ्रातुः।

सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥३४॥

सगोत्र, बान्धव, ज्ञाति, बन्धु, स्व' ( यह सर्वनाम संज्ञक है ) स्वजन (६ पु), 'सगोत्र, अपने खास खान्दान' के ६ नाम हैं।

सेति ॥ समानं गोत्रं कुलमस्य । 'ज्योतिर्जनपद–' (६।३।८५) इति सः ॥ बध्नाति । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'शृस्वृस्निहि–' ( उ० १।१० ) इत्युः । प्रज्ञादण्(५।४।३८)वा । 'बान्धवो बन्धुमित्रयोः' इति हैमः [३।७४४] ॥ (२) ॥*॥ 'बन्धुर्मातृबान्धवयोः' इति हैमः [२।२४६] ॥ (४) ॥*॥ जानाति । क्तिच् (३।३।१७४) ज्ञायते वा । 'क्तिन् (३।३।९४) । ['ज्ञातिस्तातसगोत्रयोः' इति मे० ५५।२०]॥ (३)॥*॥ स्वनति स्वमशब्दे'(भ्वा० प० से०) । 'अन्येभ्योऽपि–' (वा० ३।३।१०१) इति डः (५) ॥*॥ स्व आत्मीयश्चासौ जनश्च ॥ ( ६ ) षट् 'सगोत्रस्य'।

ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः।

ज्ञातेयम् (न),'ज्ञातियों के धर्म या भाव' का १ नाम है।
बन्धुता ( स्त्री ), 'बन्धुओंके समूह' का १ नाम है।

ज्ञेति ॥ ज्ञातेर्भावः । 'कपिज्ञात्योर्ढक्' (५।१।१२७) ॥ (१) ॥*॥ बन्धूनां समूहः । 'ग्रामजनबन्धुभ्यस्तल्' (४।२।४३) ॥ (२) ॥*॥ एकैकम् ज्ञातिसमूहस्य'।

धवः प्रियः पतिर्भर्ता

धव', प्रिय, पति, भर्ता ( ४ पु ), 'पति' के ४ नाम हैं।

---

१ 'स्त्रियां क्तिन्' इति सूत्रेण क्तिन स्त्रियामेव विधानादत्र क्तिन प्रत्यये 'ज्ञाति' शब्दस्य स्त्रीत्वापत्त्या 'कृतोऽत्र भिन्नलिङ्गानां नैकशेषो न सङ्करः' (१।१।४) इति स्वप्रतिज्ञाविरोधात् 'मेदिनी' ( २६।२१ ) विरोधाच्चात्र क्तिजेव युक्तः।

धेति ॥ धवति, धूयते, वा । 'धूञ् कम्पने' (चु० उ० से०)। 'आधृषाद्वा' (चु० गण०) इति वा णिच् अच् । (३।१।१३४) । घञ् (३।३।१९) वा । संज्ञापूर्वकत्वान्न वृद्धिः । 'ऋदोरप्' ( ३।३।५७ ) वा । 'धव पुमानरे धूर्ते पत्यौ वृक्षान्तरेऽपि च' [ इति मे० ] ॥ ( १ ) ॥ * ॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० से०) । 'इगुपध-' (३।१।१३५) इति क । 'प्रियो वृद्धयोपधौ हृद्ये धवे' इति हैम. [ २।२७५ ] ॥ (२) ॥*॥ पाति । 'पा रक्षणे' (अ० प० अ०) । 'पातेर्डति' (उ० ४।५७) ॥ (३) ॥*॥ बिभर्ति । 'डुभृञ् धारणपोषणयोः' (जु० उ० मे०) तृच् (३।१।१३३) ॥ (४) ॥*॥ चत्वारि 'पत्यु' ।

जारस्तूपपतिः समौ ॥३५॥

जारः, उपपतिः ( २ पु ), 'जार' अर्थात् 'उपपति' के २ नाम हैं।

जेति ॥ जारयति । 'जृष् वयोहानौ' ( भ्वा० प० से० ) 'दारजारौ कर्तरि णिलुक् च' (वा० ३।३।२०) इति घञ् । यत्तु—जीर्यतेऽनेन । करणे घञ् (३।३।१९) इति—मुकुटः । तन्न । 'अजब्भ्याम्-' ( वा० ३।३।१२६ ) इति वार्तिकविरोधात् । 'जारस्तूपपतौ जायौषधीभिदि' इति हैम. [ २।४३४ ] ॥ ( १ ) ॥ * ॥ उपमित पत्या । 'अवादयः क्रुष्टाद्यर्थे तृतीयया' ( वा० २।२।१८ ) इति समास. । उपसृष्टा पतिरनेन वा । प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्च' ( वा० २।२।२४ ) इति समासः ॥ (२) ॥*॥ द्वे 'मुख्यादन्यस्य भर्तु.' ।

अमृते जारजः कुण्डः

कुण्डः ( पु ),'पतिके जीते रहनेपर जारसे पैदा हुए लड़के' का १ नाम है।

अम्रिति ॥ जाराज्जात । कुण्डयते कुलमनेन । 'कुडि दाहे' (भ्वा० आ० से०) । घञ् (३।३।१६) । 'कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ, जारा (पतिवत्नीसुते पुमान् । पिठरे तु न ना' इति मे० ४०। ४-५) सुते पुमान्' । सुतायां तु जातिलक्षण (४।१।६३) ङीष् भवत्येव ॥ ( १ ) ॥ * ॥ एकम् 'जीवति पत्यौ जारजातस्य' ।

मृते भर्तरि गोलकः ।

गोलकः (पु), 'पतिके मरनेपर जारसे पैदा हुए लड़के' का १ नाम है।

म्रिति ॥ 'जारज.' इत्येव । गुडचते 'गुड रक्षायाम्' (तु० प० से०) घञ् (३।३।१९)। स्वार्थे कन् (५।४।५) । 'गोलको विधवापुत्रे जारात्, स्यान्मणिके गुडे' । [इति मे० ८।८९] ॥ (१) ॥*॥ एक 'विधवाया जारजातस्य' ।

भ्रात्रीयो भ्रातृजः

भ्रात्रीयः भ्रातृजः (२ पु), 'भतीजा' अर्थात् 'भाई के लड़के' का १ नाम है।

भ्रात्रीति ॥ भ्रातुरपत्यम् । 'भ्रातुर्व्यच्च' ( ४।१।१४४) इति चकाराच्छ ॥ ( १ ) ॥ * ॥ भ्रातुर्जातः ड ( ३।२।९८) ॥ ( २ ) ॥ *॥ द्वे 'भ्रातृपुत्रस्य' ।

भ्रातृभगिन्यौ भ्रातरावुभौ ॥३६॥

भ्रातृभगिन्यौ, भ्रातरौ (२ पु नि० द्विव०), 'भाई-बहन' के २ नाम हैं।

भ्रातेति ॥ भ्राता च भगिनी च ॥ (१) ॥*॥ भ्राजते । 'भ्राजृ दीप्तौ' (भ्वा० आ० से०) । 'नप्तृनेष्टृ-' (उ० २।९५) इति साधु । यत्तु—बिभर्ति । 'पित्रादय.' इति तृच् । भ्रादेशश्च—इति—भ्राजते । 'स्वस्रादय.' इति ऋन् 'जस्य तत्वे—इति च मुकुटेनोक्तम् । तदुपेक्ष्यम् । अपाणिनीयत्वात् । स्वसा च भ्राता च 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' ( १।२।६८ ) इत्येकशेषः ॥ ( २ ) ॥ * ॥ द्वे 'भ्रातृभगिन्यो' ।

मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।

मातापितरौ, पितरौ, मातरपितरौ, प्रसूजनयितारौ (४ पु, नि० द्विव०), 'माता और पिताके समुदाय' के ४ नाम हैं।

मेति ॥ माता च पिता च । आनङृतो द्वन्द्वे' (६।३।२५ 'अभ्यर्हितं च' (वा० २।२।३४) इति मातु पूर्वनिपात ॥ (१) ॥*॥ 'पिता मात्रा' (१।२।७०) इत्येकशेषो वा ॥ (२) ॥ * ॥ 'मातरपितरावुदीचाम्' (६।३।३२) इति मातुरङन्तादेशो वा ॥(३) ॥*॥ त्रीणि 'मातापित्रो.' ।

श्वश्रूश्वशुरौ श्वशुरौ

श्वश्रूश्वशुरौ ( २ पु, नि० द्विव ), 'सास और ससुरके समुदाय' के २ नाम हैं।

श्वेति ॥ श्वश्रूश्च श्वशुरश्च ॥ (१) ॥*॥ 'श्वशुर. श्वश्र्वा' (१।२।७१) इत्येकशेषो वा ॥ द्वे 'सहोक्तयोः श्वश्रूश्वशुरयो' ।

पुत्रौ पुत्रश्च दुहिता च ॥ ॥३७॥

पुत्रौ (पु० नि० द्विव०), 'लड़का और लड़कीके समुदाय' का १ नाम है।

पुत्राविति ॥ पुत्रश्च दुहिता च । 'भ्रातृपुत्रौ-' (१।२।६८) इत्येकशेषः (१) ॥*॥ 'पुत्रकन्ययोः' एकम् ।

दंपती जंपती जायापती भार्यापती च तौ ।

दम्पती, जम्पती ( २ स्त्री ), जायापती, भार्यापती ( ४ पु, नि० द्वि० ), 'पति और पत्नीके समुदाय' के ४ नाम हैं।

दमपति ॥ जाया च पतिश्च । राजदन्तादि(२।२।३१) गणे पाठ ज्जायाशब्दस्य दम् 'जम् भावो वा निपात्यते । 'दारा पुंसि बहुत्वे च द कलत्रे नपुंसकम्' इत्यमरमाला । 'पत्न्या ज दमस्त्रिद्वित्वे' इति न मप्रपञ्च ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ भार्या च पतिश्च ॥ (४) ॥*॥ 'नौ द यतत पुरुषमुत्तप् । नाम्नगी मैथिनी मैत्री दपती जपती च ना इति याबसपत्नी स्त्रीत्वमप्युक्तम् ॥ * ॥ चत्वारि 'जायाप यो' ।

गर्भाशयो जरायू स्यात्

गर्भाशय , जरायु ( २ पु ), उल्बम् ( न ), 'गर्भाशय' अर्थात् 'जिसमें गर्भ लिपटा रहता है, उस चर्मके ३ नाम हैं।

गर्भेति ॥ गर्भ आनात अत्र । पुंसि- (३।३।११८) इति घ ॥ ( १ ) ॥ * ॥ जरामति । विजरयो ष्यिण' ( उ० १।४ ) इति ञुण् ॥ ( २ ) ॥*॥ द्वे गर्भवेष्टनचर्मण' ।

उल्वं च कललोऽस्त्रियाम् ॥ ३८ ॥

कलल ( पु न ), 'वीर्य और शोणितके समुदाय' का १ नाम है।

उल्वमिति ॥ उल्लीयत लीङ् श्लेषणे' (दि० आ० से०) । 'उल्वादयश्च ( उ० ४।९५ ) इति साधु । यद्वा, ओल्नि, उल्यते, वा । उल सौत्रो धातु । बल्यते वा । वल प्राणने (भ्वा० प० से०) प्राग्वत् ॥ (१) ॥*॥ कल्यते । कल संख्याने (चु० उ० से०)। 'वृषादिभ्यश्चित् (उ० १।१०६) इति कल ॥ (२) ॥*॥ द्वे शुक्रशोणितसंघातस्य' । चत्वारि गर्भवेष्टनस्य —इत्यन्ये ।

सूतिमासो वैजनन

सूतिमास , वैजनन ( २ पु ), सन्तान पैदा होनेवाले महीने' के २ नाम हैं।

स्वितिं ॥ सूत प्रसवस्य मास ॥ ( १ ) ॥*॥ विजायतेऽस्मिन् । करणा-' (३।३।११७) इति ल्युट् । विजनन एव । प्रज्ञादण् (५।४।३८) यद्वा,-विजननस्य गर्भमोचनस्यायम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'नवमे दशमे वापि प्रबलै सूतिमारुतै । नि सार्यते बाण इव जन्तुश्छिद्रेण सत्वर ' [इति स्मृते] ॥ (२) ॥*॥ द्वे प्रसवमासस्य' ।

गर्भो भ्रूण इमौ समौ ।

गर्भ , भ्रूण (२ पु),'गर्भ वा गर्भस्थ जीव'के २ नाम हैं।

गर्भ इति ॥ गीर्यते उद्गीर्यते शब्द्यते । वा । 'गॄ निगरणे' (तु० प० से०) 'गॄ शब्दे' ( क्या० प० से० ) वा । 'अर्तिगृभ्यां भन्' (उ० ३।१५२) । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति विश्व मेदिन्यौ [१०८।२०, १०६।३] ॥ (१) ॥*॥ भ्रूयते । 'भ्रूण आशाविशङ्कयो' (चु० आ० से०) । घञ् (३।३।१९) । भ्रूण स्त्रीगर्भडिम्भयोः' [ इति मे० ४६।२३ ] ॥ ( २ ) ॥*॥ द्वे 'कुक्षिस्थगर्भस्य' ।

तृतीया प्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ॥३९॥

तृतीयाप्रकृति ( स्त्री ), शण्ढ क्लीब , पण्ड (३ पु), नपुंसकम् (न), 'नपुसक, हिजड़ा' के ५ नाम हैं।

तृतीयेति ॥ स्त्रीपुंसापेक्षया तृतीया प्रकृति –तृतीय प्रकार । असमस्तमेतत् ॥*॥ समासे तु 'तृतीयप्रकृति '। (१) ॥*॥ शाम्यति । 'शमु उपशमे' (दि० प० से०) । 'शमढं' (उ० १।९९) । 'क्लीबे 'शण्ढश्च षण्ढवत्' इति तालव्यादौ रभस । 'शण्ढ स्यात्पुंसि गोपती । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' [ इति मे० ३४।४५ । 'शण्ढ षण्ढौ तु सौविदौ । वन्ध्यपुंसीङ्वरे क्लीबे' इति हैम ३। १३३] ॥ ( २ ) ॥ * ॥ क्लीबते । 'क्लीबृ अधाष्ट्र्ये' (भ्वा० आ० से०) । 'इगुपध-' (३।१।१३५) इति क । 'अत्री नपुंसके क्लीब वाच्यलिङ्गस्त्वविक्रमे' इति रुद्र ॥ (३) ॥*॥ पण्डते । 'पडि गतौ' (भ्वा० आ० से०) । अच् (३।१।१३४) । यद्वा -पणते । पण व्यवहारे स्तुतौ च' (भ्वा० आ० से०) । 'अमन्ताड्ड' (उ० १।११४) ॥ 'पण्ड षण्डे, स्त्रियि स्त्री स्यात्' [इति मे० ४१।१८] ॥ (४) ॥*॥ 'न स्त्री न पुमान्' इत्यस्य नपुंसकभावो नभ्राट्-' (६।३।७५) इत्यत्र निपातनात् । 'स नपुंसको भवेत्' ( ) इति 'भाष्यात्पुंस्त्वम्' ॥ ( ५ ) ॥*॥ पञ्च नपुंसकस्य' ।

शिशुत्वं शैशवं बाल्यम्

शिशुत्वम्, शैशवम् बाल्यम्(३ न), 'लड़कपन, बाल्यावस्था' के ३ नाम हैं।

शिश्विति ॥ शिशोर्भाव । 'तस्य भावस्त्वतलौ' (५।१।११९)। 'आ च त्वात्' (५।१।१२०) इति वा त्व । ( १ ) ॥ * ॥ 'इगन्ताच्च लघुपूर्वात्' ( ५।१।१३१ ) इत्यण् ॥ (२) ॥*॥ बालस्य भाव । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ ॥ (३) ॥*॥ त्रीणि 'बाल्यस्य'

तारुण्यं यौवनं समे ।

तारुण्यम्, यौवनम् ( २ न), 'जवानी, युवावस्था के' २ नाम हैं।

१ स्थलत्रये एते शब्दा मुधन्यादय पठिता ।

तेति ॥ तरुणस्य भावः । ष्यञ् (५।१।१२४) ॥(१) ॥*॥ यूनो भावः । 'हायनान्तयुवादिभ्योऽण्'(५।१।१३०) 'अन्' (६।४।१६७) इति प्रकृतिभावः ॥ (२) ॥*॥ द्वे 'तारुण्यस्य' ।

**स्यात्स्थाविरं तु वृद्धत्वम्**

**स्थाविरम्, वृद्धत्वम् (२ न )'बुढापा' के २ नाम हैं ।**

स्यादिति ॥ स्थविरस्य भावः । कर्म वा । युवादित्वात् (५।१।१३९) अण् ॥ (१) ॥*॥ वृद्धस्य भावः । त्व (५।१।१२०) ॥ (२) ॥*॥ द्वे 'वृद्धत्वस्य' ।

**वृद्धसंघेऽपि वार्धकम् ॥ ४०॥**

**वृद्धसंघः (पु) वार्धकम् (न), 'वृद्धसमूह' के २ नाम हैं ।**

वृद्धेति ॥ वृद्धानां संघः ॥ (१) वृद्धानां समूहः । 'वृद्धाच्च' (वा० ४।२।३९) इति वुञ् । भावकर्मणोस्तु मनोज्ञादित्वात् (५।१।१३३) वुञ् । अपिशब्दाद्वृद्धत्वेऽपि । वार्धकशब्दात् चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञि 'वार्धक्यम्' अपि । 'वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः [ ८।७७ ] ॥ ( २ ) ॥*॥ द्वे 'वृद्धसमूहस्य' ।

**पलितं जरसा शौक्ल्यं केशादौ**

**पलितम् (न),'बाल पकने' अर्थात् 'बुढापा आदिसे दाढ़ी-मूंछ आदिके बालके सफेद होने' का १ नाम है ।**

पेति ॥ फलति । फलनम्, वा । 'फल निष्पत्तौ' 'ञिफला विशरणे' वा (भ्वा० प० से०) । 'लोष्टपलितौ' ( उ० ३।९२) इति साधु । यद्वा,-पलति स्म । 'पल गतौ' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्त । पलनं वा । 'नपुंसके भावे क्त' ( ३।३।११४ ) 'पलितं शैलजे तापे केशपाके च कर्दमे' (इति मेदिनी) ॥ (१) ॥*॥ आदिना लोमश्मश्रुणोः ॥*॥ एकम् '[1]जरया शुक्लस्य' ।

**विस्रसा जरा ।**

**विस्रसा, जरा (२ स्त्री), 'बुढ़ौती' के २ नाम हैं ।**

वीति ॥ विस्रस्यतेऽनया । स्रंसु अधःपतने' (भ्वा०आ० से०) भिदाद्यङ् (३।३।१०४ ॥ (१) ॥*॥ जीर्यतेऽनया । 'जॄष् वयोहानौ' (दि० प० से०) 'षिद्भिदादिभ्योऽङ्' (३।३।१०४) । यद्वा,-जरणम् । भावेऽङ् ( ३।३।१०४ ) । 'ऋदृशोऽङि गुणः' (७।४।१६) ॥ (२)॥ ॥ द्वे'जरायाः' ।

**स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥४१॥**

**उत्तानशया, डिम्भा, स्तनपा, स्तनन्धयी ( ४ त्रि ),'दूध पीनेवाली लड़की' के ४ नाम हैं ।**

स्यादिति ॥ उत्ताना शेते । 'उत्तानादिषु कर्तृषु' (वा० ३।२।१५) इत्यच् ॥ ( १ ) ॥*॥ डिम्भयति । 'डिभि संघे' चुरादि । अच् ( ३।१।१३४ ) डिम्भ्यते वा । घञ् (३।३।१९) अच् ( ३।३।५६ ) वा । 'डिम्भोऽपि बालिशे बाले' [इति मे० १०६।४] ॥ (२)॥*॥ स्तनौ पिबति । 'आतोऽनुप–' (३।२।३) इति क । —'सुपि–' (३।२।४) इति योगविभागात्क —इति स्वामि-मुकुटौ चिन्त्यौ ॥ (३) ॥ स्तनं धयति । 'धेट् पाने' ( भ्वा० प० अ० ) । 'नासिकास्तनयोः–' (३।२।२९) इति खश् । धेटष्टित्त्वात् (४।१।१५) ङीप् ॥ ( ४ ) ॥ एषु त्रिलिङ्गता । 'त्रिषु जरावराः' इति [३।६।४९] वक्ष्यमाणत्वात् । स्त्रीलिङ्गनिर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः ॥ * ॥ चत्वारि 'अतिबालिकायाः' ।

**बालस्तु स्यान्माणवकः**

**बालः, माणवकः ( २ त्रि ), 'छोटे बच्चे' के २ नाम हैं ।**

बाल इति ॥ बल्यते, बलते वा । 'बल संवलने' (भ्वा० आ० से०) घञ् (३।३।१९) । ज्वलादि (३।१।१४०)णो वा । 'बालोऽज्ञेऽश्वेभपुच्छयोः । शिशौ ह्रीवेरक-वयोर्बाला तु त्रुटिगोपितोः । बाली भूपान्तरे मेधी' इति हैमः [२।५१४ १५] ॥ (१)॥*॥ मनोरयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'ब्राह्मणमाणव–' (४।२।४२) इति निपातनाण्णत्वम् । 'अल्पे' ( ५।३।८५ ) इति कन् । 'हारभेदे माणवको बाले कुपुरुषेऽपि च' इति रभसः ॥ (२) ॥*॥ द्वे 'बालस्य' ।

**वयस्थस्तरुणो युवा ।**

**वयस्थः, तरुणः, युवा ( ३ त्रि ), 'नौजवान, युवा' के ३ नाम हैं ।**

वयेति ॥ 'वय पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति विश्वः [ १७६।३२ ] । वयसि तिष्ठति । 'सुपि–' (३।२।४) इति योगविभागात् क ॥ (१) ॥*॥ तरति । 'तॄ प्लवनतरणयोः' (भ्वा० प० से०) 'त्रो रश्च लो वा' (उ० ३।५४) इत्युनन् । 'तरुणं कुब्जपुष्पे ना रुबके यूनि तु त्रिषु' इति विश्वः [2] ॥ (२) ॥*॥ यौति । 'यु मिश्रणे' (अ० प० से०) । 'कनिन्युवृषि–' (उ० १।१५६) इति कनिन् ॥ (३) ॥*॥ त्रीणि 'यून' ।

**प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥४२॥**

**प्रवयाः, स्थविरः, वृद्धः, जीनः, जीर्णः, जरन् (६ त्रि),'वृद्धे' के ६ नाम हैं ।**

---

१. 'जरसा केशादेः शौक्ल्यस्य' इत्युचितम् ।

२. मेदिनीस्थोऽयं पाठः ( ४८।४९ ) । विश्वे तु 'तरुणः स्यान्नवे यूनि कुब्जपुष्पोरुबूकयोः.' इति पा० ।

ममिति ॥ सहते जानुनी यस्य । प्राग्वत् ज्ञु (५।४।१२९) (१) ॥*॥ द्वे सलग्नजानुकस्य । 'प्रज्ञु प्रगत जानु स्यात् प्रज्ञोऽप्यत्रैव दृश्यते । मज्ञु सहतजानौ च भवेत् संज्ञोऽपि तत्र हि । ऊर्ध्वज्ञुरूर्ध्वजानु स्यादूर्ध्वज्ञोऽप्यूर्ध्वजानुके' इति साहसाङ्क । द्वे सलग्नजानुकस्य' ॥

स्यादेडे बधिर

एड, बधिर (२ त्रि), 'बहरा' के २ नाम हैं ।

स्यादिति ॥ आ इलति । इल स्वप्ने' (तु० प० से०) अच् (३।१।१३४) । डलयोरैक्यम् । यद्वा–आ सर्वत ईड्यते ईड्ट वा । ईड स्तुतौ (अ० आ० से०) । घञ् (३।३।१९) । अच् (३।१।१३४) वा ॥ (१) ॥*॥ बध्नाति कर्णम् बध्यते वा । बन्ध बन्धने (क्र्या० प० अ०) इषिमदि–' (उ० १।५१) इति किरच ॥ (२) ॥*॥ द्वे 'श्रवणशक्तिहीनस्य ॥

कुब्जे गडुल

कुब्ज, गडुल (२ त्रि),'कूबडा' के २ नाम हैं ।

कुब्जेति ॥ कौ उब्जति । उब्ज आर्जवे'(तु० प० से०) । अच् (३।१।१३४) । यद्वा,–कु ईषदुब्जमार्जवमस्य । शकन्ध्वादि (वा० ६।१।९४) । 'कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गक' [ इति मे० ३०१५ ] ॥ (१) ॥*॥ गडति, गड्यते वा । गड सेचने'(भ्वा० प० से०)। बाहुलकादु । गडुरस्यास्ति । सिध्मादित्वात् (५।२।९७) लच । 'गडु पृष्ठगुडे कुब्जे [ इति मे० ४१।९ ] ॥ (२) द्वे कुब्जस्य' ।

कुकरे कुणि ।

कुकर, कुणि (२ त्रि), 'टेढे हाथवाले' के २ नाम हैं ।

कुकेति ॥ कुत्सित करोऽस्य ॥ (१) ॥*॥ कुणति, कुण्यते, वा । कुण शब्दोपकरणयो' (तु० प० से०) । इगुपधात् कित् (उ० ४।१२०) इतीन् । 'कुणिस्तुनक वृक्षे ना कुकरे त्वभिधेयवत् [ इति मे० ४५।६ ] ॥*॥ 'निसर्गत कूणिपङ्गुपौगण्डा इति नाममालायामार्यापाठा द्दीर्घोकारवानपि ॥ (२) ॥*॥ द्वे 'रोगादिना वक्रकरस्य' ।

पृश्निरल्पतनौ

पृश्नि, अल्पतनु (२ त्रि), 'छोटे शरीरवाले नाटा' के २ नाम हैं ।

प्रिति ॥ स्पृशति, स्पृश्यते, वा । 'स्पृश संस्पर्शे' (तु० प० अ०) । 'घृणिपृश्निपार्ष्णि–' (उ० ४।५२) इति साधु । पृच्छति, पृच्छ्यते, वा 'प्रच्छ ज्ञीप्सायाम्'(तु० प० अ०) । पर्षति । पृष्यते वा । 'पृषु सेचने' (भ्वा० प० से०) वा ॥ (१) ॥*॥ अल्पा तनुरस्य ॥ (२) ॥*॥ द्वे 'अल्पशरीरस्य' ।

श्रोण पङ्गौ

श्रोण, पङ्गु (२त्रि), 'पङ्गु' के २ नाम ह ।

श्रवेति ॥ श्रोणति । 'श्रोणृ सघाते' (भ्वा० प० से०) । अच् (३।१।१३४) । यत्तु—शृणोति । 'रास्ना दय ' इति नक् प्रत्ययादि —इति मुकुट । तन्न । रास्नादय ' इति सूत्राभावात् । नगादेर्विधायकाभावाच्च ॥ (१) ॥*॥ पनते । 'पन स्तुतौ' (भ्वा० आ० से०) । बाहुलकाद् गु । स्त्रियाम् 'पङ्गोश्च' (४।१।६८)इत्यूङ् ॥ (२) ॥*॥ द्वे 'जङ्घाहीनस्य' ।

मुण्डस्तु मुण्डिते ॥ ४८ ॥

मुण्ड, मुण्डित (२ त्रि), 'मुण्डन कराये हुए' के २ नाम हैं ।

मुण्डेति ॥ मुण्ड्यते । 'मुडि खण्डने' (भ्वा० प० से०)। घञ् (३।३।१९) 'मुण्डो मुण्डितशीर्षयो । राहौ दैत्यान्तरे इति हैम [२।१२८] ॥ (१) ॥*॥ मुण्ड्यते स्म । क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'खण्डितकेशस्य ।

वलिरः केकरे

वलिर, केकर (२ त्रि) ऐंचकर देखनेवाले' अर्थात् 'एक भौंको ऊँचा और एक भौंको नीचाकर देखनेवाले' के २ नाम हैं ।

वेति ॥ वलते । 'वल सवरणे, सचलने वा (भ्वा० आ० से०) । बाहुलकात् किरच् ॥ (१) ॥*॥ के मूर्ध्नि करं शीलमस्य । कृञो हेतु–' (३।२।२०) इति ट । हल‑दन्तात्–' (६।३।९) इत्यलुक् ॥ (२) ॥*॥ टेरे वलिर केकरौ' इति रभस ॥*॥ द्वे 'नेत्रवियुक्तस्य' ।

खोडे खञ्ज

खोड, खञ्ज (२ त्रि) 'लगडा' के २ नाम हैं ।

खविति ॥ खोडति । 'खोडृ गतिप्रतिघाते' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (१) ॥*॥ खञ्जति । खजि गतिवैकल्ये' (भ्वा० प० से०) । अच (३।१।१३४)॥(२) ॥ * ॥ 'अथ खञ्जके खोडखोरौ' इति रभस ॥ * ॥ द्वे 'गतिविकलस्य' ।

त्रिषु जरावरा ।

'जरा' (२।६।४१) शब्दके बादसे यहाँतक सब त्रिलिङ्ग हैं ।

त्रिष्विति ॥ जराशब्दादवरा अर्वाचीना उत्तानशया द्यास्त्रिलिङ्गा ।

जड्डुलः कालकः पिप्लुः

जड्डुलः, कालकः, पिप्लुः (३ पु), 'लहसन' अर्थात् 'जन्म-कालसे ही उत्पन्न शरीरके चिह्न-विशेष' के ३ नाम हैं।

जेति ॥ जलति । 'जल घातने' (भ्वा० प० से०)। बाहुलकादुलच् ॥ * ॥ 'जटुल.' इति मुकुटः । 'जट संघाते' (भ्वा० प० से०) ॥ (१)॥*॥ कालयति । 'कल क्षेपे' चुरादिः । ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ अपि प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० से०) । मितद्र्वादित्वात् (वा० ३।२।१८०) डु । 'वष्टि भागुरि–' इत्यल्लोप ॥ (३) ॥ * ॥ त्रीणि 'कृष्णवर्णदेहगतचिह्नस्य' 'लसुन' इति ख्यातस्य ।

तिलकस्तिलकालकः ॥ ४९ ॥

तिलकः, तिलकालकः (२ पु), 'तिल' अर्थात् 'काली तिलके समान देहके चिह्न-विशेष' के २ नाम हैं।

तीति ॥ तिल इव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (१) ॥*॥ तिल इव कालक ॥ (२) ॥*॥ द्वे 'देहस्थतिलस्य' ।

अनामयं स्यादारोग्यम्

अनामयम्, आरोग्यम् (२ न), 'नीरोग' के २ नाम हैं।

अनेति ॥ आमयस्याभावः । अर्थाभावेऽव्ययीभावः (२।१।६) ॥ (१) ॥*॥ न रोगोऽस्य । अरोगस्य भावः । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ॥ (२) द्वे 'रोगाभावस्य' ।

चिकित्सा रुक्प्रतिक्रिया ।

चिकित्सा, रुक्प्रतिक्रिया (२ स्त्री), 'चिकित्सा' अर्थात् 'रोगको दूर करनेके लिये दवा आदिके सेवन करने' के २ नाम हैं।

चिकीति ॥ 'कितेर्व्याधिप्रतीकारे' [वा० इति] सन् । चिकित्सनम् । 'अ प्रत्ययात्' (३।३।१०२) ॥ (१) ॥*॥ रुजः प्रतिक्रिया निरसनम् ॥ (२) ॥*॥ द्वे 'रोगनिवारणस्य' ।

भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥

भेषजम्, औषधम्, भैषज्यम् (३ न), अगदः, जायुः (२ पु), 'दवा'के ५ नाम हैं।

भेषेति ॥ भेषयति । 'भेषृ भये' (भ्वा० उ० से०)। ण्यन्तः । अच् (३।१।१३४) । भेषं रोगं जयति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । भेषं जयति वा । 'जि क्षये' (भ्वा० प० से०) । 'आतोऽनुप–' (३।२।३) इति कः ।—भिषज इदम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'अनन्तावसथेतिहभेषजात्' (५।४।२३) इति निर्देशादेवम् —इत्यन्ये ॥ (१) ॥*॥ ओषधेरिदम् । 'ओषधेरजातौ' (५।४।३७) इत्यण् ॥ (२) ॥*॥ भेषजमेव । 'अनन्ता–' (५।४।२३) इति ष्य ॥ (३) ॥*॥ गदविरुद्धम् । न गदोऽस्मात्, इति वा ॥ (४) ॥*॥ जयति रोगान् । 'जि अभिभवे' (भ्वा० प० अ०) । 'कृवापाजि–' (उ० १।१) इत्युण् ॥ (५) ॥*॥ पञ्च 'औषधस्य' ।

स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ।

रुक्, रुजा (२ स्त्री), उपतापः, रोगः, व्याधिः, गदः, आमयः (५ पु), 'रोग' के ७ नाम हैं।

स्त्रीति ॥ रुजति देहम् । 'रुजो भङ्गे' (तु० प० अ०) । क्विप् (३।२।१७८) रोजनं वा । सम्पदादित्वात् (वा० ३।३।१०८) ॥ (१) ॥*॥ 'इगुपध–' (३।१।१३५) इति क । टाप् (४।१।४) । भिदादयङ् (३।३।१०४) वा, 'रुजा स्त्रामयभङ्गयोः' इति हैम [२।७५] । (२) ॥*॥ उपतापयति । 'तप दाहे' चुरादिः । अच् (३।१।१३४) । उपतपनं वा । 'तप सतापे' (भ्वा० प० अ०) । घञ् (३।३।१८) । 'उपतापो गदे ताते' इति हैमः [...] (३) ॥*॥ रुजति । 'पदरुज–' (३।३।१६) इति घञ् । रोजनं वा । भावे घञ् (३।३।१८)॥ (४) ॥*॥ विविधा आधयोऽस्मात् व्याधानं वा । 'उपसर्गे घोः किः' (३।३।९२) ॥ (५) ॥*॥ गदति । अच् (३।१।१३४) । 'गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे' इति हैम [२।२२८] ॥ (६) ॥*॥ 'अम रोगे' (भ्वा० प० से०) । भावे घञ् (३।३।१८)। आमं याम्यत्वेन । 'या प्रापणे' (अ० प० अ०) 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड. । यद्वा,— आमयनम् अनेन । 'मीङ् हिंसायाम्' (दि० आ० अ०) 'एरच्' (३।३।५६) । घ (३।३।११८) वा ॥ (७) ॥*॥ सप्त 'रोगस्य' ।

क्षयः शोषश्च यक्ष्मा च

क्षयः, शोषः, यक्ष्मा (३ पु), 'राजयक्ष्मा रोग' के ३ नाम हैं।

क्षय इति ॥ क्षयति देहम् । 'क्षि क्षये' (भ्वा० प० अ०) अन्तर्भावितण्यर्थः । अच् (३।१।१३४) । 'क्षयो गेहे कल्पान्तेऽपचये रुजि' इति हैम. [२।३५१] ॥ (१) ॥ * ॥ शोषयति । 'शुष शोषणे' (दि० प० अ०) । अच् (३।१।१३४) । 'शोष शोषणयक्ष्मणो.' इति हैम [२।५८७] ॥ (२) ॥ * ॥ यक्षयते, यक्ष्यते वा । 'यक्ष पूजायाम्' चुरादि । मनिन् (उ० ४।१४४) ॥ (३) ॥ * ॥ त्रीणि 'राजयक्ष्मणः' ।

रुधीति ॥ रुणद्धि । रुध्यते वा । 'रुधिर् आवरणे' (रु० उ० अ० ) । इषिमदिमुदि–' (उ० १।५१) इति किरच्। 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजो' [इति मे० १३७।२०९ ] (१) ॥*॥ अस्यत । 'असु क्षेपणे' ( दि० प० से० ) । बाहुलकादृज । न सृजति वा । सृज विसर्गे' ( तु० प० अ० ) । क्विप् । 'क्विन्-प्रत्ययस्य–' (८।२।६२) इति कु । 'क्विन् प्रत्ययो यस्मात्' इति बहुव्रीहि । 'ऋत्विग्दधृक्स्रक्–' ( ३।२।५९ ) इति हि सूत्रे क्विन् विहित (२) ॥*॥ रोहति । रुह्यते वा । 'रुहे रश्च लो वा' ( उ० १ । ९४ ) इतीतच । 'लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने। पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति' [ इति मे० ६५।१४८-४९ ] ॥ (३) ॥*॥ अस्यते । 'बहुलमन्यत्रापि–' इति रक । 'अस्रं कोणे कचे पुंसि क्लीबमश्रुणि शोणिते [ इति मे० १२३।५ ] ॥ (४) ॥*॥ रज्यते स्म । 'रञ्ज रागे' (भ्वा० उ० अ०) । क्त (३।२।१०२)। 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि' [ इति मे० ६१।४९ ] ॥ (५) ॥*॥ क्षतात्जातम् । ड ( ३।२।८ ) ॥ (६) ॥*॥ शोणति स्म । 'शोणृ वर्णगत्योः' भ्वा० प० से० ) । 'गत्यर्था–' (३।४।७२) इति क्त ।—शोणितं—इति मुकुट-चिन्त्य ॥ (७) ॥*॥ सप्त 'रक्तस्य' ।

**बुक्काऽग्रमांसम्**

बुक्का ( स्त्री ), अग्रमांसम् (न) 'कलेजा' अर्थात् हृदयके भीतरवाले कमलके समानाकार मांस विशेष' के २ नाम हैं।

बुक्केति ॥ बुक्यते स्वादुत्वान्मृग्यते । 'बुक्क भषणे' (भ्वा० प० से०) । घञ् (३।३।१९) । 'शोणितेषु स्त्रियां बुक्का बुक्कं सुरसमद्वयो ' इति रभसः । 'उरस्यपि च बुक्काग्रा हृदयं मानसेऽपि च' इति त्रिकाण्डशेष [ २।३।३२५ ] (१) ॥*॥ अग्रं मुख्यं मांसम् ॥ (२) ॥*॥ द्वे हृदयान्तर्गतमांसविशेषस्य' ।

**हृदयं हृत्**

हृदयम्, हृत्(२ न), 'हृदय' के २ नाम हैं।

हृदिति ॥ हरति । ह्रियते वा । 'वृहोः षुक्दुकौ च' ( उ० ४।१०० ) इति कयन् । 'हृदयं मानसे बुक्कोरसोरपि नपुंसकम्' [ इति मे० १२१।११५ ] ॥ (१) ॥*॥ बाहुलकात्क्विब्लोपोऽपि दुक् ॥ (२) ॥*॥ 'पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्' इति ॥ ॥ द्वे 'हृदयकमलस्य' । चत्वारि पर्याया इत्यके ।

मेदस्तु वपा वसा ॥ ६४ ॥

मेदः (न), वपा, वसा (२ स्त्री), 'चर्बी' के ३ नाम हैं।

मेद्यतीति ॥ मेद्यति । 'ञिमिदा स्नेहने' ( दि० प० से० ) । असुन् ( उ० ४।१८९ ) ॥*॥—घञ् ( ३।३।१९ )—इत्यन्ये ॥ (१) ॥*॥ वपति । उप्यते वा । 'डुवप् बीजतन्तुसताने' ( भ्वा० उ० अ० ) । अच् ( ३।१।१३४ ) । भिदाद्यङ् ( ३।३।१०४ ) वा । 'वपा विवरमेदसो' इति हैम [ २।२०३ ] ॥ (२) ॥*॥ वसति, वस्ते, वा । 'वस निवासे' ( भ्वा० प० अ० ) । 'वस आच्छादने' ( अ० आ० से० ) वा । अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि 'शुद्धमांसस्नेहस्य' ।

**पश्चाद्ग्रीवा सिरा मन्या**

मन्या ( स्त्री ), 'गर्दनके पीछेवाली नस' का १ नाम है।

पश्चेति ॥ पश्चाद्भागे ग्रीवायाः सिरा । मन्यतेऽनया । 'सञ्ज्ञायां समज–' ( ३।३।९९ ) इति क्यप् ॥ (१) ॥*॥ एकं 'ग्रीवायाः पश्चाद्भागे स्थितसिरायाः' ।

नाडी तु धमनिः सिरा।

नाडी, धमनि, सिरा ( ३ स्त्री ), 'नस' के ३ नाम हैं।

नेति ॥ नाडयति, नाड्यते, वा। 'नड भ्रंशे'(चुरादि । 'अच इः' ) ( उ० ४।१३९ ) । 'नाडी नाले व्रणान्तरे । शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च । तथा घट्क्षणकालेऽपि' [ इति मे० ४१।१६-१७ ] ॥ ( १ ) ॥*॥ धमति । ध्माने धमि सौत्र । 'अर्तिसृधृ–' ( उ० २।१०२) इत्यनि । ङीष् ( ग० ४।१।४५ ) । 'धमनी तु शिराहट्टविलासिनीयोग्र योषिति' [ इति मे० ८८।७८ ] ॥ (२) ॥*॥ सिनोति । 'षिञ् बन्धने' ( स्वा० उ० अ०) । 'बहुलमन्यत्रापि–' इति रक् ॥*॥ तालव्यादिरपि । 'शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति' इति तालव्यादौ रभसात् । शिनोति । 'शिञ् निशाने' ( स्वा० उ० अ० ) । 'बहुलमन्यत्रापि–' [ उ० ] इति रक् ॥ (३) ॥*॥ त्रीणि धमन्याः' ।

**तिलकं क्लोम**

तिलकम्, क्लोम ( २ न ), 'पेटमें जल रहनेके स्थान' के २ नाम हैं ।

तीति ॥ तेलति । 'तिल गतौ' ( भ्वा० प० से० ) । तिलति वा । 'तिल स्नेहने' (तु० प० से०) । 'इगुपध–' ( ३।१।१३५ ) इति क । स्वार्थे कन् (ज्ञापि० ५।४।५) क्वुन् ( उ० १।३२ ) वा। तिलको द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' इति विश्व मेदिन्यौ[1] ॥ ( १ ) ॥*॥ क्लवते 'क्लुङ् गतौ'

१ पाठोऽयं मेदिन्याम् ( ९।१००-१ ) ।
विश्वे तु–'तिलकं चित्रके प्राहुर्ललामे तिलकालके । रोगविद्द्रुमभेदेषु क्लोम्नि सौवर्चलेऽपि च ।' इति पाठः ।

( भ्वा० आ० अ० ) । मनिन् ( उ० ४।१४५ ) ॥ (२) ॥*॥ द्वे 'उदर्यजलाशयस्य' ।

मस्तिष्कं गोर्दम्

मस्तिष्कम्, गोर्दम् (२ न), 'दिमाग, मस्तिष्क, मादृण्ड' के २ नाम हैं।

मेति ॥ मस्यते, मसनं वा । 'मसी परिणामे' ( दि० प० से० ) । क्तिन् ( ३।३।९४ ) । मस्ति मस्कते । 'मस्क गतौ' (भ्वा० आ० से०) । अच् ( ३।१।१३४ ) । पृषोदरादिः ( ६।३।१०९ ) ॥ (१) ॥*॥ गूर्यते । गुरते वा । 'गुरी उद्यमने' ( तु० आ० से० ) । 'अब्दादयः' (उ० ४।९८) इति साधु ॥ (२) ॥*॥ द्वे 'मस्तकमवस्नेहस्य' ॥

किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥

किट्टम्, ( न ) मलम् ( पु न ), 'नाक, कान आदिके बारह मल' के २ नाम के।

कीति ॥ केटति स्म । 'किट गतौ' (भ्वा० प० से०) । 'गत्यर्था–' ( ३।४।७२ ) इति क्तः । आगमशास्त्रस्यानित्यत्वान्नेट् (१) ॥*॥ मलते । 'मल धारणे' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । 'मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' [ इति मे० १४८।४४ ] । 'वसा शुक्रमसृग्मज्जा 'कर्णविड्मूत्रविड्नखाः । श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः' [इति मनु ५।१३५] ॥ (२) ॥*॥ द्वे 'मलस्य' ॥

अन्त्रं पुरीतत्

अन्त्रम्, पुरीतत् ( २ न ), 'आँत' के २ नाम है।

अन्त्रमिति ॥ अमति, अनेन, वा । 'अम गतौ' ( भ्वा० प० से० ) । 'सर्वधातुभ्यः ष्ट्रन्' ( उ० ४।१५९ ) । 'अमिचिमिदिशसिभ्यः क्त' ( उ० ४।१६४ ) । संज्ञापूर्वकत्वान्न दीर्घः । अन्तति 'अति बन्धने' (भ्वा० प० से०) ष्ट्रन् (उ० ४।१५९) वा ।—'अमियमिमिदेस्तक्'—इति मुकुटोक्तस्तं सूत्रं त्वपाणिनीयम् ॥ (१) ॥*॥ पुरीं शरीरं तनोति । क्विप् ( ३।२।७६ ) । 'गमादीनां–' (वा० ६।४।४० ) इत्यनुनासिकलोपः । तुक्(६।१।७१) । 'पुरीं तनोति' इति पक्षे 'नहिवृति' (६।३।११६) । इति दीर्घः । 'अनुदात्तोपदेश–' (६।४।३७) इति नलोप —इति मुकुटस्य प्रमादः । वस्य झलत्वाभावात् । 'पुरीतदस्त्रियाम्' इति वाचस्पतिः ॥ (२) ॥*॥ द्वे 'आंत' इति ख्यातस्य ।

गुल्मस्तु प्लीहा पुंसि

गुल्मः (पु) प्लीहा (स्त्री), 'गुल्म रोग' अर्थात् 'हृदय की बायीं कोखमें होनेवाले मांस-पिण्ड-विशेष' के २ नाम हैं।

गिवति ॥ गुड्यतेऽस्मात् 'गुड रक्षायाम्' ( तु० प० से० ) मक् । 'भीमादयोऽपादाने' ( ३।४।७४ ) ॥ (१) ॥*॥ प्लेहते 'प्लिह गतौ' ( भ्वा० आ० से० ) । 'श्वन्नुक्षन्पूषन्प्लीहन्–' ( उ० १।१५७ ) इति साधु ॥ (२) ॥*॥ द्वे 'कुक्षिवामपार्श्वे मांसखण्डस्य' ॥

अथ वस्नसा ।

स्नायुः स्त्रियाम्

वस्नसा, स्नायुः ( २ स्त्री ), 'प्रत्येक अङ्ग-उपाङ्गके जोड़की नस' के २ नाम हैं।

अथेति ॥ वस्ते शरीरम् । 'वस आच्छादने' (अ० आ० से० ) । 'धापृवस्यज्यतिभ्यो न.' ( उ० ३।६ ) वस्नं चर्म स्यति । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । 'आतोऽनुप–' (३।२।३ ) इति क. ॥(१) ॥*॥ स्नाति । 'ष्णा शौचे' (अ० प० अ०) । बाहुलकादुण् । 'आतो युक् चिण्कृतोः' (७।३।३३) (२) ॥*॥ द्वे 'अङ्गप्रत्यङ्गसन्धिबन्धनरूपायाः स्नायोः' ॥

कालखण्डयकृती तु समे इमे ॥ ६६ ॥

कालखण्डम्, यकृत् ( २ न ), 'यकृत्' अर्थात् 'हृदयकी कोखमें होनेवाले मांस-पिण्ड-विशेष' के २ नाम हैं।

*कालेति ॥ कालं च तत्खण्डं च ॥ (१) ॥*॥* यमनम् । संपदादि ( वा० ३।३।१०८ ) । 'गमादीनाम्–' ( वा० ६।४।४० ) इति मलोप । आगमानित्यत्वान्न तुक् । यं संयमं करोति क्विप् ( ३।२।७६ ) । तुक् ( ६। १।७१ ) ॥ (२) ॥*॥ 'करण्डा तु महास्नायु, कालेय कालखण्डके' इति रभसः ॥*॥ द्वे 'कुक्षेर्दक्षिणभागस्थमांसखण्डस्य' 'कलेजा-' इति ख्यातस्य ॥

सृणिका स्यन्दिनी लाला

सृणिका, स्यन्दिनी, लाला ( ३ स्त्री ), 'लार' के ३ नाम हैं।

स्रिति ॥ सरति 'सृवृषिभ्यां कित्'(उ० ४।४९) इति निः । 'संज्ञायां कन्' (५।३।७५) ॥*॥ 'सर्तेर्नुम् च' (उ० ४।२३) ईकन् कित्त्वं नुम् च । इति [ सृणीका ] दीर्घमध्यापि ॥ ( १ ) ॥*॥ अवश्यं स्यन्दते । 'आवश्यका–' ( ३।१।१७० ) इति णिनिः ङीप् ( ४।१।५ ) ॥ (२) ॥*॥ लालयते । 'लल ईप्सायाम्' चुरादि. । अच् (३। १।१३४) ॥ (३) ॥*॥ त्रीणि 'लार' इति ख्यातायाः ।

१. 'मूत्रविट् घ्राणकर्णविट्' इति पाठः ।

दूषिका नेत्रयोर्मलम् ।

[ 'नासामलं तु सिङ्घाणं पिञ्जूषं कर्णयोर्मलम् ,' ]

दूषिका ( स्त्री ), आँख के 'कीचर' का १ नाम है।

[नासामलम्, सिङ्घाणम् ( २ न ), 'नकटी, नेटा' अर्थात् 'नाककी मैल' के २ नाम हैं। पिञ्जूषम् (न), 'खोंट' अर्थात् 'कानकी मैल' का १ नाम है।

दूषि ॥ दूषयति। 'दुष वैकृत्ये' ( दि० प० अ० ) ण्यन्तः । 'दोषो णौ' (६।४।९०) इत्यूत्वम् । ण्वुल् (३।१।१३३)। 'अच इः' (उ० ४।१३९) । 'कृत्-' (ग० ४।१।४५) इति ङीष् वा । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) अपि । 'पिच्चोल्कर्क नेत्रमलं दूषी च दूषिकापि च' इति 'दूषिका' अपि ॥ (१) ॥०॥ एकम् 'नेत्रमलस्य' ।

मूत्रं प्रस्रावः

मूत्रम् ( न ), प्रस्रावः ( पु ), 'पेशाब' के २ नाम हैं।

म्विति ॥ मूत्र्यते। 'मूत्र प्रस्रवणे' (चु० उ० से०) । घञ् (३।३।१९) ॥ (१) ॥*॥ प्रस्रूयते। स्रु प्रस्रवणे' ( भ्वा० प० अ० ) । 'प्रे द्रुस्तुस्रुवः' ( ३।३।२७ ) इति घञ् । करणे तु परत्वाल्ल्युट्प्रसङ्गः ॥ ( २ ) ॥*॥ द्वे 'मूत्रस्य' ।

उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥

गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ ।

उच्चारः, अवस्करः ( २ पु ), शमलम्, शकृत्, पुरीषम् ( ३ न ), गूथम्, वर्चस्कम् ( २ पु न ), विष्ठा, विट् (२ स्त्री), 'विष्ठा, पाखाना' के ९ नाम हैं।

उच्चेति ॥ उच्चार्यते त्यज्यते । 'चर गतौ' (भ्वा० प० से०) । ण्यन्तः । घञ् (३।३।१६) अच् (३।३।५६) वा ॥ (१) ॥*॥ अवकीर्यते अधः क्षिप्यते । 'कॄ विक्षेपे (तु० प० से०) 'ऋदोरप्' (३।३।५७) । 'वर्चस्केऽवस्करः' (६।१।१४८) इति सुट् ॥ (२) ॥*॥ शाम्यति, शम्यते वा । 'शकिशम्योर्नित्' ( उ० १।११२ ) इति कल ।— 'शकिशमिवहिभ्योऽल्'—इति मुकुटोपन्यस्तमपाणिनीयम् ॥ (३) ॥*॥ शक्नोति, शक्यते वा नि सर्तुं नि सारयितुं वा। 'शकेर्ऋतिन्' (उ० ४।५८) ॥ (४) ॥*॥ गूयते । 'गुङ् शब्दे' ( भ्वा० आ० अ० ) । 'गु पुरीषोत्सर्गे' (तु० प० अ० )वा। 'तिथपृष्ठगूथ–'(उ० २।१२)इति साधु. ॥ (५) ॥*॥ पिपर्ति शरीरम् । 'पॄ पालनपूरणयोः' (जु० प० से०) । 'कृतॄभ्यामीषन्' ( उ० ४।२६ ) । 'पूभ्यां किच्च' ( उ० ४।२७ ) इतीषन् किच्च । 'उदोष्ठ्यपूर्वस्य' (७।१।१०२) ॥ (६) ॥*॥ वर्चते, वर्च्यते वा । 'वर्च दीप्तौ' (भ्वा० आ० से०) । असुन् (उ० ४।१८९) । कुत्सायां कन् ( ५।३।७४ ) ॥ ( ७ ) ॥*॥ वितिष्ठते उदरे । अनया वा पुरुषः । 'आतश्चोपसर्गे' (३।१।१३६) इति कः । अङ् (३।३।१०६) वा। 'उपसर्गात्–' (८।३।६५) इति षत्वम् ॥ (८) ॥*॥ वेवेष्टि । 'विष्लृ व्याप्तौ' (जु० प० अ०) । क्विप् ( ३।२।१७८ ) ॥*॥ ('विश' इति) तालव्यान्तपाठे विशति । 'विश प्रवेशने' (तु० प० अ०) क्विप् (३।२।१७८) ॥(९)॥*॥ नव 'विष्ठायाः' ।

स्यात् कर्परः कपालोऽस्त्री

कर्परः ( पु ), कपालः ( पु न ) 'कपाल' के २ नाम हैं।

स्यादिति ॥ कल्पते । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) बाहुलकादरः, लत्वाभावश्च । ['कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः' इति हैम २।५६४] ॥ (१) ॥*॥ कं पालयति । 'कर्मण्यण्' ( ३।२।१ ) । कम्पते । 'कपि चलने' (भ्वा० आ० से०) । 'तमिविशि–' (उ० १।११८) इति कालन् । 'कपि' इति निर्देशान्नलोपः । आगमशास्त्रस्यानित्यत्वं वा । 'कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे' [ इति मे० १५०।७२ ] ( २ ) ॥ * ॥ द्वे 'शिरोस्थिखण्डस्य' ।

कीकसं कुल्यमस्थि च ॥ ६८ ॥

कीकसम्, कुल्यम्, अस्थि ( ३ न ) 'हड्डी' के ३ नाम हैं।

कीति ॥ 'कि' इति कसति । 'कस गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) 'कीकसः कृमिजातौ स्यात्पुंसि कुल्ये नपुंसकम्'[इति मे० १७१।२१]॥(१)॥*॥'सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्' इति विश्वः [१४९।११] कुले भवम् । साधु वा । दिगादित्वात् (४।३।५४) यत् । 'तत्र साधुः' (४।४।९८) इति वा । कोलति, कुल्यते वा 'कुल संस्त्याने' (भ्वा० प० से०) । अघ्न्यादि (उ० ४।११२) । 'कुल्यः कुलोद्भवे मान्ये कुलस्यापिहितेऽपि च । कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । पयःप्रणालीसरितोः कुल्या जीवन्तिकौषधौ' इति विश्वः [११८।४६-३७] 'असिसञ्जिभ्यां क्थिन्' ( उ० ३।१५४ ) ॥ (३) ॥*॥ त्रीणि 'अस्थिमात्रस्य' ।

स्याच्छरीरास्थ्नि कङ्कालः

कङ्कालः ( पु ), 'कङ्काल, ठठरी' का १ नाम है।

स्यादिति ॥ 'कम्' इत्यव्ययं सुखे शिरसि च । कं कालयति । 'कल क्षेपे' चुरादिः । अच् (३।१।१३४) । यद्वा,– कङ्कते । 'ककि गतौ' ( भ्वा० आ० से० ) । बाहुलकात्कालन् ॥ ( १ ) ॥*॥ एकं 'त्वङ्मांसरहितशरीरास्थ्नः' ।

पृष्ठास्थ्नि तु कशेरुका।

कशेरुका ( स्त्री ), 'रीढ़' अर्थात् 'पीठके बीचकी हड्डी' का १ नाम है।

पृष्ठेति ॥ कं वायुं शृणाति। केन शीर्यते वा। 'के श्र एरङ् चास्य' (उ० १।८८) इत्यू। 'संज्ञायां कन्' (५।३।७५)। 'केऽणः' (७।४।१३) इति ह्रस्वः। यद्वा-कशति। कश्यते वा। 'कश शब्दे' ( )। बाहुलकादेरु स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ (१) ॥*एकं 'पृष्ठवंशस्य' ॥

शिरोस्थनि करोटिः स्त्री

शिरोस्थि (न), करोटि (स्त्री), 'खोपड़ी' के २ नाम।

शीति ॥ [शिरसोऽस्थि] (१)॥*॥ कं वायु रोटते। 'रुट दीप्तौ प्रतिघाते च' (भ्वा० आ० से०)। केन रुट्यते वा इन् ( उ० ४।११८ ) वा, ङीप् (ग० ४।१।४५)। कं रोटयति वा। 'रुट दीप्तौ' चुरादि। 'अच इः' (उ० ४।१३९) ॥ (२) ॥*॥ द्वे 'मस्तकास्थ्नः'।

पार्श्वास्थनि तु पर्शुका ॥६९॥

पर्शुका ( स्त्री ), 'पँजरी' का १ नाम है।

पेति ॥ स्पृशति, स्पृश्यते वा। 'स्पृश संस्पर्शने' (तु० प० अ०)। 'स्पृशेः श्वण्शुनौ पृ च' (उ० ५।२७) स्वार्थे कन् (ज्ञापि० ५।४।५)। यद्वा,-परं शृणाति। 'आङ्परयोः खनिशृभ्यां डिच्च' (उ० १।३३) इति कुः। बाहुलकात्परस्याकारलोपः। पर्शुरिव। 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ * ॥ 'अप्राणिजातेश्च-' ( वा० ४।१।६६ ) इत्यूङि 'पर्शूः' अपि ॥ (१) ॥*॥ एकं 'पार्श्वास्थ्नः'।

अङ्गं प्रतीकोऽवयवोऽपघनः

अङ्गम् ( न ), प्रतीकः, अवयवः, अपघनः (३ पु), 'शरीर के अङ्ग' के ४ नाम हैं।

अङ्गमिति ॥ अङ्गति। 'अगि गतौ' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति। क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' [ इति मे० २२।२-३ ] ॥ (१) ॥ * ॥ प्रत्येति प्रतीयते वा। 'इण् गतौ' (अ० प० अ०)। 'अलीकादयश्च' ( उ० ४।२५ ) इति साधुः। 'प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः' [इति मे० १०।११३] ॥ (२) ॥*॥ अव यौति। 'यु मिश्रणे' (अ० प० अ०)। अच् (३।१।१३४) ॥ ( ३ ) ॥ * ॥ अपहन्यते। 'अपघनोऽङ्गम्' ( ३।३।८१ ) इति साधुः ॥ ( ४ ) ॥ * ॥ चत्वारि 'देहावयवस्य'।

अथ कलेवरम्।

गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥७०॥

कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः।

कलेवरम्, गात्रम्, वपुः, संहननम्, शरीरम्, वर्ष्म (६ न), विग्रहः, कायः ( २ पु ), देहः ( पु न ), मूर्त्तिः, तनुः, तनूः ( ३ स्त्री ), 'शरीर, देह' के १२ नाम हैं।

अथेति ॥ कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठम्। 'हलदन्तात्-' ( ६।३।९ ) इत्यलुक्। यत्तु—कले रेतसि व्रियते उपयुज्यते। 'कर्मण्यण्' (३।२।१)—इति मुकुट। तन्न। कर्मोपपदत्वाभावात्। कर्मणि कारके विधायकाभावात्। वृद्धिप्रसङ्गाच्च ॥ ( १ ) ॥*॥ गाते 'गाङ् गतौ' (अ० आ० अ०)। ष्ट्रन् ( उ० ४।१५९ ) इति वा। 'बहुलं तणि' ( वा० २।४।५४ ) इति इणो गा। 'गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे' इति विश्व-मेदिन्यौ ॥ (२) ॥*॥ वपति, उप्यते, वा। 'डुवप्'। 'अर्तिपृवपि' (उ० २।११७) इत्युसि। 'वपुः क्लीबं तनौ शस्ताकृतावपि' [इति मे०] ॥ (३) ॥*॥ संहन्ति। संहन्यते वा। 'कृत्यल्युट.-' (३।३।११३) इति ल्युट्। यद्वा,-संहन्यन्तेऽस्मिन् भूतानि। 'करणा-' (३।३।११७) इति ल्युट् ॥ (४) ॥*॥ शृणाति, शीर्यते वा। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'कॄशॄपॄकटि-' (उ० ४।३०) इतीरन् ॥ (५) ॥*॥ वर्षति, वृष्यते, वा। 'वृषु सेचने' (भ्वा० प० से०)। मनिन् (उ० ४।१४५) ॥ (६) ॥ * ॥ विविधं सुखादि गृह्णाति। अच् (३।१।१३४) विविधैर्व्याधिभिर्गृह्यते वा। 'ग्रहवृद्-' (३।३।५८) इत्यप्। 'विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्' [इति मे० १७६।२३] ॥ (७) ॥*॥ चीयतेऽन्नादिभिः। 'चिञ् चयने' (स्वा० उ० अ०)। 'निवासचिति-' (३।३।४१) इति घञ्। चस्य कः। 'कायः कईवते मूर्तौ संघे लक्ष्यस्वभावयोः। मनुष्यतीर्थे कायं स्यात्' [ इति मे० ११३।१२ ] ॥ (८) ॥*॥ दिह्यते। 'दिह उपचये' ( अ० उ० अ० )। घञ् (३।३।१९) ॥ (९) ॥*॥ मूर्च्छति। 'मुर्छा मोहसमुच्छ्राययोः' (भ्वा० प० से०)। क्तिन् ( ३।३।१७४ )। 'राल्लोपः' (६।४।२१)। 'मूर्तिः पुन प्रतिमाया कायकाठिन्ययोरपि' इति हैम [२।१९१] ॥ ( १० ) ॥*॥ तनोति, तन्यते, वा। 'भृमृशि-' (उ० १।७) इत्यु। 'तनुर्वपुस्त्वचोः। विरलेऽल्पे कृशे' इति [ हैम. २।२७० ]। 'तनुः काये त्वचि' स्त्री स्यात् त्रिष्वल्पे विरले कृशे' इति विश्व-मेदिन्यौ [८६।

१. 'कृशे चाल्पे विरलेऽपि च वाच्यवत्' इति विश्वे-पाठः।

१८,९३।९] ॥*॥'अतिपूर्वपि' (उ० २।११७) इत्यादिना उसि 'तनु'[1] सान्तापि ॥*॥ 'प्राणिजाते –' ( ) इत्यूङ् ॥ (११) ॥*॥ एकादश देहस्य'।

पादाग्रं प्रपदम्

पादाग्रम्, प्रपदम् ( २ न ), 'पैरका चौवा' अर्थात् 'पैरके आगेवाले हिस्से' के २ नाम हैं।

प्रेति ॥ पादस्याग्रम् । (१)॥*॥ प्रकृष्ट प्रारब्ध प्रगत वा पदम् । 'प्रादयो गता–' ( वा० २।२।१८ ) इति समास ॥ (२) ॥*॥ द्वे 'पादाग्रस्य' ॥

पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्॥७१॥

पाद, पद, अङ्घ्रि (३ पु), चरण (पु न), 'पैर' के ४ नाम हैं।

पाद इति ॥ पद्यते । पद गतौ' (दि० आ० अ० ) । 'पदरुज–' ( ३।३।१६ ) इति घञ् । पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' [इति मे० ७५।९-१०] ॥ ( १ ) ॥ * ॥ पद्यते । क्विप् (३।२।१७८) । स्वामी तु 'पदोऽङ्घ्रि'—इति पठन् दान्त न मन्यते । 'पद्दन –' ( ६।१।६३ )इत्यादेशविधानाज्ज्ञापकात् । अन्ये तु—पादादेश एवाय पठित —इत्याहु । प्रभृतिग्रहणस्य प्रकारार्थत्वेन दशाद्यनन्तर्भूतेऽपि तत्प्रवृत्ते सम्भवात् । अत एव 'ओङ्‍ स्याम् ककुद्दोपणी' इति ( प्रकृतसूत्रे ) भाष्योदाहरणमपि सगच्छते । पद्यतेऽनेन । सनो 'च च' (३।३।१२५) इति घो धित्करणाद् 'अन्यतोऽपि–' इति पदशब्दोऽदन्त स्वाम्युक्त ॥ (२)॥ * ॥ अहते, अनेन । 'अहि गतौ ( भ्वा० आ० से० ) । 'वङ्क्यादयश्च' (उ० ४।६६) इति साधु ॥ * ॥ 'अह्रो रहो द्रुहिण सहर्पाङ्घ्री च पश्चुतय '॥ ( ३)॥ * ॥ चरन्त्यनेन । 'करणा–' (३।३।११७) इति ल्युट् । चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चापि नपुसक उदाहृत ' इति मेदिनी [४८।४८] ॥ (४) ॥*॥ चत्वारि 'चरणस्य' ।

तद्ग्रन्थी घुटिके गुल्फौ

घुटिका ( स्त्री ), गुल्फ (पु), 'पैरकी घुट्ठी' के २ नाम हैं।

तदिति ॥ तस्य पादस्य ग्रन्थी । घोटतेऽनया । 'घुट परिवर्तने' ( भ्वा० आ० से० ) । क्वुन् (उ० २।३२)॥ (१) ॥*॥ गलति, गल्यते वा । 'गल अदने' (भ्वा० प० से०) । 'कलिगलिभ्या फगस्योच्च' ( उ० ५।५६ ) इति फक् । अत उत्व च ॥ (२) ॥*॥ द्वे पादग्रन्थ्यो ' ॥

१ 'तनुपी तनुविरलुतौ' इति वैजयन्ती (२२५।१२) । ( १।४७ ) नान्तश्च ।

पुमान्पार्ष्णिस्तयोरधः।

पार्ष्णि (पु), 'पैरकी घुट्ठीके नीचेवाले हिस्से' का १ नाम है।

पुमेति ॥ तयोर्गुल्फयोरध । पृष्यते अनेन वा । 'पृषु सेचने' (भ्वा० प० से०) । 'घृणिपृश्निपार्ष्णि–' (उ० ४। ५२) इति साधु ।—'पार्ष्ण्यादयश्च' इति त्वपाणिनीयम् । 'पार्ष्णि स्त्रीपुसयो पादमूले स्याद् ध्वजिनीकटौ' इति रन्तिदेवः ॥ (१) ॥*॥ एकं 'पादपश्चाद्भागस्य'।

जङ्घा तु प्रसृता

जङ्घा, प्रसृता ( २ स्त्री ), 'जंघा' के २ नाम हैं।

जेति ॥ जायते । 'जनी प्रादुर्भावे' (दि० आ० से०) । अच् तस्य जघच्' (उ० ५।३१) । यद्वा,–जङ्घन्यते कुटिल गच्छति । हन्तेर्यङ्लुगन्तात् 'अन्येभ्योऽपि–'(वा० ३।१०१) इति ड ॥ (१) ॥*॥ प्रसरति स्म, प्रस्रियते स्म वा । 'गत्यर्था–' ( ३।४।७२ ) इति क्त । कर्मणि क्त (३।२। १०२) । प्रकृष्ट सृत गमनमनया वा ॥ (२) ॥*॥ द्वे 'जङ्घायाः'।

जानूरुपर्वाष्ठीवदस्त्रियाम् ॥७२॥

जानु, ऊरुपर्व, अष्ठीवत् ( ३ पु न ), 'घुटना, ठेहुन' के ३ नाम हैं।

जान्विति ॥ जायते । 'दृसनिजनिचरि–' (उ० १।३) इति ञुण् । 'जनिवध्योश्च' ( ७।३।३५ ) इति न प्रवर्तते । अनुवन्धद्वयसामर्थ्यात् । जानुरर्धर्चादि ( २।४।३१ ) । 'अस्त्रियाम्' इति त्रिभि सबध्यते । ( समस्तत्वात् ) ॥ (१) ॥*॥ ऊर्णूयते । 'ऊर्णोतेर्नुलोपश्च' ( उ० १।३० ) इति कु । ऊरो पर्व ॥ ( २ ) ॥ * ॥ अतिशयितमस्थि यस्मिन् । मतुप् (५।२।९४) । 'आसन्दीवद्–' (८।२।१२) इति साधु ॥ (३) ॥*॥ त्रीणि 'जानूरुसन्धे '।

सक्थि क्लीबे पुमानूरु

सक्थि (न), ऊरु (पु), 'घुटनेके ऊपरवाले हिस्से' के २ नाम हैं।

सेति ॥ सजति, सज्यते, वा । 'षञ्ज सङ्गे' ( भ्वा० प० अ० ) 'असिसञ्जिभ्या क्थिन्' (उ० ३।१५४) ॥ (१) ॥*॥ अर्यतेऽनेन । 'ऋ गतौ' (भ्वा० प० से०) । 'अर्तेरुरच् च' इति कु, ऊरादेशश्च । ऊरु —इति मुकुट । तदपाणिनीयम् ।—ऊर्वति । 'उर्वी हिंसायाम्' (भ्वा० प० से०) इति स्वामी । तदपि न । उप्रत्ययवलोपयोर्विधायकाभावाच्च । 'ऊर्णोतेर्नुलोपश्च' ( उ० १।३० ) इत्यस्य सत्त्वाच्च ॥ (२) ॥*॥ द्वे 'जानूपरिभागस्य' ॥

तत्संधिः पुंसि वङ्क्षणः ।

वङ्क्षणः (पु), 'घुटना तथा उसके ऊपरके जोड़' का १ नाम है।

तदिति ॥ तस्य ऊरोः । वाङ्क्षति, वाङ्क्षयते, वा । 'वाक्षि काङ्क्षायाम्' (भ्वा० प० से०) । ल्युट् (३।३।११३) । बाहुलकाद्धातोर्ह्रस्वः । वङ्क्षते । वङ्क्षणः—इति स्वामी । यद्वा,—वक्षति । 'वक्ष रोषसंहत्योः' (भ्वा० प० से०) । ल्युट् (३।३।११३) 'आच्छीनद्योर्नुम्' (७।१।८०) इत्यत्र 'नुम्' इति योगविभागान्नुम् ॥ (१) ॥*॥ एकम् 'ऊरुसंधेः' ॥

गुदं त्वपानं पायुर्ना

गुदम्, अपानम् (२ न), पायुः (पु), 'पाखानाके रास्ता' के २ नाम हैं।

गिवति ॥ गोदते । 'गुद क्रीडायाम्' (भ्वा० आ० से०) । 'इगुपध-' (३।१।१३५) इति क ।—गुदति—इति मुकुटस्य प्रमादः । यद्वा,—गूयतेऽनेन 'गु पुरीषोत्सर्गे' (तु० प० अ०) । गवते । 'गुङ् शब्दे' (भ्वा० आ० अ०) वा, 'अब्दादयश्च' (उ० ४।९८) इति साधु ।—'गुदाश्च.'—इति मुकुटस्त्वपाणिनीयत्वादुपेक्ष्यः ॥ (१) ॥*॥ अपानित्यनेन । 'अन प्राणने' (अ० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (२) ॥*॥ पाति मलनि सारणेन । 'पा रक्षणे' (अ० प० अ०) 'कृवापा-' (उ० १।१) इत्युण् । यद्वा,—पिबति वस्त्यौषधम् । 'पा पाने-' (भ्वा० प० अ०) । प्राग्वत् ॥ (३) ॥*॥ त्रीणि 'विष्ठानिर्गममार्गस्य' ।

वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥

वस्तिः (पु स्त्री) 'मूत्राशय' का १ नाम है।

वेति ॥ वसति मूत्रमत्र । यद्वा,—वस्ते, वस्यते वा । 'वस निवासे' (भ्वा० प० अ०) । 'वस आच्छादने' वा । (अ० आ० से०) 'वसेस्ति.' (उ० ४।१८०) ।—'स्वसिभ्यां क्तिन्-' इति मुकुटस्त्वपाणिनीयः ॥*॥ 'मूत्राशय[1]पुटे वस्तिः' इति रत्नमाला ॥ (१) ॥*॥ एक 'नाभ्यधोभागस्य' ॥

कटो ना श्रोणिफलकं

कटः (पु), श्रोणिफलकम् (न) 'कमरके दोनों बगल' के २ नाम हैं।

केति ॥ कटते । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । 'पुंसि-' (३।३।११८) इति घ । 'शवे श्रोणौ किलिञ्जे च गजगण्डे भृशे कटः' इति शाश्वत ॥ (१) ॥*॥ श्रोणेः फलकमिव । चर्माकारत्वात् ॥ (२) ॥*॥ द्वे 'कटीफलकस्य' ॥

कटिः श्रोणिः ककुद्मती ।

कटि, श्रोणिः, ककुद्मती (२ स्त्री), 'कमर' के ३ नाम हैं।

केति ॥ कट्यते । 'कटे वर्षावरणयोः' (भ्वा० प० से) । इन् (उ० ४।१।११८) वा । ङीप् (ग० ४।१।४५) ॥ (१) ॥*॥ श्रोणति । 'श्रोणृ संघाते' (भ्वा० प० से०) । इन् (उ० ४।११८) वा । ङीप् (ग० ४।१।४५) (२) ॥*॥ ककुद् वृषास इव मांसपिण्ड. ककुत् । सोऽतिशयितोऽस्याम् मतुप् (५।२।९४) । यवादित्वात् (८।२।९) न वत्वम् ॥ (३) ॥*॥ त्रीणि 'कटे' ॥ 'पञ्चापि पर्याया' इत्यन्ये ॥

पश्चान्नितम्बः स्त्रीकट्याः

नितम्बः (पु) 'स्त्रियों के चूतड़' का १ नाम है।

नेति ॥ नितम्बति । नितम्ब्यते, वा । 'तम्ब गतौ' ( ) । अच् (३।१।१३४) घञ् । (३।३।१९) वा । यद्वा,—निभृतं तम्यते कामुकैः । 'तमु काङ्क्षायाम्' (दि० प० से०) । तम्यति सुरतसंमर्दाद्वा । 'तमु ग्लानौ' (दि० प० से०) । 'उल्बादयश्च' (उ० ४।९५) इति साधु ॥ (१) ॥*॥ एकं 'स्त्रीकट्याः पश्चाद्भागस्य' ॥

क्लीबे तु जघनं पुरः ॥ ७४ ॥

जघनम् (न), 'स्त्रियोंकी जंघा' का १ नाम है।

क्लीति ॥ हन्यते । 'हन्ते शरीरावयवे द्वे च' (उ० ५।३२) इत्यच् ।—'हनो जघ-' इति क्युजंघादेशश्च—इति मुकुटस्त्वपाणिनीय । यद्वा,—वक्रं हन्ति । यङ्लुगन्तात् 'अच—' (३।१।१३४) 'अनित्यमागमशास्त्रम्' इत्यभ्यासस्य नुक् न । मुकुटस्तु—भृशं हन्यते । हनो यङन्तान् पचाद्यचि नैरुक्ते नलोपे वा—इत्याह । तन्न । हिंसार्थस्य घ्नीभावप्रसङ्गात् । गत्यर्थस्य 'भृशं हन्यते' इति विग्रहासंभवात् । गत्यर्थाना कौटिल्य एव यङ्विधानात् । 'हन्यते' इति कर्मविग्रहे पचाद्यचोऽसंभवाच्च । 'जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि' [इति मे०] ॥ (१) ॥*॥ एकं 'स्त्रीकट्या अग्रभागस्य' ॥

कूपको तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।

कूपकः (पु), कुकुन्दरम् (न), 'चूतडपर पृष्ठ-वंशके नीचेवाले गढे' के २ नाम हैं।

कूपेति ॥ कूपाविव । 'इवे-' (५।३।९६) इति कन् । कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे' इति हैम. [ ३।

1. 'नाभेरधो मूत्रपुटं वस्तिर्मूत्राशयोऽपि च' (अभि० चि० म० ३।२७०) इति हैमोक्तेः आशयपुटयोर्द्वन्द्वं कृत्वा मूत्रशब्देन सम्बन्धात् मूत्राशयो मूत्रपुटश्चेत्यर्थो बोध्यः ।

**स्कन्धो भुजशिरोंऽसोऽस्त्री**

स्कन्ध (पु), भुजशिर, (न०) अस (पु न), 'कन्धे' के ३ नाम हैं।

स्केति ॥ स्कद्यते । 'स्कन्दिर् गतिशोषणयो' (भ्वा० प० अ०) घञ् (३।३।१९) । 'स्कन्देश्च स्वाङ्गे' (उ० ४।२०७) इति बाहुलकादनमुप्यपि घ । 'स्कन्ध प्रकाण्डे कार्योऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैम [२।२५६] ॥ (१) ॥*॥ भुजस्य शिर ॥ (२) ॥*॥ अस्यते समाहन्यते भारादिना । 'अंस समाघाते' (चु० उ० से०) । घञ् (३।३।१९) यद्वा –अमति, अम्यते, वा । 'अम गतौ' (भ्वा० प० से०) । 'अमे सन्' (उ० ५।२१) । 'अंस स्कन्धे विभागे स्यात्' इति हैम [२। ५८७] ॥ (३) ॥*॥ त्रीणि 'भुजशिरस' ।

**सधी तस्यैव जत्रुणी ॥७८॥**

जत्रु (न), 'कन्धेके जोड़' का १ नाम है।

समिति ॥ जायते बाहुरस्मात् । 'जन्त्रादयश्च' (उ० ४।१०२) इति साधु ॥ (१) ॥*॥ एवम् 'असयदायो सधे' ।

**बाहुमूले उभे कक्षौ**

बाहुमूलम् (न), कक्ष (पु), 'काँख' के २ नाम हैं।

बेति ॥ कष्यते । 'कष हिंसायाम्' (भ्वा० प० से०) 'वृतॄवदिहनिकमिकषिभ्य स' (उ० ३।६२) । 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्धापदे, ना दोर्मूले[१] कच्छवीरुत्तृणेषु च' (इति मेदिनी) ॥ (२) ॥*॥ बाह्वोर्मूलम् ॥ (१) ॥*॥ द्वे कक्षस्य' ।

**पार्श्वमस्त्री तयोरधः ।**

पार्श्वम् (न पु), 'कोख' अर्थात् 'काँखके नीचेवाले भाग' का १ नाम है।

पेति ॥ स्पृश्यते । 'स्पृश स्पर्शने' (तु० प० अ०) 'स्पृशे श्वण्शुनौ पृ च' (उ० ५।२७) । णित्वाद्वृद्धि (७।२।११५) । यद्वा–पर्शूना समूह । 'पर्श्वा णस वक्तव्य' (वा० ४।२।४३) सित्वात् (१।४।१६) पदत्वेन भत्वाभावाद् 'ओर्गुण' (६।४।१४६) इति न । 'पार्श्वमन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि च[२]' इति हैम [२। ५४३-५४४] ॥ (१) ॥*॥ एक 'कक्षयोरधोभागस्य' ।

**मध्यम चावलग्नं च मध्योऽस्त्री**

मध्यमम्, अवलग्नम् (२ न), मध्य (३ पु न), 'शरीरके मध्य भाग' के ३ नाम हैं।

मेति ॥ मध्ये भवम् । 'मध्यान्म' (४।३।८) । 'मध्यमो मध्यजेऽन्यवत् । पुमान्स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयो । त्र्यक्षरच्छन्दसि तथा' [इति मेदिनी १११।४९-५१] ॥ (१) ॥*॥ लग्यते स्म । 'लगे सङ्गे' (भ्वा० प० से०) । 'क्षुब्धस्वान्त –' (७।२।१८) इति साधु । यद्वा,–लज्जते स्म । 'ओलस्जी व्रीडे' (तु० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्त । 'स्को –' (८।२।२९) इति सलोप । 'ओदितश्च' (८।२।४५) इति नत्वम् । 'श्वीदित' (७।२।१४) इति नेट् । अवकृष्टम्, अवसन्नम्, वा लग्नम् । 'प्रादयो गता–' (वा० २।२।१८) इति समास । 'अवलग्नोऽस्त्रिया मध्ये त्रिषु स्यात्लग्नमात्रके' (इति मेदिनी ८४।१९) ॥ (२) ॥*॥ मध्ये शरीरस्य भवम् । 'असा- प्रतिके' (४।३।९) इत्य । यद्वा,–मा शोभा धत्ते । 'अघ्न्यादयश्च' (उ० ४।११२) इति साधु । 'मध्य[१] विलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिषु' [इति मेदिनी २।२७१] ॥ (३) ॥*॥ ('मध्योऽवलग्न विलग्न मध्यम' इति नाममाला) ॥*॥ त्रीणि 'देहमध्यस्य' ।

**द्वौ परौ द्वयो ॥ ७९ ॥**

**भुजबाहू प्रवेष्टो दोः स्यात्**

भुज, बाहु (२ पु स्त्री), प्रवेष्ट, दो (२ पु), 'बाँह' के ४ नाम हैं।

द्वाविति ॥ परौ भुजबाहू । भुज्यतेऽनेन । 'भुज पालनाभ्यवहारयो' (रु० प० अ०) 'भुजन्युब्जौ–' (७।३।६१) इति साधु । यद्वा,भुजति । 'भुजो कौटिल्ये' (तु प० से०) । 'इगुपध–' (३।१।१३४) इति क । 'अथो भुजा । द्वयोर्बाहौ करे' इति मेदिनी [३०।१२-१३] ॥ (१)॥*॥ बाधते । 'बाधृ विलोडने' (भ्वा० आ० से०) । 'अर्जिदृशिकम्यमि–' (उ० १।२७) इत्यु, हृस्वान्त्यस्य । मुकुटस्तु—बहन्त्यनेन । 'बहिरहितलिपशिभ्यश्च' इत्युण्—इत्याह । तदपाणिनीयत्वादुपेक्ष्यम् ॥ * ॥ वहे 'हलश्च' (३।३।१२१)इति घञ । बाहते 'बाहृ प्रयत्ने'(भ्वा० आ० से०) अच् (३।१।१३४) वा । 'बाहोऽश्वभुजयो पुमान्' इति दामोदर । 'बाहो बाहुरिति स्मृत' इति देशीकोष । ('बाहोऽश्वमानयो । वृषे, बाहा तु बाहौ स्यात्' इति हैम २।६१५) ॥ (२) ॥ * ॥ प्रवेष्टते । 'वेष्ट वेष्टने (भ्वा० आ० से०) । अच् (३।१।१३४) । (३) ॥ * ॥ दाम्यत्यनेन । 'दमु उपशमे' (दि० प० से० )। 'दमेर्डोस्' (उ० २।६९) ॥ * ॥ भागुरिमते टाप् ॥

१ 'स्पर्शास्पदे' 'कक्षदोर्मूल–' इति मेदिनीपाठ ।
२ हैमे पुस्तकत्रये–'पान्तपर्शुसमूहयो' इति पाठ ।

१. 'मध्य विलग्ने ''ऽधमे त्रिषु' इति पाठो मेदिन्याम्

( ४ ) ॥*॥ "'दोर्दोषा च भुजो बाहु', पाणिर्हस्तः करस्तथा' इति धनंजयः ॥ * ॥ चत्वारि 'भुजस्य' ।

कफोणिस्तु कूर्परः।

कफोणिः ( पु स्त्री ) कूर्परः (पु) 'केहुनी' के २ नाम हैं।

केति ॥ कं सुखं स्फोरयति । 'स्फुर स्फुरणे संचलने च' ( तु० प० से० ) । ण्यन्त. । 'अच इ' ( उ० ४। १३९ ) । पृषोदरादि. ( ६।३।१०९ ) । यद्वा,–केन सुखेन फणति, स्फुरति, वा । 'फण गतौ' ( भ्वा० प० से० ) । 'स्फुर सचलने' (तु० प० से०) वा । इन् ( उ० ४।११८ ) । पृषोदरादिः ( ६।३।१०९ ) । 'कफोणि. कफणिर्द्वयो.' इति शब्दार्णव. ॥ ( १ ) ॥ * ॥ कुरति 'कुर शब्दे' ( तु० प० से० ) क्विप् ( ३।२।१७८ ) । कोरणम् । संपदादि. ( वा० ३।३।१०८ ) वा । पिपर्ति । 'पॄ पालनपूरणयो.' ( जु० प० से० ) । अच् ( ३।१। १३४ ) । कूर् चासौ परश्च । यद्वा,–कुरा शब्देन पर । यद्वा,–कुप्यत्यनेन वा 'कुप क्रोधे' ( दि० प० से० ) । बाहुलकादरन् दीर्घश्च ॥ (२) ॥ * ॥ 'कफोणि कूर्परोऽरत्ने पृष्ठम्' इति नाममाला [ १७९।७२ ] द्वे 'कूणी' इति ख्यातस्य 'भुजमध्यग्रन्थे.' ॥

अस्योपरि प्रगण्डः स्यात्

प्रगण्डः (पु), 'केहुनीके ऊपरवाले भाग' का १ नाम है।

अस्येति ॥ कूर्परस्योर्ध्वे प्रत्यासन्नो गण्डः । कपोलोऽस्य ॥ ( १ ) ॥ * ॥ एकम् 'कूर्परोपरिभागस्य' ।

प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥

प्रकोष्ठः ( पु, न ), 'केहुनीके नीचेवाले भाग' का १ नाम है ।

प्रेति ॥ प्रकुष्यतेऽनेन कुसूलादसम् । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'उषिकुषिगार्तिभ्यस्थन्' (उ० २।४) प्रविष्ट. कोष्ठं कुसूलम् । 'अत्यादयः क्रान्ता–'(वा० २।२। १८ ) इति समासो वा । 'प्रकोष्ठमन्तरं विद्यादरत्नमणिबन्धयो.' इति माधव । 'प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात्' [ इति मे० ३९।१४-१५]॥(१) ॥*॥ एकं 'कफोणेरधो मणिबन्धपर्यन्तस्य' ।

मणिबन्धादाकनिष्ठं करस्य करभो वहिः ।

करभः ( पु ), 'हाथकी कलाईसे कनिष्ठातकवाले बाहरी मांसल भाग' का १ नाम है।

मणीति ॥ मणिर्बध्यतेऽत्र । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'हलश्च' ( ३।४।१२१ ) इति घञ् । ['मणिबन्धः पाणिमूलम्' इति हलायुध २।३७८ ] । 'करोऽस्यादौ मणिबन्धो मणिश्च स.' इति हैमनाममाला [ ३।२५५ ] ॥*॥ कनिष्ठाया आ । 'आङ् मर्यादाभिविध्यो' (२।१ १३) इत्यव्ययीभावः ॥*॥ कृणाति । 'कॄञ् हिंसायाम्' (क्र्या० प० से०) । किरत्यनेन । 'कॄ विक्षेपे' (तु० प० से०) वा । 'कॄशॄशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२)। —'कॄशॄर्गदराशिवल्लिभ्योऽभच्' इति मुकुटोऽपाणिनीयः । करे भाति । 'भा दीप्तौ' (अ० प० अ०) । 'सुपि–' (३। २।४) इति को वा । 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' [ इति मे० १०७।१४ ] ॥ ( १ ) ॥ ॥*॥ 'ज्ञापकसिद्धं न सर्वत्र' इति बहिर्योगे पञ्चमी ( ज्ञापि० २।१।१२) न ॥*॥ एकम् 'करबहिर्भागस्य' ।

पञ्चशाखः शयः पाणिः

पञ्चशाखः, शयः, पाणिः (३ पु), 'हाथ' के ३ नाम हैं।

पञ्चेति ॥ पञ्च शाखा इवाङ्गुलयोऽस्य ॥ (१) शेतेऽस्मिन् सर्वम् । 'पुंसि–' ( ३।३।१२१ ) इति घ । 'शम. शय्याहिपाणिषु' ( इति मे० ११७।५७ ] ॥ * ॥ 'शम' इति पाठान्तरम् । शाम्यति कण्डूर्मलो वाऽनेन । 'शमु उपशमे' (दि० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'नोदात्तोपदेश–' ( ७।३।३४ ) इति न वृद्धिः । 'पणिः शम शयो हस्त ' इत्यमरमाला ॥(२)॥*॥ पणायत्यनेन । 'पण व्यवहारे' (भ्वा० आ० से०) । 'अशिपणाय्योरुडायलुकौ च' ( उ० ४।१३३ ) इतीण् आयप्रत्ययस्य लुक् च ।—पण्यतेऽनेन । बाहुलकात् इञ्—इति मुकुटस्तूत्रसूत्रास्मरणमूलकः ॥ (३) ॥*॥ त्रीणि 'हस्तस्य' ।

तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥

तर्जनी, प्रदेशनी ( २ स्त्री ), 'तर्जनी' अर्थात् 'अँगूठेके पासवाली अंगुली' के २ नाम हैं।

तेति ॥ तर्ज्यतेऽनया । 'तर्ज भर्त्सने' ( भ्वा० प० से० ) । 'करणा–' ( ३।३।११७ ) इति ल्युट् ॥ ( १ ) ॥*॥ प्रदिश्यतेऽनया । 'दिश अतिसर्जने' (तु० उ० अ०)। ल्युट् (३।३।११७) ॥*॥ 'प्रदेशिनी' इति पाठान्तरम् । प्रदिशति । 'सुपि' ( ३।२।७८ ) इति णिनि. । प्रदेशोऽस्त्यस्या. । इनि. ( ५।२।११५ ) वा ॥ (२) ॥*॥ द्वे 'अंगुष्ठसमीपांगुल्याः' ।

अङ्गुल्यः करशाखाः स्युः

अङ्गुली, करशाखा ( २ स्त्री ), 'अङ्गुली' के २ नाम हैं।

अङ्ग्विति ॥ अङ्गति । 'अगि गतौ'(भ्वा० प० से०)। 'ऋतन्यञ्जि–' ( उ० ४।२ ) इत्युलिः । अंगु पाणिपाद-

१. सान्तोऽयम् । तथा च लक्ष्यम्—'दोर्दण्डाश्रितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत.' इति महावीरचरितम्, इति सा० द० ( पृ० २५६ ) । 'नूनमस्मद्विनाशाय विधिना दोः प्रसारित ' इति रामा.

मवयव लाति । बाहुलकाड्डिर्वा । 'अंगुलिः' करशाखायां कर्णिकायां गजस्य च' इति हैम [३।३६०]। विश्वप्रकाश [१५९।१२९] ॥ * ॥ 'वालमूलल्वगुलीना वा लो र' (वा० ८।२।१८) । ( अगुरि ) ॥ * ॥ 'अगुलस्तु यवो मत ' इत्यमरदत्त ।'अगुलो ना यवमानम्' इति वाचस्पति । तथाङ्गेर्बाहुलकादुल ॥ (१)॥*॥ करस्य शाखा इव ॥ (२) ॥*॥ द्वे 'अगुलीमात्रस्य' ।

पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥८२॥

अङ्गुष्ठ (पु), प्रदेशिनी, मध्यमा, अनामिका, कनिष्ठा (४ स्त्री), 'अंगूठेसे लेकर कनिष्ठा तकवाली प्रत्येक अङ्गुली' का क्रमश १-१ नाम है।

पुसीति ॥ अंगुलशब्दोऽङ्गवाची । अङ्गो पाणौ तिष्ठति । 'सुपि-' ( ३।२।४ ) इति क । 'अम्बाम्ब-' (८।३।९७) इति षत्वम् ॥ ( १) ॥ * ॥ तर्जन्युक्तापि यथासख्याय पुनरुक्ता ॥ (१)॥*॥ मध्यभवा । 'मध्यान्म' (४।३।८) । 'मध्यमो मध्यजे स्वरे । देहमध्ये मध्यदेशे मध्यमा कर्णिकाङ्गुलि । राका रजस्वला चापि' इति हैम [३।५०० ५०१] ॥ (१) ॥*॥ न नाम ग्रहणयोग्यमस्या, ब्रह्मणोऽनया शिरश्छेदनात् । अत एवास्या पवित्रीक्रियते ॥ (१) अत्यल्पा । 'अतिशायने-'[२] (५।३।५५) इतीष्ठन् । 'युवाल्पयो कन्-' (५।३।६४)'कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुली' इति हैम ( ३।१७७) ॥ (१) ॥*॥ क्रमेण एकैकम् 'अगुलीनाम्' ॥

पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।

पुनर्भवः, कररुह (२ पु), नख, नखरः (२ पु न), 'नाखून नँह' के ४ नाम हैं।

प्विति ॥ पुनर्भवति । अच् ( ३।१।१३४ ) ॥ * ॥ 'पुनर्नव ' इति वा पाठ ॥ ( १ ) ॥ * ॥ करे रोहति । 'इगुपध-' ( ३।१।१३५ ) इति क ॥ ( २ ) ॥ * ॥ न खमस्य । 'न भ्राट्-' ( ६।३।७५ ) इति साधु । 'नखो स्त्रीपुसयो शुक्तौ नखरे पुनपुसकम्' इति मेदिनी[३] [१६४।२५] ॥ (३)॥*॥ न खनति, खन्यते वा । 'डरेकवक्ता ' (वा० ३।३।१२५) । नखं राति वा । 'नखर त्रिषु' इत्यमरमाला ॥ (४) ॥*॥ चत्वारि 'नखस्य' ।

---

१ विश्वे 'अंगुली—'इति दीर्घकारान्त पाठ ।
२ 'द्विवचन—'इतीष्ठन्। इति पाठः।
३ 'नखी स्त्रीक्लीबयो —' इति पाठो मेदिन्याम् ।

प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥

प्रादेशः ( पु ), 'फैलाये हुए तर्जनी और अँगूठेके बीचके प्रमाण-विशेष' का १ नाम है।

ताल' ( पु ), 'फैलाये हुए मध्यमा और अँगूठेके बीचके प्रमाण-विशेष' का १ नाम है।

गोकर्ण ( पु ), 'फैलाये हुए अनामिका और अँगूठेके बीचके प्रमाण-विशेष' का १ नाम है।

प्रेति ॥ प्रदिश्यते । 'दिश अतिसर्जने' (तु० उ० अ०)। 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'उपसर्गस्य-' (६।३।१२२) इति वा दीर्घ । 'प्रदेशो देशमात्रे स्यात्तर्जन्यगुष्ठसमिते' (इति मेदिनी) ॥ ( १ ) ॥*॥ तलत्यत्र । 'तल प्रतिष्ठायाम्' ( चु० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'ताल करतलेऽगुष्ठमध्यमाभ्या च समिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे' [इति मे० १४१।२३] ॥ (१) ॥ ॥ गो कर्ण इव । गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे । अगुष्ठानामिकोन्माने गोकर्णी मूर्विकोषधौ' इति विश्व [ ५३।७०-७१ ] ॥ ( १ ) ॥*॥ 'तर्जन्यादिसहिते विस्तृतेऽगुष्ठे' क्रमेणैकैकम् ।

अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।

वितस्तिः ( पु स्त्री ), द्वादशाङ्गुलः (पु), 'बित्ता अर्थात् फैलाये हुए कनिष्ठा और अँगूठेके बीचके प्रमाण-विशेष' के २ नाम हैं ।

एति ॥ कनिष्ठया सह विततेऽङ्गुष्ठे । वितस्यति । वितस्यते वा । 'तसु उपक्षये' ( दि० प० से० ) । 'वौ तसे ' (उ० ४।१८२) इति ति ॥—बाहुलकात्ति —इति मुकुट एतत्सूत्रास्मरणमूलक ॥ ( १ ) ॥ * ॥ द्वादश अगुलय प्रमाणमस्य । 'तद्धितार्थोत्तर-' (२।१।५१) इति द्विगु । 'द्विगोर्नित्यम्' ( वा० ५।२।३७ ) इति मात्रचो लुक् । 'तत्पुरुषस्याङ्गुले' ( ५।४।८६ ) इत्यच् ॥ ( २ ) ॥*॥ द्वे 'वितस्ते' ।

पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥

चपेट', प्रतल, प्रहस्त ( ३ पु ), 'थप्पड़, चटकन' के ३ नाम हैं।

चेति ॥ चपति । 'चप सान्त्वने' (भ्वा० प० से०) । अच् ( ३।१।१३४ ) । एटति । 'इट गतौ' ( भ्वा० प० से० ) । 'इगुपध-' (३।१।१३५) इति क । चपश्चासाविटश्च ॥*॥ 'चपेट ' अप्यत्र । 'चपेट स्फारविपुले चपेटे पर्पटेऽपि च' [ इति विश्व ३८।३५, मे० ३६।४० ] ॥ (१) ॥*॥ प्रतलति-'तल प्रतिष्ठायाम्' (चु० प० से०)। अच् ( ३।१।१३४ ) । 'प्रतल पातालभेदे ततागुलिकरे

पुमान्' [ इति मेदिनी १०६।१४२ ] ॥ * ॥ 'तलम्' अप्यत्र। 'तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोः' इति विश्वः [ १४९।७ ]। 'तलश्चपेटे ताल्द्री' इति हैमः। '-पुंसि तालमहीरुहे। चपेटे च' इति मेदिनीतश्च पुंस्यम् [ १४६।२१-२२] ॥ ( २ ) ॥*॥ प्रसृतो हस्तः। 'प्रादयो गता-' (वा० २।२।१८) इति समासः ॥ (३) ॥७॥ त्रीणि 'विस्तृताङ्गुलौ पाणौ'।

द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ।

सिंहतल', प्रतलः ( २ पु ), 'अङ्गुल फैलाये हुए दोनों हाथोंको सटाने' के २ नाम हैं।

द्वाविति ॥ सिंहस्येव तलमस्य ॥*॥ 'संहतलः' इति पाठान्तरम्। संहत संघट्टं लाति। 'आतोऽनुप-' ( ३।२।३) इति कः ॥ (१) ॥*॥ प्रतते प्रविलष्टे वा तले अत्र ॥ (२) ॥*॥ द्वे वामदक्षिणयो पार्श्वमिलितयोर्विस्तृताङ्गुल्यो'।

पाणिर्निकुब्जः प्रसृतिः

प्रसृतिः ( स्त्री ), 'टेढ़े किये ( सिमेंटे ) हुए हाथ' का १ नाम है।

पेति ॥ नितरां कुब्जा प्रकृतिरस्य। प्रसरत्यनेन। क्तिन् (३।३।९४) ॥*॥ 'प्रसृत' इति वा पाठ। तत्र प्रकृष्ट सृतमस्य। 'प्रसृत सप्रसारे स्याद्विनीते वेगते त्रिषु। अर्धाञ्जली तु पुंलिङ्गो जङ्घायां प्रसृता मता' [इति मे० ६३।१२३-१२४] ॥ (१) ॥*॥ एकम् 'प्रसृत.'।

तौ युतावञ्जलिः पुमान् ॥ ८५ ॥

अञ्जलिः ( पु ), 'अञ्जलि' का १ नाम है।

ताविति ॥ तौ प्रसृतौ मिलितौ। अज्यतेऽनेन। 'अञ्जू व्यक्त्यादौ' (रु० प० से०)। 'ऋतन्यञ्जि-'(उ० ४।२) इत्यलिः। 'अञ्जलिस्तु पुमान् हस्तसपुटे कुडवेऽपि च' [इति मे० ४९।६०] ॥ (१) ॥*॥ एकम् 'अञ्जले.'।

प्रकोष्ठे विस्तृतकरे हस्तः

हस्तः ( पु० ), 'एक हाथ' अर्थात् 'दो बित्ता या चौबीस अङ्गुलके प्रमाण-विशेष' का १ नाम है।

प्रेति ॥ बाहौ प्रसारितपाणौ हस्त। हसति, हस्यतेऽनेन वा। 'हसे हसने' ( भ्वा० प० से० )। 'हसिमृग्रि-' (उ० ३।८६) इति तन्। 'हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च। ऋक्षे केशात्परो व्राते' [ इति मे० ५९।७५-७६ ] ॥ ( १ ) ॥ * ॥ विस्तृतः करो यस्य तस्मिन् ॥ एकम् 'विस्तृतकरस्य'।

मुष्ट्या तु बद्धया।

स रत्निः स्यात्

रत्निः ( स्त्री ), 'मिमूठ ( मुट्ठीको बाँधकर ) हाथसे नापे हुए प्रमाण-विशेष' का १ नाम है।

म्विति ॥ स हस्तः मुष्यतेऽनया 'मुष स्तेये' (क्र्या० प० से०)। 'स्त्रियां क्तिन्' (३।३।९४)। यद्वा,-मुष्णाति। क्तिच् ( ३।३।१७४ )। [ 'सपीडिताङ्गुलिर्मुष्टिः' इति हलायुध २।३८२] ['मुष्टिर्द्वयो. फले। बद्धपाणौ त्सरौ' इति मे० ३५।२४-२५ ] बद्धया मुष्ट्योपलक्षित ॥ * ॥ ऋच्छति। अर्यतेऽनेन वा। 'ऋ गतौ' (भ्वा० प० अ०)। 'ऋतनि-' (उ० ४।२) इति कत्निच्। 'रत्न्यरत्नी स्त्रियौ बद्धमुष्टिनताङ्गुली' इत्यमरमाला ॥ ( १ ) ॥*॥ एकम् 'बद्धमुष्टिहस्तस्य'।

अरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥

अरत्निः ( स्त्री पु ), 'कनिष्ठा अंगुलीको फैलाये हुए मुट्ठी बांधकर हाथसे नापे हुए प्रमाण-विशेष'का १ नाम है।

अरेति॥ रत्निभिन्न.। नञ्समास.। 'नारत्निः कफोणौ हस्ते सप्रकोष्ठे चाङ्गुलौ।' इति रुद्र। 'अरत्निर्ना सप्रकोष्ठततागुलिकरेऽपि च। कफोणावपि' [ इति मे० ८५। ३४ ] ॥ (१) ॥*॥ निर्गता कनिष्ठा यस्मात्तेन मुष्टिनोपलक्षित ॥*॥ एकम् 'अरत्निहस्तस्य'।

व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्।

व्यामः ( पु ), 'दोनो तरफ दोनों हाथोंको फैलाकर नापे हुए प्रमाण-विशेष' का १ नाम है।

व्येति ॥ विशेषेण अम्यतेऽनेन। 'अम गतौ' ( भ्वा० प० से० )। 'हलश्च' ( ३।३।१२१ ) इति घञ्। मुकुटस्तु व्यामीयतेऽनेन। माङो मूर्लविभुजादित्वात् (वा० ३।२।५) क -इति व्याख्यत्। तन्न। 'कर्तरि कृत् (३।४।६७)'इत्यस्य प्रवृत्त्या करणे कस्यासम्भवात्।-व्यामीयते रज्ज्वादिनेन-इति स्वाम्यप्येवम् ॥ (१) ॥*॥ स्वे स्वे पार्श्वे प्रसारितयोर्बाह्वोर्मध्यम् ॥*॥ एकम् 'व्यामस्य'।

ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥

पौरुषम् ( त्रि ), 'पोरसासे नापे हुए प्रमाण-विशेष' का १ नाम है।

ऊर्ध्वेति ॥ दोषौ च पाणी च। तत्। ऊर्ध्वं विस्तृत दो पाणि येन स। तादृशो ना। तस्य यन्मानं परिमाणम्। तेन पुंसा वा यन्मीयते तत्र ॥ * ॥ पुरुष. प्रमाणमस्य। 'पुरुषहस्तिभ्यामण् च' ( ५।२।३८ )। पौरुषो नदः, पौरुषी नदी, पौरुषं सरः। 'पौरुषं पुरुषस्य स्याद्भावे

कर्मणि सेऽसि । ऊर्ध्वविस्तृतदो पाणिनुमाने त्वभिधेयवत्' [इति मे० १६८।४२] (१) ॥*॥ एकम् 'पुरुषप्रमाणस्य'।

कण्ठो गल.

कण्ठ, गल (२ पु), 'कण्ठ' के २ नाम हैं।

केति ॥ कणति । 'कण शब्दे' (भ्वा० प० से०)। 'कणेष्ठ' (उ० १।१०३)। 'कठि शोके' (भ्वा० आ० से०)। अच् (३।१।१३४)। 'समीपगलशब्देषु त्रिषु कण्ठ विदुर्बुधा' इति शाश्वत [४८९]। 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति विश्व (४१।३) ॥ (१) ॥*॥ गिलति । 'गॄ निगरणे' (तु० प० से०)। अच् (३।१।१३४)। 'अचि विभाषा' (८।२।२१) इति वा ल। गीर्यतेऽनेन। पुंसि–' (३।३।११८) इति घ। यद्वा,— गलति। 'गल अदने' (भ्वा० प० से०)। अच् (३।१।१३४)। 'गलः कण्ठे सर्जरसे' [इति मेदिनी १४६।१३]॥ (२) ॥*॥ द्वे 'ग्रीवाग्रभागस्य'।

अथ ग्रीवायां शिरोधिः कंधरेत्यपि।

ग्रीवा, शिरोधि, कन्धरा (३ स्त्री), 'गर्दन' के ३ नाम हैं।

अथेति ॥ गीर्यतेऽनया। 'शीवयहृजिह्वाग्रीवा–'(उ० १।१५४) इति साधु। 'ग्रीवे शिरोधिस्तच्छिरे' (इति हैम २।५१२)॥(१)॥*॥ शिरो धीयतेऽस्याम्। 'कर्मण्यधिकरणे च' (३।३।९३) इति कि ॥ (२) ॥*॥ कं शिरो धारयति। 'संज्ञायां भृतॄवृजि–'(३।२।४६) इति खच्। 'खचि ह्रस्वः' (६।४।९४)। यद्वा,–धरति। 'धृञ् धारणे' (भ्वा० उ० अ०)। अच्। कं शिरसो धरा कंधरा। (३।१।१३४) कंधरो वारिवाहे स्याद्ग्रीवायां कंधरा मता' [इति विश्व[१] ५१३७।१४९ मे० १३१।१२३]॥(३)॥*॥ त्रीणि 'कंधरायाः'।

कम्बुग्रीवा त्रिरेखा सा

कम्बुग्रीवा (स्त्री), 'शङ्ख के समान तीन रेखावाली गर्दन' का १ नाम है।

केति ॥ कम्बु शङ्ख इव ग्रीवा ॥ (१) ॥*॥ तिस्रो रेखा यस्याम् ॥*॥ एकम् 'शङ्खाकारग्रीवायाः'।

अवटुर्घाटा कृकाटिका ॥८८॥

अवटु, घाटा, कृकाटिका (३ स्त्री), 'घांटी' के ३ नाम हैं।

अवेति ॥ अवटलति। 'टल वैक्लव्ये' (भ्वा० प० से०)। अवटीकते। 'टीकृ गतौ' (भ्वा० आ० से०)। मितद्र्वादित्वात् (वा० ३।२।१८०) डु। यद्वा,—न वटति। 'वट वेष्टने' (भ्वा० प० से०) 'वट भाषणे (चु० उ० से०) बाहुलकात्। 'अवटु पुरुषे कृकाटिका घाटा' इति बोपालित ॥ (१) ॥*॥ घाटयति घाट्यते, वा। 'घट संघाते' चुरादि। अच् (३।१।१३४) घञ् (३।३।१९) वा ॥(२) ॥*॥ कृक कण्ठमटति। 'अट गतौ' (भ्वा० प० से०)। इन् (उ० ४।११८)। स्वार्थे कन् (ज्ञापि०५।४।५)। ण्वुल् तु परत्वादणा बाधान्न प्राप्नोति ॥ (३) ॥*॥ त्रीणि ग्रीवायामुन्नतभागस्य' 'घांटी' इति ख्यातस्य।—ग्रीवापश्चाद्भागस्य-इति स्वामि-मुकुटौ।

वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्।

वक्त्रम्, आस्यम्, वदनम्, तुण्डम, आननम्, लपनम्, मुखम् (७ न), 'मुखके बिल' के और उपचारसे 'मुखमात्र' के ७ नाम हैं।

वेति ॥ उच्यतेऽनेन। 'वच परिभाषणे'(अ०प०अ०)। गुणो वचि (२।४।५३) वा। 'गुधृवीपचिवचि–' (उ० ४।१६७) इति त्र। 'वक्त्रमास्ये छन्दसि च' इति हेमचन्द्र [२।४६।४] ॥ (१) ॥*॥ आस्यन्दते अन्नादिना प्रस्रवति। आस्यन्द्यते वाऽन्नादिना द्रवीक्रियते। 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१)। इति ड। यद्वा,—अस्यन्ते वर्णा येन। अस्यतेवाऽस्मिन् ग्रास। 'असु क्षेपणे'(दि० प० से०)'ऋहलोर्ण्यत्–' (३।१।१२४) ण्यत्। 'मुखं मुखान्तरालं च द्वयमास्यमितीरितम्' इति शाश्वत (४८५)। 'आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रिया स्थितौ' [इति मेदिनी ११३।५] ॥ (२) ॥*॥ वदन्त्यनेन 'वद व्यक्तायां वाचि' (भ्वा० प० से०)। करणे ल्युट् (३।३।११७) ॥ (३) ॥*॥ तुण्डति। 'तुडि तोडने' (भ्वा० प० से०)। अच् (३।१।१३४)॥(४)॥*॥ आनन्त्यनेन। 'अन प्राणने' (अ० प० से०)। ल्युट् (३।३।११७) ॥ (५) ॥*॥ लप्यतेऽनेन। 'लप व्यक्तायां वाचि' (भ्वा० प० से०)। ल्युट् (३।३।११७) ॥ (६) ॥*॥ खन्यते, अनेन वा। 'खनु अवदारणे' (भ्वा० उ० से०)। 'डित् खनेर्मुट् चोदात्त' (उ० ५।२०) इत्यच स च डित् धातोर्मुडागम। 'प्राक् खनो मुडुदात्तश्च ततोऽच्च प्रत्ययो भवेत्। प्रजापतिर्या यत खात तस्माद्धार्मुखं बुधा' इति निरुक्तम्। मुखमुपाये प्रारम्भे श्रेष्ठे नि सरणास्ययो' इति हैम [२।२४] ॥ (७) ॥*॥ सप्त 'मुखबिलस्य'। तदुपलक्षिते समुदाये तूपचारात्।

क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥८९॥

घ्राणम् (न), गन्धवहा, घोणा, नासा, नासिका (४ स्त्री), के ५ 'नाक' के नाम हैं।

क्लीब इति ॥ घ्रायतेऽनेन। 'घ्रा गन्धोपादाने' (भ्वा० प० अ०)। ल्युट् (३।३।११७) 'घ्राणं क्लीबं नासिकायां

---

१ विश्वे तु—'ग्रीवायामपि कन्धरा इति पाठ।

घ्राते स्याद्वाच्यलिङ्गकम्' [इति मे० ४१।११]॥(१)॥*॥ वहति। 'वह प्रापणे' (भ्वा० उ० अ०)। अच् (३।१।१३४)। गन्धस्य वहा। 'स्याद् गन्धवहा नासायां पुंलिङ्गे मातरिश्वनि' [इति मे० १७७।२९] ॥ (२) ॥*॥ घोणति, अनया वा। 'घुण भ्रमणे' (भ्वा० प० से०)। अच् (३।१।१३४)। 'हलश्च' (३।३।२२१) इति घञ् वा ॥(३)॥*॥ नासते। अनया वा। 'णासृ शब्दे' (भ्वा० आ० से०)। प्राग्वत्। 'नासा तु नासिकायां च द्वारोर्ध्वदारुणि स्त्रियाम्' [इति मे० १७०।४] ॥ (४) ॥*॥ नासेर्ण्वुल् (३।१।१३३)। 'घ्राणं गन्धवहा नासा नसा नस्या च नासिका' इति साहसाङ्कः। 'कुरुया गन्धवहा घोणा घ्राणं नासा च नासिका' इति कात्य ॥ (५) ॥*॥ पञ्च 'नासिकायाः'।

**ओष्ठाधरौ तु रदनच्छदौ दशनवाससी।**

ओष्ठ', अधरः, रदनच्छदः, (३ पु) दशनवासः(न),'ओठ' के ४ नाम हैं।

ओष्ठेति ॥ उष्यते उष्णाहारेण। 'उष दाहे' (भ्वा० प० से०)। 'उषिकुषि–' (उ० २।४) इति थन् ॥ (१) ॥*॥ न ध्रियते। 'धृङ् अवस्थाने' (तु० आ० अ०)। 'पुंसि–' (३।३।११८) इति घः। नञ्समासः (२।२।६)। अधरस्तु पुमानोष्ठे, हीनेऽनूर्ध्वे च वाच्यवत्' [इति मे० १३०।१०५]॥*॥ 'द्वन्द्वश्च प्राणि–' इत्येकत्व तु न भवति। अनित्यत्वात्। 'ओष्ठाभ्यां युतावधरौ' इति शाकपार्थिवादिः (वा० २।१।७८) वा ॥*॥ रदनाः छाद्यतेऽनेन 'छद संवरणे' चुरादि.। 'पुंसि–' (३।३।११८) इति घ। 'छादेर्घे–' (६।४।९६) इति। ह्रस्वः॥ (३) ॥*॥ दशनाना वाससी इव। आवरकत्वात् ॥ (४) ॥*॥ चत्वारि 'उत्तराधरोष्ठमात्रस्य'।

**अधस्ताच्चिबुकम्**

चिबुकम् (न), 'ओठ और ठुड्डीके नीचेवाले भाग' का १ नाम है।

अधेति ॥ चीवति, चीव्यते, वा। 'चीवृ आदानसंवरणयो.' (भ्वा० उ० से०)। मृगय्वादि. (उ० १।३७)। स्वार्थे कन् (ज्ञापि० ५।४।५)। चिनोति शोभा वा। प्राग्वत् ॥ (१) ॥*॥ 'अधस्तादधरोष्ठस्य चिबु. स्याच्चिबुकं तथा' इति निगम. ॥ (१) ॥*॥ एकम् 'ओष्ठाधोभागस्य'।

**गण्डौ कपोलौ**

गण्डः, कपोलः (२ पु), 'गाल' के २ नाम हैं।

गेति ॥ गण्डति। 'गडि वदनैकदेशे' (भ्वा० प० से०) अच् (३।१।१३४)। 'गण्ड. स्यात्पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे' (इति मेदिनी) ॥(१)॥*॥ कम्पते। 'कपि चलने' (भ्वा० आ० से०)। 'कपिगडिगण्डि–' (उ० १। ६६) इत्योलच्। 'कपि' इति निर्देशान्नलोप.। कं मुखं पोलति। 'पुल महत्त्वे' (भ्वा० प० से०)। 'कर्मण्यण्' (३। २।१) ॥ (२) ॥*॥ द्वे 'कपोलस्य'।

**तत्परो हनुः ॥९०॥**

हनुः (स्त्री), 'दाढ़ी, 'ठुड्ढी' का १ नाम है।

तदिति ॥ ताभ्यां कपोलाभ्या पर। हन्ति। 'शृस्वृस्निहि–' (उ० १।१०) इत्यु। 'हनुर्हट्टविलासिन्या मृत्यावस्त्रे गदे स्त्रियाम्। द्वयो कपोलावयवे' [इति मेदिनी ८४।२५-२६] ॥ (१) ॥*॥ एक 'कपोलाधोभागस्य'।

**रदना दशना दन्ता रदाः**

रदनः दशनः, दन्त., रदः (४ पु), 'दाँत' के ४ नाम हैं।

रेति ॥ रद्यतेऽनेन। 'रद विलेखने' (भ्वा० प० से०)। 'करणा–' (३।३।११७) इति ल्युट् ॥ (१)॥*॥ दश्यतेऽनेन। करणे ल्युट् (३।३।११७)। '–दहदशा–'(३।१।२४) इति निर्देशात्क्वचिदक्ङित्यपि लोप.। यद्वा,–कर्तरि ल्युट् (३।३।११३) ॥ (२) ॥*॥ दाम्यति। 'दमु उपशमे' (दि० प० से०)। अन्तर्भावितण्यर्थाद्बाहुलकात्तन्। 'दन्तोऽद्रिकटके कुञ्जे दशनेऽथोपधौ स्त्रियाम्' [इति मे०५५।२३] ॥ (३) ॥*॥ रदति अच् (३।१।१३४) ॥ (४) ॥*॥ चत्वारि 'दन्तस्य'।

**तालु तु काकुदम्।**

तालु, काकुदम्, (२ न), 'तालु' के २ नाम हैं।

तेति ॥ तरन्त्यनेन। 'तॄ प्लवनतरणयो.' (भ्वा० प० से०)। 'त्रो रश्च ल.' (उ० १।५) इति ञुण्। तालयति। 'तल प्रतिष्ठायाम्' चुरादि.। मृगय्वादि (उ० १।३७) वा ॥ (१) ॥*॥ काकुर्जिह्वा उद्यतेऽनुद्यतेऽस्मिन्। अनेकार्थत्वाद्वदिरुक्षेपणे वर्तते। घञर्थे क (वा० ३।३।५८)। पृषोदरादि. (६।३।१०९)। ईषत् कवते। 'कुङ् शब्दे'। (भ्वा० आ० अ०) अब्दादित्वात् (उ० ४।९८) साधुर्वा। यद्वा,–'निश्चेष्ट ककुदं शिर.'। ककुदे भवम्। 'तत्र भवः (४।३।५३) इत्यण् ॥ (२) ॥*॥ द्वे 'तालुनः'।

**रसज्ञा रसना जिह्वा**

रसज्ञा, रसना, जिह्वा (३ स्त्री), 'जीभ' के ३ नाम हैं।

रेति ॥ रस जानाति। 'ज्ञा अवबोधने' (क्र्या० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ रसयति। 'रस आस्वादने' (चु० उ० से०)। नन्द्यादित्वात् (३।१।१३४) ल्युः। यद्वा,–रसयन्त्यनया। 'ण्यासश्रन्थो युच्' (३।३।१०७)। रसति। 'रस शब्दे' (भ्वा० प०

से०) । 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति युच् वा । 'रसन स्वजने ध्वनौ । जिह्वाया तु न पुंसि स्यात्' (इति मेदिनी)। 'तालव्या अपि दन्त्याश्च'इत्यादौ 'जिह्वाया रशना तथा' इत्युक्तेर्दन्त्यतालव्यमध्योऽयम्। 'रसन तु ध्वनौ स्वादे रसज्ञारास्नयो स्त्रियाम्' इति रभस ।—रसे सौत्रात् 'रसिरुचिरवृञो युच'—इति मुकुटोऽपाणिनीय ॥ ( २ ) ॥*॥ लेढि । लिहन्त्यनया वा । लिह आस्वादने' (अ० उ० अ०) । 'शवयहृजिह्वा-'(उ० १।१५४)इति साधु । —लिहे पूर्वजिह्वग्रीवा' इति वन्प्रत्यय —इति मुकुटोऽपाणिनीय ॥ (३) ॥*॥ त्रीणि 'जिह्वाया' ।

प्रान्तावोष्ठस्य सृक्वणी ॥ ९१ ॥

**सृक्कणी ( स्त्री ), 'ओठ'के दोनों किनारों का १ नाम है।**

प्रेति ॥ सृजति लालादि । 'सृज विसर्गे' ( तु० प० से०) । बाहुलकात्क्वनिन् । 'प्रान्तावोष्ठस्य सृक्वणी' इति क्लीबकाण्डेऽमरदत्त ॥*॥ 'कयुक्तम्' (सृक्कणी[1]) इत्यन्ये ॥*॥ (सृक्वणी) ङचन्ता— इत्येके॥*। —अदन्त सृक्वम्—इत्यपरे ॥ * ॥ सृक्वि' शब्द इकारान्त क्लीवे । तत्र बाहुलकात्किः ॥ (१) ॥*॥ एकम् 'ओष्ठप्रान्तयो' ।

ललाटमलिकं गोधिः

**ललाटम्, अलिकम् ( २ न ), गोधि ( पु ), 'ललाट' के ३ नाम हैं।**

लेति ॥ लल्नम् । 'लल ईप्सायाम्' (चु० आ० से०)। 'लड विलासे' ( भ्वा० प० से० ) वा । डलयोरेकत्वम् । लल विलासमीप्सा वा अटति । अट गतौ (भ्वा० प० से०)। ललति । उक्तधातुभ्या बाहुलकादटच् ॥ (१)॥*॥ अलति । अल्यते, वा । 'अल भूषणादौ' (भ्वा० प० से०)। 'अलिहृ[2]पिभ्या किच्च' इतीकन् । (उ० ४।२७)। 'अलीकमहितेऽपि' इति कात्य ॥*॥ बाहुलकादिकन्नपि । 'अलिक ह्रस्वदीर्घमध्यम्' इति राजदेव ॥(२)॥*॥ गुध्यते । 'गुध परिवेष्टने'( दि० प० से० ) । इन्(उ० ४।११८)। भावो नेत्रे धीयेते यस्मिन् । 'कर्मण्यधिकरणे च' ( ३।३।९३ ) इति किर्वा । पुंस्ययम्। 'गोधिभाली महाशङ्ख' इति त्रिकाण्डशेषात् [२।६।३०] ॥ (३) ॥*॥ त्रीणि 'भालस्य'।

ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।

**भ्रू ( स्त्री ), 'भौंह' का १ नाम है।**

ऊर्ध्वे इति भ्रमति ।'भ्रमु चलने' ( भ्वा० प० से०) । 'भ्रमेर्डू' ( उ० २।६८ ) यद्वा,—भ्राम्यति । 'भ्रमु अनवस्थाने' ( दि० प० से० )। क्विप् (३।२।१७८) । 'ऊड् च गमादीनाम्' इति 'गम क्वौ' ( ६।४।४० ) इत्यत्र वार्तिकेन मलोप ऊङ् चादेश ॥ (१) ॥*॥ एक 'नेत्रोपरिभागस्य रोमराजे.' ।

कूर्चमस्त्री भ्रुवोर्मध्यं

**कूर्चम् (न पु), 'दोनों भौंहके बीचवाले भाग' का १ नाम है॥**

किरति ॥ कुरति । कूर्यते, वा । बाहुलकाच्चट् । 'कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे' (इति मेदिनी)॥ (१) ॥*॥ एक 'नासोपरिभ्रूद्वयमध्यस्य' ॥

तारकाक्ष्ण कनीनिका ॥ ९२ ॥

**तारका, कनीनिका (२ स्त्री),'आँखकी पुतली'के नाम हैं।**

तेति ॥ तारयति । 'तॄ प्लवनादौ' (भ्वा० प० से०) । 'ण्वुल्' ( ३।१।१३३ ) । 'तारिका ज्योतिषि' ( वा० ७।३।४५ ) इतीत्वाभाव । 'तारको दैत्यभित्कर्णधारयोर्नद्वयोर्दृशि । कनीनिकायामृक्षे च न पुमास्तारदि त्रिषु' [इति मे०२९।९९-१००]॥(१)॥*॥कनति ।'कनी दीप्तौ (भ्वा० प० से०)बाहुल्कादीन । स्वार्थे कन् (ज्ञापि० ५।४।५)। टाप् (४।१।४ ) । इत्वम् ( ७।३।४४ ) । 'कनीनिका तारकेऽक्ष्ण स्यात्कनिष्ठाङ्गुलावपि' (इति मे० १५।१८१) ॥ ( २ ) ॥*॥ अक्ष्ण ' इति खेचरी व्याप्त्यर्थम् ॥*॥ द्वे 'नेत्रकनीनिकाया' ॥

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी च

**लोचनम्, नयनम्, नेत्रम्, ईक्षणम् चक्षु, अक्षि ( ६ न ), दृक्, दृष्टि ( २ स्त्री ), 'आँख' के ८ नाम हैं।**

---

१ 'वाचस्पत्ये' तु सृजे 'कन्' क्वनित् वा वस्य नेत्वम् 'सृक्वणी परिलेढि च' इति स्मृति । 'महासृक्कायशोभितो नृसिंहवत्' इति श्लेषात् ककारद्वयमध्य । सृक्वन' इत्यरुण । सृक्किणी' तत्रार्थे राजनि० । (पृ० ५३२९) । 'स्मितस्य सभावय सृक्वणा कणान्' इति नै० च० (९।१११)श्रीहर्षप्रयोगाद् वकारमध्यो नान्तश्चायम् ।

२ उणादिसूत्रपाठे 'अनिहृपिभ्या किच्च' इत्येव पाठ । 'अनीक' इत्युदाहरणञ्च सि० कौ० । अथ च तथा सूत्रस्वीकारे दीर्घमध्यस्य 'अलीक' शब्दस्य सिद्धि, न तु ह्रस्वमध्यस्य 'अलिक' शब्दस्य । तस्मात् 'अलिक' शब्दसिद्धये अलधातो कर्मणि इवन् प्रत्ययो बोध्य । ह्रस्वमध्यस्य स्यश्च 'असस्कृतालकिनीमलिकलेखाम्' इति काद० बाणस्य प्रयोग । 'भाले गोध्यलीकालिकलक्ष्मणानि' इत्यभि चि म० (३।२३७) वचनाद्दीर्घमध्योऽपि । तल्लक्ष्य च—'गुरोश्चालीकनिर्बन्ध समानि ब्रह्महत्यया' इति मनु ( ११।५५ ) 'तद्यथा च महाराजो नालीकमधिगच्छति' इति रामा० च ।

लविति ॥ लोच्यतेऽनेन । 'लोचृ दर्शने' (भ्वा० आ० से०) । ल्युट् (३।३।११७) ॥ (१) ॥*॥ नीयतेऽनेन। 'णीञ् प्रापणे' (भ्वा० उ० से०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ 'दाम्नी' (३।२।१८२) इति पक्षे ष्ट्रन् । 'नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवत्' [इति मे० १२६।५४] ॥ (३) ॥*॥ ईक्ष्यतेऽनेन । 'ईक्ष दर्शने' (भ्वा आ० से०) । ल्युट् (३।३।११७) 'ईक्षणं दर्शने दृशि' [इति मे० ४७।३६] ॥ (४) ॥*॥ चष्टे । चक्षतेऽनेन, वा । 'चक्षिङ्' (अ० आ० अ०) । 'चक्षे शिच्च' (उ० २।११९) इत्युसि. । शिच्त्वादनार्धधातुकत्वात् ख्याञ् न—इति मुकुटस्त्वपाणिनीय ॥(५)॥*॥ अश्नुते, अनेन वा । 'अशू व्याप्तौ'(स्वा० आ० से०)। 'अशेर्निस्' (उ०३।१५६) इति क्सि ।—'अशे. चिच्–' इति मुकुटोऽपाणिनीयः। यद्वा,–अक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० से०)। इन् (उ० ४।११८) ॥ (६) ॥*॥ पश्यति । 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०) । क्विप्( ३।२।७८) । यद्वा,–दृश्यतेऽनया । सम्पदादित्वात् (वा० ३।३।१०८) क्विप् । 'क्विन्प्रत्ययस्य' (८।२।६२) इति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् ॥ (७) ॥*॥ क्तिन् (३।३।९३) । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इति हैम. [२।९३] ॥(८)॥*॥ अष्ट 'नेत्रस्य' ।

अस्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥

अस्रु, नेत्राम्बु, रोदनम्, अस्रम्, अश्रु (५ न), 'आँसू' के ५ नाम हैं।

अस्रुविति ॥ अस्यति, अश्नुते वा कण्ठम् । अश्वादित्वात् (उ० ५।२९) इति रुक्पक्षे । 'अस्रं कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' (इति मेदिनी)॥*॥ 'जगरे वाश्रमश्रुणि' इत्यूष्मभेदात्तालव्यप्रकरणोक्तेश्च 'अश्रम्' तालव्यमपि ॥ (१) ॥ नेत्रयोरम्बु ॥ (२) ॥*॥ रुद्यते । 'रुदिर् अश्रुविमोचने' (अ० प० से०)। कर्मणि ल्युट्(३।३।११३) बाहुलकात् । 'रोदनं क्रन्दनेऽस्रेऽपि दुरालम्भौषधौ स्त्रियाम्' इति मेदिनी [९१।१७]॥ (३) ॥*॥ (४) ॥ (५) पञ्च 'नेत्रोदकस्य' ।

अपाङ्गौ नेत्रयोरन्तौ

अपाङ्गः (पु),'आँखोंके किनारेवाले भाग' का १ नाम है।

अपेति ॥ अपाङ्क्तेति 'अगि गतौ' (भ्वा० प० से०)। अच् (३।१।१३४) अपकृष्टोऽङ्गाद्वा । अपकृष्टान्यङ्गान्यस्माद्वा । 'अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च' [इति विश्व: १७।४४, मे० २३।२८]॥(१)॥*॥ 'बाह्यौ' इति शेषः ॥*॥ एकम् 'नेत्रप्रान्तयो.' ।

कटाक्षोऽपाङ्गदर्शने ।

कटाक्षः (पु), 'कटाक्ष' का १ नाम है।

केति ॥ कटावतिशयितावक्षिणी यत्र । 'बहुव्रीहौ सक्थ्यक्ष्णो –'(५।४।११३)इति षच् । कट गण्डमक्षति वा। 'अक्षू व्याप्तौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) । 'कटाक्षकाक्षौ' इति रभसात् काक्षोऽपि ॥ (१)॥*॥ अपाङ्गेन दर्शनम् ॥ (२) ॥*॥ द्वे 'कटाक्षस्य' ।

कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥

कर्णः, शब्दग्रहः (२ पु) श्रोत्रम्, (न), श्रुतिः (स्त्री), श्रवणम्, श्रवः (१ सान्त-२ न), 'कान' के ६ नाम हैं।

केति ॥ कीर्यते शब्दग्रहणाय क्षिप्यते । यद्वा,–कीर्यते शब्दोऽस्मिन् । किरति शरीरे सुखं वा । 'कॄ विक्षेपे' (तु० प० से०) । 'कृवृजृसि– (उ० ३।१०) इति न. । यद्वा,–कर्णयति । 'कर्ण भेदने' (चु० उ० से०) 'अदन्त.'। अच् (३।१।१३४)।'कर्णं[१] पृथासुते ज्येष्ठे सुवर्णालौ श्रुतावपि' [इति मे० ४५।४] । यत्तु—करोति शब्दज्ञानम्—इति मुकुट. । तन्न । ह्रस्वान्तप्रत्ययाविधानात् ॥ (१) ॥*॥ शब्दो गृह्यतेऽनेन । 'ग्रहवृदृ–' (३।३।५८) इत्यप् । संज्ञाया 'हलश्च' (३।३।१२१) इति घञ् विधीयते चापवादत्वात् । योगार्थमात्रे तु स न ॥(२) ॥*॥ श्रूयतेऽनेन । 'श्रु श्रवणे' (भ्वा० प० अ०) । ष्ट्रन् (उ० ४।१५९) ॥ (३) ॥*॥ श्रूयतेऽनया । क्तिन् (३।३।९४) । 'श्रुति श्रोत्रे च तत्कर्मव्याम्नायवार्तयोः स्त्रियाम्' [इति मे० ५८।६६] ॥ (४) ॥*॥ ल्युट् वा करणे (३।३।११७) । 'श्रवण श्रुतौ च कर्णे नक्षत्रे न नपुंसकम्' [इति मे० ५०।८०] ॥ (५) ॥*॥ 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९) ॥ (६) ॥*॥ षट् 'कर्णस्य' ।

उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।

उत्तमाङ्गम्, शिरः, शीर्षम् (३ न), मूर्धन् (पु), मस्तकः (पु न), 'सिर, मस्तक' के ५ नाम हैं।

उत्तेति ॥ उत्तमं च तदङ्गं च 'सन्महत्–' (२।१।६१) इति समास ॥ (१)॥*॥ श्रीयते उष्णीषादिना । 'श्रयतें. स्वाङ्गे शिर किच्च' (उ० ३।१९४) इत्यसुन् । 'शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' [इति मे० १७१।३१] ॥*॥ 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' ॥ (२) ॥*॥ 'कुमारशीर्षयो –' (३।२।५१) इति ज्ञापकाच्छिर शब्दस्य शीर्षादेश ॥ (३)॥*॥ मुह्यत्यस्मिन्नाहते । 'मुह वैचित्त्ये' (दि० प० से०) । 'श्वन्नुक्षन्–' (उ०

१. '—पृथाज्येष्ठसुते—' इत्येवं मेदिनी पाठ. ।

१।३५९ ) इति साधु ॥ (४) ॥*॥ मस्यते स्म । 'मसी परिणामे परिमाणे वा' ( दि० प० से० ) । क्त ( ३।२।१०२) । स्वार्थे ष्यञ् ( आ॰ ५।४।५ ) ॥ (५) ॥*॥ पञ्च 'शिरस' ।

**चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥९५॥**

चिकुर, कुन्तल, वाल, कच, केश, शिरोरुह (६ पु), 'केश, बाल' के ६ नाम हैं।

चीति ॥ 'चि' इति अव्यक्तं कुरति । 'कुर शब्दे' (तु० प० से०) 'इगुपध–' ( ३।१।१३५ ) इति क ॥ * ॥ 'कुन्तला मूर्धजास्त्वस्त्राश्चिकुराश्चिकुरा [१] कचा' इति दुर्ग. । (१) ॥*॥ कुन्तं कुन्ताकारं लाति । 'आतोऽनुप–' (३।२।३) इति क । 'कुन्तलश्चषके वाले यवे ना भूम्नि नीवृति' [ इति मे० १५०।७९ ] ॥ ( २ ) ॥*॥ वलति 'वल प्राणने' ( भ्वा० प० से० ) । ज्वलादित्वात् (३।१।१४०) ण । वल्यतेऽवलम्ब्यते वा । घञ् ( ३।३।१९ ) । 'वालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ । नालिकेरे [२] हरिद्रायां मल्लिकाभिधयपि स्त्रियाम् । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुनपुंसकम्। अलकारान्तरे मेध्ये वाली वाला त्रुटि-स्त्रियो' इति (पवर्गीयादौ) [मे० १४९।३९-४०]॥ (३) ॥*॥ कच्यते । 'कच बन्धने (भ्वा० प० से०) । 'पुंसि–' (३।३।११८) इति घ । कचत्यात्मानं वा । अच् (३।१।१३४) । 'कचः शुष्कव्रणे केशे बन्धे पुंसि च गीयते । कचा करेण्वाम्' [ इति हैम २।५६ ५७ ] ॥ ( ४ ) ॥ * ॥ क्लिश्यते 'क्लिश बन्धे' (  ) । 'क्लिश उपतापे' (दि० आ० से०) वा । क्लिश्नाति । 'क्लिशू विबाधायाम्' (क्र्या० प० से०) 'क्लिशेरन् लो लोपश्च' (उ० ५।३३) । के शेते वा । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । 'हलदन्तात्–' ( ६।३।९ ) इत्यलुक् । कस्य शिरस ईशो वा । 'केशः स्यात्पुंसि वरुणे ह्रीवेरे कुन्तलेऽपि च' [इति मे० १६२।५] ॥ ( ५ ) ॥*॥ शिरसि रोहति । 'इगुपध–' ( ३।१।१३५ ) इति क ॥ ( ६ ) ॥ * ॥ षट् 'केशस्य' ।

**तद्वृन्दे कैशिकं कैश्यम्**

कैशिकम्, कैश्यम् (२ न), 'केशके समूह' के २ नाम हैं।

तदिति ॥ केशानां समूहः । 'अचित्तहस्ति–' (४।२।४७ ) इति ठक् ॥ ( १ ) ॥*॥ 'केशाश्वाभ्यां यञ्छा-वन्यतरस्याम्' (४।२।४८) (२) ॥*॥ द्वे 'केशवृन्दस्य'।

१ '—श्चिकुरा' इति पुनरुक्तिश्चिन्त्या ।

२ मेदिन्यां '—नारिकेले··· त्रुटौ स्त्रियाम्' इति पाठः । तत्र पवर्गादिनियमो न सार्वत्रिक ।

**अलकाश्चूर्णकुन्तलाः ।**

अलक, चूर्णकुन्तल (२ पु), 'अँगूठिया बाल' के २ नाम हैं।

अलेति ॥ अलति, अल्यते, वा । 'अल भूषणादौ' (भ्वा० प० से ) । 'कृञादिभ्यो वुन्' ( उ० ५।३५ ) । 'अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' [इति मे० ४।४१]॥ ( १ ) ॥*॥ चूर्णस्य कर्पूरादिक्षोदस्य कुन्तला ॥ (२) ॥*॥ द्वे 'कुटिलकेशानाम्' ॥

**ते ललाटे भ्रमरकाः**

भ्रमरक (पु), 'काकुल' अर्थात् 'घुलघुली यानी ललाट पर लटके हुए बाल' का १ नाम है।

त इति ॥ भ्रमर इव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । 'अथ भ्रमरको भृङ्गे गैरिके [१] चूर्णकुन्तले' [इति मे० १७।२०५ ] ॥ (१) ॥*॥ एकम् 'ललाटगतकेशानाम्' ।

**काकपक्षः शिखण्डकः ॥९६॥**

काकपक्ष, शिखण्डक (२ पु), 'काकपक्ष' अर्थात् 'लड़कोंका जूड़ा, जुल्फी, शिखा-सामान्य' के २ नाम हैं।

काकेति ॥ काकस्य पक्ष इव ॥ (१) ॥*॥ शिखाया अण्ड इव । 'इवे–' ( ५।३।९६ ) इति स्वार्थे ( आ० ५।४।५ ) वा कन् । शकन्ध्वादि ( वा० ६।१।९४ ) । 'शिखण्डो तु शिखाबर्हो' इति तालव्यादौ रभस । 'शिखण्डो बर्हचूडयो' [इति मे० ४३।३७]॥*॥ शकन्ध्वादित्वं केचिन्नेच्छन्ति । 'शिखण्डकशिखण्डकौ' इति वाचस्पति स्मृती ॥ (२) ॥*॥ द्वे 'सामान्येन शिखायाः' । बालानां शिखायां वा । 'बालानां तु शिरः कार्यं निःशिखं मुण्डमेव वा' ।

**कबरी केशवेशः**

कबरी (स्त्री), केशवेश (पु), 'बालके रचना-विशेष' के २ नाम हैं।

केति ॥ कूयते । 'कुङ् शब्दे' ( भ्वा० आ० अ० ) । 'कोररन्' (उ० ३।१३५) । 'जानपद–' (४।१।४२) इति ङीष् ।—कं शिरो वृणोत्याच्छादयति । '—कबर–' (४।१।४२) इति निर्देशादण बाधित्वाच् (३।१।१३४)—इति स्वामी चोक्त मुकुट ।—कृष्णवर्णा कं वृणोति वा—इति स्वामी चोक्त सूत्रादर्शनमूलकौ । 'कबरः लवणाम्लयोः । कबरी केशवि न्यासशाकयो' [इति हैम ३।५६७ ५६८] ॥ (१) ॥*॥

१ '—शिरिके पान्नकान्तरे' इति पाठो मेदिन्याम् ।

केशानां वेशो मार्जनाद्यवयविशेष. ॥ ( २ ) ॥ * ॥ द्वे 'केशबन्धरचनायाः.' ।

अथ धम्मिल्लः संयताः कचाः ।

**धम्मिल्लः (पु), 'पटिया, जूडा' अर्थात् 'बँधे हुए स्त्रियों के बालके रचना-विशेष' का १ नाम है।**

धमेति ॥ धमति । 'धम ध्माने' सौत्र । विच् (३।२।७५) । मिलति । 'मिल सगमे' (तु० प० से०) । बाहुलकाल्लक् । धम् चासौ मिल्लश्च । 'मो नो धातो.' (८।२।६४) इति सौत्रेषु न भवति ॥ ( १ ) ॥*॥ एकं 'जूडा' इति ख्यातस्य ।

शिखा चूडा केशपाशी

**शिखा, चूडा, केशपाशी (३ स्त्री), 'शिखा', चुटिया, चुन्नी के ३ नाम हैं।**

शीति ॥ शेते । 'शीङो ह्रस्वश्च'(उ० ५।२४)इति ख । 'शिखा शाखावर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' [इति मे० २०।६-७] ॥(१)॥*॥ चुड्यते । 'चुड समुच्छ्राये' (चु० प० से०) । 'चुरादीनां णिज्वा' इति पक्षे भिदादिपाठात् (३।३।१०४) अङ्दीर्घत्वे । 'चूडा शिखाप्रयो । बाहुभूषावलभ्योश्च' इति हैमः [ २।११९-१२० ] ॥ (२) ॥ *॥ केशानां पाशः । अल्पः केशपाशः । गौरादिः ( ४।१।४१ ) ॥ (३) ॥*॥ त्रीणि 'शिरोमध्यस्थचूडायाः' 'चोटी' इति ख्यातायाः ।

व्रतिनस्तु जटा सटा ॥९७॥

**जटा, सटा ( २ स्त्री ), 'जटा' अर्थात् 'आपसमें सटे हुए बाल या ऋषियोंकी जटा या जटामात्र'के २ नाम हैं।**

व्रेति ॥ व्रतिनः शिखा । जायते,जन्यते वा । 'जनेष्टन् नलोपश्च' ( उ० ३।१० ) । यद्वा,-जटति । 'जट संघाते' (भ्वा० प० से०) । अच् (३।१।१३४) । 'जटा लग्नकचे मूले मांस्यां' प्लक्षे पुनर्जटी' [इति मे० ३४।१४ ]॥(१) ॥*॥ सटति । 'षट अवयवे' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । 'सटा, जटाकेसरयो.' [इति मे० ३५।२९] । ( २ ) ॥*॥ 'कोटीरस्तु जटा सटा' इति रभसः ॥*॥ द्वे 'व्रतिनः शिखायाम्' ।

वेणिप्रवेणी

**वेणिः, प्रवेणी ( २ स्त्री ), 'बालकी गुथी हुई चोटी' के २ नाम हैं।**

वेणीति ॥ वेणति । 'वेणृ निशामनवादित्रादानगमनज्ञानचिन्तासु' ( भ्वा० उ० से० ) । इन् (उ० ४।११८) ॥ ( १ ) ॥*॥ प्रग्रह उपसर्गान्तरव्यावृत्त्यर्थः ॥ ( २ ) ॥*॥ 'करणिश्रोणिवेणय.' इति स्त्रीकाण्डे निगमः ॥*॥ 'वेणी सेतुप्रवाहयो. । देवताडे केशबन्धे' इति हैम. [ २।१५६ ] ॥*॥ द्वे 'प्रोषितभर्तृकादिधार्यकेशरचनाविशेषस्य' ।

शीर्षण्यशिरस्यौ विशदे कचे ।

**शीर्षण्यः, शिरस्यः (२ पु), 'निर्मल बाल' के २ नाम हैं।**

शीति ॥ शिरसि भवः । 'शरीरावयवाच्च' ( ४।३।५५ ) इति यत् । 'ये च तद्धिते' (६।१।६१) इत्यत्र 'वा केशेषु' इति वचनाद्वा शीर्षन् । 'शीर्षण्यं तु शीर्षके । सुकेशे पुंसि' [ इति मे० १२०।१०८-१०९ ] ॥ ( १ ) ॥*॥ (२) ॥*॥ द्वे 'अन्योन्यासंपृक्ते स्नानादिनिर्मले वा केशे' ।

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥

**पाशः, पक्षः, हस्तः (३ पु ), ये तीन शब्द 'कच' शब्दसे पर रहने पर अर्थात् 'कचपाशः, कचपक्षः, कचहस्तः' (३ पु), या कच (केश) के पर्यायवाचक शब्दसे परे रहने पर अर्थात् 'केशपाशः', केशपक्षः, केशहस्तः, बालपाशः, बालपक्षः, बालहस्तः (९ पु), इत्यादि नाम 'केश-समूह' के हैं।**

पेति ॥ पाश्यते । 'पश बन्धे' चुरादिः । घञ् ( ३।३।१९)। घः (३।१।११८) वा 'पाशस्तु [1]मृगपक्ष्यादिबन्धने । कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः । छात्राद्यन्ते च निन्दार्थः' इति हैमः [ २।५६३-५६४ ] ॥ (१)॥*॥ पक्ष्यते । 'पक्ष परिग्रहे' ( भ्वा० प० से० ) । घञ् (३।३।१९) । घ (३।३।११८) वा । 'पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः । केशादेः परतो वृन्दे बले सखिसहाययोः' [ इति मे० १६२।१८-१९ ] ॥ ( २ ) ॥ * ॥ हसति, हस्यते, वा । 'हसे हसने' (भ्वा० प० से०)। 'हसिमृग्रिण्-' (उ० ३।८६) इति तन् । 'हस्त' करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' [ इति मे० ५९।७५-७६ ] ॥ ( ३ ) ॥*॥ कचवाचकात् परे सन्तः । कलापोऽर्थो येषाम् ॥*॥ त्रीणि 'कलापार्थस्य' ।

तनूरुहं रोम लोम

**तनूरुहम्, रोम, लोम ( ३ न, ), 'रोएं' के ३ नाम हैं।**

तेति ॥ तन्वां रोहति । मूलविभुजादिक ( वा० ३।२।५) । 'तनूरुहं तु लोम्नि स्यात्पतत्रे च नपुंसकम्' [इति मे० १७७।३०]'तनूरुहस्तु पुत्रे गरुति लोम्नि च' इति हैमः

१. '—शिखायां—'इति मेदिनीपाठः ।

१. हैमे 'क' पुस्तके '—पक्षादिबन्धने' इति पाठः । क-ग पुस्तकयोस्तु'—पक्ष्यादिबन्धने । ···'छत्राद्यन्ते—' इति पाठः ।

[४।३५५] ॥ (१)॥*॥ रोहति। 'नामन् सीमन् व्योमन्-रोमन् लोमन्-' ( उ० ४।१५१ ) इति साधु । यद्वा,-रूयते । 'रु शब्दे' (अ० प० अ०) । मनिन् (३।२।७५)॥ (२) ॥*॥ कपिलकादित्वात् (वा० ८।२।१८) लत्वम्। लूयते वा । मनिन् ( ३।२।७५ ) ॥ ( ३ ) ॥*॥ त्रीणि 'रोम्ण'।

तद्वृद्धौ श्मश्रु पुंमुखे।

श्मश्रु (न), 'दाढ़ीके बढ़े हुए बाल' का १ नाम है।

तदिति ॥ तस्य वृद्धिस्तस्याम्। श्म मुखं श्रयति। 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। श्मनि मुखे श्रूयते। 'श्रु श्रवणे'(भ्वा० प० से०)मितद्र्वादित्वात् (वा० ३।२। १८०)डु । सपदादिविवप् (वा० ३।३।१०८) वा। आगमशास्त्रस्यानित्यत्वान्न तुक ॥ (१) ॥*॥ पुंसो मुखे ॥*॥ एक 'दाढिकाया'।

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥९९॥

आकल्प, वेष (२ पु), नेपथ्यम् (न पु), 'आभूषण आदि से उत्पन्न शोभा' के ३ नाम हैं।

प्रतिकर्म, प्रसाधनम् (२ न), 'तिलक, फूल आदिसे सँवारने' के २ नाम हैं।

*आकेति ॥ आकल्पनम् । 'कृपू सामर्थ्ये' (भ्वा० आ० से०)* । घञ् (३।३।१८) । 'कृपो रो लः' (८।२।१८)। आकल्प्यते वा। आकल्पयति वा। स्वार्थण्यन्त । अच् (३।१।१३४) । 'आकल्प कल्पने वेशे' [इति मे० १०३। १५] (१)॥*॥ वेषणम्, विष्यते, वा। 'विष्लृ व्याप्तौ'(जु० प० से०) । घञ् ( ३।३।१८,१९ ) । वेवेष्टि वा। अच् (३।१।१३४) ॥*॥ तालव्यशान्तोऽपि। वेशनम्। विश्यते वा। विशति वा। 'विश प्रवेशने' (तु० प० अ०)। प्राग्वत् । त्रिष्वप्यधिकरणे घञ् (३।३।१९) वा। 'वेशो वेश्यागृहे। नेपथ्ये च' [इति मे० १६३।३४-३५] ॥ (२) ॥*॥ नयति। णिच् (३।२।७५)। गुण (७।३।८४)। निनो नैत्रस्य, नैर्नेतुर्वा पथ्यम्। सज्ञापूर्वकत्वान्न ह्रस्व । 'नेपथ्य तु प्रसाधने। रङ्गभूमौ वेषभेदे' इति हैम [८९।५२१-५२२] ॥ (३) ॥*॥ प्रत्यङ्ग प्रतिरूपात वा कर्म। शाकपार्थिवादि (वा० २।१।७८) ॥ (४)॥*॥ प्रसाध्यतेऽनेनाङ्गम्। करणे ल्युट् (३।३।११७) ॥ (५) ॥*॥ पञ्च 'अलकाररचनादिकृतशोभाया'।

दशैते त्रिषु

यहाँ से लेकर आगेवाले दश शब्द त्रिलिङ्ग हैं।

देति ॥ एते वक्ष्यमाणा रोचिष्णुपर्यन्ता ।

अलंकर्ताऽलंकरिष्णुश्च

अलङ्कर्ता, अलङ्करिष्णु (२ त्रि), 'अलङ्कृत करनेवाले' के २ नाम हैं।

अलमिति ॥ अलं करोति। 'तृन्' (३।२।१३५)॥ (१) 'अलंकृञ्-' (३।२।१३६) इतीष्णुच् ॥ (२) ॥*॥ द्वे 'अलंकरणशीलस्य'।

मण्डित।

प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥१००॥

मण्डितः, प्रसाधितः, अलंकृत, भूषित, परिष्कृत (५ त्रि), 'आभूषण इत्यादिसे सुशोभित' के ५ नाम हैं।

मेति ॥ मण्डयते स्म। 'मडि भूषायाम्' ( भ्वा० प० से० ) । क्त (३।२।१०२) ॥ (१) ॥*॥ प्रसाध्यते स्म। 'साध ससिद्धौ' ( स्वा० प० अ० ) स्वार्थण्य त । क्त (३।३।१०२) ॥(२)॥*॥ अलं क्रियते स्म ॥ (३)॥*॥ भूष्यते स्म। 'भूष अलकारे' (भ्वा० प० से०)॥(४)॥*॥ परिक्रियते स्म। क्त (३।२।१०२) । 'सपरिभ्याम्-' (६।१।१३७) इति सुट्। 'परिनिविभ्य -'(८।३।७०)इति षत्वम् ॥ (५) ॥*॥ पञ्च 'भूषितस्य'।

विभ्राड् भ्राजिष्णुरोचिष्णू

विभ्राट्, भ्राजिष्णु, रोचिष्णु, (३ त्रि), 'आभूषण इत्यादिसे सुशोभित' के ३ नाम हैं।

वीति ॥ भ्राजते तच्छील । 'भ्राजभास-' (३।२। ७७) इति क्विप् ॥ (१) ॥*॥ 'भुवश्च' ( ३।२।१३८ ) इति चाद् भ्राजेरपि इष्णुच॥(२)॥*॥ रोचते तच्छील। 'अलकृञ्-' (३।२।१३६) इतीष्णुच् ॥ (३) ॥*॥ त्रीणि 'अलकारादिना शोभमानस्य'।

भूषा तु स्यादलंक्रिया।

भूषा, अलङ्क्रिया (२ स्त्री), 'आभूषण इत्यादिसे सुशोभित करने' के २ नाम हैं।

भ्विति ॥ भूषणम्। 'गुरोश्च-' (३।३।१०३)इत्य ॥ (१) ॥*॥ अलकरणम्। 'कृञ श च' (३।३।१००)॥ (२) ॥*॥ द्वे 'भूषणक्रियाया'।

अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥ मण्डनं च

अलङ्कार, आभरणम्, परिष्कार (१ ला और ३ रा पु), विभूषणम्, मण्डनम् ( शेष ३ न ), 'आभूषण, गहना' के ५ नाम हैं।

अलमिति ॥ अलक्रियतेऽनेन। घञ् ( ३।३।१९ )। 'अलकार ककणादिषु। उपमादौ' इति हैमः [४।२४४]॥

(१) ॥*॥ एवं परिष्कारोऽपि ॥ (३) ॥*॥ आ म्रियतेऽनेन । 'मृङ् मरणे' (भ्वा० उ० अ०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ विभूष्यतेऽनेन ॥ (४) ॥*॥ मण्ड्यतेऽनेन । 'मडि भूषायाम्' (भ्वा० प० से०)। ल्युट्(३।३।११७)। 'मण्डनं तु प्रसाधने। मण्डनोऽलङ्करिष्णौ' इति हैम. [३।४२६-४२७] ॥ (५) ॥*॥ पञ्च 'भूषाणाम्'।

अथ मकुटं किरीटं पुंनपुंसकम्।

मकुटम् (न), किरीटम् (पु न), 'मुकुट' के २ नाम हैं।

अर्थेति ॥ मङ्क्यतेऽनेन वा। 'मकि मण्डने' (भ्वा० आ० से०)बाहुलकादुटः। आगमशास्त्रस्यानित्यत्वान्न नुम्, एकोकारम् ॥*॥ (मुकुटम्, इति)द्व्युकारपाठे बाहुलकाद् धातोरुत्त्वं ज्ञ ॥ (१) ॥*॥ किरति अनेन वा। 'कॄ विक्षेपे' (तु० प० से०)। 'कृतॄकृपिभ्यः कीटन्' (उ० ४।१८५) ॥ (२) ॥*॥ द्वे 'किरीटस्य'।

चूडामणिः शिरोरत्नम्

चूडामणिः (पु), शिरोरत्नम् (न), 'शिरोमणि' के २ नाम हैं।

चूडेति ॥ चूडाया मणिः। 'चूडामणिः काकचिञ्चाफले मूर्धमणावपि' इति हैम.[४।८१] ॥ (१) ॥*॥ शिरसो रत्नम् ॥ (२) ॥ द्वे 'शिरोमणेः'।

तरलो हारमध्यगः ॥ १०२ ॥

तरलः (पु),'हारका सुमेरु' अर्थात् 'हार या माला के बीचवाले बड़े दाने' का १ नाम है।

तेति ॥ 'तरस्तु तरणे पुंसि' [इति मे० १२५।४०] तरं लाति। 'आतोऽनुप–'(३।२।३)इति कः। 'तरलं चञ्चले पिङ्गे भास्वरेऽपि त्रिलिङ्गकम्। हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्' [इति मे० १२५।९६-९७] ॥ (१)॥*॥ हारस्य मध्यं हारमध्यं गच्छति। 'अन्येष्वपि–' (वा० ३।२।४८) इति डः ॥*॥ एकम् 'हारमध्यमणेः'।

बालपाश्या पारितथ्या

बालपाश्या, पारितथ्या (२ स्त्री), 'स्त्रियोंकी चोटी या जूड़ामें लगानेके लिये सोने आदि की पट्टी' (भूषण-विशेष) के २ नाम हैं।

बेति ॥ बालपाशे केशसमूहे साधु। 'तत्र साधुः' (४।४।९८) इति यत्। बालेषु पाश्या पाशसमूहो वा ॥ (१) ॥*॥ परितस्तथाभूताः परितथा एव। चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञ् ॥ (२) ॥*॥ द्वे 'सीमन्तस्थितायाः स्वर्णादिपट्टिकायाः'। स्वामी तु—प्रथमं बालबन्धनमुक्तावलीनाम्—इत्याह।

पत्त्रपाश्या ललाटिका।

पत्त्रपाश्या, ललाटिका (२ स्त्री), 'बन्दी, बेना आदि ललाटके भूषण' के २ नाम हैं।

पत्त्रेति ॥ पाशसमूहः पाश्या, पत्त्रमिव पाश्या ॥ (१) ॥*॥ ललाटस्यालंकारः। 'कर्णललाटात्कनलंकारे' (४।३।६५) ॥ (२) ॥*॥ द्वे 'ललाटाभरणस्य'।

कर्णिका तालपत्त्रं स्यात्

कर्णिका (स्त्री), तालपत्त्रम् (न), 'कनफूल, ऐरन, तरकी, झूमक आदि भूषण' के २ नाम हैं।

केति ॥ कर्णस्यालंकारः। प्राग्वत्। 'कर्णिका कर्णभूषणे। बीजकोशे सरोजस्य करमध्याङ्गुलावपि। कुट्टिन्यां हस्तिहस्ताग्रे' इति हैम. [३।१८-१९] ॥ (१) ॥*॥ तालस्य पत्त्रम्। 'तालपत्त्रं तु कुण्डले। स्यात्तालपत्त्री रण्डायाम्' इति हैम. [४।२६१] ॥ (२) ॥*॥ 'ताटङ्कः' अप्यत्र। सुवर्णरचितस्यापीदमेव नाम ॥*॥ द्वे 'कर्णाभरणस्य'।

कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥

कुण्डलम्, क. वेष्टनम् (२ न), 'कुण्डल' के २ नाम हैं। ('कुण्डल' और 'कर्णिका' में यह भेद है कि 'कुण्डल'को स्त्री-पुरुष दोनों पहनते हैं और 'कर्णिका' को केवल स्त्रियाँ ही पहनती हैं)।

कुण्डेति ॥ कुण्डते, कुण्डयते, वा। 'कुडि दाहे' (भ्वा० आ० से०)। 'कुडि रक्षायाम्' (चु० प० से०) वा। वृषादित्वात् (उ० १।१०६) कलच्। कुण्डं कुण्डलाकारं लाति वा। 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च। काञ्चनद्रुगुडूच्योः स्त्री' [इति मे० १५१।८२-८३] ॥ (१) ॥*॥ कर्णस्य वेष्टनम्। वेष्ट्यतेऽनेन। 'वेष्ट वेष्टने' (भ्वा०आ० से०)। ल्युट् (३।३।११७) ॥(२)॥*॥ द्वे 'कुण्डलस्य'।

ग्रैवेयकं कण्ठभूषा

ग्रैवेयकम् (न), कण्ठभूषा (स्त्री), 'हँसुली, कण्ठा, टीक आदि गलेके आभूषण' के २ नाम हैं।

ग्रैवेयेति ॥ ग्रीवासु भवम्। 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' (४।२।९६) इति ढकञ् ॥*॥—'ग्रीवाया अण् च' (४।३।५७) इति ढञि 'ग्रैवेयम्' अपि—इति मुकुटः ॥ (१) ॥*॥ भूष्यतेऽनया। 'भूष अलङ्कारे' (भ्वा० प० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः। कण्ठस्य भूषा ॥ (२) ॥*॥ द्वे 'ग्रीवाभरणस्य' 'कण्ठा' इति ख्यातस्य।

लम्बनं स्याल्ललन्तिका।

लम्बनम् (न), ललन्तिका (स्त्री), 'गलेसे थोड़ा नीचे लटकनेवाले भूषण' के २ नाम हैं।

लेति ॥ लम्बते । 'लबि अवस्रंसने' ( भ्वा० आ० से० ) । ल्यु (३।१।१३४) ॥ (१) ॥*॥ लडति । 'लड विलासे' (भ्वा० प० से०) । 'लट शतृ-' (३।२।१२४) 'उगितश्च' ( ४।१।६ ) इति ङीप् । 'शप्श्यनोर्नित्यम्' (७।१।८१) इति नुम् । डलयोरेकत्वम् । ललन्त्येव । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ 'विचिलल्लम्बमानकण्ठभूषणस्य' ।

**स्वर्णैः प्रालम्बिका**

प्रालम्बिका ( स्त्री ), 'गलेसे थोड़ा नीचे लटकनेवाले सुवर्णके भूषण ( सोनेकी हलका सिकड़ी आदि )' का १ नाम है।

स्वेति ॥ सैव ललन्तिका सुवर्णैः कृता प्रालम्बते । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ एकं 'हैमलम्बकण्ठिकायाः' ।

**अथोरःसूत्रिका मौक्तिकैः कृता ॥१०४॥**

उरःसूत्रिका ( स्त्री ), 'मोतीके हार' का १ नाम है।

अथेति ॥ सैव ललन्तिका मुक्ताभिः कृता ॥*॥ उरसः सूत्रमिव । 'इवे-' (५।३।९६) इति कन् ॥ (१) ॥*॥ एकम् 'मौक्तिकमालायाः' ।

**हारो मुक्तावली**

हार ( पु ), मुक्तावली ( स्त्री ), 'हार' के २ नाम हैं।

हेति ॥ ह्रियते मनोऽनेन । ह्रियते वा । घञ् (३।३।१९) यद्वा,-हारयति मनः । स्वार्थण्यन्तादच् ( ३।१।१३४) ॥ 'हारो मुक्तासरे युधि' [इति मे० १३०।१००] । (१) ॥*॥ मुक्तानामावली दीर्घा पङ्क्तिः ॥ (२) ॥*॥ भिदादिपाठात् (३।३।१०६) अङि हारा । 'हारा मुक्तावली हारः' इति रभसः ॥*॥ द्वे 'मुक्ताहारस्य' ।

**देवच्छन्दोऽसौ शतयष्टिकः ।**

देवच्छन्द, शतयष्टिक ( २ पु ) 'सौ लड़ीवाले हार' के २ नाम हैं।

देवेति ॥ 'हार' शतयष्टिकः सन् । देवैश्छन्द्यते । 'छदि संवरणे' (चु० प० से०) । घञ् (३।३।१९)॥ (१) ॥*॥ 'यष्टिर्हारलताशस्त्रभेदयोर्ध्वजदण्डके । भाण्डचां च मधुयष्ट्यां च ।' इति विश्वः [२७।२३-२४] । 'यष्टिर्लता सरः सरिः' इत्यनेकार्थमाधवी ॥ * ॥ एकं 'शतलतिकहारस्य' ।

**हारभेदा यष्टिभेदाद्गुत्सगुत्सार्धगोस्तनाः ॥१०५॥**
**अर्धहारो माणवक एकावल्येकयष्टिका ।**
**सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥**

गुत्स, गुत्सार्द्ध, गोस्तन, अर्द्धहार, माणवक (५ पु), एकावली, एकयष्टिका, (२ स्त्री), ये ७ 'हारोंके भेदविशेष' हैं। ('इनमें बत्तीस लड़ीके हारका गुच्छ, चौबीस लड़ीके हारका गुच्छार्द्ध, चार लड़ीके हारका गोस्तन, बारह लड़ीके हारका अर्द्धहार, बीसलड़ीके हारका माणवक और एक लड़ीके हारका एकावली, एकयष्टिका नाम है')।

नक्षत्रमाला (स्त्री), 'सत्ताईस मोतियोंके हार' का १ है।

हारेति ॥ 'यष्टीनां भेदात् हारभेदाः स्युः । गुध्यते । 'गुध परिवेष्टने' (दि० प० से०) । 'उन्दिगुधिकुषिभ्यश्च' (उ० ३।६८) इति सः कित् । बाहुलकाज्जश्त्वाभावो न । 'गुत्सः स्यात्स्तबके स्तम्बे हारभित्प्रग्रिपर्णयोः' [इति दन्त्यान्तेषु मे० १७०।३] ॥*॥ तालव्योऽपि । 'स्याद् गुच्छः स्तबके स्तम्बे हारभेदकलापयोः' [ इति मे० २९।३] । गूयते । 'गुङ् शब्दे' (भ्वा० आ० अ०) । बाहुलकाच्छक् । 'द्वात्रिंशल्लतिको गुच्छः' ॥ (१) ॥*॥ 'गुच्छाधस्तस्त्वसत्यकः । गुत्सस्य गुत्सस्यार्धं । समप्रविभागाभावात् पुंस्त्वम् । चतुर्विंशतियष्टिको हारो गुत्सार्धं ॥ (१) ॥*॥ 'चतुर्लिंल्लतो हारश्चतुःसरिश्च गोस्तनः' । गो स्तन इव ॥ (१) ॥*॥ 'विंशतियष्टिको हारो माणवः परिकीर्तितः' । 'अर्धमेकदेशेन कृतो हारः ।' शाकपार्थिवादिः ( वा० २।१।७२ ) ॥ (१) ॥*॥ माणवो बालः । स इव । यावादित्वात् (५।४।२९) कन् । 'माणवको हारभेदे बाले कुपुरुषे वटौ' [इति मे० १७।२०९] ॥ (१) ॥*॥ एकसरा । एका चासावावली च ॥ (१) ॥*॥ एकावल्येव सप्तविंशतिमुक्ताभिः कृता । नक्षत्राणां मालेव ॥ (१) ॥*॥ प्रत्येकमेकैकम् ।

**आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।**

आवापक, पारिहार्य (२ पु), कटक, वलय (२ पु न), 'पहुँची, कड़ा आदि हाथके भूषण' के ४ नाम हैं।

आवेति ॥ आ उप्यते । 'डुवप्' (भ्वा० उ० अ०) । कर्मणि घञ् (३।३।१९) । स्वार्थे ( ज्ञापि० ५।४।५ ) संज्ञायां (५।३।७५) वा कन् ॥ (१) ॥*॥ परिह्रियते 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) । परिहार्य एव । प्रज्ञादण्

१ हैमे तु यष्टिभेदेन हाराणां ये नामभेदास्त एवमुक्ताः, तद्यथा—'देवच्छन्दः शतं साष्टं त्विन्द्रच्छन्दः सहस्रकम् । अर्धं रश्मिकलापोऽस्य द्वादश त्वर्धमाणवः । तदर्धं विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् । द्विद्वादशार्धगुच्छः स्यात् पञ्च हारफलं लता । अर्धहारश्चतुःषष्टिर्गुच्छमाणवमन्दराः । अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम् । इति हारा यष्टिभेदात्' [ ३।३२२-३२५ इति ] ।

(५।४।३८) । यद्वा,-धनन्ताच्चतुर्वर्णादित्वात् (वा० ५।१।१२०) स्वार्थे ष्यञ् । (२) ॥*॥ कटति कटयते वा। 'कटे वर्षावरणयोः' (भ्वा० प० से०) क्वुन् (उ० २।३२)। 'कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डने। सामुद्रलवणे राजधानीवलययोरपि' [ इति मे० ५।५६-५७ ] ॥ (३) ॥*॥ वलते। 'वल संवरणे' (भ्वा० आ० से०) । 'वलिमलितनिभ्यः कयन्' (उ० ४।९९) ॥ 'वलयः कण्ठरोगे ना कङ्कणे पुनपुंसकम्' [ इति मे० ११९।९६] ॥ (४) ॥*॥ चत्वारि 'प्रकोष्ठाभरणस्य'।

**केयूरमङ्गदं तुल्ये**

केयूरम्, अङ्गदम् ( २ न ), 'बिजायठ, बाजूबन्द, बहरखूटा' के २ नाम हैं।

कयिति ॥ के बाहुशिरसि यौति । 'यु मिश्रणे' (अ० प० से०) । खर्जादित्वात् ( उ० ४।९० ) ऊरः । बाहुलकाट्टिलोपः । 'हलदन्तात्–' ( ६।२।९ ) इति सप्तम्या अलुक् ॥ ( १ ) अङ्गं दयते, दायति, द्यति वा । 'देङ् पालने'(भ्वा० आ० अ०)। 'दैप् शोधने'(भ्वा० प० अ०) वा । 'दो अवखण्डने' (दि० प० अ०) वा । 'आतोऽनुप–' (३।२।३) इति कः । 'अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् । अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति' [इति मे० ७५।१७-१८] (२)॥*॥ द्वे 'प्रगण्डभूषणस्य'।

**[१]अङ्गुलीयकमूर्मिका ॥ १०७ ॥**

अंगुलीयकम् (न पु), ऊर्मिका (स्त्री), 'अँगूठी' के २ नाम हैं।

अंगुलीति ॥ अगुलौ भवम् । 'जिह्वामूलांगुलेश्छः' (४।३।६२) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥—कपिलकादित्वात् (वा० ८।२।१८)'अंगुलीयकम्'—इति मुकुट ॥ तन्न । तत्र रेफानुवादेन लविधानात् । लानुवादेन रेफविधानाभावात् । 'वालमूल–' ( वा० ८।२।१८ ) इति वक्तुं वाक्यत्वात् ॥ (१) ॥*॥ ऊर्मिरिव । 'इवे–' (५।३।९६) इति कन् । ऊर्मिं प्रकाशं कायति वा ॥ 'ऊर्मि. स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयो' [इति मे० १०८।२] ॥ (२) ॥*॥ द्वे 'अंगुलीभूषणस्य'।

**साक्षराऽङ्गुलिमुद्रा सा**

अंगुलिमुद्रा ( स्त्री ), 'नाम खुदी हुई अँगूठी' का १ नाम है।

सेति ॥ ऊर्मिका । अक्षरैः सहिता चेत् । अंगुल्यां मुदं राति । 'आत–' (३।२।३) इति क । मोदते वा । 'मुद हर्षे' ( भ्वा० आ० से० ) । 'स्फायितञ्चि–' ( उ० २।१३ ) इति रक् । अंगुल्या मुद्रा ॥ (१) ॥*॥ एकम् ॥

**कङ्कणं करभूषणम् ।**

कङ्कणम्, करभूषणम् (२ न), 'कङ्कण, ककना' के २ नाम हैं।

कङ्केति ॥ कं शुभं कणति । 'कण शब्दे' (भ्वा० प० से०) । अच् ( ३।१।१३४ ) कङ्कते वा । 'कक लौल्ये' (भ्वा० आ० से०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति 'अनुदात्तेतश्च हलादेः' (३।२।१४९) इति वा युच् । पृषोदरादित्वात् (६।३।१०९) णत्वम् । 'कङ्कणं करभूषायां सूत्रमण्डनयोरपि' [ इति मे० ४८।४० ] ॥ (१) ॥*॥ करं भूषयति । करो भूष्यतेऽनेन वा । ल्युट् (३।३।११३, ११७) । 'क्लीब मण्डने सूत्रे कङ्कणं करभूषणम्' इति रभसः । 'हस्तमण्डनसूत्रे स्यात् कङ्कणो ना प्रतीसर' इति रत्नकोष ॥ (२) ॥*॥ द्वे 'मणिबन्धभूषणस्य'।

**स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ॥१०८॥**

**क्लीबे सारसनं च**

मेखला, काञ्ची, सप्तकी, रशना (४ स्त्री),सारसनम् (न), 'स्त्रियोंकी करधनी' के ५ नाम हैं।

स्त्रीति ॥ मखं गतिं लाति । क (३।१।३) । पृषोदरादि (६।३।१०९)।—मीयते । 'डुमिञ् प्रक्षेपणे' (स्वा० उ० अ०) । 'कलम्बादयश्च' इति साधु'—इति मुकुटश्चिन्त्यः । तत्सूत्रस्योज्ज्वलदत्तादिष्वदर्शनात् । 'मेखलाऽद्रिनितम्बे स्याद्रशनाखड्गबन्धयो' इति हैम. [३।७१६] ॥ (१) ॥*॥ काञ्चते । 'कचि दीप्तिबन्धनयो.' (भ्वा० आ० से०) । इन् (उ० ४।११८) । वा ङीप् (ग०४।१।४५) ।—'अन्येभ्योऽपि–' इति दीर्घ —इति मुकुटश्चिन्त्य । धातोरेव दीर्घवत्त्वात् । 'अन्येभ्योऽपि–'इत्येतादृशस्य दीर्घविधायकस्याभावात् 'अन्येषामपि–' ( ६।३।१३७) इति वक्तु युक्तत्वाच्च । 'काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च' [ इति मे० २७।३ ] ॥( २ ) ॥*॥ सपति । 'षप समवाये' (भ्वा० प० से०) । बाहुलकात्तन् स्वार्थे कन् (ज्ञापि० ५।४।५) । सप्तभिरनेकाभिः किङ्किणीभि , सप्त स्वरान् वा कायति । 'आत.–' ( ३।१।१३६, २।३ ) इति क. । गौरादिः ( ४।१।४१ ) ।—कायन्ति अस्याम् । मूलविभुजादित्वात् ( वा० ३।२।५ ) क –इति मुकुटश्चिन्त्य । अधिकरणे तत्प्रवृत्तेरसंभवात् ॥ (३)॥*॥ अश्नुते । 'अशूङ् व्याप्तौ संघाते च' ( स्वा० आ० से० )।

---

१. 'अंगुलीयम्' अपि । लक्ष्यं च–'तव सुचरितमंगुलीय नूनम्' इति शाकु० । 'अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः' इति भट्टि–(८।११८) प्रयोगात्पुंस्त्वेऽपि ।

अश्नाति । अश भोजने' ( क्र्या० प० से० ) । 'अशे रश् च' (उ० २।७५) इति यू रशादेश । यद्वा,–रसति । 'रस शब्दे' सौत्र । बहुलमन्यत्रापि' (उ० २।७८) इति युच् । तालव्यमध्या 'रशना'॥*॥ रसना' दन्त्यमध्यापि । 'रस शब्दे' (भ्वा० प० से०) रस आस्वादने' (चु० उ० से०)। 'बहुलम्–' (उ० २।७८) इति युच् । 'ण्यासश्रन्थ–' (३।३।१०७) इति वा युच् । 'तालव्या अपि दन्त्याश्च शम्बशम्बलशूकरा । रशनापि च जिह्वायाम्' । रसन निस्वने स्वादे रसना काञ्चिजिह्वयो 'इत्यजयधरणी । 'रसन स्वदने स्वाने रसना काञ्चिजिह्वयो । रसन चापि रास्नायाम्' इति विश्वप्रकाश [८७।३०] । एवमुभयमुभयत्र साधु । (४) ॥*॥ सारमुत्कृष्ट सनमस्य । 'षण सभक्तौ' (भ्वा० प० से०)। घ (३।३।११८)। सहारसनेनाल्पशब्देन वा । 'मेखलाया सारसनमुरस्त्रे च तनुत्रिणाम्'इति दन्त्यादो रभस । (५) ॥*॥ पञ्च 'स्त्रीकटिभूषणस्य'॥ 'स्त्री' इत्यविवक्षितम् । पुस्कटिभूषणेऽपि ।—स्त्रीकट्या वस्त्रग्रन्थने—इति स्वामी । एका यष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका । रसना षोडश ज्ञेया कलाप पञ्चविंशक '—इति भेदस्त्विह न विवक्षित ।

अथ पुंस्कट्यां शृङ्खलं त्रिषु ।

शृङ्खलम् ( त्रि ), 'पुरुषोंकी करधनी' का १ नाम है ।

अथेति ॥ पुसां कट्या चेत् काञ्ची । शृङ्गे खलति । 'खल सचये' (भ्वा० प० से०)। अच् (३।१।१३४) । पृषोदरादि । (६।३।१०९) । 'शृङ्खल पुस्कटीकाञ्च्या लोहरज्जौ च बन्धने' इति हैम [ ३।७२५ ] ॥ ( १ ) ॥*॥ एकम् 'पुरुषकटीस्थकाञ्च्या '।

पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥१०९॥

पादाङ्गदम् ( न ), तुलाकोटि ( स्त्री ), मञ्जीर , नूपुर (२ पु न), हंसक , पादकटक (२पु), 'पायजेब' के ६ नाम हैं ।

पेति ॥ पादस्याङ्गदमिव । यद्वा–पाद एवाङ्गम् । पादाङ्ग द्यति, दायति, दयते वा । 'दो अवखण्डने' (दि० प० अ० ) । 'दैप् शोधने' ( भ्वा० प० अ० ) । 'देङ् पालने' ( भ्वा० आ० अ० ) । 'आतोऽनुप' (३।२।३) इति क ॥ (१) ॥*॥ तुला तुलया वा कौटयति । 'कुट प्रतापने' चुरादि । 'अच इ' (उ० ४।१३९) । तुलाकार कोटिरग्रमस्य । 'तुलाकोटिर्मानभेदेऽम्बुदे स्यान्नूपुरेऽपि च' इति हैम ॥ (२) ॥*॥ मञ्जति । 'मजि ध्वनौ' सौत्र । बाहुलकादीरन ।— गम्भीरादयश्च' इतीरन्—इति मुकुटोऽपाणिनीयो गम्भीरादिगणाभावात् ॥ ( ३ ) ॥*॥ 'नुवनम्' नूयते, वा । 'णू स्तुतौ' ( तु० प० से० ) । सपदादि (वा० ३।३।१०८), नुवि पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क । 'मञ्जीरोऽस्त्री स नूपुर ' इति रभस ॥ ( ४ ) ॥*॥ चत्वारि 'नूपुरस्य' ।

हंसकः पादकटक

( भावार्थ-ऊपर दिया गया है । )

हसेति ॥ हस इव कायति । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति ड । हस इव । 'इवे–' ( ५।३।९६ ) इति कन् वा ॥ (१) ॥*॥ पादस्य कटको वलय ॥(२) ॥*॥ द्वे 'नूपुरस्य' ॥—षडपि पर्याया —इत्येके ।

किंकिणी क्षुद्रघण्टिका।

किङ्किणी, क्षुद्रघण्टिका ( २ स्त्री ), 'घूंघुरू' के २ नाम हैं।

किमिति ॥ किंचित् किण करोति । किणशब्दात् 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्तादच् (३।१।१३४)। गौरादि ( ४।१।४१ ) ॥*॥—कङ्कणी–इति स्वामी ॥ कङ्कनम् । 'ककि गतौ'(भ्वा० प० से०) । घञ्(३।३।१८) कङ्क गतावणति । 'अण शब्दे' ( भ्वा० प० से० ) । अच् (३।१।१३४) गौरादि (४।१।४१) शकन्ध्वादि ( वा० ६।१।९४) । यद्वा,–क सुख कणति । 'कण शब्दे' ( भ्वा० प० से० ) अच् ( ३।१।१३४ ) । 'कङ्कण स्यात्प्रतिसर कङ्कणी क्षुद्रघण्टिका' इति भागुरि ॥(१) ॥*॥ घण्टेव । 'इवे–' (५।३।९६) इति कन् । यद्वा,–घण्टति, घण्टयति, वा 'घटि दीप्तौ' (चु० उ० से०) । ण्वुल् (३।१।१३३) । क्षुद्रा चासौ घण्टिका च ॥ ( २ ) ॥*॥ द्वे 'क्षुद्रघण्टिकाया' 'क्षुद्राख्यस्य' ।

त्वक्फलकृमिरोमाणि वस्त्रयोनि

वस्त्रयोनि (स्त्री),'जिनके कपडे बनते हों उन छाल,फल, कृमि और रोए' का १ नाम है। ('तीसी, केला आदिके छाल से, कपास आदिके फलसे, रेशमवाले कृमि (कीडे) के कोएसे और भेंड़, दुम्मा भेड़ा, मृग आदिके रोएंसे कपडे बनते हैं, अत 'उन छाल, फल, कृमि और रोएं' का 'वस्त्रयोनि '(स्त्री), यह १ नाम हैं )।

त्वेति ॥ त्वगादि । वस्त्रस्य योनि कारणम् ॥ (१) ॥*॥ एकम् 'वस्त्रयोने ' ।

दश त्रिषु ॥ ११० ॥

यहा दश शब्द त्रिलिङ्ग है । ("वाल्कम्, क्षौमम्, फाल्मम्, कार्पासम्, बादरम्,कौशेयम्, राङ्कवम्, अनाहतम्,निष्प्रवाणि, तन्त्रकम्' क्षी० स्वा० भा० दी० मतसे ये १० शब्द त्रिलिङ्ग हैं। वाल्कम्, क्षौमम ( न० ), फालम्, कार्पासम्, बादरम्, कौशेयम्, कृमिकोशोत्थम्, राङ्कवम्, मृगरोमजम्, अना-

हृतम्, निष्प्रवाणि, तन्त्रकम्('च' शब्दसे इसका संग्रह हुआ है),सुभूति और महेश्वरके मतसे शेष ११ शब्द त्रिलिङ्ग हैं")।

देति ॥ वक्ष्यमाणानि तन्त्रकान्तानि दश ।

**वाल्कं क्षौमादि**

वाल्कम्, क्षौमम् ( २ त्रि ), 'तिसीवट या केले आदिके छालसे बने हुए कपड़े' के १-१ नाम हैं।

वेति ॥ वल्कस्य विकार. । 'तस्य विकार.' ( ४।३। १३४) इत्यण् ॥(१) ॥*॥ क्षुमाया विकारः । प्राग्वत् ॥ क्षौमादि वाल्कम् । 'क्षौम वल्कजाशु के । शणजेऽतसीजे' [ इति मे० १०८।९ ] 'क्षौमवस्त्रस्य' एकम् ।

**फालं तु कार्पासं बादरं च तत्।**

फालम्, कर्पासम्, बादरम् (३ त्रि), 'कपास इत्यादि—के फलसे बने हुए कपड़े' अर्थात् 'सूती कपड़े' के ३ नाम हैं।

फेति ॥ फलस्य विकार । 'तस्य विकार.' ( ४।३। १३४)इत्यण् । 'फालं तु वसने फाल' उत्प्लुतौ' [इति हैम· २।५११-५१२] । 'क्लीबं सीरोपकरणे' [इति मे० १४७। ३४-३५] । 'पुंसि शंकरसीरिणो.' ॥ (१) ॥*॥ कर्पास्या बदराया्श्च विकारः फलम् । 'अवयवे च–' (४।३।१३५) इत्यण् । तस्य 'फले लुक्' (४।३।१६३)। कार्पासस्य बदरस्य च विकार· । प्राग्वदण् (४।३।१३४) ॥ ( २ ) ॥*॥ (३) ॥*॥ त्रीणि 'कार्पासवस्त्रस्य' ।

**कौशेयं कृमिकोशोत्थम्**

कौशेयम्, कृमिकोशोत्थम् (२ त्रि),'पीताम्बर आदि रेशमी कपड़ा' अर्थात् 'रेशमवाले कीड़ोंके कोएके बने हुए कपड़े' के २ नाम हैं।

काविति ॥ कोशे संभूतः । 'कोशाड्ढञ्' (४।३।४२) ॥ (१) ॥*॥ एकम् 'पीताम्बरादे.' ।

**राङ्कवं मृगरोमजम् ॥१११॥**

राङ्कवम्, मृगरोमजम् २ त्रि), 'दुशाला, शाल, अलवान, कम्बल आदि ऊनी कपड़ा' अर्थात् 'मृग (भेंड़ा आदि पशु) के रोंएं के बने सूतसे बुने हुए कपड़े' के या 'रङ्कुनामक मृगविशेषके रोंएंके बने सूतसे बुने हुए कपड़े' के २ नाम हैं।

रेति ॥ रङ्कौ भवम् । 'रङ्कोरमनुष्येऽण् च'(४।२।१००) इत्यण् । 'मृगरोमजम्' मृगशब्देन पशुमात्रं ग्राह्यम् । तेन कम्बलाद्यपि राङ्कवम् ॥ (१) ॥*॥ एकम् 'ऊर्णादे:'[२] ।

---

१, हेम 'ख-ग पुस्तकयोस्तु'—फल उत्प्लुतौ—' इति पाठः ।

२. 'ऊर्णावस्त्रस्य' इत्युचितम् ।

**अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे।**

अनाहतम्, निष्प्रवाणि, तन्त्रकम् (३ त्रि), नवाम्बरम् (न), भा० दी० ची० स्वा० के मतसे 'जो पहना, धुलाया या फटा हुआ नहीं हो उस कपड़े' के और महेश्वरके मतसे 'कोरे कपड़े' के ४ नाम हैं।

अनेति ॥ न आहतम् ॥ ( १ ) ॥*॥ प्रोयतेऽनया । 'वेञ् तन्तुसताने' (भ्वा० उ० अ०) । 'करणा–' (३।३।१-१७) इति ल्युट् । निर्गता प्रवाणी तन्तुवायशलाकाऽस्मात् । 'निष्प्रवाणिश्च' (५।४।१६०) इति साधु ॥ ( २ ) ॥*॥ तन्त्रादचिराद्धृतम् । 'तन्त्रादचिरापहृते' (५।२।७०) इति साधु ॥ (३) ॥*॥ नवं च तदम्बरं च ॥ ( ४ ) ॥*॥ चत्वारि 'छेदभोगक्षालनरहितवस्त्रस्य' ।

**तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥**

उद्गमनीयम् (न), 'धुलाये हुए कपड़े' का नाम है।

तदिति ॥ धौतयो. प्रक्षालितयोर्वस्त्रयोर्युगम् । उद्गम्यतेऽभिलष्यते । 'गम्लृ गतौ' (भ्वा० प० अ०) । अनीयर् (३।१।९६) ॥ (१) ॥*॥ 'युगम्' इत्यविवक्षितम् ॥*॥ एकम् 'धौतवस्त्रयुगस्य' ।

**पत्त्रोर्णं धौतकौशेयम्**

पत्त्रोर्णम् (न), धौतकौशेयम् (२ न), 'धुलाये हुए रेशमी कपड़े' के २ नाम हैं।

पेति ॥ पत्त्रेषु कृतोर्णा पत्त्रोर्णाऽस्त्यत्र । अर्शआद्यच् (५।२।१२७) । 'पत्त्रोर्णं धौतकौशेये पत्त्रोर्णं शोणकद्रुमे' इति हैम [३।२२९] ॥ (१) ॥*॥ धाव्यते स्म । 'धावु गतिशुद्ध्योः' (भ्वा० उ० से०) । क्तः (३।२।१०२) धौतं च तत्कौशेयं च ॥ ( २ ) ॥*॥ द्वे 'धौतकौशेयस्य' ।— प्रक्षालितकौशेयमेव पत्त्रोर्णाख्यम्—इत्यन्ये ।

**बहुमूल्यं महाधनम्।**

बहुमूल्यम्, महाधनम् ( २ न ), 'बेशकीमती वस्तु' के २ नाम हैं।

बेति ॥ बहु मूल्यमस्य ॥ (१) ॥*॥ महद् धनं मूल्यमस्य ॥ (२) ॥*॥ द्वे 'बहुमूल्यवस्तुन' ।

**क्षौमं दुकूलं स्यात्**

क्षौमम् (न), दुकूलम् (न),'पीताम्बर' के २ नाम हैं।

क्षाविति ॥ क्षौति, क्षूयते, वा । 'टुक्षु शब्दे' (अ० प० से०) । 'अर्तिस्तुसु–' (उ० १।१४०) इति मन् । 'क्षौमं पट्टे दुकूलेऽस्त्री' [ इति मे० १०८।९ ] ॥*॥—क्षुमाया विकारः । क्षौमम्—इति स्वामी । पर्यायान्तराभिधनाय

पुनरभिहितम् ॥ (१)॥*॥ दुष्ट कूलति । 'कूल आवरणे' (भ्वा० प० से०) 'इगुपध-' ( ३।१।१३५ ) इति क । पृषोदरादि (६।३।१०९)॥ (२) ॥*॥ द्वे पट्टवस्त्रस्य'।

**द्वे तु निवीत प्रावृत त्रिपु ॥११३॥**

निवीतम्, प्रावृतम् (२ त्र), 'ढके हुए वस्त्र' के २ नाम हैं।

द्वे इति ॥ नि वीयते स्म । 'व्येञ् संवरणे' (भ्वा० उ० अ०) । क्त (३।२।१०२) । सम्प्रसारणादि (६।१।१५) । (६।१।१०८)(६।४।२)॥*॥—निवृत्तम्—इति स्वामी ॥ (१) ॥*॥ प्राव्रियते स्म 'वृञ् वरणे' (स्वा० उ० से०)। क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'प्रावृतवस्त्रस्य।'

**स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः।**

दशा (स्त्री), वस्तय (स्त्री), 'कपडेकी किनारी, धारी, दस्सी' के २ नाम हैं।

स्त्रीति ।। दश्यते । दश दशने' (भ्वा० प० अ०) भिदादि (३।३।१०६)। दशा वर्त्यामवस्थाया वस्त्रान्ते भूम्नि पुंलिङ्गो ' इति रभस ॥ (१) ॥*॥ वस्यते । 'वस आच्छादने' (अ० आ० से०) । 'वस स्नेहनादौ' चुरादि । चुरादीना णिज्वा । 'वसेस्ति ' (उ० ४।१८०) । 'वस्तिर्द्वयोर्निरुहे नाभ्यधो भूम्नि दशासु च' [इति मे० ५८।५५] ॥ (२) ॥*॥ द्वे 'वस्त्रान्तावयवानाम्' ।

**दैर्घ्यमायाम आनाहः**

दैर्घ्यम् (न,) आयाम , 'आरोह' (२ पु), 'कपडे आदिकी लम्बाई' के ३ नाम हैं।

दायिति ॥ दीर्घस्य भाव । 'गुण-' (५।१।१२४)इति ष्यञ ॥ (१) ॥*॥ आयम्यतेऽनेन । घञ ( ३।३।१९ ) । आयमन वा । आयाति वा । 'या प्रापणे' (अ० प० से०)। 'अर्तिस्तुसु-'(उ० १।१४०) इति मन् ॥ ( २ ) ॥*॥ आनह्यतेऽनेन । 'णह बन्धने' ( दि० उ० अ० ) घञ् (३।३।१९) ॥*॥ 'आरोह ' इति क्वचित्पाठ । आरुह्यतेऽनेन । घञ (३।३।१९) । 'आरोहस्त्ववरोहे च वरयोषिस्कटावपि[१]। आरोहणे गजारोहे दीर्घत्वे च समुच्छ्ये' [इति मे० १७६।१४] ॥ (३) ॥*॥ त्रीणि 'वस्त्रादेर्दैर्घ्यस्य'।

**परिणाहो विशालता ॥ ११४॥**

परिणाह (पु), विशालता (स्त्री) 'कपडे आदिकी चौड़ाई' के २ नाम हैं।

पेति ॥ परिणह्यतेऽनेन । घञ् (३।३।१९) ॥ (१) ॥*॥ विशालस्य भाव । तल् (५।१।११९) ॥(२)॥*॥ द्वे 'विस्तारस्य' 'पनहा' इति ख्यातस्य ।

१ 'वरारोहावटावपि' इति मेदिनीपाठ ।

**पटच्चरं जीर्णवस्त्रम्**

पटच्चरम्, जीर्णवस्त्रम् (२न), 'पुराने कपडे'के २ नाम हैं।

पेति ॥ पटति । 'पट गतौ' (भ्वा० प० से०)। बाहुलकादत् । भूतपूर्वं पटत्। 'भूतपूर्वे चरट्'(५।३।५३)यद्वा,- 'पटत्' इत्यव्यक्त शब्द चरति करोति । अच्(३।१।१३४)। यद्वा -पट इवाचरति । 'सर्वप्रातिपदिकेभ्य क्विब्वा' (वा० ३।१।११) । खाप्रन्ताच्चरट् ( ५।३।५३ ) ॥ (१) ॥*॥ जीर्णं च तद्वस्त्र च ॥ (२) ॥*॥ द्वे 'जीर्णवस्त्रस्य'।

**समौ नक्तककर्पटौ**

नक्तक, कर्पट (२ पु), मुकु० महे० मतसे 'पुराने कपडेके टुकडे'के भा० दी० मतसे 'रुमाल' अर्थात् 'पसीना आदि को पोंछने वाले छोटे वस्त्र' और क्षी० स्वा० मतसे 'दूध, पानी आदिको छाननेवाले कपडे' के २ नाम हैं।

सेति ॥ नजते । 'ओलजी व्रीडे' (तु० आ० से०) बाहुलकात्तन् । स्वार्थे कन् (ज्ञापि० ५।४।५) । नोक्त कं सुखमस्माद्वा । पृषोदरादित्वात् ( ६।३।१०९ ) मलोप ॥*॥ क्वचित् 'लक्तक:' इति पाठ । लक्यते स्म । 'लक आस्वादने' (      )। क्त ( ३।२।१०२ ) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ ( १ ) ॥*॥ किरति । 'कॄ विक्षेपे (तु० प० से०)। कृणाति । 'कॄ हिंसायाम्'(क्र्या० प० से०) वा । करोति । 'डुकृञ्' ( तु० उ० अ०) वा । विच् (३।२।७५ ) कर् चासौ पटश्च । यद्वा,—करस्य पट । शकन्ध्वादि (वा० ६।१।९४) ॥ (२)॥*॥ द्वे 'प्रस्वेदादिमार्जनार्थहस्तस्थवस्त्रखण्डस्य' । स्वामी तु—द्रवद्रव्य येन पूयते तत्र रूढोऽयम् इत्याह । मुकुटस्तु—मलिनत्वादिदुष्टजीर्णवस्त्रखण्डस्य ।

**वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५॥**

वस्त्रम्, आच्छादनम्, वास, चैलम्, वसनम्, अंशुकम् (६ न), 'कपडामात्र' के ६ नाम हैं।

वेति ॥ वस्यतेऽनेन । 'वस आच्छादने' (अ०आ०से०)। ष्ट्रन् (उ० ४।१५९ ) ॥ ( १ ) ॥*॥ आच्छाद्यतेऽनेन। ल्युट् (३।३।११७)॥ (२) ॥*॥ वस्यतेऽनेन । 'वसेर्णित्' (उ० ४।११८) इत्यसुन ॥(३)॥*॥ चिल्यतेऽनेन ।'चिल वसने' (तु० प० से०)। घञ् (३।३।१९) गौरादि (४।१।४१) । '—कल्पचेलट्—' ( ६।३।४३ ) इति ह्रस्वनिपातनाद्वा ङीप्। 'चेलो[१]नीचेऽधमे त्रिषु । नपुसक तु वसने'। इति मेदिनी [१४६।१७] ॥ ( ४ ) ॥*॥ वस्यतेऽनेन । ल्युट् (३।३।११७) 'वसन छादने वस्त्रे' [ इति मे० ९१।२१ ] ॥ (५)॥*॥ अंशु सूत्रादिसूक्ष्मभागे किरणे [२]चण्डदीधिते'

१ मेदिन्या 'नीचे' इति पाठो नास्ति ।

२. मेदिन्या 'चण्डदीधितौ' इति पाठ ।

[२।५५५ इति हैम ]। 'अंशून् कायति। कः (३।२।३)। यद्वा,-अंशुभिः काशते। 'काशृ दीप्तौ' (भ्वा० आ० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। 'अंशुकं श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः' [इति मे० ४।४३]॥ (६) ॥ * ॥ 'पटोऽस्त्री कर्पटं शाटः सिचयप्रोतलक्तकाः' इति रभसः ॥ * ॥ षट् 'वस्त्रस्य'।

सुचेलकः पटोऽस्त्री

सुचेलकः, पटः (न पु), 'अच्छे वस्त्र' के २ नाम हैं।

स्विति। शोभनं चेलमेव। स्वार्थे कन् (ज्ञापि० ५।४।५)। स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि, (५। )॥ (१)॥ * ॥ पटति। 'पट गतौ' (भ्वा० प० से०)। 'पट विस्तारे' (चु० उ० से०) वा०। अच् (३।१।१३४)। यद्वा,-पटयतेऽनेन। 'पट भासने' (चु० उ० से०)। 'सनो घ च' (३।३।१२५) इति घो घित्वादन्यस्मादपि। 'हलश्च' (३।३।१२१) घञि संज्ञापूर्वकत्वाद्वृद्ध्यभावः। 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' ( ) इति घञ्विषये 'पुंसि–' (३।३।११८) इति घो वा–घञर्थे कः (वा० ३।३।५८)—इति मुकुटः। तन्न। परिगणनात्। 'पटस्त्रिष्वपटे वस्त्रेऽस्त्री, प्रियालद्रुमे पुमान्' [इति मे० ३५।१९]। —'अस्त्री' इति चिन्त्यम्। द्वयोरदर्शनात्—इति स्वाम्येव चिन्त्यः। उक्तरभस-मेदिन्योः 'अस्त्री' इति दर्शनात्॥ (२)॥ द्वे 'शोभनवस्त्रस्य'।

ना वराशिः स्थूलशाटकः।

वराशिः, स्थूलशाटकः (२ पु), 'मोटे वस्त्र' के २ नाम हैं।

नेति॥ वरं श्रेष्ठं वरणं वा अश्नुते। इञ् (उ० ४।११८)। 'वराशिर्नी' इति तालव्यान्ते शाब्दिकः॥ * ॥ 'वरासिः स्यात्खड्गवरे वरासिः स्थूलशाटके' इति दन्त्यान्तेषु रभसः॥ (१)॥ * ॥ शटति। 'शट रुजादौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। स्थूलश्चासौ शाटकश्च॥ (२)॥ * ॥ 'वराशिर्नी' इत्यन्वयः॥ * ॥ द्वे 'स्थूलपटस्य'।—चत्वार एकार्था—इत्येके।

निचोलः प्रच्छदपटः

निचोलः (त्रि), प्रच्छदपटः (२ पु), महे० मा० दी० मत से 'पालकी आदिके ओहार या सारङ्गी सितार आदिके गिलाफ' (खोली) के, क्षी० स्वा० मतसे 'रजाई, तोसक, तकिया आदिकी खोली' के और अन्याचार्योंके मतसे 'बुर्का' अर्थात् 'यवन आदिकी स्त्रियां पर्देके वास्ते जिसको ओढ़कर पूरे शरीरको ढककर बाहर निकलती हैं उस वस्त्र-विशेष' के २ नाम हैं।

नीति॥ निचोल्यते। 'चुल समुच्छ्राये' चुरादिः। घञ् (३।३।१९) यद्वा,-चोड्यते। 'चुड कृतौ' चुरादि.। घञ् (३।३।१९) डलयोरेकत्वम्। 'निचोलं तु नपुंसकम्' इति रभसः।—स्त्रियां 'निचोली' इत्यपि—इति राजदेवः॥ * ॥ निचुलोऽपि। 'निचुलस्तु निचोले स्यादिज्जलाख्यमहीरुहे' [इति मे० १५२।१०२]॥ (१)॥ * ॥ प्रच्छदति। प्रच्छद्यते वा। 'छद संवरणे' (चु० उ० से०)। अच् (३।१।१३४)। ॥ (३।१।११८) वा। प्रच्छाद्यतेऽनेन वा। चुरादिण्यन्तात् घः (३।३।१८)। 'छादेर्घे–' (६।४।९६) इति ह्रस्वः। प्रच्छदश्चासौ पटश्च। (२) ॥ * ॥ द्वे 'डोलिकाद्यावरणपटस्य' 'ओहार' इत्याख्यस्य। —स्त्रीपिधानपटस्य 'बुरका' इति ख्यातस्य—इत्यन्ये॥ —येन तूलशय्यादि प्रच्छाद्यते तस्य 'खोल' इत्याख्यस्य— इति स्वामी।

समौ रल्लककम्बलौ॥ ११६॥

रल्लकः, कम्बलः (२ पु). 'कम्बल' के २ नाम हैं।

सेति॥ रमते। क्विप् (३।२।१७८)। 'गमादीनां–' (वा० ६।४।४०) इति मलोपः। तुक् (६।१।७१)॥ लाति। क्विप् (३।२।१७८)। रत् चासौ ल्श्च। स्वार्थे कन् (ज्ञापि० ५।४।५)। 'केऽणः' (७।४।१३) इति ह्रस्वः। यद्वा,-रमणम्। संपदादि (वा० ३।३।१०८)। रत् क्रीडा गम्यतेऽनेन। 'लक आस्वादने' ( ) घ (३।३।११८)। रतं लाति। क्वुन् (उ० २।३२) वा। 'रल्लकः कम्बले स्मृतः। तथैव कम्बलमृगे' इति हैमः [३।८६-८७]॥ (१)॥ * ॥ कम्बति, कम्ब्यते वा। 'कम्ब गतौ' ( )। वृषादित्वात् (उ० १।१०६) कलच्। संज्ञापूर्वकत्वान्नलोपो न। 'कम्बलः क्रिमिसास्नयोः। नागप्रभेदे प्रावारे वैकक्ष्ये कम्बलं जले' इति हैमः [३।६६९]॥ (२)॥ * ॥ द्वे 'कम्बलस्य'।

अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके।

अन्तरीयम्, उपसंव्यानम्, परिधानम्, अधोंऽशुकम् (४ न), 'कमरसे नीचे पहने जानेवाले धोती, पायजामा, साड़ी आदि कपड़ों' के ४ नाम हैं।

अन्तेति॥ अन्तरे भवम्। गहादित्वात् (४।२।१३८) छः॥ (१)॥ * ॥ उपसंवीयतेऽनेन। 'व्येञ् संवरणे' (भ्वा० उ० से०)। ल्युट् (३।३।११७)॥ (२)॥ * ॥ परिधीयते। 'डुधाञ् धारणपोषणयोः' (जु० उ० अ०)। 'कृत्यल्युटः–' (३।३।११३) इति ल्युट्॥ (३)॥ * ॥ अधोदेहभागस्यांशुकम्॥ (४)॥ * ॥ चत्वारि 'परिधानवस्त्रस्य'।

द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयं च

प्रावार उत्तरासङ्ग (२ पु) बृहतिका (स्त्री), संव्यानम्, उत्तरीयम् (२ न) 'कमरसे ऊपर धारण करने योग्य दुपट्टा, चादर पगड़ी आदि कपड़ों' के ५ नाम हैं।

द्वाविति ॥ प्र व्रियतेऽनेन । वृञ् वरणे ( स्वा० उ० से० ) वृणोतेराच्छादने ( ३।३।५४ ) इति घञ् । उपसर्गस्य घञि ( ६।३।१२२ ) इति दीर्घ ॥ (१) ॥*॥ उत्तरे ऊर्ध्वभागे आसज्यते । षञ्ज सङ्गे ( भ्वा० प० अ० ) । घञ् ( ३।३।१९ ) ॥ ( २ ) ॥ * ॥ बृहती वसना वरे [ इति मे० ६४।१३७ ] ॥ बृहत्येव । बृहत्या आच्छादने ( ५।४।६ ) इति कन् ॥ ( ३ ) ॥ * ॥ संवीयते नेन । ल्युट् (३।३।११७) । संव्यानं छदनेंऽशुके [ इति विश्व ८८।४० मदिनी ६४।५१ ] ॥ ( ४ ) ॥ * ॥ उत्तरस्मिन् देहभागे भवम् । गहादित्वात् ( ४।२। १३८) छ ॥ ( ५ ) ॥ * ॥ पञ्च उपरिवस्त्रस्य ।

चोलकूर्पासकौ स्त्रियाः ।

चोल, कूर्पासक ( पु न ), 'स्त्रियोंकी चोली, कुर्ती आदि' के २ नाम हैं।

चोलेति ॥ चोल्यतेऽनेन चुल समुच्छाये ( चु० प० से० ) अच ( ३।३।५६ ) । घ ( ३।३।११८ ) वा । अल्पश्चोल । गौरादि ( ४।१।४१ ) । गानी ॥ ( १ ) ॥ * ॥ कूर्पर स्यात्कफोणौ च जानु यपि च पुंस्ययम् [ इति मे० १३२।१३७ ] । कूर्परेऽस्यते कूर्परोऽस्यतेऽत्र वा । असु क्षेपणे ( दि० प० से० ) । कूर्परे आस्ते वा । आस उपवेशने ( अ० आ० से० ) । घञ् ( ३।३। १९ ) । अच ( ३।१।१३४ ) वा । पृषोदरादि (६।३ १०९ ) । स्वार्थे कन् ( वापि० ५।४।५ ) । कूर्पासस्त्व धचोलक इति हारावली ॥ ( १ ) ॥*॥—'आप्रपदीनकञ्चुकस्य स्त्रीणां कञ्चुलिकाख्यस्य द्वे—इति स्वामी ।

नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥

नीशार (पु) रजाई, दुलाई या शीतसे बचने के लिये ओढ़े जानेवाले वस्त्रमात्र का १ नाम है।

नीति । नितरां शीर्यते हिमानिलावत्र अनेन वा । शॄ हिंसायाम् ( क्र्या० प० से० ) । श वायुवर्णनिवृत्तेषु ( वा० ३।३।२१ ) इति घञ् । उपसर्गस्य घञि ( ६।३। १२२ ) इति दीर्घ ॥ ( १ ) ॥ * ॥ एकं प्रावरणस्य रजाई इत्याख्यस्य ।

१ पुस्तकद्वय —च्छादने— इति पाठ ।

अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।

अर्धोरुकम् (न), चण्डातकम् (न प) 'लहँगा' के २ नाम हैं।

अर्धेति ॥ ऊर्वोरर्धम् । अर्ध नपुंसकम् ( २।२।२ ) इति समास । अर्धोरौ काशते । अ येभ्योऽपि- ( वा० ३।२।१०१ ) इति ड ॥ * ॥ चण्डा कोपना वरस्त्रियम् तति । क्वुन् ( उ० २।३२ ) । अर्धोरुकं वरस्त्रीणां वास श्चण्डातकं स्मृतम् इति पुम्काण्डे वोपालितात् पुंलिङ्गोऽपि ॥ ( १ ) एकं लहँगा इति ख्यातस्य ।

स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥

आप्रपदीनम् ( त्रि ), 'पैरतक लटकनेवाले कपड़' का १ नाम है।

स्यादिति ॥ आप्रपद प्राप्नोति । आप्रपद प्राप्नोति ( ५।२।८ ) ॥ ( १ ) ॥ * ॥ यदाप्रपदं प्राप्नोति तदा प्रपदीनम् ॥ * ॥ एकं पादाग्रपर्यन्तलम्बमानवस्त्रस्य ।

अस्त्री वितानमुल्लोचः

वितानम् (न पु), उल्लोच (पु), 'चँदवा' के २ नाम हैं।

अस्त्रीति ॥ वित यते । घञ् ( ३।३।१९ )। वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो 'म दतुच्छयो [इति मे० ९२।२९ ३०]॥ ( १ ) ॥ * ॥ ऊर्ध्वं लोचति लोचृ भासने ( भ्वा० उ० से० ) । ऊर्ध्वं लोच्यते । लोचृ दर्शने ( भ्वा० आ० से० ) वा । अच ( ३।१।१३४ ) । घञ् ( ३।३।१९ ) वा ॥ कुत्वं तु 'निष्ठायामनिट ( वा० ७।३।५३ ) इति वचनादस्य तु तत्र सेटत्वात् ॥ (२) ॥ * ॥ द्वे वितानस्य चदवा चाननी इति ख्यातस्य ।

दूष्याद्यं वस्त्रवेश्मनि ।

दूष्यम् (न), आद्य ( आद्य शब्दसे पटकुटी (स्त्री) पटवास, पटगृहम् पटकद्मम् (३ न), इत्यादिका संग्रह है ) 'कपड़ेके घर, डेरा, रावटी, तम्बू आदि का १ नाम है।

द्विति ॥ दूष्यते । दुष वैकृत्ये ( दि० प० अ० ) । ण्य तात् अचो यत् ( ३।१।९७ ) । दोषो णौ ( ६।४। ९० ) इत्यू । दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे ( इति मे० ) ॥ ( १ )॥ * ॥ आद्यम् कुटरपटकुटीपट वासादिग्रह । एकं वस्त्रगेहस्य टेण्ट तम्बू सामियाना इति ख्यातस्य ॥

प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥१२०॥

प्रतिसीरा, जवनिका तिरस्करिणी (३ स्त्री) कनात, पर्दा के ३ नाम हैं।

१ —मत्ततुच्छयो इति मेदि या पाठा० ।

प्रतीति । प्रति सिनोति । प्रतिसीयते वा । 'षिञ् बन्धने' ( स्वा० उ० अ० ) । 'शुसिचिमीनां दीर्घश्च' ( उ० २।२६ ) इति रक् ॥ ( १ ) ॥ * ॥ जवस्य-स्याम् । 'जु.' सौत्रो धातुः गतौ वेगे च (३।२।१५७)। ल्युट् ( ३।३।११७ ) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥*॥ 'यमनिका' इति वा पाठः । यमयति । 'यम उपरमे' (भ्वा० प० अ० ) । ल्युट् ( ३।३।११७ ) कन् (ज्ञापि० ५।४।५ ) ॥ ( २ ) ॥ * ॥ तिरस्करोति । ग्रह्यादि-त्वात् (३।१।१३४) णिनिः । निपातनाद्वृद्ध्यभावः । संज्ञा-पूर्वकत्वाद्वा ॥ * ॥ तिरस्क्रियतेऽनया । ल्युट् ( ३।३।-११७ ) । 'तिरस्करणी' ॥ ( ३ ) ॥ * ॥ त्रीणि 'व्यव-धानपट्या.' 'कनात' 'पर्दा' इति वा ख्यातायाः ।

क्वचित् 'पर्यङ्किका परिकरः पर्यङ्कश्चावसक्थिका । अञ्चलं स्वंशुकान्ते स्यान्नीवी सारसनञ्च यः' ।

**परिकर्माङ्गसंस्कारः**

परिकर्म (न), अङ्गसंस्कारः (पु), 'कुङ्कुम आदिसे शरीर के संस्कार करने' के २ नाम हैं ।

पेति ॥ परि मलवर्जनार्था क्रिया परिकर्म स्नानोद्वर्त-नादि ॥ * ॥ 'प्रतिकर्म' इति क्वचित्पाठः ॥ (१) ॥*॥ अङ्गं संस्क्रियतेऽनेन । घञ् ( ३।३।१९ ) ॥ (२) ॥*॥ द्वे 'शरीरशोभाधायककर्मणः' ।

**स्यान्मार्ष्टिर्मार्जना मृजा ।**

मार्ष्टिः, मार्जना, मृजा (३ स्त्री,) 'झाड़ पोंछकर शरीरको साफ करने' के ३ नाम हैं ।

स्यादिति ॥ मार्जनम् । 'मृजू शौचालंकरणयोः' चुरादिः । आचारादित्वात् ( वा० ३।३।९४ ) क्तिन् । 'तितुत्र—' ( ७।२।९ ) इति नेट् । णिलोपः (६।४।५१)। —बाहुलकात्—इत्यन्ये ॥ ( १ ) ॥ * ॥ 'ण्यास-श्रन्थो युच्' ( ३।३।१०७ ) 'मार्जनो लोध्रशाखिनि । मार्जनं शुद्धिकरणे मार्जना मुरजध्वनौ' इति हैमः [ ३।-४२७ ] । ( २ ) ॥ * ॥ भिदाद्यङ् ( ३।३।१०४ ) ॥ ( ३ ) ॥*॥ त्रीणि 'प्रोञ्छनादिनाङ्गनिर्मलीकरणस्य' ।

**उद्वर्तनोत्सादने द्वे समे**

उद्वर्तनम्, उत्सादनम् ( २ न ), 'उबटन, साबुन आदिसे शरीरको मलने' के २ नाम हैं ।

उद्वेति ॥ उद्वर्त्यतेऽनेन 'वृतु वर्तने' ( भ्वा० आ० से० ) । ण्यन्तः । ल्युट् ( ३।३।११७ ) ॥ ( १ ) ॥*॥ उत्साद्यतेऽनेन । 'षद्लृ विशरणादौ' ( तु० प० अ० ) । ण्यन्तः । ल्युट् ( ३।३।११७ ) । 'उत्सादनं समुल्लेखोद्वर्त-नोत्थाहनेषु च [ इति हैम ४।१७०; मेदिनी ९५।७० ]॥ ( २ ) ॥ * ॥ द्वे 'उद्वर्तनद्रव्येणाङ्गनिर्मलीकरणस्य' ।

**आप्लाव आप्लावः ॥ १२१ ॥**

**स्नानम्**

आप्लावः, आप्लवः (२ पु), स्नानम् (न), 'स्नान करने' के ३ नाम हैं ।

आप्लेति ॥ आप्लवनम् । 'प्लुङ् गतौ' ( भ्वा० आ० से० ) । 'विभाषाऽऽङि रुप्लुवोः' ( ३।३।५० ) इति वा घञ् ॥ ( १ ) ॥ * ॥ पक्षे 'ऋदोरप्' ( ३।३।५७ ) ॥ ( २ ) ॥ * ॥ 'ष्णा शौचे' ( अ० प० अ० ) । भावे ल्युट् ( ३।३।११५ ) ॥ (३) ॥ * ॥ त्रीणि 'स्नानस्य' ।

**चर्चा तु चार्चिक्यं स्थासकः**

चर्चा (स्त्री), चार्चिक्यम् (न), स्थासकः ( पु ), 'शरीरमें चन्दन आदि लगाने' के ३ नाम हैं ।

चेति ॥ चर्चनम् । 'चर्च अध्ययने' ( चु० उ० से० )। 'चिन्तिपूजिकथि—' ( ३।३।१०५ ) इत्यङ् । 'चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि' [ इति हैम. २।५८ ] ॥ ( १ ) ॥ * ॥ 'धात्वर्थनिर्देशे ण्वुल्' ( वा० ३।३।१०८ ) । 'चर्चिका' ततः स्वार्थे ष्यञ् (वा० ५।१।१२४ ) ॥ ( २ ) ॥ * ॥ तिष्ठति । 'ष्ठा गतिनि-वृत्तौ' ( भ्वा० प० से० ) । बाहुलकात्सः । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) 'स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे' [ इति मे० १४।१६९ ] ॥ (३) ॥ * ॥ त्रीणि 'चन्दनादिना देहविलेपनस्य' ।

**अथ प्रबोधनम् ।**

**अनुबोधः**

प्रबोधनम् (न), अनुबोधः (पु), 'निकले हुए गन्धको फिरसे लाने' के २ नाम हैं । ('जैसे—'कस्तूरीके गन्धके निकल जानेपर मदिरा छोड़नेसे उसका गन्ध फिर आ जाता है') ।

अथेति ॥ प्रबुद्धिः । 'बुध अवगमने' ( दि० आ० अ० ) । भावे ल्युट् ( ३।३।११५ ) ॥ ( १ ) ॥ * ॥ अनुपूर्वाद्भावे घञ् ॥ ( २ ) ॥ * ॥ द्वे 'गतगन्धस्य प्रयत्नेनोद्बोधनस्य' यथा कस्तूरिकादेर्मद्यादिना ।

**पत्रलेखा पत्राङ्गुलिरिमे समे ॥ १२२ ॥**

पत्रलेखा, पत्राङ्गुलिः (२ स्त्री), 'कस्तूरी, केसर, मेंहदी या चन्दन आदिसे गाल या स्तनादिपर पत्ते, फूल आदिकी चित्रकारी करने' के २ नाम हैं ।

पेति ॥ पत्राकारा लेखा । शाकपार्थिवादिः ( वा० २।१।७८ ) ॥ ( १ ) ॥ * ॥ पत्रार्थोऽङ्गुलिरङ्गुलिव्या-

पार ॥ ( २ ) ॥ * ॥ समे स्त्रियाम् ॥ * ॥ द्वे 'स्तन-कपोलादौ रचितस्य, केसरादिना [१]तिलकविशेषस्य' ।

**तमालपत्रतिलकचित्रकाणि विशेषकम् ।**
**द्वितीयं च तुरीयं च न स्त्रियाम्**

तमालपत्रम्, तिलकम्, चित्रकम्, विशेषकम् (न), 'कंस्तूरी, चन्दन, भस्म आदिसे टीका ( तिलक ) लगाने' के ४ नाम हैं।

तेति ॥ तमालपत्रमिव । तदाकृतित्वात् । 'तमालपत्र तापिच्छे तिलके पत्रकेऽपि च' । [इति विश्व १४८।२८७] ॥*॥ 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति विश्वात् ( १५७।१०२ ) तमालोऽपि ॥ ( १ ) ॥ * ॥ तिलति । 'तिल स्नेहने' (तु० प० से०) क्वुन (उ० २। ३२) । 'तिलकोऽश्वद्रुमभिदो पुण्ड्रके तिलकालके । तिलक इवके [२]क्लोम्नि' [ इति हैम ३।४७-४८ ] ॥ (२) ॥*॥ चित्रयति । 'चित्र चित्रक्रियायाम्' ( चु० उ० से० ) । क्वुन् (उ० २।३२) चित्रं करोति वा । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड । चित्रकं तिलके ना तु व्याघ्रभिच्चक्रचुपाटिपु [ इति मे० ८।८८ ] ॥ (३) ॥*॥ विशिनष्टि । 'शिष्लृ विशेषणे' ( रु० उ० अ० ) । ण्वुल् (३।१।१३३) । 'विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु' [इति मे० १७।२१४] ॥ (४) ॥*॥ द्वितीयं तिलकम् तुरीयं विशेषकं च स्त्रियां न भवतः । किं तु पुनपुंसकयोः ॥*॥ चत्वारि 'ललाटकृतस्य तिलकस्य' ।

अथ कुङ्कुमम् ॥ १२३ ॥

**काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतनम् ।**
**रक्तसंकोचपिशुनं धीरलोहितचन्दनम् ॥ १२४ ॥**

कुङ्कुमम्, काश्मीरजन्म, अग्निशिखम्, वरम्, बाह्लीकम्, पीतनम्, रक्तम्, संकोचम्, पिशुनम्, धीरम्, लोहितचन्दनम् (११ न) 'केसर, कुङ्कुम' के ११ नाम हैं।

अथेति ॥ कुकुम्' इति शब्दोऽस्ति वाचकत्वेनास्य । अर्शआद्यच् (५।२।१२७) । यद्वा,–कुकयते । कुक आदाने' (म्वा० आ० से०) । बाहुलकादुमच् । 'आच्छी–' (७।१। ८०) इत्यत्र नुम्' इति योगविभागान्नुम् ॥ (१) ॥*॥ कशति, कश्यते वा । कश शब्दे' ( ) । 'कशमुद् च' (उ० ४।३२) इतीरम् ।— गम्भीरादयश्च' इति मुकुट एतत्सूत्रादर्शनमूलकं । कश्मीरे जन्मास्य । काश्मीरं कुङ्कुमेऽपि स्यात्टङ्कपुष्करमूलयो ' [इति मे० १३२।१३३] ॥(२) ॥*॥ अग्निरिव शिखा केसरोऽस्य । 'अथाग्निशिखमुद्दिष्ट कुसुम्भे कुङ्कुमेऽपि च । लाङ्गलिक्यामथौपधौ च विशल्याया च योषिति' [ इति मे० १३२।१३३ ] ॥ (३) ॥*॥ व्रियते । 'वृञ् वरणे' (स्वा० उ० से०) । ग्रहवृद्द–' (३। ३।५८) इत्यप् । वरो वृतौ । विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते । वरं तु घुसृणे किंचिदिष्टे वरी शतावरी ॥' [इति हैम २।४६२-४६३ ] । 'काश्मीरज वह्निशिख बाह्लीकं पीतनं वरम्' (इति वाचस्पति ) ॥ (४) ॥*॥ वह्लते । 'वह्ल प्राधान्ये' (म्वा० आ० से०) । बाहुलकाठीकन् । बह्लीकदेशे भवम् । 'कच्छादिभ्यश्च' (४।२।१३३) इत्यण् । 'बाह्लीकं बाह्लिकं धीरं हिङ्गुनीर्णाश्मदेशयो '[इति त्रिकाण्डशेष ३।३।४३ ] ॥ * ॥ 'काश्मीर चारु बाह्लीकं संकोचं पिशुनं वरम्' इति [२]हलायुधाच्चबार्थंपि ॥ ( ५ ) ॥*॥ पीतं करोति । 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्तात्ल्यु (३।१।१३३) । यद्वा,–पीयते । 'पीङ् पाने' (दि० आ० अ०) । बाहुलकात्तनम्, गुणाभावश्च । पीतनं पीतदारुणि । कुंकुमे हरिताले च पुमानाम्रातके मतः' [इति मे० ८९।९२ ९३] ॥(६) ॥*॥ रज्यते स्म । 'गत्यर्था–' (३।४।७२)इति क्त ॥ 'रक्तं नील्यादिरञ्जिते । कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे॥'[इति हैम २।१९३]॥(७) ॥*॥ संकोचति, संकुच्यते वा । यद्वा,–संकोचयति, संकोच्यते, वा 'कुच सपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु' (म्वा० प०से०) । अच् (३।१।१३४) । घञ् (३।३।१९) वा ।— संकुचति—इति मुकुटो न सम्यक् ॥ कुच संकोचने' इत्यस्य कुटादित्वेनापि गुणाभावप्रसङ्गात् । संकोचो मीनभेदे च वन्ध क्लीबं तु कुङ्कुमे' [इति मे० २८।१९] । (८) ॥*॥ पिंशति । 'पिश अवयवे' (तु० प० से०) । 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्युनन् । 'पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' [इति मे० ८९।९१ ९२] ॥ (९) ॥*॥ दधाति । धीयते वा । 'डुधाञ् धारणादौ (जु० उ० से०) । 'सुसूधाञ्गृधिभ्य क्रन्' (उ० २।२४)। घुमास्था–' ( ६।४।६६ ) इतीत्वम् । 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे । स्त्रियां प्रवणतुल्यायाम्' [इति मे० १२०।५१-५२] ॥ (१०) ॥*॥ लोहितं च ॥*॥ लोहितमपि । 'लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने । पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति [ इति मे०

१ '—केसरादिना रचितस्य' इत्येव पाठ्यमासीत् ।

२ '—क्लोम्नि' इति पाठो हैमे 'क' पुस्तके ।

१. त्रिकाण्डशेषे '—नाश्वदेशयो ' इति पाठात् हैमस्य (३।६९) अनुरोधाच्चात्रापि मया प्राक्तन 'नाश्म–' इति पाठ परिवर्तित ।

२ पाठोऽयं हलायुधे मृग्य. ।

६५।१४८-१४९]॥(११)॥*॥ एकादश 'कुङ्कुमस्य' 'केसर' इति ख्यातस्य।

**राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः।**

लाक्षा, राक्षा (२ स्त्री), जतु (न), यावः, अलक्तः, द्रुमामयः (३ पु), 'लाही, लाक्षा, लाख, महावर'के ६ नाम हैं।

रेति॥ रक्ष्यते। अनया वा। 'रक्ष पालने' (भ्वा० प० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः। प्रज्ञाद्यण् (५।४।३८)। अजादित्वात् (४।१।४) टाप्। अत एव 'लाक्षायां रक्षणे रक्षा' इति रुद्रः॥ (१)॥*॥ लक्ष्यते। अनया वा। 'लक्ष दर्शने' (चु० प० सें०)। प्राग्वत्॥ (२)॥*॥ जायते। 'फलिपाटि–' (उ० १।१८) इत्यु, तोऽन्तादेश। यत्तु—बाहुलकात्तुगात्वाभावश्च—इति मुकुट' स उक्तसूत्रास्मरणमूलक॥ (३)॥*॥ यौति। यूयते वा। अच् (३।१।१३४)। 'ऋदोरप्' (३।३।५७) वा यव एव। प्रज्ञाद्यण् (५।४।३८)। 'यावोऽलक्ते पाकभेदे' [इति हैम २।५४७७]॥(४) न लज्यते स्म। 'ओलस्जी व्रीडे' (तु० आ० से०)। बाहुलकात्तन्। यद्वा— न लक्यते स्म। अभक्ष्यत्वात्। क्त (३।२।१०२) यद्वा,– न रक्तोऽस्मात्। 'कपिलकादित्वात्' (वा० ८।२।१८) लत्वम्॥ (५)॥*॥ द्रुमाणामामयः॥ (६)॥*॥ षट् 'लाक्षा, महावर' इति ख्यातस्य।

**लवङ्गं देवकुसुमं श्रीसंज्ञम्**

लवङ्गम्, देवकुसुमम्, श्रीसंज्ञम् (३ न), 'लौंग' के ३ नाम हैं।

लेति॥ लुनाति, लूयते, वा। 'सरत्यादिभ्यश्च' (उ० १।१२०) इत्यङ्गच्॥ (१)॥*॥ देवाना कुसुमम्। कुसुमेषु देव इव। राजदन्तादि' (२।२।३१)। देवयोग्य कुसुमं वा। शाकपार्थिवादि (वा० २।१।६९)॥ (२)॥*॥ श्रियः संज्ञा संज्ञा यस्य॥ (३)॥*॥ त्रीणि 'लवङ्गस्य'।

**अथ जायकम्॥ १२५॥**

**कालीयकं च कालानुसार्यं च**

जायकम्, कालीयकम्, कालानुसार्यम् (३ न), 'पीला चन्दन, जायकनामक गन्धद्रव्य' के ३ नाम हैं।

अथेनि॥ जयति गन्धान्तरम्। 'जि अभिभवे' (भ्वा० प० से०) ण्वुल् (३।१।१३३)॥ (१)॥*॥ कालस्य वर्णस्येदम्। 'वृद्धाच्छ.' (४।२।११४)। स्वार्थे कन् (ज्ञापि० ५।४।५)॥*॥ क्वचित् 'कालेयकम्' इति पाठ। कलेरिदम् 'सर्वत्राग्निकलिभ्याम्' (वा० ४।२।२) इति इति ढक्। 'कालीयकं च कालेयं वर्णकं कान्तिदायकम्' इति व्याडिः॥ (२)॥*॥ अनुस्रियते। 'सृ गतौ' (भ्वा० प० अ०)। ण्यत् (३।१।१२४)। कालेन वस्तुनाऽनुसार्यम्। 'कालानुसार्यं शैलेये कालीये शिशपाद्रुमे' [इति विश्वः १२४।१२२, मे० १२२।१३२]॥ (३)॥*॥ त्रीणि 'सुगन्धद्रव्यभेदस्य'।

**अथ समार्थकम्।**

**वंशकागुरुराजार्हलोहं कृमिजजोङ्गकम्॥ १२६॥**

वंशकम्, अगुरु, राजार्हम्, लोहम्, क्रि(कृ) मिजम्, जोङ्गकम् (६ न), मा०दी० मतसे 'अगर'के ६ नाम हैं।

अथेति॥ वश इव। 'इवे प्रति–' (५।३।९६) इति कन्॥*॥ क्वचित् 'वशिक' इति पाठः। वशोऽस्त्यत्र। ठन् (५।२।११५)। 'राजार्हं वशिक नतम्। वनद्रुमः परमदो वंशक लोहनामकम्' इति वाचस्पतिः॥ (१)॥*॥ न गुरु, यस्माद्वा। 'कुस्तुम्बुरुकधान्याकमगुरु वा पुंसि लघुनाम च' (?) इति बोपालित। 'अगुरुस्त्वगरौ लघौ। शिशिपायाम्' [इति हैम. ३।५५३-५५४]। 'अगुर्वगरु राजार्हम्' [इति हैमः म० ३।३०४]॥ (२)॥*॥ राजानमर्हति। 'अर्ह प्रशंसायाम्' (३।२।१३३) इत्यच्। 'राजार्हं जोङ्गके क्लीब राजयोग्येऽभिधेयवत्' [इति मे० ०१७६। २३]॥ (३)॥*॥ लुह्यते। 'लुह गार्द्ध्ये' ( )। घञ् (४।३।१९)। रोहति। अच् (३।१।१३४)। रलयोरैक्यम्। वा।—'लुहो ह.'—इति मुकुटस्त्वपाणिनीयः। 'लोहोऽस्त्री शस्त्रके लोह[२] जोङ्गके सर्वतैजसे' [इति मे० १७५।८]॥ (४)॥*॥ कृमिभिर्जन्यते। 'अन्येष्वपि–' (३।२।१०१) इति ड॥ (५)॥*॥ जुङ्गति। जुङ्ग घते, वा 'जुगि वर्जने' (भ्वा० प० से०) ण्वुन् (उ० २।३२)। पृषोदरादि. (६।३।१०९)। बाहुलकाद्गुणो वा॥ (६)॥*॥ 'अगुरु प्रवरं लोहं क्रिमिजश्चमनार्यजम्' इति [३]शाश्वतः॥*॥ षट् 'अगुरुण.'।

**कालागुर्वगुरु**

कालागुरु, अगुरु (२ न), भा० दी० मतसे 'काला अगर' के २ नाम हैं। ('महे० मतसे 'वंशिकम्, ' " ·····, ७ नाम 'अगर' के हैं')।

केति॥ काल च तदगुरु च॥ (१)॥*॥—'कालागुर्वप्यगुरूच्यते'—इति सुभूति.। द्वे 'कालागुरुण.'।

**स्यात्तन्मङ्गल्या मल्लिगन्धि यत्।**

मङ्गल्या (स्त्री), 'बेलाके फूलके समान सुगन्ध देनेवाले अगर' का १ नाम है।

१. विश्वे '—कालीये शैलेये—' इति पाठ।
२. '—लोहे—' इति मेदिन्या पाठ।
३. 'शाश्वते' नोपलभ्यत इदं वचनम्।

तिलेति ॥ तिलस्येव पर्णान्यस्या । 'पाककर्ण-' (४।१।६४) इति ङीप । यद्वा -तिलपर्णी नदी आकरोऽस्याः ॥ (१) ॥*॥ पत्रमेवाङ्गमस्य । पत्त्रैरङ्गति । 'अगि गतौ' (भ्वा० प० से०) । अच (३।१।१३४) । 'पत्राङ्ग न द्वयोर्भूर्जे पद्मके रक्तचन्दने' [इति मे० २४।२९]॥(२) ॥*॥ रञ्जयति । 'रञ्ज रागे' (भ्वा० उ० अ०) ण्यन्त । युच (उ० २।७८) । ल्युट (३।३।११३) वा । 'रञ्जनो रागजनने रञ्जनं रक्तचन्दने' [इति मे० ९१।११३ ] ॥ (३) ॥*॥ रक्तं च तच्चन्दनं च ॥ (४) ॥*॥ निर्गन्धत्वात् कुत्सितं चन्दनम् । कौ च दनम् । इव वा । कुत्सितान्यन्यचन्दनान्यस्मात्वा । 'कुचन्दनं च पत्त्राङ्गे द्रुभेदे रक्तचन्दने' [ इति विश्व ९७।१५५, मेदिनी ९६ ७६ ] ॥ (५) ॥*॥ पञ्च 'रक्तचन्दनस्य' ।

**अथ जातीकोशजातीफले समे ॥१३२॥**

जातीकोशम्, जातीफलम्, (२न)'जायफल'के २ नाम हैं ।

अथेति ॥ जात्या कोश ॥*॥ जातिरपि । 'जातिर्जातीफलेऽपि च' इति रभस ॥८॥ 'कोषोऽप्रकृते पेश्यां पात्रे जातिकोषे' इति रभस ॥ (१) ॥*॥ जात्या फलम् ॥*॥ 'फलम्' अपि । 'फलं लाभे जातिकोषे बाणाग्रे फलकेऽपि च' इति रुद्र ॥ (२) ॥*॥ द्वे जातीफलस्य' 'जाईफल' इति ख्यातस्य ।

**कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दम ।**

यक्षकर्दम (पु), 'कपूर, अगर, कस्तूरी और कक्कोल, इन चारों को बराबर बराबर देकर बनाये हुए लेप-विशेष' का १ नाम है ।

केति ॥ कर्पूरादिभि समभागै यक्षप्रिय कर्दम (१) ॥*॥ 'कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च । एकीकृतमिद सर्वं यक्षकर्दम इष्यते' इति व्याडि । 'कुङ्कुमागरुकस्तूरी कर्पूर चन्दन तथा । महासुग धमित्युक्त नामतो यक्षकर्दम ' इति धन्वन्तरि ॥*॥ एकम् लेपविशेषस्य' ।

**गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥**

गात्रानुलेपनी, वर्ति (२ स्त्री), वर्णकम्, विलेपनम्(२न), 'लेप करनेके लिये पीसे हुए गन्धद्रव्य-विशेष' के ४नाम हैं ।

गेति ॥ गात्रमनुलिप्यते यया । 'करणा-'(३।३।११७) इति ल्युट् ॥ (१) ॥*॥ वर्त्यते । 'वृतु वर्तने' (भ्वा० आ० से० ) । ण्यत । 'अच इ' (उ० ४।१३९) वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयो । गात्रानुलेपनी दीपदशा दीपेषु योषिति' [इति मे० ५८।५५ ५६] ॥ (२) ॥*॥ वर्णं करोति । ण्वुल (३।१।१३३) ॥ (३) ॥*॥ विलिप्यतेऽनेन । लिप उपदेहे' (तु० उ० अ०) । ल्युट (३।३।११७) (४)॥*॥ चत्वारि 'गात्रानुलेपयोग्यस्य पिष्टधूपसुगन्धिद्रव्यस्य' । द्वौ द्वौ मिथ्रार्थौ—इत्येके । गात्रानुलेपनी वर्तिर्विगन्धस्य विलेपनम् । वर्णकं चाथ विच्छित्ति स्त्रीक्षपा योऽङ्गरागके' इति रभसात् आद्य द्वयमुक्तार्थमेव । वर्णकादिद्वय घृष्टचन्दनादिलेपमात्रस्य ।

**चूर्णानि वासयोगा स्यु**

चूर्णम् (न), वासयोग (पु), 'कपड़े आदिको सुवासित करनेके योग्य चूर्ण किये हुए गन्धद्रव्य-विशेष'के २ नाम हैं ।

चेति ॥ चूर्ण्यते । 'चूर्ण प्रेरणे' ( चु० प० से० ) । घञ ( ३।३।१९ ) । 'चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु' [इति मे० ४५।१२] ॥(१) ॥*॥ वासे सुगन्धिकरणे योगा उपाया ॥ ( २ ) ॥*॥ द्वे 'पटवासादिक्षोदस्य' ।

**भावितं वासितं त्रिषु ।**

भावितम्, वासितम् (२ त्रि),'सुवासित कपड़ा आदि' के २ नाम हैं । ('क्षी० स्वा० मतसे गन्धद्रव्य अर्थात् इतर आदिमें सुगन्धित किये हुए कपड़े आदिको 'भावित' और केतकी, केवड़ा या गुलाब आदि से सुगन्धित किये हुए कपड़े आदिको 'वासित' कहते हैं') ।

भेति ॥ भाव्यते स्म । 'भुवोऽवकल्कने' ( चु० उ० से० ) इति ण्यन्तात् क्त (३।२।१०२) । 'भावित वासिते प्राप्ते' इति हैम ॥ (१) ॥*॥ वास्यते स्म । 'वस स्नेहनादौ (चु० उ० से०) । क्त (३।२।१०२) । 'वासिता करिणीनार्यो वासित भाविते रुते' [इति मे० ६५।१५३] ॥ (२) ॥*॥ द्वे 'द्रव्यान्तरभावितस्य' ।

**संस्कारो गन्धमाल्याद्यैर्य स्यात्तदधिवासनम् ॥१३४॥**

अधिवासनम् (न),'गुलाबजल या सुगन्धित फूल आदि से पान, तिल आदिको सुवासित करने' का १ नाम है ।

सस्केति ॥ माङ्गल्यधूपादिभिर्वस्त्रादीना ताम्बूलादीना च य सस्कार तत् । अधिकं वास्यते । 'वास उपसेवायाम्' चुरादि । ल्युट् (३।३।११३) ॥ (१)॥*॥ एकम् 'गन्धपुष्पोपचारस्य' ।

**माल्य मालास्रजौ मूर्ध्नि**

माल्यम् (न), माला, स्रज् (२ स्त्री), 'शिरसे धारण की हुई माला' के ३ नाम हैं । ('यहां 'मूर्ध्नि' शब्दके अविवक्षित होनेसे 'मालामात्र' के भी ये ३ नाम हैं') ।

मेति ॥ मूर्ध्नि शिरसि । इत्मतन्त्रम् । अन्यत्रापि माला भवत्येव । मल्यते । मल धारणे'(भ्वा० आ० से०) ण्यत् (३।१।१२४) । मालैव वा । चतुर्वर्णादित्वात् (वा० ५।१।१२४)। 'माल्य कुसुमतत्स्रजो [इति मे० ११६।४५]

॥ (१) ॥*॥ घञ् (३।३।१९)। मा लाति वा। कः (३।२।३)।'माला तु पङ्क्तौ पुष्पादिदामनि। मालं तु कपटे वने। मालो जने स्यात्।' [इति हैमः २।५१७-५१८]॥(२) ॥*॥ सृज्यते। सृजति सुखं वा। सृज विसर्गे (तु० प० अ०)। 'ऋत्विग्-' (३।२।५९) इति क्विन्॥(३)॥*॥ त्रीणि 'मूर्ध्नि धृतायाः कुसुमावलेः'।

केशमध्ये तु गर्भकः।

गर्भकः (पु), 'केशके बीचमें लगायी हुई माला' का १ नाम है।

केशेति॥ गर्भ इव। 'इवे-' (५।३।९६) इति कन्। (१) ॥*॥ एकम् 'केशमध्यगर्भस्य'।

प्रभ्रष्टकं शिखालम्ब

प्रभ्रष्टकम् (न), 'शिखा या चोटीसे लटकती हुई माला' का १ नाम है।

प्रेति॥ शिखातो लम्बमानम्। प्रभ्रंशितु प्रवृत्तम्। 'भ्रंशु अध पतने' (दि० प० से०)। 'आदिकर्मणि क्तः कर्तरि च' (३।४।७१)। स्वार्थे कन् (ज्ञापि ५।४।५)॥ (१) ॥*॥ एकम् 'शिखाया लम्बमानपुष्पस्य'।

पुरो न्यस्तं ललामकम्॥१३५॥

ललामकम् (न), 'ललाट पर धारण की हुई माला, मुण्डमाला' का १ नाम है।

पुरेति॥ तदेव माल्यं पुरोभागे न्यस्तं ललाटपर्यन्तम्। ललाममिव। इवार्थे कन् (५।३।९६)॥(१) ॥*॥ एकम् 'ललाटधृतपुष्पस्य'।

प्रालम्बमृजुलम्बि स्यात्कण्ठात्

प्रालम्बम् (न), 'गलेमें सीधे लटकती हुई माला' का १ नाम है।

प्रेति॥ माल्यमेव कण्ठादूर्ध्वं लम्बमानम्। प्रालम्बते। 'लबि अवस्रंसने' (भ्वा० आ० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ ऋजु लम्बितु शीलमस्य। 'सुपि-' (३।२।७८) इति णिनिः॥*॥ एकम् 'कण्ठे ऋजुलम्बमानपुष्पस्य'।

वैकक्षकं तु तत्।

यत्तिर्यक् क्षिप्तमुरसि

वैकक्षकम् (न), 'जनेऊकी तरह तिर्छी पहनी हुई माला' का १ नाम है।

वैकेति॥ विशिष्टः कक्षोऽस्मादिति कक्षमुरः। तत्र भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ यदुरसि उपवीतवत्तिर्यक् क्षिप्तम्। तत्॥*॥ एकम् 'यज्ञोपवीतवत्तिर्यग्धृतपुष्पस्य'।



शिखास्वापीडशेखरौ॥१३६॥

आपीडः, शेखरः (२ पु), 'शिखामें रखी हुई माला' के २ नाम हैं।

शीति॥ शिखाक्षिप्तं माल्यम्। आपीडयति। 'पीड अवगाहने' (चु० प० से०)। अच् (३।१।१३४)॥ (१) ॥*॥ शिखति। 'शिखि गतौ' (भ्वा० प० से०) बाहुलकादरः। आगमशास्त्रस्यानित्यत्वान्न नुम्॥ (२) ॥*॥ द्वे 'शिखास्थमाल्यस्य'।

रचना स्यात्परिस्पन्दः

रचना (स्त्री), परिस्पन्दः (पु), 'माला आदि को बनाने (गूंथने)' के २ नाम हैं।

रेति॥ 'रच प्रतियत्ने' अदन्तश्चुरादिः। 'ण्यासश्रन्थो युच्' (३।३।१०७)॥ (१) ॥*॥ परिस्पन्दनम्। 'स्पदि किंचिच्चलने' (भ्वा० आ० से०)। भावे घञ् (३।३।१८) अधिकरणे (३।३।१९) च॥*॥ 'परिस्यन्दः' इति वा पाठः। 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०)॥ (२)॥*॥ द्वे 'शिल्पादिरचनायाः'।

आभोगः परिपूर्णता।

आभोगः (पु), परिपूर्णता (स्त्री), 'सेवा-शुश्रूषा आदि सब प्रकारके उपचारोंसे परिपूर्ण होने' के २ नाम हैं।

आभोग इति॥ आभोजनम्। प्राग्वत् घञ् (३।३।१८)। 'आभोगो[१] वरुणच्छत्रे पूर्णतायत्नयोरपि' [इति विश्व-मेदिन्यौ २६।३०; २३।२९]॥(१) ॥*॥ परितः पूर्यते स्म। 'पूरी आप्यायने' (दि० आ० से०)।'गत्यर्था-' (३।४।७२) इति क्तः। 'रदाभ्याम्-' (८।२।४२) इति निष्ठानत्वम्। परिपूर्णस्य भावः। तल् (५।१।११९)॥ (२) ॥*॥ द्वे 'सर्वोपचारपरिपूर्णतायाः'।

उपधानं तूपबर्हः

उपधानम् (न), उपबर्हः (पु), 'तकिया' के २ नाम हैं।

उपेति॥ उपधीयते शिरोऽत्र। 'डुधाञ्' (जु० उ० अ०)। 'करणा-' (३।३।११७) इति ल्युट्॥(१) ॥*॥ उपबृह्यतेऽत्र, अनेन वा। 'बृह वृद्धौ' (भ्वा० प० से०)। 'बृहू उद्यमने' (तु० प० से०) वा। घञ् (३।३।१९)॥ (२) ॥*॥ द्वे 'शिरोनिधानस्य' 'तकिया' इत्याख्यस्य।

शय्यायां शयनीयवत्॥१३७॥

शयनम्

शय्या (स्त्री), शयनीयम्, शयनम् (२ न), 'शय्या, बिछौना' के ३ नाम है। ('भा० दी० मतसे 'तोसक आदि' के ये ३ नाम हैं')।

१. विश्वे '—वारणच्छत्रे—' इति पाठः।

शेति ॥ शय्यतेऽत्र । 'शीङ् स्वप्ने' (अ० आ० से०) । 'सज्ञायां समज–' (३।३।९९) इति क्यप् । 'अयङ् यि–' (७।४।२२) इत्ययङ् । 'शय्या स्याच्छनीयेऽपि गुम्फनेऽपि च योषिति' [इति मे० ११७।५८] ॥ (१) ॥*॥ 'कृत्यल्युट –' (३।३।११३) इत्यधिकरणेऽनीयर् ॥ (२) ॥*॥ ल्युट् ( ३।३।११७ ) अपि । 'शयनं सुरते निद्राशय्ययोश्च नपुसकम्' [ इति मे० ९३।३७ ] ॥ ( ३ ) ॥*॥ त्रीणि 'तूलिकादे' । मुकुटस्तु—शय्यामात्रस्य—इति व्याख्यत् ।

मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।

मञ्च', पर्यङ्क, पल्यङ्क ( ३ पु ), खट्वा ( स्त्री ), 'पलंग, खटिआ आदि' के ४ नाम हैं । ('किसी २ के मतमें 'मञ्च' यह १ नाम 'मचान या ऊँचे सिंहासन आदि' का और 'पर्यङ्क, पल्यङ्क' के २ नाम 'पलँग, मसहेरी आदि' के तथा 'खट्वा' यह एक नाम 'खटिया' का है') ।

मेति ॥ मञ्चते । 'मचि धरणोच्छ्रायपूजनेषु' ( भ्वा० आ० से० ) । अच् (३।१।१३४) ॥ (१) ॥*॥ परितोऽङ्कयते । 'अकि लक्षणे' (भ्वा० आ० से०) । घञ् ( ३। ३।१९) । 'परेश्च घाङ्कयोः' (८।२।२२) इति वा लत्वम् । 'पल्यङ्को मञ्चपर्यङ्कवृषीपर्यंरितधासु च' [ इति मे० १०। ११४] ॥ (२) ॥*॥ (३) ॥*॥ खट्यते निद्रालुभिः । 'खट काङ्क्षायाम्' (भ्वा० प० से०) । 'अशूप्रुषि–' ( उ० १।१५१) इति क्वुन् ॥ (४) ॥*॥ चत्वारि 'पर्यङ्कस्य' 'पलङ्ग' 'खाट' 'चारपाई' इति ख्यातस्य ।

गेन्दुकः कन्दुकः

गेन्दुक, कन्दुक (२ पु), 'गेंद' के २ नाम हैं ।

गयिति ॥ गाते । 'गाङ् गतौ' ( भ्वा० आ० अ० ) । विच् ( ३।२।७५ )। गा गच्छन्निन्दुरिव । 'इवे–' ( ५।३। ९६) इति कन् । गे गगने इन्दुरिव, इति वा ॥(१)॥*॥ कन्द्यते । 'कदि आह्वाने रोदने च' ( भ्वा० प० से० ) । बाहुलकादु । कं सुखं ददाति, दयते, द्यति, यच्छति, वा । मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः । स्वार्थे कन् (ज्ञापि० ५।४।५) । कं शिरो दुनोति, दवति, वा । 'टुदु उपतापे' (भ्वा० प० अ०) । द्रु गतौ' (भ्वा० प० अ०) वा । प्राग्वत् ॥ (२) ॥*॥ 'वीटा' इत्यपि भारते ॥*॥ द्वे 'कन्दुकस्य' 'गेंद' इति ख्यातस्य ।—'गालमसूरिया' इति ख्यातस्य—इत्यन्ये ।

दीपः प्रदीपः

दीप', प्रदीप (२ पु) 'चिराग' के २ नाम हैं ।

दीति ॥ दीप्यते, अनेन वा । दीपयति वा । 'दीपी दीप्तौ' (दि० आ० से०) । इगुपधत्वात् (३।१।१३५)कः । घञ् (३।३।१९) वा अच् (३।१।१३४) वा ॥ (१)॥*॥ अन्योपसर्गनिवृत्त्यर्थं ■ ॥ (२) ॥*॥ 'दीपस्तु स्नेहाशः कज्जलध्वजः । दशेन्धनो गृहमणिर्दोषातिलक इत्यपि । शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ 'लोचक'[इति त्रिकाण्डशेष २।६।४२-४३] ॥*॥ द्वे 'दीपस्य' ।

पीठमासनम् ॥ १३८ ॥

पीठम्, आसनम् (२ न), 'आसन' के २ नाम हैं ।

पीति ॥ पठन्त्यत्र । 'पिठ हिंसासंक्लेशनयोः' (भ्वा० प० से०) । हलश्च' (३।३।१२१) इति घञ् । बाहुलका द्दीर्घः । पीयतेऽत्र वा । 'पीङ् पाने' ( दि० आ० अ० ) । बाहुलकाट्ठक् । 'विष्टर' पीठमस्त्रियाम्'[ इति त्रिकाण्डशेष २।६।४१] ॥ (१) ॥*॥ आस्यतेऽत्र । 'आस उपवेशने' (अ० आ० से०) । 'करणा–' (३।३।११७) इति ल्युट् ॥ (२) ॥*॥ द्वे 'आसनस्य' ।

समुद्गकः संपुटकः

समुद्गक, संपुटक (२ पु), 'डब्बा, सम्पुट' के २ नाम हैं ।

सेति ॥ समुद् गच्छति । 'अन्येष्वपि–' ( वा० ३।२। ४८) इति ड । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ ( १ ) ॥*॥ संपुटयते । 'पुट संश्लेषणे' (तु० प० से०) । क्वुन् (उ० २।३२) ॥ (२) द्वे संपुटस्य' ।

प्रतिग्राह पतद्ग्रहः ।

प्रतिग्राह, पतद्ग्रह (२ पु), 'उगलदान, पीकदान' के २ नाम हैं ।

प्रेति ॥ प्रति गृह्णाति । 'विभाषा ग्रहः' (३।१।१४३) इति ण ॥*॥ पक्षेऽच्(३।१।१३४) । 'प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्गृहे च ग्रहान्तरे' [इति मे० १७७।३१] ॥ (१) ॥*॥ पततो ग्रह ॥ (२) ॥*॥ द्वे 'पीकदानी' इति ख्यातायाः ।

प्रसाधनी कङ्कतिका

प्रसाधनी, कङ्कतिका (२ स्त्री), 'कङ्घी' के २ नाम हैं ।

प्रसेति ॥ प्रसाध्यतेऽनया । 'साध संसिद्धौ'(भ्वा० प० अ०) । ल्युट् (३।३।११७) 'प्रसाधनी तु 'कङ्कत्या सिद्धौ,

१ तल्लक्षणम्— '—स्तनाङ्गरागारुणिताच्च कन्दुकात्—' इति कुमारसम्भव (५।११) ॥

१ अथ लोचक' इत्यस्य कज्जलवाचकत्वान्न प्रकृतोपयुक्त ।

२ तदुक्तम्—'ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टर" इति, "वामावृत्तिस्तु विष्टर " इति च ।

३ 'प्रसाधनी कङ्कतिका—'इति विश्वे पाठ ।

वेशे प्रसाधनम्' [ इति विश्व-मेदिन्यौ १०१।१९७; ९७।९५] ॥ (१) ॥*॥ कङ्क्यते । 'ककि गतौ' ( भ्वा० आ० से०) । बाहुलकादतच् । गौरादिः ( ४।१।४१ ) । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'केऽणः'(७।४।१३)इति ह्रस्व' । यद्वा,–कस्य शिरसोऽङ्कः । शकन्ध्वादि. (वा० ६।१।९४)। कङ्कैष्वतति । क्वुन् ( उ० २।३२ ) ।—कङ्कति । 'ककि लौल्ये'—इति मुकुटः । तन्न । तस्यानिदित्वात् आत्मनेपदित्वाच्च । 'कङ्कती तु प्रसाधनी' इति स्त्रीकाण्डेऽमरमाला । 'कङ्कतं तु प्रसाधनम्' इति क्लीबकाण्डे च ॥( २ ) ॥*॥ द्वे 'केशमार्जन्याः' 'कंघी' इति ख्यातायाः ।

पिष्टातः पटवासकः ॥१३९॥

पिष्टातः, पटवासकः (२ पु), 'बुक्का' के २ नाम हैं।

पीति ॥ पिष्टमतति । 'कर्मण्यण्' (३।२।१) ॥(१) ॥*॥ पटो वास्यतेऽनेन । 'वास उपसेवायाम्' चुरादि । घ ( ३।३।११८ ) स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । पट वासयति । 'कर्मण्यण्' (३।२।१) वा । स्वार्थे कन् (ज्ञापि० ५।४।५ ) ॥ ( २ ) ॥*॥ द्वे 'पिष्टातस्य' 'बुक्का' इति ख्यातस्य ।

दर्पणे मुकुरादर्शौ

दर्पणः, मुकुरः, आदर्शः (३ पु), 'शीशा–आइना' के ३ नाम हैं।

देति ॥ दर्पयति । 'दृप हर्षमोचनयो' (दि० प० अ०) ण्यन्त' । नन्द्यादि. ( ३।१।१३४ ) । 'दृप संदीपने' चुरादिर्वा । 'आदर्शो दर्पणः प्रोक्त' इत्यमरमाला ॥ ( १ ) ॥*॥ मङ्क्यते । 'मकि मण्डने' (भ्वा० आ० से० ) 'मकुरदर्दुरौ' (उ० १।४०) इति साधु । ॥*॥ मुञ्चति ज्योतिः' । 'मुच्लृ मोचने' । अत्र पक्षे मुकुरो ह्युकारः । 'मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे । कुलालदण्डे' [ इति मे० १३७। २०३ ] ॥*॥—'मंकुरः'—इत्यन्ये ॥ ( २ ) ॥*॥— आदृश्यते रूपमत्र । 'दृशिर् प्रेक्षणे' (भ्वा० प० अ० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि' [ इति मे० १६३।१६ ] ॥*॥ त्रीणि 'दर्पणस्य' ।

व्यजनं तालवृन्तकम् ।

व्यजनम्, तालवृन्तकम् (२ न), 'पंखा' के २ नाम हैं।

व्येति ॥ व्यजन्त्यनेन । 'अज गतिक्षेपणयो.' ( भ्वा० प० से० ) । करणे ल्युट् (३।३।११७) । 'वा यौ' (२।४।५७ ) इति पक्षे वी न । 'बहुल तणि' ( वा० २।४।५४ ) इति वा वीभावो न ॥ (१) ॥*॥ तालस्येव वृन्तमस्य । ताले करतले वृन्तमिव बन्धनमस्य । 'वृन्तं प्रसवबन्धे स्याद्घटधाराकुचाग्रयोः' [इति विश्वः ५९।३१] ॥(२)॥*॥ द्वे 'व्यजनस्य' ।

इति मनुष्यवर्गविवरणम् ॥

## ७. अथ ब्रह्मवर्गः ।

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्वायः संतानः

सन्ततिः (स्त्री), गोत्रम्, जननम्, कुलम् (३ न), अभिजनः अन्वयः,, वंशः, अन्ववायः, सन्तानः (५ पु), 'वंश, कुल, खान्दान' के ९ नाम हैं।

समिति ॥ संतन्यते । 'तनु विस्तारे' (तु० उ० से०)। क्तिन् ( ३।३।९४ ) 'सततिः स्यात्स्त्रियां गोत्रे पारम्पर्ये च पुत्रपौत्राणाम्' [ इति मे० ६६।१६८ ] ॥ ( १ ) ॥*॥ गूयते । 'गुङ् शब्दे' ( भ्वा० प० से० ) । ष्ट्रन् (उ० ४। १४५ ) । 'गोत्रा भूगवयोर्गोत्र. शैले गोत्रं कुलाख्ययो. । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' [इति मे० १२४।२६-२७] ॥ ( २ ) ॥*॥ जन्यते । 'जनी प्रादुर्भावे' ( दि० आ० से० ) । 'जन जनने' वा ( जु० प० से० )। ण्यन्तः । 'कर्मणि ल्युट्' (३।३।११३) । 'जननं वंशजन्मनो.' [इति मे० ८७।६६] ॥ (३) ॥ *॥ कूयते । 'कुङ् शब्दे' (भ्वा० आ० से० ) । बाहुलकाल्लक् । कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) 'इगुपध–'(३।१।१३५) इति को वा । कुं भूमिं लाति । कः (३।२।३) वा । कौ लीयते । 'लीङ् श्लेषणे' (दि० आ० अ०) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०२) इति ड. । 'कुल जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबं कण्टकार्योपधौ कुली' [इति मे० १४५।९](४)॥*॥ अभिजन्यते । कर्मणि घञ् (३।३।१९)। णिलोपस्य स्थानिवत्त्वात् 'जनिवध्योश्च' ( ७।३।३५ ) इति निषेधाद्वा वृद्धिर्न । यद्वा,–अभितोऽभिमुखो वा जनो जन्मात्र । 'अभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे । कुलेऽपि च पुमान्' [इति मे० ९५।६५] ॥ (५)॥*॥ अन्वीयते । 'इ गतौ' (भ्वा० प० अ०) । 'इण् गतौ' (अ० प० अ०) वा । 'एरच्' (३।३।५६) ॥ (६) ॥*॥ उद्यते । 'वश कान्तौ' (अ० प० से०) । घञ् (३।३।१९)। 'आच्छीनद्यो –' (७।१।८०) इत्यत्र 'नुम्' इति योगविभागान्नुम् । यद्वा,–वन्यते । 'वन संभक्तौ' (भ्वा० प० से) । बाहुलकाच्छ —वमति । 'भुवमिकुभ्य ' इति शक्—इति मुकुट । तन्न । उक्तसूत्रस्योज्ज्वलदत्तादिष्वदर्शनात् । 'वंशो[१] वेणौ

१. विश्वे '—पृष्ठस्यावयवेऽपि च' इति पाठ । परं मेदिन्यां तु 'वश. पुंसि कुले वेणौ पृष्ठावयववर्गयो.' इति भिन्न एव पाठः ।

कुले वर्गे पृष्ठाद्यवयवेऽपि च' [इति विश्व मेदिन्यौ १६८।१०, १६३।१३] ॥ (७) ॥*॥ अन्ववाय्यते ।' अय गतौ' (भ्वा०आ० से०)। घञ् (३।३।१९) ॥ (८) ॥*॥ सन्तन्यते । घञ्(३।३।१९)। सन्तान सततौ गोत्रे स्यादपत्ये सुरद्रुमे' [इति मे० ९३।४६] कर्तृकरणाधिकरणेष्वपि विग्रहः संभवति। भावे तनोते -'(वा० ३।१।१४०)इति ण । अन्यत्र 'हलश्च'(३।३।१२१)इति घञ् ॥(९)॥*॥ नव 'वंशस्य'।

वर्णाः स्युर्ब्राह्मणादयः ॥१॥

वर्ण (पु), 'ब्राह्मण, क्षत्रिय, वैश्य और शूद्र ये ४ वर्ण' हैं।

वेति ॥ वर्ण्यते । 'वर्ण प्रेरणे' (चु० प० से०) घञ् ३।३।१९)। वर्णयति । अच् (३।१।१३४) वा। 'वर्णो द्विजादिशुक्लादियज्ञे गुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने' [इति मे० ९३।४६] ॥ (१) ॥*॥ 'ब्राह्मणादिवर्णचतुष्टयवाचकस्य' वर्णा इत्येकम्।

विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम्।

चातुर्वर्ण्यम् (न), 'ब्राह्मण आदि पूर्वोक्त चार वर्णों के समुदाय' का १ नाम है।

वीति ॥ विप्रश्च क्षत्रियश्च विट् च शूद्रश्च । चत्वार एव वर्णा 'चतुर्वर्णादीनाम्' (वा० ५।१।१२४) इति स्वार्थे ष्यञ्।

राजबीजी राजवंश्य

राजबीजी, राजवंश्य (२ पु), 'राजकुलमें उत्पन्न व्यक्ति' के २ नाम हैं।

रेति ॥ राज्ञो बीजयितुं शीलमस्य। 'बीज व्यजने' अदन्त । 'सुपि-' (३।२।७८) इति णिनि । यद्वा,-राज्ञो बीजम्। राजबीजमस्यास्ति। इनि (५।२।११५)॥ (१) ॥*॥ वंशे भव । दिगादियत् (४।३।५४)। राज्ञो वंश्य । राजवंशे साधु । 'तत्र साधु (४।४।९८) इति यत् ॥ (२) ॥*॥ द्वे 'राजवंशोत्पन्नस्य'।

बीज्यस्तु कुलसंभवः ॥ २ ॥

बीज्य, कुलसंभव (२ पु), 'कुलमें उत्पन्न व्यक्ति' के २ नाम हैं।

बीति ॥ बीज्यते। 'अचो यत्' (३।१।९७) यद्वा,-बीजमस्यास्ति। 'अन्यत्रापि दृश्यते (वा० ५।२।१२०) इति यप्। 'बीजे भव'। साधु वा ॥ (१) ॥*॥ कुले संभवति। अच् (३।१।१३४)। कुले संभवोऽस्य वा। यद्वा,-संभवत्यस्मात्। 'ऋदोरप्' (३।३।५७) कुलस्य संभव ॥ (२) ॥*॥ द्वे 'कुलमात्रोत्पन्नस्य'।

महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।

महाकुल, कुलीन, आर्य, सभ्य, सज्जन, साधु (६पु), 'उत्तम कुलमें उत्पन्न व्यक्ति' के ६ नाम हैं।

मेति ॥ महच्च तत् कुलं च। महाकुलस्यापत्यम्। 'महाकुलादञ्खञौ' (४।१।१४१) ॥*॥ महत् कुलमस्य, इति विग्रहे तु (महाकुल) हस्त्यादिरपि ॥ (१) ॥*॥ कुलस्यापत्यम्। 'कुलात्खः' (४।१।१३९) ॥*॥ 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' (४।१।१४०)॥ 'कौलेयकः सारमेये कुलीने' [इति मे० १५।१८५] ॥*॥ 'कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च। कुल्या पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ ॥ कुलोद्भूते कुलहिते त्रिषु मान्ये पुनः पुमान्' [इति मे० ११४।१४-१५] ॥ (२) ॥*॥ अर्यते। 'ऋ गतौ (भ्वा० प० अ०)। 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (३) ॥*॥ सभायां साधु । 'सभाया यः' (४।४।१०५)॥ (४) ॥*॥ सन्नासौ जनश्च। 'सज्जनं तु भवेत्क्ली बमुपरक्षणघट्टयो । वाच्यलिङ्ग कुलीने स्यात् कल्पितायां च योषिति' [इति मे० ६३।४८-४९] ॥ (५) ॥*॥ साध्नोति धर्मम्। 'साध संसिद्धौ' (स्वा० प० अ०)। कृवापा-' (उ० १।१) इत्युण्। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' [इति मे० ८०।२३] ॥ (६) ॥ षट् 'कुलीनस्य'।

ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥

आश्रमोऽस्त्री

ब्रह्मचारी, गृही, वानप्रस्थ, भिक्षु (४ पु),ये चार 'आश्रम' शब्दवाच्य हैं अर्थात् आश्रम (पु न), 'ब्रह्मचर्याश्रम, गृहस्थाश्रम, वानप्रस्थाश्रम, सन्यासाश्रम (४ पु न), ये ४ 'आश्रम' हैं।

ब्रेति ॥ ब्रह्म वेद । तदध्ययनार्थं व्रतमप्युपचाराद्ब्रह्म। ब्रह्म चरितुं शीलमस्य। व्रते' (३।२।८०) इति सुपि-' (३।२।७८) इति वा णिनि । यद्वा,-ब्रह्म तपो ज्ञानं वा चरत्यजयत्यवश्यम्। आवश्यका-' (३।३।१७०) इति णिनि ॥ (१) ॥*॥ गृहा दारा सन्त्यस्य। इनि (५।२।११५) ॥ (२) ॥*॥ वनमेव प्रस्थो, वनस्य वा प्रस्थः प्रदेशः। वनप्रस्थे भवः तत्र भव' (४।३।५२) इत्यण् ॥ (३) ॥*॥ भिक्षणशील । भिक्ष याच्ञायाम्' (भ्वा० आ० से०)। सनाशंसभिक्ष उः' (३।२।१६८) ॥ (४) ॥*॥ चत्वारोऽवयवा यस्य। संख्याया अवयवे तयप्' (५।२।४२) ॥ चतुरवयवसमुदाये ॥*॥ आश्राम्यन्त्यत्र, अनेन वा। 'श्रमु तपसि' (दि० प० से०)। घञ् (३।३।१९)। 'नोदा-

त्तोपदेशस्य–' ( ७।३।३४ ) इति वृद्धिर्न । यद्वा,–आमन्तात्छ्रमोऽत्र । स्वधर्मसाधनक्लेशात् । 'आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे । अस्त्रियाम्' [ इति मे० १११।३९ ] ॥ ( १ ) ॥ * ॥ एकैकम् 'ब्रह्मचार्यादीनाम्' ।

**द्विजात्यग्रजन्मभूदेववाडवाः ।**

**विप्रश्च ब्राह्मणः**

द्विजातिः, अग्रजन्मा, भूदेवः, वाडवः, विप्रः, ब्राह्मणः, (६ पु०) 'ब्राह्मण' के ६ नाम हैं ।

द्वीति ॥ द्वे जाती जन्मनी यस्य । 'मातुरग्रेऽधि (वि) जननं द्वितीयं मौञ्जिबन्धनात्' ( मनुः २।१६९ ) । 'द्विजातिर्विप्राण्डजयोश्च पुलिङ्गः' [ इति मे० ६२।११५]॥ ( १ ) ॥ * ॥ अग्र आदौ जन्मास्य । अग्रान्मुखाद्वा जन्मास्य । 'अग्रजन्मा द्विजश्रेष्ठे[१] भ्रातरि ब्रह्माणि स्मृतः' [ इति विश्वः १०२।२१४ ] ॥ ( २ ) ॥ * ॥ भुवो भुवि वा देव इव ॥ ( ३ ) ॥ * ॥ 'वडवा कुम्भदास्यश्वा स्त्रीविशेषो द्विजन्मनाम्' इति रभसः । 'वडवाऽश्वाकुम्भदास्यो स्त्रीविशेषे द्विजस्त्रियाम्' [ इति विश्व १६६।५१]। वडवाया जातः । 'तत्र जातः' ( ४।३।२५ ) इत्यण् । वाडव इव वा । वाडनम् । 'वाडृ आप्लाव्ये' (भ्वा० आ० से० ) घञ् ( ३।३।१८ ) । वालनम् । 'वल निरूपणे' चुरादिर्वा । घञ् ( ३।३।१८ ) डलयोरेकत्वम् । वाडोऽस्यास्ति । 'अन्यत्रापि ( व्येभ्योऽपि ) दृश्यते' ( वा० ५।२।१०९ ) इति वः । वाडं वाति । कः ( ३।२।३ ) वा । 'वाडवं करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले' [इति मे० १६१।५०]॥ ( ४ ) ॥ * ॥ विप्राति । 'प्रा पूर्ती' ( अ० प० अ० )। 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः । उच्यतेऽत्र वा । 'ऋज्रेन्द्र–' ( उ० २।१८ ) इति साधु । विपाति । विपति । 'विप क्षेपे' ( ) वा ॥ ( ५ ) ॥ * ॥ ब्रह्मणोऽपत्यम् । 'तस्यापत्यम्' ( ४।१।९२ ) इत्यण् 'अन्' ( ६।४।१६७ ) इति टिलोपो न । ब्रह्माधीते । 'तदधीते तद्वेद' ( ४।२।५९ ) इत्यण् वा । ब्रह्म जानाति । 'शेषे' ( ४।२।९२ ) इत्यण् वा ॥ ( ६ ) ॥*॥ 'वक्त्रजसरवनमो विप्रो वर्णज्येष्ठ कचो ( ठो ) द्विजः । मैत्रः पुनरुक्तजन्मा स्यात्' [ इति त्रिकाण्डशेष २।७।२-३ ] । 'सूत्रकण्ठः पुमान् विप्रे खञ्जरीटकपोतयोः' [ इति मे० ४०।२१ ] ॥ * ॥ षट् 'ब्राह्मणस्य' ॥

**असौ षट्कर्मा यागादिभिर्युतः ॥४॥**

षट्कर्मा (पु), 'यज्ञ करना, पढ़ना, दान देना, यज्ञ कराना पढ़ाना और दान लेना; इन ६ कर्मोंसे युक्त ब्राह्मण' का १ नाम है ।

असाविति ॥ असौ विप्रः । 'षट् कर्माण्यस्य । 'इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते' ( )॥ ( १ ) ॥ * ॥ एकं 'षट्कर्मणो विप्रस्य' ।

**विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।**
**धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ॥५॥**
**धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।**
**दूरदर्शी दीर्घदर्शी**

विद्वान्, विपश्चित्, दोषज्ञः, सन्, सुधीः, कोविदः, बुधः, धीरः, मनीषी, ज्ञः, प्राज्ञः, संख्यावान्, पण्डितः, कविः, धीमान्, सूरिः, कृती, कृष्टिः, लब्धवर्णः, विचक्षणः, दूरदर्शी, दीर्घदर्शी (२२ पु), 'विद्वान्' के २२ नाम हैं ।

वेतीति ॥ वेत्ति । 'विद ज्ञाने' ( अ० प० से० ) । 'लटः शतृ–' ( ३।२।१२४ ) । 'विदेः शतुर्वसुः' ( ७।१।३६ ) वा । 'विद्वान् ज्ञानिनि धीरे च विद्वानध्यात्मवेदके' इति धरणिः । 'विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्' [ इति विश्व १७६।२५ ] ॥ (१) ॥ * ॥ प्रकृष्टं निश्चिनोति, चेतति, चिन्तयति, वा । पृषोदरादि ( ६।३।१०९ ) ॥ ( २ ) ॥ * ॥ दोषं जानाति । 'आतोऽनुप–' ( ३।२।३ ) इति कः ॥ ( ३ ) ॥ * ॥ अस्ति ॥ शता ( ३।२।१२४ ) । 'श्नसोरल्लोपः' ( ६।४।१११ ) । 'सन्साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियाम्' [ इति मे० ५९।६८-६९ ]॥ (४) ॥ * ॥ सु सुष्ठु ध्यायति । 'ध्यै चिन्तायाम्' ( भ्वा० प० अ० ) । 'ध्यायतेः संप्रसारणं च' (वा० ३।२।१८०) इति क्विप् संप्रसारणं च ॥ (५) ॥ * ॥ कौति धर्मादि । 'कु शब्दे' ( अ० प० से० ) । कवते वा । 'कुङ् शब्दे' ( भ्वा० आ० अ० ) । क्विप् ( ३।२।७५ ) । गुणः ( ७।३।८४ ) । कोर्वेदस्य विद् । वेत्ति । 'इगुपध–' ( ३।१।१३५ ) इति कः । यद्वा,–कवि वेदे विदा यस्य । विदा ज्ञाने च निर्दिष्टा मनीषायां च योषिति' [ इति मे० ७५।१४ ]॥ ( ६ )॥ * ॥ बुध्यते । 'बुध ज्ञाने' (दि० आ० अ० ) । 'इगुपध–' ( ३।१।१३५ ) इति कः । 'बुधः सौम्ये च पण्डिते' [ इति मे० ७३।१० ] ॥ (७) ॥*॥ 'आतोऽनुप–' धियं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–'

१. विश्वे'—द्विजे ज्येष्ठभ्रातरि—' इति, मेदिन्यां च '—द्विजे ज्येष्ठे भ्रातरि—' इति पाठौ ।

१. तदुक्तं मनुना— 'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥' (१।८८) इति ।

अनूचानः प्रवचने साङ्गेऽधीती

अनूचान (पु), 'व्याकरण आदि ६ अङ्गोंके सहित वेदको पढ़नेवाले' का १ नाम है।

अन्विति ॥ अन्ववोचत्। 'उपेयिवान्–' (३।२।१०९) इति साधु। 'अनूचानो विनीते स्यात्साङ्गवेदविचक्षणे' इति विश्व ॥(१)॥*॥ शिक्षाद्यङ्गषट्कोपेते। प्रोच्यते। ल्युट् (३।३।११३)। प्रवचनो वेदस्तत्र। अधीतमनेन। 'इष्टादिभ्यश्च' (५।२।८८) इतीनि। 'क्तस्येन्विषयस्य–' (वा० २।३।३६) इति सप्तमी ॥*॥ एकम् 'साङ्गवेदाध्येतुः'।

गुरोस्तु यः।

लब्धानुज्ञः समावृत्तः

समावृत्त (पु), गुरुकी आज्ञा पाकर गृहस्थाश्रममें रहने के लिये गुरुकुलसे लौटे हुए ब्रह्मचारी' का १ नाम है।

गिवति ॥ गुरोः सकाशाल्लब्धा प्राप्तानुज्ञा आज्ञा येन। समावर्तते स्म। 'गत्यर्था–' (३।४।७२) इति क्तः ॥(१)॥*॥ 'गुरुकुलवासान्निवृत्तस्य' एकम्।

सुत्वा त्वभिषवे कृते ॥ १० ॥

सुत्वा (सुत्वन् पु), 'यज्ञके अन्तमें अवभृथनामक स्नान किये हुए' का १ नाम है।

स्विति ॥ सुतवान् 'षुञ् अभिषवे' (स्वा० उ० अ०)। सुयजोर्ङ्वनिप् (३।२।१०३)। तुक् (६।१।७१) ॥ (१) ॥*॥ अभिषवे=अवभृथस्नाने ॥*॥ एकं 'स्नातकस्य'।

छात्रान्तेवासिनौ शिष्ये

छात्र, अन्तेवासी, शिष्य (३ पु), 'शिष्य, छात्र' के ३ नाम हैं।

छेति ॥ गुरुदोषाच्छादनं छत्रम्। तच्छीलमस्य। 'छत्रादिभ्यो णः' (४।४।६२) ॥ (१) ॥*॥ अन्ते समीपे वस्तुं शीलमस्य। 'सुपि–' (३।२।७८) इति णिनिः। 'शयवासवासि–' (६।३।१८) इत्यलुक्। 'अन्तेवासी भवेच्छिष्ये चण्डाले प्रान्तगेऽपि च' [इति विश्व १०३।२१६] ॥ (२) ॥*॥ शिष्यते। 'शासु अनुशिष्टौ' (अ० प० से०)। 'एतिस्तुशास्–' (३।१।१०९) इति क्यप्। 'शास इदङ्हलोः' (६।४।३४) 'शासिवसि–' (८।३।६०) इति षः (३) ॥*॥ त्रीणि 'शिष्यस्य'।

शैक्षाः प्राथमकल्पिकाः।

शैक्ष, प्राथमकल्पिक (२ पु),'अध्ययनको प्रथम आरम्भ किये हुए ब्रह्मचारी आदि' के २ नाम हैं।

शायिति ॥ शिक्षामधीयते। 'तदधीते–' (४।२।५९) इत्यण्। शिक्षायाः इमे। तत्र भवा वा। यद्वा–शिक्षा लभन्ते। 'शेषे' (४।२।९२) इत्यण् ॥(१)॥*॥ प्रथमकल्पः आद्यारम्भः प्रयोजनं येषां ते। 'प्रयोजनम्' (५।१।१०९) इति ठञ्। यद्वा–प्रथमकल्पमधीयते। 'विद्यालक्षणकल्पान्ताच्च' (वा० ४।२।६०) इति ठक्। 'कल्पः शास्त्रे विधौ न्याये' ('संवर्ते ब्रह्मणो दिने) [इति मे० १०२।२]॥ (२) ॥*॥ द्वे 'प्रथमारब्धवेदानाम्'।

एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥

सब्रह्मचारिण (पु), 'आपसमें समान वेद, समान व्रत और समान आचारवाले ब्रह्मचारियों' का १ नाम है।

एकेति ॥ ब्रह्म वेदस्तदध्ययनव्रतमप्युपचाराद् ब्रह्म। 'एकस्मिन् ब्रह्मणि व्रताचरणं येषां ते। मिथः परस्परम् ॥*॥ समानं ब्रह्म चरन्ति। व्रते' (३।२।८०) इति णिनिः। 'चरणे ब्रह्मचारिणि' (६।३।८६) इति समानस्य सः ॥ (१) ॥*॥ एकं 'समानशाखाध्येतॄणाम्'।

सतीर्थ्यास्त्वेकगुरवः

सतीर्थ्य, एकगुरु (भा० दी०।२ 'सहपाठी एक गुरुसे पढ़नेवाले' के २ नाम हैं।

सेति ॥ समाने तीर्थे वसन्ति। 'समानतीर्थे वासी' (४।४।१०७) इति यत्। 'तीर्थे ये' (६।३।८७) इति समानस्य सः ॥ (१) ॥ ॥ एको गुरुर्येषां ते ॥ (१) ॥*॥ द्वे 'सहाध्यायिनाम्'।

चितवानग्निमग्निचित्।

अग्निचित् (पु), 'अग्निहोत्री' का १ नाम है।

चीति ॥ अग्निमचैषीत्। 'चिञ् चयने' (स्वा० उ० अ०)। 'अग्नौ चेः' (३।२।९१) इति क्विप्। तुक् (६।१।७१) ॥ (१) ॥*॥ एकं 'अग्न्युपासकस्य'।

पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥

ऐतिह्यम् (न), इतिह (अव्य०), 'परम्परागत उपदेश' के २ नाम हैं।

पेति ॥ परम्परया आगतः। 'तत आगतः' (४।३।७४) इत्यण्। चतुर्वर्णादित्वात् (५।१।१२४) ष्यञ्। पारम्पर्यश्चासावुपदेशश्च। तस्मिन् ॥*॥ अनन्तावसथेतिह (५।४।२३) इति ञ्यः ॥ (१) ॥*॥ इत्येवं ह किल ॥ (५) ॥*॥ यत्तु मुकुटेनोक्तम्—'पूर्वे च पूर्वतराश्च' इति द्वन्द्वे 'परोवरपरम्परपुत्रपौत्रमनुभवति' (५।२।१०) इति निर्देशात् परम्परादेशे टापि परम्परा। तदुक्तम् 'विनापि प्रत्ययं परम्पराशब्दो दृश्यते' (वा० ५।३) तच्चिन्त्यम्। संनियोगशिष्टन्यायेन खप्रत्ययसंनियोग एव परम्परादेशविधानात्। परम्पराशब्दस्य त्वव्युत्पन्नत्वात्। तदुक्तम्—'अस्ति हि परम्पराशब्दोऽव्युत्पन्नं प्रातिपदिकम्' इति।

यद्वा—परं पिपर्ति । पचाद्यच् (३।१।१३४) । स्वपचाजारभारवत् । पृषोदरादि- ( ६।३।१०९ ) ॥ * ॥ द्वे 'परंपरोपदेशस्य' ।

उपज्ञा ज्ञानमाद्यं स्यात्

उपज्ञा (स्त्री), 'गुरूपदेशके बिना उत्पन्न सर्वप्रथम ज्ञान' का १ नाम है ।

उपेति ॥ उपज्ञानम् । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (१) ॥*॥ यथोपदेशं विना श्लोकनिर्माणे वाल्मीकेर्ज्ञानम् ॥ *॥ एकम् 'आद्यज्ञानस्य' ।

ज्ञात्वारम्भ उपक्रमः ।

उपक्रमः ( पु ), 'गुरु आदिसे ज्ञान प्राप्तकर आरम्भ करने'का १ नाम है ।

ज्ञेति ॥ उप प्रथमं क्रमणम् । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । भावे घञ् (३।३।१८) । 'नोदात्तोपदेश—' (७।३।३४) इति न वृद्धि । 'उपक्रमस्तूपधाया ज्ञात्वारम्भे च विक्रमे । चिकित्सायाम्' (इति मे० ११२।५९) ॥ (१) ॥*॥ यथा माने नन्दस्य प्रथमारम्भ उपक्रम. स' । एकं 'ज्ञात्वा प्रथमारम्भस्य' ।

यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥

यज्ञः, सवः, अध्वरः, यागः, सप्ततन्तुः, मखः, क्रतुः ( ७ पु ), 'यज्ञ' के ७ नाम हैं ।

येति ॥ इज्यते । अनेन वा । अत्र वा । 'यज देवपूजादौ' (भ्वा० उ० अ०) । 'यजयाच—' (३।३।९०) इति नङ् । 'यज्ञ स्यादात्मनि मखे नारायणहुताशयोः' इति हैमः (२।८०) ॥ (१) ॥*॥ सूयते सोमोऽत्र । 'षूञ् अभिषवे' (स्वा० उ० अ०) । 'ऋदोरप्' ( ३।३।५७ )। यद्वा—सूयतेऽत्र अनेन वा । 'षू प्रेरणे' (तु० प० से०) । अप् (३।३।५७) । घ' (३।३।११८) वा । 'सवो यज्ञे च 'संधाने' [इति मे० १५९।२९]॥(२)॥*॥ न ध्वरति । 'ध्वृ कौटिल्ये' (भ्वा० प० अ०) । अच् (३।१।१३४) । अध्वानं राति वा । 'आतोऽनुप—'(३।२।३) इति को वा। 'अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान्'[इति मे० १३०।१०५]। (३) ॥*॥ इज्यते, अनेन वा । अत्र वा । यजेर्घञ् (३।३।१९) ॥ ( ४ ) ॥*॥ सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तन्यते । यद्वा-तानि सप्त तन्यन्तेऽत्र 'सितनिगमि—' (उ० १।६९ ) इति तुन् ॥ ( ५ ) ॥ * ॥ मखन्ति देवा अत्र, अनेन वा । 'मख गतौ' ( भ्वा० प० से० ) 'हलश्च' (३।३।१२१ ) इति घञ् । संज्ञापूर्वकत्वान्न वृद्धि. । यद्वा—'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' (   ) घञ्-

विषयेऽपि'पुंसि—' (३।३।११८) इति घ ॥ (६) ॥*॥ करोति । क्रियते वा । 'कृञ कतु.' ( उ० १।८० ) । 'क्रतुर्यज्ञे मुनौ पुंसि' [ इति मे० ५४।८ ] ॥ (७) ॥*॥ सप्त 'यज्ञस्य' ।

पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।

एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥

पाठः (पु), 'वेदादिपाठ करने' को 'ब्रह्मयज्ञ' (पु), होमः (पु), 'हवन करने'को देवयज्ञः (पु), अतिथीनां सपर्या (स्त्री), 'अन्न, जलपान, शय्यादि देकर अतिथियोंके सत्कार करने' को नृयज्ञः (पु), तर्पणम् (न),'अन्न, जल, पिण्डदान, श्राद्ध, आदिसे पितरोंको सन्तुष्ट करने'को पितृयज्ञः (पु), बलिः(पु), 'बलिवैश्वदेव अर्थात् काकादिको बलि देने' को भूतयज्ञः (पु), कहते हैं ।

ये ( ब्रह्मयज्ञ, देवयज्ञ, अतिथियज्ञ, पितृयज्ञ और भूतयज्ञ ) ५ महायज्ञः (पु), अर्थात् 'पञ्चमहायज्ञ' हैं ।

पेति ॥ पठनम् । पाठनम् वा । भावे घञ् (३।३।१८) 'पाठश्च पठने ख्यातो 'विद्धपर्ण्यां तु योषिति' [इति मे० ३९।७] ॥ (१) ॥*॥ हवनम् । 'हु दानादनयोः' (जु० प० अ०) । 'अतिस्तुसुहुसृ—' (उ० १।१४०) इति मन् ॥(१) ॥*॥ अतिथीनामदृष्टपूर्वाणां गृहमागतानाम् । सपर्यणम् । 'सपर पूजायाम्' । 'कण्ड्वादिभ्यो यक्' (३।१।२७) । 'अ प्रत्ययात्' (३।३।१०२) । सपर्या पूजा ॥ (१) ॥*॥ तृप्यति². 'तृप प्रीणने' (दि० प० अ०) । भावे ल्युट् (३।३।११५) ॥ (१) ॥ * ॥ बलनम् । 'बल दाने' ( संवरणे ) ( भ्वा० आ० से० ) । इन् (उ० ४।११८)। 'बलिर्दैत्योपहारयो. । करे चामरदण्डे च ³गृहदारुधाराशयो । त्वक्संकोचे गन्धके च' इति हैम (२।५१३–५१४) ॥ (१) ॥*॥ महान्तश्च ते यज्ञाश्च । ब्रह्मयज्ञ आदिर्येषां तानि ब्रह्मयज्ञादीनि नामानि येषां ते ॥*॥ मनुः (३।७०)—'अध्यापनं ब्रह्मयज्ञ पितृयज्ञस्तु तर्पणम् । होमो देवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' इति । 'पाठादीनाम्' एकैकम् ।

समज्या परिषद्गोष्ठी सभासमितिसंसदः ।

आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥१५॥

समज्या, परिषत्, गोष्ठी, सभा, समितिः, संसद, आस्थानी ( ७ स्त्री ), आस्थानम् (न), सदः (न स्त्री), 'सभा' के ९ नाम हैं ।

१ '—सन्ताने' इति मेदिनीपाठ. ।

१. 'विद्धकर्ण्या—' इति पाठो मेदिन्याम् ।

२. 'तृप्यति' इत्युल्लेखोऽनुपयुक्त ।

३ हैमे 'क' पुस्तके'—दारुदराशयो —' इति, 'ख-ग' पुस्तकद्वये तु'—दारुदराशयो.—' इति पाठः ।

सेति ॥ समजन्त्यस्याम् । 'अज गतौ' ( भ्वा० प० से० ) । 'समजाया समज-' (३।३।९९) इति क्यप् । 'क्यपि च' ( वा० २।४।५६ ) इति वीभावो न ॥ (१) ॥*॥ परित सीदन्त्यस्याम् । 'षद्लृ विशरणादौ' (भ्वा०, तु० प० अ०) । सपदादिविक्प् (वा० ३।३।१०८) । 'सदिरप्रते' (८।३।६६) इति षत्वम् ॥*॥ 'बाहुलकात्परेरन्त्यलोपे पर्षद्' च ॥ (२) ॥*॥ गावोऽत्र वाचस्तिष्ठन्त्यस्याम् । घञर्थे क (वा० ३।३।१०८)। 'अम्बाम्ब-'(८।३।९७) इति षत्वम् । गौरादिङीष् (४।१।४१) । 'गोष्ठी सभासलापयो स्त्रियाम्' ( इति मे० ३९।४ ) ॥ ( ३ ) ॥*॥ सह भान्त्यस्याम् । 'भा दीप्तौ' (अ० प० अ०) । भिदाद्यङ् (३।३।१०६) । समाना भान्त्यस्याम् इति वा । 'समानस्य-' (६।३।८४) इति योगविभागात् 'सभा-'(२।४।२३) इति निर्देशाद्वा समानस्य स । 'सभा सामाजिके गोष्ठ्या द्यूतमन्दिरयोरपि' (इति मे० १०६।९) ॥ (४) ॥*॥ समयन्त्यस्याम् । 'इ गतौ' ( भ्वा० प० अ० ) । क्तिन (३।३।९४)। सह विद्यमाना मिलितैर्वा मिति प्रमाऽस्याम् इति वा । 'समिति सपराये स्यात्सभाया समयेऽपि च' (इति मे०, ९६।१६६) ॥ ( ५ ) ॥*॥ ससीदन्त्यस्याम् । क्विप् (वा० ३।३।१०८) ॥ (६) ॥*॥ आतिष्ठन्त्यस्याम् । अधिकरणे ल्युट् ( ३।३।११७ ) ॥ ( ७ ) ॥*॥ (८) ॥*॥ सीदन्त्यस्याम् । असुन् (उ० ४।१८९) ॥ (९) ॥*॥ नव 'सभाया' ।

**प्राग्वंशः प्राग्घविर्गेहात्**

प्राग्वश (पु) 'हवनशालाके पूर्व तरफ यजमानको बैठने के लिये बनाये हुए स्थान या गृह विशेष'का १ नाम है ।

प्रेति ॥ प्राञ्चति । अञ्चु गतिपूजनयो ' (भ्वा० प० से०) । ऋत्विग्-' (३।२।५९) इति क्विन् । प्राङ् वशो गोत्र स्थूणा यत्र ॥ ( १ ) ॥*॥ हविः शालाया पूर्वभागे यजमानादीना स्थित्यर्थे गेहे 'प्राग्वश'शब्दो वर्तते ॥*॥ एक 'प्राग्वशस्य' ।

**सदस्या विधिदर्शिन ।**

सदस्य (पु), 'यज्ञमें न्यूनाधिक विधिको देखनेवाले ऋत्विग्विशेष' का १ नाम है।

सेति ॥ सदसि साधव । 'तत्र साधु '(४।४।९८)इति यत् ॥ (१) ॥*॥ विधि द्रष्टु शील येषा ते । 'सुपि-' (३।२।७८) इति इणिनि । न्यूनाधिकविचारका ऋत्विग्विशेषा ॥*॥ एक 'सदस्यस्य'।

**सभासद सभास्तारा सभ्या सामाजिकाश्च ते ॥१६॥**

सभासद् , सभास्तार , सभ्य , सामाजिक (४पु), 'सभासद' के ४ नाम हैं ।

सेति ॥ सभाया सीदन्ति । 'सत्सूद्विष-' (३।२।६१) इति क्विप् ॥ (१) ॥*॥ सभा स्तृणन्ति । 'स्तृञ् आच्छादने' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ सभाया साधव । 'सभाया य' (४।४।१०५)॥ (३) ॥*॥ समाज समवयन्ति । 'समवायान्समवैति' (४।४।४३) इति ठक् । समाज रक्षन्ति वा । 'रक्षति' (४।४।३३) इति ठक् ॥ (४) ॥*॥ चत्वारि 'सभ्येषु' ।

**अध्वर्यूद्गातृहोतारो यजु सामर्ग्विद क्रमात् ।**

अध्वर्यु , उद्गाता, होता ( ३ पु ), 'यजुर्वेद, सामवेद और ऋग्वेद जाननेवाले' का क्रमश १-१ नाम है।

अध्वेति ॥ अध्वरमिच्छति । 'सुप -' (३।१।८) इति क्यच् । 'कव्यध्वरपृतनस्य-' (७।४।३९) इति लोप । 'क्याच्छन्दसि' (३।२।१७०) इत्यु । यद्वा—न ध्वरति । 'ध्वृ कौटिल्ये' (भ्वा० प० अ०) । विच् (३।२।७५) अध्वर याति, यौति वा । मितद्र्वादित्वात्(वा० ३।२।१८०) डु ।—अपव्द्वादि—इति मुकुटश्चिन्त्य । णत्वाभावात् ॥ (१) ॥*॥ उद् गायति साम । 'गै शब्दे' (भ्वा० प० अ०) । 'तृन्तृचौ शसिक्षदादिभ्य सज्ञाया चानिटौ' (उ० २।९४ ) ॥ ( १ ) ॥*॥ जुहोति । 'नप्तृनेष्टृत्वष्टृहोतृपोतृ-' (उ० २।९५) इति साधु ॥ (१) ॥*॥ यजुश्च सामानि च ऋचश्च । 'चार्थे द्वन्द्व' (२।२।२९) । समा गान्तविधेरनित्यत्वात् 'ऋक्पूर्-' ( ५।४।७४ ) इत्यकारो न । यजु सामर्चो विदन्ति । 'सत्सूद्विष-' (३।२।६१)इति क्विप् । यजुर्विद अध्वर्यु । सामविद् उद्गाता । ऋग्विद् होता । 'ऋत्विग्विशेषाणा' क्रमादेकैकम् ।

**आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥१७॥**

आग्नीध्र, ऋत्विक , याजक ( ३ पु ), यज्ञ करनेवाला यजमान धन आदिसे जिसका वरण करे उन आग्नीध्र आदि यज्ञ करानेवाले ब्राह्मणों' के ३ नाम है।

आग्नीति ॥ अग्नीन्धे । 'ञिइन्धी दीप्तौ' (रु० आ० से०) । क्विप् (३।२।७६) । नलोप (६।४।२४)। अग्नीत्विक् । अग्नीध स्थानम् । 'अग्नीध शरणे रण् भ च' (वा० ४।३।१२०)। आग्नीध्र स्थानम् । तात्स्थ्यात्सोऽपि। 'स्फायि-' (उ० २।१३) इति रक् । नलोप (६।४।२४)। अग्नीध्र —इति मुकुट । तन्न । स्फाय्या(उ० २ १३)दिष्विन्धेरपाठात् । अस्मदुक्तप्रक्रियाया सत्त्वाच्च । आग्नीध्र आद्यो येषा ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छसिअच्छावाकनेष्ट्रादीना षोडशानाम् ॥(१)॥*॥ धनैर्हेतुभि वरणे वरणैर्वा व्रियन्ते । 'वृङ् सभक्तौ' ( क्र्या० आ० से० ) । ण्यत् ( ३।१।१२४)। क्यप्(३।१।१०९)तु वृञ एव ॥*॥ ऋतौ यजति।

'ऋत्विग्–' (३।२।५९) इति साधु ॥ (२) ॥*॥ यजन्ति । ण्वुल् (३।१।१३३) । 'याजकस्तु गजे राज्ञो याज्ञिकेऽपि' इति मेदिनी (१२।१४३) ॥ (३) ॥*॥ त्रीणि ।—'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते' इति कात्यः—इति मते द्वे 'ऋत्विजाम्' ।

**वेदिः परिष्कृता भूमिः**

**वेदिः (स्त्री), 'यज्ञके लिये डमरू-तुल्याकार बनाई हुई साफ की हुई भूमि' का १ नाम है।**

वेदीति ॥ विद्यते शोधनेन ज्ञायते, विचार्यते, प्राप्यते, वा । 'तु पिपिवहिवृति–' (उ० ४।११९) इतीन् । यद्वा—वेदयति, वेद्यते वा । 'विद निवासादौ' चुरादि. । 'अच इः' (उ०४।१३९) । 'वेदि. स्यात्पण्डिते पुमान् । स्त्रियामंगुलिमुद्रायां स्यात् परिष्कृतभूतले' (इति मे०, ७५।१५)॥(१) ॥*॥ परितः कृता संस्कृता । 'संपरिभ्याम्–' (६।१।१३७) इति सुट् । 'परिनिवि–' (८।३।७०) इति षत्वम् ॥*॥ एकं 'यज्ञवेद्या.' ।

**समे स्थण्डिलचत्वरे ।**

**स्थण्डिलम्, चत्वरम् (२ न), 'यज्ञके लिये साफ किये गये स्थान-विशेष' के २ नाम हैं।**

सेति ॥ स्थलत्यस्मिन् । 'ष्ठल स्थाने' (भ्वा० प० से०) । 'मिथिलादयश्च' (उ० १।५७) इति साधु ॥(१) ॥*॥ चतन्त्यस्मिन् । 'चते याचने' (भ्वा० उ० से०) 'कृगॄशॄवृञ्चतिभ्य ष्वरच्' (उ० २।१२१) 'चत्वरं स्थण्डिलेऽङ्गणे' ( इति मेदिनी १३३।१५२ ) ॥ (२) ॥ *॥ द्वे 'यागार्थं संस्कृतभूमे.' ॥—यज्ञार्थं परिष्कृतायाः अनिम्नोन्नतायाः यज्ञभूमेः—इति मुकुटः ।

**चषालो यूपकटकः**

**चषालः, यूपकटकः ( २ पु ), 'यज्ञ-स्तम्भके ऊपर वलयाकार (गोल) बनाये हुए काष्ठ-विशेष' के २ नाम हैं।**

चेति ॥ चषति । चष्यते वा । 'चष भक्षणे' (भ्वा० उ० से०) । 'सानसिवर्णसि–' (उ० ४।१०७) इति साधु ॥ (१) ॥*॥ यूपस्याग्रे कृत कटकाकार ॥ (२) ॥*॥ द्वे 'यूपकटकस्य' ।

**कुम्बा सुगहना वृतिः ॥ १८ ॥**

**कुम्बा (स्त्री), 'चण्डाल, अन्त्यज आदि यज्ञ को न देख सकें, इस निमित्तसे यज्ञभूमिके चारों तरफ बनाये हुए घेरे' का १ नाम है।**

किवति ॥ कुम्ब्यते अनया वा । 'कुबि आच्छादने' (भ्वा०, चु० प० से०) । 'चिन्तिपूजिकथि–' (३।३।१०५) इत्यङ् ॥ (१)॥*॥ सुगहना निबिडा वृतिर्वेष्टनम् । एकं 'निबिडवेष्टनस्य' ।

**यूपाग्रं तर्म**

**यूपाग्रम्, तर्म ( २ न ), 'यज्ञ-स्तम्भके ऊपरी भाग' के २ नाम हैं।**

य्विति ॥ यूपस्याग्रम् ॥ (१) ॥*॥ तरति 'तॄ प्लवनतरणयो.' (भ्वा० प० से०)। मनिन् (३।२।७५)॥(२) ॥*॥ द्वे 'यूपाग्रे' ।

**निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।**

**अरणिः ( पु स्त्री ), 'जिसको परस्परमें रगड़कर यज्ञार्थ अग्नि निकाला जाय, उस काष्ठ-विशेष' का १ नाम है।**

नीति ॥ निर्मथ्यते । 'मन्थ विलोडने' (भ्वा० प० से०) । ण्यत् (३।१।१२४) निर्मथ्य च तद्दारु च ॥*॥ ऋच्छति । 'ऋ गतिप्रापणयो.' (भ्वा० प० अ०) । 'अर्तिसृधृधमि–' (उ० २।१०२) इत्यनि. । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि' (इति मे०, ४७।३४) ॥ (१) ॥*॥ एकं 'अरणे.' ।

**दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥**

**दक्षिणाग्निः, गार्हपत्यः, आहवनीयः (३ पु), ये ३ 'अग्नि के भेद' हैं।**

देति ॥ दक्षिणोऽग्नि' । 'दिक्संख्ये संज्ञायाम्' (२।१।५०) इति समासः । मुकुटस्तु—दक्षिणाया दिशोऽग्निः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' (वा० ५।३।२८) । दक्षिणाग्नि –इत्याह । तन्न । संज्ञात्वेन 'दिक्संख्ये–' (२।१।५०) इत्येतत्सूत्रोदाहरणत्वात् । तत्र च 'समानाधिकरणेन' इत्यधिकारात् ॥ (१) ॥*॥ गृहपतिना संयुक्तः । 'गृहपतिना संयुक्ते ञ्य' (४।४।९०)॥ (१) ॥*॥ आहूयते प्रीणयते प्रक्षिप्यते वा हविरत्र । 'कृत्यल्युट.–' (३।३।११३) इत्यधिकरणेऽनीयर् । यद्वा—आहवनमर्हति । 'तदर्हति' (५।१।६३) इति छ. ॥ (१) ॥ * ॥ क्वचित्तु त्रयाणां द्वन्द्व. पठ्यते ॥ एकैकम् 'अग्निविशेषस्य' ।

**अग्नित्रयमिदं त्रेता**

**त्रेता (स्त्री), 'दक्षिणाग्नि, गार्हपत्याग्नि और आहवनीयाग्नि इन तीन अग्नियोंके समुदाय' का १ नाम है।**

अग्नीति ॥ त्राणम् । त्रा. सदा सद्रक्षणम् । तामिता । यद्वा—त्रायन्ते त्रा आहुतय । ताभिरिता । त्रित्वमिता इति वा । पृषोदरादि ( ६।३।१०९ ) । 'त्रेता युगेऽग्नित्रये च' इति हैम (२।१७४) ॥(१)॥*॥ एकम् 'अग्नित्रयस्य' ।

**प्रणीतः संस्कृतोऽनलः ।**

**प्रणीतः (पु), 'मन्त्रसे संस्कृत अग्नि' का १ नाम है।**

प्रेति ॥ प्रकर्षं नीत. । 'प्रणीत उपसंपन्ने कृते क्षिप्ते

प्रवेशिते । संस्कृताग्नौ च' इति हेमचन्द्र (३।२९०) ॥ (१) ॥*॥ एकं 'संस्कृताग्ने'।

**समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २०॥**

समूह्य', परिचाय्य', उपचाय्य. ( ३ पु ), 'यज्ञ-सम्बन्धी अग्निका स्थान-विशेष, या स्थान-विशेषकी अग्नि' के ३ नाम हैं।

सेति ॥ समुह्यते, समूह्यते वा । 'वह प्रापणे' (भ्वा० उ० अ०) । 'ऊह वितर्के' (भ्वा० आ० से०) वा ॥ (१) ॥*॥ परिचीयते ॥ (२) ॥*॥ उपचीयते ॥ (३)॥*॥ 'अग्नौ परिचाय्योपचाय्यसमूह्याः'(३।१।१३१)इति साधवः ॥*॥ प्रयोगोऽस्ति येषां ते । अग्नौ प्रयोक्तव्याः, अग्निनाऽऽनीयन्ते इत्यर्थः । 'त्रीण्यग्नौ प्रयोगिणाम्'।

**यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।**

**तस्मिन्नानाय्यः**

आनाय्य. ( पु ), 'गार्हपत्यनामक अग्निसे लाकर मन्त्र से संस्कृत दक्षिणाग्नि' का १ नाम है।

य इति ॥ दक्षिणाग्नित्वेन संस्क्रियते ॥*॥ आनीयते 'आनाय्योऽनित्ये' (३।१।१२७) इति साधु ॥*॥ यस्तु भ्राष्ट्रवैश्यकुलयोनि स 'आनेय' ॥ ( १ ) ॥*॥ एकं 'दक्षिणाग्नित्व संस्कृताग्ने'।

**अथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥**

अग्नायी, स्वाहा, हुतभुक्प्रिया (३ स्त्री), 'अग्निकी स्त्री, स्वाहा' के ३ नाम हैं।

अथेति ॥ अग्ने स्त्री । 'वृषाकप्यग्नि-' (४।१।३७) इत्यैङीप् च ॥ (१) ॥*॥ सुष्ठु आहूयन्ते देवा अनया । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । स्वाहाऽस्त्यस्या वा । अर्शआद्यच् (५।२।१२७) ॥ (२) ॥*॥ हुतभुजः प्रिया ॥ (३) ॥*॥ त्रीणि 'अग्नेः प्रियायाम्'।

**ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।**

सामिधेनी, धाय्या ( २ स्त्री ),'अग्निमें समिधा (लकड़ी) छोड़कर अग्निको जलानेमें प्रयोग किये जानेवाले मन्त्र' के २ नाम हैं।

ऋगिति ॥ समिधामाधानी । 'समिधामाधाने षेण्यण्' (वा० ४।३।१२०) । षित्त्वात् (४।१।४१) ङीष् । 'हल' (६।४।४९) इति यलोपः ॥ (१) ॥*॥ धीयते पुष्यतेऽग्निरनया । 'पाय्यसान्नाय्यनिकाय्यधाय्या-' (३।१।१२९) इति साधु ॥ (२) ॥*॥ अग्नेः समिन्धने समुद्दीपने या ऋक् तत्र ॥*॥ द्वे 'समित्प्रक्षेपेण वह्निप्रज्वलने या ऋक् प्रयुज्यते तस्याः'।

**गायत्रीप्रमुखं छन्दः**

छन्दः (न), 'गायत्री आदि छन्द' का १ नाम है।

गेति ॥ गायन्तं त्रायते । 'आतोऽनुप-'(३।२।३) इति कः । गौरादिः ( ४।१।४१ ) । यद्वा-गानम् । गायः । घञ् ( ३।३।१८ ) । युक् (७।३।३३) गायेन गानेन त्रायते । 'त्रैङ् पालने' ( भ्वा० आ० अ० ) । 'सुपि-' (३।२।४)। इति योगविभागात् कः । मूलविभुजादित्वकल्पनमप्राप्तकम् । तस्यानाकारान्तत्वात् । 'गायत्री त्रिपदादेवीछन्दोभिदोः द्विरेपु च' [ इति मे० १३३।१५० ] ॥ ( १ ) ॥*॥ षडक्षरपदा गायत्री । प्रमुखपदेन उष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यादि एकाक्षरवृद्धया बोध्यम् ॥*॥ चन्दते । 'चदि आह्लादने दीप्तौ च ( भ्वा० आ० से० ) 'चन्दरादेश्च छः' ( उ० ४।२१९ ) इत्यसुन् ॥ ( १ ) ॥*॥ 'प्रथमप्रमुखं चाभ्र प्रधाने च प्रकीर्तितं' इत्यजयः ॥*॥ एकं 'छन्दसाम्'।

**हव्यपाके चरुः पुमान् ॥ २२ ॥**

चरु ( पु ), 'अग्निमें हवन किये जानेवाले अन्न' का १ नाम है।

हेति ॥ पच्यते । कर्मणि घञ् ( ३।३।१९ ) । हव्यं च तत् पाकश्च । यद्वा-भावे घञ् ( ३।३।१८ ) । पचनं पाकः । हव्यस्य पाकः । 'अनवस्रावितान्तरुष्मपाक ओदनश्चरुः' इति याज्ञिकाः ( ) ॥*॥ चर्यते भक्ष्यते । 'चर गतौ भक्षणे' च' ( भ्वा० प० से० ) । 'भृमृशीतृचरि-' ( उ० १।७ ) इत्युः । मीमांसकैरपि त्रिवृच्चर्वधिकरणे ( ) अन्नपरत्वं चरुशब्दस्याभ्युपगतम् । 'उगवादिभ्यो यत्' ( ५।१।२ ) इति सूत्रे कैयटस्तु(टार्यस्तु) 'स्थालीवाची चरुशब्दः तात्स्थ्यादोदने भाक्त' इत्याह । विश्वप्रकाशे (१७१।७२)तु 'चरुर्भाण्डे च 'हव्यान्ने' इत्यनेकार्थतोक्ता । 'अथ चरुः पुमान् हव्यान्नभाण्डयो' इति मेदिनी [ १२५।२२ ] च । स्वामी तु—पच्यं होतव्यं चरु । चर्यते रध्यते इति । स्थाल्यपि चरुः हव्यस्य पाकोऽत्र—इत्याह । एतेन—केचित्तु पच्यतेऽत्रेति । 'हलश्च' ( ३।३। १२१ ) इति घञ् । 'पाकं व्युत्पाद्य हव्यपाकस्थाल्याविरुच्यते । अन्यत्रौपचारिकः' इत्याहुः । तदसत् ।—इति मुकुटः प्रत्युक्तः । प्रयोगदर्शनमपि सुपपादमनेकार्थत्वतायाम् ॥ (१) ॥*॥ एकं 'चरोः'।

---

१ हव्यान्ने यथा—'स तेजो वैष्णवं पत्न्यो विभेजे चरुसंज्ञितम्' इति 'चरोरर्धार्धभागाभ्यां तामयोजयतामुभे' इति च रघु० ( १०।५४, ५६ ) । भाण्डं पात्रं तत्र यथा—'उत्पलकान्तिकचरुः स्वात्मनः पार्श्वदाहकः' इत्यनेकार्थकैरवकौमुदी ।

आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः।

आमिक्षा ( स्त्री ), 'औंटे हुए गर्म दूधमें दही छोड़नेपर उत्पन्न विकार-विशेष या छौंड़' का १ नाम है।

आमीति ॥ आमिष्यते । 'मिषु सेचने' ( भ्वा० प० से० ) बाहुलकात् सक्। यद्वा-आ मक्षात। 'मक्ष रोषे सघाते च' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। पृषोदरादि. ( ) ॥ ( १ ) ॥ * ॥ शृते क्वथिते तप्ते च पयसि दध्नो योजनात् या स्यात्। यत्तु—'आङ्पूर्वान्मिहधीधरच' इति स उपधादीर्घत्व च इति दीर्घमध्य ( आमीक्षा ) मुकुट आचख्यो, तच्चिन्त्यम्। उज्ज्वलदत्तादावदर्शनात्। एकं 'आमिक्षायाः'।

धविन्त्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥२३॥

धविन्त्रम् ( न ), 'यज्ञमें आग सुलगाने के वास्ते मृगचर्म के बने हुए पंखे' का १ नाम है।

धेति ॥ धूयतेऽनेन। 'धूञ् कम्पने' (क्र्या० उ० से०)। 'धू विधूनने' ( तु० प० से० ) वा। 'अतिलूधूसू-' ( ३।२ १८४ ) इत्रीत्र ॥ * ॥ धुवते कुटादित्वेन ( १।२।१ ) ङित्वाद्गुणाभावादुवङि 'धुवित्रम्' इत्येके ॥( १ ) ॥*॥ एकम् 'अग्नेः संधुक्षणाय मृगत्वचा रचितस्य व्यजनस्य'।

पृषदाज्यं सदध्याज्ये

पृषदाज्यम् ( न ), 'दही मिले हुए घी' का १ नाम है।

प्रेति ॥ पर्षति, पृष्यते वा। 'पृषु सेचने' ( भ्वा० प० से० )। 'वर्तमाने पृषत्-' ( उ० २।८४ ) इति साधु.। पृषच्च तदाज्यं च। यद्वा-पृषद्भिः सहितमाज्यम् ॥ (१) ॥ * ॥ दध्ना सहिते घृते। 'पृषातक सदध्याज्ये पृषदाज्यं तदुच्यते' ( ) ॥*॥ एकं 'दधिमिश्रितघृतस्य'।

परमान्नं तु पायसम्।

परमान्नम्, पायसम् ( २ न ), 'खीर, हविष्य' के २ नाम हैं।

पेति ॥ परम च तदन्नं च। 'सन्महत्-' (२।१।६१) इति समास.। यद्वा-परमाणामुत्तमानामन्नम् ॥ ( १ ) ॥ * ॥ पयसि-संस्कृतम्। 'संस्कृतं भक्षाः' ( ४।२।१६ ) इत्यण्। पयसा इति तु मुकुटस्य प्रमाद। 'तत्रोद्धृतम्-' ( ४।२।१४ ) इत्यतः 'तत्र' इत्यनुवृत्ते.। 'पायस श्रीवासे च पायस परमान्नके' इति हैमः ( ३।७९४ )। 'पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः' ( इति मे० १७२। २८ ) ॥ ( २ ) ॥ * ॥ द्वे 'क्षीरान्नस्य'।

हव्यकव्ये दैवपैत्रे अन्ने

हव्यम् ( न ), 'देवान्न' अर्थात् 'हवनके द्वारा देवताओं के उद्देश्यसे दिये जानेवाले अन्न-विशेष' का १ नाम है।

कव्यम् ( न ), 'पैत्रान्न' अर्थात् 'ब्राह्मण-भोजनादि के द्वारा पितरोंके उद्देश्यसे दिये जानेवाले अन्न-विशेष' का १ नाम है।

हेति ॥ हूयन्ते प्रीण्यन्ते देवा येन। हूयते प्रक्षिप्यते वा। 'हु दानादनयो.' ( जु० प० अ० )। 'अचो यत्' ( ३।१।९७ ) ॥ ( १ ) ॥ * ॥ कूयत पितृभ्यः। 'कु शब्दे' ( अ० प० अ० )। 'अचो यत्' ( ३।१।९७ )। —'कबृ वर्णे' ( भ्वा० आ० से० )। 'पोरदुपधात्' (३। १।९८ ) इति यत्—इति मुकुटस्य प्रमादः। तस्य विप्रकृपरस्य प्रकृतेऽन्वयासम्भवात्। 'श्विता वर्ण' ( भ्वा० आ० से० ) 'नीलवर्णे' ( भ्वा० प० स० ) इत्यादाविव वर्णस्य रूपार्थकत्वात् ॥ ( १ ) ॥ * ॥ देवानामिदम्। पितृणामिदम् 'तस्येदम्' ( ४।३।१२० ) इत्यण्। 'पित्र्ये' इति पाठे पितरो देवता यस्य। 'वाय्वृतु-' ( ४।२।३१ ) इति यत्। देवान्नं हव्यम्। पित्रन्नं कव्यम्। द्वे 'हव्यकव्ययोः'।

पात्रं स्रुवादिकम् ॥ २४ ॥

पात्रम् ( न ), 'स्रुवा आदि बर्तन' का १ नाम है।

पेति ॥ पाति, पिबत्यनेन वा। ष्ट्रन् (उ० ४।१५९)। —'दादिभ्य. ष्ट्रन्'—इति मुकुटश्चिन्त्यः। तादृशसूत्रादर्शनात्। 'पात्रं तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि। तीरद्वयान्तरे च' [ इति मे[१]० १२६।५७ ] ॥ ( १ ) ॥*॥ स्रवति घृतादिकम्। 'स्रु स्रवणे' ( भ्वा० प० अ० )। 'स्रुव. क.' ( उ० २।६१ )।— 'घञर्थे क.'—इति मुकुटश्चिन्त्य। 'स्रुव. क' इति प्रतिपदोक्तस्य सत्त्वात्। आदिना चमसोलूखलमुसलस्पयादि।

ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः।

ध्रुवा, उपभृत्, जुहूः ( ३ स्त्री ), ये ३ 'स्रुवाके भेद' हैं।

स्रुवः ( पु ), स्रुक् ( स्त्री ), 'स्रुवा' अर्थात् अग्निमें घी डालनेवाले काष्ठादिनिर्मित यज्ञ-पात्र-विशेष' के २ नाम हैं।

ध्रुवेति ॥ ध्रुवति 'ध्रुव स्थैर्ये' (तु० प० से०) 'इगुपध-' ( ३।१।१३५ ) इति क। यद्वा-'ध्रु स्थैर्ये' (तु० प० अ० )। अच् ( ३।१।१३४ )। कुटादित्वात् ( १। २।१) ङित्वम्। उवङ् ( ६।४।७७ )। 'ध्रुव. शङ्कौ हरे विष्णौ वटे चोत्तानपादजे। वसुयोगभिदो पुंसि क्लीबं निश्चिततर्कयोः। स्त्री मूर्वाद्यो: शालपर्ण्यां गीतीस्रुग्भेदयोस्त्रिषु। संतते शाश्वते च' [ इति मे० १५८।१३-१५ ]।

१. मेदिन्या 'पात्रं स्रुवादौ पर्णे च भाजने राजमन्त्रिणि। तीरद्वयान्तरे योग्ये' इति पाठ. ॥

( १ ) ॥ * ॥ उपाभिमति । द्रुभृज ( जु० उ० अ० ) क्विप ( ३।२।७६ ) ॥ ( १ ) । * ॥ जुहोति । द्युति गमिजुहोतीनां द्वे च जुहोतेर्दीर्घश्च ( वा० ३।२।१७८ ) इति क्विप् दीर्घश्च ॥ ( १ ) ॥ * ॥ स्रवति स्रु स्रवणे ( भ्वा० प० अ० ) । स्रुव च ( उ० २।६१ ) । स्रुव पुमान् । स्रुवा द्वयोर्होमपात्रे[१] शल्लकीमूर्वयो स्त्रियाम् [ इति मे० १५९।२९ ] ॥ ( १ ) ॥ * ॥ चिक् च ( उ० २।६२ ) इति स्रवतेश्चिकप्रत्यय । स्रुक् धाता ॥ ( १ ) ॥ * ॥ एते च स्रुचो विशेषा स्त्रिय स्त्रीलिङ्गा । स्रुवस्तु पुंलिङ्ग । मुकुटस्तु— अ यभ्योऽपि दृश्यते ( ३।२।१७८ ) इति क्विप् । दृशिग्रहणाद्दीर्घ्य त रोपसग्रहणार्थत्वात् । धातोश्चुगागम — इति व्याख्यत् । त न । चिक च ( उ० २।६२ ) इति सूत्रस्य जागरूक त्वात् । क्विबविधानाच्च । यदपि— स्रुच इति बहुव चननिर्देशाद्बहुवचम्— इति । तदपि न भद्यापेक्षया स्रुच पव्य त वात् । यदपि— स्रुवासाहचर्याद् द्वयो स्त्रीत्वमेव —इति । तदपि न स्त्रिय इति विधिपविधे सत्त्वात् । यथा स्रुव इति रूपभदात्पुस्त्व सिद्ध ना इति पुस्त्व विधि । तथा स्त्रिय इति स्त्रीत्वविधिर्बोध्य । न च— स्रुचो विधानाभाव पृष्ठ्यानुवाद कथम् । चण्डाको पारि पार्श्वका ( अ० १।३।२१ ) मृत्स्ना सु वद्धया ( अ० २।६।८६ ) इत्यादिवदुपपत्त । स्त्रिया इत्यस्य पव्य त स्वकल्पन व्यथम् ॥ * ॥ क्वचित् स्रुव इति पव्य न्तपाठ । स्रवति क्विब्वचिप्रच्छिायतस्रुप्रज्वा दीर्घो सम्प्रसा रण च ( उ० ६।५७ ) इति क्विब्दीर्घौ । ( स्रु ) ॥ * ॥ यज्ञपात्राणा पृथक पथक

**उपाकृत पशुरसौ योऽभिमन्त्र्य क्रतौ हत ॥२५॥**

उपाकृत ( पु ) यदम मसे अभिमन्त्रित कर यज्ञम मारे हुए पशु का १ नाम है ।

उपेति ॥ उपाक्रियते स्म । कृञ हिंसायाम् ( स्वा० उ० अ० ) । क्त ( ३।२।१०२ ) । उपाकृतोऽध्वरहते[२] पशौ नोपद्रत रिपु इति विश्व ( ७१।१८१ ) मदिनी च ( ६८।१८८ ) ॥ ( १ ) । * । अभितो म त्रयि वा । मन्त्रि गुप्तम पणे ( चु० प० से० ) । क्त्वा (३।४।२१)। ल्यप ( ७।१।३७ ) । हतो ह तुमारब्ध ॥ * ॥ एक क्रतावभिमन्त्रितपशो ।

परम्पराक शमन प्रोक्षण च वधार्थकम् ।

परम्पराकम् , शमनम् , प्रोक्षणम् (३ न), यज्ञम पशुको मारने क ३ नाम ह ।

पति ॥ अकनम् ग्राव । परम्पराया आकम् अक कुटिलाया गतौ ( भ्वा० प० स० ) । भाव घञ (३।३ १९ ) । अन्ववघञ् वा । यद्वा— परम् अतिशय व्ययम् । पर पर श्रेष्ठ आकोऽस्य अस्माद्वा ॥ ( १ ) ॥ * । शमु उपशम ( दि० प० स० ) भाव ल्युट ( ३।३। ११५ ) । शमन शान्तिवधयो शमन श्च द्रवत इति विश्व ( ८७।२८ ), मदिनी ( ६३।३७ ) । शमनस्तु यम प्रोक्त [१] शमन शान्तिहिंसयो इति हैम (३।४५१)। ॥ * ॥— शसनम् —इति स्वामी । शसु हिंसायाम् (भ्वा० प० से० ) । ल्युट ( ३।३।११५ ) ॥ * ॥ ससनम् इत्य य । षस स्वप्ने ( अ० प० स० ) ॥ ( २ ) ॥*॥ प्रपूर्वमुक्षणम् । उक्ष सेचने ( भ्वा० प० से० ) । ल्युट ( ३।३।११५ ) । प्रोक्षण सेकवधयो इति हैम ( ३। २२८ ) ॥ ( ३ ) ॥ * ॥ वधा हिंसार्थोऽस्य ॥ * । त्रीणि यज्ञाय पशुहननस्य ।

**वाच्यलिङ्गा प्रमीतोपसपन्नप्रोक्षिता हते ॥ २६ ॥**

प्रमीत , उपसप न , प्रोक्षित ( ३ त्रि ) 'यज्ञमें मारे हुए पशु' के ३ नाम हैं ।

वेति प्रमीयत स्म । मीङ ( दि० आ० अ० ) मीञ ( क्र्या० उ० अ० ) वा हिंसायाम् । क्त ( ३।२। १०२ ) । प्रमीत वाच्यलिङ्ग स्यात्प्रोक्षितेऽपि मतऽपि च इति [ मे० ६३।१२६ ] ॥ ( १ ) ॥ * ॥ उपसपद्यत स्म । पद गतौ ( दि० आ० अ० ) । कर्तरि ( ३।४। ७२) कर्मणि ( ३।२।१०२ ) वा क्त । [२]उपसप नमुद्दिष्ट निहत च सुसस्कृत इति विश्व ( १०२।११२ ) मेदिनी (१००।१११) ॥ (२) ॥*॥ प्रोक्ष्यत स्म । उक्ष सेचने (भ्वा० प० से०)। क्त ( ३।२।१०२ ) । प्रोक्षित निहत सिक्त इति रभस ॥ (३) ॥*॥ त्रीणि यज्ञहतपशो ।

सान्नाय्य हवि

सान्नाय्यम् हवि ( २ न ) 'हवन करने योग्य हविष्य आदि पदार्थ क २ नाम हैं ।

सामिति ॥ सनीयत । णीञ प्रापणे ( भ्वा० उ० अ० ) । पाय्यसान्नाय्य— ( ३।१।१२९ ) इति साधु ॥

१ 'स्रुवा द्वयोर्यज्ञपात्रे इ येव मेदिन्या पाठ ।

२ विश्वे उपाकृतोऽध्वरहतपशूपद्रुतयोमन इति मेदिन्या च उपाकृतोऽध्वरहतपशौ— इत्येव पाठो । अतो ऽत्र य थूपाकृत— इति प ठ यव वा मया उपाकृत— इति पाठ स्वीकृत ।

१ हैमे पुस्तकत्रये प्रोक्त इत्यशो नास्ति ।

२ विश्वे प्रथमपादस्तु जानीयादुपसम्प नम् —इत्येवं वतते ।

( १ ) ॥ * ॥ हूयते । 'अर्चिशुचि–' ( उ० २।१०८ ) इतीसि. ॥ ( २ ) ॥ * ॥ सानाय्यं=हविर्विशेष ॥ * ॥ द्वे 'हविष.' ।

अग्नौ तु हुतं त्रिषु वषट्कृतम् ।

हुतम् , वषट्कृतम् ( २ त्रि ), 'अग्निमें हवन किये हुए हविष्य आदि पदार्थ' के २ नाम हैं ।

अग्नाविति ॥ हुतं प्रक्षिप्तम् ॥ ( १ )॥ * ॥ 'वषट्' इति मन्त्रोपलक्षणम् । वषट्मन्त्रेण कृतं प्रक्षिप्तम् ॥ (२) ॥ * ॥ द्वे 'हुतस्य' ।

दीक्षान्तोऽवभृथो यज्ञः

अवभृथः ( पु ), 'यज्ञ समाप्ति-सूचक स्नान-विशेष' का १ नाम है ।

दीति ॥ अवभ्रियतेऽनेन । 'डुभृञ्' (जु० उ० अ०) । 'भृञ् भरणे' ( भ्वा० उ० अ० ) वा । 'अवे भृञ' ( उ० २।३) इति क्थन् ॥ ( १ ) ॥ * ॥ दीक्षाया अन्त प्रधानकर्मसमाप्तौ क्रियमाणो यो यज्ञ. इष्टिविशेषस्तस्य । एवम् 'अवभृथस्नानस्य' ॥

तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥

त्रिषु

यज्ञियम् ( त्रि ), 'यज्ञके योग्य पदार्थ' का १ नाम है ।

तदिति ॥ तस्य यज्ञस्य क्रियामर्हति । 'अर्हः' (३।२।१२) इत्यच् ॥ * ॥ यज्ञमर्हति । 'यज्ञर्त्विग्भ्याम्–' (५।१।७१) इत्यत्र 'तत्कर्मार्हतीति' इत्युपसंख्यानाद् घ ॥ (१) ॥ * ॥ एकं 'क्रतुक्रियासंपादनयोग्यद्विजद्रव्यादे' । 'त्रिषु' इति यज्ञियाद्विवृतम् ।

अथ क्रतुकर्मेष्टम्

इष्टम् (न), 'यज्ञ कार्य, दान देने' का १ नाम है ।

अथेति ॥ क्रतुश्च यज्ञः, कर्म च दानादि तदिष्टशब्दवाच्यम् । यजनम् । 'नपुंसके भावे क्त.' (३।३।११४) । 'इष्टं यागे च दाने च वाञ्छितेऽपि प्रयुज्यते' इत्यजयः । 'एकाग्निकर्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते' (      ) इति मनु । 'इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि' (इति मेदिनी ३३।२)॥ (१) ॥ * ॥ एवम् 'इष्टकर्मण.' ।

पूर्तं खातादिकर्मणि ।

पूर्तम् ( न ), 'बावली, कुआँ, तालाब आदि खुदवाने तथा औषधालय, देवालय आदि बनवाने' का १ नाम है ।

प्विति ॥ खातं पुष्करिणीखननमादिर्यस्य देवालयारामादिनिर्माणस्य । खातादि च तत्कर्म च क्रिया तस्मिन् । पूरणम् । पूर्यन्ते स्म वा । 'पॄ पालनपूरणयो.' ( जु० प० से० ) । भावे (३।३।११४) कर्मणि(३।२।१०२)वा क्त । 'न ध्याख्या–'(८।२।५७)इति निष्ठानत्व न । 'पुष्करिण्य. सभावापीदेवतायतनानि च । आरामाश्च विशेषेण पूर्तं कर्म विनिर्दिशेत्' इति स्मृति (      ) । 'पूर्तं त्रिषु पूरिते स्यात्क्लीब खातादिकर्मणि ।' ( इति मेदिनी ५६।३६ )॥ (१) ॥ * ॥ एकं 'पूर्तकर्मण.' ।

अमृतं विघसो यज्ञशेषभोजनशेषयो ॥ २८ ॥

अमृतम् ( न ),'यज्ञसे बचे हुए हविष्य' का १ नाम है ।

विघसः ( पु ), 'ब्राह्मण, अतिथि आदिके भोजनके बाद बचे हुए अन्न' का १ नाम है ।

अम्रिति ॥ अमृतमिव । अमृतसाधनत्वात् । 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयो ॥ अमृता मागधीपथ्यागुडूच्यामलकीषु च ।' [इति मे०, ५९।७७-७८] ॥ (१) ॥ * ॥ विशिष्टैरद्यते । 'अद भक्षणे' ( अ० प० अ० ) । 'उपसर्गेऽद.' (३।३।५९) इत्यप् । 'घञपोश्च' (२।४।३८) इति घस्लृ ॥ (१) ॥ * ॥ यज्ञस्य शेषो होमावशिष्टाज्यपुरोडाशादि । देवपितृतिथिगुर्वादिभुक्तस्य शेष । तयो । 'यज्ञियशेषस्य' क्रमेणैकैकम् ।

त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहति ।

त्यागः ( पु ), विहापितम् , दानम् , उत्सर्जनम् , विसर्जनम् ,विश्राणनम् , वितरणम् , स्पर्शनम्, प्रतिपादनम्, प्रादेशनम्, निर्वपणम् , अपवर्जनम्, ( ११ न), अंहतिः (स्त्री) 'दान देने' के १२ नाम हैं।

त्यजेति ॥ त्यजनम् । 'त्यज हानौ' (भ्वा० प० अ०) । घञ् (३।३।१८) । 'त्यागो दाने च वर्जने' ( इति मेदिनी २२।६) ॥ (१) ॥ * ॥ विहायनम् । हाको ( जु० प० अ० ) ण्यन्ताद्भावे क्त ( ३।३।११४ ) ॥ ( २ ) ॥ * ॥ दत्तम् । दाञ् (जु० प० अ०) भावे ल्युट् (३।३।११५)। 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु'इति विश्व (८५।६), ( मे० ८३।१० ) ॥ (३) ॥ * ॥ सृजे (तु० प० अ०) च ल्युट् (३।३।११५) ॥(४) ॥ * ॥ 'विसर्जनं परित्यागे दाने संप्रेषणेऽपि च' (इति मेदिनी ९८।१०६) ॥ (५) ॥ * ॥ विपूर्वात् 'श्रणु दाने' इति चुरादेश्च ॥ (६) ॥ * ॥ वितरतेश्च ॥ ॥ * ॥ ( ७ ) ॥ 'स्पृश संस्पर्शे' ( तु० प०

अ०) । 'स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्' इति मेदिनी (९३।४७) ॥ (८) ॥*॥ पद गतौ'(दि० आ० अ०) । ण्यन्त । प्रतिपादनं तु दाने च प्रतिपत्तौ प्रबोधने' इति मे० (१००।३७)॥(९) ॥*॥ 'विश अतिसर्जने' (तु० उ० अ०) ॥ (१०) ॥*॥ 'डुवप्' (भ्वा० उ० अ०) ॥ (११) ॥*॥ 'वृजी वर्जने' (अ० आ०, रु० प०, चु० उ० से०) ॥(१२)॥*॥ हन्ति दुरितमनया । 'हन्तेरंह च' (उ० ४।६२) इत्यति । 'अंहतिस्त्यागरोगयो' इति हैम (३।२५६) ॥ (१३)॥*॥ त्रयोदश 'दानस्य'।

**मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् ॥३०॥**

और्ध्वदैहिकम् (न) 'मरे हुएके उद्देश्यसे मरनेके दिनसे एकादशाह तक दिये हुए पिण्ड-दान आदि' का १ नाम है।

त्रिति ॥ मृतायेदम् । 'अर्थेन नित्यसमास '(२।१।३६)। तच्च तदहश्च । 'तस्याह ' इति वा । 'राजाह –' (५।४। ९१) इति टच । तदहे = प्रेतदिने । देहादूर्ध्वम् ऊर्ध्वदेह । राजदन्तादि (२।२।३१) ऊर्ध्वदेहे भवम् । अध्यात्मादित्वात् (वा० ४।३।६०) ठञ । अनुशतिकादित्वात् ( ७।३। २०) उभयपदवृद्धि ॥*॥ केचिदुत्तरपदवृद्धि नेच्छन्ति ॥ (१) ॥*॥ प्रेतमुद्दिश्य मरणदिनमारभ्य सपिण्डीकरणपर्यन्त प्रत्यह दीयमानस्य जलपिण्डादेरेकम् । 'तदहर्दानम्' इति पाठे तु समासान्तविधेरनित्यत्वान्न टच् । 'और्ध्वदैहिकदानस्य' एकम् ।

**पितृदानं निवापः स्यात्**

पितृदानम् ( न ), निवाप (पु), 'सपिण्डीकरणके बाद पितरोंके उद्देश्यसे दिये हुए पिण्ड-दान' का १ नाम है।

पीति ॥ पितृभ्यो दानम् ॥ ( १ ) ॥ * ॥ न्युप्यते, निवपन वा । 'डुवप' (भ्वा० उ० अ०) । कर्मणि (३।३। १९) भावे (३।३।१८) वा घञ् ॥ (२) ॥*॥ द्वे 'सपिण्डनादूर्ध्वं पित्रुद्देशेन दानस्य'।

**श्राद्धं तत्कर्म शास्त्रतः ।**

श्राद्धम् (न), 'श्राद्ध' अर्थात् 'पितरोंके उद्देश्यसे शास्त्रानुसार किये जानेवाले पिण्डदान आदि कार्य' का १ नाम है।

श्रेति ॥ श्रद्धाऽस्त्यस्मिन् । 'प्रज्ञाश्रद्धा–' (५।२।१०१) इति ण ॥ (१) ॥*॥ तेषां पितृणां कर्म । शास्त्रविधानेन ॥*॥ एक 'श्राद्धकर्मण '।

**अन्वाहार्यं मासिकः**

अन्वाहार्यम् (न), मासिक, 'अमावस्याको किये जानेवाले मासिक श्राद्ध' के २ नाम हैं।

अन्वेति ॥ अनु आ ह्रियते । 'हृञ् हरणे' (भ्वा० उ० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (१) ॥*॥ मासे भवम् । 'कालाट्ठञ्' ( ४।३।११ )॥ (२) ॥*॥ 'पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्' ( ३।१२२ ) इति मनु । द्वे 'मासिकस्य'।

**अंशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥**

कुतप (पु न), 'दिनका आठवां हिस्सा, सप्तम मुहूर्त (१४ घटी) के उपरान्त तथा नवम मुहूर्त ( १७-१८ घटी ) के मध्यका श्राद्ध योग्य समय-विशेष' का १ नाम है।

अश इति ॥ पञ्चदशमुहूर्तात्मकस्य दिनस्याष्टमो भाग । कुत्सित तपति । 'तप सतापे' (भ्वा० प० अ०)। 'मज्ञायाम्–' (३।२।४६) इति खच्, '–अनव्ययस्य' (६।३।६६) इत्यनुवृत्तेर्न मुम् ( ६।३।६७ ) । यद्वा–कु भुव तपति। आगमशास्त्रस्यानित्यत्वान्न मुम् । 'दिवसस्याष्टमे भागे मन्दी भवति भास्कर । स काल कुतपो ज्ञेय पितृणा दत्तमक्षयम्' इति शातातप । 'कुतपोऽस्त्रिया दौहित्रे वाद्ये छागजकम्बले । कुपो दिनस्याष्टमांशे ना सूर्ये कुणपी पुन । विट्सारिकायाम्' (इति मेदिनी १०३।१९-२०) ॥(१)॥*॥ एकम् 'अह्नोऽष्टमभागस्य'।

**पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।**

पर्येषणा, परीष्टि (२ स्त्री), महे० मतसे 'श्राद्धमें ब्राह्मणों की सेवा करने' के २ नाम हैं। अन्वेषणा, गवेषणा (२ स्त्री), महे० मतसे 'धर्मान्वेषण करने' के २ नाम हैं, भा० दी० मत से चारों धर्मान्वेषण के नाम हैं।

पेति ॥ 'इषेरनिच्छार्थस्य' ( वा० ३।३।१०७ ) युच् 'परेर्वा' (वा० ३।३।१०७)॥ (१) ॥*॥ पक्षे क्तिन् (३। ३।९४) ॥( २ )॥*॥ पक्षे क्तिन्(३।३।९४)। 'परीष्टि परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम्' इति मेदिनी(३७। ४८) ॥ (२) ॥*॥ (३) ॥*॥ 'गवेष मार्गणे' । चुरादिण्यन्ताद्युच् ( ३।३।१०७ ) ॥ (४) ॥*॥ चत्वारि 'धर्माद्यन्वेषणस्य'।

**सनिस्त्वध्येषणा**

सनि , अध्येषणा (२ स्त्री), 'गुरु, पिता, माता आदि श्रेष्ठ जनोंकी सेवा करने और प्रार्थनापूर्वक गुरु आदि श्रेष्ठ जनोंको किसी कार्यमें प्रवृत्त करने' के २ नाम हैं।

सेति ॥ सननम् । 'षणु दाने' (तु० उ० से०) । इन् (उ० ४।११८) ॥ (१) ॥*॥ अध्येषणम् । इषे प्राग्वद्युच् (वा ३।३।१०७) ॥ (२) ॥*॥ द्वे 'गुर्वाद्याराधनस्य'।—गुर्वादे प्रार्थनया क्वचिदर्थे नियोजनस्य—इति स्वामी।

१ 'कुणपी पुन । विट्सारिकायाम्' इत्येव पाठो मेदिन्याम्' । स च 'कुणपी' शब्दार्थकतया न प्रकृतोपयोगी।

**याच्ञाभिशस्तिर्याचनार्थना ॥३२॥**

याच्ञा, अभिशस्तिः, याचना, अर्थना (४ स्त्री),'याचना करने, मांगने' के ४ नाम हैं।

येति ॥ याचनम्। 'टुयाचृ याच्ञायाम्' (भ्वा० उ० से०)। 'यजयाच–' (३।३।९०) इति नङ् ॥ (१) ॥*॥ अभिशंसनम्। 'शंसु स्तुतौ याचने च' (भ्वा० प० से०)। क्तिन् (३।३।९४)। 'अभिशस्ति. पुनर्लोकापवादे प्रार्थितेऽपि[१] च' इति हैम' (३।१०३)॥*॥ स्वामी तु—अभिपसनम्। 'पस स्वप्ने' (अ० प० से०)। क्तिन् (३।३।९४)। सुषामादित्वात् (८।३।९८) 'पूर्वपदात्' (८।३।१०६) इति वा षत्वम्। (अभिषस्ति) ।—इत्यवोचत् ॥ (२)॥*॥ याचे. चुरादि (स्वार्थिक) ण्यन्तात् 'ण्यास–'(३।३।१०७) इति युच् ॥ (३) ॥*॥ एवम् 'अर्थ याच्ञायाम्' (चु० उ० से०)। युच् (३।३।१०७) ॥ (४) ॥*॥ चत्वारि 'याचनस्य'।

**पटतु त्रिषु**

यहां से ६ शब्द त्रिलिङ्ग हैं।

पेति ॥ आगन्तु(श्लो० २१७)पर्यन्ताः षट् त्रिलिङ्गाः।

**अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि।**

अर्घ्यम् (त्रि), 'अर्घ (अर्घ्य देने) के लिये जल' का १ नाम है।

पाद्यम् (त्रि), 'पाद्य (पैर धोने) के लिये जल' का १ नाम है।

अर्घ्येति ॥ अर्घायेदम्। 'पादार्घाभ्यां च' (५।४।२५) इति यत्। अर्घार्थे जले ॥ (१) ॥*॥ पादायेदम् ॥ (१) ॥*॥ (क्रमेण) एकैकम् 'अर्घ्यपाद्ययो'।

**क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥**

आतिथ्यम् (त्रि), 'अतिथियों के निमित्त वस्तु' का १ नाम है।

आतिथेयम् (त्रि), 'अतिथियोंके विषयमें सज्जन (अच्छा व्यवहार करनेवाले)' का १ नाम है।

क्रेति ॥ अतिथय इदम्। 'अतिथेर्ञ्यः' (५।४।२६) ॥ (१) ॥*॥ अतिथौ साधु। 'पथ्यतिथि–' (४।४।१०४) इति ढञ् ॥ (१) ॥*॥ एकैकम् 'आतिथ्यस्य' (अतिथिनिमित्तवस्य, अतिथौ साधौ च क्रमश एकैकं नाम)।

**स्युरावेशिक आगन्तुरतिथिर्ना गृहागते।**

आवेशिकः, आगन्तुः (२ त्रि), अतिथिः (पु, अतिथी स्त्री), 'अतिथि' के ३ नाम हैं।

स्युरिति ॥ 'वेशो वेश्यागृहे गृहे' (नेपथ्ये च) (इति मेदिनी १६३।१४-१५)। अवेशेऽगृहे भव। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ्। 'नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा' (मनु० ३।१०३) ॥ (१) ॥*॥ आगच्छति। 'सितनिगमि–' (उ० १।६९) इति तुन् ॥ (२) ॥*॥ अतति। 'ऋतन्यञ्जि–' (उ० ४।२) इति इथिन्। 'अध्वनीनोऽतिथिर्ज्ञेयः' इति स्मृति ( )। 'अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि[१] च' इति विश्व (७६।१६), (मेदिनी ७३।१४)। 'प्राघुणस्त्वतिथिर्द्वयोः' इति त्रिकाण्डशेष (२।७।९) ॥ (३) ॥*॥ त्रीणि 'गृहागतस्य'।

**पूजा नमस्याऽपचितिः सपर्याऽर्चार्हणाः समाः ॥ ३४ ॥**

पूजा, नमस्या, अपचितिः, सपर्या, अर्चा, अर्हणा (६ स्त्री) 'पूजा' के ६ नाम हैं।

पूजेति ॥ पूजनम्। 'पूज पूजायाम्' (चु० प० से०)। 'चिन्तिपूजि–' (३।३।१०५) इत्यङ् ॥ (१) ॥*॥ नमस्करणम्। 'नमोवरिवस्–' (३।१।१९) इति क्यच्। 'अ प्रत्ययात्' (३।३।१०२) इत्यकारः ॥ (२) ॥*॥ चायनम् 'चायृ पूजानिशामनयो' (भ्वा० उ० से०)। 'चायतेः क्तिनि चिभावो वाच्य' ( )॥(३) ॥*॥ कण्ड्वादौ 'सपर पूजायाम्' इति पठ्यते। यक् (३।१।२७)। 'अ प्रत्ययात्' (३।३।१०२) ॥ (४) ॥*॥ 'अर्च पूजायाम्' (भ्वा० प० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्य ॥ (५)॥*॥ 'अर्ह पूजायाम्' चुरादि। 'ण्यासश्रन्थ–' (३।३।१०७) इति युच् ॥ (६) ॥*॥ षट् 'पूजनस्य'।

**वरिवस्या तु शुश्रूषा परिचर्याप्युपासना।**

वरिवस्या, शुश्रूषा, परिचर्या, उपासना (४ स्त्री), 'शुश्रूषा करने' के ४ नाम हैं।

वेति ॥ वरिवसः करणम्। 'वरिवस्' शब्दः पूजार्थः। 'नमोवरिवस्–' (३।१।१९) इति क्यच्। 'अ प्रत्ययात्' (३।३।१०२) ॥ (१) ॥*॥ शुश्रूषणम्। 'श्रु श्रवणे' (भ्वा० प० अ०)। सन्नंतं। 'अ प्रत्ययात्'(३।३।१०२)॥ ॥ (२) ॥*॥ परिचरणम्। '–परिचर्यापरिसर्या–' (वा० ३।३।१०१)इति परिचर्या निपात्यते। 'परिचर्या तु पर्येष्टिः' इति भागुरिः ॥ (३) ॥*॥ उपासनम्। 'आस उपवेशने' (अ० आ० से०)। 'ण्यास–'(३।३।१०७)इति युच् ॥*॥ 'उपासनम्' इति पाठे—ल्युट् (३।३।११५)। 'उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च' इति विश्व[२] (९२।७०), मेदिनी (९१।७२) ॥ (४) ॥*॥ चत्वारि 'सेवायाः'।

---

१. हैमे ख. ग. पुस्तकयोः '—प्रार्थनेऽपि च' इति पाठः।

१. विश्वे तु '—पुत्रेऽपि कोपे प्राघुणिकेऽपि च' इति भिन्न एव पाठः। मेदिन्यां च 'आगन्तुके त्रिषु' इति पाठः।

२. विश्वे तु '—शुश्रूषायां च हिमने।' इति पाठः।

**व्रज्याटाट्या पर्यटनम्**

व्रज्या, अटाट्या ( २ स्त्री ), पर्यटनम् ( न ), 'घूमने' के ३ नाम हैं।

व्रेति ॥ 'व्रज गतौ' (भ्वा० प० से०) 'व्रजयजो–' (३।३।९८) इति भावे क्यप् ॥(१)॥*॥ अटनम्। 'परिचर्यापरिसर्यामृगयाटाटयानामुपसंख्यानम्' ( वा० ३।३।१०१) । इत्यटाट्या निपातिता ॥ (२) ॥*॥ ल्युट् (३।३।११५) ॥ (३) 'अटा पर्यटनं भ्रमः' इति रत्नकोषादटापि ॥*॥ त्रीणि 'अटनस्य'।

**चर्या त्वीर्यापथस्थितिः ॥ ३५ ॥**

चर्या (स्त्री), 'ध्यान, मौन इत्यादि योगमार्गोंमें स्थित होने' का १ नाम है।

चेति ॥ चरणम्। 'गदमदचरयमश्च' (३।१।१००) इति यत्। यद्वा–'परिचर्या' इत्यत्र 'परि' इत्यस्याविवक्षणात् 'चर्या' इति साधु ॥ ( १ ) ईर्यते 'ईर गतौ' (अ० आ० से० )। ण्यत् ( ३।१।१२४ ) ईर्याया पन्था। 'ऋक्पूर–' ( ५।४।७४ ) इत्य। 'ईर्यापथे ध्यानाद्युपाये परिव्राजकादीनां स्थिते' एकम्।

**उपस्पर्शस्त्वाचमनम्**

उपस्पर्श (पु), आचमनम् (न), 'आचमन करने' के २ नाम हैं।

उपेति ॥ उपस्पर्शनम्। 'स्पृश संस्पर्शे' ( तु० प० अ० )। घञ् ( ३।३।१८ )। यद्वा–उपस्पृश्यन्ते वारीण्यत्र। 'हलश्च' (३।३।१२१ ) इति घञ्। '[1]उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि' [ इति मे० १६५।३२ ] ॥ ( १ ) ॥*॥ 'चमु अदने' ( भ्वा० प० से० ) ल्युट् ( ३।३।११५ )। आचम्यतेऽम्भोऽत्र। अधिकरणे ल्युट् ( ३।३।११७ ) वा ॥ ( २ ) ॥*॥ द्वे 'आचमनस्य'।

**अथ मौनमभाषणम् ।**

मौनम्, अभाषणम् (२ न), 'मौन या चुप रहने' के २ नाम हैं।

अथेति ॥ मुनेः कर्म, भावो वा। 'इगन्ताच्च–' (५।१।१३१ ) इत्यण् ॥ ( १ ) ॥*॥ न भाषणम्। 'भाष व्यक्तायां वाचि' ( भ्वा० आ० से० ) भावे ल्युट् ( ३।३।११५ ) ॥ ( २ ) ॥*॥ द्वे 'मौनस्य'॥

**आनुपूर्वी स्त्रिया वावृत्परिपाटी अनुक्रमः ॥ ३६ ॥**
**पर्यायश्च**

आनुपूर्वी, आवृत्, परिपाटि ( ३ स्त्री ), अनुक्रम, पर्याय (२ पु), 'क्रम' अर्थात् 'सिलसिला' के ५ नाम हैं।

आन्विति ॥ पूर्वं पूर्वम्, पूर्वानुक्रमेण वा। वीप्सायां योग्यतायां वाऽव्ययीभावः ( २।१।६ )। अनुपूर्वं भावः। 'वर्णदृढादिभ्यः–' ( ५।१।१२३ ) इति ष्यञ्। षित्वात् ( ४।१।४१ ) ङीष्। 'हलस्तद्धितस्य' ( ६।४।१५० ) इति यलोपः। 'स्त्रियां वा' इति पक्षे क्लीबता। ( आनुपूर्व्यम् ) ॥ ( १ ) ॥*॥ आवर्तनम्। अत्र वा। 'वृतु वर्तने' ( भ्वा० आ० से० )। संपदादित्वात् क्विप् ( वा० ३।३।१०८ ) ॥ ( २ ) ॥*॥ परिपाटनम्। 'पट गतौ' ( भ्वा० प० से० ) स्वार्थण्यन्तः। 'अच इः' ( उ० ४।१३९ )। द्विवचनस्थानान् यण् ॥ ( ३ ) ॥*॥ अनुक्रमणम्। 'क्रमु पादविक्षेपे' ( भ्वा० प० से० )। घञ् ( ३।३।१८ )। 'नोदात्तोपदेशस्य–' ( ७।३।३४ ) इति न वृद्धिः ॥ ( ४ ) ॥*॥ पर्ययणम्। 'इण् गतौ' (अ० प० अ० )। 'परावनुपात्यय इणः' ( ३।३।३८ ) इति घञ् (अच्) 'पर्यायः प्रकारेऽवसरे क्रमे' [ इति मे० ११९।८९] ॥ (५) ॥*॥ पञ्च 'क्रमस्य'।

**अतिपातस्तु स्यात्पर्यय उपात्ययः।**

अतिपात, पर्यय, उपात्यय (३ पु), 'बिना क्रम' अर्थात् 'बेसिलसिला' के ३ नाम हैं।

अतीति ॥ अतिक्रम्य पतनम्। 'पत्लृ गतौ' ( भ्वा० प० से० )। घञ् ( ३।३।१८ ) ॥ ( १ ) ॥*॥ पर्ययणम्। 'इण् गतौ' ( अ० प० से० )। 'एरच्' ( ३।३।५६ ) ॥ (२) ॥*॥ उपगतस्यातिक्रम्यागमनम्। 'एरच्' ( ३।३।५६ ) ॥ ( ३ ) ॥*॥ त्रीणि 'क्रमोल्लङ्घनस्य'।

**नियमो व्रतमस्त्री**

नियम ( पु ), व्रतम् ( न पु ), 'नियम या व्रत' के २ नाम हैं।

नीति ॥ नियमनम्। 'यम समुपनिविषु च' ( ३।३।६३ ) इत्यप्। 'नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते' [ इति मे० १११।४६ ] ॥ ( १ ) ॥*॥ व्रियते। 'वृञ्' ( स्वा० उ० से० ) 'वृङ्' (क्र्या० आ० से०) वा। 'पृषिरञ्जिभ्यां कित्' ( उ० ३।१११ ) इत्यतः बाहुलकाद्वृञ्वृङ्भ्यामपि। कित्त्वान्न गुणः। यद्वा–व्रजन्त्यनेन स्वर्गम्। 'गोचरसंचर–' ( ३।३।११९ ) इति घः। पृषो-

1 एतस्मात्पूर्वं क्वचित् 'उपस्पृश्यन्ते स्वान्यत्र' इति पाठोऽपि।

1 'परिपाट्यानुपूर्वी स्यात्'—इति हलायुधात् ( ४।५४ ), 'अनुपात्ययः आवृत् स्त्री परिपाट्यानुपूर्व्यपि' इति वैज० ( पु० ९२ श्लो० ११४ ), परिपाट्यानुपूर्व्यावृत् इति हैमात् ( ६।१४० ) च 'परिपाटी' इति दीर्घान्तोऽपि 'कृदिकारादक्तिनः' इति ङीषि बोध्य।

दरादि. ( ६।३।१०९ ) ॥ ( २ ) ॥ * ॥ द्वे 'व्रतमात्रस्य'।

तच्चोपवासादि पुण्यकम् ॥ ३७ ॥

पुण्यकम् ( न ), 'उपासादि शास्त्र-विहित व्रत' का १ नाम है।

तेति ॥ उपवास आदिर्यस्य कृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादे., तदुपवासादि व्रतम्। पुण्यमेव। 'संज्ञायां कन्' ( ५।३।७५ ) ॥ ( १ ) ॥ * ॥ एकं 'उपवासादिविहितव्रतस्य'।

औपवस्तं तूपवासः

औपवस्तम् (न), उपवासः (पु),'उपवास' के २ नाम हैं।

औपेति ॥ उपसनम्। 'वसु स्तम्भे' (दि० प० से०)। भावे क्तः ( ३।३।११४ )। अनेकार्थत्वादभोजने वृत्तिः। प्रज्ञाद्यणि ( ५।४।३८ ) 'औपवस्तम्' ॥ * ॥ क्वचित् 'औपवस्त्रम्' इति पाठ। उपवसति। तृच् ( ३।१।१३३ ) उपवस्तुरिदं कर्म। 'तस्येदम्' ( ४।३।१२० ) इत्यण् ॥ ( १ ) ॥ * ॥ उपवसनम्। 'वस निवासे' ( भ्वा० प० अ० )। घञ् ( ३।३।१८ ) ॥ * ॥ भावे क्ते ( ३।३।११४ ) 'उपोषितम्' ॥ * ॥ उपोषणं तु 'उष दाहे' ( भ्वा० प० से० ) इत्यस्य ॥ ( २ ) ॥ * ॥ द्वे 'भोजनविरहस्य'।

विवेकः पृथगात्मता।

विवेकः ( पु ), पृथगात्मता ( स्त्री ),'प्रकृति और पुरुषके भेद-ज्ञान वा भावोंके पृथक् स्वरूप-ज्ञान' के २ नाम हैं।

वीति ॥ विवेचनम्। 'विचिर् पृथग्भावे' ( रु० उ० अ० )। घञ् ( ३।३।१८ )। 'विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः' [ इति मे० १३।१५९ ]॥ ( १ ) ॥ * ॥ पृथगात्मा यस्य स। तस्य भावः। तल् ( ५।१।११९ ) ॥ ( २ ) ॥ * ॥ द्वे 'प्रकृतिपुरुषादिभेदज्ञानस्य'।

स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः

ब्रह्मवर्चसम् (न), वृत्ताध्ययनर्धिः ( स्त्री ), 'ब्रह्मवर्चस' अर्थात् 'सदाचार और वेदाभ्यासकी वृद्धि या सम्पत्ति'के २ नाम हैं।

स्यादिति ॥ ब्रह्मणो वेदस्य तपसो वा वर्चः। 'ब्रह्महस्तिभ्यां वर्चसः' ( ५।४।७८ ) इत्यच् ॥ ( १ ) ॥*॥ वृत्तं चाचारः, अध्ययनं च गुरुमुखाद्वेदाक्षरग्रहणम्, तयोर्ऋद्धिः ॥ ( २ ) ॥ * ॥ द्वे 'ब्रह्मवर्चसस्य'।

अथाञ्जलिः ॥ ३८ ॥

पाठे [1]ब्रह्माञ्जलिः

ब्रह्माञ्जलिः (पु),'वेदादि पढ़नेके पहले और अन्तमें व्यस्त हाथसे (दहिने हाथसे दहिना और वायें हाथसे वायाँ) गुरुके पैरको छूकर प्रणाम करने' का १ नाम है।

अथेति ॥ ब्रह्मणोऽञ्जलिः ॥ ( १ ) ॥ * ॥ एकं 'वेदपाठकाले कृतस्याञ्जलेः'।

पाठे विप्रुषो ब्रह्मबिन्दवः।

ब्रह्मबिन्दुः ( पु ), 'वेदादि पढ़नेके समय मुखसे निकले हुए जल कण (थूकमिश्रित जलकी छोटी २ बूँद )' का १ नाम है।

पेति ॥ वेदपाठे मुखान्निर्गतबिन्दवः ब्रह्मणो बिन्दवः। ( १ ) ॥ * ॥ एकं 'मुखनिर्गतबिन्दूनाम्'।

ध्यानयोगासने ब्रह्मासनम्

ब्रह्मासनम् ( न ), 'ध्यान और योगके आसन' का १ नाम है।

ध्येति ॥ ध्यानं प्रत्ययैकतानता च, योगश्चित्तवृत्तिनिरोधश्च, तयोरासनम्। यद्वा—ध्यानस्य योग उपायः। ध्यानमेव योगो वा। तस्यासनं स्वस्तिकसिद्धपद्मादि। ब्राह्मणः संबन्धि आसनम्। ( १ ) ॥ * ॥ एकं 'ब्रह्मासनस्य'।

कल्पे विधिक्रमौ ॥ ३९ ॥

कल्पः, विधिः, क्रमः ( ३ पु ), 'शास्त्रोक्त विधि' के ३ नाम हैं।

केति ॥ कल्प्यते, अनेन वा। 'कृपू सामर्थ्ये' ( भ्वा० आ० से० )। अच् ( ३।१।१३४ )। घञ् (३।३।१८) वा। 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' [ इति मे० १०२।२ ] ॥ ( १ ) ॥*॥ वेधनम्। 'विध विधाने' (तु० प० से०)। 'इगुपधात्कित्' (उ० ४।१२०) इतीन्। यद्वा—विधानम्। अनेन वा। धाञः ( जु० उ० अ० )। 'उपसर्गे घोः किः' ( ३।३।९२ )। 'विधिर्ना नियतौ काले विधाने परमेष्ठिनि' [ इति मे० ८०।१७ ] ॥ ( २ ) ॥ * ॥ क्रमणम्। अनेन वा। घञ् ( ३।३।१८-१९ )। 'नोदात्तोप-' ( ७।३।३४ )इति न वृद्धिः। 'क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च' [ इति मे० १०८।४ ] ॥ ( ३ ) ॥ * ॥ त्रीणि विधानस्य'।

---

१. तदुक्तं मनुना—'ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा। संहृत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः'॥ इति ( २।७१ )।

'यती प्रयत्ने' ( भ्वा० आ० से० )। अच् (३।१।१३४)॥ ( २ ) ॥*॥ पवते स्म 'पूङ् पवने' (भ्वा० आ० से०)। 'गत्यर्था–' ( ३।४।७२ ) इति क्त.। 'पूत त्रिषु पवित्रे च शटिते[1] बहुलीकृते' [ इति मे० ९६।३६ ] ॥ ( ३ ) ॥ * ॥ त्रीणि पवित्रस्य'।

पापण्डा- सर्वलिङ्गिनः।

पाखण्ड, सर्वलिङ्गी (२ पु), पाखण्डी अर्थात् 'दुष्ट शास्त्र में स्थित बौद्ध आदि क्षपणक (सन्यासी)' के २ नाम हैं।

पेति ॥ पाप सनोति। षणु दाने ( त० उ० से० )। सनति। 'षण सम्भक्तौ' ( भ्वा० प० से० ) वा। 'अम-न्ताड्ड' ( उ० १।११४ ) पृषोदरादि (६।३।१०९ )। मूर्धन्यमध्य ॥ * ॥ कवर्गद्वितीयमध्य ( पाखण्ड इति ) पाठे तु पाखण्डयति। खडि भेदने' ( चु० प० से० )। अच् ( ३।१।१३४ )। 'पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते। तं खण्डयन्ति ते यस्मात् पाखण्डास्तेन हेतुना॥' ( ) ॥ ( १ ) ॥*॥ सर्वाणि च तानि लिङ्गानि, सर्वेषां लिङ्गानि वा, सर्वलिङ्गानि सन्ति येषाम्। 'अत –' ( ५।२।११५ ) इतीनि ॥ ( २ ) ॥ * ॥ द्वे 'दुःशास्त्र-वर्तिषु'।

पालाशो दण्ड आषाढो व्रते

आषाढ (पु०), 'ब्रह्मचर्यावस्था में ब्राह्मण से धारण किये हुए पलाशके दण्ड'का १ नाम है।

पेति ॥ आषाढी पूर्णिमा प्रयोजनमस्य। विशाखा-षाढादण् मन्थदण्डयोः' (५।१।११०) इत्यण्। 'आषाढो व्रतीना दण्डे मासे मलयपर्वते। स्त्री पूर्णिमायाम्' [ इति मे० ४४।६-७ ] ( १ ) ॥ * ॥ पलाशस्य विकार। 'पलाशादिभ्यो वा' ( ४।३।१४१ ) इत्यञ् ॥ * ॥ व्रते = ब्रह्मचर्ये ॥ * ॥ एक 'पालाशदण्डस्य'।

राम्भस्तु वैणवः ॥ ४५ ॥

राम्भ (पु०), ब्रह्मचर्यावस्था में धारण किये हुए बाँसके दण्ड' का १ नाम है।

रेति ॥ 'रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे' इति मेदिनी। रम्भस्य वेणोर्विकार। प्राग्वदञ् (४।३।१४१)। ( १ ) ॥ * ॥ व्रत इत्येव। अन्यत्र वैणव एव ॥ * ॥ एकम् 'वैणवदण्डस्य'।

अस्त्री कमण्डलुः कुण्डी

कमण्डलु (पु न), कुण्डी (स्त्री), 'कमण्डलु' के २ नाम हैं।

अस्त्रीति ॥ कस्य प्रजापतेर्जलस्य वा मण्ड सारं। तं लाति, लभते वा। मितद्र्वादि ( वा० ३।२।१८० ) मण्डनम्। 'मडि भूषायाम्' ( भ्वा० प० से० ) ॥ (१) ॥ * ॥ षत्व्। कुणति। 'कुण शब्दोपकरणयो' ( तु० प० से० )। 'अमन्ताड्ड' ( उ० १।११४ )। 'जानपद-' ( ४।१।४२ )इति ङीप्। 'कुण्डमग्न्यालये मानभेदे देवज लाशये। कुण्डी कमण्डलो जारात्पतिवत्नीसुते[1] पुमान् ॥ पिठरे तु न ना' [ इति मे० ४०।४-५ ] ॥ (२) ॥*॥ सुतायां तु जातिलक्षणो ङीष् ॥ * ॥ द्वे 'व्रतिनां जलपात्रस्य'।

व्रतिनामासनं बृषी।

बृषी (स्त्री), 'ब्रह्मचारी आदि व्रतियों के आसन'का १ नाम है।

वेति ॥ बुवन्त सीदन्त्यस्याम्। 'अन्येभ्योऽपि-' (वा० ३।२।१०१ ) इति ड। पृषोदरादि ( ६।३।१०९ )। वर्षति सुखं वा। 'वृषु सेचने' ( भ्वा० प० से०)। इगु-पध–' ( ३।१।१३५ ) इति दन्त्यान्ते क। गौरादि (४ १।४१ )। मूर्धन्यान्त ॥ * ॥ 'अतसी बृसी मासी' इत्यन्ते चन्द्रगोमिदर्शनाद्दन्त्यान्तापि (बृसी) ॥(१)॥*॥ एक 'ब्रह्मचार्याद्यासनस्य'।

अजिनं चर्म कृत्तिः स्त्री

अजिनम्, चर्म (२ न), कृत्ति (स्त्री), 'मृगादि के चमड़े' के ३ नाम हैं।

अजीति ॥ अजति, अज्यते वा। 'अज गतौ (भ्वा० प० से०)। 'अजेरज च' (उ० २।४८) इतीनच् ॥ (१) ॥ * ॥ चरति, चर्यते वा। 'चर गतौ'(भ्वा० प० से०)। मनिन् ( उ० ४।१४५ )। 'चर्म कृत्तौ च फलके' [इति मे० ८७।६३ ] ॥ ( २ ) ॥ * ॥ कृत्यते। 'कृती छेदने' ( तु० प० से० )। क्तिन् ( ३।३।९४ )। 'कृत्तिश्चर्मत्व-चोर्भूर्जे कृत्तिकायां द्वय स्त्रियाम्' [ इति मे० ५४।१२ ]॥ ( ३ ) ॥ * ॥ त्रीणि 'मृगादेश्चर्मणि'।

भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥

भैक्षम् (त्रि), 'भिक्षा में मिले हुए पदार्थ' का १ नाम है।

भायिति ॥ भिक्ष्यते। 'भिक्ष याच्ञायाम्' ( भ्वा० आ० से० )। गुरोश्च–' (३।३।१०२) इत्य। भिक्षाणां समूह। 'भिक्षादिभ्योऽण्' ( ४।२।३८ ) ॥ (१) ॥*॥ एक 'भिक्षाद्रव्यस्य'।

---

१ 'शठिते–' इति मेदिनीपाठः। विश्वे '—रटिते—' इति ( ५७।५ )।

१ पत्यौ जीवति सति जारादुत्पन्नाया पुत्र्यामित्यर्थ।

स्वाध्यायः स्याज्जपः[1]

स्वाध्यायः, जपः (२ पु). 'नियम से वेदादिके अभ्यास करने' के २ नाम हैं।

स्वेति ॥ सु अतीव आवृत्त्या अध्ययनम्। 'इङश्च'(३।३।२१) इति घञ्। स्वार्थमध्ययनं वा ॥ (१) ॥*॥ जपनम्। 'जप मानसे च' (भ्वा० प० से०)। 'व्यधजपोः–' (३।३।६१) इत्यप् ॥ (२) ॥*॥ द्वे 'वेदाध्ययनस्य'।

सुत्याभिषवः सवनं च सा।

सुत्या (स्त्री), अभिषवः (पु), सवनम् (न), 'सोमलता (यज्ञौषधि) को कूटने' के ३ नाम हैं।

स्विति ॥ सवनम् ॥ 'षुञ् अभिषवे'(स्वा० उ० से०) 'संज्ञायां समज–' (३।३।९९) इति क्यप् ॥ (१) ॥*॥ 'ऋदोरप्' (३।३।५७)। 'उपसर्गात्–' (८।३।६५) इति षत्वम्। 'अभिषवः स्नाने मद्यसधानयज्ञयो.' (इति मे० १६१।५६) ॥ (२) ॥*॥ 'ल्युट् च' (३।३।११५)। 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' (इति मे० ६३।४५) ॥ (३) ॥*॥ 'सा' इति सुत्या ॥*॥ त्रीणि 'सोमलताकण्डनस्य'।

सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥

अघमर्षणम् (त्रि), 'सब पापोंको नाश करनेवाले जप' (ऋचा आदि), का १ नाम है।

सेति ॥ सर्वाणि एनांसि मानसादिपापानि अपध्वंसयितुं शीलमस्य। 'सुपि–' (३।२।७८) इति णिनि.। जप्यते। 'जप मानसे च' (भ्वा० प० से०)। 'पोरदुपधात्' (३।१।९८) इति यत् ॥*॥ अघं मर्षति। 'मृषु सहने' (भ्वा० प० से०) सहनमभिभवः। यद्वा– मृष्यति। ल्युट् (३।३।११३) स्त्रियां टित्वात् (४।१।१५) ङीप् ॥ (१) ॥*॥ एकम् 'अघमर्षणस्य'।

दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक्।

दर्शः, पौर्णमासः (२ पु), 'अमावास्या और पूर्णिमाको होनेवाले यज्ञ' का क्रमशः १—१ नाम है।

देति ॥ दर्शे अमावास्यायां क्रियमाणत्वादुपचाराद्दर्शशब्देन याग उच्यते। 'पक्षान्तेष्टौ दर्शने च दर्शः सूर्येन्दुसंगमे'। (दर्शस्तु स्यादमावास्या यागभेदावलोकने)' [इति मे० १६३।७] ॥ (१) ॥*॥ पौर्णमास्यां भव.। 'संधिवेलाद्यृतु–' (४।३।१६) इत्यण्। 'पौर्णमास पुमान् यज्ञभेदे स्त्री पूर्णिमातिथौ' (इति मे० १७४।४८) ॥ (१) ॥*॥ पक्षान्तयोरमावास्यापौर्णमास्योः। पृथग् भिन्नौ, न तु पर्याय। 'दर्शपौर्णमासयो' क्रमेणैकैकम्।

शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः[1] ॥ ४८ ॥

यमः (पु), 'जीवनभर शरीरसे करने योग्य संयम' का १ नाम है।

शेति ॥ यच्छति, अनेन वा। यमनं वा। पचाद्यच् (३।१।१३४) 'यम समुपनिविषु च' (३।३।६३) इत्यप् वा। 'यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ। शरीरसाधनापेक्षनित्यकर्मणि संयमे' [इति मे० १०९।२३] ॥ (१) ॥*॥ शरीरमात्रेण साध्यं यावज्जीवं कार्यं सत्यास्तेयाहिंसादि यत् तस्यैकम् 'नैत्यिककर्मण'।

[2]नियमस्तु स यत्कर्माऽनित्यमागन्तुसाधनम्।

नियमः (पु), 'नियम' अर्थात् 'जो कार्य जीवन पर्यन्त नहीं हो सके किन्तु विशेष विशेष समय पर किया जाय उस कार्य' का १ नाम है।

नीति ॥ यत्। कर्म अनित्यं न तु यावज्जीवं कर्तव्यम्, आगन्तुभि कादाचित्कैः कामनया समयविशेषादिभि. साधनैः साध्यमुपवासस्नानजपादि, तत्। नियमः। प्राग्वत्। 'नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते' [इति मे० १११।४६] ॥ (१) ॥*॥ एकं 'नियमस्य'।

[3]उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥

उपवीतम्, ब्रह्मसूत्रम् (२ न), 'बाये कन्धेके ऊपरसे दाहिने तरफ नीचेकी ओर लटकते हुए जनेऊ' के २ नाम हैं।

---

१. हारीतस्मृतौ त्रयो जपभेदा उक्तास्ते यथा—'त्रिविधो जपयज्ञः स्यात्तस्य तत्त्वं निबोधत। वाचिकश्चाप्युपांशुश्च मानसश्च त्रिधाकृति ॥ त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः। यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः। मन्त्रमुच्चारयेद्वाचा जपयज्ञस्तु वाचिक ॥ शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत्। किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः। धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम्। शब्दार्थचिन्तनाभ्यां तु तदुक्तं मानसं स्मृतम् ॥' इति (४।४०-४४)।

१. तदुक्तं योगसूत्रे भगवता पतञ्जलिना—'तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति (२।३०)।

२ तदुक्तं योगसूत्रे—'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः'। इति (२।३२)

३. तदुक्तं छन्दोगपरिशिष्टे—'ब्रह्मसूत्रेऽत्र सव्येंऽसे स्थिते यज्ञोपवीतिता। प्राचीनावीतिताऽसव्ये कण्ठस्थे तु निवीतिता।' इति। मनुश्च—'उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥' इति (२।६३)।

उपेति ॥ प्रोद्धृते वहिष्कृते सति वामस्कन्धार्पितम् । यज्ञस्य सूत्रम् यज्ञार्थं धृतं सूत्रं वा । शाकपार्थिवादि ( वा० २।१।७८ ) ॥ ( २ ) ॥ * ॥ उपवीयते स्म । 'अज गतिक्षेपणयो' ( भ्वा० प० से० )। 'अजेर्व्यघञपो' ( २।४।५६ ) । 'वी गत्यादिषु' ( अ० प० अ० )वा । क्त ( ३।१।१०२ ) । यद्वा— उपाजति स्म । उपवेति स्म वा । 'गत्यर्था–' ( ३।४।७२ ) इति क्त ॥ ( १ ) ॥ * ॥ द्वे 'यज्ञोपवीतस्य' ।

प्राचीनावीतमन्यस्मिन्

प्राचीनावीतम् ( न ), 'दाहिने कन्धे के ऊपर से बायीं तरफ नीचे को लटकते हुए जनेऊ' का १ नाम है।

प्रेति ॥ प्राचीनं प्रदक्षिणम् आवीयते स्म । प्राग्वत् । ( १ ) ॥ * ॥ अन्यस्मिन् वामकरे प्रोद्धृते सति ॥ * ॥ एकं 'विपरीतधृतयज्ञोपवीतस्य' ।

निवीतं कण्ठलम्बितम् ।

निवीतम् (न) 'मालाकी तरह गर्दन से सीधे नीचेकी ओर लटकते हुए जनेऊ' का १ नाम है।

नीति ॥ नि वीयते स्म । प्राग्वत् । नि अधोभावे वीतं गमनमस्य वा 'नि' इति प्रकृते 'राश्यधोभावविन्यासे' [ इति मे० ] ॥ ( १ )॥*॥ कण्ठाल्लम्बितम् ॥ * ॥ एकं 'कण्ठे बहिष्कृते सति ऋजुभावेन ( माल्यवत् ) स्थापितयज्ञसूत्रस्य' ।

अङ्गुल्यग्रे[१] तीर्थं दैवम्

दैवम् ( न ), 'देवतीर्थ' अर्थात् हाथकी अङ्गुलियोंके अगेवाले भाग' का १ नाम है।

अग्रेति ॥ अगुलीनामग्रे । देवानामिदम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । देवो देवताऽस्य 'साऽस्य देवता' ( ४।२।२४ ) इत्यण् । 'देवाद् (यञञौ) अञौ, ( वा० ४।१।८५ ) इत्यञ् वा ॥ ( १ ) ॥ * ॥ एकं 'देवतीर्थस्य' ।

स्वल्पाङ्गुल्योर्मूले[२] कायम् ॥ ५० ॥

कायम् (न) 'कायतीर्थ' अर्थात् 'हाथ की कनिष्ठा अगुली के नीचेवाले भाग' का १ नाम है।

स्वेति ॥ स्वल्पागुल्यो कनिष्ठिकयोरधोभागे । क प्रजापतिर्देवताऽस्य । 'कस्येत्' ( ४।२।२५ ) इत्यण् इदन्तादेशश्च ।– तस्येदम्' ( ४।३।१२० ) इत्यण्—इति मुकुटश्चिन्त्य । 'राग कर्दैवते मुखौ सर्वे स्मस्तभावयो । मनुष्यतीर्थे काय स्यात्' [ इति मे० ११३।१२ ] ॥ (१) ॥ * ॥ एकं 'कायतीर्थस्य' ।

मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यम्[३]

पित्र्यम् (न), 'पितृतीर्थ' अर्थात् 'हाथके अँगूठे और तर्जनी अंगुलीके बीचवाले भाग' का १ नाम है।

मेति ॥ अगुष्ठतर्जन्यो । पितरो देवताऽस्य । 'वाय्वृतुपित्रुपसो यत्' ( ४।२।३१ ) ।—पितृणामिदम् । पैत्रम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण्—इति मुकुट ॥ (१) ॥ * ॥ एकं 'पितृतीर्थस्य' ।

मूले त्वंगुष्ठस्य ब्राह्मम्[४] ।

ब्राह्मम् (न), 'ब्रह्मतीर्थ' अर्थात् 'हाथ के अगूठेके मूलभाग' का १ नाम है।

म्विति ॥ 'हि' अवधारणे । ब्रह्मा देवताऽस्य । 'साऽस्य देवता' ( ४।२।२४ ) इत्यण्, 'ब्राह्मोऽजातौ' (६।४।७१) इति साधु ॥ (१) ॥ * ॥ एकं 'ब्राह्मतीर्थस्य' ।

स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥

ब्रह्मभूयम्, ब्रह्मत्वम्, ब्रह्मसायुज्यम् (३ न),'मोक्ष अर्थात् ब्रह्ममें लीन हो जाने' के ३ नाम हैं।

स्यादिति ॥ ब्रह्मणो भाव । 'भुवो भावे' ( ३।१।१०७ ) इति क्यप् ॥ ( १ ) ॥ * ॥ 'तस्य भावस्त्वतलौ' ( ५।१।११९ ) ॥ ( २ ) ॥*॥ युनक्ति । 'युजिर योगे' ( रु० उ० अ० ) । इगुपध–' ( ३।१।१३५ ) इति क । युजेन सह । 'तेन सह–' ( २।२।२८ ) इति बहुव्रीहि । 'वोपसर्जनस्य' ( ६।३।८२ ) इति सहस्य स । यद्वा—योजनम् । युक् सपदादित्विप ( वा० ३।३।१०८ ) । सह युजा । सयुजस्य सयुजो वा भाव । ब्राह्मणादित्वात् ( ५।१।१२४ ) ष्यञ् । ब्रह्मण सायुज्यम् ॥ ( ३ ) ॥ * ॥ त्रीणि 'ब्रह्मभावस्य' ।

देवभूयादिकं तद्वत्

देवभूयम् (न), आदि (देवत्वम्, देवसायुज्यम्) 'देवता में लीन हो जाने' के ३ नाम हैं।

देवेति ॥ देवस्य भाव । देवभूयमादिर्यस्य । देवत्वम्' 'देवसायुज्यम्' । तद्वत् =ब्रह्मभूयादिवत् त्रिरूप ।

कृच्छ्रं सांतपनादिकम् ।

कृच्छ्रम् (न) 'सान्तपन आदि व्रत' का १ नाम है।

क्रिति ॥ कृन्तति, अनेन वा । 'कृती छेदने (तु० प० से०) । 'कृतेश्छ कू च' (उ० २।२१) इति रक् छोऽन्तादेशश्च । 'कृच्छ्रमारव्यातमाभीले पापशान्तपनादिनो' [इति

१ २ ( अपर भागस्थौ ३ ४ ) तदुक्त मनुना—
'अगुष्ठमूलस्य तले ब्राह्म तीर्थं प्रचक्षते । कायमगुलिमूलेऽग्रे दैवं पित्र्यं तयोरध ॥' इति ( २।५९ ) ।

मे० १२४।११ ] ॥ ( १ ) ॥ * ॥ सम्यक् तपनमत्र । प्रज्ञाद्यण् ( ५।४।३८ ) । यद्वा—संतपति । ल्युट् ( ३।३।११३ ) । तस्येदं कर्म । अण् ( ४।३।१२० ) । 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम्' ( मनुः ११।२१२ ) आदिना चान्द्रायणप्राजापत्यपराकादिग्रहः । एकं 'प्रायश्चित्तस्य'।

संन्यासवत्यनशने पुमान् प्रायः

प्रायः ( पु ), 'संन्यास-पूर्वक भोजन को छोड़ने' का १ नाम है।

समिति ॥ सम्यक् न्यासः आत्यन्तिकस्त्यागः । तद्युक्ते ऽनशनेऽभोजने । प्रकृष्टमयनम् । 'इण् गतौ' ( अ० प० अ० ) । 'एरच्' ( ३।३।५६ ) । 'अय गतौ' ( भ्वा० आ० से० ) । घञ् ( ३।३।१८ ) । 'प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः' [ इति मे० ११५।३६ ] ॥ (१) ॥ * ॥ एकं 'प्रायोपवेशस्य'।

अथ वीरहा ॥ ५२ ॥

नष्टाग्निः

वीरहा, नष्टाग्निः ( २ पु ), 'प्रमादसे जिस अग्निहोत्री की आग बुझ गयी हो उस अग्निहोत्री'के २ नाम हैं।

अथेति ॥ वीरोऽग्निः । तं हन्ति । 'क्विप् च' ( ३।२।७६ ) ॥ ( १ ) ॥ * ॥ नष्टोऽग्निर्यस्य ॥ ( २ ) ॥*॥ द्वे 'प्रमादादिना यस्याग्निहोत्रिणोऽग्निर्नष्टस्तस्य'।

कुहना लोभान्मिथ्येर्यापथकल्पना ।

कुहना ( स्त्री ),'दम्भसे ध्यान-मौनादि धारण करने, धन लोभसे मिथ्या धर्माचरण करने' का १ नाम है।

कुविति ॥ कुहनम् । 'कुह विस्मापने' चुरादावदन्तः । 'ण्यासश्रन्थो युच्' ( ३।३।१०७ ) । 'कुहना दम्भजालं स्यात्' इति रत्नकोषः । 'कुहनं मृत्तिकाभाण्डविशेषे काचभाजने । कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु' (इति मे० ८६।५१-५२ ) ॥ ( १ ) ॥ * ॥ मिथ्यातत्त्वे ईर्यापथस्याचारभेदस्य कल्पना संपादना ॥ * ॥ एकं 'दम्भेन कृतध्यानमौनादेः'। 'अर्थलिप्सया मिथ्याधर्माश्रयणस्य वा'।

व्रात्यः संस्कारहीनः स्यात्

व्रात्यः, संस्कारहीनः (२ पु), 'यथोचित समयपर यज्ञोपवीत संस्कारसे हीन द्विजाति (ब्राह्मण, क्षत्रिय और वैश्य)' के २ नाम हैं।

व्रेति ॥ शरीरायासजीवी व्याधादिर्व्रातः, स इव । 'शाखादिभ्यो यः' ( ५।३।१०३ ) । यद्वा—व्रातमर्हति । 'दण्डादिभ्यो यः' ( ५।१।६६ ) ॥ ( १ ) ॥*॥ संस्कारैर्गर्भाधानादिभिरुपनयनादिभिर्वा हीनः ॥ ( २ ) ॥*॥ द्वे 'संस्कारहीनस्य'।

अस्वाध्यायो निराकृतिः ॥ ५३ ॥

अस्वाध्यायः, निराकृतिः ( २ पु ), 'वेदको नहीं पढ़नेवाले' के २ नाम हैं।

अस्वेति ॥ न स्वाध्यायो वेदाध्ययनमस्य ॥ ( १ ) ॥ * ॥ आकृतेरध्ययनचेष्टाया निर्गतः ॥ ( २ ) ॥*॥ द्वे 'वेदाध्ययनरहितस्य'।—चरवार्येकार्थानि—इत्येके।

धर्मध्वजी लिङ्गवृत्तिः

धर्मध्वजी, लिङ्गवृत्तिः ( २ पु ), 'भिक्षा मिलनेके लिये जटा-भस्मादि धारणकर झूठा साधु बननेवाले' के २ नाम हैं।

धेति ॥ धर्मस्य ध्वजश्चिह्नम् । धर्मो ध्वज इव वा । धर्मध्वजोऽस्यास्ति । इनिः ( ५।२।११५ ) ॥ ( १ ) ॥ * ॥ लिङ्गमाश्रमादिचिह्नधारणं वृत्तिर्जीविकाहेतुर्यस्य । ( २ ) ॥ * ॥ द्वे 'भिक्षार्थं जटादिधारिणः'।

अवकीर्णी क्षतव्रतः ।

अवकीर्णी, क्षतव्रतः ( २ पु ), 'नियमसे चलनेवाला ब्रह्मचर्यादि व्रत जिसका बीच ही में भग्न हो गया हो उस ब्रह्मचारी आदि व्रती' के २ नाम हैं।

अवेति ॥ अवकरणम् । 'कॄ विक्षेपे' (तु० प० से०) । 'कॄञ् हिंसायाम्' (क्र्या० उ० से०) वा । भावे क्त ( ३।३।११४ ) । अवकीर्णं विक्षिप्तं हिंसितं वा व्रतमनेन । 'इष्टादिभ्यश्च' (५।२।८८) इतीनिः ॥ (१) ॥*॥ क्षतं खण्डितं व्रतमस्य ॥ (२) ॥*॥ द्वे 'खण्डितब्रह्मचर्यादेः'।

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥

अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।

अभिनिर्मुक्तः, अभ्युदितः ( २ पु ), 'जिसके सोते रहने पर सूर्योदय हो और जिसके सोते रहने पर सूर्यास्त हो उस'का क्रमशः १-१ नाम है।

स्विति ॥ अभि सर्वतः सायंतनेन कर्मणा निश्चयेन मुक्तः, अभि सर्वं सायंतनं कर्म निश्चयेन मुक्तं येन वा ॥ (१) ॥*॥ अभि सर्वत उद् अतिशयेन इतं गतं प्रातस्तनं कर्मास्मात् ॥ ( १ ) ॥*॥ एकैकम् 'अभिनिर्मुक्ताभ्युदितयोः'।

परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥

परिवेत्ता 'बड़े भाईके अविवाहित रहने पर विवाहित छोटे भाई' का १ नाम है।

पेति ॥ परिविन्दति ज्येष्ठं परित्यज्य भार्यां लभते । 'विद्लृ लाभे' (तु० उ० अ०) । 'तृन्तृचौ शंसिक्षदादिभ्यः

सञ्ज्ञाया चानिटौ' ('उ० २।९४)॥(१) ॥*॥ एक 'ज्येष्ठे विवाहरहिते कृतदारपरिग्रहस्य कनिष्ठस्य'।

परिवित्तिस्तु तज्ज्यान्

परिवित्ति ( पु ), 'जिसका छोटा भाई विवाहित हो उस अविवाहित बड़े भाई' का १ नाम है।

पेति ॥ परि वर्जने विन्दति लभते। क्तिच् ( ३।३। १७४) ॥ (१) ॥*॥ तस्य परिवेत्तुः। ज्यायान् ज्येष्ठ ॥*॥ एक 'परिवेत्तुर्ज्येष्ठभ्रातुः'।

विवाहोपयमौ समौ।

तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥

विवाह, उपयम, परिणय, उद्वाह, उपयाम. (५ पु), पाणिपीडनम् ( न ),'विवाह' के ६ नाम हैं।

वीति ॥ विशिष्ट वहनम्। घञ् (३।३।१८)॥ (१) ॥*॥ उपयमनम्। 'यम समुपनिविषु च' ( ३।३।६३ ) इत्यप् ॥ (२)॥*॥ वाद् घञ् ॥(३)॥*॥ परिणयनम्। 'एरच्' (३।३।५६) ॥ (४) ॥*॥ ( उद्वाहस्तु विवाहवत् ) ॥ (५)॥*॥ पाणेः पीडनं ग्रहणम्। 'कृद्योगा च–' (वा० २।२।८) इति समासः ॥ (६) ॥*॥ षट् 'विवाहस्य'।

व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्।

व्यवाय', ग्राम्यधर्म (२ पु), मैथुनम्, निधुवनम्, रतम् (३ न), 'मैथुन' अर्थात् 'स्त्रीके साथ सम्भोग करने' के ५ नाम हैं।

व्येति ॥ व्यवायनम्। 'इण् गतौ' (अ० प० अ०)। 'एरच्' (३।३।५६)। 'अय गतौ' (भ्वा० आ० से०)वा। घञ् (३।३।१८) वा ॥ (१) ॥*॥ ग्रामे भवः 'ग्रामाद्यखञौ' (४।२।९४)। ग्राम्याणां जनानां धर्मः ॥(२)॥*॥ मिथुनस्य कर्म। 'प्राणभृज्जाति–' (५।१।१२९) इत्यण्। युवादित्वात् (५।१।१३०) वाऽण् ॥ (३) ॥*॥ नितरां धुवनं हस्तपादादिचालनमत्र ॥ (४)॥*॥ रमणम्। 'नपुंसके भावे क्तः' (३।३।११४)। 'अनुदात्तोपदेश–' (६।४।३७) इति मलोपः ॥ (५) ॥*॥ पञ्च 'मैथुनस्य'।

त्रिवर्गो धर्मकामार्थैः

त्रिवर्ग ( पु ), 'अर्थ धर्म और कामके समुदाय' का १ नाम है।

त्रीणि ॥ त्रयाणां वर्गः समूहः ॥ (१) ॥*॥ धर्मश्च कामश्च अर्थश्च तैः कृत्वा ॥*॥ एक 'त्रिवर्गस्य'।

चतुर्वर्गः समोक्षकैः ॥ ५७ ॥

चतुर्वर्ग ( पु ),'अर्थ, धर्म, काम और मोक्ष के समुदाय' का १ नाम है।

चेति ॥ चतुर्णां वर्गः ॥ (१) ॥*॥ मोक्षेण सहितैर्धर्मकामार्थैः कृत्वा। उपलक्षितो वा ॥ एक 'चतुर्वर्गस्य'।

सबलैस्तैश्चतुर्भद्रम्

चतुर्भद्रम् ( न ), 'सुदृढ अर्थ, धर्म, काम और मोक्षके समुदाय' का १ नाम है।

सेति ॥ बलेन सहितैर्धर्मादिभिः। चत्वारि भद्राणि श्रेष्ठान्यत्र वृन्दे। यद्वा–चत्वारि भद्राणि। 'दिक्सङ्ख्ये सञ्ज्ञायाम्' (२।१।५०) इति समासः। ('भद्रं स्यान्मङ्गले हैम्नि मुस्तके करणान्तरे। भद्रो रुद्रे वृषे रामचन्द्रे मेरुकदम्बयोः॥ हस्तिजात्यन्तरे') 'भद्रो वाच्यवच्छ्रेष्ठसाधुनो' ('भद्रा मन्दाकिनीरास्नाकृष्णानान्तासु कट्फले।') इति विश्वः (१२९।५५-५६) ॥ (१) ॥*॥ एकं 'चतुर्भद्रस्य'।

जन्याः स्निग्धा वरस्य ये।

जन्य. ( पु ), 'समान अवस्थावाले वर के प्रेमी या वधू की पालकी ढोनेवाले' का १ नाम है।

जेति ॥ जनीं वधूं वहन्ति। 'सञ्ज्ञायां जन्याः' (४।४।८२) इति यदन्तो निपातितः ॥ (१) ॥*॥ वरस्य जामातुर्ये स्निग्धास्तत्सखा वयस्यादयः। ('जन्यं हट्टे परीवादसंयुजे, जनके पुनः। जन्यः स्याज्जयनीये च जन्या मातृसखीमुदो. ॥') 'जन्यौ वरवधूज्ञातिप्रियभृत्यहितेषु च' इति विश्वः ( ११५।१३ १४ ) ॥ (१) ॥*॥ 'वरपक्षीयाणाम्'।

इति ब्रह्मवर्गविवरणम् ॥ ७ ॥

---

## अथ क्षत्रियवर्गः ॥ ८ ॥

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्।

मूर्धाभिषिक्त, राजन्य, बाहुज, क्षत्रिय, विराट् (५ पु) 'क्षत्रिय' के ५ नाम हैं।

म्विति ॥ मूर्धन्यभिषिक्तः। राज्यदानसमये मूर्धन्यभिषिच्यते। तत्प्रभवत्वात्सर्वोऽपि मूर्धाभिषिक्तः (१)॥*॥ राज्ञोऽपत्यम्। 'राजश्वशुराद्यत्' ( ४।१।१३७ )। 'ये चाभावकर्मणोः '(६।४।१६८) इति प्रकृत्या। यद्वा–राजते। 'राजृ दीप्तौ' ( भ्वा० उ० से० )। 'राजेरन्यः' (उ० ३। १००) ॥ (२) ॥*॥ बाहुभ्यां जातः। 'पञ्चम्यामजातौ' (३।२।९८) इति डः। बाह्वोर्जातो वा। 'सप्तम्यां जनेर्डः'

---

१ 'तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ' इत्युणादिसूत्रस्थोऽयं धातुः 'शकलीकरणे भक्षणे च' सि० कौ० पठितः।

( ३।२।९७ )। 'बाहुजः क्षत्रिये वीरे स्वयंजाततिलेऽपि च' इति विश्वः (३४।१९) मेदिनी (२१।२७)च ॥ (३) ॥*॥ क्षदति। 'क्षद संवरणे' सौत्र धातुः (उ० ४।१९९)। क्षतात्त्रायते वा। पृषोदरादिः (६।३।१०९)। क्षत्त्रस्यापत्यम्। 'क्षत्त्राद्धः' (४।१।१३८) ॥ (४) ॥*॥ विशेषेण राजति। 'सत्सूद्विष–' ( ३।२।६१ ) इति क्विप् ॥ (५) ॥*॥ पञ्च 'क्षत्रियस्य'।

**राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥**

राजा, राट्, पार्थिवः, क्ष्माभृत्, नृपः, भूपः, महीक्षित्, (७ पु), 'राजा' के ७ नाम हैं।

रेति ॥ राजति। 'कनिन् युवृषि–' (उ० १।१५६) इति कनिन्। 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यात्' (इति मे० ९१।१३५) ॥ (१) ॥*॥ 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥(२) ॥*॥ 'पृथिव्या ईश्वरः'। 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यनुवर्तमाने 'तस्येश्वरः' ( ५।१।४२ ) इत्यञ्। 'पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत्' ('पार्थिवी स्यात् क्षमायां च') (इति विश्वः १६६।५०)। 'पार्थिवो नृपे। पार्थिवी स्यात्तु सीतायां पृथिव्या विकृतौ त्रिषु' (इति मे० १६०।४२-४३) ॥ (३) ॥*॥ क्ष्मां बिभर्ति। क्विप् (३।२।७६)। तुक् (६।१।७१) ॥*॥ 'क्ष्माभुक्' इति पाठे क्ष्मां भुनक्ति पालयति। क्विप् (३।२।७६) ॥ ( ४ ) ॥ नॄन् पाति। 'पा रक्षणे' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः ॥ (५)॥*॥ भुवं पाति ॥(६)॥*॥ महीं क्षियति। 'क्षि निवासगत्योः' ( तु० प० अ० ) मह्या क्षियति वा। 'क्षि क्षयैश्वर्ययो' (भ्वा० प० अ०)। क्विप् (३।२।७६)। तुक् (६।१।७१) ॥ (७) ॥*॥ सप्त 'राज्ञः'।

**राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः।**

अधीश्वरः ( पु ), 'सब तरफ के राजाओंको वशमें करने वाले राजा' का १ नाम है।

रेति ॥ संलग्नोऽन्त एकदेशोऽस्याः। 'प्रादिभ्यो धातुजस्य–' (वा० २।२।२४) इति समासः। समन्तायाः स्वदेशाव्यवहितभूमेरिमे राजानः। 'तस्येदम्' (४।३।१२०) इत्यण्। प्रणता अशेषाः सामन्ताः स्वदेशानन्तरराजा यस्य ॥*॥ अधिक ईश्वरः ॥ ( १ ) ॥*॥ एकं 'सर्वसंनिहितनृपवशकारिणः'।

**चक्रवर्ती सार्वभौमः**

चक्रवर्ती, सर्वभौम' (२ पु), 'चक्रवर्ती राजा' अर्थात् 'समुद्र-पर्यन्त पृथ्वीकी रक्षा करनेवाले राजा' के २ नाम हैं।

चेति ॥ चक्रे भूमण्डले राजमण्डले वा वर्तितुं शीलमस्य। 'सुपि–'(३।२।७८) इति णिनिः। 'चक्रं गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः। ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि ॥ अम्भसामपि चावर्ते' इति विश्वः ( १२९।४९-५० )। यद्वा–चक्रं सैन्यं वर्तयितुं सर्वभूमौ चालयितुं शीलमस्य। अवश्यं वा चक्रं वर्तयति। 'आवश्यका–' (३।३।१७०) इति णिनिः ॥ (१) ॥*॥ सर्वभूमेरीश्वरः। 'तस्येश्वरः' (५।१।४२) इत्यण्। अनुशतिकादिः (७।३।२०)। 'सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि' इति विश्व-( ११४।५४ ), मेदिन्यौ (११२।६६) ॥ (२) ॥*॥ द्वे 'समुद्रपर्यन्तभूमीश्वरस्य'।

**नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥**

मण्डलेश्वरः ( पु ), 'मण्डल या देशका शासन करने वाले राजा' का १ नाम है।

पेति ॥ मण्डलस्य भूम्येकदेशस्य ईश्वरः। 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च'('कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि भुजङ्गभेदे, शुनि मण्डलः स्यात् ॥' ) इति विश्वः (१५५।८१) ॥ (१) ॥*॥ एकं 'माण्डलिकस्य'।

**येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः।**

**शास्ति यश्चाज्ञया राज्ञः स सम्राट्**

सम्राट् ( पु ) भा० दी० मतसे, 'जिसने राजसूय यज्ञ किया हो, मण्डल का स्वामी हो और सब राजाओं को जीत, कर अपने वश में कर लिया हो उस राजा' का १ नाम है।

येनेति ॥ सम्यग् राजति। 'सत्सू–' (३।२।६१) इति क्विप्। 'मो राजि सम: क्वौ' (८।३।२५) ॥ (१)॥*॥ एकं 'सार्वभौमविशेषस्य'॥ केचित्तु पृथक् त्रीणि नामान्याहुः। राजसूयकर्ता सम्राट्। द्वादशराजमण्डलस्येश्वरोऽपि सम्राट्। सर्वनृपतीनां शासकोऽपि सम्राट्।

**अथ राजकम् ॥ ३ ॥**

**राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्।**

राजकम् ( न ), 'राजसमूह' का १ नाम है।

राजन्यकम् ( न ), 'क्षत्रियोंके समुदाय' का १ नाम है।

अथेति ॥ राज्ञां समूहः। 'गोत्रोक्षोष्ट्रोरभ्र–' (४।२।३९) इति वुञ् ॥ (१) ॥*॥ राजन्यानां समूहः। प्राग्वत् ॥ (१) ॥*॥ एकैकं (क्रमेणैकैकं राज्ञां क्षत्रियाणां च समूहस्य) 'राजसमूहस्य'।

**मन्त्री धीसचिवोऽमात्यः**

मन्त्री, धीसचिवः, अमात्यः (३ पु) 'मन्त्री' अर्थात् 'बुद्धिविषयक सहायता देने वाले मन्त्री' के ३ नाम हैं।

मेति ॥ मन्त्रो गुप्तभाषणमस्यास्ति । 'अत –' ( ५।२।११५) इतीनि । यद्वाऽवश्य मन्त्रयते । 'मन्त्रि गुप्तभाषणे' (चु० आ० से०)। 'आवश्यक–'(३।३।१७०) इति णिनि (१) ॥*॥ धिया धिया वा सचिव सहाय । धीप्रधान सचिवो वा (२) ॥*॥ अमा सह समीपे वा भव । 'अव्ययात्त्यप्' ( ४।२।१०४ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'मन्त्रिण.' ।

अन्ये कर्मसचिवास्ततः ॥ ४ ॥

कर्मसचिवः ( पु ) 'प्रत्येक काममें सहायता देनेवाले मन्त्री' का १ नाम है।

अन्य इति ॥ ततो धीसचिवादन्ये । कर्मसु सचिवा. सहाया. ॥ (१) ॥*॥ एक 'सहायकारिणाम्' ।

महामात्राः प्रधानानि

महामात्र. ( पु ), प्रधानम् ( न पु ), 'प्रधान मन्त्री, राजा के खास सलाहकार' के २ नाम हैं।

मेति ॥ 'मात्रा कर्णविभूषाया वित्ते माने परिच्छदे । (अक्षरावयवे स्वल्पे क्लीब काल्स्न्येऽवधारणे)' (इति मे० १२८।७५-७६)। महती मात्रा येषा ते । 'महामात्र समृद्धे चामात्ये हस्तिपकाधिपे' (इति मे० १४३।२९०) ॥ (१) ॥*॥ प्रकर्षेण धीयन्ते । 'डुधाञ् धारणपोषणयो' ( जु० प० अ० ) । 'कृत्यल्युट –' ( ३।३।११३ ) इति कर्मणि ल्युट् । 'प्रधान स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा' (इति मे० ८८।८५) इति क्लीबत्वम् । पुलिङ्गोऽपि । 'महामात्र प्रधान स्यात्' इति पुरुकाण्डे बोपालितात् ॥ (२) ॥*॥ द्वे 'प्रधानस्य'। त्रीणि कर्मसहायानाम्—इत्येके ।

पुरोधास्तु पुरोहितः ।

पुरोधा, पुरोहित ( २ पु ) 'पुरोहित' के २ नाम हैं।

प्विति ॥ पुरोऽग्रे धीयते। 'पुरसि च'(उ० ४।२३१) इति धाञोऽसि ॥ ( १ ) ॥ * ॥ पुरो धीयते स्म । क्त (३।२।१०२) । 'दधातेर्हि' (७।४।४२)॥(२)॥*॥ द्वे 'धर्माध्यक्षस्य' ।

द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥

प्राड्विवाक , अक्षदर्शक. ( २ पु ), 'व्यवहार (मुकदमे) को देखनेवाले' अर्थात् 'न्यायाधीश' के २ नाम हैं।

द्रेति ॥'ऋणादानादीन्यष्टादश विवादस्थानानि व्यवहारा । तेषा द्रष्टरि निर्णेतरि । प्रच्छनम् । 'क्विब्वचिप्रच्छिश्रि–' ( उ० २।२७ ) इत्युणादिसूत्रेण क्विब्दीर्घौ संप्रसारणाभावाश्च । विवचनम् घञ् (३।३।१८) प्राट् च विवाकश्च । प्राड्विवाकौ प्रश्नविवेकावस्य स्त । अर्शआद्यच् ( ५।२।१२७ ) प्रश्नविचारयो कुशल इत्यर्थ । 'विवादानुगत पृष्ट्वा पूर्ववाक्य प्रयत्नत. । विचारयति येनासौ प्राड्विवाकस्तत स्मृत ' ( ) ॥ (१) ॥*॥ 'अक्ष. कर्षे तुषे चक्रे शकटव्यवहारयो.' ( 'आत्मज्ञे पाशके चाक्ष तुत्थे सौवर्चलेन्द्रिये ।' ) इति विश्व ( १८।२ )। पश्यति । ण्वुल् ( ३।१।१३३ ) । अक्षाणा व्यवहाराणां दर्शक. ॥ (२) ॥*॥ द्वे 'व्यवहाराणा द्रष्टरि' ।

प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।

प्रतीहार., द्वारपाल , द्वास्थ , द्वास्थित , दर्शक (५ पु) 'द्वारपाल, ड्योढीदार' के ५ नाम हैं।

प्रेति ॥ प्रतिहरणम् । घञ् (३।३।१८) । 'उपसर्गस्य घञि–' (६।३।१२२) इति वा दीर्घ । प्रतीहारो अनवारणमस्त्यस्य । अर्शआद्यच् (५।२।१२७)। मुकुरस्तु–प्रतिराभिमुख्ये। राज्ञोऽभिमुख जनान् प्रतिहरति बहि प्रापयति । 'ज्वलितिकसन्तेभ्यो ण ' (३।१।१४०)—इति ण्यास्यत् । तन्न । हृञो ज्वलादावपाठात् । ज्वलादेराकृतिगणत्वाभावाच्च । 'प्रतीहारो द्वारि द्वा स्थे द्वा स्थिताया तु योषिति' इति मेदिनी[1](१४२।२८०) ॥ (१) ॥*॥ द्वार पालयति । 'कर्मण्यण्' (३।२।१) ॥ ( २ ) ॥*॥ द्वारि तिष्ठति । 'सुपि–' (३।२।४) इति क ॥ ( ३ ) ॥*॥ द्वारि तिष्ठति स्म । 'गत्यर्थाकर्मक–' ( ३।४।७२ ) इति क्त । 'द्वा स्थितः, दर्शक ' इति व्यस्त नाम । ('द्वा स्थितो वेत्रधारक ' इति त्रिकाण्डशेष ) । 'स्याद्दर्शको दर्शयिता प्रतीहारोऽपि दर्शक ' इति रुद्र । ( द्वा स्थितस्य दर्शक. इति) समस्त नाम ( इत्यन्ये ) । 'द्वारपो द्वा स्थितादर्शी' इति रभस ॥ (४) ॥*॥(५)॥*॥ पञ्च 'द्वारपालस्य' ।

---

१ तदुक्त मनुना—'तेषामाद्यमृणादान निक्षेपोऽस्वामिविक्रय । सम्भूय च समुत्थान दत्तस्यानपकर्म च ॥ वेतनस्यैव चादान सविदश्च व्यतिक्रम । क्रयविक्रयानुशयो विवाद स्वामिपालयो ॥ सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके । स्तेय च साहस चैव स्त्रीसग्रहणमेव च ॥ स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥' ( ८।४७ ) । एषामेव प्रभेदोऽन्य शतमष्टोत्तर भवेत् । क्रियाभेदान्मनुष्याणा शतशास्त्र निगद्यते ॥' इति नारदवचनेनास्य बहवो भेदास्तेऽत्र विस्तरभिया न लिखिता , अतो जिज्ञासुभिरन्यत्र द्रष्टव्यम् ॥

१ विश्वे 'प्रतीहारप्रतीहार्यौ द्वा स्थे द्वारेऽप्यनन्तरे।' ( १४६।२५५ ) इति भिन्नपाठोपलब्धेरत्रत्यस्य 'विश्वमेदिन्यौ इति पाठस्य स्थाने 'मेदिनी' इत्येव पाठ स्थापित. ।

रक्षिवर्गस्त्वनीकस्थः

रक्षिवर्गः, अनीकस्थः (२ पु), 'राजा आदि के अङ्गरक्षक' के २ नाम हैं।

रेति ॥ अवश्यं रक्षन्ति। 'रक्ष पालने' (भ्वा० प० से०)। 'आवश्यका–' (३।३।१७०) इति णिनि.। रक्षिणां वर्गः ॥ (१) ॥*॥ अनीकेन, अनीके वा तिष्ठति। 'सुपि–'(३।२।४) इति कः। 'अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे। राजरक्षिणि[1]चिह्ने च वीरमर्दनकेऽपि च ॥' इति विश्व-(७७।२९) मेदिन्यौ (७४।६२) ॥ (२)॥*॥ द्वे 'रक्षकगणस्य'।

अथाध्यक्षाधिकृतौ समौ ॥ ६ ॥

अध्यक्षः, अधिकृतः (२ पु), 'अध्यक्ष' के २ नाम हैं।

अधेति ॥ अधिगतोऽक्षं व्यवहारम्। 'अत्यादय.–' (वा० २।२।१८) इति समास.। यद्वा–अध्यक्षति। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। अच् (३।१।१३४)। 'अध्यक्षोऽधिकृते प्रोक्त.[2] प्रत्यक्षे त्वभिधेयवत्' (इति मे० १६७। २९) ॥ (१) ॥*॥ अधिकमुपरि वा क्रियते स्म। क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'व्यापारितस्य'।

स्थायुकोऽधिकृतो ग्रामे

स्थायुकः (पु), 'एक ग्राम के अध्यक्ष' का १ नाम है।

स्थेति ॥ स्थातुं शीलमस्य। 'लषपतपदस्था–' (३।२।१५४) इत्युकञ् ॥ (१) ॥*॥ एकं 'एकग्रामाधिकृतस्य'।

गोपो ग्रामेषु भूरिषु।

गोपः (पु), 'बहुत ग्रामों के अध्यक्ष' का १ नाम है।

गविति ॥ गोपायति। 'गुपू रक्षणे' (भ्वा० प० से०) 'आयादय आर्धधातुके वा' (३।१।३१)। अच् (३।१।१३४)। 'गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामौघाधिकृते पुंसि शारिवास्योषधौ स्त्रियाम्' (इति मे० १०२।५) ॥ (१) ॥*॥ एकं 'बहुग्रामाधिकृतस्य'।

भौरिकः कनकाध्यक्षः

भौरिकः, कनकाध्यक्षः (२ पु), 'सुवर्णके अध्यक्ष' के २ नाम हैं।

भाविति ॥ भूरिणि सुवर्णे नियुक्तः। 'तत्र नियुक्त' (४।४।६९) इति ठक् ॥ (१) ॥*॥ कनकस्याध्यक्षः ॥ (२) ॥*॥ द्वे 'सुवर्णाधिकृतस्य'।

रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥

रूप्याध्यक्षः, नैष्किकः (२ पु), 'टकसाल' (रुपया आदि सिक्का ढालने के कारखाने) के अध्यक्ष' के २ नाम हैं।

रूप्येति ॥ 'रूप्यः स्यात्सुन्दरे त्रिषु। आहतस्वर्णरजते रजते च नपुंसकम्' (इति मे० ११६।५१-५२)। रूप्यस्याध्यक्षः ॥(१)॥*॥ निष्के हेम्नि नियुक्त प्राग्वत्। 'टङ्कपतिर्नैष्किको रजताध्यक्ष.' इति रभसः ॥ (२) ॥*॥ द्वे 'टङ्कादिशालाया नियुक्तस्य'।

अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः।

अन्तर्वंशिकः (पु), 'रनवासमें नियुक्त पुरुष' का १ नाम है।

अन्तेति ॥ अन्तर् अभ्यन्तरो वंशो गृहम्। अन्तर्वंशे नियुक्त। 'तत्र नियुक्त.' (४।४।६९) इति ठक्। संज्ञापूर्वकत्वान्न वृद्धि.। यद्वा अन्तर्वंशोऽस्यास्ति। 'अत इनिठनौ' (५।२।११५) ॥(१)॥*॥ एकं 'अन्त पुराधिकृतस्य जनस्य'।

सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥८॥

सौविदल्लः, कञ्चुकी, स्थापत्यः, सौविदः (४ पु), 'कञ्चुकी' अर्थात् 'राजाओं के पास में या रनिवास में बाहरी रक्षा के लिये बेंतकी पतली छड़ी लिये हुए आने-जानेवाले वृद्ध पुरुष' के ४ नाम हैं।

साविति ॥ सुष्ठु विदन्तं विद्वांसमपि लान्ति वशवर्तिनं कुर्वन्ति। सुविदल्ला = स्त्रिय'। तासामिमे रक्षकाः। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥*॥ कंचुकश्चोलकोऽस्त्येषाम्। इनि (५।२।११५)। 'कञ्चुकी जोङ्गकतरौ महल्ले पन्नगे विटे' इति हैमः (३।३९२) ॥ (२) ॥*॥ तिष्ठन्त्येषु पुरुषा। 'घलर्थे क.' (वा० ३।३।५८) स्थानां दाराणां पतय पालकाः स्थपतय एव। चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञ्। 'स्थपति. कंचुकिन्यपि। जीवेष्टियाजके शिल्पिभेदे ना, सत्तमे त्रिषु' (इति मे० ६६।१६६-१६७) ॥ (३) ॥*॥ सुविदन्ति। 'इगुपध–' (३।१।१३५) इति क.। सुविदा एव। प्रज्ञादित्वात् (५।४।३८) स्वार्थेऽण्। यद्वा-सुवेदनम्। संपदादिक्विप्' (वा० ३।३।१०८)। सुविद् सुज्ञानमस्त्येषाम्। ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण्। यद्वा–सुविदश्चतुराः स्त्रियस्तासामिमे रक्षका.। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (४) ॥*॥ चत्वारि 'राज्ञा स्त्र्यगारे वही रक्षाधिकृतस्य'।

शण्ढो वर्षवरस्तुल्यौ

शण्ढः, वर्षवरः (२ पु) 'नपुंसक, जनखा' के २ नाम हैं।

---

१. विश्वे तु '–रणस्थले गज······। राजरक्षिषु–' इत्येवं पाठः ॥

२. 'पुंसि प्रत्यक्षे–' इति मेदिन्यां पाठः ॥

शेति ॥ शाम्यति शिश्नाभावात् । 'शमु उपशमे' (दि० प० से० )। शमेर्ढः' ( उ० १।९९ ) । "शण्ढ स्यात्पुंसि गोपतौ । शाकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' ( इति मे० ४४।४-५ ) । ( 'शण्डपण्डौ तु सौविदौ। वन्ध्यपुंसोद्वरे' क्लीबे' इति हैम २।१३३ ) ॥ ( १ ) ॥ * ॥ वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० ) वरति । 'वर आवरणे' ( ) वा । अच् (३।१।१३४) । वर्षस्य रेत पातस्य वर । 'ये स्वल्पसत्त्वा' प्रथमा क्लीबाश्च स्त्रीस्वभाविनः। जात्या न दुष्टा कार्येषु ते वै वर्षवरा स्मृता' ( ) ॥ (२) ॥*॥ द्वे 'अत्यन्तान्तर्महल्लकानाम्' ।

सेवकार्थ्यनुजीविनः ।

सेवक, अर्थी, अनुजीवी ( ३ पु ), 'सेवक, नौकर' के ३ नाम हैं।

सेवेति ॥ सेवते । सेवृ सेवने' (भ्वा० आ० से०) । ण्वुल् ( ३।१।३३ ) । सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि' (इति मे० १४।१७१) ॥ (१) ॥*॥ अर्थोऽसन्निहितोऽस्यास्ति । 'अर्थाच्चासन्निहिते' (वा० ५।२।१२५) इतीनि । 'अर्थी पुमान् याचके स्यात्सेवके च विवादिनि (इति मे० ८५।३५) ॥ (२) ॥*॥ अनुजीवितुं शीलं । 'सुपि-' (३।२।७८) इति णिनि ॥ ( ३ ) ॥*॥ त्रीणि 'सेवकस्य' ।

विषयानन्तरो राजा शत्रु

शत्रु (पु), 'अपने देश के समीपवाले देश के राजा' का १ नाम है।

शेति ॥ शातयति । शद्लृ शातने' (भ्वा० प० अ०)। ण्यन्त । 'रुशातिभ्यां क्रुन्' (उ० ४।१०४) । 'बहुलमन्यत्रापि' (उ० १।७२) इति णिलुक् ।—शदेः अन्वादयश्च' ( उ० ४।१०२ ) इति रु ह्रस्वश्च—इति मुकुट । तन्न । उक्तरीत्या निर्वाहात् ॥ (१)॥*॥ एक 'स्वदेशाव्यवहितदेश(स्य)स्य राज्ञ' ।

मित्त्रमत परम् ॥ ९ ॥

मित्त्रम् ( न ), 'पूर्वोक्त से भिन्न राजा' का १ नाम है।

मीति ॥ मेद्यति । ञिमिदा स्नेहने' (दि० प० से०) 'अमिचिमिदिशसिभ्य क्त्र' ( उ० ४।१६४ ) ।—'ष्ट्रन्' ( उ० ४।१५९ )—इति मुकुट । तन्न । गुणप्रसङ्गात् । सूत्रस्य सत्त्वाच्च । मित्त्रं सुहृदि न द्वयो । सूर्ये पुंसि स्त्रिया[3] गन्धद्रव्ये दैत्यान्तरे पुमान्' (इति मे० १२८।७७) ॥ (१) ॥*॥ अत पात्रो ॥*॥ एक 'मित्त्रस्य'।

उदासीन परतर

उदासीन (पु), 'उदासीन' अर्थात् 'पूर्वोक्त शत्रु और मित्र के लक्षण से भिन्न राजा' का १ नाम है।

विति ॥ अतिशयित पर परतर । उदास्ते 'आस उपवेशने' (अ० आ० से०) । लट शानच् (३।२।१२४)। 'ईदास' (७।२।८३) इति ईत्वम् ॥(१)॥*॥ एक 'शत्रुमित्राभ्या परस्य राज्ञ' ।

पार्ष्णिग्राहस्तु पृष्ठत ।

पार्ष्णिग्राह (पु), 'राजा के युद्धादि-यात्रा में पीछे से विजेतापर चढ़ाई या योद्धा के पीछे रक्षा करने वाले राजा' का १ नाम है।

पेति ॥ पार्ष्णिं पश्चात्पदं गृह्णाति । कर्मण्यण्' (३।२।१ ) । 'सैन्यपृष्ठे पुमान् पार्ष्णि पश्चात्पदजिगीषयो' इति विश्व[1] ॥ ( १ ) ॥*॥ एक 'जिगीषो पृष्ठभागस्थितस्य राज्ञ' ।

रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद ॥ १० ॥
द्विड्विपक्षाहितामित्त्रदस्युशात्रवशत्रव ।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिन ॥ ११ ॥

रिपु, वैरी, सपत्न, द्विषन्, द्वेषण, दुर्हृद्, द्विट्, विपक्ष, अहित, अमित्र, दस्यु, शात्रव, शत्रु, अभिघाती, पर, आराति, प्रत्यर्थी, ( १९ पु ), 'वैरी' के १९ नाम हैं।

रीति ॥ रपति दोषम् । 'रप व्यक्तायां वाचि' (भ्वा० प० से०) । 'रपेरिच्चोपधाया' (उ० १।२६) इति कु ॥ (१) ॥*॥ वीरस्य कर्म भावो वा । युवादित्वात् (५।१।१३०)-'वरमैथुनिकयो' (४।३।१२५) इति निर्देशाद्वाऽण्। वैरमस्यास्ति । इनि (५।२।११५) ॥ (२) ॥*॥ सपत्नीव । 'व्यन् सपत्ने' (४।१।१४५) इति निर्देशादकार ॥ (३) ॥*॥ इयर्ति विरोधम् । 'ऋ गतौ' (जु० प० अ०)। 'अच इ' (उ० ४।११९) ॥ ( ४ ) ॥*॥ द्वेष्टि । द्विष अप्रीतौ' (अ० उ० अ०) 'द्विषोऽमित्रे' (३।२।१३१) इति शतृ ॥ (५) ॥*॥ द्वेषशील । 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) इति युच् ॥ (६) ॥*॥ दुष्टं हृदयमस्य । सुहृद्दुर्हृदौ मित्रामित्रयो' (५।४।१५०) इति साधु ॥ (७) द्वेष्टि । क्विप् (३।२।६१) ॥ (८) ॥*॥ विरुद्ध पक्षो

१. मेदिन्या सुधन्यादि 'पण्ड —' इति पाठ ।
२ हैमे—सौविदे । वन्ध्यपुंसीट्वरे—' इति पाठ ॥
३. मेदिन्या '—सुरा गन्धद्रव्ये दैत्यान्तरे पुमान्' इति पाठ, एतत्पाठस्वीकारे नात्र प्रकृतोपयोगी, 'सुरा' शब्दस्य विवरणात् ।

१ विश्वे 'पार्ष्णि पाश्चात्यभागे स्यात् पादमूलोन्मदस्त्रियो । सेनापृष्ठे च कुन्त्या च' इति पाठदर्शनादयं पाठ क्वस्त्य इति मृग्यम् ॥

ऽस्य। 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयो.' ('पक्षाश्च परतो वृन्दे बले सखिसहाययो- ॥ पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुंजरे'[१]) ( इति विश्व-१८२.५६, मेदिन्यौ १६६।१८-१९ ) । विविध पक्षोऽस्य वा ॥ (९) ॥*॥ न हितमस्मात् ॥ ( १० ) ॥*॥ अमति गच्छति । 'अम गतौ' ( भ्वा० प० से० ) । 'अम रोगे' ( चु० उ० से० ) 'अमेर्द्विषति चित्' ( उ० ४।१७४ ) । इतीत्रच् ॥ (११) ॥*॥ दस्यति । 'दसु उपक्षये' (दि० प० से०) । 'यजिमनिशुन्धिदसिजनिभ्यो युच्' (उ० ३।२०) बाहुलकादनादेशाय[२] (७।१।१) अभाव ॥ (१२) ॥*॥ शातयति 'शदातिभ्यां त्रुन्' (उ० ४।१०४) ॥(१३) ॥*॥ शत्रुरेव प्रज्ञादण् (५।४।३८) ॥ (१४) ॥*॥ अभिहन्तुं शीलः। 'सुपि–' (३।२।७८) इति णिनिः ॥*॥ 'द्वेष्योऽभियातिरमित्रः' इति रत्नकोशः । तत्राभियातेः क्विप् ( ३।३।१७४) । बाहुलकात्तिर्वा ॥ (१५) ॥*॥ पिपर्ति रोषम् । 'पृ पालनपूरणयो.' (जु० प० से०) । अच् (३।१।१३४) (१६)॥*॥ न राति सुखम् । 'रा दाने' (अ० प० अ०)। क्विप् (३।३।१७४) तिर्वा ॥ (१७) ॥*॥ प्रतिकूलमर्थयितुं शीलः । 'अर्थ याच्ञायाम्' (चु० उ० से०)। 'सुपि–' (३।२।७८) इति णिनिः ॥ (१८)॥*॥ परि दोषाख्याने पन्थयितुं शीलः । 'पथि गतौ' चुरादि । णिनिः ( ३।२।७८) 'परि'शब्दश्च प्रकृते 'दोषाख्याने निरसने पूजाव्याप्त्योश्च भूषणे' ( इति 'मेदिनी) ॥ ( १९ ) ॥*॥ ऊनविंशतिः 'शत्रोः' ।

**वयस्यः स्निग्धः सवयाः**

वयस्यः, स्निग्धः, सवयाः ( ३ पु ),'समान अवस्थावाले मित्र' के ३ नाम हैं।

वेति ॥ वयसा तुल्यः । 'नौवयोधर्म–', ( ४।४।९१ ) इति यत् ॥ (१) ॥*॥ स्निह्यति । 'स्निह प्रीतौ' (दि० प० से०) । 'मतिबुद्धिपूजार्थेभ्यश्च' ( ३।२।१८८ ) इति चाद्वर्तमाने क्तः ॥ (२) ॥*॥ समानं वयोऽस्य । 'ज्योतिर्जनपद–' (६।३।८५) इति समानस्य स' ॥ (३) ॥*॥ त्रीणि 'तुल्यवयसः' ।

**अथ मित्रं सखा सुहृत् ।**

मित्रम् (न), सखा, सुहृत् (२ पु), 'मित्र, दोस्त' के ३ नाम है।

अथेति ॥ मेद्यति । 'ञिमिदा स्नेहने' (दि० प० अ०) 'अमिचिमिदिशसिभ्यः क्त्रः' ( उ० ४।१६४ ) ।—'क्त्रन्' (उ० ४।१६९)–इति मुकुटश्चिन्त्यः' ॥(१) ॥*॥ समानः ख्यायते लोकैः । 'समाने ख्यः स चोदात्त.' (उ० ४।१३७) इनीण्, स च डित् । टिलोप' ( ६।४।१४३ ) । 'नो ख्यो यलोप.' इत्यतोऽनुवर्तनाद्यलोप समानस्य सभावः ॥ (२) ॥*॥ शोभनं हृदयमस्य । 'सुहृद्दुर्हृदौ–' (५।४।१५०) इति साधु ॥ (३) ॥*॥ त्रीणि 'मित्रस्य' ।

**सख्यं साप्तपदीनं स्यात्**

सख्यम् , साप्तपदीनम् ( २ न ), 'दोस्ती, मित्रता' के २ नाम हैं।

सेति ॥ सख्युर्भाव. कर्म वा । 'सख्युर्यः '(५।१।१२६) ॥ (१) ॥*॥ सप्तभि. पदैरवाप्यते । 'साप्तपदीनं सख्यम्' ( ५।२।२२ ) इति साधु ॥ ( २ ) ॥*॥ द्वे 'सख्युर्धर्मकर्मणो.' ।

**अनुरोधोऽनुवर्तनम् ॥ १२ ॥**

अनुरोध ( पु ), अनुवर्तनम् ( न ), 'अनुकूल रहने' के २ नाम हैं।

अन्विति ॥ अनुगम्य रोधनम् । 'रुधिर् आवरणे' (रु० उ० से०) घञ् ( ३।३।१८ ) ॥ (१) ॥*॥ अनुगम्य वर्तनं चित्ताराधनम् ॥ (२)॥*॥ द्वे 'आराध्यादेरिष्टसंपादनस्य' ।

**यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।**
**चारश्च गूढपुरुषश्च**

यथार्हवर्णः, प्रणिधिः, अपसर्पः, चरः, स्पशः, चारः, गूढपुरुषः ( ७ पु ), 'गुप्तचर, खुफिया' के ७ नाम हैं।

येति ॥ अर्हति । 'अर्ह पूजायाम्' (भ्वा० प० से०) । अच् (३।१।१३४) । यो योऽर्हः । यथार्हं वर्णो रूपमस्य । 'वर्णो स्याद्भेदरूपयो ' इति धरणिः ॥ (१) ॥*॥ प्रकर्षेण निधीयते ज्ञेयमत्र । 'उपसर्गे घो. कि ' ( ३।३।९२ ) 'प्रणिधिर्याचने चरे' (इति हैम. ३।३७४) ॥ (२) ॥*॥ अपसर्पति । 'सृप्लृ गतौ' (भ्वा० प० से) । अच् ( ३।१।१३४) ॥ (३) ॥*॥ चरति । 'चर गतौ' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । 'चरोऽक्षद्यूतभेदे च भौमे

---

१. मेदिन्या तु '–देशादे परतो ···· । चुल्लीरन्ध्रे पतत्रे च वाजे कुञ्जरपक्षयो ।' इति पाठ. ॥

२. अनुनासिकपरयोः 'यु-वु'इत्यनयोरादेशविधानम्य माप्ये सिद्धान्तितत्वादत्र तदभावादेवानादेशस्याभावो बोध्यः ।

३. मेदिन्या 'परिस्यात् सर्वतोभावे वर्जने लक्षणादिषु । पूजालिङ्गनवीप्सासु भूषणव्याधिशोकयो । दोषाख्यानेऽप्युपरमे व्याप्तौ निवसनेऽपि च ॥' (१९०।५७-५८) इति भिन्नरूपपाठदर्शनादयं प्रकृतपाटः कुत्रत्य इति मृग्यम् ।

चारे प्रसे चले' (इति मे० १२५।३०) ॥ ( ४ ) ॥*॥ प्रज्ञाद्यणि (५।४।३८) 'चार' अपि ॥*॥ 'चार पियालवृक्षे स्याद्गतो बन्धावसर्पयो' ( इति मे० १२५।३३ ) ॥ ( ५ ) ॥*॥ स्पशति । 'स्पश बाधनस्पर्शनयो' ( भ्वा० उ० से०) । अच (३।१।१३४) । 'स्पश स्यात्सपराये च प्रणिधावपि पु्स्ययम् । अधितृत्वे सनादो चाप्रधीनज्ञानयोरपि । अतिक्रमे च दण्डे च विनाशे दोपकृच्छ्रयो' ॥ (इति मे० १६३।१६) ॥ (६) ॥*॥ गूढश्चासौ पुरुषश्च ॥ (७) ॥*॥ सप्त 'चारपुरुषस्य' ।

आप्तः प्रत्ययितस्त्रिषु ॥१३॥

आप्त, प्रत्ययित ( २ त्रि ), 'विश्वासपात्र पुरुषादि' के २ नाम हैं।

आप्त इति ॥ आप्यते स्म । 'आप्लृ व्याप्तौ' ( स्वा० प० अ० ) । क्त (३।२।१०२) ॥ ( १ ) ॥*॥ प्रत्ययो विश्वास सजातोऽस्य । 'तदस्य सजातम्–' ( ५।२।३६ ) इतीतच् । 'प्रत्यय शपथे रन्ध्रे विश्वासाचारहेतुषु' इति विश्व ( १२०।६९ ७० ) ॥ ( २ ) ॥*॥ द्वे 'विश्वासाधारस्य' ।

सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥

सांवत्सरः, ज्यौतिषिक, दैवज्ञ, गणक, मौहूर्तिक, मौहूर्त, ज्ञानी, कार्तान्तिक (८ पु),'ज्योतिषी' के ८ नाम हैं।

सावेति ॥ सवत्सर वेत्ति । 'तदधीते तद्वेद' ( ४।२।५९) इत्यण् ॥ (१) ॥*॥ ज्योतिर्नक्षत्रमाद्यधिकृत्य कृतो ग्रन्थ । 'अधिकृत्य कृते ग्रन्थे' ( ४।३।८७ ) इत्यण्, सज्ञापूर्वकत्वान्न वृद्धि । ज्योतिषमधीते वेद वा । 'क्रतूक्थादि–' (४।२।६०) इति ठक् ॥ (२) ॥*॥ दैव प्राक्कृत शुभाशुभ कर्म जानाति । 'आतोऽनुप' ( ३।२।३ ) इति क ॥ (३) ॥*॥ गणयति । 'गण सख्याने' (चु० उ० से०) । ण्वुल् ( ३।१।१३३ ) ॥ (४) ॥*॥ मुहूर्तम् ( अधिकृत्य कृत ग्रन्थम्) अधीते । प्राग्वदण्ठकौ ॥ (५) ॥*॥ ज्ञानमस्यास्ति । इनि ॥ (६) ॥*॥ (५।२।११५) ॥ (७) ॥*॥ कृतान्त वेत्ति । उक्थादिठक् (४।२।६०) ॥ (८) ॥*॥ अष्टौ 'ज्यौतिषिकस्य' ।

तान्त्रिको ज्ञातसिद्धान्त'

तान्त्रिक, ज्ञातसिद्धान्त ( २ पु ), 'सिद्धान्त को ठीक २ जाननेवाले' के २ नाम हैं।

तेति ॥ तन्त्र सिद्धान्तमधीते वेद वा। प्राग्वट्ठक् (४।२।६०) ॥ (१) ॥*॥ ज्ञात सिद्धान्तो येन ॥ (२) द्वे 'तत्त्वार्थज्ञातु' ।

सत्त्री गृहपति' समौ।

सत्री, गृहपति. ( २ पु ), 'अन्नादिको सर्वदा दान करनेवाले गृहस्थ' के २ नाम हैं।

सेति ॥ सत्रमस्यास्ति । इनि ( ५।२।११५ )। 'सत्रमाच्छादने यज्ञे सदादाने च कैतवे' इति विश्व (१२८।२१) ॥ (१) ॥*॥ गृहस्य पति ॥ (२) ॥*॥ द्वे 'सदान्नादिदानवतुर्गृहस्थस्य' ।

लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥

लिपिकर, अक्षरचण, अक्षरचुञ्चु, लेखक (४ पु), 'लेखक, कातिब' के ४ नाम हैं।

लीति ॥ लिपि करोति । 'दिवाविभा–' (३।२।२१) इति ट ॥*॥ एव 'लिबिकर' अपि ॥ (१) ॥*॥ अक्षरैर्वित्त । 'तेन वित्त –' (५।२।५६) इति चणप ॥ (२) ॥*॥ एवम् 'अक्षरचुञ्चु' अपि ॥ (३) ॥*॥ लिखति । 'लिख अक्षरविन्यासे' ( तु० प० से० ) । 'शिल्पिनि ष्वुन्' (३।१।१४५) । ण्वुल् (३।१।१३३) वा ॥ (४) ॥*॥ चत्वारि 'लेखकस्य' ।

लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ।

लिपि, लिबि' ( २ स्त्री ), 'लिखे हुए अक्षर चित्रादि' के २ नाम हैं।

लिखीति ॥ लिख्यते स्म। क्त ( ३।२।१०२ ) ॥*॥ अक्षराणा विन्यास ॥*॥ लिखित चाक्षरविन्यासश्च। अनयो समाहार । तस्मिन् । कर्मधारयो वा ॥*॥ लिप्यते । लिप उपदेहे' (तु० उ० अ०)। 'इक् कृष्यादिभ्य' (वा० ३।३।१०८) । 'इगुपधात् कित्' ( उ० ४।१२० ) इतीन् वा ॥ (१) ॥*॥ '–किलिपिलिबि–' (३।२।२१) इति निर्देशात् पस्य बो वा ॥ ( २ ) ॥ * ॥—'लिबि' सौत्रो धातु —इति मुकुट ॥ (२) ॥*॥ द्वे । चत्वार्येव नामानि—इति केचित् ।—'लिखिताक्षरसस्थाने' इत्येकमेवपदम्—इत्यन्ये । द्वे 'लेखनस्य' ।

स्यात्संदेशहरो दूत'

सदेशहर , दूत ( २ पु ), 'दूत, सन्देश पहुचानेवाले' के २ नाम हैं।

स्यादिति ॥ सदेश वाचिक हरति । 'हरतेरनुद्यमनेऽच्' (३।२।९) ॥ (१) ॥*॥ दवति । दु गतौ' (भ्वा० प० से०) । 'दुतनिभ्या दीर्घश्च' (उ० ३।९०) इति क्त । यद्वा–दूयते स्म । 'दूङ् परितापे' ( दि० आ० से० ) । 'गत्यर्था–' (३।४।७२) इति क्त ॥ (२) ॥*॥ द्वे 'सदेशहरस्य' ।

दूत्यं तद्भावकर्मणी ॥ १६ ॥

दूत्यम् ( न ), 'दूतके काम या भाव' का १ नाम है।

द्विति ॥ दूतस्य भावः, कर्म वा। 'दूतवणिग्भ्यां[1] च' इति यः ॥*॥ ब्राह्मणादित्वात् (५।१।१२४) ष्यञि 'दौत्यम्' अपि। केचित्तु—'दूत्यं तद्भागकर्मणी'—इति पाठं मन्यन्ते। तत्र 'दूतस्य भागकर्मणी' (४।४।१२०) इति यत् (१) ॥*॥ एकं 'दूतकर्मणः'।

अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि।

अध्वनीनः, अध्वगः, अध्वन्यः, पान्थः, पथिकः ( ५ पु ), 'पथिक, राही, मुसाफिर' के ५ नाम हैं।

अध्वेति ॥ अध्वानमलं गच्छति। 'अध्वनो यत्खौ' (५।२।१६) 'आत्माध्वानौ खे' ( ६।४।१६९ ) ॥ (१) ॥*॥ 'ये चाभावकर्मणोः' (६।४।१६८) इति टिलोपो न (२) ॥*॥ अध्वानं गच्छति। 'अन्तात्यन्ताध्व—' (३।२।४८) इति डः ॥ ( ३ ) ॥*॥ पन्थानं नित्यं गच्छति। 'पन्थो ण नित्यम्' (५।१।७६) स्त्रियां पान्था ॥(४)॥*॥ 'पथः ष्कन्' (५।१।७५)। षित्वात् ङीष् ( ४।१।४१ ) पथिकी ॥ (५) ॥*॥ पञ्च 'पान्थस्य'।

स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च।

स्वामी, अमात्यः, सुहृत्, कोशः (४ पु), राष्ट्रम्, दुर्गम्, बलम् ( ३ न ), 'राजा, मन्त्री, मित्र, खजाना, राज्य, किला और सेना' का वाचक क्रमशः १-१ शब्द है, इन सातोंके 'राज्याङ्गम् ( न ), प्रकृतिः ( स्त्री )' ये २ नाम हैं अर्थात् राजा आदि,'' ७ 'राज्याङ्ग और प्रकृति' कहलाते हैं।

पौराणां श्रेणयः ( स्त्री ), अर्थात् 'नगरवासियोंको भी राज्याङ्ग और प्रकृति' कहते हैं; इस तरह 'राज्याङ्ग या प्रकृति' के ८ भेद हैं।

स्वेति ॥ स्वामी राजा।—पुरोहित —इति श्रीधरः। अमात्यो मन्त्री। सुहृद् मित्रम्। कोशो भण्डारः। राष्ट्रं देशः। पर्वतादि दुर्गाणि। बलं सैन्यम् ॥*॥ राजस्य राजकर्मणोऽङ्गानि ॥ (१) ॥*॥ प्रकृष्टं कुर्वन्ति राज्यम्। क्तिच् (३।३।१७४)॥(२) ॥*॥ पौराणां नागराणाम्। श्रयन्ति, श्रीयन्ते वा। 'वहिश्रि—'(उ० ४।५१) इति निः।
एके मुख्याः सजातीयसमूहाः ॥*॥ कामन्दकीये—'स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्। परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते'। 'पौरश्रेणिभिः सहाष्टाङ्गमपि राज्यम्' इति दर्शितम्। द्वे 'राज्याङ्गानाम्'।

संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
षड् गुणाः[1]

सन्धिः, विग्रहः, यानम्, आसनम्, द्वैधम् ( ३ न ) आश्रयः ( शेष ३ पु ), ये ६ 'नीति जाननेवालोंके गुण' हैं।,

---

१. 'सख्युर्यः' इति सूत्रे "दूतवणिग्भ्यां चेति वक्तव्यम्"। दूत्यम्, वाणिज्यम्। "कथं वाणिज्यम्? ब्राह्मणादित्वात्" इति काशिका। "भाष्ये तु "दूतवणिग्भ्यां च" इति नास्त्येव इति तस्मिन्नेव सूत्रे भट्टोजिदीक्षितेन सि० कौ० उक्तम् ॥

१. सन्ध्यादयः षड्गुणा अग्निपुराणस्य ४० तमाध्याये सभेदा उक्तास्तथा हि—"संधिं च विग्रहं यानमासनानि वदामि ते। बलवद्विगृहीतेन संधिं कुर्यान्छिवाय च। कपाल उपहारश्च संतानः संगतस्तथा ॥ उपन्यासः प्रतीकारः संयोग पुरुषान्तर। अदृष्टनर आदिष्ट आत्मापि स उपग्रह। परिक्रमस्तथा छिन्नस्तथा च परदूषणम्। स्कन्धोपनेयः सन्धिश्च सधयः षोडशेरिताः ॥ परस्परोपकारश्च मैत्रः संबधकस्तथा। उपहारश्च चत्वारस्तेषु मुख्याश्च संधयः ॥ बालो वृद्धो दीर्घरोगस्तथा बन्धुबहिष्कृत। भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्। अनेकचित्तमंत्रश्च देवब्राह्मणनिन्दक ॥ दैवोपहतकश्चैव दैवनिन्दक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ स्वदेशस्थो बहुरिपुर्मुक्त कालेन यश्च ह। सत्यधर्मव्यपेतश्च विशति पुरुषा अमी ॥ एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम्। परस्परापकारेण पुंसां भवति विग्रहः ॥ आत्मनोऽभ्युदयाकांक्षी पीड्यमानः परेण वा। देशकालबलोपेत प्रारभेतेह विग्रहम् ॥ राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च। अपहारो मदो मानः पीडा वैषयिकी तथा ॥ ज्ञानात्मशक्तिधर्माणां विघातो दैवमेव च। मित्रार्थं चापमानं च तथा बंधुविनाशनम् ॥ भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम्। एकार्थाभिनिवेशित्वमिति विग्रहयोनय ॥ सपत्न्या वास्तुजं स्त्रीजं वाग्जातमपराधजम्। वैरं पञ्चविधं प्रोक्तं साधनैः प्रशमं नयेत् ॥ किंचित्फलं निष्फलं वा सदिग्धफलमेव च। तदात्वे दोषजननमायत्या चैव निष्फलम् ॥ आयत्यां च तदात्वे च दोषसजननं तथा। अपरिज्ञातवीर्येण परेण स्तोजितोऽपि वा ॥ परार्थं स्त्रीनिमित्तं च दीर्घकालं द्विजैः सह। अकालदैवयुक्तेन बलोद्धतसखेन च ॥ तदात्वे फलसंयुक्तमायत्या फलवर्जितम्। आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा ॥ इतीमं षोडशविधं न कुर्यादेव विग्रहम्। तदात्वायतिसंशुद्धं कर्म राजा सदाचरेत् ॥ हृष्टं पुष्टं बलं मत्वा गृह्णीयाद्विपरीतकम्। मित्रमासारमाक्रन्दो यदा स्युर्दृढभक्तयः ॥ परस्य विपरीतं

समिति ॥ संधानम् । 'उपसर्गे घो किः' (३।३।९२) ॥ ( १ ) ॥ * ॥ विरुद्ध विविधं वा ग्रहणम् । 'ग्रहवृद्–' (३।३।५८) इत्यप् ॥ (१) ॥*॥ यात्यत्र । ल्युट् (३।३।११७) ॥ (१) ॥*॥ आसनम् । 'आस उपवेशने' ( अ० आ० से० ) । ल्युट् ( ३।३।११५) ॥ (१) ॥*॥ द्विप्रकारम् । 'संख्याया विधार्थे धा' ( ५।३।४२ ) । 'द्विन्योश्च धमुञ्' (५।३।४५) ॥ ( १ ) ॥*॥ आश्रयणम् । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'एरच्' ( ३।३।५६ ) ॥ (१) ॥*॥ एतानि षट् गुणशब्दवाच्यानि' ॥

शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।

शक्ति ( स्त्री ), 'शक्ति' अर्थात् 'सामर्थ्य' 'प्रभाव, उत्साह और मन्त्र (गुप्त सलाह)' से होती है अर्थात् 'प्रभावज, उत्साहज और मन्त्रज' ये ३ शक्तियाँ हैं।

शेति ॥ शक्नोति जेतुमनया । 'स्त्रियां क्तिन्' ( ३।३।९४) । शक्तिशब्दवाच्याः ॥*॥ भवत्यनेन । 'श्रिणीभुव –' (३।३।२४) इति घञ् । प्रकृष्टो भावः । उक्तं हि–'कोशदण्डबलं प्रभुशक्तिः' इति ॥ ( १ ) ॥ * ॥ उत्सहतेऽनेन । 'षह मर्षणे' ( भ्वा० आ० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । उक्तं हि 'विक्रमबलमुत्साहशक्तिः' इति ( ) ॥*॥ सन्ध्यादीनां सामादीनां च यथावत्स्थापनम्, न तु ज्ञानबलं मन्त्रशक्तिः ।—'पञ्चाङ्गमन्त्रो मन्त्रशक्तिः' ( ) इत्यन्ये ॥ 'तिसृणां शक्तीनाम्' ॥

क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥१९॥

क्षय (पु), स्थानम् (न), वृद्धि (स्त्री), क्रमशः कृषि आदि अष्टवर्गकी कमी होनेको क्षय, सामान्य रहने को स्थान और बढ़नेको वृद्धि कहते हैं। ये ही तीनों ( क्षय, स्थानम्, वृद्धि ), नीति जाननेवालोंका त्रिवर्ग है। त्रिवर्ग (पु), है।

क्षेति ॥ क्षयनम् । 'एरच्' (३।३।५६) । अष्टवर्गस्यापचयः क्षयः ॥ (१) ॥*॥ उपचयो वृद्धिः ॥ (१) ॥*॥ उपचयापचयाभावः स्थानम् ॥ (१) ॥*॥ 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरबलादानं शून्यानां च निवेशनम्' इत्यष्टवर्गः ( ) ॥ * ॥ त्रयाणां वर्गः ॥ (१) ॥*॥ इति 'नीतिवेदिनां त्रिवर्गः' ॥

स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ।

प्रभावज, प्रताप ( २ पु ), 'प्रताप' अर्थात् 'खजाने तथा शासनसे उत्पन्न तेज' के २ नाम हैं।

स इति ॥ प्रतापयत्यनेन । 'तप संतापे' ( भ्वा० प० अ० ) ण्यन्तः 'पुंसि–' ( ३।३।११८ ) इति घः । प्रतपनं वा। भावे घञ्(३।३।१८)॥(१)॥*॥ भवत्यनेन । 'श्रिणीभुव –' (३।३।२४) इति घञ् । प्रकृष्टो भावः । प्रभवनं वा । भावे घञ् (३।३।१८) ॥ (२) ॥*॥ 'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्य(स्य)सहनं तत्तेजः समुदाहृतम्' इति भरतः (सा० द०)। कोशो धनम्। दण्डो दमः, सैन्यं च । ताभ्यां जातम् । 'पञ्चम्याम्–' (३।२।९८) इति डः ॥*॥ द्वे 'कोशदण्डजतेजसः'।

भेदो दण्डः साम दानमित्युपायचतुष्टयम्[1] ॥ २० ॥

च सदा विग्रहमाचरेत् । विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः ॥ उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम् । परस्परस्य सामर्थ्यविघातादासनं स्मृतम् ॥ अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम् । बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् ॥ द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षितः । उभयोरपि संपाते सेवेत बलवत्तमम् ॥ यदा द्वावपि नेच्छेतां सश्लेषं जातसंविदौ । तदोपसर्पेत्तच्छत्रुमधिकं वा स्वयं व्रजेत् ॥ उच्छिद्यमानो बलिनो निरुपाय-प्रतिक्रियः । कुलोद्भूतं सत्यमार्यमासेवेत बलोत्कटम् ॥ तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता । तत्कारितप्रश्रयिता वृत्तं संश्रयिणः श्रुतम् ॥ इति (२४०।२५-३२) अधिकं तु कामन्दकीयनीतिशास्त्रे वाचस्पत्ये ५२१२-५२१३ तमपृष्ठयोः मनुस्मृत्यां ( ७।१६२-१६८) च द्रष्टव्यं जिज्ञासुभिः ॥

१ तदुक्तम्—"सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥" इति । क्वचित् 'विनिपातप्रतीकारः' इति तृतीयपादो दृश्यते ॥ तदुक्तम्—'उपायाः साम दानं च भेदो दण्डस्तथैव च ।' इति याज्ञ० स्मृ० ( १।३४६ ) । मनु प्रति मत्स्येन सप्तविधा उपायाः उक्तास्तथा हि—'साम भेदस्तथा दानं दण्डश्च मनुजेश्वर । उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥ प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु ।' इति वीरमित्रो० राज० पृ०२८० पूर्वोक्तोपायचतुष्टये भेदस्त्रिविधः, यथा—'स्नेहरागापनयनं संह ( घ ) र्षोत्पादनं तथा । सन्तर्जनं च भेदज्ञैर्भेदस्तु त्रिविधो मतः ॥' दण्डश्चतुर्विध इति मनुः, यथा—'वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं च वधदण्डमतः परम् ॥' इति मनु० (८।१२९), नारदेन तु द्वैविध्यमेव दण्डस्योक्तं यथा —'शारीरश्चार्थदण्डश्च दण्डश्च द्विविधो मतः । शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ॥' इति । साम चतुर्विधमग्निपुराण उक्तम् यथा—'चतुर्विधं स्मृतं साम उपकारानुकीर्तनम् । मिथः सम्बन्धकथनं मृदुपूर्वं च भाषणम् ॥ आयतेर्दर्शनं वाचा तवाहमिति चार्पणम् ।' इति । क्वचित् 'तवाहमिति चार्पणम्' इति चरमः पादः । तत्रैव दानं पञ्चविधमुक्तम्, यथा—

भेदः, दण्डः (पु), साम दानम् (२ न), क्रमशः वैरीके मन्त्री आदिको गुप्तचर आदिके द्वारा फोड़कर अपने पक्षमें लाकर शत्रुको वशमें करनेको भेद १, अपराधियोंके शासन करनेको दण्ड २, मीठे वचन या अन्यान्य उपायोंसे क्रोध दूर करनेको साम ३ और किसी वस्तुके देनेको दान ४ कहते हैं। ये ही चारो नीति जाननेवालों के उपाय हैं। उपायः (पु) है।

भर्विति ॥ भेदनम्। 'भिदिर् विदारणे' (रु० उ० अ०)। घञ् (३।३।२८)। शत्रोरमात्यादीनामुपादम परतो विश्लिष्यात्मसात्करणं भेद. ॥ (१) ॥*॥ दमनम्। 'दमु उपशमे' (दि० प० से०)। 'अमन्ताड्ड.' (उ० १।११४)। दण्ड. शास्तिः ॥ (१) ॥*॥ सामनम्। 'साम सान्त्वप्रयोगे' (चु० उ० से०)। बाहुलकात्कनिम्। यद्वा—स्यति रोषमनेन। 'षोऽन्तकर्मणि' (दि० प० अ०)। 'सातिभ्या मनिन्मनिणौ' (उ० ४।१५३) इति मनिन्। मुकुटस्तु—'सामन्दामन्हेमन्—' इत्यादिना निपात्यते—इत्याह। तन्न। उज्ज्वलदत्तादिषु तादृशसूत्रादर्शनात्। प्रियवचनादिना क्रोधोपशमनं साम। 'परस्परोपकाराणां दर्शनं गुणकीर्तनम्। सम्बन्धस्य समाख्यानमायत्या. संप्रकाशनम् ॥ वाचा पेशलया साधु तवाहमिति चार्पणम्। इति सामविधानज्ञैः साम पञ्चविधं स्मृतम्' ( ) ॥ (१) ॥*॥ स्वधनस्य परेभ्यः प्रतिपादनं दानम् ॥ (१) ॥*॥ उपायवेऽनेन। 'हलश्च' (३।३।१२१) इति घञ्। 'उपाय. सामभेदादौ तथैवोपगतौ पुमान्' (इति मेदिनी)। उपायाना चतुष्टयम्। अन्यत्र सप्तोपाया उक्ता। 'साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिता' ( ) ॥ इति 'उपायचतुष्टयम्'।

**साहसं तु दमो दण्डः**

साहसम् (न), दण्डः, दमः (२ पु), 'दण्ड' के ३ नाम हैं।

सेति ॥ सहसि बले भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। 'साहसं तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धार्ष्ट्ये' इति हैम (३।८०१-८०२) ॥ (१) ॥*॥ दमनम्। 'दमु उपशमे' (दि० प० से०)। घञ् (३।३।१८)। 'नोदात्तोपदेश—' (७।३।३४) इति न वृद्धिः। 'दम स्यात्कर्दमे दण्डे दमने दमथेऽपि च' इति हेमचन्द्रः (२।३२८) ॥ (२) ॥*॥ 'अमन्ताड्ड' (उ० १।११४)। 'दण्डः सैन्ये दमे यमे। मानव्यूहभेदेष्वश्वेऽर्यानुचरे[1] मथि। प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयो.' इति हैम. (२।१२१-१२२) ॥ (३) ॥*॥ त्रीणि 'दण्डस्य'।

"य. संप्राप्तधनोत्सर्ग उत्तमाधममध्यम। प्रतिदानं तथा तस्य गृहीतस्यानुमोदनम् ॥ द्रव्यदानमपूर्वं च तथैवेष्टप्रवर्तनम्। देयं च प्रतिमोक्षश्च दानं पञ्चविध स्मृतम् ॥" एषामुपायानां प्रयोगकालादिकं विविधाचार्य-सम्मता भेदादयश्च वीरमित्रोदयस्थ राजनीतिप्रकाशे (पृ. २७८ तमे) द्रष्टव्याः ॥

**साम सान्त्वम्**

साम, सान्त्वम् (२ न), 'साम, शान्त करने' के २ नाम हैं।

सामेति ॥ साम व्याख्यातम् ॥ (१) ॥*॥ सान्त्वनम्। 'सान्त्व सामप्रयोगे' (चु० प० से०) अदन्तः। 'एरच्' (३।३।५६)। घञ् (३।३।१८) वा ॥ (२)॥*॥ द्वे 'साम्नः'।

*अथो समौ।*

**भेदोपजापौ**

भेदः, उपजापः (२ पु), 'भेद' के नाम हैं।

अथविति ॥ 'भेदो द्वैधे विशेषे स्यादुपजापे विदारणे' (इति विश्व—७८।५, मेदिन्यां ७५।१२) ॥ (१) ॥*॥ उपांशु जपनम्। 'जप व्यक्तायां वाचि' 'जप मानसे च' (भ्वा० प० से०)। घञ् (३।३।१८) ॥*॥ द्वे 'सहतयोर्द्वैधीकरणस्य'।

**उपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥**

उपधा (स्त्री), 'मन्त्री आदिके धर्म, काम और भयादिको जाननेके लिये उनकी राजद्वारा परीक्षा करने' का १ नाम है।

उपेति ॥ उपधीयते बुद्धिज्ञानमत्र। 'डुधाञ्' (जु० उ० अ०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (१) ॥*॥ आद्येन कामार्थभयग्रहः ॥*॥ एकं 'राज्ञा धर्मार्थकामभयैरमात्यादेः परीक्षणस्य'।

**पञ्च त्रिषु**

यहाँसे ५ शब्द त्रिलिङ्ग हैं।

उपेति ॥ नि.शलाकान्ताः पञ्च।

**अपडक्षीणो यस्तृतीयाद्यगोचरः।**

अपडक्षीणः (त्रि) 'केवल दो आदमियोंकी की हुई गुप्त सलाह' का १ नाम है।

अपेति ॥ अविद्यमानानि षड् अक्षीण्यत्र। 'अषडक्षाशितंग्वलंकर्मा—' (५।४।७) इति खः स्वार्थे ॥ (१) ॥*॥ एकं 'द्वाभ्यामेव कृतस्य मन्त्रस्य'।

1. हैमे'—र्यानुचरे—'इति पाठः।

विविक्तविजनच्छन्ननि शलाकास्तथा रहः ॥ २२ ॥
रहश्चोपांशु चालिङ्गे

विविक्त, विजन, छन्न, निःशलाक (४ त्रि), रहः, उपांशु (२ अव्य०), 'एकान्त' के ७ नाम हैं।

वीति ॥ विविच्यन्ति जना अत्र। विचिर् पृथग्भावे' (रु० उ० अ०) ध्रौव्यार्थत्वादगत्यर्थत्वाद्वा 'क्तोऽधिकरणे च-' (३।४।७६) इति क्त। 'विविक्त त्रिष्वसंपृक्ते रहःपूतविवेकिषु। ('वसुनन्दे ना)' इति मे० (६५।१५४)। (१)॥ * ॥ विगतो जनोऽस्मात्॥ (२)॥ * ॥ छद्यते स्म। 'छद अपवारणे' (चु० उ० से०)। क्त (३।२।१०२)। आगमशास्त्रस्यानित्यत्वान्नेट्। 'छिन्न तु रहसि क्लीब छादिते वाच्यलिङ्गकम्' [ इति मे०[1] ] मुकुटस्तु—'वा दान्तशान्त—' (७।२।२७) इति निपातनात्—इत्याह। तन्न। णिजन्तस्य निपातनात्॥ (३) ॥ * ॥ 'शलाका शारिका मदनशारिका' इति पर्याय। 'शल्ये श्वाविच्छलाका स्याच्छवो मदनशारिका' इति तालव्यादौ रभस। निर्गता शलाकाऽप्यस्मात्। शलाकाया निर्गतो वा॥ (४) ॥ * ॥ 'तथा' शब्द समुच्चये ॥ * ॥ रह्यते। रह त्यागे' (भ्वा० प० से०)। असुन् (उ० ४।१८९) यद्वा,-रमन्तेऽत्र। 'देशेऽह च' (उ० ४।२१५) इत्यसुन्। होऽन्तादेशश्च। 'रहस्तत्त्वे रते गुह्ये [ इति मे० १७२।३१ ]। रभसोऽपि—'रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम्' इति॥ (५) ॥ * ॥ (६) ॥ * ॥ उपगता अंशव किरणा अत्र। 'उपांशुजपभेदे स्यादुपांशु विजनेऽव्ययम्' ( इति विश्व—१६९।३० हैम—३।७५५ मेदिन्य १६३।१७ )॥ (७) ॥ * ॥ अलिङ्गे=द्वे अव्यये ॥ * ॥ सप्त 'एकान्तस्य'।

रहस्य तद्भवे त्रिषु।

रहस्यम् (त्रि), 'रहस्य, छिपाने योग्य, सलाह आदि' का १ नाम है।

रेति॥ रहो भवम्। दिगादित्वात् (४।३।५४) यत्। 'रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्' ( इति मे० १२०।१०२ )॥ (१)॥ * ॥ एक 'रहस्यस्य'।

समौ विस्रम्भविश्वासौ

विस्रम्भ, विश्वास (२ पु), 'विश्वास' के २ नाम है।

सेति॥ विस्रम्भणम्। स्रम्भु विश्वासे (भ्वा० आ० से०)। दन्त्यादि। 'तालव्यादिश्च। घञ् (३।३।१८)। 'विश्रम्भ केलिकलहे विश्वासे प्रणयेऽपि[2] च' ( इति विश्व १०९।२८ मेदिन्यो १०७।२० )॥ (१)॥ * ॥ विश्वसनम्। 'श्वस प्राणने' (अ० प० से०)। घञ् (३।३।१८)॥ (२)॥ * ॥ द्वे 'विश्वासस्य'।

भ्रेषो भ्रंशो यथोचितात्॥ २३॥

भ्रेष (पु), 'अनुचित' का १ नाम है।

भ्रेति॥ यथोचिताद् यथाप्राप्तात् भ्रंशोऽध पतनम्। 'भ्रेषृ चलने' (भ्वा० उ० से०)। भ्रेषणम्। घञ् (३।३।१८)॥ (१)॥ * ॥ एक 'भ्रंशस्य'॥

अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम्।

अभ्रेष, न्याय, कल्प (३ पु), देशरूपम्, समञ्जसम् (२ न), 'न्याय' के ५ नाम हैं।

अभ्र इति॥ भ्रेषादन्य॥ (१)॥ * ॥ नियमेन ईयते। 'परिण्योर्नीणो—' (३।३।३७) इति घञ्॥ (२) ॥ * ॥ कल्पनम्। 'कृपू सामर्थ्ये' (भ्वा० आ० से०)। घञ् (३।३।१८)। लत्वम् (८।२।१८)। 'कल्प शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने ( इति मेदिनी )। (३)॥ * ॥ दिश्यते। 'दिश अतिसर्जने' (तु० उ० अ०)। घञ् (३।३।१९)। देशो रूपमस्य। विषमानस्योचितस्य रूपम्। यद्वा—देशनम्। घञ् (३।३।१८)। प्रशस्त देशनं वा। 'प्रशसायां रूपप्' (५।३।६६)॥ (४)॥ * ॥ सम्यगञ्चतोऽत्र। 'अचू प्रत्यन्ववं—' (५।४।७५) इत्यत्र 'अच' इति योगविभागादच्। यद्वा—सम समञ्जसा तत्त्वमत्र। 'ह्रस्वो नपुंसके—' (१।२।४७) इति ह्रस्वत्वम्॥ (५)॥ * ॥ पञ्च 'उचितस्य' ('उचितस्य' इति वाच्यम्)।

युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्॥ २४॥
न्याय्यं च त्रिषु षट्

युक्तम्, औपयिकम्, लभ्यम्, भजमानम्, अभिनीतम्, न्याय्यम् (६ त्रि), 'न्याययुक्त कार्य या द्रव्यादि' के ६ नाम हैं।

य्विति॥ युज्यते स्म। 'युजिर् योगे' (रु० उ० अ०) क्त (३।२।१०२)। 'युक्तो युक्ते पृथग्भूते क्लीब हस्तचतुष्टये' ( इति मे० ५७।४८ )॥ (१) ॥ * ॥

[1] मेदिन्या, 'छिन्न कृत्ते त्रिलिङ्ग स्याद् गुडूच्यामपि योषिति' (८३।५) इति भिन्नपाठादस्योद्धरणवाक्यस्य मूलं मृग्यम्॥

[1] 'तालव्यादिस्तु प्रमादे गत' इति भट्टोजि०। अत एव 'हैमे' विस्रम्भ केलिकलहे विश्वासे प्रणये वधे' (३।४८८) इति दन्त्यमध्य पाठ॥

[2] विश्वे '—भापरोऽपि—' इति पाठ॥

उपयन्त्यनेन। 'एरच्' (३।३।५६)। उपाय एव। 'उपायाद्ध्रस्वश्च' (ग० ५।४।३४) इति ठक् ह्रस्वश्च ॥ (२) ॥*॥ लभ्यते। पोरदुपधात्' (३।१।९८) इति यत्। 'लभ्यं युक्ते च लब्धव्ये' (इति मे० ११६।५३)। (३) ॥*॥ भजते फलमनुबध्नाति। 'भज सेवायाम्' (भ्वा० उ० अ०)। 'ताच्छील्य–' (३।२।१२९) इति इति चानश्। शानच् (३।२।१२४) वा ॥ (४) ॥*॥ अभिनीयते स्म। 'णीञ् प्रापणे' (भ्वा० उ० अ०)। क्तः (३।२।१०२)। अभिनीतेन तुल्यम्। 'अभिनीतं संस्कृतं (ते) च न्याय्ये चामर्षणे (र्षिणि) त्रिषु' इति रुद्रः। 'अभिनीत त्रिषु न्याय्ये संस्कृतामर्षिणोरपि' (इति मे० ६७।१८२) ॥ (५) ॥*॥ न्यायादनपेतम्। 'धर्म-पथ्यर्थ–' (४।४।९२) इति यत् ॥ (६) ॥*॥ युक्तादयः षट् त्रिषु। षट् 'न्यायागतस्य'।

**संप्रधारणा तु समर्थनम्।**

संप्रधारणा (स्त्री), समर्थनम् (न), 'उचित और अनुचितका विचारकर निश्चय करने' के २ नाम हैं।

समिति ॥ सप्रधारणम्। 'धृञ् धारणे' (भ्वा० उ० अ०) ण्यन्तः। 'ण्यास–' (३।३।१०७) इति युच् ॥ (१) ॥*॥ 'अर्थ उपयाच्ञायाम्' (चु० उ० से०) संपूर्वः। ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'इदमुचितमेव इति निश्चयस्य'।

**अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥ शिष्टिश्चाज्ञा च**

अववादः, निर्देशः निदेशः, (३ पु), शासनम् (न), शिष्टिः, आज्ञा (२ स्त्री), 'आज्ञा, हुक्म' के ६ नाम हैं।

अवेति ॥ 'अव अवलम्बने'। कार्यमवलम्ब्य वदनमत्र। वदनम्। घञ् (३।३।१८)। (१) ॥*॥ निर्देशः =कार्यादेशः। घञ् (३।३।१८) ॥ (२) ॥*॥ एवं निदेशः। ('निदेशः शासनोपान्तकथनेषु प्रयुज्यते' इति विश्वः १६९।१६) ॥ (३) ॥*॥ शासेर्ल्युट् (३।३।११५)। ('शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु' इति मे० ९३।४१, विश्वः ८८।४२ च) ॥ (४) ॥*॥ 'क्तिच्क्तौ च संज्ञायाम्'..., 'वितन्नाबादिभ्यः' (३।३।९४) इति क्तिन् ॥*॥ बाहुलकात्तिः। 'शास्ति.' ॥ (५) ॥*॥ आज्ञापनम्। 'ज्ञा अवबोधने' (क्र्या० प० से०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (६) ॥*॥ षट् 'आज्ञायाः'।

**संस्था तु मर्यादा धारणा स्थितिः।**

संस्था, मर्यादा, धारणा, स्थितिः (४ स्त्री), 'उचित मार्गपर रहने' के ४ नाम हैं।

समिति ॥ संतिष्ठतेऽनया। सम्यगवस्थान वा। प्राग्वदङ्। 'संस्थश्चरेऽत्रस्थिते, स्त्री स्थितौ सादृश्यनाशयोः' (इति मे० ७२।१३) ॥ (१) ॥ ॥ 'मर्या' इति सीमार्थेऽव्ययम्, तत्र दीयते। प्राग्वदङ् ('मर्यादा सीमनि स्थितौ' इति मे० ७७।३७) ॥ (२) ॥*॥ धारयति धर्मम्। नन्द्यादिल्यु. (३।१।१३४)। युच् (उ० २।७८) वा। ('धारणी नाडिकायां स्याद्, बुद्धोक्तमन्त्रभिद्यपि') 'धारणाऽऽङ्गे च योगेऽस्य न पुंसि स्याद्विधारणे', इति मेदिनी (४९।५६) ॥ (३) ॥*॥ तिष्ठन्त्यत्र। बाहुलकादधिकरणे क्तिन्। स्थानं वा। 'स्थागापा–' (३।३।९५) इति क्तिन् ('स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि।' इति मे० ५९।७०) ॥ (४) ॥*॥ चत्वारि 'न्याय्यपथस्थितेः'।

**आगोऽपराधो मन्तुश्च**

आगः (न), अपराधः, मन्तुः (२ पु), 'अपराध, कसूर' के ३ नाम हैं।

आग इति ॥ एति। 'इण् गतौ' (अ० प० अ०)। 'इण आगोऽपराधे च' (उ० ४।२१२) इत्यसुन् आगादेशश्च। अगति। 'अग गतौ' (भ्वा० प० से०)। 'सर्वधातुभ्योऽसुन्' इत्यसुन्—इति सुभूतिः। तन्न। उज्ज्वलदत्तादिवृत्तसूत्रस्यादर्शनात्। 'आगोऽपराधे पापे स्यात्' [इति मे० १७१।१५]। 'सान्तं क्लीबम् ॥ (१) ॥*॥ अपराधनम्। 'राध संसिद्धौ' (स्वा० प० अ०) घञ् (३।३।१८) ॥ (२) ॥*॥ मन्यते। 'मन ज्ञाने' (दि० आ० अ०)। 'कमिमनिजनि–' (उ० १।७१) इति तु'। 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' [इति मे० ५७।४३] ॥ (३) ॥*॥ त्रीणि 'अपराधस्य'।

**समे तूद्दानबन्धने ॥ २६ ॥**

उद्दानम्, बन्धनम् (२ न), 'बाँधने या कैद करने' के २ नाम हैं।

उदेति ॥ उत्पूर्वाद् द्यतेर्भावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'बन्ध बन्धने' (क्र्या० प० अ०)। भावे ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'बन्धनस्य'।

**द्विपाद्यो द्विगुणो दण्डः**

द्विपाद्यः (पु), 'दुगुने दण्ड' का १ नाम है।

द्वीति ॥ द्वौ पादौ परिमाणमस्य। 'पणपाद–' (५।१।३४) इति यत्। 'पद्यत्यतदर्थे' (६।३।५३) इति (न)

१. तथा च लक्ष्यम् '—मंहिष्ठे शतमागासि' इति निरु० व० (२।१०८) ॥

पद्भाव । प्राण्यङ्गस्यैव पादस्य तत्र ग्रहणात् ॥ ( १ ) ॥*॥ एक 'अपराधे शास्त्रेण बोधितदण्डाद् द्विगुणदण्डस्य'।

भागधेयः करो बलिः।

भागधेय, कर, बलि (३ पु), 'कर, माल्गुजारी' के ३ नाम हैं।

भेति ॥ भाग एव । नामरूप-' ( वा० ५।४।३५ ) इति धेय ॥ (१) ॥*॥ कीर्यते । 'कृ विक्षेपे' ( तु० प० से०) । 'ऋदोरप्' ( ३।३।५७ ) । 'करो वर्षोपले पाणौ रश्मौ प्रत्यय[1]शुण्डयोः' [इति मे० १२३।१२] । प्रज्ञाद्यणि ( ५।४।३८) 'कारो वधे निश्चये च बलौ रत्ने[2] यतावपि' ('कारस्तुषार शैले च कारा दूत्या प्रसेवके। बन्धने बन्धनागारे हेमकारिकयोरपि ॥' ) [ इति विश्व-१२६।१४-१५, मेदि-यो[3] १२३।१३-१४] ॥ ( २ ) ॥*॥ बल्यते। 'बल वधे, दाने' (  ) । इन् (उ० ४।११८) । 'बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमानस्त्री जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च' [ इति मे० ९।२७८ ] ॥ (३) ॥*॥ ('अर्घागमो भवेदायो भागधेयो बलि करः' इति हलायुध २।२७८) ॥*॥ त्रीणि 'कर्षकादिभ्यो राजग्राह्यभागस्य'।

घट्टादिदेयं शुल्कोऽस्त्री

शुल्क (पु न), 'घाट, जङ्गल और नदी आदिकी आमदनीसे दिये जानेवाले राजभाग (टैक्स)' का १ नाम है।

घेति ॥ घट्टादौ देयम् ॥*॥ शुल्क्यते। 'शुल्क अतिसर्जने' (चु० प० से०)। घञ् (३।३।१९) 'शुल्क घट्टादिदेये स्याद्दाराद्यर्थग्रहेऽस्त्रियाम्' [ इति मेदिनी ] । मुकुटस्तु-शलति प्रतिबन्धोऽनेन । 'शुल्कवल्कोल्का' इति निपात-इत्याह । तन्न । उज्ज्वलदत्तादिषु 'शुल्कवल्कोल्का' ( उ० ३।४२ ) इति पाठस्यादर्शनात् । धातुपाठे 'शुल्क' धातोर्दर्शनाच्च ॥ (१)॥*॥ आदिना गुल्मप्रतोल्यादिग्रह ॥*॥ एक शुल्कस्य'।

प्राभृतं तु प्रदेशनम् ॥ २७ ॥

प्राभृतम्, प्रदेशनम् ( २ न ), 'मित्रादिको खुश करनेके लिये दिये जानेवाले पदार्थ' के २ नाम हैं।

प्रेति ॥ प्राभ्रियते स्म । 'भृञ भरणे' ( भ्वा० उ० अ० ) । 'डुभृञ् धारणपोषणयो' (जु० उ० अ० ) वा। क्त (३।२।१०२)॥ (१) ॥*॥ प्रदिश्यते । दिश अतिसर्जने' (तु० उ० अ०)। 'कृत्यल्युट -' (३।३।११३)इति कर्मणि ल्युट् ( २ ) ॥*॥ द्वे 'देवताभ्यो मित्रादिभ्यश्च दीयमानस्य' ( भेंट, नजर' इत्याख्यस्य') ।

उपायनमुपग्राह्यमुपहारस्तथोपदा ।

उपायनम्, उपग्राह्यम् ( २ न ), उपहार (पु), उपदा (स्त्री), मा० दी० मतसे 'राजाको दिये जानेवाले भेंट नजराना' के ४ नाम हैं।

उपेति ॥ उपेयते । 'इण् गतौ' ( भ्वा० आ० से०) वा । कर्मणि ल्युट् (३।३।११३) ॥ ( १ ) ॥*॥ उपगृह्यते । ग्रह उपादाने' (क्र्या० उ० से०) । ण्यत् ( ३।१।१२४) ॥ (२) ॥*॥ उपह्रियते । घञ् (३।३।१९) ॥ (३) ॥*॥ उपदीयते । 'डुदाञ् दाने' (जु० उ० से०)। 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् ॥ ( ४ ) ॥*॥ चत्वारि 'उपढौकनस्य' —पढम्युपढौकनस्य-इत्यये। 'उपायनमुपग्राह्य प्राभृत चोपदा स्त्रियाम्' इत्यमरमाला।

यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥

यौतकम् ( न ), सुदाय (पु), हरणम् ( न ), 'यज्ञोपवीत आदिमें दी हुई भिक्षा या दामादको दिये जानेवाले दहेज' के ३ नाम हैं।

याविति ॥ युतक=यौनिसबन्ध, तत्र भवम् । तत्र भव' (४।३।५३) इत्यण् । युतयोर्वरवध्वोरिदम् । 'तस्येदम्' (४।३।१२०) इत्यण् वा। 'युतक युगले युक्ते संशयेऽपि च' इति रभस । 'युतक सशये युगे । नारीवस्त्राञ्चले युक्ते चलनाग्रे च यौतके'(इति मे० १२।१४३ १४४) 'यौतक यौतुक च तत्' इति वाचस्पतेरुभयमपि । आदिना व्रतभिक्षादिपरिग्रह ॥*॥ सुदीयते । 'डुदाञ्' (जु० उ० अ०) । घञ् (३।३।१९) । युगागम' (७।३।३३) । ( १ ) ॥*॥ ह्रियते । कर्मणि ल्युट् ( ३।३।११३ ) । 'हरण यौतकादीना द्रव्ये भुजे हृतावपि' ( इति मे० ५।८७) ॥*॥ द्वे ( 'कन्यादानकाले व्रतभिक्षादौ च दीयमान द्रव्यस्य' ) ।

तत्कालस्तु तदात्वं स्यात्

तत्काल (पु), तदात्वम् ( न ), 'वर्तमान काल, बीतते हुए समय' के २ नाम हैं।

तेति ॥ स चासौ कालश्च ॥(१)॥*॥ 'तदा' इत्यस्य भाव ॥(२) ॥*॥ द्वे 'वर्तमानकालस्य'।

---

१ मेदिन्या 'प्रत्ययशुण्डयो' इति पाठ, युक्तश्चाय विश्व ( १२५।३) हैम (२।४१०) सवादात् ।

२ हैम ( २।४१२ ) सवादाद् विश्व मेदिनीस्थ '—यत्ने यतावपि' इत्येव पाठ समीचीन ।

३ मेदिन्या प्रथमैवार्द्धाली दृश्यते, ततश्च 'तुषारशैलेऽपि पुमान् स्त्रिया दूत्या प्रसेवके। सुवर्णकारिकाया च बन्धनागारबन्धयो' इति पाठ ।

उत्तरः काल आयतिः।

आयतिः ( स्त्री ), 'आनेवाले समय, भविष्यत्काल' का १ नाम है।

उत्तेति ॥ आयंस्यन्तेऽत्र। 'यम उपरमे' ( भ्वा० प० अ० )। क्तिन् (३।३।९४)। आयास्यति वा। यातेर्बाहुलकाड्डतिः। 'आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः' ( इति मेदिनी ६१।९४ ) ॥ ( १ ) ॥ * ॥ एकम् 'उत्तरकालस्य'।

सांदृष्टिकं फलं सद्यः

सांदृष्टिकम् ( न ), 'व्यापार आदिके बाद शीघ्र मिलनेवाले फल' का नाम है।

सामिति ॥ संदृष्टो प्रत्यक्षे भवम्। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ् ॥ (१) ॥*॥ एकं 'व्यापारानन्तरं (सद्यो) जायमानस्य फलस्य'।

उदर्कः फलमुत्तरम् ॥ २९ ॥

उदर्कः ( पु ), 'भविष्यमें होनेवाले फल' का १ नाम है।

विति ॥ उदर्च्यते। 'अर्क स्तवने' (चु० प० से०)। घञ् (३।३।१९)। उदर्च्यते। 'अर्च पूजायाम्' ( भ्वा० प० से० ) वा। उदृच्यते। 'ऋच् स्तुतौ' (तु० प० से०) वा। घञ् (३।३।१९ )। 'उदर्क एष्यत्कालीनफले[1] मदनकण्टके' (इति मे० ५।५१) ॥ (१) ॥*॥ एकं 'भाविनः कर्मफलस्य'।

अदृष्टं वह्नितोयादि

अदृष्टम् ( न ), 'आगसे जलने, पानीसे बह जाने आदि भय' का १ नाम है।

अद्रिति ॥ वह्निश्च तोयं चादिर्यस्य। भयहेतुत्वाद्भयम्। आदिना 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा। अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः' गृह्यन्ते। अदृष्टहेतुकत्वाददृष्टम् ॥ ( १ ) ॥ * ॥ एकं 'अग्न्यादिकृतस्य भयस्य'।

दृष्टं स्वपरचक्रजकम्।

दृष्टम् ( न ), 'अपने राज्यमें चोर, जङ्गल आदिका भय तथा दूसरे राज्यसे दाह और चढ़ाई आदिके भय' का १ नाम है।

द्रिति ॥ दृश्यते स्म। क्तः (३।२।१०२)॥(१)॥*॥ स्वश्च परश्च स्वपरौ, तयोश्चक्रे सैन्ये। ताभ्यां जातम्। 'पञ्चम्यामजातौ' (३।२।९८) इति डः ॥*॥ एकं 'स्वपरसैन्यात् परराष्ट्रजाच्चौराटविकादेः परचक्राद्दाहविलोपादेर्भयस्य'।

[1] '—एष्यत्काले तत्फले—' इति मेदिनीपाठः ॥

महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥

अहिभयम् ( न ), 'अपने पक्ष ( मन्त्री आदि ) से होनेवाले राजा आदिके भय' का १ नाम है।

मेति ॥ अहिरिव। गृहस्थत्वात्, आवृतावारत्वाच्च स्वस्य पक्ष एवाहिः। अहेर्भयम् ॥ (१) ॥*॥ 'निजोऽथ मैत्रश्च समाश्रितश्च सम्बन्धतः कार्यसमुद्भवश्च। भृत्या गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति'। एकं 'स्वमहायाज्जातभयस्य'। 'भयम्' इति पूर्वाभ्यामपि संबध्यते।

प्रक्रिया त्वधिकारः स्यात्

प्रक्रिया ( स्त्री ), अधिकारः ( पु ), 'व्यवस्थाको ठीक करने' के २ नाम हैं।

प्रेति ॥ प्रकर्षेण करणम्। 'कृञ् श च' ( ३.३।१००)। रिङ् (७।४।२८)। 'प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः' इति हेमचन्द्र (३।५२७) ॥ (१) ॥*॥ अधि आधिक्यस्य करणम्। घञ् (३।३।१८)॥(२)॥*॥ द्वे 'राज्ञां छत्रधारणादिव्यापारस्य'।

चामरं तु प्रकीर्णकम्।

चामरम्, प्रकीर्णकम् ( २ न ), 'चँवर' के २ नाम हैं।

चेति ॥ चमति, चम्यते वा। अनेन वा। 'चमु अदने' (भ्वा० प० से०)। 'अर्तिकमिभ्रमिचमि-' ( उ० ३।१३२) इत्यमर। 'चमरं। चामरे स्त्री तु मञ्जरीमृगभेदयोः' ( इति मे० १३३।१५२ )। 'चमरश्चामरे दैत्ये चमरी तु मृगान्तरे' इति हैम ( ३।५८९ ) ॥*॥ प्रज्ञाद्यण् (५।४।३८) वा। अजादित्वात् ( ४।१।४ ) टाप्। 'चामरा चामरं वालव्यजनं रोमगुच्छकम्' इति रभसः। 'चामरं चामरापि च। दण्डे च वालव्यजने' ( इति मे० १३३।१५४) ॥ ( १ ) ॥*॥ प्रकीर्यते स्म। 'कॄ विक्षेपे' (तु० प० से०)। क्त ( ३।२।१०२ )। 'संज्ञायां कन्' ( ५।३।७५ )। 'प्रकीर्णकं चामरे स्याद्विस्तरे ना तुरंगमे' (इति मे० १६।१९७) ॥ (२) ॥*॥ द्वे 'चामरस्य'।

नृपासनं तु यद्भद्रासनम्

नृपासनम्, भद्रासनम् ( २ न ), 'मणि आदिके बने हुए राजाके आसन' के २ नाम हैं।

त्रिति ॥ नृपस्यासनम् ॥ (१) ॥*॥ भद्र च तदासनम् ॥ (२) ॥*॥ द्वे 'मण्यादिकृतराजासनस्य'।

सिंहासनम् तु तत् ॥ ३१ ॥

हैमम्

सिंहासनम् ( न ), 'सुवर्णके बने हुए राजाके सिंहासन' का १ नाम है।

सिंहेति ॥ हेमविकार । नृपासनम् ॥*॥ सिंहासनम् । सिंह इव वाऽऽसनम् ॥ (१)॥*॥ एकं 'सुवर्णकृतराजासनस्य' ।

छत्रं त्वातपत्रम्

छत्रम्, आतपत्रम् ( २ न ), 'छाता' के २ नाम हैं ।

छेति ॥ छादयति, अनेन वा । 'छद अपवारणे' (चु० उ० से०) । ण्यन्त । ष्ट्रन् ( उ० ४।१५९ ) । 'इस्मन्त्रन्क्विषु च' (६।४।९७) इति ह्रस्व ॥ (१) ॥*॥ आतपात्त्रायते । 'आतोऽनुप–' ( ३।२।३ ) इति क ॥ (२) ॥*॥ द्वे 'छत्रस्य' ।

राज्ञस्तु नृपलक्ष्म तत् ।

नृपलक्ष्म ( न ), 'राजाके छाते' का १ नाम है ।

रेति ॥ तत् छत्रम् । नृपस्य लक्ष्म ॥ ( १ ) ॥ * ॥ एक 'नृपच्छत्रस्य' ।

भद्रकुम्भः पूर्णकुम्भः

भद्रकुम्भ, पूर्णकुम्भ ( २ पु ), 'मङ्गलके लिये जलसे भरे हुए घड़े' के २ नाम हैं ।

भेति ॥ भद्रस्य, भद्रो वा कुम्भ ॥ (१) ॥*॥ पूर्णं कुम्भः ॥ (२) ॥*॥ द्वे 'पूर्णघटस्य' ।

भृङ्गारः कनकालुका ॥ ३२ ॥

भृङ्गार ( पु ), कनकालुका ( स्त्री ), 'झारी, हथहर' के २ नाम हैं ।

भृेति ॥ बिभर्ति जलम् । 'डुभृञ्' (जु० उ० अ०) 'भृङ्गारभृङ्गारी च'(उ० ३।१३६) इति साधु ।(भृङ्गार कनकालुके । भृङ्गारी झिल्लिकायां स्यात्' इति विश्व १४०।१८२) ॥ (१)॥*॥ कनकस्यालु । 'संज्ञायां कन्' ( ५।३।७५ ) ॥ ( २ ) ॥*॥ द्वे 'सुवर्णकृतजलपात्रस्य' ('झारी, 'हथहर' इत्याख्यस्य) ।

निवेशः शिबिरं षण्ढे

निवेश (पु), शिबिरम् (न), 'सेनाके ठहरनेकी जगह' के २ नाम हैं ।

नीति ॥ निविशन्तेऽत्र । 'विश प्रवेशने' ( तु० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'निवश सैन्यविन्यासे न्यासे [२]रङ्गविवाहयो' इति हैम (३।७६० )॥ (१) ॥*॥ शवन्त्यत्र । 'शव गतौ' (भ्वा० प० से०) । शाहुलकात् किरच् अत इत्व च ॥ (२) ॥*॥ (षण्ढे=) क्लीबे ॥*॥ द्वे 'आगन्तुकसैन्यवसत' ।

सज्जनं तूपरक्षणम् ।

सज्जनम्, उपरक्षणम् ( २ न ), 'सेनाकी रक्षा के वास्ते नियम किये हुए पहरे' के २ नाम हैं ।

सेति ॥ सज्जन्ते(न्त्य)नेन । 'षस्ज गतौ' (भ्वा० प० से०) । ल्युट (३।३।११७)। सत् शोभन जन्यतेऽनेन वा । 'जनी प्रादुर्भावे' (दि० आ० से०) । घञ् (३।३।१९) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धि ।('सज्जन घट्गुल्मके । सज्जनस्तु कुलीने स्यात् सज्जनाऽपि च कल्पना' इति हैम ३।४६०) ॥ ( १ ) ॥*॥ उपरक्ष्यते अनेन । ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे 'सैन्यरक्षणाय नियुक्तप्रहरिकादिव्यामस्य' ।

हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥

सेनाङ्गम् ( न ), 'हाथी, रथ, घोड़ा और पैदल ये ४ सेना के अङ्ग' हैं ।

हेति ॥ पदातीनां समूह । 'भिक्षादिभ्योऽण्' (४।२।३८) । हस्तिनश्च अश्वाश्च रथाश्च पादातं च । सेनाङ्गत्वादेकवद्भाव (२।४।२) ॥*॥ सेनाया अङ्गम् ॥ (१) ॥*॥ चत्वारोऽवयवा यस्य । 'सङ्ख्याया अवयवे तयप्' ( ५।२।४२ ) ॥*॥—नाविकाटविकादीनां पदातावन्तर्भाव । नौकानां रथेष्वन्तर्भाव । महिषादीनां गजाश्वेऽन्तर्भाव —इति मुकुट ॥ एक ( हस्त्यादिचतुष्टयं समुदित 'सेनाङ्ग'मुच्यते) 'सेनाङ्गस्य' ।

दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।

मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥

इभः स्तम्बेरमः पद्मी

दन्ती, दन्तावल, हस्ती, द्विरद, अनेकप, द्विप, मतङ्गज, गज, नाग, कुञ्जर, वारण, करी, इभ, स्तम्बेरम, पद्मी ( १५ पु ), 'हाथी, के १५ नाम हैं ।

देति ॥ अतिशयितौ दन्तावस्य । इनि (५।२।११५) ॥(१) ॥*॥ 'दन्तशिखात् संज्ञायाम्' (५।२।११३) इति वलच् । 'वले' ( ६।३।११८ ) इति दीर्घ ( २ ) ॥*॥ हस्त शुण्डाऽस्यास्ति । 'हस्ताज्जातौ' ( ५।२।१३३ ) इतीनि ॥ (३) ॥*॥ एवम् 'करी' च ॥ ( ) द्वौ रदावस्य ॥ (४) ॥*॥ अनेकेन करेण मुखेन च पिबति । 'सुपि–' ( ३।२।४ ) इति क ॥ ( ५ ) ॥ * ॥ द्वाभ्यां पिबति । प्राग्वत् क ॥ ( ६ ) ॥*॥ मतङ्गाद्धर्षेर्जात । 'पञ्चम्यामजातौ' ( ३।२।९८ ) इति ड ॥ (७) ॥*॥

---

१ 'कर्मण्यण्' इत्यतः 'कर्मणि' इत्यस्यानुवृत्त्याऽनेन कर्मण्येव 'क' विधानाच्चिन्त्यमेतत् ॥

२ हैमे 'क' पुस्तके '—रङ्गविवाहयो ' इति पाठ । 'ख-ग' पुस्तकद्वये तु '—शिबिरोद्वाहयोरपि' इत्येव पाठ ॥

गजति। 'गज मदने' ( भ्वा० प० से० )। अच् ( ३।१। १३४ )॥ ( ८ )॥*॥ न अगः। नगे भवो वा। अण् ( ४।३।५३ )। 'नागो मतङ्गजे सर्पे पुनागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च॥ देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः। नाग रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे' इति हैम (२।३४-३६)॥ (९)॥*॥ अतिशयित कुब्जो हनुरस्य 'खमुखकुञ्जेभ्यो रः' (वा० ५।२। १०७) 'कुञ्जरोऽनेकपे केशे कुञ्जरा धातकीद्रुमे। पाटलाया च' इति हेमचन्द्र (३।५७७)॥ (१०)॥*॥ वारयति शत्रुबलम्। ल्यु (३।१।१३४)। 'वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे' इति विश्व (५२।५८, मेदिनी च ४९। ६७)॥ (११)॥*॥ करोऽस्यास्ति। इनि (५।२। ११५)॥ (१२)॥*॥ एति, ईयते वा। 'इण किद्' (उ० ३।१५३) इति भ॥ (१३)॥*॥ 'स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयो'[२] ( इति विश्व १०६।३ )। स्तम्बे रमते। 'स्तम्बकर्णयो रमिजपो' (३।२।१३) इत्यच, 'हलदन्तात्–' (६।३।९) इत्यलुक्॥ (१४)॥*॥ पद्मं बिन्दुजालमस्त्यस्य। इनि (५।२।११५)॥ (१५)॥*॥ पञ्चदश 'हस्तिन'।

**यूथनाथस्तु यूथपः।**

**यूथनाथः, यूथपः (२ पु), 'झुण्डके स्वामी' के २ नाम हैं।**

यूथेति॥ यूथस्य हस्तिवृन्दस्य नाथ.॥ (१)॥*॥ यूथं पाति। 'आतोऽनुप–' (३।२।३) इति क॥ (२)॥*॥ द्वे 'यूथमुख्यहस्तिन'।

**मदोत्कटो मदकलः**

**मदोत्कटः, मदकलः (२ पु), 'मतवाले हाथी' के २ नाम हैं।**

मेति॥ मदेन दानाम्बुनोत्कटो मत्त.॥ (१)॥*॥ मदेन कलते। 'कल शब्दसंख्यानयो' (भ्वा० आ० से०) अच् (३।१।१३४)। मदे सति कलो ध्वनिर्यस्य, इति वा॥ (२)॥*॥ द्वे 'अन्तर्मदस्य हस्तिन'।

**कलभः करिशावकः॥३५॥**

**कलभः, करिशावकः (२ पु), 'तीस वर्ष से कम उम्र वाले हाथीके बच्चे' के २ नाम हैं।**

केति॥ कलयति। 'कल गतिसंख्यानयोः' ( चु० उ० से० ) कलते वा। 'कल शब्दसंख्यानयो.' ( भ्वा० आ० से० ) कलं भाषते वा। 'अन्येभ्योऽपि–' (वा० ३।२।१०२) इति ड.॥ (१)॥*॥ 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुत' ( इति मेदिनी, १०७।१४ )॥*॥ करिणः शावक॥ (२)॥*॥ द्वे 'करिपोतस्य'।

**प्रभिन्नो गर्जितो मत्तः**

**प्रभिन्नः, गर्जितः, मत्तः (३ पु), 'जिसका मद गिर रहा हो उस हाथी' के ३ नाम हैं।**

प्रेति॥ प्रकर्षेण भिद्यते स्म। क्त (३।२।१०२)॥ (१)॥*॥ गर्जयति। 'गर्ज शब्दे' (चु० प० से०)। अकर्मकत्वात् (३।४।७२) कर्तरि क्त। गर्जो जातोऽस्य। तारकादित्वात् (५।२।३६) इतच्। 'गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे' इति विश्व[१]-मेदिन्यौ ( ६२।१०६ )॥ (२)॥*॥ माद्यति। 'मदी हर्षे' ( दि० प० से० )। प्राग्वत् क्त. ( ३।४।७२ )। 'न ध्याख्या–' (८।२।५७) इति निष्ठानत्वाभाव॥ (३)॥*॥ त्रीणि 'जातमदस्य'।

**समावुद्वान्तनिर्मदौ।**

**उद्वान्तः, निर्मदः (२ पु), 'जिसका मद गिरकर समाप्त हो गया हो उस हाथी' के २ नाम हैं।**

सेति॥ उद्गत वान्त मदवमनमस्मात्। 'उद्वान्त उद्गीर्णे निर्मदद्विपे' इति हैम ( ३।२६६ )॥ (१)॥*॥ मदान्निर्गत। निर्गतो मदोऽस्माद्वा॥ (२)॥*॥ द्वे 'गतमदस्य'।

**हास्तिकं गजता वृन्दे**

**हास्तिकम् (न), गजता (स्त्री), 'हाथियों के झुण्ड' के २ नाम हैं।**

हेति॥ हस्तिना समूहः। 'अचित्तहस्तिधेनोष्ठक्' (४। २।४७)॥ (१)॥*॥ गजाना समूह। 'गजसहायाभ्या च' (वा० ४।२।४३) इति तल्॥ (२)॥*॥ द्वे 'हस्तिना वृन्दे'।

**करिणी धेनुका वशा॥३६॥**

**करिणी, धेनुका, वशा (३ स्त्री), 'हथिनी' के ३ नाम हैं।**

केति॥ करोऽस्त्यस्या। इनि (५।२।११५)। 'ऋन्नेभ्यो ङीप्' ( ४।१।५ )॥ (१)॥*॥ धेनुरिव। 'इवे प्रति–' (५।३।९६) इति कन्। स्याद्धेनुका करिण्या च धेनावपि, पुंसि[२] दानवविशेषे' ( इति मे० ९।१०७ )॥ (२)॥*॥ उश्यते। 'वश कान्तौ' (अ० प० से०) 'वशिरण्योश्च' ( वा० ३।३।५८ ) इत्यप्। वष्टि वा॥

१. हैमे तु 'च' रहितः पाठः।

२. विश्वे 'क-ख' पुस्तकद्वयेऽपि '—मप्रकाण्डद्रुमेऽपि च' इत्येवं पाठ.॥

१ विश्वे 'गर्जितो मत्तमातङ्गो गर्जितं जलदध्वनौ' इति ( ६३।९१ ) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठ उचितः।

२. मेदिन्यां '—ना तु—' इति पाठ.।

अच् ( ३।१।१३४ ) 'वशा नार्यां वन्ध्यगव्या हस्तिन्या दुहितर्यपि' ( इति हैम २।५६६ )। तालव्यया। 'वशा वन्ध्यासुतायोषास्त्रीगवीकरिणीषु च' इति तालव्यान्तेषु विश्वात् (१६७।१७)॥ (३) ॥*॥ त्रीणि 'हस्तिन्याः'।

गण्डः कटः

गण्ड, कट. (२ पु), 'हाथी के गाल' के २ नाम हैं।

गेति ॥ गण्डति। 'गडि वदनैकदेशे' (भ्वा० प० से०) अच् (३।१।१३४) 'गण्ड स्यात्पुंसि खड्गिनी। ग्रहयोग-भेदे च वीध्यङ्गे पिटकेऽपि च। चिह्नवीरकपोलेषु हय-भूषणबुद्बुदे' ( इति मे० ४१।८९ ) ॥ ( १ ) ॥ * ॥ कटति। 'कटे वर्षावरणयोः' (भ्वा० प० से०) अच् (३।१।१३४)। 'कट श्रोणौ द्वयोः पुंसि क्लिञ्जेऽतिशये शवे। समये गजगण्डेऽपि पिप्पली तु कटी' मता' ( इति-मे०, ३३।३४, विश्व ३६।१ च ) ॥ ( २ ) ॥ * ॥ द्वे 'गजगण्डयोः'।

मदो दानम्

मद (पु), दानम् (न), 'हाथीके मद' के २ नाम हैं।

मेति ॥ माद्यत्यनेन। 'मदी हर्षे' ( दि० प० से० )। 'मदोऽनुपसर्गे' ( ३।३।६७ ) इत्यप्। मदयति वा। अच् ( ३।१।१३४ )। 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' ( इति मे० ७५।१२ )॥ ( १ ) ॥ * ॥ दीयतेऽनेन। 'दो अवखण्डने' ( दि० प० अ० ) ल्युट् ( ३।३।११७ )। 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु' ( इति विश्व मेदिन्यौ ८५।६, ८३।१० ) ॥ (२) ॥*॥ द्वे 'मदवारिणः'।

वमथुः करशीकरः।

वमथु, करशीकर (२ पु), 'हाथीके सूंडसे निकले हुए पानीके छींटे' के २ नाम हैं।

वेति ॥ वम्यते। 'टुवम उद्गिरणे' (भ्वा० प० से०)। 'ट्वितोऽथुच्' ( ३।३।८९ ) 'वमथुर्वमने धासे मातङ्गकर-शीकरे' ( इति हैम ३।३४८ ) ॥ ( १ ) ॥*॥ करस्य शीकरः ॥ (२) ॥*॥ द्वे 'शुण्डानिर्गतजलस्य'।

कुम्भौ तु पिण्डौ शिरसः

कुम्भ (पु), 'हाथीके मस्तकके ऊपरवाले दोनों मास-पिण्डों' का १ नाम है।

कीति। कुं भुवमुम्भति। 'उम्भ पूरणे' ( तु० प० से० )। 'कर्मण्यण्' ( ३।२।१ )। शकन्ध्वादि ( वा० ६।१।९४ )। 'कुम्भो राक्षसान्तरे हस्तिमूर्धांशे राशिभेदे घटे मेदिन्यां…' 'कार्मुके वारनार्यां च घटे क्लीबं तु गुग्गुलौ' ( इति मे० १०६।२-३) ॥ (१) ॥*॥ पिण्डते 'पिडि सङ्घाते' (भ्वा० आ० से० )। अच् ( ३।१।१३४ )। 'पिण्डो 'बोले बले सान्द्रे देहागारैकदेशयोः। देहमात्रे निवापे च गोलसिह्लक-योरपि। ओड्रपुष्पे च पुंसि स्यात् क्लीबमायोजीवनायसोः॥ पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः' ( इति मे०, ४१। १८-२० ) ॥ * ॥ एवं 'गजकुम्भस्य'।

तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥

विदु: (पु),'हाथीके मस्तकके ऊपरवाले दोनों मांसपिण्डों के बीचवाले भाग' का १ नाम है।

तेति ॥ तयोः=कुम्भयोः। वेत्ति सञ्ज्ञामत्र घातेन। 'विद ज्ञाने' ( अ० प० से० )। बाहुलकात् कुः ॥ ( १ ) ॥ * ॥ एकं 'गजकुम्भमध्यभागस्य'।

अवग्रहो ललाटं स्यात्

अवग्रह. (पु), 'हाथीके ललाट' का १ नाम है।

अवेति ॥ अवगृह्यतेऽङ्कुशेन। 'ग्रहवृदृ-' (३।३।५८) इत्यप्। 'अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके' ( इति मे० १७७।२६ )। रुद्रोऽपि—'गजालिके वृष्टिरोधे प्रति बन्धेऽप्यवग्रह' इति ॥ (१) ॥*॥ एकं 'गजललाटस्य'।

इषीका त्वक्षिकूटकम्।

इषीका ईषिका ( स्त्री ), अक्षिकूटकम् ( न ). 'हाथीकी आँखके गोलाकार भाग' के २ नाम हैं।

इषीति ॥ ईष्यते। 'ईष उञ्छे' ( भ्वा० प० से० )। 'ईष गतिहिंसादानेषु' ( भ्वा० आ० से० ) वा। 'ईषि किदुच्चस्वश्च' ( उ० ४।२१ ) इतीकन् धातोर्ह्रस्वश्च। (ह्रस्वादिदीर्घमध्या³) ॥ * ॥ ईषा = लाङ्गलकीलिका। सेव। 'इवे प्रति-' ( ५।३।९६ ) इति कनि (ह्रस्व मध्या—ईषिका ) दीर्घादिरपि ॥ ( १ ) ॥ * ॥ अक्षि कूटकः=चक्षुर्गोलकम् ॥ * ॥ एकं गजनेत्रगोलकस्य'।

---

१ मेदिन्यां'—गजगण्डे च पिप्पल्या—' इति पाठः' विश्वे तु'—श्रोणौ क्रियाकारे गजगण्डे च पिप्पल्या च-' इति पाठः ॥

१ मेदिनीस्थ —कार्मुके—' इति पाठ एव हैम ( २।३१०-६११ विश्व १०८।१९ यो संवादात्समीचीनः।

२. मेदिनीस्थो '—बोले बले—' इति पाठ एव हैम ( २।१२४—१२५ ) विश्व ( ४४।१४-१५ ) योरनुरोधात् साधीयान् प्रतिभाति।

३ ह्रस्वादिदीर्घमध्यस्य लक्ष्यम्—'तप्तिमुखसदृशि पीकासलम्' रघु० १२।२३; दीर्घादिह्रस्वमध्यस्य लक्ष्यम्—'सोभिमन्त्र्य घरेषीकामीषिकास्त्रेण वीर्यवान्' इति वा० रा०।

अपाङ्गदेशो निर्याणम्

निर्याणम् (न), 'हाथीकी आँखके किनारेवाले भाग' का १ नाम है।

अपेति ॥ अपाङ्गस्य, अपाङ्गो वा देश. ॥*॥ निर्यात्यनेन। करणे ल्युट् (३।३।११७)। 'निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे' (इति मे०, ४९।५८) ॥ (१) ॥ * ॥ एकं 'गजापाङ्गदेशस्य'।

कर्णमूलं तु चूलिका ॥ ३८ ॥

चूलिका (स्त्री), 'हाथीकी कनपट्टी' का १ नाम है।

केति ॥ कर्णस्य मूलम् ॥ * ॥ चूल्यतेऽनया। 'चूल समुच्छ्राये' (चु० प० से०)। 'सञायाम्' (३।३।१०९) इति ण्वुल्। 'चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्' (इति मे०, ८।९०) ॥ (१) ॥*॥ एकं 'गजकर्णमूलस्य'।

अधः कुम्भस्य वाहित्थम्

वाहित्थम् (न), 'हाथीके शिरके ऊपरवाले दोनों मांसपिण्डके नीचेवाले भाग' का १ नाम है।

अध इति ॥ कुम्भोऽत्र वातकुम्भ। 'वाहित्थ वातकुम्भाध' इति भागुरि। स च ललाटाधोभाग। (कुम्भयोरन्तरं विदु। वातकुम्भस्तु तस्याधो वाहित्थं तु ततोऽप्यध' इति हैमनाममाला ४।२९२-२९३) ॥*॥ अवश्य वहति। 'आवश्यका-' (३।३।१७०) इति णिनि'। स तिष्ठायत्र। 'घञर्थे क' (वा० ३।३।५८)। पृषोदरादित्वात् सस्य त' ॥ (१) ॥ * ॥ एक गजकुम्भाधोभागस्य'।

प्रतिमानमधोऽस्य यत्।

प्रतिमानम् (न), 'हाथीके दोनों दाँतोंके बीचवाले भाग' का १ नाम है।

प्रेति ॥ प्रतिमीयतेऽनेन 'मीञ् हिंसायाम्' (क्र्या० उ० अ०)। 'मीनातिमिनोति-' (६।१।५०) इत्यात्वम्। 'करणा-' (३।३।११७) इति ल्युट्। 'प्रतिमानं प्रतिच्छायागजदन्तान्तरालयो' इति रुद्र (१) ॥ * ॥ एक 'वाहित्थाधोभागस्य दन्तमध्यस्य'।

आसनं स्कन्धदेशः स्यात्

आसनम् (न), 'हाथीका कन्धा' अर्थात् 'हाथीवानके बैठनेकी जगह' का १ नाम है।

आसेति ॥ आस्यतेऽत्र। ल्युट् (३।३।११७)। 'आसनं[२] द्विरदस्कन्धे पीठे यात्रानिवर्तने' (८८।४३, ८५।३६ इति विश्व-मेदिन्यौ) ॥ (१) ॥ * ॥ स्कन्ध एव देशः ॥ (२) द्वे 'गजस्कन्धदेशस्य'।

पद्मकं बिन्दुजालकम् ॥ ३९ ॥

पद्मकम्, बिन्दुजालकम् (२ न), 'हाथियोंके मुखमें कमलाकार छोटे २ लाल चिह्न-विशेष' के २ नाम हैं।

पेति ॥ पद्ममिव। 'इवे प्रति-' (५।३।९६) इति कन्। 'पद्मकं स्यात्पद्मकाष्ठबिन्दुजालकयोरपि' (इति मे० १०।११३) ॥ (१) ॥*॥ बिन्दूना जालकमिव ॥ (२) ॥ * ॥ द्वे 'गजमुखादिस्थरक्ताभबिन्दुसमूहस्य'।

पक्षभागः पार्श्वभागः

पक्षभागः, पार्श्वभागः (२ पु), 'हाथीके पार्श्वभाग' (बगल) के २ नाम हैं।

पक्षेति ॥ पक्षयत्यनेन। 'पक्ष परिग्रहे' चुरादि.। 'पुंसि-' (३।३।११८) इति घ.। पक्षस्य, पक्ष एव वा भाग ॥ (१) ॥ * ॥ पार्श्वस्य पार्श्वमेव वा भाग ॥ (२) ॥ * ॥ द्वे 'गजपार्श्वस्य'।

दन्तभागस्तु योऽग्रतः।

दन्तभागः (पु), 'हाथीके आगेवाले भाग' का १ नाम है।

देति ॥ दन्तस्य भाग.। दन्तसम्बन्धी भागो वा। शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥ * ॥ एकं 'गजाग्रभागस्य'।

द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥४०॥

गात्रम्, अवरम् (२ न), 'हाथीके आगेवाले जंघा आदि पूर्वार्द्ध शरीर और पीछेवाले जंघा आदि परार्द्ध शरीर' का १-१ नाम है।

द्वाविति ॥ पूर्वा च पश्चाच्च, पूर्वपश्चाच्च ते जङ्घे च। पूर्वपश्चाज्जङ्घे आदी यस्य स.। पूर्वपश्चादिश्चासौ देशश्च। पूर्वजङ्घाभागो गात्रम्। पश्चाज्जङ्घाभागोऽवरम् ॥ * ॥ गातेऽनेन। 'गाङ् गतौ' (भ्व० आ० अ०) यद्वा-एत्यनेन। 'इण् गतौ' (अ० प० अ०)। 'बहुलं तणि' (वा० २।४।५४) इति गादेश। 'ष्ट्रन्' (उ० ४। १५९)। 'गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे' (इति मे० १२३।२४) ॥ (१) ॥ अव राति। 'रा दाने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति क। यद्वा-न वृणोति, व्रियते वा। 'वृञ् वरणे' (स्वा० उ० से०) अच् (३।१।१३४)। 'ग्रहवृद-' (३।३।५८) इत्यप् वा। 'अवरं गजान्त्यजङ्घादिदेशे चरमे त्रिषु' (इति मे० १३०।१०७)। 'गजान्त्यजङ्घादिदेशेऽवरं स्याच्चरमे त्रिषु' इति रुद्र ॥ (१) ॥ * ॥ 'गात्रावरे पूर्वपश्चात्पादयो परिभाषिते' इति भागुरिः। 'द्वौ पूर्वपश्चाज्ज-

१. चुरादौ धातुपाठे ह्रस्वादिरेवायं धातु पठित.।
२. 'आसनी विपणौ' स्थित्यां—' इति मे० पाठ।

इत्यादिदेशो गात्रावरे न ना' इति रभसः। कश्चित्तु—'अष्ठीवद्धागादूर्ध्वमवरम्। अपरस्तु गात्रम्—इत्याह ॥*॥ अपरा पवर्गादिमध्या च। 'अपर तूत्तरार्धे' स्यात्पश्चाद्भागे च दन्तिनाम्' इति विश्वः (१३३।९५)। ॥*॥ क्रमेणैकैक गजजङ्घापूर्वापरभागयोः'।

तोत्रं वेणुकम्

तोत्रम्, वेणुकम् (२ न), 'हाथीको मारनेवाले डण्डे या चाबुक आदि' के २ नाम हैं।

तवेति ॥ तुद्यतेऽनेन। 'तुद व्यथने' (तु० उ० अ०) 'दाम्नी–' (३।२।१८२) इति ष्ट्रन्। 'तोत्रं तु प्राजने वेणुकेऽपि च' (इति मे० १२६।४६) (१) ॥*॥ वेणुना निवृत्तेऽक्षद्यूनादिभ्यः' (४।४।१९) इति ठक्। इसुसुक्तान्तात् कः (७।३।५१) ॥*॥ वेणुवम्' इति पाठान्तरम्। सज्ञापूर्वकत्वान्न वृद्धिः ॥ (२) ॥*॥ द्वे तोदनदण्डस्य'।

आलानं बन्धस्तम्भे

आलानम् (न),'हाथीको बाँधनेवाले खूँटे'का १ नाम है।

आलेति ॥ आलीयतेऽत्र। 'लीङ् श्लेषणे' (दि० आ० अ०) अधिकरणे ल्युट् (३।३।११७)। ('विभाषा लीयते.' (६।१।५१) इत्यात्वम्) ॥ (१) ॥*॥ बन्धस्य बन्धनस्य स्तम्भः ॥ (२) ॥*॥ द्वे 'गजबन्धनस्तम्भस्य'।

अथ शृङ्खला।

अन्दुको निगडोऽस्त्री स्यात्

शृङ्खला (त्रि), अन्दुक (पु), निगड (पु न), 'हाथीकी बेड़ी' के ३ नाम हैं।

अथेति ॥ शृङ्गं प्राधान्यं खलति। खल सञ्चलने सञ्चये च' (भ्वा० प० से०)। अन्तर्भावितण्यर्थः। अच् (३।१।१३४)। यद्वा–शृङ्गं प्राधान्यात् खल्यतेऽनेन। पुंसि–' (३।३।११८) इति घः। भिदादङ् (३।३।१०४) वा। पृषोदरादि (६।३।१०९) ('शृङ्खलो' पुस्कटीका त्र्यया लोहरज्जौ च बन्धने' (इति हैम ३ ७२१, 'शृङ्खला पुस्कटीवस्त्रबन्धेऽपि निगडे' त्रिषु' इति मे० १५१।१४१) ॥ (१) ॥*॥ अन्द्यतेऽनेन। 'अदि बन्धने' (भ्वा० आ० से०)। 'अन्दूदम्भू–' (उ० १।९३) इति ऊ। स्वार्थे कन् (ज्ञापि० ५।४।५)। 'अन्दू निगा स्यान्निगडे प्रभेदे भूषणस्य च' (इति मे० ७४।२)। 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' (५) इति पुस्त्वम्। यद्वा–विनयादित्वात् (५।४।३४) ठक्। 'इसुसु–' (७।३।५१) इति कादेशः। केऽणः' (७।४।१३) इति ह्रस्वः ॥ (२) ॥*॥ निर्गतो गड सेचनं यस्मात्। कठिनत्वात्। निगरति वा। 'गॄ अदने'(भ्वा० प० से०)। अच् (३।१।१३४)। डलयोरेकत्वम्॥ (३) ॥*॥ त्रीणि 'शृङ्खलस्य' बेडी' इति ख्यातस्य।

अङ्कुशोऽस्त्री सृणि.[1] स्त्रियाम् ॥ ४१ ॥

अङ्कुश (पु न), सृणि (स्त्री), 'अङ्कुश' के २ नाम हैं।

अङ्कुशेति ॥ अङ्क्यतेऽनेन। 'अकि लक्षणे' (भ्वा० आ० से०)। 'नानविवर्णसि–' (उ० ४।१०७) इति साधु ॥ (१) ॥*॥ सरति अन्तर्गच्छति, अनया वा। 'सृ गतौ' (भ्वा० प० अ०)। 'सृवृषिभ्यां कित्' (उ० ४।४९) इति निः ॥*॥ तालव्योष्मादिरपि। शृणाति। 'शॄ हिंसायाम्'(क्र्या० प० से० शृणि')[2] 'घृणिपृश्नि-पार्ष्णि–' (उ० ४।५२) इति साधु। 'शृणिरङ्कुशवाची च वाचाश्च तृणवाचकः' इति प्रभेदः ॥ (२) ॥*॥ 'आरक्षमान सवमत्य सृणि स्त्रियाम्' इति तु माघस्य (५।५) प्रमादः। सृण स्त्रीत्वात् ॥*॥ द्वे 'अङ्कुशस्य'।

दूष्या कक्ष्या वरत्रा च

दूष्या, कक्ष्या, वरत्रा (३ स्त्री), 'हाथीके कसनेवाले रस्से' के ३ नाम हैं।

दूष्येति ॥ दूष्यतेऽनया। 'दुष वैकृत्ये' (दि० प० अ०)। ण्यन्त। 'दोषो णौ' (६।४।९०) इत्यूत्। 'अचो यत्' (३।१।९७)। दूष्य त्रिषु दूषणीय क्लीब वस्त्र च तद्गृहे' (इति मेदिनी ११५।३१)। —चूष्यते पीयते पृष्ठमासेना रश्मना नीयते। चूष पाने' (भ्वा० प० से०)। कमपि

---

१ विश्व तु '—त्वधुनार्थे स्यात्—' इति पाठः। अपर त्वधुनार्थेऽपि पश्चाद्भागेऽपि दन्तिनाम् इति विश्वश्लो० (पृ० २९४ श्लो० १०५-१०६), 'अपर पश्चिमे पादे' इति वैज० (पृ० ३०० प० १२) पाठाच्च पकारमध्यो ऽप्ययम्।

२ हैम पुस्तकत्रयेऽपि 'शृङ्खल—' इति क्लीबलिङ्गो ऽयम्। किन्तु हैमनाममालाया तु शृङ्खलो निगडोऽन्दुकः। हिञ्जीरश्च पादपाशः' (४।२९५) इत्यस्य स्वोपज्ञव्याख्यायामय त्रिलिङ्ग उक्तः।

[1] 'सृणिद्वयो' इति पाठो मल्लिनाथसम्मत इति माघ (५।५।)स्य सवङ्कषाव्याख्या। एतच्छ्लोकव्याख्यायां मल्लिनाथः 'अङ्कुशोऽस्त्री सृणिर्द्वयो'" इत्यमर इति पठितवान्। तेनास्य 'सृणि' शब्दस्य पुंस्त्वेऽप्युक्तेर्माघोक्त समचीनमेवेति बोध्यम्। अत्र सुभूत्यादिसम्मतिरपि।

[2] सि० कौ० 'घृणिपृश्नि—' इत्येव सूत्रं पठित्वा शृणि किरणः' इति पठितम्।

'घञर्थे क.' (वा० ३।३।५८)। ( कूचा' ) इति मुकुट ॥ (१) ॥ * ॥ कक्षे भवा। 'शरीरावयवाच्च' (४।३।५५) इति यत्। 'कक्ष्या बृहतिकाया स्यात्काञ्च्या मध्येभवन्धने। हर्म्यादीनां प्रकोष्ठे च'। 'कार्यं हेतौ प्रयोजने' (इति मे० ११३।१०) ॥ (२) ॥*॥ व्रियतेऽनया। 'वृञ् वरणे' ( स्वा० उ० से० ) । बाहुलकादत्र । यद्वा,-वर त्रायते 'त्रैङ् पालने' (भ्वा० आ० अ०)। 'आतोऽनुप-'(३।२।३) इति क ॥ (३) ॥*॥ त्रीणि 'गजमध्यबन्धनस्य'।

**कल्पना सज्जना समे।**

**कल्पना, सज्जना (२ स्त्री), 'गेरू आदिसे हाथीकी सजावट करने' के २ नाम हैं।**

केति ॥ कल्पनम्। 'कृपू सामर्थ्ये' (भ्वा० आ० से०) ण्यन्त.। 'ण्यासश्रन्थ-' (३।३।१०७) इति युच्। 'अथ कल्पना। करिण सज्जनायां स्त्री क्लीब क्लृप्तौ च कल्पने' (इति मे० ८६।४६) ॥ (१) ॥*॥ एवं 'षस्ज गतौ' (भ्वा० प० से०)। ण्यन्ताद्युच् (३।३।१०७)। 'सज्जनं तु भवेत्क्लीबमुपरक्षणघट्टयो.। वाच्यलिङ्ग कुलीने स्यात्कल्पनायां च योषिति' (इति मे० ९३।४८-४९) ॥ (२) ॥ * ॥ द्वे 'पल्याणाद्यारोपणेन सज्जीकरणस्य'।

**प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः॥ ४२ ॥**

**प्रवेणी (स्त्री), आस्तरणम् (न), वर्णः, परिस्तोमः (२ पु), कुथः (पु स्त्री), 'हाथीके झूले' के ५ नाम हैं।**

प्रेति। प्रकर्षेण वीयतेऽस्याम्। 'वी गत्यादिषु' (अ० प० अ०) 'वीज्याज्वरिभ्यो नि '(उ० ४।४८)। प्रवेणि स्त्री कुथावेण्यो' (इति मे० ४९।६३)। 'कृदिकारात्-' (ग० ४। १।४५) इति वा ङीष् ॥(१)॥*॥ आस्तीर्यते, अनेन वा। 'स्तृञ् आच्छादने' ( क्र्या० उ० से० )। कर्मणि (३।३। ११३) करणे (३।३।११७) वा ल्युट् ॥(२)॥*॥ व्रियतेऽनेन। 'वृञ् वरणे' ( स्वा० उ० से० )। 'कृवृदृक्षिभ्यो न'[1] (उ० ३।१०) यद्वा बहवो वर्णा सन्त्यस्य। अर्शआद्यच् (५।२।१२७)। 'वर्ण स्वर्णे व्रते स्तुतौ। रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे। भेदे गीतक्रमे[2] चित्रे यशस्तालविशेषयो। अङ्गरागे च वर्णं तु कुङ्कुमे' इति हैम (२। १५३-१५५) ॥ (३) ॥ * ॥ परिस्तूयते। 'ष्टुञ् स्तुतौ' (अ० उ० अ०)। 'अर्तिस्तुसु-' (उ० १।१४०) इति मन्। परिगत स्तोमोऽत्र। वर्णस्तोमवत्वात्। यद्वा परिगत. स्तोमोऽत्र। 'पर्यादयो ग्लानाद्यर्थे' (त प्रति-)' (वा० १।४।५९)

इति परे स्तौति प्रत्ययनुपसर्गत्वान्न च ( ८।३।६५ ) ॥ (४) ॥*॥ कुष्णाति। 'कुन्थ दीप्तौ' (क्र्या० प० से०)। अच् (३।१।१३४)। '-दहदश-' (३।१।२४) इति निर्देशात्क्वचिदङ्क्तित्यपि नलोप.। यद्वा-कुन्थत्यशोभाम् 'कुथि हिंसायाम्' (भ्वा० प० से०)। आगमशास्त्रस्यानित्यत्वान्न नुम्। 'इगुपध-' (३।१।१३५) इति क। यद्वा-कुथ्यति। 'कुथ पूतीभावे' (दि० प० से०)। 'इगुपध-' (३।१।१३५) इति क। 'कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि' (इति मे० ७२।४)। क्लोबेऽपि। 'स्त्री प्रवेणी'। 'कुथ त्रिषु' इति कोपालित ॥ ( ५ ) ॥ * ॥ पञ्च 'गजोपर्यास्तरणचित्रकम्बलस्य' ( झूल' इत्याख्यस्य )।

**वीतं त्वसारं हस्त्यश्वम्**

**वीतम् (न),'लडनेमें असमर्थ हाथी-घोडे' का १ नाम है।**

वीति ॥ वेति स्म युद्धादिकर्मण.। 'वी गत्यादौ' (अ० प० से०)। अजति स्म वा। 'अज गतौ' (भ्वा० प० से०)। 'गत्यर्था-' ( ३।४।७२) इति क्त। 'वीतमसारगजे स्यादकुशकर्मण्यमात्तुरगे च' ( इति मे० ५८। ५९) ॥ (१) ॥ * ॥ सारो बलमस्य। हस्ती चाश्वश्च सेनाङ्गत्वादेकत्वात् ( २।४।२ ) ॥ * ॥ एक 'निर्बलहस्त्यश्वसमूहस्य'।

**वारी तु गजबन्धनी।**

**वारी, गजबन्धनी (२ स्त्री), 'हाथीखाना' अर्थात् 'हाथी बाँधनेकी जगह' के २ नाम हैं।**

वेति ॥ वार्यतेऽनया। 'वृञ्' ( स्वा० उ० से० ) ण्यन्त। 'वसिवपियजि-' (उ० ४।१२५) इतीञ्। 'वारी स्याद्गजबन्धन्यां कलश्यामपि योषिति। वारिर्विगजबन्धन्यो स्त्री क्लीबेऽम्बुनि वालुके' (इति मे० १२७।६६-६७) (१) ॥*॥ बध्यतेऽस्याम्। 'बन्ध बन्धने' (क्र्या० प० अ०)। अधिकरणे ल्युट् (३।३।११७)। गजस्य बन्धनी॥ (२) ॥*॥ द्वे 'गजबन्धनशालायाः'।

**घोटके पीतितुरगतुरंगाश्वतुरंगमाः॥ ४३ ॥**
**वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः।**

**घोटकः, वी(पी)तिः, तुरगः, तुरङ्गः, अश्वः, तुरङ्गमः, वाजी, वाहः, अर्वा, गन्धर्वः, हयः, सैन्धवः, सप्तिः (१३ पु), 'घोडे' के १३ नाम हैं।**

घोटेति ॥ घोटते। 'घुट परिवर्तने' ( भ्वा० आ० से०)। ण्वुल् ( ३।१।१३३ ) ॥ * ॥ पचाद्यचि 'घोटः' अपि। 'घोटसैन्धवगन्धर्वा हयवाजितुरगमाः' इति रभस.॥ (१) ॥*॥ पिबति। 'पा पाने' (भ्वा० प० अ०)। क्तिन् (३।३।१७४)। 'घुमास्था-' ( ६।४।६६ ) इतीत्वम्।

1. सि० कौ० उणादिसूत्रपाठे च 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' इत्येवं सूत्रस्वरूपम्।

२ हैमे 'क' पुस्तके '—गतिक्रमे—' इति पाठः।

लिति–' (३।१।१४०) इति ण —इत्याह । तन्न । 'नोदात्तोपदेशस्य' ( ६।३।३४ ) इति वृद्धिनिषेधात् । 'वामी शृगालीवडवारासभीकरभीषु च' ( इति मे० ११०।२९-३० ) ॥ ( १ ) ॥ * ॥ अश्वजाति अजादि (४।१।४) पाठात्टाप् ॥ ( २ )॥ * ॥ बल सामर्थ्यमतिशयितमस्या । 'अन्येभ्योऽपि–' ( वा० ५।१।१०९ ) इति व । बल वाति वा । 'आतोऽनुप–' ( ३।२।३ ) इति कः । बलेन व्रजति वा । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । डलयोरेकत्वम् । 'वडवा द्विजयोषिति । अश्वायां कुम्भदास्यां च नारीजात्यन्तरेऽपि च' ( इति मे० १६१।४९ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'वडवायाः' ।

**वाडवं गणे ॥ ४६ ॥**

वाडवम् (न), 'घोड़ियोंके झुण्ड' का १ नाम है।

वेति ॥ वडवाना समूहः । 'खण्डिकादिभ्यश्च' । (४।२।४५ ) इत्यञ् । 'वाडव करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां, पुंसि ब्राह्मणे वडवानले' ( इति मे० १६१।५० ) ॥ (१) ॥ * ॥ एकम् 'अश्वसमूहस्य' ।

**त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।**

आश्वीनम् (त्रि), 'एक दिनमें घोड़ेसे चलने योग्य रास्ता या देशादि' का १ नाम है।

श्वीति ॥ अश्वेन एकाहेनातिक्रम्यते 'अश्वस्यैकाहगमः' ( ५।२।१९ ) इति खञ् ( १ ) ॥ * ॥ एकम् 'अश्वेन एकदिनगम्यदेशस्य' ।

**कश्यं तु मध्यमश्वानाम्**

कश्यम् (न),'घोड़ेके मध्य भाग' का १ नाम है।

केति ॥ अश्वादेस्ताडनी, ताडनं वा कशा, तामर्हति । दण्डादित्वात् ( ५।१।६६ ) य । 'कश्य त्रिषु कशार्हे स्यात्क्लीबं मद्याश्वमध्ययोः' ( इति मे० ११३।७ ) ॥ (१) ॥ * । एकम् 'अश्वमध्यस्य' ।

**हेषा ह्रेषा च निस्वनः ॥ ४७ ॥**

हेषा, ह्रेषा ( २ स्त्री ) 'हिनहिनाहट, घोड़ेकी बोली' के २ नाम हैं।

हेषेति ॥ हेषणम् । ह्रेषणम् । 'हेषृ ह्रेषृ शब्दे' (भ्वा० आ० से० ) 'गुरोश्च हलः' ( ३।३।१०३ ) इत्य. । (१) ॥ * ॥ ( २ ) ॥ * ॥ द्वे 'अश्वशब्दस्य' ।

**निगालस्तु गलोद्देशो**

निगालः, गलोद्देशः ( २ पु), 'घोड़ेकी गर्दनके पीछेवाले भाग' के २ नाम हैं।

नीति ॥ निगलत्यनेन । 'गल अदने' ( भ्वा० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । निगरत्यनेन वा । 'गॄ निगरणे' ( तु० प० से० ) । 'उन्न्योर्ग्रः' ( ३।३।२९ ) इति घञ् । 'अचि विभाषा' ( ८।२।२१ ) इति वा ल ॥ ( १ ) ॥*॥ गलस्योद्देशः समीपभाग ॥ ( २ ) ॥ * ॥ 'घण्टाबन्धसमीपस्थो निगालः कथितो बुधैः । तस्मिन्नेव मणिनाम रोमज शुभकृन्मत' इत्यश्वशास्त्रम् ॥ * ॥ द्वे 'अश्वग्रीवायाः समीपभागस्य' ।

**वृन्दे त्वाश्वीयमाश्ववत् ।**

आश्वीयम्, आश्वम् ( २ न ), 'घोड़ोंके झुण्ड' के २ नाम हैं।

श्विति ॥ अश्वानां समूहः । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' ( ४।२।४८ ) ॥ ( १ ) ॥ * ॥ पक्षे 'तस्य समूह' ( ४।२।३७ ) इत्यण् ।—'अनुदात्तादेरञ्' ( ४।२।४४ )—इति मुकुटः । तन्न । अश्वशब्दस्यैवाश्वशब्दस्याद्युदात्तत्वात् ॥ ( २ ) ॥ * ॥ द्वे 'अश्ववृन्दस्य' ।

**आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥**
**गतयोऽमूः पञ्च धाराः**

आस्कन्दितम्, धौरितकम्, रेचितम्, वल्गितम्, प्लुतम् (५ न), 'घोड़ोंके सरपट दौड़ने, दुल्की चलने, पोइया चलने, उछाल मारकर चलने और चौकड़ी मारकर चलने'का क्रमश १–१ नाम है।

धारा (स्त्री), 'घोड़ों के पूर्वोक्त ५ चालों' का १ नाम है।

आस्केति ॥ आस्कन्दनम् । 'स्कन्दिर् गतिशोषणयोः' ( भ्वा० प० अ० ) स्वार्थण्यन्त' । भावे क्त ( ३।३।११४ ) । आस्कन्द संजातोऽस्य वा, तारकादित्वात् (५।२।३६ ) इतच एवमिण्लोपाभावश्च नानुपपन्न ( 'उत्तेरितमुपकण्ठमास्कन्दितकमित्यपि । उत्प्लुत्योत्प्लुत्य गमनं कोपादेवाभिले पदे' इति हैममाला ४।३१५)॥(१) ॥*॥ धोरणम् । 'धोॠ गतिचातुर्ये' ( भ्वा० प० से० )। भावे क्त ( ३।३।११४ ) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । 'अथ धौरितक धौर्यं धा ( धो ) रण धौरितं च तत्' इति वाचस्पति । वृद्धिमत्पाठे प्रज्ञाद्यण् (५।४।३८) बोध्य । ('तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् । बभ्रुकङ्कशिखिक्रोडगतिवत्' इति हैमनाममाला ४।३१२-३१३ ) ॥ ( १ ) ॥ * ॥ रेचनम् । 'रिचिर् विरेचने' ( रु० उ० अ० ) ण्यन्त. । क्त ( ३।३।११४ ) ( 'उत्तेजित रेचितं स्यान्मध्यवेगेन या गति.' इति हैमनाममाला ४।३१४ ) ॥ ( १ ) ॥*॥ वल्गनम् । 'वल्ग गतौ' (भ्वा० प० से०) । क्त ( ३।३।११४ ) । ( 'वल्गित पुन. । अग्रकायसमुल्लासात्कुञ्चितास्य नतत्रिकम्' इति हैमनाममाला ४।३१३) ॥ ( १ ) ॥ * ॥ प्लवनम् । 'प्लुङ् गतौ' ( भ्वा० आ० अ० ) । क्त ( ३।३।११४ ) । ( 'प्लुतं तु लङ्घन पक्षि-

मृगगत्यनुहारवम्' इति हैम =अभि० चि० म० ४।३१४ )। 'प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके' (इति हैम २।१८३।) (१) ॥ * ॥ अमरस्यानां पञ्च गतयः ॥ * ॥ धार्यन्तेऽश्वा अत्र, अनया वा। 'धृञ् धारणे' ण्यन्त। ( भ्वा० उ० अ० )। भिदादयङ् ( ३।३।१०४ )। ( धारा मैन्याग्रिमस्कन्धे तुरगगतिपञ्चके' इति मे०. १२६।५०-५१ )। (१) ॥ * ॥ 'अश्वगतिविशेषाणाम्' एकैकम्।

**घोणा तु प्रोथमस्त्रियाम्।**

घोणा (स्त्री), प्रोथम् (पु न), भा० दी० मतसे 'घोडेके चक्कर लगाने' के २ नाम हैं और महे० मतमें 'घोडेकी नाक' का 'प्रोथम्' यह १ नाम है।

घवेति ॥ घोणते। 'घुण भ्रमणे' (भ्वा० आ० से०)। अच् (३।१।१३४)॥ (१) ॥*॥ प्रोथति। प्रोथृ पर्याप्तौ' (भ्वा० उ० से० )। अच् ( ३।१।१३४ )। 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' (इति मे० ७२।१०)॥ (२) ॥ * ॥ द्वे 'अश्वभ्रमणस्य'।

**कविका तु खलीनोऽस्त्री**

कविका (स्त्री), खलीनः (पु न), 'घोडेकी लगाम' के २ नाम हैं।

केति ॥ कवते। 'कुङ् शब्दे' ( भ्वा० आ० अ० )। 'अच इ.' ( उ० ४।१३९ ) स्वार्थे कन् ( ज्ञापि० ५।४।५ )। यद्वा—'कृञादिभ्यो वुन्—' ( उ० ५।३५ )। टाप् ( ४।१।४ )। ह्रस्वम् ( ७।३।४४ ) ॥ ( १ ) ॥ * ॥ खे मुखबिले लीनः ॥ ( २ )॥*॥ द्वे 'खलीनस्य', 'खलीनस्य', 'कडिआली' 'लगाम' इति ख्यातायाः।

**शफं क्लीबे खुरः पुमान् ॥ ४९ ॥**

शफम् (न), खुरः (पु), 'घोडेकी सुम' (खुर) के २ नाम हैं।

शेति ॥ शं फणति। 'फण गतौ' ( भ्वा० प० से० )। 'अन्येष्वपि—' ( वा० ३।२।१०१ ) इति डः। पृषोदरादि ( ६।३।१०९ ) शफं मूले तरूणां स्यादगवादीनां खुरेऽपि च' ( इति मे० १०४।३ )। ( १ ) ॥ * ॥ खुरति। खुर छेदने' ( तु० प० से० )। 'इगुपध—' (३। १।१३५ ) इति क.। 'खुरः कोलदले शफे' ( इति मे० १२४।२२ )। ( २ ) ॥ * ॥ द्वे 'पादस्य'।

**पुच्छोऽस्त्री लूमलाङ्गूले**

पुच्छः (पु न), लूमम्, लाङ्गूलम् (२ न), 'घोडेकी दुम (पूंछ)' के ३ नाम हैं।

पेति ॥ पुच्छति। 'पुच्छ प्रमादे' ( )। अच् (३। १।१३४)। पृषोदरादि। ( ६।३।१०९ )। 'पुच्छमाण्ड—' (३।१।२०)। इति निपातनाद्वा।—इगुपधत्वात् को वा—इति मुकुटश्चिन्त्यः। अन्तरङ्गत्वात्तुकि सतीगुपधत्वाभावात्। 'पुच्छः पश्चात्प्रदेश. स्यात्लाङ्गूले पुच्छमिष्यते' ( इति मे० २९।५ ) ॥ ( १ ) ॥ * ॥ लूयते। बाहुलकान्मक् ॥ ( २ ) ॥*॥ लङ्गति। 'लगि गतौ' (भ्वा० प० से०)। 'खर्जिपिञ्जादिभ्य ऊरोलचौ' ( उ० ४।९० )। प्रज्ञाद्यण् ( ५।४।३८ )। 'लाङ्गूलं पुच्छशेफयो.' (इति मे० १५४। १२७ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'पुच्छस्य'।

**वालहस्तश्च वालधिः।**

वालहस्तः, वालधिः ( २ पु ) 'घोडेकी पूंछके बालवाले अगले भाग' के २ नाम हैं।

वेति ॥ 'वालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ' ( इति पवर्गीयादौ मेदिनी १४८।३९-४० )। वालो हस्त इव। दंशादिनिवारकत्वात्। वालाना हस्तः समूहो वा। ( १ ) ॥ * ॥ वाला धीयन्तेऽत्र। 'कर्मण्यधिकरणे च' ( ३।३।९३ ) इति किः ॥ ( २ ) ॥ * ॥ द्वे 'केशवल्लाङ्गूलमात्रस्य'।

**त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥**

उपावृत्तः, लुठित. (२ त्रि), 'थकावट दूर करनेके लिये जमीनपर लोटे हुए घोडे' के २ नाम हैं।

त्रीति ॥ उपावर्तते स्म। 'वृतु वर्तने' ( भ्वा० आ० से० ) अकर्मकत्वात् ( ३।४।७२ ) क्तः ॥ ( १ ) ॥*॥ ॥ * ॥ लुठति स्म। 'लुठ प्रतिघाते' (भ्वा० प० से०)। क्तः ( ३।४।७२ ) ॥ ( २ ) ॥ * ॥ द्वे 'श्रमशान्त्यर्थं पुन पुनर्भूमौ लुठितस्याश्वस्य'।

**याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः।**

शताङ्गः, स्यन्दनः, रथः (३ पु), 'लडाईके रथ' के ३ नाम हैं।

शेति ॥ यान्त्यनेन। 'या प्रापणे' (अ० प० अ०)। 'करणा—' ( ३।३।११७ ) इति ल्युट्। चक्रमस्यास्ति। इति (५।२।११५)। युद्धायेदम्। तस्मिन् ॥*॥ शतमङ्गान्यवयवा यस्य ॥ (१) ॥*॥ स्यन्दते। 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० )। 'बलनशब्दार्थादकर्मकाद्युच्' (३।२।१४८)। 'स्यन्दनं तु स्तुतौ नीरे, तिनिशे ना, रथेऽस्त्रियाम्' (इति मे० ९३।४८) ॥ (२) ॥*॥ रमन्तेऽत्र, अनेन वा। 'हनिकुषिनीरमिकाशिभ्य क्थन्' (उ० २।२) मलोपः (६।४।३७)। 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' (इति मे० ७४।१२) ॥ (३) ॥*॥ त्रीणि 'रथस्य'।

**असौ पुष्परथश्चक्रयानं न समराय यत् ॥ ५१ ॥**

पुष्परथः (पु),'यात्रा, उत्सव आदिमें चढ़नेके लिये बनाये हुए रथ' का १ नाम है।

अमाविति ॥ पुष्य इव रथः । पुष्ये यात्रोत्सवादौ रथो वा । अन्तस्थमध्यो (पुष्यरथ) वा ॥ * ॥ (पुष्परथ इति ) पकारमध्यपाठे तु सुकुमारत्वात् 'पुष्पमिव रथ' इति विग्रह ॥ (१) ॥ * ॥ एकं 'युद्ध विना यात्रोत्सवादौ सुखभ्रमणार्थस्य रथस्य'।

कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।

कर्णीरथ (पु), प्रवहणम् , डयनम् ( ३ न ) 'स्त्रियोंके चढ़नेके लिये पर्दा आदिसे आड़ किये हुए रथ' के ३ नाम हैं।

केति ॥ कर्णसाध्या श्रवणक्रियोपचारात् कर्णा । कर्णोऽस्यास्ति । इति ( ५।२।११५ ) । कर्णी चासौ रथश्च शब्दमात्रेण रथ । ननु वस्तुनो रथ । यद्वा—सामीप्यात्कर्णशब्देन स्कन्धो लक्ष्यते । कर्ण=स्कन्ध । सोऽस्त्यस्य वाहकत्वेन । स्कन्धवाह्य । स चासौ रथश्च । 'अन्येषामपि–' (६।३।१३७) इति दीर्घ ॥ (१) ॥ * ॥ प्रोह्यते अनेन वा । 'वह प्रापणे' (भ्वा० उ० अ०) । ल्युट् (३।३।११७ ) ॥ (२) ॥ * ॥ डीयतेऽनेन । 'डीङ् विहायसा गतौ' (दि० आ० से०) । ल्युट् (३।३।११७) ॥ * ॥ 'हयनम्' इति पाठे 'हय गतौ' (भ्वा० प० से०) ल्युट् (३।३।११७) ॥ (३) ॥ * ॥ त्रीणि 'पुरुषस्कन्धवाह्यस्य यानविशेषस्य' 'डोला' इति ख्यातस्य ।

क्लीबेऽनः शकटोऽस्त्री स्यात्

अनः (न), शकटः (पु न), 'गाड़ी' के २ नाम हैं।

क्लीति ॥ अनिति चीत्करोति । 'अन प्राणने' (अ० प० से०) । असुन् (उ० ४।१८९) ।—करणेऽसुन्—इति मुकुट । तन्न । करणत्वासम्भवात् । कर्तृत्वौचित्याच्च ॥ (१) ॥ * ॥ शक्नोति भारं वोढुम्, जीवयितुं वा । वा । तदुक्तम्—'शकट शाकिनी गावो यानमारकन्दन स्वनम् । अनूप पर्वतो राजा दुर्भिक्षे नव वृत्तय ' इति । 'शक्लृ शक्तौ' (स्वा० प० अ०) । 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ (२) ॥ * ॥ द्वे 'शकटस्य' ।

गन्त्री कम्बलिवाह्यकम् ॥५२॥

गन्त्री (स्त्री), कम्बलिवाह्यकम् ( न ), 'छोटी गाड़ी' के २ नाम हैं।

गेति ॥ गम्यतेऽनया । ष्ट्रन् ( उ० ४।१४९ ) । षित्वान्ङीष् (४।१।४१) ॥ (१) ॥ * ॥ कम्बल सास्नाऽस्यास्ति । इनि (५।२।११५) । कम्बलिभिर्वृषैरुह्यते । ण्यत् (३।१।१२४) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ (२)॥ द्वे 'शकटिकाया '('सग्गड' इत्याख्याया ) ।

शिबिका याप्ययानं स्यात्

शिबिका (स्त्री),याप्ययानम् (न),'पालकी'के २ नाम हैं।

शीति ॥ शिवेव । 'संज्ञायां कन्' (५।३।७५)। यद्वा—शिवं करोति । 'तत्करोति–'(वा० ३।१।२६) इति ण्यन्तात् ण्वुल् ॥ (१) ॥ * ॥ याप्यैरधमैर्वाह्यं यानम् ॥ (२) ॥ * ॥ द्वे 'पालकी' इति ख्यातायाः ।

दोला प्रेङ्खादिका स्त्रियाम्।

दोला, प्रेङ्खा, (२ स्त्री), 'झूला, हिंडोला' के २ नाम हैं।

दविति ॥ दोलायति, दोल्यते वा । 'दुल उत्क्षेपे' चुरादि । अच् (३।१।१३४) घञ् (३।३।१९) वा (१) ॥ * ॥ प्रेङ्खयते । 'इखि गतौ' (भ्वा० प० से०) । घञ (३।३।१९) । 'दोला प्रेंख पुमान् प्रेंखा, निश्रेणिरधिरोहणी' इति रत्नकोषः ॥ (२) ॥ * ॥ आदिना शयनख ट्वावाह्यादिदोला ॥ * ॥ द्वे 'दोलायाः' 'हिंडोला' इति ख्यातायाः । 'डोली' इति ख्यातायाः वा ।

उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥

द्वैप, वैयाघ्र (२ त्रि), 'बाघके चमड़ेसे मढ़े हुए रथ' के २ नाम हैं।

उभाविति ॥ द्वीपिनो व्याघ्रस्य च विकार । 'प्राणिरजतादिभ्योऽञ्' ( ४।३।१५४ ) । द्वैपेन वैयाघ्रेण च चर्मणा परिवृतो रथ । 'द्वैपवैयाघ्रादञ्' (४।२।१२) ॥ (१) ॥ * ॥ (२) ॥*॥ द्वे 'व्याघ्रचर्मवेष्टितरथस्य' ।

पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।

पाण्डुकम्बली (त्रि), 'पाण्डु ( धूसर ) कम्बलसे मढ़े या ढके हुए रथ' का १ नाम है।

पेति ॥ स्यात्पाण्डुकम्बल श्वेतप्रावारग्रावभेदयो' (इति मे० १५७।१७०) । पाण्डुकम्बलेन परिवृतो रथ । 'पाण्डुकम्बलादिनि ' (४।२।११)॥ (१)॥*॥ एकं 'शुक्लकम्बलवेष्टितरथस्य ।

रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५४॥

काम्बल , वास्त्र (२ त्रि),आदि 'कम्बल और कपड़े आदि से ढके हुए रथ' का क्रमश १—१ नाम है।

रेति ॥ कम्बलेन वस्त्रेण च प्रावृतो रथ । 'परिवृतो रथ ' ( ४।२।१० ) इत्यण् ॥ ( १ ) ॥ * ॥ आदिना चार्मक्षौमदौकूलादिग्रह ॥ * ॥ एकैकम् 'कम्बलाद्यावृतरथस्य' ।

त्रिषु द्वैपादयः ।

'द्वैप' आदि शब्द त्रिलिङ्ग हैं।

त्रीति ॥ (द्वैपादयो वास्त्रान्ता ) ।

रथ्या रथकट्या रथव्रजे ।

रथ्या, रथकट्या ( २ स्त्री ), रथव्रजम् ( पु न), 'रथोंके समूह' के ३ नाम हैं।

रेति ॥ रथानां समूहः । 'खलगोरथात्' (४।२।५०) इति यत् । ('अथ) 'रथ्यो रथाश्वे रथवोढरि । रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे' इति हैम ( २।३८२-३८३ ) ॥ (१) ॥ ॥ 'इनित्रकट्यचश्च' (४।२।५१) ( २ ) ॥ * ॥ रथानां व्रज. ॥ ( ३ ) ॥ * ॥ त्रीणि 'रथसमूहस्य' ।

धूः स्त्री क्लीबे यानमुखं

धूः (स्त्री), यानमुखम् (न), 'रथके धूरा' के २ नाम हैं।

धिवति ॥ धूर्वति । 'धुर्वी हिंसायाम्' (भ्वा० प० से०) 'भ्राजभास–' (३।२।१७७) इति क्विप् । 'राल्लोपः' (६।४।२१) । 'र्वो –' (८।२।७६) इति दीर्घः । ('धूर्यानमुखभारयो' इति हैम १।१३ ) ॥ ( १ ) ॥ * ॥ यानस्य मुखं पुरोभाग । ( २ ) ॥ * ॥ द्वे 'वोढृबन्धनस्थानस्य' ।

स्याद्रथाङ्गमपस्करः ॥ ५५ ॥

रथाङ्गम् ( न ), अपस्करः ( पु ), 'रथके अवयव' के २ नाम हैं।

स्येति ॥ रथस्याङ्गम् ॥ (१) ॥ * ॥ अपकीर्यते स्वस्थाने क्षिप्यते । 'कृ विक्षेपे' (तु० प० से०) 'ऋदोरप्' (३।३।५७) । 'अपस्करो रथाङ्गम्' (६।१।१४९) इति साधु (२) ॥ * ॥ द्वे चक्रभिन्नस्य 'रथारम्भकस्य'।

चक्रं रथाङ्गम्

चक्रम्, रथाङ्गम्, (२ न), रथ, गाड़ी आदिके पहिये' के २ नाम हैं।

चेति ॥ क्रियते गतिरनेन । 'घञर्थे क' (वा० ३।३। ५८) । '–कृञादीनां के' (वा० ६।१।१२) इति द्वित्वम् । 'चक्र कोके पुमान्, क्लीब व्रजे[2] सैन्यरथाङ्गयो । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयो । जलावर्तेऽपि' (इति मेदिनी १२५।३१-३२) ॥ ( १ ) ॥ * ॥ रथस्याङ्गम् । 'रथाङ्ग न द्वयोश्चक्रे ना चक्राङ्गविहंगमे' (इति मेदिनी २५।४६) ॥ (२) ॥ * ॥ द्वे 'चक्रस्य' ।

तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान् ।

नेमिः (स्त्री), प्रधिः (पु), 'हाल रथके पहियेके ऊपरवाले परिधि' के २ नाम हैं।

तेति ॥ तस्य चक्रस्यान्तो भूस्पर्शिभाग ॥ * ॥ नयति रथम् । 'नियो मि' ( उ० ४।४३ ) । । 'नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयो स्त्रियाम्' (इति मेदिनी १०६।१७) ॥ (१) ॥ * ॥ प्रधीयतेऽनेन । 'डुधाञ्' (जु० उ० अ०) । 'उपसर्गे घो कि' ( ३।३।९२ ) ॥ ( २ ) ॥ * ॥ द्वे 'चक्रस्यान्तस्य' ।

पिण्डिका नाभिः

पिण्डिका, नाभिः ( २ स्त्री ), 'पहियेके बीचवाले भाग ( जिसमें चारों तरफसे काठ जुड़े रहते हैं )' के २ नाम हैं।

पीति ॥ पिण्ड्यतेऽत्र यस्याम् । 'पिडि संघाते'(भ्वा० आ० से०) । 'हलश्च' (३।३।१२१) इति घञ् । गौरादि (४।१।४१) स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ नह्यन्तेऽरा अत्र । 'णह बन्धने' (दि० उ० अ०) । 'नहो भश्च' ( उ० ४।१२६ ) इतीञ् हस्य भ. । यद्वा नभ्यतेऽक्षेण । 'णभ हिंसायाम्' (भ्वा० आ० से०) । 'इञ् (ण)-जादिभ्य' (वा० ३।३।१०८) । 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययो पुमान् । द्वयो प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे' (इति मेदिनी १०६।५-६) ॥ (२) ॥ * ॥ द्वे 'रथचक्रमध्ये मण्डलाकारायाः' ।

अक्षाग्रकीलके तु द्वयोरणिः ॥ ५६॥

अणिः ( पु स्त्री ), 'धूरामें लगनेवाली किल्ली' का १ नाम है।

अक्षेति ॥ अक्षस्य नाभिक्षेप्यस्याग्रे कीलके । अणति 'अण शब्दे' (भ्वा० प० से०) । इन् (उ० ४।११८) । 'अणिराणिवदक्षाग्रकीले स्यादश्रिसीमयो ' इति विश्वः(४९। २२) । 'अणिराणिवदक्षाग्रकीलेऽश्रिसीमसु द्वयो ' ( इति मेदिनी ४५।२) ॥ (१) ॥ * ॥ द्वे 'अक्षाग्रकीलकस्य' ।

रथगुप्तिर्वरूथो ना

रथगुप्तिः (स्त्री), वरूथः (पु), 'लड़ाईमें शत्रुके प्रहारसे बचनेके लिये रथमें लगाये हुए लोहा आदिके पर्दे' के २ नाम हैं।

रेति ॥ रथस्य गुप्तिरावरणम् ॥ (१) ॥ * ॥ व्रियते रथोऽनेन । 'जॄवृञ्भ्यामूथन्' ( उ० २।६ ) । '( वरूथो

१. 'रथाङ्गानि रथपस्करा ' (अभिधि-३।४२२ इत्यस्य स्वोपज्ञवृत्तौ)'चक्रादन्यानि रथस्याङ्गानि आरम्भकानि' इति हेमचन्द्र , 'आरम्भकं चक्रादन्यत्' इति च क्षीरस्वामी उक्तवान् । तदनुरोधेनेदम् । मुकुटस्तु 'रथस्याक्षयुगचक्रादिक सर्वमपस्कर इति सामान्येनाङ्गीकृतवान् । 'चक्र'स्य रथाङ्गत्वेनैव गतार्थत्वेऽपि पुनरग्रे 'चक्र रथाङ्गम्' इति वचने नामान्तरप्रतिपादनार्थं 'तस्यान्ते नेमिः—' इत्यग्रिमवचनस्थतच्छब्देन 'चक्र'स्य ग्रहणार्थं चेति ।

२ 'चक्र गणे —' इति विश्वानुरोधादत्र मेदिन्या अपि '—क्लीब व्रजो—' इति पाठोऽसमीचीन एव । अत 'क्लीबं व्रजे'—इति पाठ एव सम्यक् ।

रथगुप्तौ स्यात् ) वरूथं चर्मवर्मणो' ( इति मेदिनी ७३। २१ )॥ ( २ ) ॥ * ॥ द्वे 'परप्रहाणाभिघातरक्षार्थं रथसन्नाहवदावरणस्य'।

कूबरस्तु युगंधरः।

कूबर, ( २ पु ) 'जुआ, फड़, रथमें घोड़ा आदि जोते जानेवाले काष्ठ या जुएके काठको बाँधे जानेवाले स्थान' के २ नाम हैं।

किवति ॥ कूयते। 'कूङ् शब्दे' ( तु० आ० से० )। बाहुलकाद्वरच। कुटादि। 'कूबरस्त्रिषु चार्वौ ना कुब्जेऽस्त्री युगंधरे' (इति मेदिनी १३३।१४१)।—कूयते—इति स्वामी॥ (१) ॥ * ॥ युगं वोढृबन्धनकाष्ठं धारयति। 'संज्ञायां भृतॄवृजि–' (३।२।४६) इति खच्। 'अरुर्द्विषद्–' (६।३।६७) इति मुम्॥ ( २ ) ॥ द्वे 'युगकाष्ठबन्धनस्थानस्य'।

अनुकर्षो दार्वधःस्थम्

अनुकर्ष (पु), 'रथके नीचेवाले काष्ठ' का १नाम है।

अन्विति ॥ अनुकृष्यते। 'कृष विलेखने' (भ्वा० प० अ०)। घञ् (३।३।१९)। अनुकर्षो रथाधःस्थदारुण्यनुकर्षणे' (इति मेदिनी १६९।४८) ॥*॥ नान्तोऽप्ययम्। 'अनुकर्षा नाक्षतलदारु' इति बोपालितात्॥ (१) ॥*॥ एक 'रथस्याधस्तलभागदारुणः'।

प्रासङ्गो ना युगान्तरम् ॥ ५७ ॥

प्रासङ्ग (पु), महे० मतसे 'रथ आदिके जुआठ, फड़' का और भा० दी० मतसे 'नये बछवाको पहले पहल शिक्षा देने के लिये उसके कन्धेपर रक्खे जानेवाले काष्ठ' का १ नाम है।

प्रेति ॥ प्रसज्यते। 'षञ्ज सङ्गे' (भ्वा० प० अ०)। घञ् (३।३।१९)। उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घ ॥ (१) ॥ * ॥ ग्याद्यङ्गयुगादन्ययुगं वृषभाणां दमनकाले यदासज्यते तस्येदम्। स्वामी तु ( युगाद्युग' इति पाठमाश्रित्य )—युगेनातति। युगादयादि। तस्य युगो ना—इत्याह। अन्तैप्—युगान्तरं पदबन्धनं। तस्य—इत्याहु। 'युगं द्वितीयं प्रासङ्ग' इति कात्य। एकम् अन्यवृषयुगस्य'।

सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्।

वाहनम्, यानम्, युग्यम्, पत्त्रम्, धोरणम् ( ५ न ), 'वाहनमात्र' अर्थात् 'हाथी, घोड़ा इत्यादि'के ५ नाम हैं।

१ हेमचन्द्र 'प्रासङ्गस्तु युगान्तरम्' ( अभि० चि० ३।४२१ ) इत्यस्य स्वोपज्ञवृत्तौ 'द्वितीयं युगं युगान्तरम्। यत् काष्ठं वत्सानां दमनकाले स्कन्धे आसज्यते। 'युगं द्वितीयं प्रासङ्ग' इत्युक्तवान्।

सेति ॥ सर्वं हस्त्यश्वरथादिदोलान्तम्। वाहयति। वहेः स्वार्थण्यन्तात्कर्तरि ल्युट् (३।६।११३)। अन्ये तु—वहत्यनेन। 'करणा–' (३।३।११७) इति ल्युट्। 'वाहनमाहितात्' (८।४।८) इति निपातनाद्दीर्घ —इत्याहु॥ (१) ॥ * ॥ यात्यनेन। करणे ल्युट् (३।३।११७) 'यानं स्याद्वाहने गतौ' (इति मेदिनी ८३।१६) ॥ (२) ॥ * ॥ युज्यते अनेन वा। 'युजिर् योगे' (रु० उ० अ०)। 'युग्यं च पत्रे' (३।१।१२१) इति क्यबन्तो निपात ॥ (३) पतत्यनेन। 'पत्लृ गतौ' ( भ्वा० प० अ० )। 'दाम्नी–' (३।२।१८२) इति ष्ट्रन्। 'पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणो' ( इति मेदिनी १२६।५५ )॥ (४) ॥*॥ धोरति, अनेन वा। धोरयति वा। धोर्ऋ गतिचातुर्ये (भ्वा० प० से०) ल्यु ( ३।१।१३४ )। ल्युट् (३।३।११३) वा॥ (५) ॥*॥ पञ्च 'वाहनमात्रस्य'।

परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥

वैनीतकम् ( न पु ), 'परम्परावाली सवारी, कहाँर आदिके द्वारा बारी-बारी से ढोई जानेवाली पालकी, डोली आदि' का १ नाम है।

वेति ॥ विनीतकानामिदम्। यद्वा–विनीयते स्म। क्त ( ३।२।१०२ )। 'संज्ञायां कन्' ( ५।३।७५ )। प्रज्ञाद्यण् (५।४।३८) ॥ (१) ॥ * ॥ परम्परया यद्वाह्यं वहति। शकटं यथारूढम्। तस्यैकं 'परम्परावाहनस्य'।

आधोरणा हस्तिपका हस्त्यारोहा निषादिनः।

आधोरण, हस्तिपक, हस्त्यारोह, निषादी (४ पु), 'हाथीवान' के ४ नाम हैं।

आधविति ॥ आधोरयन्ति। ल्यु ( ३।१।१३४ )॥ ( १ ) ॥ * ॥ हस्तिनं पान्ति। पा रक्षणे' ( अ० प० अ० )। आतोऽनुप–' ( ३।२।३ ) इति क। स्वार्थे कन् (ज्ञापि० ५।४।५)। (२) ॥ * ॥ हस्तिनमारोहयन्ति। 'कर्मण्यण्' ( ३।२।१ ) ॥ ( ३ ) ॥ * ॥ निषीद स्यावश्यम्। 'षद्लृ विशरणादिषु' ( भ्वा० प० अ० )। आवश्यके णिनि ( ३।३।१७० )। यद्वा–निषादयन्त्युपवेश यन्ति हस्तिनम्। ग्रह्यादित्वात् ( ३।१।१३४ ) आवश्यके ( ३।३।१७० ) वा णिनि ॥ ( ४ ) ॥ * ॥ चत्वारि हस्तिपकानाम्।

नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥५९॥

सव्येष्टृदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः।

नियन्ता, प्राजिता, यन्ता, सूत, क्षत्ता, सारथि, सव्येष्ठ, दक्षिणस्थ (८ पु), 'रथके परिवार' अर्थात् 'रथ हाँकनेवाला ड्राइवर, कोचवान, बग्गीवान, एक्कावान और पीछे चढ़ने-

वाले जो दौड़कर आगेकी भीड़को हटाकर फिर पीछे चढ़ जाते हैं, इत्यादि' के ८ नाम हैं।

नीति ॥ नियच्छति। अन्तर्भावितण्यर्थो वा। 'यमु उपरमे' ( भ्वा० प० अ० ) तृच् (३।१।१३३) ॥ (१) ॥ * ॥ प्राजति। 'अज गत्यादौ' ( भ्वा० प० से० )। तृच् अन्तर्भावितण्यर्थो वा। 'वलादावार्धधातुके वेष्यते' ( भाष्य० २।४।५६ ) इति वी न।—प्राजयति—इति स्वामि-मुकुटोक्तं चिन्त्यम्। णिचि वीभावस्य नित्यत्वात्। 'प्राजयिता' इति रूपप्रसङ्गाच्च। यदपि—वानुवृत्तेर्वीभावो नास्ति—इति स्वामिनोक्तम्। तदपि चिन्त्यम्। वृत्त्यादौ वानुवृत्तेरदर्शनात्[1] ॥ ( २ ) ॥ * ॥ यच्छति। तृच् ( ३।१।१३३ ) ॥ ( ३ ) ॥ * ॥ सुवति गमयति स्माश्वान्। 'षू प्रेरणे' ( तु० प० से० )। क्त ( ३।२।१०२ )। 'सूतस्तु सारथौ तक्षिण क्षत्रियाद्ब्राह्मणीसुते। वन्दिपारदयोः ( पुंसि, प्रसूते प्रेरिते त्रिषु )' ( इति मे०[2] ५९।७३ ) ॥ ( ४ ) ॥ * ॥ क्षदति। 'क्षद संवरणे' सौत्र। 'तृन्तृचौ शंसिक्षदादिभ्य संज्ञायां चानिटौ' ( उ० २।९४ )। मुकुटस्तु 'नप्तृनेष्टृत्वष्टृ-' ( उ० २। ९५ )। इति तृच्—इत्याह। तन्न। नप्त्रादिषु क्षत्तुरग्रहणात्। यदपि—'क्षद स्थैर्ये, हिंसायां च' इत्यतस्तृच् ( ३।१।१३३ ) तृन् ( ३।२।१३५ ) वा—इत्युक्तम्। तदपि न। उक्तपाठस्यादर्शनात्। 'खद स्थैर्ये' ( भ्वा० प० से० ) इति पाठस्य दर्शनाच्च ॥ ( ५ ) ॥ * ॥ सरत्यश्वान्। 'सृ गतौ' ( भ्वा० प० अ० )। अन्तर्भावितण्यर्थः। 'सर्तेणिच्च' ( उ० ४।८९ ) इति थिन्। सरथस्यापत्यम्, वा ॥ ( ६ ) ॥ * ॥ सव्ये वामे तिष्ठति। 'सव्ये स्थश्छन्दसि' ( उ० २।१०१) इत्यृन् डिच्च। 'स्थास्थिन्स्थूणाम्' ( ८।३।९७ )इति वक्तव्यात् षत्वम्। 'स्थास्थिन्स्थूनाम्' इति पाठे[3] तु सुषामादित्वात् ( ८।३।९८ ) षत्वम्। 'हलदन्तात्' ( ६।३।९ )इत्यलुक् ॥ * ॥ 'सव्येष्ठ' इत्यदन्तोऽपि। 'प्राजिता दक्षिणस्थश्च सादी सारथिरुच्यते। सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ एव च' इत्यमरमाला ॥ ( ७ ) ॥ * ॥ दक्षिणे तिष्ठति। 'सुपि-' ( ३।२।४ ) इति क ॥ ( ८ ) ॥ * ॥ रथं कुटुम्बयितुं शीलमस्य। 'कुटुम्ब धारणे' ( चु० आ० से० )। 'सुपि-' ( ३।२।७८ ) इति णिनि। यद्वा—रथ एव कुटुम्बम्। रथकुटुम्बमस्यास्ति। इनि ( ५।२।११५ )। तस्य अष्टौ 'रथकुटुम्बिन'।

रथिनः स्यन्दनारोहा·

रथी, स्यन्दनारोहः (२ पु), 'रथपर चढ़कर लड़नेवाले' के २ नाम हैं।

रेति ॥ रथोऽस्यास्ति। इनि। ( ५।२।११५ ) ॥ ( १ ) ॥ * ॥ स्यन्दनमारोहन्ति। 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ०)। अण् (३।२।१) ॥ ( २ ) ॥ * ॥ द्वे 'रथारूढस्य योद्धु'।

अश्वारोहास्तु सादिनः ॥ ६० ॥

अश्वारोह, सादी (२ पु), 'घुड़सवार' के २ नाम हैं।

अश्वेति ॥ अश्वमारोहन्ति प्राग्वत् ॥ ( १ ) ॥ * ॥ सीदन्त्यवश्यम्। 'षद्लृ विशरणादौ' ( तु० प० अ० )। 'आवश्यका-' ( ३।३।१७० ) इति णिनि। 'सादी तुरंगमातङ्गरथारोहेषु दृश्यते' ( इति मे० ९४।५२ ) ॥ (२) ॥ * ॥ द्वे 'अश्ववाराणां' 'असवार' इति ख्यातस्य।

भटा योधाश्च योद्धारः

भटः, योधः, योद्धा (३ पु), 'लड़नेवाले वीर' के ३ नाम हैं।

भेति ॥ भटति। 'भट भृतौ परिभाषणे वा' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। 'भटः स्यात् पुंसि वीरे च विशेषे पामरस्य च' ( इति मे० ३५।२३ ) ।(१) ॥ * ॥ युध्यते। 'युध सम्प्रहारे' ( दि० आ० अ० )। अच् ( ३।१।१३४ ) ॥ (२) ॥ * ॥ तृच् ( ३।१।१३३ ) ॥ ( ३ ) ॥ * ॥ त्रीणि 'योद्धु'।

सेनारक्षास्तु सैनिकाः ।

सेनारक्षः, सैनिकः (२ पु), 'सेनाके पहरेदार' के २ नाम हैं।

सेनेति ॥ सेनां रक्षन्ति। 'कर्मण्यण्' ( ३।२।१ ) ॥ ( १ ) ॥ * ॥ 'रक्षति' ( ४।४।३३ ) इति ठक्। 'सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके' ( इति मे० १४।१७२ ) ॥ ( २ ) ॥ * ॥ द्वे 'प्रहरिकादे'।

सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥

सैन्यः, सैनिकः (२ पु), 'सैनिक' अर्थात् 'सेनामें रहनेवाले' के २ नाम हैं।

---

१ 'अजेर्व्यघञपोः' इति सूत्रस्य भाष्ये 'एवं तर्हि नार्थ उपसंख्यानेन, नापि घञपोः प्रतिषेधेन। इदमस्ति 'चक्षिङः ख्याञ्' 'वा लिटि' इति ततो वक्ष्यामि [अजेर्वी] अजेर्वीभावो भवति वा। 'व्यवस्थितविभाषा च' इत्यनेन 'विभाषा'ऽनुवृत्तेरङ्गीकाराच्चिन्त्यमिदम्।

२ विश्वे सूतस्तु सारथौ तक्षिण प्रसूते प्रेरितेऽपि च। क्षत्रियाद् ब्राह्मणीजेऽथ सूतः पारदवन्दिनो ॥'(१७।११) इति भिन्नपाठाद्भ्रत्यत्र क्तन 'विश्व-मेदिन्यौ' इति पाठ स्यक्त्वा मेदिन्यामेवैतत्पाठोपलब्ध्या मयाऽत्र 'मेदिनी' इति पाठ स्थापित.।

३ 'स्थ स्थास्थिन्स्थूणामिति वक्तव्यम्' इति वार्तिकस्य 'सव्येष्ठा सारथिः' इत्युदाहरणदानात्, स्थशब्द 'ऋच्छ्रत्ययान्त' इति कैयटेन चोक्तत्वादत्र—'स्थूणाम्' इत्यत्रोकारघटितपाठस्याप्रामाणिकता 'तु' शब्देन ध्वन्यते।

सेनेति ॥ सेनाया समवैति । 'सेनाया वा' ( ४।४।४५ ) इति ण्य । 'सैन्य सैनिकसनयो' इति हैम (२।४०१ ) ॥ ( १ ) ॥ * ॥ पक्षे ठञ् (४।४।११) ॥ (२) ॥ * ॥ द्वे 'सेनाया मिलितस्यैकदेशीभूतस्य' ।

बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।

साहस्र , साहस्री ( २ पु), 'एक हजार योद्धाओंवाले सूबेदार आदि' के २ नाम हैं।

बेति ॥ सहस्र बलानि सन्ति येषाम् । 'तप सहस्राभ्या विनीनी' ( ५।२।१०२ ) ॥ ( २ ) ॥ * ॥ 'अण् च' ( ५।२।१०३ ) इत्यण ॥ ( १ ) ॥ * ॥ द्वे 'सहस्रसंख्याकेन गजादिना बलवत ' ।

परिधिस्थः परिचरः

परिधिस्थ , परिचर (२ त्रि), 'अपराधी सैनिकोंको दण्ड देनेके लिये राजासे नियुक्त पुरुष' के २ नाम हैं।

पेति ॥ परिधौ सेनान्ते तिष्ठति । सुपि-'(३।२।४ ) इति क ॥ ( १ ) ॥ * ॥ परितश्चरति । अच् (३।१।१३४ ) ॥ ( २ ) ॥ * ॥ द्वे 'सेनाया राज्ञो दण्डकारिण ' । प्रयाणे सामन्तस्यापर्यवेक्षस्य'— इत्यन्ये । 'रथगजादेश्चक्रपादादिरक्षकस्य'—इति केचित् ।

सेनानीर्वाहिनीपतिः ॥६२॥

सेनानी , वहिनीपति (२ पु), 'सेनापति' के २ नाम हैं।

सनेति ॥ सेना नयति । णीञ् प्रापणे (भ्वा० उ० अ० ) । 'सत्सु-' ( ३।२।६१ ) इति क्विप् । सेनानी स्यात् पुमान् वार्त्तिकस्य सेनापतौ 'पुमान्'[1] ( इति मे० ९४।५६ ) ॥ ( १ ) ॥ * ॥ वाहिन्या पति ॥ ( २ ) ॥ * ॥ द्वे 'सेनापते ' ।

कञ्चुको वारबाणोऽस्त्री

कञ्चुक (पु), वारबाण (पु न), 'शत्रुके प्रहारसे बचनेके लिये लोह आदिके बनाये हुए सन्नाह, झूल' के २ नाम हैं।

केति ॥ कञ्च्यते । 'कचि दीप्तिबन्धनयो ' ( भ्वा० आ० से० ) । बाहुलकादुक । कञ्चुको वारबाणे स्यान्निर्मोके कवचेऽपि च । वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके । कञ्चुकस्तोपधिभेदे' ( इति मे० ६।६२-६३ ) ॥ ( १ ) ॥*॥ बाण वारयति, वृणोति वा । वृञ् वरणे' (स्वा० उ० से०)। ण्यन्तो वा । कर्मण्यण्' ( ३।२।१ ) । ( मयूरव्यंसकादित्वात् '२।१।७२' ) । राजदन्तादित्वात् ( २।२।३१ ) वा परनिपात । यद्वा-वारमाच्छादक वानमस्य । 'पूर्वपदात्-' ( ८।४।३ ) इति णत्वम् ॥ ( २ ) ॥*॥ द्वे 'चोलकाकृतिसंनाहस्य' ।

यत्तु मध्ये सकञ्चुका ।

बध्नन्ति तत्सारसनमधिकाङ्गः

सारसनम् (न), अधिकाङ्ग (पु ), 'झूल ( कवच ) को स्थिर रहनेके लिये कमरमें कसनेकी पट्टी आदि'के २ नाम हैं।

सेति ॥ सारं सनोति । 'षणु दाने' (तु० प० से०) । कर्मण शेषत्वविवक्षायामच् ( ३।१।१३४ ) । यद्वा-सार बलमस्यते दीप्यतेऽनेन । 'अस गतिदीप्त्यादानेषु' ( भ्वा० उ० से० )। 'करणा-' ( ३।३।११७ ) इति ल्युट् । शकन्ध्वादि ( वा० ६।१।९४ ) । 'सारसनमप्युरस्त्रे तनुत्रिणा मेखलाया च' ( इति मे० ९९।१२१ ) । विश्वोऽपि-सारसन मेखलायामुरस्त्रे च तनुत्रिणाम्' ( ९९।१७२ ) ॥ इति ( १ ) ॥ * ॥ अधिकमङ्गात् ॥ * ॥ क्वचित्तु 'सारसनाधिपाङ्गे' इति पाठ । यत्कात्य -'अधिपाङ्ग सारसनम्' इति ॥ * ॥ दुर्गस्तु-तस्य सारसनं ज्ञेय धिपाङ्ग च निबन्धनम्' इति ॥ ( २ ) ॥ * ॥ द्वे कञ्चुकदार्ढ्यार्थं मध्यकाये निबद्धस्य' ।

अथ शीर्षकम् ॥ ६३ ॥

शीर्षण्यं च शिरस्त्रे

शीर्षकम्, शीर्षण्यम्, शिरस्त्रम् (३ पु), 'लड़ाईके समय पहने जानेवाले टोप, या टोपीमात्र' के ३ नाम हैं।

अथेति ॥ शीर्षस्य प्रतिकृति । 'इवे-' ( ५।३।९६ ) इति कन् । शीर्षं कं सुखमस्मादा ॥ (१) ॥ * ॥ शिरसे हितम् । 'शरीरावयवाद्यत्' ( ५।१।६ ) । 'ये च तद्धिते' ( ६।१।६१ ) इति शिरःशब्दस्य शीर्षन्नादेश । 'ये च्चाभाव-' ( ६।४।१६८ ) इति टिलोपो न । शीर्षण्य शीर्षरक्षणे' । 'शीर्षण्यो विशदे'कचे'[1] इति हैम (३।५४०)॥ ( २ ) ॥ * ॥ शिरस्त्रायते । 'त्रैङ् पालने' ( भ्वा० आ० अ० ) । 'आतोऽनुप-' ( ३।२।३ ) इति क ॥ ( ३ ) ॥ * ॥ त्रीणि शिरस्त्रस्य' टोप' इति ख्यातस्य ।

अथ तनुत्रं वर्म दंशनम् ।

उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥

तनुत्रम्, वर्म, दंशनम् ( ३ न ), उरश्छद, कङ्कटक, जगर (३ पु), कवच (पु न), 'कवच' के ७ नाम हैं।

अथेति ॥ तनु त्रायते । प्राग्वत् ॥ ( १ ) ॥ * ॥ वृणोति देहम् । 'वृञ् वरणे' ( स्वा उ० से० ) । मनिन् ( ३।२।७५ ) ॥ ( २ ) ॥ * ॥ दश्यतेऽनेन । 'दंशि

---

१ 'पुमान्' इति पुनरुक्तेरनावश्यकतया'—सेनापतावपि' इति मेदिनीपाठ एव प्रशस्यतर ।

१ हैमे 'क' पुस्तके '—विशदकचे' इति पाठ ।

दंशनस्पर्शनयोः' ( चु० आ० से० ) । 'करणा-' (३।३।११७ ) इति ल्युट् । 'दशन वर्मदंशयोः' इति हैम. ( ३।४१० ) ॥ ( ३ ) ॥ * ॥ उरश्छाद्यतेऽनेन । 'छद अपवारणे' ( चु० उ० से० ) । 'पुंसि-' (३।३।११८) इति घः । 'छादेर्घे-' ( ६।४।९६ ) इति ह्रस्व ॥ ( ४ ) ॥*॥ कङ्कटे । 'ककि लौल्ये' ( भ्वा० आ० से० ) 'शकादिभ्योऽटन्' ( उ० ४।८१ ) स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । यद्वा-क मुखं कटति । 'कटे वर्षादौ' (भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । मूलविभुजादिकः ( वा० ३।२।५ ) वा ॥ ( ५ ) ॥ * ॥ जगता गृह्यते । 'प्रातिपदिकाद्धात्वर्थे-' ( चु० ग० सू० २०३ ) इति णिच् ( टिलोपश्च ) । बाहुलकादर । जागर्ति । अच् ( ३।१।१३४ ) पृषोदरादि ( ६।३।१०९ ) वा । 'जगरः कङ्कटो योग सनाहः स्यादुरश्छदः' इति बोपालितः ॥ (६) ॥*॥ कं वातं वञ्चति । 'वञ्चु गतौ' (भ्वा० प० से०) । अन्तर्भावितण्यर्थो वा । मूलविभुजादिक । कवचो गर्दभाण्डे च सनाहे पटहेऽपि च' (इति विश्व-मेदिन्यौ ३०।१५, २८।१३ ) ॥ ( ७ ) ॥ * ॥ सप्त 'सनाहस्य' ।

**आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।**

आमुक्त, प्रतिमुक्तः, पिनद्धः, अपिनद्धः, ( ४ त्रि ), भा० दी० महे० आदिके मतसे 'पहने हुए कवच' के और मु० मत से 'पहने हुए वस्त्रादि' के ४ नाम हैं ।

आमिति ॥ आमुच्यते स्म । 'मुच्लृ मोक्षणे ( तु० उ० अ० ) क्त ( ३।२।१०२ ) ॥ ( १ ) ॥ * ॥ प्रतेरपि ॥ ( २ ) ॥ * ॥ अपि नह्यते स्म । णह बन्धने' (दि० उ० अ०) । क्त ( ३।२।१०२ ) । 'वष्टि भागुरि-' इत्यह्लोप ॥ ( ३ ) ॥ * ॥ ( ४ ) ॥ * ॥ चत्वारि 'परिहितकवचादे' ॥ (परिहितस्य वस्त्रादे -इति मुकुट )॥

**संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥**

सन्नद्ध, वर्मितः, सज्जः, दंशितः, व्यूढकङ्कट ( ५ त्रि ), 'कवच आदिको पहनकर लड़ाईके लिये तैयार मनुष्य' के ५ नाम हैं ।

*समिति ॥ संनह्यति, संनह्यते, स्म वा । अकर्मकत्वात्कर्तरि ( ३।४।७२ ) कर्मणि ( ३।२।१०२ ) वा क्त ।* 'संनद्धो वर्मिते व्यूढे' ( इति मे० ८१।३७ ) ॥ ( १ ) ॥ ॥ वर्मणा नह्यते स्म । 'सत्याप-' ( ३।१।२५ ) इति णिच् । 'णाविष्ठवत्' ( वा० ६।४।११५ ) इति टिलोप. । वर्म संजातमस्य वा । तारकादित्वात् ( ५।२।३६ ) इतच् ॥ ( २ ) ॥ * ॥ सज्जति । 'षस्ज गतौ' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । 'अथ सज्ज स्यात्संनद्धे संभृते त्रिषु' ( इति मे० ३१।१८ ) ॥ ( ३ ) ॥*॥ दंश संजातोऽस्य । इतच् ( ५।२।३६ )। यद्वा-दश्यते स्म । 'दशि दशनादौ' ( चु० आ० से० ) क्त ( ३।२।१०२ ) ॥ ( ४ ) ॥ * ॥ व्यूढो धृत कङ्कटो येन ॥ ( ५ ) ॥ * ॥ पञ्च 'धृतसनाहस्य' ।

त्रिष्वामुक्तादयः

'आमुक्त' आदि शब्द त्रिलिङ्ग हैं ।

*त्रीति ॥ आमुक्ता (श्लो० २।८।६५) दयो व्यूढकङ्कटा- (श्लो० २।८।६६)न्ता त्रिलिङ्गा ।*

**वर्मभृतां कावचिकं गणे ।**

कावचिकम् (न), 'कवच पहने हुए पुरुषादिके झुण्ड' का १ नाम है ।

वेति ॥ कवचिनां समूहः । ठञ् कवचिनश्च' (४।२।४१) ॥ (१) ॥ * ॥ एकं 'धृतसनाहानां गणस्य' ।

**पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥**

**पद्गश्च पदिकश्च**

पदातिः, पत्तिः, पदगः, पादातिकः, पदाजिः, पद्गः, पदिकः, (७ पु), 'पैदल' के ७ नाम हैं ।

पेति ॥ पादाभ्यामतति । 'अत सातत्यगमने' (भ्वा० प० से०) । 'अज्यतिभ्यां च' (उ० ४।१३०) 'पादे च' (उ० ४।१३१ ) इतीण् । 'पादस्य पदाज्यातिगोपहतेषु' (६।३।५२) इति पद ॥ (१) ॥*॥ एव पदाजि ॥ ( ५ ) ॥ * ॥ मुकुटस्तु—'इसजादिभ्य' ( वा० ३।३।१०८) इतीञ्—इत्याह । तन्न । 'स्त्रियाम्' अकर्तरि च कारके' 'भावे' इत्यधिकारे तस्य विहितत्वेन 'अतति' 'अजति' इति विग्रहस्य विरुद्धत्वात् ॥ ( १ ) ॥ * ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । बाहुलकात्ति । क्तिच (३।३।१७४) वा । 'पत्ति सेनाभिदपदगयोर्गतौ' इति हैम (२।१८०) ॥ ( ८ ) ॥ * ॥ पादाभ्यां गच्छति । 'अन्येष्वपि-' ( वा० ३।२।४८ ) इति ड । 'पादस्य-' ( ६।३।५२ ) इति पद ॥ ( ३ ) ॥ * ॥ पदातिरेव । विनयादित्वात् ( ५।४।३४ ) ठक् । पादाभ्यामतति । बाहुलकादिको वा ॥ * ॥ 'पादाविक' इति क्वचित्पाठ. । पादाभ्यामवति । 'अव रक्षणादौ' (भ्वा० प० से०) । बाहुलकादिक । यद्वा- पादेनावो रक्षणम् । तत्र नियुक्तः । 'तत्र नियुक्त' ( ४।४।६९ ) इति ठक् ॥ ( ४ ) ॥ * ॥ पद्भ्यां गच्छति । पादेन समानार्थ पच्छब्दोऽस्ति । ड. (वा० ३।२।४८) ॥ (६) ॥ * ॥ पादाभ्यां चरति । 'पर्पादिभ्य. ष्ठन्' ( ४।४।१० ) । 'इके चरतौ' (वा० ६।३।५३) इति पद्भाव. ॥ ( ७ ) ॥ * ॥ पादातशब्दोऽ-

ष्यन्त। 'पदातिपत्तिपादातपादाविकपदाजय' इत्यमरमाला। यत्तु मुकुटेनोक्तम्—मूलविभुजादिके पादात—इति। तन्न। 'पादाभ्यामतति' इति विग्रहेण पचाद्यच। गतार्थत्वात् ॥ * ॥ सप्त 'पदाते'।

अथ पादातं पत्तिसंहतिः।

पादातम् (न), पत्तिसंहति (स्त्री), 'पैदलके झुण्ड' के २ नाम हैं।

अथेति॥ पदातीनां समूहः भिक्षादिभ्योऽण्' (४।२।३८)॥ (१)॥ * ॥ पत्तीनां संहतिः॥ (२)॥ * ॥ द्वे 'पदातिसमूहस्य'।

शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः॥ ६७॥

शस्त्राजीव, काण्डपृष्ठ, आयुधीय, आयुधिक (४ त्रि) 'हथियारकी नौकरीसे जीविका चलानेवाले' के ४ नाम हैं।

शेति॥ शस्त्रमाजीवति उपजीवति। 'जीव प्राणधारणे' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)॥ (१)॥*॥ काण्डानि शस्त्राणि पृष्ठे यस्य॥ * ॥ 'काण्डस्पृष्ट' इति मुकुट। स्पृष्टं गृहीतं काण्डं शस्त्रं येन। 'वाहिताग्न्यादिषु' (२।२।३७) इति परनिपातः॥ (२)॥ * ॥ आयुधेन जीवति। 'आयुधाच्छ च' (४।४।१४)॥ (३)॥ * ॥ चात् ठक्॥ (४)॥*॥ चत्वारि 'शस्त्रजीविन'।

कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत्।

कृतहस्त, सुप्रयोगविशिख, कृतपुङ्ख (३ त्रि), 'बाण चलानेमें निपुण' के ३ नाम हैं।

कृेति॥ कृतोऽभ्यस्तो हस्तो यस्य॥ (१)॥ * ॥ शोभनः प्रयोगोऽस्य। सुप्रयोगो विशिखोऽस्य॥ (२)॥ * ॥ कृतोऽभ्यस्तः पुङ्खः पुङ्खयुक्तः शरो येन॥ (३)॥ * ॥ त्रीणि 'प्रयुक्तकृतशराभ्यासस्य'।

अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः॥ ६८॥

अपराद्धपृषत्क (त्रि), 'निशाना चूके हुए' का १ नाम है।

अपेति॥ अपराद्धः पृषत्को बाणोऽस्य॥ (१)॥*॥ लक्ष्याद्वेध्यात् च्युतो भ्रष्टः सायको यस्य॥ * ॥ एकं 'लक्ष्यप्राप्तशरस्य'।

धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः।

धन्वी, धनुष्मान्, धानुष्क, निषङ्गी, अस्त्री, धनुर्धर (६ त्रि), 'धनुष धारण करनेवाले' के ६ नाम हैं।

धेति॥ 'धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च' (इति मेदिनी ८८।७८)। धन्वाऽस्यास्ति। व्रीह्यादित्वात् (५।२।११६) इनि॥ (१)॥ * ॥ धनुरस्यास्ति। मतुप् (५।२।९४)। 'तसौ मत्वर्थे' (१।४।१९) इति भत्वम्॥ (२)॥ * ॥ धनुः प्रहरणमस्य। 'तदस्य प्रहरणम्' (४।४।५७) इति ठक्। 'इसुसुक्तान्तात् कः' (७।३।५१)॥ (३)॥ * ॥ निषङ्गोऽस्यास्ति। इनिः (५।२।११५)॥ (४)॥*॥ 'अस्त्रं प्रहरणे चापे' इति विश्वः (१२८।४२) अस्त्रमस्यास्ति। इनिः (५।२।११५)॥ (५)॥*॥ धरति। 'धृञ् धारणे' (भ्वा० उ० अ०)। अच् (३।१।१३४)। धनुषो धरः॥ (६)॥ * ॥ षट् 'धनुर्धरस्य'।

स्यात्काण्डवांस्तु काण्डीरः

काण्डवान्, काण्डीर (२ त्रि), 'बाण धारण करनेवाले' के २ नाम हैं।

स्यादिति॥ 'काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीबन्धे रहसि न स्त्रियाम्' (इति मेदिनी ४०।२३)। काण्डो बाणोऽस्यास्ति। मतुप् (५।२।११५)॥ (१)॥ * ॥ 'काण्डाण्डादीरन्नीरचौ' (५।२।१११)॥ (२)॥ * ॥ द्वे 'बाणधारकस्य'।

शाक्तीकः शक्तिहेतिकः॥ ६९॥

शाक्तीक, शक्तिहेतिक (२ त्रि), 'शक्तिनामक शस्त्र धारण करनेवाले' के २ नाम हैं।

शेति॥ शक्तिः प्रहरणमस्य। 'शक्तियष्ट्योरीकक्' (४।४।५९)॥ (१)॥*॥ शक्तिर्हेतिर्यस्य॥ (२)॥*॥ द्वे 'शक्त्यायुधधारिण'।

याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ।

याष्टीक पारश्वधिक (२ त्रि),'लाठी और फरसा धारण करनेवाले' का क्रमशः १—१ नाम है।

येति॥ यष्टिः प्रहरणमस्य। (ईकक् ४।४।५९)॥ (१)॥*॥ परश्वधः परशुः प्रहरणमस्य। 'परश्वधाट्ठञ्च' (४।४।५८)॥ (१)॥ * ॥ यष्टिश्च पर्श्वधश्च हेती ययोः॥ * ॥ (क्रमेण) एकैकम् यष्टिपरशुधृतो'।

नैस्त्रिंशिकोऽसिहेतिः स्यात्

नैस्त्रिंशिक, असिहेति (२ त्रि), 'तलवार धारण करनेवाले' के २ नाम हैं।

नायिति॥ निस्त्रिंशः प्रहरणमस्य। 'प्रहरणम्' (४।४।५७) इति ठक्॥ (१)॥ * ॥ असिर्हेतिर्यस्य॥ (२)॥ * ॥ द्वे 'खड्गायुधस्य'।

समौ प्रासिककौन्तिकौ॥७०॥

प्रासिक, कौन्तिक (२ त्रि), 'प्रास और कुन्त (भाला) धारण करनेवाले' का क्रमशः १–१ नाम है।

सेति॥ प्रासः कुन्तश्च प्रहरणमस्य। प्राग्वत् (४।४।५७)॥(१)॥*॥ (क्रमशः) एकैकं 'प्रासकुन्तायुधिनो'।

**चर्मी फलकपाणिः स्यात्**

**चर्मी, फलकपाणिः (२ त्रि), 'चर्मनामक हथियार (ढाल) धारण करनेवाले' के २ नाम हैं।**

चेति ॥ चर्मास्यास्ति । व्रीह्यादित्वात् (५।२।११६) इनिः ॥ (१) ॥*॥ फलकं पाणावस्य ॥ (२) ॥*॥ द्वे 'फलकधारकस्य'।

**पताकी वैजयन्तिकः।**

**पताकी, वैजयन्तिकः (२ त्रि), 'पताका धारण करनेवाले' के २ नाम हैं।**

पेति ॥ पताकाऽस्यास्ति । व्रीह्यादीनि (५।२।११६)॥ (१) ॥ * ॥ वैजयन्त्यस्यास्ति । व्रीह्यादित्वात् (५।२। ११६) इन् । यद्वा[1] वैजयन्त्या चरति 'चरति' (४।४।८) इति ठक् ॥ (२) ॥ * ॥ द्वे 'ध्वजधारकस्य'।

**अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥ ७१ ॥**

**अनुप्लवः, सहायः, अनुचरः, अभिसरः (४ त्रि), 'अनुचर' के ४ नाम हैं।**

अन्विति । अनु पश्चात् प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । अच् ( ३।१।१३४ ) ॥ (१) ॥ * ॥ सह अयते । 'अय गतौ' (भ्वा० आ० से०) । एति वा । 'इण् गतौ' (अ० प० अ०)। अच् (३।१।१३४) ॥ (२) ॥*॥ अनु चरति । 'चरेष्ट.' (३।२।१६) ॥ (३) ॥*॥ अभितः सरति । अच् ( ३।१।१३४ ) ॥ (४) ॥ * ॥ चत्वारि 'सहायस्य'।

**पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः।**
**पुरोगमः पुरोगामी**

**पुरोगः, अग्रेसरः, प्रष्ठः, अग्रतःसरः, पुरःसरः, पुरोगमः, पुरोगामी (७ त्रि), 'आगे चलनेवाले' के ७ नाम हैं।**

पुरेति ॥ पुरो गच्छति । 'अन्येष्वपि–' (वा० ३।२। ४८) इति ड ॥ (१) ॥ * ॥ अग्रे सरति । 'पुरोऽग्रतोऽग्रेषु–' ( ३।२।१८ ) इति ट ( २ ) ॥ * ॥ प्रतिष्ठते गच्छति । 'आतश्चोपसर्गे–' ( ३।१।१३६ ) इति क. । 'प्रष्ठोऽग्रगामिनि' ( ८।३।९२ ) इति ष. । 'प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ' ( इति मेदिनी ३९।६ ) ॥ ( ३ ) ॥ * ॥ अग्रत सरति ॥ पुर सरति । 'पुरोऽग्रत–' ( ३।२।१८) इति ट. ॥ ( ४ ) ॥ * ॥ ( ५ ) ॥ * ॥ पुरो गच्छति । अच् (३।१।१३४) । 'गमश्च' ( ३।२।४७ ) इति खच् वा ॥ ( ६ ) ॥*॥ 'सुप्यजातौ–' ( ३।२।७८ ) इति णिनि. ॥ ( ७ ) ॥ * ॥ सप्त 'अग्रेसरस्य'।

**मन्दगामी तु मन्थरः ॥ ७२ ॥**

**मन्दगामी, मन्थरः ( २ त्रि ) 'धीरे २ चलनेवाले' के २ नाम हैं।**

मेति ॥ मन्दं गच्छति तच्छील । प्राग्वत् ( ३।२। ७८ ) ॥ ( १ ) ॥ * ॥ मन्थति पादौ । 'मथि हिंसासंक्लेशनयो' ( भ्वा० प० से० ) । बाहुलकादरन् । मन्थं राति । 'आतोऽनुप–' (३।२।३) इति क । 'मन्थर कोशफलयोर्वाधमन्थानयो पुमान् । कुसुम्भ्या, न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्' ( इति मेदिनी १९८।१३७ ) ॥ (२) ॥*॥ द्वे 'शनैर्गमनशीलस्य'।

**जङ्घालोऽतिजवस्तुल्यौ**

**जंघालः, अतिजवः (२ त्रि), 'बहुत तेज चलनेवाले' के २ नाम हैं।**

जेति ॥ अतिशयिता जङ्घाऽस्य । सिध्मादित्वात् ( ५। २।९७ ) लच् ॥ * ॥ पिच्छादित्वात् (५।२।१०० ) इलचि जघिलोऽपि । 'प्रश्नालप्रशिलौ तुल्यौ जंघालजघिलादय' इति इति वाचस्पति ॥ ( १ ) ॥ * ॥ अतिशयितो जवो वेगो यस्य ॥ ( २ ) ॥ * ॥ द्वे 'अतिवेगवतः'।

**जङ्घाकरिकजाङ्घिकौ।**

**जंघाकरिकः, जांघिकः, ( २ त्रि ), 'दौवाहा, डॉक ढोनेवाले' के २ नाम हैं।**

जेति ॥ जङ्घासाध्यत्वादुपचाराद्गतिर्जंघा । सैव करो राजदेयो भाग, आकर. श्रेष्ठो वा । जङ्घाकरोऽस्यास्ति । ठन् ( ५।२।११५ ) जङ्घैव करी हस्ती यस्य, इति वा ॥ ( १ ) ॥*॥ जङ्घाभ्या जीवति । 'वेतनादिभ्यो जीवति' ( ४।४।१२ ) इति ठक् ॥ ( २ ) ॥ * ॥ द्वे 'जङ्घाजीविन'।

**तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥**

**तरस्वी, त्वरितः, वेगी, प्रजवी, जवनः, जवः ( ६ त्रि ), 'शीघ्रता करनेवाले' के ६ नाम हैं।**

तेति ॥ तरो वेगोऽस्यास्ति । 'अस्मायामेधा–' ( ५। २।१२१ ) इति विनि । 'तरस्वी शूरवेगिनो' ( इति मे० ९६।८३ ) ॥ ( १ ) ॥ * ॥ त्वरते । 'ञित्वरा सम्भ्रमे' ( भ्वा० आ० से० ) । 'ञीत. क्त.' ( ३।२।१८७ ) । त्वरा सञ्जाताऽस्य, इति वा ! इतच् ( ५।२।३६ ) । 'त्वरित वेगवद्द्रुतो:' ( इति हैम ३।२७९ ) ॥ ( २ ) ॥ * ॥ अतिशयितो वेगोऽस्य । इनि. ( ५।२।११५ ) ॥ ( ३ ) ॥ * ॥ प्रजवति । 'जु.' सौत्रो ( धातुः ) वेगे गतौ च । 'प्रजोरिनि.' ( ३।२।१५६ ) ॥ ( ४ ) ॥*॥ 'जुचङ्क्रम्य–' ( ३।२।१५० ) इति युच् । 'जवनं तु स्यदे

---

१. व्रीह्यादौ 'वैजयन्ती' शब्दस्य पाठाभावादस्वेराह 'यद्वा' इति।

वेगिहये[1] ना वेगिनि त्रिषु' ( इति मे० ८७।६६ )॥ (५) ॥ * ॥ अच् ( ३।१।१३४ ) '( जवो वेगवति त्रिषु । ) पुलिङ्गस्तु भवेद्वेगे चोण्ड्रपुष्पे जवा मता' (इति मे० १५८। ७ )॥ ( ६ ) ॥ * ॥ षट् 'वेगवन्मात्रस्य'।

**जय्यो यः शक्यते जेतुम्**

जय्य (त्रि), 'जीते जा सकनेवाले' का १ नाम है।

जेति ॥ जेतु शक्य । 'जि जये, अभिभवे वा' (भ्वा० प० अ० ) । 'शकि लिङ् च' ( ३।३।१७२ ) इति शक्तौ 'अचो यत्' ( ३।१।९७ ) । 'क्षय्यजय्यौ शक्यार्थे' ( ६।१।८१ ) ॥ ( १ ) ॥ * ॥ एकं 'जेतु शक्यस्य'।

**जेयो जेतव्यमात्रके ।**

जेय (त्रि), 'जीतने योग्य' का १ नाम है।

जयिति ॥ शक्यार्थादन्यत्र 'अर्हे कृत्यतृचश्च' ( ३।३।१६९ ) इति योग्यतायाम् । अचो यत्' ( ३।१।९७ ) ॥ ( १ ) ॥ * ॥ एकं 'जेतु योग्यस्य'।

**जैत्रस्तु जेता**

जैत्र, जेता ( २ त्रि ), 'विजयशील, जीतनेवाले' के २ नाम हैं।

जायिति ॥ जयनशील. । 'तृन्' ( ३।२।१३५ ) । प्रज्ञाद्यण् ( ७।४।३८ ) ॥ ( १ ) ॥ * ॥ (२) ॥*॥ द्वे 'जयवत'।

**यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥**
**सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥**

अभ्यमित्र्य, अभ्यमित्रीय, अभ्यमित्रीण ( ३ त्रि ), 'अपने पराक्रमसे शत्रुका सामना करनेवाले' के ३ नाम हैं।

य इति ॥ अमित्रस्याभिमुखम् । 'लक्षणेनाभिप्रती-' (२।१।१४) इत्यव्ययीभाव । अभ्यमित्रमलगामी । 'अभ्यमित्राच्छ च' ( ५।२।१७ ) चाद् यत्खौ ॥ ( १ ) ॥ * ॥ ( २ ) ॥ * ॥ (३) ॥ * ॥ त्रीणि 'सामर्थ्येन शत्रूणां समुख गच्छत' ॥

**ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥ ७५ ॥**

ऊर्जस्वल, ऊर्जस्वी ( २ त्रि ), 'बहुत बलवान्' के २ नाम हैं।

ऊर्जेति ॥ 'ऊर्जस्तु कार्तिकोत्साहबलेषु प्राणनेऽपि च' ( इति मे० ३०।४ ) । अतिशयित ऊर्जोऽस्यास्ति । 'ज्योत्स्नातमिस्रा-' ( ५।२।११४ ) इति वलजिनी । 'ऊर्ज' शब्दोऽदन्त सान्तश्च[1] । वाद्ये सगपि निपात्य । मुकुटस्तु-'ऊर्जा' शब्दमावर्तं पठित्वा 'ह्रस्वत्व च'-इत्याह । तन्न । उक्तमेदिनीकोशविरोधात् ॥ (१) ॥ * ॥ ( २ ) ॥*॥ ऊर्जस्यातिशय । ऊर्जातिशयेनान्वित ॥ ( ३ ) ॥ * ॥ 'ऊर्ज बलप्राणनयो' ( चु० प० से० ) । भावे घञ् (३।३।१८ ) । 'गुरोश्च-' (३।३।१०३) । इत्यप्रत्यये टाप्यावन्तोऽपि सभवति । पर तु निपातने स न ग्राह्य । ह्रस्वस्यापि निपातनीयत्वेन गौरवप्रसङ्गात् । वृत्तिकारस्त्वसुगन्त मन्यते । तत्तु न सम्यक् । 'अस्माया-' (५।२।१२१) इति सिद्धत्वेन निपातनस्य वैयर्थ्यप्रसङ्गात् ॥ * ॥ त्रीणि 'बलातिशयवत'।

**स्यादुरस्वानुरसिलः**

उरस्वान्, उरसिल ( २ त्रि ), 'चौड़ी छातीवाले' के २ नाम हैं।

स्येति ॥ प्रशस्तमतिशयित वा उरो यस्य । विशालत्वात् । मतुप् ( ५।२।९४ ) । 'मादुपधाया-' (८।२।९ ) इति व । '—झय' ( ८।२।१० ) इति वत्वम्—इति तु मुकुटस्य प्रमाद । सस्य झयत्वाभावात् ॥ ( १ ) ॥ * ॥ पिच्छादित्वात् (५।२।१००) इलच् ॥ (२) ॥*॥-उरसा बल लक्ष्यते—इति स्वामी ॥*॥ द्वे 'विपुलोरस'।

**रथिनो रथिको रथी ।**

रथिन, रथिक[2], रथी ( ३ त्रि ), 'रथ के स्वामी' के ३ नाम हैं।

रेति ॥ रथोऽस्यास्ति । 'मघारथाभ्यामिरन्निनचौ' । स्वामी तु—मेधारथाभ्यामिरन्निरचौ' (वा० ५।२।१०९) इति पठित्वा '[2]रथिर' इति व्याख्याय—'रथिन 'इत्यपपाठ-इत्याह ।—रथस्येन प्रभु । शकन्ध्वादि (वा० ६।१।९४) इत्यन्ये ॥ ( १ ) ॥*॥ अत इनिठनौ' (५।२।११५) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'रथस्वामिन'।

**कामंगाम्यनुकामीनः**

कामङ्गामी, अनुकामीन (२ त्रि ), 'मतलब भर (यथेष्ट) चलनेवाले' के २ नाम हैं।

---

१ मेदिन्या तु '—वेगे हये—' इति पाठ.।

१ 'युष्यूर्जं कार्तिके बले' इति हैमात् ( २।६७ ) 'उत्साहकार्तिकावूर्जौ' इति त्रिकाण्डशेषात् ( ३।३।८० ) 'ऊर्जावुत्साहकार्तिकौ' इति वैज० ( पृ० २१४ श्लो० ९ ) च ऊर्ज शब्दोऽदन्त । 'प्राण स्थाम''' पराक्रमबलद्युम्नानि शौर्योजसी' इति हैमनाममालात् ( ३।४६० ) 'ऊर्ज' शब्द सान्त ।

२ 'वेशाद्वोऽन्यतरस्याम्' इति सूत्रस्थभाष्ये स्वामिसम्मत '—रन्निरचौ' इति 'इरच्' घटितमेव वार्तिक लभ्यते, न तु 'इनच्' घटितम्, तेन 'रथिन' इत्यसाधुरेव।

केति ॥ कामं यथेच्छं गमनशील. । 'कामम्' इत्यव्ययम् । 'सुपि–' (३।२।७८) इति णिनि ॥ (१) ॥*॥ कामस्य सदृशम् । यथार्थेऽव्ययीभाव. (२।१।६) । अनुकाम गामी 'अवारपार–' (५।२।११) इति खः ॥ (२) ॥*॥ द्वे 'यथेष्टं गमनशीलस्य' ।

**अत्यन्तीनस्तथा भृशम् ॥ ७६ ॥**

अत्यन्तीनः (त्रि), 'अत्यन्त चलनेवाले' का १ नाम है।

अ्येति ॥ अन्तस्याभावः । अत्ययेऽव्ययीभाव (२।१।६) । अत्यन्तं गामी । 'अवार–' (५।२।११) इति ख ॥ (१) ॥*॥ 'भृशं गामी' इत्यन्वय ॥ * ॥ एकम् 'अतिगमनशीलस्य' ।

**शूरो वीरश्च विक्रान्तः**

शूरः, वीरः, विक्रान्तः (३ त्रि), 'पहलवान, बहादुर' के ३ नाम हैं।

शूरेति ॥ शूरयति । 'शूर वीर विक्रान्तौ' (चु० उ० से०) अच् (३।१।१३४)। 'शूर स्याद्यादवे भटे'(इति मे० १२९।१३)॥(१)॥*॥ वीरयति । 'वीरो रसविशेषे स्यात्सुत्तरे सुभटे त्रिषु । स्त्री सुराक्षीरकाकोलीतामलक्येलवालुके । पतिपुत्रवतीरम्भाविदारीदुग्धिकासु च । 'मलयूक्षीरविदार्यो क्लीबं स्यृङ्गधा नतेऽपि च' इति (पवर्गतृतीयादौ मे० १२७।६७-६९) ॥ (२) ॥ * ॥ विक्रामति स्म । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।१२) । इति क्तः ॥ (३) ॥*॥ त्रीणि 'शूरस्य' ।

**जेता जिष्णुश्च जित्वरः।**

जेता, जिष्णुः, जित्वरः (३ त्रि), 'सर्वदा विजय करनेवाले' के ३ नाम हैं।

जयति ॥ जयनशील । 'तृन्' (३।२।१३५) ॥ (१) ॥ * ॥ 'ग्लाजिस्थश्च ग्स्नु' (३।२।१३९) । 'जिष्णुर्ना वासवेऽर्जुने । जित्वरे वाच्यवत्' (इति मे० ४५।१३) ॥ (२) ॥*॥ 'इण्नशजि–' (३।२।१६३) इति क्वरप् ॥ (३) ॥*॥ त्रीणि 'जयशीलस्य' ।

**सांयुगीनो रणे साधुः**

सांयुगीनः (त्रि), 'लड़ाईमें चतुर' का १ नाम है।

समिति ॥ सयुगे रणे साधु । 'प्रतिजनादिभ्य खञ्' (४।४।९९) ॥ (१) ॥*॥ एक 'युद्धकुशलस्य' ।

**शस्त्राजीवादयस्त्रिषु ॥७७॥**

'शस्त्राजीव' शब्द (श्लो० ६७) से यहाँतक सब शब्द त्रिलिङ्ग है।

शेति ॥ शस्त्राजीवादय. (श्लो० ६७) । सांयुगीनान्ता ।

**ध्वजनी वाहिनी सेना पृतनाऽनीकिनी चमूः।**
**वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥७८॥**

ध्वजिनी, वाहिनी, सेना, पृतना, अनीकिनी, चमूः, वरूथिनी (७ स्त्री), बलम्, सैन्यम, चक्रम् (३ न), अनीकम् (न पु), 'सेना, पल्टन' के ११ नाम हैं।

ध्वेति ॥ ध्वजा. सन्त्यस्याम् । इति. (५।२।११५)॥ (१) ॥ * ॥ वाहा सन्त्यस्याम् ॥ (२) ॥ * ॥ सिनोति । 'षिञ् बन्धने' (स्वा० उ० अ०) 'कृवृजूसिद्रुपन्यनिस्वपिभ्यो नित्' (उ० ३।१०) इति न । सह इनेन वा ॥ (३) ॥ * ॥ प्रियते । 'पृङ् व्यायामे' (तु० आ० अ०) । बाहुलकात्तनन् । गुणाभावश्च । 'पृतना तु स्त्रिया सेनामात्रसेनाविशेषयो' (इति मे० ८९।०,४) ॥ (४) ॥*॥ अनीक रणोऽस्ति प्रयोजनत्वेन यस्याः इति (५।२।११५) । 'अनीकिनी स्त्रिया सेनामात्रसेनाविशेषयो:' (इति मे० ९५।६२) ॥ (५) ॥ * ॥ चमति शत्रून् । 'कषिचमितनि–' (उ० १।८०) इत्यू. ।—'चमितमिचंचिभ्य ऊ'—इति मुकुट' । तन्न । वाहत्सूत्राभावात् । 'चमू: सेना विशेषे च सेनामात्रे च योषिति' [इति मे० १०१।१२ ]॥ (६) ॥ * ॥ वरूथा सन्त्यस्याम् । इति. (५।२।११५) (७) ॥ * ॥ बलति । 'बल प्राणने' (भ्वा० प० से०)। अच् (३।१।१३४) । यद्वा–बलते । 'बल संवरणे, संचलने च' (भ्वा० आ० से०) ॥ (८) ॥ * ॥ सेनैव चतुर्वर्णादित्वात् (वा० ५।१।१२४) ष्यञ् ॥ (९) ॥ * ॥ क्रियतेऽनेन । 'घञर्थे क.' (वा० ३।३।५८) । 'के कृञादीनाम्' (वा० ६।१।१२) इति द्वित्वम् ॥ (१०) ॥*॥ अनित्यनेन । 'अन प्राणने'(अ० प० से०)। 'अनिहृभ्यां किच्च' (उ० ४।१७) इनीकन् । 'अनीकोऽस्त्री रणे सैन्ये' [इति मे० ४।४२] ॥ (११) ॥*॥ एकादश 'सेनाया' ।

**व्यूहस्तु बलविन्यासः**

व्यूहः (पु), 'व्यूह' अर्थात् 'लड़ाईमें सेनाको रखनेके कायदे, मोर्चाबन्दी' का १ नाम है।

व्यिति ॥ व्यूह्यते । 'ऊह वितर्के' (भ्वा० आ० से०) घञ् (३।३।१८) । 'व्यूह स्याद्बलविन्यासे निर्माणे वृन्दतर्कयो' [इति मे० १७५।१०] ॥ (१) ॥*॥ बलस्य सेनाया विन्यासो विभज्य स्थापनम् ॥ (२) ॥*॥ द्वे 'व्यूहस्य' ।

---

१. मेदिन्या '—पुंस्युत्तरे' 'मलपूक्षीर–' इति पाठः ।

**भेदा दण्डादयो[1] युधि ।**

दण्ड ( पु ) आदि 'व्यूह' अर्थात् 'लड़ाईमें सेनाको रखनेके कायदे मोर्चाबन्दी' के पृथक् १-१ नाम हैं।

भेति ॥ भेदा विशेषाः । यदाह कामन्दकिः —'तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः' इति (      ) । दण्डवदवस्थानं दण्डः । अन्योन्यमनुगतावृत्तिर्भोगः । सर्पशरीरवदवस्था मण्डलः । गजादीनां विजातीयैरमिश्रितानां स्थानमसंहतः । शकट-मकर-पताका-सर्वतोभद्र-दुर्जयादयोऽपि ।

**प्रत्यासारो व्यूहपार्ष्णिः**

प्रत्यासार, व्यूहपार्ष्णि ( २ पु ),'व्यूहके पीछेवाले सेनाभाग' के २ नाम हैं।

प्रेति ॥ प्रतीपमासारयति भग्नान् । 'सृ गतौ' (भ्वा० प० अ० ) । ण्यन्तः । अच् ॥ ( १ ) ॥ * ॥ व्यूहस्य पार्ष्णिः पृष्ठभागः 'पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति ([2]विश्व मेदिन्यौ ४६।२०) ( २ ) ॥ * ॥ द्वे 'व्यूहस्य पृष्ठभागस्य' ।

**सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥**

सैन्यपृष्ठः प्रतिग्रहः (२ पु), 'सेनाके पीछेवाले भाग' के २ नाम हैं।

सैन्येति ॥ सैन्यस्य पृष्ठे धनुःशतद्वयान्तरे स्थितं सैन्यम् प्रतिगृह्यतेऽनेन । 'ग्रहवृद–' ( ३।३।५८ ) इत्यप् । 'प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे [इति मे० १७७।३१] ॥ (१) ॥*॥ एकं 'सैन्यस्य पश्चाद्विधृतस्थानस्यानीकस्य' ।

**एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।**

पत्ति ( स्त्री ), 'पत्ति' अर्थात् जिसमें एक हाथी, एक रथ, तीन घोड़े और पाँच पैदल हों उस सेना विशेष' का १ नाम है।

एवेति ॥ एक इभो यस्याम् । एको रथो यस्याम् । त्रयोऽश्वा यस्याम् । पञ्च पदातयो यस्याम् । पद्यते । 'पद गतौ' ( दि० आ० अ० ) । पत्यते वा । 'पत्लृ गतौ' ( भ्वा० प० अ० ) । 'स्त्रियां क्तिन्' (३।३।९४) । क्तिच् ( ३।३।१७४ ) वा । 'पत्तिर्ना पदगे, स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके' [ इति मे० ५६।३०-३१ ] । भरतः — एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते' (      ) ॥ (१)॥*॥ एकं 'सेनाविशेषस्य' ।

**पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥**

**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।**

**अनीकिनी**

सेनामुखम् ( न ), गुल्म, गण ( २ पु ), वाहिनी, पृतना, चमू, अनीकिनी ( ४ स्त्री ), 'पत्ति आदि के तिगुना करनेपर सेनामुख आदि संज्ञा सैनाविशेषकी होती है' अर्थात् ३ पत्ति ( ३ हाथी, ३ रथ, ९ घोड़े और १५ पैदल ), को सेनामुख, ३ सेनामुख ( ९ हाथी, ९ रथ, २७ घोड़े और ४५ पैदल ) को गुल्म, ३ गुल्म ( २७ हाथी, २७ रथ, ८१ घोड़े और १३५ पैदल ) को गण' कहते हैं। इसी प्रकार 'वाहिनी, पृतना, चमू और अनीकिनी' में भी तिगुना समझना चाहिये।

पेति ॥ तिस्रः पत्तयः सेनामुखम् । त्रिभिः सेनामुखैर्गुल्मः । त्रयो गुल्मा गणः । त्रयो गणा वाहिनी । तिस्रो वाहिन्यः पृतना । तिस्रः पृतनाश्चमूः । तिस्रश्चम्वोऽनीकिनी ॥ * ॥ सेनाया मुखमुपक्रमः ॥ ( १ ) ॥ * ॥ गुडति, गुड्यते, वा । 'गुड रक्षायाम्' ( तु० प० से० ) । बाहुलकान्मः । डलयोरेकत्वम् । 'गुल्मः सेनाघट्टभिदोः सेनारक्षणरुग्भिदोः । [1]स्तम्बेऽस्त्रियामामलक्येलावल्लौ वस्त्रवेश्मसु' [ इति मे० १०९।११ ] ॥ ( १ ) ॥ * ॥ गण्यते, गणयति वा । 'गण संख्याने' ( चु० उ० से० ) । घञ् ( ३।३।१९ ) । अच् ( ३।१।१३४ ) वा । 'गणः प्रथमसंख्यौघे चण्डीसैन्यप्रभेदयोः' [इति मे० ४५।९१] ॥ ( १ )॥*॥ एकैकं 'सेनाविशेषस्य' ।

---

१ व्यूहस्य नैकभेदेषु केचन भेदास्ते यथा दण्डव्यूह मण्डलव्यूह, उच्छृङ्खव्यूह, भवलव्यूह' दृढव्यूह, चक्रव्यूह, वराहव्यूह, मकरव्यूह, सूचीव्यूह, गरुडव्यूहश्चेति। विशेष जिज्ञासुभिः 'अभिधानचिन्तामणौ ( ३।४११ ), मनुस्मृतौ (७।१८७-१९१) च मत्कृत 'मणिप्रभा' व्याख्या द्रष्टव्या।

२ 'मेदिनी' त्येवोचितम्, विश्वे 'पार्ष्णिः पाश्चात्यभागे स्यात् पादमूलोन्मदस्त्रियोः । सेनापृष्ठे च कुन्त्यां च' ( ४९।२०-२१ ) इति भिन्नपाठात् ।

१ मेदिनीस्थ '—स्तम्बे स्त्रियां—' इति पाठ एव समीचीनः, न त्वत्रत्य 'अस्त्रियाम्' इति पाठः '—गुल्मी पटौकसि आमलक्येलयोर्वन्याम्' इति हैमात् (२।३२५), '—गुल्मी स्यादामलक्येलापर्णिकावस्त्रवेश्मसु' इति विश्वात् ( १११।१३ ) च।

दशानीकिन्योऽक्षौहिणी

अक्षौहिणी ( स्त्री ), मा० दी० क्षी० स्वा० आदिके मतसे 'दस अनीकिनी ( २१८७० हाथी, २१८७० रथ, ६५६१० घोड़े और १०९३५० पैदल) संख्यावाले सेना-विशेष'का १ नाम है।

देति ॥ दशानीकिन्योऽक्षौहिणी । ऊह- समूहोस्त्यस्याः । इनिः (५।२।११५) अक्षाणामूहिनी । 'पूर्वपदात्–' ( ८।४।३ ) इति णत्वम् । 'अक्षादूहिन्याम्—'(वा० ६।१।८९ ) इति वृद्धिः । यत्तु—सर्वेषामक्षाणामिन्द्रियाणामूहः सविकल्पकं ज्ञानमक्षोह. । सोऽस्त्यस्याः । इनि. । ( ५।२।११५ ) 'अकृतव्यूहा –' इति परिभाषया गुण बाधित्वा वृद्धि (वा० ६।१।८९)–इति मुकुटेनोक्तम् । तन्न । 'ऊहिनी'शब्देन विग्रहे वृद्धेश्चरितार्थत्वात् । 'अपवादोऽप्यन्यत्र चरितार्थश्चेत्तर्ह्यन्तरङ्गेण बाध्यते' । तथा 'सर्व इह' इत्यत्रापवादोऽपि सवर्णदीर्घो गुणेन बाध्यते । 'अक्षौहिण्यामित्यधिके. सप्तत्या ह्यष्टभि शतै । सहश युक्ता सहस्राणि गजानामेकविंशति । एवमेव रथाना तु सख्यान गीतिन बुधै. । पञ्चषष्टि. सहस्राणि षट् शतानि दशैव तु । सख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरगमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु । शतानि त्रीणि चान्यानि पञ्चाशच्च पदातय.' ॥ (१) ॥ * ॥ एकम् 'अक्षौहिण्या.[१] ।'

अथ संपदि ॥ ८१ ॥

संपत्तिः श्रीश्च लक्ष्मीश्च

संपद्, सम्पत्तिः, श्रीः, लक्ष्मीः ( ४ स्त्री ) 'सम्पत्ति' के ४ नाम हैं।

अपेति ॥ सपदनम् अनया वा । 'पद गतौ' ( दि० आ० अ० ) । सपदादित्वात् (वा० ३।३।१०८) क्विप् ॥ (१) ॥*॥ 'स्त्रियां क्तिन्' (३।३।९४) ।—'संपत्तिमाकल्यान्तवचनेषु' ( २।१।६ ) इति निर्देशात् स्त्र्यधिकारेऽपि 'वासरूप–' (३।१।९४) न्याय क्वचित्प्रवर्तते ॥ (२) ॥*॥ श्रीयते सर्वै । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। 'क्विब्वचि–' ( उ० २।५७ ) इत्युणादिसूत्रेण क्विप् । श्रीर्वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसपत्तौ वेपोपकरणे मती' (इति विश्व १२५।२, मेदिनी १२२।१-२) ॥ ( ३ ) ॥*॥ लक्ष्यते । 'लक्ष दर्शने' (चु० प० से०)। 'लक्षेर्मुट् च' (उ० ३।१६०) इतीप्रत्यय ।—'लक्ष्मी. श्रीशोभासंपत्तिप्रियंगुषु' [इति हैम, २।३३९]।—धनोत्कर्षस्य इति 'हेमचन्द्र. ॥ (४)॥*॥ चत्वारि 'धनोत्कर्षस्य' ॥

विपत्तौ विपदापदौ ।

विपत्तिः, विपद्, आपद् (३ स्त्री),'आपत्ति'के ३ नाम हैं।

वीति ॥ विपदनम् । अनया वा । सपदादिविवप् (वा० ३।३।१०८) ॥ (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ एवमापत् । आपत्ति (अपि) ॥ (३) ॥*॥ त्रीणि 'आपद.' ।

आयुधं तु प्रहरणं शस्त्रमस्त्रम्

आयुधम्, प्रहरणम्, शस्त्रम्, अस्त्रम् ( ४ न ), 'हथियार' के ४ नाम हैं।

आश्विति ॥ आयुध्यन्तेऽनेन । 'युध सम्प्रहारे' (दि० आ० अ०) । 'घञर्थे कविधानम्, 'स्थास्नापाव्यधिहनियुध्यर्थम्' (वा० ३।३।५८) ॥ (१)॥*॥ प्रह्रियतेऽनेन । 'करणे–' ( ३।३।११७ ) इति ल्युट् ॥ (२) ॥*॥ शस्यतेऽनेन । 'शसु हिंसायाम्' (भ्वा० प० से) । 'दाम्नीशस–' (३।२।१८२) इति ष्ट्रन् ॥ (३) ॥*॥ अस्यते । 'असु क्षेपणे' (दि० प० से) असति वा । 'अम दीप्तौ' (भ्वा० उ० से०) ष्ट्रन् ( उ० ४।१५९ ) ॥ (४) ॥*॥ चत्वारि 'प्रहरणमात्रस्य' ।

अथास्त्रियौ ॥ ८२ ॥

धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।

इष्वासोऽपि

धनुः ( स्त्री ), चापः ( २ पु न ), धन्व, शरासनम्, कोदण्डम्, कार्मुकम् ( ४ न ), इष्वासः ( पु ), 'धनुष' के ७ नाम हैं।

---

१. चम्पूरामायणे 'अलक्षत स··· ' ( युद्धकाण्डश्लो० ७९ ) इत्यस्यानन्तर 'तत्क्षण यातुधानपति ' इति गद्यस्य व्याख्यायां लिखितमक्षौहिणी-प्रमाणमन्यदेव, तद्यथा— "प्रयुत नवसाहस्र पञ्चाशदित्रशत भटा । षाशत षष्टिसाहस्र षट्छती दश वाजिन ॥ एकविंशतिसाहस्र शतानामेकविंशति. । द्विरदा स्यन्दना यत्र साक्षौहिण्युच्यते बुधै. ॥" मङ्गलकोषे त्वेवमुक्तम्—'नवनागसहस्राणि नागे नागे शत रथा. । रथे रथे शतं चाश्वा अश्वे अश्वे शतं नराः ॥" इति । अन्यत्रोक्तं महाक्षौहिणीप्रमाणं यथा— खद्वयं निधिवेदाक्षिचन्द्राक्षग्निहिमांशुभि. । महाक्षौहिणिका प्रोक्ता सख्या गणितकोविदैः ॥" इति ।

१. विश्वे '—सरलद्रुमे । ·· मता' इति पाठ । मेदिन्या च '—सम्पत्तिविघोपकरणेषु च' इति पाठ । "लक्ष्मी.·· प्रियंगुषु' इति हेमचन्द्र', धनोत्कर्षस्य" इति पाठ सम्भाव्यते ।

अथेति ॥ धनति । 'धन शब्दे' (भ्वा० प० से०) । 'अर्ति पृवपि–' (उ० २।११७) इत्युस्। 'धनु पियाले ना, न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' (इति मन्तेषु मे०, १७१।२६)॥*॥ 'भृमृशी–' (उ० १।७) इत्युप्रत्यये उदन्तोऽपि । ('धनु पुमान् पियालद्रौ राशिभेदे शरासने' इति नान्तेषु मे० ८३।११ ) ॥*॥ ('कृषिचमितनिधनि–' (उ० १।८०) इत्यूप्रत्ययान्त ) स्त्रियामपि । (स्थावर तु धनुर्गुणी) । 'शरावापो धनू स्त्री स्यात् (तृणता त्रिणतापि च)' इति त्रिकाण्डशेषात् [२।८।५०–५१] ॥ (१) ॥*॥ चपस्य वंशभेदस्य विकार । 'अवयवे च प्राण्योषधि–' (४ ३।१३५) इत्यण् ॥ (२) ॥*॥ धन्वति । 'धवि गतौ' (भ्वा० प० से०) 'कनिन् युवृषि–' (उ० १।१५६) इति कनिन् । 'धन्वा तु मरुदेशे ना क्लीब चापे स्थलेऽपि च' (इति मे० ८८।७८)॥(३)॥*॥ शरा अस्यन्तेऽनेन ।'असु क्षेपणे' (दि० प० से०) । 'करणा–' ( ३।३।११७ ) ॥ (४) ॥*॥ कोदति । 'कुट अनृतभाषणे' ( ) । बाहुलकाद्दण्डन्। पृषोदरादि (६।३।१०९)। कौति । विच् (३।२।७५) कौर्दण्डो यशोऽस्य वा। 'कोदण्ड कार्मुके देशभेदभूलतयोरपि' [इति हेमचन्द्र ३।१८३]॥ (५)॥*॥ कर्मणे प्रभवति । 'कर्मण उकञ्' (५।१।१०३) । 'अथ कार्मुक । वंशे कार्मुकमिष्वासे धर्मठे' इति हैम ( ३।२१) ॥ (६)॥*॥ इषवो बाणा अस्यन्तेऽनेन। 'हलश्च' (३।३।१२१) इति घञ् । 'इष्वासो धन्वधन्विनो' [इति हैम ३।७८८] ॥ (७) ॥*॥ सप्त 'धनुष' ॥

अथ कर्णस्य कालपृष्ठं शरासनम् ॥८३॥

**कालपृष्ठम् ( न ), 'कर्णके धनुष' का १ नाम है ।**

अथेति ॥ कालो यम इव पृष्ठमस्य । कालवर्ण वा पृष्ठमस्य । 'कालपृष्ठ धर्णचापे पुंसि कङ्कविहङ्गमे' [ इति मे० ४०।१९] ॥*॥ 'कालपृष्ठ तु कोदण्डमात्रके कर्णधन्वनि । कालपृष्ठो मृगभेदे कङ्के' इति हैम [४।७०–७१] ॥ (१) ॥*॥ एक 'कर्णधनुष' ।

**कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ ।**

**गाण्डीव, गाण्डिव ( २ पु न ), 'अर्जुनके धनुष' के २ नाम हैं ।**

केति ॥ कपिर्हनुमान् ध्वजो ध्वजे वा यस्य ॥*॥ गाण्डिर्ग्रन्थिरस्यास्ति । 'कृदिकारात्–'(ग० ४।१।४५)इति वा ङीप् । 'गाण्ड्यजगात्–' (५।२।११०) इति व । अत्र संहितया ह्रस्वदीर्घयोर्ग्रह । 'जिष्णोर्धनुषि कोदण्डे गाण्डीव गाण्डिव तथा' [इति शाश्वत ५८९] । कोदण्डे धनुर्मात्रेऽपि । (१) ॥*॥ (२) ॥*॥ द्वे 'अर्जुनधनुष' ।

**कोटिरस्याटनी**

**कोटि, अटनी ( २ स्त्री ), 'धनुषके दोनों छोर (किनारे)' के २ नाम हैं ।**

कविति ॥ कोटयते, अनया वा । 'कुट प्रतापने' चुरादि । 'अच इ' (उ० ४।१३९)। 'कोटि स्त्री धनुषोऽग्रेऽश्री सख्याभेदप्रकर्षयो' ( इति मे० ३४।९ ) ॥ (१) ॥*॥ अटति गुणोऽत्र । 'अट गतौ' (भ्वा० प० से०) । बाहुलकादनि । वा ङीप् (ग० ४।१।४५) ॥ (२) ॥*॥ द्वे 'धनुषोऽग्रस्य' ।

गोधे तले ज्याघातवारणे ॥८४॥

**गोधा ( स्त्री ), तलम् ( न ), 'दस्ताना' अर्थात् 'धनुषकी तांतके चोटसे बचनेके लिये हाथमें पहिनने के लिए जो चमड़े आदि का बनाया जाता है उसके' २ नाम हैं ।**

गविति ॥ गुध्यते बाहुभ्याम् । 'गुध परिवेष्टने ( दि० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'गोधा तलनिहाक्यो ' (इति मे० ७९।६) ॥ (१) ॥*॥ तलति । 'तल प्रतिष्ठायाम्' (भ्वा प० से०) अच् (३।१।१३४) । 'तलश्चपेटे तालद्रौ तल ज्याघातवारणे । त्सरौ स्वभावा धरयोस्तन्त्रीघाते च सम्यत । 'तल स्वरूपेऽनूर्ध्वेऽस्त्री क्लीब ज्याघातवारणे' ( इति मे०, १६४।२१–२२ ) ॥ (२) ॥*॥ व्यक्तिद्वयाद् द्वित्वम् ॥ द्वे 'ज्याया गुणस्याघातस्य वारणे' ।

**लस्तकस्तु धनुर्मध्यम्**

**लस्तक ( पु ), धनुर्मध्यम ( भा० द्वी० न ), 'धनुषके बीचवाले भाग' के २ नाम हैं ।**

लेति ॥ लस्यते स्म । 'लस श्लेषणक्रीडनयो ' (भ्वा० प० से०) । कर्मणि क्त (३।२।१०२) । आगमशास्त्रस्यानित्यत्वान्नेट् । स्वार्थे कन् (५।४।३८) ॥ (१) ॥*॥ धनुषो मध्यम् ॥ (२) ॥*॥ द्वे 'धनुर्मध्यभागस्य' ।

---

१ '—भूतलयोरपि' इत्यय पाठो न समीचीन, किन्तु विश्व-( ४५।२९ ) मेदिनी ( ४२।२८ ) सवादात् हैमपुस्तकस्थ '—भ्रूलतयोरपि' इत्येव पाठ समीचीन ।

१ अग्रे (अ० ३।३।२०२) 'तल शब्दविवरणे' 'तल स्वरूपेऽनूर्ध्वेऽस्त्री क्लीब ज्याघातवारणे । कानने कार्यबीजे च पुंसि तालमहीरुहे । चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना।' इति वक्ष्यमाणत्वान्मेदिन्यामन्तिमपादद्वयस्यैव दर्शनाच्च प्रकृतोद्धरणस्य मूलं मृग्यम् ।

**मौर्वी ज्या शिञ्जिनी गुणः।**

**मौर्वी, ज्या, शिञ्जिनी ( ३ स्त्री ), गुणः ( पु ),'धनुषकी डोरी, या तांत' के ४ नाम हैं।**

माविति ॥ मूर्वाया विकारः। 'अवयवे च प्राण्योषधि–' (४।३।१३५) इत्यण् ॥ (१) ॥*॥ जिनाति। 'ज्या वयोहानौ' (क्र्या० प० अ०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड ॥ (२) ॥*॥ शिङ्क्ते। 'शिजि अव्यक्ते शब्दे' (अ० आ० से०)। आवश्यके णिनि (३।३। १७०)॥*॥ गुण्यते। 'गुण आमन्त्रणे' (चु० उ० से०)। घञ् (३।३।१९) अच् वा (३।३।५६)। 'गुणो ज्यासूत्रतन्तुषु। रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीम इन्द्रिये'। रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे' इति हैम [२।१४०-१४१]॥ (४) ॥*॥ चत्वारि 'धनुर्गुणस्य'।

**स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥८५॥**

**प्रत्यालीढम्, आलीढम् ( २ न ), आदि ( आदिसे 'समपादम्, विशाखम्, मण्डलम् ( ३ न ), का संग्रह है' ) 'धनुषधारियोंके पांच आसन विशेष ( पैंतरे )' के नाम हैं।**

स्येति ॥ प्रत्यालिहनम्। 'लिह आस्वादने' (अ० उ० अ०)। 'नपुंसके भावे क्तः' (३।३।११४)। 'प्रत्यालीढं तु चरणन्यासभेदेऽशिते त्रिषु' (इति मे०, ४४।१२) ॥ (१) ॥*॥ एवमालीढम्। 'आलीढं पादन्यासेऽशिते त्रिषु' इति [मे०[२] ४४।७] ॥ (२) ॥*॥ तत्र ऊर्ध्वरथस्य वामपादप्रसारे दक्षिणपादसंकोचे आद्यम्। विपर्ययेऽन्त्यम् ॥ * ॥ आदिना समपद—( ३ ) विशाख—( ४ ) मण्डल (५) ग्रहः। वितस्त्यन्तरेण स्थिते पादद्वये विशाखः। [३]रभसस्त्वाह—'वैष्णवं समपादं च वैशाखं मण्डलं तथा। प्रत्यालीढमथालीढं स्थानान्येतानि षट् नृणाम्' इति ॥ * ॥ पञ्च 'धन्विनां स्थानभेदानाम्'।

**लक्षं लक्ष्यं शरव्यं च**

**लक्षम्, लक्ष्यम्, शरव्यम् (३ न),'निशाने'के ३ नाम हैं।**

लेति ॥ लक्ष्यते। 'लक्ष आलोचने' (चु० आ० से०)। घञ् (३।३।१९)। 'लक्षं व्याजशरव्ययोः। (संख्यायामपि)' [इति हैम० २।५८३] ॥ (१) ॥ * ॥ 'अचो यत्' (३।१।९७) ॥ (२) ॥*॥ शरवे हिंसायै हितम्। 'उगवादिभ्यो यत्' (५।१।२) यद्वा,–शरान्

१. हैमे 'क' पुस्तके '–सूदतन्तुषु'। '···सूद इन्द्रिये—' इति पाठः।

२. विश्वे पुस्तकद्वये 'आलीढ' शब्दस्यार्थानुक्त्याऽत्रत्यस्य प्राक्तन 'विश्वमेदिन्यौ' इति पाठस्य स्थाने 'मेदिनी' इत्येव पाठः स्थापितः।

३. 'भरतस्त्वाह' इति पाठान्तरम्।

व्ययति। 'व्येञ् संवरणे' (भ्वा० उ० अ०) 'संप्रसारणिभ्यो ड.' (वा० ३।२।३)।—'आत –' (३।२।३) इति क। सम्प्रसारणम् (६।१।१५)। यणि (६।४। ८२) च—इति मुकुट. ॥ (३) ॥ * ॥ त्रीणि 'वेधस्य' 'वेझा (निसाणा)' इति ख्यातस्य।

**शराभ्यास उपासनम्।**

**शराभ्यासः ( पु ), उपासनम् ( न ), 'बाण चलानेका अभ्यास करने' के २ नाम हैं।**

शेति ॥ शरमोक्षस्याभ्यास. ॥ ( १ ) ॥*॥ उपपूर्वः 'असु क्षेपणे' (दि० प० से०)। 'आस उपवेशने' (अ० आ० अ०) वा। भावे ल्युट् (३।३।११५) 'उपासनमासने। शुश्रूषाया शराभ्यासेऽपि' इति हैम [४।१६८-१६९] ॥ ( २ ) ॥ * ॥ द्वे 'शरक्षेपाभ्यासस्य'।

**पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥**

**कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः।**

**पृषत्कः बाणः, विशिखः, अजिह्मगः, खगः, आशुगः, कलम्बः, मार्गणः, शरः, पत्री, रोपः (११ पु), इषुः (पु स्त्री), 'बाण' के १२ नाम हैं।**

प्रिति ॥ पर्षति। 'पृषु सेचने' (भ्वा० प० से०) 'लट. शतृ–' (३।२।१२४) संज्ञापूर्वकत्वान्न गुणः। यद्वा–'वर्तमाने पृषद्बृहन्महत्–'(उ० २।८४)इति साधुः। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ ( १ ) ॥ * ॥ वणनम्। 'वण शब्दे' (भ्वा० प० से०)। घञ् (३।३।१८) बाण· शब्दोऽस्त्यस्य। अर्शआद्यच् (५।२।१२७)। 'बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः। बाणा तु बाणमूले स्त्री नीलझिण्ट्या पुनर्द्वयोः' (इति मे० ४६।२७) ॥ (२) ॥ * ॥ विशिष्टा शिखाऽग्रमस्य। 'विशिखा खनित्रिकायां रथ्यायां विशिखः शरे' (इति हैम ३।११२) ॥ (३) ॥ * ॥ जिह्मस्याभाव.। अजिह्ममृजु गच्छति। 'अन्येष्वपि–' (वा० ३।२।४८) इति ड ॥ (४) ॥ * ॥ खं गच्छति। 'अन्येष्वपि–' (वा० ३।२।४८) इति डः ॥ 'खगोऽर्कग्रहपक्षिषु। शरे देवेऽपि' (इति हैम २।३१) ॥ ( ५ ) ॥ * ॥ आशु गच्छति। 'अन्येष्वपि–' (वा० ३।२।४८) इति ड.। 'आशुगोऽर्के शरे वायौ' इति हेमचन्द्र (३।११६) ॥ ( ६ ) ॥ * ॥ कल्यते। 'कल क्षेपे' (चु० प० से०)। 'कृकदिकलिकडिभ्योऽम्बच्'[१]

१ मि० कौ०, उणादिसूत्रपाठे च 'कृकदिकडिकटिभ्योऽम्बच्' इत्येवं पाठः। तदा 'कलंब' शब्दसिद्धये 'कॄ विक्षेपे' इति धातो 'कीर्यते' इति विग्रहः कार्यः।

( उ० ४।८२ )। 'कलम्बो शाकभेदेऽपि[1] कदम्बशरयो पुमान्' ( इति मे० १०५।९ ) ॥ ( ७ ) ॥*॥ मार्गयति। 'मार्ग अन्वेषणे' ( चु० उ० से० ) ल्यु ( ३।१।१३४ )। मार्ग्यते वा। 'कृत्यल्युट—' (३।३।११३) इति ल्युट्। 'मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि' इति हैम ( ३।२३१ ) ॥ ( ८ ) ॥*॥ शृणाति, अनेन वा। 'शॄ हिंसायाम्' ( क्र्या० प० से० )। 'ॠदोरप्' ( ३।३।५७ ) वा। 'शरस्तु तेजने बाणे दध्यग्रे ना, शरं जले' [इति विश्व[2]-मेदिन्यौ १२९।८६] ॥*॥ ( 'सर' इति दन्त्यादिपाठे तु—सरति। 'सृ गतौ' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। '( बाणः स्यादग्रकण्टकः। स्थूलस्क्वेडो विपाटश्च ) चित्रपुङ्खः शरः सरः। ( पत्रवाहो विकर्ष )' इति त्रिकाण्डशेषात्[3] (२।८।५२ ५३) ॥ (९) ॥*॥ पत्राणि पक्षाः सन्त्यस्य। इनि० ( ५।२।११५ )। 'पत्री वाण्डे खगे द्रुमे। रथेऽद्रौ रथिके श्येने' इति हेमचन्द्र [ २।२७८ ] ॥ ( १० ) ॥*॥ रोप्यते, अनेन वा। 'रुपु विमोहने' ( दि० प० से० ) ण्यन्तः। घञ् ( ३।३।१९ )। यद्वा—रूप्यतेऽनेन। 'हलश्च' (३।३।१२१) इति घञ्। 'रोपो रोपणबाणयो' [इति विश्व० १०३।२]॥ ( ११ ) ॥*॥ ईष्यतेऽनेन। 'ईष गतिहिंसादर्शनेषु' ( भ्वा० आ० से० )। 'ईषे किच्च' ( उ० १।१३ ) इषु, आदेरिच्च ॥ ( १२ ) ॥*॥ द्वादश 'बाणस्य'।

**प्रक्ष्वेडनास्तु नाराचाः**

प्रक्ष्वेडन, नाराच' (२ पु),'लोहेके बाण' के २ नाम हैं।

प्रेति ॥ प्रकर्षेण क्ष्वेडन्ते। 'ञिक्ष्विदा अव्यक्ते शब्दे' (भ्वा० आ० से०)। ल्यु ( ३।१।१३४ )। पृषोदरादि ( ६।३।१०९ ) ॥ (१) ॥*॥ नरानाचामन्ति। 'अन्येष्वपि—' ( वा० ३।२।१०२ ) इति ड। प्रज्ञाद्यण् (५।४।३८)। यद्वा—नराणां समूहो नारम्। नारमाचामति। ड (वा० ३।२।१०१) ॥ (२) ॥*॥ द्वे 'सर्वलोहमयस्य शरस्य'।

**पक्षो वाजः**

पक्ष, वाज, (२ पु),'बाणमें लगे हुए पङ्ख'के २ नाम हैं।

टेति। पक्षति, पक्ष्यतेऽनेन वा। 'पक्ष परिग्रहे' (भ्वा० प० से०)। अच् (३।१।१३४)। घञ् (३।३।१९) वा॥ (१) ॥*॥ वजत्यनेन। 'वज गतौ' ( भ्वा० प० से० )। 'हलश्च' ( ३।३।१२१ )। निष्ठायां सेट्त्वान्न कुत्वम्। वाजयति वा ण्यन्तः। पचाद्यच् (३।१।१३४)।—'यद्वा दिग्वात् ( ७।३।५९ ) अकुत्वम्'—इति मुकुटश्चिन्त्यः। ('वाजो निस्वनपक्षयोः। वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु' इति मेदिनी, ३०।१५–१६) ॥ (२) ॥*॥ द्वे 'शरपक्षस्य'।

**त्रिपूत्तरे ॥ ८७ ॥**

भीति ॥ वक्ष्यमाणा लिप्तका(श्लो० २।८।८८)न्ताः।

**निरस्तः प्रहिते बाणे**

निरस्त (त्रि), 'धनुषसे छोड़े हुए बाण' का १ नाम है।

नीति ॥ निरस्यते स्म। 'असु क्षेपणे' ( दि० प० से० )। क्त (३।२।१०२) ॥ (१) ॥*॥ एक 'प्रक्षिप्तबाणस्य'।

**विषाक्ते दिग्धलिप्तकौ।**

विषाक्त, दिग्ध, लिप्तक' (३ त्रि), 'विषमें बुझाये हुए बाण' के ३ नाम हैं।

वीति ॥ दिह्यते स्म। 'दिह उपचये' (अ० उ० अ०)। क्त ( ३।२।१०२ ) ॥ (१) ॥*॥ लिप्यते स्म। 'लिप उपदेहे' (तु० उ० अ०)। क्त (३।२।१०२)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे 'विषसबद्धबाणस्य'॥

**तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥**

**तूण्याम्**

तूण, उपासङ्ग, तूणीर, निषङ्ग (४ पु), इषुधि (पु स्त्री), तूणी (स्त्री), 'तरकस' अर्थात् 'चमड़े आदिके बने हुए धनुर्धारियोंके पीठपर बाँधेजानेवाले, बाण रखनेके थैले' के ६ नाम हैं।

त्विति ॥ तूणयति। 'तूण संकोचे' (चु० आ० से०)। पचाद्यच् (३।१।१३४)। तूण्यते शरैः। घञ् (३।३।१९) वा ॥*॥ तूणा च। 'स्त्रियां तूणेषुधी उपासङ्ग' इति रत्नकोषः ॥ (१) ॥*॥ गौरादित्वात् ( ४।१।४१ ) ङीषपि। 'तूणी नील्यां निषङ्गे वा ना' ( इति मेदिनी ४६।१६)। ('तूणी तु नील्यां तूणो निषङ्गके' इति विश्व ४९।२५) ॥ (६) ॥*॥ एवं निषङ्ग। 'उपसर्गात्—' (८।३।६५) इति षत्वम् ॥ (४) ॥*॥ उपासज्यन्तेऽत्र शरा। 'षञ्ज सङ्गे' ( भ्वा० प० अ० ) 'हलश्च' ( ३।३।१२१ ) इति घञ् ॥ (२) ॥*॥ तूणी तूणत्वमीर्ते। 'ईर

---

१ मदिन्यां '—शाकभेदे स्यात्—' इति पाठः।

२. विश्वे 'शरं नीरे शरः काण्डे शरस्तेजनकेऽपि च' ( १२५।१० ) इति भिन्नपाठादत्र 'मेदिनी' त्येव पाठो युक्तः।

३ 'सरो दध्यग्रबाणयो' (१९५।८) इति विश्वाच्चेति बोध्यम्।

गतौ' (अ० आ० से०)। 'कर्मण्यण्' (३।२।१)। यद्वा—तूणीं शरैः संकोचं राति। 'रा दाने आदाने च' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः॥ (३)॥*॥ इषवो धीयन्तेऽत्र। 'डुधाञ्' (जु० उ० अ०)। 'कर्मण्यधिकरणे च' (३।३।९३) इति किः।॥ (५)॥*॥ षट् 'शराधारस्य' ['तरकस' इत्याख्यस्य]।

खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः।
कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्॥ ८९॥

खड्गः, निस्त्रिंशः, चन्द्रहासः, असि, रिष्टिः, कौक्षेयकः, मण्डलाग्रः, करवालः, कृपाणः (९ पु),'तलवार' के ९ नाम हैं।

खेति॥ खण्डति परम्। खण्ड्यतेऽनेन वा। 'खडि भेदने' 'छापूखडिभ्यः कित्' (उ० १।२४) इति गन्। आगमशास्त्रस्यानित्यत्वान्न नुम्।'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' (इति विश्व २५।२४ मेदिन्यौ २२।४)॥ (१)॥*॥ निर्गतस्त्रिंशतोऽङ्गुलिभ्यः। 'निरादयः क्रान्ता–' (वा० २।२।१८) इति समासः। 'संख्यायास्तत्पुरुषस्य' (वा० ५।४।७३) इति डच्।—'बहुव्रीहौ संख्येये—' (५।४।७३) इति डच्। इति मुकुटश्चिन्त्यः। बहुव्रीहेरभावात्। 'निस्त्रिंशो निर्घृणे खड्गे' [इति हैमः ३। ७५९]॥ (२)॥*॥ चन्द्र इव हासः प्रभाऽस्य। चन्द्रं हसति वा। द्युतिमत्त्वात्। 'हसे हसने' (भ्वा० प० से०)। 'चन्द्रहासोऽसिमात्रके। दशग्रीवकृपाणे च, 'कनीयसि च गुग्गुलौ' (इति हैमः ४।३४२)॥ (३)॥*॥ अस्यते। 'असु क्षेपणे' (दि० प० से०)। असति। 'अस दीप्तौ' (भ्वा० उ० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)।—बाहुलकादि—इति मुकुटश्चिन्त्यः।'असिः खड्गे नदीभिदि' इति हैमः [२।५८७]॥ (४)॥*॥ रेषति। 'रिषु हिंसायाम्' (भ्वा० प० से०)। रिशति वा। 'रिश हिंसायाम्'। (तु० प० अ०)। क्तिच् (३।३।१७४)। 'रिष्टिः खड्गे ना शुभे स्त्री' (इति मेदिनी ३५।२६)॥*॥ [ऋष्टि.[१]]अजादिरिति स्वाम्यादिः। ऋषति। 'ऋषी गतौ' (तु० प० से०)। क्तिच् (३।३।१७४)। 'करवालमण्डलाग्रकालेयकासिरिष्टयः। ऋष्टिः खड्गस्तरवारिकौक्षेयकौ च नन्दकः' इति रभसः॥ (५)॥ कुक्षौ भवः 'कुलकुक्षिग्रीवाभ्यः–' (४।२।९६) इति ढकञ्॥ (६)॥*॥ मण्डलमग्रमस्य॥ (७)॥*॥ करं पालयति। 'पाल रक्षणे' (चु० प० से०)। 'कर्मण्यण्' (३।२।१)॥*॥ 'करवालः' इति पाठान्तरम्। करं वलति। 'वल प्राणने' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। करेण वलति वा। ज्वलादिण' (३।१।१४०)। यद्वा—वलनम् वालः। 'वल वेष्टने' (भ्वा० आ० से०)। घञ् (३।३।१८)। करे वालो यस्य। करेण वल्यते वा। कर्मणि घञ् (३।३।१९)॥ (८)॥*॥ कृपां नुदति। 'नुद प्रेरणे' (तु० उ० अ०)। 'अन्येभ्योपि–' (वा० ३।२।१०१) इति डः। 'पूर्वपदात्–' (८।४।३) इति णत्वम्॥ (९)॥*॥ नव 'खड्गस्य'॥

त्सरुः खड्गादिमुष्टौ स्यात्

त्सरुः (पु), 'तलवार आदिकी मूठ' का १ नाम है।

त्सेति॥ त्सरति। 'त्सर छद्मगतौ' (भ्वा० प० से०) 'भृमृशी–' (उ० १।७) इत्युः॥ (१)॥*॥ आदिना कटितलच्छुरिकादिग्रहः॥*॥ एकं 'खड्गाद्यायुधमुष्टीनाम्'।

मेखला तन्निबन्धनम्।

मेखला (स्त्री),'तलवारको लटकानेके लिये चमड़े आदिकी बनी हुई कमरमें कसी जानेवाली पेटी, लड़ाईमें तलवार हाथसे छूट न जाय इस वास्ते कलाईपर बाँधे हुए चमड़े आदि या तलवार के म्यान' का १ नाम है।

मयिति॥ मा लक्ष्मीमीखति। मा ईखति। 'मा' शब्दो निषेधे। 'ईख गतौ' (भ्वा० प० से०)। बाहुलकाल्लच्। यद्वा—मा ईं लक्ष्मीं खलति। 'खल संचलने संचये च' (भ्वा० प० से०)। मूलविभुजादिक (वा० ३।२।५)। अणि वृद्धिः स्यात्।—मिखेः 'कम्बलादयश्च' इति कलप्रत्ययो गुणश्च निपात्यते–इति मुकुटश्चिन्त्यः। उज्ज्वलदत्तादिधृतसूत्रादर्शनात्। 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः।' (इति मे०, १५४।१२५)॥ (२)॥*॥ द्वे 'खड्गपिधानचर्मादिनिर्मितकटिबन्धनस्य'। 'युद्धे हस्तात्पतनवारणाय मणिबन्धे प्रबध्यमाणस्य चर्मादेर्वा'।

फलकोऽस्त्री फलं चर्म

फलकः (पु न), फलम्, चर्म (२ न),'ढाल'के २ नाम हैं।

फेति॥ फलति। 'त्रिफला विशरणे', 'फल निष्पत्तौ' (भ्वा० प० से०)। 'कृत्रादिभ्यो वुन्–' (उ० ५।३५)॥ (१)॥*॥ अच् (३।१।१३४)। 'फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः।' (इति हैमः[१] २।५१०–५११)॥ (२)॥*॥

१. हैमे पुस्तकत्रये 'कती–' इत्यंशो नास्ति। किन्तु 'चन्द्रहासार्थकः '–कृपाणे च' इत्यन्त एवांशः।

२. यत्तलक्ष्यम्—'शक्त्यृष्टिपरिघप्रासादगदामुद्गरपाणयः' भट्टिः (९।४)।

१. पूर्वमत्र 'मेदिनी' इति पाठ आसीत्, किन्तु मेदिन्यां 'फलं जातीफले सस्ये हेतुत्थे व्युष्टिलाभयोः। त्रिफलायां च कक्कोले प्रियङ्गौ तु फली स्मृता॥' इति (१४७।३३ ३४) भिन्नपाठलाभात्स पाठस्त्यक्तः, हैमे प्रकृतपाठलाभात् 'हैम' इति पाठः स्थापितश्च।

चरति, चर्यते वा। अनेन वा। मनिन् ( उ० ४।१४५ )। 'चर्म कृत्तौ च फलके' [इति 'मे० ८७।६३]॥ (३) ॥*॥ त्रीणि 'चर्मणः' फरि' [ ढाल' ] इति ख्यातस्य।

संग्राहो मुष्टिरस्य यः ॥९०॥

संग्राह ( पु ) 'ढालकी मूठ' का १ नाम है।

समिति॥ संगृह्यते। ग्रह उपादाने' ( क्र्या० उ० से० )। 'समि मुष्टौ' ( ३।३।३६ ) इति कर्मणि घञ्॥ (१) ॥*॥ अस्य=फलस्य ॥*॥ एक 'मुष्टेः'।

द्रुघणो मुद्गरघनौ

मुघण, मुद्गर, घन ( ३ पु ) 'मुद्गर' के ३ नाम हैं।

द्रिति॥ द्रुर्घनो हन्यतेऽनेन। 'करणेऽयोविद्रुषु' (३।३।८२) इत्यप्, घनादेशश्च। पूर्वपदात्–' ( ८।४।३ ) इति णत्वम्। 'द्रुघणो मुद्गरेऽपि स्याद्द्रुहिणे च परश्वधे' [ इति विश्व ५०।३९ मेदिन्यां ४८।५२ ] ॥*॥ केचित्—क्षुभ्नादित्वात् ( ८।४।३९ ) न ( णत्वम् ) 'द्रुघन'—इत्याहु ॥ (१) ॥*॥ गिरति। 'गॄ निगरणे' (तु० प० से०) अण् ( ३।१।१३४ )। मुदो गर ॥ (२) ॥*॥ हन्यतेऽनेन। 'मूर्तौ घन' ( ३।३।७७ ) इत्यप्घनादेशौ। 'घन सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे। सघे मुस्ते, घन मध्यनृत्यवाद्यप्रकारयो' [ इति हैम २।२६५ ]॥ (३) ॥*॥ त्रीणि मुद्गरस्य' 'गुर्ज' इति ख्यातस्य।

स्यादीली करवालिका।

ईली, करवालिका (२ स्त्री,), 'एक तरफ धारवाली छोटी तलवार य गुप्ती' के २ नाम हैं।

स्येति॥ इर्ते, ईर्यते वा। 'ईर गतौ' ( अ० आ० से० )। 'इगुपधात् कित्' ( उ० ४।१२९ ) इति इन्। 'कृदिकारात्–' ( उ० ४।१।४५ ) इति ङीप् वा। कपिलिकादि ( वा० ८।२।१८ ) ईड्यते वा। 'ईड स्तुतौ' ( अ० आ० से० )। डलयोरेकत्वम्।— 'इगुपधात्कि' इति मुकुटस्त्वपाणिनीय। 'इगुपधात् कित्' ( उ० ४।१२९ ) इति सूत्रपाठात्। तत्रेनोऽनुवर्तनात् ॥*॥ ( 'इलि' इति ) ह्रस्वादिपाठे तु 'इल गतौ क्षेपे च' (तु० प०, च० से० ) इति धातुर्बोध्य ॥ (१) ॥*॥ करं पालयति। पाल रक्षणे' ( चु० प० से० )। अण् ( ३।२।१ ) ङीप् ( ४।१।१५ ) कन ( ज्ञापि० ५।४।५ ) ॥*॥ 'कारवालिका' इति पाठे तु—कर वलते। 'वल हिंसादानयो' ( भ्वा० आ० से० )। अण् ( ३।२।१ ) करेण वाल्यते वा। णिजन्तात् अच इ' ( उ० ४।१३९ )। कन ( ज्ञापि० ५।४।५ ) ॥ ( २ ) ॥*॥ द्वे 'तरवार' इति ख्यातस्य।—'गुप्ती' इति ख्यातस्य—इत्यन्ये।

भिन्दिपालः सृगस्तुल्यौ

भिन्दिपाल, सृग ( २ पु ), 'नलिका नामक हथियार और गुलेल' अर्थात् 'छोटे २ पत्थर या कङ्कड़ फेंकनेके वास्ते रबड़ या चमड़ेके बने हुए साधन विशेष, या ढेलवांस' के २ नाम हैं।

भीति॥ भिन्दति। 'भिदि अवयवे'(भ्वा० प० से०) इन् ( उ० ४।११८ )। भिन्दिर्द्वादशतालः तु दशकुन्तोऽभिधीयते' इति भरत। तदवच्छिन्नः पालोऽपि भिन्दि। भिंदि पालयति। अण् ( ३।२।१ ) ॥ ( १ ) ॥*॥ सरति। सृ गतौ' ( भ्वा० प० अ० )। बाहुलकात्क्॥ ( २ ) ॥*॥ द्वे 'अश्मप्रक्षेपसाधनस्य', 'गोफण' इति ख्यातस्य।—नालिकास्त्रस्य—इत्यन्ये।

परिघः परिघातनः ॥९१॥

परिघ, परिघातन ( २ पु ), 'लोहा मढ़ी हुई लाठी' के २ नाम हैं।

पेति॥ परितो हन्यतेऽनेन। परौ घ' ( ३।३।८४ ) इति साधु। 'परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च' [इति हैम ३।१३४] ॥ (१) ॥*॥ परितो घातयत्यनेन। ल्युट ( ३।३।११७ ) ॥ ( २ ) द्वे लोहबद्धस्य लगुडभेदस्य'। 'लोहाङ्गी' इति ख्यातस्य।

द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः।

कुठार ( पु स्त्री ), स्वधिति, परशु, परश्वध ( ३ पु ) 'फरसा, कुल्हाड़ी' के ४ नाम हैं।

द्वेति॥ कुठे गतिप्रतिघाते आरो गमिरस्य। जातित्वात् ( ४।१।६३ ) ङीप्। कुट वृक्षमृच्छति वा। ऋ गतौ' ( भ्वा० प० अ० ) अण ( ३।२।१ ) ॥ ( १ ) ॥*॥ स्व धियति। 'धि धारणे ( तु० प० अ० )। क्तिच् ( ३।३।१७४ ) ॥ ( २ ) ॥*॥ परं शृणाति। 'शॄ हिंसायाम् ( क्र्या० प० से० )। 'आङ्परयो खनिशृभ्यां डिच्च' ( उ० १।३३ ) इति कु ॥ ( ३ ) ॥*॥ परस्य श्वयनम्। टुओश्वि गतिवृद्ध्यो' (भ्वा० प० से०) अन्येभ्योऽपि–' ( वा० ३।२।१०२ ) इति ड। परश्व धयति। 'आतोऽनुप–' ( ३।२।३ ) इति क ॥*॥ ( 'परश्वध' ) अपि। यथाह–'यष्टिपरश्वधहेतिकौ' इति–इति स्वामी ॥*॥ 'परस्वध' इति पाठे तु—परस्य स्व दधाति। काष्ठदण्डधारकत्वात्। 'कुठार स्त्री च स्वधिति'

१ विषये 'चर्म स्याद्दलफलत्वचो' इति ( ९५।११९) इति भिन्नपाठादत्रत्यस्य 'विश्व' इति प्राक्तनपाठस्य स्थाने प्रकृतपाठस्य मेदिन्या दर्शनात्स एव स्वीकृत।

परशुश्च परस्वधः । कुठाटङ्कः पर्शुः' । 'अथ[1] छुरिका कोशशायिका' इति रभसः ॥ ( ४ ) ॥ * ॥ चत्वारि 'कुठारस्य' ['फरसा' इत्याख्यस्य] ।

**स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥९२॥**

**शस्त्री, असिपुत्री, छुरिका, असिधेनुका ( ४ स्त्री ), 'छूरी' के ४ नाम हैं।**

स्येति ॥ शस्यतेऽनया । 'शसु हिंसायाम्' ( भ्वा० प० से० ) । 'दाम्नीशस–' ( ३।२।१८२ ) इति ष्ट्रन् । ङीष् ( ४।१।४१ ) । 'शस्त्रमायुधे । लोहे, शस्त्री छुरिकायाम्' [ इति हैम. २।४७२-४७३ ] ॥ ( १ ) ॥ * ॥ असेः पुत्री ॥ ( २ ) ॥ * ॥ छुरति । 'छुर छेदने' ( तु० प० से० ) । क्वुन् ( उ० २।३५ ) । 'इगुपध–' ( ३।२।१३५ ) इति के कन् ( ज्ञापि० ५।४।५ ) वा ॥ ( ३ ) ॥*॥ असेर्धेनुरिव ॥ (४) ॥*॥ चत्वारि 'छुरिकायाः' ।

**वा पुंसि शल्यं शङ्कुर्ना**

**शल्यम् ( न पु ), शङ्कुः ( पु ), 'बाणके नोंक' ( अगले भाग )' के २ नाम हैं ।**

वेति ॥ शलति । 'शल गतौ' ( भ्वा० प० से० ) । अघ्न्यादित्वात् ( उ० ४।११२ ) यः । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्ना' [इति मे० ११७।५७ ] ॥ ( १ ) ॥ * ॥ शङ्कतेऽस्मात् । 'शकि शङ्कायाम्' ( भ्वा० आ० से० ) । 'खरशंकुपीयु–' ( उ० १।३६ ) इति साधु । 'शङ्कु पत्रशिराजाले संख्याकीलकशम्भुषु । यादोऽस्त्रभेदयोर्मेढ्रे' [ इति हैम २।१८ ] । 'संख्याकीलकयोः शंकुः शकु प्रहरणान्तरे' [ इति शाश्वत ३८५ ] ॥ ( २ ) ॥ * ॥ द्वे 'बाणाग्रस्य', 'बर्छी' इति ख्यातस्य ।—'शेल' इति ख्यातस्य—इत्यन्ये ।

**सर्वला तोमरोऽस्त्रियाम् ।**

**सर्वला ( स्त्री ), तोमरः ( पु न ), 'तोमर, गुर्ज या गड़ाँसे' के २ नाम हैं ।**

सेति ॥ शर्वति । 'शर्व गतौ' ( भ्वा० प० से० ) । तालव्यादि (पवर्गीयान्त )। वृषादित्वात् (उ० १।१०६)। कलच् । 'शार्दूलशर्वलादालाद्ु' इति शमेद ॥*॥ स्वामी तु—'सर्वं लाति' इति विगृह्णन् ( सर्वलाया ) दन्त्यादितामभिप्रैति ॥ (१) ॥*॥ तौति । 'तु.' सौत्रो (धातु) गतौ[2] । विच् ( ३।२।७५ ) । म्रियते । 'मृङ् प्राणत्यागे' ( तु० आ० अ० ) । अन्तर्भावितण्यर्थः । अच् ( ३।१।१३४ ) । तोश्चासौ मरश्च । तौर्गत्वा म्रियतेऽनेन वा । 'पुंसि–' ( ३।३।११८ ) इति घ. ॥ ( २ ) ॥ * ॥ द्वे 'तोमरस्य' 'गड़ासा' इति ख्यातस्य ।—'शावली' इति ख्यातायाः —इत्यन्ये ।

**प्रासस्तु कुन्तः**

**प्रासः, कुन्तः ( २ पु ), 'भाला' के २ नाम हैं ।**

प्रेति ॥ प्रास्यते । 'असु क्षेपणे' ( दि० प० से० ) । कर्मणि घञ् ( ३।३।१९ ) ॥ ( १ ) ॥ * ॥ कुं शरीरमुनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) । बाहुलकात्. । शकन्ध्वादि ( वा० ६।१।९४ ) । 'कुन्त. प्रासे षण्डभावे क्षुद्रजातौ[1] गवेधुके । कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे' [ इति विश्व ५९।३३ ] ॥ ( २ ) ॥ * ॥ द्वे 'प्रासस्य' 'भाला' इति ख्यातस्य ।

**कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥९३॥**

**कोणः ( पु ), पालिः, अश्रिः, कोटिः ( ३ स्त्री ), 'तलवार आदि हथियारोंके किनारे या नोक' के ४ नाम हैं ।**

कवेति ॥ कुणत्यनेन । 'कुण शब्दे' (तु० प० से०) 'हलश्च' (३।३।१२१) इति घञ् । कर्तर्यच् (३।१।१३४) वा । 'कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामश्रौ च लगुडेऽपि च' [ इति मे० ४५।८-९ ]॥ ( १ )॥ * ॥ पालयति । 'पाल रक्षणे' (चु० प० से०)। 'अच इः' ( उ० ४।१३९ ) । मुकुटस्तु—पाति । 'ऋतन्यञ्जि–' ( उ० ४।२ ) इत्यादिनालिः—इत्याह । तन्न । तत्र पाते पाठाभावात् । 'पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोः' [ इति मे० १४७।३०-३१ ] ॥ (२) ॥ * ॥ अश्नाति 'अश भोजने' ( क्र्या० प० से० ) । अश्नुते वा । 'अशू व्याप्तौ' ( स्वा० आ० से० ) । अश्रया(पङ्क्त्या)दि (उ० ४।६६) । मुकुटस्तु—आश्रीयते प्रहारार्थम्, इति । 'आङि श्रिहनिभ्यां ह्रस्वश्च' ( उ० ४।१३७ ) इतीण् विरुद्ध । ङित्वात् ( ६।४।१४३ ) टिलोप. । 'आङो ह्रस्वश्च'—इत्याह । तन्न । उक्तसूत्रादर्शनात् । 'अश्रिः कोणैकदेशयोः.' इति धरणिः ॥ * ॥ 'अस्र कोणे[2] शिरसिजे' इति विश्वात् [ १३०।६८ ] 'अस्र.' अपि ॥ ( ३ ) ॥ * ॥ कोटयति, कोट्यते वा । 'कुट कौटिल्ये' (तु० प० से० ) । 'अच इः' ( उ० ४।१३९ ) । कुट्यते वा ।

१. अयं 'छुरिका'र्थकत्वान्न प्रकृतोपयोगी ।

२. "तु इति सौत्रो धातुर्गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति" इति 'तुरस्तुशम्य—' इति सूत्रविवरणे भट्टो० ।

१. 'क्षुद्रजन्तौ—' इति विश्वे पाठ. ।

२. उणादिसूत्रपाठे एतत्सूत्रस्य दर्शनात् सि० कौ० 'स्त्रियां पाल्यश्रिकोट्यः' इति तदुदाहरणाच्चेदं चिन्त्यम् ।

'इन ( ण ) जादिभ्य' ( वा० ३।३।१०८ ) इतीन ( ण )। 'कोटि स्त्री धनुषोऽग्रेऽस्त्री सङ्ख्याभेदप्रकर्षयो' [ इति मे० ३४।९ ] । ( ४ ) ॥ * ॥ चत्वारि 'कोण भागस्य'।

## सर्वाभिसार सर्वौघ सर्वसंनहनार्थक ।

सर्वाभिसार, सर्वौघ (२ पु), सर्वसनहनम् (न), 'चतुरङ्गिनी सेना को तैयार करने' के ३ नाम हैं।

सेति ॥ सर्वेषामभिसरणम्। सृ गतौ' ( भ्वा० प० से० )। भावे घञ् ( ३।३।१८ ) ॥ ( १ ) ॥ * ॥ सर्वस्यौघ । 'सर्वौघो गुरुवगे च सर्वसनहने पुमान्' (इति मे० २७।११ ) ॥ ( २ ) ॥ * ॥ सर्वेषां सनहनम्। सर्वसंनहनमर्थो यस्य ॥ ( ३ ) ॥ * ॥ त्रीणि 'सर्वसैन्यसनहनस्य'।

## लोहाभिहारोऽस्त्रभृता राज्ञा नीराजनाविधि ॥९४॥

लोहाभिसार ( पु ), 'लड़ाईके लिये तैयार शस्त्रधारियों या राजाओंकी आरती या आरतीके बादवाले कृत्यविशेष या युद्धयात्राके पहले की जानेवाली हथियारोंकी पूजा' का १ नाम है।

लोहेति ॥ 'लोहोऽस्त्री शस्त्रके लोहे' [इति मे० १७५। ८]। लोहस्य शस्त्रस्याभितो हरणम्। 'हृञ् हरणे' (भ्वा० उ० अ० )। भावे घञ् ( ३।३।१८ )। 'लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तर' इत्यमरमाला ॥*॥ 'लोहाभिसार' इति पाठे तु-'सृ गतौ' ( भ्वा० प० से० ) धातुर्बोध्य ॥ ( १ ) ॥ * ॥ नितरापेण नितरा वा राजनम्। 'राजृ दीप्तौ'( भ्वा० उ० से० )। ण्यन्त। 'ण्यासश्रन्थ-' ( ३।३।१०७ ) इति भावे युच्। तस्या सैव वा विधि। 'नीराजनो विधि' इति पाठे तु 'निर्गतेन राजनमत्र' इति बहुव्रीहिर्बोध्य ॥ * ॥ एक 'महानवम्या[२] प्रस्थानात्प्राक् शस्त्रवाहनादिपूजनविधे'।

## यत्सेनयाभिगमनमरौ तदभिषेणनम् ।

अभिषेणनम् ( न ), 'वैरीके सामने सेना-सहित जाने' का १ नाम है।

यदिति। सेनयाभियानम्। सत्याप-' ( ३।१।२५ ) इति सेनाशब्दाण्णिच्। ल्युट् ( ३।३।११५ )। 'उपसर्गात् सुनोति-' ( ८।३।६५ ) इति षत्वम् ॥ ( १ ) ॥*॥ एक 'शत्रौ ससैन्यगमनस्य'।

## यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥९५॥

यात्रा, व्रज्या (२ स्त्री), अभिनिर्याणम्, प्रस्थानम्, गमनम् (३ न), गम ( पु ) 'यात्रा, प्रस्थान, जाने' के ६ नाम हैं।

येति यानम्। 'या प्रापणे' ( भ० प० अ० )। 'हुयामाश्रुभसिभ्यस्त्रन्' ( उ० ४।१६८ )। 'यात्रा तु यापनेऽपि स्याद्गमनोत्सवयो स्त्रियाम्' ( इति मे० १२८।७७ )॥ ( १ ) ॥ * ॥ व्रजनम्। व्रज गतौ' (भ्वा० प० से०)। 'व्रजयजो-' ( ३।३।९८ ) इति क्यप् ॥ ( २ ) ॥*॥ अभिनिर्या- ( ३ ) ॥ * ॥ प्रस्था-(४) ॥*॥ गमिभ्यो ( ५ ) ॥ * ॥ ल्युट् ( ३।३।११५ ) ॥ * ॥ गमे 'ग्रहवृद-' ( ३।३।५८ ) इत्यप्। गमो नाक्षविवर्ते स्याद पर्यालोचितेऽध्वनि' [ इति मे० १०८।१० ] ॥ ( ६ ) ॥ * ॥ षट् 'प्रस्थानयात्रस्य'।

## स्यादासारः प्रसरणम्

आसार ( पु ), प्रसरणम् ( न ) 'सेनाके सब तरफ फैल जाने' के २ नाम हैं।

स्येति ॥ आसरणम्। 'सृ गतौ' ( भ्वा० प० अ० )। घञ् ( ३।३।१८ )। 'आसार स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' [ इति विश्व १३८।१६७ ]॥ ( १ ) ॥ * ॥ प्रसरणे ल्युट् ( ३।३।११५ ) ॥ * ॥ 'प्रसरणी' इति पाठे-'अर्चिसुधृ-'( उ० २।१ २ ) इत्यनि। कृदिकारात्-' ( ग० ४।१।४५ ) इति ङीष् ॥ ( २ ) ॥ * ॥ द्वे 'सर्वतो व्याप्तिसैन्यप्रसरणस्य'।

## प्रचक्रं चलितार्थकम् ।

प्रचक्रम, चलितम् ( २ न ), 'यात्रा की हुई सेना' के २ नाम हैं।

प्रेति ॥ प्रस्थित चक्र सै यम् ॥ ( १ ) ॥*॥ चलित शब्दस्य समानार्थकम्। 'प्रचक्र चलित रिपु' इत्यमरमाला ॥ (२) ॥*॥ द्वे 'प्रस्थितसैन्यस्य'।

## अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥९६॥

अभिक्रम ( पु ), 'निडर होकर वैरीके सामने योद्धाके गमन करने' का १ नाम है।

अहीति ॥ अभिक्रमणम्। 'क्रमु पादविक्षेपे' ( भ्वा० प० से० ) भावे घञ् ( ३।३।१८)। 'नोदात्तोपदेश-' (७।३।३४) इति न वृद्धि ॥ (१) ॥*॥ एक 'निर्भीकयानि'।

---

१. विश्वे ( २९।११ ) सवादात् —गुरुभेदे—' इति लभ्यमानो मेदिनीपाठो न सम्यक्।

२. हेमचन्द्रस्तु ( ३।४५३ ) दशम्या विजयादशम्या नीराजनान्तर विधि लोहाभिसार मनुते।

**वैतालिका बोधकराः**

वैतालिकः, बोधकरः ( २ पु ), 'राजाको जगानेके लिये प्रातः काल या विशिष्ट अवसरों पर राजाके स्तुतिपाठ करनेवाले बन्दी, भाट' के २ नाम हैं।

वायिति ॥ विविधेन तालेन शब्देन चरन्ति। 'चरति' (४।४।८) इति ठक्। स प्रयोजनमस्य। 'प्रयोजनम्' (५।१।१०९) इति ठक्, वा ॥ (१) ॥*॥ बोधं करोति। 'कृञो हेतु-' (३।२।२०) इति टः ॥ (२) ॥*॥ द्वे 'प्रातर्जागरणकारिणः'।

**घाण्टिका घाण्टिकार्थकाः।**

चाक्रिकः, घाण्टिकः ( २ पु ) 'घण्टा बजानेवाले या घड़ियारी नामक बाजाको बजानेवाले बन्दी-विशेष' के २ नाम हैं।

केति ॥ चक्रेण समूहेन चरन्ति। 'चरति' (४।४।८) इति ठक् ॥ (१) ॥*॥ घण्टया चरन्ति। ठक् (४।४।८) (२) ॥*॥ बहवो मिलिता ये राज्ञः स्तुत्यादि पठन्ति, तेषां द्वे। क्वचित्तु 'चक्रिका घटिकार्थकाः' इति पाठः। तत्र चक्रमस्ति वाद्यत्वेन यस्य। ठन् ( ५।२।११५ ) ॥ (१) ॥*॥ घटीं कायति। 'कै शब्दे' ( भ्वा० प० अ० ) कः ( ३।२।३ )। 'ङ्यापोः-' (६।३।६३) इति ह्रस्वः ॥ (२) ॥*॥ द्वे 'वन्दिविशेषेषु'। 'घड़ियारी' इति 'घटिकावादकस्य'।

**स्युर्मागधास्तु मगधाः**

मागधः, मगधः ( २ पु ), 'राजाकी वंशावलीको वर्णन करनेवाले वन्दी' के २ नाम हैं।

स्युरिति ॥ मगध्यन्ति याचन्ते। 'मगध'इति याच्ञार्थः[1] कण्ड्वादियगन्तः। अच् (३।१।१३४)। 'यस्य हलः' (६।४।४९) इति यलोपः। प्रज्ञाद्यण् ( ५।४।३८ ) वा ॥ (१) ॥*॥ मुकुटस्तु—'मधु मधुरं कायन्ति' इति विगृह्णन् 'मधुकाः' इति पाठं मन्यते ॥ (२)॥*॥ द्वे 'राज्ञो वंशपरम्पराशंसकानाम्'।

**वन्दिनः स्तुतिपाठकाः ॥९७॥**

बन्दी, स्तुतिपाठकः ( २ पु ), 'राजाकी स्तुति करनेवाले बन्दी' के २ नाम हैं।

वेति ॥ वदन्ते। 'वदि अभिवादनस्तुत्योः' ( भ्वा० आ० से० )। ग्रह्यादित्वात् (३।१।१३४), 'आवश्यके' (३।३।१७०) इति वा णिनिः ॥ (१) ॥*॥ स्तुतेः पाठकाः ॥ (२) ॥*॥ 'वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः' ( ) ॥ * ॥ द्वे 'राजादिस्तुपाठकेषु' 'भाट' इति ख्यातस्य। ('चत्वार एकार्थाः' इत्येके-इति स्वामी)।

**संशप्तकास्तु समयात्संग्रामादनिवर्तिनः।**

संशप्तकः ( पु ), 'शपथ देने या स्वयं प्रतिज्ञा करनेके कारण लड़ाईसे नहीं लौटनेवाले योद्धा' का १ नाम है।

समिति ॥ संशपनम्। 'शप आक्रोशे' ( भ्वा० उ० अ० ) भावे क्तः (३।३।११४) संशप्तं शपथं कुर्वन्ति। 'तत्करोति-' (वा० ३।१।२६) इति णिच्। ण्वुल् (३।१।१३४)। क्वुन् ( उ० २।३५ ) वा। सम्यक् शप्तं सत्यं येषां ते इति वा ॥ ( १ ) ॥*॥ समयाच्छपथाद्धेतोराचाराद्वा ॥*॥ एकं 'शपथवशात्संग्रामादपरावर्तिनः'।

**रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥९८॥**

रेणुः ( पु स्त्री ), धूलिः ( स्त्री ), पांशुः ( पु ), रजः (न), 'धूल' के ४ नाम हैं।

रयिति ॥ रिणाति, रीयते वा। 'री गतिरेषणयोः' (क्र्या० प० अ०)। 'अजिवृरीभ्यो निच्च' (उ० ३।३८) इति णुः। 'रेणु स्त्रीपुंसयोर्धूलौ पुलिङ्गः पर्पटे पुनः' [ इति विश्व'मे० ४६।२५ ] ॥ (१) ॥*॥ धुवति, धूयते वा। 'धू विधूनने' (तु० प० से०)। बाहुलकाल्लिः। धवनम्। 'धूञ् कम्पने' (क्र्या० उ० से०)। संपदादि (वा० ३।३।१०८)। धुवा लीयते। 'इक्कृष्यादिभ्यः' (वा० ३।३।१०८) ॥ (२) ॥*॥ पंशति। 'पंशि नाशने' ( चु० प० से० )। 'अर्जिदृशिकम्यमि-' (उ० १।२७) इति साधुः ॥*॥ 'तालव्या अपि दन्त्याश्च शंबशूकरपांशवः' इति शभेदात् ( पांसु ) दन्त्यान्तश्च ॥ (३) ॥*॥ रजति। 'रञ्ज रागे' ( भ्वा० उ० अ० )। 'भूरञ्जिभ्यां कित्' ( उ० ४।२१७ ) इत्यसुन्[2] ॥ ( ४ ) ॥ * ॥ चत्वारि 'रजसः'।

**चूर्णे क्षोदः**

चूर्णम् (न पु), क्षोदः (पु), 'महीन धूल' के २ नाम हैं।

च्विति ॥ चूर्ण्यते। 'चूर्ण पेषणे' चुरादिः। 'एरच्' (३।३।५६) 'चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करा'

---

१. मगधेतियाच्ञार्थः, कण्वादिः। यच्छ्रीभोजः—'कर्मार्थिनः कुसुम्यन्तु कं मगध्यन्तु मागधाः। कमिषुध्यन्तु यज्वानो रामेऽरण्यं तुरण्यति ॥'

१. विश्वे 'रेणुः पर्पटके धूल्यामर्के' इति भिन्नपाठादत्र 'मेदिनी' इत्येव पाठो युक्तः।

२ अदन्तोऽपि 'रज' शब्दः। तथा च वाच०— 'रञ्ज् क। स्त्रीकुसुमे शब्द०। परागे, रेणौ, गुणभेदे च प्र० जान्वे शब्द च० इति ( पृष्ठ ४७८९ )।

[इति शाश्वत ३८०] ॥ (१) ॥*॥ क्षुद्यते । 'क्षुदिर् सम्पेषणे' (रु० उ० अ०) । घञ् (३।३।१८) । 'क्षोद पेषणचूर्णयो [इति हैम २।२२८] ॥ (२) ॥*॥ द्वे पिष्टस्य रजस'।—पङ्कदि रजस —इत्येके ।

समुत्पिञ्जपिञ्जलौ[1] भृशमाकुले ।

समुत्पिञ्ज, पिञ्जल (२ पु), 'अधिक व्याकुल सेना' के २ नाम हैं।

सेति ॥ समुत्पिञ्ज(य)ति । 'पिजि हिंसायाम्' (चु० प० से०) । ण्यन्त । 'एरच्' (३।३।५६) ॥ (१) ॥*॥ बाहुलकाद्कलच् । पिञ्ज शाति वा ॥ (२) ॥*॥ द्वे 'अतिसकुलस्य' ।

पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥

पताका, वैजयन्ती (२ स्त्री), केतनम् (न), ध्वजम् (न पु), 'पताका, झण्डे' के ४ नाम हैं।

पेति ॥ पतति, पत्यतेऽन्या वा । 'पतॢ गतौ' (भ्वा० प० से०) । 'बलाकादयश्च' (उ० ४।१४ इत्याव ) । यत्तु—'शलिपदिपतिभ्यो नित्' ( उ० ४।१४ ) इत्याव —इति मुकुट । तन्न । अपाणिनीयत्वात् । 'पताका वैजयन्त्या स्यात्सौभाग्यनाटकाङ्कयो'' [ इति विश्व–१६।१७३, मे० १०।११५ ] ॥ ( १ ) ॥*॥ विजयते । 'जि अभिभवे' ( भ्वा० प० अ० ) । 'तॄभूवहि–' ( उ० ३।१२८ ) इति अच् । विजयन्तस्येयम् 'तस्येदम्' ( ४।३।१२० ) इत्यण् । 'वैजयन्तो गृहे शक्रप्रासादध्वजयो पुमान् । वैजयन्ती पताकाया जयन्तीपादप स्त्रियाम्' ( इति मे० ७०।२२० ) ॥ ( २ ) ॥*॥ केत्यते ज्ञायतेऽनेन । 'कित सवासार्थे' (भ्वा० प० से०) । 'करणा–' (३।३।११७) इति ल्युट् । केतन तु निमन्त्रणे । गृहे केत्री च कृत्ये च[3] इति मे०(८६।५२-५३ ) ॥ ( ३ ) ॥ * ॥ ध्वजति । 'ध्वज गतौ (भ्वा० प० से० ) । अन्तर्भावितण्यर्थो वा । पचाद्यच ( ३।१।१३४) । ध्वज पूर्वदिशो गृहे । चिह्न चिह्ने पताकाया खट्वाङ्गे शौण्डिकेऽपि च' [इति हैम २।७१-७२]॥ (४) ॥ ॥ चत्वारि 'पताकाया' ।

१ 'उत्पिञ्जलश्च, यल्लक्ष्यम्–'कुर्वाणमुत्पिञ्जलजातपत्रैर्विहङ्गमाना जलजातपत्रे' इति माघ ( ४।६ ) ।

२ 'विश्वे' तु 'च सौभाग्येऽङ्के ध्वजेऽपि च' इति पाठ । 'मेदिन्या तु 'वैजयन्तो महेन्द्रस्य ध्वजप्रासादयो पुमान् ।'' स्त्रियाम् ।' इति पाठ , विश्वेऽपि —गृहे शक्रप्रासादध्वजयोरपि । जयन्तीवल्लिमन्थयो ॥' ( ७२। २०१ ) इति पाठ , अतोऽस्याद्धरणस्य मूल मृग्यम् ।

३ मेदिन्या '—क्रुये' इत्येव पाठ ।

सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ।

वीराशंसनम् ( न ), 'लड़ाईके अत्यन्त भयङ्कर मैदान' का १ नाम है।

सेति ॥ वीरा आशस्यन्तेऽत्र । 'आङ शसि इच्छायाम्' (भ्वा० आ० से०) । ल्युट् ( ३।३।११५ ) ॥ (१) ॥*॥ एक 'भयकरयुद्धभूमे' ।

अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥

अहंपूर्विका (स्त्री), 'मैं पहले पहुंचा–मैं पहले पहुंचा ऐसे कहते हुए स्पर्द्धासे योद्धाओंके दौड़ने' का १ नाम है।

अहमिति ॥ अहं पूर्वम् । 'सुप् सुपा'[1] ( २।१।४ ) इति समास । स्वार्थे वन् (ज्ञापि० ५।४।५) । 'अह पूर्वम्' इत्यस्याम् । ठन् ( ५।२।११५ ) वा ॥ (१) ॥*॥ एक 'अह पूर्वमह पूर्वम् इति योधाना धावनक्रियाया' ।

आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि ।

आहोपुरुषिका ( स्त्री ), 'अभिमानपूर्वक अपनेमें सामर्थ्यका प्रकट करने' का १ नाम है।

आहविति ॥ अहो अह पुरुष । 'सुप्सुपा' (२।१।४) इति समास । अहोपुरुषस्य भाव । मनोज्ञादित्वात् (५।१। १३३ ) वुञ् ॥ (१) ॥*॥ एकम् 'आत्मनि शक्त्याविष्करणस्य' ।

अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ॥ १०१ ॥

अहमहमिका (स्त्री), 'आपसमें अहङ्कार करने' का १ नाम है।

अहमिति ॥ 'अहमह' शब्दोऽस्त्यत्र । वीप्साया द्वित्वम् (८।१।२) । व्रीह्यादित्वात् (५।२।११६) ठन् । अनित्यत्वात् 'अव्ययानाम्–' (वा० ६।४।१४४) इति न टिलोप ॥ (१) ॥*॥ एक परस्पराहङ्कारस्य' ।

द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥

शक्तिः पराक्रमप्राणौ

द्रविणम्, तर , सह (पु,)बलम्, शौर्यम्, स्थाम, शुष्मम्, (७ न), शक्ति (स्त्री), पराक्रम , प्राण (२ पु), 'पराक्रम, बल' के १० नाम हैं।

द्रेति ॥ द्रवत्यनेन । 'द्रु गतौ' ( भ्वा० प० अ० ) । 'द्रुदक्षिभ्यामिनन्' (उ० २।५०) । 'द्रविण काञ्चने धने । पराक्रमे बलेऽपि स्यात्' इति हेमचन्द्र [३।२१६–२१७]॥

१ 'सह सुपा' इति सूत्रस्वरूपम्, प्रकृतोक्तिस्तु फलितार्थपरा । एवमग्रेऽपि ।

(१) ॥*॥ नरत्यनेन। 'तृ प्लवनादौ' (भ्वा० प० से०)। असुन् (उ० ४।१८९) 'नरो जवे बले' इति हैम [२।५९४] ॥ (२) ॥*॥ सह्यतेऽनेन। 'षह अभिभवे' (भ्वा० प० अ०)। असुन् (उ० ४।१८९)। 'सहो बले ज्योतिषि च सहा हेमन्तमार्गयो' इति सान्तेषु हैम (२। ६०७) ॥*॥ 'दण्डोत्पला मुद्गपर्णी कुमारीनलभेषजे। सहा स्त्रियां, बले न स्त्री' इति रभसाददन्तमपि। (३) ॥*॥ बलते(१२)नेन। 'बल प्राणने' (भ्वा० प० से०)। 'अनो घ च' (३।३।१२५) इति घ। 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययो। पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च। बलयुक्तेऽन्यलिङ्ग स्याद्वाटघालके तु योगिनि' (इति मे०, १४७।३७-३८) ॥ (४) ॥*॥ शूरस्य भाव कर्म वा। ष्यञ् (५।१।१२४)। '¹शौर्यमारभटीशक्त्यो' [इति विश्व. ११६।१८] ॥ (५) ॥*॥ तिष्ठत्यनेन। 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५)।—'आतो मनिन–' (३।२।७५)—इति मुकुटस्तु चिन्त्य। तस्य कर्तरि विधानात् ॥ (६) ॥*॥ शुष्यत्यनेनारि'। 'शुष शोषणे' (दि० प० अ०)। 'अविसिविसिशुषिभ्य कित्' (उ० १।१४४) इति मन्। 'शुष्मं तेजसि, सूर्ये ना' (इति मे०, ११०।३४) ॥ (७) ॥*॥ शक्यतेऽनया। 'शक्लृ शक्तौ' (स्वा० प० अ०)। 'स्त्रियां क्तिन्' (३।३।९४)। 'शक्तिरायुधभेदे स्यादुत्साहादौ ²बले स्त्रियाम्' [इति हैमः २।२०३] ॥(८) ॥*॥ पराक्रम्यतेऽनेन। 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'पराक्रमो विक्रमे स्यात्सामर्थ्योद्योगयोरपि' [इति विश्व ११४। ५५] ॥ (९) ॥*॥ प्राणित्यनेन। 'अन प्राणने' (अ० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्ग, पूरिते वाच्यलिङ्गः, पुंभूम्नि चासुषु' (इति मे०, ४६।२१) ॥ (१०) ॥*॥ दश 'सामर्थ्यस्य'।

**विक्रमस्त्वतिशक्तिता ॥ १०२ ॥**

विक्रमः (पु), अतिशक्तिता (स्त्री), 'अधिक बल' के २ नाम हैं।

वीति ॥ विक्रमणम्। घञ् (३।३।१८)। 'विक्रमस्तु पुमान् क्रान्तिमात्रे स्याच्छक्तिसंपदि' (इति मे०, ११२। ५४) ॥ (१) ॥*॥ अतिशयिता शक्तिर्यस्य, तस्य भावः। तल् (५।१।११९) ॥ (२) ॥*॥ द्वे 'अतिपराक्रमस्य'।

१. 'शौर्यं चार—' इति विश्वे पाठ.।

२. हैमे '—श्रियाम्', इत्यपि'पाठः।

**वीरपाणं तु तत्पानं वृत्ते भाविनि वा रणे।**

वीरपाणम् (न), 'लड़ाईमें जानेके समय या लड़ाईसे लौटनेपर उत्साह को बढ़ानेके लिये मदिरादि-पान करने' का १ नाम है।

वीति॥ वीराणां पानम्। 'वा भावकारणयो' (८। ४।१०) इति णत्वम् ॥ (१) ॥*॥ एकं 'युद्धारम्भेऽन्ते वा पानकर्मण'।

**युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥**
**मृधमास्कन्दनं संख्यं समीकं सांपरायिकम्।**
**अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥**
**संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः।**
**अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥**
**समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः।**

युद्धम्, आयोधनम्, जन्यम्, प्रधनम्, प्रविदारणम्, मृधम्, आस्कन्दनम्, संख्यम्, समीकम्, सांपरायिकम् (१० न), समरः, अनीकः, रणः (३ पु न), कलहः, विग्रहः, संप्रहारः, अभिसंपातः, कलिः, संस्फोटः, संयुगः, अभ्यामर्दः, समाघातः, संग्रामः, आहवः, समुदायः (१३ पु), संयत्, समितिः, आजिः, समित्, युध् (५ स्त्री), 'लड़ाई, युद्ध' के ३१ नाम हैं।

युद्धेति ॥ योधनम्। 'युध संप्रहारे' (दि० आ० अ०) भावे क्त–(३।३।११४) ल्युटौ (३।३।११५) ॥ (१) ॥*॥ (२) ॥*॥ जननम्। 'जनेर्यक्' (उ० ४।१११)। जायते वा। 'अघ्न्यादयश्च–' (३।४।६८) इति साधु। 'जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्। जन्या मातृवयस्यायां जन्य स्याज्जनके पुमान्॥ ¹नूतनोढाज्ञातिभृत्ययोः। वरस्निग्धे' [इति विश्व मे० ११४।२५-२७] ॥ (३) ॥*॥ प्रधानम्। 'डुधाञ्' (जु० उ० अ०)। 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' (उ० २.८१)। 'प्रधनं युधि दारणे' [इति हैम ३।४१५] ॥ (४) ॥*॥ 'दॄ विदारणे' (क्र्या० प० से०)। ण्यन्ताद्भावे ल्युट्। प्रविदारणमास्यात् सांपराये ऽवदारणे' [इति मे० ५३।११३] ॥ (५) ॥*॥ मर्धनम्। 'मृधु हिंसायाम्' (भ्वा० उ० से०)। बाहुलकाद्भावे घञर्थे वा क ॥ (६) ॥*॥ 'स्कन्दिर् गतिशोषणयो' (भ्वा० प० अ०)। भावे ल्युट् (३।३।

१. विश्वे '—संयुजे नरके पुन। जन्य स्याच्छपनीये च जन्या मातृसखीमुदो। जन्यो वरवधूज्ञातिप्रियभृत्यहितेषु च॥' इति (११५।१३-१४) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठ उचितः।

११५ ) । 'आस्कन्दन तिरस्कारे रणे सशोषणेऽपि च' [ इति विश्व ९७।१५५ ] ॥ ( ७ ) ॥ सख्यानम् । चक्षिङ् ख्यातेर्वा भावे क । 'सख्यमाहवे । सख्यंकादौ विचारे च' इति हैम' ( २।३९८-३९९ ) ॥ (८) ॥*॥ समनम् । 'षम वैकल्ये' ( भ्वा० प० से० ) । 'अलीका-दयश्च' ( उ० ४।२५ ) इति कीकन । सम्पराय्यनम्, वा । 'ई गत्यादौ' ( अ० प० अ० ) । बाहुलकात् क । (९) ॥ * ॥ सपरायनम् । 'अय गतौ' (भ्वा० प० से० )। 'इ गतौ' ( भ्वा० प० अ० ) वा । घञ् ( ३।३।१८ ) । स्वार्थे ञ्न् ( ज्ञापि० ५।४।५ ) ॥ * ॥ विनयादित्वात् ( ५।४।३४ ) ठक् 'साम्परायिक' अपि ॥ (१०) ॥*॥ समरणम् । 'ऋ गतौ' ( क्र्या० प० से० ) घ ( ३।३। ११८ ) ॥ 'ऋदोरप्' ( ३।३।५७ ) वा । यत्तु—ऋच्छ-त्यत्र । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'ऋदोरप्' ( ३। ३।५७ )—इति मुकुटेनोक्तम् । तन्न । ऋपन्तादपो विधा-नात् ॥ ( ११ ) ॥*॥ अननम् । 'अन गतौ' ( ) 'प्राणने'(अ० प० से०)वा । 'अनीकादयश्च'[1] इति साधु । न नयनम् । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । बाहुल कात्कन् । नञ्समास (२।२।६) 'अनीकोऽस्त्री रणे सैन्ये' [ इति मे० ४।४२ ] ॥ ( १२ ) ॥ * ॥ रणनम् । 'रण शब्दे' ( भ्वा० प० से० ) । 'वशिरण्योश्च' ( वा० ३।३। ५८ ) इत्यप् । 'रण कोणे क्वणे पुंसि समरे पुनपुंसकम्' ( इति मे० ४६।२५ ) ॥ ( १३ ) ॥ * ॥ 'कल तु मधुरध्वनौ'इति धरणि । कलस्य हननम् । 'अन्येष्वपि—' ( वा० ३।२।१०१ ) इति ड ॥ ( १४ ) विग्रहणम् । 'ग्रहवृद्—' ( ३।३।५८ ) इत्यप् । 'विग्रहो युधि विस्तारे प्रविभागशरीरयो.'[इति हैम ३।८३१]॥(१५)॥*॥ सप्र-हरणम् । 'हृञ् हरणे' ( भ्वा० उ० अ० ) । घञ् (३।३। १८ ) । 'सप्रहारो गतौ रणे' [ इति हैम ४।२९२ ] । ( १६ ) ॥ * ॥ अभिसपतनम् । 'पत्लृ गतौ' ( भ्वा० प० से० ) । घञ ( ३।३।१८ ) ॥ ( १७ ) ॥ * ॥ कलनम् । 'कल शब्दादौ' (भ्वा० आ० से०) । इन् (उ० ४।११८ ) ।—'कलेरि'—इति मुकुट । तन्न । तादृक्सू त्राभावात् । 'कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि'(इति हैम ६।४८९) ॥ (१८) ॥ * ॥ सस्फोटनम् । 'स्फुटिर् विशरणे' ( भ्वा० प० से० ) । घञ ( ३।३।१८ ) । 'सस्फेट ' इति तु स्वामी । तन्न स्फिट अनादरे' ( चु० प० से० ) ॥ ( १९ ) ॥*॥ सयोजनम् । 'युजिर् योगे' ( स्वा० उ० अ० ) । घञ् ( ३।३।१८ ) । '—रघ्युग —' ( ४।४।७६ ) इति निर्देशाद्गुणाभाव । प्रतिजना दिषु ( ४।४।९९ गणे ) 'सयुग' शब्दपाठाद्वा । (२०) ॥ * ॥ अभ्यामर्दनम् । 'मृद क्षोदे' ( क्र्या० प० से० )। घञ् ( ३।३।१८ ) । 'अभिमर्दस्तु पुंसि स्यादवमर्दे सप राये च' ( इति मे० ७७।४५ ) ॥ ( २१ ) ॥ * ॥ समाहननम् । घञ् ( ३।३।१८ ) । 'समाघातो वधे युद्धे' ( इति मे० ७१।२२७ ) ॥ (२२) ॥ * ॥ सग्रामणम् । 'सग्राम युद्धे' ( चु० उ० से० ) ण्यन्त । 'एरच्' ( ३।३। ५६ ) ॥ ( २३ ) ॥ * ॥ अभ्यागमनम् । 'ग्रहवृद-' ( ३।३।५८ ) इत्यप । 'अभ्यागम समरेऽन्तिके । घाते रोधेऽभ्युपगमे' इति हैम ( ४।२२०-२२१ ) ॥ ( २४ ) ॥ * ॥ आह्वानम् । 'ह्वेञ् स्पर्धायां शब्दे च' ( भ्वा० उ० अ० ) । 'आङि युद्धे' ( ३।२।७२ ) इत्यप् सप्रसारण च । 'आहव सगरे यज्ञे' [ इति हैम ३।७३१ ] ॥(२५) ॥*॥ समुदयनम् । 'अय गतौ' ( भ्वा० आ० से० )। घञ ( ३।३।१८ ) ॥ ( २६ ) ॥ * ॥ सयतनम् । 'यती प्रयत्ने' ( भ्वा० आ० से० ) सयमनम् । 'यम उपरमे' ( भ्वा० प० अ० ) वा । सपदादि (वा० ३।३।१०८)। 'गमादीनाम्-' (वा० ६।४।४०)इति मलोप । तुक् (६।१ ७१ ) ॥ (२७) ॥*॥ समयनम् । 'इ गतौ' (भ्वा० प० से०) क्विप् (३।३।१७४) । 'समितिर्युधि सगमे । साम्ये सभायाम्' इति हेमचन्द्र (३।३३२-३३३) ॥(२८)॥*॥ अजनम् । 'अज गतौ'[2] (भ्वा० प० से०)। 'इणजादिभ्य' (वा० ३।३।१०८) । इञ्(ण्)विधानसामर्थ्यादजेर्न वी । अन्यथा 'व्यादिभ्य ' इत्येवावक्ष्यत् । बहुल तणि' ( वा० २।४।५४ ) इति वा० 'आजि स्त्री समभूमौ सग्रामे' इति मेदिनी (३०।३) ॥ (२९) ॥*॥ समयनम् । 'इ गतौ' ( भ्वा० प० अ० ) । सपदादि (वा० ३।३।१०८)। तुक् (६।१।७१) ॥ ( ३० ) ॥*॥ मोधनम् । 'मुध सप्रहारे' (दि० आ० अ०)। सपदादि (वा० ३।३।१०८)॥ (३१) ॥*॥—एषु अनेकार्थत्वात् सर्वे धातवो युद्धार्था । सर्वत्रा धिकरणे प्रत्यय —इति मुकुट ॥*॥ एकत्रिंशत् 'प्रहरण क्रियाया' ( 'युद्धस्य' )।

**नियुद्धं बाहुयुद्धे स्यात्**

नियुद्धम्, बाहुयुद्धम् (२ न), 'कुश्ती, दगल' के २ नाम हैं।

---

१ उणादिसूत्रपाठे 'अनीकादयश्च' इति सूत्र नास्ति, सि० कौ० चास्य सिद्धि 'अनिहृपिभ्या किच्च' ( उ० ४। १७ ) इत्युणादिसूत्रेण विहिता ।

१ 'कगे गतौ' इति धातो 'अन्ये तु इ ई इति प्रश्लिष्य इयाय—' इति सि० कौ० ।

२ '—गतिक्षेपणयो ' इति सि० कौ० धातुपाठे च ।

नीति ॥ निगृह्य नितरां वा युद्धम् ॥ ( १ ) ॥*॥ बाहुयुद्धम् ॥ ( २ ) ॥ * ॥ द्वे 'बाहुयुद्धस्य ( 'कुस्ती, दङ्गल' इत्याख्यस्य )'।

तुमुलं रणसंकुले ॥ १०६॥

तुमुलम्, रणसंकुलम् ( २ न ), 'खूब जमकर लड़ाई होने या व्याकुल होने' के २ नाम हैं।

स्विति ॥ तवनम् । तौति वा । 'तु' (धातुः) सौत्रः । बाहुलकान्मुलक् । 'तुमुल रणसकुले । तुमुलो विभीतकद्रौ' [ इति हैम. ६९१ ] । 'तुमुल व्याकुले रणे' इति त्रिकाण्डशेषः[1] ॥ ( १ ) ॥*॥ रणस्य 'संकुलम्' ॥ (२) ॥ * ॥ द्वे 'रणव्याकुलतायाः' ।

क्ष्वेडा तु सिंहनादः स्यात्

क्ष्वेडा ( स्त्री ), सिंहनादः (पु), 'लड़ाईमें सिंहके समान गर्जने' के २ नाम हैं।

क्ष्वेडेति ॥ क्ष्वेदनम् । 'ञिक्ष्विदा स्नेहनमोचनयो' ( भ्वा० आ० से० ) अव्यक्ते शब्दे वा । घञ् ( ।३।३। १८) । पृषोदरादि. ( ६।३।१०९ ) । रूपभेदात्स्त्रीत्वम् । 'विशेषैर्यैवबाधितः' इति परिभाषणात्तु पुस्त्वम् । 'क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्ग प्रकीर्तितः' [इति मे०, ४०।५-६] (१) ॥*॥ सिंहवन्नदनम् । 'णद अव्यक्ते शब्दे' ( भ्वा० प० से० ) । घञ् ( ३।३।१८ ) ॥ ( २ ) ॥ * ॥ द्वे 'योधानां सिंहनादस्य' ।

करिणां घटना घटा ।

घटना ( भा० दी० ), घटा ( २ स्त्री ), 'हाथियोंके झुण्ड' के २ नाम हैं।

केति ॥ घटनम् 'घट संघाते' चुरादि. । 'ण्यासश्रन्थः—' ( ३।३।१०७ ) इति युच् ॥ ( १ ) ॥ * ॥ 'घटादयः षितः'(भ्वा० ग० सू०) इति षित्वात् अङ् (३।३।१०४)। 'घटः समाधिभेदेभशिरःकूटकुटेषु च । घटा घटनगोष्ठीभघटनासु च योषिति' [ इति मे० ३४।११-१२ ] ॥ (२) ॥ * ॥ द्वे 'हस्तिसंघस्य' ।

क्रन्दनं योधसंरावः

क्रन्दनम् ( न ), योधसंरावः ( भा० दी०, पु ),'स्पर्द्धासे प्रतिपक्षवाले योद्धाओंको ललकारने या बुलाने'के २ नाम हैं।

केति ॥ 'क्रदि आह्वाने' ( भ्वा० प० से० ) । भावे ल्युट् (३।३।११५) । 'क्रन्दनं रोदनेऽपि स्यादाह्वानेऽपि' ( )॥ ( १ ) ॥ * ॥ योधानां संरवणम्[1] । 'रु शब्दे' ( अ० प० अ० ) । 'उपसर्गे रुवः' ( ३।३। २२ ) इति घञ् ॥ ( २ ) ॥ * ॥ द्वे 'अन्योन्यस्पर्धया योधानामाह्वानस्य' ।

बृंहितं करिगर्जितम् ॥ १०७ ॥

बृंहितम्, करिगर्जितम् ( २ न ), 'हाथियोंके गर्जने' के २ नाम हैं।

व्रिति ॥ बृंहणम् । 'बृहि वृद्धौ' ( भ्वा० प० से० ) 'नपुंसके' ( ३।३।११४ ) इति क्तः ॥ ( १ ) ॥ * ॥ करिणां गर्जनम् । 'गर्ज शब्दे' ( भ्वा० प० से० ) । पूर्ववत् क्तः ( ३।३।११४ ) ॥ ( २ ) ॥ * ॥ द्वे 'हस्तिगर्जनस्य' ।

विस्फारो धनुषः स्वानः

विस्फारः ( पु ), 'धनुषके टङ्कार' का १ नाम है।

वीति ॥ विस्फरणम् । 'स्फर स्फुरणे' ( तु० प० से० ) । घञ् ( ३।३।१८ ) । विस्फुरणम् । 'स्फुर स्फुरणे' ( तु० प० से० ) वा । 'स्फुरतिस्फुलत्योर्घञि' ( ६। १।४७ ) इत्यात्वम् ॥ ( १ ) ॥ * ॥ एकं 'धनुषः शब्दस्य' ।

पटहाडम्बरौ समौ ।

पटहः, आडम्बरः ( २ पु ), 'नगाड़ा या दमदमा' के २ नाम हैं।

पेति ॥ पटं हन्ति । 'अन्येभ्योऽपि—' ( वा० ३।२। १०१ ) इति डः । 'पटहो ना समारम्भे आनके पुनपुंसकम्' [ इति मे० १७६।१९ ] ॥ ( १ ) ॥ * ॥ आडम्बयति । 'डबि क्षेपे' ( ) बाहुलकादरच् । यद्वा—डम्बनम् । भावे घञ् ( ३।३।१८ ) । डम्बं राति, रायति वा । 'आतोऽनुप—' ( ३।२।३ ) इति क. । 'आडम्बरः समारम्भे गजगर्जिततूर्ययो' [इति विश्व. १४४।२३८] ॥ (२) ॥*॥ द्वे 'युद्धपटहस्य' 'दमदमा' (इति नगाडा) । ख्यातस्य ।

प्रसभं तु बलात्कारो हठः

प्रसभम् (न), बलात्कारः, हठः (२ पु), 'जबर्दस्ती करने' के ३ नाम हैं।

प्रेति ॥ प्रगता सभा विचारोऽस्मात् । सभायाः प्रगतो वा । 'क्लीबे तु प्रसभं हठः' इति बोपालितः ॥ ( १ ) ॥ * ॥—'बलात्' इति निपातो 'हठार्थः'—इति स्वामी ।

१. त्रिकाण्डशेषे वचनमिदं न लभ्यते, किन्तु 'तुमुलो व्याकुलो रवः' इति वचनं हलायुधे (११३९) लभ्यते।

१. 'संरवणम्' इति विग्रह उचितः, प्रकृतविग्रहो 'रु' धातोर्न संभवति,—'संराव'इति रूपातिपत्तिश्चेति बोध्यम् ।

हिंसायाम्' ( क्र्या० प० से० ) ॥ (१९) ॥ * ॥ 'हन हिंसायाम्' (अ० प० अ०) ॥ (२०) ॥ * ॥ स्वार्थण्यन्तौ। 'मथे हिंसायाम्' (भ्वा० प० से०) ॥ (२२) ॥ * ॥ 'कथ हिंसायाम्' (भ्वा० प० से०) ॥ (२३) ॥ ॥ * ॥ 'जसु हिंसायाम्' (दि० प० से०) स्वार्थण्यन्त ॥ (२४) ॥ * ॥ एभ्यो भावे ल्युट (३।३।११५) ॥*॥ आलम्भनम्। 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०)। घञ् (३।३।१८) 'रभेश्च' (७।१।६४) 'उपसर्गात्खल्घञो' (७।१।६७) इति नुम् ॥(२५) ॥*॥ पिञ्जनम्। 'पिजि हिंसायाम्' चुरादि। अच् (३।३।५६)॥(२६)॥*॥ विशरणम् शॄ हिंसायाम्'(क्र्या० प० से०)। 'ऋदोरप्'(३।३।५७)॥( २७ ) ॥*॥ हननम्। 'हन हिंसायाम्'(अ० प० अ०)। घञ्(३।३।१८)। 'हनस्तोऽचिण्णलो'(७।३।३२) 'हो हन्तेर्ञ्णिन्नेषु' (७।३।५४) ॥ (२८) ॥ * ॥ उन्मथनम्। 'मथे हिंसायाम्' (भ्वा० प० से०)। घञ् (३।३।१८) ॥ * ॥—मन्थतेर्घञ्—इति मुकुट। तन्मते 'उन्मन्थ' इति पाठ ॥ (२९) ॥ * ॥ हननम्। हनो वध च' ( ३।३।७६ ) इत्यप् ॥ (३०) ॥ * ॥ त्रिंशत् 'मारणस्य'।

स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥११६॥

पञ्चता ( स्त्री ), कालधर्म, दिष्टान्त, प्रलय, अत्यय, अन्त, नाश (६ पु), मृत्यु (पु स्त्री), मरणम् (न), निधन (पु न), 'मृत्यु' के १० नाम हैं।

स्यादिति ॥ पञ्चानां भाव । तल् (५।१।११९) ॥ 'पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति' (इति मे० ६६।१२९) ॥ ( १ ) ॥ * ॥ कालस्य धर्म ॥ (२) दिष्टस्य दैवस्यान्त ॥(३)॥*॥ प्रलयनम्। लीङ् श्लेषणे' (दि० आ० अ०)। 'एरच्' (३।३।५६) ॥ (४) अत्ययनम्। 'इण् गतौ' (अ० प० अ०)। 'इ गतौ' (भ्वा० प० अ०)। 'एरच्' (३।३।५६)। 'अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयो' [इति मेदिनी ११७।६७] ॥ (५) ॥ * ॥ अन्तनम्। 'अति बन्धने' (भ्वा० प० से०)। घञ् (३।३।१८)। अन्त स्वरूपे निकटे प्रान्ते निश्चयनाशयो। अवयवेऽपि' [इति हैम २।१५९] ॥ (६) ॥*॥ 'णश अदर्शने' ( दि० प० से० )। घञ् (३।३।१८) ॥ 'नाश पलायने मृत्यौ परिध्वस्तावदर्शने' इति हेमचन्द्र [२।५६२] ॥ (७) ॥ * ॥ मरणम्। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'भुजिमृङ्भ्या युक्त्युकौ' (उ० ३।२१) इति त्युक्। 'मृत्युर्ना मरणे यमे' इति मेदिनी [११६।४६] ॥ (८) ॥ * ॥ 'ल्युट च' (३।३।११५) ॥ (९) ॥ * ॥ निधानम्। 'कृपृवृजिमन्दिनिधाञ् क्यु' (उ० २।८१)। 'निधन स्यात् कुले नाशे' (इति मेदिनी ८८।८३)॥ (१०) ॥ * ॥ दश 'मरणस्य'।

परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः।
मृतप्रमीतौ त्रिष्वेते

परासु, प्राप्तपञ्चत्व, परेत, प्रेत, संस्थित, मृत, प्रमीत (७ त्रि), 'मरे हुए' के ७ नाम हैं।

पेति ॥ परागता असवोऽस्मात् ॥ (१) ॥ * ॥ प्राप्त पञ्चत्व येन ॥ (२) ॥ * ॥ पर लोकमित। परा दूरमितो वा। 'परेतो वाच्यलिङ्ग स्या मृते भूतान्तरे' पुमान् (इति मेदिनी ६३।१२७) ॥ (३) ॥*॥ प्रकर्षेण इत। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गक' [इति मेदिनी ५६।३७] ॥ ( ४ ) ॥ * ॥ सतिष्ठते स्म। 'गत्यर्था–' (३।४।७२) इति इति क्त ॥ (५) ॥ * ॥ म्रियते स्म। 'मृङ प्राणत्यागे'(तु० आ० अ०)। गत्यर्था–' (३।४।७२)। 'मृत मृत्यौ याचिते च' [ इति हैम २। १९२] ॥ (६) ॥ * ॥ प्रमीयते स्म। 'मीङ् हिंसायाम्' (क्र्या० आ० अ०)। 'गत्यर्था–' (३।४।७२) इति क्त। 'प्रमीत वाच्यलिङ्ग स्यात्प्रोषितेऽपि मृतेऽपि च' [ इति मेदिनी ६३।१२६ ]। (७) त्रिषु परास्वादय ॥ * ॥ सप्त 'मृतस्य'।

चिता चित्या चितिः स्त्रियाम् ॥ ११७ ॥

चिता, चित्या, चिति ( ३ स्त्री ), 'चिता' के ३ नाम हैं।

चीति ॥ चीयते स्म। क्त ( ३।२।१०२ ) 'चित छन्ने त्रिषु चिता चित्यायां सङ्गतौ स्त्रियाम्' [इति मेदिनी ५५।१८] ॥ (१) ॥ * ॥ 'चित्याग्निचित्ये च' (३।१।१३२) इति क्यप। चित्य मृतकचैत्ये स्याच्चित्या मृत चितौ स्त्रियाम्' [इति मेदिनी ११४।२२] ॥ (२) ॥*॥ क्तिन् ( ३।३।९४ )। चितिश्चित्यावृन्दयो स्त्री' [इति मेदिनी ५५।१८] ॥ (३) ॥*॥ अधिकरणे वा प्रत्यय ॥ * ॥ त्रीणि 'चित्या'।

कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्[१]।

कबन्ध (पु न),'धड़, बिना शिरके शरीर'का १ नाम है।

केति ॥ क बध्यते छिद्यतेऽस्मात्। बन्ध बन्धने ( क्र्या० प० अ० ) घञ ( ३।३।११९ )। केन वायुना

१ मेदिन्या प्रायश आनुपूर्व्येणैव श्लोकार्धं लभ्यते, तद्यथा—'कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्धकलेवरे' इति (८१।३०)।

बध्यते वा । 'कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः' [इति हैमः ३।३७२]॥(१)॥*॥ एकं 'छिन्नशिरसो देहस्य'।

**श्मशानं स्यात्पितृवनम्**

श्मशानम्, पितृवनम् (२ न), 'श्मशान' के २ नाम हैं।

श्मेति ॥ शवाः शेरतेऽत्र । पृषोदरादि॰ (६।३।१०९) द्वितालव्यम् ॥ (१) ॥ * ॥ पितॄणा वनम् । पितॄन् वनति वा । 'वन संभक्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'वनं नपुंसकम् नीरे निवासालयकानने' [इति मेदिनी ८४।१९] (२) ॥ * ॥ द्वे 'प्रेतभूमेः'।

कुणपः शवमस्त्रियाम् ॥ ११८ ॥

कुणपः (पु), शवः (पु न), 'मुर्दे' के २ नाम हैं।

क्विति ॥ क्वणति । 'क्वण शब्दे' (भ्वा० प० से०)। 'क्वणेः संप्रसारणं च' ( उ० ३।१४३ ) इति कपन्। (कुणपो पुन. । विट्सारिकाया कुणप पूतिगन्धे[1] शवेऽपि च' [इति विश्व-मेदिन्यौ १०५।२०; १०३।१९-२०] ॥ (१) ॥ * ॥ शवति । 'शव गतौ' (भ्वा० प० से०)। अच् (३।१।१३४) । ('शव स्यात्कुणपे पुमान् । नपुंसकं तु पानीये' [इति मेदिनी १५९।२४-२५] (२) ॥ * ॥ द्वे 'मृतशरीरस्य'।

**प्रग्रहोपग्रहौ वन्द्यां**

प्रग्रहः, उपग्रहः (२ पु), वन्दी (स्त्री), महे॰ मतसे 'कैदी, बँधुआ, गिरफ्तार'के और भा० दी० मतसे 'बन्दीगृह (कोत, हवालात), के ३ नाम हैं।

प्रेति ॥ गृह्यते । 'ग्रह उपादाने' (क्र्या० उ० से०) । 'ग्रहवृदृ-' ( ३।३।५८ ) इत्यप् । 'प्रग्रहस्तु तुलासूत्रे वन्द्या नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्णहरिपादपे[2]'। [ इति मेदिनी १७६।१९, विश्वश्च १८०।१२ ] ॥ (१) ॥ * ॥ 'उपग्रह पुमान् वन्द्यामुपयोगेऽनुकूलने' [ इति मेदिनी १७७।२९] ॥ ( २ ) ॥ * ॥ वन्द्यते, वन्दते, वा । 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०) । इन् (उ० ४।११८) ङीष् ( ग० ४।१।४५ ) ॥ (३) ॥*॥ त्रीणि 'बन्दिशालायाः'।

कारा स्याद्बन्धनालये ।

कारा (स्त्री), बन्धनालयम् (भा० दी०, न), 'जेल'के २ नाम हैं।

केति ॥ कीर्यतेऽत्र । 'कॄ विक्षेपे' (तु० प० से०) । भिदादिपाठात् ( ३।३।१०४ ) अङ्दीर्घौ । 'कारो वधे निश्चये च बलौ यत्ने यतावपि । कारस्तुषारशैले च कारा दूत्यां प्रसेवके । बन्धने बन्धनागारे हेमकारिकयोरपि' [इति विश्वः १२४।१४-१५](१) ॥*॥ बन्धनस्यालय ॥ (२) ॥*॥ द्वे 'बन्धनगृहस्य'। [ 'जेल' इत्याख्यस्य ]।

**पुंसि भूम्न्यसवः प्राणाश्चैवम्**

असवः, प्राणाः 'प्राण' के २ नाम हैं।

पुमिति ॥ अस्यन्ते, अस्यन्ति वा । 'असु क्षेपणे' (दि० प० से०) । अस्यत एभिः इति वा । 'अस दीप्तौ' (भ्वा० उ० से०) । 'शॄस्वृस्निहि-' (उ० १।१०) इत्यु । बाहुलकात्—इति मुकुटस्तूपेक्ष्य ॥ (१) ॥ * ॥ प्राणन्त्येभिः । 'अन प्राणने' (अ० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले । पुल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु' [इति मेदिनी ४३।२२] । एवं पुंसि भूम्नि च ॥ ( २ ) ॥ * ॥ द्वे 'पञ्चवायूनाम्' 'असूनाम्'।

जीवोऽसुधारणम् ॥ ११९ ॥

जीवः ( पु ), असुधारणम् (भा० दी०, न), 'जीने, प्राण को धारण करने'के २ नाम हैं।

जीति ॥ जीवनम् 'जीव प्राणधारणे' ( भ्वा० प० से०)। घञ् (३।३।१८)। 'जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ । जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु । न स्त्रीतु जीविते' (इति मेदिनी १५८।८-९) ॥ (१) ॥*॥ असूनां धारणम् ॥ (२) ॥ * ॥ द्वे 'जीवनस्य'।

**आयुर्जीवितकालः**

आयुः, जीवितकालः ( भा० दी०, पु० ), 'उम्र, आयु' के २ नाम हैं।

आयुरिति ॥ एति । 'इण् गतौ' (अ० प० अ०) । 'एतेर्णिच्च' (उ० २।११८ ) इत्युसि. ॥ (१) ॥ * ॥ जीवितस्य कालः ॥ (२) ॥ * ॥ द्वे 'जीवावच्छिन्नकालस्य'।

ना जीवातुर्जीवनौषधम् ।

जीवातुः ( पु न ), जीवनौषधम् ( न ), 'जिलानेवाली दवा' के २ नाम हैं।

नेति ॥ जीवत्यनेन । 'जीव प्राणधारणे' (भ्वा० प० से०) । 'जीवेरातु.' ( उ० १।७८ ) । 'जीवातुरस्त्रिया भक्ते जीविते[1] जीवनौषधे' ( इति मेदिनी ६२।११२) ॥

१. '—पूतिगन्धौ—'इति पाठ उक्तग्रन्थद्वयेऽपि ।

२. विश्वे 'क' पुस्तके मेदिन्यां च 'प्रग्राह'''हलिपादपे' इति पाठः । किन्तु विश्वे 'खपुस्तके' 'प्रग्रह —'इति ह्रस्वमध्य एव पाठः । हैमेऽपि ह्रस्वमध्य 'प्रग्रह' शब्दस्यैवैतेऽर्था उक्ताः ।

१. एतल्लक्ष्यं यथा—'रे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम्' इत्युत्तररामच० (२।१०) ।

चत्वारि ऋण दत्वा तद्वृद्ध्या जीविन' ( 'सूदखोर महाजन' इत्यस्य ) ।

क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः ।

क्षेत्राजीव, कर्षक, कृषिक, कृषीवल ( ४ त्रि ),'किसान गृहस्थ' के ४ नाम हैं।

क्षेत्रेति ॥ क्षेत्रमाजीवोऽस्य ॥ (१) ॥ * ॥ कर्षति 'कृष विलेखने' (भ्वा० प० अ०)। ण्वुल् (३।१।१३३) ॥ (२) ॥ * ॥ कर्षति । कृषेर्वृद्धिश्चोदीषाम्' (उ० २।३८) इति क्वुन् ॥*॥ वृद्धिपक्षे 'कार्षक' अपि ॥ (३) ॥*॥ कर्षणम् । 'इक्कृष्यादिभ्य' (वा० ३।३।१०८) । कृषिरस्यास्ति । 'रज कृषि-' ( ५।२।११२ ) इति वलच् । 'वले' (६।३।११८) इति दीर्घ ॥ (४) ॥ * ॥ चत्वारि 'कृषीवलस्य' ('किसान' इत्यस्य) ।

क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्योद्भवोचितम् ॥ ६ ॥

व्रैहेयम, शालेयम, (२ त्रि), 'व्रीहि, शालि ( एक प्रकार का उत्तम धान ), के पैदा होने योग्य खेतों' का क्रमशः १-१ नाम है।

व्रीमिति ॥ व्रीहीणाम् (१) शालीनाम् (१) च भवनं क्षेत्रम् । 'व्रीहिशाल्योर्ढक्' ( ५।२।२ ) ॥ * ॥ 'धान्यसामान्यस्य' 'कलमादेश्चोत्पत्तियोग्यक्षेत्रस्य' एकैकम् ।

यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत् ।

यव्यम, यवक्यम, षष्टिक्यम ( ३ त्रि ) 'टूंड वाला जौ, बिना टूंड वाला जौ और साठी ( साठ दिन में तैयार होने वाला ) के' पैदा होने योग्य खेत का १-१ नाम है।

येति ॥ यवानाम् (१) यवकानाम् (१) षष्टिकानाम् (१) च भवनं क्षेत्रम् । 'यवयवकषष्टिकाद्यत्' (५।२।३) ॥ * ॥ यवक शूकशून्यो यव. ॥ * ॥ एकैकम् 'यवादिभवनस्य' ।

तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता ॥ ७ ॥

तिल्यम, तैलीनम ( २ त्रि ),'तिल पैदा होने योग्य खेत के २ नाम हैं।

माष्यम, माषीणम, उम्यम, औमीनम, अणव्यम, अणवीनम, भङ्ग्यम, भङ्गीनम ( ८ त्रि ), 'उड़द' तीसी' (अलसी), 'चीना और सनई पैदा होने योग्य खेत' के क्रमश २-२ नाम हैं।

तीति ॥ तिलानाम् (१) माषाणाम् (१) उमानाम् (१) अणूनाम् (१) भङ्गानाम् (१) च भवन क्षेत्रम् 'विभाषा तिल-' (५।२।४) इति यत्खञौ (१) ॥ (२) ॥ * ॥ माष्यम् ॥ (१) ॥ * ॥ माषीणम् ॥ (२) ॥ * ॥ उम्यम् ॥ (१) औमीनम् ॥ (२) ॥ * ॥ अणव्यम् ॥ (१) ॥ * ॥ आणवीनम् ॥ (२) भङ्ग्यम् ॥ (१) ॥ भाङ्गीनम् (२) । * ॥ (क्रमेण) 'तिलादिभवनस्य' प्रत्येकं द्वयं द्वयम् ।

मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।

मौद्गीनम, कौद्रवीणम ( २ त्रि ), आदि 'मूंग और कोदो आदि ( गेंहू, मटर, कुल्थी, चीना और चना ) पैदा होने योग्य खेत' का क्रमशः १-१ नाम है।

मौद्गीति ॥ मुद्गानाम् ( १ ) कोद्रवाणाम् (१) च भवन क्षेत्रम् । 'धान्यानां भवने' (५।२।१) इति खञ् ॥ * ॥ आदिना गौधूमीनम् ॥ (१) ॥ * ॥ कालायीनम् ॥ ( १ ) ॥ * ॥ कौलत्थीनम् ॥ ( १ ) ॥ * ॥ प्रैयङ्गवीणम् ॥ (१) ॥ * ॥ चाणकीनम् ॥ (१) ॥*॥ इत्यादि ज्ञेयम् । ( मुद्गादि ) ( एकैकम् ) 'धान्योद्भवक्षेत्रस्य' ।

बीजाकृतं तूप्तकृष्टम्

बीजाकृतम, उप्तकृष्टम ( २ त्रि ),'बीज बोनेके बाद जोते हुए खेत' के २ नाम हैं।

बीति ॥ बीजेन सहकृतं कृष्टम् । 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' (५।४।५८) इति डाच् ।—अबीज सबीज सम्पन्नम्=बीजाकृतम्—इति स्वामी । तन्न । 'अभूततद्भावे' इत्यस्यानुवृत्ते ॥ (१) ॥ * ॥ (पूर्वम्) उप्तं च तत् ( पश्चात् ) कृष्टं च । 'पूर्वकाल-' ( २।१।४९ ) इति समास. ॥ (२) ॥ * ॥ द्वे बीजवापोत्तरं कृष्टस्य' ।

सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥

सीत्यम, कृष्टम, हल्यम (३ त्रि), 'जोते हुए खेत' के ३ नाम हैं।

सीति ॥ सीतया समितम् । 'नौवयोधर्म-'(४।४।९१) इति यत् ॥ (१) ॥*॥ कृष्यते स्म । क्त (३।२।१०२) । (२) ॥ * ॥ हलेन कृष्टम् । 'मतजनहलात्करणजल्पकर्षेषु' (४।४।९७) इति यत् ॥ (३) ॥ * ॥ हल्येन तुल्यम् । तेन तुल्यम् (५।१।११५) इति वति ॥ * ॥ त्रीणि 'कृष्टमात्रस्य' ।

त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।

त्रिगुणाकृतम, तृतीयाकृतम, त्रिहल्यम, त्रिसीत्यम (४ त्रि), 'तीन बार जोते हुए खेत' के ४ नाम हैं।

त्रिति ॥ त्रिगुण कृतम् । 'सङ्ख्यायाश्च गुणान्तायाः' (५।४।५९) इति डाच् ॥ (१) ॥ * ॥ तृतीय कृतम् । 'कृञो द्वितीय-' (५।४।५८) इति डाच् ॥ (२) ॥ * ॥

त्रिवारं हलेन कृष्टम् । 'मनजन–' (४।४।९७) इति यत् । 'रयसीताहलेभ्यो यद्विधौ' (वा० ११।७२) इति तदन्तविधे ॥ (३) ॥ * ॥ त्रिवारं सीतया समितम् । यत् (४) ॥ * ॥ चत्वारि 'वारत्रयकृष्टस्य' ।

द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥

द्विगुणाकृतम्, द्वितीयाकृतम्, द्विहल्यम्, द्विसीत्यम्, शम्बाकृतम् (५ त्रि), 'दो बार जोते हुए खेत' के ५ नाम हैं।

द्वीति ॥ द्वितीयाकृतम् ॥ ( २ ) ॥ * ॥ द्विहल्यम् ॥ * ॥ ( ३ ) ॥ ॥ द्विसीत्यम् ॥ ( ४ ) ॥ * ॥ समस्यास्ति । 'कर्मण्याम्–' ( ५।२।१३८ ) इति वा । 'शम्ब' शब्दो द्वितीयकर्षणे वर्तते । शम्ब कृतम् । 'कृञो द्वितीय–' (५।४।५८) इति डाच् ॥ * ॥ 'सरित्सरिभसम्बाकृतम्' इति दन्त्यादौ वर्णदेशना । तत्र 'षम्ब सम्बन्धे' (चु० प० से०) ण्यन्तः । सम्बगते । घञ् (३।३।१९) । अच् (३।३।५६) वा ॥ (५) ॥ * ॥ पञ्च 'द्विवारकृष्टस्य' ।

द्रौणाढकादिवापादौ द्रौणिकाढकिकादयः ।

द्रौणिकः, आढकिकः, (२ त्रि), आदि (प्रास्थिकः, कौडविकः २ त्रि ), 'एक द्रोण और एक आढक आदि (एक प्रस्थ ( सेर ) एक कुडव ( छटाक ) आदि ) बोने आदिके योग्य खेत आदि' का क्रमशः १-१ नाम है।

द्रोणेति ॥ द्रोणस्य वाप । 'तस्य वाप' (५।१।४५) इति ठञ् ॥ (१) ॥ * ॥ आढकस्य वाप (५।१।४५) ॥ (१) ॥ * ॥ आदिना—प्रस्थस्य वाप =प्रास्थिक ॥ (१) ॥ * ॥ कुडवस्य वापः = कौडविक ॥ (१) ॥ 'वापादौ' इत्यादिना पचाद्यर्थग्रह । द्रोणम्, आढकं च पचति (इत्यादि) । 'सम्भवत्यवहरति पचति' (५।१।५२) इति ठक् ॥ * ॥ 'द्रौणादिपरिमितव्रीह्यादिवापयोग्यक्षेत्रस्य' एकैकम् ।

खारीवापस्तु खारीकः

खारीक (त्रि),'एक खारी बोने-योग्य खेत'का १ नाम है।

खेति ॥ खार्या वाप । 'खार्या ईकन्' (५।१।३३) ॥ (१) ॥ * ॥ एकं खारीवापस्य' ।

उत्तमर्णादयस्त्रिषु ॥ १० ॥

'उत्तमर्ण'(श्लो० ५)शब्दसे यहांतक सब शब्द त्रिलिङ्ग हैं।

उत्तेति ॥ उत्तमर्णम् (श्लो० २।९।५) आरभ्य खारीकान्ता वाच्यलिङ्गा ) ।

पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्

वप्रः (पु न), केदारः (पु), क्षेत्रम् (न), 'खेत, क्यारी' के ३ नाम हैं।

पुमिति ॥ उप्यतेऽत्र । 'डुवप् बीजसन्ताने' (भ्वा० उ० अ०) । 'वृद्धिवपिभ्यां रन्' (उ० २।२७) 'वप्रस्तु पुमानस्त्री रेणौ क्षेत्रे चये तटे' इति विश्व [१] (मे० १२८।८२) । 'वप्र प्राकाररोधसो । क्षेत्रे ताते चये रेणौ' इति हैमः [४६४-४६५] ॥ (१) ॥*॥ के जले दिरति वा दारोऽस्य । 'हलदन्तात्–' (६।३।९) इत्यलुक् । केन जलेन दीर्यत इति वा । 'दॄ विदारणे' ( क्र्या० प० से० ) । कर्मणि घञ् (३।३।१९) । 'केदाराद्यञ्च' (४।२।४०) इति निर्देशादेवम् । 'केदारोऽद्रौ' शिवे क्षेत्रे भूमिभेदालवालयो.' इति विश्व [२] (मे० १३३।१४३) ॥ (२) ॥*॥ क्षीयते धान्यैरत्र । 'क्षि निवासगत्यो ' (तु० प० अ०) । ष्ट्रन् (उ० ४।१५९) । 'क्षेत्रं भारतादौ भगाङ्गयो । केदारे सिद्धभूपत्न्यो ' [इति हैम २।४४८] । 'क्षेत्र शरीरे केदारे सिद्धस्थानकलत्रयो ' [ इति विश्व १२८।४४ ] ॥ (३) ॥*त्रीणि 'क्षेत्रस्य' ।

अन्य तु ।

कैदारकं स्यात्कैदार्यं क्षैत्रं कैदारिकं गणे ॥११॥

कैदारकम्, कैदार्यम्, क्षैत्रम्, कैदारिकम् (४ न), 'खेतोंके समूह' के ४ नाम हैं।

अस्येति ॥ केदाराणा समूहः । 'केदाराद्यञ्च' (४।२।४०)॥ (२) ॥*॥ वात् (४।२।४०) वुञ् ॥ (१) ॥*॥ क्षेत्राणां समूहः । 'भिक्षादिभ्यः–' (४।२।३८) इत्यण् ।— 'तस्य समूहः ( ४।२।३७ ) इत्यण् । इति मुकुटः । तन्न । 'अचित्त–' (४।२।४७) इति ठक्स्तदपवादत्वात् ॥ (३) ॥*॥ 'ठञ् कवचिनश्च' (४।२।४१) चात् केदारादपि ॥ (४) ॥*॥ चत्वारि 'क्षेत्रगणस्य' ।

लोष्टानि लेष्टवः पुंसि

लोष्टम् (न पु), लेष्टु. (पु), 'ढेला' के २ नाम हैं।

लवितेि । लोष्टति ।'लोष्ट सघाते' (भ्वा०आ० से०) पचाद्यच् ( ३।१।१३४ ) पुल्लिङ्गोऽप्ययम् । 'लेष्टु खण्डे-(ठे)ऽपि लोष्ट स्यात्' इति बोपालित ॥ (१) ॥*॥ लिश्यते, लिशति, वा । 'लिश गतौ' ( तु० प० से० ) । बाहुलकात्तुन् ।—'क्रत्वादयश्च'—इति मुकुटस्त्वपाणिनीय ॥ (२) ॥*॥ द्वे 'मृत्तिकाखण्डस्य' ('ढेला' इत्याख्यस्य) ।

---

१. विश्वे तु 'वितृकेदार्योर्वप्रो वप्र प्राकाररोधसो.' इति (१३०।६५) पाठ ।

२. विश्व (१३८।१६८) हैम (३।५७२) योरनुरोधादत्रापि मेदिनीस्थ 'केदारोऽद्रौ—'इत्येव पाठो युक्त ।

३. विश्वे 'केदारः पर्वते शम्भौ क्षेत्र—' इति (१३८।१६८) इति पाठः ।

कोटिशो लोष्टभेदनः ।

कोटिश, लोष्टभेदन. (२ पु),'ढेलोंको फोड़नेवाली मुंगरी के या हेंगा' अर्थात् 'काष्ठ या दो बासोंसे बनाये गये पटेला' के २ नाम है।

कश्यति ॥ कोटिना अग्रेण श्यति । 'शो तनूकरणे' (दि० प० अ०) । 'सुपि–' (३।२।४) इति क । कोटि रस्यास्तीति वा । लोमादित्वात् (५।२।१००) शः ॥ (१) ॥*॥ लोष्टानां भेदनः ॥ (२) ॥*॥ द्वे 'लोष्टभेदन-काष्ठस्य 'हेंगा' इति ख्यातस्य ।

प्राजन तोदन तोत्रम्

प्राजनम्, तोदनम्, तोत्रम् (३ न), 'चाबुक पना' के ३ नाम हैं।

प्रेति ॥ प्रवीयतेऽनेन । 'अज गतिक्षेपणयो' (भ्वा० प० से०) ल्युट् (३।३।११५) । 'वा यौ' (२।४।५७) इति वी न ॥ (१) ॥*॥ तुद्यतेऽनेन । तुद व्यथने' (तु० उ० अ०) । ल्युट् (३।२।११५) (२) ॥*॥ 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् । 'तोत्र तु प्राजने वेणुकेऽपि' च' [इति विश्व १२८।४५, मे० १२६।४६ ] । (३) ॥*॥ त्रीणि 'वृषभादिप्रेरणदण्डस्य' ।

खनित्रमवदारणम् ॥ २॥

खनित्रम्, अवदारणम् (२ न), 'खन्ता' अर्थात् 'कुदाल, फरसा, रामा, गैंता आदि जमीन खोदनेवाले हथियार' के २ नाम हैं।

खेति ॥ खन्यतेऽवदार्यतेऽनेन । 'खन खनने' (भ्वा० उ० से० ) । 'अर्तिलूधू–' (३।२।१८४) इतीत्र ॥ (१) ॥*॥ अवदार्यतेऽनेन । 'दॄ विदारणे' (क्र्या० प० से०) । ण्यन्तः । ल्युट (३।३।११५) ॥ (२) ॥*॥ द्वे 'कुद्दालादे' ।

दात्रं लवित्रम्

दात्रम्, लवित्रम् (२ न), 'हँसुआ' के २ नाम है।

देति ॥ दात्यनेन । 'दाप् लवने' (अ० प० अ०) । 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् ॥ (१) ॥*॥ लूयतेऽनेन । 'लूञ्' (क्र्या० उ० से०) । 'अर्ति–' (३।२।१८४) इतीत्र ॥ (२) ॥*॥ द्वे 'लवित्रस्य' ( 'हसुआ' इत्यस्य ) ।

आबन्धो योत्रं योक्त्रम्

आबन्ध (पु), योत्रम्, योक्त्रम् (२ न), 'जोती, जोता' अर्थात् 'जुआमें बाधी जानेवाली रस्सी' के ३ नाम हैं।

आबेति ॥ आबध्यतेऽनेन । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ यूयतेऽनेन । 'यु मिश्रणे' (अ० प० से०)। 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् ॥ (२) ॥*॥ युज्यतेऽनेन। 'युजिर् योगे' (रु० उ० अ०) ष्ट्रन् (३।२।१८२) ॥ (३) ॥*॥ त्रीणि वृषादेर्गले युगबन्धस्य' ('जोती' इत्याख्यस्य )

अथो फलम् ।

निरीशं कुटकं फालः कृषिकः

फलम्, निरीशम्, कुटकम् (३ न), फाल, कृषक (२ पु), 'फार के ५ नाम हैं।

अथेति ॥ फलति । 'ञिफला विशरणे' (भ्वा० प० से०) । अच् (३।१।१३४) । 'फलं हेतुफले जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले दास्त्राग्रे व्युष्टिलाभयोः । फली फलिन्याम्' [ इति हैम २।५१०-५११ ] । स्वामी तु—'हलम्' इति पठित्वा 'फलप्रकरणमारब्धम्'—इति व्याख्यत् ॥ (१) ॥*॥ ईशाया निर्गतम् । 'निरादय–' (वा० २।२।१८) इति समासः । स्वामी तु—निष्क्रान्ता ईषाऽस्मात्' इति विगृह्य 'निरीषम्'—इति मूर्धन्यान्तपपाठ ॥ (२) ॥*॥ कुटति । 'कुट कौटिल्ये' (तु० प० से०) । क्वुन् (उ० २।३२) ॥*॥ मुकुटस्तु—कूटयति छिनत्ति । 'कूट छेदने' (चु० उ० से०) । इगुपधत्वात् (३।१।१३५) क । कूटम् । ततः स्वार्थे कन् (ज्ञापि० ५।४।५)—इति वदन् ( कूटकम् ) दीर्घादि मन्यते । अत्र पचाद्यच् (३।१।१३४) उचितः । न तु क । ण्यन्तस्येगुपधत्वाभावात् ॥ (३) ॥*॥ फालयति । 'ञिफला विशरणे' (भ्वा० प० से०) । ण्यन्तादच् (३।१।१३४) । 'फाल उत्प्लुतौ' 'क्लीबं सीरोपकरणे पुंसि शंकरसीरिणोः'[1] ( ) ॥ (४) ॥*॥ कृषति । 'कृष विलेखने' (तु० उ० अ०) । 'कृषिवृषिभ्यां [िक]कन्' (उ० २।४०) । 'कृषिकाकृषिको फालकृषकौ' इति रुद्रात् स्त्रियामपि ॥*॥ क्वुनि (उ० २।३२) तु कृषकः । स्वामी[2] तु—'शिल्पिनि ष्वुन्' (३।१।१४५)–

१ '—वल्लवेऽपि च' इति विश्वे पाठ ।

१ हैमे फाल तु वसने, फाल उत्प्लुतो कुश (शि) केऽपि च' इति (२।५११–५१२) पाठ । विश्वे तु 'फाल शिरोपकरणे कार्पासादिकवाससि' इति (१५०।२०) पाठान्मूलपाठस्य मूलं मृग्यम् ।

२ स्वामी तु 'कृषति क्ष्मां' कृषक । 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि, (उ० सू० २।३२) इत्युक्तत्वाग्रे 'कृषिक फल च' इत्येवाह ।

इत्याह। तन्न। फलस्य शिल्पित्वाभावात्। पश्विगण-नाच्च। 'कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्' [ इति विश्व. मे०, ७।७५ ]॥ ( ५ )॥ * ॥ पञ्चापि 'फालस्य'—इति कलिङ्ग.-द्वय यत्र काष्ठे फालो निबध्यते तस्य। अन्त्यद्वयं तु फालस्य-इति स्वामी।

लाङ्गलं हलम् ॥ १३ ॥

गोदारणं च सीरः

लाङ्गलम्, हलम्, गोदारणम् (३ न), सीरः (पु), 'हल' के ४ नाम हैं।

लेति ॥ लङ्गति। 'लगि गतौ' ( भ्वा० प० से० )। बाहुलकात्कलच्। दीर्घश्च।—'कलम्वा ( भ्वना )दयश्च' —इति मुकुटस्त्वपाणिनीयः। 'लाङ्गली तोयपिप्पल्या क्लीबं तु कुसुमान्तरे। गोदारणे तृणराजगृहदारुविशेषयो' [ इति लान्तेपु[1] मे० १५४।१२८ ]॥ ( १ )॥ * ॥ हलति। 'हल विलेखने' ( भ्वा० प० से० )। अच् (३।१।१३४)॥ * ॥ 'ज्वलिति-' ( ३।१।१४० ) इति णे 'हाल' अपि। 'हाल फालवह सीता' इति विक्रमादित्य ॥ ( २ )॥ * ॥ गां भूमिं दारयति। ल्युट् (३। ३।११३ )।—गौर्भूमिर्दार्यतेऽनेन। करणे ल्युट् ( ३।३। ११७ )। नन्द्यादि ( ३।१।१३४ )ल्युर्वा-मुकुट। तन्न। ल्योः कर्तरि विधानात्करणेऽसंभवात् ॥ ( ३ )॥ * ॥ सिनोति, सीयते वा। 'षिञ् बन्धने' ( स्वा० उ० अ० )। 'सुसिमिथीना दीर्घश्च' ( उ० २।२५ ) इति क्रन् दीर्घत्वं च। 'हलतिग्मकरौ सीरौ' इति दन्त्यादौ रभस। 'सीर स्यादंशुमालिनि। लाङ्गले' [इति हैम २।४८०-४८१ ]॥ ( ४ )॥ * ॥ चत्वारि 'हलस्य'।

अथ शम्या स्त्री युगकीलकः।

शम्या (स्त्री), युगकीलकः (पु), 'सइला, जुआठकी कील' के २ नाम हैं।

शमेति ॥ शम्यतेऽनया। 'शम उपशमे' ( दि० प० से० ) अघ्न्यादि ( उ० ४।११२ )॥ ( १ )॥ * ॥ युगस्य कीलः। स्वार्थे कन् ( आपि० ५।४।५ )॥ (२) ॥ * ॥ द्वे 'युगस्य कीलके'।

ईशा लाङ्गलदण्डः स्यात्

ईषा (स्त्री), लाङ्गलदण्डः ( मा० दी०, पु ), 'हरिस' के २ नाम हैं।

[1]. मेदिन्या '—लाङ्गली नारिकेलद्रौ रेवतीरमणे पुमान्' इति (९८।१०४) भिन्नपाठात् प्रकृतपाठस्य मूलं मृग्यम्।

ईशेति ॥ ईष्टे। 'ईश ऐश्वर्ये' ( अ० आ० से० )। 'इगुपध-' ( ३।१।१३५ ) इति क। 'प्रभुशंकरयोरीशः स्त्रिया लाङ्गलदण्डके' इति तालव्यान्ते रुद्र-रभसौ। 'ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके' (इति शान्ते हैमः २।५५६, विश्व[1] १६८।९ )॥ * ॥ ईषते। 'ईष गत्यादौ' ( भ्वा० आ० से० )। 'इगुपध-' ( ३।१।१३५) उभयत्र करणे 'गुरोश्च-' ( ३।३।१०३ ) इत्यो वा। 'ईषा पेटी मञ्जूषा' इति मूर्धन्यान्ते चन्द्रगोमी ॥ ( १ ) ॥ * ॥ लाङ्गलस्य दण्ड ॥ ( २ )॥ * ॥ द्वे 'हलयुगयोर्मध्यकाष्ठस्य' ( 'हरिस' इत्याख्यस्य )।

सीता लाङ्गलपद्धतिः ॥ १४ ॥

सीता, लाङ्गलपद्धतिः ( २ स्त्री ), 'हराई' अर्थात् 'हलके चलानेसे पड़ी हुई लकीर' के २ नाम हैं।

सीति ॥ सीयते। 'षिञ् बन्धने' ।(स्वा० उ० अ०)। क्त ( ३।२।१०२ )। पृषोदरादि ( ६।३।१०९ )।— स्यन्ति भुवम्। 'षोऽन्तकर्मणि' ( दि० प० अ० ) ( बाहुलकात् ) क्त। 'द्युवास्था-' ( ६।४।६६ ) इतीत्वम्-इति मुकुट। तन्न। 'द्यतिस्यतिमास्था-' ( ७।४।४० ) इति विशेषविहितेत्वेन बाधात्। 'सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी' इति दन्त्यादौ रभसः। 'सीता जनकजागङ्गाभेदयोर्हलपद्धतौ' [ इति दन्त्यादौ हैमः २। २११ ]॥ * ॥ शेते स्म। 'शीङ् स्वप्ने' ( अ० आ० से०)। 'गत्यर्था-' ( ३।४।७२ ) इति क्त.। 'शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च। शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्ट' इति तालव्यादौ धरणि.॥ ( १ ) ॥ * ॥ लाङ्गलस्य पद्धति ( २ ) ॥ * ॥ द्वे 'लाङ्गलकृतरेखायाः'।

पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने।

मेधिः (पु), खलेदारु (पु न) 'मेंह' अर्थात् 'दँवनी करनेके समय बैलोंके रस्सी बांधे जानेवाले बड़े खूंटे' के १ नाम है।

म्धिति ॥ मेध्यन्ते पशवोऽत्र। 'मेधृ संगमे' (भ्वा० उ० से०) इन् (उ० ४।११८)। स्वामी तु—'मेथि' इति पठति। तत्र 'मेथृ संगमे' इति धातुर्बोध्य ॥ (१) ॥*॥ एकम् 'धान्यखले पशुबन्धनस्तम्भस्य'('मेह' इत्याख्यस्य )।

आशुर्व्रीहिः पाटलः स्यात्

आशुः, व्रीहिः, पाटलः ( ३ पु ), 'साठी' अर्थात् 'साठ दिनमें तैयार होनेवाले धान' के ३ नाम हैं।

[1]. विश्वे तु '—ईश. प्रभौ शङ्करे—' इति पाठः।

आश्विति ॥ अश्नुते 'अशू व्याप्तौ' ( स्वा० आ० से० )। 'कृवापा—' ( उ० १।१ ) इत्युण्। '[1]आशुस्तु व्रीहिशीघ्रयो' [ इति हैमचन्द्र २।५५६ ]। 'तृणबीज तु श्यामाको, व्रीहिराशु च पाटल' इति ( पर्याये ) क्लीब माशु। 'आशु स्याद्व्रीहिशीघ्रयो' इति रत्नमालायामपि क्लीबम् ॥ ( १ ) ॥ * ॥ वर्हत्युपचय गच्छति। 'वृह वृद्धौ' ( भ्वा० प० से० )। 'इगुपध न् कित्' ( उ० ४। १२० ) इति इन्। पृषोदरादि ( ६।३।१०९ )। व्रीयते। 'व्रीङ् गत्याम्' ( दि० आ० अ० )। बाहुलकाद् हिक् वा ॥ ( २ ) ॥ * ॥ पाट लाति। क ( ३।२।३ )। पाटलो वर्णोऽस्यास्ति, इति वा ॥ ( ३ ) ॥*॥ पाटल, व्रीहि, आशु च इति नामत्रयम्। आशुनामा व्रीहि पाटल उच्यते इति नामद्वयम्-इति सुभूति। 'आशुव्रीहौ पाटलो ना श्वेतरक्तेऽत्रलिङ्गवान्' इति रुद्र ॥*॥ त्रीणि 'पष्टिकादे'।

सितशूकयवौ समौ ॥ १५ ॥

सितशूक, यव (२ पु), 'जौ' के २ नाम हैं।

सीति ॥ सित शूक यस्य, इति मध्यतालव्य ॥*॥— (सितशूर) द्वितालव्य —इति स्वामी ॥ (१) ॥*॥ यौति। यूयते वा। अच् ( ३।१।१३४ )। अप् ( ३।३। ५७ ) वा। 'यवो धान्येऽपृथक्कृते'[2] [ इति हैम ४४। ५४७ ] ॥ ( २ ) ॥ * ॥ द्वे 'यवानाम्'।

तोक्मस्तु तत्र हरिते

तोक्म (पु), 'हरे जौ' का १ नाम है।

तकेति ॥ तकति, तक्यते वा। 'तक सहने हासे च' (भ्वा० प० से०)। बाहुलकात्मन्, ओत्वम् च। ['तोक्म कर्णमले, पुंसि हरिते च हरिद्रवे'[3] इति मे० १०९।१४]॥ ( १ ) ॥ * ॥ एकम् 'अपक्वयवस्य'।

कलायस्तु सतीनकः।

हरेणुखण्डिकौ चास्मिन्

कलाय, सतीनक, हरेणु, खण्डिक (४ पु), 'मटर, कविली' के ४ नाम हैं।

केति ॥ कलमयते। 'अय गतौ' (भ्वा० आ० से०)। अण् ( ३।२।१ )।—क यात लाति। आत—' ( ३।२। ३ ) इति क.। 'आतो युक्—' ( ७।३।३३ ) इति युक्—इति मुकुट। तन्न। ञिति णिति परे विहितस्य युक के अप्रसङ्गात् ॥ ( १ ) ॥ * ॥ सति जीवे इन प्रभु। 'सज्ञायाम्'(२।१।४४) इति समास। 'हलदन्तात् ( ६।३।९ ) इत्यलुक्। सतीन वायु करोति। अन्येभ्योऽपि—' ( वा० ३।२।१०१ ) इति ड।—प्रज्ञादिभ्य (५। ४।३८ ) 'सातीनक' अपि—इति माधवी ॥ (२) ॥*॥ हरति। 'हृञ् हरणे' (भ्वा० उ० अ०)। 'कृहृभ्यामेणु' ( उ० २।१ )। 'हरेणु स्त्री रेणुकाया स तु पुंसि सतीनके' इति रभसात्पुसि ॥ ( ३ ) ॥*॥ खण्डोऽस्यास्ति। 'अत इनिठनौ' (५।२।११५) इति ठन् ॥ ( ४ ) ॥*॥ 'कलायस्त्रिपुट प्रोक्त सतीनो वर्तुलो मत। हरेणुरखण्डो ज्ञेय' इति व्याडि ॥*॥ चत्वारि 'रेणुकस्य' ( 'मटर' इति ख्यातस्य )

कोरदूषस्तु कोद्रवः ॥ १६ ॥

कोरदूष, कोद्रव (२ पु), 'कोदो' के २ नाम हैं।

कोरेति ॥ कोर रुधिर दूषयति। 'दुष वैकृत्ये' (दि० प० अ०)। ण्यन्त। 'कर्मण्यण्' ( ३।२।१ ) ॥ (१) ॥*॥ कोति। 'कु शब्दे' (अ० प० अ०)। कवते। 'कुङ् शब्दे' (भ्वा० आ० अ०)। विच् (३।२।७५)। द्रवति। 'द्रु गतौ' ( भ्वा० प० अ० )। अच् ( ३।१।१३४ )। कोश्चासौ द्रवश्च। केन वायुना द्रवति वा। पृषोदरादि ( ६।३।१०९ ) ॥ (२) ॥ * ॥ द्वे 'कोद्रवस्य' 'कोदो' इति ख्यातस्य।

मङ्गल्यको मसूरः

मङ्गल्यक, मसूर (२ पु), 'मसूर' के २ नाम हैं।

मेति ॥ मङ्गले साधु। 'तत्र साधु' (४।४।९८) इति यत्। स्वार्थे कन् ( ज्ञापि० ५।४।५)॥(१) ॥*॥ मस्यति मस्यते वा। 'मसी परिणामे' ( दि० प० से० )। 'मसे रन्' (उ० ५।३) इत्यूरनि दीर्घमध्य।—'खर्जिपिञ्जादिभ्य ऊरोलचौ' (उ० ४।९०) इत्यूर —इति मुकुटस्त्वेतत्सूत्राज्ञानमूलक। मसेश्च' (उ० १।४३) इत्युरनि ह्रस्व मध्यश्च। वेश्याया व्रीहिभेदे च मसूरा मसुरा स्त्रियाम्। मसूरमसुरौ पुंसि द्वावेतावपि चैतयो' इति रभस (२) ॥*॥ द्वे 'मसूरस्य'।

अथ मकुष्ठकमयुष्ठकौ।

वनमुद्गे

मकुष्ठक, मयुष्ठक, वनमुद्ग (३ पु), 'वनमूग या मोठ नामक अन्न विशेष' के ३ नाम हैं।

मकेति ॥ मङ्कति मङ्क्यते वा। 'मकि मण्डने' (भ्वा० आ० से० )। बाहुलकादु, नुमभावश्च। तिष्ठति। 'ष्ठा

१ हैमे 'क' पुस्तके तु 'आशु तु' इति क्लीब एव पाठ।

२ हैम पुस्तकत्रये '—धान्ये पृथक्कृते' इति पाठ।

३. मेदिनीस्य '—हरिद्वे' इति पाठ एव सम्यग्भाति।

गतिनिवृत्तौ' (भ्वा० प० अ०)। वुन् ( उ० २।३२ )। मकुष्ठश्चासौ स्थकश्च। 'पूर्वपदात्' (८।३।१०६) इति षत्वम्। मुकुष्ठस्तु—आद्यचमुकारमाह॥*॥ विश्व[४२।१६]मेदिन्यो-[३६।१५]स्तु 'मकुष्ठो व्रीहिभेदे स्यात् ( मकुष्ठो मन्थरेऽप्यवत् ) इति टवर्गद्वितीयान्त ॥ (१) ॥*॥ मिनोति। 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ० )। 'भृमृशीङ्–' ( उ० १।७ ) इत्यु.। मयश्चासौ स्थकश्च। मुकुटस्तु—मयनि। 'मय गतौ' (भ्वा० आ० से० )। 'पुमि–' (३।३।११८) इति घ। मयो गन्ता। तस्य स्तक प्रतिबन्धक। 'ष्टक प्रतिघाते' ( भ्वा० प० से० )। पचाद्यच् (३।१।१३४)। मयस्य स्तको मयष्ठक। नैरुक्तो वर्णविकार—इत्याह। तन्न, 'मयते' इत्युदितत्वात्। घ (३।३।११८) अप्ययुक्त। तस्य कर्तर्यविधानात्॥ (२) ॥*॥ वनस्य मुद्ग ॥ (३) ॥*॥ त्रीणि 'वनमुद्गस्य', 'मोठ' इति ख्यातस्य।

सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ ९७ ॥

सर्षप, तन्तुभः, कदम्बक (३ पु), 'सरसों के ३ नाम हैं।

सेति॥ सरति स्नेहोऽस्मात्। 'सृ गतौ' ( भ्वा० प० अ० )। 'सर्तेरप पुक्च' ( उ० ३।१४१ ) इत्यप पुगागमश्च। 'सर्षप स्यात् सरिषप कटुस्नेहश्च तन्तुभ.' [इति त्रिकाण्डशेषः २।९।३] ॥ (१) ॥*॥ तन्तुना भाति। 'भा दीप्तौ' ( अ० प० से० )। 'सुपि–' (३।२।४) इति कः॥*॥ स्वामी तु—तुदति। तुन्तुभ—इत्याह। बाहुलकादुमच्। पृषोदरादि ( ६।३।१०९ )॥ (२) ॥*॥ कन्दति, कन्दयति वा। 'कदि ह्वानेऽयाम्' 'कदि आह्वाने रोदने च' (भ्वा० प० अ०)। 'कृकदिकडिकटिभ्योऽम्बच्'। ( उ० ४।८२ )। अनित्यत्वान्न नुम्। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (३) ॥*॥ त्रीणि 'सर्षपस्य'।

सिद्धार्थस्त्वेष धवलः

सिद्धार्थः (पु), 'सफेद सरसों' का १ नाम है।

सीति॥ सिद्धोऽर्थोऽस्मात्। 'सरिषप सिते तस्मिन् रक्षोघ्नो भूतनाशनः' इति रभस। 'सिद्धार्थस्तु पुमान् द्धावर्यसिद्धे च सितसर्षपे' इति विश्व (मेदिनी ७३।२५)॥ (१) ॥*॥ एक 'श्वेतसर्षपस्य'।

गोधूमः सुमनः समौ।

गोधूमः, सुमनः (२ पु), 'गेहूं' के २ नाम हैं।

गवेति॥ गुध्यति, गुध्यते, वा। 'गुध परिवेष्टने' (दि० प० से०)। 'गुधेरूम.' ( उ० ५।२ )। 'गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयो' ( इति मेदिनी १११।४३) ॥ (१) ॥*॥ सुष्ठु मन्यते। 'मन ज्ञाने' (दि० आ० अ०)। अच् ( ३।१।१३४ )। 'गोधूमसुमनौ समौ' इति रभस.॥ (१) ॥*॥ द्वे 'गोधूमस्य'।

स्याद्यावकस्तु कुल्माषः

यावकः, कुल्माष (२ पु), 'अधसूखे जौ'के और रक्षितके मतसे 'बिना टूंडवाले जौ' के २ नाम हैं।

स्येनि॥ यौति। 'यु मिश्रणे' (अ० प० से०)। 'कुत्रादिभ्यो वुन्' (उ० ५।३५)। तत प्रज्ञाद्यण् (५।४।३८) ॥ (१) ॥*॥ कुल मस्यति। 'मसी परिणामे' (दि० प० से०) 'कर्मण्यण्' ( ३।२।१ ) पृषोदरादि. (६।३।१०९)।—दन्त्यान्त —(कुल्माम ) इति मुकुट॥*॥ कुत्सितो माष। 'कुल्माषो यावक पुंसि' इति मूर्धन्यान्तेषु रभस॥ (२) ॥*॥—कुल्माषोऽर्धस्विन्नो यवादि—इति स्वामी।—शूकशून्यो यवादि—इति रक्षितादय॥*॥ द्वे 'अर्धस्विन्नस्य यवादे'।

चणको हरिमन्थकः ॥१८॥

चणक, हरिमन्थकः (२ पु), 'चना' के २ नाम हैं।

चेति॥ चण्यते। 'चण दाने' ( भ्वा० प० से० )। वुन् (उ० २।३२) ॥ (१) ॥*॥—हरीणा मन्थं जनयति। 'अन्येष्वपि–' ( ३।२।१०१ ) इति ड—इति मुकुट। तन्न। 'हरिमन्थज' इति पाठप्रसङ्गात्। हरिभिर्मथ्यते। 'मथे विलोडने' (भ्वा० प० से०) कर्मणि घञ् (३।३।१९)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे 'चणकस्य'।

द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले।

तिलपेजः, तिलपिञ्जः (२ पु), 'बिना तेलवाली तिल' के २ नाम हैं।

द्वाविति॥ निष्फलस्तिल। 'तिलान्निष्फलात्पिञ्जपेजौ' (वा० ४।२।३६) ॥ (१) ॥*॥ (२) ॥*॥ 'जतिल' अपि। 'जतिल कथ्यते सद्भिररण्यप्रभवस्तिल' ॥*॥ द्वे 'तैलहीनतिलस्य'।

क्षवः क्षुधाभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥

क्षवः, क्षुधाभिजननः (२ पु) राजिका, कृष्णिका, आसुरी (३ स्त्री), 'राई, काला सरसो' के ५ नाम हैं।

क्षेति॥ क्षौति। 'टुक्षु शब्दे' ( अ० प० से० )। व्यर्थः। अच् (३।१।१३४)। ( क्षव क्षुते राजिकायाम्' इति मेदिनी १५७।४) ॥ (१) ॥*॥ क्षुधामभिजनयति। नन्द्यादि. (३।१।१३४)॥ ॥—क्षुतमभिजनयति। 'क्षुताभिजनन'—इति स्वामी ॥ (२) ॥*॥ राजति, राजयति, वा। क्वुन् (उ० २।३२) ॥ (३) ॥*॥ कृष्णैव। 'संज्ञायां कन्' (५।३।७५) ( ४ ) ॥*॥ असुरस्येयम्। अण् ( ४।३।१२१ )। अस्यति वा। 'असेरुरन्' (उ० १।४२)। प्रज्ञाद्यण् (५।४।३८) ॥ (५) ॥*॥ पञ्च 'कृष्णसर्षपस्य' 'राई' इति ख्यातस्य।

स्त्रियौ कङ्गुप्रियङ्गू द्वे

कङ्गु, प्रियङ्गु (२ स्त्री), 'ककुनी' अर्थात् 'टांगुन' के २ नाम हैं।

स्त्रीति ॥ कमङ्गति। 'अगि गतौ' (भ्वा० प० से०)। णयन्तो वा। मृगय्वादित्वात् (उ० १।३७) कु। शकन्ध्वादि (वा० ६।१।९४)। कं सुखं गच्छति। 'गम्लृ गतौ' (भ्वा० प० अ०)। मितद्र्वादित्वात् (वा० ३।२।१८०) डु ॥ (१) ॥ * ॥ एवं प्रियं गच्छति ॥ (२) ॥ * ॥ द्वे 'प्रियङ्गो'।

अतसी स्यादुमा क्षुमा।

अतसी, उमा, क्षुमा (३ स्त्री), 'तीसी, अलसी' के ३ नाम हैं।

अतेति ॥ अतति। 'अत सातत्यगमने' (भ्वा० प० से०) 'अत्यविचमि–' (उ० ३।११७)। गौरादि (४।१।४१) ॥ (१) ॥ * ॥ ॐ शिवं माति, मिमीते वा। 'मा' (अ० प० अ०) 'माङ् माने' (जु० आ० अ०)। 'आतोऽनुप–' (३।२।३) इति क। अवत, ऊयते, वा। 'उङ् शब्दे' (भ्वा० आ० अ०)। 'विभाषा तिलमाषोमा–' (५।२।४) इति निपातनात्मक् इति वा। 'उमाऽतसी हैमवतीहरिद्राकीर्तिकान्तिषु' (इति मेदिनी, विश्वश्च १०२।३४, १०८।२) ॥ (२) ॥ * ॥ क्षौति, क्षूयते वा 'टुक्षु शब्दे' (अ० प० अ०)। बाहुलकान् मक्। अर्तिस्तुसुहुसृ–' (उ० १।१४०) इति मन् वा। संज्ञापूर्वकत्वान्न गुण।-क्षुवते—इति मुकुटस्य प्रमाद। क्षौतेरादा दिकत्वात्। 'क्षुमाऽतसीनीलिक्यो' [इति विश्व ११२।२३, मेदिनी १०८।८ च] ॥ (३) ॥*॥ त्रीणि अतस्या।

मातुलानी तु भङ्गायाम्

मातुलानी, भङ्गा (२ स्त्री), 'भाग' के २ नाम हैं।

मेति ॥ मायास्तुला। मातुलामानयति। 'अन प्राणने' (अ० प० से०) गतौ वा। 'कर्मण्यण्' (३।२।१)। ङीप् (४।१।१४)। मातुलस्य धत्तूरस्य स्त्री वा। 'मातुलोपाध्याययोर्वानुकौ' (वा० ४।१।४९) ॥ (१) ॥ * ॥ भज्यते, अनया वा। 'भञ्जो आमर्दने' (रु० प० से०) अकर्तरि च (३।३।१९) इति, हलश्च' (३।३।१२१) इति वा घञ्। 'तरङ्गभेदयोर्भङ्गो भङ्गा शस्यशणाह्वये' इति रुद्र ॥ (२) ॥*॥ द्वे 'शणाख्यशस्यभेदस्य'।

१. 'इन्द्रवरुण—' इति सूत्रभाष्ये तु 'उपाध्यायमातुलाभ्यां वा' इति, सि० कौ च तत्रैव मातुलोपाध्याययोरानुग्वा' इति वार्तिकस्वरूपम्।

व्रीहिभेदस्त्वणुः पुमान् ॥२०॥

अणु (पु), 'चीना' का १ नाम है।

व्रीति ॥ व्रीहिविशेष। अणति। 'अण शब्दे' (भ्वा० प० से०)। 'अणश्च' 'धान्ये नित्' (उ० १।८-९) इत्यु। 'अणुर्व्रीह्यल्पयो' इति हैम [२।१३४] ॥ (१) ॥ * ॥ एकम् 'चीना' इति ख्यातस्य।

किंशारु शस्यशूकं स्यात्

किंशारु (पु), सस्यशूकम् (न पु) 'टूड' के २ नाम हैं।

किमिति ॥ किंचित् कुत्सितं वा शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'किञ्जरयो श्रिण' (उ० १।४) इत्युण्। 'अथ किंशारुर्धान्यशूके शरेऽपि च' [इति हैम ३।५७३] ॥ (१) ॥ * ॥ शस्यस्य शूकम्।—शस्यस्य शूक—इति मुकुट ॥ (२) ॥ * ॥ द्वे 'यवाद्यग्रस्य'।

कणिशं शस्यमञ्जरी।

कणिशम् (पु), सस्यमञ्जरी (स्त्री) 'धान आदिके बाल' के २ नाम हैं।

केति ॥ कणय कणा सन्त्यस्य। लोमादित्वात् (५।२।१००) श। कणिन स्वावयव श्यति वा। 'शो तनूकरणे' (दि० प० अ०)। 'आतोऽनुप–' (३।२।३) इति क। 'कणिशो धान्यशीर्षके' इति तालभ्यान्ते रत्नकोष ॥ (१) शस्यस्य मञ्जरी ॥ (२) ॥ * ॥ द्वे 'धान्यमञ्जर्या'।

धान्यं व्रीहिः स्तम्बकरिः

धान्यम् (न), व्रीहि, स्तम्बकरि (२ पु), 'धान्यमात्र' के ३ नाम हैं।

धेति ॥ धाने पोषणे साधु। तत्र साधु' (४।४।९८) इति यत्। 'धान्य तु व्रीहौ धान्याके' [इति हैम २।३७२] (१) ॥ * ॥ व्रीणाति। 'व्री वरणे' (क्र्या० प० अ०) 'व्रीहिशाल्योर्ढक्' (५।२।२) इति ज्ञापनाद् हिक्। 'व्रीहि सामान्यधान्ये स्यादाशुधान्ये च पुरयम्' [इति 'विश्व। मेदिनी १७५।९] ॥ (२) ॥ * ॥ स्तम्ब करोति। 'स्तम्बशकृतोरिन्' (३।२।२४)। व्रीहिसाहचर्यात् पुंस्त्वम् ॥ (३) ॥ * ॥ त्रीणि 'धान्यसामान्यस्य'[२]।

१ विश्वे पुस्तकद्वयेऽपि नेदमुद्धरण लभ्यते ॥

२ वाचस्पत्ये धान्यस्य लक्षण तद्भेदाश्चोक्तास्तथा हि—"सस्य क्षेत्रगत प्रोक्त सतुष धान्यमुच्यते।' इति स्मृति। धान्यवर्ग सगुणोऽभिहितो भावप्रकाशे, यथा—शालिधान्य व्रीहिधान्य शूकधान्य तृतीयकम्। शिम्बीधान्य क्षुद्रधान्यमित्युक्त धान्यपञ्चकम् ॥ शालयो रक्तशा-

स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥

स्तम्बः, गुच्छः (२ पु), 'तृण यवादिके गुच्छे' के २ नाम हैं।

स्तेति ॥ तिष्ठति, अत्र वा। 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०) 'स्य' स्तोऽम्बजवकौ' ( उ० ४।९६ ) (१) ॥ * ॥ गवनम्। 'गुद् शब्दे' (भ्वा० आ० अ०)। संपदादिविवप् (वा० ३।३।१०८)। तुक् (६।१।७१)। गुतं छ्यति। 'छो छेदने (दि० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। (२) ॥ * ॥ आदिना व्रीहियवादिग्रहः ॥ * ॥ द्वे 'यवादीना मूलस्य'।

नाडी नालं च काण्डोऽस्य

नाडी (स्त्री), नालम् (न), 'यवादिके डण्ठल' के २ नाम हैं।

नेति ॥ नलत्यनेन। 'णल गन्धे' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। नालयति। अच् (३।१।१३४) वा। डलयोरेकत्वम्। गौरादि (४।१।४१)। 'नाडी कुहनचर्याया घटिकागण्डदूर्वयो। नाले 'गुणान्तरे स्नायौ' [इति हैम २।१२३ ]॥ (१) ॥ * ॥ 'नालं काण्डे मृणाले च नाली [१]शाकवल्मके' [ इति च हैमः २।५०६ ] ॥ ( २ ) ॥*॥ कणति। 'कण शब्दे' ( भ्वा० प० से० )। 'अमन्ताड्.' ( उ० १।११४ )। बाहुलकाद्दीर्घ.। काण्यते वा। 'काण्डो नालेऽधमे वर्गे

स्याद्वा व्रीहय षष्टिकादय। यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम्। कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यं च तत्स्मृतम्।''..... ''। इति (पृ० ३८७७)। 'विभाषातिलोमा–' इति सूत्रे भाष्ये 'अथ वा शणसप्तदश धान्यानि' इत्युक्तम्। सप्तदशधान्यानां नामानि हेमाद्रौ दानखण्डे उक्तानि यथा—''तथा धान्यमानम्। मार्कण्डेयपुराणे–'जज्ञिरे तानि बीजानि ग्राम्यारण्याभिधानि च। ओषध्य फलपाकान्ता शतं सप्तदश स्मृता ॥ व्रीहयश्च यवाश्चैव गोधूमाः कंगुकास्तिला.। प्रियङ्गवः कोविदारा कोरदूषाः सचीनकाः ॥ माषा मुद्गा मसूराश्च निष्पावा सकुलीत्थका। आढक्यः शणकाश्चैव शण. सप्तदश स्मृता ॥ इत्येता ओषधीनां तु ग्राम्याणां जातय. स्मृता। ओषध्यो यज्ञिया ज्ञेया ग्राम्यारण्याश्चतुर्दश ॥ व्रीहयश्च यवाश्चैव गोधूमा कंगुसर्षपाः। माषा मुद्गा सप्तमाश्च अष्टमाश्च कुलीत्थकाः ॥ श्यामाकाश्चैव नीवारा जर्तिला सगवेधुका। कोविदारसमायुक्तास्तथा वेणुयवाश्च ये ॥ ग्राम्यारण्या. स्मृता ह्येता ओषध्यश्च चतुर्दश।'' इति चतुर्वर्गचिन्तामणि (पृ० १२१)।

१. '—व्रणान्तरे—' इति पाठः क्वाचित्कः।

२. हैमे 'क' पुस्तके '—कदम्बयो' इति पाठः।

इक्वन्धेऽवसरे शरे। सह श्लाघाम्बुषु स्तम्बे' [ इति हैम. २।११२-११३ ] ॥ ( ३ ) ॥ * ॥ अस्य = गुच्छस्य ॥ * ॥ त्रीणि 'तृणादिकाण्डस्य'।

पलालोऽस्त्री स निष्फलः।

पलालः (पु न), 'पुआल' का १ नाम है।

पेति ॥ पलति, पल्यते वा। 'पल गतौ' ( भ्वा० प० से०)। 'तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्य कालन्' ( उ० १।११८ )—बाहुलकात्–इति मुकुटस्य प्रमादः। पलमलति वा। 'अल भूषणादौ' ( भ्वा० प० से० )। अण् ( ३।२।१ ) ॥ ( १ ) ॥ * ॥ स = काण्ड ॥*॥ एकं 'धान्यरहितकाण्डस्य' ( 'पुआल' इत्यस्य )।

कडङ्गरो बुसं क्लीबे

कडङ्गरः (पु), बुसम् (न), 'पुआले आदिके भूसे' के २ नाम है।

केति ॥ गृणाति। 'गॄ शब्दे' ( क्र्या० प० से० )। गिरति। 'गॄ निगरणे' (तु० प० से०) वा। अच् (३।१।१३४) कडस्य गर। 'कडंगर–' ( ५।१।६९ ) इति निर्देशान्मुक्। यद्वा—कडति। 'कड मदे' (भ्वा० प० से०) क्विप् (३।२।१७८) कड् च तदङ्गं च। कडङ्गं राति। 'रा दाने' ( अ० प० अ० )। क ( ३।२।३ ) ॥ 'कडङ्कर' इति हरदत्तपाठे कृञ धातु ॥ ( १ ) ॥ * ॥ बुसति। 'बुस उत्सर्गे'। ( तु० प० से० )। 'इगुपध–' ( ३।१।१३५ ) इति क (बुसं दन्त्यमिति धातुप्रदीप ) ॥ * ॥ 'बुषवेषलुषप्लोष' इति पवेदान्मूर्धन्यान्तमपि ॥ ( २ ) ॥ * ॥ द्वे 'पलालादिक्षोदस्य' ( 'भूसा, 'पवटा' इत्यस्य ) ॥

धान्यत्वचि पुमांस्तुषः ॥२२॥

धान्यत्वक् (स्त्री), तुषः (पु), 'धानके भूसे' के २ नाम हैं।

धेति ॥ धान्यस्य त्वक् ॥ ( १ ) ॥ * ॥ तुष्यति। 'तुष तुष्टौ' ( दि० प० अ० )। 'इगुपध–' (३।१।१३५) इति क। 'तुषस्तु धान्यत्वचि विभीतके' [ इति हैमचन्द्र' २।५७५ ] ॥ ( २ ) ॥ * ॥ द्वे 'तुषस्य'।

शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे

शूकः (पु न), 'धान्य या तृण आदिके चिकने और नुकीले टूंड आदि' का १ नाम है।

श्वेति ॥ श्यति। 'शो तनूकरणे' (दि० प० अ०)। 'उलूकादयश्च' इति साधु। ( उ० ४।४१ )। 'शूकोऽनुक्रोशशुङ्गयो[१]' [ इति विश्व ५।३६ ] ॥ ( १ ) ॥*॥

१ '—शृङ्गयो' इति विश्वपाठो मेदिनी–(४।३८) विरोधाच्च समीचीनः।

कटः किलिञ्जकौ ॥ २६ ॥

कट, किलिञ्जक (२ पु) 'बाँसकी बनी हुई झोंपी आदि' के २ नाम हैं।

केति ॥ कटति । 'कटे वर्षावृत्योः' (भ्वा० प० से०) । अच् (३।१।१३४) 'कट श्रोणौ द्वयोः पुंसि किलिञ्जेऽ तिशये शवे। समये गजगण्डेऽपि किण्वल्या तु कटी मता ॥' (इति मेदिनी ३३।३-४) ॥ (१) ॥ * ॥ क्लिश्यतेऽनेन । 'क्लिश शवेंऽत्यनोऽहनयो' (तु० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन । केत्रचौरण दि । किलेर्जानि । जने 'पञ्चम्यामजातौ' ( ३।२।९८ ) इति ड । पृषोदरादि (६।३।१०९) ।—तत्पुरुषे कृति–' (६।३।१४) (द्विती यायाः ) अलुक् – इति मुकुट । तन्न । कृद्योगे षष्ठ्या विधानात् ॥ (२) ॥*॥ द्वे बंशादिविकारस्य' ।

समानौ

सेति ॥ समानौ' इति पूर्वेषु विशेष्यनिघ्नेति ।

रसवत्यां तु पाकस्थानमहानसे ।

रसवती (स्त्री), पाकस्थानम, महानसम् (२ न), 'रसोइया घर, पाकशाला' के ३ नाम हैं।

रेति ॥ रसा सन्त्यस्याम् । मतुप् ( ५।२।९५ ) ॥ ( १ ) ॥ * ॥ पाकस्य स्थानम् ॥ ( २ ) ॥ * ॥ महच्च–(अनसोपकरण लक्ष्यते ।) 'अनोश्माय —' (५।४ ९४ ) इत्यादिना टच ।—महदनोऽस्य—इति स्वामी । तन्न । 'अनोश्माय –' ( ५।४।९४ ) इति तत्पुरुषसमासा न्तोपन्यासविरोधात् ॥ ( ३ ) ॥ * ॥ त्रीणि 'पाकस्थानस्य' ।

पौरोगवस्तदध्यक्ष

पौरोगव (त्रि), 'पाकशालाके मालिक' का १ नाम है।

पेति ॥ पुर पूजिता गौर्भूमि । पुरोगवी । गोरत-द्धित–' ( ५।४।९२ ) इति टच । तस्या अयम् । तस्यदम्' ( ४।३।१२१ ) इत्यण । यद्वा पुर प्रथम वाक्यवस्तुषु गौर्नेत्रमस्य । पुरोग । 'गोस्त्रियो –' ( १।२।४८ ) । तत प्रज्ञाद्यण ( ५।४।३८ ) ॥ ( १ ) ॥ * ॥ तस्याध्यक्ष । ( २ ) ॥ * ॥ द्वे 'महानसाधिकृतस्य' ।

सूपकारास्तु वल्लवाः ॥ २७ ॥

आरालिका आन्धसिका सूदा औदनिका गुणाः ।

सूपकार, वल्लव (२ त्रि), क्षी० स्वा० के मतसे 'व्यञ्जन' (तरकारी, कढ़ी आदि) बनानेवाले रसोइयादार'के २नाम हैं।

आरालिक, आन्धसिक, सूद, औदनिक, गुण (५ त्रि), क्षी० स्वा० के मतसे 'रसोइयादार, पाचक' के ५ नाम हैं।

सिवति ॥ शोभना' आपोऽस्मिन् । 'ऋक्पूर–' (५।४। ७४) इत्य.। कुसुयुम्यश्च' इत्यपोऽत उत् । सवति रस सू। 'षु प्रसवादौ' ( स्वा० प० से० ) । सुसूभ्या तिच्च' ( उ० ३।२६ ) इति पो दीर्घश्च '—'युसुसूना किच्च'– इत्यपाणिनीयम् । सूप करोति । 'कर्मण्यण्' ( ३।२।१ )॥ ( १ ) ॥ * ॥ वल्लनम् । 'वल सवरणे' ( भ्वा० आ० से० ) । 'वल्ल' सौत्रो वा प्रीतौ । भावे घञ ( ३।३। १८ ) । वल्लोऽस्यास्ति । 'अन्येभ्योऽपि–' ( वा० ५।२। १०९ ) इति व । वल्ल वाति । 'आतोऽनुप–' ( ३।२। ३ ) इति क । 'वल्लव सूपकारे स्याद्भीमसेने च गोदुहि' [ इति विश्व १२,४।३१ ]॥ ( २ ) ॥ * ॥ अराल कुटिल चरन्ति । 'चरति[२]' (४।४।८) इति ठक् ॥ (३) ॥ * ॥ अन्धो भक्त शिल्प येषाम् । शिल्पम्' ( ४।४। ५५ ) इति ठक् ॥ ( ४ ) ॥ * ॥ सूदति क्षारयतीन् । षूद हिंसायाम्' ( चु० उ० से० ) । पच् (३।१।१३४)। क (३।१।१३५) वा । 'सूदस्तु कथित सूपकारे च व्यञ्जनान्तरे' [ इति विश्व मेदिन्यौ ७८।७, ७५। १६ ] ॥ ( ५ ) ॥*॥ ओदन शिल्प येषाम् । 'शिल्पम्' ( ४।४।५५ ) इति ठक् ॥ ( ६ ) । * ॥ गुणयते । 'गुण निमन्त्रणे' ( चु० उ० से० ) अदन्त । अच ( ३। १।१३४ ) । 'गुणो मौर्व्यादिसंख्यादिसत्त्वाद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्धया च' [ इति मे० ४५।१० ११ ] ॥ ( ७ ) ॥ सप्त पाचकानाम्' ।—आद्यद्वय व्यञ्जनकारस्य—इति स्वामी ।

आपूपिक कान्दविको भक्ष्यकार

आपूपिक, कान्दविक, भक्ष्यकार (३ त्रि), 'पुआ, पुड़ी, कचौड़ी आदि बनानेवाले, हलवाई' के ३ नाम हैं।

---

१ '—शिवे—'इति,'शरे—' इति च पाठ तत्र ।

१ सि कौ० 'स्वप्' शब्दस्य शोभना आपो यस्मिन् सन्तीति बहुव्रीहि । ऋक्पूरब्धू—' इति समासा ए प्रत्ययः 'न पूजनात्' इति निषेध ।' इति तत्स्वाधि युक्त कुसुयुम्यश्च' इति वार्तिकस्यापि भाष्यादावभावादवमत्र चिन्त्य ।

२ 'चरति' इति सूत्र 'तेन दीव्यति—' इत्यतस्तेने त्यनुवृत्ते कर्मणि ठको विधानमसङ्गतम् ।

३ विश्वे तु '—सूदवत् सूपकारे च व्यञ्जनेऽपि च' इति पाठ ।

४ मेदिन्या '—श्यामशीर्षादि वदना च' इति पाठ ।

आपूपिकेति ॥ अपूपाः पण्यमस्य । 'तदस्य पण्यम्' ( ४।४।५१ ) इति ठक् ॥ ( १ ) ॥ * ॥ कन्दौ संस्कृतम् । 'संस्कृतं भक्षाः' ( ४।२।१६ ) इत्यण् । कान्दवं पण्यमस्य । ठक् (४।४।५१) ॥ (२) ॥ * ॥ भक्षं करोति । 'कर्मण्यण्' ( ३।२।१ ) ॥ ( ३ ) ॥*॥ त्रीणि 'भक्ष्यकारस्य' [ 'हलवाई' इत्याख्यस्य ] ।

इमे त्रिपु ॥ २८ ॥

'पौरोगव' (श्लो० २७) शब्दसे यहाँतक सब शब्द त्रिलिङ्ग हैं।

इम इति ॥ इमे=पौरोगवादय (अ० २ ९।२७) ।

अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।

अश्मन्तम् (पु), उद्धानम्, (२ न), अधिश्रयणी, चुल्लिः, अन्तिका (३ स्त्री), 'चुल्हा' के ५ नाम हैं ।

अश्मेति ॥ अश्मनोऽप्यन्तोऽत्र । शकन्ध्वादि ( वा० ( ६।१।९४ )। '[1]अश्मन्तमशुभे चुल्ल्या मरणेऽनवधावपि । क्षेत्रेऽपि' [ इति विश्व ६७।१३२, मेदिनी ६०।८३ ] ॥ * ॥ 'अस्वन्त ' इति पाठे असूनामन्तोऽत्र ॥ ( १ ) ॥ * ॥ उद् धीयतेऽत्र 'धाञ ' ( जु० उ० अ० ) ल्युट् ( ३।३।११७ ) । '[2]उद्धानमुद्गते वाच्यलिङ्गं चुल्ल्या नपुंसकम्' [ इति विश्व. ९२।६३, मे० ८५।४३ ] (१) ॥ * ॥ 'उद्ध्मानम्' इति पाठे तु—उद्ध्मायतेऽत्र । 'ध्मा शब्दादौ' ( भ्वा० प० अ० ) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ अधिश्रीयतेऽत्र । 'श्रीञ् पाके' ( क्र्या० उ० अ० ) । अधिकरणे ल्युट् ( ३।३।११७ ) । ङीप् (४।१।१५ ) ॥ ( ३ ) ॥ * ॥ चुल्ल्यतेऽत्र । 'चुल्ल भावकरणे' ( भ्वा० प० से० ) । इन् ( उ० ४।११८ ) । 'चुद्यतेऽग्निरिति वा' । 'चुद प्रेरणे' ( चु० प० से० )। बाहुलकाल्लिक् । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति वा ङीप् ॥ ( ४ ) ॥ * ॥ अन्त्यतेऽत्र । 'अति बन्धने' ( भ्वा० आ० से० ) । ण्वुल् ( ३।३।१०९ ) । 'अन्तिक निकटे वाच्यलिङ्गं, स्त्री शातलौषधौ । चुल्ल्या ज्येष्ठभगिन्यां च नाट्योक्तौ कीर्त्यतेऽन्तिका' [इति मे० ८।४४]॥ ( ५ ) ॥ * ॥ पञ्च 'चुल्ल्या '।

अंगारधानिकांगारशकट्यपि हसन्त्यपि ॥ २९ ॥ हसन्त्यपि

अङ्गारधानिका, अङ्गारशकटी, हसन्ती, हसनी (४ स्त्री), 'बोरसी, अँगीठी' के ४ नाम हैं।

अङ्गेति ॥ अङ्गारा धीयन्तेऽस्याम् । धाञ. (जु० उ० अ० ) ल्युट् ( ३।३।११६ ) । 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् । कन् ( ज्ञापि० ५।४।५ ) ॥ ( १ ) ॥ * ॥ अङ्गाराणां शकटी ॥ ( २ ) ॥*॥ हसति । हसे हसने' ( भ्वा० प० से० ) । 'लट शतृ–' ( ३।२।१२४ ) । 'शप्श्यनो –' ( ७।१।८१ ) इति नुम् । 'हसन्त्यङ्गारधान्यां च मल्लिकाशाकिनीभिदो ' [ इति विश्व ७०। १७५ ] ॥ ( ३ ) ॥ * ॥ 'कृत्यल्युट –' (३।३।११३) इति ल्युट् । 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् ॥ (४) ॥ * ॥ चत्वारि 'अङ्गारशकट्याः' 'बोरसी' इति ख्यातायाः ॥

अथ न स्त्री स्यादंगारः

अङ्गारः (पु न), अलातम्, उल्मुकम् (२ न), भा० दी० के मत से 'अङ्गार' के ३ नाम हैं। तथा मुकु० और महे० के मत से पहला नाम 'अङ्गार' का और अन्तवाले दो नाम 'लुआठ' के हैं।

अथेति ॥ अङ्गति । अगि गतौ' (भ्वा० प० से०) । 'अङ्गिमदिमन्दिभ्य आरन्' ( उ० ३।१३४ ) । अङ्गमिर्यति वा । 'ऋ गतौ' ( जु० प० अ० ) । 'कर्मण्यण् (३। २।१)। '[1]'अङ्गारमुल्मुके न स्त्री पुलिङ्गस्तु महीसुते' [इति विश्व.[2], मेदिनी १३०।१०८ ] ॥ ( १ ) ॥ * ॥ एकम् 'अङ्गारस्य' ।

अलातमुल्मुकम् ।

अलेति ॥ लातम् । 'ला दाने' ( अ० प० अ० ) । क्त ( ३।३।११४ ) । न लातमस्य ॥ ( १ ) ॥ * ॥ ओषति । 'उष दाहे' ( भ्वा० प० से० ) । 'उल्मुकदर्वि–' ( उ० ३।८४ ) इति साधु ॥ ( २ ) ॥ * ॥ द्वे 'अर्धदग्धकाष्ठस्य' ।—त्रयोऽपि पर्याया —इति मुकुट.[3] ।

१. विश्वे ग्रन्थद्वयेऽपि 'अस्वन्ते'ति दन्त्यमध्यस्य, मेदिन्यां 'आश्मन्ते'ति दीर्घादि पाठः ।

२. विश्वे तु 'उद्धानमुद्धते चुल्ल्याम्' इत्येव पाठः ।

१ "अर्धदग्धेऽग्निसक्रान्तेऽग्निशून्ये वा ( अङ्गार ) इति प्रसिद्धे काष्ठखण्डे । 'तप्ताङ्गारसम पुमान्' इति, 'ज्वलदङ्गारसन्निभम्' इति च प्रथमस्य, 'अङ्गारे शतधौतेऽपि मालिन्य नैव गच्छति' इति 'उष्णो दहति चाङ्गारः शीत कृष्णायते करम्' इति च (द्वितयस्य) पुरा ' इति वाच० (पृ० ७९) द्विविधाङ्गारशब्दोदाहरणानि ।

२ विश्वे तु 'अङ्गारोऽलातभौमयो.' इति ( १४०। १८२ ) इत्येव भिन्न पाठ ।

३. विश्व ( १४०।१८२ ) मेदिनी ( १३०।१०८ ) त्रिकाण्डशेषाणाम् 'अलातेऽस्त्री कुजेऽङ्गारः' (३।३।३२९) वचनैः संवादान्मुकुटोक्तिः सम्यगेव ।

क्लीबेऽम्बरीषं भ्राष्ट्र

अम्बरीषम् ( न पु ), भ्राष्ट्र (पु), 'खापर' अर्थात् 'चना आदि को भूंजने के बर्तन या भाड़ 'भसार' के २ नाम हैं।

क्लीति ॥ अम्व्यवऽत्र वा । 'अबि शब्दे' ( भ्वा० आ० से० )। 'अम्बरीष' ( उ० ४।२९ ) इति साधु—'शिरीषादयश्च'—इति स्वराणिनीयम्। 'अम्बरीषपुरुषोपरीषम्' इति पमेदा-मूर्धन्यान्तोऽयम्। 'अम्बरीष रणे भ्राष्ट्रे क्लीब पुंसि नृपान्तरे। नरकस्य प्रभेदे च किशोरे भास्करेऽपि च। आम्रातकेऽनुत्ते च' 'अनिमिषो मत्स्यदवयो' [ इति मे० १६१।४८-४९ ] ॥ ( १ ) ॥•॥ भृज्यतेऽन्न। भ्रस्ज पाके' ( तु० उ० अ० )। 'भ्रस्जिगमिनमि–' ( उ० ४ १६० ) इति ष्ट्रन्वृद्धी ॥ ( २ ) ॥ • ॥ द्वे 'भर्जनपात्रस्य'।

ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥

कन्दु (पु स्त्री), स्वेदनी (स्त्री), 'मदिरा बनानेके बर्तन या भट्टी' के २ नाम हैं।

नेति ॥ स्कन्दति। 'स्कन्दिर् गतिशोषणयोः' ( भ्वा० प० अ० )। 'स्कन्दे सलोपश्च' ( उ० १।१४ ) इति कु। 'वा' इत्यस्याग्राप्यन्वय। पक्षे स्त्रीत्वाद्द्वर्यात्॥ ( १ ) ॥ • ॥ स्विद्यतेऽस्मात्। अधिकरणे ल्युट् ( ३।३।११७ )। —'वा स्त्रियाम्' इत्यन्वयात् 'स्वेदन' अपि—इति मुकुट ॥ ( २ ) ॥ • ॥ द्वे 'मद्यनिर्माणोपयोगिपात्रस्य' 'कर हो' ( 'भट्टी' इत्याख्यस्य वा )।

अलिंजर. स्यान्मणिक

अलिञ्जर, मणिक (२ पु), 'कुण्डा, भोड' के २ नाम हैं।

अलीति ॥ अलनम्। 'अल भूषणादौ' ( भ्वा० प० से० ) 'इकृष्यादिभ्य' ( वा० ३।३।१०८ ) इन् ( उ० ४।११८ ) वा अलिं न मर्थ्यं जरयति, जृणाति वा। 'जृष् वयोहनौ' ( भ्वा० प० से० )। 'जु वयोहानौ ( क्र्या० प० से० ) वा। अण् ( ३।२।१ )। अच् (३।१।१३५) वा ॥ ( १ ) ॥ • ॥ मणति। 'मण शब्दे' ( भ्वा० प० से० )। 'सर्वधातुभ्य –' ( उ० ४।११८ ) इन्। स्वार्थे कन् ( ज्ञापि० ५।४।५ ) 'संज्ञायां कन्' ( ५।३।७५ ) वा ॥ ( २ ) ॥•॥ द्वे 'महाकुम्भस्य' 'माट' ( मांड ) इति ख्यातस्य।

कर्कर्यालुर्गलन्तिका।

कर्करी, आलु, गलन्तिका (३ स्त्री), 'गडुआ, झारी या झझरा' के ३ नाम हैं।

केति ॥ कर्कणम्। कर्क हासे' ( ) । घञ् ( ३।३।१८ )। कर्कं राति। 'रा दाने' (अ० प० अ०)। 'आतोऽनुप–' ( ३।२।३ ) इति क। गौरादि ( ४।१।४१ ) कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु' [ इति विश्व[1], मेदिनी १३२।१३० ] ॥ ( १ ) ॥ • ॥ आलुनाति। 'लूञ् छेदने' ( क्र्या० उ० से० )। विश्व ( ३।२।७६ ) ॥ • ॥ ह्रस्वपाठे—आलाति। 'ला दाने' (अ० प० से० )। मितद्रवादित्वात् ( वा० ३।२।१८० ) डु। 'आलुर्गलन्तिकायां स्त्री क्लीब मूले[2] च भेलके' [ इति विश्व १५१।३४, मेदिनी १४५।३ ] ॥ ( २ ) ॥ • ॥ गलति। 'गल अदने' ( भ्वा० प० से० )। शता ( ३।२।१२४ )। उगितश्च' ( ४।१।६ ) इति ङीप्। शप्श्यनो –' ( ७।१।८१ ) इति नुम्। स्वार्थे कन्। ( ज्ञापि० ५।४।५ )॥ ( ३ ) ॥ • ॥ त्रीणि 'गलन्तिकायाः', 'करवती' इति ख्यातायाः।—वस्त्रोपूतजलनिष्कासनसाधनस्य—इत्येके।

पिठर स्थाल्युखा कुण्डम्

पिठर (पु न), स्थाली, उखा (२ स्त्री), कुण्डम् (न), 'तसला, बटुआ, बटलोही' के ४ नाम हैं।

पीति ॥ पेठति। 'पिठ वधे' ( भ्वा० प० से० ) 'इगुपध–' ( ३।१।१३५ ) इति क। पिठं राति। 'रा दाने' ( अ० प० अ० )। 'आतोऽनुप–' ( ३।२।३ ) इति क.॥ ( १ ) ॥ • ॥ तिष्ठत्यन्नौदनादि। ष्ठा गतिनिवृत्तौ' ( भ्वा० प० अ० )। 'स्थाचति–' ( उ० १।११६ ) इत्यालच्। स्थलत्यत्र वा। 'ष्ठल स्थाने' ( भ्वा० प० से० )। ज्वल दीप ( ३।१।१४० )। 'जाते –' ( ४।१।६३ ) इति ङीष् 'स्थाल' च। 'स्थाल भाजनभेदेऽपि स्थाली स्यात्पाटलोखयो' [ इति मे० १४१।५५] ॥ ( २ ) ॥ • ॥ ओखति। 'उख गतौ' (भ्वा० प० से०)। 'इगुपध–' ( ३।१।१३५ ) इति क ॥ • ॥ ( 'उषा' इति ) मूर्धन्यपाठे—'उष दाहे' ( भ्वा० प० से० ) ॥ ( ३ ) ॥ • ॥ कुण्डयति। 'कुडि रक्षायाम्' ( चु० प० से० )। अच् ( ३।१।१३४ )।—कुणति। 'कुण शब्दोपकारयो' ( तु० प० से० )। कुणादिभ्य क्वित्' इति ड—इति मुकुट। नञ। उक्तसूत्राभावात्। 'क्वादे क्वित्' ( उ० १।११५ ) इति सूत्रस्य सत्त्वात्। 'कुण्डम ग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ जारात-

---

१ विश्वे तु 'कर्करो दर्पणे दृढे' इत्येव ( १३७।१४८ ) पाठोऽस्मादिन्न एव।

२ विश्वे तु '—स्त्री कन्दभेदे च' इति पाठ।

तिवत्नीसुते पुमान् । पिठरे तु न ना' [ इति विश्व [१], मे० ४०।४-५ ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'ओदनादिपचनपात्रस्य' ।

कलसस्तु त्रिषु द्वयोः ॥ ३१ ॥

घटः कुटनिपौ

कलशः ( त्रि ), घटः ( पु स्त्री ), कुटः, निपः ( २ पु न ) 'घड़े' के ४ नाम हैं।

केति ॥ केन जलेन लसति । 'लस श्लेषणक्रीडनयोः' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) ॥*॥ तालव्यान्त ( कलश ) पाठे-कलं शवति । 'शु गतौ' ( ) । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति ड । 'तालव्या अपि दन्त्याश्च शम्बशूकरपांसव । कलश शम्बल चैव जिह्वाया रसना तथा' इति शभेद । स्त्रियां जातित्वान्ङीष् ( ४।१।६३ ) ॥ ( १ ) ॥ * ॥ घटति । घट चेष्टायाम्' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) स्त्रियां घटी । 'घटा समाधिभेदे ना शिरःकूटकुटेषु च । घटा घटनगोष्ठीभघटनासु च योषिति' [ इति मे० ३४।११-१२, विश्व० ३६।३ च ] ॥ ( २ ) ॥ * ॥ कुटति । 'कुट कौटिल्ये' ( तु० प० से० ) । 'इगुपध-' ( ३।१।१३५ ) इति कः ( ३ ) ॥ * ॥ नियतं पिबन्त्यनेन । 'घञर्थे क' ( वा० ३।३।५८ ) ॥ ( ४ ) ॥ * ॥ कुटनिपावप्यत्रौ ( स्त्रियौ ) ॥ * ॥ चत्वारि 'घटस्य' ।

अस्त्री शरावो वर्धमानकः ।

शरावः ( पु न ), वर्धमानकः ( पु ), 'ढकना, कसोरा' के २ नाम हैं।

अस्त्रीति ॥ शरणम् । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'ऋदोरप्' (३।३।५७) । शृणाति वा । अच् (३।१।१३४) शरं शराद्वाऽवति । अण् (३।२।१) । अच् (३।१।१३४) वा ॥ * ॥—(सराव) दन्त्यादिरपि—इति मुकुट ॥ (१) ॥ * ॥ वर्धते । 'वृधु वृद्धौ' (भ्वा० आ० से०) । शानच् (३।२।१२४) । शप् (३।१।६८) । मुक् (७।२।८२) । 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥ * ॥ द्वे 'पात्रभेदस्य' ['सकोरा, ढकनी' इत्यादे ]।

१. विश्वे तु 'कुण्ड देवजलाधारे पिठरेऽपि कमण्डलौ । कुण्डी, कुण्ड. स्मृतो जारात् पतिवत्नीसुतेऽपि च ॥' इति ( ४४।११ ) भिन्न एव पाठः ।

२. मेदिन्यां '—भेदेभशिरः—'इति, विश्वे च'—भेदेभशिर.··· ··च दृश्यते ।' इति पाठौ ।

ऋजीषं पिष्टपचनम्

ऋजीषम्, पिष्टपचनम् ( २ न ), 'तावा' के २ नाम हैं।

ऋजीति ॥ अर्जति । 'अर्ज अर्जने' (भ्वा० प० से०) । 'अर्जेर्ऋज च' (उ० ४।२८) इतीषन् ॥ * ॥ 'ऋचीषम्' इति पाठ —इति कश्चित् । 'ऋच शब्दे' (तु० प० अ०) बाहुलकादीषन् ॥ (१) ॥ * ॥ पच्यतेऽत्र । 'करणा-' (३।३।११७) इति ल्युट् । पिष्टस्य पचनम् ॥ (२) ॥*॥ द्वे 'पिष्टपाकोपयोगिनः पात्रस्य' 'तवा' इति ख्यातस्य ।

कंसोऽस्त्री पानभाजनम् ॥३२॥

कंसः (पु न), पानभाजनम् ( न ), 'दूध आदि पीनेका प्याला, ग्लास आदि' के २ नाम हैं।

कमिति ॥ कम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) 'आयादय -' (३।१।३१) इति णिङ् न । 'वृतॄवदिहनिकमिकषिभ्य स ' (उ० ३।६२) । कंसोऽस्त्री तैजसद्रव्ये काम्ये मानेऽसुरे तु ना' (इति मेदिनी १७०।२) ॥ (१) ॥ * ॥ पीयते, इति पानम् । ल्युट् ( ३।३।११३ ) । क्षीरादिपानस्य भाजनम् ॥ (२) ॥*॥ द्वे 'पानपात्रस्य' ।

कुतूः कृत्तेः स्नेहपात्रम्

कुतूः (स्त्री), स्नेहपात्रम् ( भा० दी, न ), 'कुप्पा' अर्थात् 'तेल रखनेके लिये चमड़ेके बने हुए बड़े बर्तन'के २ नाम हैं।

किमिति ॥ कुत्सितं तन्यते । 'तनु विस्तारे' (त० उ० से०) । बाहुलकात् कु, टिलोपश्च । कौति । 'कु शब्दे' ( अ० प० अ० ) । बाहुलकात् कूस्तुक्च वा । 'कुत्वा डुपच्' ( ५।३।८९ ) इति निर्देशाद्वा ॥ ( १ ) ॥ * ॥ कृत्तेश्चर्मण ॥ * ॥ स्नेहस्य तैलघृतादे पात्रम् ॥ (२) ॥ * ॥ द्वे 'तैलघृतादिपात्रस्य' ['कुप्पा' इत्याख्यस्य]।

सैवाल्पा कुतुपः पुमान् ।

कुतुपः (पु), 'कुप्पी' अर्थात् 'तेल रखनेके लिये चमड़ेके बने हुए छोटे बर्तन' का १ नाम है।

सैवेति ॥ 'सा' इति निर्देशात् कुतू स्त्रीलिङ्ग ॥*॥ अल्पा कुतूः । 'कुत्वा डुपच्' (५।३।८९) ॥ (१) ॥*॥ एकम् 'अल्पतैलघृतादिपात्रस्य' ['कुप्पी' इत्याख्यस्य] ।

सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ३३ ॥

आवपनम्, भाण्डम्, पात्रम्, अमत्रम्, भाजनम् ( ५ न ), 'बर्तन' के ५ नाम हैं।

सेति ॥ आ उप्यतेऽत्र । 'डुवप् बीजतन्तुसन्ताने' (भ्वा० उ० अ०) । ल्युट् (३।३।११७) ॥ (१) ॥*॥ 'भडि कल्याणे सुखे च' (भ्वा० आ० से०) । अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) ॥ * ॥ भणति ।

'कणा जीरककुम्भीरमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे' इति विश्व[1] (मेदिनी ४५।४५) (४) ॥ * ॥ चत्वारि 'जीरकस्य' ।

कृष्णे तु जीरके ॥३६॥

सुषवी कारवी पृथ्वी पृथु कालोपकुञ्चिका ।

सुषवी, कारवी, पृथ्वी पृथु, काला, उपकुञ्चिका, (६ स्त्री), 'काला जीरा' के ६ नाम हैं ।

कृष्णेति ॥ सुषवणम् । 'षू प्रेरणे' (तु० प० से०) । 'ऋदोरप्' (३।३।५७) । उपसर्गात्सुनोति–' (८।३।६५) इति षत्वम् । सोऽस्त्यस्या । पिप्पल्यादि (ग० ४।१।४१) ॥ (१) ॥ * ॥ कारं वाति । 'वा गतिगन्धनयोः' (अ० प० अ०) । आतोऽनुप–' (३।२।३) इति कः । गौरादि (४।१।४१) । यद्वा–कारणम् । 'कृञ् हिंसायाम्' (क्र्या० उ० से०) । ण्यन्त । सम्पदादिक्विप् (वा० ३।३। १०८) । कारमवति । 'अव रक्षणादौ' (भ्वा० प० से०) अण् (३।२।१) ङीप् ( ४।१।१५ ) । मशापूर्वकत्वान्न वृद्धि । यत्तु–कारौरियम्– इति मुकुट । तन्न । वृद्धत्वाच्छस्य (४।२।११४) प्रसङ्गात् । यदपि—कस्य वायोरारवोऽस्याम्—इति । तदपि न । व्यधिकरणबहुव्रीहिप्रसङ्गात् । 'कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके' (इति मेदिनी १६०।३३) ॥ ( २ ) ॥ * ॥ प्रथते । 'प्रथ प्रख्याने' (भ्वा० प० से०) । 'प्रथिम्रदिभ्रस्जां सम्प्रसारणम्–' (उ० १।२८) इति कुः । 'वोतो गुणवचनात्' (४।१। ४४) इति ङीष् । 'पृथ्वी भूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके' इति 'विश्व [इति मेदिनी, १७९।१९] ॥ (३) ॥ * ॥ 'पृथु स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽस्त्री पुनारग्नौ नृपान्तरे' (इति मेदिनी ७२।९ १०)॥ (४) ॥ * ॥ कालो वर्णोऽस्त्यस्याः । अर्शआद्यच् (५।२। १२७) ॥ (५) ॥ * ॥ उपकुञ्चति । 'कुञ्च कौटिल्ये' (भ्वा० प० से०) । ण्वुल (३।१।१३३) ॥ (६) ॥ * ॥ षट् 'कृष्णवर्णे जीरके' ।

आर्द्रकं शृङ्गवेरं स्यात्

आर्द्रकम्, शृङ्गवेरम्, ( २ न ), 'अदरख, आदी' के २ नाम हैं ।

आर्द्रेति ॥ आर्द्रायां जातम् । 'पूर्वाह्णापराह्णार्द्रा–' (४।३।२८) इति वुन् । आर्दयति जिह्वाम् । क्वुन् (उ० २।३२ ) वा । आर्द्रसंज्ञक वा । 'संज्ञायां कन्' ( ५।३। ७५) । अर्दति कफं वा । 'अर्द हिंसायाम्' (चु० उ० उ० से०) । 'अर्देर्दीर्घश्च' ( उ० २।१८ ) इति रक् । (१) ॥ * ॥ शृङ्गमिव वेरं शरीरमस्य ॥ (२) ॥ * ॥ द्वे 'आर्द्रकस्य' ।

अथ छत्रा वितुन्नकम् ॥३७॥

कुस्तुम्बुरु च धान्यकम्

छत्रा ( स्त्री ), वितुन्नकम्, कुस्तुम्बुरु, धान्यकम् ( ३ ) 'धनियाँ' के ४ नाम हैं ।

अथेति ॥ छत्त्रमस्त्यस्याः । अर्शआद्यच् ( ५।२। १२७) । टाप् (४।१।४) । 'छत्त्रा स्यादातपत्राणे छत्रा मधुरिकौषधौ । धान्यके च शिलीन्ध्रे च' [इति हेमचन्द्र २।४३३ ४३४ ] ॥ (१) ॥ * ॥ विगतं तुन्नं दुःखम् स्मात् । कप् (५।४।१५४) । यत्तु—वितुदति मन्दाग्निम्– इति स्वामी । तन्न । सकर्मकात् कर्तरि वर्तमाने क्तस्याभावात् । 'वितुद्यते भक्षणार्थम्' इति वा तुदेः कर्मणि क्त (३।२।१०२) । कन् (ज्ञापि० ५।४।५) । 'वितुन्नकं तु धान्याके झाटामलमयूरके' [ इति विश्व १९।२०६, मेदिनी २१३।१७ ] ॥ (२) ॥ * ॥ कुत्सितं तुम्बति । 'तुबि अर्दने' (भ्वा० प० से०) बाहुलकात् 'कुस्तुम्बुरूणि जाति' (६।१।१४३) इति निर्देशाद्वा उरु सुट् ॥ (३) ॥ * ॥ धन्यते भक्ष्यार्थिभिः । 'धन शब्दे' ( जु० प० से०) । पिनाकादयश्च' (उ० ४।१५) इति साधु । स्वामी तु—धान्यमकति । 'अक कुटिलायां गतौ' ( भ्वा० प० से०) । अण् (३।२।१)—(इत्याह) ॥ * ॥–ह्रस्वादि– इति मुकुट । 'धन्याकं धान्यकं धान्यं कुस्तुम्बुरु धनीयकम्' इति रभस ॥ (४) ॥ * ॥ चत्वारि 'धान्याकस्य' ।

अथ शुण्ठी महौषधम् ।

स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥

शुण्ठी ( स्त्री ), महौषधम्, विश्वम् ( न स्त्री ), नागरम्, विश्वभेषजम् ( शेष न ), 'सोंठ' के ५ नाम हैं ।

अथेति ॥ शुण्ठति कफम् । शुठि प्रतिघाते' (भ्वा० प० से०) । अच् (३।१।१३४) गौरादि (४।१।४१) ॥ * ॥ इनि (उ० ४।११८) तु ह्रस्वान्ताऽपि । सथ ण्याशुण्ठिसैन्धवम्' इति वैद्यकम् ( ) । इत्थं च गौरादित्वं न कल्प्यम् । कृदिकारात्–' (ग० ४।१।४५) इति सिद्धे ॥ (१) ॥ * ॥ महच्च तदौषधं च । 'महौषधं तु

---

1 विश्वे 'कणोऽतिसूक्ष्मे धान्यांशे कृष्णजीरकणादिषु ।' इति ( ४७।१ ) भिन्नपाठादिदं चिन्त्यम् ।

2 विश्वे तु द्वितीयपादं 'तथा झाटामलोषधौ' इत्येव दृश्यते ।

शुण्ठ्यां स्याद्विषायां लशुनेऽपि च' [इति विश्वः ८४।३४, मेदिनी ८२।४८ ] ॥ (२) ॥ * ॥ विशति । 'विश प्रवेशने' (तु० प० अ०) 'अशुप्रुषि-' (उ० १।१५१) इत्यादिना क्वन् । 'विश्वं कृत्स्ने च भुवने, विश्वे देवेषु, नागरे । विश्वाऽप्यतिविषायां स्यात्' इति विश्व-[१६३-१९ । '(विश्वा) स्वतिविषायां स्त्री, जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदे स्वखिले त्रिषु' इति मेदिनी १५९।२३-२४] ॥ (३) ॥ * ॥ नगरे भवम् । 'तत्र भव.' (४।३।५३) इत्यण् । 'नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे' (इति मेदिनी १३५।१७२) ॥ (४) विश्वस्य वोषस्य भेषजम् ॥ (५) ॥*॥ पञ्च 'शुण्ठ्या' ।

आरनालकसौवीरकुल्माषाभिषुतानि च ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥ ३९ ॥

आरनालकम्, सौवीरम्, कुल्माषम्, अभिषुतम्, अवन्तिसोमम्, धान्याम्लम्, कुञ्जलम्, काञ्जिकम् (८ न), 'कांजी' के ८ नाम हैं ।

आरेति ॥ आर्च्छति । 'ऋ गतौ' (भ्वा० प० अ०) । अच् (३।१।१३४) । नलति । णल गन्धे' (भ्वा० प० से०) 'ज्वलिति-' (३।१।१४०) इति णः । आरो नालोऽस्य । 'शेषाद्विभाषा'(५।४।१५४) इति कप् ॥ (१) ॥ * ॥ सुवीरेषु भवम् । 'तत्र भवः' (४।३।५३) इत्यण् । 'सौवीरं काञ्जिके स्रोतोऽञ्जने च बदरीफले । ना तु नीवृति' (इति मेदिनी १४०।२३९) ॥ (२) कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । क्विप् (३।२।१७८) । कुल् अर्धस्विन्नो माषोऽस्मिन् । कुल् बन्धुर्माषोऽस्य वा । 'कुल्माषं स्यात्तु काञ्जिके । कुल्माषोऽर्धस्विन्नधान्ये[३] यवके चणकेऽपि च ।' [इति हेमचन्द्रः ३।७७४] ॥ (३) ॥ * ॥ अभिषूयते स्म । 'षूञ् अभिषवे' (स्वा० उ० अ०) । क्त (३।२।१०२) । 'उपसर्गात्' (८।३।६५) इति षत्वम् ॥ * ॥ कुल्माषैर्यवादिभिरर्धस्विन्नैरभिषूयते स्म । (कुल्माषाभिषुतम्) इत्येकं नाम—इति स्वामी ॥ (४) ॥ * ॥ सूयते स्म, इति । 'षूञ्' (स्वा० उ० अ०) । मन् (उ० १।१४०) । अवन्तिषु अभिषुतं सोमम् । शाकपार्थिवादि (वा० २।१।७८) ॥ (५) ॥ * ॥ धान्यामिषुतमम्लम् । पूर्ववत् ॥ (६) ॥ * ॥ कुत्सित जलम् । पृषोदरादि (६।१।१०९) ॥ (७) ॥ * ॥ 'अञ्जू व्यक्तयादौ' (रु० प० से०) । 'संज्ञायां' (३।३।१०९) इति भावे ण्वुल् । 'धात्वर्थनिर्देशे' (वा० ३।३।१०८) वा । के अञ्जिकाऽस्य ॥ * ॥ 'काञ्चिके' इति पाठे—काञ्चयति । 'कचि काचि दीप्तिबन्धनयोः' (भ्वा० आ० से०) । ण्यन्त । इन् (उ० ४।११८) । 'संज्ञायां कन्' (५।३।७५) 'काञ्चिकं काञ्जिकं वीरं कुल्माषाभिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं महारसम् । सौवीरं च सुवीराम्लं तथा शुक्लं तुषोदकम्' इति धन्वन्तरिः[१] ॥ (८) ॥ * ॥ अष्टौ 'काञ्जिकस्य' ।

सहस्रवेधि जतुकं वाल्हीकं हिङ्गु रामठम् ।

सहस्रवेधि, जतुकम्, वाह्लीकम्, हिङ्गु, रामठम् (५ न), 'हींग' के ५ नाम हैं।

सेति ॥ सहस्रं वेधितुं शीलमस्य । 'विध विधाने' (तु० प० से०)। 'सुप्यजातौ-' (३।२।७८) इति णिनि ॥ (१) ॥ * ॥ जत्विव । 'इवे प्रतिकृतौ (५।३।९६) इति कन् । 'जतुकाजिनपत्रायां जतुकं हिंगुलाक्षयोः' (इति मेदिनी ८।९१) ॥ (२) ॥ * ॥ वह्लीकेषु भवम् । 'तत्र भव' (४।३।५३) इत्यण् । ह्रस्वमध्यमपि । '(अथ) वाह्लिकं । 'देशभेदेऽश्वभेदे च वाह्लिकं हिंगु कुंकुमम् । (वाह्लीकवत्)' (इति हैम ३।९५-९६) ॥ (३) ॥ * ॥ हिनोति । 'हि गतौ वृद्धौ च' (स्वा० प० अ०) । हिमं गच्छति वा । मृगय्वादि (उ० १।३७) ॥ (४) ॥ * ॥ रामठदेशोद्भवत्वादुपचार । रमन्तेऽनेन वा । 'रमु क्रीडायाम्' (भ्वा० आ० अ०) । 'रमेर्वृद्धिश्च' (उ० १।१०१) इत्यठः ।—रमयति । बाहुलकादठ —इति मुकुटश्चिन्त्यः । 'रमेर्वृद्धिश्च' (उ० १।१०१) इति सूत्रस्य सत्त्वात् ॥ (५) पञ्च 'हिंगुवृक्षस्य निर्यासे' ।

तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥

तत्पत्री, कारवी, पृथ्वी, बाष्पिका, कबरी, पृथुः (६ स्त्री), 'हींगके पेड़के पत्ते' के ६ नाम हैं।

१. विश्वे 'महौषधं शृङ्गवेरे—' इति पाठ. ।

२ विश्वे तु 'विश्वं समस्ते जगति विश्वेदेवेऽपि' विभाष्यति—' इत्येवं पाठ. ।

३. 'हैमे 'ख-ग' पुस्तकयोस्तु तृतीयपादो 'गवाक्षो जालके कपौ' इति पाठेऽपि 'क' पुस्तके उक्तपाठस्य 'कुल्माषं काञ्जिके ना तु यवके स्यात्' इति त्रिकाण्डशेषस्य (३।३।४२७) व्याख्यायां 'यवके यवादौ' । 'तु' कारात् अर्धस्विन्नगोधूमादिषु । 'अर्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः । 'कुल्माष' इति कथ्यन्ते' इति । 'स हि कुल्माषान् खादन्तं बिभिक्षे' इति श्रुति.।" इत्युक्तेः, वि० लो० (पृ० ३९२२ श्लो० २१) च अस्य 'कुल्माष' शब्दस्य 'यव-चणकयो' रपि दर्शनादप्रत्या म. म. शि. द. उक्तिश्चिन्त्या ।

१. इति स्वाम्यप्याह ।

तेति ॥ तस्य हिंगुतरो पत्री ॥*॥ 'स्वपत्री' इति च पाठ । 'तरपत्री स्वनमात्यातं स्वपत्री कारवीति च'(इति रुद्र ) । 'स्वपत्र तु वराङ्गके । स्वपत्रीति च कारव्याम्' [इति हैम[१], १४२।२०९-२१० विश्व ]॥(१)॥*॥ कार वाति । 'वा गतिगन्धनयो' (भ्वा० प० अ०) । 'आतोऽनुप–' (३।२।३) इति क । गौरादि (४।१।४१) ॥ (२) ॥*॥ प्रथते । 'प्रथ प्रख्याने' (चु० उ० से०) । 'प्रथिम्रदिभ्रस्जां सम्प्रसारणम्–' (उ० ११२८) इति कु । 'वोतो गुणवचनात्' ( ४।१।४४ ) इति वा ङीप् । 'पृथ्वी भूमौ महत्या च स्वपत्र्या कृष्णजीरके'[इति विश्व , मे० १२९। ११] ॥ (३) ॥ * ॥ 'पृथु स्यान्महति त्रिपु । स्वपत्र्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे' (इति मे० ७२।९-१०) (६) ॥*॥ वाष्पमिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । टाप् ( ४।१।४ ) ॥*॥ 'बाष्पीका' इति पाठे—पृषोदरादि ( ६।३।१०९ ) ॥ (४) ॥*॥ 'जानपद—' ( ४।१।४२ ) इति ङीपि कवरी केशाना संनिवेशविशेष । सैव ॥*॥ कर्वरी' इति च पाठभेद —इति स्वामी ॥ (५) ॥*॥ पञ्च (षट्) 'हिंगुतरो पत्र्याम्' ॥

**निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी ।**

**निशाख्या, काञ्चनी, पीता, हरिद्रा, वरवर्णिनी ( ५ स्त्री ), 'हल्दी' के ५ नाम हैं ।**

नीति ॥ निशा आह्वा यस्या । 'निशा' पदेन तत्पर्याय लक्ष्यन्ते ॥ ( १ ) ॥ * ॥ काञ्चतेऽनया । 'कचि दीप्त्यादौ' (भ्वा० आ० से०) । 'करणा–' (३।३।११७) ल्युट् । 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् । 'काञ्चन काञ्चनारे स्याच्चम्पके नागकेसरे । उदुम्बरे च धत्तूरे हरिद्रायां तु काञ्चनी । क्लीबेऽब्जकेसरे हेम्नि'[ इति विश्वे[२] ९३।८९-९०, मेदिनी ८६।४८-४९ ] ॥ ( २ ) ॥ * ॥ पीयते स्म । 'पीङ पाने' ( दि० आ० अ० ) । 'पा पाने' (भ्वा० प० अ०) । कर्मणि क्त ( ३।२।१०२ ) । 'घुमास्था–' ( ६।४।६६ ) इतीत्वम् । 'पीतो वर्णनिपीतयो । पीता हरिद्रा' ( इति हैम २।१८१-१८२ ) ॥ ( ३ ) ॥*॥ हरिं वर्णं द्राति । द्रा कुत्सायां गतौ' ( अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति क । हरिभिर्द्रूयते वा । हरित द्रवति वा । 'द्रु गतौ' ( भ्वा० प० अ० ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड ॥ (४) ॥*॥ वरश्चासौ वर्णश्च । सोऽस्त्यस्या । 'अत —' (५।२।११५) इनीनि ॥ (५) ॥ * ॥ पञ्च 'हरिद्रायाः' ॥

१ हैमे तु वचनमिदं नास्त्येव ।

२ विश्वे तु '—च पुन्नागे हरिद्रायां च काञ्चनी । काञ्चनं हेम्नि—' इत्येव पाठ ।

**सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ॥४१॥**

**अक्षीवम्, वशिरम्, 'समुद्री नमक' के २ नाम हैं ।**

सेति ॥ समुद्रे भवम् । 'तत्र भव' ( ४।३।५३ ) इत्यण् । 'सामुद्रं लवणान्तरे । लक्षणे च शरीरस्य' इति हैम ( ३।६५३-६५४ ) ॥ * ॥ लुनाति । 'लूञ् छेदने (क्र्या० उ० से०) । नन्द्यादित्वात् (३।१।१३४) ल्यु । 'लवणाल्लुक्' (४।४।२४) इति निपातनाण्णत्वम् । 'लवण सैन्धवादौ ना सिन्धुरक्षोभिदो रसे । तद्युक्ते वाच्यलिंग स्यान्नदीभेदद्विपो स्त्रियाम्' ( इति मेदिनी ) ॥*॥ अक्षणं । अक्षी वाति-वायति वा । 'वा गत्यादौ' ( अ० प० अ० ) । 'ओवै शोषणे' ( भ्वा० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति क । 'अक्षीव वशिरे, शिग्रौ ना, मत्ते पुनरन्यवत्' [इति विश्व[१], मे० च १२९।३०] ॥(१) ॥ * ॥ वसनम् । 'वसु स्तम्भे' ( दि० प० से० ) । इन् ( उ० ४।११८ ) । वसिं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति क ॥*॥ 'वश कान्तौ' ( अ० प० से० ) । इन् (उ० ४।११८) । वशिं राति । 'वशिर पुमान् । पिप्पलीहस्तिपिप्पल्यो क्लीबेऽब्धिलवणे स्मृत' ( इति मे० १३७।२०८ ) ॥ ( २ ) ॥*॥ द्वे लवणस्य' ॥

**सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ।**

**सैन्धवः ( पु न ), शीतशिवम्, माणिमन्थम्, सिन्धुजम् ( ३ न ), 'सेंधा नमक, या सिन्धुदेशमें पैदा होनेवाले नमक' के ४ नाम हैं ।**

सैन्धेति ॥ सिन्धुषु भव । 'कच्छादिभ्यश्च' ( ४।२।१३३ ) इत्यञ् । 'सैन्धवस्तु सिन्धुदेशोद्भवे हये । माणिमन्थेऽपि' (इति हेमचन्द्र[२] ३।७५३ ७५४) ॥ (१) ॥*॥ शीत च तच्छिवं च । 'अथ शीतशिव क्लीब शैलेयमणिमन्थयो । पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ' (इति मे० १६२।६३ ६४)) ॥ * ॥ सित शुभ्रम् । सित च त च्छिवं च । (सितशिवम्)—इति मुकुट ॥ (२) ॥ * ॥ मणिबन्धाख्यपर्वते भवम् । 'तत्र भव' (४।३।५३) इत्यण ॥*॥—मणिमन्थपर्वते भवम् । ( माणिबन्धम् )—इति ॥ ( ३ ) ॥ * ॥ सिन्धुषु जातम् । 'सप्तम्या तु स्वामी[३] ॥ ( ३ ) ॥ * ॥ सिन्धुषु जातम् ।

१ विश्वे तु 'अक्षीव च शिरे विद्यादमत्तेऽप्यक्षीवमन्यवत्' इति ( १६६।४९ ) भिन्न एव पाठ ।

२ हैम खन्ग' पुस्तकद्वये तु 'सैन्धव सिन्धुदेशजे । सिन्धूत्थे स्यात्' इति पाठ ।

३ "मणिबन्धगिरौ भव माणिबन्धम् । मणिमन्त(न्थ) माणिमन्थ चाहु । आह च— सैन्धवं साधु सिन्धूत्थं नादेयी ( म ) सिन्धुज शिवम् । शुद्ध शीतशिव चान्यन्मा णिबन्ध शिलातकम्" इति स्वामी ।

जनेर्डः.' ( ३।२।९७ ) ॥ (४) ॥*॥ चत्वारि 'सिन्धुजे लवणे'।

## रौमकं वसुकम्

रौमकम्, वसुकम् (२ न), 'साँभर नमक' के २ नाम हैं।

रोमेति ॥ रुमायां भवम्। अण् ( ४।३।५३ )। 'संज्ञायां कन्' ( ५।३।७५ ) ॥ (१) ॥*॥ वसु कायति 'कै शब्दे' ( भ्वा० प० अ० )। 'आतोऽनुप-' ( ३।२।३ )। इति कः। वस्वेव। यावादित्वात् (५।४।२९) कन् वा। वस्वस्त्यस्मिन्। व्रीह्यादित्वात् ( ५।२।११६) ठन् वा। 'इसुसु-' ( ७।३।५१ ) इति कः। 'वसुकं रौमके, तुनि शिवमल्लयर्कपर्णयो.' [इति विश्व.[१], मेदिनी १३।१५३ ] ॥ * ॥ 'वस्तक' इति पाठे—वस्त इव। 'इवे प्रतिकृतौ' (५।३।९६) इति कन्। अजगन्धित्वात्। 'रौमके वस्तकं वसु' इति नाममाला ॥ (२) ॥ * ॥ द्वे 'शाम्भरलवणस्य' 'साम्भरी' इति ख्यातस्य।

पाक्यं विडं च कृतके द्वयम् ॥ ४२ ॥

पाक्यम्, विडम् ( २ न ), 'खारा नमक या खरिया नमक' के २ नाम हैं।

पेति ॥ पच्यते। 'ऋहलोर्ण्यत्' (३।१।१२४) 'चजोः' ( ७।३।५२ ) इति कुत्वम्। पाके साधु., इति वा। 'तत्र साधु' ( ४।४।९८ ) इति यत् ॥ (१) ॥ * ॥ विडति 'विड भेदने' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः ॥ (२) ॥ * ॥ द्वे 'कृतके लवणे' 'खारी' इति ख्यातस्य।

## सौवर्चलेऽक्षरुचके

सौवर्चलम्, अक्षम्, रुचकम् ( ३ न ), 'सोचर नमक' के ३ नाम हैं।

सावेति ॥ सुष्ठु वर्चयते दीप्यते। 'वर्च दीप्तौ' (भ्वा० आ० से० )। वृषादित्वात् ( उ० ११०६ ) कलच्। प्रज्ञाद्यण् (५।४।३८)। 'अथ सौवर्चलं सर्जक्षारे च लवणान्तरे' (इति मे० १५७।१६६) ॥ (१) ॥*॥ अक्षति। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। अच् (३।१।१३४) 'अक्षो रथस्यावयवे व्यवहारे बिभीतके। [२]पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ। अक्षं सौवर्चले तुत्थे हृषीके' (इति हेमचन्द्र २।५६९) ॥ (२) ॥*॥ रोचते। 'रुच दीप्तौ' (भ्वा० आ० से०) क्वुन् (उ० २।३२)। 'रुचको बीजपूरे च निष्के दन्तकपोतयोः। न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः। सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च' इति विश्व[१]-मेदिन्यौ (१२।१४७-१४८)॥ (३) ॥*॥ त्रीणि 'मधुरलवणस्य' 'सोचर' इति ख्यातस्य।

तिलकं तत्र मेचके।

तिलकम् ( न ), 'काला नमक' का १ नाम है।

तीति ॥ तिलति। 'तिल स्नेहने' ( तु० प० से० )। तेलति। 'तिल गतौ' (भ्वा० प० से०) वा। क्वुन् (उ० २।३२ ) 'तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' ( इति मेदिनी ९। १००-१०१) ॥ (१) ॥ * ॥ एकं तस्मिन् '(सौवर्चले) कृष्णवर्णे'॥

## मत्स्यण्डी फाणितं खण्डविकारे

मत्स्यण्डी (स्त्री), फाणितम् ( न ), खण्डविकार. ( पु ), 'राब' के ३ नाम हैं।

मेति ॥ मद मुद वा स्यन्दते। 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० ) 'कर्मण्यण्' (३।२।१)। 'टिड्ढा-' (४।१।१५) इति ङीप्। पृषोदरादि (६।३।१०९) ॥ (१) ॥ * ॥ फाण्यते (स्म)। 'फण गतौ' (भ्वा० प० से०) ण्यन्तः। क्त (३।२।१०२) ॥ (२) ॥ * ॥ खण्डो विकारोऽस्य ॥ (३) ॥ * ॥ त्रीणि 'फाणितस्य' 'राब' इति ख्यातस्य।— 'गुडखण्डगुटिकायाः कर्मणैकैकम्'– इति मुकुटः।

शर्करा सिता ॥ ४३ ॥

शर्करा,सिता (२ स्त्री),'मिश्री,चीनी,शक्कर'के २ नाम हैं।

शेति ॥ शृणाति पित्तम्। 'शॄ हिंसायाम्' ( क्र्या० प० से०)। 'श्रः करन्' ( उ० ४।३ ) 'शर्करा खण्डविकृतौ कर्पराशे रुगन्तरे। उपलायां शर्करायुक्तदेशे शकलेऽपि च' इति हैम (३।६४२-६४३) (१) ॥ * ॥ सिनोति 'षिञ् बन्धने' ( स्वा० उ० अ० )। 'अञ्जिघृसिभ्य. क्तः' (उ० ३।८९)। शुक्लवर्णत्वाद्वा सिता। 'सितमवसिते च बद्धे धवले त्रिषु। शर्करायां[२] स्त्री' ( इति मे० ५९। ७१) ( २ ) ॥ * ॥ द्वे 'शर्कराया.' 'मिश्री' इति ख्याताया.।

---

१. विश्वे रुवसमाद्गिश एव पाठः। यथा—'वसुकः शिवमल्ल्या स्यादर्कपर्णे च रोमके।' इति ( ६।५४ )।

२. '—प्रासके, पासके—'वा पाठो।

१. विश्वे रुवेष पाठो नास्ति, किन्तु तत्र "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयो। उत्कटे बीजपूरे च सौवर्चलविडङ्गयो. ॥ रोचनायां च रुचकमश्वाभरणमाल्ययो.' इति पाठ. ( ७।६६-६७ )।

२. मेदिन्यां तु 'त्रिषु धवलायां स्त्री' इत्येव पाठः। एवं सति 'शर्करा'र्थकत्वाभावाद्यस्यात्रोपयोगिता प्रतिभाति।

कूर्चिका क्षीरविकृतिः स्यात्

कूर्चिका, क्षीरविकृति (२ स्त्री), 'मावा, खोवा' के २ नाम हैं।

कृति ॥ कूर्चति । कूर्च विस्तारे' (भ्वादेराकृतिगणत्वाद्बोध्य)। मज्ञायां ण्वुल (३।३।१०९)। कर्चो मस्त्वादिरस्त्यस्या वा। 'अत — (५।२।११५) इति ठन्। 'दध्ना सह पय पक्व यत्तत्स्याद्दधिकूर्चिका। तक्रेण पक्व यद् क्षीर सा भवेत्तक्रकूर्चिका'। कूर्चिका सूचिकायां च तूलिकायां च कुड्मले। कपाटाकुटिके (टोकूद्वेदने) क्षीरविकृतावपि योषिति' [ इति मे० ७।७४ ] ॥ (१) ॥ * ॥ क्षीरस्य विकृति ॥ (२) ॥ * ॥ ('उभे क्षीरस्य विकृती किलाटी कूर्चिका तथा' इति हैमनाममाला ३।६९) ॥*॥ द्वे किलाटिकायाः' मावा' (खोवा') इति ख्यातायाः ।

रसाला तु मार्जिता ।

रसाला, मार्जिता (२ स्त्री), 'दही, खाड घी, मिर्च और सोंठसे बनाई हुई चटनी' के २ नाम हैं, (इसे गुजराती लोग 'सिखरन या सिकरन' कहते हैं)।

रेति ॥ रसानालाति। मूलविभुजादि- (वा० ३।२।५) ॥ (१) ॥ * ॥ मार्ज्यते स्म। 'मृजू शौचालङ्कारयो' (चु० प० से०)। चुरादि। क्त (३।२।१०२) ॥ (२) ॥ * ॥ 'अर्धाढक सुचिरपर्युषितस्य दध्न खण्डस्य षोडश पलानि शशिप्रभस्य। सर्पि पल मधु पल मरिच्च द्विकर्ष शुण्ठ्या पलार्धमपि चार्धपल चतुर्णाम् ॥ सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था। एषा वृकोदरकृता सरसा रसाला याऽऽस्वादिता भगवता मधुसूदनेन' इति सूदशास्त्रम्। [ 'रसालायां तु मार्जिता। शिखरिणी' इति हैमनाममाला ३।६७ ६८ ] ॥ * ॥ द्वे 'दधिमधुशर्करामरीचार्द्रादिभि कृतस्य लेह्यस्य' 'शिखरिण इति ख्यातायाः ।

स्यात्तेमनं तु निष्ठानम्

तेमनम्, निष्ठानम् (२ न), 'दही-बारा, कढ़ी आदि' के २ नाम हैं।

स्येति ॥ तिम्यतेऽनेन। 'तिम आर्द्रीभावे' (दि० प० से०)। करणे ल्युट् (३।३।११७)। तेमन व्यञ्जने क्लेदे तेमनी चुल्लिकाप्यपि' [ इति हेमचन्द्र ३।४०८ ]॥ (१) ॥*॥ निष्ठीयतेऽन्न। 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०)। ल्युट् (३।३।११७) ॥ (२) ॥ * ॥ द्वे व्यञ्जनस्य'।

त्रिलिङ्गा वासितावधेः ॥ ४४ ॥

यहाँसे आगे 'वासित' (श्लो० ४६) शब्द तक सब शब्द त्रिलिङ्ग हैं।

त्रीति ॥ वासितपर्यन्ता (श्लो० २।९।४६)

शूलाकृतं भटित्रं च शूल्यम्

शूलाकृतम्, भटित्रम्, शूल्यम् (३ त्रि), 'लोहेके छड़से पकाये हुए मास' के ३ नाम हैं।

शिति ॥ शूलेन कृतम्। 'शूलात्पाके' (५।४।६५) इति डाच् ॥ (१) ॥*॥ भटनि। 'भट भृतौ' (भ्वा० प० से०)। 'अमित्रादिभ्य इत्रोत्रौ' (उ० ४।१७३) इत्रोत्र।—प्रह्वादित्वादित्र—इति मुकुटस्तु चिन्त्य। भटयते स्म वा ॥ (२) ॥ * ॥ शूले संस्कृतम्। शूलो खाद्यत्' (४।२।१७) ॥ (३) ॥ * ॥ त्रीणि 'लोह शलाकया पक्वमासस्य'।

उख्यं तु पैठरम्।

उख्यम्, पैठरम् (२ त्रि), 'बटुएमें पकाये हुए भात आदि' के २ नाम हैं।

उख्यमिति ॥ उखायां संस्कृतम्। यत् (४।२।१७) ॥ (१) ॥ * ॥ पिठरे संस्कृत 'संस्कृत भक्षा' यत् (४।२।१६) ॥ इत्यण् ॥ (२) ॥ * ॥ द्वे 'स्थालीसंस्कृतस्याद्यादे'।

प्रणीतमुपसंपन्नम्

प्रणीतम्, उपसंपन्नम् (२ त्रि), 'रस आदिमें बनाये हुए रसिभाव आदि पदार्थ या तैयार भोजनमात्र' के २ नाम हैं।

प्रेति ॥ प्रणीयते स्म। कर्मणि क्त (३।२।१०२)। 'प्रणीतमुपसपन्ने कृते क्षिप्ते प्रवेशिते। संस्कृताग्नौ च' [ इति हैम ३।२९० ] ॥ (१) ॥ * ॥ उपसपद्यते स्म। 'पद गतौ' (दि० आ० अ०)। 'गत्यर्था—' (३।४।७२) इति क्त। 'उपसपन्नमुद्दिष्ट निहते' च सुस स्कृते' [ इति विश्व १०२।३१२, मे० १००।१३१ ]॥ (२) ॥ * ॥ द्वे 'पाकेन संस्कृतस्य व्यञ्जनादे'।

प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥

प्रयस्तम्, सुसंस्कृतम् (२ त्रि), 'परिश्रमसे पकाये (बनाये) हुए उत्तमोत्तम भोज्य पदार्थ' के २ नाम हैं।

प्रेति ॥ प्रयस्यते स्म। 'यसु प्रयत्ने' (दि० प० से०)। क्त (३।२।१०२) ॥ (१) ॥ * ॥ सुष्ठु संस्क्रियते स्म। क्त (३।२।१०२)। 'सपरिभ्याम्–' (६।१।१३७) इति सुट ॥ (२) ॥ * ॥ द्वे 'द्रव्यान्तरसंस्कृतस्य पक्वस्य'।

---

१ विश्वे पुस्तकद्वये तु 'जानीयादुपसपन्न निहिते—' इति पाठ। पर हैम-मेदिनीभ्या विसंवादात् 'निहिते' इति ह्रस्वेकारमध्यो लेखकादिभ्रान्तिज प्रतिभाति।

स्यात्पिच्छिलं तु विजिलम्

पिच्छिलम्, विजिलम् ( २ त्रि ), 'रसदार तरकारी, पतली दही आदि' के २ नाम हैं।

स्येति ॥ पिच्छोऽस्यास्ति । पिच्छादित्वात् ( ५।२। १०० ) इलच् । 'पिच्छा तु शाल्मलीवेष्टे मण्डे चाश्वपदामये' । ['पङ्क्तौ पूगच्छटाकोशमोचानिजयुतेषु च । पिच्छ. 'पुच्छे' इति विश्वः ३२।४-५ ] ॥ ( १ ) ॥ * ॥ विजनम् । 'ओविजी भयचलनयो.' ( तु० आ० से० ) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । विजिं लाति । 'ला दाने' (अ० प० अ०) । 'आतोऽनुप—' ( ३।२।३ ) इति क. ॥ (२) ॥ * ॥ द्वे 'मण्डयुक्तभक्तजलयुक्तव्यञ्जनयो.' ॥

संमृष्टं शोधितं समे।

संमृष्टम्, शोधितम् ( २ त्रि ), 'केश, कीड़ा आदि चुनकर साफ किये हुए अन्नादि' के २ नाम हैं।

सेति ॥ समृज्यते स्म । 'मृजू शुद्धौ' (अ० प० से०) । कर्मणि क्त. ( ३।२।१०२ ) ॥ ( १ ) ॥ * ॥ शोध्यते स्म । 'शुध शुद्धौ' (दि० प० अ०) । ण्यन्तात् कर्मणि क्त. ( ३।२।१०२ ) ॥ ( २ ) ॥ * ॥ द्वे 'केशकीटाद्यपनयनेन शोधितस्यान्नादेः' ।

चिक्कणं मसृणं स्निग्धम्

चिक्कणम्, मसृणम्, स्निग्धम् ( ३ त्रि ), 'चिकने पदार्थ' के ३ नाम हैं।

चीति ॥ 'चिक्क गतौ' (  ) । संपदादिक्विप् (वा० ३।३।१०८) । चिक्कं कणति । 'कण शब्दे' (भ्वा० प० से० ) । मूलविभुजादिकः ( वा० ३।२।५ ) । यद्वा—चिक्कनम् । घञ् ( ३।३।१८ ) । चिक्कस्य अणम् । 'अण शब्दे' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) शकन्ध्वादिः ( वा० ६।१।९४ ) ।—चित्यते । 'चिती संज्ञाने' ( भ्वा० प० से० ) । 'चितेः कण कश्च' (उ० ४।१७६) इति मुकुटस्त्वपाणिनीय [१] ॥ ( १ ) ॥ * ॥ मस्यति । 'मसी परिणामे' ( दि० प० से० ) । बाहुलकादृणः । यद्वा—समृणोति । 'ऋणु गतौ' (त० उ० से०)। 'इगुपध–' ( ३।१।१३५ ) इति क. । पृषोदरादि ( ६।३।१०९ )। 'मसृणोऽकर्कशे स्निग्धे त्रिषु माया तु [२]योषिति'[इति विश्वः ५।१४५, मे० ५०-७० ] ॥ ( २ ) ॥ * ॥ स्निह्यति स्म । 'स्निह प्रीतौ' ( दि० प० से० ) । 'गत्यर्था–' ( ३।४।७२ ) इति क्त. । 'वा द्रुह्–' ( ८।२।३३ ) इति घ. ॥ ( ३ ) ॥ * ॥ त्रीणि 'स्निग्धस्य' ।

तुल्ये भावितवासिते ॥ ४६ ॥

भावितम्, वासितम् ( २ त्रि ), 'हींग आदिसे सुवासित व्यञ्जनादि' के २ नाम हैं।

त्विति ॥ भाव्यते स्म । 'भुवोऽवकल्कने' इति चुरादिण्यन्तात् क्तः (३।२।१०२) 'भावित वासिते प्राप्ते' [ इति विश्व. ६४।९३, मे० ६४।१४१ ] ॥ ( १ ) ॥ * ॥ वास्यते स्म । 'वास उप-सेवायाम्' ( चु० उ० से० )। क्तः ( ३।२।१०२ ) । 'वासिता करिणीनार्योर्वासितं भाविते रुते' [ इति मे० ६५।१५३ ] । 'अथ वासितम् । वस्त्रच्छन्ने ज्ञानमात्रे भाविते ऽप्यथ वासिता । [३]स्त्रीकरिण्योः' [ इति हैम ३।३१५-३१६ ] ॥ ( २ ) ॥ * ॥ द्वे 'ग्राहितहिङ्ग्वादिगन्धस्य व्यञ्जनादे '

आपक्वं पौलिरभ्यूषः

आपक्वम् ( न ), पौलिः, अभ्यूषः (२ पु), 'होरहा, मुरमुरा, ऊमी, हावुस आदि अधपके ( तताये हुए ) पदार्थ' के ३ नाम हैं।

आपेति ॥ ईषत्पक्वम् । 'आङीषदर्थे' ( वा० २।२। १८ ) इति समास. ॥ ( १ ) ॥ * ॥ पोलति । 'पुल महत्त्वे' ( भ्वा० प० से० )। ज्वलादित्वात् (३।१।१४०) णः । भावे घञ् ( ३।३।१८ ) वा । पोलेन निर्वृत्त. । सुतङ्गमादित्वात् ( ४।२।८० ) इञ् । अभ्यूषसाहचर्यात् पुंसि ॥ ( २ ) ॥ * ॥ अभ्यूषति, अभ्यूषते वा । 'ऊष

१. विश्वे 'क' पुस्तके '—जयिनेषु च । पिच्छपुच्छे' इति पाठ. 'ख' पुस्तकेऽपि '—जयिनेषु च पिच्छ पुच्छे' इति पाठ. । अत. 'क' पुस्तके 'पिच्छपुच्छे महाकच्छ.—' इति पाठ. 'पिच्छ पुच्छे—' इति हैम ( २।६४ )–'पिच्छा ······स्त्रियां, पुंसि तु लाङ्गूले—' इति, 'महाकच्छस्तु पुंसि स्यात् समुद्रे च प्रचेतसि' इति च मेदिनी ( २९।४-६ ) पाठाभ्यां विसंवादाल्लेखकादिप्रमादज इत्युपेक्ष्यः । तस्मात् 'पिच्छ' शब्द. पुच्छार्थक एवेत्यलम् ।

१. सि. कौ. "चितेः कण. कश्च बाहुलकाद् गुण.' 'चिक्कणं मसृणं स्निग्धम्" इत्युक्त्या युक्तमेव मुकुटोक्तम् ।

२. विश्वे पुस्तकद्वयेऽपि 'मसृण. कर्कशे क्षुमाया मसृणा भवेत्' इति पाठ. । परं 'मसृणोऽकठिने–'इति हैम ( ३। २३१ )–मेदिनीविरोधाच्च 'मसृणोऽकर्कशे–' इत्येव पाठो युक्तो भाति । मेदिन्यां च '—त्रिषूमाया तु–' इति पाठ ।

३. हैमे 'क' पुस्तके तु'–भाविते विहगारवे । वासिता करिणीनार्योः' इति पाठः ।

हृज्ञायाम्–' (भ्वा० प० से०)। 'इगुपध–' (३।२।१३५) इति क। घञ् (३।३।१८) वा॥ *॥ तोक्म हरितो यवोऽभ्यूष इति बोपालितात् ह्रस्वादि (ह्रस्वमध्य) अपि, तत्र 'उष दाहे' (भ्वा० प० से०) इति धातुर्बोध्य॥ *॥ अस्मादेवाचि (३।१।१३४) 'अभ्योष' अपि, इत्येके॥ (३)॥ *॥ त्रीणि 'हरितयवादेर्भजितस्य' (होरहा इत्याख्यस्य)।

लाजा पुंभूम्नि चाक्षता।

लाजा, अक्षता (२ पु) 'लाजा' खील' अर्थात् 'भुजे हुए धान आदि' के २ नाम हैं।

लेति॥ लज्यन्ते। 'लज भर्जने' (भ्वा० प० से०)। घञ् (३।३।१९) पुंसि बहुत्वे। लाज स्यादार्द्रतण्डुल। नपुंसकमुशीरञ्च स्त्रियां पुंभूम्नि चाक्षत' [इति मदिनी १०।१४।१५]॥ (१)॥ *॥ क्षणनम्। 'क्षणु हिंसायाम्' (त० उ० से०)। 'नपुंसके भावे क्त' (३।३।११४)। न क्षत यया त। चो भिन्नक्रम। अक्षताश्च पुंभूम्नि इत्यर्थ। मुकुटस्तु—'अक्षतम्' इति पठित्वा 'क्षणु हिंसायाम्' (तु० उ० से०)। कर्मणि क्त (३।२।१०२)। क्षत खण्डितम्। न क्षतमक्षतम्। इति विगृह्य। ते (लाजा) नित्यपुंलिङ्गा नित्यबहुवचनान्ताश्च—इति व्याचख्यौ। 'अक्षत न द्वयो पण्डे लाजपु, त्रिष्वहिंसिते। यवेऽपि क्वचित्' (इति मेदिनी ६०।८०)॥ (२)॥ *॥ द्वे मृष्टव्रीह्यद'॥ केचित्तु—अखण्डतण्डुला अक्षता—इत्याहु।

पृथुक स्याच्चिपिटक

पृथुक, चिपिटक (२ पु), 'चिउडा' के २ नाम हैं।

प्रेति॥ प्रथत। 'प्रथ प्रख्याने' (भ्वा० उ० से०)। 'पृथुकपाका–' (उ० ५।५३) इति साधु। 'पृथुकश्चिपिटेऽर्भके' इति हेमचन्द्र [३।७०]॥ (१)॥ *॥ नासिकाया नतम्। 'इनच्पिटच्चिकचि च' (५।२।३३) इति पिटच्, नश्चिरादश। चिपिटमिव। 'सज्ञाया कन्' (५।३।७५)। 'इवे–' (५।३।९६) इति वा कन्॥ (२)॥ *॥ द्वे 'चिवडा' इति ख्यातस्य।

धाना भृष्टयवे स्त्रिय.॥ ४७॥

धाना (स्त्री) 'भुने हुए जौ' अर्थात् 'फरही या बहुरी' का १ नाम है।

धेति॥ दधति। 'डुधाञ्' (जु० उ० से०)। 'धापृवस्यज्यतिभ्यो न' (उ० ३।६)। बहुवचननिर्देशाद्भूम्नि। 'धाना भृष्टयवेऽङ्कुरे, धान्याके चूर्णसक्तुषु' इति हैम [२।२७४]॥ (१)॥ *॥ भृष्टश्चासौ यवश्च॥ (२)॥ *॥ द्वे 'भर्जितयवानाम्' ('बहुरी, फरही' इत्याख्यानाम्)।

पूपोऽपूप. पिष्टक स्यात्

पूप, अपूप, पिष्टक (३ पु), 'पूआ, मालपूआ आदि' के ३ नाम हैं।

पिबति। पवनम्। 'पूञ् पवने' (क्र्या० उ० से०)। सम्पदादित्वात् क्विप् (वा० ३।३।१०८) पुव पाति, पिबति वा। 'आतोऽनुप–' (३।२।३) इति क। मुकुटस्तु—पुनाति। पूप। 'नीपादयश्च' इति प कित्—इति। तन्न। तादृशसूत्रस्यापाणिनीयत्वात्॥ (१)॥ *॥ न पूयते। 'पूयी विशरणे' (भ्वा० आ० से०)। बाहुलकात् प। वलि लोप (६।१।६६) यद्वा—अपुव पाति पिबति वा। (२)॥ *॥ पिष्टस्य विकार। 'सज्ञाया–' (४।३।१४७) इति कन्। 'पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च' [इति 'विश्व, मदिनी १०।१२१]॥ (३)॥ *॥ त्रीणि 'अपूपस्य'।

करम्भो दधिसक्तव।

करम्भ (पु), दधिसक्तव (भा० दी०, नि० ब० व०), 'दहीसे युक्त सत्तू' के २ नाम हैं।

केति॥ केन जलेन रम्यते मिश्रीक्रियते। केन वायुना वा नीयते। 'रभि' (भ्वा० आ० अ०) अनेकार्थ। 'अकर्तरि च–' (३।३।१९) इति घञ्। 'रभेरशब्लिटो' (७।१।६३) इति नुम्॥ *॥ 'करम्ब' इति पाठेऽकेन जलेन रम्यते। 'रबि शब्दे' (भ्वा० आ० से०)। अच (३।१।१३४) यद्वा किरति, कीर्यते वा। 'कॄ विक्षेपे' (तु० प० से०) 'कृकदिकडिकटिभ्योऽम्बच्' (उ० ४।८२)॥ (१)॥ *॥ सचत। 'षच समवाये' (भ्वा० उ० से०) 'सितनिगमि–' (उ० १।६९) इत्यादिना तुन्॥ *॥ ('धाना चूर्णं तु सक्तव। इति नाममाला) दध्युपसिक्ता सक्तव 'अन्नेन व्यञ्जनम्' (२।१।३४) इति समास। शाकपार्थिवादि (२।१।७८) र्वा॥ (२)॥*॥ दधिमिश्रसक्तुन[2]।

भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिवि ॥४८॥

भिस्सा (स्त्री), भक्तम्, अन्ध, अन्नम् (३ न), ओदन दीदिवि (पु न), 'भात' के ६ नाम हैं।

१ विश्वे एव पाठो नास्ति, किन्तु तत्र 'पिष्टको नेत्ररोगे स्याद् धान्यादिचमसेऽपि।' इति (१३।१४०) पाठ।

२. '—सक्तूनाम्' इति युक्तम्, अस्य क्लीबत्वाभावात्।

भीति ॥ बभस्ति । 'भस दीप्तौ' (जु० प० से०) । बाहुलकात् । 'बहुलं छन्दसि' (७।४।७८) इतीत्वम् । 'ब्राह्मणभिस्सा' इति ( ६।३।१ सूत्रे ) भाष्यप्रयोगाल्लोकेऽपि । यद्वा—भेदनम् । संपदादि (वा० ३।३।१०८) । भिद स्यति । 'षो ग्रन्तकर्मणि' (दि० प० अ०) 'आतोऽनुप' (३।२।३) इति क । 'पृषोदरादि' (६।३।१०९)। मुकुटस्तु—भ्यस्यते भक्ष्यते । 'भ्यस भये' (भ्वा० प० से०) भक्षणार्थ. 'भ्यसेः संप्रसारणं सश्च'—इत्याह । तदपाणिनीयम् ॥ ( १ ) ॥ * ॥ भज्यते स्म । 'भज सेवायाम्' ( भ्वा० उ० अ० ) कर्मणि क्त । 'भक्तमन्ने तत्परे च' [ इति हेमचन्द्र २।१८५ ] ॥ (२) ॥ * ॥ अद्यते । 'अद भक्षणे' ( अ० प० से० ) । 'अदेर्नुम्धौ च' (उ० ४।२०६) इत्यसुन् । अन्धयति वा । 'अन्ध दृष्ट्युपघाते' (चु० उ० से०) । असुन् (उ० ४।१८९) ॥ (३) ॥*॥ अद्यते स्म । क्त (३।२।१०२) । 'अन्नाण्ण.' (४।४।८५) इति निपातनात् 'बहुल तणि' (वा० २।४।५४) इति वा न जग्धि । 'अन्नं भक्ते च भुक्ते स्यात्' इति (मेदिनी ८२।२) ॥ (४) ॥ * ॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से०) । 'उन्देर्नलोपश्च' ( उ० २।७६ ) इति युच् । ऊर्दतेऽनेन वा । 'ऊर्द क्रीडायाम्' (भ्वा० आ० से०) । करणे ल्युट् ( ३।३।११७ ) पृषोदरादि (६।३।१०९) । 'ओदन न स्त्रियां भक्ते बलायामोदनी स्त्रियाम्' (इति मेदिनी ८५।४३ ) । दीदिविस्त्रिहितोऽस्त्री, इत्यन्वय. ॥ (५) ॥ * ॥ दीव्यत्यनेन । 'दिवु क्रीडायाम्' (दि० प० से०) । 'दिवो द्वे दीर्घश्चाभ्यासस्य' (उ० ४।५५) इति क्विन् ।—'हृव्यादयश्च' इति क्विन्—इति मुकुटस्त्वपाणिनीय ।—'स' इति विशेषणात्पुसि—इति स्वामी । 'दीदिविर्धिषणे पुंसि स्यादन्ने च तदस्त्रियाम्' इति 'विश्वः (६) ॥ * ॥ पद 'सिद्धान्नस्य' ।

भिस्सटा दग्धिका

भिस्सटा, दग्धिका ( २ स्त्री ), 'जले हुए भात आदि' के २ नाम हैं।

भीति ॥ भिस्सां टीकते । 'टीकृ गतौ' (भ्वा० आ० से०) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः । 'ड्यापो –' ( ६।३।६३ ) इति ह्रस्व. ॥ (१) ॥ * ॥ दह्यते स्म । क्तः ( ३।२।१०२ ) । कुत्सिता दग्धा । 'कुत्सिते' ( ५।३।७४ ) इति कन् ॥ (२) ॥ * ॥ द्वे 'दग्धौदनस्य' ।

१. विश्वे तु 'दीदिविर्धिषणान्नयोः' इति ( १६६।५० ) इति भिन्नपाठात् प्रकृतवचनस्य मूलं मृग्यम् ।

सर्वरसाग्रे मण्डमस्त्रियाम् ।

सर्वरसाग्रम् ( भा० दी० ), मण्डम् (२ न पु), 'माड' के २ नाम हैं।

सेति ॥ रसश्चासावग्रश्च । रसस्याग्र, इति वा । अग्रो रस॰ इति, राजदन्तादि (२।२।३१) वा । सर्वस्य रसाग्रः ॥ (१) ॥ * ॥ मण्डते, मण्ड्यते वा । 'मडि भूषायाम्' (भ्वा० आ० से०)। अच् (३।१।१३४)। घञ् (३।३।१८) वा । मन्यते वा । 'मन ज्ञाने' (दि० आ० अ०) । 'अमन्ताड्ड' (उ० १।११४) । 'मण्ड वचांगुले शाकभेदे क्लीबं तु मस्तुनि । आमलक्या स्त्रिया मण्डाऽथास्त्रिया सारपिच्छयोः' [इति 'विश्व , मेदिनी ४२।२१-२२ ) ॥ (२) ॥ * ॥ द्वे 'मण्डकस्य' ।

मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥

मासरः, आचामः, निस्रावः ( ३ पु ), 'भातके मांड' के ३ नाम हैं।

मेति ॥ मास्यते । 'मसी परिणामे' (दि० प० से०) ण्यन्त बाहुलकादरन् । मा श्री सरत्यत्र, इति वा । 'सृ गतौ' ( भ्वा० प० अ० ) । 'पुसि–' (६।३।११८) इति घ ॥ (१) ॥ * ॥ आचम्यते । 'चमु अदने' (भ्वा० प० से०) । 'अकर्तरि च' (३।३।१९) इति घञ् । वृद्धिः (७।२।११६) ॥ ( २ ) ॥ * ॥ निस्राव्यते । 'स्रु गतौ' (भ्वा० प० अ०) । ण्यन्त । 'एरच्' (३।३।५६) । घञ् ( ३।१।१९ ) वा ॥ * ॥–'विस्राव —इति मुकुट ॥ (३) ॥ * ॥ भक्तात्समुद्भवति ॥ * ॥ त्रीणि 'भक्तोद्भवमण्डस्य' ।

यवागूरुष्णिका श्राणा विलेपी तरला च सा ।

यवागूः, उष्णिका, श्राणा, विलेपी, तरला ( ५ स्त्री ), 'लपसी, हलुआ' के ५ नाम हैं।

येति ॥ यौति, यूयते वा । 'यु मिश्रणे' (अ० प० से०) । 'सृयुवचिभ्योऽन्युजागूजक्नुच' ( उ० ३।८१ ) इत्यागूच् ॥ ( १ ) ॥ * ॥ उष्णैव । 'ब्राह्मणकोष्णिके सज्ञायां' (५।२।७१) इति कन् ॥ (२) ॥ * ॥ श्रायते स्म । 'श्रा पाके' ( अ० प० अ० ) । कर्मणि क्त. (३।२।१०२)। 'संयोगादेरात –' (८।२।४३) इति निष्ठानत्वम् । (३) ॥*॥ विलिम्पति । 'लिप उपदेहे' (तु० उ० अ०) पचाद्यच् (३।१।१३४) । गौरादि (४।१।४१) ॥ (४)

१. विश्वे तु 'मण्डं मस्तुनि शाके च मण्ड. स्यात् सार पिच्छयो । एरण्डे भूषणे चाथ मण्डा धात्र्यामुदीरिता ॥' इति ( ४४।१६ ) भिन्न एव पाठः ।

॥ * ॥ तरणम् । तर । 'तॄ प्लवनादौ' (भ्वा० प० से०) 'ऋदोरप्' (३।३।५७) । तर लाति । 'आतोऽनुप-' (३।२।३) इति क ॥ (५) ॥ * ॥ पञ्च 'थवाग्वा' 'लपसी' इति ख्यातायाः ।

गव्यं त्रिषु गवां सर्वम्

गव्यम् ( त्रि ), 'गायके दूध, दही, घी, गोबर आदि' का १ नाम है।

गेति ॥ गोरिदम् । 'गोपयसोर्यत्' (४।३।१६०) । 'वान्तो यि प्रत्यये' (६।१।७९) । 'गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् । गोसमूहे तु गोदुग्धादौ च गोहिते' (इति मेदिनी ) ॥ (१) ॥ * ॥ सर्वम् = भवविकारावयवादि ॥ * ॥ एकं गोरसस्य ।

गोविट् गोमयमस्त्रियाम् ॥५०॥

गोविट् (स्त्री), गोमयम् ( न पु ), 'गोबर' के २ नाम हैं।

गविति ॥ गोविट ॥ (१) ॥ * ॥ गो पुरीषम् । 'गोश्च पुरीषे' (४।३।१४५) इति मयट ॥ (२) ॥ * ॥ द्वे 'गोमयस्य ['गोबर' इत्यस्य] ।

तत्तु शुष्कं करीषोऽस्त्री

करीष (पु न), 'सूखे गोबर' अर्थात् 'गोहरी, गोहरा, गोंइठा, उपला, कँडरा आदि' का १ नाम है।

क्रेति ॥ कीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) । 'कॄतॄभ्यामीषन्' (उ० ४।२६) ॥ (१) ॥*॥ एकं 'शुष्कगोमयस्य' ['कंडरा' इत्याख्यस्य] ।

दुग्धं क्षीरं पयः समम् ।

दुग्धम्, क्षीरम्, पय ( ३ न ), 'दूध' के ३ नाम हैं।

द्विति ॥ दुह्यते स्म । क्त (३।२।१०२) 'दुग्ध क्षीरे पूरिते च' ( इति हेमचन्द्र २।२४५ ) ॥ (१) ॥ * ॥ क्षपणम् । 'क्षीष् हिंसायाम्' ( भ्वा० प० अ० ) । सपदादि (वा० ३।३।१०८) । क्षियमीरयति । 'ईर गतौ' (अ० आ० से०) ण्यन्त । 'कर्मण्यण् (३।२।१) । घस्यते वा । 'घस्लृ अदने' (भ्वा० प० अ०) । 'घसे किच्च' ( उ० ४।३४ ) इतीरन् । 'गमहनजन-' (६।४।९८) इत्युपधालोपः । 'खरि च' (८।४।५५ ) इति चर्त्वम् । 'शासिवसि-' (८।३।६०) इति षत्वम् । 'क्षीरं पानीयदुग्धयो' इति हैम [२।४१४]॥ (२) ॥ * ॥ पीयते । 'पीङ् पाने' ( दि० आ० अ० )। पयते वा। 'पय गतौ' (भ्वा० आ० से०) असुन् ( उ० ४।१८९ )। पयः क्षीरे च नीरे च' इति हैम (२।५२८) ॥ त्रीणि 'दुग्धस्य' ।

पयस्यमाज्यदध्यादि

पयस्यम् ( त्रि ) 'दूधसे बने हुए दही, खोवा, मक्खन, घी आदि पदार्थ' का १ नाम है।

पेति ॥ पयसो विकारः । 'गोपयसोर्यत्' (४।३।१६०) (१) ॥ * ॥ आज्यं च दधि चादिर्यस्य । आदिना तक्रं नवनीत च ॥ * ॥ एकं 'घृतदध्यादे' ।

द्रप्सं दधि घनेतरत् ॥५१॥

द्रप्सम् 'पतले दही' का १ नाम है।

द्रेति ॥ तृप्यन्त्यनेन । 'तृप प्रीणने' (दि० प० अ०)। 'अन्यादयश्च' ( उ० ४।११२ ) इति 'अप्सम्' इति निपात –इति मुकुट । 'द्रप्सम्'–इति स्वामी पठति। दृप्यन्त्यनेन । 'दृप हर्षादौ' ( दि० प० अ० ) 'अनुदात्तस्य च–' ( ६।१।५९ ) इत्यम् । बाहुलकात् स ।— द्रप्य द्राक् प्सानीयम् इति सर्वानन्द । 'द्रप्स दध्यघन तथा' इति नाममाला ॥ ( १ ) ॥ * ॥ घनात् कठिनादन्यत् ॥ * ॥ एकं 'शिथिलदध्न' 'दगड़ा' इति ख्यातस्य । केचित्तु 'द्रप्स' स्थाने 'सर' पठन्ति । सरति । 'सृ गतौ' ( भ्वा० प० अ० )। अच् ( ३।१।१३४ )। 'वाणद्रप्सौ सरौ' इति दुर्गात् ।—उपरि प्लवमानम्–इति व्याचक्षते।

घृतमाज्यं हविः सर्पिः

घृतम्, आज्यम्, हवि , सर्पि (४ न), 'घी' के ४ नाम हैं।

घ्रिति ॥ घ्रियते । 'घृ सेके' ( भ्वा० प० अ० ) । 'अञ्जिघृसिभ्य क्त' ( उ० ३।८९ ) । 'घृतमाज्याम्बुदीप्तेषु' इति हेमचन्द्र ( २।१७० ) ॥ ( १ ) ॥ * ॥ आज्यतेऽनेन । 'अञ्जू व्यक्त्यादौ' ( रु० प० से० ) 'अञ्जे सञ्ज्ञायाम्' ( वा० ३।१।१०९ ) इति क्यप् ॥ ( २ ) ॥ * ॥ हूयते । 'हु दानादौ' ( जु० प० अ० )। 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसि' ( उ० २।१०८ ) इतीसि । 'हवि सर्पिषि होतव्ये' [इति दन्त्यान्तेषु हैम २।६०९] ॥ ( ३ ) ॥ * ॥ सर्पति । 'सृप्लृ गतौ (भ्वा० प० से० ) इसि ( उ० २।१०८ ) ॥ ( ४ ) ॥ * ॥ चत्वारि 'घृतस्य'

नवनीतं नवोद्धृतम् ।

नवनीतम्, नवोद्धृतम् (२ न), 'मक्खन' के २ नाम हैं।

नेति ॥ नव च तन्नीत च । 'विशेषणम्–' ( २।१।५७ ) इति समास ॥ ( १ )॥ * ॥ नव च तदुद्धृत च ॥ * ॥ एकम् 'अकृताग्निसंयोगस्य नवोद्धृतस्य' ( 'मक्खन' इत्याख्यस्य ) ।

तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥

हैयङ्गवीनम् ( न ), 'लैनू' अर्थात् 'एक दिनके वासी दूधसे निकाले हुए मक्खन' का १ नाम है।

तेति ॥ दुह्यते इति दोह.। कर्मणि घञ् (३।३।१९) गवां दोहः। ह्यो गोदोहः। ह्योगोदोहादुद्भवति। अच् (३।१।१३४) तस्य। 'हैयङ्गवीनं संज्ञायाम्' (५।२।२३) इति निपात ॥ ( १ ) ॥*॥ एकम् 'एकरात्रपर्युषितात् दध्न उत्पन्नस्य घृतस्य' ( 'लैनू' इत्याख्यस्य )।

दण्डाहतं कालशेयमरिष्टमपि गोरसः।

दण्डाहतम्, कालशेयम्, अरिष्टम् ( ३ न ), गोरसः (पु), 'मथनीसे मट्ठे (मथन किये) हुए गोरस' के ३ नाम हैं।

देति ॥ दण्डेन मथाहत विलोडितम्। 'कर्तृकरणे-' ( २।१।३२ ) इति समास ॥ ( १ ) ॥*॥ कलश्या मन्थपात्रे भवम्। 'दृतिकुक्षि-' ( ४।३।५६ ) इति ढञ् ॥ ( २ ) ॥*॥ अरिष्टमक्षेम यस्मात्। 'अनेक-' ( २।२।२४ ) इति समास। 'अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने च' [ इति विश्व[१], मेदिनी ३५।३२-३३ ] ॥ ( ३ ) ॥*॥ गोरसस्य दुग्धस्य विकारत्वादुपचारात् ॥ (४) ॥*॥ चत्वारि 'घोलस्य'।

तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥५३॥

तक्रम्, उदश्वित्, मथितम् (३ न), 'चौथाई पानी, आधा पानी और बिना पानीवाले दही' के क्रमशः १—१ नाम हैं।

तेति ॥ तक्ति, तञ्च्यते वा। 'तञ्चु गतौ' ( भ्वा० प० से० )। 'स्फायितञ्चि-' ( उ० २।१३ ) इति रक्। न्यङ्क्वादि. ( ७।३।५३ ) ॥ ( १ ) ॥*॥ उदकेन श्वयति वर्धते। 'टुओश्वि गतिवृद्ध्योः' (भ्वा० प० से०)। क्विप् ( ३।२।७६ )। तुक् ( ६।१।७१ )। 'उदकस्योद संज्ञायाम्' ( ६।३।५७ )। 'उदश्वित.-' ( ४।२।१९ ) इति निर्देशादसंप्रसारणम् ॥ ( १ ) ॥*॥ मथ्यते स्म। 'मथे विलोडने' ( भ्वा० प० से० )। क्त (३।२।१०२)। ( १ ) ॥*॥ एकैकं क्रमेण चतुर्थांशजलघोलार्धजलनिर्जलघोलानाम्'।

मण्डं दधिभवं मस्तु

मस्तु (न), भा० दी० के मतसे 'कपडेमें बांधकर निकाले हुए दहीके पानी' का और महे० के मतसे 'दहीकी छाल्ही' ( जमे हुए दहीकी मलाई, ऊपरी भाग )' का १ नाम है।

मेति ॥ दध्नो भवति ॥ * ॥ मस्यते। 'मसी परिणामे' ( दि० प० से० ) 'सितनि-' ( उ० १।६९ ) इति तुन् ॥ (१) ॥*॥ एकं 'वस्त्रेति सृतदधिजलस्य'।— दध्न उपरिभागस्य ( छाल्ही' इत्यस्य )—इत्यन्ये।

पीयूषोऽभिनवं पयः।

पीयूष' ( पु न ), 'थोड़े दिनकी या सात दिन तककी ब्याई हुई गायके दूध' अर्थात् 'फेनुस' का १ नाम है।

पीति ॥ पीयति, पीयते अनेन वा। 'पीयू प्रीतौ' ( मौत्र ) 'पीयेरूषन्' (उ० ४।७६) 'पीयूषं सप्तदिवसावधिक्षीरे तथामृते' [ इति विश्व[१]-मेदिन्यौ १६८।४१ ] ॥ ॥ मुकुटस्तु—'पेयूषम्' इति पठति। तत्र बाहुलकादुगुण। यत्तु—पीयते इदम्। 'पीङ् पाने' ( दि० आ० अ० )। 'अन्येभ्योऽपि-' ( ३।२।७५ ) इति विच्। पे' पानकर्ता। 'यूष हिंसायाम्' ( भ्वा० आ० से० ) इत्यत' इगुपधत्वात् क (३।१।१३५)। यूषो नाशयिता। पेयूष.-इति व्याख्यातम्। तन्न। 'इदम्' इति कर्मनिर्देशात्। कर्तरि विचो विधानात्। 'इदम्' इति कर्तृनिर्देशश्चेत् तर्हि 'पानकर्तृनाशयितृ' इति वक्तु युक्तम् ॥ ( १ ) ॥*॥ एकं 'नवप्रसूताया गो क्षीरस्य' ( 'फेनुस' इत्याख्यस्य )।

अशनाया बुभुक्षा क्षुत्

अशनाया, बुभुक्षा, क्षुत् ( ३ स्त्री ), 'भूख' के ३ नाम हैं।

अशेति ॥ अशनस्येच्छा। 'सुप.-' ( ३।१।८ ) इति क्यच्। 'अशनाया-' ( ७।४।३४ ) इतीत्वाभाव.। 'अप्रत्ययात्' ( ३।३।१०२ ) इत्य ॥ ( १ ) ॥*॥ भोक्तुमिच्छा। 'भुज पालनाभ्यवहारयो.' ( रु० प० अ० )। 'धातो. कर्मणः-' ( ३।१।७ ) इति सन् ॥ ( २ ) ॥*॥ क्षोधनम्। 'क्षुध बुभुक्षायाम्' ( दि० प० अ० )। क्विप् ( ३।२।१७८ ) ॥ * ॥ भागुरिमते टापि 'क्षुधा' च ॥ ( ३ ) ॥ * ॥ त्रीणि 'क्षुध.'।

ग्रासस्तु कवलः पुमान् ॥ ५४ ॥

ग्रास', कवल' ( २ पु ), 'ग्रास, कौर' के २ नाम हैं।

ग्रेति ॥ ग्रस्यते। 'ग्रसु अदने' ( भ्वा० प० से० )। 'अकर्तरि च-' ( ३।३।१९ ) इति घञ् ॥ ( १ ) ॥*॥ केन वलते। 'वल तृप्तौ' (भ्वा० आ० से०)। अच् (३।१।१३४ ) ॥ ( २ ) द्वे 'ग्रासस्य'।

सपीतिः स्त्री तुल्यपानम्

सपीतिः ( स्त्री ), तुल्यपानम् ( न ), 'साथमें पान करने' के २ नाम हैं।

१. विश्वे 'अरिष्टः फेनिले निम्बे लशुने काककङ्कयो.। अरिष्टं सूतिकागारे तक्रे चिह्ने शुभाशुभे ॥' इत्येवं पाठ ( ३९।४८-४९ )।

१. विश्वे 'पीयूष' शब्दस्य विवरणाभावादत्र 'मेदिनी' इत्येव पाठ उचितः।

सेति ॥ पानम् । 'पा पाने' (भ्वा० प० अ०) 'स्त्रियां क्तिन्' ( ३।३।९४ ) । 'घुमास्था-' ( ६।४।६६ ) इतीत्वम् । समाना पीतिः । 'समानस्य छन्दसि-' (६।३।८४) इति सभावः । सह पीतिर्वा । 'सहस्य सः संज्ञायाम्' ( ६।३।७८ ) ॥ ( १ ) ॥*॥ तुल्यं च तत् पानं च ॥ (२) ॥ * ॥ द्वे 'बहुभिः समीत्य पानस्य' ।

सग्धिः स्त्री सहभोजनम् ।

सग्धि ( स्त्री ), सहभोजनम् ( न ), 'साथमें भोजन करने' के २ नाम हैं ।

सेति ॥ अदनम् । 'अद भक्षणे' ( अ० प० अ० ) । क्तिन् ( ३।३।९४ ) । 'बहुलं छन्दसि' (२।४।३९) इति घस । 'घसिभसोर्हलि च' ( ६।४।१०० ) इत्युपधालोपः । 'झलो झलि' ( ८।२।२६ ) इति सलोपः । 'झषस्तथोर्धोऽधः' ( ८।२।४० ) । 'झलां जश् झशि' ( ८।४।५३, भा० ५९) इति घस्य गः । समाना ग्धिः पूर्ववत् ॥ (१) ॥*॥ सहभोजनम् । 'सुप् सुपा' (२।१।४) इति समासः ॥ ( २ ) ॥ * ॥ द्वे 'बहुभिः समीत्य भोजनस्य' ।

उदन्या तु पिपासा तृट् तर्षः

उदन्या, पिपासा, तृट् ( ३ स्त्री ), तर्ष. ( पु ) 'प्यास' के ४ नाम हैं ।

उदेति ॥ उदकस्येच्छा । अशनायावत् ॥ (१) ॥*॥ पातुमिच्छा । 'पा पाने' ( भ्वा०प० अ० ) । 'धातोः-' ( ३।१।७ ) इति सन् । 'अ प्रत्ययात्' ( ३।३।१०२ )॥ ( २ ) ॥ * ॥ तर्षणम् । 'ञितृषा पिपासायाम्' ( दि० प० से० ) सम्पदादि ( वा० ३।३।१०८ ) । 'तृट् तृष्णा वत्तर्षश्च भवेल्लिप्सापिपासयो' [ इति हैम १।१६ ]॥ ( ३ ) ॥ * ॥ घञ् ( ३।३।१८ ) वा ॥ * ॥ 'तृषा लिप्सातृषो स्त्रियाम्' [इति विश्व[1], मे० १६६।१३ ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'पिपासायाः' ।

जग्धिस्तु भोजनम् ॥ ५५ ॥
जेमनं लेह आहारो निघसो न्याद इत्यपि ।

जग्धि (स्त्री), भोजनम्, जेमनम् (२ न) लेह, आहार, निघास, न्याद ( ४ पु ), 'भोजन' के ७ नाम हैं ।

जेति ॥ अदनम् । 'अद भक्षणे' ( अ० प० अ० ) । क्तिन् ( ३।३।९४ ) । 'अदो जग्धि-' ( २।४।३६ ) ॥ ( १ ) ॥ * ॥ भुजे ( रु० आ० अ० ) ल्युट् ( ३।३।११५ ) ॥ ( २ ) ॥ * ॥ 'जिमु अदने' ( भ्वा० प० से० ) । ल्युट् ( ३।३।११५ ) ॥ ( ३ ) ॥ * ॥ 'लिह आस्वादने' ( अ० उ० अ० ) । घञ् ( ३।३।१८ )॥*॥ 'लेपः' इति पाठे-'लिप उपदेहे' ( तु० उ० अ० ) घञ् (३।३।१८) । 'लेपस्तु लेपने । अशने च सुरायां[1] च' इति हेमचन्द्र ( २।३०२-३०३ ) ॥ ( ४ ) ॥ * ॥ आहरणम् । 'हृञ्' ( भ्वा० उ० अ० ) । घञ् ( ३।३।१८ )॥ ( ५ ) ॥ * ॥ न्यदनम् । अदेः ( अ० प० अ० ) 'नौ ण च' ( ३।३।६० ) इत्यप्, णश्च । 'घञपोश्च' ( २।४।३८ ) घस्लादेशः ॥ ( ६ ) ॥ * ॥ ( ७ ) ॥ * ॥ सप्त 'भोजनस्य' ।

सौहित्यं तर्पणं तृप्तिः

सौहित्यम्, तर्पणम् (२ न), तृप्ति (स्त्री), 'तृप्ति, अघाने' के ३ नाम हैं ।

साविति ॥ सुहितस्य भावः । ष्यञ् (५।१।१२४) ॥ ( १ ) ॥ * ॥ 'तृप प्रीणने' ( दि० प० से० ) । ल्युट् ( ३।३।११५ ) ॥ (२) ॥*॥ क्तिन् (वा० ३।३।९४)॥ ( ३ ) ॥ * ॥ त्रीणि 'तृप्तेः' ।

फेला भुक्तसमुज्झितम् ॥५६॥

फेला ( स्त्री ), भुक्तसमुज्झितम् ( न ), 'खाकर छोड़े हुए जूठे' के २ नाम हैं ।

फयिति ॥ फेल्यते । 'फेलृ गतौ' ( भ्वा० प० से० )। 'गुरोश्च' ( ३।३।१०३ ) इत्यः ॥ ( १ ) ॥ * ॥ पूर्वं भुक्तं पश्चात् समुज्झितम् । 'पूर्वकालैक-' ( २।१।४९ ) इति समासः ॥ ( २ ) ॥*॥ द्वे 'भुक्तोत्सृष्टस्य' ( 'जूठा' इत्यस्य ) ।

कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।

कामम्, प्रकामम्, पर्याप्तम्, निकामम्, इष्टम्, यथेप्सितम् ( ६ क्रियाविशेषण ), 'इच्छानुसार, काफी, भरपूर' के ६ नाम हैं ।

केति ॥ कमनम् । 'कमु कान्तौ' (भ्वा० आ० से०)। घञ् ( ३।३।१८ ) । 'विशेषैर्यदबाधितं' इति क्लीबत्वम् । 'कामं बाढेऽनुमतिरेतसो । कामः स्मरेच्छाकाम्येषु' । [ इति हैम २।३२१-३२२ ] ॥ ( १ ) ॥ * ॥ ( २ ) ॥ * ॥ ( ४ ) ॥ * ॥ 'आप्लृ व्याप्तौ' ( स्वा० प० अ० ) । भावे क्तः ( ३।३।११४ ) ॥ ( ३ ) ॥ * ॥ एषणम् । 'इषु इच्छायाम्' ( तु० प० से० ) । क्तः ( ३।३।११४ ) । 'इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु' ।

१ विश्वे 'तृषा' शब्दविवरणाभावादत्रापि 'मेदिनी' इत्येव पाठ्यम् ।

१ हैमपुस्तकत्रये '—सुधायां च' इति पाठः ।

समततो पुमान्, क्लीबे संस्कारे क्रतुकर्मणि' [इति [1]विश्व-मे० ३३।२] ॥ (५) ॥*॥ आप्तुमिष्टम् । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । सन् (३।१।७) । क्तः (३।३।११४) । 'आज्ञप्यृधामीत्' (७।४।५५) । 'अव्यय विभक्ति-' (२।१।६) इत्यव्ययीभाव ॥ (६) ॥*॥ षट् 'इच्छानतिक्रमस्य'।

## गोपे गोपालगोसङ्ख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥

गोपः, गोपालः गोसंख्यः, गोधुक्, आभीरः,वल्लवः(६ पु), 'अहीर, गोप, ग्वाला' के ६ नाम हैं।

गविति ॥ गा पाति । 'पा रक्षणे' (अ० प० अ०) । 'आतोऽनुप-' (३।२।३) इति क । 'गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि सारिवा-ह्वयोपयो स्त्रियाम्' [इति [2]विश्व-मे० १०२।५] ॥ (१) ॥ * ॥ गां पालयति । 'पाल रक्षणे' (चु० प० से० ) । 'कर्मण्यण्' (३।२।१) । 'गोपालो नृपगोपेशे गोकिलो[3] मुसले हले' [इति मे० १५१।८६] ॥ (२) ॥*॥ गा सचष्टे । चक्षिङ् व्यक्तायां वाचि' (अ० आ० से०) । 'चक्षिङ ख्याञ्' (२।४।५४) 'समि ख्य.' (३।२।७) इति क. ॥ (३) ॥*॥ गां दोग्धि । 'सत्सूद्विष-' (३।२।६१) इति क्विप् ॥ * ॥ मूलविभुजादित्वात् (वा० ३।२।५) । के 'गोदुहः' अपि । 'गोपगोदुहवल्लवा.' इति त्रिकाण्डशेष ॥ (४) ॥ * ॥ आ समन्ता-द्भियं राति । 'आत-' (३।२।३) इति कः । आ अभि ईरयति वा । 'ईर गत्यादौ' (अ० आ० से०) । पचाद्यच् (३।१।१३४) ॥ (५) ॥ * ॥ वल्लनम् । 'वल्ल संवरणे' (भ्वा० आ० से०) घञ् (३।३।१८) । वल्लं वाति, वायति वा । 'वा गत्यादौ' (अ० प० अ०) । 'ओवै शोषणे' (भ्वा० प० अ०) वा । 'आतः' (३।२।३) इति क' ॥ (६) ॥ * ॥ षट् 'गोपालानाम्'।

## गोमहिष्यादिकं पादबन्धनम्

पादबन्धनम् (न), 'गाय, भैंस, घोड़े, गदहे, आदि बांधे जाने वाले पशुओं' का १ नाम है।

गोमेति ॥ गौश्च महिषी च, गोमहिष्यौ आदी यस्य । तत् ॥ * ॥ पादे बन्धनमस्य ॥ * ॥ 'यादवं धनम्' इति पाठे तु—गोमहिष्यादिकं धनम् । यदूनामिदम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'गवादि यादवं वित्तम्' इति बोपा-लित. ॥ (१) ॥ * ॥ आदिना खराजाविकादिग्रह. ॥ * ॥ एकम् ।

द्वौ गवीश्वरे ।

## गोमान् गोमी

गवीश्वरः, गोमान्, गोमी (३ पु), 'साँढ़'के ३ नाम हैं।

द्वाविति ॥ गवामीश्वरः ॥ (१) ॥ * ॥ बहवो गावोऽस्य । भूम्नि मतुप् (५।२।९४) ॥ (२) ॥*॥ 'ज्योत्स्ना-' (५।२।११४) इति मिनिश्च ॥ (३) ॥*॥ त्रीणि 'गवां स्वामिन'।

## गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥

गोकुलम्, गोधनम् (२ न), 'गौओंके झुण्ड' के २ नाम हैं।

गविति ॥ गवां कुलम् ॥ (१) ॥ * ॥ गवां धनं समूहः । 'गोकुले धनगोधने' इति व्याडिः ॥ (२) ॥*॥ द्वे 'गोसंघातस्य'।

## त्रिष्वाशितङ्गवीनं तद्गावो यत्राशिताः पुरा ।

आशितङ्गवीनम् (त्रि), 'गौओंके चराने या खिलानेके पुराने स्थान' का १ नाम है।

त्रीणि ॥ आशिता भोजिता गावो यत्र । 'अषड-' (५।४।७) इति ख । नुम् तु निपातित. ॥ (१) ॥ * ॥ एकं 'पूर्वं गवां चरणस्थानस्य'।

## उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः । ५९ ॥
## अनड्वान् सौरभेयो गौः

उक्षा, भद्रः, बलीवर्दः, ऋषभः, वृषभः, वृषः, अनड्वान्, सौरभेयः, गौः (९ पु), 'बैल' के ९ नाम हैं।

विति ॥ उक्षति । 'उक्ष सेचने' (भ्वा० प० से०) । 'श्वन्नुक्षन्-' (उ० १।१५९) इति कनि । बाहुलकात्क-निम्—इति मुकुटस्त्वेतत्सूत्रादर्शनमूलक ॥ (१) ॥ * ॥ भन्दति(ते)।'भदि कल्याणे'(भ्वा० आ० से०)।'ऋज्रेन्द्र-' (उ० २।२८) इति साधु ।-'स्फायितञ्चि-'(उ० ३।१३) इति रक्-इति तु मुकुटस्य प्रमाद । 'भद्र. शिवे खञ्जरीटे वृषभे तु कदम्बके । करिजातिविशेषे ना, क्लीबं मङ्गलमु-स्तयो. । काञ्चने च स्त्रिया रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि । त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे' (इति मे० १२८।७०-७२)

---

१. विश्वे 'इष्टमाशसिते पूज्यतमे प्रियतमेऽप्यवत् । इष्ट संस्कारयोगे च यागे न क्रतुकर्मणि ॥' इति (३७।१६-१७) भिन्नपाठादत्रापि 'मेदिनी' इत्येव पाठ उचित. ।

२. विश्वे 'गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे । गोपी गोपालमहिलाशारिवारक्तिकासु च ॥' इति (१०४।६) पाठान्तरदर्शनादत्रापि मेदिनीति पाठो युक्त ।

३. मेदिन्यां '—गोकीलो—' इति पाठ, परन्त्व-यमंशो 'गोकील' शब्दार्थकत्वान्न प्रकृतोपयुक्तः ।

(२) ॥ * ॥ वरणम् । 'वर ईप्सायाम्' (चु० उ० से०)। सपदादि (वा० ३।३।१०८)। ईश्र वर् च ईवरौ। तौ ददाति। क (३।२।३)। अतिशयित बलमस्य। 'अत-' (५।२।११५) इतीनि। वलो घामो ईवर्दश्च ॥ (३) ॥ * ॥ ऋषति। 'ऋषी गतौ (तु० प० से०)। 'ऋषि-वृषिभ्यां किन्' (उ० ३।१२३) इत्यभच् ॥ (४) ॥*॥ वर्षति। 'वृषु सेचन' (भ्वा० प० से०)। अभच् (उ० ३।१२३) 'वृषभ श्रेष्ठवृषयो' इति विश्व [इति मेदिनी १०७।२१] ॥ (५) ॥ * ॥ 'इगुपध-' (३।१।१३५) इति क। 'वृषो धर्मे बलीवर्दे शृङ्ग्यां पुराशिभेदयोः। श्रेष्ठे स्यादुत्तरस्थश्च वासमूषकशुक्रले। वृषा मूषिकपर्ण्यां च' (इति मेदिनी १६७।२६-२७) ॥ (६) ॥ * ॥ अन शकट वहति। 'अनसि वहे क्विप्नसो डश्च' ( ) ॥ (७) ॥ * ॥ सुरभ्या अपत्यम्। 'स्त्रीभ्यो ढक्' (४।१।१२०)।—'इतश्चानिञ' (४।१।१२२)—इति मुकुटस्य प्रमाद। तत्र द्व्यच' इत्यनुवृत्ते ॥ (८) ॥ * ॥ गच्छति। गमेर्डो' (उ० २।६७)। 'गौ स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' इति [२]विश्व मेदिन्यौ [२५।१] ॥ (९) ॥ * ॥ नव 'वृषभस्य'।

**उक्ष्णां संहतिरौक्षकम्।**

औक्षकम् (न), 'बैलोंके झुण्ड' का १ नाम है।

विति ॥ उक्ष्णां समूह। 'गोत्रोक्षोष्ट्र-' (४।२।३९) इति वुञ् ॥ (१) ॥ * ॥ एक वृषसङ्घस्य'।

**गव्या गोत्रा गवाम्**

गव्या, गोत्रा (२ स्त्री), 'गायोंके झुण्ड' के २ नाम हैं।

गति ॥ गवां सहति खलगोरथात्' (४।२।५०) इति य ॥ (१) ॥ * ॥ 'इनित्रकट्यचश्च' (४।२।५१) इति त्र ॥ (२) ॥ * ॥ द्वे 'गोसमूहस्य'।

**वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥**

वात्सकम्, धैनुकम् (२ न), 'बछड़ों तथा धेनुओं (नई ब्याई हुई गायों) के झुण्ड' का क्रमश १—१ नाम है।

वति ॥ वत्सानां समूह। 'गोत्रोक्षोष्ट्र-' (४।२।३९) इति वुञ् ॥ (१) ॥ धेनूनां समूह। 'अचित्तहस्ति-' (४।२।४७) इति ठक् ॥ (१) ॥*॥ 'वत्सधेनुसमूहयो' प्रत्येकमेकैकम्।

**उक्षा महान्महोक्षः स्यात्**

महोक्ष (पु), 'बडे डीलवाले बैल' का १ नाम है।

विति ॥ महांश्चासावुक्षा च। 'अचतुर-' (५।४।७७) इति साधु ॥ (१) ॥ * ॥ एक 'महोक्षस्य'।

**वृद्धोक्षस्तु जरद्गव।**

वृद्धोक्ष, जरद्गव (२ पु), 'बूढे बैल' के २ नाम हैं।

विति ॥ वृद्धश्चासावुक्षा च। पूर्ववत् ॥ (१) ॥*॥ जरंश्चासौ गौश्च। 'पूर्वकालैक-' (२।१।४९) इति समास, 'गोरतद्धितलुकि' (५।४।९२) इति टच् ॥ (२) ॥ * ॥ द्वे 'वृद्धवृषभस्य'।

**उत्पन्न उक्षा जातोक्ष'**

जातोक्ष (पु), 'बछड़े की अवस्था को छोड़कर जवान हुए बैल' का १ नाम हैं।

विति ॥ जातश्चासावुक्षा च। 'अचतुर-' (५।४।७७) इति साधु ॥ (१) ॥ * ॥ एक 'भ्रष्टदम्यभावस्य'।

**सद्योजातस्तु तर्णक' ॥ ६१ ॥**

तर्णक (पु), 'शीघ्र पैदा हुए बछड़े'का १ नाम है।

तेति ॥ तृणोति। तृणु भक्षणे' (त० उ० से०)। क्वुन् (३।१।१३३) ॥ (१) ॥ * ॥ एक सद्योजातवत्सस्य'।

**शकृत्करिस्तु वत्सः स्यात्**

शकृत्करि, वत्स (२ पु), 'छोटे बछड़े' के २ नाम हैं।

शति ॥ शकृत् करोति। 'स्तम्बशकृतोरिन्'(३।२।२४) (१) ॥ * ॥ वदति 'वद व्यक्तायां वाचि (भ्वा० प० से०)। वृतृवदिहनिकमिकषिभ्य स' (उ० ३।६२)। 'वत्स पुत्रादिवर्षयोः। तर्णके नोरसि क्लीबम्'इति विश्व [१]मेदिनी १७०।११-१२) ॥ (२) ॥ * ॥ द्वे 'वत्सस्य'।

**दम्यवत्सतरौ समौ।**

दम्य, वत्सतर (२ पु), 'जोतने के योग्य तैयार हुए बछड़े' के २ नाम हैं।

देति ॥ दमनार्ह 'दमु शमने' (दि० प० से०)। 'अर्हे कृत्यतृचश्च' (३।३।१६९) इत्यर्थे 'पोरदुपधाद्' (३।१।९८) इति यत् ॥ (१) ॥ * ॥ तनुर्वत्स। 'वत्सोक्षाश्व-' (५।३।९१) इत्यादिना ष्टरच् ॥ (२)

---

१ विश्वे तु वृषभ पुगवे वृषे' इति (१०८।२५) इति भिन्न पाठ।

२ विश्वे तु 'गौ स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृत। अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता ॥' इति (२४।१) भिन्नपाठादत्र मेदिनी' इत्येव पाठो युक्त।

१ विश्वे 'वत्सस्तर्णकपुत्रादिवर्षे वत्स तु वक्षसि' इति (१७४।६) भिन्नपाठादत्रापि 'मेदिनी' इत्येव पाठो युक्त।

॥ * ॥ द्वे 'वत्सभावमतीत्य द्वितीयं वयः स्पृष्टस्य' ('दमनीयवत्सस्य')।

आर्षभ्यः षण्डतायोग्यः

आर्षभ्यः (पु) 'साँड़ बनाने योग्य बछवे' का १ नाम है।

आर्षेति ॥ ऋषभस्य प्रकृतिः। 'ऋषभोपानहोर्ञ्यः' (५।१।१४) ॥ (१) ॥ * ॥ षण्डताया योग्यः ॥ * ॥ एकं 'स्पष्टतारुण्यस्य'।

षण्डो गोपतिरिट्चरः ॥ ६२ ॥

षण्डः, गोपतिः, इट्चरः (३ पु), 'स्वच्छन्द घूमनेवाले साँड़' के ३ नाम हैं।

षेति ॥ सनोति, सन्यते वा। 'षणु दाने' (तु० उ० से०)। 'अमन्ताड्डः' (उ० १।११४)। बाहुलकान्न सत्वम्। 'षण्ड पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान्' इति मूर्धन्यादौ डान्ते (मेदिनी ४२।२६) ॥ * ॥ 'शण्ड', इति पाठे-'शमेर्डः' (उ० १।९६) 'शण्ढे स्यात्पुंसि गोपतौ। ना (न) कृष्माण्डे वर्षवरे तृतीयप्रकृतावपि' (इति मे० ४४।४-५) ॥ (१) ॥ * ॥ गवां पतिः ॥ (२) ॥*॥ एषणम्। इट्। 'इष इच्छायाम्' (तु० प० से०)। क्विप् (३।२।१७८)। इषा चरति। अच् (३।१।१३४) ॥*॥ केचित् 'इत्वरः' इति पठन्ति। एति तच्छीलः। 'इण्नशजि-' (३।२।१६३) इति क्वरप्। तुक् (६।१।७१) ॥ (३) ॥ * ॥ त्रीणि 'सा(ढ़)ड' इति ख्यातस्य।

स्कन्ध[१]प्रदेशस्तु वहः

वहः (पु), 'डीलके कन्धे' का १ नाम है।

स्कंेति ॥ वहति युगमनेन। 'गोचरसंचर-' (३।३।११९) इति साधु। 'वह स्याद्वृषभस्कन्धे वाहे गन्धवहेऽपि च' (इति विश्व, मेदिनी १७५।८) ॥ (१) ॥*॥ एक ('वृषभादिस्कन्धस्य')।

सास्ना तु गलकम्बलः।

सास्ना (स्त्री), गलकम्बलः (पु), 'ढार' अर्थात् गाय-बैलोंके गलेमें लटकने वाले चमड़े' के २ नाम हैं।

सेति ॥ सस्ति। 'षस स्वप्ने' (अ० प० से०)। 'रास्नासास्ना-' (उ० ३।१५) इति साधु ॥ (१) ॥*॥ गलस्य कम्बल 'कम्बलो नागराजे स्यात्सास्नाप्रावारयोः क्रमौ। ('कम्बलश्चोत्तरासङ्गे कम्बलं सलिले मतम्)' इति विश्वः (१७५।४५) ॥ (२) ॥ * ॥ द्वे 'गलकम्बलस्य'।

१. मेदिन्या मूर्धन्यादि 'षण्ढ.' इति पाठः।

२. 'स्कन्धदेशे त्वस्य' इति, 'स्कन्धदेशस्त्वस्य' इति पाठा०।

स्यान्नस्तितस्तु नस्योतः

नस्तितः, नस्योतः (२ पु), 'नाथे हुए गौ आदि' के २ नाम हैं।

स्येति ॥ नसनम्। 'णस कौटिल्ये' (भ्वा० आ० से०)। क्त (३।३।११४)। नस्तं कृतमस्य। 'प्रातिपदिकाद्धात्वर्थे-' (चु० अ० सू०) इति णिच्। ततः कर्मणि क्त (३।२।१०२) ॥ (१) ॥ * ॥ नासिकाया भवा। 'शरीरावयवाच्च' (४।३।५५) इति यत्। 'नस्नासिकाया यत्तस्क्षुद्रेषु' (वा० ६।१।६३) इति नसादेशः। नस्यया नासारज्ज्वा उत (उत्तम्भित) ॥ * ॥ 'नस्तोतः' इति पाठ —इति कश्चित्। नस्यते। कर्मणि क्तः (३।२।१०२)। नस्तयोत ॥ (२) ॥*॥ द्वे 'नासारज्जुयुक्तस्य'।

प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥

प्रष्ठवाड्, युगपार्श्वगः (२ पु), 'पहले पहल बछवेको हलमें चलना सिखलानेके लिये जुआठमें बाँधे हुए काठ' के २ नाम हैं।

प्रेति ॥ प्रष्ठमग्रगामिन वहति। 'वहश्च' (३।२।६४) इति ण्वि ॥ * ॥ स्वामी तु—पञ्चमं पष्ठं वा वर्षं वहति इति विगृह्य ('पष्ठवाड्' इति) रेफरहितं पठति। तत्र पृषोदरादित्वं (६।३।१०९) बोध्यम् ॥ (१) ॥ * ॥ युगस्य स्कन्धकाष्ठस्य पार्श्वं गच्छति। 'अन्येष्वपि-' (वा० ३।२।४८) इति ड ॥ (२) ॥ * ॥ द्वे 'दमनकाले कण्ठारोपितकाष्ठवाहस्य'।

युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः।

युग्यः, प्रासङ्ग्यः, शाकटः (३ पु), 'जुआठको ढोनेवाले बैल, दमन करने (हलमें चलना सिखलाने) के लिये पहले पहल कन्धे पर रक्खे हुये काठको ढोनेवाले बैल और गाड़ी को खींचनेवाले बैल' का क्रमशः १—१ नाम है।

युगेति ॥ युगम् (१) प्रासङ्गम् (१) शकटम् (१) वहति। 'तद्वहति रथयुगप्रासङ्गम्' (४।४।७६) इति यत् ॥*॥ 'शकटादण्' (४।४।८०) ॥ * ॥ क्रमेणैकैकं 'रथादिवाहाश्ववृषभादीनाम्'।

खनति तेन तद्वोढास्येदं हालिकसैरिकौ ॥ ६४ ॥

हालिकः, सैरिकः (२ पु), 'हलसे खोदे जानेवाले, हल को ढोनेवाले, हलवाहा (हलको चलानेवाला), हलमें चलने वाले बैल' के २ नाम हैं।

खेति ॥ हलेन (१) सीरेण (२) खनति। 'तेन दीव्यति खनति-' (४।४।२) इति ठक् ॥*॥ हलम् (१) सीरम् (२) वहति। 'हलसीराट्ठक्' (४।४।८१) ॥*॥

हलस्य ( १ ) सीरस्य (२) इदम्। 'हलसीराट्ठक्' (४।३।१२४) ॥ * ॥ द्वे 'उक्तार्थेषु नामनी'।

**धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः।**

धूर्वह॰, धुर्य्य॰, धौरेय॰, धुरीण॰, धुरन्धरः ( ५ पु ), 'धुरा ( भार ) का ढोनेवाले बैल' के ५ नाम हैं।

ध्विति ॥ वहतीति वह । अच् (३।१।१३४) । धुरो वह ॥ (१) ॥ * ॥ 'धुरो यड्ढकौ' (४।४।७७) ॥ (२) (३) ॥ * ॥ 'ख सर्वधुरात्' ( ४।४।७८ ) इति योगविभागात् ख ॥ ( ४ ) ॥ * ॥ धुर धारयति । 'संज्ञायां भृतृवृजि–' (३।२।४६) इति खच् । 'खचि ह्रस्व' (६।४।९४) 'वाचंयमपुरंदरौ च' ( ६।३।६९ ) इति चकारस्यानुक्तसमुच्चयार्थत्वादक्¹। 'अरुर्द्विष–' ( ६।३।६७ ) इति मुम् ॥ (५) ॥ * ॥ पञ्च 'धुरधरवृषभस्य'।

**उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥**

एकधुरीण, एकधुर॰, एकधुरावह ( ३ पु ), 'सिर्फ एक तरफ ( दहने या बायें ) चलनेवाले बैल' के ३ नाम हैं।

विति ॥ एका चासौ धूश्च । 'ऋक्पूरब्धू'(५।४।७४) इत्य । एकधुरा वहति । 'एकधुराल्लुक् च' ( ४।४।७९ ) इति ख ॥ ( १ ) ॥ * ॥ (लुक्पक्षे–'लुक् तद्धितलुकि' १।२।४९) इति टापो निवृत्तो एकधुर ) ॥ (२) ॥ * ॥ एकधुराया वह ॥ (३) ॥ * ॥ त्रीणि [वामदक्षिणान्यतरैकभाग एव] 'धुरधरस्य'।

**स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः।**

सर्वधुरीण , सर्वधुरावह॰ ( २ पु ), 'दहने और बायें दोनों तरफ चलनेवाले बैल' के २ नाम हैं।

स इति ॥ सर्वा चासौ धूश्च । सर्वधुरा वहति । 'ख सर्वधुरात्' ( ४।४।७८ ) इति ख ॥ (१) ॥ * ॥ सर्वधुराया वह ॥ ( २ ) ॥ * ॥ द्वे 'धुरीणश्रेष्ठस्य' ['सर्वधुरावहस्य'] ।

**माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥६६॥**
**अर्जुन्यघ्न्या रोहिणी स्यात्**

माहेयी, सौरभेयी, गौ , उस्रा, माता, शृङ्गिणी, अर्जुनी, अघ्न्या, रोहिणी ( ९ स्त्री ), 'गाय' के ९ नाम हैं।

मेति ॥ 'गौरुस्रा प्रिया इला मही' इति निरुक्तम् ( ) । मह्या अपत्यं स्त्री । 'स्त्रीभ्यो ढक्' (४।१।१२०) । —मह्यते । 'मह पूजायाम्' ( भ्वा॰ प॰ से॰) । 'पुंसि–' (३।३।११८) इति घ । 'खनो घ च' (३।३।१२५) इति वा । मह्याया अपत्यम्—इति तु स्वामी ॥ (१) ॥ * ॥ सुरभ्या अपत्यम् ॥ ( २ ) ॥ * ॥ गच्छति । 'गमेर्डो' (उ॰ २।६७) ॥ ( ३ ) ॥ * ॥ वसति क्षीरमस्याम् । 'वस निवासे' (भ्वा॰ प॰ अ॰)। 'स्फायि–' (उ॰ २।१३) इति रक् । 'वचिस्वपि–' (६।१।१५) इति वस्य उ । 'न रपर–' ( ८।३।११० ) इति षत्वाभाव । 'उस्रो वृषे च किरणेऽप्युस्रार्जुं-युग्विनयो' (इति मेदिनी १२३।१०)। 'उस्रस्तु वृषभे प्रोक्त किरणे च तथा पुमान्' ( ) (४) ॥ * ॥ मान्यते। 'मान पूजायाम्' (भ्वा॰ आ॰ से॰) । 'नप्तृनेष्टृ–' (उ॰ २।९५) इति साधु । 'मातरौ गोजनन्यौ द्वे' इति रुद्र.। 'माता गौर्यादिजननीगोब्रह्माण्यादिभूमिषु' इति 'विश्व (मेदिनी ५७।४४) ॥ (५) ॥ * ॥ शृङ्गमस्त्यस्या । 'अतः–' (५।२।११५) इतीनि- (६) ॥ * ॥ अर्जुनवर्णयोगात् । 'अन्यतो ङीष्' (४।१।४०) । 'अर्जुन ककुभे पार्थे कार्तवीर्यमयूरयो । मातुरेकसुतेऽपि, स्याद्धवले पुनरन्यवत् । नपुंसक तृणे नेत्ररोगे स्यादर्जुनी गवि । उषाया बाहुदानद्या² कुट्टिन्यामपि च क्वचित्' [ इति विश्वः ९२।८४-८५, ८४।३०-३१ ] ॥ (७) ॥ * ॥ न हन्यते, हन्ति दातारम्, वा । 'अघ्न्यादयश्च' ( उ॰ ४।११२ ) इति साधु ॥ ( ८ ) ॥ * ॥ रोहितवर्णयोगात् । 'वर्णादनुदात्तात्–' ( ४।१।३९ ) इति ङीप्नौ । 'रोहिणी सोमवल्के भे कण्ठरोगेमयोर्गवि³। (लोहितादुरोहिण्यौ.)'[इति हेमचन्द्र ३।२३१-२३४]॥ (९) ॥ * ॥ नव 'गवि'।

**स्यादुत्तमा गोषु नैचिकी।**

नैचिकी ( स्त्री ), 'उत्तम गाय'का १ नाम है।

स्येति ॥ नीचैश्चरति । 'चरति' (४।४।८) इति ठक् । 'अव्ययानाम्–' (वा॰ ६।४।१४४) इति टिलोप । यद्वा– 'कर्णशिरोदेशे' इति रभस । तत स्वार्थे कन्

१. 'धुर धारयतीति धुरन्धर । कथचित् सज्ञात्वात् खच् ('सज्ञाया भृतृवृजीति')' इति स्वाम्युक्ते ,'वाच यमपुरन्दरौ च' इति सूत्रे पूर्वसूत्रादमोऽनुवृत्तेरत्रामृप्रत्यय एवोचितो न त्वक्प्रत्यय , भ॰ दी॰ स्याप्यक्तदेव मतमिति ।

१. विश्वे 'माता वात्याप्रसूगोषु ब्रह्माण्याद्यासु मातर' इति (५९।४१) पाठस्य भिन्नत्वादत्रापि 'मेदिनी' इत्येव पाठ समीचीन ।

२ विश्वे '—ते च स्यादर्जुनो धवलेऽन्यवत् । अर्जुन तु तृणे नेत्रगदे चाप्यर्जु'······या करतोयाया—' इति, मेदिन्या च—'पुंलिङ्गो धवले ·····नेत्रगदे चाप्यर्जुनी—' इति पाठभेदेऽपि ग्रन्थद्वये नार्थभेद ।

३ हैमे 'ख-ग' पुस्तकद्वये '—कण्ठरोगान्तरे गवि—' इति, 'क' पुस्तके च—'कण्ठरोगोमंयोर्गवि—'इति पाठ ।

(ज्ञापि० ५।४।५)। प्रशस्त निचिकमस्याः। 'ज्योत्स्नादिभ्य' (वा० ५।२।१०३) इत्यण्। 'नैचिकी गोत्तमा तु नीचिकी सा प्रकीर्तिता' इति नाममाला ॥ (१) ॥ * ॥ एक 'श्रेष्ठाया गो.'।

**वर्णादिभेदात्संज्ञाः स्युः शवलीधवलादयः ॥ ६७ ॥**

शवली, धवला (२ स्त्री), आदि ('कृष्णा, कपिला, पाटला' ३ स्त्री), 'वर्ण' (रंग) आदि (प्रमाण और शरीर आदि) के भेदसे 'चितकवरी, धावर, आदि (काली, कपिल या कइक और पाटल या लाल) 'गायों' का क्रमशः १—१ नाम है।

वेति ॥ आदिना प्रमाणावयवादिग्रह । शवलयोगात्। 'अन्यतो ङीप्' (४।१।४०) ॥ (१) ॥ * ॥ धवलयोगात्। अनुदात्तत्वाभावान्न ङीप्। मुकुटस्तु—'धवली'—इत्याह। तत्र गौरादिङीप् (४।१।४१) ॥ (१) ॥*॥ आदिना 'कृष्णा—कपिला—पाटला' इत्यादय । प्रमाणभेदात् 'दीर्घा ह्रस्वा खर्वा वामनी' इत्यादय । अङ्गभेदात् 'पिङ्गाक्षी लम्बकर्णी वक्रशृङ्गी,' इत्यादय 'धवलादिसंज्ञानाम् गवाम्'।

**द्विहायनी द्विवर्षा गौः**

द्विहायनी, द्विवर्षा, एकाब्दा, एकहायनी, चतुरब्दा, चतुर्हायणी, त्र्यब्दा, त्रिहायणी (८ स्त्री), 'दो वर्ष, एक वर्ष, चार वर्ष और तीन वर्ष की उम्रवाली गौ' के क्रमशः २—२ नाम हैं। (६८ श्लो० तक)

द्वीति ॥ द्वौ हायनौ यस्या । 'दामहायनान्–' (४।१।२७) इति ङीप् ॥ (१) ॥ * ॥ द्वे वर्षे वय.प्रमाणमस्या । आर्हीयष्ठक् ( ) तस्य 'अध्यर्ध–' (५।१।२८) इति लुक् ॥ (२) ॥*॥ द्वे 'द्विवर्षीया गो'।

**एकाब्दा त्वेकहायनी।**

एकेति ॥ एकोऽब्दो यस्या. ॥ (१) ॥ * ॥ एको हायनो यस्या । ङीप् (४।१।२७) ॥ (२) ॥ * ॥ द्वे 'एकवर्षीया गो.'।

**चतुरब्दा चतुर्हायणी**

चेति ॥ चत्वारोऽब्दा यस्या ॥ (१) ॥*॥ चत्वारो हायना यस्या । ङीप् (४।१।२७)। 'त्रिचतुर्भ्यां हायनस्य' (वा० ८।४) इति णत्वम् ॥ (२) ॥ * ॥ द्वे 'चतुर्वर्षीयाः गो'।

**एवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥**

एवमिति ॥ त्रयोऽब्दा यस्या ॥ (१) ॥*॥ त्रयो हायना यस्याः ॥ (२) ॥ * ॥ द्वे 'त्रिवर्षीया गोः'।

**वशा वन्ध्या**

वशा, वन्ध्या (२ स्त्री), 'बाँझ (बच्चा नहीं पैदा करने वाली) गौ आदि' के २ नाम हैं।

वेति ॥ वष्टि। 'वश कान्तौ' (अ० प० से०)। अच् (३।१।१३४)। 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयो.। वशा नार्या वन्ध्यगव्या हस्तिन्या दुहितर्यपि' [ इति हैम. २।५६६ ] ॥ (१) ॥ * ॥ वध्नाति। 'बन्ध बन्धने' (क्र्या० प० अ०)। ण्यत् (३।१।१२४)।—अघ्न्यादिः (उ० ४।११२)·—इति मुकुटः ॥ (२) ॥ * ॥ द्वे 'वन्ध्याया.'।

**अवतोका तु स्रवद्गर्भा**

अवतोका, स्रवद्गर्भा (२ स्त्री), 'अकस्मात् जिसका गर्भ गिर गया हो उस गौ आदि' के २ नाम हैं।

अवेति ॥ अवगलितं तोकमपत्यं यस्या ॥ (१) ॥*॥ स्रवन् गर्भो यस्या ॥ (२) ॥*॥ द्वे 'अकस्मात् पतितगर्भाया'।

**अथ संधिनी।**

**आक्रान्ता वृषभेण**

सन्धिनी (स्त्री), 'वाही (साँड़के साथ संगम की) हुई गाय' का १ नाम है।

अथेति ॥ संधानम्। 'जुधाञ्' (जु० उ० अ०)। 'आतश्च–' (३।३।१०६) इत्यङ्। संधाऽस्त्यस्या। व्रीह्यादित्वात् (५।२।११६) इनि । अवश्य सधत्ते वा। 'आवश्यका–' (३।३।१७०) इति णिनि.[1]। 'संधिनी वृषभाक्रान्ताऽकालदुग्धोस्तयो स्त्रियाम्' [ इति मे० ९४। ५० ] ॥ (१) ॥ * ॥ एकं 'कृतमैथुनाया'।

**अथ वेहद्गर्भोपघातिनी ॥ ६९ ॥**

वेहद्, गर्भोपघातिनी (२ स्त्री), 'साँड़के साथ संयोगकर गर्भको नष्ट की हुई गाय' के २ नाम हैं।

अथेति ॥ विहन्ति गर्भम्। 'सभ्रत्तृपद्वेहत्' (उ० २। ८४) इति साधु ॥ (१) ॥ * ॥ गर्भमुपहन्ति। 'सुप्यजातौ–' (३।२।७८) इति णिनि ॥ (२) ॥*॥ द्वे 'वृषयोगेन गर्भपातिन्या'॥

**काल्योपसर्या प्रजने**

काल्या, उपसर्या (२ स्त्री), 'उठी हुई (साँड़के साथ मैथुन करनेकी इच्छा करनेवाली) गाय' के २ नाम हैं।

---

१. आवश्यकार्थे विहितस्य णिनिप्रत्ययस्य कित्त्वाभावादातोलोपस्याप्राप्ति, 'आतो युक्चिण्कृतो.' इति युगागमापत्तिश्च। तस्मादत्रेनिप्रत्यय एव युक्त.। सि० कौ० कर्तुरप्येवं सम्मतिः।

केति ॥ प्रजने गर्भग्रहणे प्राप्तकाला ॥ * ॥ उपसिच्यते वृषेण । सृ गतौ' (भ्वा० प० ९८०) 'उपसर्या काल्या प्रजने' (३।१।१०४) इति साधु ॥ (१) ॥*॥ एक 'गर्भग्रहणयोग्यायाः'।

प्रष्ठौही बालगर्भिणी।

प्रष्ठौही, बालगर्भिणी (२ स्त्री), 'ओसर (पहले पहल गर्भ धारण की हुई) गाय' ये २ नाम हैं।

प्रेति ॥ प्रष्ठ वहति । 'वहश्च' (३।२।६४) इति ण्वि । 'वाहः' (४।१।६१) इति ङीप् ॥ * ॥ 'पष्ठौही' इति पाठे–पृषोदरादित्वात् (६।३।१०९) रलोप ॥ (१) ॥ * ॥ बाला चासौ गर्भिणी च ॥ (२) द्वे 'प्रथम गर्भ धरवत्या गो'।

स्यादचण्डी तु सुकरा

अचण्डी, सुकरा (२ स्त्री), 'सूधी गाय' के २ नाम हैं।

स्येति ॥ न चण्डी ॥ (१) ॥*॥ सु सुखं करोति । अच् (३।१।१३४) सु क्रियते वा । 'ईषद्दु सुषु—' (३।३।१२६) इति खल् ॥ (२) ॥*॥ द्वे 'सुशीलायाः'।

बहुसूतिः परेष्टुका ॥ ७० ॥

बहुसूति, परेष्टुका (२ स्त्री), 'बहुत बच्चा पैदा की हुई गाय' के २ नाम हैं।

बेति ॥ बह्वी सूतिर्यस्याः ॥ (१) ॥ * ॥ परमिच्छति । परैरिष्यते वा । बाहुलकात्तु । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे बहुप्रसूतायाः'।

चिरसूता वष्कयिणी

चिरसूता, वष्कयिणी (२ स्त्री), 'बकेना (बहुत दिनों की ब्याई हुई) गाय' के दो नाम हैं।

चीति ॥ चिरं सूता । 'सुप्सुपा' (२।१।४) इति समास ॥ (१) ॥ * ॥ वष्कते । 'वष्क गतौ (चु० उ० सं०)। बाहुलकादयम् । वष्कयस्तरुणवत्स । सोऽस्त्यस्याः । 'अत –' (५।२।११५) इतीनि । अट्कुप्वाङ्–' (८।४।२) इनि णत्वम् ।–'पूर्वपदात्–' (८।४।३)—इति मुकुटस्य प्रमाद । समासाभावात् ॥ * ॥ यद्वा–'वष्कयस्त्वेकहायनो वत्स ' इति शाकटायन (   ) । तेन नीयते । सपदादि (वा० ३।३।१०८) । 'सर्वतोऽक्तिन्नर्थात्' (ग० ४।१।४५) इति ङीष् । गौरादित्वात् (४।१।४१) वा । 'पूर्वपदात्' (८।४।३) इति णत्वम् । अत्र पक्षे (वष्कयणी) इकाररहित उपान्त्य ॥ (२) ॥*॥ द्वे 'दीर्घकालेन प्रसूतायाः' 'बकेना' इति ख्यातायाः ।

धेनुः स्यान्नवसूतिका।

धेनु, नवसूतिका, (२ स्त्री), 'थोड़े दिनों की ब्याही हुई गाय' के २ नाम हैं।

धयतीति ॥ धीयते । धेट पाने' (भ्वा० प० से०)। 'धेट इच्च' (उ० ३।३४) इति नु ।–धेन्वादयश्च–' इति मुकुटस्त्वपाणिनीय । 'धेनुर्गौमात्रके दोग्ध्र्याम्' [इति हैम २।२७५]॥ (१)॥*॥ नव सूत प्रसवोऽस्याः । शेषात्–' (५।४।१५४) इति कप । 'प्रत्ययस्थात्–' (७।३।४४) इतीत्वम् ॥ (२) ॥ * ॥ द्वे नूतनप्रसूतायाः'।

सुव्रता सुखसंदोह्या

सुव्रता, सुखसंदोह्या, (२ स्त्री), 'बिना झंझट किये दुही जानेवाली गाय' के २ नाम हैं।

स्विति ॥ शोभन व्रतमस्याः ॥ (१) ॥*॥ सुखेन संदुह्यते । ण्यत् (३।१।२४) ॥ (२) ॥ * ॥ द्वे 'सुशीलायाः'।

पीनोध्नी पीवरस्तनी ॥ ७१ ॥

पीनोध्नी, पीवरस्तनी (२ स्त्री), 'मोटे २ स्तनवाली गाय' के २ नाम हैं।

पीति ॥ पीनमूधोऽस्याः 'ऊधसोऽनङ्' (५।४।१३१)। 'बहुव्रीहेरूधसो ङीष्' (४।१।२५) ॥ (१) ॥ * ॥ पीवर स्तनोऽस्याः । 'स्वाङ्गाच्चोपसर्जनात्–'(४।१।५४) इति ङीष् ॥ (२) ॥ * ॥ 'स्थूलस्तन्याः'।

द्रोणक्षीरा द्रोणदुग्धा

द्रोणक्षीरा, द्रोणदुग्धा (२ स्त्री), 'एक द्रोण दूध देनेवाली गाय' के २ नाम हैं।

द्रुविति ॥ द्रोणपरिमित क्षीरमस्याः ॥ (१) ॥*॥ द्रोण दोग्धि । 'दुह कप् घश्च' (३।२।७०) इति कप् घश्च तादेश ॥ (२) ॥ * ॥ द्वे 'द्रोणपरिमितदुग्धदात्र्या गवि'।

धेनुष्या बन्धके स्थिता।

धेनुष्या, (स्त्री), 'बन्धक रक्खी हुई गाय' का १ नाम है।

धयतीति ॥ 'सज्ञाया धेनुष्या' (४।४।८९) इति साधु ॥ (१) ॥ * ॥ एक 'बन्धनस्थिताया गो'।

समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥

समांसमीना (स्त्री) 'धनपुरही गाय' का १ नाम है।

सेति ॥ समायां समायां विजायते । 'समां समां विजायते' (५।२।१२) इति ख, उत्तरपदे टाब्विभक्त्योर्लोप पूर्वपदे यलोप एव ॥ (१) ॥ * ॥ एक 'प्रतिवर्षं प्रसविन्या गो' 'धनपुरही' इति ख्यातायाः ।

ऊधस्तु क्लीबमापीनम्

ऊधः, आपीनम् ( २ न ), 'गायके थन' के २ नाम हैं।

वेति ॥ वहति । 'वह प्रापणे' ( भ्वा० उ० से० )। उनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) । असुन् ( उ० ४।१८९ ) । 'ऊधसोऽनङ्' ( ५।४।१३१ ) इत्यादिनिर्देशादूधादेश ।—'श्वे सम्प्रसारणं च' (उ० ४।१९३) इत्यनुवृत्तौ 'वहेर्धो दीर्घश्च' इत्यसुन्—इति मुकुटस्त्वपाणिनीय ॥ ( १ ) ।॥*॥ आ प्यायते स्म । 'ओप्यायी वृद्धौ' ( भ्वा० आ० से० ) । 'गत्यर्था—' (३।४।७२) इति क्त । 'प्यायः पी'(६।१।२८) निष्ठायाम् । 'आङ्पूर्वस्यान्धूधसोः' (वा० ६।१।२८) इति वा पीभावः । 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम् ॥ (२) ॥*॥ द्वे 'क्षीराशयस्य' 'थन' इति ख्यातस्य ॥

समौ शिवककीलकौ ।

शिवकः, कीलकः (२ पु), 'गौओंको बांधनेके खूंटे' के २ नाम हैं।

शेति ॥ श्यति गात्रकण्डूम्, शेतेऽत्र वा । 'सर्वनीघृष्व—' ( उ० १।१५३ ) इति साधुः । स्वार्थे कन् ( ज्ञापि० ( ५।४।५ ) ॥ ( १ ) ॥*॥ कील्यते ( अत्र ) । 'कील बन्धे' ( भ्वा० प० से० )। 'हलश्च' (३।३।१२१) इति घञ् । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ ( २ ) ॥*॥ द्वे 'पशुबन्धनकाष्ठस्य' 'खूटा' इत्याख्यस्य ।

न पुंसि दाम संदानम्

दाम (न स्त्री), सन्दानम् (न), 'पगहा' के २ नाम हैं।

नेति ॥ द्यति । 'दो अवखण्डने'। दीयते वा, अनेन वा । 'देङ् रक्षणे' ( भ्वा० आ० अ० ) । मनिन् ( उ० ४।१४५ ) ॥ ( १ ) ॥*॥ सदीयते । संपूर्वो दाण् बन्धने । ल्युट् ( ३।३।११५ ) ॥ ( २ ) ॥*॥ द्वे 'दोहनकाले पादबन्धनरज्जो' ।

पशुरज्जुस्तु दामनी ॥ ७३ ॥

पशुरज्जुः, दामनी (२ स्त्री), 'पशुओंके छान' अर्थात् 'पैर बांधनेकी रस्सी' के २ नाम हैं।

पेति ॥ पशुबन्धनी रज्जुः । शाकपार्थिवादि ( वा० २।१।७८ ) ॥ ( १ ) ॥*॥ दामेव । प्रज्ञाद्यण् ( ५।४।३८ ) 'अन्' ( ६।४।१६७ ) इति प्रकृतिभाव । 'टिड्ढा—' ( ४।१।१५ ) इति ङीप् । 'नित्यं संज्ञाच्छन्दसोः' ( ४।१।२९ ) इति ङीप् वा ॥*॥—'बन्धनी'—इति पाठ'—इति कश्चित् ॥ ( २ ) ॥*॥ द्वे 'पशुबन्धनरज्जोः' 'पगहा' इत्याख्याया रज्ज्वाः ।



वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।

वैशाखः, मन्थः, मन्थानः, मन्थाः, मन्थदण्डकः (५ पु), 'मथनीके डण्डे' के ५ नाम हैं।

वायिति ॥ विशाखा प्रयोजनमस्य । 'विशाखाषाढात्—' (५।१।११०)। 'वैशाखो मासभेदेपि मन्थाने च प्रकीर्तितः' ।' (इति मे० २०।१२)॥ (१) ॥*॥ मथ्यतेऽनेन । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'मन्थो रवौ मथि । सक्तवे नेत्ररोगे च' [ इति हैम २।२२२-२२३ ] ॥ (२) ॥*॥ मन्थति । बाहुलकादानच् । ताच्छील्ये चानश् ( ३।२।१२९) वा । मुकुटेन तु—'परमे कित्' इत्यनुवृत्तौ 'मन्थः' (उ० ४।११) इत्यनेनान'—इत्युक्तम् । तन्न । अनेनेतेर्विधानात् । आनस्याविधानात् । यदपि—मन्थे शानचि मन्थान., इति स्वामी—इत्युक्तम्, तदपि न । मन्थे परस्मैपदित्वात् । आत्मनेपदिभ्यः शानचो विधानात् । मुक्प्रसङ्गाच्चानशपि न । आगमशास्त्रस्यानित्यत्वं वा बोध्यम् ॥ ( ३ ) ॥*॥ मथ्यतेऽनेन । 'मन्थ.' ( उ० ४।११ ) इतीनि कित् । यत्तु—'पथिमथिभ्यामिन्'—इति मुकुटेनोक्तम् । तदपाणिनीयम् ॥ (४) ॥*॥ मन्थस्य दण्डः ॥ (२) ॥*॥ पञ्च 'मन्थनदण्डस्य' ।

कुठरो दण्डविष्कम्भे

कुठरः, दण्डविष्कम्भः (२ पु), 'जिसमें मथनीके डण्डेको बांधकर दही महा जाता है उस खम्भे आदि' के २ नाम हैं।

किनि ॥ कुठति । 'कुठ गतिप्रतिघाते' ( ) । बाहुलकात्करन् ।—'कुठश्च' इत्यर — इति मुकुटस्त्वपाणिनीयः ॥*॥ 'कुटर.' इति पाठे तु—'कुट कौटिल्ये' (तु० प०से०)। बाहुलकादर. ॥ ( १ ) ॥*॥ दण्ड विष्कभ्नाति । 'स्कम्भु रोधने' सौत्र [ ३।१।८२ ] । 'कर्मण्यण्' ( ३।२।१ ) । 'वे. स्कभ्नातेर्नित्यम्' ( ८।३।७७ ) इति षत्वम् ॥ (१) ॥*॥ द्वे 'मन्थबन्धनकाष्ठस्य' । गर्गरीमुखस्य वा । 'मन्थदण्डधारककाष्ठस्य' वा ।

मन्थनी गर्गरी समे ॥ ७४ ॥

मन्थनी, गर्गरी (२ स्त्री), 'कहतरी' अर्थात् 'जिसमें दही को महा जाता है उस पात्र' के २ नाम हैं।

मेति ॥ मथ्यतेऽस्याम् । 'करणा—' ( ३।३।११७ ) इति ल्युट् ॥ ( १ ) ॥*॥ 'गर्ग' इति शब्दं राति । 'आत — ( ३।२।३ ) इति क । गौरादि ( ४।१।४१ )। गिरति वा । 'गृ निगरणे' ( तु० प० से० ) । बाहुलकाद्गरट् ॥ ( २ ) ॥*॥ द्वे 'मन्थनपात्रस्य' ।

उष्ट्रे क्रमेलकमयमहाङ्गाः

उष्ट्रः, क्रमेलकः, मयः, महाङ्गः (४ पु),'ऊंट'के ४नाम हैं।

विति ॥ ओषति, उष्यते वा । 'उष दाहे' ( भ्वा० प० से० ) । ष्ट्रन् ( उ० ४।१५९ ) । 'सञ्जापूर्वकत्वादगुणाभाव ।—'उषिसूभूभ्य कित्' इति ष्ट्रन्—इति मुकुटस्स्वपाणिनीय ॥ ( १ ) ॥ * ॥ क्रामति । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । विच् ( ३।२।७५ ) इलति । 'इल क्षेपे' (तु० प० से०) । एलयति । 'इल गतौ' (चु० प० से० ) । ण्वुल् ( ३।१।१३३ ) क्रम् चासावेलकश्च ॥ ( २ ) ॥ * ॥ मीनाति । 'मीञ् हिंसायाम्' ( क्र्या० उ० अ० ) । मयते । 'मय गतौ' ( भ्वा० आ० से० ) वा० । अच् ( ३।१।१३४ ) । ['मय' शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च' इति मे० ११६।४४ ] ॥ ( ३ ) ॥ * ॥ महान्त्यङ्गान्यस्य । 'अनेकम्–' ( २।२।२४ ) इति बहुव्रीहि ॥ ( ४ ) ॥ * ॥ चत्वारि 'उष्ट्रस्य' ।

करभः शिशुः ।

करभ० (पु), 'ऊँटके तीन वर्षतकके उम्रवाले बच्चे' का १ नाम है।

केति ॥ किरति, कीर्यते वा । 'कृशृशलि ( कलि ) गर्दिभ्योऽभच्' ( उ० ४।१२२ ) । करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' [ इति मे० १०७।१४ ] ॥ ( १ ) ॥ * ॥ एकम् 'उष्ट्रशिशो' ।

करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥

शृङ्खलकः (पु), 'लकड़ीकी बनी हुई सिकड़ीसे बांधे हुए ऊंटके बच्चे' का १ नाम है ।

केति ॥ 'शृङ्खलमस्य बन्धनं करभे' ( ५।२।७९ ) इति कन् ॥ (१) ॥ * ॥ एवं 'दारुविकारशृङ्खलाप्रायबन्धनयुक्तस्य करभस्य' ।

अजा छागी

अजा, छागी (२ स्त्री), 'बकरी, छेरु' के २ नाम हैं।

अजेति ॥ अजति । अज गतौ' ( भ्वा० प० से० )। पचाद्यच् ( ३।१।१३४ ) । 'अजाविभ्याम्–' ( ५।१।८ ) इति निर्देशान्न वी । 'अजाद्यतष्टाप्' ( ४।१।४ ) । 'अज पशो छागे हरे विष्णौ रघुजे वेधसि स्मरे'[इति हैम २।६६]॥ ( १ ) ॥ * ॥ छ्यति छ्यायते वा । छो छेदने' ( दि० प० से० ) । 'छापूखडिभ्य कित्' (उ० १।१२४) इति गन् । 'जाते–' (४।१।६३) इति ङीष् ॥ ( २ ) ॥*॥ द्वे 'अजायाः' ।

स्तभच्छागबस्तच्छगलका अजे ।

स्तभ , छाग', बस्त , छगलक , अज' ( ५ पु ), 'बकरा, खस्सी' के ५ नाम हैं।

स्तेति ॥ स्तभ्नोति । 'स्तम्भु रोधने' ( सौत्र ३।१।८२ ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) क । पचाद्यचि ( ३।१।१३४ ) तु नलोपो न स्यात् ॥ * ॥ 'तुभ' इति पाठे—'तोभते तुभ हिंसायाम्' ( भ्वा० आ० से० ) ॥ * ॥ 'शुभ' इति पाठे-'शुभ हिंसायाम्' (भ्वा० प० से० ) । 'इगुपध–' (३।१।१३५) इति क ॥ (१) ॥ * ॥ बस्तयति । 'बस्त अर्दने' ( चु० आ० से० ) चुरादि । अच् ( ३।१।१३४ ) ॥ ( ३ ) ॥ * ॥ छ्यायते । 'छो छेदने' (दि० प० अ०) 'छो गुक् ह्रस्वश्च' ( उ० १।११३ ) इत्यलच् । स्वार्थे कन् ॥ ( ४ ) ॥ * ॥ पञ्च 'अजस्य' ।

मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥

मेढ्र:, उरभ्र , उरण', ऊर्णायु , मेष', वृष्णि , एडक , (७ पु ), 'मेंढे' के ७ नाम हैं।

मयिति ॥ मेहति । 'मिह सेचने' (भ्वा० प० अ०)। ष्ट्रन् ( उ० ४।१४९ ) ॥ ( १ ) ॥ * ॥ उरु भ्रमति । 'भ्रमु चलने' ( भ्वा० प० से० )। 'अन्येभ्योऽपि–' (वा० ३।२।१०१ ) इति ड. । पृषोदरादि ( ६।३।१०९ ) । यद्वा—उरसा बाहुना रभ्यते । 'रभ राभस्ये' ( भ्वा० आ० अ० ) । बाहुलकाद्रक् ॥ ( २ ) ॥ * ॥ ऋच्छति, अर्यते वा । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'अर्ते वृ रुच' ( उ० ५।१७ ) इति क्युन् (वु ) ॥ (३) ॥*॥ ऊर्णा अस्य । 'ऊर्णाया युस्' ( ५।२।१२३ ) ॥ ( ४ ) ॥ * ॥ मिषति 'मिष स्पर्धायाम्' ( तु० प० से० ) । अच् ( ३।१।१३४ ) ॥ ( ५ ) ॥ * ॥ वर्षति । 'वृषु सेचने' ( भ्वा० प० से० ) । 'सृवृषिभ्यां कित्' ( उ० ४।४९ ) इति नि ।—'सृषिकेमिवृष्णिपार्ष्णिचूर्णय' इति नि —इति मुकुटस्स्वपाणिनीय ॥ ( ६ ) ॥ * ॥ इलति, एलयति वा । 'इल गतिक्षेपणयो' ( तु० प० से० ) । ण्वुल् ( ३।१।१३३ ) । डलयोरेकत्वम् ( ७ ) ॥ * ॥ सप्त मेषस्य' ।

उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।

औष्ट्रकम्, औरभ्रकम्, आजकम् ( ३ न ), 'ऊंटों, भेंडों और बकरोंके झुण्ड' का क्रमश १-१ नाम है।

विति ॥ उष्ट्राणाम् ( १ ), उरभ्राणाम् ( १ ), अजानाम् ( १ ), समूह । 'गोत्रोक्षो–'( ४।२।३९ ) इति वुञ् ॥ * ॥ प्रत्येकमेकैकम् 'उष्ट्रादिसमूहस्य ।

१ सि० कौ० 'उष्ट्र' इति लक्ष्यस्य 'उषिखनिभ्यां कित्' इत्यस्योदाहरणत्वात्तेनैवात्र सिद्धिरुचिता ।

१. 'प्रज्ञादित्वादण् । छागल अपि' इति धत्रैव सूत्रे भट्टो० ।

चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ॥ ७७ ॥

चक्रीवान्, वालेयः, रासभः, गर्दभः, खरः (५ पु), 'गदहे' के ५ नाम हैं।

चेति ॥ चक्रवद्भ्रमणं चक्रम्। तदस्यास्ति। मतुप् (५।२।९४)। 'आसन्दीवत्–' (८।२।१२) इति साधु ॥ (१) ॥ * ॥ वलय उपसंहाराय संहितः। 'छदिरुपधि–' (५।१।१३) इति ढञ्। वलेरपत्यम्। 'इतश्चानिञः' (४।१।१२२) इति ढक् वा। 'वालेयो गर्दभे पुंसि मृदौ वलि (बाल) हिते त्रिषु' [इति मे० ११९।५७]॥ (२) ॥ * ॥ रासते। 'रासृ शब्दे' (भ्वा० आ० से०)। 'रासिवल्लिभ्यां च' (उ० ३।१२५) इत्यभच् ॥ (३) ॥ * ॥ गर्दति। 'गर्द शब्दे' (भ्वा० प० से०)। 'कृशृशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२)। 'गर्दभ श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे, गर्दभी क्षुद्रजन्तुरोगप्रभेदयो' [इति 'विश्व, मे० १०७।१५-१६] ॥ (४) ॥ * ॥ खं मुखबिलमतिशयितमस्य। 'खमुख–' (वा० ५।२।१०७) इति र। 'खरो रक्षोन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च' इति हेमचन्द्रः ॥ (५) ॥ * ॥ पञ्च 'गर्दभस्य'।

वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥

वैदेहकः, सार्थवाहः, नैगमः, वाणिजः, वणिक्, पण्याजीव', आपणिक., क्रयविक्रयिकः (८ पु), 'बनियां, व्यापारी' के ८ नाम हैं।

वायिति ॥ विदेहेषु भवः, धूमादित्वात् (४।२।१२७) वुञ्। विदेग्धि वा। 'दिह उपचये' (अ० उ० अ०)। ण्वुल् (३।१।१३३)। प्रज्ञाद्यण् (५।४।३८)। 'वै निश्चितो देह उपचयो यस्य' इति वा। 'वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि[१] च।' इति [इति विश्व., मे० १९।२०५-हेमचन्द्री १७।२१६] ॥ (१) सार्थं वहन्ति। 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ निगमे भव। 'तत्र भव' (४।३।५३) इत्यण्। 'नैगम स्यादुपनिषद्वणिजो (नागरेऽपि च')' [इति विश्वः ११३।४२, मे० १११।४६] ॥ * ॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावे 'निगम.' अपि। 'निगमो वाणिजे पुर्याम् (कटे वेदे वणिक्पथे)' [इति विश्वः ११३।४२ मे० १११।४५] ॥ (३) ॥ * ॥ पणते। 'पण व्यवहारे स्तुतौ च' (भ्वा० आ० से०) 'पणेरिज्यादेश्च व' (उ० २।७०)। प्रज्ञाद्यण् (५।४।३८) ॥ (४) ॥ * ॥ 'वणिक् स्त्रियाम्। वणिज्यायां, पुमान् वाणिजके च करणान्तरे'[इति विश्व-[२], मे० ३१।२६] ॥ (५) ॥ * ॥ पण्यते। 'पण व्यवहारे' (भ्वा० आ० से०)। 'अवद्यपण्य–' (३।१।१०१) इति साधुः। पण्यमाजीवो यस्य ॥ (६) ॥ * ॥ आपणो व्यवहारोऽस्यास्ति। 'अत –' (५।२।११५) इति ठन् ॥ (७) ॥ * ॥ क्रयविक्रयाभ्यां जीवति। 'वस्नक्रयविक्रयाट्ठन्' (४।४।१३) (८) ॥ * ॥ अष्टौ 'क्रयविक्रयाभ्या वर्तमानस्य'।

विक्रेता स्याद्विक्रयिकः

विक्रेता, विक्रयिकः (२ पु), 'बेचनेवाले' के २ नाम हैं।

विति ॥ विक्रीणाति। 'डुक्रीञ् द्रव्यविनिमये' (क्र्या० उ० अ०)। तृच् (३।१।१३३) ॥ (१) ॥ * ॥ विक्रयेण जीवति। 'वस्नक्रयविक्रयाट्ठन्' (४।४।१३) ॥ (२) ॥ * ॥ द्वे 'वस्त्रपात्रादि दत्वा तन्मूल्यं गृह्णतः'।

क्रायकः क्रयिकः समौ।

क्रायकः, क्रयिकः (२ पु), 'खरीददार' के २ नाम हैं।

क्रेति ॥ क्रीणाति। ण्वुल् (३।१।१३३) ॥ (१) ॥ * ॥ क्रयेण जीवति। ठन् (४।४।१३) ॥ (२) ॥ * ॥ द्वे 'मूल्येन वस्त्रादि गृह्णत.'।

वाणिज्यं तु वणिज्या स्यात्

वाणिज्यम् (न), वणिज्या (स्त्री), 'व्यापार' के २ नाम हैं।

वेति ॥ वणिजा कर्म। ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ॥ (१) ॥ * ॥ 'दूतवणिग्भ्यां च[२]' इति य. ॥ (२) ॥ * ॥ द्वे 'वणिक्कर्मण व्यापार' इत्यस्य ॥

मूल्यं वस्नोऽप्यवक्रय. ॥ ७९ ॥

मूल्यम्, (न), वस्नः, अवक्रयः (२ पु), 'कीमत, दाम' के ३ नाम हैं॥

म्विति ॥ मूलेनानाम्यम्। 'नौवयो–' (४।४।९१) इति यत् ॥ (१) ॥ * ॥ वसत्यत्र। 'भावृवस्यज्यति-

---

१. विश्वे पुस्तकद्वयेऽपि 'गर्दभो गन्धभेदे स्याद्गर्दभं कैरवे खरे। गर्दभो, गर्दभी क्षुद्ररोगजन्तुप्रभेदयो. ॥' इति (१०९।३४-३५) इति पाठदर्शनपि 'मेदिनी' इत्येव पाठो युक्तः।

२. हैमे पुस्तकत्रये '—वणिजके वैश्यापुत्रे च शूद्रत.' (इति ४।३७) भिन्न. पाठः।

१ विश्वे 'वणिग्वाणिज्यजीविनि। वणिक्करणभेदे च वणिज्यायामपीष्यते।' इति पाठस्य विभिन्नतया 'मेदिनी' त्येवात्र पाठ्यम्।

२. भाष्ये तु 'दूतवणिग्भ्यां च' इति वार्तिकं नव लभ्यते।

भ्यो न' ( उ० ३।६ ) 'वस्न वस्त्रे धने मूल्ये भृतौ' इति हेमचन्द्र ( २।२८६ ) ॥ ( २ ) ॥ * ॥ अवक्रीयतेऽनेन। 'पुंसि–' ( ३।३।११८ ) इति घ — एरच्' ( ३।३।५६ )—इति मुकुट । तन्न । ल्युटा बाधात् ॥ ( ३ ) ॥ * ॥ त्रीणि 'विक्रेयवस्तुना मूल्यस्य'।

नीवी परिपणो मूलधनम्

नीवी (स्त्री), परिपण, मूलधनम् ( न ), 'व्यापारमें लगाये हुए मूलधन' के ३ नाम हैं।

नीति ॥ नितरामिन्वति । 'इवि प्रीणने' (भ्वा० प० से० ) । अनित्यमागमशासनम्' इति न नुम् । 'इगुपधात्कित्' ( उ० ४।१२० ) इनीन् । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् ।—'निपूर्वाद्व्येञो निरी च'' इति हि । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् । व्यो यलोप ' नेर्दीर्घ । नीवी— इत्याह मुकुट । 'नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे' [ इति हैम २।५४१ ५४२ ] ॥ ( १ ) ॥ * ॥ परिपण्यते वृद्ध्यर्थं प्रयुज्यते । 'पुंसि–' ( ३।३।११८ ) इति घ ॥ ( २ ) ॥ * ॥ मूलं च तद्धनं च ॥ (३) ॥ * ॥ त्रीणि 'क्रयविक्रयादिव्यवहारे यन्मूलधनं तस्य'।

लाभोऽधिकं फलम्।

लाभ ( पु ), अधिकम्, फलम्, ( २ न ), 'मुनाफा, फायदा, लाभ' के ३ नाम हैं।

लेति ॥ लभ्यते । 'डुलभष् प्राप्तौ'(भ्वा० आ० अ०)। 'अकर्तरि–' ( ३।३।१९ ) इति घञ् ॥ ( १ ) ॥ * ॥ अध्यारूढम् । अधिकम्' (५।२।७३) इति साधु ॥ (२) ॥ * ॥ फलति । 'फल निष्पत्तौ' ( भ्वा० प० से० )। अच् (३।१।१३४) । 'फल जातीफले सस्ये हेतूत्थे व्युष्टिलाभयो '। ( त्रिफलाया च कक्कोले, प्रियङ्गौ तु फली स्मृता )' [ इति [2]विश्व, मे० १४७।३३-३४ ]। फल हेतुकृते जातीफले फलकसस्ययो । त्रिफलाया च कक्कोल शस्त्राग्रे व्युष्टिलाभयो । फली फलिन्याम्' [ इति हैम. २।५१०-५११ ] ( ३ ) ॥ * ॥ त्रीणि 'अधिकफलस्य'।

१ सि० को० नौ व्यो यलोप पूर्वस्य च दीर्घ' (उ० ४।१३६) इत्यस्य 'नीवि, नीवी' इत्युदाहरणदर्शनादिद न समीचीनम्।

२ विश्वे 'फल हेतुसमुत्थे स्यात् फलके व्युष्टिलाभयो । जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि ॥' इति (३४१२-३) इति भिन्नपाठाद् विश्व 'इति पाठश्चिन्त्य ।

परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥

परिदानम् (न), परीवर्त्त, नैमेय, निमय ( ३ पु), 'किसी पदार्थको अदल बदल करने' के ४ नाम हैं।

पेति ॥ परिवृत्य दानम् ॥*॥ क्वचित् 'प्रतिदानम्' इति पाठ ॥ (१) ॥*॥ परिवर्तनम् । भावे घञ् (३।३।१८) । 'उपसर्गस्य–' (६।३।१२२) इति दीर्घ ॥ (२) ॥*॥ निमानम् । 'मेङ् प्रणिदाने' ( भ्वा० आ० अ० )। 'अचो यत्' (३।१।९७) । आत्वम् ( ६।१।४५ ) 'ईद्यति' (६।४।६५) । गुण (७।३।८४)। प्रज्ञाद्यण् ( ५।४।३८ ) च ॥ ( ३ ) ॥*॥ निमीयते । 'मीङ् हिंसायाम्' ( दि० आ० अ० ) । 'एरच्'' ( ३।३।५६ ) ॥ (४) ॥ * ॥ चत्वारि 'परिवर्तनस्य' 'अदलाबदला' इति ख्यातस्य।

पुमानुपनिधिर्न्यास.

उपनिधि., न्यास, (२ पु), थाती, धरोहर रखने' के २ नाम हैं।

प्विति ॥ उपनिधायते । 'डुधाञ्' (जु० उ०, अ०) 'उपसर्गे घो कि' ( ३।३।९२ ) ॥ ( १ ) ॥ * ॥ न्यस्यते । 'असु क्षेपणे' (दि० प० से०) । कर्मणि घञ् (३।३।१९) ॥ (२) ॥ * ॥ द्वे निक्षेपस्य' [ 'धरोहर' इति ख्यातस्य ]।

प्रतिदानं तदर्पणम्।

प्रतिदानम् (न), 'धरोहर (थाती) को वापस करने' का १ नाम है।

प्रेति ॥ प्रतीप दानम् ॥ (१) ॥ * ॥ तस्यार्पणम्॥ (२) ॥ * ॥ द्वे 'स्वामिने निक्षेपार्पणस्य'।

क्रये प्रसारितं क्रय्यम्

क्रय्यम् (त्रि), 'सौदा' अर्थात् 'ग्राहकोंको खरीदनेके लिये दूकानपर फैलाई हुई वस्तु' का १ नाम है।

क्रेति ॥ क्रीयते । 'अचो यत्' (३।१।९७)। गुण (७।३।८४) क्रय्यस्तदर्थे' (६।१।८२) इति साधु ॥ (१) ॥ * ॥ एक 'ग्राहका गृह्णीयुरिति बुद्ध्यापणे प्रसारितस्य' ['सौदा' इति ख्यातस्य]।

क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥

क्रेयम् (त्रि), 'खरीदने योग्य वस्तु' का १ नाम है।

क्रयिति ॥ (१) ॥*॥ एक हट्टे प्रसारणयोग्यस्य'।

१. 'निमीयते, मीङ् हिंसायाम् । एरच्' इति पाठ सर्वपुस्तकेषु न लभ्यते।

विक्रेयं पणितव्यं च पण्यं

**विक्रेयम्, पणितव्यम्, पण्यम् ( ३ त्रि ), 'बेचने योग्य वस्तु' के ३ नाम हैं।**

वीति ॥ विक्रीयते । 'अचो यत्' (३।१।९७) ॥ (१) ॥ * ॥ पण्यते । 'पण व्यवहारे' (भ्वा० आ० से०)। 'तव्यत्तव्यानीयर' (३।१।९६) ॥ (२) ॥ * ॥ 'अवद्यपण्य–' (३।१।१०१) इति साधु ॥ (३) ॥ * ॥ त्रीणि 'विक्रयक्रियाकर्मणः' ('विक्रेतुं योग्यस्य')।

क्रय्यादयस्त्रिषु ।

**क्रय्य आदि शब्द त्रिलिङ्ग हैं।**

क्रेति ॥ (पण्यान्ताः)।

क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥८२॥

**सत्यापनम् (क्ली न), सत्यङ्कारः (पु), सत्याकृतिः (स्त्री), 'साई, बयाना, एडवान्स, पेशगी' के ३ नाम हैं।**

क्लीति ॥ सत्यस्य करणम् । 'सत्यापपाश–' (३।१।२५) इति णिजापुकौ । भावे ल्युट् (३।३।११४)। 'सत्यापना सत्याकृतिः' इति स्त्रीकाण्डे बोपालितात् 'ण्यासश्रन्थ.' (३।३।१०७) इति युजपि ॥ (१) ॥ * ॥ घञ् (३।३।१८)। 'कारे सत्यागदस्य' (६।३।७०) इति मुम् ॥ (२) ॥ * ॥ क्तिन् (३।३।९४)। 'सत्यादशपथे' (५।४।६६) इति डाच् ॥ (३) ॥ * ॥ त्रीणि 'साई' 'बयाना' इति ख्यातायाः ।

विपणो विक्रयः

**विपणः, विक्रयः (२ पु), 'बेचने' के २ नाम हैं।**

वीति ॥ विपणनम् । घञ् (३।३।१८)। सञ्ज्ञापूर्वकत्वान्न वृद्धिः । 'स्तनो घच' (३।३।१२५) इति घो वा ॥ (१) ॥ * ॥ विक्रयणम् । 'एरच्' (३।३।५६) ॥ (२) ॥ * ॥ द्वे 'विक्रयक्रियायाः'।

संख्याः संख्येये ह्यादश त्रिषु[१]।

'एक, द्वौ, त्रयः, नवदश' भा० दी० के मतसे 'एक, दो, तीन, नवदश (उन्नीस) संख्या' का, और एकः, द्वौ, त्रयः, अष्टादश' महे० मुकु०, क्षी० स्वा० आदिके मतसे 'एक, दो तीन, अठारहतक संख्या' का वाचक क्रमशः १-१ शब्द है।

समिति ॥ दशन्ति, दशन्ते वा । 'दंश दशने' (भ्वा० प० अ०)। बाहुलकात्कनिन् । (आ दश) दशशब्दमभिव्याप्य । 'आङ् मर्यादाभिविध्योः' (२।१।१३)। 'नपुंसकात्–' (५।४।१०९) इति पक्षे टच् न । एकादिका नवदशपर्यन्ता संख्या संख्येये, त्रिलिङ्गाश्च । तेन 'एको विप्रः' इत्यादि भवति, न तु 'विप्रस्यैकः' इत्यादि ।

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः[१] ॥८३॥

**'एकोनविंशति', विंशतिः, परार्द्धम्' शब्दसंख्या (गिनती) और संख्येय (गिनी जानेवाली वस्तु) के अर्थमें प्रयुक्त होनेपर एकवचन ही होते हैं।**

वीति ॥ 'विंशति' इत्याद्या यासां ताः सख्याः सख्येयसंख्ययोर्वर्तन्ते । एकवचनान्ताश्च । यथा—'विंशतिर्गावः' 'गवां विंशतिः' इति ।

संख्यार्थे द्विबहुत्वे स्तः[२]

---

१. "एकाद्या दशान्ताः सख्याः संख्येये वर्तमानास्त्रिलिङ्गाः' एका शाटी, एक पटः, एकं कुण्डम्, दश स्त्रियः, दश पटाः दश कुण्डानि 'आदशे'स्यष्टादशान्ता.' इति स्वामी 'दश' शब्दश्रवणावधि ( अष्टादशावधि ) एकादिकाः संख्याः संख्येये द्रव्ये वर्तन्ते । 'हि' शब्दस्यावधारणतया सामानाधिकरण्येनैव तासां संख्यानां वृत्तिरिष्टा, न तु वैयधिकरण्येन । तस्मात् 'एकः पटः, दश पटाः' इत्येवमादय एव प्रयोगा भवन्ति, न तु 'एकः पटस्य' 'दश पटानाम्' इत्येवमादयोऽपीति मुकुटस्याशयः । वाचस्पत्ये तु "एकादिसंख्यावाचकस्य संख्या-संख्येयोभयपरता 'द्व्येकयोर्द्विवचनैकवचने' इति सूत्रस्थपातञ्जलभाष्ये उक्ता, तेन 'घटानां पञ्च' इत्यपि स्यात् । 'वार्ताकुरेका गुणसंयुक्ता' इत्यादिवैद्यके संख्यापरतया निर्देशोऽपि साधुः । किन्तु संख्यात्वजातावेव शक्तिः, संख्यायुक्ते निरूढलक्षणेति विवेकः।" ( पृ० ५२०२ ) इत्युक्तम् ।

१ विंशत्या सर्वा एव सख्या संख्येये संख्यायां च नित्यमेकवचनान्ता एव वर्तन्ते, यद् भाष्यम्—'आदशभ्यः संख्या संख्येये वर्तते, ऊर्ध्वं संख्याने संख्येये च; विंशतिः पटाः, विंशतिः पटानाम्, शतं गावः, शतं गवाम् । ( अत्र 'विंशति' शब्देनैकान्नविंशतिः, ( ऊनविंशति, एकोनविंशतिशब्दोऽपि ज्ञेयः ) क्षीरस्वामी । "तत्र एकादि" दशान्ताः शब्दास्त्रिलिङ्गाः, विंशत्याद्यास्तु नियतस्त्रीलिङ्गादिकाः ।

२ सदा (संख्या) वृत्तौ बहुवचनान्ता अपि, "पञ्चविंशतयः, षट् शतानि" इति वाच० ( पृष्ठ ५२०२ )। "आदशभ्यः संख्या संख्येये वर्तते ऊर्ध्वं संख्याने संख्येये च" इति भाष्याद् 'विंशतिर्घटाः, विंशतिर्घटानाम्; शतं गावः, शतं गवाम्' इति प्रयोगः । संख्यामात्रार्थे वर्तमानाया विंशत्यादेः संख्याया द्विवचनबहुवचने अपि स्तः (भवतः) एकशेषात् । 'द्वे विंशती, तिस्रो विंशतयः, गवां विंशतिः, गवां विंशतयः । विंशत्याद्या नवत्यन्ताः स्त्रीलिङ्गाः' इति क्षीरस्वामी । विशेषजिज्ञासुभिः 'पङ्क्तिविंशतित्रिंशत्–' ( ५।१।५९ ) इति सूत्रस्थभाष्यकैयटयोर्नागेशभट्टकृतोद्योतव्याख्या द्रष्टव्या ।

'एकोनविंशति', परार्द्धम्' शब्द संख्याके अर्थमें द्विवचन बहुवचन' भी होते हैं।

समिति ॥ विंशत्यादीनां यदा संख्यार्थ तदा द्विवचनबहुवचने अपि स्त । यथा—'द्वे विंशती, तिस्रो विंशतय' इति ।

तासु चानवतेः स्त्रियः ।

'विंशति, नवनवति' ('बीस निन्नानवे'तक संख्यावाचक) शब्द नित्य स्त्रीलिङ्ग हैं।

तेति ॥ तासु विंशत्यादिषु नवतिमभिव्याप्य स्त्रीलिङ्गा यथा—'विंशत्या पुरुषै कृतम्, विंशति कुण्डानि' इति ।

पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥

पंक्ति (स्त्री), शतम्, सहस्रम् (२ न), आदि का क्रमशः १-१ नाम है।

पेति ॥ द्वौ पञ्चतौ । 'पङ्क्तिविंशति–' (५।१।५९) इति साधु । 'पङ्क्तिर्दशाक्षरच्छन्दोदशसंख्यावलीषु च' इति विश्व ( ६२।६९ ) ॥ * ॥ पङ्क्तेर्दशगुणोत्तरं क्रमात् शतसहस्रादि ज्ञेयम् । यथा—'दश पङ्क्तयः शतम्, दश शतानि सहस्राण्ययुतम्' इत्यादि ।

यौतवं[2] द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।

यौतवम्, द्रुवयम्, पाय्यम्, मानम् ( ४ न ), 'मापना, तौलना, प्रमाण' के ४ नाम हैं।

यावेति ॥ यौतेर्वाहुलकात्कर्मणि कर्तरि वा तुन् योतु योधनम्, योधक वा । 'तस्येदम्' (४।३।१२०) ॥ * ॥ 'द्रौविकार.' । 'माने वय' (४।३।१६२) ॥ (२) ॥*॥ मीयतेऽनेन । 'माङ् माने' (दि० आ० अ०) । 'पाय्यसान्नाय्य–' (३।१।१२९) इति साधु ॥ (३) ॥ * ॥ मानमर्थो यस्य ॥ (४) ॥ * ॥ चत्वारि 'मानार्थस्य' ।

मानं तुलाङ्गुलिप्रस्थैः

मानभेदानाह—मानमिति ॥ तोल्यतेऽनया । 'तुल उन्माने' (चु० प० से०) । भिदादिङ् (३।३।१०४) । '–ग्रतुलोपमाभ्याम्–'(२।३।७२) इति निर्देशाद् गुणाभाव ।

गुञ्जाः पञ्चाद्यमाषकः ॥ ८५ ॥

आद्यमाषकः ( पु ), 'पांच गुञ्जा ( रत्ती )' अर्थात् 'एक आना भर' का १ नाम है।

स्विति ॥ मष्यतेऽनेन । 'मष हिंसायाम्' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । ('माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयो ' इति मेदिनी १६७।१२१) । कन् (ज्ञापि० ५।४।५) । आद्यश्चासौ माषश्च । शास्त्रीयत्वात् ॥ (१) ॥ * ॥ एकं 'माषकस्य' ।

ते षोडशाक्षः कर्षोऽस्त्री

अक्षः (पु), कर्षः ( पु न ), 'सोलह आद्यमाषक ( आना भर )' अर्थात् 'एक रुपया भर' के २ नाम हैं।

तमिति ॥ अक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० से०)। अच् (३।१।१३४) । 'अक्षो रथस्यावयवे व्यवहारे बिभीतके । सायके शकटे कर्षे ज्ञाने चात्मनि रावणी । अक्षं सौवर्चले तुत्थे हृषीके स्यात्' [ इति हेमचन्द्र २।५६९-५७० ] ॥ (१) ॥*॥ कर्षति । 'कृष विलेखने' ( भ्वा० प० अ० ) । अच् ( ३।१।१३४ ) । 'कर्षो ना कर्षणे मानप्रभेदे पुनपुंसकम्' [ इति मे० १६६।८ ] ॥ ( २ ) ॥ * ॥ द्वे 'कर्षस्य' ।

पलं कर्षचतुष्टयम् ।

पलम् (न), 'चार कर्ष (रुपया) भर' का १ नाम है।

पेति ॥ पलति । 'पल गतौ' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) 'पलमुन्मानमासयो ' [ इति हैम २।५०७ ] ॥ ( १ ) ॥*॥ कर्षाणां चतुष्टयम् ॥ (२) ॥ * ॥ द्वे 'पलस्य' ।

सुवर्णविस्तौ हेम्नोऽक्षे

सुवर्ण. (न), विस्तः (२ पु), 'एक मोहर' अर्थात् 'अस्सी रत्ती भर या १६ आने भर सुवर्ण' के २ नाम हैं।

स्विति ॥ शोभनो वर्ण स्तुति', वा यस्य । रुद्रस्तु 'सुवर्णं स्वर्णविस्तयो ' इति क्लीबमाह । 'सुवर्णो ना स्वर्णकर्षे सुवर्णा च मतान्तरे । स्त्री कृष्णागुरुणि क्लीबे काञ्चने

१ 'दशसंख्यावलीष्वपि' इति विश्वे पुस्तकद्वये पाठ । अत्र स्वामी—"यदाहु — एकदश–शतसहस्रायुत प्रयुतान्यलक्षमथ नियुतम् । अर्बुदकोटिन्यर्बुदपद्मं खर्वं निखर्वमिति दशभि ॥ गुणनान्महाब्जशङ्कू समुद्रमध्यान्तमथ परार्धं च । स्वहेतु परार्धमिति तत् स्वहतं पूर्वतं सख्या ॥' इति । प्रयुतसख्य लक्षमर्बुदसख्य कोटिरिति ।" इति ॥ अभिधानचिन्तामणौ यथोत्तर दशगुण भवेदेको दशायुतः । शत सहस्रमयुत लक्षप्रयुतकोटय ॥ अर्बुदमब्ज खर्वं च निखर्वं च महाम्बुजम् । शङ्कुर्वाधिरन्त्य मध्य परार्धं चेति नामत ॥' ( ३।५३७ ५३८ ) इति. एवदेवास्य स्वोपज्ञवृत्तावपि 'एक ''' तज्ज्ञा ।" इति वचनेनाह । विशेषजिज्ञासुभि- भास्करीय-लीलावती-चतुर्वर्गचिन्तामणेर्दानखण्ड ( १२८ म पृष्ठ ) द्रष्टव्यम् ।

२. हेमचन्द्रस्तु 'तुलाद्यं यौतव मान द्रुवय कुडवादिभि । पाय्य हस्तादिभि ' इति । अभि० चि० म० (३। ५३७ ) त्रयाणामपि मानाना भिन्नार्थतामाह ।

हरिचन्दने' [इति 'विश्वः। मे० ५१।८४-८५] ॥ (१) ॥ * ॥ विस्यते स्म। 'विस उत्सर्गे' (दि० प० से०)। क्तः (३।२।१०२)। आगमस्यानित्यत्वान्नेट् ॥ (२) ॥ * ॥ द्वे 'अक्षमानस्य'।

**कुरुविस्तस्तु तत्पले ॥ ८६ ॥**

कुरुविस्तः (पु), 'एक पल (चार मोहर भर या तीन सौ बीस रत्ती भर) सुवर्ण' का १ नाम है।

विसति ॥ कुरुषु विस्तः ॥ (१) ॥ * ॥ तस्य हेम्न. पले ॥ * ॥ एकम् 'अक्षपलस्य'।

**तुला स्त्रियां पलशतम्**

तुला (स्त्री), 'सौ पल' अर्थात् '४०० रुपया भर या नम्परी एक पसेरी भर' का १ नाम है।

टीति ॥ तोलयन्ति। 'तुल उन्माने' चुरादि। अच् (३।१।१३४)। '-अतुलोपमाभ्याम्-' (२।३।७२) इति निपातनाद् गुणाभाव.। णिजभावे तु 'इगुपध-' (३।१।१३५) इति क। 'तुला सादृश्यमानयो। गृहाणां दारुबन्धाय पीठिकायामपीष्यते। राशौ पलशते भाण्डे (तुलं स्यादब्रह्मदारुणि। आकाशे च पिचौ न स्त्री)' [इति विश्वः १५२।४०। हेमचन्द्र २।५०४-५०५, मेदिन्यौ १४६।२४-२६] ॥ (१) ॥*॥ पलानां शतम् ॥*॥ एकं 'तुलायाः'।

**भारः स्याद्विंशतिस्तुलाः।**

भारः (पु), 'बीस तुला' अर्थात् '२० पसेरी या ढाई मन' का १ नाम है।

भेति ॥ भ्रियते। 'भृञ् भरणे' (भ्वा० उ० अ०)। 'अकर्तरि च' (३।३।१९) इति घञ्। 'भारः सहस्रद्वितये पलानामपि वीवधे' इत्यजयः। 'भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके' (इति मेदिनी) ॥ * ॥ (ऋचादेर्दीर्घान्तात्) अपि (३।३।५७) भर ॥ (१) ॥ * ॥ एकं 'भारस्य'।

**आचितो दश भाराः स्युः**

आचितः (पु न), 'दश भार' अर्थात् '२५ मन' का १ नाम है।

आचीति ॥ आचीयते स्म। 'चिञ् चयने' (भ्वा० उ० अ०)। क्त (३।२।१०२)। 'भारैर्दशभिराचितिः' इति रत्नकोष। 'आचितः शकटोन्मेये पलानामयुतद्वये' [इति विश्व- ६२।७६-७७, मे० ६०।८९-९०] ॥ (१) ॥ * ॥ एकम् 'आचितस्य'।

**शाकटो भार आचितः ॥८७॥**

शेति ॥ शकटेन उह्यते। 'शेते' (४।२।९२) इत्यण् ॥ (१) ॥ * ॥ एकम् 'आचितभारस्य'।

**कार्षापणः कार्षिकः स्यात्**

कार्षापणः, कार्षिकः (२ पु), 'रुपये' के २ नाम हैं।

केति ॥ कर्षस्यायम्। 'तस्येदम्' (४।३।१२०) इत्यण्। आपणनम् 'पण व्यवहारार्थे'(भ्वा० आ० से०)। 'नित्य पण –' (३।३।६६) इत्यप्, 'खनो घ च' (३।३।१२५)इति घो वा। कार्षस्य कार्षेण वा आपण.। कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च' [इति मे० ५१।९३] ॥ (१) ॥ * ॥ कर्षस्यायम्। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ् ॥ (२) ॥ * ॥ द्वे 'रजतरूप्यस्य'।

**कार्षिके ताम्रिके पणः।**

पणः (पु), 'पैसे' का १ नाम है।

केति ॥ ताम्रस्यायम्। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ् ॥ * ॥ पण्यतेऽनेन। 'पण व्यवहारार्थे' (भ्वा० आ० से०)। नित्य पण.-' (३।३।६६) इत्यप्। 'पुंसि-' (३।३।११८) इति घो वा। 'हलश्च' (३।३।१२१) घञ् वा। सज्ञापूर्वकत्वाद्वृद्ध्यभावः। 'पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्रहे। क्रय्यशाकादिके [1]द्यूते व्यवहारे भृतौ धने' [इति विश्वः, ४७।१-२ मेदिनी] ॥ (१) ॥ * ॥ एक 'ताम्रकृतकार्षापणस्य' तुलामानमुक्तम्।

अंगुलिमानं च हस्तादिनृवर्गे (अ० २।६।८६-८७) उक्तम्।

---

१. विश्वे तु 'सुवर्णं स्वर्णमात्रे स्यात्सुवर्णे कर्षविस्तयोः। सुवर्णश्च, सुवर्णालुकृष्णागुरुप्रभान्तरे ॥' इति (५२।६६-६७) भिन्नपाठादत्र 'मेदिनी' इत्ययमेव पाठो युक्तः।

२. विश्वे पुस्तकद्वये 'तुला पलशते राशौ भाण्डे स्याद् दृश्यमानयो.। गृहाणां दारुबद्धाया पीठिकायामपीष्यते ॥' इत्येवमग्रतो भिन्न. पाठः। हैमे 'क' पुस्तके 'तुला माने पलशते सादृश्ये राशिभाण्डयो। गृहाणां दारुबन्धाय पीठ्याम्' इत्यस्यानन्तरं 'तूलं तु खे पिचौ। ब्रह्मदारुणि' इति पाठो न प्रकृतोपयोगी, 'तूल' शब्दार्थकत्वात्। मेदिन्यामपि '—तूलं''''''स्त्री' इति पाठेन कोष्ठमध्यगतोंऽशस्तूलार्थकत्वादेव प्रकृतानुपयुक्तः।

१. विश्वे '—ग्लहे। क्रय्यशाकटिकद्यूतव्यव–' इति। मेदिन्या च '—ग्लहे। क्रय्यशाकटिकाद्यूतव्यव—' इति पाठो।

प्रस्थमान त्वाह—

अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ॥ ८८ ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।

आढक, द्रोण (२ पु न), खारी (स्त्री), वाह, निकुञ्चक, कुडव, प्रस्थ ( ४ पु ), इत्यादि 'आढक आदि तौल विशेष' का क्रमशः १-१ नाम है।

आढौकते ॥ आढौक्यते । 'ढौकृ गतौ' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । पृषोदरादि ( ६।३। १०९ ) । 'आढकी च तुवर्यां स्त्री परिमाणान्तरे त्रिषु' [ इति मे० ५।४८ ] ॥ ( १ ) ॥ * ॥ एक ( सर्वतो द्रवत्युत्तिमानस्य ) । द्रवति । 'द्रु गतौ' (भ्वा० प० से०)। 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' ( उ० ३।१० ) इति न । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रिया काष्ठाम्बुवाहिन्या गवादिन्यामपीष्यते' [ इति 'विश्व । म० ४६।१७ १८ ] ॥ ( १ ) ॥ * ॥ खमाराति । मृगयिमृजादि ( वा० ३।२।५ ) । गौरादि ( ४।१।४१ ) ॥ ( १ ) ॥ * ॥ उह्यतेऽनेन । 'वह प्रापणे' ( भ्वा० उ० अ० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'वाहोऽश्वमानयोः । वृषे, बाहा तु बाहौ स्यात्' [ इति हेमचन्द्र २।६१५ ]॥ ( १ ) ॥ * ॥ निकुञ्चति । 'कुञ्च कौटिल्ये' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ ( १ ) ॥ * ॥ कुण्डयते, कुण्डते वा । कुडि दाहे' ( भ्वा० आ० से० ) । बाहुलकात् कवप्रत्ययः । अनित्यत्वान्न नुम् ॥ * ॥ 'कुडप' इत्यपि पाठः—इति मुकुटः । तत्र 'कुट कौटिल्ये' ( तु० प० से० ) । कुटे कपन् ( उ० ३।१४२ ) ॥ (१) ॥ * ॥ प्रस्थी यतेऽनेन । 'पलर्पे क' ( वा० ३।३।५८ ) । 'प्रस्थोऽस्त्रियां मानभेदे सानावत्युच्चवस्तुनि'[२] ( इति मेदिनी ७२।९ ) ॥ ( १ ) ॥ * ॥ आद्यर्थेन मानीमपिकाप्रवर्तिकादिग्रहः । 'वाहो विंशतिखारीभिर्मानिका स्यादनेन तु । प्रसृतं पञ्चखारीभिः सप्तमाने प्रकीर्तितः 'पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थः प्रस्थाः प्रस्थमथाढकम् । अष्टाढको भवेद्द्रोणो द्विद्रोणं शूर्पमुच्यते । सार्धशूर्पो भवेत्खारी द्विद्रोणा गोण्युदाहृता । तामेव भारं जानीयाद्वाहो भारचतुष्टयम्' ( ) ॥ * ॥ 'परिमाणानाम्' पृथगेकैकम् ।

पादस्तुरीयो भागः स्यात्

पाद (पु), 'चौथाई भाग' का १ नाम है।

पेनि ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'पदरुज—' ( ३।३।१६ ) इति घञ् । '( पद शब्दे च वाक्ये च व्यवसायप्रदेशयोः ) । पादतल्पिल्लयोः स्थानत्राणयोः रक्ष्वङ्घ्रस्तुनोः । श्लोकपादेऽद्रि च बरीषं, पुलिङ्ग किरणे पुन[२] । पादो वृक्षे तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' (इति मेदिनी) ॥ (१) ॥ * ॥ एकं 'चतुर्थभागस्य' ।

अंशभागौ तु वण्टके ॥ ८९ ॥

अंश, भाग, वण्टक ( ३ पु ), 'भाग, हिस्सा' के ३ नाम हैं।

अशेनि ॥ अश्यते । 'अंश विभाजने' ( ) अद त । कर्मणि घञ् ( ३।३।१९ ) ।—'अंशे दान्' इति स्वपाणिनीय । 'अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुन' [ इति हेमचन्द्र २।५२२ ] ॥ ( १ ) ॥ * ॥ भज्यते । 'भज सेवायाम्' ( भ्वा० उ० अ० ) । कर्मणि घञ् ( ३। ३।१९ ) 'भागो रूपार्धके भाग्यैकदेशयोः' ( इति हैम २।४० ) ॥ ( २ ) ॥ * ॥ वण्ट्यते 'वटि विभाजने' ( चु० प० से० ) । कर्मणि घञ् ।३।३।१९) स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ ( ३ ) ॥ * ॥ त्रीणि 'विभागस्य' ।

द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥

द्रव्यम्, वित्तम्, स्वापतेयम्, रिक्थम्, ऋक्थम्, धनम्, वसु, हिरण्यम्, द्रविणम्, द्युम्नम् ( १० न ), अर्थ, रा, विभव (३ पु), 'धन' के १३ नाम हैं।

द्रोति ॥ द्रविः । द्रव्यं च भव्ये' ( ५।३।१०४ ) इति साधु । द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः । विनये भेषजे रीत्याम्' [ इति हैम ३।३६८ ३६९ ] ( १ ) ॥ * ॥ विद्यते स्म । 'विद्लृ लाभे' ( तु० उ० अ० ) । वित्तो भोगप्रत्यययोः' ( ८।२।५८ ) इति साधु । 'वित्त

---

१ 'द्रोणः कृपीपतौ कृष्णकाके स्यादाढकेऽपि च ॥ आढवापचतुष्के च द्रोणी स्यान्नीवृदन्तरे । द्रोणी काष्ठाम्बुवाहिन्या गवां घासभुजि स्थितौ ॥' इति विश्वे ( ४८। ७ ८ ) भिन्नपाठादत्र मेदिनी इत्येव पठनीयमासीत् । मेदिन्या च '—स्यादाढवाप दग्धकाके स्त्री गवादन्या—' इति पाठः ।

२ 'नात्युन्नितवस्तुनि' इति मेदिनीपाठः ।

१ विशेषजिज्ञासवश्चतुर्वर्गचिन्तामणौ दानखण्डे ( पृ० १३०-१३१ ) पश्यन्तु ।

२ 'पदं पादं तच्चिन्ह-"स्तुनो ॥' इति, पादो मयूखे च' इति चाद्यौ विश्वेऽपि ( ७७।३, ७८।६ ) । पर 'पद' शब्दार्थकत्वान्न प्रकृतोपयोगी ।

क्लीबं धने, वाच्यलिङ्गं स्याते विचारिते' [इति मे० ५८।५८ ] ॥ (२) ॥ * ॥ स्वपतौ साधु । 'पथ्यतिथि-' (४।४।१०४) इति ढञ् ॥ (३) ॥ * ॥ रिच्यते । 'रिचिर् विरेचने' (रु० उ० अ०) । 'पातृतुदिवचिरिचि-' (उ० २।७) इति थक् ।—'ऋमिकाशि-' इत्यादिना थन्—इति मुकुटस्त्वपाणिनीयः ॥ (४) ॥*॥ ऋच्यते । 'ऋच् शब्दे' (तु० प० से०) । बाहुलकात् थन् ॥ (५) ॥ * ॥ धनति । 'धन धान्ये' (जु० प० से०) । अच् (३।१।१३४) । 'धनं तु गोधने वित्ते[1] [इति विश्व. ८५।१, मे० ८३।१२ ] ॥ (६) ॥ * ॥ वसति, उष्यते, वास्मिन् गुणी' । 'वस निवासे' (भ्वा० प० अ०) । 'शृस्वृस्निहि-' (उ० १।१०) इत्युः ।—'पद्यसिवसि-' इत्यादिना उ—इति मुकुटस्त्वपाणिनीयः । वस्ते, वस्यते वा । 'वस आच्छादने' (अ० आ० से०) उः । 'वसुर्मयूखाग्निधनाधिपेषु योक्त्रे सुरे स्याद्वसु हाटके च । वृद्ध्यौषधस्वानधनेषु[2] रत्ने वसु स्मृतं स्यान्मधुरेऽन्यवच्च' [इति विश्वप्रकाश १७४।१०] (७) ॥*॥ हर्यति । 'हर्य गतिकान्त्योः' (भ्वा० प० से०) । 'हर्यतेः कन्यन् हिर् च' (उ० ५।४४) ।—जिहीते भाग्यवन्तम् । 'ओहाङ् गतौ' (जु० आ० अ०) । 'हो हिर् च' इत्यन्यप्रत्ययो हिरादेशश्च—इति मुकुटस्त्वपाणिनीयः । 'हिरण्यं चे (रे) तसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे च स्यादकुप्ये नपुंसकम्' (इति मे० १२१।११४) ॥ (८) ॥ * ॥ द्रवति, द्रूयते वा । 'द्रु गतौ' (भ्वा० प० अ०) । 'द्रुदक्षिभ्यामिनन्' (उ० २।५०) 'द्रविणं न द्वयोर्वित्ते[3] काञ्चने च पराक्रमे' [इति विश्व. ५१।४४, मे० ४८।५१ ] ॥ (९) ॥ * ॥ दिवं मनति । 'म्ना अभ्यासे' (भ्वा० प० अ०) । 'आतोऽनुप-' (३।२।३) इति कः । 'द्युम्नं वित्ते बलेऽपि च' [इति हेमचन्द्र.[4], मे० ८३।११ ] ॥ (१०) ॥ * ॥ अर्थ्यते । 'अर्थ उपयाच्ञायाम्' (चु० आ० से०) । 'अकर्तरि-' (३।३।१९) इति घञ् । ऋच्छति, अर्यते वा । 'ऋ गतौ' (भ्वा० प० अ०) । 'उषिकुषिगार्तिभ्यस्थन्' (उ० २।४) 'अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने' [इति मे० ७२।२ ] ॥ (११) ॥ * ॥ राति सुखम्, रायते वा । 'रा आदने' (अ० प० अ०) । 'रातेर्डैः' (उ० २।६६) । 'रा द्वयोर्विभवे स्वर्णे' [इति रुद्र] ॥ (१२) ॥*॥ विभवति । अच् (३।१।१३४) । 'विभवो धननिर्वृत्योः' [इति हैम' ३।७५० ] ॥ (१३) ॥ * ॥ त्रयोदश 'द्रव्यस्य' ।

**स्यात्कोषश्च हिरण्यं च हेमरूप्ये कृताकृते ।**

कोशः (पु), हिरण्यम् (न), 'सोना-चांदी' अर्थात् 'सिक्का बने हुये और बिना सिक्का बने हुये सोना-चांदीमात्र' के २ नाम हैं।

स्येति ॥ कुष्यते । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'अकर्तरि-' (३।३।१९) इति घञ् ॥ * ॥ कुश्यते । कुश संश्लेषणे' ( ) 'तालव्या मूर्धन्याश्चैते' इत्यधिकारे 'कोशविशदौ च' इति शभेदः ॥ (१) ॥ * ॥ (२) ॥*॥ हेम च रूप्यं च । कृतं चाकृतं च । घटिताघटिते ॥*॥ द्वे 'घटिताघटितहेमरूप्ययोः' ।

**ताभ्यां यदन्यत्तत्कुप्यम्**

कुप्यम् (न), 'सोना-चांदीसे भिन्न तांबा आदि धातु' का १ नाम है।

तेति ॥ गुप्यते । 'गुपू रक्षणे' (भ्वा० प० से०) 'राजसूय-' (३।१।११४) इति साधु ॥ (१) ॥*॥ एकं (हेमरूप्याभ्यामन्यस्य) 'ताम्रादेर्धातोः' ।

**रूप्यं तद्द्वयमाहतम् ॥ ९१ ॥**

रूप्यम् (न), 'सिक्का बने हुये सोना, चांदी, तांबा, गिलट आदि' का १ नाम है।

रूप्यमिति ॥ 'आहतं तु मृषार्थके । गुणिते ताडिते चापि' [इति हैम. ३।२५८-२५९ ] आहतं रूपमस्य । 'रूपादाहतप्रशंसयोर्यप्' (५।२।१२०) ॥ (१) ॥*॥ एकम् 'आहतरूपस्य हेमरौप्यादेः' ।

**गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।**

गारुत्मतम्, मरकतम् (२ न), अश्मगर्भः हरिन्मणिः, (२ पु), 'पन्ना या मरकत मणि' के ४ नाम हैं।

मेति ॥ गरुत्मतो जातत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥ * ॥ मरकं तरन्त्यनेन 'तॄ प्लवनतरणयोः (भ्वा० प० से०) । 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः ॥ (२) ॥ * ॥ अश्मनो गर्भ ॥ (३) ॥ * ॥ हरिद्वर्णो मणि । शाकपार्थिवादिः (वा० २।१।७८) ॥ (४) ॥ * ॥ चत्वारि 'गारुत्मतस्य' ।

---

१. विश्वे 'धनं गोधनवित्तयोः' इति पाठः ।

२. विश्वे 'क' पुस्तके '—स्याद्वसुहट्टके च ।······ श्यामधनेषु—' इति 'ख' पुस्तके च '—पथ्यालधनेषु—' इति पाठभेदौ ।

३. 'द्रविणं काञ्चने वित्ते द्रविणं—' इति विश्वे पाठः ।

४ हैमे पुस्तकत्रयेऽपि 'द्युम्नं द्रविणवद्धनोजसोः' इति (२।२७१) इति भिन्नपाठादत्र 'मेदिनी'त्येव पाठ उचितः ।

शोणरत्नं लोहितकः पद्मरागः

शोणरत्नम् (न), लोहितकः, पद्मरागः (२ पु), 'पद्मराग मणि, लाल' के ३ नाम हैं।

शोणेति ॥ शोणं च तद्रत्नं च ॥ (१) ॥ * ॥ लोहितमेव । 'लोहितान्मणौ' (५।४।३०) इति कन् ॥ (२) ॥ * ॥ पद्मस्येव रागोऽस्य । 'अनेकमन्य-' (२।२।२४) इति समासः ॥ (३) ॥ * ॥ त्रीणि 'पद्मरागस्य'।

अथ मौक्तिकम् ॥ ९२ ॥

मुक्ता

मौक्तिकम् (न), मुक्ता (स्त्री), 'मोती' के २ नाम हैं।

अथेति ॥ मुक्तैव । 'विनयादिभ्यष्ठक्' (५।४।३४) ॥ (१) ॥ * ॥ मुच्यते स्म । 'मुच्लृ मोक्षणे' (तु० उ० अ०) क्तः (३।२।१०२)। 'मुक्ता मौक्तिकपुंभल्यो.' [ इति हैम २।१९१ ] ॥ (२) ॥ * ॥ द्वे 'मौक्तिकस्य'।

अथ विद्रुमः पुंसि प्रवालं पुनपुंसकम् ।

विद्रुम (पु), प्रवाल (पु न), 'मूँगे' के २ नाम हैं।

अथेति ॥ विशिष्टो द्रुम । यद्वा—विशिष्टे द्रौ भव । 'द्युद्रुभ्यां मः' (५।२।१०८)। 'विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्' [ इति मे० ११२।५३ ] ॥ (१) ॥ * ॥ प्रवलति । 'वल प्राणने' (भ्वा० प० से०)। 'ज्वलिति-' (३।१।१४०) इति णः । 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' [इति विश्व, मे० १५२।१०७]॥ (२) ॥ * ॥ द्वे 'प्रवालस्य' मूँगा' इत्याख्यस्य।

रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥

रत्नम् (न), मणि (पु स्त्री), 'रत्न, मणि' अर्थात् 'पन्ना, लाल, हीरा, मोती आदि जवाहरात' के २ नाम हैं।

रेति ॥ रमन्तेऽस्मिन् । 'रमु क्रीडायाम् (भ्वा० आ० अ०)। बाहुलकात् नः। तुक् (६।१।७१)। 'रत्नं स्वजातिश्रेष्ठे स्यान्मणौ' [ इति हैम २।२८३ ] ॥ (१) ॥ * ॥ मण्यते । 'मण शब्दे' (भ्वा० प० से०)। इन् (उ० ४।११८)। 'मणि स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च । कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च' [ इति 'विश्वः । मे० ४६।२३-२४ ] ॥ (२) ॥ * ॥ अश्मजातौ—मरकतादौ ॥ * ॥ द्वे रत्नस्य ।

१ विश्वे ग्रन्थद्वयेऽपि 'प्रवाले वल्लकीदण्डे विद्रुमे नवपल्लवे ।' इति (१५७।१०५) भिन्नपाठादत्र 'मेदिनी' इति पाठ एव समुचितः ।

२ विश्वे मथद्वये 'मणिर्मोले मेहनाग्रे रत्ने चाजागलस्तने ।' इति (४९।२२) भिन्नपाठादस्योपन्यासो नोचितः ।

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥

स्वर्णम्, सुवर्णम्, कनकम्, हिरण्यम्, हेम, हाटकम्, तपनीयम्, शातकुम्भम्, गाङ्गेयम्, भर्म, कर्बुरम्, चामीकरम्, जातरूपम्, महारजतम्, काञ्चनम्, रुक्मम्, कार्तस्वरम्, जाम्बूनदम् (१८ न), अष्टापद (पु न), 'सुवर्ण' के १९ नाम हैं।

स्वेति ॥ सुष्ठु ऋणोति । 'ऋणु गतौ' (त० उ० से०)। पचाद्यच् (३।१।१३४) यद्वा—अर्णनम्। घञ् (३।३।१८)। शोभनोऽर्णो गतिरनेन ॥ (१) ॥ * ॥ शोभनो वर्णोऽस्य । सुष्ठु वर्ण्यते या । 'वर्ण वर्णने' (चु० प० से०) ण्यन्त । 'एरच्'(३।३।५६)॥ (२) ॥ * ॥ कनति । 'कनी दीप्तौ' (भ्वा० प० से०) 'कृञादिभ्यः संज्ञायां वुन्' (उ०५।३५)। 'कनकं हेम्नि पुंमि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च' [ इति मे० ५।५३-५४ ] ॥ (३) ॥ * ॥ हिनोति, हीयते वा । 'हि गत्यादौ' (स्वा० प० अ०)। मनिन् (उ० ४।१४५) ॥ (५) ॥ (४) ॥ * ॥ हटति । 'हट दीप्तौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। हाटयति वा । क्वुन् (उ० २।३२) ॥ (६) ॥ तप्यतेऽनेन । 'तप सतापे' (भ्वा० प० अ०)। 'कृत्यल्युट–' (३।३।११३) इत्यनीयर् ॥ (७) ॥ * ॥ शातकुम्भे पर्वते भवम् । 'तत्र भव '(४।३।५३) इत्यण् ॥ * ॥ अनुशतिकादि (७।३।२०) ('शातकौम्भम्') इति तु स्वामी ॥ (८) ॥ * ॥ गङ्गाया अपत्यम् । शुभ्रादित्वात् (४।१।१२३) ढक । 'य गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्वं पर्वते न्यस्त हिरण्यं समपद्यत' इति वायुपुराणम् ( )। 'गाङ्गेयं स्यात्पुमान्भीष्मे क्लीबं स्वर्णकसेरुणो ' [ इति मे० ११८। ८१ ] ॥ (९) ॥ * ॥ बिभर्ति भरति वा । मनिन् (उ० ४।१४५)। [ 'भर्म स्यात्काञ्चने भृतौ' इति मे० ९०।९९ ] ॥ (१०) ॥ * ॥ कबरनेन । कब दर्पे' (भ्वा० प० से०)। मद्गुरादि (उ० १।४१)। 'कर्बुरं सलिले हेम्नि कर्बुरं पापरक्षसो । कर्बुरा कृष्णवृन्ताया शबले पुनरन्यवत्' [ इति विश्व १३९।१३६, मे०१]॥(११)॥ * ॥ चमीकरे आकरे भवम् । तत्र भव '

१ मेदिन्यां 'कर्बुरं स्यात्पुमान् धाटचां सुवर्णं तु नपुंसकम् ।' इति (१३२।१३२) इत्येव भिन्नपाठादत्र 'विश्व' इत्येव पाठ उचितः ।

( ४।३।५३ )इत्यण् । यद्वा—चमनम् । 'चमु अदने' (भ्वा० प० से० ) । 'इवजादिभ्यः' ( वा० ३।३।१०८ ) ।'—अनाचमेः' ( ७।३।३४ ) इति आडोऽविवक्षितत्वाद्वृद्धिः । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् । चमी करोति । कृञो हेतु–' ( ३।२।२० ) इति ट. ॥ (१२) ॥ * ॥ जातं रूपं यस्य । यद्वा—प्रशस्त जातम् । 'प्रशंसायां रूपप्' ( ५।३।६६ ) ॥ ( १३ ) ॥ * ॥ महच्च तद्रजतं च । 'सन्महत्–' ( २।१।६१ ) इति समास. । 'आन्महतः' ( ६।३।४६ ) इत्यात्वम् ॥ ( १४ ) ॥*॥ काञ्चति ( ते ) । 'काचि दीप्तौ' ( भ्वा० आ० से० ) । नन्द्यादित्यु. (३।१।१३४)—पृषोदरादि. (६।३।१०९)—इति मुकुटस्तु चिन्त्य. । 'काच' धातोरेव सत्त्वात् (१५) ॥*॥ रोचते । 'रुच दीप्तौ'(भ्वा० आ० से०)। 'युजिरुचितिजां कुश्च'(उ० १।१४६) इति मक् । 'रुक्म लोहे सुवर्णे च'( इति हेमचन्द्र २।३३९ ) ॥ ( १६ ) ॥*॥ कृतस्वरे आकरविशेषे भवम् । अण् ( ४।३।५३ ) । कृता. पठिता स्वरा येन । तस्मै देयम् । 'शेषे' ( ४।२।९२ ) इत्यण् ( १७ ) ॥ * ॥ जम्बूरसस्य नद्या भवम् । 'तत्र भवः' ( ४।३।५३ ) इत्यण् ॥ ( १८ ) ॥ * ॥ अष्टौ धातवः पदानि स्थानान्यस्य । 'अष्टनः संज्ञायाम्–' (६।३।१२५ ) इति दीर्घ. । यद्वा,—अष्टानामपदम् ॥ (१९) ॥ * ॥ एकोनविंशति. 'सुवर्णस्य' ।

अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः ।

शृङ्गीकनकम् ( १ न ) 'भूषण बने हुए सोने' का १ नाम है।

अलमिति ॥ अलंकारसंबन्धि सुवर्णम् ॥*॥ शृङ्गिणामी । शृङ्गी । कनति । 'कनी दीप्तौ'(भ्वा० प० से०)। वदुन् ( उ० २।३२ ) । 'शृङ्गी' इति पृथग् नाम वा । 'स्त्री शृङ्गी मण्डनसुवर्णम्' इति रत्नकोष. । 'भूषण कनकं शृङ्गी' इति नाममाला च । अल्प शृङ्ग प्राधान्य वा अस्या । गौरादि ( ४।१।४१ ) । 'स्त्री स्यात्काचिन्मृणाल्यादि' ( म० ३।५।७ ) । इति वचनात् ॥ (१) ॥*॥ एकम् 'अलंकारस्वर्णस्य' ।

दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥

दुर्वर्णम्, रजतम्, रूप्यम्, खर्जूरम्, श्वेतम् (५ न), 'चांदी' के ५ नाम हैं।

द्विति ॥ सुवर्णापेक्षया दुष्टो वर्णोऽस्य, अनेन वा । 'दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययो' [ इति मे० ४८।४३ ] ॥ ( १ ) ॥ * ॥ रजति, रज्यते वा । 'रञ्ज रागे' ( भ्वा० उ० अ० ) 'पृषिरञ्जिभ्या कित्' ( उ० ३।१११ ) इत्यतच् । 'रजतं त्रिषु शुक्ले स्यात्, क्लीबं हारे च दुर्वर्णे' ( इति 'विश्वः । मे० ६४।१४४ ) ॥ (२) ॥ * ॥ 'रूप रूपक्रियायाम्' ( चु० उ० से० )। ण्यन्तः । 'अचो यत्' ( ३।१।९७ ) । 'रूप्य. स्यात्सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम्' [इति विश्व. । मेदिनी ११६।५१-५२, हेमचन्द्रौ²] ॥ ( ३ ) ॥ * ॥ खर्जति । 'खर्ज व्यथने' ( भ्वा० प० से० ) । 'खर्जपिञ्जादिभ्यः ऊरोलचौ' ( उ० ४।१४० ) इत्यूरः । '_खर्जूर रूप्यफलयो. खर्जूर. कीटवृक्षयो.' [ इति हैम. ३।५८२ ] ॥ ( ४ ) ॥ * ॥ श्वेतते । 'श्विता वर्णे' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । 'श्वेतो द्वीपाद्रिभेदयो. । श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च । क्लीब रूप्येऽन्यवत्शुक्ले' [ इति मे० ५९।६७-६८ ] ॥ ( ५ ) ॥*॥ पञ्च 'रूप्यस्य' ।

रीतिः स्त्रियामारकूटो न स्त्रियाम्

रीतिः ( स्त्री ), आरकूटः (पु न), 'पीतल' के २ नाम हैं।

रीति ॥ रीयते । 'रीङ् क्षरणे' (दि० आ० अ०) । रिणाति वा । 'री गतिरेषणयो' ( क्र्या० प० अ० ) । 'स्त्रियां क्तिन्' (३।३।९४) । 'रीति. स्त्रिया स्यन्दप्रचारयो. । पित्तले.लोहकिट्टे च' [ इति मे० ५७।५१ ] ॥ ( १ ) ॥ * ॥ 'ऋ गतौ' ( भ्वा०.प०.अ० ) । भावे घञ् (३।३।१८) । आर कूटयते ॥ 'कूट दाहे' ( चु० उ० से० ) । अच् ( ३।१।१३४ ) । 'आरकूटोऽस्त्रियां द्रव्य रीतिस्तु रीतिकोमलम्' इति रभस ( २ ) ॥ * ॥ द्वे 'पित्तलस्य' ।

अथ ताम्रकम् ।

शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥

ताम्रकम्, शुल्बम्, म्लेच्छमुखम्, द्व्यष्टम्, वरिष्ठम्, उदुम्बरम् ( ६ न ), 'तांबा' के ६ नाम हैं।

अथेति ॥ ताम्यति, तम्यते वा । 'तमु काङ्क्षायाम्' ( दि० प० से० ) । 'अमितम्योर्दीर्घश्च' ( उ० २।१६ ) इति रक् । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ।—'तम्यमिचमा दीर्घश्च' इति रक्—इति मुकुटस्त्वपाणि

१. विश्वे 'रजतं विशदे दन्तिदन्तयोस्ताहारयो' इति ( ६३।८६ ) भिन्नपाठादत्र 'मेदिनी' ति पाठस्यैवोचितम् ।

२. 'रूप्यं स्यादाहते स्वर्णरजते रजतेऽपि च । रूप्यं प्रशस्तरूपे तु वाच्यवत् समुदीरितम् ॥' इति विश्वग्रन्थद्वये (११८।३८-३९) पाठस्य हैमे 'रूप्यमाहतहेमादौ रजते रूपवत्यपि' इति (२।३८३) पाठस्य भिन्नत्वादत्र 'मेदिनी' इत्येव पाठचमासीत् ।

नीय ॥ (१) ॥ * ॥ शलति । 'शल गतौ' ( भ्वा० प० से० ) । 'उल्वादयश्च'(उ० ४।९५)इति साधु। यद्वा—शुल्व-यति, शुल्व्यते वा । शुल्व माने' ( चु० प० से० ) । अच् ( ३।१।१३४ ) । घञ् ( ३।३।१९ ) । 'एरच्' ( ३।३।५६ ) वा । 'शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ' [ इति अन्तस्थपु हेमचन्द्र २।५५२ ] ॥ ( २ ) ॥*॥ म्लेच्छदेश मुखमुत्पत्तिरस्य । म्लेच्छस्य मुखमिव, इति वा । ( ३ ) ॥*॥ द्वे हेमरूप्य अद्भुत रम । 'अघु व्याप्तौ ( स्वा० आ० से० ) । 'गत्यर्था—' ( ३।४।७२ ) इति क्त. ॥ ( ४ ) ॥ * ॥ अतिशयेन वरम्, उरु, वा । अति-शायने इष्ठन् ( ५।३।५५ )। 'प्रियस्थिर—' (६।४।१५७) इत्युरोवर् । वरिष्ठ ताम्रके क्लीवम्' इति टवर्गद्वितीया-न्ते रुद्र । वरिष्ठं मरिचेऽपि च । ताम्रं क्लीवं तित्तिरौ ना वरोरुतममयोस्त्रिषु' [ इति 'विश्वः, मे० ३९।१५ ] ॥ ( ५ ) ॥ * ॥ उ शम्भु वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० ) । 'संज्ञायां भृतवृजि—' ( ३।२।४६ ) इति खच् । 'अरुर्द्विषत्—' ( ६।३।६७ ) इति मुम् । उत्कृष्टमु-म्बरम् । प्रादिसमास ( वा० २।२।१८ ) । 'उदुम्बरस्तु देहल्यां वृक्षभेद च पण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम्' [ इति मे० १४०।२४९-२५० ] ॥*॥ प्रज्ञाद्यण ( ५।४।३८ ) तु 'औदुम्बर भवेत्ताम्रे,फलादौ यज्ञशाखिन इत्यजय ॥ (६) ॥ * ॥ षट् 'ताम्रस्य' ।

लोहोऽस्त्री शस्त्रक तीक्ष्ण पिण्ड कालायसायसी ।
अश्मसारः

लोहः ( पु न ), शस्त्रकम्, तीक्ष्णम्, पिण्डम्, कालाय-सम्, अय. ( ५ न ), अश्मसार ( पु न ), 'लोहे' के ७ नाम हैं।

लोह इति ॥ लोहति, लुह्यते वा । लुह गार्ध्ये' ( ) । अच् ( ३।१।१३४ ) । घञ् ( ३।३।१९ ) वा । लूयतेऽनेन वा । 'लूञ् छेदने' ( क्र्या० उ० से० ) । बाहुलकाद् ह । रुह्यते, रोहति वा । 'रुह प्रादुर्भावे' ( भ्वा० प० अ० ) । घञ् ( ३।३।१९ ) । अच् ( ३।१।१३४ ) वा । कपिलिकादित्वात् ( वा० ८।२।१८ ) लत्वम् । 'लोहोऽस्त्री शस्त्रके लोह[२] जोङ्गक सर्वतैजसे'[इति मे० १७५।८ ] ॥ * ॥ प्रज्ञाद्यणि 'लौहम्' ॥ ( १ ) ॥*॥ शस्यतेऽनेन । 'शसु हिंसायाम्' (भ्वा० प० से०) । 'दाम्नीशस्—' ( ३।१।१८२ ) इति ष्ट्रन् । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ ( २ ) ॥ * ॥ तेजयति, तज्यते वा, अनेन वा । तिज निशाने' ( चु० प० से० ) । तिजे दीर्घश्च' (उ० ३।१८) इति क्स्न. । 'तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीव, 'यवाग्रके[१] पुंसि तिग्मात्म-त्यागिनोस्त्रिषु' [ इति मे० ४६।१५ ] ॥ ( ३ ) ॥*॥ पिण्डते, पिण्डयते वा । 'पिडि सघाते' (भ्वा० आ० से०)। अच् ( ३।१।१३४ ) । घञ् ( ३।३।१९ ) वा । 'पिण्डो बोले बले सान्द्रे देहागारैकदेशयो । देहमात्रे निवापे च गोल-सिह्लकयोरपि ॥ ओण्ड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवना यसो । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयो ' ( इति मे० ४१।१८-२० ) ॥ ( ४ ) ॥*॥ काल च तदयश्च । 'अनोश्मायः सरसाम्—' ( ५।४।९४ ) इति टच् ॥ (५) ॥ * ॥ एति, अयते वा । असुन् ( उ० ४।१८९ ) ॥ ( ६ ) ॥ * ॥ अश्मन. सार । 'अश्मसार च शस्त्रकम्' इत्यमरमाला ॥ ( ७ ) ॥ * ॥ सप्त 'लोहस्य' ।

अथ मण्डूर शिङ्घाणमपि तन्मले ॥ ९८ ॥

मण्डूरम्, शिंघाणम् ( २ न ), 'मण्डूर' अर्थात् 'लोहेकी मैल' के २ नाम हैं।

अथेति ॥ मण्डते ( ति ) । 'मडि भूषायाम्' ( भ्वा० प० से० ) । खर्जादित्वात् ( उ० ४।९० ) ऊरच् ॥ ( १ ) ॥ * ॥ शिङ्घ्यते । 'शिघि आघ्राणे' ( भ्वा० प० से०) । 'आणकौ लूधूशिङ्घिधाञ्भ्य ' (उ० ३।८३)। पृषोदरादि ( ६।३।१०९ ) । सिंहमाणयति वा । 'कर्म-ण्यण्' ( ३।२।१ ) । [*'शिङ्घाण काचपात्रे च लोहना-सिकयोर्मले' इति मे० ५१।८१ ] ॥ * ॥ 'सिंहानम्' इति पाठे—सिंहवदनिति । 'अन प्राणने' (अ० प० से०) । अच् ( ३।१।१३४ ) । सिंहमानयति वा । 'कर्मण्यण' ( ३।२।१ ) ॥ ( २ )॥ * ॥ तस्य लोहस्य मले ॥*॥ द्वे 'लोहकिट्टस्य' ।

सर्वं स्यात्तैजसं लोहम्

लोहम् (या तैजस न),'सब तरहके धातु (तैजस पदार्थ)' का १ नाम है।

सेति ॥ तेजसो विकार । 'तस्य विकार' ( ४।३।१३४) इत्यण् । यद्वा—तेजोऽस्त्यस्य । ज्योत्स्नाद्यण् (वा० ५।२।१०३ ) ॥ * ॥ एक 'सर्वधातुनाम्'।

विकारस्त्वयसः कुशी ।

कुशी ( स्त्री ), 'लोहेके बने हुए हथियार बर्तन आदि वस्तु या फार' का १ नाम है।

१. विश्वे पुस्तकद्वये 'वरिष्ठ- स्यादुरुतरे प्रवरे तित्तिरावपि । वरिष्ठं मरिचे ताम्रं' इति ( ४२।१२ ) भिन्नपाठादिह 'मेदिनी' इति पाठ उचित. ।

२ '—लोहे' इति मेदिनीपाठ ।

१ '—यवाग्रजे—' इति मेदिनीपाठ ।

वीति ॥ कुं भूमिं श्यति । 'शो तनूकरणे' (दि० प० अ० ) । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति ड । 'जानपद—' ( ४।१।४२ ) इति ङीप् 'कुशी फालेऽपि वल्गायां(कुशा, पापिष्ठमत्तयोः । कुशो वाच्यवदास्यात )' [ इति विश्व. १६७।२-३ ]। 'कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयो. । कुशी लोहविकारे स्यात् कुशा वल्गा कुशं जले' [ इति हैमः २।५५८ ] ॥ ( १ ) ॥ * ॥ एकम् 'अयोविकारस्य'।

क्षारः काचः

क्षारः, काचः ( २ पु ), 'काँच' के २ नाम हैं।

क्षेति ॥ क्षरति । 'क्षर संचलने' ( भ्वा० प० से० )। 'ज्वलिति-' ( ३।१।१४० ) इति णः । 'क्षार. काचे रसे गुडे । भस्मनि धूर्ते लवणे' [ इति हेमचन्द्र. २।४१३ ]॥ ( १ ) ॥ * ॥ कचते । 'कच बन्धने दीप्तौ च' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ )। प्रज्ञाद्यण् ( ५।४। ३८ ) काचयति वा । अच् ( ३।१।१३४ ) । 'काच शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे' [ इति [1]विश्व , मे० २७। २ ]॥ * ॥ द्वे 'काचस्य'।

अथ चपलो रसः सूतश्च पारदे ॥ ९९ ॥

चपलः, रसः, सूतः, पारदः ( ४ पु ), 'पारा' के ४ नाम हैं।

अतेति ॥ चोपति । 'चुप मन्दायां गतौ' ( भ्वा० प० से० ) । 'चुपेरच्चोपधायाः' (उ० १।१११) इति कल. । यद्वा—चपनम् । 'चप सान्त्वने' ( ) । ण्यन्त । 'एरच्' (३।३।५६)। चप लाति । 'ला आदाने' (अ० प० अ०)। कः (३।२।३) । 'चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे । मीने च चपला तु स्यात् पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्यामपि[2]' इति हेमचन्द्र [ ३।६८२-६८४ ] ॥ (१) ॥ * ॥ रस्यते । 'रस आस्वादने' चुरादिरदन्तः । 'एरच्' (३।३।५६) । रसयति धातून् वा । अच् (३।१।१३४) । 'रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ[3] तिक्तादौ पारदेऽपि च । रसा तु रसनापाठासल्लकीक्षितिकंगुषु' (इति हैम. ६००-६०१)॥

( २ ) ॥ * ॥ शिवेन सूयते स्म । 'षूङ् प्रसवे' (दि० आ० से०) । क्त. (३।२।१०२) । 'सूतस्तु सारथौ तक्षिण क्षत्रियाद् ब्राह्मणीसुते । वन्दिपारदयो पुंसि प्रसूते प्रेरिते [1]त्रिषु' [ इति विश्व. ५७।११, मेदिनी ५९।७३ ] ॥(३) ॥*॥ पारं ददाति । 'डुदाञ् दाने'(जु० उ० अ०) । 'आतोनुप-' ( ३।२।३ ) इति कः ॥ * ॥ 'पारते' इति पाठे-पारं तनोति । 'तनु विस्तारे' (त० उ० से०) । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति डः । 'रसेन्द्र. पारदः प्रोक्तः पारतोऽपि- निगद्यते' इति तारपालः । 'पारतस्तु मनाक्पाण्डु. सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृताः' इति शब्दार्णव. । ( ४ ) ॥ * ॥ चत्वारि 'पारदस्य'।

गवलं [2]माहिषं शृङ्गम्

गवलम् ( न ), 'भैंसे की सींग' का १ नाम है।

गेति ॥ गलति । 'गल भक्षणादौ' (भ्वा० प० से०)। अच् ( ३।१।१३४ ) । गवामलम् । यद्वा—गवनम् । 'गुङ् शब्दे' ( भ्वा० आ० अ० ) । 'ऋदोरप्' (३।३।५७) गव लाति । क. (३।२।३) ॥(१)॥*॥ एकं 'महिषशृङ्गस्य'।

अभ्रकं गिरिजामले[3]।

अभ्रकम्, गिरिजम्, अमलम्(३ न),'अभ्रक'के ३ नाम हैं।

अभ्रेति ॥ अभ्रति, अभ्र्यते वा । 'अभ्र गतौ' (भ्वा० प० से०) । क्वुन् (उ० २।३२) । अभ्रस्य प्रतिकृतिर्वा । 'इवे प्रतिकृतौ' ( ५।३।९६ ) इति कन् ॥ (१) ॥ * ॥ गिरौ जातम् । 'जनी प्रादुर्भावे' ( दि० आ० से० ) । 'सप्तम्यां जनेर्डः' ( ३।२।९७ ) । [ 'गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि, गिरिजा गौरीमातुलुङ्गयोश्च योषिति' इति मेदिनी ३१।२२-२३ ] ॥ (२) ॥ * ॥ अमति । 'अम गतौ' ( भ्वा० प० से० ) । वृषादित्वात् (उ० १।१०६) कलच् । न मलमस्य, इति वा । ('अमलं त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्मले त्रिषु' इति मेदिनी १४६।६० )। 'गिरिजं गिरिजाबीजममलं गवलध्वजम्' इति वाचस्पति. ॥ (३)॥*॥ त्रीणि 'अभ्रकस्य'।

---

१. 'काचस्तु मुनौ शिक्ये मृदन्तरे । नेत्ररोगेऽपि' इति (३०।१-२)भिन्नपाठादत्रापि 'मेदिनी'इति पाठ एवोचित ।

२. हैमे 'क' पुस्तके '—मीनेऽपि··· पुंश्चल्याम्' इति पाठः, 'ख-ग' पुस्तकद्वयेऽपि '—पुंश्चल्याम्' इत्येवं पाठ ॥

३. हैमे 'क' पुस्तके '—चोले रोगे देहधातौ—' इति, 'ख-ग' पुस्तकयोस्तु '—बोले रोगे देहधातौ—' इति पाठो ।

१. विश्वे पुस्तकद्वयेऽपि '—तक्षिण प्रसूते प्रेरितेऽपि च । क्षत्रियाद् ब्राह्मणीजेऽपि सूत. पारदवन्दिनो ॥' इत्येवमाधिक एव समान. पाठः ॥

२ 'महिष' शब्दपर्यायानुक्त्वा 'अरण्यजेऽस्मिन् गवलः' ( अभि-चि० म० ४।३४६ ) इत्युक्तया 'गवल' शब्दो वन्यमहिषस्यापि वाचक. ।

३. स्वामी तु 'गिरिजं च तदमल च' इति विगृह्य 'गिरिजामलम्' इत्येकं नामाह ।

**स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥**

स्रोतोञ्जनम्, सौवीरम्, कापोताञ्जनम्, यामुनम् (४ न), 'सुर्मा' के ४ नाम हैं।

स्रवतीति ॥ अज्यते नयनमनेन । 'अञ्जू व्यक्त्यादौ' (रु० प० से०) । करणे ल्युट् (३।३।११७) । स्रोतोजमञ्जनम् । शाकपार्थिवादि ( वा० २।१।७८ ) ॥ (१) ॥ * ॥ सुवीरे देशे भवम् । 'तत्र भवः' ( ४।३।५३ ) इत्यण् । 'सौवीरं काञ्जिके स्रोतोञ्जने च बदरीफले । ना तु नीवृति' इति [2]विश्वः (मेदिनी १४०।१३९) ॥(२) ॥ * ॥ कपोतस्येदम्, कपोतवर्णत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । कापोतं च तदञ्जनं च ॥ (३) ॥ * ॥ यमुनायां भवम् । अण् (४।३।५३)। यद्वा यमुनाया इदम्, तद्वच्छ्यामत्वात् ॥ (४) ॥ * ॥ चत्वारि 'सौवीराञ्जनस्य' 'सुर्मा' इति ख्यातस्य ।

**तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके।**

तुत्थाञ्जनम्, शिखिग्रीवम्, वितुन्नकम्, मयूरकम् (४ न), 'तूतिया' के ४ नाम हैं।

तवीति ॥ तुत्थयति, तुत्थ्यते वा । 'तुत्थ आवरणे' ( ) । पचाद्यच् ( ३।१।१३४ ) । 'एरच्' (३।३।५६) वा । तुत्थं च तदञ्जनं च ॥ ( १ ) ॥ * ॥ शिखिनो ग्रीवा । शिखिग्रीवाऽस्यास्ति । अर्शआद्यच् (५।२।१२७) । तद्वर्णत्वात् ॥ ( २ ) ॥ * ॥ वितुद्यते स्म । 'तुद व्यथने' ( तु० उ० अ० ) । क्त ( ३।२।१०२ ) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (३) ॥ * ॥ मयूरस्य प्रतिकृतिः । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । मयूरं कायति वा, सादृश्यात् । 'कै शब्दे' ( भ्वा० प० अ० ) । क (३।२।३) ॥ (४) ॥ * ॥ चत्वारि 'तुत्थाञ्जनस्य' 'तूतिया' इति ख्यातस्य ।

**कर्परी दार्विका क्वाथोद्भवं [3]तुत्थम्**

कर्परी, दार्विका ( २ स्त्री ), तुत्थम् ( न ), 'घिसकर तैयार किये हुये अञ्जन-विशेष' के ३ नाम हैं।

केति ॥ कल्पते । 'कृपू सामर्थ्ये (भ्वा० आ० से०) । बाहुलकादरट् लत्वाभावश्च ॥ (१) ॥ * ॥ दार्वी दारुहरिद्रा । तद्विकारोऽपि दार्वी, अभेदोपचारात् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ ( २ ) ॥ * ॥ तत्तुत्थं क्वाथोद्भवमावर्तितं सदुक्तपर्यायम् ॥ * ॥ तुत्थं चास्य नाम । 'तुत्थं स्यादमृतासङ्गं कर्परी तुत्थमित्यपि' इति रभसः ॥ (३) ॥ * ॥ त्रीणि 'आवर्तननिष्पन्नस्य रसाञ्जनभेदस्य ।

**रसाञ्जनम् ॥ १०१ ॥**

**रसगर्भं तार्क्ष्यशैलम्**

रसाञ्जनम्, रसगर्भम्, तार्क्ष्यशैलम् ( ३ न ), 'रसाञ्जन' अर्थात् 'नेत्रमें लगानेके अञ्जन-विशेष' के ३ नाम हैं।

रेति ॥ रसजमञ्जनम् । शाकपार्थिवादि (वा० २।१।७८) ॥ (१) ॥ * ॥ रसो गर्भेऽस्य ॥ ( २ ) ॥ * ॥ तार्क्ष्यशैले भवम् । अभेदोपचारात्—इति मुकुटः ॥ (३) ॥ * ॥ त्रीणि 'रसाञ्जनस्य' । स्वामी तु—तुत्थाञ्जनादि पञ्च पर्यायानुक्त्वा दार्विकाक्वाथोद्भवादिपञ्चकं रसवतीपर्यायानाह' ।

**गन्धाश्मनि तु गन्धक ।**

**सौगन्धिकश्च**

गन्धाश्मा, गन्धिक, सौगन्धिक ( ३ पु ), 'गन्धक' के ३ नाम हैं।

गेति ॥ गन्धयुक्तोऽश्मा । शाकपार्थिवादि (वा० २।१।७८) ॥ (१) ॥ * ॥ गन्धोऽस्यास्ति । अर्शआद्यच्

१ कस्मिन् पदार्थे किन्नामको गन्ध इति कथयन् वैजयन्तीकारः 'गन्धके' 'गन्धिक' नामको गन्धो भवतीत्याह तद्यथा—"मल्लिकायां स्थितो गन्धो मञ्जुल्या मञ्जुलश्च सः । जात्यां सौमनसो नागकेसरे गन्धसारणः । चम्पके सुरभिः, पद्मे वासन, कुटजे शुन ॥ कस्तूरिकायामामोद, कुङ्कुमे पलशोनक । परिहाव्यो मरुवक, पाटले तृणशोणक ॥ चन्दने चान्द्रिक, साले शोणो, गन्धिक उत्पले । केतके शोणित सर्जधूपे सरलशोणिक. ॥ बकुले स्याद् परिमलो, वलनोऽगरुधूपके । सहकारे सरलिको, गुग्गुलौ त्ववलोलुक ॥ कुन्दोपरालो मदवे, दुलो जम्बी ( रके स्थित )। मल्ल्या (स्थितस्तु) खवुक , कर्पूरे मुखवासन ॥ आज्ये घ्रामसनोऽशोके सुरव तिलके कुल । गात्रे गन्धो गन्धके [illegible] गन्धिक , पित्तले लस ॥ गुदवायौ तु दुर्गन्ध, विट्टे लोल, कफे घन । मत्स्यरवच्यामिषो, निम्बे तिक्तको, गोमुखे सणि ॥ उदरे देहलिर्गोविण्मूत्रयोर्मुर्मुरो । शुक्ले मांसिमेदे रूक्षो, मुनिते त्वग्वमेहल ॥ स्नेहदोषे मेचटिको भूषे स्थालिकवैणिको । विस्रो यकृति, पूये तु पूतिर्मूत्रे तु मेहल: ॥ दुष्टव्रणे तु कथितो, रुधिरे त्वाममासक । मन्त्रद्रव्य०दास्तवमी योज्या साम्याद् गन्धान्तरेष्वपि ॥" इति वैज० (पृ० १९९ श्लो० ४८-५८) ॥

१ '—व्यक्तिम्रक्षणकान्तिगतिषु' इति वाच्यम् ।

२ विश्वे 'सौवीरं बदरे स्रोतोञ्जने देशे च काञ्जिके ।' इति भिन्नपाठादत्र मेदिनी' इत्येव पाठ उचित ।

३ '—दार्विकाक्वाथोद्भवं तुत्थरसाञ्जनम्' इति, '—दार्विकाक्वाथोद्भवं तुत्थं रसाञ्जनम्' इति च क्रमेण क्षीरस्वामि-महेश्वर-सम्मतौ पाठौ ।

(५।२।१२७)। स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ * ॥ 'गन्धिक' इति पाठे—'अत इनिठनौ' (५।२।११५) इति ठन् ॥ (२) ॥ * ॥ शोभनो गन्धोऽस्य। विनयादित्वात् (५।४।३४) स्वार्थे ठक् ॥ * ॥ 'आमोदलेशयोर्गन्ध स सुगन्धः सुगन्धकः' इति रभसः ॥ ( ३ ) ॥ * ॥ त्रीणि 'रसाञ्जनस्य'।

चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ १०१ ॥

चक्षुष्या, कुलाली, कुलत्थिका ( ३ स्त्री ), 'काला सुर्मा' के ३ नाम हैं।

चेति ॥ चक्षुषे हिता। 'शरीरावयवाद्यत्' (५।१।६)। 'चक्षुष्यः केतके पुण्डरीकसञ्जकपादपे। कुलत्थिकासुभगयोः स्त्रियामक्षिहितेऽन्यवत्' (इति मेदिनी ११८।८२) ॥ (१) ॥ * ॥ कुलमलति। 'अल भूषणादौ' (भ्वा० प० से०)। —'कर्मण्यण्' ( ३।२।१ )। ङीप् (४।१।१५)। 'चक्षुष्या कुम्भकारी च कुलाली च कुलत्थिका' इति रत्नकोष.॥ (२)॥ * ॥ कुलत्थप्रतिकृतिः। 'इवे–' (५।३।९६) इति कन्। यद्वा–कुले तिष्ठति। 'सुपि–' (३।२।४) इति कः। स्वार्थे कन् ( ज्ञापि० ५।४।५ )। पृषोदरादिः (६।३। १०९) ॥ (३) ॥ * ॥ त्रीणि 'तुत्थविशेषस्य'।

रीतिपुष्पं पुष्पकेतु पौष्पकं कुसुमाञ्जनम्।

रीतिपुष्पम्, पुष्पकेतु, पुष्पकम्, कुसुमाञ्जनम् ( ४ न ), 'तपाये हुए पीतलसे निकली हुई मैलके द्वारा बनाये हुए सुर्मे' के ४ नाम हैं।

रीति ॥ रीतेः पित्तलस्य पुष्पमिव। तन्मलत्वात् ॥ (१) ॥ * ॥ पुष्पस्य केतुरिव। नाशकत्वात्। 'उदन्तनपुंसकेषु पुष्पकेतु कुसुमाञ्जनम्' इति रुद्र. ॥ (२) ॥*॥ पुष्पस्य प्रतिकृतिः। 'इवे–' (५।३।९६) इति कन्। तत स्वार्थेऽण् (५।४।३८) ॥ (३) ॥ * ॥ कुसुममिव, कुसुमनाशकं वा अञ्जनम् ॥ (४) ॥ * ॥ चत्वारि 'रीतिकाया क्ष्मा (ध्या) यमानाया आनस्य मलस्य'।

पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०२ ॥

पिञ्जरम्, पीतनम्, तालम्, आलम्, हरितालकम् (५ न), 'हरताल' के ५ नाम हैं।

पीति ॥ पिञ्जनम्। 'पिजि वर्णे' (अ० आ० से०)। घञ् (३।३।१८)। 'निष्ठायामनिट.—' (वा० ७।३।५३) इति वचनान्न कुत्वम्। पिञ्जं वर्णविशेषं राति। कः (३।२।३)। 'पिञ्जरोऽश्वान्तरे पीते क्लीबं स्वर्णे च पीतने' (१) ॥ * ॥ पीतं वर्णं नयते। 'णय गतौ' (भ्वा० आ० से०)। 'णीञ्' ( भ्वा० उ० अ० ) वा। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। 'पीतनं पीतदारुणि। कुंकुमे हरिताले च (पुमानाम्रातके मतः)' इति विश्व (मेदिनी) (२) ॥ * ॥ तालयति, तल्यते वा। 'तल प्रतिष्ठायाम्' ( चु० प० से० )। ण्यन्त.। अच् ( ३।१।१३४, ३।३। ५६ )। 'तालः कालक्रियामाने हस्तमानद्रुभेदयोः। करास्फोटे करतले हरिताले त्सरावपि' (इति हैम)। 'तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ ताली जटीपत्री। क्लीबं तु हरिताले स्यात्'[इति [1]विश्व १५०। १६-१७। मेदिनी १४६।२३-२४ ] ( ३ ) ॥ * ॥ आलयति। 'अल भूषणादौ' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। आलाति वा। 'ला आदाने' ( अ० प० अ० )। 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः। 'आलं स्यादनल्पहरितालयो.' इति हेमचन्द्र [२।४८६] ॥ (४) ॥ * ॥ हरिल वर्णमलाति। 'आतोऽनुप[2]–' ( ३।२।३ ) इति क। स्वार्थे कन् ( ज्ञापि० ५।४।५ )। 'हरितालमलं तालपर्णक नटभूषणम्' इति माधव.। 'हरिताले तु कर्बूरं गोदन्तो नटमण्डक.' इति त्रिकाण्डशेष. [२।९।३५]। (५) ॥ * ॥ पञ्च 'हरितालस्य'।

गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु।

गैरेयम्, अर्थ्यम्, गिरिजम्, अश्मजम्, शिलाजतु (५ न), 'शिलाजीत' के ५ नाम हैं।

गैरेयेति ॥ गिरौ भवम्। 'नद्यादिभ्यः' (४।२।९७) इति ढक् ॥ (१) ॥ * ॥ अर्थ्यते। 'अर्थ उपयाच्ञायाम्' ( चु० आ० से० ) ण्यन्त.। 'अचो यत्' ( ३।१।९७ )। अर्थादनपेतं वा। 'धर्मपथ्य–' ( ४।४।९२ ) इति यत्। 'अर्थ्यो विपश्चिति न्याय्ये त्रिष्वर्थ्यं तु शिलाजतु' इति यान्ते रुद्रः ॥ (२) ॥ * ॥ गिरेर्जातम्। 'जनी प्रादुर्भावे' (दि० आ० से०)। 'पञ्चम्यामजातौ' (३।२।९८)। इति डः। 'गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे। लोहेऽपि

---

१ विश्वे ग्रन्थद्वयेऽप्याद्यचरणत्रयानन्तरं '—तालः खड्गादिमुष्टिषु। द्रुमभेदे करास्फाले तालन्तु हरितालके ॥' इति पाठ। मेदिन्यां च '—करस्फाले—'इति पाठ. ॥

२. 'हरित वर्णमालाति' इति स्वकृतविग्रहे 'आङ्' इत्युपसर्गस्य सत्वेन अनुपसर्गे प्रवर्तमानेन 'आतोऽनुपसर्गे क.' इति सूत्रेण 'क' प्रत्ययोक्तिर्विरुद्धा, अत एव सि० कौ० तत्सूत्रोक्ता "अनुपसर्गे किम् ? गोसंदाय." इत्युक्ति संगता, तस्मादत्र कर्मण्यण् इत्यण् प्रत्यय उचितः। स्वामी तु "हरेः पीतवर्णस्य तालः प्रतिष्ठाऽस्मिन्, हरितालम्।······"इत्युक्तवान् ॥

गिरिजा गौरीमातलुङ्ग्योश्च योषिति' ( इति मेदिनी ३१। २३-२४ ) ॥ ( ३ ) ॥ * ॥ अश्मनो जातम् ॥ (४) ॥ * ॥ शिलाया जातेव। पष्ठीतत्पुरुष ॥ (५) ॥*॥ पञ्च 'शिलाजतुन'।

बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥

बोल, गन्धरस, प्राण, पिण्ड, गोपरस (५ पु), 'गन्धरस' के ५ नाम हैं।

बोलेति ॥ बोलयति। 'बुल मज्जने' (चु० प० से०) अच् (३।१।१३४)। वाति वा। 'वा गतिगन्धनयो' (अ० प० अ०)। पिञ्जादित्वात् (उ० ४।९०) कलच् ॥ (१) ॥ * ॥ गन्धवान् रसोऽस्य ॥ * ॥ राजदन्तादित्वात् ( २।२।३१ ) 'रसगन्ध' अपि—इति स्वामी ॥ ( २ ) ॥ * ॥ प्राणिति, अनेन वा। 'अन प्राणने' (अ० प० से०)। अच् (३।१।१३४)। 'हलश्च' (३।३।१२१) इति घञ् वा। 'प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुलिङ्ग पूरिते वाच्यलिङ्गः पुम्भूम्नि चासुषु' (इति मेदिनी ४६।२१) ॥ ( ३ ) ॥ * ॥ पिण्डते। 'पिडि सघाते (भ्वा० आ० से०)। 'अच् (३।१।१३४)। 'पिण्डो बृन्दो जपापुष्पे गोले बोलेऽङ्ग सिल्हयो। बवले पिण्ड तु वेश्मैकदेशे जीवनायसो। बले सान्द्रे पिण्ड्यलाबूखर्जूर्योस्तगरेऽपि च' [ इति हेमचन्द्र १२।१२५ ] ॥ (४) ॥ * ॥ गा जल स्यति। 'पोऽन्तकर्मणि' ( दि० प० अ० )। 'आतोऽनुप—' (३।२।३) इति क। गोस —इति मुकुट ॥ * ॥ 'गोप' इति स्वामी। गोर्जलात् पाति। 'पा रक्षणे' (अ० प० अ०)। 'सुपि—' ( ३।२।४ ) इति क ॥ (५) ॥ * ॥ रसयति, रस्यते, अनेन वा। 'रस आस्वादने' (चु० उ० से०)। अच् (३।१।१३४) ॥ * ॥ गोपे उत्पत्तौ रसोऽस्य 'गोपरस' इति समस्तमपि—इति स्वामी ॥ (६) ॥*॥ षट् 'गन्धरसस्य' 'बोर' इति ख्यातस्य।

हिण्डीरोऽब्धिकफः फेनः

हिण्डीर, अब्धिकफ, फेन (३ पु), 'समुद्रफेन' के ३ नाम हैं।

हीति ॥ 'हिण्डि' इति 'हिण्डी इति वा शब्दमीरयति। ईर गतौ कम्पने च' ( अ० आ० से० )। अच् ( ३।३।१३४ )। अण् ( ३।२।१ ) वा। हादि ॥*॥ ( 'डिण्डीर' इति ) डादिर्वा पाठ ॥ ( १ ) ॥ * ॥ अब्धे कफ इव ॥ ( २ ) ॥ * ॥ स्फायते। स्फायी वृद्धौ' ( भ्वा० आ० से० )। 'फेनमीनौ' ( उ० ३।३। ) इति साधु ॥ ( ३ ) ॥ * ॥ त्रीणि 'समुद्रफेनस्य'।

सिन्दूरं नागसम्भवम्।

सिन्दूरम्, नागसम्भवम् (२ न), 'सिन्दूर'के २ नाम हैं।

सीति ॥ स्यन्दते। 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० )। 'स्यन्देः सम्प्रसारणं च' ( उ० १।६८ ) इत्यूरन्।—'खर्जादित्वादूर' बाहुलकात्सम्प्रसारणं च—इति मुकुटोऽपाणिनीय। 'सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके। सिन्दूरी रोचनारक्तचेलिकाधातकीषु च' [ इति मे० १३९।२३६ ] ॥ ( १ ) ॥ * ॥ नागं सीसं सम्भव ( उत्पत्तिस्थानम् ) अस्य ॥ ( २ ) ॥ द्वे 'सिन्दूरस्य'।

नागसीसकयोगेष्टवप्राणि

नागम्, सीसकम्, योगेष्टम्, वप्रम् ( ४ न ), 'सीसा' के ४ नाम हैं।

नेति ॥ नगे भव 'तत्र भव' ( ४।३।५३ )इत्यण्। 'नागं नपुंसकं रङ्गे सीसके करणान्तरे। नागः पन्नगमातङ्गक्रूराचारिषु तोयदे ॥ नागकेसरपुंनाग [ नागदन्तप्रभेदके। 'देहानिलप्रभेदे च श्रेष्ठे स्याद्‌त्तरस्थित' इति मे० २२।७९ ] ॥ ( १ ) ॥ * ॥ सिनोति। 'षिञ् बन्धने' ( स्वा० उ० अ० )। विवप ( ३।२।१७८ )। अनित्यत्वान्न तुक्। ई स्यति। 'षोऽन्तकर्मणि' ( दि० प० अ० )। 'आतोऽनुप—' ( ३।२।३ ) इति क। सि च तदीसं च। स्वार्थे कन् ( आपि० ५।४।५ ) ॥ (२) ॥ * ॥ योगे धातुसम्बन्धे इष्टम्। 'सप्तमी—' ( २।१।४० ) इति समासः ॥ ( ३ ) ॥ * ॥ उप्यते। 'डुवप् बीजसन्ताने' ( भ्वा० उ० अ० )। 'वृविवपिभ्या रन्' ( उ० २।२७ ) ॥ ॥—'वध्रं'—इति मुकुट। वर्धते। 'वृधु वर्धने' ( भ्वा० आ० से० )। रन् ( उ० २।२७ )। [ 'वध्रं सीसवरत्रयो' इति हैम २।४६५ ] ॥ ( ४ ) ॥*॥ चत्वारि 'सीसस्य' 'सीसा(सो)' इति ख्यातस्य।

त्रपु पिच्चटम् ॥ १०५ ॥

रङ्गवङ्गे

त्रपु, पिच्चटम्, रङ्गम्, वङ्गम् ( ४ न ), 'रांगा' के ४ नाम हैं।

त्रेति ॥ त्रपते। 'त्रपूष लज्जायाम्' ( भ्वा० आ० )। 'शृस्वृस्निहि—' ( उ० १।१० ) इत्यु। 'रङ्गसीसकयोस्त्रपु' इति रुद्र ॥ ( १ ) ॥ * ॥ पिच्चयति, पिच्चते वा। पिच्च छेदने' ( भ्वा० )। अच् (३।१।१३४) पिच्च टीकते। 'टीकृ गतौ' ( भ्वा आ० से० )। 'अन्येभ्योऽपि—' ( वा० ३।२।१०१ ) इति ड। पिच्चयति। शकादिभ्योऽटन्' ( उ० ४।८१ ) वा। 'पिच्चटो नेत्ररोगे

स्यात्क्लीबं सीसकरङ्गयो '[इति विश्व. । मे० ३७।४९]॥ ( २ ) ॥ * ॥ रङ्गति । 'रगि गतौ' (भ्वा० प० से०)। अच् ( ३।१।१३४ ) । [ 'रङ्गो ना रागे नृत्यरणक्षितौ । अस्त्री त्रपुणि' इति मे० २३।१९-२० ] ॥ ( ३ ) ॥ * ॥ वङ्गति । 'वगि गतौ ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । 'वङ्गं सीसकरङ्गयो. । वार्तकिऽपि च कार्पासे पुङ्गमि नीवृदन्तरे' [ इति मे० २३।२२-२३ ] । 'वङ्ग कार्पासे वृन्ताके वङ्गा जनपदान्तरे । वङ्गं त्रपुणि सीसे च' [ इति हैम' २।४८-४९ ] ॥ ( ४ ) ॥ * ॥ चत्वारि 'वङ्गस्य' 'राग' इति ख्यातस्य ।

अथ पिचुस्तूलः

*पिचुः, तूलः ( २ पु ), 'रुई-कपास' के २ नाम हैं।*

अथेति ॥ पिचति । 'पिचु मर्दने' ( ) । पचति वा । 'डुपचष् पाके' ( भ्वा० उ० अ० ) मृगय्वादिः ( उ० १।३७ ) । 'पिचुर्ना' कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे' [ इति [1]विश्व-मेदिन्यौ २७।७ ] ॥ ( १ ) ॥*॥ तूलयति । तूल्यते, वा । 'तूल निष्कर्षे' (भ्वा० प० से०) 'इगुपध–' ( ३।१।१३५ ) इति क । घञ् ( ३।३।१९ ) वा । 'तूल स्याद् ब्रह्मदारुणि । आकाशेऽथ पिचौ न स्त्री' [ इति [2]विश्वः मे० १४६।२५-२६ ] ॥ * ॥ 'पिचुतूल.' इति रभसात् सघातोऽपि ॥ ( २ ) ॥ * ॥ द्वे 'कार्पासस्य' 'रुई' इति ख्यातस्य ।

अथ कमलोत्तरम् ।

स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥

कमलोत्तरम्, कुसुम्भम्, वह्निशिखम्, महारजनम् (४ न), 'कुसुम (बर्रे) के फूल' के ४ नाम हैं।

अथेति ॥ कमलादुत्तरम् ॥ ( १ ) ॥*॥ कुस्यति । 'कुस संश्लेषणे' ( दि० प० से० ) । 'कुसेरुम्भोमेदेताः' ( उ० ४।१०६ ) इत्युम्भ । बाहुलकान्न गुण । 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' [ इति मे० १०७।१५]॥ ( २ ) ॥ * ॥ वह्निवत् शिखाऽस्य ॥ ( ३ ) ॥*॥ रज्यतेऽनेन । ल्युट् ( ३।३।११५ ) । 'रजकरजनरजःसूपसंख्यानम्' ( वा० ६।४।२४ ) इति नलोप. । 'रञ्जे. क्युन्' ( उ० २।७९ ) वा । महच्च तद्रजनं च । 'सन्महत्–' ( २।१।६१ ) इति समासः । 'महारजनमुद्दिष्टं शातकुम्भकुसुम्भयो ' [ इति मे० १००।१४२ ] ॥ (४) ॥ * ॥ चत्वारि 'कुसुम्भस्य' 'कुसुम्भ' इति ख्यातस्य ।

मेषकम्बल ऊर्णायुः

मेषकम्बलः, ऊर्णायुः ( २ पु ), 'भेंड़के बालके कम्बल' के २ नाम हैं।

मेषेति ॥ मेषलोमकृत कम्बलः । शाकपार्थिवादिः ( वा० २।१।७८ ) ॥ ( १ ) ॥ * ॥ ऊर्णाऽस्यास्ति । 'ऊर्णाया युस्' ( ५।२।१२३ ) । 'ऊर्णायुर्ना क्षणभङ्गे[1] मेषकम्बलमेषयो ' [ इति विश्व । मे० ११८।७६ ] ॥ ( २ ) ॥ * ॥ द्वे 'कम्बलस्य' ।

शशोर्णं शशलोमनि ।

शशोर्णम्, शशलोम ( २ न ), 'खरगोशके रोंएं' के २ नाम हैं।

शेति ॥ शशस्य ऊर्णा । 'शशोर्णं कारणं करम्' इति चन्द्रगोमिलिङ्गानुशासनात् क्लीबत्वम् ॥ ( १ ) ॥ * ॥ शशस्य लोम ॥ ( २ ) ॥ * ॥ द्वे 'शशलोम्नः' ।

मधु क्षौद्रं माक्षिकादि

मधु, क्षौद्रम्, माक्षिकम्, आदि ( ३ न ), 'मधु, शहद' के ३ नाम हैं।

मेति ॥ मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'फलिपाटि–' ( उ० १।१८ ) इति साधु । 'मधु पुष्परसे क्षौद्रे मद्ये, ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्या तु योषिति'[इति [2]विश्व , मेदिनी ७९।११-१२]॥ ( १ )॥ * ॥ क्षुद्राभिर्मक्षिकाभिः कृतम् । 'क्षुद्राभ्रमर–' ( ४।३।११९ ) इत्यञ् । 'क्षौद्रं तु मधुनीरयो.' [ इति हेमचन्द्र. २।४१९ ] ॥ ( २ ) ॥ * ॥ मक्षिकाभिः कृतम् । 'सज्ञायां' (४।३।११७) इत्यण् ॥ ( ३ ) ॥*॥ आदिना भ्रामरवाटक–पौत्तिकादिग्रह ॥ * ॥ त्रीणि 'मधुन.' ।

मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥

मधूच्छिष्टम्, सिक्थकम् ( २ न ), 'शहदसे निकाले हुए मोम' के २ नाम हैं।

---

१. अत्र 'मेदिनी' इत्येव पाठ उचित., विश्वे पुस्तकद्वयेऽपि "पिचुस्तूले च कर्षे च कुष्ठरोगेऽसुरान्तरे । भैरवस्य प्रभेदेऽपि पिचुः क्वापि प्रकीर्तितः ॥" इति (३०।३) सर्वथा भिन्नपाठात् ।

२. विश्वे पुस्तकद्वये 'तूल' शब्दस्य विवरणादर्शनादत्रापि 'मेदिनी' इत्येव पाठ उचितः ।

१. विश्वेन ( १२२।८८ ) सह विसंवादान्मेदिन्यां लभ्यमानः 'क्षणभङ्गे' इति पाठो लेखकादिप्रमादजः प्रतिभाति ।

२. विश्वे पुस्तकद्वये 'मधु क्षौद्रे जले' क्षीरे। मद्ये, पुष्परसे मधु. । दैत्ये चैत्रे वसन्ते च जीवाशाके मधुद्रुमे ॥' इति ( ८२।११ ) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठ्यम् ।

मेति ॥ मधुन उच्छिष्टम् ॥ ( १ ) ॥*॥ सिञ्चति, सिच्यते वा। 'षिच क्षरणे' ( तु० उ० अ० ) 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' ( उ० २।७ )। स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ ( २ ) ॥*॥ द्वे 'मधूच्छिष्टस्य' 'मोम' इति ख्यातस्य।

**मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका।**
**नैपाली कुनटी गोला**

मनःशिला, मनोगुप्ता, मनोह्वा, नागजिह्विका (४ स्त्री), 'मैनसिल' के ४ नाम हैं।

नैपाली, कुनटी, गोला ( ३ स्त्री ), 'नेपाली मैनसिल' के ३ नाम हैं।

मेति ॥ मन शब्दवाच्या शिला। शाकपार्थिवादि ( वा० २।१।७८ ) ॥ ( १ ) ॥*॥ मनसा गुप्ता। 'कर्तृकरणे-' ( २।१।३२ ) इति समास ॥ ( २ ) ॥*॥ मन शब्देन ह्वयते कथ्यते। 'ह्वेञ् स्पर्द्धायां शब्दे च' ( भ्वा० उ० से० )। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ ( ३ ) ॥*॥ नागाना जिह्वेव। स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ ( ४ ) ॥*॥ नेपाले भवा। 'तत्र भव' ( ४।३।५३ ) इत्यण्। 'नैपाली नवमालीमन -शिलासुवहासु च' [ इति विश्व १३२।५९ ] ॥ (५) ॥*॥ कौ नटति। 'नट अवस्यन्दने' ( चु० प० से० )। अच् ( ३।१।१३४ )। गौरादि ( ४।१।४१ )। यद्वा-कुत्सिता नटीव ॥ ( ६ ) ॥*॥ गा दीप्ति लाति। क ( ३।२।३ )। गुडयत वा। 'गुड वेष्टने' (तु० प० से०)। घञ् ( ३।३।१९ )। डलयोरैक्यम्। 'गोला गोदावरी-सख्यो कुनटीदुर्गयो स्त्रियाम्। पात्राञ्जने मण्डने वालि कञ्जरे वालखेलने'+चला[२] लक्ष्म्या पुमान् धम्पे कम्पयुक्तेऽभिधेयवत्-' [ इति मे० १४६।१४-१५ ] ॥ (७)॥*॥ सप्त 'मनःशिलायाः' 'मैनसिल' इति ख्यातस्य।

**यवक्षारो यवाग्रजः ॥ १०८ ॥**
**पाक्यः**

यवक्षार, यवाग्रज, पाक्य ( ३ पु ), 'जवाखार' के ३ नाम हैं।

येति ॥ यवाना क्षार ॥ ( १ ) ॥*॥ यवाग्राज्जायते स्म। 'पञ्चम्याम्-' ( ३।२।९८ ) इति ड ॥ ( २ ) ॥*॥ पाके साधु। 'तत्र साधु'( ४।४।९८ ) इति यत् ॥ ( ३ ) ॥*॥ त्रीणि 'यवक्षारस्य' 'जवाखार' इति ख्यातस्य।

**अथ स्वर्जिकाक्षारः कापोतः सुखवर्चकः।**
**सौवर्चलं स्याद्रुचकम्**

सर्जिकाक्षार, कापोत, सुखवर्चक ( ३ पु ) सौवर्चलम्, रुचकम् ( २ न ), 'सज्जीखार' के ५ नाम हैं। मतान्तर में अन्तिम २ नाम 'सोचरखार' के हैं।

अथेति ॥ स्वर्जिकारसज क्षार। शाकपार्थिवादि ( वा० २।१।७८ ) ॥ ( १ ) ॥*॥ कपोतवर्णोऽस्यास्ति। ज्योत्स्नादित्वात् ( वा० ५।१।१०३ ) अण् ॥ ( २ ) ॥*॥ सुखं वर्चयति। 'वर्च दीप्तौ' (भ्वा० आ० से० )। ण्वुल् ( उ० २।३२ ) ॥ ( ३ ) ॥*॥ सुवर्चलाया इदम्। 'तस्येदम्' ( ४।३।१२० ) इत्यण्। 'अथ सौवर्चलं सर्जक्षारे च लवणान्तरे'[ इति मे० १६६।१५७ ]। ( ४ ) ॥*॥ रोचतेऽनेन। 'रुच दीप्तावभिप्रीतौ च' ( भ्वा० आ० से० )। क्वुन् ( उ० २।३२ )। 'रुचको बीजपूरे च निष्के दन्तकपोतयो। न द्वयो सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययो। सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च' [ इति मे० १२।४७ १४८ ] ॥ ( ५ ) ॥*॥ पञ्च 'क्षारभेदस्य', 'साजीक्षार' इति ख्यातस्य।

**त्वक्क्षीरी वंशरोचना ॥ १०९ ॥**

त्वक्क्षीरी, वंशरोचना (२ स्त्री), 'वंशलोचन' के २ नाम हैं।

त्वेति ॥ त्वचो वंशात् क्षीरमस्या। गौरादि ( ४।१।४१ ) ॥ ( १ ) ॥*॥ रोचते। नन्द्यादि ( ३।१।४१ ) वंशस्य रोचना। 'स्याद्वंशरोचना वाशी तुकाक्षीरी तुकाशुभा। त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवी' इति [१]वाग्भट ( ) ॥ (२) ॥*॥ द्वे वेणुजन्यस्योपधिविशेषस्य 'वंशलोचन' इति ख्यातस्य।

**शिग्रुजं श्वेतमरिचम्**

शिग्रुजम्, श्वेतमरिचम् ( २ न ), 'सहिजनके बीज' के २ नाम हैं।

शीति ॥ शिग्रोर्जायते स्म। 'पञ्चम्याम्-' ( ३।२।९८ ) इति ड ॥ ( १ ) ॥*॥ श्वेत मरिचमिव ॥ ( २ ) ॥*॥ द्वे 'शोभाञ्जनबीजस्य'।

---

१ विग्रहागत मन ' शब्दस्योपसर्गत्वाभावेन, उपसर्गे प्रवर्तमानस्य 'आतश्चोपसर्गे' इत्यस्यात्राप्रवृत्त्या 'कविधौ सर्वत्र सम्प्रसारणिभ्यो ड ' इति वार्तिकेनात्र 'ड' प्रत्यय उचित।

२ 'चला' शब्दार्थकतयाऽन्तिमार्द्धश्लोकांशो न प्रकृतोपयोगी।

१ मेदिन्या '—द्रव्ये चाप्युत्कटेऽपि च' इति पाठ।

२ क्वाप्यतो नेद वचो लभ्यते।

मोरटं मूलमैक्षवम् ।

**मोरटम् ( न ), 'ऊख ( गन्ने ) की जड़' का १ नाम है ।**

मोरेति ॥ मुरति । 'मुर वेष्टने' ( तु० प० से० ) 'शकादिभ्योऽटन्' ( उ० ४।८१ ) ॥ ( १ ) ॥ * ॥ इक्षोरिदम् ॥ * ॥ एकम् 'इक्षुविकारस्य' ('इक्षुमूलस्य')॥

ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥

**ग्रन्थिकम्, पिप्पलीमूलम्, चटकाशिरः ( ३ न ), 'पिपरामूल' के ३ नाम हैं ।**

ग्रेति ॥ ग्रन्थेः प्रतिकृतिः । 'इवे–' ( ५।३।९६ ) इति कन् । 'ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः । करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे' [ इति 'विश्व. १२। १२९, मे० ७८१ ] ॥ ( १ ) ॥*॥ पिप्पल्या मूलम् ॥ ( २ ) ॥*॥ चटकाया शिर इव ॥ * ॥ 'शिर' अपि । 'शिरो ना पिप्पलीमूले' इति रभसः । [ 'शिरो ना पिप्पलीमूले स्यादङ्गमन्या च योषिति' इति रान्ते मे० १२९।९१ ] ॥ ( ३ ) ॥ * ॥ त्रीणि 'पिप्पलीमूलस्य' ।

गोलोमी भूतकेशो ना

**गोलोमी ( स्त्री ), भूतकेशः ( पु ), 'जटामाँसी' के २ नाम हैं ।**

गविति ॥ गोलोम्नामियम् । अण् ( ४।३।१२० ) । संज्ञापूर्वकत्वाद्वृद्ध्यभावोऽपि । 'गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः'[2] [ इति विश्व ११४।५१, मेदिनी ११३। ४३ ] ॥ (१) ॥ * ॥ भूतानां केश इव । भूत. केशोऽस्य वा ॥ (२) ॥ * ॥ द्वे 'भूतकेशस्य' ।

पत्राङ्गं रक्तचन्दनम् ।

**पत्राङ्गम्, रक्तचन्दनम् ( २ न ), 'रक्तसार' अर्थात् 'लाल चन्दनके समान एक काष्ठ-विशेष' के २ नाम हैं ।**

पेति ॥ पत्रमङ्गमस्य । 'पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने' इति [3]विश्व. (मेदिनी) ॥(१)॥ * ॥ रक्तचन्दनमिव । रक्तसारत्वात् ॥ (२) ॥ * ॥ द्वे 'रक्तसारद्रव्यस्य' 'पतङ्ग' ['लाल चन्दन' इत्यस्य] इति ख्यातस्य।

त्रिकटु त्र्यूषणं व्योषम्

**त्रिकटु, त्र्यूषणम्, व्योषम् ( ३ न ), 'त्रिकटु' अर्थात् 'पिपल, सोंठ और मिर्चके समुदाय' के ३ नाम हैं ।**

त्रीति ॥ त्रयाणां कटूनां समाहारः ॥ (१) ॥ * ॥ ऊषति । 'उष दाहे' ( भ्वा० प० से० ) । ल्युट् (३।३। १३४) । त्रयाणां ऊषणानां समाहारः । पात्रादि. (वा० २।४।३१) ॥ (२) ॥ * ॥ विशेषेण ओषति । 'उष दाहे' (भ्वा० प० से०) । अच् ( ३।१।१३४ ) ॥ (३) ॥ * ॥ त्रीणि 'शुण्ठीपिप्पलीमरीचानां समाहारस्य' ।

त्रिफला तु फलत्रिकम् ॥ १११ ॥

**त्रिफला ( स्त्री ), फलत्रिकम् ( न ), 'त्रिफला' अर्थात् 'आँवला, हर्रे और बहेड़े के समुदाय' के २ नाम हैं ।**

त्रीति ॥ त्रयाणां फलानां समाहारः । अजादि (४।१। ४) ॥ * ॥ तृफति । 'तृफ तृप्तौ' ( तु० प० से० ) ।— 'तृफञ्च' (उ० १११०४) इति कलः । 'त्रिफला' तृफलाऽपि च' इति त्रिकाण्डशेष [ २।९।३६ ] ॥ ( १ ) ॥ * ॥ फलानां त्रिकम् ॥ (२) ॥ * ॥ द्वे 'हरीतक्यामलकबिभीतकफलानां समाहारस्य' ।

इति वैश्यवर्गविवरणम् ।

---

# अथ शूद्रवर्गः ॥ १० ॥

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।

**शूद्रः, अवरवर्णः, वृषलः, जघन्यजः ( ४ पु ), 'शूद्र' के ४ नाम हैं ।**

शेति ॥ शोचति । 'शुच शोके' (भ्वा० प० से०) । 'शुचेर्दश्च' (उ० २।१९) इति रक् दीर्घश्च ।—'शदे रक् चात उत्वं च'—इति सुभूतिरपाणिनीय. ॥ (१) ॥*॥ अवरोऽधमो वर्णोऽस्य । 'अवरश्चासौ वर्णश्च इति' वा ॥ (२) ॥ * ॥ वृष्यते, वर्षति वा । 'वृषु सेचने' (भ्वा० प० से०) । 'वृषादिभ्यश्च'[1] (उ० १।१०६) इति कलच् । वृषं धर्मं लुनाति वा । 'लूञ् छेदने' (क्र्या० उ० से०) । 'अन्येभ्योऽपि–' ( वा० ३।२।१० ) इति ड. । वृषं लाति वा । क ( ३।२।३ ) ॥ ( ३ ) ॥ * ॥ जघन्यात् पादाज्जाता । 'जनी प्रादुर्भावे' ( दि० आ० से० ) । 'पञ्चम्याम्–' ( ३।२।९८ ) इति डः । 'जघन्यं मेहने क्लीबे चरमे गर्हितेऽन्यवत्' ( इति मेदिनी ११९।८३ ) ॥ (४) ॥ * ॥ चत्वारि 'शूद्रस्य' ।

आचाण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥

**संकीर्णः ( पु ), 'वर्णसङ्कर' अर्थात् 'भिन्न २ जातिवाले माता-पिताके संयोगसे उत्पन्न 'अम्बष्ठ, करण' आदि जातिविशेष' का १ नाम है ।**

---

१. मेदिन्यामेवेदं वचनं लभ्यते । विश्वे तु केवलं प्रथमपाद एव, द्वितीयादिपादस्तु '—ग्रन्थिकं गुग्गुलुद्रुमे । माद्रेये च करीरे च दैवज्ञे च प्रकीर्तितम् ।' एवं वर्तते ।

२. विश्वे तु '—पङ्ग्रन्थावारयोषितो.' इति पाठः ।

३. विश्वे 'पत्राङ्गं पद्मके भूर्जे पत्राङ्गं रक्तचन्दने' । इत्येवं ( २७।४५ ) पाठादत्र मेदिनीत्येव पाठ उचितः ।

१. 'वृषादिभ्यश्चित्' इति सूत्रस्वरूपम् ।

आचेति ॥ संकीर्यते स्म। कॄ विक्षेपे' ( तु० प० से०) । क्त (३।२।१०२)। 'ऋत इद्धातो' (७।१।१००)। 'रदाभ्याम्-'( ८।२।४२ ) इति नत्वम् ॥ (१) ॥ * ॥ अम्बष्ठश्च करणश्च। अम्बष्ठकरणावादी येषा ते। आदिना उग्रादिग्रह ॥ * ॥ एक 'सङ्कराणाम्' [शूद्रजातीनाम्] ।

**शूद्राविशोस्तु करणः**

करणः ( पु ), 'शूद्रवर्णकी स्त्री और वैश्य वर्णके पुरुषसे उत्पन्न सन्तान' का १ नाम है।

श्विति ॥ शूद्रा च विट् च, तयो सुत ॥ * ॥ किरति कीर्यते वा। 'कॄ विक्षेपे' (तु० प० से०) । 'बहुलमन्यत्रापि(उ० २।७८)इति युच । 'कृत्यल्युट –'(३।३।११३) इति वा । 'करण हेतुकर्मणो । बालवादो ह्लसे लेपे नृत्यगीतप्रभेदयो । क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीब, पुंसि शूद्राविशो सुते' ( इति 'मे० ४७। ३८-३९ )॥ (१) ॥*॥ एकं वैश्याच्छूद्राया जातस्य'।

**अम्बष्ठो वैश्याद् द्विजन्मनोः।**

अम्बष्ठ' ( पु ), 'वैश्य वर्णकी स्त्री और ब्राह्मण वर्णके पुरुषसे उत्पन्न सन्तान'का १ नाम है।

अम्बेति ॥ वैश्या च द्विजन्मा च, तयो सुत ॥*॥ अम्बे तिष्ठति । 'ष्ठा गतिनिवृत्तौ' ( भ्वा० प० अ० ) । 'सुपि–' (३।२।४) इति क । अम्बाम्ब–' ( ८।३।९७ ) इति षत्वम् । 'अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेपि' च । अम्बष्ठाऽप्यम्ललोण्या[२] स्यात् पाठायूथिकयोरपि' [ इति विश्व ४२।१३, मेदिनी ३९।११ ] ॥ (१) ॥*॥ एकम् 'वैश्याब्राह्मणाभ्यामुत्पन्नस्य' ।

**शूद्राक्षत्रिययोरुग्रः**

उग्र' ( पु ), 'शूद्र वर्णकी स्त्री और क्षत्रिय वर्णके पुरुषसे उत्पन्न सन्तान' का १ नाम है।

श्विति ॥ शूद्रा च क्षत्रियश्च, तयो सुत ॥ * ॥ उच्यति । 'उच समवाये' ( दि० प० से० ) । 'ऋज्रे द्र–' ( उ० २।२८ ) इति निपातनात्साधु । उग्र शूद्रासुते क्षत्रात्रुद्रे पुंसि त्रिपूत्कटे । स्त्री[१] वचाक्षुतयो '(इति मेदिनी १२३।९-१०) ॥ ( १ ) ॥ * ॥ एक 'शूद्राक्षत्रियाभ्यामुत्पन्नस्य'।

**मागधः क्षत्रियाविशोः ॥२॥**

मागध ( पु ), 'क्षत्रिय वर्णकी स्त्री और वैश्य वर्णके पुरुषसे उत्पन्न सन्तान' का १ नाम है।

मेति ॥ क्षत्रिया च विट् च। तयो सुत ॥ * ॥ माध्यति । 'मगध वेष्टने' कण्ड्वादि । अच् (३।१।१३४) 'यस्य हल ' (६।४।४९) इति यलोप । प्रज्ञाद्यण् (५।४। ३८) । 'मागधो मगधोद्भूते शुक्लजीरकवन्दिनो । वैश्यत क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली । यूथी भाषाविशेषश्च' [इति हेमचन्द्र ३।३७५-३७६] ॥ ( १ ) ॥ * ॥ एक 'क्षत्रियावैश्याभ्यामुत्पन्नस्य' ॥

**माहिष्योऽर्याक्षत्रिययोः**

माहिष्य ( पु ), 'वैश्य वर्णकी स्त्री और क्षत्रिय वर्णके पुरुषसे उत्पन्न सन्तान' का १ नाम है।

मेति ॥ अर्या च क्षत्रियश्च, तयो सुत ॥ * ॥ महिष्या साधु । 'तत्र साधु ' ( ४।४।९८ ) इति यत् । स्वार्थेऽण् ( २।४।३८ ) । यद्वा–मह्यते, महति वा । 'मह पूजायाम्' ( भ्वा० प० से० ) । 'अविमह्योष्टिषच्' (उ० १।४५) । चतुर्वर्णादित्वात् ( वा० ५।१।१२४ ) स्वार्थे ष्यञ् । (१)॥ * ॥ एक वैश्याक्षत्रियाभ्या जनितस्य'।

**क्षत्तार्याशूद्रयो सुतः।**

क्षत्ता ( पु ) 'क्षत्रिय वर्णकी स्त्री और शूद्र वर्णके पुरुषसे उत्पन्न सन्तान' अर्थात् 'बढ़ई' का १ नाम है।

क्षेति ॥ अर्या च शूद्रश्च, तयो सुत ॥ * ॥ क्षदति क्षद्यते वा क्षद सभृतौ ( )। –हासिक्षदादिभ्य –' (उ० २।९४) इति तृच् । क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसो पुमान्' (इति मेदिनी ५४।७) ॥ (१) ॥ * ॥ अर्या = स्वामिनी। सा च क्षत्रियायोग्यत्वात्। तेन 'क्षत्रियाया च शूद्रजे इत्यनेनाविरोध ॥ * ॥ एकम् 'अर्याशूद्राभ्यामुत्पन्नस्य'॥

**ब्राह्मण्यां क्षत्रियात्सूतः**

सूत ( पु ), 'ब्राह्मण वर्णकी स्त्री और क्षत्रिय वर्णके पुरुषसे उत्पन्न सन्तान' अर्थात् 'सारथिका काम करनेवाले' का १ नाम है।

---

१. विश्वे 'करण साधनक्षेत्रकायकायस्थकर्मसु । गीताङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च ॥ बालवादो च करण स्मृत शूद्राविशो सुते ।' इति ( ५०।३४-३५ ) भिन्नपाठश्चत्यस्यापि 'विश्व' इति प्राक्तनपाठस्य स्थाने 'मेदिनी' इति पाठ स्थापित ।

२ विश्व-मेदिन्यो '—अम्बष्ठा चाम्ल—' इति पाठ ।

१ विश्व (१२९।५४)–हैम ( २।४०८–९ ) योरनुरोधादस्य '—वचाक्षुद्रयो ' इति मेदिनीस्थ पाठो न समीचीन ।

ब्रेति ॥ सूयते स्म । 'षूङ् प्रसवे' (दि० आ० से०) । क्त. (३।४।७२) । 'सूत. पारदसारथ्योः प्रसूतेरितवन्दिषु। ब्राह्मण्या क्षत्रियाज्जाते तक्षिण' इति हैम ( २।२१२ ) ॥ (१) ॥ * ॥ एक 'ब्राह्मण्या क्षत्रियाज्जातस्य' ।

तस्यां वैदेहको विशः ॥ ३ ॥

वैदेहकः ( पु ), 'ब्राह्मण वर्णकी स्त्री और वैश्य वर्णके पुरुषसे उत्पन्न सन्तान' का १ नाम है।

तेति ॥ विदेहेषु भवः । 'तत्र भव' ( ४।३।५३ ) विदेहस्यापत्यम् । 'जनपद-' (४।१।१६८) इत्यञ् । स्वार्थे कन् (ज्ञापि० ५।४।५) । वैदेहको वाणिजके 'शूद्राद्वैश्या-सुतेऽपि च' [ इति विश्व ११।२०५, मेदिनी १७।२१६ ] (१) ॥ * ॥ एक 'ब्राह्मण्यां वैश्याज्जातस्य' ।

रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ।

रथकारः ( पु ), 'करणी स्त्री ( शूद्र वर्णकी स्त्री और वैश्य वर्णके पुरुषसे उत्पन्न कन्या ) और माहिष्य जातिके पुरुष ( वैश्य वर्णकी स्त्री और क्षत्रिय वर्णके पुरुषसे उत्पन्न पुत्र) से उत्पन्न सन्तान' का १ नाम है।

रेति ॥ महिष्याद्वैश्याक्षत्रियसुतात् करण्यां शूद्रायां वैश्यादुत्पन्नायाम् ॥ * ॥ रथं करोति । 'डुकृञ् करणे' (त० उ० अ०) । 'कर्मण्यण्' (३।२।१) । 'रथ-कारस्तु माहिष्यात् करणी च तक्षणि' ( इति मेदिनी १४३।१९२ ) ॥ (१) ॥ * ॥ एकं 'करण्यां माहिष्या-दुत्पन्नस्य' ।

स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन य. ॥ ४ ॥

चण्डालः ( पु ) 'ब्राह्मण वर्णकी स्त्री और शूद्र वर्णके पुरुषसे उत्पन्न सन्तान' अर्थात् 'चाण्डाल' का १ नाम है।

स्येति ॥ चण्डति । 'चडि कोपे' ( भ्वा० प० से० ) 'पतिचण्डिभ्यामालञ्' ( उ० १।११७ ) ॥ (१) ॥ * ॥ प्रत्येकमेकैकं '( सकरविशेषाणाम् )' [ चण्डालस्य=शूद्राद् ब्राह्मण्या जातस्य ] ।

कारुः शिल्पी

कारुः, शिल्पी ( २ पु ), 'कारीगर' के २ नाम हैं।

केति ॥ करोति । 'कृवापा-' ( उ० १।१ ) इत्युण् ।

'कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि' इति हेमचन्द्र (२।४१४) ॥ (१) ॥ * ॥ शिल्पमस्यास्ति । 'अत –' (५।२।११५) इतीनि । 'शिल्पी तु वाच्यवत्कारौ स्त्रिया कोलदलौषधौ' ( इति मेदिनी ९३।४३ ) ॥ (२) ॥ * ॥ 'तक्षा च तन्तुवायश्च नापितो रजकस्तथा। पञ्चमश्चर्मकारश्च कारव. शिल्पिनो मता.' ( ) ॥ * ॥ द्वे 'चित्रकारादे.' ।

संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।

श्रेणिः ( पु स्त्री ), 'एक जातिके कारीगरोंके समूह' का १ नाम है।

समिति ॥ श्रयति, श्रीयते, वा । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'वहिश्रिश्रु–' ( उ० ४।५१ ) नि । 'श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ' ( इति मेदिनी ४७।३१ ) ॥ (१) ॥ एकं 'सजातीयशिल्पिसंघस्य' ।

कुलकः स्यात्कुलश्रेष्ठी

कुलकः, कुलश्रेष्ठी ( २ पु ), 'खान्दानी ( कुलीन ) कारीगर' के २ नाम हैं।

क्विति ॥ कोलति । 'कुल संस्त्याने बन्धुषु च' (भ्वा० प० से०) । वुन् ( उ० २।३२ ) । 'कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते' ( इति मेदिनी ६।६९-७० ) ॥ * ॥ 'कुलिक.' इति पाठे कुलमधीनत्वेनास्यास्ति । ठन् ( ५।२।११५ ) । 'कुलिको नागभेदे स्याद् द्रुमेदे कुलसत्तमे' ( इति मेदिनी १६।७१ ) ॥ (१) ॥ * ॥ कुलश्रेष्ठत्वमस्यास्ति । इनिः (५।२।११५) ॥ (२) द्वे 'कारुसङ्घे मुख्यस्य' ।

मालाकारस्तु मालिकः ॥ ५ ॥

मालाकारः, मालिकः ( २ पु ), 'माली' के २ नाम हैं।

मेति ॥ माला करोति । अण् ( ३।२।१ ) ॥ (१) ॥ * ॥ मालाऽस्यास्ति । 'व्रीह्यादिभ्यश्च' ( ५।२।११६ ) इति ठन् । यद्वा–माला शिल्पमस्या. । 'शिल्पम्' (४।४।५५) इति ठन् । 'मालिका सप्तलापुत्री ग्रीवालकरणेऽपि च । पुष्पमाल्ये नदीभेदे पक्षिभेदे च 'मालिक.' (इति मे० १२।१३९-१४० ) ॥ ( २ ) ॥ * ॥ द्वे 'मालाकारस्य' 'माली' इति ख्यातस्य ।

कुम्भकारः कुलालः स्यात्

कुम्भकारः, कुलालः ( २ पु ), 'कुम्हार' के २ नाम हैं।

क्विति ॥ कुम्भं करोति । अण् ( ३।२।१ ) । 'कुम्भ-

१. एतयोर्विश्वमेदिन्योः हैमे ( ४।३७ ) च 'शूद्रा-द्वैश्यकन्यायामुत्पन्नस्य 'वैदेहक' संज्ञोक्तावपि 'वैश्यान्मागध-वैदेहौ राजविप्राङ्गनासुतौ' इति मनोः ( १०।११ ) "वैश्यात्तु मागध क्षत्त्र्या 'वैदेहको' द्विजस्त्रियाम्" इति हैमनाममालायाश्च ( ३।५९२ ) विरोधान्मनूक्तवचन-स्यैव प्रामाण्यमङ्गीकार्यम् ।

१. '—पुष्पीग्रीवालंकरणेषु च ।''''''सु मालिकः ।' इति मेदिनीपाठ. ।

कारी कुलत्थ्या च पुंसि स्याद्घटकारके' इति 'विश्व (मे० १।१।२५८) ॥ (१) ॥ * ॥ कुं भूमिं लालयति । 'लड विलासे' (भ्वा० प० से०) । अण् (३।२।१) । डलयो रव्यम् । कुलमालाति वा । क (वा० ३।२।५ ) । कुलमलति वा । अण् (३।२।१) । कुलमालुनाति वा । ड (वा० ३।२।१०१) । घूके कुलाल कुवकुभे कुम्भकारेऽञ्जनान्तरे' (२) ॥ * ॥ द्वे 'कुलालस्य' ।

पलगण्डस्तु लेपकः ।

पलगण्ड', लेपकः ( २ पु ), 'मकान आदिमें चूना आदि लगाने वाले जाति विशेष' के २ नाम हैं।

पेति ॥ पल मासम् । तत्तुल्येन मृदादिना गण्डति वदनैकदेशमिव करोति । 'गडि वदनैकदेशे' (भ्वा० प० से०) अच् (३।१।१३४) ॥ ( १ ) ॥ * ॥ लिम्पति । 'लिप उपदेहे' (तु० उ० से०) । ण्वुल् (३।१।१३३) ॥ (२) ॥ * ॥ द्वे 'गृहादौ लेपकारस्य' ।

तन्तुवायः कुविन्दः स्यात्

तन्तुवाय, कुविन्द ( २ पु ), 'जुलाहा' अर्थात् 'कपड़ा बुननेवाले' के २ नाम हैं।

वेति ॥ तन्तून् वयति । 'वेञ् तन्तुसन्ताने' (भ्वा० उ० अ०) । 'ह्वावामश्च' ( ३।२।२ ) इत्यण् ॥ * ॥ 'तन्त्रवाय' इति पाठे—तन्तवो वितन्यन्ते यस्मिंस्तत्तन्त्रम् । तद्वयति ॥ * ॥ 'तन्त्रवाप' इति पाठान्तरम् । तत्र 'डुवप् बीजसन्ताने' ( भ्वा० उ० अ० ) । अण् ( ३।२।१ ) ॥ (१) ॥ * ॥ कु भुवम्, कुत्सितं वा विन्दति । 'विद्लृ लाभे' (तु० उ० अ०) । 'गवादिषु (च) विन्दे संज्ञायाम्' (वा० ३।१।१३८ ) इति श । कुप्यति । 'कुप क्रोधे' (दि० प० से०) । 'कुपेर्वा बश्च' ( उ० ४।८६ ) इति किन्दच् ॥ (२) ॥ * द्वे 'पटाना निर्मातरि' ['जुलाहा' इति ख्यातस्य जातिविशेषस्य] ।

तुन्नवायस्तु सौचिकः ॥ ६ ॥

तुन्नवाय, सौचिक ( २ पु ), 'दर्जी' के २ नाम हैं।

त्विति ॥ तुन्न छिन्न वयति । 'वेञ् तन्तुसन्ताने' (भ्वा० उ० अ०) । अण् ( ३।२।१ ) ॥ (१) ॥ * ॥ सूची शिल्पमस्य 'शिल्पम्' (४।४।५५) इति ठक् ॥ (२) ॥ * ॥ द्वे 'कञ्चुकयादेर्निर्मातरि' ['दर्जी' इत्याख्यस्य]।

रङ्गाजीवश्चित्रकारः

रङ्गाजीव, चित्रकार ( २ पु ), 'रंगसाज' अर्थात् 'कपड़े को रंगने या छापकर चित्रकारी आदि करनेवाले' के २ नाम हैं।

रेति ॥ रङ्गेणाजीवति । 'जीव प्राणधारणे' (भ्वा० प० से०) । 'इगुपध–' ( ३।१।१३५ ) इति क ; रङ्ग आजीवोऽस्य, इति वा ॥ (१) ॥ * ॥ चित्रं करोति । 'दिवाविभानिशा–' (३।२।२१) इति ट ॥ (२) ॥*॥ द्वे 'चित्रकारस्य' ।

शस्त्रमार्जोऽसिधावकः ।

शस्त्रमार्ज', असिधावकः ( २ पु ), 'सान चढानेवाले या शस्त्रोंकी सफाई और मरम्मत आदि करनेवाले' के २ नाम हैं।

शेति ॥ शस्त्र मार्ष्टि । 'मृजू शुद्धौ' (अ० प० से०) । अण (३।२।१) ॥*॥ असिं धावति । 'धावु गतिशुद्धयो' ( भ्वा० उ० से० ) । अण् ( ३।२।१ ) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । ण्वुन् ( उ० २।३२ ) वा ॥ (२) ॥ * ॥ द्वे 'शस्त्रघर्षणोपजीविन' ।

पादूकृच्चर्मकारः स्यात्

पादूकृत्, चर्मकारः ( २ पु ), 'चमार' के २ नाम हैं।

पेति ॥ पद्यतेऽनया । 'पद गतौ' (दि० आ० अ०) । 'णित्कसिपद्यर्तेः' (उ० १।८५) इति ऊ । पादू करोति । क्विप् (३।२।७६) ॥ (१) ॥ * ॥ चर्म करोति । अण् (३।२।१) ॥ (२) ॥ * ॥ द्वे 'चर्मकारस्य' ।

व्योकारो लोहकारकः ॥ ७ ॥

व्योकार, लोहकारक ( २ पु ), 'लुहार' के २ नाम हैं।

व्योकेति ॥ 'व्यो' इत्यव्ययं लोहवीजवाची—इति श्रीभोज । व्यो करोति । अण् (३।२।१) ॥ (१) ॥*॥ लोहं करोति । अण् ( ३।२।१ ) । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'व्योकारोऽयस्करो लोहकार स्यात्' इति रत्नकोश. ॥ (२) ॥ * ॥ द्वे 'लोहकारस्य' ।

नाडिंधमः स्वर्णकारः कलादो रुक्मकारके ।

नाडिन्धम, स्वर्णकार, कलाद', रुक्मकारक ( ४ पु ), 'सुनार' के ४ नाम हैं।

नेति ॥ नाडी वंशनलीं धमति । 'ध्मा शब्दाग्निसंयोगयो' (भ्वा० प० से०) । 'नाडीमुष्टयोश्च' (३।२।३०) इति खश् । 'खित्यनव्ययस्य' (६।३।६६) इति ह्रस्व ॥ (२) ॥ * ॥ स्वर्णं करोति । अण् ( ३।२।१ ) ॥ (२) ॥ * ॥ कलामादत्ते । 'डुदाञ् दाने' ( जु० उ० अ० ) । मूलविभुजादित्वात् (वा० ३।२।४) क ॥ (३) ॥ * ॥

१. विश्वे 'कुम्भकारी कुलाल्या स्यात् कुम्भकार कुलालके ।' इति (१४८।२८२) पाठादत्र 'मेदिनी' इत्येव पाठ उचित । मेदिन्या च '—पुलिङ्गो घटकारके' इति पाठ. ।

रुक्मं करोति । अण् ( ३।२।१ ) । स्वार्थे कन् (ज्ञापि० (५।४।५) ॥ (४) ॥ * ॥ चत्वारि 'स्वर्णकारस्य'।

## स्याच्छाङ्खिकः काम्बविकः

शाङ्खिकः, काम्बविकः ( २ पु ), 'शङ्खकी चूड़ी आदि बनानेवाले' के २ नाम हैं।

स्येति ॥ शङ्खः शिल्पमस्य। 'शिल्पम्' (४।४।५५) इति ठक् ॥ ( १ ) ॥ * ॥ कम्बुः शिल्पमस्य । ठक् (४। ४।५५) । '—शाम्बविक' ( २।४।९ ) इति निर्देशात्का-देशोऽनित्यः । कम्बोर्विकारोऽस्यास्ति, इति वा । ठन् (५।२।११५) ॥ (२) ॥ * ॥ द्वे 'शङ्खवादकस्य'।

## शौल्विकस्ताम्रकुट्टकः ॥ ८ ॥

शौल्विकः, ताम्रकुट्टकः( २ पु ), 'ठठेरा' अर्थात् 'ताँबेके बर्तन आदि बनानेवाले' के २ नाम हैं।

शौल्विति ॥ शुल्वपट्टनं शिल्पमस्य । 'शिल्पम्' (४।४। ५४) इति ठक् ॥ (१) ॥ * ॥ ताम्रं कुट्टयति । 'कुट्ट छेदने' (चु० प० से०) । अण् (३।२।१) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥ * ॥ द्वे 'ताम्रकारस्य'।

## तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्।

तक्षा, वर्धकिः, त्वष्टा, रथकारः, काष्ठतट् (५ पु) 'बढ़ई' के ५ नाम हैं।

तेति ॥ तक्ष्णोति । 'तक्षू तनूकरणे' (भ्वा० प० से०) । '—मुषुषि—' ( उ० १।१५६ ) इत्यादिना कनिन् (१) ॥ * ॥ वर्धते । 'वर्ध छेदने' ( चु० प० से० ) । अच् ( ३।१।१३४ ) । वर्ध कयति । 'कप हिंसायाम्' (भ्वा० प० से० ) । बाहुलकादि ॥ ( २ ) ॥ * ॥ त्वक्षति । 'त्वक्षू तनूकरणे' ( भ्वा० प० से० ) । तृच् (३।१।१३३) । 'त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्य-भिद्यपि' ( इति मेदिनी ३४।१६ )॥ ( ३ ) ॥ * ॥ रथं करोति । अण् (३।२।१) ॥ (३) ॥ * ॥ काष्ठं तक्षति क्विप् (३।२।७६)॥ (५) ॥*॥ पञ्च 'सुतार' ('बढ़ई') इति ख्यातस्य ।

## ग्रामाधीनो ग्रामतक्षः

ग्रामाधीनः ( भा० दी० ), ग्रामतक्षः ( २ पु ), 'गाँवके बढ़ई' के २ नाम हैं।

ग्रेति ॥ ग्रामेऽधि । 'सप्तमी'(२।१।४०) इति समासः । 'अषडक्ष—' (५।४।७) इति खः ( १ ) ॥ * ॥ ग्रामस्य तक्षा । 'ग्रामकौटाभ्यां च तक्ष्णः' (५।४।९५) इति टच् ॥ (२) ॥ * ॥ द्वे 'ग्रामत्वष्टुः'।

## कौटतक्षोऽनधीनकः ॥ ९ ॥

कौटतक्षः, अनधीनकः ( २ पु ), 'स्वतन्त्र बढ़ई' के २ नाम हैं।

कौटेति ॥ कुट्यां भवः । 'तत्र भवः' ( ४।३।५३ ) इत्यण् कौटश्चासौ तक्षा च । टच् ( ५।४।९५ ) ॥ (१) ॥ * ॥ नाधीनः । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ * ॥ एकं कौटत्वष्टुः ।

## क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः।

क्षुरी, मुण्डी, दिवाकीर्तिः, नापितः, अन्तावसायी (५ पु), 'हजाम' के ५ नाम हैं।

'क्षुरीति ॥ क्षुरोऽस्यास्ति । 'अत—' ( ५।२।११५ ) इतीनिः ॥ ( १ ) ॥ * ॥ मुण्डं करोति । 'मुण्डमिश्र—' ( ३।१।२१ ) इति णिच् । ग्रह्यादित्वात् ( ३।१।१३४ ) णिनिः ॥ (२) ॥ * ॥ दिवा कीर्तिरस्य । 'दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनो' 'रित्य ( इति मेदिनी ६९।२२० ) ॥ (३) ॥ * ॥ न पियति स्म । 'पि गतौ' (तु० प० अ०) । 'गत्यर्था—' ( ३।४।७२ ) इति क्तः । न—अपित । निषेधार्थकेन नशब्देन 'सुप्सुपा' (२।१।४) इति समासः । यद्वा—नापनम् । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । घञ् ( ३।३।१८ ) । नापो जातोऽस्य । 'तदस्य सञ्जातम्—' ( ५।२।३६ ) इतीतच् ॥ ( ४ ) ॥ * ॥ नखानामन्तमवसातुं शीलमस्य । 'षोऽन्तकर्मणि' (दि० प० अ०) । 'षै क्षये' ( भ्वा० प० अ० ) वा । 'सुपि—' (३।२।७८) इति णिनिः । 'आतो युक्—' ( ७।३।३३ ) । ('अन्तावसायी श्वपचे मुनिभेदे च नापिते' इति मेदिनी १०१।१५२) ॥ (५) ॥ * ॥ पञ्च 'नापितस्य'।

## निर्णेजकः स्याद्रजकः

निर्णेजकः, रजकः ( २ पु ), 'धोबी' के २ नाम हैं।

नीति ॥ निर्णेनेक्ति । 'णिजिर् शुद्धौ' (जु० उ० से०) ण्वुल् ( ३।१।१३३ ) । 'उपसर्गादसमासे—' (८।४।१४) इति णत्वम् ॥ ( १ ) ॥ * ॥ रजति । 'रञ्ज रागे' (भ्वा० उ० अ०) क्वुन् ( उ० २।३२ ) ॥ (२)॥ * ॥ द्वे 'रजकस्य'।

## शौण्डिको मण्डहारकः ॥१०॥

शौण्डिकः, मण्डहारकः ( २ पु ), 'कलवार या मद्य बनानेवाले' के २ नाम हैं।

---

१. 'दिवाकीर्तिस्तु चण्डाले नापितोलूकयोरपि।' इति ( ७३।२१२ ) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठो युक्तः।

शाविति ॥ ('शुण्डा पानगृहे मता । अम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च' इति मेदिनी ४२।२५)। शुण्डा सुरा पण्यमस्य । 'तदस्य पण्यम्' (४।४।५१) इति ठक् ॥ (१) ॥ * ॥ मण्ड सुराग्रम्य हरति । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन (ज्ञापि० ५।४।५) ॥ (२) ॥ * ॥ द्वे शौण्डिकस्य'।

जाबाल स्यादजाजीव

जाबाल, अजाजीव (२ पु), 'गँडेरिये या अँहिहारे' के २ नाम हैं।

जेति ॥ जवमलति, आलाति वा। 'अल भूषणादौ' (भ्वा० प० स०)। अण् (३।२।१)। य (वा० ३।२।५) वा। जवालोऽज, तस्यायम् ॥ (१) ॥ * ॥ अजा आजीवो जीविकाऽस्य ॥ (२) ॥ * ॥ द्वे अजाजीवनस्य' जातिविशेषस्य।

देवाजीवी तु देवलः ।

देवाजीव, देवल (२ पु), 'पण्डा, पुजारी आदि' के २ नाम हैं।

देवेति ॥ देवैराजीवितु शीमलस्य। 'सुप्यजातौ–' (३।२।७८) इति णिनि ॥ * ॥ (देवाजीव' इति) अदन्तपाठे देव आजीवोऽस्य ॥ (१) ॥ * ॥ देवान् जीविकार्थे लाति। क ॥ (२) ॥ * ॥ द्वे देवपूजोपजीविन'।

स्यान्माया शाम्बरी

माया, शाम्बरी (२ स्त्री), 'जादू'के २ नाम हैं।

स्येति ॥ विश्व माति यस्याम्, मिमीते वा। 'मा माने' (अ० प० अ०)। माङ् माने' (जु० आ० अ०) वा। 'माछासिसिभ्यो य' (उ० ४।१०९)। मा याति वा। आतोऽनुप–' (३।२।३) इति क। 'माया स्याच्छाम्बरीबुद्धयोर्माय पीताम्बरेऽसुरे' (इति मेदिनी ११६। ४६) ॥ (१) ॥ * ॥ शम्बरास्यदैत्यस्येदम्। तस्येदम्। (४।३।१२०) इत्यण् ॥ (२) ॥ * ॥ द्वे 'इन्द्रजालादिदिमायाया'।

मायाकारस्तु प्रातिहारिकः ॥ ११ ॥

मायाकार, प्रातिहारक (२ पु), 'जादूगर' के २ नाम हैं।

मेति ॥ माया करोति। अण् (३।२।१) ॥ (१) ॥ * ॥ प्रतिहरणम्। 'हृञ् हरणे' (भ्वा० उ० अ०)। भावे घञ् (३।३।१८)। प्रतिहारो व्याज प्रयोजनमस्य। 'प्रयोजनम्' (५।१।१०९) इति ठक् ॥ (२) ॥ * ॥ द्वे 'इन्द्रजालिकस्य'।

शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः।
भरता इत्यपि नटाः

शैलाली, शैलूष, जायाजीव, कृशाश्वी भरत, नट (६ पु), 'नट' के ६ नाम।

शाविति ॥ शिलालिना प्रोक्त नटसूत्रमधीयते। पाराशर्यशिलालिभ्याम्–' (४।३।११०) इति णिनि। (१) ॥ * ॥ शिलूषस्य ऋषेरपत्यम्। अण् (४।१।११४)। 'नटे विल्वे च शैलूष' इति तालव्यादिमूर्धन्यान्तेषु रभस (२) ॥ * ॥ जायया जीवन्ति। 'जीव प्राणधारणे' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति क ॥ (३) ॥ * ॥ कृशाश्वेन प्रोक्त नटसूत्रमधीयते। कर्मन्दकृशाश्वादिनि' (४।३।१११) ॥ (४) ॥ * ॥ भरतस्य मुनेः शिष्या। अण् (४।३।१२०)। संज्ञापूर्वकत्वान्न वृद्धि। यद्वा बिभर्ति स्वाङ्गम्। 'डुभृञ्' (जु० उ०)। 'भृमृदृशि–' (उ० ३।११०) इत्यतच्। —बिदाद्यञो (४।१।१०४)वा। यस्कोऽ' (२।४।६४) इति लुकि भरत —इति मुकुट। तन्न। अञ्बचने वृद्धिप्रसङ्गात्। पूर्वव्याख्यानविरोधाच्च (५)॥ * ॥ नटति 'नट नृतौ' (भ्वा० प० से०)अच् (३।१। १३४) ॥ (६) ॥ * ॥ 'रङ्गावतारी शैलूषो नटो भरतभारतौ' इति वाचस्पति ॥ ॥ * ॥ षट् 'नटानाम्'।

चारणास्तु कुशीलवाः ॥ १२ ॥

चारण, कुशीलव (२ पु), 'कत्थक' के २ नाम हैं।

चेति ॥ चारयन्ति कीर्तिम्। चर गतौ (भ्वा० प० से०)। णिजन्त। नन्द्यादित्यु (३।१।१३४) (१) ॥ * ॥ कुत्सित शीलमस्त्येषाम्। 'कुगति–' (२।१।१८) इति समास। 'अन्यत्रापि दृश्यते' (वा० ५।२।१०९) इति वा। कुशील वान्ति वा। 'वा गत्यादौ' (अ० प० अ०)। क (३।२।३) ॥ (२) ॥ * ॥ द्वे 'बन्दिविशेषस्य'।

मार्दङ्गिका मौरजिका

मार्दङ्गिक, मौरजिक (२ पु), 'मृदङ्ग बजानेवाले' के २ नाम हैं।

मेति ॥ मृदङ्गो लक्षणया तद्वादन शिल्पमेषाम्। 'शिल्पम्' (४।४।५५) इति ठक् ॥ (१) ॥ * ॥ मुरज शिल्पमेषाम्। ठक् (४।४।५५) ॥ (२) ॥ * ॥ द्वे 'मृदङ्गवादनशीलस्य'।

पाणिवादास्तु पाणिघाः।

पाणिवाद, पाणिघ (२ पु), 'हाथकी ताली बजाकर मृदङ्ग, तबला आदि बाजाओंके अनुकरण करनेवाले' के २ नाम हैं।

पेति ॥ पाणि वादयन्ति । 'वदेः' (भ्वा० प० से०) । ण्यन्तादण् (३।२।१) ॥ (१) ॥ * ॥ पाणि घ्नन्ति । 'पाणिघताडघौ शिल्पिनि' (३।२।५५) इति साधु ॥ (२) ॥ * ॥ द्वे 'करतालिकावादनशीलस्य'।

**वेणुध्माः स्युर्वैणविकाः**

वेणुध्मः, वैणविकः (२ पु), 'वंशी या मुरली बजानेवाले' के २ नाम हैं।

वयिति ॥ वेणुं धमन्ति । 'ध्मा शब्दादौ' (भ्वा० प० से०) । 'आतोऽनुप–' (३।२।३) इति क ॥ (१) ॥*॥ वेणोर्विकारः। 'ओर्‌ञ्' (४।३।१३९)। वैणवं शिल्पमस्य। ठक् (४।४।५५) ॥ (२) ॥*॥ द्वे 'वेणुवादनशीलस्य'।

**वीणावादस्तु वैणिकः ॥ १३ ॥**

वीणावादः, वैणिकः (२ पु), 'वीणा बजानेवाले' के २ नाम हैं।

वीति ॥ वीणां वादयन्ति ॥ (१) ॥ * ॥ वीणा शिल्पमेषाम् ॥ (२) ॥ द्वे 'वीणावादनशीलस्य'।

**जीवान्तकः शाकुनिकः**

जीवान्तकः, शाकुनिकः (२ पु), 'बहेलिये या चिड़ियोंको मारने वाले' अर्थात् 'चिड़ीमार' के २ नाम हैं।

जीति ॥ जीवानामन्तक ॥ (१) ॥ * ॥ शकुनान् हन्ति। 'पक्षिमत्स्य–' (४।४।३५) इति ठक् ॥ (२) ॥ * ॥ द्वे 'पक्षिणां हन्तरि'।

**द्वौ वागुरिकजालिकौ।**

वागुरिकः, जालिकः (२ पु), 'जालसे पशु-पक्षी, मछली आदि को फँसानेवाले' के २ नाम हैं।

द्वाविति ॥ वागुरया (१) जालेन (२) च चरति। 'चरति' (४।४।८) इति ठक् ॥ (२) ॥ * ॥ द्वे 'जालेन मृगान्बध्नत'।

**वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥**

वैतंसिकः, कौटिकः, मांसिकः (३ पु), 'मांस बेचनेवाले, वधिक आदि' के ३ नाम हैं।

वायिति ॥ वीतंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ॥ (१) ॥ * ॥ कूटेन मृगादिबन्धनयन्त्रेण चरति (२) ॥ * ॥ मांसं पण्यमस्य। 'तदस्य पण्यम्' (४।४।५१) इति ठक् ॥ (३) ॥ * ॥ त्रीणि 'मांसविक्रयजीविनः'।

**भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः।**

भृतकः, भृतिभुक्, कर्मकरः, वैतनिकः (४ पु), 'मजदूर या वेतन लेनेवाले नौकर' के ४ नाम हैं।

भृति ॥ भ्रियते स्म 'भृञ् भरणे' (भ्वा० उ० अ०)। क्त (३।२।१०२)। स्वार्थे कन् (ज्ञापि० ५।४।५) यद्वा-भृतिं करोति। 'तत्करोति–' (वा० ३।१।२६) इति णिजन्तात्क्वुन् (उ० २।३२) ॥ (१) ॥ * ॥ भृतिं वेतनं भुङ्क्ते। क्विप् (३।२।७६) ॥ (२) ॥ * ॥ कर्म करोति। 'कर्मणि भृतौ' (३।२।२२) इति ट ॥ (३) ॥ * ॥ वेतनेन जीवति। 'वेतनादिभ्यो जीवति' (४।४।१२) इति ठक् ॥ (४) ॥ * ॥ चत्वारि 'वेतनोपजीविन' ['वैतनिकभृत्यस्य']।

**वार्तावहो वैवधिकः**

वार्तावहः, वैवधिकः (२ पु), 'काँवर या बहँगी ढोनेवाले' के २ नाम हैं।

वेति ॥ वार्तायां वह ॥ (१) ॥ * ॥ विविधं वीवधं वा वहति। 'विभाषा[1] विवधवीवधात्' (४।४।१७) इति ठन्। पक्षे ठक् ॥ (२) ॥ * ॥ द्वे 'वार्तायां वाहकस्तु' 'कबड़िया' इति ख्यातस्य।

**भारवाहस्तु भारिकः ॥ १५ ॥**

भारवाहः, भारिकः (२ पु), 'बोझ ढोनेवाले कुली आदि' के २ नाम हैं।

भेति ॥ भारं वहति। अन् (३।२।१) ॥ (१) ॥ * ॥ भारोऽस्ति वाहत्वेनास्य। 'अत–' (५।२।११५) इति ठन् ॥ (२) ॥ * ॥ द्वे 'भारवाहकस्य'।

**विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः।**
**निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥**

विवर्णः, पामरः, नीचः, प्राकृतः, पृथग्जनः, निहीनः, अपसदः, जाल्मः, क्षुल्लकः, इतरः (१० पु), 'नीच' के १० नाम हैं।

वीति ॥ विगतो वर्णो यस्य, यस्माद्वा। 'वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे' (४८।१३-१४) इति विश्व ॥ (१)॥*॥ पामानं राति। क (३।२।३)। यद्वा–पा धर्मं म्रियते येन। 'मृङ् प्राण-त्यागे'(तु० प० अ०)। 'पुसि–' (३।३।११८) इति घः ॥ (२) ॥ * ॥ निकृष्टामी लक्ष्मीं चिनोति। 'चिञ् चयने' (स्वा० उ० अ०)। 'अन्येभ्योऽपि दृश्यते' (वा० ३।२।१०१) इति ड. ॥ (३) ॥ * ॥ प्रकृतौ भव.। अण् (४।३।५३)। यद्वा-प्रकृष्टम-

१. अष्टाध्याय्यादौ 'विभाषा विवधात्' इत्येव सूत्रम् न तु '—विवधवीवधात्' इति। तस्मात् 'विभाषा विवधवीवधात्' इति कथनं सि० कौ० अनुसारं फलितार्थमात्रम्।

कृतमकार्यमस्य ॥ ( ४ ) ॥ * ॥ सज्जनेभ्य पृथग्भूतो जन । शाकपार्थिवादि (वा० २।१।७८) ॥ (५) ॥ * ॥ निश्रयेन हीन । 'कुगति-'(२।२।१८)इति समास ॥(६) ॥*॥ अपकृष्टमपकृष्टे वा सीदति । 'षद्लृ 'विशरणादौ (भ्वा० प० अ०) । अच् (३।१।१३४) ॥ (७) ॥ * ॥ जालयति । जल आच्छादने' (?) (चु० प० से०)। जाल करोति । बाहुलकान्म । नेदवशि कृति (७।२।८) । 'जाल्मस्तु पामरे । असमीक्ष्यकारिणि च' [इति हैम २। ३२६ ३२७] ॥ (८) ॥ * ॥ क्षुध लाति । क (३।२। ३) स्वार्थे कन् (उ० २।३२) वा । यद्वा क्षुणत्ति, क्षुद्यत वा । क्षुद क्षोदे' (रु० उ० अ०)।'स्फायितञ्चि-'(उ० २। १३ ) इति रक् । कपिलिकादि ( ८।२।१८ ) । यद्वा-क्षुधा लक्ष्यते । 'लक्ष आस्वादने' ( )। पुंसि-' (३। ३।११८ ) इति घ ॥ * ॥ ( 'क्षुल्लक' इति ) कवर्ग द्वितीयादिरपि । 'खुल्लकस्त्रिपु नीचेऽल्पे' इति रभसात् । खदनम् । खद हिंसायाम्' ( भ्वा० प० से० ) । सम्पदादि ( वा० ३।३।१०८ ) । पृषोदरादि ( ६।३।१०९ ) । खुद लाति । क्वुन् ( उ० २।३२ ) ॥ ( ९ ) ॥ * ॥ इना कामेन तीर्यते । 'तृ' ( भ्वा० प० से० ) । 'ऋदो रप्' (३।३।५७) । इत गमन करोति वा । 'तत्करोति-' ( वा० ३।१।२६ )इति णिच् । यद्वा—इतेन ज्ञानेन क्षीते । 'प्रातिपदिकाद्धात्वर्थे' ( ग० सू० ) इति णिच् । बाहुल कादर । यद्वा-'इ' इत्यव्ययमपकर्षे । 'द्विवचन-' ( ५।३। ५७ ) इति तरप् । द्रव्यप्रकर्षत्वान्नामु ॥ (१०) ॥ * ॥ दश 'नीचस्य'।

## भृत्ये दासेयदासेरदासगोप्यकचेटका ।
## नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारका ॥ १८ ॥

भृत्य, दासेय, दासेर, दास, गोप्यक, चेटक, नियोज्य, किङ्कर, प्रैष्य, भुजिष्य, परिचारक (११ पु), 'नौकर भृत्य' के ११ नाम हैं।

भ्रिति ॥ भ्रियते । 'भृञ् भरणे' (भ्वा० उ० अ०) । 'भृञोऽसञ्ज्ञायाम्' ( ३।१।११२ ) इति क्यप । भृत्य दासे भृतो भृत्या' [ इति विश्व ११८।४२ ] ॥ ( १ ) ॥*॥ दास्या अपत्यम् । 'द्व्यच ' ( ४।१।१२१ ) इति ढक् ॥ ( २ ) ॥ * ॥ 'क्षुद्राभ्यो वा' ( ४।१।१३१ ) इति ढ्रक् च ॥ ( ३ ) ॥ * ॥ दसयति, दस्यते वा । 'दसि दीप्तौ ( चु० प० से० ) । 'दसेष्टटनौ न आ च (उ० ५।१०)। यद्वा-दास्यते । 'दासृ दाने' ( भ्वा० उ० से० ) । घञ् ( ३।३।१८ ) ॥ * ॥ ('दाश' इति) तालव्या तपसे-दशेश्च' ( उ० ५।११ ) ॥ ( ४ ) ॥ * ॥ गुप्यते । गुपू रक्षणे' ( भ्वा० प० से० ) । ण्यत् (३।१।१२४) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । गोप्य कायति वा । क शब्दे' ( भ्वा० प० अ० ) । 'आतोऽनुप-' ( ३।२।३ ) इति क ॥ (५) ॥*॥ चेटयते । 'चिट परप्रेष्ये' ( भ्वा० प० से० ) । वृञादिभ्यो वुन् ( उ० ५।३५ ) ॥ ( ६ ) ॥ * ॥ नियुज्यते । 'युजिर् योगे' ( रु० उ० अ० ) । ण्यत् ( ३।१।१२४ ) । 'प्रयोज्यनियोज्यौ शक्यार्थे ( ७। ३।६८ ) इति साधु ॥ ( ७ ) ॥ * ॥ किंचित् कुत्सित वा करोति । दिवाविभा-' ( ३।२।२१ ) इत्यत्र 'किंय त्तद्बहुषु-' ( वा० ३।२।२१ ) इति अच ॥ ( ८ ) ॥*॥ प्रेष्यते । 'इष गतौ' ( दि० प० से० ) आभीक्ष्ण्ये (क्र्या० प० से० ) वा । ण्यत् ( ३।१।१२४ ) । 'प्रादूहो-' ( वा० ६।१।८९ ) इति वृद्धि ॥ ( ९ ) ॥ * ॥ भुङ्क्ते स्वा म्युच्छिष्टम् भुज्यते वा । रुचिभुजिभ्या किष्यन् ( उ० ४।१७९ )॥ ( १० ) ॥*॥ परिचरति । 'चर गत्यादौ' ( भ्वा० प० से० ) ण्वुल् ( ३।१।१३३ ) ॥ ( ११ ) ॥ * ॥ एकादश 'दासस्य'।

## पराचितपरिस्कन्दपरजातपरैधिता ।

पराचित, परिस्कन्द, परजात, परैधित (४ पु) 'दूसरे के द्वारा पालित' के ४ नाम हैं।

पेति ॥ परेणाचित । 'चिञ् चयने' ( स्वा० उ० अ० ) । क्त ( ३।२।१०२ ) ॥ ( १ )॥ * ॥ परिस्कन्दति । 'स्कन्दिर् [2]गत्यादौ' ( भ्वा० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) । 'परेश्च ( ८।३।७४ ) इति षत्वम् ॥ ( २ ) ॥*॥ परस्माज्जात । परपोषितत्वात् ॥ * ॥ पराजित ' इति पाठे—परैराजीयते स्म । जि अभिभवे' ( भ्वा० प० अ० ) । क्त ( ३।२।१०२ )। यद्वा परेषामाज क्षेपण जातोऽस्य । तारकादि ( ५।२।३६ )॥ ( ३ ) ॥ * ॥ परैरेधित सवर्धित ॥ ( ४ ) ॥ * ॥ चत्वारि औदासी येन परपोषितस्य ।

## मन्दस्तुन्दपरिमृज आलस्य. शीतकोऽलसोऽनुष्ण ॥

मन्द, तुन्दपरिमृज, आलस्य, शीतक, अलस, अनुष्ण (६ पु), 'आलसी' के ६ नाम हैं।

मेति ॥ मन्दते स्वपिति ।'मदि [3]स्तुत्यादौ'(भ्वा० आ० से० ) अच ( ३।१।१३४ ) । 'मन्दोऽनीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणो । अल्पे च त्रिपु पुंसि स्याद्धस्तिजा

१ '—विशरणगत्यवसादनेषु' इति वाच्यम् ।

१ '—गतिमक्षणयो ' इति वाच्यम् ।

२ 'गतिशोषणयो ' इति कथन युक्तम्।

३ '—स्तुतिमोदस्वप्नकान्तिगतिषु' इति पाठो युक्त ।

रयन्तरे शनौ' [ इति [1]विश्व', मे० ७५।१३ ] ॥ ( १ ) ॥*॥ तुन्दमुदरं परिमार्ष्टि 'मृजू शुद्धौ' (अ० प० से०)। 'तुन्दशोकयो—' ( ३।२।५ ) इति क ॥ ( २ ) ॥*॥ न लसति । 'लस श्लेषणे' ( भ्वा० प० से० ) । अच् (३।१।१३४ ) ॥ ( ५ ) ॥ * ॥ स्वार्थे ष्यञ् ( वा० ५ १। १२४ ) ॥ ( ३ )॥ * ॥ शीतं करोति । 'शीतोष्णाभ्या कारिणि' ( ५।२।७२ ) इति कन् ॥ ( ४ ) ॥ * ॥ 'उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गक' [ इति मे० ४५।३ ] । उष्णो दक्षः । उष्णादन्यः ॥ ( ६ ) ॥*॥ पट 'अलसस्य' ।

**दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ।**

दक्षः, चतुरः, पेशलः, पटुः, सूत्थानः, उष्णः (६ पु), 'चालाक, चतुर' के ६ नाम हैं।

देति ॥ दक्षते 'दक्ष वृद्धौ शीघ्रार्थे च' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । दक्ष प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे दक्षा तु मेदिन्याम्' [ इति [2]हैम २। ५७६ ] ॥ ( १ ) ॥ * ॥ चतति, चत्यते वा । 'चते याचने' ( भ्वा० उ० से० ) 'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्' ( उ० १।३८ ) ॥ ( २ ) ॥ * ॥ पेशनम् । 'पिश समाधौ' ( तु० प० से० ) । घञ् ( ३।३। १८ ) । पेशं लाति । क. ( ३।२।३ ) । पेशोऽस्यास्ति । सिध्मादित्वात् ( ५।२।९७ ) लच् वा ॥ ( ३ ) ॥*॥ पाटयति । णिजन्तः । 'फलिपाटि—' ( उ० १।१८ ) इति साधुः । 'पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान्क्लीबे छत्रालवणयोरपि' ( इति मे० ३९।२० ) ॥ ( ४ ) ॥ * ॥ सुष्ठु उत्थानमुद्योगोऽस्य ॥ ( ५ ) ॥*॥ उष्णत्व शीघ्रकारित्वमस्यास्ति । अर्शआद्यच् ( ५।२। १२७ ) । 'उष्णो ग्रीष्मे पुमान् [3]दक्षाशीतयोरन्यलिङ्गकः'

[ इति मे० ४५।३ ] ॥ ( ६ ) ॥ * ॥ पट् 'दक्षस्य' ।

**चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ १९ ॥**

**निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ।**

चण्डालः, प्लवः, मातङ्गः, दिवाकीर्त्तिः, जनङ्गमः, निषादः, श्वपचः, अन्तेवासी, चाण्डालः, पुक्कसः ( १० पु ), 'चाण्डाल' के १० नाम हैं।

चेति ॥ चण्डते । 'चडि कोपे' ( भ्वा० आ० से० )। 'पतिचण्डिभ्यामालञ्' ( उ० १।११७ ) ॥ ( १ ) ॥*॥ प्लवते । 'प्लुङ् गतौ' ( भ्वा० आ० अ० ) । अच् ( ३। १।१३४ ) 'प्लव. प्लवे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेककभेलयो । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लव गन्धतृणे मुस्तकभिद्यपि' [ इति हैम २.५४१-५४३ ] । 'प्लव स्यात्प्लवने भेले भेकेऽवौ श्वपचे कपौ । जलकाके च कुलके प्रवणे पर्कटीद्रुमे ॥ कारण्डवाख्यविहगे शब्दे प्रतिगतौ 'पुमान् । कैवर्तीमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्' [ इति मे० १५८।१६-१८ ] ॥ ( २ ) ॥ * ॥ मतङ्गस्यापत्यम् । शिवादित्वात् ( ४।१। ११२ ) अण् । मतङ्गस्यायम् वा । 'तस्येदम्' ( ४।३। १२० ) इत्यण् ॥ ( ३ ) ॥ * ॥ दिवा कीर्तिरस्य ।— दिवा अकीर्तिरस्य—इति मुकुटः ॥ ( ४ ) ॥*॥ अधार्मिकाञ्जनान् गच्छति, जनेभ्यो गच्छति वा । 'गमश्च' ( ३।२।४७ ) इति खच् ॥ ( ५ ) ॥ * ॥ निषीदति पापमस्मिन् । 'षद्लृ विशरणादौ' ( भ्वा० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'निषाद' स्वरभेदेऽपि चण्डाले धीवरान्तरे' [ इति मे० ७७।३४ ] ॥ ( ६ ) ॥ * ॥ श्वानं पचति । [1]अच् ( ३।१।१३४ ) ॥ * ॥ न्यङ्क्वादित्वात् ( ग० ७।३।५३ ) कुत्वे 'श्वपाक.' अपि ॥ ( ७ ) ॥ * ॥ ग्रामादेरन्ते वसति । 'सुप्यजातौ—' ( ३। २।७८ ) इति णिनि । 'शयवास—' ( ६।३।१८ ) इत्यलुक् ॥ ( ८ ) ॥ * ॥ स्वार्थे अण् ( ५।३।११७ ) । 'चाण्डाल.' अपि ।—प्रज्ञादाणि चाण्डालः—इत्येके । तन्न ।

१. विश्वे पुस्तकद्वयेऽपि 'मन्दः खले मन्दरते मूर्खे स्वैरऽपरागिणो । अभाग्येऽपि च मातङ्गो गजजातिप्रभेदयो.॥' इत्येव (७८।१०) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठो युक्त।

२. विश्वे 'दक्ष पटौ हरवृषे ताम्रचूडे प्रजापतौ। मुनिभेदे द्रुमे वह्नौ दक्षो, दक्षा भुवि स्मृता ॥' इति ( १८२।४ ) मेदिन्या च 'दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ । मुनिभेदे हरवृषे द्रुमभेदे, स्त्रियां भुवि ॥' इति ( १६६।१४-१५ ) इति भिन्नपाठयो. सत्त्वेनात्रयो "विश्वः ( मेदिनी )" इति प्राक्तनपाठः परिवर्तित., 'हैम' इति पाठः स्थापितश्च ।

३. अत्रत्येन'—दक्षाशीतयोः—' इति पाठेन सह हैम ( २।१३४ ) विश्व ( ४८।१७ ) विसंवादान्मयात्र '—दक्षाशीतयो.—' इति नूतनः पाठः स्वीकृत ।

१ '—स्त्री श्वपचेऽपि च । जलकाके च······शब्दे प्लुतगतौ पुमान् ।—' इति मेदिन्याः पाठ. ।

२ "अकारादनुपपदात् कर्मोपपदो विप्रतिपेधेन" । अकारादनुपपदात् कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्यावकाश पचतीति पच. । कर्मोपपदस्यावकाशः कुम्भकार. नगरकारः । इहोभयं प्राप्नोति ओदनपाचः कर्मोपपदो भवति विप्रतिषेधेन" इति 'कर्मण्यण्' सूत्रस्थभाष्योक्तावपि 'श्वपच' शब्दस्य पचादिगणे प्रतिपदोक्तत्वेन पाठात्तद्बाध वाधित्वा 'नन्दिग्रही'ति अच्प्रत्यय एव भवति ।

'कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि' (५।४।३६ सूत्रे ) इति वार्तिकेन छन्दस्यण्विधानाल्लोके तद भावात् ॥ ( ९ ) ॥ * ॥ पुत् कुत्सितं पुण्यं वा ( ३।१।१३४ ) मूलविभुजादिक ( वा० ३।२।५ ) वा । पृषोदरादि ( ६।३।१०९ ) ॥ * ॥ 'पुष्कसी कालिकानील्योः पुष्कसः श्वपचेऽधमे'[इति विश्वे १७७।४२]दर्शनात् पुक्कसोऽपि ॥ * ॥ [हैमे[१] ३।७९४ तु 'बुक्कसी—बुक्कस–' शब्दावुपलभ्येते] ॥ ( १० ) ॥ * ॥ दश 'चाण्डालस्य'।

भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥

किरात, शबर, पुलिन्द ( ३ पु), ये तीन 'म्लेच्छजाति' ( स्त्री ), 'म्लेच्छ ( चाण्डाल ) के जाति-विशेष' हैं।

भेदेति ॥ किरातादयस्त्रयो म्लेच्छजातयश्चण्डालभेदाः । यत्तु—म्लेच्छदा-दयाख्या —इति मुकुट । तन्न । जातिपदवैयर्थ्यप्रसङ्गात् । 'म्लेच्छाः ' इत्येव वक्तुं युक्तत्वात ॥*॥ किरति । 'कॄ विक्षेपे'(तु० प० से०)।'इगुपध–'(३।१।१३५)इति क । अनति । 'अत सातत्यगमने'(भ्वा० प० से०) । अच् (३।१।१३४) । किरश्चासावतश्च । 'किरातो म्लेच्छभेदे स्यादल्पस्वपिम्लेच्छनावपि । स्त्रिया[२]चामरधारिण्या कुट्टनीदुर्गयोरपि' ( इति मेदिनी ६१।१०५ ) ॥ ( १ ) ॥ * ॥ शवति । 'शव गतौ' (भ्वा० प० से०) । बाहुलकादर । शव राति वा । क (३।२।३) । 'शबरो म्लेच्छभेदे च पानीये[३] शङ्करेऽपि च' [ इति विश्व १६३।१०१, मेदिनी १३८।२५९ ] ॥ ( १ ) ॥ * ॥ पोलति । 'पुल महत्वे' ( भ्वा० प० से० ) । कुणिपुल्यो: किन्दच्' (उ० ४।८५) इति मुकुट । पुलिन्द मध्यते म्लेच्छे पुलिन्देऽपि निगद्यते' इति तारपाल । 'पुलिन्द पक्वशबर ' इति रत्नकोष ॥ (१) ॥ * ॥ म्लेच्छति । म्लेच्छ अव्यक्ते शब्दे' ( भ्वा० प० से० ) अच् (३।१।१३४) । म्लेच्छाना जातयोऽवान्तरभेदा । 'गोमांसभक्षको यस्तु लोकबाह्यं च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते' सूत संहितायामपि—'ब्राह्मण्या वैश्यतो जात क्षत्ता भवति नामत । अस्यामनेन चौर्येण म्लेच्छो विप्रात्प्र जायते ॥' इति ।

व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।

व्याध, मृगवधाजीव, मृगयु, लुब्धक (४ पु), 'व्याध' के ४ नाम हैं।

---

१ हैमे 'ख ग' पुस्तकद्वयेऽन्त स्थादि पाठ, 'क' पुस्तके तु पवर्गप्रथमादिरेव ।

२ '—चामरधारिण्या—' इति मेदिनीपाठ ।

३ विश्वे '—वारिचण्डालभेदयो —' इति पाठ ।

व्येति ॥ विध्यति । 'व्यध ताडने' (दि० प० अ०)। 'श्याद्व्यधा–' ( ३।१।१४१ ) इति ण ॥ (१) ॥ * ॥ मृगवधेनाजीवति । 'इगुपध–' ( ३।१।१३५ ) इति क ॥ (२) ॥ * ॥ मृगान् वधार्थं याति । 'या प्रापणे' (अ० प० से० ) । 'मृगय्वादयश्च' ( उ० १।३७ ) इति कु । 'मृगयु पुंसि गोमायौ व्याधे च परमेष्ठिनि' ( इति मे० १२०।१०१ )॥ (३) ॥ * ॥ लुभ्यते स्म । 'लुभ गार्ध्ये' (दि० प० से०) । क्त ( ३।२।१०२ ) । स्वार्थे (ज्ञापि० ५।४।५) संज्ञायाम् ( ५।३।७५ ) वा वन् ॥ (४) ॥०॥ चत्वारि व्याधस्य' ।

कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥

शुनको भषकः श्वा स्यात्

कौलेयक, सारमेय, कुक्कुर, मृगदंशक, शुनक, भषक, श्वा ( ७ पु ), 'कुत्ते' के ७ नाम हैं।

कावेति ॥ कुले भव । 'कुलकुक्षि–' ( ४।२।९६ ) इति ढकञ् । 'कौलेयक सारमेये कुलीने' (इति हैम[१], मे० १५।१८५) ॥ (१) ॥ * ॥ सरमाया अपत्यम् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) ॥ ( २ ) ॥ * ॥ कोकते । 'कुक आदाने' ( भ्वा० आ० से० ) । क्विप् ( ३।२।१७८ ) कुरति । 'कुर शब्दे' (तु० प० से०) । क (३।१।१३५)। कुक् चासौ कुरश्च । 'कुक्कुर सारमेये ना ग्रन्थिपर्णे नपुंसकम्' (इति [२]विश्व, मे० १३७।१३२)॥(३) ॥०॥ मृगान् दशति । 'दश दशने' ( भ्वा० प० अ० ) । अण् (३।२।१) । कन् ( ज्ञापि० ५।४।५ ) ॥ (४) शुनति । 'शुन गतौ' ( तु० प० से० ) । क्वुन् ( उ० २।३२ ) ॥ (५) ॥ * ॥ भषति 'भष भर्त्सने' ( भ्वा० प० से० ) । क्वुन् (उ० २।३२) ॥ (६) ॥ * ॥ श्वयति । 'टुओश्वि गतिवृद्ध्यो ' ( भ्वा० प० से०) । 'श्वन्नुक्षन्–' (उ० १।१५७) इति साधु ॥ ( ७ ) ॥ * ॥ 'कुक्कुरस्तु शुनि श्वान कपिलो मण्डल शुन ' इति वाचस्पति ॥ * ॥ सप्त 'शुनकस्य' ।

अलर्कस्तु स योगितः ।

अलर्क ( पु ), 'पागल या रोगी कुत्ते' का १ नाम है।

---

१ हैमे पुस्तकत्रये 'अथ कौलेयक सारमेयकुलीनयो ' इति ( ४।९ ) इति भिन्नपाठादत्र 'मेदिनी' इत्येव पाठो युक्त ।

२ विश्वे 'कुक्कुरो वक्रपुच्छे स्याद् ग्रन्थिपर्णेऽपि कुक्कुरे ।' इति ( १३५।१२५) भिन्नपाठादत्रापि मेदिनी त्येव पाठो युक्त ।

अलेति ॥ अलम् अर्यते । 'अर्क स्तवने' ( चु० प० से० ) अर्च्यते वा । 'अर्च पूजायाम्' ( भ्वा० प० से० ) । घञ् ( ३।३।१९ ) । शकन्ध्वादि ( वा० ६।१।९४ ) । 'अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे'¹ [इति विश्व १४।१५२ मे० ४।४५ ] ॥ (१) ॥ * ॥ योगो मत्ततोपायो जातोऽस्य । तारकादित्वात् (५।२।३६) इतच् । यद्वा—योग्यन्ते स्म । 'युषि वर्जने' ( भ्वा० प० से० ) । ण्यन्तः । अनित्यत्वान्न नुम् । क्त ( ३।२।१०२ ) ॥ * ॥ एकं 'मत्तशुनः' ।

श्वा विश्वकद्रुर्मृगयाकुशलः

विश्वकद्रुः ( पु ), 'शिकारी कुत्ते' का १ नाम है ।

श्वेति ॥ विश्वकं सर्वं द्रवति । 'द्रु गतौ' ( भ्वा० प० अ० ) । मितद्र्वादित्वात् (वा० ३।२।१८०) डु । यद्वा—विश्वं कन्दति । 'कदि आह्वाने' ( भ्वा० प० से० ) । कद्र्वादि ( उ० ४।१०२ ) । 'विश्वकद्रुस्त्रिषु खले ध्वानान्वेषशुनो पुमान्' (इति मेदिनी १४४।२९६)॥(१) ॥*॥ मृगयायां कुशलः ॥ * ॥ एकं 'मृगयाकुशलशुनः' ।

सरमा शुनी ॥ २२ ॥

सरमा, शुनी ( स्त्री ), 'कुतिया' के २ नाम हैं ।

सेति ॥ सरति । 'सृ गतौ' (भ्वा० प० अ०)। बाहुलकादमः । [ 'सरमा कुक्कुरीदेवशुन्यो. स्याद्राक्षसीभिदि' इति मेदिनी ११२।५६] ॥ (१) ॥ * ॥ शुनी गौरादि (४।१।४१) ॥ (२) ॥ * ॥ द्वे 'शुन्याः' ।

विट्चरः सूकरो ग्राम्यः

विट्चरः ( पु ), 'ग्रामके सूअर' का १ नाम है ।

वीति ॥ विषं विष्ठां चरति । 'चर गत्यर्थो' (भ्वा० प० से०) । अच् (३।१।१३४) । मूलविभुजादिक. (वा० ३।२।५) वा । विषश्चरो वा ॥ ( १ ) ॥ * ॥ एकं 'ग्राम्यसूकरस्य' ।

वर्करस्तरुणः पशुः ।

वर्करः ( पु ), 'जवान पशु' का १ नाम है ।

वेति ॥ वर्कते । 'वृक आदाने' ( भ्वा० आ० से० ) बाहुलकादरन् । 'वर्करः परिहासे स्याच्छागे पुम्पश्वावपि' [इति विश्वः², मे० १३७।२१० ] । 'वर्करो मेषशावक.' इति रक्षितः ॥ (१) ॥ * ॥ एकं 'तरुणपशुमात्रस्य' ।

१. विश्वे पुस्तकद्वये '—योगोन्मादिनि—' इति पाठः ।

२. विश्वे 'वर्करस्तरुणे मेषे' इति ( १३७।१४८ ) भिन्नपाठादत्र 'मेदिनी' इत्येव युक्त. पाठ. ।

आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥२३॥

आच्छोदनम्, मृगव्यम् ( २ न ), आखेटः (पु), मृगया ( स्त्री ), 'शिकार' के ४ नाम हैं ।

आच्छवेति ॥ आच्छिद्यन्तेऽत्र । ल्युट् (३।३।११७)। पृषोदरादि. (६।३।१०९) ॥ (१) ॥ * ॥ मृगा व्ययन्तेऽत्र । 'व्यय गतौ' (भ्वा० उ० से०) । 'अन्येभ्योऽपि—' ( वा० ३।२।१०१ ) इति ड ॥ (२) ॥ * ॥ आखिट्यतेऽत्र । 'खिट त्रासे' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१ ) इति घञ् ॥ ( ३ ) ॥ * ॥ मृग्यन्तेऽत्र । 'मृग अन्वेषणे' (चु० आ० से०) । 'परिचर्यापरिसर्यामृगया—' (वा० ३।३।१०१) इति साधु ॥ (४) ॥ * ॥ चत्वारि 'शिकार' इति ख्यातस्य ।

दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ।

दक्षिणेर्मा 'व्याधके मारनेसे दहने भागमें घाववाले मृग आदि पशु' का १ नाम है ।

देति ॥ दक्षिणेऽरुरस्य ॥ * ॥ दक्षिणे ईर्मसस्य । 'दक्षिणेर्मा लुब्धयोगे' (५।४।१२६) इति साधु ॥ (१) ॥ * ॥ एकं 'दक्षिणव्रणस्य'¹ ।

चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।

चौरः, ऐकागारिकः, स्तेनः, दस्युः, तस्करः, मोषकः, प्रतिरोधी, परास्कन्दी, पाटच्चरः, मलिम्लुचः (१० पु), 'चोर' के १० नाम हैं ।

चाविति ॥ चोरणम् । 'चुर स्तेये' ( चु० प० से० ) 'अ प्रत्ययात्' ( ३।३।१०२ ) । लघूपधत्वान्न गुणः । चुरा शीलमस्य । 'छत्रादिभ्यो णः' (४।४।६२) । 'चोर. पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि' [इति ²विश्व, मे० १२५।३७ ] । पचाद्यचि 'चोरः' अपि ॥ (१) ॥ * ॥ एकमसहायमगारं प्रयोजनमस्य । ऐकागारिकट् चौरे' ( ५।१।११३ ) इति साधुः ॥ (२) ॥ * ॥ स्तेनयति । 'स्तेन चौर्ये' (चु० उ० से०) । पचाद्यच् (३।१।१३४) ॥ (३) ॥ * ॥ दस्यति । 'दसु उपक्षये' (दि० प० से०) ।

१. लुब्धकाघातेन दक्षिणभागे जातव्रणस्य मृगादेः इति तात्पर्यम् ।

२. विश्वे ग्रन्थद्वये 'चौरश्चौरसुगन्धयोः' इति (१२७-२५) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठो युक्तः । मेदिन्यामपि 'चौरः''''चोरपुष्पी—' इति पाठाच्चौरशब्दविवरणेऽस्य पाठो युक्त आसीत् ।

'[1]जनिमिदिसिभ्यो यु' ( उ० ३।२० )। 'अनुनासिकयो' इत्युक्तत्वान्नान (७।१।१)। 'दस्युश्चौरे रिपौ पुंसि' [इति हैम [2], मे० ११५।३०] ॥ (४) ॥ * ॥ तत् करोति। 'कियत्तद्बहुषु' ( वा० ३।२।२१ ) इत्यच्। 'तद्बृहतो करपत्यो–' (ग० ६।१।१५७) इति सुट्तलोपौ ॥ (५) ॥ * ॥ मुष्णाति। 'मुष स्तेये' ( क्र्या० प० से० )। ण्वुल् (३।१।१३३) ॥ (६) ॥ * ॥ प्रतिरोद्धुं शीलमस्य। 'रुधिर् आवरणे' (रु० उ० अ०)। 'सुपि–' (३।२।७८) इति णिनि ॥ ( ७ ) ॥ * ॥ परान् आस्कन्तुं शीलमस्य। 'स्कन्दिर् गत्यादौ' ( भ्वा० प० अ० )। 'सुपि–' (३।२।७८) इति णिनि ॥(८) ॥ * ॥ पाटच्चरति। अच (३।१।१३४)। पृषोदरादि (६।३।१०९) ॥*॥ चौरजीर्णपटयोः पटच्चर' इति नामानुशासनम्॥ (९) ॥ * ॥ मल्यते। 'मल धारणे (भ्वा० आ० से०)। इन् (उ० ४।११८)। मलिं धृत्वा म्लोचति। 'म्लुच स्तेये' ( भ्वा० प० से० )। मूलविभुजादिक' (वा० ३।२।५)। 'मलिम्लुचो मासभेदे चौरज्वलनयो पुमान्' [इति विश्व, मेदिनी २८।२१] ॥ (१०) ॥ * ॥ दश 'चोरस्य'।

**चौरिका स्तैन्यचौर्ये च स्तेयम्**

**चौरिका (स्त्री), स्तैन्यम्, चौर्यम्, स्तेयम् (३ न), 'चोरी' के ४ नाम हैं।**

चाविति ॥ चौरस्य भाव, कर्म वा। मनोज्ञादित्वात् (५।१।१३३) वुञ् ॥ (१) ॥ * ॥ स्तेनस्य भाव, कर्म वा। 'स्तेनाद्यन्नलोपश्च' ( ५।१।१२५ ) इत्यत्र 'स्तेनात्' इति योगविभागात् ष्यञ् ॥ (२) ॥ * ॥ (यत्नलोपौ)॥ (४) ॥ * ॥ चौरस्य कर्म। ष्यञ् ( ५।१।१२४ ) ॥ (३) ॥ * ॥ 'स्तेय स्तैन्य च चौर्यं स्याच्चौरिकाचोरिके स्त्रियाम्' इति वाचस्पति ॥ * ॥ चत्वारि 'चोरकर्मण'।

**लोप्त्रं तु तद्धनम् ॥ २५ ॥**

**लोप्त्रम् ( न ), 'चोरीके धन या वस्तु आदि'का १ नाम है।**

लविति ॥ लुप्यते। 'लुप्लृ छेदने' (तु० उ० से०)। ष्ट्रन् ( उ० ४।१।१५९ ) ॥ * ॥ लून ष्ट्रनि 'लोत्रम्' अपि। 'लोत्रमश्रुणि चोरिते' इति विश्व' ॥(१) ॥ * ॥ तस्य चोरस्य धनम् ॥ * ॥ एकं स्तेयद्रव्यस्य'।

**वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ।**

**वीतंस (पु) 'फन्दा' अर्थात् 'पशु-पक्षियोंको फंसानेके लिये जाल आदि साधन-विशेष' का १ नाम है।**

वीति ॥ वितंस्यते। 'तसि अलंकारे' (चु० प० से०)। घञ् ( ३।३।१९ )। 'उपसर्गस्य–' ( ६।३।१२२ ) इति दीर्घ। 'वीतंसो बन्धनोपाये मृगाणामपि पक्षिणाम्। [2]तेषामेव च विश्वासहेतौ प्रावरणेऽपि च' [ इति विश्व १७५।२३, मे० १७२।४०] ॥ (१) ॥ * ॥ एकं 'मृगादिबन्धनसाधनस्य'।

**उन्माथः कूटयन्त्रं स्यात्**

**उन्माथ (पु), कूटयन्त्रम् (न), 'पशु-पक्षियोंको फँसानेवाले यन्त्र-विशेष' के २ नाम हैं।**

विति ॥ उन्मथ्यतेऽनेन। 'मथे विलोडने' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'उन्माथ कूटयन्त्रे स्यान्मारणे घातके पुमान्' (इति मे० ७३।१६) ॥ ( १ ) ॥ * ॥ कूटस्वरूपं यन्त्रम्॥ ( २ ) ॥ * ॥ द्वे 'मृगादिबन्धनयन्त्रस्य'।

**वागुरा मृगबन्धनी ॥२६॥**

**वागुरा, मृगबन्धनी (२ स्त्री), 'पशु या मृगको फँसानेके जाल-विशेष' के २ नाम हैं।**

वेति ॥ अवा गुरते। गुरी हिंसायाम्' (तु० प० से०)। इगुपध–' ( ३।१।१३५ ) इति क। 'वष्टि भागुरि–' इत्यकारलोप ॥ (१) ॥ * ॥ मृगो बध्यतेऽनया। 'बन्ध बन्धने' ( क्र्या० प० अ० )। 'करणा–' (३।३।११७) इति ल्युट् ॥(२)॥*॥—वालेर्भंद्रादित्वाण्ण् गुक् वागम– इति मुकुटस्त्वपाणिनीय ॥ * ॥ द्वे जालविशेषस्य'।

**शुल्वं वराटक स्त्री तु रज्जुस्त्रिषु वटी गुणः ।**

**शुल्वम्, वराटकम् ( २ न ), रज्जु ( स्त्री ), वटी ( त्रि स्त्री ), गुण ( पु ), 'रस्सी' के ५ नाम हैं।**

श्विति ॥ शुल्व्यते, शुल्वयति वा। 'शुल्व विसर्गे' (चु० प० से०) ण्यन्त। 'एरच्' ( ३।३।५६ )। अच् (३।१।१३४) वा। 'रज्जु शुल्वा वराटो ना' इति रत्नकोषात् स्त्र्यपि। 'शुल्व ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ'

१ सि० कौ० उणादिसूत्रपाठे च "यजिमनिशुन्धिदसिजनिभ्यो युच्" इत्येव सूत्र पठ्यते।

२ हैमे पुस्तकत्रयेऽपि 'दस्यु प्रत्यर्थिचोरयो' इति (२।२६९) भिन्नपाठादत्र 'मेदिनी' इत्येव पाठो युक्त ॥

३ विश्वे 'मलिम्लुचोऽनिले चोरे' इति (३१।१९) पाठादिहापि 'मेदिनी' इत्येव पाठ्यम्। मेदिन्यामुपलभ्यमान '—मासभेद—'इति निरनुस्वार एव युक्त।

१. विश्वेऽस्य वचनस्यानुपलम्भान्मूल मृग्यम्।

२ विश्वमेदिन्यो 'मृगाणां पक्षिणामपि। तेषामपि–' इति पाठ।

( इति 'विश्वः मेदिनी १५६।२७ ) ॥ * ॥ स्वामी तु— 'सुम्बं वटाकर.'—इति पठति । सु पूजित मीयते । 'मीङ् गत्या (हिंसाया)म्' ( दि० आ० अ० ) । 'एरच्' (३। ३।५६) । बाहुलकात्खण् । सुम्बे पुण्ये साधु । 'तत्र साधु' ( ४।४।९८ ) इति यत् ॥ (१) ॥ * ॥ वटं वेष्टनमाकरोति । पचाद्यच् ( ३।१।१३४ ) ॥ ( २ ) ॥ * ॥ सृज्यते । 'सृज विसर्गे' ( तु० आ० अ० )। 'सृजेरसुम् च' (उ० १।१५) चात् सलोपः ॥—सृजे कुरमुगागमश्च—इत्यादिमुकुटस्तत्वपाणिनीय ।'रज्जुर्वेण्या गुणे योषित्'[ इति विश्व ३३।१४, मेदिन्यौ ३०।१४ ]॥(३) ॥*॥ वर्तते । 'वट वेष्टने' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । गौरादि. ( ४।१।४१ ) वटयते वा । 'खनो घ च' (३।३। १२५) इति घ. । 'वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयो' (इति मे० ३५।२३) ॥ (४) ॥ * ॥ गुण्यते । 'गुण आमन्त्रणे' (चु० उ० से०) अदन्त । 'एरच्' (३। ३।५६) 'गुणो मौर्व्यप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसंध्यादिसत्त्वाद्यावृत्तिरज्जुषु ॥ शुक्लादावपि वटया च' (इति मे० ४५।१० ११) ॥ (५) ॥ पञ्च 'रज्जो'।

**उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥**

**उद्घाटनम्, घटीयन्त्रम् ( २ न ), 'कुएँसे पानी निकालनेवाले पुरवट, मोठ, रेंहट आदि साधन' के २ नाम हैं।**

उद्घेति ॥ उद्घाटयते, अनेन वा । 'घट संघाते' (चु० उ० से०) ण्यन्तः । ल्युट् ( ३।३।११३,११७ ) ॥ (१) ॥ * ॥ घटीना यन्त्रम् ॥ (२) ॥ * ॥ प्रहे. = कूपात् । सलिलमुद्वाह्यतेऽनेन ॥ * ॥ द्वे 'अरट' इति ख्यातस्य ।

**पुंसि वेमा वापदण्डः**

**वेमा ( न ), वापदण्डः ( २ पु ), 'जुलाहोंके साधन-विशेष' अर्थात् 'जिससे कपड़ा बुनते समय सूत बराबर किया जाता है उस हथियार' के २ नाम हैं।**

पुंसीति ॥ वपत्यनेन । 'वेञ् तन्तुसंताने' (भ्वा० उ० अ०) 'वेञ सर्वत्र' ( उ० ४।१५० ) इति मनिन् ॥ (१) ॥ * ॥ वपनम् । 'डुवप्' ( भ्वा० उ० से० ) । घञ् (३। ३।१८) । वापस्य दण्डः ॥ * ॥ 'वायदण्ड' इति क्वचित् पाठः । तत्र वेञो भावे घञ् । 'आतो युक्–' (७।३।३३)। वायस्य दण्ड. ॥ (२) ॥ * ॥ द्वे 'वस्त्रव्युतिदण्डस्य'।

१. विश्वे ग्रन्थद्वयेऽपि 'सुम्ब' शब्दस्य विवरणाभावादत्र 'मेदिनी' इत्येव पाठो युक्तः ।

२. विश्वग्रन्थद्वये '—गुणे स्मृता' इति पाठः ।

३. '—त्यागशौर्यादि—' इति मेदिनीपाठः ।

**सूत्राणि नरि तन्तवः ।**

**सूत्रम् ( न ), तन्तुः ( पु ) 'सूत' के २ नाम हैं।**

सित्रेति ॥ सूत्र्यते । 'सूत्र वेष्टने' ( चु० उ० से० ) अदन्त । 'एरच्' ( ३।३।५६ ) । सीव्यते, अनेन वा । 'षिवु तन्तुसंताने' । (दि० प० से०) । 'सिविमुच्योष्टेरू च' (उ० ४।१६३) चात् कित् ष्ट्रन् प्रत्यय । 'सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयो.' [इति हैम २।४८१] ॥ (१) ॥*॥ नरि=पुंसि ॥*॥ तन्यते । 'तनु विस्तारे' (त० उ० से०) । 'सितनि–' ( उ० १।६९ ) इति तुन् ॥ * ॥ 'सूत्रतन्तु' इति हारावल्या सहतोऽपि ॥ (२) ॥*॥ द्वे 'सूत्राणाम्' ॥

**वाणिर्व्यूतिः स्त्रियौ तुल्ये**

**वाणिः, व्यूतिः ( २ स्त्री ), 'कपड़े आदिको बुनने' के २ नाम हैं।**

वेति ॥ वाणनम् । 'वण शब्दे' घुरादि । 'अच इ' ( उ० ४।१३९ ) ॥ (१) ॥*॥ विशिष्टा ऊतिः । वेञ 'ऊतियूति–' (३।३।९७) इत्यादिना क्तिन् निपातितः ॥ (२) ॥*॥ द्वे 'वस्त्रादिवानस्य' ॥

**पुस्तं लेप्यादिकर्मणि ॥ २८ ॥**

**पुस्तम् (न), 'मिट्टी, कपड़े या चमड़े आदिसे लीपने या पुतली बनाने' का १ नाम है।**

पुवेति ॥ पुस्त्यते । 'पुस्त आदरानादरयो' ( चु० प० से०) णिच् । 'एरच्' ( ३।३।५६ ) ॥ (१) ॥ *॥ 'मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृत वापि पुस्तमित्यभिधीयते' । लेप्यमादिर्यस्य । तच्च तत्कर्म च । आदिना काष्ठपुत्तलिकादि ॥*॥ एकं 'वस्त्रादिलेप्यस्य' ॥

**पञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ।**

**पञ्चालिका, पुत्रिका ( २ स्त्री ), 'हाथी दाँत या कपड़े आदिकी पुतली' के २ नाम हैं।**

पेति ॥ पञ्चभिर्वर्णैरत्यते । 'अल भूषणादौ' ( भ्वा० प० से० ) । घञ् (३।३।१९)। स्वार्थे वुञ् (ज्ञापि० ५।४। ५) । टाप् (४।१।४) । 'प्रत्ययस्थात्–' (७।३।४४) इति इत्वम् । 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् वा । संज्ञापूर्वकत्वान्न वृद्धि- ॥*॥ 'पाञ्चालिका' इति पाठे पञ्चालदेशे भवा । 'जनपदतदवध्योश्च' (४।२।१२४) इति वुञ् । आदिवृद्धि. (७।२।११७)। 'पाञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयो' [ इति मे० १६।१९८ ] ॥ (१) ॥ * ॥ पुत्रीव । 'इवे–' ( ५।३।९६ ) इति कन् । यावादित्वात् ( ५।४।२९ ) स्वा । 'स्यात् पुत्रिका पुत्तलिकादुहित्रोर्यव-

तूलिके । ना पुत्रे[1] शरभे धूर्ते शैलवृक्षप्रभेदयो '[इति विश्व १६।१७३ १७४, मेदिनी ११।१२४ १२५] ॥ (२) ॥*॥ आदिना काष्ठमृच्छिलादिकृता ॥*॥ द्वे लेप्यादे ' ॥

**पिटक पेटक पेटा मञ्जूषा**

पिटक , पेटक ( २ पु ), पेटा, मञ्जूषा ( २ स्त्री ), 'पेटी' झँपोली, बक्स आदि' के ४ नाम हैं ।

पीति ॥ पेटति । पिट सघाते' (भ्वा० प० से ०)। क्वुन ( उ० २।३२ ) । पिटकस्त्रिषु विस्फोटे मञ्जूषाया पुन पुमान्' ( इति मेदिनी १०।१२० )॥ (१) ॥*॥ ण्वुल् ( ३।१।१३३ ) । 'पेटक पुस्तकादीना मञ्जूषाया कदम्बके [ इति विश्व १०।१०३ । मे० ११।१२७ ] ॥ (२) ॥*॥ अच (३।१।१३४) ॥*॥ पेडा' इति मुकुट तत्र पिण्डते । पिडि सघाते' (भ्वा० आ० से० ) । अच् (३।१।१३४) । अनित्यत्वान्न नुम् ॥ * ॥— पीडा'—इति स्वामी । तत्र पीडयति । 'पिड अवगाहने' ( चु० प० से० ) । अच् (३।१।१३४) ॥ (३) ॥ * ॥ मज्जति, अत्र वा । 'टुमस्जो शुद्धौ' (तु० प० अ०) । 'मस्जेर्नुम् च' (उ० ४।७७) इत्यूषन्। यत्त—द्विजषार —इति मुकुट । तन्न । मस्जेरन्त्यात्पूर्वो वा नुम्' ( १।१।४७ सूत्रे ) इति वार्तिकविरोधात् ॥ (४) ॥*॥ चत्वारि 'वस्त्रालङ्कारादि स्थापनमञ्जूषाया ' पेटी' इति ख्याताया । मुकुटस्तु— आद्यद्वयम् 'झापी' इति ख्याताया , अन्त्यद्वयम् 'मञ्जूषा' इति ख्याताया —इत्याह ।

अथ विहङ्गिका ॥ २९ ॥

**भारयष्टि**

विहङ्गिका, भारयष्टि ( २ स्त्री ), 'बहँगीके डण्डे' के २ नाम हैं ।

अथेति ॥ विहगस्य प्रतिकृति । 'इवे प्रतिकृतौ' (५।३।९६) इति कन । विहायसा गच्छति वा । 'गमश्च' (३।२।४७) इति खच । विहायसो विह च खच्च डिद्वाच्य ' ( वा० ३।२।३८ ) । यावादित्वात् ( ५।४।२९ ) कन् ॥*॥ मुकुटस्तु— विङ्गमा'—इति पठति ॥ (१) ॥*॥ भारस्य यष्टि ॥ (२) ॥ * ॥ द्वे शिक्याधारलगुडस्य' । 'कावडि' इति ख्याताया ॥

**तदालम्बि शिक्यं काचः**

शिक्यम् ( न ), काच ( पु ) 'बहँगीके डण्डेमें लटकते हुए सिकहर' के २ नाम हैं ।

१ विश्वे '—पुत्रके शरभे—' इति पाठ , मेदिन्या '—तूलके—' इति पाठ ।

तेति ॥ तामालम्बितु शीलमस्य । 'लबि अवस्रसने' (भ्वा० आ० से०)। सुपि—' (३।२।७८) इति णिनि ॥ (१) ॥*॥ श्रमतेऽस्मात् । 'स्रसु अध पतने' (भ्वा० आ० से०) । 'स्रसे शि कुट् किच्च' (उ० ५।१६) इति यत् धातो शिरादेशो यत कुट —शक्नोति वोढुम् । अघ्न्यादि (उ० ४।११२) इति मुकुटस्त्वेतत्सूत्रादर्शनमूलक । कच्य तेऽत्र । 'कच बन्धे' (भ्वा० आ० से०) । 'हलश्च (३।३।१२१)इति घञ्। 'काच शिक्ये मणौ नेत्ररोगभेदे मृद तरे [ इति विश्व , मेदिनी' २७।२ ] ॥ ( २ ) ॥ * ॥ द्वे 'शिक्यस्य' ॥

अथ पादुका[2] ।

**पादूरुपानत्स्त्री**

पादुका, पादू , उपानत् ( ३ स्त्री ), 'जूता, खड़ाऊ, बूट सिलेपर, चट्टी आदि' के ३ नाम हैं ।

अथेति ॥ पद्यतेऽनया । 'पद गतौ' ( दि० आ० अ०) । 'णिस्कसिपद्यर्तें ' ( उ० १।८५ ) इत्यू । स्वार्थे कन् (ज्ञापि० ५।४।५) वा ॥ (१) ॥ * ॥ (२) ॥*॥ पाद उपनह्यते, पादमुपनह्यति वा । 'णह बन्धने' ( दि० उ० अ० ) । सम्पदादित्वात् ( वा० ३।३।१०८ ) क्विप च' ( ३।२।७६ ) इति वा क्विप । नहिवृति—' ( ६।३।११६) इति दीर्घ ॥ (३) ॥*॥ त्रीणि 'पादत्राणस्य ॥

सैवानुपदीना पदायता ॥३०॥

अनुपदीना ( स्त्री ), 'पैतावा या पूरे पैरके जूते (बूट)' का १ नाम है ।

सैवेति ॥ पदस्यानु । 'यस्य चायाम ' ( २।१।१६ ) इत्यव्ययीभाव । अनुपद पादायामप्रमाणा बद्धा । अनुपद सर्वा—' (५।२।९) इति ख ॥ (१) ॥*॥ एक विस्तृत पादत्राणस्य' ॥

**नध्री वध्री वरत्रा स्यात्**

नध्री, वध्री, वरत्रा (३ स्त्री), 'चमड़ेकी रस्सी' के ३ नाम हैं ।

नेति ॥ नह्यतेऽनया । णह बन्धने' (दि० उ० अ०)। दाम्नी—' (३।२।१८२) इति ष्ट्रन् ॥ (१) ॥*॥ वर्धते । 'वृधु वर्धने' (भ्वा० आ० से०) । वृधिवपिभ्या रन' (उ०

१ विश्वे 'काचस्तु मणौ शिक्ये मृदन्तरे । नेत्ररोगेऽपि इति (३०।१-२) पाठादत्र विश्व मेदिन्यो' इत्यस्य स्थाने 'मेदिनी' इत्येव पाठो युक्त ।

२. 'पादुका' शब्दस्य सामान्यत 'खडाऊँ' इति ख्यातेऽपि व्यवहार ।

२।२७) । गौरादित्वात् (४।१।४१) ङीष् ॥ (२) ॥*॥ व्रियतेऽनया । 'वृञ् वरणे' (स्वा० उ० से०) । 'वृञश्चित्' (उ० ३।१०७) इत्यत्रन् ॥ (३) ॥*॥ त्रीणि 'चर्ममयरज्जोः' ॥

अश्वादेस्ताडनी कशा ।

कशा (स्त्री) 'कोड़ा या चाबुक' का १ नाम है।

अश्वेति ॥ ताड्यतेऽनया । 'तड आघाते' (चु० प० से०) ण्यन्तः । ल्युट् (३।३।११७) ॥*॥ कशति । 'कश शब्दे' ( ), 'कश गतिशासनयोः' (अ० आ० से०) वा । अनिटो नुम्[1] । अच् (३।१।१३४) ॥ (१) ॥*॥ आदिना उष्ट्रबलीवर्दादिग्रहः ॥*॥ एकं 'प्रतोदस्य' ॥

चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ॥३१॥

चाण्डालिका, कण्डोलवीणा, चण्डालवल्लकी (३ स्त्री), 'चण्डाल आदि के किंगरी नामक बाजा' के ३ नाम हैं।

चेति ॥ चण्डालस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'टिड्ढा-' (४।१।१५) इति ङीप् । स्वार्थे कन् (ज्ञापि० ५।४।५) । चण्डालेन कृता वा । 'कुलालादिभ्यो वुञ्' (४।३।११८) 'चाण्डालिका[2] किंनरायामुमायामोषधीभिदि' (इति मे० १५१।६९, विश्वश्च २०।२२४)॥ (१) ॥*॥ कण्डते । 'कडि मदे' (भ्वा० प० से०) । बाहुलकादोलच् ।—'कडिकपि-'— इति मुकुटस्तपाणिनीयः । कण्डोलस्य चण्डालस्य वीणा ॥*॥ 'कटोलवीणा' इति पाठे तु—कटति । 'कटे वर्षावौ' (भ्वा० प० से०) । 'कपिगडि-' (उ० १।६६) इत्योलच् ॥ (२) ॥*॥ चण्डालस्य वल्लकी ॥(३)॥*॥ त्रीणि 'चाण्डालिकायाः', 'किंगरि' इति ख्यातायाः ।

नाराची स्यादेषणिका

नाराची, एषणिका (२ स्त्री), 'सोना-चाँदी तौलनेवाले काँटे' के २ नाम हैं।

नेति ॥ स्वल्पो नाराचो बाणभेदः । गौरादि० (४।१।४१) ॥ (१) ॥*॥ इष्यतेऽनया । 'इष गतौ' (दि० प० से०) । ल्युट् (३।३।११७) । कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे 'सुवर्णतुलायाः' ॥

शाणस्तु निकषः कषः ।

शाणः, निकषः, कषः (३ पु), 'कसौटी या सान' के ३ नाम हैं।

शेति ॥ शायते । 'शाण दाने' (भ्वा० प० से०) । 'अकर्तरि-' (३।३।१९) इति घञ् । श्यति वा । 'शो तनूकरणे' (दि० प० अ०)। बाहुलकाण्ण । 'पुंसि[1] स्यात्, शाणो माषचतुष्टये । लोहादीनां च निकषे शाणी प्रावरणान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ निकषति । 'कष हिंसायाम्' (भ्वा० प० से०) । अच् (३।१।१३४) ।—निकष्यतेऽत्र । 'गोचर-' (३।३।११९) इत्यादिना घः—इति मुकुटश्चिन्त्यः । तत्र कषेरपाठात् । नेर्ग्रहणमुपसर्गान्तरनिवृत्त्यर्थम् । 'निकषः शाणफलके (निकषा यातुमातरि)' [इति विश्व १७२।१४, १६८।३९ मेदिनी] ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'सुवर्णपरीक्षणपाषाणस्य' । 'खड्गादितीक्ष्णीकरणयन्त्रस्य'—इत्यन्ये ॥

व्र(वृ)श्चनः पत्रपरशुः

व्रश्चन, पत्रपरशुः (२ पु), 'सोना चाँदी आदि काटनेकी छेनी आदि हथियार' के २ नाम हैं।

व्रेति ॥ वृश्च्यतेऽनेन ।'ओव्रश्चू छेदने'(तु० प० से०) 'करणाधि-' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ पत्रमिव परशुः ॥ (२) ॥*॥ द्वे 'सुवर्णादिच्छेदनद्रव्यस्य' ॥—'लघुकरवत्रस्य'—इत्यन्ये ॥

एषिका तूलिका समे ॥३२॥

एषिका, तूलिका (२ स्त्री), 'कूँची, जिससे रंग भरनेकी कलम' के २ नाम हैं।

एषीति ॥ इष्यते । 'इष गत्यादौ' (दि० प० से०) 'कृञादिभ्यो वुन्' (उ० ५।३५) ॥*॥ 'ईषिका' इति पाठे—ईष्यते, ईषति वा । 'ईष उञ्छे' (भ्वा० प० से०)। क्वुन् (उ० २।३२) ॥ (१) ॥*॥ तूलति । 'तूल निष्कर्षे' (भ्वा० प० से०) । क्वुन् (उ० २।३२) ॥ (२) ॥*॥ द्वे 'वीरणादिशलाकायाः' ॥

तैजसावर्तनी मूषा

तैजसावर्तनी, मूषा (२ स्त्री), 'सोना-चाँदी गलानेकी घरिया (मिट्टीके पात्र-विशेष)' के २ नाम हैं।

तेजेति ॥ तेजसो विकारः सुवर्णादिरावर्त्यतेऽस्याम् । 'वृतु वर्तने' (भ्वा० आ० से०) । ण्यन्तः । अधिकरणे ल्युट् (३।३।११७) ॥ (१) ॥*॥ मुषति । 'मुष स्तेये' (भ्वा० प० से०) । 'इगुपध-' (३।३।१३५) इति कः ॥*॥ 'मुष स्तेये' (क्र्या० प० से०) इत्यस्मात् भिदादिङ

---

१. 'कसि गतिशासनयोः' इत्यस्यार्थे 'ताळव्यान्तोऽप्यनिदित्' इति सि० कौ० उक्त्या स्वत एव नुमः प्राप्त्यभावः।

२. विश्व-मेदिन्योर्हृस्वादि'श्चण्डालिका'शब्दः पठ्यते, किन्तु हैमे दीर्घादिरेवेति ।

१. प्रथमं 'वेणु' शब्दव्याख्याने 'पुंसि स्यादि'त्यंशस्य 'वेणु' शब्देनैव सम्बद्धतमाऽत्र 'शाण' शब्देनापि तदंशस्य सम्बन्धो नोचितः प्रतिभाति ।

(३।३।१०४) ह्रस्वादिरपि ह्रस्वा मुषा मुषी । गौरादिः (४।१।४१) । मूषा । 'मुषा स्वावर्तनी मुषी' इति शब्दार्णवः । यत्तु—'मुष स्तेये' (क्र्या० प० से०) 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यकारप्रत्ययः । टापि 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घत्वे मूषा मुषा च–इति मुकुटः । तन्न । गुरुत्वाभावात् । दीर्घस्य धातोः सत्त्वेन 'अन्येषामपि–' इत्यस्यानुपयोगाच्च ॥ (२) ॥*॥ द्वे 'मूषायाः' ॥

भस्त्रा चर्मप्रसेविका ।

भस्त्रा, चर्मप्रसेविका ( २ स्त्री ), 'भाथी' के २ नाम हैं ।

भेति ॥ भस्यतेऽनया । 'भस दीप्तौ' (जु० प० से०) 'हुयामाश्रुभसिभ्यस्त्रन्' ( उ० ४।१६८ ) । 'सितुत्र–' (७।२।९) इति नेट् । अजादिः ( ४।१।४ ) ॥ (१) ॥ * ॥ चर्मणा प्रसीव्यते । 'षिवु तन्तुसंताने' (दि० प० से०) । 'कृञादिभ्यो वुन्' (उ० ५।३५) । 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् वा ॥ (२) ॥*॥ द्वे 'अग्निज्वलनार्थस्य' ।

आस्फोटनी वेधनिका

आस्फोटनी, वेधनिका ( २ स्त्री ), 'मोती-मणि आदि छेदनेवाली वर्मी' के २ नाम हैं ।

आस्फेति ॥ आस्फोट्यतेऽनया । 'स्फुट भेदने' चुरादिः । करणे ल्युट् (३।३।११७) ॥*॥ लसन्ती स्फोटयतीति 'लास्फोटनी' । पृषोदरादिः ( ६।३।१०९ ) इति मुकुटः ॥ (१) ॥*॥ विध्यतेऽनया । 'विध विधाने' (तु० प० से०) । ल्युट् (३।३।११७) । स्वार्थे कन् (ज्ञापि० ५।४।५) 'वेधनी तु लास्फोटन्या स्फोटनी वृषदंशिका' इति वाचस्पतिः ॥ ( २ ) ॥ * ॥ द्वे 'मुक्तादिवेधिन्याः' 'वर्मी' इति ख्यातायाः ।

कृपाणी कर्तरी समे ॥ ३३ ॥

कृपाणी, कर्तरी ( २ स्त्री ), 'सोना-चाँदी आदि काटनेवाली कैंची' के २ नाम हैं ।

क्विति ॥ कृपामणति । 'अण शब्दे' (भ्वा० प० से०) । अण् ( ३।२।१ ) । ङीप् ( ४।१।१५ ) ॥ ( १ ) ॥*॥ कृन्तति । 'कृती छेदने' ( तु० प० से० ) । बाहुलकादरः । यद्वा–कर्तनम् । घञ् ( ३।३।१८ ) । कर्तं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । गौरादि ( ४।१।४१ ) ॥ ( २ ) ॥ * ॥ द्वे 'कर्तर्याः' 'कैंची' इत्यस्याः ।

वृक्षादनी वृक्षभेदी

वृक्षादनी ( स्त्री ), वृक्षभेदी ( पु ), 'काष्ठ काटनेवाले सूला, बसूली आदि हथियार' के २ नाम हैं ।

व्रिति ॥ वृक्षमत्ति । 'अद भक्षणे' (अ० प० से०) । 'कृत्यल्युट–' ( ३।३।११३ ) इति ल्युट् ॥ ( १ ) ॥*॥ वृक्षं भेत्तुं शीलमस्य । 'भिदिर् विदारणे' (रु० उ० अ०) 'सुपि–' ( ३।२।७८ ) इति णिनिः ॥ ( २ ) ॥ * ॥ द्वे 'काष्ठतनूकरणसाधनस्य' 'बसूला' इति ख्यातस्य ।

टङ्कः पाषाणदारणः ।

टङ्कः ( पु न ), पाषाणदारणः ( पु ), 'पाषाण तोड़नेवाले टाँकी, छेनी, घन आदि हथियार' के २ नाम हैं ।

टेति ॥ टङ्कयति । 'टकि बन्धने' चुरादिः । अच् ( ३।१।१३४ ) । 'टम्' इति शब्दं कायति वा । 'कै शब्दे' ( भ्वा० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'सुपि–' ( ३।२।४ ) इति वा ॥ ( १ ) ॥ * ॥ पाषाणो दार्यतेऽनेन । 'दॄ विदारणे' ( क्र्या० प० से० ) ण्यन्तः । ल्युट् ( ३।३।११७ ) ॥ ( २ ) ॥ * ॥ द्वे 'पाषाणदारणार्थस्य शस्त्रभेदस्य' ।

क्रकचोऽस्त्री करपत्रम्

क्रकचः ( पु न ), करपत्रम् ( न ), 'लकड़ी चीरनेवाले आरा, आर या आरी आदि हथियार' के २ नाम हैं ।

क्रेति ॥ 'क्र' इति कचति । 'कच शब्दे' ( भ्वा० आ० से० ) अच् ( ३।१।१३४ ) । [ 'क्रकचः करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान्' इति मे० २८।१४ ] ॥ ( १ ) ॥ * ॥ करेण कराद्वा पतति । 'पत्लृ पतने' ( भ्वा० प० से० ) । ष्ट्रन् ( उ० ४।१५९ ) ॥ ( २ ) ॥ * ॥ द्वे 'काष्ठादिविदारणार्थस्य शस्त्रस्य' 'करोत' 'आरी साँह' इति ख्यातस्य ।

आरा चर्मप्रभेदिका ॥ ३४ ॥

आरा, चर्मप्रभेदिका ( २ स्त्री ), 'चमड़ा काटनेवाले हथियार' के २ नाम हैं ।

आरेति ॥ आ इयर्ति, ऋच्छति वा । 'ऋ गतौ' (जु० भ्वा० प० अ० ) । अच् ( ३।१।१३४ ) । आर्यते वा । भिदादौ ( ३।३।१०४ ) 'आरा शस्त्र्याम्' इति पाठात् साधुः । [ 'आरा चर्मप्रभेदिन्या पुंसि भौमे शनैश्चरे' इति मे० १२३।७ ] ॥ ( १ ) ॥ * ॥ चर्मणः प्रभेदिका ॥ ( २ ) ॥ * ॥ द्वे 'चर्मखण्डनार्थस्य शस्त्रभेदस्य' ।

सूर्मी स्थूणायःप्रतिमा

सूर्मी, स्थूणा, अयःप्रतिमा ( ३ स्त्री ), 'लोहेकी मूर्ति' के ३ नाम हैं ।

स्विति ॥ शोभना ऊर्मिः, बहुव्रीहिर्वा । 'सर्वतोऽक्तिन्नर्थात्–' (ग० ४।१।४५) इति गौरादित्वात् (४।१।४१) वा

ङीप् ।—'ग्रीष्मजालमसूर्म-' इति मप्रत्यये शूरादेशे च—इति मुकुटस्स्वपाणिनीयः ।—'शूर्मी तालव्यादि.'-इत्यप्ययुक्तम्, 'सूर्म्यं शुषिरामिव' इति 'श्रुतिविरोधात् ॥ ( १ ) ॥ * ॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' (स्वा० प० अ०) । 'रास्नासास्नास्थूणा-' ( उ० ३।१५ ) इति साधु. । 'स्थूणा सूर्म्या स्तम्भे रुगन्तरे' ( इति हैमः २।१५८ ) ॥ ( २ ) ॥ * ॥ अयसः प्रतिमा ॥ ( ३ ) ॥ * ॥ त्रीणि 'लोहप्रतिमायाः' ।

शिल्पं कर्म कलादिकम् ।

**शिल्पम् ( न ), 'कला ( कारीगरी ) आदि कौशलके काम' का १ नाम है ।**

शीति । शील्यते । 'शील समाधौ' (भ्वा० प० से०)। शाल्यते वा । 'शल गतौ' ( भ्वा० प० से० ) । 'खष्पशिल्प-'( उ० ३।२८ ) इति साधुः । 'शिल्पं स्रुवे क्रियाविके' [ इति विश्व - हैमौ ] ॥ ( १ ) ॥ * ॥ कला नृत्यगीतादिरूपा चतुःषष्टिभेदभिन्ना । आदिना सुवर्णकारादिकर्मग्रहः ॥ * ॥ एकं 'कलाकौशल्यादिकर्मणः' ।

१. 'गुरुतल्पोऽभिभाष्यैनस्तप्ते स्वप्यादयोमये । सूर्मी ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति ॥' इति मनु- ( ११।१०३ ) वचनाच्च ।

२. "आधायास्तु कन्यकानां—" इति कामसूत्रस्य ( १।१।१५ ) 'जयमङ्गला' ख्यव्याख्यायामुक्ताश्चतुष्षष्टि. कला इह लिख्यन्ते । तत्रैव जयमङ्गला—"शास्त्रान्तरे चतुःषष्टिर्मूलकला उक्ता', तत्र कर्माश्रयाश्चतुर्विंशतिः । तद्यथा-गीतम् १, नृत्यम् २, वाद्यम् ३, कौशललिपिज्ञानम् ४, वचन कौशाहरणम् ५, चित्रविधि. ६, पुस्तकम् ७, पत्रच्छेद्यम् ८, माल्यविधिः ९, गन्धयुक्त्यास्वाद्यविधानम् १०, रत्नपरीक्षा ११, सीवनम् १२, रङ्गपरिज्ञानम् १३, उपकरणक्रिया १४, मानविधि १५, आजीवज्ञानम् १६, तिर्यग्योनिचिकित्सितम् १७, मायाकृतपाषण्डसमयज्ञानम् १८, क्रीडाकौशलम् १९, लोकज्ञानम् २०, वैचक्षण्यम् २१, संवाहनम् २२, शरीरसंस्कार २३, विशेषकौशलम् २४, चेति । द्यूताश्रया विंशतिः—तत्र निर्जीवा. पञ्चदश, तद्यथा—आयु:प्राप्ति. २५, अक्षविधानम् २६, रूपसंख्या २७, क्रियामार्गणम् २८, बीजग्रहणम् २९,नयज्ञानम् ३०, करणज्ञानम् ३१, चित्राचित्रविधिः ३२, गूढराशि. ३३, तुल्याभिहारः ३४, क्षिप्रग्रहणम् ३५, अनुप्राप्तिलेखस्मृतिः ३६, अग्निक्रमः ३७, छलव्यामोहनम् ३८, ग्रहदानम् ३९, चेति । सजीवाः पञ्च, तद्यथा—उपस्थानविधिः ४०, युद्धम् ४१, रुतम् ४२, गतम् ४३, नृत्तम् ४४, चेति । शयनोपचारिकाः षोडश, तद्यथा—पुरुषस्यभावग्रहणम् ४५, स्वरागप्रकाशनम् ४६, प्रत्यङ्गदानम् ४७, नखदन्तयोर्विचारो ४८, नीविस्रंसनम् ४९, गुह्यस्य संस्पर्शनानुलोम्यम् ५० परमार्थकौशलम् ५१, हर्षणम् ५२, समानार्थताकृतार्थता ५३, अनुप्रोत्साहनम् ५४, मृदुक्रोधप्रवर्तनम् ५५, सम्यक्क्रोधनिवर्तनम् ५६, क्रुद्धप्रसादनम् ५७, सुप्तपरित्याग. ५८, चरमस्वापविधि. ५९, गुह्यगूहनम् ६० इति । चतस्र उत्तरकला, तद्यथा—साश्रुपातं रमणाय शापदानम् ६१, शपथक्रिया ६२, प्रस्थितानुगमनम् ६३, पुन पुनर्निरीक्षणम् ६४, चेति चतुष्षष्टिर्मूलकला. । आसवेव निविष्टानामवान्तरकलानामष्टादशाधिकानि पञ्चशतान्युक्तानि । तत्र कर्माद्यूताश्रया. प्रायश आवालं गच्छन्ति, ता एवान्यथा विभज्य चतु षष्टिरत्रोक्ताः । यास्तु शयनोपचारिका उत्तरकलाश्च, ता. प्रायशस्तन्त्रस्याङ्गता प्रतिपद्यन्त इति पाञ्चालिक्यामेव चतु षष्ट्यामवान्तरकला वेदितव्याः,ताश्च यथाप्रस्तावं वक्ष्यन्ते" इति । एताभ्य. चतुःषष्टिकलाभ्यो भिन्ना अपि तावत्य एव कला भवन्ति, तासां नामानि जिज्ञासुभिरमरकोषस्य मत्कृतमणिप्रभाव्याख्यायाः परिशिष्टं द्रष्टव्यम् ।

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ॥ ३५ ॥
प्रतिकृतिरर्चा पुंसि प्रतिनिधिः

**प्रतिमानम्, प्रतिबिम्बम् ( २ न ), प्रतिमा, प्रतियातना, प्रतिच्छाया, प्रतिकृतिः, अर्चा ( ५ स्त्री ), प्रतिनिधिः (पु), 'प्रतिमा, फोटो, तस्वीर' के ८ नाम हैं ।**

प्रेति ॥ प्रतिकृत्य मीयतेऽनेन । 'माङ् माने' ( जु० आ० अ० ) । ल्युट् ( ३।३।११७ ) ॥ ( १ ) ॥ * ॥ प्रतिकृतिर्बिम्बं यस्य । 'कुगति-' ( २।२।१८ ) इति समासः ॥ ( २ ) ॥ * ॥ प्रतिमीयतेऽनया । 'आतश्चोपसर्गे' ( ३।३।१०६ ) । इत्यङ् । [ 'प्रतिमा जगदन्तस्य बन्धे चानुकृतावपि' इति मे० १११।४८ ] ॥ ( ३ ) ॥ * ॥ प्रतियात्यतेऽनया । 'यत निकारोपस्कारयो.' ( चुरादिः ) 'ण्यासश्रन्थ -'( ३।३।१०७ ) इति युच् ॥ ( ४ ) ॥ * ॥ प्रकृष्टा छाया ॥ ( ५ ) ॥*॥ प्रकृष्टा कृति । प्रतिनिधे कृतिर्वा ॥ ( ६ ) ॥ * ॥ अर्च्यते । 'अर्च पूजायाम्' ( भ्वा० प० से० ) । 'गुरोश्च हल.' (३।३।१०३ ) इत्य. ॥ ( ७ ) ॥ * ॥ प्रतिनिधीयते सदृशीक्रियते । 'डुधाञ्' ( जु० उ० अ० ) । 'उपसर्गे घोः किः' ( ३।३।९२ ) ॥ ( ८ ) ॥ * ॥ अष्टौ 'प्रतिमायाः' ।

उपमोपमानं स्यात् ।

**उपमा ( स्त्री ), उपमानम् ( न ), 'उपमा, मिसाल' के २ नाम हैं ।**

उपेति ॥ उपमातेर्भावेऽङ् ( ३।३।१०६ ) । ( १ ) ॥ * ॥ ल्युट् ( ३।३।११५ ) । करणे ( ३।३।११७ ) वा ॥ ( २ ) ॥ * ॥ द्वे करणे भावे च । येनोपमीयते, या चोपमितिः, तयोरेते नाम्नी । केचित्तु—पूर्वान्विते—इत्याहु ।

**वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ॥३६॥**
**साधारणः समानश्च**

**समः, तुल्यः, सदृक्षः, सदृशः, सदृक्, साधारणः, समान ( ७ त्रि ), 'सदृश, समान, बराबर' के ७ नाम हैं।**

वेति ॥ समति । 'सम वैक्लव्ये' ( भ्वा० प० से० )। अच् ( ३।१।१३४ ) ॥ ( १ ) ॥ * ॥ तुलया संमितः । 'नौवयो–' (४।४।९१) इति यत् ॥ ( २ ) ॥*॥ समान इव पश्यति । 'त्यदादिषु–' ( ३।२।६० ) इति क्स्क्विनौ चकाराद्‍क्सश्च' । दृग्दृशवतुषु' ( ६।३।८९ ), दृक्षे च–' ( वा० ६।३।८९ ) इति सभाव ॥ ( ३ ) ॥*॥ ( ४ )॥*॥ ( ५ ) ॥ * ॥ सह साधारणेन वर्तते । 'वोपसर्जनस्य' ( ६।३।८२ ) इति सभाव । साधाया ससिद्धेरणो वाचक इव ॥ ( ६ ) ॥ * ॥ सह मानेन वर्तते । समानं मानमस्य, इति वा । 'समानस्य च्छन्दसि–' ( ६।३।८४ ) इति स ॥ ( ७ ) ॥ * ॥ सप्त वाच्यलिङ्गा ॥ सप्त 'तुल्यस्य' ।

**स्युरुत्तरपदे त्वमी ।**
**निभसंकाशनीकाशप्रतीकाशोपमादयः ॥ ३७ ॥**

**निभ, सकाश, नीकाश, प्रतीकाश, उपमा, आदि (भूत, रूप, कल्प, देश, देशीय । ५ त्रि). ये ५ शब्द किसी शब्दके उत्तरमें रहनेपर उसके सदृश अर्थको कहते हैं।**

स्युरिति ॥ अमी निभादय उत्तरपदस्था एव सदृशवचना वाच्यलिङ्गा स्यु । यथा— पितृनिभ पुत्र' 'मातृनिभा कन्या' 'देवनिभमपत्यम्' इति । नियत भाति । 'आतश्चोपसर्गे' (३।१।१३६) इति क । 'निभस्तु कथितो व्याज पुंलिङ्ग सदृशे त्रिषु' [इति मे० १०६।६] । (१) ॥ * ॥ सकाशते । 'काशृ दीप्तौ ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ )। सकाश सदृशोऽन्तिके' [इति हैम ३।७२७ ] ॥ ( २ ) ॥ * ॥ नितरा काशते । 'इक काशे' (६।३।१२३) इति दीर्घ । 'नीकाशो निश्चये तुल्ये' [इति विश्व , मे० १६४।२३] ॥ ( ३ ) ॥ * ॥ प्रतिकाशते ॥ ( ४ ) ॥ * ॥ आदिना भूतरूपकल्पादय । यथा–'पितृभूत , पितृरूप:, पितृकल्प ' इति ।

**कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ।**
**भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥ ३८ ॥**

**कर्मण्या, विधा, भृत्या, भृति' ( ४ स्त्री, ) भर्म वेतनम्, भरण्यम्, भरणम्, मूल्यम् ( ५ न ), निर्वेश , पण ( २ पु), 'वेतन, तनख्वाह या मजदूरी'के ११ नाम हैं।**

के ति ॥ कर्मणा सपद्यते । 'कर्मवेषाद्यत्'(५।१।१००)। कर्मणि साधुर्वा । 'तत्र साधु ' ( ४।४।९८ ) इति यत् ॥ ( १ ) ॥ * ॥ कर्माणि विधीयन्तेऽनया । 'डुधाञ्' (जु० उ० अ० ) । 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् ॥ ( २ ) ॥ * ॥ भ्रियन्ते कर्मकरा अनया । 'भृञ् भरणे' ( भ्वा० उ० अ० ) । 'सज्ञाया समज–' ( ३।३।९९ ) इति क्यप् ॥ ( ३ ) ॥ * ॥ 'कर्मणि भृतौ ( ३।२।२२ ) इति निर्देशात् क्तिन्नपि ॥ ( ४ ) ॥*॥ भ्रियतेऽनेन । 'डुभृञ्' ( जु० उ० अ० ) । 'भृञ्' ( भ्वा० उ० अ० ) वा । मनिन् ( उ० ४।१४५ ) ॥ ( ५ ) ॥*॥ वीयतेऽनेन । 'वी गत्यादौ' ( अ० प० अ० ) । 'वीपतिभ्या तनन्' ( उ० ३।१५० ) ॥ ( ६ ) ॥ * ॥ भरणे साधु । 'तत्र साधु ' ( ४।४।९८ ) इति यत् ॥ ( ७ ) ॥ * ॥ भ्रियतेऽनेन । ल्युट् ( ३।३।११७ ) । ( 'भरणी घोषके' स्त्रते ) भरण वेतने भृतो' [ इति विश्व ५३।७४, मे० ५०।६९ ] ॥ ( ८ ) ॥ * ॥ मूलेनानाम्यम् । 'नौवयोधर्म–' ( ४।४।९१ ) इति यत् । मूल्य स्याद्वेतने 'वस्ने' [ इति विश्व ११८।४३, मे० ११६।४६ ] ॥ ( ९ ) ॥ * ॥ निविश्यते, अनेन वा । 'विश प्रवेशने' ( तु० प० से० ) । 'अकर्तरि च–' ( ३।३।१९ ) इति 'हलश्च' (३।३।१२१ ) इति वा घञ् । 'निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेऽपि च' [ इति मे० १६४।२२ ] ॥ ( १० ) ॥ * ॥ पण्यते । नित्य पण परिमाणे' ( ३।३।६६ ) इत्यप् । पुसि– (३।३।११८) इति घो वा । 'पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे । क्रय्यशाकादिके 'द्यूतव्य-

१. सि० कौ० "त्यादादिषु दृशो—' इति सूत्रस्य 'समानान्ययोश्चेति वाच्यम्' सदृक्, सदृश 'क्षोऽपि वाच्य सदृक्ष ' इति स्पष्टमुक्तत्वात् 'समान' शब्दस्य त्यदादिगणे पाठाभावाच्चेदमसङ्गतम् ।

२ अयं पाठ श्लोकादिकमाद्धृष हैम 'ख ग' पुस्तकयो , 'क' पुस्तके तु नैवेद लभ्यते ।

१ विश्वे पुस्तकद्वये '—क्षोणके—'इति पाठ ।

२ 'मूल्य वस्ने वेतने च' इति हैमस्य ( २।३८० ) विश्व 'ख' पुस्तकस्य चानुरोधात् विश्व 'क' पुस्तकस्य '—वस्त्रे' मेदिनीस्थ '—प्रश्ने' इति च पाठौ लेखकादिभ्रान्तिजन्यौ प्रतिभात ।

३ '—शाकाद्रुकद्यूत—' इति मेदिनीपाठ ।

वहारे भृतौ धने' [ इति मे० ४६।१९ ] ॥ (११) ॥*॥ एकादश 'वेतनस्य'।

**सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ।**
**गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥ ३९ ॥**
**मदिरा कश्यमद्येऽपि**

**सुरा, हलिप्रिया, हाला, परिस्रुत्, वरुणात्मजा, गन्धोत्तमा, प्रसन्ना, इरा, कादम्बरी, परिस्रुता, मदिरा ( ११ स्त्री ), कश्यम्, मद्यम् ( २ न ), 'मदिरा, शराब' के १३ नाम हैं।**

सिवति ॥ सुष्ठु राति याम् । 'रा दाने' ( अ० प० अ० )। सु अतीव रायत्यनया वा । 'रै शब्दे' ( भ्वा० प० से० )। 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् । 'सुरा चषकमद्ययो'। 'पुलिङ्गस्त्रिदिवेशे स्यात्' [इति मे० १२९।१८] ॥ (१) ॥*॥ हलिनो बलस्य प्रिया ॥ (२) ॥ *॥ हलत्यङ्गम् । 'हल विलेखने' ( भ्वा० प० से० )। ज्वलादित्वात् ( ३।१।१४० ) ण । हल्यतेऽनया वा । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'हाल सातवाहनपार्थिवे । हाला सुरायाम्' [ इति विश्व[1] हैम, २।५२८-५२९ ] ॥ ( ३ ) ॥ * ॥ परितः स्रवति 'स्रु स्रवणे' ( भ्वा० प० से० ) । क्विप् ( ३।२।७६ ) । तुक् ( ६।१।७१ ) ॥ ( ४ ) ॥ * ॥ वरुणालयोऽपि वरुण, तस्यात्मजा ॥ ( ५ ) ॥*॥ गन्धेनोत्तमा, गन्ध उत्तमो यस्या वा । राजदन्तादि. ( २।२।३१ ) ॥ ( ६ ) ॥ * ॥ प्रसीदति स्म । 'षद विशरणादौ' ( भ्वा० प० अ० ) । 'गत्यर्था-' ( ३।४।७२ ) इति क्त । 'रदाभ्याम्-' (८।२।४२) इति निष्ठानत्वम् । 'प्रसन्ना स्त्री सुरायां स्यादच्छ[2]सन्तुष्टयोस्त्रिषु' [ इति मे० ८९।८६ ] ॥ ( ७ ) ॥*॥ इ कामं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप-' ( ३।२।३ ) इति कः ॥ ( ८ ) ॥ * ॥ कुत्सितमम्बरम् । 'कुगति-' ( २।२।१८ ) इति समासः । 'कोः कत्तत्पुरुषेऽचि' ( ६।३।१०१ ) । कदम्बरं नीलाम्बरमस्यास्ति । अर्शआद्यच् ( ५।२।१२७ ) । तस्येयम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । कदम्बे जातो रसः । 'तत्र जातः' ( ४।३।५३ ) इत्यण् । कादम्बं राति वा । क. ( ३।२।३ )। गौरादि ( ४।१।४१ ) । 'कादम्बरस्तु दध्यग्रे मद्यभेदे नपुंसकम् । स्त्री वारुणीपरभृताभारतीसारिकासु च' [ इति मे० १४१।२५७ ] ॥ ( ९ ) ॥*॥ भागुरिमते—टापि 'परिस्रुता'. यद्वा-परितः सूयते स्म लोकैः 'षू गतौ' ( भ्वा० प० अ० ) । क्त (३।२।१०२)। 'परिस्रुता स्त्री वरुण्या स्यन्ने स्यादभिधेयवत्' [ इति मे० ६९।२०९ ] ॥ ( १० ) ॥ *॥ माद्यत्यनया । 'मदी हर्षे' ( दि० प० से० ) । 'इषिमदिमुदि-' (उ० १।५१) इत्यादिना किरच् ॥ (११) ॥ * ॥ कश्यते अनेन वा । 'कश शब्दे' ( ) बाहुलकाद्य. । 'मद्याश्वमध्वयो. कश्यम्' इति रन्तिदेव.। 'कश्यस्त्रिषु कशार्हे स्यात्क्लीबं मद्याश्वमद्ययो' [इति 'विश्वः, मे० ११३।७] ॥ ( १२ ) ॥ * ॥ माद्यन्त्यनेन । 'गदमदचर-' ( ३।१।१०० ) इति यत् ॥ ( १३ ) ॥ * ॥ त्रयोदश 'मद्यसामान्यस्य'॥

**अवदंशस्तु भक्षणम् ।**

**अवदंशः ( पु ) 'मदिरा पीनेके समय रुचि बढ़नेके लिये नमकीन चना आदि खाने' का १ नाम है।**

अवेति ॥ अवदश्यते । 'दश दशने' ( भ्वा० प० अ० )। कर्मणि घञ् ( ३।३।१९ ) । भावे ( ३।३।१८ ) वा ॥ ( १ ) ॥ * ॥ एक 'पानरुचिजनकभक्षणस्य'॥

**शुण्डा पानं मदस्थानम्**

**शुण्डा ( स्त्री ), पानम्, मदस्थानम् ( २ न ), 'मदिरा पीनेके स्थान' के ३ नाम हैं।**

शिवति ॥ शुण्यते । 'शुन गतौ' ( तु० प० से० ) । 'अमन्ताड्.' ( उ० १।११२ ) । 'शुण्डा पानगृहे मता । (अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च' इति मे० ४२।२५ ) । 'शुण्डापि जलहस्तिन्या मदिराकरिहस्तयो । नालिन्या वारयोषाया शुण्डस्तु मदनिर्भरे' [ ४५।२४ इति विश्व. ] ॥ ( १ ) ॥ * ॥ पिबन्त्यत्र । 'पा पाने' ( भ्वा० प० अ० ) । अधिकरणे ल्युट् ( ३।३।११७ ) । 'पान पीतिभाजनरक्षणे' ( इति मेदिनी ८३।१३ ) ॥ (२) ॥ * ॥ मदस्य स्थानम् ॥ ( ३ ) ॥ * ॥ त्रीणि 'मद्यगृहस्य'।

**मधुवारा मधुक्रमाः ॥ ४० ॥**

**मधुवारः, मधुक्रमः ( २ पु ), 'मदिरा पीनेके बारी' के २ नाम हैं।**

मेति ॥ मधुनो वारः ॥ (१) ॥ * ॥ मधुन. क्रम.॥ (२) ॥ * ॥ द्वे 'मधुपानावसरस्य'।

---

१. विश्वे 'हाला सुराया नृपतौ च हालः' इति (१९२।४५ ) भिन्नपाठादत्र 'हैम' इत्येव पाठ उचितः । हैमे च 'शालिवाहन—' इति च पाठः ।

२. '—स्यात् स्वच्छ—'इति मेदिनीपाठः ।

१. विश्वे 'कश्यं मद्ये तुरङ्गाणां कश्यं मध्यकशार्हयो.' इति ( ११८।४९ ) भिन्नपाठादत्र 'मेदिनी'इत्येव पाठः समुचितः ।

**मध्वासवो माधवको मधु माध्वीकमद्वयोः ।**

मध्वासवः, माधवक (२ पु), मधु,(माद्वींकम्)माध्वीकम् (२ न), 'महुएके शराब' के ४ नाम हैं।

मेति ॥ मधुकपुष्प मधु तस्यासव ॥ (१) ॥ * ॥ मधुना कृतः संधितः । 'कुलालादिभ्यो वुञ्'(४।३।११८)॥ (२) ॥ * ॥ मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'फलिपाटि–' ( उ० १।१८ ) इति साधु । 'मधु पुष्परसे क्षौद्रे मद्ये, ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्या तु योषिति' [इति विश्व मेदिन्यौ' ७९।११-१२]॥ ( ३ ) ॥ * ॥ मृद्वीका द्राक्षा, तस्या विकार । 'तस्य विकार' ( ४।३।१३४ ) इत्यण् । 'अनुदात्तादे' (४।३।१४०) इत्यञ् वा ॥ * ॥ क्वचित्तु— माध्वीकम्' इति पठन्ति । तत्र पृषोदरादित्वम् ॥ (४) ॥ * ॥ अद्वयो = क्लीबमित्यर्थः ॥ * ॥ चत्वारि मधुकपुष्पकृतमद्यस्य' ॥ स्वामी तु—द्वौ द्वौ पर्यायौ—इत्याह ।

**मैरेयमासवः शीधुः**

मैरेयम् ( न ), आसव' (पु ), शीधु (पु न), 'ऊख (गन्ना) के रस या शाक आदिसे बने हुए मदिरा' के ३ नाम हैं।

मायिति ॥ मिरायां देशविशेषे ओषधिविशेषे वा भवम् । 'नद्यादिभ्यो ढक्' (४।२।९७) ॥ (१) ॥ * ॥ आसूयते । 'षूञ् अभिषवे' (स्वा० उ० अ०) । 'ऋदोरप्' (३।३।५७) ॥ ( २ ) ॥ * ॥ शेरतेऽनेन । 'शीङो धुक्' ( उ० ४।३८ ) अर्धर्चादि (२।४।३१) 'पुनपुंसकयोर्दाह जीवातुस्तथाणुशीधव [२]'[इति त्रिकाण्डशेष ३।५।८]॥(३) ॥ * ॥ यद्यपि 'शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेय धातकीपुष्पगुडधानाम्बुसंहितम्' इति माधव. । तथापि भेदमनादृत्योक्तम् ॥ * ॥ त्रीणि 'इक्षुशाकादिजन्यस्य मद्यस्य' ।

**मेदको जगलः समौ ॥ ४१ ॥**

मेदक, जगल ( २ पु ), 'मदिराके काढ़े या मदिरा बनानेके लिये पीसे हुए पदार्थ विशेष' के २ नाम हैं।

मेदेति ॥ मेद्यति । 'ञिमिदा स्नेहने' ( दि० प० से० ) । वुन् कुलादिभ्य (उ० ५।३५) ॥ (१) ॥ * ॥ मृशं गलति, गल्यते वा । 'गल अदने' ( भ्वा० प० से० ) यङ्लुगन्तादच्[१] (३।१।१३४ ) । संज्ञापूर्वकत्वात् दीर्घोऽकित ' ( ७।४।८३ ) इति दीर्घो न । 'जगलो मदनद्रुमे । मेदके पिष्टमद्ये च' (इति मे० १५।१९१-९२) ॥ (२) ॥ * ॥ द्वे 'सुराकल्कस्य' ।

**संधानं स्यादभिषवः**

सन्धानम् ( न ), अभिषव. ( पु ),'मदिरा बनाने' के २ नाम हैं।

समिति ॥ सन्धीयते । 'डुधाञ्' ( जु० उ० अ० ) । ल्युट् ( ३।३।११३ ) । भावे (३।३।११५) वा । 'संधानं स्यादभिषवे तथा सघट्टनेऽपि च' [ इति विश्व ९२।९४, मेदिनी ९४।४९ ] ॥ (१) ॥ * ॥ अभिषूयते । 'षुञ् अभिषवे' (स्वा० उ० अ०) । 'ऋदोरप्' (३।३।५७) । भावे वा । 'भवेदभिषव स्नाने मद्यसधानयज्ञयो ' [इति विश्व १६६।५३ मे० १६१।५६ ] ॥ ( २ ) ॥ * ॥ द्वे 'आम्रादिसधानस्य' ।

**किण्वं पुंसि तु नग्नहूः ।**

किण्वम् ( न ), नग्नहू' ( पु ), 'चावल आदिको उबाल ( औट ) कर तैयार किये हुए मदिराके बीज' के २ नाम हैं।

कीति ॥ कणनम् । 'कण शब्दे' (भ्वा० प० से०) । 'उल्वादयश्च' ( उ० ४।९५ ) इति साधु । कर्मणि वा । 'किण्व पापे सुराबीजे' [इति विश्व १६३।१७] ॥ (१) ॥ * ॥ ह्वानम्, हूयते वा । 'ह्वेञ्' ( भ्वा० उ० अ० ) सपदादिविवप् (वा० ३।३।१०८) । नग्नस्य हू ॥ (२) ॥ * ॥ द्वे 'नानाद्रव्यकृतसुराबीजस्य' ॥—'नग्नतनकृता ह्वानस्य'—इत्यन्ये ॥

**कारोत्तरः सुरामण्डः**

कारोत्तर., सुरामण्ड ( २ पु ), 'मदिराके माँड ( ऊपरी हिस्सा )' के २ नाम हैं।

केति ॥ कारेण क्रियया उत्तर ।–'कारोत्तम'–इति स्वामी ॥ ( १ ) ॥ * ॥ सुराया मण्ड ॥ (२) ॥*॥ द्वे 'सुरामण्डस्य' ।

**आपानं पानगोष्ठिका ॥ ४२ ॥**

आपानम् ( न ), पानगोष्ठिका ( स्त्री ), 'मदिरा पीनेके जमाव ( अड्डा )' के २ नाम हैं।

आपेति ॥ आ समूय पिबन्त्यत्र । ल्युट्( ३।३।११७)॥ (१) ॥ * ॥ पानस्य गोष्ठी । स्वार्थे कन् ( ज्ञापि० ५।४।५) ॥ (२) ॥ * ॥ द्वे 'पानार्थाया सभाया' ।

---

१ विश्वे "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधु । दैत्ये चैत्रे वसन्ते च जीवाशाके मधुद्रुमे" इति( ८२।११ ) पाठादत्र 'मेदिनी' इत्येव पाठ्यम् ।

२ त्रिकाण्डशेषे '—सीधव ' इति दन्त्यादि 'सीधु' शब्द पठित ।

---

१ कर्मण्यचोऽसभवादणि चादिवृद्धयापत्त्या पृषोदरादित्वात् सिद्धिर्बोध्या ।

**चषकोऽस्त्री पानपात्रम्**

चषकः ( पु न ), पानपात्रम् ( न ), 'मदिरा प्याले' के २ नाम हैं।

चेति ॥ चष्यतेऽनेन । 'चष भक्षणे' (भ्वा० उ० से०)। क्वुन् ( उ० २।३२ ) । 'चषकोऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः' ( इति मे० ८।८६ ) ॥ (१) ॥ * ॥ पानस्य पात्रम् ॥ (२) ॥ * ॥ द्वे 'मद्यपात्रस्य' ।

**सरकोऽप्यनुतर्षणम् ।**

सरकः ( पु न ), अनुतर्षणम् ( न ), 'मदिरा पीने या परोसने ( बाँटने )' के २ नाम हैं।

सेति ॥ स्रियते । 'सृ गतौ' (भ्वा० प० अ०) । वुन् कृञादिभ्यः ( उ० ५।३५ ) । 'सरकः शीधुपानेक्षुशीधुनोः संघयाजने' इत्यजयः । अपिशब्दात् सरकोऽप्यस्त्री । 'सरकं वा नानुतर्षो ना' इति रत्नकोष ॥ (१) ॥ * ॥ अनुतर्षणम् । अनेन वा । 'ञितृषा पिपासायाम्' (दि० प० से०) । भावे ( ३।३।११४ ) करणे ( ३।३।११७ ) वा ल्युट् ॥ * ॥ घञि ( ३।३।१८ ) 'अनुतर्षः' अपि । 'चषकश्चानुतर्षश्च सरकश्च' इति भागुरिः ॥ ( २ ) ॥ * ॥ द्वे 'मद्यपानस्य' ।—चत्वारि 'मद्यपानपात्रस्य'—इति मुकुटः ।

**धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥ ४३ ॥**

धूर्तः, अक्षदेवी, कितवः, अक्षधूर्तः, द्यूतकृत् (५ पु) 'जुवारी या जुवा खेलनेवाले' के ५ नाम हैं।

धूर्वति ॥ धूर्वति । 'धुर्वी हिंसायाम्' ( भ्वा० प० से० ) । 'हसिमृग्रिण्–'(उ० ३।८६) इति तन् । 'राल्लोपः' (६।४।२१) । 'धूर्तं तु लण्डलवणे धत्तूरे ना विटे त्रिषु' ( इति मे० ५६।२८ ) । 'धार्तः' इति पाठे—धावनम् । 'धावु[१] गतौ' ('भ्वा० उ० से० ) । सम्पदादि. (वा० ३।३।१०८) । बाहुलकाद्वलोपः धा धावनेनातिः धातिरस्यास्ति। ज्योत्स्नादण् (वा० ५।२।१०३) । यद्वा–धा धावनेन र्तं ॥ (१) ॥ * ॥ अक्षैर्दीव्यति । 'सुपि–' ( ३।२।७८ ) इति णिनिः ॥ ( २ ) ॥ * ॥ 'कि ज्ञाने' (जु० प० अ०) । भावे क्तः (३।३।११४) । कितं वाययति । 'ओवै शोषणे' ( भ्वा० प० अ० ) कितते वाति वा । 'वा[२] गन्धने'(अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः । 'कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये' [इति विश्व. १६४।३०] ॥

(३) ॥ * ॥ अक्षेषु धूर्तः । 'सप्तमी शौण्डैः' (२।१।४०) इति समासः ॥ (४) ॥ * ॥ द्यूतं करोति । क्विप् (३।२।७६) ॥ (५) ॥ * ॥ पञ्च 'द्यूतकृतः' ।

**स्युर्लग्नकाः प्रतिभुवः**

लग्नकः, प्रतिभूः ( २ पु ),'मध्यस्थ, बीचवान, जामिनदार' के २ नाम हैं।

स्युरिति ॥ लज्यते स्म । 'ओलस्जी व्रीडे' (तु० आ० से०) । 'गत्यर्था–' ( ३।४।७२ ) इति क्तः । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ ( १ ) ॥ * ॥ प्रति प्रतिनिधिर्भवति । क्विप् (३।२।७६) ॥ (२) ॥ * ॥ द्वे 'ऋणादौ प्रतिनिधिभूतस्य' जामिन' इति ख्यातस्य ।

**सभिका द्यूतकारकाः ।**

सभिकः, द्यूतकारकः ( २ पु ), 'नालदार' अर्थात् 'जुवा खेलानेवाले' के २ नाम हैं।

सेति ॥ सभाद्यूतमाश्रयत्वेनास्यास्ति ॥ व्रीह्यादित्वात् ( ५।२।११६ ) ठन् । 'सभाद्यूत सभागृहम्' इति रुद्रः ॥ (१) ॥ * ॥ द्यूतं कारयन्ति । अण् (३।२।१) । स्वार्थे कन् । ( ज्ञापि० ५।४।५ ) । ण्वुलि ( ३।१।१३३ ) तु द्यूतस्य कारकः ॥ ( २ ) ॥ * ॥ द्वे 'ये द्यूतं कारयन्ति तेषाम्' ।

**द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥ ४४ ॥**

द्यूतः ( पु न ), अक्षवती ( स्त्री ), कैतवम् ( न ), पणः ( पु ), 'जुआ' के ४ नाम हैं।

द्यिवति ॥ देवनम् । 'दिवु क्रीडायाम्' (दि० प० से०)। भावे क्तः (३।३।११४) ॥ (१) ॥ * ॥ अक्षाः पाशकाः सन्त्यस्याम् । मतुप् (५।२।९४) । लोकात्स्त्रीत्वम् ॥ (२) ॥ * ॥ कितवस्य कर्म । युवादित्वात् (५।१।१३०) अण् । 'कैतवं तु छले द्यूते 'कैतव कितवे रिपौ'[१](इति मे० १६०। ३५) ॥ (३) ॥ * ॥ पणो ग्लहोऽस्त्यस्मिन् । अर्शआद्यच् (५।२।१२७) । (४) ॥ * ॥ चत्वारि 'द्यूतक्रीडनस्य' ।

**पणोऽक्षेषु ग्लहः**

पणः, ग्लहः ( २ पु ), 'जुएमें दावपर रक्खे हुए रुपया आदि' के २ नाम हैं।

---

१. '—गतिशुद्धचो' इति पाठ्यम्, सि० कौ० धातुपाठयोस्तथोक्तेः ।

२. सि० कौ० धातुपाठयोरनुरोधाद् '—गतिगन्धनयोः' इति पठितव्यम् ।

१. मेदिन्यां द्वितीयपादः 'कैरवः कितवे रिपौ' इति पठितः, तस्यैव च हैम ( ३।७३५ ) विश्व ( १६५।३५ ) योरनुरोधादौचित्येन अत्र 'कैतव' शब्दस्य विवरणीयतया नाम द्वितीयपादात्मकोऽशः प्रकृतोपयोगी ।

पेति ॥ पण्यते उत्सृज्यते । 'पण व्यवहारे' ( भ्वा० आ० से०) । नित्य पण–' (३।३।६६) इति योगविभागादप् ॥ ( १ ) ॥ * ॥ ग्लह्यते अनेन । 'ग्लह आदान' ( भ्वा० आ० से० ) । 'पुंसि–' ( ३।३।११८ ) इति घ 'हलश्च' ( ३।३।१२१ ) इति घञ् वा । सज्ञापूर्वकत्वान्न वृद्धि । गृह्यते वा । 'अक्षेषु ग्लह' ( ३।३।७० ) इति साधु ॥ (२) ॥ * ॥ द्वे 'द्यूते लाप्यमानस्य' (द्रव्यादे)।

अक्षास्तु देवनाः पाशकाश्च ते ।

अक्ष, देवन, पाशक (३ पु), 'पासा' के ३ नाम हैं।

अक्षा इति ॥ अक्षति । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) । अच ( ३।१।१३४ ) । अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयो सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान्, क्लीब तुत्थे सौवर्चलेन्द्रिये' ( इति मे० १६५।२ ३ ) । ( १ ) ॥ * ॥ दीव्यन्ति येन 'करणा–' (३।३।११७) इति ल्युट् । देवन व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु देवन प्रोक्त' ( इति विश्व ९०। ६६) ॥ (२) ॥ * ॥ पाशयति । 'पश बन्धने' चुरादि । ण्वुल् ( ३।१।१३३ ) । क्वुन् (उ० २।३२) वा ॥ (३) ॥ * ॥ त्रीणि 'पाशकस्य' ['पासा' इति ख्यातस्य] ।

परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ॥ ४५ ॥

परिणाय (पु न), 'शारी ( गोटी ) को चलाने' का १ नाम है।

पेति ॥ परितो वामदक्षिणतो नयनम् । 'णीञ्' (भ्वा० उ० अ०) 'परिन्यो –' ( ३।३।३७ ) इति घञ ॥ (१) ॥ * ॥ एक शारीणा समन्तान्नयनस्य' ।

अष्टापद शारिफलम्

अष्टापदम् (पु न), शारिफलम् ( न ), 'बिसात' अर्थात् 'गोटियोंको रखने ( खेलनेके समय बिछाने ) के लिये कपडे या काष्ठके बने हुए आधार-विशेष' के २ नाम हैं।

अष्टेति ॥ पदानि पदस्थानानि पदान्यस्य । 'अष्टन सज्ञायाम्' ( ६।३।१२५ ) इति दीर्घ । अष्टापदमस्त्रियाम् । 'अष्टापदोऽस्त्री कनके शारीणा फलकेऽपि च । (अष्टापदी चन्द्रमल्ल्या शरभे मर्कटे पुमान्)' [इति मे० ७७।४४] ॥ (१) ॥ * ॥ शारीणा फल पट्ट । 'फल हेतुसमुत्थे स्यात्फलके व्युष्टित्वाभयो' इति विश्व [१४९।२-३] ॥(२) ॥ * ॥ 'शारीणा खेलनाधारपट्टस्य' द्वे 'बिसात' इति ख्यातस्य ।

प्राणिद्यूत समाह्वय ।

प्राणिद्यूतम् ( न ), समाह्वय (पु), 'बाजी रखकर पशु-पक्षियों (मुर्गा, तीतर, मेंढा आदि) को लड़ाने'के २ नाम हैं।

प्रेति ॥ प्राणिभि कृत द्यूतम् ॥ (१) ॥ * ॥ सम्यगाहूयन्तेऽत्र । 'ह्वेञ्' ( भ्वा० उ० अ० ) पुंसि–' (३।३।११८) इति घ । बाहुलकात्सम्प्रसारणम् ॥ ( २ ) ॥ * ॥ द्वे ( मेषकुक्कुटादिप्राणि' ) 'द्यूतस्य' ।

सर्वलिङ्गासंग्रहादपूर्णता परिहरति—

उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ॥ ४६ ॥

ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ।

ग्रन्थकार 'उक्त-' इस श्लोकसे सब लिङ्गवाले शब्दोंके सब लिङ्गोंको नहीं कहनेके दोषका निवारण करते हैं। इस 'शूद्रवर्ग' में अवयवार्थक शब्द काव्य, पुराण और कोषोंमें प्रायः पुलिङ्गमें ही उपलब्ध होनेके कारण यहाँ भी वे पुलिङ्गमें ही कहे गये हैं, ये शब्द उसके धर्म और योग आदिके वशसे अन्य जातिमें वृत्ति होने पर तदनुसार स्त्रीलिङ्ग और नपुंसक भी होते हैं।

उक्ता इति ॥ अत्र वर्गे ये यौगिका शब्दा मालाकार मार्दङ्गिक वैणविकादय पुंसि प्रचुरप्रयोगदर्शनादेकस्मिन् लिङ्गे पुंसि ये यौगिकाः उक्ता ते ताद्धर्म्यात्सयोगवशात्पाम-यतोऽन्यत्र जातौ वृत्तौ सत्यामन्यत्र स्त्रियां क्लीबे चोहनीया । यथा—'मालाकारी स्त्री, मालाकार कुलम्' इत्यादि । येऽप्ययौगिका 'करण मालिक-कुम्भकारादय, ते जातिवचनत्वाच्छूद्रादिवत् 'जाते –' (४।१।६३) इत्यादिना ङीपि लिङ्गान्तरे स्त्रीलिङ्गे क्लीबत्वेऽपि बोद्धव्या ।

इति शूद्रवर्गविवरणम् ॥ १० ॥

अथ काण्डसमाप्ति

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।

भूम्यादिकाण्डो द्वितीय साङ्ग एव समर्थितः ॥ ४७ ॥

श्री अमरसिंहके बनाये हुए नाम और लिङ्गको बतलानेवाले 'नामलिङ्गानुशासन' अर्थात् 'अमरकोष' नामक इस ग्रन्थमें भूमि आदि वर्गवाला यह दूसरा काण्ड के सहित समर्थित होकर सम्पूर्ण हुआ।

इति श्रीबघेलवंशोद्भवश्रीमहीधरविषयाधिपश्रीकीर्तिसिंहदेवाज्ञया श्रीभट्टोजिदीक्षितात्मजश्रीभानुजीदीक्षितविरचितायाममरटीकायां व्याख्यासुधाया द्वितीयकाण्ड सपूर्णतामगात् ।

इति श्रीमदमरसिंहविरचितेऽमरकोषे द्वितीय काण्ड समाप्तम् ।

॥ श्रीः ॥

# अमरकोषः

## सटिप्पण 'रामाश्रमी' (व्याख्यासुधा) संस्कृतव्याख्यया प्रकाशाख्यहिन्दीव्याख्यया चोपेतः।

## तृतीयं काण्डम्

### अथ विशेष्यनिघ्नवर्गः ॥ १ ॥

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि।
लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः[1] ॥ १ ॥

सर्वसाधारण होने से 'सामान्यकाण्ड' नामक इस प्रकरणमें विशेष्य (स्त्री, दारा, कलत्र आदि पहले कहे हुए शब्द) के अधीन लिङ्ग और वचनवाले 'सुकृति, साधु…' शब्दोंसे विशेष्यनिघ्नवर्ग १, आपसमें भिन्नजातीय अर्थवाले 'कर्मपरायण…' शब्दोंसे संकीर्णवर्ग २, अनेक अर्थवाले 'नाक, लोक,…' शब्दोंसे नानार्थवर्ग ३, 'आङ्,…अव्यय शब्दोंसे अव्ययवर्ग ४, और प्रत्यय अर्थात् 'टाप्, ङीप्, घञ्, क्त, …' के द्वारा लिङ्गबोधक शब्दोंसे लिङ्गादिसंग्रहवर्ग ५, कहता हूँ।

विशेष्येति ॥ इह सामान्यकाण्डे एतैः कृत्वोपलक्षिता वर्गा उच्यन्ते। कीदृशास्ते वर्गाः। स्वर्गादयः संश्रय आश्रयो येषां ते। सुकृत्यादयो देवासुरमनुष्येष्वेव विशेषणत्वेन, कर्मपरायणादयो व्यापारतया, संबध्यन्ते लिङ्गाद्यादौ येषां तानि। तेषां संग्रहाः। आदिना नामानि लङ्का शेफालिका–इत्यादीनि[2]।

अस्मिन् वर्गे लिङ्गज्ञानोपायमाह—

स्त्रीदाराद्यै[1]र्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥

जिस प्रकार स्त्रीलिङ्ग, पुंलिङ्ग आदिके सहित (स्त्री, दारा, कलत्र,… शब्द) पदोंसे स्त्री, दारा, कलत्र आदि जो विशेष्य हैं, उनके भेदक गुण, (सुकृति, साधु,…) द्रव्य दण्ड,…और क्रिया (पढ़ना, पढ़ाना, पकाना, बोलना,…) से युक्त शब्द वैसे ही होते हैं।

स्त्रीति ॥ स्त्रीदारकलत्रादिभिः पदैर्यल्लिङ्गसंख्याविशिष्टैः स्त्रीदारकलत्रादिरूपं यद्विशेष्यं प्रक्रान्तम्, गुणादिशब्दास्तल्लिङ्गसंख्याविशिष्टास्तस्य विशेषणानि स्युः। तथा हि 'सुकृतिनी स्त्री, सुकृतिनो दाराः, सुकृति कलत्रम्' 'दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम्'। 'पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रम्'।

सुकृती पुण्यवान् धन्यः

सुकृती, पुण्यवान्, धन्यः (३ त्रि), 'भाग्यवान्' के ३ नाम हैं।

स्विति ॥ सुकृतमस्यास्ति। इनिः (५।२।११५) ॥ (१) ॥ * ॥ पुण्यमस्यास्ति। मतुप् (५।२।९४) ॥ (२) ॥ * ॥ धनं लब्धा। 'धनगणं लब्धा' (४।४।८४) इति यत्। 'धन्या धात्र्यामलक्योः स्याद्धन्यं पुण्यवति त्रिषु[2]' [इति विश्वः ११७।३१-३२, मेदिनी ११५।३३] ॥ (३) ॥*॥ त्रीणि 'सभाग्यस्य'।

महेच्छस्तु महाशयः।

महेच्छः, महाशयः (२ त्रि), 'बड़े एवं उन्नत अभिप्राय वाले' के २ नाम हैं।

---

१. "वर्गसंग्रहाः' इत्येवं पाठो व्याख्यानुरोधाद्युक्तः।

२. स्वामी त्वेवं व्याख्यातवान्—'विशेष्यनिघ्नो विशेषणम्। विशेषणादिभिर्हेतुभूतैर्ये पञ्च वर्गास्ते काण्डद्वयोक्तसाधारण्यात् सामान्यकाण्डेऽस्मिंस्तृतीयेऽवान्तरवर्गान् संश्रयन्ति। यथा नानार्थवर्गे कान्तादिवर्गाः, अव्ययवर्गेऽनेकार्थैकार्थवर्गौ, लिङ्गशेषवर्गे स्त्रीलिङ्गादिवर्गाः। 'वर्गसंग्रह' इत्येके पेठुः। सामान्यकाण्डे ये पञ्चवर्गाः, स वर्गसंग्रह इति योजना। आदि शब्दः प्रकारे।" इति।

१. "दाराद्यम्' इति पाठो युक्तः। स्त्रीनराद्यैरित्येके, स्त्रीपुन्नपुंसकैरित्यर्थः।" इति स्वामी।

२. विश्वे तु 'धन्यो धनवति स्मृतः। धन्या धात्र्यामलक्योश्च' इति भिन्न एव पाठः।

मेति ॥ महतीच्छा यस्य ॥ (१) ॥ * ॥ 'आशय स्यादभिप्राये मानसाधारयोरपि'[1](इति मे०)[११८।७३], [विश्व १२०।७० च]। महानाशयोऽस्य ॥ (२) ॥*॥ द्वे 'महाभिलाषस्य'।

हृदयालुः सुहृदयः

हृदयालु, सुहृदय ( २ त्रि ), 'अच्छे स्वभाववाले' के २ नाम हैं।

हृिति ॥ प्रशस्तं हृदयमस्य । 'हृदयाच्चालुरन्यतरस्याम्' (वा० ५।२।१२२) ॥ (१) ॥*॥ शोभनं हृदयमस्य मिश्रत्वाविवक्षणान्न हृद्भावः ॥ * ॥ 'सहृदय' इति वा पाठः ॥ सह हृदयेन । 'तेन सह-' ( २।२।२८ ) इति बहुव्रीहिः ॥ (२) ॥ * ॥ प्राणिमात्रस्य तथात्वादत्र प्रशस्तहृदयपरत्वं हृदयशब्दस्य[2] ॥*॥ द्वे 'शुद्धमनसः'।

महोत्साहो महोद्यमः ॥३॥

महोत्साह, महोद्यम ( २ त्रि ) 'उद्यमी' के २ नाम हैं।

मेति ॥ महानुत्साहोऽस्य ॥(१)॥*॥ महानुद्यमोऽस्य ॥ ( २ ) ॥ * ॥ द्वे 'दुःसाध्यकृत्येऽपि साधनपरस्य'।

प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥

प्रवीण, निपुण, अभिज्ञ, विज्ञ, निष्णात, शिक्षित, वैज्ञानिक, कृतमुख, कृती, कुशल ( १० त्रि ), 'शिक्षित, ज्ञानी, लोकचतुर' के १० नाम हैं।

प्रेति ॥ प्रकृष्टा वीणास्य[3] । यद्वा वीणया प्रगायति, प्रगीयते वा । 'सत्याप-' ( ३।१।२५ ) इति णिजन्ताद् पचाद्यच् ( ३।१।१३४ ) । कर्मणि घञ् ( ३।३।१९ ) वा । 'एरजण्यन्तानाम्[4]' इति णत्वं (३।६।५६) ॥ (१) ॥ * ॥ निपुणति । 'पुण कर्मणि शुभे' (तु० प० से०) । 'इगुपध-' ( ३।१।१३५ ) इति कः ॥ ( २ ) ॥ * ॥

अभि जानाति । 'आतश्चोपसर्गे' (३।१।१३६) इति कः ॥ (३) ॥*॥ (४) ॥*॥ न्यस्नातीत् । 'गत्यर्था-' (३।४।७२) इति क्तः । 'निनदीभ्याम्-'(८।३।८९) इति षत्वम्॥ (५) ॥*॥ शिक्षा जातास्य । तारकादि ( ५।२।३६ ) । यद्वा शिक्षितिष्ट । 'शिक्ष विद्योपादाने' (भ्वा० आ० से०) । अकर्मकत्वात्कर्तरि क्तः ( ३।४।७२ ) ॥ ( ६ ) ॥*॥ विज्ञानं बुद्धिः । 'विज्ञानं यत्र तनुते' इति श्रुतेः । विज्ञाने नियुक्तः । 'तत्र नियुक्तः' ( ४।४।६९ ) इति ठक् । यद्वा विज्ञानेन जयति । 'तेन दीव्यति-' (४।४।२) इति ठक् । यत्तु विज्ञानं नैपुण्यम् । तेन व्यवहरति । 'तेन दीव्यति-' (४।४।२) इत्यादिना ठक्—इत्यभाणि मुकुटेन । तन्न । उक्तसूत्रे 'व्यवहरति' इत्यस्यानुपादानात् । 'कठिनान्त-' (४।४।७२) इति सूत्रेऽर्थोपादानेऽपि विज्ञानस्यानुपादानात् ॥*॥ व्रीह्यादि (५।२।११६) ठनि 'विज्ञानिक' इत्यपि ॥ (७) ॥*॥ कृतं मुखमस्य । सर्वस्य कृतमुखत्वादत्र कृतशब्दस्य संस्कृतपरत्वम् ॥ (८)॥*॥ कृतं कर्म प्रशस्तमस्य । इनिः (५।२।११५) ॥ ( ९ ) ॥*॥ कुशान् लाति । कः (३।२।३) । कौ पृथिव्यां शलति वा । 'शल चलने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । निजर्थे लक्षणा वा । कौ शलति चालयति राजकार्याणि । यद्वा—'कु पापेऽर्थे' यो' । को: पापात् शलति बुद्धिवैभवात् । 'कुशलं शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्' इति विश्व[1]मेदिन्यौ [१५०।७७]॥(१०)॥*॥ दश 'कुशलस्य'।

पूज्यः प्रतीक्ष्यः

पूज्य, प्रतीक्ष्य ( २ त्रि ), 'पूजा करने योग्य' के २ नाम हैं।

पूज्येति ॥ पूज्यते । 'पूज पूजायाम्' (चु० प० से०) । 'अचो यत्' ( ३।१।९७ ) । 'पूज्यः श्वशुरवन्द्ययोः' [इति हैम २।३७५] ॥ ( १ ) ॥*॥ प्रतीक्ष्यते । 'ईक्ष दर्शने' (भ्वा० आ० से०) । 'ऋहलोर्ण्यत्' (३।१।१२४) । 'प्रतीक्ष्य प्रतिपाल्ये स्यात्पूज्ये च' (इति हैम) [३।५२४] ॥ (२) ॥*॥ द्वे 'पूज्यस्य'।

सांशयिकः संशयापन्नमानसः।

सांशयिक, संशयापन्नमानस ( २ त्रि ), 'सन्देहयुक्त' के २ नाम हैं।

सान्देति ॥ संशयमापन्नः । 'संशयमापन्नः' (५।१।७३) इति ठक् ॥ (१) ॥*॥ संशयमापन्नं यस्य, यस्मिन वा ॥ (२)॥*॥ द्वे 'संदेहविषयस्य', 'संदेहाश्रयस्य' वा।

---

१ '—पनसाधारयोरपि' इति मेदिनीस्थः पाठः 'अथाशय आश्रये । अभिप्रायपनसयोः' इति हैमा(३।५०९-५१०) नुरोधात् समीचीनः प्रतिभाति ।

२ अत एव स्वाम्याह—'प्रशस्तं' । स एव हृदयेन सह वर्तते । अन्ये मांसखण्डे सत्यप्यहृदया यन्मर्मवः— 'हृदयं तद्विविङ्क्ते यद्भावमन्यच्चलं पलम्'। चातकीया सहृदया गण्यन्ते यथम-यथा ॥' इति ।

३ स्वामी तु एवं विगृह्याग्रे "मुख्यार्थं परित्यज्य निपुणे रूढः यदाहु- (कुमारिलभट्टा )—'निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् । क्रियन्तेऽद्यतनैः काश्चित् काश्चिन्नैव त्वशक्तितः ॥' इति ।

४. कैयटेनेदं वचनमनार्षमुक्तम् ।

१ विश्वे 'कुशलः शिक्षिते, क्षेमपर्याप्तिसुकृतेषु च । कुशलम्' इति ( १५४।६६-६७ ) इत्येवं भिन्नपाठादत्र 'मेदिनी'स्थैव पाठो युक्तः ।

**दक्षिणेयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५॥**

**दक्षिणेयः, दक्षिणार्हः, दक्षिण्यः (३ त्रि), 'दक्षिणा देने योग्य ब्राह्मणादि' के ३ नाम हैं।**

देति ॥ दक्षिणामर्हति। 'कडंगरदक्षिणाच्छ च' (५।१।६९) इति छयतौ ॥ (१) ॥*॥ (२) ॥*॥ दक्षिणामर्हति। 'अर्ह पूजायाम्'(भ्वा० प० से०)। 'अर्ह-' (३।२।१२) इत्यच्।। (३) ॥*॥ त्रीणि 'दक्षिणायोग्यस्य'।

**स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे।**

**वदान्यः, स्थूललक्ष्यः, दानशौण्डः, बहुप्रदः (४ त्रि), 'बहुत दान करनेवाले' के ४ नाम हैं।**

स्युरिति ॥ 'मां याचस्व' इति वदति। 'वदेरान्य. (उ० ३।१०४)। 'वदान्यो दानशौण्डे स्याच्चारुवाचिनि वाच्यवत्' [इति मे० १२०।१०३] ॥ (१) ॥ * ॥ स्थूलं कूटं लक्ष्यमस्य। स्थूलैर्महद्भिर्लक्ष्यते वा। कर्मणि ण्यत् (३।२।१२४) ॥*॥ ('स्थूलशक्ष' इति) श्रयकारपाठे तु घञ् (३।३।१९) ॥ (२) ॥*॥ दाने शौण्ड। 'सप्तमी शौण्डैः' (२।१।४१) इति समास। 'शौण्डो मत्तेऽपि विख्याते'[शौण्डा पिप्पलिचर्ययोः]इति विश्वः[४४।१७]॥ (३) ॥*॥ बहु प्रददाति। 'प्रे दाज्ञ.' (३।२।६) इति कः ॥ (४) ॥*॥ चत्वारि 'अतिदातुः'।

**जैवातृकः स्यादायुष्मान्**

**जैवातृकः, आयुष्मान् (२ त्रि), 'बहुत उम्रवाले' के २ नाम हैं।**

जैवेति ॥ जीवति। जीवे. आतृकन् वृद्धिश्च (उ० १।७९)। 'जैवातृकः पुमान् सोमे कृशकायुष्मतोस्त्रिषु[२]' इति विश्व [१८।२०४]-मेदिन्यौ [१६।१९१] ॥ (१) ॥*॥ अतिशयितमायुरस्य। मतुप् (५।२।९४) 'तसौ मत्वर्थे' (१।४।१९) इति भत्वात्न रुत्वम् (८।२।६६) ॥ (२) ॥*॥ द्वे 'सायुषः' ['दीर्घायुषः']।

**अन्तर्वाणिस्तु शास्त्रवित् ॥ ६ ॥**

**अन्तर्वाणिः, शास्त्रवित् (२ त्रि), 'शास्त्र पढ़े हुए' के २ नाम हैं।**

अन्तेति ॥ अन्तर्वाण्यस्य। [३]समासान्तविधेरनित्यत्वान्न कप् (५।४।१५३)। 'गोस्त्रियो.-'(१।२।४८) इति ह्रस्वः। यद्वा अन्तर्वाणयति। 'वण शब्दे' (भ्वा० श्रा० से०)। स्वार्थे णिजन्तात् 'अच इ' (उ० ४।१३९) ॥ (१)॥*॥ शास्त्रं वेत्ति। 'सत्सू-' (३।२।६१) इति क्विप् ॥ (२) ॥*॥ द्वे 'शास्त्रविद.'।

**परीक्षकः कारणिकः**

**परीक्षकः, कारणिकः (२ त्रि), 'परीक्षा करनेवाले या मठादिमें ब्राह्मण आदिकी परीक्षाकर दान आदि देनेवाले दानाध्यक्ष' के २ नाम हैं।**

पेति ॥ परीक्ष्यते। 'ईक्ष दर्शने' (भ्वा० आ० से०)। ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ 'करणं हेतुकर्मणो.' इति मे० [४७।३८]। करणैश्चरति। 'चरति' (४।४।८) इति ठक् ॥ (२) ॥*॥ द्वे 'परीक्षाकारकस्य'।

**वरदस्तु समर्धकः।**

**वरदः, समर्धकः (२ त्रि), 'वर देनेवाले' के २ नाम हैं।**

वेति ॥ वर ददाति। कः (३।२।३)। 'वरदः पुनः। प्रसन्ने शान्तचित्ते च, वरदा तु कुमारिका' इति हैम. [३।३६६] ॥ (१) ॥ * ॥ समृध्नोति। 'ऋधु वृद्धौ' (स्वा० प० से०)। ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ द्वे 'वरदस्य'।

**हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥**

**हर्षमाणः, विकुर्वाणः, प्रमनाः, हृष्टमानसः (४ त्रि), 'प्रसन्न चित्तवाले' के ४ नाम हैं।**

हेति ॥ हर्षति। 'हृषु अलीके' (भ्वा० प० से०)। 'ताच्छील्य-'(३।२।१२९) इति चानश। यत्तु—हृष्यति—इति विगृहीत मुकुटेन। तन्न। दैवादिकत्वाच्छ्यनि [३।१।६९] सति 'हृष्यमाण' इत्यापत्ते' ॥ (१) ॥ * ॥ विकुरुते। चानश् (३।२।१२९) शानच् (३।२।१२४) वा (२)॥*॥ प्रकृष्टं मनो यस्य ॥ (३) ॥*॥ हृष्टं मानस मस्य ॥ (४) ॥*॥ चत्वारि 'हर्षितमनस'।

**दुर्मना विमना अन्तर्मनाः स्यात्**

**दुर्मनाः, विमनाः, अन्तर्मनाः (३ त्रि), 'उदास चित्तवाले' के ३ नाम हैं।**

द्विति ॥ दु.स्थितं मनोऽस्य ॥ (१) ॥ * ॥ विगतं विविध वा मनोऽस्य ॥ (२) ॥*॥ अन्तर्मनोऽस्य ॥(३) त्रीणि 'दुःखितमनस.'।

**उत्क उन्मनाः।**

**उत्कः, उन्मनाः (२ त्रि), 'उत्सुक' के २ नाम हैं।**

उत्क इति ॥ उद्गतं मनोऽस्य। 'उत्क उन्मनाः'(५।२।८०) इत्युद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन् ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'उत्कण्ठितमनसः'।

---

१. विश्वे '—विख्यातः—' इति पाठः।

२. विश्वे 'जैवातृकः कृशे चन्द्रे भेषज्यायुष्मतोरपि' इति, मेदिन्यां च '—दीर्घायु कृशयोस्त्रिषु' इति पाठौ।

३. 'वाणिर्व्यूतिश्च वानं स्यात्' इति वैजयन्त्या (पृ० २३६ श्लोक ८), 'वाणिर्व्यूतिः' इति अ० चि० म० (३।५७७) चोक्तया 'वाणि'शब्दस्य ह्रस्वान्तस्यापि सत्त्वेन तेन समासे स्वयं द्रविडप्राणायामो मुधैवेति।

दक्षिणे सरलोदारौ

दक्षिण, सरल, उदार (३ त्रि), 'सरल स्वभाववाले' के ३ नाम हैं।

देति ॥ दक्षते । दक्ष वृद्धौ शीघ्रार्थे च' (भ्वा० आ० से०) । 'द्रुदक्षिभ्यामिनन्' ( उ० २।५० ) । 'दक्षति' इति परस्मैपदप्रयोगस्तु मुकुटस्य चिन्त्य । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । 'अवामे त्रिषु यज्ञादिविधिदाने, दिशि स्त्रियाम्' (इति मेदिनी) [४८।४०-५१] ॥ (१) ॥ * ॥ सरति । 'सृ गतौ' ( भ्वा० प० अ० ) । सलच् (उ० १।१०६)। 'सरल पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' (इति मेदिनी) [१४५।१४३] ॥ (२) ॥ * ॥ उत्कृष्ट आ समन्ताद् राति । आतश्च-' (३।२।१३६) इति कः। उदर्यते। 'ऋ गतिप्रापणयो' (भ्वा० आ० से०) । कर्मणि घञ् ( ३।३।१९ ) वा । 'उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत्' (इति मेदिनी) [१३१।११७] ॥ (३) ॥ * ॥ त्रीणि 'सज्जनस्य' ।

सुकलो दातृभोक्तरि ॥ ८ ॥

सुकल (त्रि), 'दिल खोलकर देने और खानेवाले' का १ नाम है।

स्विति ॥ सुकल्यते । 'कल शब्दसंख्यानयोः' (भ्वा० आ० से०)। 'ईषद्दुः-' (३।३।१२६) इति खल । शोभना कला यस्य, इति वा ॥ (१) ॥ * ॥ एक 'दातृभोक्तुः' ।

तत्परे प्रसितासक्तौ

तत्पर, प्रसित, आसक्त (३ त्रि), 'तैयार, काममें लगे हुए' के ३ नाम हैं।

तेति ॥ परमुत्तमं यस्य । तेन पूर्यते । 'पृ पालनपूरणयो' ( जु० प० से० ) । 'ऋदोरप्' (३।३।५७) वा ॥ (१) ॥ * ॥ प्रासाधि । 'षिञ् बन्धने' (स्वा० उ० अ०)। कर्मणि क्त ( ३।२।१०२ ) ॥ (२) ॥ * ॥ आसज्जि । 'षञ्ज सङ्गे' ( भ्वा० प० अ० ) ॥ (३) ॥ * ॥ त्रीणि तात्पर्ययुक्तस्य' ।

इष्टार्थोद्युक्त उत्सुकः ।

इष्टार्थोद्युक्त, उत्सुक (२ त्रि), 'अपने इष्टसिद्धिके लिये काममें लगे हुए' के २ नाम हैं।

इष्टेति ॥ इष्टश्चासावर्थश्च । तत्र उद्युक्त ॥ ( १ ) ॥ * ॥ उद् उद्योग, सवति । 'षु प्रसवैश्वर्ययो' ( भ्वा० प० अ० ) सुनोति वा । 'षुञ् अभिषवे' (स्वा० उ० अ०)। विचि (३।२।७५) संज्ञापूर्वकत्वाद्गुणाभाव । क्विपि (३।२।७६ ) । आगमशास्त्रस्यानित्यत्वाद्गुणाभावो वा । तत 'संज्ञायां कन्' (५।३।७५) । यद्वा—उत्सुवति । 'षू प्रेरणे' (तु० प० से०)। मितद्र्वादित्वात् (वा० ३।२।१८०)डु । 'सत्सू-' (३।२।६१) इति क्विप् वा । कनि ( आदि० ५।४।५) 'केऽण' (७।४।१३) इति ह्रस्व ॥ (२) ॥ * ॥ द्वे 'इष्टार्थोद्यमवत' ।—पञ्चापि तत्परपर्याया —इत्येके।

प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥

प्रतीत, प्रथित, ख्यात, वित्त, विज्ञात, विश्रुत (६ त्रि), 'मशहूर, प्रसिद्ध' के ६ नाम हैं।

प्रेति ॥ प्रत्येकमगात् । प्रतीयते स्म, इति वा । 'इण् गतौ' (अ० प० अ०) । गत्यर्थत्वात् कर्तरि (३।४।७२), कर्मणि (३।२।१०२) वा क्त ॥ (१) ॥ * ॥ प्रथते स्म । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । अकर्मकत्वात् कर्तरि ( ३।४।७२ ) क्त ॥ ( २ ) ॥ * ॥ अख्यायि । 'ख्या प्रकथने' (अ० प० अ०) । 'चक्षिङ ख्याञ्' (२।४।५४) वा । क्त (३।२।१०२) ॥ (३) ॥ * ॥ अवेदि । 'विद्लृ लाभे' ( तु० उ० अ० ) । क्त ( ३।२।१०२ ) । 'वित्तो भोगप्रत्यययो' (८।२।५८) इति साधु ॥ (४) ॥ * ॥ व्यज्ञायि । 'ज्ञा अवबोधने' (क्र्या० प० अ०) । क्त (३।२।१०२)। यद्वा—विजानाति । 'मतिबुद्धि-' (३।२।१८८) इति क्त ॥ (५) ॥ * ॥ व्यश्रावि । 'श्रु श्रवणे' (भ्वा० प० अ०) । क्त (३।२।१०२) ॥ (६) ॥ * ॥ षट् 'प्रसिद्धस्य' ।

गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।

कृतलक्षण, आहतलक्षण (२ त्रि), 'विद्या, शिल्प आदि किसी गुणसे प्रसिद्ध' के २ नाम हैं।

कृतेति ॥ कृतमुच्चारितं लक्षणं नामास्य । 'लक्षणं नाम्नि चिह्ने च' [सौमित्रे चापि लक्ष्मणः] इति विश्वः [२०।४१] ॥(१)॥*॥ 'आहतं गुणितेऽपि स्यात्' [ताडिते नामितेऽपि च । स्यात् पुरातनवस्त्रे च ] इति विश्वः [ ६२।७७ ] । आहतमभ्यस्तं लक्षणं यस्य ॥ ( २ ) ॥ * ॥ द्वे 'गुणैः प्रसिद्धस्य' ।

इभ्य आढ्यो धनी

इभ्य, आढ्य, धनी (३ त्रि), 'धनी' के ३ नाम हैं।

इभ्य इति ॥ इभमर्हति । दण्डादित्वात्(५।१।६६) य। यद्वा—ए कामाद् भ्यसते । 'भ्यस भये'(भ्वा० आ० से०)। 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति ड । 'इभ्यो धनवतीभ्या तु वरेण्वा' सल्लकीतरौ' इति हेमचन्द्र (२।

१ 'आरामे—' इति मेदिन्या पाठ ।

१. हैमपुस्तकत्रयेऽपि —धनवतीभ्या तु करेण्वा—' इति पाठोपलम्भेरत्रस्य '—तीभ्या वरेण्या—' इति पाठ 'धनवति + इभ्या' इति बोधाभावात् पुनरुक्तिवारणाय '—तीभ्या 'वरेण्या' इति कल्पना लेखकादिप्रमादजा एव ।

३५०) ॥ (१) ॥ * ॥ आध्यायति । 'आतः—' (३।१।१३६) इति कः । पृषोदरादिः ( ६।३।१०९ ) ॥ (२) ॥ * ॥ बहुधनमस्य । इनिः (५।२।११५)॥ (३) ॥*॥ त्रीणि 'बहुधनस्य'।

**स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥**
**अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।**

स्वामी, ईश्वरः, पतिः, ईशिता, अधिभूः, नायकः, नेता, प्रभुः, परिवृढः, अधिपः (१० त्रि), 'स्वामी, मालिक' के १० नाम हैं।

स्वेति ॥ स्वमस्यास्ति । 'स्वामिन्नैश्वर्ये' (५।२।१२६) इति साधु । 'स्वामी प्रभुविशाखयोः' (इति विश्व.[1],मेदिनी) [९४।५१] ॥ ( १ ) ॥ * ॥ ईष्टे । 'ईश ऐश्वर्ये' (अ० आ० से०) । 'स्थेश—' (३।२।१७५) इति वरच् । 'ईश्वरो मन्मथे शंभौ नाढ्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम्' इति [2]विश्व—मेदिन्यौ [१३१।११६]॥(२) ॥*॥ पाति । 'पा रक्षणे' ( अ० प० अ० ) । 'पातेर्डतिः' (उ० ४।५७) । 'पतिर्धवे ना त्रिष्वीशे' इति [3]विश्व, (मेदिनी) [२६।३२] ॥ (३) ॥*॥ ईष्टे । 'तृन्' (३।२।१३५) । तृच् ( ३।१।१३३ ) वा ॥ (४) ॥ * ॥ अधिभवति । 'भुवः संज्ञान्तरयोः' ( ३।२।१७९ ) इति क्विप् । (५) ॥ * ॥ नयति । 'णीञ् प्रापणे' ( भ्वा० उ० से० ) । ण्वुल् (३।१।१३३) । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्व[4] [८।६४] हेमचन्द्रौ ॥ (६) ॥ * ॥ तृच् (३।१।१३३) ॥ (७) ॥ * ॥ प्रभवति । 'विप्रसंम्य—' ( ३।२।१८० ) इति डुः ॥ ( ८ ) ॥ * ॥ परिवर्हति । परिबृंहति वा । 'बृह बृहि वृद्धौ' (भ्वा० प० से०) । 'प्रभौ परिवृढः' ( ७।२।२१ ) इति साधु. ॥ ( ९ ) ॥ * ॥ अधि पाति । 'आतश्चोपसर्गे' (३।१।१३६) इति क. ।—मूलविभुजादिः (वा० ३।२।५)—इति मुकुटोक्तिश्चिन्त्या ॥ (१०) ॥ * ॥ दश 'अधिपतेः'।

**अधिकर्द्धिः समृद्धः स्यात्**

अधिकर्द्धिः, समृद्धः (२ त्रि), 'बहुत समृद्धिवाले' के २ नाम हैं।

अधीति ॥ अधिका ऋद्धिरस्य ।—'ऋधु वृद्धौ' (स्वा० प० से० ) इति धातुपन्यासो मुकुटस्य व्यर्थः ॥ ( १ ) ॥ * ॥ समृध्नोति स्म । 'ऋधु वृद्धौ' (स्वा० प० से०) । अकर्मकत्वात् क्तः ( ३।४।७२ ) ॥ ( २ ) ॥ * ॥ द्वे 'अतिसंपन्नस्य'।

**कुटुम्बव्यापृतस्तु यः ॥ ११ ॥**
**स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।**

कुटुम्बव्यापृतः, अभ्यागारिकः (२ त्रि), उपाधिः (नि० पु०), 'परिवारके पालन-पोषणमें लगे हुए' के ३ नाम हैं।

कुटेति ॥ कुटुम्बपोषणे संसक्तः । व्याप्रियते स्म । 'पृङ् व्यायामे' ( तु० आ० अ० ) । अकर्मकत्वात् क्तः (३।४।७२) । 'व्यावृत्तस्तत्परो युवा' इति पालित ॥ ( १ ) ॥ * ॥ अभ्यागारे नियुक्तः । 'अगारान्ताट्ठन्' ( ४।४।७० ) । अभि अधिक आगारिको वा ॥ ( २ ) ॥ * ॥ आधानमाधिः । 'उपसर्गे—'(३।३।९२) इति किः । उपगत आधिम् । 'अत्यादयः—' (वा० २।२।१८) इति समासः । यत्तु—उपादधाति कुटुम्बम्—इति विगृह्य—'उपसर्गे' ( ३।३।९२ ) इति कि —इत्युपन्यस्तं मुकुटेन । तन्न । कर्तरि किप्रत्ययास्मरणात् । 'उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृते छले[1]' इति विश्व [ ८४।२८ ]—मेदिन्यौ [ ८१।२९ ] ॥ (३) ॥ * ॥ त्रीणि 'कुटुम्बव्यापृतस्य'।

**वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १२ ॥**

सिंहसंहननः (त्रि), 'सुडौल तथा सुन्दर शरीरवाले' का १ नाम है।

वरेति ॥ अङ्गानि च रूपं च वराङ्गरूपाणि । वराणि च तान्यङ्गरूपाणि च, तैरुपेतः ॥ * ॥ सिंहं श्रेष्ठं संहननमस्य । संहनने सिंहः इति वा । राजदन्तादिः ( २।२।३१) ॥ (१) ॥ * ॥ एकं 'सौन्दर्यवितस्य'।

**निर्वार्यः कार्यकर्ता यः संपन्नन् सत्त्वसंपदा ।**

निर्वार्यः (त्रि), 'सत्त्वसम्पत्ति (सुख-दुःखमें बराबर उत्साह) से काममें लगनेवाले' का १ नाम है।

नीति ॥ निश्चयेन व्रियते । 'वृञ् वरणे' (स्वा० उ० से०) । 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) ॥ * ॥ 'निर्वार्यः'

---

१. विश्वे 'स्वामी प्रभौ विशाखे च' इति भिन्नपाठादत्र 'मेदिनी' त्येव पाठ्यम् ।

२. विश्वे 'ईश्वरो विभवैराढ्ये शम्भौ स्वामिनि मन्मथे । पार्वत्यामीश्वरामाहुः' इति (१३८।१५७-१५७) इति भिन्नपाठादत्रापि 'मेदिनी' इत्येव पाठो युक्तः ।

३. विश्वे 'पतिः प्रभौ गतौ मूले' इति ( ६०।४८ ) भिन्नपाठदर्शनादत्र 'मेदिनी' इति पाठ एव समीचीनः ।

४. हैमे पुस्तकत्रये 'नायको मणिभिन्नेतृप्रधानेषु' इति भिन्नपाठादत्र 'विश्वमेदिन्यौ' ( १०।१११ ) इति पाठः समीचीनः ।

१. विश्वे '—कैतवेऽपि विशेषणे । कुटुम्बव्यापृतेऽपि स्यात्' इति पाठः ।

इति पाठे-'धृञ् धारणे' (भ्वा० उ० अ०) इति साधु ॥ (१) ॥ * ॥ 'व्यसनेऽभ्युदये वापि ह्यविकार सदा मन । तत्तु सत्त्वमिति प्रोक्तम् । तत्सपदा सपतम् उद्यम कुर्वम्। 'सयुक्त ' इति वा पाठ ॥*॥ एक 'नि शङ्क कार्यकर्तु '।

**अवाचि मूकः**

**अवाक्, मूक. ( २ त्रि ), 'गूंगे' के २ नाम हैं।**

अवेति ॥ न वाग् यस्य ॥ ( १ ) ॥ * ॥ 'मु' इति कायति । 'आतोऽनुप-' (३।२।३) इति क । यत्तु—मूयते बध्यते वागस्य । 'मूङ् बन्धने' (भ्वा० आ० से०)। बाहुलकात् अवतिमवतिभ्याम् मक्—इति मुकुटेनोक्तम् । तन्न । धातुप्रत्ययाना कारकेषु विहितत्वात्सबन्धे विधानाभावात् । अवते प्रयोजनाभावात् । 'धातो ' इत्येकत्वविवक्षणेन धातुसमुदायात् प्रत्ययाभावाच्च । उक्तसूत्राभावाच्च । 'मूको दैन्यावाग्दीनेषु' (इति हैम २।१४) ॥ (२) ॥ * ॥ द्वे 'मूकस्य' ।

**अथ मनोजवः स पितृसंनिभः ॥ १३ ॥**

**मनोजव , पितृसन्निभ ( २ त्रि ), 'ज्ञान, पद या अवस्थादिके कारण पिताके समान पूज्य व्यक्ति'के २ नाम हैं।**

अथेति ॥ जवति । 'जु ' सौत्र । अच् (३।१।१३४)। मनो जव वेगवद्यस्मिन् । यत्तु—मनो जवति प्रविशतीति । अच् (३।१।१३४)—इति मुकुटेनोक्तम् । तन्न । उक्तविग्रहात्पितृसनिभस्यालाभात् । अधिकरणविवक्षाया त्वचोऽसभवात् । अपः (३।३।५७) मौचित्यात् । 'मनोजवपितृसधर्माण ' इति नाममाला-( ) ॥ * ॥ स्वामी तु—'मनोजवस.' चमसादिवत्—इत्याह ॥ (१) ॥*॥ पितेव सम्यग्विभाति । 'भा दीप्तौ' ( अ० प० अ० ) । 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति क ॥ ( २ ) ॥ * ॥ द्वे 'पितृसमस्य' ।

**सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ।**

**कूकुद' ( त्रि ), 'कन्याको भूषण वस्त्रादिसे अलंकृतकर विद्वान् वरको बुलाकर कन्यादान करनेवाले'का १ नाम है।**

सेति ॥ कोक्ते । 'कुक आदाने' (भ्वा० आ० से०)। 'इगुपध-' ( ३।१।१३५ ) इति क । पृषोदरादि (६।३।१०९) । यद्वा—कवनम् कू । 'कूङ् शब्दे' ( तु० आ० से० ) । सपदादि ( वा० ३।३।१०८ ) । कुव शब्दस्य कुर्भू , कीर्तिभूमि इति यावत् । कूकु ददाति, कूक्वा दायति वा । 'दैप् शोधने' ( भ्वा० प० अ० ) । 'आतोऽनुप-'(३।२।३) इति 'सुपि-'(३।२।४) इति योगविभागाद्वा क ॥ (१) ॥*॥ एक 'सत्कारपूर्वक कन्यादातु '।

**लक्ष्मीवांल्लक्ष्मणः श्रीलः श्रीमान्**

**लक्ष्मीवान् , लक्ष्मणः, श्रीलः, श्रीमान् (४ त्रि), 'श्रीमान्' के ४ नाम हैं।**

लेति ॥ लक्ष्मीरस्यास्ति । मतुप् । ( ५।२।९४ ) ॥ (१) ॥ * ॥ 'लक्ष्म्या अच्च' ( ग० ५।२।१०० ) इति पामादित्वान्न अत्व च । 'लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्' (इति मेदिनी) [५०।७६-७७] ॥ (२) ॥ * ॥ श्रीरस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । श्रिय लाति वा ॥ * ॥ कपिलिकादित्वात् ( वा० ८।२।१८ ) लत्वे 'श्लील ' इत्यपि ॥ ( ३ ) ॥ * ॥ मतुप् ( ५।२।९४ ) अपि ॥ (४) ॥ * ॥ चत्वारि 'श्रीमत '।

**स्निग्धस्तु वत्सलः ॥ १४ ॥**

**स्निग्ध', वत्सल. (२ त्रि),'स्नेह करनेवाले'के २ नाम हैं।**

स्नीति ॥ स्निह्यति स्म । 'ष्णिह प्रीतौ' (दि० प० अ०) । अकर्मकत्वात् (३।४।७२) क्त । 'वा द्रुह्-' (८।२।३३) इति वा घ ॥ (१) ॥*॥ 'वत्स पुत्रादिवर्षयो' तर्णके नोरसि क्लीबम्, ( इति मेदिनी ) [१७०।११] । वत्से पुत्रादिस्नेहपात्रेऽभिलापोऽस्यास्ति । 'वत्सांसाभ्याम्-' ( ५।२।९८ ) इति लच् ॥ (२) ॥ * ॥ द्वे 'वत्सलस्य'।

**स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ।**

**दयालु', कारुणिकः, कृपालु, सूरतः (४ त्रि), 'दया करनेवाले के ४ नाम हैं।**

स्येति ॥ 'स्पृहिगृहि-'(३।२।१५८) इत्यालुच् ॥(१) ॥ * ॥ करुणा शीलमस्य । 'शीलम्' ( ४।४।६१ ) इति ठक् ॥ (२) ॥ * ॥ कृपा लाति मितद्र्वादित्वात् (वा० ३।१।१८०) डु ॥ (३) ॥ * ॥ शोभन उ शम्भु सू । स्वि रत , रत वा यस्य । यद्वा—सुरमते । 'सौ रमे क्तो दमे पूर्वपदस्य च दीर्घ ' ( उ० ५।१४ ) । यत्तु—'तांपलितसूरता ' इति रमे क्त दीर्घश्च—इति वचनमुपन्यस्त मुकुटेन । तत्तु पञ्चपाद्यादौ न लभ्यते ॥ (४) ॥*॥ चत्वारि 'दयालो ' ।

**स्वतन्त्रोऽपावृत स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥**

**स्वतन्त्र', अपावृत., स्वैरी, स्वच्छन्द , निरवग्रह ( ५ त्रि ), 'स्वतन्त्र' के ५ नाम हैं।**

स्वेति ॥ स्व आत्मा तन्त्र प्रधानमस्य ॥ (१) ॥*॥ अपगतमावृतमावरणमस्य । 'अपावृतस्तु पिहिते स्वतन्त्रेऽपि च वाच्यवत्' ( इति 'विश्व , मेदिनी ) [ ६७।१८ ] ॥

१. विश्वे 'अपावृत स्वतन्त्रे स्यात् पिहिते चाप्यपावृत ।' इति (७०।१७९) पाठादत्र 'मेदिनी' इत्येव पाठो युक्त ।

(२) ॥*॥ स्वेनेरितुं शीलमस्य । 'ईर गतौ' (अ० आ० से० ) । 'सुप्यजातौ–' (३।२।७८) इति णिनिः । 'स्वादीरेरिणोः' ( वा० ६।१।८९ ) इति वृद्धिः ॥ (३) ॥*॥ स्व. छन्दोऽभिलाषो यस्य ॥ ( ४ ) ॥ * ॥ निष्क्रान्तोऽवग्रहान्नियमात् । 'निरादय.–' ( वा० २।२।१८ ) इति समासः ॥ ( ५ ) ॥ * ॥ पञ्च 'स्वतन्त्रस्य' ।

**परतन्त्रः पराधीनः परवान् नाथवानपि ।**

परतन्त्रः, पराधीनः, परवान्, नाथवान् ( ४ त्रि ), 'पराधीन' के ४ नाम हैं ।

पेति ॥ परस्तन्त्रं प्रधानं यस्य ॥ ( १ ) ॥ * ॥ परस्मिन्नधि । 'सप्तमी शौण्डै.' (२।१।४०) इति समास । 'अषडक्ष–' ( ५।४।७ ) इति खः । यत्तु—परोऽध्युपर्यस्य—इति विग्रहीतम् । तन्न । शौण्डादिष्वधिपाठवैयर्थ्यापातात् ॥ ( २ ) ॥ * ॥ परः स्वाम्यस्यास्ति । मतुप् ( ५।२।९४ ) ॥ ( ३ ) ॥ * ॥ नाथोऽस्यास्ति ॥ (४) ॥ * ॥ चत्वारि 'परतन्त्रस्य' ।

**अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ॥१६॥**

अधीनः, निघ्नः, आयत्तः, अस्वच्छन्दः, गृह्यकः (५ त्रि), 'वश, अधीन' के ५ नाम हैं ।

अधीति ॥ इनमधिगतः । 'अत्यादय'–' ( वा० २।२।१८ ) इति समासः । अधि उपरि, इनोऽस्य इति वा । ( १ ) ॥ * ॥ निहन्यते निगृह्यते । हन्तेः 'घलर्थे क' ( वा० ३।३।५८ ) ॥ ( २ ) ॥ * ॥ आयतते स्म । 'यती प्रयत्ने' ( भ्वा० आ० से० ) । अकर्मकत्वात् ( ३।४।७२ ) क्त ॥ ( ३ ) ॥ * ॥ न स्वः छन्दोऽस्य ॥ ( ४ ) ॥ * ॥ गृह्यते । 'ग्रह उपादाने' ( क्र्या० उ० से० ) । 'पदास्वैरि–' ( ३।१।११९ ) इति क्यप् । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । 'गृह्यको निघ्नके छेके' इति विश्व'-मेदिन्यौ [७।८४] ॥ ( ५ ) ॥*॥ पञ्च 'अधीनसामान्यस्य' ॥ एके तु नवभिः पर्यायमाहुः ।

**खलपूः स्याद् बहुकरः**

खलपूः, बहुकरः ( २ त्रि ), 'खलिहान या जमीन को साफ करनेवाले'के २ नाम हैं ।

खेति ॥ 'खलं भूस्थानकल्केषु [क्रूरे नीचेऽधमे खल'] इति विश्वः [ १४९।४] । खलं पुनाति । 'पूञ् पवने' ( क्र्या० उ० से० ) । क्विप् ( ३।२।७६ ) ॥ ( १ ) ॥ * ॥ बहु करोति, भुवं संमार्ष्टि । 'कियत्तद्बहुष्वज्विधानम्'[1] (वा० ३।२।२१ ) इत्यच् । स्त्रियां बहुकरा । यत्तु—ताच्छील्यविवक्षायां तु ट. ( ३।२।२० ) एव । स्त्रियां 'बहुकरी'—इत्युक्तं मुकुटेन । तन्न । टापवादत्वेनाज्विधानात् ॥ ॥*॥ ( २ ) द्वे 'भुव मार्जयत.' ।

**दीर्घसूत्रश्चिरक्रियः ।**

दीर्घसूत्रः, चिरक्रियः ( २ त्रि ),'दीर्घसूत्री' अर्थात् 'काम में बहुत देर लगानेवाले'के २ नाम हैं ।

दीति ॥ 'सूत्रं तन्तुव्यवस्थयो ' इति विश्वः [ १२८।४० ] । दीर्घं सूत्रं व्यवस्था यस्य ॥ ( १ ) ॥ * ॥ चिरा क्रिया यस्य ॥ ( २ ) ॥ * ॥ द्वे 'अतिविलम्बेन क्रियासंपादकस्य' ।

**जाल्मोऽसमीक्ष्यकारी स्यात्**

जाल्मः असमीक्ष्यकारी ( २ पु ), 'बिना विचारे काम करनेवाले' के २ नाम हैं ।

जेति ॥ जालयति, जाल्यते वा । 'जल अपवारणे' ( चु० प० से० ) । बाहुलकान्म. ।—धूमवत् म.—इति मुकुटस्तु चिन्त्य । 'इषियुधि–' ( उ० १।४५ ) इति सूत्रे जलेरग्रहणात् । धूमेऽपि गुणप्रसङ्गात्, 'मक्' इति वक्तुं युक्तत्वाच्च । 'जाल्मस्तु पामरे । असमीक्ष्यकारिणि च' इति हैमः [२।३२६–३२७ ] ॥ (१) ॥ * ॥ असमीक्ष्याविचार्य कर्तुं शीलमस्य । 'सुपि–' ( ३।२।७८ ) इति णिनिः ( २ ) ॥ * ॥ द्वे 'अविचारिण.' ।

**कुण्ठो मन्दः क्रियासु यः ॥ १७ ॥**

कुण्ठः ( त्रि ), 'थोडा काम करनेवाले' अर्थात् 'काम करने में मन्द' का १ नाम है ।

विवति ॥ कुण्ठति । 'कुठि प्रतिघाते आलस्ये च' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । ('कुण्ठोऽकर्मण्यमूर्खयो ' इति मे०) [३९।३] ॥ ( १ )॥ *॥ एकं 'मन्दक्रियस्य' ।

**कर्मक्षमोऽलंकर्मीणः**

कर्मक्षमः, अलङ्कर्मीणः ( २ त्रि ), 'काम करनेमें समर्थ' के २ नाम हैं ।

केति ॥ कर्मसु क्षमः ॥ ॥ * ॥ 'सप्तमी–' ( २।१।४० ) इति योगविभागात्समास' ॥ ( १ ) ॥*॥ कर्मणे

---

१. विश्वे 'क' पुस्तके 'गुह्यकश्छेकनिघ्नयो ' ( १२।१२७) 'ख' पुस्तकेऽपि 'गृह्यकश्छेकनिघ्नयो.' ( ७।२६ ) इति विभिन्नपाठाभ्यां स्वयमपि पूर्वं (२।५।४३) 'गृह्यक' शब्दविवरणे प्रकृतोद्धरणे 'मेदिनी' इत्येवोक्ततयाऽत्रापि 'मेदिनी' इत्येव पाठ उचितः ।

१. कियत्तद्बहुषु कृञोऽज्विधानम्' इत्येवं वार्तिकस्वरूपं सि० कौ० भाष्ये च ।

त्रियार्थं अल समर्थ ः "प्राप्तापन्नालपूर्व-' ( वा० २।४। २६ ) इति परवल्लिङ्गनिषेधात्समास । 'पर्यादय –' ( वा० २।२।१८ ) इति वा । 'अपडक्ष–' ( ५।४।७ ) इति स ॥ ( २ ) ॥ * ॥ द्वे 'त्रियाकरणे समर्थस्य' ।

क्रियावान् कर्मसूद्यत ।

क्रियावान् ( त्रि ), 'काममें लगे या तैयार रहनेवाले' का १ नाम है।

क्रीति ॥ क्रियाऽस्यास्ति । मतुप ( ५।२।९५ ) ॥ ( १ ) ॥ * ॥ एकम् उद्योगोद्यतस्य' ।

स कार्मः कर्मशीलो यः

कार्म , कर्मशील ( २ त्रि ), 'बिना फलकी इच्छा किये काम करनेवाले'के तथा महे० के मत से 'सर्वदा काम में लगे रहनेवाले' के २ नाम हैं।

स इति ॥ कर्म शीलमस्य । 'छत्रादिभ्यो ण' ( ४।४। ६२ ) वा । स्त्रियां कार्मी ॥ ( १ ) ॥ * ॥ ( २ ) ॥ * ॥ द्वे 'कर्मसु फलमनपेक्ष्य प्रवृत्तस्य' ।

कर्मशूरस्तु कर्मठः ॥ १८ ॥

कर्मशूर', कर्मठ ( २ त्रि ), 'आरम्भ किये हुए कामको यत्नपूर्वक पूरा करनेवाले' के २ नाम हैं।

केति ॥ कर्मणि शूर । सप्तमीसमास (२।१।४०)॥ ( १ ) ॥ * ॥ 'कर्मणि घटोऽठच' ( ५।२।३५ ) ॥ ( २ ) ॥ * ॥ द्वे 'प्रयत्नेन प्रारब्धकर्मपरिसमापकस्य' ।

भरण्यभुक् कर्मकरः

भरण्यभुक, कर्मकर ( २ त्रि ), 'मजदूर या मूल्य लेकर काम करनेवाले नौकर आदि' के २ नाम हैं।

भेति ॥ भरण्य वेतन भुङ्क्ते । क्विप् ( ३।२।७६ ) ॥ * ॥ क्वचित् 'कर्मण्यभुक' इति पाठ । तत्र कर्मणि साधु । 'तत्र साधु ' (४।४।९८) इति यत् । कर्मण्य वेतनम् ॥ ( १ ) ॥*॥ कर्म करोति । 'कर्मणि भृतौ' (३। २।२२ ) इति ट ॥ ( २ ) ॥ * ॥ द्वे 'मूल्येन कर्म कुर्वत ' । अय शूद्रवर्गे उक्तोऽपि 'भरण्यभुग' इति पर्यायान्तरकथनार्थमनूदित ।

कर्मकारस्तु तत्क्रिय ।

कर्मकार ( त्रि ), 'बिना वेतन आदि लिये काम करने वाले' का १ नाम है।

केति ॥ कर्म करोति । 'कर्मण्यण्' ( ३।२।१ ) ॥ ( १ ) ॥ * ॥ 'तत्क्रिय कर्मकारक्रिय ' 'अभृतक्रिय ' इत्यर्थ ॥८॥ एक 'यो वेतन विना कर्म करोति, तस्य' ।

अपस्नातो मृतस्नातः

अपस्नात', मृतस्नात ( २ त्रि ), 'मरे हुए परिवार आदिके उद्देश्य से स्नान किये हुए' के २ नाम हैं।

अपेति ॥ अपकृष्ट स्नात । 'प्रादयो गताद्यर्थे-'(वा० २।२।१८ ) इति समास ॥ ( १ )॥ * ॥ मृते स्नात । सप्तमीसमास ( २।१।४० ) ॥ ( २ ) ॥ * ॥ द्वे 'मृतमुद्दिश्य स्नातस्य' ।

आमिषाशी तु शौष्कल ॥१९॥

आमिषाशी शौष्कल ( २ त्रि ), 'मांस खानेवाले' के २ नाम हैं।

आमीति ॥ आमिषमश्नाति । 'अश भोजने' (क्या० प० से०)। 'सुपि-' (३।२।७८) इति णिनि ॥(१)॥*॥ 'शुष्कली शुष्कमांसेऽपि मांसमात्रेऽपि सा मता' । तामत्ति। 'सेरे' ( ४।२।९२ ) इत्यण् । स्वामी तु–शाष्कल '-इति पठति । तत्र पृषोदरादि ( ६।३।१०९ ) ॥ * ॥ तत्रा पूर्वकत्वाद्वृद्ध्यभावोऽपि । 'शुष्कल शुष्कमांसस्य 'फणिके पिशिताशिनि' इति हैम [ ३।७२१ ] ॥ ( २ ) ॥*॥ द्वे 'मांसाशिन ' ।

बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायित' ।

बुभुक्षित, क्षुधित, जिघत्सु, अशनायित (४ त्रि), 'भूखे हुए' के ४ नाम हैं।

बुभेति ॥ बुभुक्षा जाताऽस्य । तारकादित्वात् (५।२। ३६ ) इतच् ॥ ( १ ) ॥ * ॥ क्षुध्यति स्म । प्रकर्मकत्वात् ( ३।४।७२ ) क्त । 'वसतिक्षुधो –' ( ७।२। ५२ ) इतीट् ॥ ( २ ) ॥ * ॥ अत्तुमिच्छु । अदे सनि 'लुङ्सनोर्घस्लृ' ( २।४।३७ )। 'सनाशंस–' (३।२।१६८) इत्यु ॥ ( ३ ) ॥ * ॥ अशनस्येच्छा । 'अशनाया–' ( ७।४।३४ ) इति साधु । अशनाया जाताऽस्य । तार कादि- ( ५।२।३६ ) ॥ ( ४ ) ॥ * ॥ चत्वारि 'क्षुधितस्य' ।

परान्नः परपिण्डादः

परान्न, परपिण्डाद ( २ त्रि ), 'दूसरेके अन्नको खाकर जीनेवाले' के २ नाम हैं।

१ भाष्यानुरोधात् 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयोरिति चेत्पर—' इति पाठ उचित ।

१ अत्र शौष्कल' शब्दविवरणे 'शुष्कल'शब्दीयानेकार्थकथनस्यानौचित्यात् हैमे पुस्तकत्रयेऽपि 'शौष्कल शुष्कमांसस्य पणिते—' इति पाठाच्चात्रापि तादृश एव पाठ उचित ।

पेति ॥ परस्यान्नम् । परान्नं नित्यमस्य । 'अर्शआदिभ्योऽच्' ( ५।२।१२७ ) ॥ ( १ ) ॥ * ॥ 'पिण्डमाजीवने' इति धरणिः । परस्य पिण्डम् । तदत्ति । 'कर्मण्यण्' ( ३।२।१ ) ॥ (२) ॥*॥ द्वे 'परान्नजीवनस्य' ।

**भक्षको घस्मरोऽद्मरः ॥ २० ॥**

भक्षकः, घस्मरः, अद्मरः ( ३ त्रि ), 'बहुत खानेवाले' के ३ नाम हैं ।

भेति ॥ भक्षयति । 'भक्ष अदने' ( चु० प० से० ) । ण्वुल् ( ३।१।१३३ ) ॥ ( १ ) ॥*॥ घसति । 'घस्लृ अदने' ( भ्वा० प० अ० ) । 'सृघस्यदः क्मरच्' ( ३।२।१६० ) ॥ (२) ॥ * ॥ अत्ति ॥ (३) ॥ * ॥ त्रीणि 'भक्षणपरस्य' ।

**आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।**

आद्यूनः, औदरिकः ( २ त्रि ), 'अत्यन्त भूखे हुए' के २ नाम हैं ।

आद्यूनइति ॥ आदेवीत् । अकर्मकत्वात् क्त ( ३।४।७२ )। 'दिवोऽविजिगीषायाम्' (८।२।४९) इति निष्ठानत्वम् । 'यस्य विभाषा' ( ७।२।१५ ) इति नेट् ॥ (१) ॥ * ॥ उदरे प्रसित । 'उदराट्ठगाद्यूने' ( ५।२।६७ ) इति ठक् ॥ ( २ ) ॥ * ॥ द्वे 'औदरिकस्य' ।

**उभौ त्वात्मंभरिः कुक्षिम्भरिः स्वोदरपूरके ॥ २१ ॥**

आत्मम्भरि, कुक्षिम्भरिः ( २ त्रि ), 'पेटू' अर्थात् 'अपने पेट भरनेसे मतलब रखनेवाले' के २ नाम हैं ।

विति ॥ आत्मानं कुक्षिं च बिभर्ति । 'फलेग्रहिरात्मंभरिश्च' ( ३।२।२६ ) इति साधु ॥ ( १ ) ॥ * ॥ चात्('भृञ. कुक्ष्यात्मनोर्मुम् च' इति वार्तिकेन[1] च) कुक्षिभरिः ॥ ( २ ) ॥ * ॥ द्वे 'स्वोदरपूरस्य' ।

**सर्वान्नीनस्तु सर्वान्नभोजी**

सर्वान्नीनः, सर्वान्नभोजी ( २ त्रि ), 'सब जातिके अन्न को खानेवाले औघड़ परमहंस आदि' के २ नाम हैं ।

सेति ॥ सर्वेषामन्नानि सर्वान्नानि भक्षयति । 'अनुपदसर्वान्न–' ( ५।२।९ ) इति ख ॥ ( १ ) ॥ * ॥ सर्वान्नानि भोक्तु शीलमस्य । सुपि–' ( ३।२।७८ ) इति णिनि. ॥ ( २ ) ॥ * ॥ द्वे 'सर्ववर्णान्नभक्षकस्य' ।

**गृध्नुस्तु गर्धनः ।**

**लुब्धोऽभिलाषुकस्तृष्णक्[2]**

गृध्नुः, गर्धनः, लुब्धः, अभिलाषुकः, तृष्णक् ( ५ त्रि ), 'लोभी' के ५ नाम हैं । महे० के मतसे २ नाम 'आकांक्षा करनेवाले' के तथा शेष ३ नाम 'अभिलाषा करनेवाले' के हैं ।

ग्रिति ॥ गर्धनशील । 'गृधु अभिकाङ्क्षायाम्' ( दि० प० से० ) । 'त्रसिगृधि–' ( ३।२।१४० ) इति क्नुः ॥ ( १ ) ॥ * ॥ 'जुचङ्क्रम्य–' ( ३।२।१५० ) इति युच् ॥ ( २ ) ॥ * ॥ लुभ्यति । 'लुभ गार्ध्ये' (दि० प० से० ) । 'गत्यर्था–' (३।४।७२) इति क्त । 'लुब्ध आकाङ्क्षिणि व्याधे' इति हेमचन्द्र [ २।२५० ] ॥ ( ३ ) ॥ * ॥ अभिलष्यति । 'लष कान्तौ' (भ्वा० उ० से०) । 'लषपतपद–' ( ३।२।१५४ ) इत्युकञ् ॥ ( ४ ) ॥*॥ तृष्यति । 'ञितृषा पिपासायाम्' (दि० प० से०) । 'स्वपितृषोर्नजिङ्' ( ३।२।१७२ ) ॥ ( ५ ) ॥ * ॥ पञ्च 'लुब्धस्य' ।

**समौ लोलुपलोलुभौ ॥ २२ ॥**

लोलुपः, लोलुभः ( २ त्रि ), 'अत्यन्त लोभी' के २ नाम हैं ।

लेति ॥ गर्हितं लुम्पति । 'लुप्लृ छेदे[1]' ( तु० उ० अ० ) । 'लुपसद–' ( ३।१।२४ ) इति यङन्तादच् ( ३।१।१३४ ) ॥ ( १ ) ॥ * ॥ भृशं लुभ्यति । 'लुभ गार्ध्ये' ( दि० प० से० ) । 'धातोरेकाच –' ( ३।१।२२ ) इति यङन्तादच् ( ३।१।१३४ ) ॥ ( २ ) ॥ * ॥ द्वे 'अतिलुब्धस्य' ।

**उन्मदस्तून्मदिष्णुः स्यात्**

उन्मदः, उन्मदिष्णुः ( २ त्रि ), 'पागल' के २ नाम हैं ।

उन्मेति ॥ उद्गतो मदो हर्षोऽस्य ॥ * ॥ क्वचित् 'सोन्माद' इति पाठः । तत्र सह उन्मादेन वर्तते । सोपसर्गत्वान्मनेर्घञ् ॥ * ॥ सु अतिशयित उन्मादोऽस्य । 'सून्माद' इत्यपि ॥ ( १ ) ॥*॥ उन्मदनशील । 'मदी हर्षे' ( दि० प० से० ) । 'अलंकृञ्–' ( ३।२।१३६ ) इतीष्णुच् ॥ (२) ॥*॥ द्वे 'उन्मादशीलस्य' । [ 'पागल' इत्याख्यस्य ] ।

**अविनीतः समुद्धतः ।**

अविनीतः, समुद्धतः ( २ त्रि ), 'उद्धत' के २ नाम हैं ।

अवीति ॥ न व्यनायि । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । क्त (३।२।१०२) ॥ ( १ ) ॥ * ॥ समुद्धन्ति स्म । समुद्धन्यते स्म, इति वा । हन्तेर्गत्यर्थत्वात् कर्तरि ( ३।४।७२ ) कर्मणि ( ३।२।१०२ ) वा क्तः । 'समु-

१. कोष्ठान्तर्गतः पाठो नि० सा० पुस्तके ।

२. यल्लक्ष्यम्—"असिश्चन्तुरसं गोतमाय तृष्णजे' इति ऋक् ( १।८५।११ )" इति वाच० ( पृ० ३३४६ ) । अत्रार्थे 'तृषितः, तर्षितः, पिपासितः' इति चेति स्वा० । 'तृष्णक्' इत्यदन्तोऽपीति ।

१. 'छेदने' इति सि० कौ० धातुपाठे च ।

द्धत समुद्गीर्णेऽप्यविनीते च वाच्यवत्' ( इति मे० ७०। २२२) ॥ (२) ॥*॥ द्वे 'उद्धतस्य' ।

मत्ते शौण्डोत्कटक्षीवाः

मत्त', शौण्ड , उत्कट , क्षीव ( ४ त्रि ), 'मतवाले' के ४ नाम हैं।

मेति ॥ माद्यति । 'गत्यर्था–' (३।४।७२) इति मत्ते क्त । 'न ध्याख्या–' (८।२।५७) इति न निष्ठानत्वम् ॥ (१) ॥*॥ शुण्डाया पानागारे भव । 'तत्र भवः' (४।३। ५३) इ यण् । 'शौण्डो मत्ते च विख्याते पिप्पल्या च भवेत् स्त्रियाम्[१]' इति विश्व [४४।१७]–मेदिन्यौ [ ४२।२६ ]॥ ( २ ) ॥ * ॥ उद्गत कट आवरणमावारको वाऽस्य । यद्वा–उद्गतमदवृत्तेश्छन्दात् स्वार्थे सप्तोदश्च'-(५।२।२९) इति कटच । 'उत्कटस्तीव्रमत्तयो ' इति हैम [ ३।१५२ ] ॥ ( ३ ) ॥*॥ क्षीबते स्म । 'क्षीबृ मदे' ( भ्वा० आ० से० ) । अकर्मकत्वात् कर्तरि क्त ( ३।४।७२ ) । 'अनुपसर्गात्–' (८।२।५५) इति साधु । क (३।१।१३५) वा ॥ * ॥ नान्तोऽप्ययम् । 'क्षीबाणो समवुध्यत' इति व्यासप्रयोगात् । तत्र बाहुलकात् वनिन् ॥ (४) ॥*॥ चत्वारि 'उन्मत्तस्य' ।

कामुके कमितानुकः ॥२३॥

कम्रः कामयिताभीकः कमन कामनोऽभिक[२] ।

छेको विदग्धे व्यसनिपञ्चभद्रावुपप्लुते । [ १ ]

वेश्यापतिर्भुजङ्गः स्यात् पिङ्गः पल्लविको विटः' [ २ ]

कामुक , कमिता, अनुक , कम्र , कामयिता, अभीक , कमन , कामन , अभिक ( ९ त्रि ), 'कामी' के ९ नाम हैं।

[छेक , विदग्ध , (२ त्रि),'विदग्ध, चतुर' के २ नाम हैं]।

[ व्यसनी, पञ्चभद्र , उपप्लुत, ( ३ त्रि ), 'व्यसनी' के ३ नाम हैं ]।

[ वेश्यापति भुजङ्ग ( २ पु ) 'वेश्याके पति' के २ नाम हैं ]।

[ पिङ्ग , पल्लविक विट (३ पु), 'विट' के ३ नाम हैं ]।

केति ॥ कामयते । 'कमु कान्तौ' (भ्वा० आ० से०)। 'लषपतपद–' (३।२।१५४) इत्युकञ् । 'कामुक कामनेऽशोकपादपे चातिमुक्तके'(इति मे०)[६।६४]॥*॥ णिङ्च भावे च तृच् (३।१।१३३) ॥ (५) ॥*॥ ( २ ) ॥*॥ अनुकामयते । अनुकाभिका–' (५।२।७४) इति साधु ॥ (३) ॥*॥ 'नमिकम्पि–' (३।२।१६७) इति र ॥ (४) ॥*॥ अभि कामयते । 'अनुकाभिका–' (५।२।७४) इति साधु । 'अभीक कामुके क्रूरे निर्भये त्रिषु ना कवौ' इति (मे०) [४।४१]॥(६)॥*॥(७) ॥*॥ 'अनुदात्तेतश्च–' (३।२।१४९) इति युच् । 'कमन कामुके कामेऽशोकेऽश्मपादपे' इति (मे०) [८५।४४]॥ (७) ॥*॥ णिङन्ताद्युच् (उ० २।७८) ॥ (८) ॥*॥ नव 'कामुकस्य' ।

विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ २४ ॥

विधेय , विनयग्राही, वचनेस्थित , आश्रव ( ४ त्रि ), 'आज्ञाकारी' के ४ नाम हैं।

वीति ॥ विधातु शक्य । 'अचो यत्' (३।१।९७) । 'ईद्यति' (६।४।६५) । गुण (७।३।८४) ॥ (१) ॥*॥ प्रवृत्तौ निवृत्तौ वा विनय ग्रहीतु शीलमस्य । 'सुपि–' (३। २।७८) इति णिनि ॥ ( २ ) ॥ ॥ वचने तिष्ठति स्म । 'गत्यर्था–' (३।४।७२) इति क्त । 'तत्पुरुषे कृति–' ( ६। ३।१४ ) इत्यलुक् ॥ (३) ॥*॥ आशृणोति । 'श्रु श्रवणे' (भ्वा० प० अ०) । पचाद्यच् ( ३।१।१३४ ) । 'आश्रवो वचनस्थिते । प्रतिज्ञाया च क्लेशे च' इति हैम [३।७३१] ॥ (४) ॥*॥ चत्वारि 'प्रवृत्तिनिवृत्त्योर्विधातु शक्यस्य'।

वश्यः प्रणेयः

वश्य , प्रणेय (२ त्रि), 'वशमें रहनेवाले' के २ नाम हैं।

वेति ॥ वशमधीनत्व गत । वश गत ' (४।४।८६) इति यत् । 'वशमावत्ततायां स्यात्'[वशाभिच्छाप्रभुत्वयो । वशा वन्ध्यासुतायोषालीगवीकरिणीषु च' ] इति विश्व [१६७।१]॥(१)॥*॥ प्रकर्षेण नेतु शक्य । 'अचो यत्' (३।१।९७) ॥ (२) ॥*॥ द्वे स्वाधीनस्य ।

निभृतविनीतप्रश्रिताः समाः ।

निभृत , विनीत , प्रश्रित (३ त्रि),'विनीत'के ३ नाम हैं।

नीति ॥ नितरामभारि । भृञ भरणे' ( भ्वा० उ० अ० ) । क्त ( ३।२।१०२ ) ॥ ( १ ) ॥*॥ व्यनायि । 'णीञ्' (भ्वा० उ० से०) । क्त (३।२।१०२) । 'विनीतस्तु निभृते निर्जितेन्द्रिये । वाणिजे साधुवाह्यश्वे विनयग्राहिते हिते[१]' इति हैम [३।३१९–३२०] ॥ (२)॥*॥ प्रथममश्रायि गुणे । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। क्त (३।२।१०२) ॥ (३) ॥*॥ त्रीणि विनययुक्तस्य'।

१. 'विश्वे '– ऽपि विख्यात शौण्डा पिप्पलिधर्चयो ' इति पाठ ।

२ "कामनः कमनोऽभिक ' इति युक्त पाठ" इति स्वामी ।

१ हैमे 'क' पुस्तके 'वाणिज्ये ·· ' हृते' इति पाठ । 'ख-ग' पुस्तकयोस्तु '–हृते' इति पाठ ।

**धृष्टे धृष्णग्वियातश्च**

धृष्टः, धृष्णक्, वयातः (३ त्रि), 'ढीठ' के ३ नाम हैं।

धृेति। धृष्णोति स्म। 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०)। 'गत्यर्था-' (३।४।७२) इति क्तः। 'धृषि-शसी-' (७।२।१९) इतीडभावः ॥(१)॥*॥ 'धृषेश्च'[1] इति नजिङ्॥*॥ 'धृष्णु.' इति पाठे—'त्रसिगृधि-' (३।२।१४०) इति क्नु ॥ (२) ॥*॥ विरुद्धं यातं चेष्टितं यस्य। विरुद्धमयासीद्वा। 'गत्यर्था-' (३।४।७२) इति क्त. ॥ (३) ॥*॥ त्रीणि 'निर्लज्जस्य'।

**प्रगल्भः प्रतिभान्विते ॥२५॥**

प्रगल्भः, प्रतिभान्वितः (२ त्रि), 'प्रतिभाशाली' के २ नाम हैं।

प्रेति ॥ प्रगल्भते। 'गल्भ धाष्टर्ये' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ प्रतिभानम्। 'आ-तश्च-' (३।३।१०६) इत्यङ्। 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इति रुद्रः। प्रतिभयान्वितः ॥ (२) ॥*॥ द्वे 'प्रत्युत्पन्नमते'।

**स्यादधृष्टे तु शालीनः**

अधृष्टः, शालीनः (२ त्रि), 'सलज्ज' अर्थात् 'जो ढीठ नहीं हो, उसके' २ नाम हैं।

स्येति ॥ शालाप्रवेशमर्हति। 'शालीनकौपीने-' (५।२।२०) इति साधु ॥ (२) ॥*॥ द्वे 'सलज्जस्य'। [ धृष्टताहीनस्य ]।

**विलक्षो विस्मयान्विते।**

विलक्षः, विस्मयान्वितः (२ त्रि), 'आश्चर्यमें युक्त' के २ नाम हैं।

वीति ॥ विशेषेण लक्षयति। 'लक्ष आलोचने' (भ्वा० आ० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ विस्मये-नाश्चर्येणान्वितः ॥ (२) ॥*॥ द्वे 'परकीयधर्मशीलादौ प्राप्ताश्चर्यस्य'।

**अधीरे कातरः**

अधीरः, कातरः (२ त्रि) 'भूख, प्यास या भय आदि से व्याकुल' के २ नाम हैं।

अधीति ॥ न धीरो धैर्यं यस्य ॥ (१) ॥*॥ ईष-त्तरति। अच् (३।१।१३४)। 'ईषदर्थे' (६।३।१०५) इति कोः कादेशः ॥ (२) ॥*॥ द्वे 'रोगादिलक्षणेनाकुल-मनसः'।

**त्रस्नौ भीरुभीरुकभीलुकाः ॥ २६ ॥**

त्रस्तः, भीरुः, भीरुकः, भीलुकः (४ त्रि), 'डरे हुए या डरनेवाले' के ४ नाम हैं।

त्रेति ॥ त्रस्यति। 'त्रसी उद्वेगे' (दि० प० से०)। 'त्रसिगृधि-' (३।२।१४०) इति क्नु. ॥ (१) ॥*॥ बिभेति। 'ञिभी भये' (जु० प० अ०)। 'भियः क्रुक्लु-कनौ' (३।३।१७४)। 'क्रुकन्नपि' (वा० ३।२।१७४)। 'भीरुरार्ते त्रिलिङ्गः स्यात्शतावर्यां योषिति' इति 'विश्व-मेदिन्यौ [१२८।७३][1]' ॥ (२) ॥*॥ (३) ॥*॥ (४) ॥*॥ चत्वारि 'भयशीलस्य'।

**आशंसुराशंसितरि**

आशंसुः, आशंसिता (२ त्रि), 'अपने मनोरथको पूरा करनेकी इच्छावाले' के २ नाम हैं।

आशेति ॥ आशंसते। 'आङः शसि इच्छायाम्' (भ्वा० आ० से०)। 'सनाशंसभिक्ष-' (३।२।१६८) इत्युः ॥ (१) ॥*॥ 'तृन्' (३।४।१३५) ॥ (२) ॥ द्वे 'इष्टार्थ-प्राशंसिनो'।

**गृहयालुर्ग्रहीतरि।**

गृहयालुः, ग्रहीता (२ त्रि), 'लेने वाले' के २ नाम हैं।

गृेति ॥ गृहयति। 'गृह ग्रहणे' चुरादावदन्तः। 'स्पृ-हिगृहि-' (३।२।१५८) इत्यालुच्। 'अयामन्ता-' (६।४।५५) इति णेरयादेशः ॥ (१) ॥*॥ (गृह्णाति)। 'ग्रह उपादाने' (क्र्या० उ० से०)। 'तृन्' (३।२।१३५)। 'ग्रहोऽलिटि-' (७।२।३७) इतीटो दीर्घः ॥ (२) ॥*॥ द्वे 'ग्रहणशीलस्य'।

**श्रद्धालुः श्रद्धया युक्ते**

श्रद्धालुः, (२ त्रि), 'श्रद्धा करनेवाले' का १ नाम है।

श्रेति ॥ श्रद्धधाति। 'स्पृहि-' (३।२।१५८) इत्या-लुच् ॥ (१) ॥*॥ एक 'श्रद्धालो'।

**पतयालुश्च पातुके ॥ २७ ॥**

पतयालुः, पातुकः (२ त्रि), 'गिरनेवाले' के २ नाम हैं।

पेति ॥ पतयति। 'पत गतौ' (चु० उ० से०)। आलुच् (३।२।१५८) ॥ (१) ॥ ॥ (भौवादिकात्) 'लषपत-' (३।२।१५४) इत्युकञ् ॥ (२) ॥*॥ द्वे 'पतनशीलस्य'।

**लज्जाशीलोऽपत्रपिष्णु**

लज्जाशीलः, अपत्रपिष्णुः (२ त्रि), 'लज्जा करनेवाले के २ नाम है।

१. 'स्वपिदृशोर्नजिङ्' इति सूत्रे 'धृषेश्चेति वक्तव्यम्'। 'धृष्णक्' इति काशिका।

१. विश्वे प्रकृतोद्धरणस्याभावादत्र 'मेदिनी' इत्येव पाठो युक्तः।

लेति ॥ लज्जा शीलमस्य ॥ (१)॥*॥ अपत्रपते। 'अलकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (२) ॥*॥ द्वे 'लज्जाशीलस्य'।

वन्दारुरभिवादके।

वन्दारु, अभिवादक (२ त्रि), 'प्रणाम करनेवाले' के २ नाम हैं।

वेति ॥ वन्दते। 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०)। 'शृवन्द्योरारुः' (३।२।१७३) ॥ (१)॥*॥ अभिवादयति। ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ द्वे 'वन्दनशीलस्य'।

शरारुर्घातुको हिंस्रः

शरारु, घातुक, हिंस्र (३ त्रि), 'हिंसा करनेवाले' के ३ नाम हैं।

शेति ॥ शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। आरु (३।२।१७३) ॥ (१) ॥*॥ हन्ति। 'लषपत—' (३।२।१५४) इत्युकञ् ॥ (२) ॥*॥ हिनस्ति। 'हिंसि हिंसायाम्' (रु० प० से०)। 'नमिकम्पि—'(३।२।१६७) इति रः। 'हिंस्रा काकादनीमास्यो[1] स्त्रियां स्याद्घातुकेऽन्यवत्' इति विश्वः [१३२।९३], मेदिनी [१३०।१०१] ॥ (३) ॥*॥ त्रीणि 'हिंसाशीलस्य'।

स्याद्वर्धिष्णुश्च वर्धनः ॥ २८ ॥

वर्धिष्णु, वर्धन (२ त्रि), 'बढ़नेवाले' के २ नाम हैं।

स्येति ॥ वर्धते। 'वृधु वृद्धौ' (भ्वा० आ० से०)। 'अलकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ 'अनुदात्तेतश्च–' (३।२।१४९) इति युच्। 'वर्धनं छेदने वृद्धौ वर्धनी तु गलन्तिका' इति हैमः [३।४३९] ॥ (२) ॥*॥ द्वे 'वर्धनशीलस्य'।

उत्पतिष्णुस्तूत्पतिता

उत्पतिष्णु, उत्पतिता (२ त्रि), 'उछलनेवाले' के २ नाम हैं।

उत्पेति ॥ उत्पतति। 'पत्लृ गतौ' (भ्वा० प० से०) इष्णुच् (३।२।१३६) ॥ (१) ॥*॥ 'तृन्' (३।२।१३५) ॥ (२) ॥*॥ द्वे 'ऊर्ध्वपतनशीलस्य'।

अलंकरिष्णुस्तु मण्डनः।

अलङ्करिष्णु, मण्डन (२ त्रि), 'अलकृत करनेवाले' के २ नाम हैं।

अलमिति ॥ अलंकरणशील। 'अलंकृञ्– (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ मण्डनशील। 'मडि भूषायाम्' (भ्वा० प० से०)। 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१)। इति युच्। [ 'मण्डनं तु प्रसाधने। मण्डनोऽलंकरिष्णौ स्यात्' इति हैमः, ३।४२६-४२७ ] ॥ (२) ॥*॥ द्वे 'अलंकरणशीलस्य'।

भूष्णुर्भविष्णुर्भविता

भूष्णु, भविष्णु, भविता (३ त्रि) 'होनहार' के ३ नाम हैं।

भ्विति ॥ भवनशील। 'ग्लाजिस्थश्च ग्स्नुः' (३।२।१३९) चाद्भुवः[1] ॥ (१) ॥*॥ 'भुवश्च' (३।२।१३८) इतीष्णुच् ॥ (२) ॥*॥ 'तृन्' (३।२।१३५) ॥ (३) ॥*॥ त्रीणि 'भवनशीलस्य'।

वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥

वर्तिष्णु, वर्तन (२ त्रि), 'वर्तने (व्यवहारमें लाने) वाले' के २ नाम हैं।

वेति ॥ वर्तनशील। 'वृतु वर्तने' (भ्वा० आ० से०) 'अलकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ 'अनुदात्तेतश्च–' (३।२।१४९) इति युच्। [ 'वर्तनो' वामने क्लीबं, वृत्तौ स्त्री प्रेषणाध्वनोः। न पुंसि तुलनालाया तर्कुपीठे च जीवने। वर्तिष्णौ त्रिषु' इति मेदिनी, ११।२३-२४ ] ॥ (२) ॥*॥ द्वे 'वर्तनशीलस्य'।

निराकरिष्णुः क्षिप्नुः स्यात्

निराकरिष्णु, क्षिप्नु (२ त्रि), 'निकालने या बहिष्कार करनेवाले' के २ नाम हैं।

नीति ॥ निराकरणशील। 'इष्णुच्' (३।२।१३६) ॥ (१) ॥*॥ क्षेपणशील। 'क्षिप प्रेरणे' (तु० उ० अ०)। 'त्रसिगृधि–' (३।२।१४०) इति क्नुः ॥ (२) ॥*॥ द्वे 'निराकरणशीलस्य'।

सान्द्रस्निग्धस्तु मेदुरः।

सान्द्रस्निग्ध, मेदुर (२ त्रि), 'घन, गझिन या चिकने' के २ नाम हैं।

सेति ॥ सान्द्रो घनः, स्निग्धश्चिक्कणः ॥ (१) ॥*॥ मेदनशील। 'ञिमिदा स्नेहने' (भ्वा० आ० से०)। 'भञ्ज-

१ विश्वे 'क' पुस्तके '—काकादनो मत्स्यो—' इति 'ख' पुस्तके '—काकादनी मत्स्या—' इति, मेदिन्यां च '—त्वेलावलीमास्यो—' इति पाठा लभ्यन्ते।

१. सि० कौ० अनुरोधेनेदम्, तत्र 'चाद्भुवः। 'श्र्युकः किति' इत्यत्र गकारः प्रश्लिष्यते। भूष्णुः' इत्युक्तम्। भाष्ये तु 'भुव इट्प्रतिषेधश्च' इत्युक्तः 'ग्लाजिस्थश्च ग्स्नुः' इति सूत्रे।

भास–' (३।२।१६१) इति घुरच् ॥ (२) ॥*॥ द्वे 'निबिडस्निग्धस्य'।

## ज्ञाता तु विदुरो विन्दुः

ज्ञाता, विदुरः विन्दुः (३ त्रि), 'जाननेवाले' के ३ नाम हैं।

ज्ञेति ॥ जानाति। 'तृन्' (३।२।१३५) ॥ (१) ॥*॥ वेदनशील। 'विदिभिदि–' (३।२।१६२) इति कुरच् ॥ (२) ॥*॥ 'विन्दुरिच्छुः' (३।२।१६९) इति साधुः। [ "विन्दुर्दन्तक्षतान्तरे। भ्रुवोर्मध्ये रूपकार्यप्रकृतौ पृषते पुमान्। वेदितर्यन्यलिङ्गः स्यात् इति मेदिनी, ७५।१०-१२ ] ॥ (३) ॥*॥ त्रीणि 'ज्ञानशीलस्य'।

## विकासी तु विकस्वरः ॥ ३० ॥

विकासी, विकस्वरः (२ त्रि), 'खिलनेवाले फूल आदि के २ नाम हैं।

वीति ॥ विकसति। 'कस गतौ' (भ्वा० प० से०)। 'वौ कषलस–' (३।२।१४३) इति घिनुण्। 'विकास स्फुटने व्यक्तौ' इति दन्त्यान्ते धरणिः। तस्मादिनि. (५।२।११५) वा ॥ (१) ॥*॥ 'स्थेशभास–' (३।२।१७५) इति वरच् ॥ (२) ॥*॥ द्वे 'विकसनशीलस्य'।

## विसृत्वरो विसृमरः प्रसारी च विसारिणि।

विसृत्वरः, विसृमरः, प्रसारी, विसारी (४ त्रि), 'फैलनेवाली लता आदि' के ४ नाम हैं।

वीति ॥ विसरणशील.। 'सृ गतौ' (भ्वा० प० अ०)। 'इण्नशजि–' (३।२।१६३) इति क्वरप्। 'ह्रस्वस्य–' (६।१।७१) इति तुक् ॥ (१) ॥*॥ 'सृघस्य–' (३।२।१६०) इति क्मरच् ॥ (२) ॥*॥ प्रसरणशील। 'प्रे लप–' (३।२।१४५) इति घिनुण् ॥ (३) ॥*॥ विसरणम्। घञ् (३।३।१८)। विसारोऽस्यास्ति। इनि (५।२।११५) ॥ (४) ॥ चत्वारि 'प्रसारिणः'।

## सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥३१॥

सहिष्णुः, सहनः, क्षन्ता, तितिक्षुः, क्षमिता, क्षमी (६ त्रि), 'क्षमा करनेवाले' के ६ नाम हैं।

सेति ॥ सहनशील.। 'षह मर्षणे' (भ्वा० आ० से०)। 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ 'अनुदात्तेतश्च–' (३।२।१४९) इति युच् ॥ (२) ॥*॥ क्षमणशीलः। क्षमू सहने' (दि० प० से०)। 'तृन्' (३।२।१३५) ॥ (३) ॥*॥ तिजेः क्षमायाम्। 'गुप्तिज्किद्भ्यः–' (३।१।५) इति सन्। तितिक्षणशील 'सनाशंस–' (३।२।१६८) इत्युः ॥ (४) ॥*॥ तृन 'स्वरति–' (७।२।४४) इति पक्षे इट् ॥ (५) ॥*॥ 'शमित्यष्टाभ्यो–' (३।२।१४१) इति घिनुण् ॥ (६) ॥*॥ षट् 'सहनशीलस्य'।

## क्रोधनोऽमर्षणः कोपी

क्रोधनः, अमर्षणः, कोपी (३ त्रि) 'क्रोध करनेवाले' के ३ नाम हैं।

क्रुधेति ॥ क्रोधनशीलः। 'क्रुध कोपे' (दि० प० अ०)। 'क्रुधमण्ड–' (३।२।१५१) इति युच् ॥ (१) ॥*॥ न मर्षणशीलः। युच् (३।२।१५१) ॥ (२) ॥*॥ अवश्य कुप्यति। 'आवश्यका–' (३।३।१७०) इति णिनि ॥ (३) ॥*॥ त्रीणि 'क्रोधनस्य'।

## चण्डस्त्वत्यन्तकोपनः।

चण्डः, अत्यन्तकोपनः (२ त्रि), 'बहुत क्रोध करनेवाले' के २ नाम हैं।

चेति ॥ चण्डते। 'चडि कोपे' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। 'चण्डस्तु यमदासेऽतिकोपने। तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति। चण्डा धनहरीशङ्खपुष्प्यो' इति हेमचन्द्रः [ २।११८-१९ ] ॥ (१) ॥*॥ अत्यन्तं कुप्यति। 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) इति युच् ॥ (२) ॥*॥ द्वे 'अतिक्रोधनस्य'।

## जागरूको जागरिता

जागरूकः, जागरिता (२ त्रि), 'जागनेवाले' के २ नाम हैं।

जेति ॥ जागरणशील। 'जागृ निद्राक्षये' (अ० प० से०)। 'जागरूकः' (३।२।१६५) ॥ (१) ॥*॥ 'तृन्' (३।२।१३५) ॥ (२) ॥*॥ द्वे 'जागरूकस्य'।

## घूर्णितः प्रचलायितः ॥ ३२ ॥

घूर्णितः, प्रचलायितः (२ त्रि), 'घूर्णित' अर्थात् 'निद्रा या नशा आदिसे व्याकुल होकर झूमनेवाले' के २ नाम हैं।

घ्विति ॥ घूर्णते स्म। 'घुर्ण भ्रमणे' (भ्वा० आ० से०)। 'गत्यर्था–' (३।४।७२) इति क्त। घूर्णा जाताऽस्य इति वा। तारकादि (५।२।३६) ॥ (१) ॥*॥ प्रचल इवाचरति। 'कर्तुः क्यङ् सलोपश्च' (३।१।११)। प्रचलायते स्म। 'गत्यर्था–' (३।४।७२) इति क्तः। प्रचलाया जाताऽस्य इति वा ॥ (२) ॥*॥ द्वे 'संजातघूर्णस्य'।

नेति ॥ नान्दीवदनशील । सुपि-' (३।२।७८) इति णिनिः । ( १ ) ॥*॥ नान्दी करोति वदति । 'दिवाविभा-' ( ३।२।२१ ) इति टः ॥ ( २ ) ॥*॥ 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्तते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते' इति भरतः ( ) ॥*॥ द्वे 'नाटकादौ मङ्गलार्थं भेर्यादिवादकस्य'।

## जडोऽज्ञे

जड', अज्ञ. (२ त्रि), 'जड, मूर्ख' के २ नाम हैं।

जेति ॥ जलति । 'जल घातने' (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) । डलयोरभेदः । 'इष्टं वाऽनिष्टं वा सुखदुःखं वा न वेत्ति यो मोहात् । परवशगः स भवेदिह निरयं जडसंज्ञकः पुरुषः' ॥ 'जडा स्त्रियाम् । मूर्खशाम्न्यो हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु' इति विश्व[1]-मेदिन्यौ [४३। १३-१४] ॥ (१) ॥*॥ न जानाति । 'इगुपध-' (३।१। १३५ ) इति कः ॥ ( २ ) ॥*॥ द्वे 'जडमतेः'।

एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥

एडमूक' ( त्रि ),'बोलने और सुननेमें अशिक्षित, बहरे, गूँगे' के २ नाम हैं।

एडेति ॥ एडो बधिरश्चासौ मूकश्च । ( एडमूकोऽन्यलिङ्गः स्याच्छठे वाक्श्रुतिवर्जिते' इति मेदिनी [१५।१७८] ॥*॥ 'अनेडमूक' इति पाठान्तरे नास्त्येडमूकोऽस्मात्' इत्यर्थः । 'त्रिलिङ्गोऽनेडमूकः स्याच्छठे वाक्श्रुतिवर्जिते' इति रभसः ॥ (१) ॥*॥ एकं भाषणश्रवणयोरनर्हस्य'।

## तूष्णींशीलस्तु तूष्णीकः

तूष्णींशील', तूष्णीक' (२ त्रि), 'चुप रहनेवाले' के २ नाम हैं।

त्विति ॥ तूष्णीं शीलमस्य ॥ ( १ ) ॥*॥ 'शीले को मलोपश्च' ( वा० ५।३।७२ ) । 'केऽणः' (७।४।१३) इति णाणो ह्रस्वः, मलोपसामर्थ्यात् । अन्यथा ठमेव विदध्यात् ।—'शीलम्' ( ४।४।६१ ) इति ठञ् 'अव्ययानाम्-' ( वा० ६।४।१४४ ) इति टिलोपेन सिद्धत्वात्— इति मुकुटः । तन्न । कविधानस्य स्वरार्थत्वात् । ठञि उदात्तनिवृत्तिस्वरेण मध्योदात्तताप्रसङ्गाच्च । वृद्धि(७।२। ११८) प्रसङ्गाच्च ॥ (२) ॥*॥ द्वे 'मौनशीलस्य'।

नग्नोऽवासा दिगम्बरे ।

नग्न', अवासा', दिगम्बर' (३ त्रि), 'नङ्गे' के ३ नाम हैं।

नेति ॥ नजते स्म । 'ओलजी व्रीडे'[2](तु० आ० से०)। अकर्मकत्वात् क्तः (३।४।७२) । 'ओदितश्च' (८।२।४५) इति नत्वम् । 'नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि' इति विश्व[1] (मेदिनी) [८३।१३] ॥ (१) ॥*॥ न वासोऽस्य ॥ (२) ॥*॥ दिगेवाम्बरं यस्य । 'दिगम्बर स्यात्क्षपणेऽप्यन्ने तमसि शङ्करे' ( इति मेदिनी ) [१४२। २५७ ] ॥ (३) ॥*॥ त्रीणि 'नग्नस्य'।

## निष्कासितोऽवकृष्टः स्यात्

निष्कासित', अवकृष्टः (२ त्रि), 'निकाले हुए' के २ नाम हैं।

नीति ॥ निष्कास्यते स्म । 'कस गतौ' (भ्वा० प० से०) । ण्यन्तः । क्तः ( ३।२।१०२ ) ॥ ( १ ) ॥*॥ अवकृष्यते स्म । 'कृष विलेखने' (भ्वा० प० अ०) । क्तः ( ३।२।१०२ ) ॥ ( २ ) ॥*॥ द्वे 'निष्कासितस्य'।

अपध्वस्तस्तु धिक्कृतः ॥ ३९ ॥

अपध्वस्त', धिक्कृत (२ त्रि),'धिक्कारे हुए'के २ नाम हैं।

अपेति ॥ अपध्वस्यते स्म । 'ध्वंसु अध: स्रंसने, गतौ च' (भ्वा० आ० से०)। क्तः (३।१।१०२) । 'अपध्वस्त परित्यक्ते निन्दितेऽप्यवचूर्णिते' (इति मे०) [२७।१८४] ॥ ( १ ) ॥*॥ 'धिक्' इति कृतः ॥ ( २ ) ॥*॥ द्वे 'धिक्कृतस्य'।

## आत्तगर्वोऽभिभूतः स्यात्

आत्तगर्वः, अभिभूत' (२ त्रि), 'टूटे हुए अभिमानवाले' के २ नाम हैं।

आत्तेति ॥ आत्तो गर्वो यस्य ॥*॥ 'आत्तगन्ध' इति पाठान्तरम् । 'गन्धो गन्धक आमोदे सबन्धे लेशगर्वयोः[3] इति विश्व [ ८२।८ ] । 'गन्धो गर्वो लवेऽपि च[4]' इति त्रिकाण्डशेष [३।३।२१७]॥ (१)॥*॥ अभिभूयते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे 'गर्वाढ्यस्य' ॥—चत्वारः पर्यायाः —इत्येके ।

---

१. विश्वे 'जडो मूर्खे हिमग्रस्ते शीतशाम्बर्यां जडा मता' इत्यत्र (४३।२) पाठादिह 'मेदिनी'त्येव पठितव्यम्।

२ धातुपाठेऽयं न दृश्यते ।

१ 'नग्नोऽपि च क्षपणके विवस्त्रे चाभिधेयवत्' इति पाठा'मेदिनी'—इत्येव पाठ्यमत्र ।

२ '—नग्ने तमसि—' इति मेदिनीपाठः । विश्वे च '—नाग्ने तपसि—' इति (१४४।२३४) पाठः ।

३ विश्वे '—लेशे सम्बन्धगर्वयो.' इति पाठस्योपलब्धावपि 'अल्पाच्तरम्' इति सूत्रेण 'गर्व'शब्दस्य पूर्वनिपातमौचित्यादत्र प्रकृते '—सम्बन्धे लेशगर्वयोः' इत्येव पाठः समीचीनः ।

४. 'गर्वे लवेऽपि च' इति तत्र पाठः ।

दापितः साधितः समौ ।

दापितः, साधितः ( २ त्रि ),'जिससे धन आदि दिलाया गया हो, उसके या दिलाये हुए धन आदि' के २ नाम हैं।

देति ॥ दाप्यते स्म । 'दाप्' (जु० उ० अ०) ण्यन्त ॥ * ॥ 'दायितः' इति पाठान्तरम् । तत्र 'दय दाने' (भ्वा० आ० से०) इति धातुः ॥ (१) ॥ * ॥ साध्यते स्म । 'साध संसिद्धौ' (स्वा० प० अ०) ॥ (२) ॥*॥ द्वे 'धनादिकं प्रदापितस्य'—इति मुकुटः । प्रदापितस्य धनादेर्वा ।

प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥४०॥

प्रत्यादिष्टः, निरस्तः, प्रत्याख्यातः, निराकृतः ( ४ त्रि ), 'अनादरके साथ निकाले या हटाये हुए' ५ नाम हैं।

प्रेति ॥ प्रत्यादिश्यते स्म । 'दिश अतिसर्जने' (तु० उ० अ०) । क्त. (बा० ३।२।१०२) ॥ (१) ॥ * ॥ निरस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्त. (३।२।१०२)। 'निरस्त प्रेषितशरे सत्यवते त्वरितोदिते । निष्ठ्यूते प्रतिहते च' इति हैमः [ २।८४ ] ॥ (२) ॥*॥ प्रत्याख्यायते स्म । 'ख्या प्रकथने' (अ० प० अ०)। चक्षिङादेशो वा, क्तः (३।२।१०२) ॥ (३) ॥ * ॥ निराकारि । कृञ् [डुकृञ् करणे] (त० उ० अ०) । क्तः (३।२।१०२)॥ (४) ॥*॥ चत्वारि 'प्रत्याख्यातस्य' ।

निकृतः स्याद् विप्रकृतः

निकृतः, विप्रकृतः ( २ त्रि ), 'अनादर पाये हुए' के २ नाम हैं।

नीति ॥ न्यकारि । क्त (३।२।१०२) । निकृतं विप्रलब्धे स्यात्शठे विप्रकृते त्रिषु'[१]इति विश्व[६४।९९]-मेदिन्यौ [६२।११७] ॥ (१) ॥ * ॥ विप्राकारि ॥ (२) ॥ * ॥ द्वे 'तिरस्कृतस्य' ।

विप्रलब्धस्तु वञ्चितः ।

विप्रलब्धः, वञ्चितः ( २ त्रि ), 'ठगे गये' के २ नाम हैं।

वीति ॥ विप्रलभ्यते स्म। 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥ * ॥ 'वञ्चु गतौ' (भ्वा० प० से०) । ण्यन्तः । वञ्च्यते स्म । क्तः (३।२।१०२) ॥ (२) ॥ * ॥ द्वे 'वञ्चितस्य' ।

मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥

मनोहतः, प्रतिहतः, प्रतिबद्धः, हतः ( ४ त्रि ), 'काम पूरा न होनेसे टूटे हुए मनवाले' के ४ नाम हैं।

मेति ॥ मनो हतं यस्य ॥ (१) ॥ * ॥ प्रति हन्यते स्म । क्त (३।२।१०२) । 'प्रतिप्रतिहतं द्विष्टे प्रतिस्खलितरुद्धयो' (इति मेदिनी) [६१।२०७] ॥ (२) ॥*॥ प्रतिबध्यते स्म । 'बन्ध बन्धने' (क्र्या० प० अ०) । क्तः (३।२।१०२) ॥ (३) ॥ * ॥ हन्यते स्म । क्तः [३।२।१०२] ॥ (४) ॥ * ॥ चत्वारि 'कृतमनोभङ्गस्य' ।

अधिक्षिप्तः प्रतिक्षिप्तः

अधिक्षिप्तः, प्रतिक्षिप्तः ( २ त्रि ),'जिससे डाह ( ईर्ष्या ) करता हो उसीके सामने तिरस्कृत' के २ नाम हैं।

अधीति ॥ अधिक्षिप्यते स्म । 'क्षिप प्रेरणे' (तु० उ० अ०) । क्त (३।२।१०२) । 'अधिक्षिप्त प्रणिहिते कुत्सिते भर्त्सिते त्रिषु' इति विश्व [७३।२०५] हेमचन्द्रा[१] (मेदिन्यौ) [६८।१८४] ॥(१)॥*॥ प्रत्यक्षेऽपि । 'प्रतिक्षिप्त वारिते स्यात्प्रेषिते पश्चके[२] त्रिषु' इति (मेदिनी) [६१।१०८] 'प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते' इति विश्व [७३।२०५ ] ॥ (२) ॥*॥ द्वे 'कृताक्षेपस्य' ।

बद्धे कीलितसंयतौ ।

बद्धः, कीलितः, संयतः ( ३ त्रि ), 'रस्सी आदिसे बाँधे गये' के ३ नाम हैं।

बेति ॥ बध्यते स्म । 'बन्ध बन्धने' (क्र्या० प० अ०) । क्त (३।२।१०२) ॥ (१) ॥ * ॥ कील्यते स्म । 'कील बन्धे' (भ्वा० प० से०)। क्त (३।२।१०२)। (२) ॥ * ॥ संयम्यते स्म । 'यम उपरमे' (भ्वा० प० अ०) । क्त. (३।२।१०२)॥(३)॥*॥ त्रीणि 'बद्धस्य' ।

आपन्न आपत्प्राप्तः स्यात्

आपन्नः, आपत्प्राप्तः ( २ त्रि ), 'दुःखमें पड़े हुए' के २ नाम हैं।

आपेति ॥ आपद्यते स्म । 'पद गतौ' (दि० आ० अ०) क्त (३।२।१०२) । 'आपन्न सविपत्तौ च प्राप्तेऽपि वाच्य-लिङ्गक.[३]' (इति विश्व) [९३।१००], (मेदिन्यौ) [८५।१८] ॥ ( १ ) ॥*॥ आपदं प्राप्त. ॥ ( २ ) ॥*॥ द्वे 'आपद्ग्रस्तस्य' ।

१. विश्वे '—स्यान्नीचे विप्रकृतेऽपि च' इति पाठ.' मेदिन्यां च '—विप्रलम्भे स्यान्नीचे विप्रकृतेऽपि च' इति पाठः ।

१. विश्वे '—तथा निर्भर्त्सितेऽपि च' इति पाठः । हैमे पुस्तकत्रये 'अधिक्षिप्तो निहितभर्त्सितौ' इति(४।१०१) पाठात्र 'विश्वमेदिन्यौ' इत्येव पाठ. समीचीन. ।

२. मेदिन्यामनुपदम् (६१।२०६-२०८) उक्तं 'परि-गत-प्रणिहित-पल्लवित-प्रतिहित-प्रतिक्षिप्ते'ति शब्दपञ्चकं बोध्यम् ।

३. विश्वे '—स्यात् प्राप्ते वाच्यवदीरित.' इति, मेदिन्यां च '—प्राप्ते वाच्यवदीरितः' इति पाठौ ।

कादिशीको भयद्रुत ॥ ४२ ॥

कान्दिशीक, भयद्रुत ( २ त्रि ), 'भयसे भागे हुए' के २ नाम हैं।

केति ॥ कां दिशं यामि' इत्याह। 'तदाहेति माशब्दादिभ्य' (वा० ४।४।१) इति ठक्। पृषोदरादि (६।३।१०९) । मुकुटस्तु—'कदि वैक्लव्ये' (भ्वा० आ० से०)। भावघञन्तात् मत्वर्थे इनि (५।२।११५)। कन्दी। 'शीकृ सेचने' (भ्वा० आ० से०)। भावे घञ् (३।३।१८)। शीक क्षरणार्थत्वादश्रुपाते वर्तते। वैक्लव्ययुक्तोऽश्रुपात। कान्दिशीक । तद्योगात् ज्योत्स्नाद्यण् (५।२।१०३)—इत्याह ॥ (१) ॥ * ॥ अद्रुद्रुवत्। 'द्रु गतौ' (भ्वा० प० से०)। कर्तरि क्त (३।४।७२)। भयाद् द्रुत। 'पञ्चमी–' (२।१।३७) इति योगविभागात् समास ॥ (२) ॥ * ॥ द्वे 'भयेन पलायितस्य'।

आक्षारित' क्षारितोऽभिशस्ते

आक्षारित, क्षारित, अभिशस्त ( ३ त्रि ), 'चोरी या मैथुन आदि बुरे कामके विषयमें झूठा ( बिना किये भी ) लोकापवाद पाये हुए' के ३ नाम हैं।

आक्षेति ॥ आक्षार्यते स्म। 'क्षर सञ्चलने' (भ्वा० प० से०)। ण्यन्त क्त (३।२।१०२)। आक्षारो मैथुन प्रत्याक्रोशो जातोऽस्य इति वा। इतच् (५।२।३६) ॥ (१) ॥ * ॥ 'क्षारित क्षारितं क्षारे चाभिशस्तेऽपि च त्रिषु' (इति मे०) [६१।१०४] ॥ (२) ॥*॥ अभिशस्यते स्म। शसु हिंसायाम्' (भ्वा० प० से०)। क्त (३।२।१०२)। 'यस्य विभाषा' (७।२।१५) इति नेट्। 'धृषिशसी–' (७।२।१९) इति वा ॥ (३) ॥*॥ त्रीणि 'मैथुननिमित्त मिथ्यादूषितस्य'।

सङ्कसुकोऽस्थिरे।

संकसुक, अस्थिर ( २ त्रि ), 'स्थिर नहीं रहनेवाले' के २ नाम हैं।

समिति ॥ सकसति। 'कस गतौ' (भ्वा० प० से०)। 'समि कस उकन्' (उ० २।२९) ।—'मूकादय' इति कन्, उक् चागम—इति मुकुटस्त्वपाणिनीय ॥ (१) ॥ * ॥ न स्थिर ॥ (२) ॥ * ॥ द्वे चलस्वभावस्य'।

व्यसनार्तोपरक्तौ द्वौ

व्यसनार्त, उपरक्त ( २ पु ), 'व्यसनसे दु खी' के २ नाम हैं।

व्येति ॥ व्यसनेनात ॥ (१) ॥ * ॥ 'उपरज्यते स्म। 'रञ्ज रागे' (भ्वा० प० अ०)। क्त (३।२।१०२)। 'उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययो' इति विश्व' (मेदिनी) [६८।१९१] ॥ (२) ॥ * ॥ द्वे 'दैवमानुष पीडायुक्तस्य'।

विहस्तव्याकुलौ समौ ॥ ४३ ॥

विहस्त, व्याकुल ( २ त्रि ), 'व्याकुल' ( शोक आदिके कारण कर्तव्य (अपने करने योग्य काम) का निश्चय नहीं करनेवाले ) के २ नाम हैं।

वीति ॥ विगलितो हस्तोऽस्य। 'विहस्तस्तु विह्वले' पण्डकेऽकरे' इति हैम [३।३२१] ॥ (१) व्याकोलति। 'कुल संस्त्याने बन्धुषु च' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति क ॥ (२) द्वे 'शोकादिभिरितिकर्तव्यताव्याकुलस्य'।

विक्लवो विह्वल

विक्लव, विह्वल ( २ त्रि ), 'विह्वल' ( शोकादिके कारण अपने शरीरको सँभालनेमें असमर्थ ) के २ नाम हैं।

वीति ॥ विक्लवते। 'क्लुङ् गतौ' (भ्वा० आ० से०) अच् (३।१।१३४) ॥ (१) ॥ * ॥ विह्वलति। 'ह्वल चलने' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (२) ॥ * ॥ द्वे 'स्वाङ्गान्यपि धारयितुमशक्तस्य'।

स्यात्तु विवशोऽरिष्टदुष्टधी।

विवश, अरिष्टदुष्टधी ( २ त्रि ), 'मृत्युकाल समीप होनेसे अस्थिर बुद्धिवाले' के २ नाम हैं।

स्यादिति। विरुद्ध वष्टि। 'वश कान्तौ' ( अ० प० से० )। अच् ( ३।१।१३४ )। 'विवशा'स्त्ववशस्वान्तेऽरिष्टदुष्टधियोरपि' (इति मेदिनी) [१६४।२८] ॥ (१) ॥*॥ अरिष्टेन दुष्टा, अरिष्टदुष्टा धीर्यस्य ॥ (२) ॥*॥ द्वे 'आसन्नमरणलक्षणेन दूषितमते'।

कश्य, कशार्हे

कश्य, कशार्ह ( २ त्रि ), 'कोड़ेसे मारने योग्य मनुष्य घोड़े आदि' के २ नाम हैं।

केति ॥ कशामर्हति। 'दण्डादिभ्यो य' (५।१।६६)। 'कश्य कशार्हमद्ययो। अश्वमध्येऽपि' इति हैम [२।३५१] ॥ (१) ॥*॥ कशामर्हति। 'अर्ह' (३।२।१२) इत्यच ॥ (२) ॥ * ॥ द्वे 'ताडनार्हस्य'।

---

१ विश्वे 'उपरक्त सैंहिकेये तद्ग्रहे व्यसनातुरे' इति (७२।१९७) इति भिन्नपाठादत्र 'मेदिनी' त्येव पाठ्यम्।

२ हैमे 'क'पुस्तके 'विकले—' इति पाठ।

३. हैमे पुस्तकत्रये 'अपि'शब्दरहित पाठ।

संनद्धे त्वाततायी[1] वधोद्यते ॥ ४४ ॥

आततायी ( त्रि ), 'आततायी' अर्थात् 'मारनेके लिये तैयार' का १ नाम है।

समिति ॥ संनह्यति स्म । 'णह बन्धने' (दि० उ० अ०) । अकर्मकत्वात् कर्तरि क्तः ( ३।४।७२ ) । भाव-क्तान्तात् अर्शआद्यच् (५।२।१२७) वा ॥ * ॥ आतत यथा तथाऽयितुं शीलमस्य । 'अय गतौ'(भ्वा० आ० से०)। 'सुपि-' (३।२।७८) इति णिनि ॥ (१) ॥ * ॥ एकं 'वधोद्यतस्य' ।

द्वेष्ये त्वक्षिगतः

द्वेष्यः, अक्षिगतः ( २ त्रि ), 'आँखोंमें गड़े हुए' अर्थात् 'वैर करने योग्य' के २ नाम हैं।

द्वयिति ॥ द्वेष्टुमर्हः । 'द्विष अप्रीतौ'(अ० उ० अ०)। ण्यत् (३।१।१२४) ॥ (१) ॥ * ॥ अक्षिविषयं गतः । शाकपार्थिवादिः (वा० २।१।७८)॥ (२) ॥*॥ द्वे 'द्वेषार्हस्य' ।

वध्यः शीर्षच्छेद्य इमौ समौ ।

वध्यः, शीर्षच्छेद्यः ( २ त्रि ), 'मारने योग्य, या शिर काट लेने योग्य' के २ नाम हैं।

वेति ॥ वधमर्हति स्म । 'दण्डादिभ्यो यः' (५।१।६६) । यद्वा—हन्तुमर्हः । 'हनो वध च' (वा० ३।१।९७) इति यत् ॥ (१) ॥*॥ शीर्षस्य शिरसश्छेदं । तमर्हति । 'शीर्षच्छेदाद्यच्च' (५।१।६५) ॥ (२) ॥*॥ द्वे 'शिरश्छेदार्हस्य' ।

विष्यो विषेण यो वध्यः

विष्यः ( त्रि ), 'विष देकर मारने योग्य'का १ नाम है।

वीति ॥ विषेण वध्य । 'नौवयोधर्म-' (४।४।९१) इति यत् ॥ (१) ॥ *॥ एकं 'विषेण वध्यस्य' ।

मुसल्यो मुसलेन यः ॥ ४५ ॥

मुसल्यः ( त्रि ), 'मुसलसे मारने योग्य' का १ नाम है।

मिति ॥ मुसलेन वध्य । 'दण्डादिभ्यो यः' (५।१।६६) (१) ॥*॥ एकं 'मुसलेन वध्यस्य'।

शिश्विदानोऽकृष्णकर्मा

शिश्विदानः, अकृष्णकर्मा ( २ त्रि ), 'पुण्य कर्म करनेवाले' के २ नाम हैं।

शीति ॥ अकृष्ण शुक्लं कर्मास्य ॥ (२) ॥ * ॥ शिश्विन्दे । 'श्विदि श्वैत्ये' (भ्वा० आ० से०) । लिटः कानच् (३।२।१०६) अनित्यत्वान्न नुम् ॥ (१) ॥*॥ द्वे अपापकर्मणः । 'कृष्णकर्मा' इति पाठान्तरम्॥(२)॥*॥तत्र 'श्विता वर्णे'(भ्वा० आ० से०)धातु । श्वेतितुमिच्छति । 'श्वितेर्दश्च' (उ० २।९२) इत्यानच्, दत्वम्, सनो लुक् ॥ (१) ॥*॥ द्वे 'पापकर्मणः' ।

चपलश्चिकुरः समौ ।

चपलः, चिकुरः ( २ त्रि ), 'चपल या दोषको बिना विचारे ही मारनेके लिये तैयार' के २ नाम हैं।

चेति ॥ चपति । 'चप सान्त्वने' (भ्वा० प० से०) । वृषादित्वात् (उ० १।१०६) कलच् । 'चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे । मीनेऽपि चपला तु स्यात्पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्याम्' इति हैमः [३।६८२-६८४] ॥ (१) ॥ * ॥ 'चि' इति अव्यक्तं कुरति । 'कुर शब्दे' (तु० प० से०) । 'इगुपध-' (३।१।१३४) इति कः । 'चिकुरोऽह्रौ गृहबभ्रौ केशे चञ्चलचौरयोः । पक्षिवृक्षभिदोश्चापि' इति हैमः [३।५८९-५९०] ॥ (२) ॥*॥ द्वे 'दोषमनिश्चित्य वधादिकमाचरतः' ।

दोषैकदृक् पुरोभागी

दोषैकदृक् ( २ त्रि ) 'केवल दोषको ही देखनेवाले' के २ नाम हैं।

दविनि ॥ दोषे एकस्मिन् दृक् ज्ञानं यस्य ॥ (१) ॥*॥ पुरः[1] पूर्वं भजते । 'भज सेवायाम्' । 'संपृचा-' (३।२।१४२)इति घिनुण् ॥ (२) ॥ *॥ द्वे 'दोषैकग्राहकस्य' ।

निकृतस्त्वनृजुः शठः ॥ ४६ ॥

निकृतः, अनृजुः, शठ ( ३ त्रि ), 'शठ' के ३ नाम हैं।

नीति ॥ निकृन्तति । 'कृती छेदने' (तु० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । 'निकृत विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु'[2] (इति मेदिनी) [६२।११७] ॥ (१) ॥ * ॥ ऋजुविरुद्धः । 'नञ्' (२।२।६) इति तत्पुरुष । 'नलोपो नञः' (६।३।७३) ॥ (२) ॥*॥ शठति । 'शठ कैतवे च' (भ्वा० प० से०) । पचाद्यच् (३।१।

---

१. आततायिलक्षणमुक्तं मनुना—"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ उद्यतासिर्विषाग्निभ्यां शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान् विजानीयात् सर्वानेवाततायिनः ॥' इति (क्षे० २३-२५) ।

१. "दोष एकस्मिन्नेव दृग्ज्ञानमस्य । यत्कात्यः— 'दोषैकग्राहिहृदयः पुरोभागीति कथ्यते ।'' इति स्वाम्याह ।

२. प्राकृता (३।१।४१) टिप्पणी द्रष्टव्या ।

१३४)। 'शठो मध्यस्थपुरुषे धूर्ते धत्तूरकेऽपि च' इति हेमचन्द्र [२।११०] ॥ (३) ॥*॥ त्रीणि 'वञ्चकस्य'।

**कर्णेजपः सूचकः स्यात्**

कर्णेजप, सूचक (२ त्रि), 'चुगलखोर' के २ नाम हैं।

कैति ॥ कर्णे जपति। 'जप व्यक्तायां वाचि' (भ्वा० प० से०)। 'स्तम्बकर्णयो–' (३।२।१३) इत्यच्। 'हलदन्तात्–' (६।३।९) इत्यलुक् ॥ (१) ॥*॥ सूचयति। 'सूच पैशुन्ये' (चु० उ० से०) अन्त्यादिरदन्तः। ण्वुल् (३।१।१३३)। सूचकः पुंसि दुर्जने। वधके सीवनद्रव्ये मार्जारे श्वानकेऽपि च' इति हैम [३।१०७] ॥ (२) ॥*॥ द्वे 'कर्णेजपस्य'।

**पिशुनो दुर्जनः खलः।**

पिशुन, दुर्जन, खल (३ त्रि), 'आपसमें फूट करानेवाले' के ३ नाम हैं।

पीति ॥ पिंशति। 'पिश अवयवे' (तु० प० से०)। 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्युनन्।—बाहुलकादुनन्—इति मुकुटोक्तिस्त्वेतत्सूत्रास्मरणमूलिका। 'पिशुनं कुङ्कुमेऽपि च। कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु। पृक्कायां पिशुना स्त्री स्यात्' इति विश्व[१]-मेदिन्यौ [८६।९१-९२] ॥ (१) ॥*॥ दुष्टो जनः। 'कुगति–' (२।२।१८) इति समासः ॥ (२) ॥*॥ खलति। 'खल संचये' (भ्वा० प० से०)। अच् (३।१।१३४)। खं छिद्रं लाति वा। 'खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे' इति हैम[२]-मेदिन्यौ [२।४९४] ॥ (३) ॥*॥ त्रीणि 'परस्परभेदकस्य'। स्वामी[३] तु सूचकपर्याय एवैतानाह।

**नृशंसो घातुकः क्रूरः पापः**

नृशंस, घातुक, क्रूर, पाप (४ त्रि) 'क्रूर' के ४ नाम हैं।

नीति ॥ नॄन् शंसति। 'शंसु हिंसायाम्' (भ्वा० प० से०)। कर्मण्यण् (३।२।१)।—अजन्तः—इति मुकुटोक्तं न सम्यक्। अजपवादस्याणो जागरूकत्वात् ॥ (१) ॥*॥ हननशीलः। 'लषपत–' (३।२।१५४) इत्युकञ् ॥ (२) ॥*॥ कृन्तति। 'कृती छेदने' (तु० प० से०)। 'कृतेश्छः क्रू च' (उ० २।२१) इति रक्प्रत्ययो धातोः क्रू आदेशश्च। यत्तु मुकुटेन—कृणाति—इति विगृह्य—कृते 'दूरादयश्च' इति रक् क्रू आदेशश्च' क्रूडो वा दूरादित्वाद्रक् दीर्घ—इत्युक्तं, तदुपर्युक्तसूत्रास्मरणमूलकं परस्परविरुद्धं च। 'दूरादयश्च' इति सूत्रं च नास्ति। क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्' इति विश्व [१२७।२५]मेदिनी[१२४।१९] ॥ (३) ॥*॥ पापमस्यास्ति। अर्शआद्यच् (५।२।१२७) ॥ (४) ॥*॥ चत्वारि 'परद्रोहकारिणः'।

**धूर्तस्तु वञ्चकः ॥ ४७ ॥**

धूर्त, वञ्चक (२ त्रि), 'ठग' के २ नाम हैं।

ध्विति ॥ धूर्वति। 'धुर्वी हिंसायाम्' (भ्वा० प० से०)। 'हसिमृग्रिण्–' (उ० ३।८६) इति तन्। राल्लोपः (६।४।२१)। 'धूर्तं तु खण्डलवणे धूर्तो धत्तूरमायिनोः' इति हेमचन्द्र [२।१७८] ॥ (१) ॥*॥ वञ्चयति। 'वञ्चु गतौ' (भ्वा० प० से०)। ण्यन्तः। ण्वुल् (३।१।१३३)। 'वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके' इति 'विश्व मेदिन्यौ[१] [१३।१५५] ॥ (१) ॥*॥ द्वे 'परप्रतारकस्वभावस्य'।

**अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः।**

अज्ञ, मूढ, यथाजात, मूर्ख, वैधेय, बालिश (६ त्रि), 'मूर्ख' के ६ नाम हैं।

अज्ञ इति ॥ न जानाति। 'इगुपध–' (३।१।१३५) इति कः। 'अज्ञस्तु जडमूर्खयोः' इति विश्व [३५।१] ॥ (१) ॥*॥ मुह्यति स्म। 'मुह वैचित्त्ये' (दि० प० से०)। गत्यर्था–' (३।४।७२) इति क्तः। मूढस्तन्द्रितबालयोः' इति विश्व [४६।१] ॥ (२) ॥*॥ जातं जन्मकालविशेषमनतिक्रम्य वर्तते। पदार्थानतिवृत्तावव्ययीभावः (२।१।६) तदस्यास्ति। अर्शआद्यच् (५।२।१२७) ॥ (३) ॥*॥ मुह्यति। 'मुहेः खो मूर् च' (उ० ५।२२) ॥ (४) ॥*॥ विधयः विधानम्। तस्यायमधिकारी। अविद्यावद्विषयत्वाच्छास्त्राणाम्। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (५) ॥*॥ बलिशस्य मत्स्यवेधनस्यायम्। मूर्खत्वादपूज्यत्वात्। बालिशस्तु शिशौ मूर्खे' (इति मेदिनी) [१६४।२६] ॥ (६) ॥*॥ षट् मूर्खस्य'।

---

१ 'विश्वे 'पिशुनं कुङ्कुमे क्रूरे सूचके चाभिधेयवत्। पिशुनः कपिवक्त्रे स्यात् स्पृक्कायां पिशुना मता ॥' इति भिन्नपाठादत्र मेदिनीत्येव पाठो युक्तः।

२ विश्वे (१४९।४) हैमे कपुस्तके च 'खल—' इति वलीवतोक्ता खलशब्दस्य। मेदिन्यां 'खलः भूस्थानकल्केषु नीचक्रूराधमे त्रिषु' इति (१४५।११) इति भिन्नपाठादत्रापि 'हैम' इत्येव पाठ्यम्।

३ " कर्णेजपस्तु दुर्जनः। पिशुनः सूचको नीचो द्विजिह्वो मत्सरी खलः इति अ० चि० म० (३।४४) वचनाद्धेमच द्रोऽपि पञ्चानां पर्यायत्वं मनुते।

१ पूर्वम् (२१५।५) अस्मिन्नुद्धरणे 'मेदिनी'त्युक्ते, विश्वे वञ्चकः खलधूर्तयोः। जम्बुकः गृहबभ्रौ च' इति (१२।१२७) भिन्नपाठाच्चात्रापि मेदिनी'त्येव पाठो युक्तः।

कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ॥ ४८ ॥

कदर्यः, कृपणः, क्षुद्रः, किंपचानः, मितंपचः (५ त्रि) 'कृपण, कंजूस' के ५ नाम हैं।

केति ॥ कुत्सितोऽर्यः स्वामी। 'कुगति–' (२।२।१८) इति समासः। 'कोः कत्तत्पुरुषेऽचि' (६।३।१०१) ॥ (१) ॥*॥ कृपां करोति। 'तत्करोति–'(वा० ३।१।२६) इति णिच्। कृप्यते। 'कृत्यल्युट.–' (३।३।११३) इति कर्मणि ल्युट्। अजादेशस्य स्थानिवत्त्वाश्च गुणः (७।३।८६)। यद्वा–कृप्यते कृपाविपर्यीक्रियते। 'कृपू सामर्थ्ये' (भ्वा० आ० से०)। बाहुलकात् क्युन्। ल्युटि (३।३।११३) वा संज्ञापूर्वकत्वाद् गुणाभावः। बाहुलकाल्लत्वाभावः। यद्वा–'क्रप कृपायां गतौ च' (भ्वा० आ० से०) इत्यस्य बाहुलकात्संप्रसारणम्। यद्वा–'क्रप' इत्यत्र मतान्तरे 'कृप' इति पाठः। अत एव 'कृपे ण्यङ् कृपायाम्' इति वोपदेवः। ततो बाहुलकात् क्युन् ॥ (२) ॥*॥ क्षुणत्ति। 'क्षुदिर संपेषणे' (रु० उ० अ०)। 'स्फायितञ्चि–' (उ० २।१३) इति रक्। 'क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः। क्षुद्रा व्याघ्रीनटीव्यङ्गावृहतीसरघासु च। चाङ्गेरिकायां हिंसायां मक्षिकामात्रवेश्ययोः।' इति हेमचन्द्रः [२।४१५-४१६] ॥ (३) ॥*॥ किं पचति। 'ताच्छील्य–' (३।२।१२९) इति चानश् चानच् (३।२।१२४) वा। 'अनित्यमागमशासनम्' इति न मुम्। 'किं क्षेपे' (२।१।६४) इति समास. ॥ (४) ॥*॥ मितं पचति। 'मितनखे च' (३।२।३४) इति खश् ॥ (५) ॥*॥ यद्वा–'किंपचः' 'अनमितंपच.' इति छेदः। पचाद्यच् (३।१।१३४) ॥ (४) ॥*॥ न मितंपचोऽमितंपचः। तद्भिन्नोऽनमितंपचः ॥ (५) ॥*॥ पञ्च 'कृपणस्य' ॥

निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः।

निःस्वः, दुर्विधः, दीनः, दरिद्रः, दुर्गतः (५ त्रि) 'दरिद्र' के ५ नाम हैं।

नीति ॥ निर्गतं स्वमस्य। स्वान्निष्क्रान्तो वा ॥ (१) ॥*॥ दुःस्था विधा प्रकारः समृद्धिर्वाऽस्य। 'दुर्विधो वाच्यलिङ्गः स्याद् दुर्गतेऽपि खलेऽपि च' (इति मेदिनी) [८१।३१] ॥ (२) ॥*॥ दीयते स्म। 'दीङ् क्षये' (दि० आ० अ०)। 'गत्यर्था–' (३।४।७२) इति क्तः। 'स्वादय ओदित.' (द० ग० सू०)। 'ओदितश्च' (८।२।४५) इति नत्वम्। ('दीना स्त्री मूषिकस्त्रियाम्। वाच्यवद् दुर्गते भीते' इति मेदिनी) [८३।१०-११] ॥ (३) ॥*॥ दरिद्राति। 'दरिद्रा दुर्गतौ' (अ० प० से०)। पचाद्यच् (३।१।१३४)॥ (४) ॥*॥ दुर्गच्छति स्म। 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (५) ॥*॥ पञ्च 'निर्द्रव्यस्य' ॥

वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४९ ॥

वनीयकः याचनकः, मार्गणः, याचकः, अर्थी (५ त्रि), 'याचक, माँगनेवाले' के ५ नाम हैं।

वेति ॥ वननम्। 'वनु याचने' (त० आ० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। वनिर्याच्ञा। वनिमिच्छति। 'सुप आत्मन. क्यच्' (३।१।८)। ण्वुल् (३।१।१३३) ॥*॥ 'वनीपक' इति पाठे—वनीं पाति। कः (३।२।३)। तत संज्ञायां कन् (५।३।७५)। क्वुन् (उ० २।२।३२) वा। यत्तु मुकुटेन—'वनति–' इति विगृह्य—'वनिर्याच्ञा'—इत्युक्तम्। तच्चिन्त्यम्। 'याचक,' इत्यापत्तेः ॥ (१) ॥*॥ याचति। 'टुयाचृ याच्ञायाम्'(भ्वा० उ० से०)। ल्यु (३।१।१३४)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ मार्गति। 'मार्ग अन्वेषणे' (चु० उ० से०)। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् ॥ (३) ॥*॥ याचति। ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ अर्थोऽस्यास्ति। 'अर्थाच्चासन्निहिते' (वा० ५।२।१३५) इतीनि.। अर्थयते। 'अर्थ याचने' (चु० आ० से०)। ग्रह्यादि (३।१।१३४) णिनिः वा ॥ (५) ॥*॥ पञ्च 'याचकस्य' ॥

अहंकारवानहंयुः

अहङ्कारवान्, अहंयुः (२ त्रि), 'अहङ्कार (घमण्ड) करने वाले' के २ नाम हैं।

अहमिति ॥ अहङ्कारोऽस्यास्ति। मतुप् (५।२।९४)॥ (१) ॥*॥ अहमस्यास्ति। 'अहम् शुभम्' इति मान्तम् (विभक्तिप्रतिरूपकम्) अव्ययम्। 'अहंशुभमोर्युस्' (५।२।१४०) ॥ (२) ॥*॥ द्वे 'साहंकारस्य' ॥

शुभंयुस्तु शुभान्वितः।

शुभंयुः, शुभान्वितः (२ त्रि), 'शुभयुक्त' के २ नाम हैं।

शिवति ॥ शुभमस्ति। युस् (५।२।१४०) ॥ (१) ॥*॥ शुभेनान्वित.। 'कर्तृकरणे–' (२।१।३२) इति समास ॥ (२) ॥*॥ द्वे 'शोभन [शुभ] युक्तस्य' ॥

दिव्योपपादुका देवाः

दिव्योपपादुकः (त्रि), 'स्वर्गीय देवता आदि'को कहते हैं।

दीति ॥ दिवि भवा·। द्युप्रागपा–'(४।२।१०१) इति यत्। उपपद्यन्ते। 'पद गतौ' (दि० आ० अ०)। 'लषपतपद–' (३।२।१५४) इत्युकञ्। ते च ते च ॥ (१) ॥*॥ नारकव्यावृत्तये दिव्यपदम्। मातापित्रादिदृष्टकारणनिरपेक्षा अदृष्टसहकृतेभ्योऽणुभ्यो जाता ये देवा, ते दिव्योपपादुका उच्यन्ते ॥*॥ एकं 'देवानाम्' ॥

मृगवाद्या जरायुजाः ॥ ५० ॥

जरायुज ( त्रि ), 'गर्भसे उत्पन्न होनेवाले मनुष्य, गौ गधा, घोड़ा आदि' को कहते हैं।

मेति ॥ ना च गौश्चाद्यो येषाम्। आद्यशब्देन खरा-श्वादीनां ग्रहणम् ॥*॥ जरायोर्गर्भाशयाज्जाताः। 'पञ्च-म्याम्–' (३।२।९८) इति जनेर्डः ॥ (१) ॥*॥ एकं 'नृगवादीनाम्' ॥

स्वेदजाः कृमिदंशाद्याः

स्वेदज ( त्रि ),'पसीनेसे उत्पन्न होनेवाले खटमल, डंस, चीलर आदि' को कहते हैं।

स्वेदेति ॥ स्वेदजास्तस्मादूष्मा स्वेद, स्वेदाज्जाताः। ड (३।२।९८) ॥ (१) ॥*॥ कृमिश्च दंशश्चाद्यो येषाम्। आद्यशब्देन मशकमत्कुणादिग्रहणम् ॥*॥ एकं 'कृमिदंशा-दीनाम्' ॥

पक्षिसर्पादयोऽण्डजाः।

अण्डज ( त्रि, ) 'अण्डेसे उत्पन्न होनेवाले पक्षी, साँप, मछली, मगर, चींटी आदि' को कहते हैं।

पेति ॥ पक्षी च सर्पश्चाद्यो येषाम्। आदिशब्देन नक्र-मत्स्यपिपीलिकादिग्रहः ॥*॥ अण्डे जाताः। 'सप्तम्यां जने–' (३।२।९७) इति ड ॥ (१) ॥*॥ एकं 'पक्षि-सर्पादीनाम्'।

इति प्राणिवर्गः[1] ॥

उद्भिदस्तरुगुल्माद्याः

उद्भिद् ( त्रि ), 'पेड़, लता, झाड़ी, घास, आदि' को कहते हैं।

उद्भीति ॥ तरुश्च गुल्मश्चाद्यो येषाम्। आद्यशब्देन तृणौषधिलतादिग्रहः ॥*॥ भुवमुद्भिन्दन्ति। 'भिदिर विदा-रणे' (रु० उ० अ०)। 'सत्सू–' (३।२।६१) इति क्विप्। उद्भिद ॥ (१) ॥*॥ उच्यन्ते (इति शेष) ॥*॥ एकं 'तरुगुल्मादीनाम्'[2]।

उद्भित्पर्यायानाह—

उद्भिदुद्भिज्जमुद्भिदम् ॥ ५१ ॥

उद्भिद्, उद्भिज्जम् ( २ त्रि ), उद्भिदम् ( न ), 'पेड़, लता, झाड़ी, घास आदि पौधों' के ३ नाम हैं।

उद्भीति ॥ उद्भिदुक्त ॥ (१) ॥*॥ उद्भेदनमु-द्भित्। 'सम्पदादिभ्य क्विप्' (वा० ३।३।१०८)। उद्भिदो जातम्। 'पञ्चम्याम्–' (३।२।९८) इति ड ॥ (२)॥*॥ उद्भिनत्ति। 'इगुपध–' (३।१।१३५) इति क ॥ (३) ॥*॥ त्रीणि 'उद्भिदाम्'।

सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५२ ॥

सुन्दरम्, रुचिरम्, चारु, सुषमम्, साधु, शोभनम्, कान्तम्, मनोरमम्, रुच्यम्, मनोज्ञम्, मञ्जु, मञ्जुलम् (१२ न) 'सुन्दर, मनोहर' के १२ नाम हैं।

स्विति ॥ सु द्रियते। 'दृङ् आदरे' (तु० आ० अ०)। 'ग्रहवृद–' (३।३।५८) इत्यप्। पृषोदरादि (६।३।१०९) यद्वा—सु उनत्ति चित्तं द्रवीकरोति। 'उन्दी क्लेदने' (रु० प० से)। बाहुलकादरः। शकन्ध्वादि (वा० ६।१।९४)। स्त्रियां गौरादित्वात् (४।१।४१) ङीष् ['सुन्दरी']॥(१) ॥*॥ रोचते। 'रुच दीप्तावभिप्रीतौ च' (भ्वा० आ० से०)। 'इषिमदिमुदि–' (उ० १।५१) इति किरच ॥ ॥(२)॥*॥ चरति चित्ते। 'चर गतौ' (भ्वा० प० से०) 'दृसनिजनि–' (उ० १।३) इति ञुण्। 'चारुर्बृहस्पतौ पुंसि शोभने त्वभिधेयवत्' इति विश्व[1] (मेदिनी) [१२५। ३।३] ॥(३)॥*॥ सु शोभनं समं सर्वमस्य। सुविनिर्दु-र्भ्यः–' (८।३।८८) इति षत्वम् ['सुषमाऽत्यन्तशोभाया स्त्री चारौ च समे त्रिषु' इति मेदिनी, ११२।५७] ॥(४) ॥*॥ साध्नोत्यर्थम्। 'साध संसिद्धौ' (स्वा० प० अ०)। 'कृवापा–' (उ० १।१) इत्युण्। 'साधुर्जने मुनौ वार्धु-षिके सज्जनरम्ययोः' इति हेमचन्द्र [२।२५७] ॥ (५) ॥*॥ शोभते। 'शुभ दीप्तौ' (भ्वा० आ० से०)। 'अनु-दात्तेतश्च–' (३।२।१४९) इति युच्। 'शोभनो योगभेदे ना सुन्दरे वाच्यलिङ्गवत्' (इति मेदिनी) [६३।४४] ॥ (६) ॥*॥ कम्यते स्म। कमु कान्तौ (भ्वा० आ० से०)। क्त (३।२।१०२)। 'यस्य विभाषा' (७।२।१५) इति नेट। 'अनुनासिकस्य–' (६।४।१५) इति दीर्घः। यद्वा—कनति स्म। 'कनी दीप्त्यादौ' (भ्वा० प० से०)। 'गत्यर्था–' (३।४।७२) इति क्त। 'कान्ता नारी प्रियङ्गौ

---

[1] 'प्राणिनां विशेषमनिष्टनतासूचक' इति भाव.। अथ प्रोच्यमानवर्गमध्यगत एवेत्यवधेयम्।

[2] एव 'अयोनिजा जरायुजा, स्वेदजा, अण्डजा, उद्भिज्जा' इति पञ्च सृष्टयो भूतानाम्' तेषां चतुर्दशान्त-र्भेदा, तद्यथा सां० स्वा०–"अष्टविकल्पो दैवस्तिर्यग्यो-निश्च पञ्चधा भवति। मानुष्य एकविध समासाद् भौतिक सर्ग ॥ पैशाचो राक्षसो याक्षो गान्धर्व शाक्र एव च। सौम्यश्च प्राजापत्यश्च ब्राह्मोऽष्टौ देवयोनय ॥" इति।

[1] विश्वे 'चारु' शब्दस्यार्थानिर्देशादत्र 'मेदिनी' त्येव पाठो युक्त।

स्त्री शोभने त्रिपु ना धवे । लोहे च चन्द्रसूर्यादि-पर्यायात्तु शिलासु च' इति विश्व¹-मेदिन्यौ [५४।९]॥ (७) ॥*॥ मनो रमयति । 'रमु क्रीडायाम्' (भ्वा० आ० से०) ण्यन्तः । 'कर्मण्यण्' (३।२।१) ॥*॥ 'मनोहरम्' इति पाठे-मनो हरति । 'हरतेरनुद्यमने-' (३।२।९) इत्यच् ॥ (८) ॥*॥ रोचते, रुच्यते वा । 'राजसूय-' (३।१।११४) इति साधुः ॥ (९) ॥*॥ मनसा जानाति । 'इगुपध-' (३।१।१३५) इति कः । निवृत्तप्रेषणोऽत्र जानाति ।—मूलविभुजादित्वात् (वा० ३।२।५) कः—इति मुकुटः । तन्न । तस्यापि कर्तरि विहितत्वेन 'ज्ञायते' इति विग्रहप्रदर्शनस्य विरुद्धत्वात् । यदपि-'सुप्सुपा-' (२।१।४) इति समास-इति । तदपि न । 'कर्तृकरणे-' (२।१।३२) इति तत्पुरुषविधायकस्य सत्त्वात् ॥ (१०) ॥*॥ मञ्ज्यते । 'मजि ध्वनौ' इति सौत्रो धातुः । बाहुलकादु ॥ (११) ॥*॥ मञ्जु मञ्जुत्वं लाति । 'आतोऽनुप-'(३।२।३) इति कः । 'मंजुलं च चलाच्चले² । रम्ये कुञ्जे मंजुलस्तु दात्यूहे' इति हैमः [३।७१२-७१३]॥(१२)॥*॥ द्वादश 'मनोरमस्य'।

**तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।**

असेचनकम् ( त्रि ), 'जिसके देखते रहनेसे मन तृप्त नहीं हो, ऐसे अत्यन्त सुन्दर पदार्थादि' का १ नाम है ।

तेति ॥ न सिच्यते मनोऽत्र । 'षिच क्षरणे' (तु० उ० अ०) । 'करणा-' (३।३।११७) इति ल्युट् । 'संज्ञायां कन्' (५।३।७५) ॥*॥ ('आसेचन[क]म्') इति दीर्घादिपाठे माङ् बोध्यः ॥ (१) ॥*॥ एक 'यद्दर्शनात्तृप्तिर्न भवति तस्य' ।

**अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥**

अभीष्टम्, अभीप्सितम्, हृद्यम्, दयितम्, वल्लभम्, प्रियम् (६ त्रि), 'प्रिय, अभीष्ट' के ६ नाम हैं ।

अभीति ॥ अभित इष्यते स्म । 'इषु इच्छायाम्-'(तु० प० से०) । क्तः (३।२।१०२) । 'अभीरवंभूतकथने','अभि वीप्साभिमुख्ययो' इति विश्व [१८९।४२]॥(१) ॥*॥ अभ्याप्तुमिष्यते स्म । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । सन् (३।१।७) । 'आज्ज्ञप्यृधामीत्' (७।४।५५) । क्तः (३।२।१०२) ॥ (२) ॥*॥ हृदयस्य प्रियम् । 'हृदयस्य प्रिय.' (४।४।९५) इति यत् । 'हृदयस्य हृल्लेख-' (६।३।५०) इति हृदादेश. । 'हृद्यं धवलजीरे च हृत्प्रिये हृद्वेऽपि च । वशकृद्वेदमन्त्रे च हृद्या वृद्ध्याख्यभेषजे' इति विश्व· [११७।२८-२९] ॥ (३) ॥*॥ दय्यते स्म । 'दय दानादौ' (भ्वा० आ० से०) क्त (३।२।१०२) ॥ (४) ॥*॥ वल्भ्यते, वल्लते च । 'वल्ल संवरणे' (भ्वा० आ० से०) । 'रासिवल्लिभ्यां च' (उ० ३।१२५) इत्यभच् । 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरंगमे' इति विश्व [१०९।२६] (मेदिनी) [१०७।१८] ॥(५)॥*॥ प्रीणाति । प्रीञ् तर्पणे' (क्र्या० उ० अ०)। 'इगुपध-' (३।१।१३५) इति क । 'प्रियो वृद्ध्यौषधे हृद्ये धवे' इति हैम [२।३७५]॥ (६) ॥*॥ षट् 'प्रियस्य' ।

**निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।**
**कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥**

निकृष्टः, प्रतिकृष्टः, अर्वा, रेफः, याप्यः, अवमः, अधमः, कुपूयः, कुत्सितः, अवद्यः, खेटः, गर्ह्यः, अणकः ( १३ त्रि ), 'खराब, नीच' के १३ नाम हैं ।

नीति ॥ निकृष्यते स्म । कृष विलेखने' (भ्वा० प० अ०, तु० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ प्रतिकृष्यते स्म ॥(२)॥*॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० से०) । 'अन्येभ्योऽपि-' (३।२।७५) इति वनिप् । यद्वा—ऋच्छते. 'अवद्यावमाधमार्वरेफा· कुत्सिते' (उ० ५।५४) इति वप्रत्यान्तो निपात । 'अर्वा तुरंगमे पुंसि कुत्सिते वाच्यलिङ्गक' (इति मेदिनी) [८५।३६] ॥ (३) ॥*॥ रिफ्यते । 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु' (तु० प० से०) । 'अकर्तरि च-' (३।३।१९) इति घञ् । यद्वा—रिफते. 'अवद्यावमाधम-' (उ० ५।५४) इति अप्रत्यान्तो निपात । 'रेफो रवर्णे पुंसि स्यात् कुत्सिते वाच्यवत् पुन.' इति विश्वः [१०६।१] ॥*॥ 'रेप' इति पाठे 'री गतिरेषणयो. (क्र्या० प० अ०)। बाहुलकात् प. । 'रेप² स्यान्निन्दिते क्रूरे' इति विश्वः [१०३।२] [मेदिनी च १०२।१०] ॥(४)॥*॥ याप्यते । 'या प्रापणे' (अ० प० अ०) ण्यन्त । 'अचो यत् (३।१।९७) । 'याप्यं तु यापनीये स्यान्निन्दितेऽप्यभिधेयवत्' (इति मेदिनी) [११६।४८]॥ (५) ॥*॥ अवत्यस्मादात्मानम् । 'अव रक्षणादौ' (भ्वा० प० से०) । 'अवद्या-' (उ० ५।५४) इति सूत्रेणामप्रत्ययान्तो निपात. ॥ (६) ॥*॥ तत्रैव वकारस्य पक्षे धका-

१. विश्वे 'कान्तोऽश्मनि गृहे चारौ कान्ता तु फलिनीस्त्रियो.' इति (५९।३४) भिन्नपाठादिह 'मेदिनी'त्येव पाठो युक्तः ।

२. हैमे 'क'पुस्तके 'मञ्जुलं च जलाच्चले—' इति 'ख-ग' पुस्तकयोस्तु 'मञ्जुलः सुन्दरेऽपि च ।—'इति पाठाः।

१. '—संप्रोक्त —' इति विश्वे पाठः ।

२. 'प्रापे रूपी पुराऽरेपा. परिपूरी पर. परैः' इति माघ (१९।९३) प्रयोगात् सान्तवर्गे 'रेपा. स्यादधमे क्रूरे कृपणेऽपि च कथ्यते ।' इति विश्वात् (१७६-१६) 'रेपाः स्यादधमे क्रूरे कृपणेऽप्यभिधेयवत् ।' इति मेदिन्याः (१७२।३३) च सकारान्तोऽपि 'रेपः'शब्दः ।

२। 'अधम स्याद् गर्ह्य ऊने' इति विश्व[1] [११३।३७]॥(७)॥*॥ कुत्सितं पूयते।'पूयी विशरणे'(भ्वा०आ०से०)। अच (३।१।१३४) ॥*॥ पृषोदरादित्वात् (३।३।१०९) अत्वे 'कपूयः' इत्यपि ॥ (८) ॥*॥ कुत्सा सजातास्य। तारकादि (५।२।३६) ॥(९)॥*॥ न उच्यते। 'अवद्या-वमा-'(उ० ५।५४) इति निपातः ॥(१०)॥*॥ खेटति। 'खिट त्रासे' (भ्वा० प० से०)। अच् (३।१।१३४)। 'खेट कफे ग्रामभेदे चर्मण्यस्त्र्यधर्वात त्रिषु' (इति मेदिनी) [३४।१०] ॥ (११) ॥*॥ गर्ह्यते। 'गर्ह कुत्सायाम्' (भ्वा० प्रा० से०)। 'ऋहलोर्ण्यत्' (३।१।१२४)॥(१२)॥*॥ अणति। 'अण शब्दे' (भ्वा० प० से०)। अच् (३।१।१३४)। कुत्सायां कन् (५।३।७४) ॥ (१३) ॥*॥ त्रयोदश 'गर्ह्यस्य'।

**मलीमसं तु मलिनं कच्चरं मलदूषितम्।**

**मलीमसम्, मलिनम्, कच्चरम्, मलदूषितम् (४ त्रि), 'मैले, गन्दे' के ४ नाम हैं।**

मेति ॥ मलोऽस्यास्ति। 'ज्योत्स्नातमिस्रा-' (५।२।११४) इति साधु। 'मलीमस तु[2] मलिने पुष्पकासीसलोहयो' इति विश्व [१७८।४९]-मेदिन्यौ [१७४।५६] ॥ (१) ॥*॥ ('मदन सिक्थके स्मरे[3]')। राढे वसन्ते धत्तूरे मलिन कृष्णदोषयो। मलिनी रजस्वलायाम्' इति हैमः (३।४२५-४२६) ॥ (२) ॥*॥ कुत्सित चरति। अच् (३।१।१३४)। 'रयवदयोश्च' (६।३।१०२) इति चकारात् 'को कत्तत्पुरुषे-' (६।३।१०१) इति योगविभागाद्वा को कद् ॥ (३) ॥*॥ मलेन दूषितम्। 'कर्तृकरणे-' (२।१।३२) इति समास ॥ (४) ॥*॥ चत्वारि 'मलिनस्य'।

**पूतं पवित्रं मेध्यं च**

**पूतम्, पवित्रम्, मेध्यम् (३ त्रि),'पवित्र'के ३ नाम हैं।**

प्विति ॥ पूयते स्म। 'पूङ् पवने (भ्वा० आ० से०)। 'पूञ् पवने' (क्र्या० उ० से०) वा। क्त (३।२।१०२)। 'पुत त्रिषु पवित्रे च शठिते बहुलीकृते' (इति मेदिनी) [५६।३६] ॥ (१)॥*॥ पुनाति। 'कर्तरि चर्षिदेवतयो' (३।२।१८६) इतीत्र। 'पवित्र तु मेध्ये ताम्रे कुशे जले। अर्घोपकरणे चापि पवित्रा तु नदीभिदि' इति हैम [३।६०९] ॥ (२) ॥*॥ मेधनार्हम्। 'मेधृ सगमे च'(भ्वा० उ० से०)। ण्यत् (३।१।१२४) ('मेध्य त्रिषु शुचौ रक्तवचारोचनयो स्त्रियाम्' इति मेदिनी) [११६।४७]॥(३) ॥*॥ 'पवित्र पूत'[अम० २।७।४५] प्राणिविषय उक्तम्, इह त्वप्राणिनि ॥*॥ त्रीणि 'पवित्रस्य'।

**वीध्रं तु विमलात्मकम् ॥५५॥**

**वीध्रम्, विमलात्मकम् (२ त्रि), 'स्वभावतः पवित्र' के २ नाम हैं।**

वीति ॥ वीन्धे। 'ञिइन्धी दीप्तौ' (रु० आ० से०) 'वाविन्धे' (उ० २।२६) इति नक्।—'इन्धे रक्'-इति मुकुटस्तु चिन्त्य ॥ (१) ॥*॥ विमल आत्मा स्वभावो यस्य ॥ (२) ॥*॥ द्वे 'स्वभावनिर्मलस्य'।

**निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्।**

**निर्णिक्तम्, शोधितम्, मृष्टम्, निःशोध्यम्, अनवस्करम्, (५ त्रि), 'साफ किये हुए' के ५ नाम हैं।**

नीति ॥ निर्णिज्यते स्म। 'णिजिर् शौचपोषणयोः' (जु० उ० अ०), क्त (३।२।१०२)॥ (१) ॥*॥ शोध्यते स्म। 'शुध शौचे' (दि० प० अ०) ण्यन्त। क्त (३।२।१०२) ॥ (२) ॥*॥ मृज्यते स्म। 'मृजू शुद्धौ' (अ० प० से०)। क्त (३।२।१०२) ॥ (३) ॥*॥ निष्क्रान्त शोध्यमस्मात्। शोध्यान्निष्क्रान्तम्, इति वा ॥ (४)॥*॥ नावस्करोऽत्र ॥ (५) ॥*॥ पञ्च 'अपनीतमलस्य'।

**असारं फल्गु**

**असारम्, फल्गु (२ त्रि), 'निर्बल, निस्तत्त्व, निःसार' के २ नाम हैं।**

असेति ॥ न सारोऽत्र॥(१)॥*॥ फलति। 'ञिफला विशरणे' (भ्वा० प० से०)॥ 'फलिपाटि-' (उ० १।१८) इति साधु। 'फल्गु काकोदुम्बरिके वृक्षे[1] निरर्थकऽपि च' इति हैम [२।३७]। 'फल्गवसारेऽभिधेयवत्। नदीभेदे मलय्वा स्त्री' इति विश्व[2] [मेदिनी २२।१०-११]॥ (२) ॥*॥ द्वे 'निःसारस्य'।

**शून्यं तु वशिकं तुच्छरिक्तके ॥५६॥**

**शून्यम्, वशिकम्, तुच्छम्, रिक्तकम् (४ त्रि), 'तुच्छ, खाली' के ४ नाम हैं।**

१. विश्वे 'अधम कुत्सिते न्यूने' इति भिन्नपाठ।

२ मेदिन्या 'मलीमसस्तु-' इति पाठ।

३. 'मदन - धत्तूरे' इत्यशो 'मदन'शब्दार्थकतया न प्रकृतोपयुक्त।

१. हैमे पुस्तकत्रयेऽपि 'काकोदुम्बरिकावृक्षे-' इत्येव पाठ।

२ विश्वे 'फल्गु प्रोक्तो मले सारे निःसारे फल्गु वाच्यवत्' इति (२६।२७) [ ] पाठादत्र मेदिनीत्येव पाठो युक्त। मेदिन्यामपि क्वचित् पुगप्तु स्मुके वृन्दे फलसारेऽभिधे—' इति पाठे 'पुग'शब्दार्थकतया नेद प्रकृतोपयुक्तम्।

श्विति ॥ शुने हितम् । 'शुनः संप्रसारणं वा च दीर्घः' (ग० ५।१।२) इति यत् । 'शून्यं बिन्दौ च निर्जने । शून्या तु नलिका' इति हैम. [२।३८७-३८८] ॥ (१) ॥*॥ उश्यते । 'वश कान्तौ' (अ० प० से०) 'सर्वधातुभ्य इन्' (उ० ४।११८) । 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ तोदनम् । संपदादित्वात् (वा० ३।३।१०८) भावे क्विप् । तुदा व्यथया छ्यति । 'छो छेदने' (दि० प० अ०)। मूलविभुजादित्वात् (वा० ३।२।५) क । तुदं छ्यति वा । 'आतोऽनुप-' (३।२।२) इति क ॥ (३) ॥*॥ रिच्यते स्म । 'रिच वियोजनसम्पर्चनयोः' (चु० उ० से०) क्त (३।२।१०२) । स्वार्थे कन् (ज्ञापि० ५।४।५) ['रिक्तम् इत्यपि] ॥ (४) ॥*॥ चत्वारि 'तुच्छस्य' ।

**क्लीबे प्रधानं प्रमुख**[1] **प्रवेकानुत्तमोत्तमाः ।**
**मुख्यवर्यवरेण्याश्च प्रवर्होनवराध्यवत् ॥ ५७ ॥**
**परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।**

**प्रधानम्** ( नि० न ), **प्रमुखः** ( न ), **प्रवेकः, अनुत्तमः, उत्तमः, मुख्यः, वर्यः, वरेण्यः, प्रवर्हः, अनवराध्यः, परार्ध्यः, अग्रः, प्राग्रहरः, प्राग्र्यः, अग्र्यः, अग्रीयः, अग्रियः** (१६ त्रि), **'मुखिया, प्रधान' के १७ नाम हैं ।**

क्लीति ॥ प्रधाति । ल्युट् (३।३।११३)। मुच् (उ० २।७८) वा । 'प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा' (इति मेदिनी) [८८।८५] ॥ (१) ॥*॥ प्रकृष्टं मुखमस्य । 'प्रमुख प्रथमे मुख्ये' इति हैम. [३।११२] ॥ (२) ॥*॥ प्रविच्यते । 'विचिर् पृथग्भावे' ( रु० उ० अ० ) । घञ् (३।३।१९)॥ (३) ॥*॥ नोत्तमोऽस्मात् ॥ (४) ॥*॥ अतिशयेनोत्कृष्टः । उत्कृष्टार्थवृत्तेरुच्छब्दात्तमप् । द्रव्यप्रकर्षार्थत्वान्नामु. । यद्वा-उत्ताम्यति । 'तमु काङ्क्षायाम्' (दि० प० से०) । अच् (३।१।१३४ )। उत्ताम्यते वा । घञ् (३।३।१९) । 'नोदात्त—' (७।३।३४) इति न वृद्धि. ['उत्तमा दुग्धिकौषधौ। उत्तमं तु प्रधाने स्यात्' इति हैम [३।४९१-४९२] ॥ (५) ॥*॥ मुखमिव । मुखे भवो वा । शाखादित्वात् (५।३।१०३) यः ॥ (६) ॥*॥ वर्यते । 'वर ईप्सायाम्' चुरादावन्तः । 'अचो यत्' (३।१।९७)॥ (७) ॥*॥ व्रियते । 'वृञ् वरणे' (स्वा० उ० से०) । 'वृञ एण्य.' (उ० ३।९८) ॥ (८)॥*॥ प्रवर्हति । 'बृह वृद्धौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (९) ॥*॥ अवरस्मिन्नर्धे भवः । 'अर्धाद्यत्' (४।३।४) । 'परावराधमोत्तमपूर्वाच्च' (४।३।५) । न अवरार्ध्यः । 'नञ्' (२।२।६) इति समासः ॥ (१०) ॥*॥ परस्मिन्नर्धे भवः । यत् (४।३।५) ॥ (११) ॥*॥ अगति । 'अग कुटिलायां गतौ' (भ्वा० प० से०) । 'ऋज्रेन्द्र-' (उ० २।१८) इति साधु । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' (इति मेदिनी) [१२३।३-४] ॥ (१२) ॥*॥ प्रकृष्टमग्रम् । प्राग्रे हरति । 'हरतेनुद्यमनेऽच्' (३।२।९) ॥ (१३) ॥*॥ प्राग्रे भवः । 'अग्राद्यत्' (४।४।११६) ॥ (१४) ॥*॥ (१५) ॥*॥ 'घच्छौ च' (४।४।११७) ॥ (१६) ॥*॥ (१७) ॥*॥ सप्तदश 'श्रेष्ठस्य ॥

**श्रेयाञ्छ्रेष्ठः पुष्कलः स्यात् सत्तमश्चातिशोभने ॥ ५८ ॥**

**श्रेयान्, श्रेष्ठः, पुष्कलः, सत्तमः, अतिशोभनः** ( ५ त्रि ), **'बहुत शोभनेवाले' के ५ नाम हैं ।**

श्रयिति ॥ अतिशयेन प्रशस्य । 'अतिशायने तमबिष्ठनौ' (५।३।५५) । 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५।३।५७) । 'अजादी गुणवचनादेव' (५।३।५८) । 'प्रशस्यस्य श्रः' (५।३।६०) । 'श्रेयो मुक्तौ शुभे धर्मे ऽति-प्रशस्ते च वाच्यवत् । श्रेयसी करिपिप्पल्यामभयापाठयोरपि' इति विश्व[1]-मेदिन्यौ [१७१।४३] ॥ (१) ॥*॥ 'श्रेष्ठो वरे कुबेरे च' इति हैम.[2] [इति मेदनी, ३९।९] ॥ (२) ॥*॥ पुष्यति । 'पुष पुष्टौ' (दि० प० अ०) । 'पुष. क्वित्' 'कलश्च' (उ० ४।४-५) ।—'पुषः करन्' । कपिलिकादिः (वा०८।२।१८)—इति मुकुट. । तच्चिन्त्यम् । तादृशपाठाभावात् । धरमकुक्तमनुपसत्वाच्च । 'पुष्कलस्तु पूर्णे श्रेष्ठे' इति हैम [३।७०८] ॥ (३) ॥*॥ अतिशयेन सन् । तमप् (५।३।५५)। 'सत्तमः स्यात्पूज्यतमे साधीयस्युत्तमे त्रिषु' (इति मेदिनी) [११२।५६] ॥ (४) ॥*॥ अतिशयेन शोभन ॥ (५) ॥*॥ पञ्च 'अतिशोभनस्य' ॥ 'वर्यं प्रधान मुख्यमनुत्तमं सत्तमं प्रवर्हणं च' इति नाममालायाम् (सत्तमस्य) । 'अग्रं प्राग्रहरं श्रेष्ठं मुख्यवर्यप्रवर्हम्' इति त्रिकाण्डशेषे[3] च श्रेष्ठस्य पाठादेकविंशतिरेव शोभनस्य—इत्यन्ये ॥

---

[1] '-प्रमुखप्रवेक-' इति पाठान्तरम् ।

[1] विश्वे 'श्रेयस्तु मङ्गले धर्मे श्रेयान् शस्ते तु वाच्यवत् । श्रेयसी करिपिप्पल्यामभयारास्नयोरपि ॥' इति (१७६।२३) पाठादत्र 'मेदिनी'त्येव पाठ्यमासीत् ।

[2] हैमे पुस्तकत्रये श्रेष्ठोऽग्र्ये धनदे' इति (२।१११) इति भिन्नपाठादत्र 'मेदिनी'ति पाठ्यम् ।

[3] त्रिकाण्डशेषे नेदं वचो लभ्यते ।

स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥

व्याघ्र, पुङ्गव, ऋषभ, कुञ्जर, सिंह, शार्दूल, नाग (७ पु), आदि 'उत्तरपद (शब्दके आगे) में रहनेपर पूर्व शब्दके श्रेष्ठार्थ' को कहते हैं।

स्युरिति ॥ पुमांश्चासौ गौश्च । 'गोरतद्धितलुकि' (५।४।९२) इति टच् ॥ (१) ॥*॥ श्रेष्ठस्यार्थ । श्रेष्ठार्थो गोचरो येषा ते । क्वचिद् 'वाचका' इति पाठ ॥*॥ एते [उत्तरपदस्था] 'श्रेष्ठवाचका' ॥

अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।

अप्राग्र्यम् (त्रि), अप्रधानम्, उपसर्जनम् (२ लि० न), 'अप्रधान' के ३ नाम हैं।

अप्रेति ॥ प्राग्रयाद्भिन्नम् ॥ (१) ॥*॥ प्रधानादन्यत् ॥ (२) ॥*॥ उपसृज्यते । 'सृज विसर्गे' (तु० प० अ०) । कर्मणि ल्युट् (३।३।११३) ॥ (३) ॥*॥ त्रीणि 'अप्रधानस्य' ॥

विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥
वड्रोरुविपुलम्

विशङ्कटम्, पृथु, बृहत्, विशालम्, पृथुलम्, महत्, वड्रम्, उरु, विपुलम् (९ त्रि), 'बड़े, विशाल' के ९ नाम हैं।

वीति ॥ विस्तृतार्थवृत्तेर्विशब्दात् 'वे शालच्छङ्कटचौ' (५।२।२८) ॥ (१) ॥*॥ 'विशाला त्विन्द्रवारुण्यामुज्जयिन्या च योषिति । नृपवृक्षभिदो पुंसि पृथुले त्वभिधेयवत्'[२] इति विश्व [१५८।११७-११८]–मेदिन्यौ [१५४।१३३-१३४] ॥ (४) ॥*॥ प्रथते । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । 'प्रथिम्रदि–' (उ० १।२८) इति कु सम्प्रसारणं च । 'पृथुर्विशाले भूपाले वाल्पिका[३] कृष्णजीरयो' इति हेमचन्द्र [२।२२२] ॥ (२) ॥*॥ बर्हति । 'बृह वृद्धौ' (भ्वा० प० से०) । 'वर्तमाने पृषद्बृहन्महत्–' (उ० २।८४) इति निपात ॥ (३) ॥*॥ पृथुत्वमस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । पृथुत्वं लाति वा ॥ (५) महति । 'मह पूजायाम्' (भ्वा० प० से०) ॥ (६) ॥*॥ वलते । 'वल संवरणे सञ्चरणे च' (भ्वा० आ० से०) । 'बहुलमन्यत्रापि' ( ) इति रक् ।–'स्फायितञ्चि–' इति रक्–इति मुकुट । तन्न । उज्ज्वलदत्तादावदर्शनात् । रलयोरेकत्वस्मरणम् ॥ (७) ॥*॥ ऊर्णोति । 'ऊर्णुञ् आच्छादने' (अ० उ० से०) 'महति ह्रस्वश्च' (उ० १।३१) इति कुप्रत्ययो नुलोपो ह्रस्वश्च ॥ (८) ॥*॥ विपोलति । 'पुल महत्त्वे' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति क । 'विपुल पृथुलेऽगाधे मेरुपश्चिमभूधरे' इति विश्व [१५४।६१]–मेदिन्यौ [१५४।१३२] ॥ (९) ॥*॥ नव 'विस्तीर्णस्य' ॥

पीनपीन्वी तु स्थूलपीवरे ।

पीनम्, पीव, स्थूलम्, पीवरम् (४ न), 'मोटे' के ४ नाम हैं।

पीति ॥ प्यायते स्म । 'ओप्यायी वृद्धौ' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्त । 'ओदितश्च' (८।२।४५) इति नत्वम् । 'प्याय पी' (६।१।२८) ॥ (१) ॥*॥ प्यायते । 'प्यैङ् वृद्धौ' (भ्वा० आ० अ०) । 'प्याय्यो सम्प्रसारणम् च' (उ० ४।११५) इति क्वनिप् । स्त्रियां तु 'वनो र च' (४।१।७) इति ङीब्रौ ॥ (२) ॥*॥ स्थूलयति । 'स्थूल बृंहणे' (चु० आ० से०) । अच् (३।१।१३४) । 'स्थूल पीने जडे' इति हैम [२।५२८] ॥ (३) ॥*॥ प्यायते । 'छित्वर–' (उ० ३।१) इति निपात । 'पीवर स्थूलकूर्मयो' इति हेमचन्द्र [३।६१४] ॥ (४) ॥*॥ चत्वारि 'स्थूलस्य' ।

स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु ॥६१॥
स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ।

स्तोक, अल्प, क्षुल्लक, श्लक्ष्णम्, सूक्ष्मम्, दभ्रम्, कृशम्, तनु, (५ त्रि), मात्रा, त्रुटि (२ नि० स्त्री), लव, लेश, कण, अणु (४ नि० पु), १४ नाम 'सूक्ष्म' के हैं।

स्तवितिति ॥ स्तुच्यते । 'ष्टुच प्रसादे' (भ्वा० आ० से०) । घञ् (३।३।१९) । न्यङ्क्वादि (७।३।५३) । स्तूयते । बाहुलकात् स्तुञ च । 'स्तोकस्त्वल्पे चातके पुमान्' (इति मेदिनी) [४।३९] ॥ (१) ॥*॥ अल्यते वार्यते । 'अल भूषणादौ' (भ्वा० प० से०) । बाहुलकात् प ॥ (२) ॥*॥ क्षोदनम् । 'क्षुदिर् सम्पेषणे' (रु० उ० अ०) । सम्पदादि (वा० ३।३।१०८)। क्षुद लाति । 'आतोऽनुप–' (३।२।३) इति क । 'तोलि' (८।४।६०) । स्वार्थे कन् (ज्ञापि० ५।४।५) । यद्वा–क्षुद्यते । 'स्फायितञ्चि–' (उ० २।१३) इति रक् । रलयोरेकत्वस्मरणात् कपिलिकादित्वात् (वा० ८।२।१८) वा लत्वम् । 'क्षुल्ल-

१. 'आद्य'शब्देन 'उद्ध प्रकाण्ड–मल्लज–मर्चर्चिका मतल्लिका'प्रभृतयो ग्राह्या ।

२ विश्वे '—विशालोज्जयिनीपुरि । विशालो वृक्षभेदेऽपि विशाल पृथुलेऽन्यवत्' इति, मेदिन्या च '—मृगपक्षिभिदो —' इति पाठो ।

३ '—वाल्पिका—' इति च पाठ ।

कस्त्रिषु नीचेऽल्पे' इति विश्वः[1] [मेदिनी, ६।७०] ॥ (३) ॥*॥ श्लिष्यते' श्लिष्यति वा । 'श्लिष आलिङ्गने' (दि० प० अ०) । 'श्लिषेरच्चोपधायाः' (उ० ३।१९) इति वसनः ॥ (४) ॥*॥ सूच्यते । 'सूच पैशुन्ये' (चु० प० से०) । 'सूचेः स्मन्' (उ० ४।११७) । 'सूक्ष्मं स्यात्कतकेऽध्यात्मे पुस्यणौ त्रिषु चाल्पके'[2] इति विश्व. [१११।१९] (मेदिनी) [११०।३६] ॥ (५) ॥*॥ दभ्यते । 'दम्भु दम्भने' (स्वा० प० से०) । 'स्फायितञ्चि—' (उ० २।१३) इति रक् ॥ (६) ॥*॥ कृश्यते स्म । 'कृश तनूकरणे' (दि० प० से०) । '—फुल्लक्षीब—' (८।२।५५) इति साधुः ॥ (७) ॥*॥ तन्यते । 'तनु विस्तारे' (त० उ० से०) । '—तनिचरि—' (उ० १।७) इत्यु । 'तनु काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे' इति[3]विश्व-मेदिन्यौ [८३।९] ॥ (८) ॥*॥ मीयते । 'माङ् माने' (दि० आ० अ०) । ष्ट्रन् (उ० ४।१५९)। अनित्य पित्ता ङीष् । टाप् (४।१।४) । 'मात्रा त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रा परिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे[4] कर्णभूषणे । काले वृत्ते च' इति हैम. [२।४५९-४६०]॥(९)॥*॥ त्रुट्यते । 'त्रुट छेदने' (चु० आ० से०) । 'इगुपधात्कित्' (उ० ४। १२०) इतीन् ॥ (१०) ॥*॥ लूयते । 'लूञ् छेदने' (क्र्या० उ० से०) । 'ऋदोरप्' (३।३।५७) । 'लव. कालभिदि च्छिदि । विलासे रामजे लेशे तथा किंजल्क[5]पक्ष्मणोः । गोपुच्छलोमस्वपि च' इति हैम [२।५४८-५४९] ॥ (११) ॥*॥ लिशति । 'लिश गतौ' (तु० प० अ०) । अच् (३।१।१३४) । लिश्यते वा । घञ् (३।३। १९) ॥ (१२) ॥*॥ कणति । 'कण निमीलने' (चु० उ० से०) । अच् (३।१।१३४) । 'कणो धान्याशलेशयो.। कणा जीरकपिप्पल्यो.' इति हेमचन्द्र [२।१३५-१३६] ॥ (१३) ॥*॥ अणति, अण्यते वा । 'अण शब्दे' (भ्वा० प० से०)। 'अणश्च' (उ० १।८) इत्यु । 'अणुर्व्रीह्यल्पयो ' इति हैमः [२।१३४] ॥ (१४) ॥*॥ चतुर्दश 'सूक्ष्मस्य' [आद्यास्त्रय. 'अल्पस्य' अन्य एकादश 'सूक्ष्मस्य' इति परे]।

**अत्यल्पेऽल्पिष्ठमल्पीय कनीयोऽणीय इत्यपि ॥६२॥**

अत्यल्पम् , अल्पिष्ठम् , अल्पीयः, कनीयः, अणीयः, (५ त्रि), 'बहुत कम' के ५ नाम हैं ।

अत्येति ॥ अतिशयेनाल्प ॥ (१) ॥*॥ 'अजादी गुणवचनादेव' (५।३।५८) इतीष्ठन्नीयसुनौ ॥ (२) ॥*॥ (३) ॥*॥ 'युवाल्पयो कनन्यतरस्याम्' (५।३।६४) इति कन् वा ॥ (४) ॥*॥ अतिशयेनाणु । ईयसुन् (५। ३।५७) ॥ (५) ॥*॥ पञ्च 'अत्यल्पस्य' ॥

**प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।**
**पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च ॥ ६३ ॥**

प्रभूतम्, प्रचुरम्, प्राज्यम्, अदभ्रम्, बहुलम्, बहु, पुरुहम्, पुरु, भूयिष्ठम्, स्फिरम्, भूयः, भूरि ( १२ त्रि ), 'बहुत, काफी' के १२ नाम हैं।

प्रेति ॥ प्रभवति स्म । 'गत्यर्था–' (३।४।७२) इति क्त । 'प्रभूतमुद्गते प्राज्ये' इति हैम. [३।२८८] ॥ (१) ॥*॥ प्रचोरति । 'चुर स्तेये' (चु० प० से०) । चुरादीना णिज्वैकल्पिक । 'इगुपध–' (३।१।१३५) इति कः । 'प्रगतं चुरायाः' इति वा ॥ (२) ॥*॥ प्रवीयते । 'अज गतौ' (भ्वा० प० से०) इति वी न । यद्वा–प्रकर्षेणाज्यते काम्यते । 'अञ्जू व्यक्त्यादौ' (रु० प० से०) । आङ्पूर्वात् 'अञ्जेः संज्ञायाम्'[1] (वा० ३।१।१०९) इति क्यप् ॥ (३) ॥*॥ दभ्रादन्यत् । नञ्समासः (२।२।६) ॥ (४) ॥*॥ बहून् लाति । 'आतोऽनुप–' (३।२।३) इति क. । 'बहुला नीलिकाया स्यादेलाया गवि योषिति । कृत्तिकासु स्त्रिया भूम्नि, विहायसि नपुंसकम् । पुस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयो ' इति विश्व[2]-मेदिन्यौ [१५३।११७-११८] ॥ (५) ॥*॥ बहते । 'बहि वृद्धौ' (भ्वा० आ० से०) 'लङ्घिबह्योर्नलोपश्च' (उ० १।२९) इत्यु । यत्तु—'बंहते वर्धते बहु पूर्यते । मितद्र्वादित्वात् (वा० ३।२।१८०) डु.—इति मुकुटेनोक्तम् । तन्न । टिलोपेनोक्तरूपासिद्धिप्रसङ्गात् । 'बहु स्यात् त्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्'

१. विश्वे पुस्तकद्वयेऽपि 'क्षुल्लक स्वल्पनीचयो.' इति (१३।११९) भिन्नपाठादत्र 'मेदिनी'स्थैव पाठो योग्य ।

२. विश्वे '—कतकेऽध्यात्मेऽप्यणौ सूक्ष्मोऽल्पकेऽन्यवत्' इति, मेदिन्या च '—कतकेऽध्या—'इति पाठौ।

३. विश्वे 'तनु' काये कृशे चाल्पे विरलेऽपि च वाच्यवत्' इति (८६।१८) भिन्नपाठादत्र 'मेदिनी'स्थैव युक्त पाठः ।

४. 'हैमे 'क'पुस्तके '—माल्ये—' इति पाठ.

५. हैमे 'ख-ग' पुस्तकद्वये 'तथा किंजल्क—' इत्यंशो नोपलभ्यते । 'क'पुस्तकेऽपि '—लेशे अपाकिंजल्क—' इति पाठः ।

१. भाष्ये 'अञ्जेश्चोपसंख्यान सज्ञायाम्' इत्येव वार्तिकस्वरूपम् ।

२. विश्वे 'बहुलः कृष्णपक्षेऽग्नौ शितौ च, बहुला गवि । एलाया नीलिकाया च बहुला कृत्तिकासु च ॥ बहुलं प्राज्यनभसो.' इति (१५४।७०-७१) भिन्नपाठादत्रापि 'मेदिनी'स्थैव पाठः समुचितः ।

इति विश्व [८०।८] (मेदिनी)[१७५।६] ॥(६)॥*॥ पुरून् हन्ति गच्छति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड । यद्वा–पुरून् जहाति, जिहीते वा । 'आतोऽनुप–' (३।२।३) इति क. ॥ (७) ॥*॥ पिपर्ति, पूर्यते वा । 'पृ पालनपूरणयो' (जु० प० से०) । 'पृभिदि–' (उ० १।२३) इति कु । यत्तु–'पृकृतमुधुषिभ्य कु' इति सूत्र पठित मुकुटेन । तन्न । 'कृग्रोरुच्च' इति पृथक् सूत्रात् । अन्यपोत्वाभावप्रसङ्गात् । 'पुरुः प्राज्येऽभिधेयवत् । पुंसि स्याद् देवलोके च नृपभेदपरागयो' इति हैम [१](मे०) [१२७।५७-५८] ॥ (८) ॥*॥ अतिशयेन बहु । 'बहोर्लोपो भू च बहो' (६।४।१५८) । 'इष्टस्य यिट् च' (६।४।१५९) । स्वार्थे चैष्ठादय ॥ (९) ॥*॥ स्फायते । 'स्फायी वृद्धौ' (भ्वा० आ० से०) । 'अजिरशिशिर–' (उ० १।५३) इति साधु ॥*॥ 'स्फारम्' इत्यपि पाठ । रक् (उ० २।१३)। स्फारस्तु स्फरकादीना[२] बुद्बुदे विपुलेऽपि च' इति हेमचन्द्र [२।४७९] ॥ (१०) ॥*॥ अतिशयेन बहु । बहोर्लोपो भू च बहो' (६।४।१५८) ॥ (११) ॥*॥ भवति । 'अदिशदिभूशुभिभ्य क्रिन्' (उ० ४।६५) । 'भूरि स्यात्प्रचुरे स्वर्णे' इति हैम [२।४५७] ('भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसक सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक' इति मेदिनी [१२८।७३-७४]। (१२) ॥*॥ द्वादश 'बहुलस्य' ।

परश्शताद्यास्ते येषा परा सख्या शतादिकात् ।

परःशतम् (त्रि), आदि (परःसहस्रम्, परोऽयुतम्, परोलक्षम् ), 'सौ आदि (हजार, दश हजार, लाख, ) से अधिक' का १ नाम है ।

पेति ॥ शतात् परे । 'पञ्चमी–' (२।१।३७) इति योगविभागात्समास । राजदन्तादि (२।२।३१) । पारस्करादित्वात् (६।१।१५७) सुट् ॥ (१) ॥*॥ आद्येन परस्सहस्रा[दय] ॥*॥ एक 'शतात्परस्य' ।

गणनीये तु गणेयम्

गणनीयम्, गणेयम् (२ त्रि), 'गिनती करने योग्य पदार्थ आदि' के २ नाम हैं ।

गेति ॥ आर्या छन्द [३] ॥*॥ गण्यते । 'गण सख्याने' (चु० उ० से०) । अनीयर् (३।१।९६) ॥ (१) ॥*॥ 'अचो यत्' (३।१।९७) । सञ्ज्ञापूर्वकत्वाण्णिलोपाभाव । 'चिन्तिपूजि–' (३।३।१०५) इत्यङ्विधानाद् गुणाभावार्थाद्वा । अन्यथा 'अ प्रत्ययात्' (३।३।१०२) इत्यनन्तर पठित्वाकारमेव विदध्यात् । यत्तु–'अ प्रत्ययात्' (३।३।१०२) इत्यकारे प्राप्ते गुणाभावार्थमङ्विधानात्–इति मुकुटेनोक्तम् । तच्चिन्त्यम् । 'ण्यासश्रन्थो युच्' (३।३।१०७) इति युचा प्रत्ययस्य बाधनात् ॥ (२) ॥*॥ द्वे 'गणयितु शक्यस्य' ।

संख्यातं गणितम्

संख्यातम्, गणितम् (२ त्रि), 'गिने हुए'के २ नाम हैं।

समिति ॥ सख्यायते स्म । 'ख्या प्रकथने' (अ० प० अ०) । चक्षिङादेशो वा । क्त (३।२।१०२) ॥ (१) ॥*॥ गण्यते स्म । क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'सख्यातस्य' ।

अथ समं सर्वम् ॥ ६४ ॥

विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ।
समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥

समम् ('यह केवल इसी सम्पूर्ण अर्थमें सर्वनामसञ्ज्ञक है'), सर्वम्, विश्वम्, अशेषम्, कृत्स्नम्, समस्तम्, निखिलम्, अखिलम्, निःशेषम्, समग्रम्, सकलम्, पूर्णम्, अखण्डम्, अनूनकम् (१४ त्रि), 'सम्पूर्ण, पूरे, समूचे' के १४ नाम हैं।

अथेति ॥ समति । 'षम वैक्लव्ये' (भ्वा० प० से०)। अच् (३।१।१३४) । सर्वार्थे सर्वनाम । 'समा सवत्सरे स्त्रियाम् । सर्वसाधुसमानेषु समं स्यादभिधेयवत्' इति विश्व[१] (मदिनी)[११०।३४-३५] ॥ (१) ॥*॥ सरति 'सृ गतौ' (भ्वा० प० अ०) । 'सर्वनिघृष्व–' (उ० १।१५३) इति साधु ।–'सर्तेर्व'–इति मुकुटस्त्वपाणिनीय । यद्वा–सर्वति । 'षर्व गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (२) ॥*॥ विशति । 'विश प्रवेशने' (तु० प० अ०) । 'अशू प्रुषि–' (उ० १।१५२) इति क्वन् । 'विश्व कृत्स्ने च भुवने विश्वे देवेषु नागरे । विश्वाऽप्यति[२]

---

१. हैमे पुस्तकत्रयेऽपि 'पुरु पुरोगे प्रचुरे स्वर्लोकनृपभेदयो' इति (२।४५२) भिन्नपाठादत्र 'मेदिनी'त्येव पठनीयम् ।

२ '–फरकादीना–' इति हैमे 'क'पुस्तके पाठ ।

३ आर्याच्छन्दोलक्षणम्–'लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे ज । षष्ठोऽय नलघु वा प्रथमेऽर्द्धे नियतमार्याया ॥ षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियम । चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो ल ।' इति वृत्तरत्ना० (२।२३-२४) ।

१. विश्वे 'समा वर्षे सम तुल्ये साधौ च सहशेऽन्यवत्' इति (११२।३२) इति पाठादत्र 'मेदिनी'त्येव पाठ्यम् ।

२. विश्वे ग्रन्थद्वयेऽपि 'विश्व समस्ते जगति विश्वदेवेऽपि नागरे । विश्वा चाति–' इति पाठ ।

विषायां स्यात्' (इति विश्वः) [१६३।१९] ॥(३)॥*॥ न शेषोऽस्य ॥ (४) ॥*॥ कृत्स्यते । 'कृती वेष्टने' (रु० प० से०) । 'कृत्यशूभ्यां क्स्न' (उ० ३।१७) । 'कृत्स्नं सर्वाम्बुकुक्षिषु' (इति मेदिनी) [८२।२] ॥ (५) ॥*॥ समस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्त (३।२।१०२) ॥ (६) ॥*॥ निवृत्तं खिलमस्य ॥ (७)॥*॥ न खिलमस्य ॥ (८) ॥*॥ निष्क्रान्त शेषात्। 'निरादयः–' (वा० २।२।१८) इति समासः ॥ (९) ॥ ॥ सगतमग्रमस्य । ग्रसं ग्रसते वा । 'ग्रसु अदने' (भ्वा० आ० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड. ॥ (१०) ॥*॥ सह कलाभि. ॥ (११) ॥*॥ पूर्यते स्म । 'पूरी आप्यायने' (दि० आ० से०)। कर्तरि (३।४।७२) कर्मणि (३।२।१०२) वा क्त. । 'पूर्णं शब्दे (शक्ते) समग्रे ना पूरिते त्वभिधेयवत्' (इति मेदिनी) [४६।२२] ॥*॥ 'पूर्वम्' इति पाठ.—इति स्वामी[1] । पूर्वति । 'पूर्व पूरणे' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (१२) ॥*॥ न खण्ड्यते । 'खडि भेदने' (चु० प० से०) । घञ् (३।३।१८) ॥ (१३) ॥*॥ ऊनयति । 'ऊन परिहाणे' (चु० उ० से०) । अच् (३।१।१३४) । न ऊनम् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१४) ॥*॥ चतुर्दश 'समग्रस्य' ।

**घनं निरन्तरं सान्द्रम्**

घनम्, निरन्तरम्, सान्द्रम् (३ त्रि), 'घन, गझिन' के ३ नाम हैं।

घेति ॥ हन्यते । 'हन हिंसागत्योः' (अ० प० अ०) । 'मूर्तौ घन.' (३।३।७७) इत्यप् घनादेशश्च । 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । त्रये मुस्ते घनं मध्ये नृत्यवाद्यप्रभेदयो ' इति हेमचन्द्र. [२।२६५] ॥ (१) ॥*॥ निर्गतमन्तरात्। निर्गतमन्तरमस्मिन् वा ॥ (२) ॥*॥ सह अन्द्रयते । 'अदि बन्धने' (भ्वा० प० से०) । बाहुलकाद्रक् ॥ (३) ॥*॥ त्रीणि 'निबिडस्य' ।

**पेलवं विरलं तनु ।**

पेलवम्, विरलम्, तनु (३ त्रि), 'विरल, फरक फरकवाले' के ३ नाम हैं।

पेलेति ॥ पेलनम् । 'पिल भेदने' (तु० प० से०) । घञ् (३।३।१८) । पेलोऽस्यास्ति । 'अन्येभ्योऽपि–' (वा० ५।२।१०९) इति वः ॥ (१) ॥*॥ वि राति । बाहुलकात्कलन् ॥ (२) ॥*॥ तन्यते । 'भृमृ–' (उ० १।७) इत्यु. । 'तनुर्वपुस्त्वचो. । विरलेऽल्पे कृशे' इति हैमः (२।२७०) ॥ (३) ॥*॥ त्रीणि 'विरलस्य' ।

१. 'समग्रसकलाखण्डपूर्वादि स्यादनूनके' इति स्वाम्याह ।

**समीपे निकटासन्नसंनिकृष्टसनीडवत् ॥ ६६ ॥**
**सदेशाभ्याशसविधसमर्यादसवेशवत् ।**
**उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्[1] ॥६७॥**

समीपः, निकटः, आसन्नः, सन्निकृष्टः, सनीडः, सदेशः, अभ्याशः, सविधः, समर्यादः, सवेशः, उपकण्ठः, अन्तिकः, अभ्यर्णः, अभ्यग्रः (१४ त्रि), अभितः (अव्य०) 'समीप, नजदीक' के १५ नाम हैं।

सेति ॥ संगता आपो यस्मिन् । 'ऋक्पूर्–' (५।४।७४) इत्य । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६।३।९७) ॥ (१) ॥*॥ निकन्यम् । सप्रोदश्च–' (५।२।२९) इति चापन्ने कटच् । निकटति वा । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (२)॥*॥ आसीदति स्म । 'गत्यर्था–' (३।४।७२) इति क्त. । आसद्यते स्म, इति वा । क्त (३।२।१०२) ॥ (३) ॥*॥ संनिकृष्यते स्म । 'कष' [हिंसार्थे] (भ्वा० प० अ०)। क्तः (३।२।१०२)॥(४) ॥ * ॥ समानं नीडं वासस्थानमस्य । सह नीडेन इति ॥ (५) ॥*॥ समानो देशोऽस्य ॥ (६) ॥*॥ अभ्यश्यते । 'अशु व्याप्तौ' (स्वा० आ० से०) । घञ् (३।३।१९)॥*॥ मुकुटस्तु—अभ्यासीदति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः–इति दन्त्यसमाह [अभ्यास ]। 'अभ्यासोऽभ्यसनेऽन्तिके'[2] इति दन्त्यान्तेषु (विश्व) [१७५।२१]·(मेदिन्यौ) [१७१।१५]॥ (७) ॥*॥ समाना विधाऽस्य । यद्वा–सह विधया ॥ (८) ॥*॥ समाना मर्यादाऽस्य ॥ (९) ॥*॥ समानो वेशोऽस्य ॥(१०)॥*॥ उपगत कण्ठम् । 'अत्यादयः–' (वा० २।२।१८) इति समास. । उपगत कण्ठः सामीप्यमस्य इति वा ॥ (११) ॥*॥ अन्तोऽस्यास्ति । ठन्(५।२।११५)। 'अन्तिकं निकटे वाच्यलिङ्गं, स्त्री शोभनौषधौ । चुल्ल्या ज्येष्ठभगिन्यां च, नाट्योक्त्या कीर्त्यते । अन्तिका' इति विश्व[3]-मेदिन्यौ [४।४४] ॥ (१२)। ।*॥ अभ्यर्द्यते स्म। अभ्यर्दति स्म इति वा। 'अर्द गतौ' (भ्वा० प० से०) । कर्मणि (३।२।१०२) कर्तरि (३।४।७२) वा क्त । अभेश्चाविदूर्ये' (७।२।२५) इतीडभाव. (१३) ॥*॥ अभिमुखमग्रमस्य ॥ (१४) ॥*॥ 'पर्यभिभ्यां च'

१. '—भ्यग्राभिपतिता अमी' इति पाठा० ॥

२. विश्वे पुस्तकद्वयेऽपि '—व्यसने—' इति पाठो न सम्यक्, मेदिन्यां '—ऽभ्यसने—' इति पाठविरोधात् ।

३. विश्वे 'अन्तिकं निकटे चुल्ल्यामन्तिका शीतलौषधे । तथा ज्येष्ठभगिन्या च नाट्योक्तौ कीर्त्यतेऽन्तिका' इति (१२।१२४) पाठादत्र 'मेदिनी'स्यैव पाठ्यम् ।

(५।३।९) इति तसिल् ।– तसि इति स्वामि-मुकुटोक्तिस्तु स्वरानादराभिप्रायेण ॥(१५)॥*॥ पञ्चदश 'समीपस्य,'।

संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।

संसक्तम्, अव्यवहितम्, अपदान्तरम् (३ त्रि) 'सटे (मिले) हुए' के ३ नाम हैं।

समीति ॥ ससज्यते स्म । 'षञ्ज सङ्गे' (भ्वा० प० अ०) । क्त (३।२।१०२) ॥ (१) ॥*॥ न व्यवधीयते स्म । क्त. (३।२।१०२) । 'दधातेर्हि' (७।४।४२) ॥ (२) ॥*॥ पदेनान्तरम् । न पदान्तरमत्र । मुकुटस्तु—'अपदान्तरम्'—इत्याह ॥ (३)॥*॥ त्रीणि 'संलग्नस्य' ।

नेदिष्ठमन्तिकतमम्

नेदिष्ठम्, अन्तिकतमम् (२ त्रि), 'बहुत समीपवाले'के २ नाम हैं।

नेदीति ॥ अतिशयेनान्तिकम् । इष्ठन् (५।३।५५) । 'अन्तिकबाढयोर्नेदसाधौ' (५।३।६३) ॥ (१) ॥*॥ तमप् (५।३।५५) ॥ (२) ॥*॥ द्वे 'अतिनिकटस्य' ।

स्याद् दूरं विप्रकृष्टकम् ॥ ६८ ॥

दूरम्, विप्रकृष्टकम् (२ त्रि), 'दूरवाले' के २ नाम हैं।

स्यादिति ॥ दु खेवेयते । 'दुरिणो लोपश्च' (उ० २।२०) इति साधु ॥ (१) ॥*॥ विप्रकृष्यते स्म । कृषेः क्त (३।२।१०२) ['विप्रकृष्टम्'] स्वार्थे कन् (ज्ञापि० (५।४।५) ॥ (२) ॥*॥ द्वे 'दूरस्य' ।

दवीयश्च दविष्ठं च सुदूरे

दवीय, दविष्ठम्, सुदूरम् (३ त्रि), 'बहुत दूरवाले' के ३ नाम हैं।

वेति ॥ अत्यन्त दूरम् । ईयसुन् (५।३।५७) । 'स्थूल-दूरयुव–' (६।४।१५६) इति साधु ॥ (१) ॥*॥ इष्ठन् (५।३।५५) ॥ (२) ॥*॥ सु अत्यन्त दूरम् ॥ (३) ॥*॥ त्रीणि 'अत्यन्तदूरस्य' ।

दीर्घमायतम् ।

दीर्घम्, आयतम् (२ त्रि), 'लम्बे' के २ नाम हैं।

दीति ॥ दृणाति । 'दृ विदारणे' (क्र्या० प० से०)। बाहुलकाद्धक् ॥ (१) ॥*॥ आयम्यते स्म । क्त (३।२।१०२) । आयतते वा । 'यती प्रयत्ने' (भ्वा० आ० से०)। पच (३।१।१३४) ॥ (२) ॥*॥ द्वे 'विस्तृतस्य' ।

वर्तुलं निस्तलं वृत्तम्

वर्तुलम्, निस्तलम्, वृत्तम् (३ त्रि), 'गोलाकार' के ३ नाम हैं।

वेति ॥ वर्तते । बाहुलकादुलच ॥ (१) ॥*॥ निर्गतं तलमस्य । 'निस्तलं वर्तुले चले' इति विश्वः [१५४।७४] ॥ (२) ॥*॥ वर्तते स्म । 'गत्यर्था–' (३।४।७२) इति क्त । 'वृत (वृत्तौ) दृढे मृते । चरित्रे वर्तुले छन्द स्वती'ताधीयोर्वृत्ते' इति हैम [२।२०१] ॥ (३) त्रीणि 'वर्तुलस्य' ॥

बन्धुरं तून्नतानतम् ॥ ६९ ॥

बन्धुरम्, उन्नतानतम् (२ त्रि), 'ऊच-खाल, ऊच नीच'के २ नाम हैं।

बेति ॥ बध्नाति । 'बन्ध बन्धने' (क्र्या० प० अ०) 'मद्गुरादयश्च' (उ० १।४१) इति साधु ।('बन्धुर मुकुटे पुंसि स्त्री' विह्नतैलकल्कयोः । बन्धूके बधिरे हसे त्रिषु स्यादुन्नतानते । बन्धुरा 'पण्ययोषायां स्त्रियां भूम्नि च सन्नतौ' (इति मेदिनी) [१३६।१८९-१९०] ॥*॥ ('बन्धूरबन्धुरौ रम्ये नम्रे, हसे तु बन्धुर । बन्धूके च विहङ्गे च बन्धुरा 'पण्ययोषिति'इति विश्वात् [१३६।१३४] दीर्घोपधो[बन्धूरो]ऽपि ॥ (१) ॥*॥ उन्नत च तदानत च ॥ (२) ॥*॥ द्वे 'उन्नतानतस्य' ।

उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे

उच्च, प्रांशु, उन्नत, उदग्र, उच्छ्रित, तुङ्ग (६ त्रि), 'ऊँचे' के ६ नाम हैं।

उच्चेति ॥ उच्चिनोति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड । उच्चैस्त्वमस्त्यत्र वा । अर्शआदिभ्योऽच्' (५।२।१२७) । 'अव्ययानाम्–' (वा० ६।४।१४४) इति टिलोप ॥ (१) ॥*॥ प्रकृष्टा अंशवोऽस्य ॥ (२) ॥*॥ उन्नमति स्म । 'णम प्रह्वत्वे' (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्त ॥ (३) ॥*॥ उद्गतमग्रमस्य ॥ (४) ॥*॥ उच्छ्रयति स्म । 'श्रिञ् सेवायाम्' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्त । 'उच्छ्रित त्रिषु सञ्जाते समुन्नद्ध(त)प्रवृद्धयो'(इति मेदिनी) [६१।१०१] ॥ (५) ॥*॥ तुञ्ज्यते । 'तुजि हिंसायाम्' (भ्वा० प० से०) । घञ (३।३।१९) । 'तुङ्ग पुन्नागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्रायां बर्बरायामपीष्यते' इति हैम [२।३३] ॥ (६) ॥*॥ षट् 'उन्नतस्य' ।

अथ वामने ।

न्यङ्नीचखर्वह्रस्वाः स्युः

वामन, न्यङ्, नीच, खर्व, ह्रस्व (५ त्रि), 'वामन, नीचे, छोटे' के ५ नाम हैं।

---

१. क '—छन्दस्यतीता–' इति च पाठ 'क' पुस्तके हैमे।

२ मेदिन्या '—स्त्रीविह्नतैल ...'। बन्धुरा पण्ययोषायां ... बन्धुर शोभने नम्रे' इति पाठ ।

३ विश्वे '—बन्धूरा पण्ययोषिति' इति पाठ ।

अथेति ॥ वामयति मदम् । 'टुवम् उद्गिरणे' (भ्वा० प० से०) । नन्द्यादित्युः (३।१।१३४) ॥ (१) ॥*॥ न्यञ्चति । 'अञ्चु गतौ' (भ्वा० प० से०) । ऋत्विग्–' (३।२।५९) । इति क्विन् ॥(२)॥*॥ नीचैस्त्वमस्त्यत्र । अर्शआद्यच् (५।२।१२७) 'अव्ययानाम्–' (वा० ६।४।१४४) इति टिलोप । 'नीच पामरखर्वयो ' इति हेमचन्द्र. [२।५९७]॥(३)॥*॥ खर्वति । 'खर्व गतौ'(भ्वा० प० से०) । अच् (३।१।१३४)।('खर्वं सङ्ख्यान्तरे क्लीबं नीचे वामनके त्रिषु' इति मेदिनी) [१०४।३] ॥ (४) ॥*॥ ह्रसति । 'ह्रस शब्दे' (भ्वा० प० से०) बाहुलकाद्व । 'खर्वह्रस्वौ न्यग्वामनौ' इति हैम.' [२।५२२] मेदिन्यौ ॥ (५) ॥*॥ पञ्च 'ह्रस्वस्य' ।

अवाग्रेऽवनतानते ॥ ७० ॥

अवाग्रम्, अवनतम्, आनतम् ( ३ त्रि ), 'नीचेकी ओर झुके हुए'के ३ नाम हैं ।

अवेति ॥ अवनतमग्रमस्य ॥ (१) ॥*॥ अवनमति स्म । 'गत्यर्था–' (३।४।७२) इति क्त ॥ (२) ॥*॥ आनमति स्म ॥ (३) ॥*॥ त्रीणि 'अधोमुखस्य' ।

**अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।**
**आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥**

अरालम्, वृजिनम्, जिह्मम् , ऊर्मिमत्, कुञ्चितम् , नतम्, आविद्धम्, कुटिलम्, भुग्नम्, वेल्लितम्, वक्रम ( ११ त्रि ), 'टेढे' के ११ नाम हैं ।

अरेति ॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०) विच् (३।२।७५)। अरमालाति । मूलविभुजादिकः (वा० ३।२।५)अरा लाति वा । 'अराल. कुटिले सर्जरसे च समदन्तिनि' इति विश्व.[२][१५७।६][मेदिनी १४९।५८ च]॥ (१) ॥*॥ वृज्यते । 'वृजी वर्जने' (अ० आ० से०) । 'वृजेः किच्च' (उ० २।४७) इतीनन् । 'वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु' (इति मेदिनी)[९२।३४] ॥ (२) ॥*॥ जहाति, हीयते वा । 'ओहाक् त्यागे' (जु० प० अ०) । 'जहातेः सन्ववाल्लोपश्च' (उ० १।१३८)इति मन् । 'जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे' इति हैमः [२।३२७] ॥ (३) ॥*॥ 'ऊर्मि' स्त्रीपुंसयोर्वीच्या प्रकाशे वेगभङ्गयो' । वस्त्रसंकोचरेखाया वेदनापीडयोरपि' (इति मेदिनी) [१०८।३]। ऊर्मिरस्यास्ति । मतुप् (५।२।९४) । यवादि.(प० ८।२।९)॥ (४) ॥*॥ कुञ्चति स्म । 'कुञ्च कौटिल्ये' (भ्वा० प० से०) । क्त (३।४।७२) । बाहुलकात् संज्ञापूर्वकत्वाद्वा नलोपाभावः ॥ (५) ॥*॥ नमति स्म । क्तः (३।४।७१) । 'नतं तगरपाठ्या[१] स्यात् क्लीबं, कुटिलनम्रयो । त्रिषु' (इति मेदिनी) [५६।२९-३० ]॥ (६)॥*॥ आविध्यते स्म । 'व्यध ताडने'(दि० प० अ०)। क्त (३।२।१०२) । 'ग्रहिज्या–' ( ६।१।१६) इति संप्रसारणम् । 'आविद्धो वाच्यलिङ्ग. स्यात्कुटिले च पराहते' (इति मेदिनी)[८०।२८] ॥ (७) ॥*॥ कुटिं कौटिल्यं लाति । 'आतोऽनुप–' (३।२।३) इति क. । कुटति वा । 'कुट कौटिल्ये (तु० प० से०) 'मिथिलादयश्च' (उ० १।५७) इतीलच् । 'कुटिला स्वापगायां स्त्री भुग्ने[२] तु वाच्यलिङ्गक ' (इति मेदिनी)[१५०।७९]॥(८)॥*॥ भुजति स्म । 'भुजो कौटिल्ये' (तु० प० से०) 'गत्यर्था–' (३।४।७२) इति क्त । 'ओदितश्च' (८।२।४५) इति नत्वम् ॥ (९)॥*॥ वेल्लति स्म । 'वेल्ल चलने' (भ्वा० प० से०) 'गत्यर्था–' (३।४।७२) इति क्त. । 'वेल्लितं गमने क्लीब कुटिले विधुते त्रिषु' (इति मेदिनी)[६६।१६१]॥ (१०) ॥*॥ वञ्चति । 'वञ्चु गतौ' (भ्वा० प० से०) । 'स्फायितञ्चि–' (उ० २।१३) इति रक् । 'वक्र पुटभेदे, वक्रः कुटिले क्रूरभौमयो.' इति हैम. [२।४६४]॥ (११)॥*॥ एकादश 'वक्रस्य' ।

ऋजावजिह्मप्रगुणौ

ऋजुः, अजिह्मः, प्रगुणः ( ३ त्रि ), 'सीधे'के ३ नाम हैं ।

ऋज्विति ॥ अर्जति । 'अर्ज अर्जने' (भ्वा० प० से०) 'अर्जिदृशि–'(उ० १।२७) इति साधु. । यत्तु—अपष्ट्वादित्वात्कु —इति मुकुटेनोक्तम् । तच्चिन्त्यम् । 'अपदुःसुषु स्थः' (उ० १।२५) इत्यस्य प्राप्त्यभावात् । गुणाभावाच्च ॥ (१) ॥*॥ भिन्नो जिह्मात् ॥ (२) ॥*॥ प्रकृष्टा गुणा यस्य ॥(३)॥*॥ त्रीणि 'अवक्रस्य' ।

व्यस्ते त्वप्रगुणाकुलौ ।

व्यस्तः, अप्रगुणः, आकुलः ( ३ त्रि ), 'घबड़ाये हुए, आकुल' के ३ नाम हैं ।

व्यस्त इति ॥ व्यस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्त. (३।२।१०२) । 'व्यस्तं तु व्याकुले व्याप्ते' इति विश्व.[३] (मेदिनी [५८।५४] ॥ (१) ॥*॥ भिन्नः

१. मेदिन्यां नेदं वचो लभ्यते ।

२. विश्वे '—समददन्तिनि' इति पाठ' । युक्तश्चायं मेदिन्या संवादात् ।

१. '—तगरपादा–इति मेदिनीपाठः ।

२. '—तगरपाख्या स्त्री, भुग्ने च–' इति मेदिनीपाठः ।

३. विश्वे 'व्यस्तं व्याप्ते च संकुले' इति (५८।२७) भिन्नपाठादत्र 'मेदिनी'स्थैव पाठ्यम् ।

प्रगुणात् ॥(२)॥*॥ आकोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (३) ॥*॥ त्रीणि 'व्याकुलस्य' ।

**शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ॥ ७२ ॥**

शाश्वत, ध्रुव, नित्य, सदातन, सनातन, (५ त्रि), 'नित्य' अर्थात् 'सर्वदा स्थिर रहनेवाले' के ५ नाम हैं।

शेति ॥ शश्वद्भव । तत्र भव' (४।३।५३) इत्यण् । अनित्ययोऽव्ययानां टिलोपः, बहिषष्टिलोपवचनात्(वा० ४।१।८५) ज्ञापकात् ॥*॥ आध्यात्मादित्वात् (वा० ४।३।६०) ठञपि । '–शाश्वतिक' (२।४।९) इति निर्देशाम कादेशः (७।३।५१) [तेन 'शाश्वतिक' अपि] ॥ (१) ॥*॥ ध्रुवति । 'ध्रुव स्थैर्ये' (तु० प० से०) । इगुपध–' (३।१।१३५) इति कः । [अथ] 'ध्रुवो वटे। वसुयोगभिदो शम्भौ शङ्कावुत्तानपादजे । स्थिरे (नित्ये) निश्चिते च (ध्रुवं खेऽजस्रतर्कयोः । ध्रुवा मूर्वाशालपर्ण्यौ स्रग्भेदे[1] गीतभिद्यपि') इति हैमः [२।५३९-५४०] ॥ (२) ॥*॥ नियतं भव । 'त्यब् नेर्ध्रुवे' (वा० ४।२।१०४) । नित्यं स्यात्सततेऽपि च । शाश्वते त्रिषु' (इति मेदिनी) [११५।३४-३५] ॥ (३) ॥*॥ सदा भव । 'सायंचिरम्–'(४।३।२३) इति ट्युट्युलौ (ट्युतुटौ[2]) ॥ (४) ॥*॥ सना भव । 'सनातनोऽच्युते । पितॄणामतिथौ ब्रह्मवेधसो शाश्वते स्थिरे' इति हैमचन्द्रः [४।२०३-२०४] ॥ (५) ॥*॥ पञ्च 'नित्यस्य' ।

**स्थास्नु' स्थिरतरः स्थेयान्**

स्थास्नु, स्थिरतर, स्थेयान् (३ त्रि), 'अत्यन्त स्थिर' के ३ नाम हैं।

स्थेति ॥ स्थानशील । ग्लाजिस्थश्च ग्स्नुः' (३।२।१३९) ॥ (१) ॥*॥ अतिशयेन स्थिरः । तरप् (५।३।५७) ॥ (२) ॥*॥ ईयसुनि (५।३।५७) प्रियस्थिर–' (६।४।१५७) इति साधुः ॥ (३) ॥*॥ त्रीणि 'अतिस्थिरस्य' ।

**एकरूपतया तु यः ।**

**कालव्यापी स कूटस्थः**

कूटस्थ (त्रि), 'सदा एक समान रहनेवाले (आकाश, आत्मा आदि)' का १ नाम है।

एकेति ॥ कूटवत् तिष्ठति । 'सुपि स्थः' (३।२।४) इति कः । 'कूटोऽस्त्री निश्चले राशौ' [लोहमुद्गरदम्भयोः । मायाद्रिशृङ्गयोस्तुच्छे सीरावयवयन्त्रयोः । 'अनृते च'] (इति मेदिनी) [३४।७-८] ॥ (१) ॥*॥ एकं 'कूटस्थस्य' ॥

**स्थावरो जङ्गमेतरः ॥ ७३ ॥**

स्थावर, जङ्गमेतर (२ त्रि), 'स्थावर (नहीं चलनेवाले) पहाड़, पेड़, लता आदि' के २ नाम हैं।

स्थेति ॥ स्थानशील । 'स्थेशभास–' (३।२।१७५) इति वरच् ॥ (१) ॥*॥ जङ्गमादितरः ॥ (२) ॥*॥ द्वे 'अचरस्य' ॥

**चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम् ।**

चरिष्णु, जङ्गमम्, चरम्, त्रसम्, इङ्गम्, चराचरम् (त्रि), 'चल (चलने-फिरनेवाले) मनुष्य, पशु-पक्षी, कीट-पतङ्ग आदि' के ६ नाम हैं।

चेति ॥ चरणशीलम् । 'चर गतौ' (भ्वा० प० से०) 'अलङ्कृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ वक्रं गच्छति । गत्यर्थानाम् 'नित्यं कौटिल्ये–' (३।१।२३) इति यङ् । स्वाम्यादिस्तु भृशार्थं एव यङमिच्छति । अच् (३।१।१३४) ॥ (२) ॥*॥ चरति । अच् (३।१।१३४) । 'चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चरे' (इति मेदिनी) [१२५।३०] ॥ (३) ॥*॥ त्रसति । 'त्रसी उद्वेगे' (दि० प० से०) । अच् (३।१।१३४) ॥ (४) ॥*॥ इङ्गति । 'इगि गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) 'इङ्गं स्यादिङ्गितेऽद्भुते । ज्ञानजङ्गमयोश्चापि' इति हेमचन्द्रः [२।३०-३१] ॥ (५) ॥*॥ 'चरिचलि–' (वा० ६।१।१२) इति द्वित्वादि । 'चराचरं जङ्गमे स्याद्विश्वप-योरपि' इति हैमः [४।२६०] ॥ ॥*॥ षट् 'चरस्य' ।

**'चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥ ७४ ॥**

**चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।**

चलनम्, कम्पनम्, कम्प्रम्, चलम्, लोलम्, चलाचलम्, चञ्चलम्, तरलम्, पारिप्लवम्, परिप्लवम् (१० त्रि), 'चल' के १० नाम हैं।

चेति ॥ चलनशीलम् । 'चल गतौ' (भ्वा० प० से०) 'चलनशब्दा–'(३।२।१४८) इति युच् । 'चलनं भ्रमणे कम्पे कम्प्रे तु वाच्यलिङ्गकम् । चलनी चल[2]घर्षर्यो वारिभेदेऽपि

१ हैमे 'ख ग'पुस्तकद्वये '—स्रुग्भेदे—' इति पाठः ।

२ 'ट्यु' इत्यस्य तुडागमात्प्रागनादेश, 'अनद्यतन' इति निर्देशात् ।

१, अत्रत्य 'चलन' इति आस्तनपाठः विग्रहादिविरुद्धत्वात्परिवर्तितः ।

२ विश्वे '—कम्पने कम्पे कम्प्रे चलनकम्पनौ—' इति पाठः, मेदिन्यां च '—मत्त्रयोर्घस्मा—' इति पाठः ।

च क्वचित्' इति विश्व [८८।३९]-मेदिन्यौ [८७।६१-६२] ॥ (१)॥*॥ कम्पनशीलम्। 'कपि चलने' (भ्वा० आ० से०)। 'कम्पनं न द्वयोः कम्पे कम्प्रे स्यादभिधेयवत्' (इति मेदिनी) [८६।४४] ॥ (२) ॥*॥ 'नमिकम्पि-' (३।२।१६७) इति र ॥ (३) ॥*॥ चलति। अच् (३।१।१३४) ॥(४)॥*॥ लोडति। 'लुड विलोडने' (भ्वा० प० से०)। क्वचिदपवादविषयेऽप्युत्सर्गप्रवृत्तेरच् (३।१।१३४)। डलयोरेकत्वम् ॥(५)॥*॥ 'चरिचलि-' (वा० ६।१।१२) इति द्वित्वादि ॥ (६) ॥*॥ चञ्चति। 'चञ्चु गतौ' (भ्वा० प० से०)। बाहुलकादलच्। 'चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलश्चपले (कामुके)ऽनिले' (इति मेदिनी) [१५१।९०]॥(७)॥*॥ तरति। अलच् (बाहुलकात्)। 'तरलं चञ्चले पिङ्गे भास्करेऽपि त्रिलिङ्गकम्। हारमध्यमणौ पुंसि यवागूमुरयोः स्त्रियाम्[1]' इति विश्व-[१५३।५८] मेदिन्यौ [१५२।९५-९६] ॥ (८) ॥*॥ परिप्लवते। 'प्लुङ् गतौ' (भ्वा० आ० से०)। अच् (३।१।१३४) ॥ (९) ॥*॥ प्रज्ञादण् (५।४।३८)। 'पारिप्लवश्चाकुले स्याच्चञ्चले च' इति हैमः[2] (मेदिनी) [१६७।६०] ॥ (१०) ॥*॥ दश 'चलस्य'।

अतिरिक्तः समधिकः

अतिरिक्तः, समधिकः (२ त्रि), 'अतिरिक्त, फाजलू' के २ नाम हैं।

अतीति ॥ अतिरिच्यते स्म। 'रिचिर् विरेचने (रु० उ० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ सम्यगधिकः ॥ (२) ॥*॥ द्वे 'अधिकभूतस्य'।

दृढसंधिस्तु संहतः ॥ ७५ ॥

दृढसन्धिः, संहतः (२ त्रि), 'अच्छी तरह मिले या जुटे हुए' के २ नाम हैं।

द्विति ॥ दृढ सधिः संधानमस्य ॥ (१) ॥*॥ संहन्यते स्म। क्त (३।२।१०२)। 'संहतं संगते[3] दृढे' इति हैम [३।३२८], [मेदिनी ६६।१६५ च] ॥ (२) द्वे 'दृढसंधानस्य'।

कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्।
जरठं मूर्तिमन्मूर्तम्

कक्खटम्, कठिनम्, क्रूरम्, कठोरम्, निष्ठुरम्, दृढम्, जरठम्, मूर्तिमत्, मूर्तम् (९ त्रि), 'कठोर, कड़े' के ९ नाम हैं।

केति ॥ कक्खति। 'कख हसने' (भ्वा० प० से०)। 'शकादिभ्योऽटन्' (उ० ४।८१२) ॥*॥ ['खक्खटम्' इति] कवर्गद्वितीयादि—इत्यन्ये ॥ (१) ॥*॥ कठति। 'कठ कृच्छ्रजीवने' (भ्वा० प० से०) 'बहुलमन्यत्रापि' (उ० ३।४९) इनोनच्। 'कठिनमपि निष्ठुरे स्यात् स्तब्धेऽपि त्रिषु नपुंसकं स्थाल्याम्। कठिनी खटिकायामपि कठिना गुडशर्कराया च' इति विश्व[1] (मेदिनी) [८६।४५] ॥ (२) ॥*॥ कृन्तति। 'कृती छेदने' (तु० प० से०)। 'कृतेश्छः क्रू च' (उ० २।२१) इति रक्—कृणाति—इति स्वामि-मुकुटोक्तविग्रहस्तु चिन्त्यः। 'क्रूरा नृशंसघोरोष्णकठिना-' इति हैम [२।४१७] ॥ (३) ॥*॥ 'कठिचकिभ्यामोरन्' (उ० १।६४)। 'कठोरो पूर्णकठिनौ' इति हैम [३।५७०] ॥ (४) ॥*॥ नितिष्ठति। मद्गुरादि (उ० १।४१) ॥ (५) ॥*॥ दृंहति, दृंहति स्म वा। 'दृह दृहि वृद्धौ' (भ्वा० प० से०)। 'दृढ स्थूलबलयोः' (७।२।२०) इति साधुः। 'दृढं स्थूले नितान्ते च प्रगाढे बलवत्यपि[2]' (इति मेदिनी) [४३।२] ॥ (६)॥*॥ जीर्यति। 'जॄष् वयोहानौ' (दि० प० से०)। बाहुलकादठच्। 'जरठ कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत्[3]' इति विश्व-[४२।१०] [मेदिनी ३९।१३ च] ॥ (७) ॥*॥ मूर्तिः काठिन्यमस्यास्ति। मतुप् (५।२।९४)॥(८)॥*॥ मूर्च्छति स्म। 'मुर्च्छा मोहसमुच्छ्राययोः' (भ्वा० प० से०)। अकर्मकत्वात् क्तः (३।४।७२)। ('आदितश्च' (७।२।१६) इति नेट्)। 'न ध्याख्या-' (८।२।५७) इति नत्वं न। 'मूर्तं त्वाविषु मूर्च्छाले कठिने मूर्तिमत्यपि' इति विश्व[4] (मेदिनी) [५७।४६] ॥ (९) ॥*॥ नव 'कठिनस्य'।

प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥

प्रवृद्धम्, प्रौढम्, एधितम् (३ त्रि), 'बढ़े हुए' के ३ नाम हैं।

प्रेति ॥ प्रवर्धते स्म। 'वृधु वृद्धौ' (भ्वा० आ० से०) 'गत्यर्था-' (३।४।७२) इति क्तः ॥ (१) ॥*॥ प्रोह्यते

---

१. विश्वे '—हारमध्यमणावपि। भासुरे चाथ तरला···मता।' इति पाठ। मेदिन्या '—भास्वरेऽपि—' इति पाठ।

२. 'अथ परिप्लवावाकुलचञ्चलौ' इति हैमे (४।३१९) पाठादत्र 'मेदिनी'ति पाठो युक्तः।

३. हैमे पुस्तकत्रयेऽपि '—मिलिते—'इति पाठः।

१ विश्वे 'कठिन निष्ठुरे स्थाल्यां शर्करायां गुडस्य च। कठिना, कठिकायां तु कठिनीति प्रयुज्यते॥' इति (८९।४९) भिन्नपाठादत्रापि 'मेदिनी'त्येव पाठो युक्तः।

२. हैमे '—प्रगाढबलवत्यपि' इति पाठ।

३. विश्वे '—जरठः कठिनेऽप्यवत्' इति चरम पादः।

४. विश्वे 'मूर्तं मूर्तिमति प्रोक्तं मूर्च्छान्वि कठिनेऽपि च' इति भिन्नपाठादत्र 'मेदिनी'त्येव पाठो युक्तः।

स्म । 'वह प्रापणे' (भ्वा० उ० अ०) । क्त (३।२।१०२) 'प्राद्रूहो–' (वा० ६।१।८९) इति वृद्धि ॥ (२) ॥*॥ एधते स्म । 'एध वृद्धौ' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्त ॥ (३) ॥*॥ त्रीणि 'प्रवृद्धस्य' ।

**पुराणे प्रतनप्रत्नपुरातनचिरंतनाः ।**

पुराणम्, प्रतनम्, प्रत्नम्, पुरातनम्, चिरन्तनम् (५ त्रि), 'प्राचीन, पुराने' के ५ नाम हैं।

पुरेति ॥ पुरा भवम् । 'सायंचिरम्–' (४।३।२३) इति टयुटयुलौ । 'पुराणप्रोक्तेषु–' (४।३।१०५) इति निर्देशात्तुण् न । 'अबाधकान्यपि निपातनानि'[१] इति पक्षे भवति । पुराणं प्रत्नशास्त्रयोः । पुराणं षोडशपणे' (इति हैम) [३।२२७] ॥ (१) ॥*॥ 'नश्च पुराणे प्रात्' (वा० ५।४।३०) इति टयु[२] ॥ (२) ॥*॥ त्न (वा० ५।४।३०) च ॥ (३) ॥*॥ पुरा भवम् । टयु (४।३। २३) ॥ (४) ॥*॥ चिरे भवम् । 'सायंचिरम्–' (४।३। २३) इति टयु, निपातनान्मान्तत्वम् ॥ (५) ॥*॥ पञ्च 'पुरातनस्य' ।

**प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥**

**नूत्नश्च**

प्रत्यग्रम्, अभिनवम्, नव्यम्, नवीनम्, नूतनम्, नवम्, नूत्नम् (७ त्रि), 'नवीन, नये' के ७ नाम हैं।

प्रेति ॥ प्रतिनवमग्रमस्य ॥ (१) ॥*॥ अभिनवते । 'णु स्तुतौ' (अ० प० अ०) । 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ 'अघो यत्' (३।१।९७) ॥ (३) ॥*॥ नव एव । 'नवस्य नूरादेशस्त्नप्तनप्खाश्च प्रत्ययाः' (वा० ५। ४।३०) ॥ (७) ॥*॥ (५) ॥*॥ (४) ॥*॥ नूयते । अप् (३।३।५७) ॥ (६) ॥*॥ सप्त 'नूतनस्य' ।

**सुकुमारं तु कोमलं मृदुलं मृदु ।**

सुकुमारम्, कोमलम्, मृदुलम्, मृदु (४ त्रि), 'कोमल, मुलायम' के ४ नाम हैं।

स्विति ॥ सुष्ठु कुमायते । 'कुमार क्रीडायाम्' चुरादन्त । 'पुंसि–' (३।३।११८) इति घ । 'एरच्' (३।३। ५६) वा । यद्वा–सुकाम्यते । 'कमे किदुच्चोपधायाः' (उ० ३।१३८) इत्यारन् अत उत्वं च ॥ (१) ॥*॥ बाहुलकात् कलच्, अत उत्वं[१] च । ['अथ] 'कोमलं मृदुले जले'[२] इति विश्वः [१५६।९५] (मेदिनी) [१५१।८४] ॥ (२) ॥*॥ मृदुर्गुणोऽस्यास्ति । 'सिध्मादिभ्यश्च' (५।२।९७) इति लच् ॥ (३) ॥*॥ मृद्यते । 'मृद क्षोदे'[३] (क्र्या० प० से०) । 'प्रथिम्रदिभ्रस्जाम्–' (उ० १।२८) इति कु सम्प्रसारणं च । मृगय्वादित्वात् (उ० १।३७) कु–इति मुकुटो व्यर्थः । 'मृदुतीक्ष्णे च कोमले' इति हैम [२।२३१]। (४) ॥*॥ चत्वारि 'कोमलस्य' ।

**अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्[४] ॥ ७८ ॥**

अन्वक्, अन्वक्षम्, अनुगम्, अनुपदम् (४ न अ०), 'बाद' 'पीछे' के ४ नाम हैं।

अन्वेति ॥ अन्वञ्चति । 'अञ्चु गतौ' (भ्वा० प० से०)। क्विन् (३।२।५९) ॥ (१) ॥*॥ अनुगतमक्षमिन्द्रियम् ॥ (२) ॥*॥ अनु गच्छति । 'गम्लृ गतौ' (भ्वा० प० अ०)। 'अ न्येभ्योऽपि–' (वा० ३।२।४८) इति ड ॥ (३) ॥*॥ पदस्य पश्चात् । पश्चादर्थेऽव्ययीभावः (२।१।६) ॥ (४) ॥*॥ चत्वारि 'पश्चात्' इत्यर्थे ।

---

१ अबाधकान्यपि निपातनानि' इत्यस्य नागेशभट्टैन परिभाषेन्दुशेखरे भाष्यविरुद्धत्वोक्त्याऽत्र 'पुराण'शब्देन 'पुरातन'शब्दस्य प्राप्तोऽपि बाध पृषोदरादित्वान्नेति म० म० शिवदत्तशर्माणः ।

२. अस्मिन् वार्तिके पुराणार्थे वर्तमानात् 'प्र'शब्दाद्वा वक्तव्य, चात् पूर्वोक्ताः' । प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्' इति सि० कौ०,"नश्च पुराणे प्राद्वक्तव्य । त्नप्-तनप्-खाश्च प्रत्ययाः । प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्' इति भाष्येण च सह विरुद्धत्वादत्र 'टयु'विधानं नोचितम् । अत एव 'पुरात् त्नतनौ प्रादेशश्च भवार्थे' इति स्वाम्यपि 'तन' प्रत्ययमेव कृतवान् ।

१ "कुटिकशिकौतिभ्य प्रत्ययस्य मुट्" । कुड्मल । कुडेरपि कुड्मल । कश्मलम् । बाहुलकाद्गुण, कोमलम् ।" इति सि० कौ० विरुद्धमिदम् ।

२ विश्वे 'कोमलो मृदुले दले' इति पाठ ।

३. मृद क्षोदे' इति क्र्यादिस्थस्य ऋकारवतो धातो संप्रसारणानौचित्यादत्र 'म्रद मर्दने' इति भौवादिकधातो सम्प्रसारणं युक्तम् । अत एव सि० कौ० 'प्रथिम्रदिभ्रस्जा सप्रसारण सलोपश्च' (उ० १।२८) इति सूत्रस्य व्याख्याया 'त्रयाणा कु सम्प्रसारम् । भ्रस्ज सलोपश्च । पृथु, मृदु" इत्युक्ति सगच्छते ।

४. 'पीयूष'व्याख्याकृता मूलग्रन्थमनुसृत्य 'अनुपद'-शब्दस्यैवाव्ययक्लीबत्वे उक्ते । क्षीरस्वामी तु 'अन्वक् अन्वक्षम् अनुपदम्' इत्येषां त्रयाणामप्यव्ययत्व (अन्वक्षम्-अनुपदम्' इत्यनयो ) द्वयो क्लीबत्वमाह । वैजयन्ती कारस्तु 'अव्ययीभावोऽनुपदमन्वगन्वक्षमित्यपि' इति (पृ० २११ श्लो० १२८ ) वचनेन त्रयाणामप्यव्ययीभावमाह । विशेषजिज्ञासुभिर्वाचस्पत्य (पृ० २१७ ) द्रष्टव्यम् ।

प्रत्यक्षं स्यादैन्द्रियकम्

प्रत्यक्षम्, ऐन्द्रियकम् (२ त्रि), 'इन्द्रियसे ग्राह्य (ग्रहण करने योग्य)' के २ नाम हैं।

प्रेति ॥ अक्षमिन्द्रियं प्रतिगतम्। 'अत्यादय'–' (वा० २।२।१८) इति समास. ॥ (१) ॥*॥ इन्द्रियेणानुभूयते। कुलालादित्वात् (४।३।११८) वुञ् ॥ (२) ॥*॥ द्वे 'इन्द्रियज्ञान[ज्ञेय]स्य' [रूप-रस-गन्धादेः]।

अप्रत्यक्षमतीन्द्रियम्।

अप्रत्यक्षम्, अतीन्द्रियम् (२ त्रि), 'इन्द्रियोंसे नहीं ग्रहण करने योग्य' के २ नाम हैं।

अप्रेति ॥ भिन्नं प्रत्यक्षात् ॥*॥ 'अनध्यक्षम्' [अत्यध्यक्षम्] इति पाठ.—इत्यन्ये। अक्षेष्वधि। अध्यक्षम्। विभक्त्यर्थेऽव्ययीभाव. (२।१।६)। अतिक्रान्तमध्यक्षम् ॥ (१) ॥*॥ इन्द्रियमतिक्रान्तम् ॥ (२) ॥*॥ द्वे 'इन्द्रियेणाज्ञात[ज्ञेय]स्य' [परिमाण्वादे.]।

एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि च।

एकतानः, अनन्यवृत्तिः, एकाग्रः, एकायनः, एकसर्गः, एकाग्र्यः, एकायनगतः (७ त्रि), 'एकाग्र' के ७ नाम हैं।

एकेति ॥ एक तानयति। 'तनु श्रद्धोपकरणयोः'(चु० उ० से०)। 'कर्मण्यण्' (३।२।१)। एकस्तानो विस्तारोऽस्य इति वा ॥ (१)॥*॥ न अन्या वृत्तिरस्य ॥(२) ॥*॥ एकम् एकस्मिन् वा अग्रमस्य ॥ (३) ॥*॥ एकमयनमस्य। (४)॥*॥ एक एकस्मिन् वा सर्गो निश्चयोऽस्य ॥(५)॥*॥ एकमग्रं ज्ञेयमस्य ॥*॥ प्रज्ञादिभ्यश्च (५।४।३८)'ऐकाग्र्य.' इति ॥ (६) ॥*॥ एक च तदयनं च। एकायन गतः। एकस्मिन्नयने गतं ज्ञानमस्य इति वा ॥ (७) ॥*॥ सप्त 'एकाग्रस्य'।

पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः

आदिः (ति० पु), पूर्व., पौरस्त्यः, प्रथमः, आद्यः (४ त्रि), 'पहला, प्रथम' के ५ नाम हैं।

पुमिति ॥ आ प्रथमं दीयते गृह्यते[१]। 'उपसर्गे घो. कि' (३।३।९२)॥(१)॥*॥ पूर्वति। 'पूर्व पूरणे'(भ्वा० प० से०)। अच् (३।१।१३४)। 'पूर्वं तु पूर्वजे। प्रागग्रश्रुतभेदेषु[१] (इति हैमः) [२।५४४-५४५] ॥ (२) ॥*॥ पुरो भवः। 'दक्षिणापश्चात्पुरसस्त्यक्' (४।२।९८) ॥ (३) ॥*॥ प्रथते। 'प्रथ प्रख्याने' (भ्वा० आ० से०)। 'प्रथेरमच्' (उ० ५।६८)। 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' (इति मेदिनी) [१११।४७] ॥ (४) ॥*॥ आदौ भवः। दिगादित्वात् (४।३।५३) यत् ॥ (५) ॥*॥ पञ्च 'आद्यस्य'।

अथान्तियाम् ॥ ८० ॥
अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम्।

अन्तः (पु न), जघन्यम्, चरमम्, अन्त्यः, पाश्चात्यः, पश्चिमः (५ त्रि), 'अन्त, (आखीर) वाले'के ६ नाम हैं।

अमेति ॥ अमति। 'अम गतौ' (भ्वा० प० से०)। बाहुलकात्तन्, अन्तति वा। 'अति बन्धने' (भ्वा० प० से०)। अच् (३।१।१३४)। 'अन्त. स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। (अवयवेऽपि)' इति हेमचन्द्र [२।१५९] ॥ (१) ॥*॥ जघने भवम्। दिगादित्वात् (४।३।५४) यत्। शरीरावयवत्वात् (वा० ४।३।५५)। 'जघन्यं मेहने क्लीबं चरमे गर्हितेऽन्यवत्' (इति मेदिनी) [११९।८६]॥(२)॥*॥ चरति। 'चर गतौ' (भ्वा० प० से०)। 'चरेश्च'(उ० ५।६९)इत्यमच् ॥(३)॥*॥ अन्ते भवम्। दिगादित्वात् (४।३।५४)। 'अन्त्यस्त्वन्तभवेऽधमे' इति हैम. [२।३४८] ॥ (४) ॥*॥ पश्चाद्भवम्। दक्षिणा–' (४।२।९८) इति त्यक् ॥ (५) ॥*॥ 'अग्रादिपश्चाड्डिमच्' (वा० ४।३।२३) ॥ (६) ॥*॥ षट् अन्त्यस्य'।

मोघं निरर्थकम्

मोघम्, निरर्थकम् (२ त्रि), 'निष्फल, बेकाम' के २ नाम हैं।

मविति ॥ मुह्यन्त्यस्मिन्। 'मुह वैचित्ये' (दि० प० अ०)। 'हलश्च' (३।३।१२१) इति घञ्। न्यङ्क्वादिः (७।३।५३)।—मुहेरच—इति मुकुटोक्तिश्चिन्त्या[२]। 'मोघो हिने[३] निष्फले च मोघा स्यात्पाटलातरौ' इति हैम. [२।५५] ॥ (१) ॥*॥ निर्गतोऽर्थोऽस्मात् ॥(२)॥*॥ द्वे 'निष्प्रयोजनस्य'।

१. एष एव विग्रहो वाचस्पत्येऽपि। स्वामी तु 'आदीयते प्रथममित्यादि'रिति विगृहीतवान्। युक्त चैतत्, 'आ' इत्यस्य 'प्रथमम्' इत्यर्थस्य कथञ्चित्सम्भवत्वेऽपि 'दीयते' इत्यस्य 'गृह्यते' इत्यर्थासम्भवात्। अत एवाभिधानचिन्तामणौ 'आदि'शब्दस्य स्वोपज्ञवृत्तौ स्वाम्युक्त एव विग्रहो हेमचन्द्राचार्येणापि कृत इत्यलम्।

१. हैमे पुस्तकत्रयेऽपि'—प्रागग्रे श्रुतिभेदे च'इत्येवं पाठ।

२. 'कृत्यल्युटो बहुलम्' इति सूत्रे 'कृतो बहुलम्' इति भाष्यसम्मते न्यासेऽधिकरणेऽप्यच. प्रवृत्तेः न्यङ्क्वादित्वात्कुत्वस्य सि० कौ० अप्यभीष्टतया मुकुटोक्त सम्यगेव। अत एव वाचस्पत्येऽच्प्रत्ययेनापि 'मोघ'शब्दस्य सिद्धिरुक्ता।

३. हैमपुस्तकत्रयस्थ. '—दीने—' इत्येव पाठो विश्व-(२९१५) मेदिन्यो (२६।४) रनुरोधात्समीचीन.।

स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥ ८१ ॥

स्पष्टम्, स्फुटम्, प्रव्यक्तम्, उल्बणम् ( ४ त्रि ), 'स्पष्ट' के ४ नाम हैं।

स्पेति ॥ स्पाश्यते स्म। स्पश बाधनस्पर्शनयो (भ्वा० उ० से०) ण्यन्तः। क्तः (३।२।१०२)। वा दान्त- (७।२।२७) इति साधु। मुकुटस्तु—स्पश्यते स्म—इति विगृहीतवान्। तत्रेट्प्रसङ्गो दुर्वारः ॥ (१) ॥*॥ स्फुटति। स्फुट विकसने (तु० प० से०)। इगुपध-' (३।१।१३५) इति कः। स्फुटो व्यक्तप्रफुल्लयोः। सितं ध्यात्वे इति हैम [२।१०१-१०२] ॥ (२) ॥*॥ प्रव्यज्यते स्म। अञ्जू व्यक्त्यादौ (रु० प० से०)। क्तः (३।२।१०२)। प्रव्यक्तं स्म इति वा। अञ्जु विशेषणे' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (३) ॥*॥ उल्बणति। वण शब्दे (भ्वा० प० से०)। अच् (३।१।१३४)। पृषोदरादि (६।३।१०९)॥ (४) ॥*॥ चत्वारि स्पष्टस्य।

साधारणं तु सामान्यम्

साधारणम्, सामान्यम् ( २ त्रि ), 'साधारण, मामूली' के २ नाम हैं।

सेति ॥ सह आधारेण। आग्नीध्रसाधारणादञ्' (वा० ५।४।३६) इति स्वार्थेऽञ्। स्त्रियां ङीप् (४।१।१५) ॥ (१)॥*॥ सह मानेन। समानस्य भाव। ष्यञ् (५।१।१२४)। चातुर्वर्ण्यादित्वाद् (वा० ५।१।१२४) वा स्वार्थे ष्यञ् (२) ॥*॥ द्वे 'अनेकसंबन्धिन एकस्य'।

एकाकी त्वेक एककः[1]।

एकाकी, एक, एकक ( ३ त्रि ), 'अकेले' के ३ नाम हैं।

एकेति ॥ एक एव। एकादाकिनिच्चासहाये' (५।३।५२) ॥ (१) ॥*॥ चकारात् कन्लुकौ च। 'एकः संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' (इति मेदिनी) [२।१८] ॥ (२)॥*॥(३) ॥*॥ त्रीणि असहजातीयासहायस्य।

भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥ ८२ ॥

भिन्न ( भिन्नके पर्यायवाचक सब शब्द ), अन्यतर, एक, त्व, अन्य, इतर ( ६ त्रि ), 'भिन्न, दूसरे, अलग' के ६ नाम हैं।

भीति ॥ भिन्नोऽर्थो यथा तं ॥(१)॥*॥ अ य एव। अल्पाच्तरम्' (२।२।३४) इतिवत् स्वार्थे तरप्।—द्वयो र्निर्धारणे डतरच् (५।३।९२)—इति मुकुटस्त्वपाणिनीय ॥*॥ क्वचित् एकतर इति पाठ। तत्र एकाच्च प्राचाम्' (५।३।९४) इति डतरच्। (२) ॥*॥ एति। इण्भी- (उ० ३।४३) इति कन् ॥ (३) ॥*॥ तनोति। तनोतेरनश्च व (उ० २।६३) धातु विवप्-इत्यक। प्राग मानित्वात्तम् वकल्पिकं। कश्चित्तु विकल्पमनानुवर्तयन्ति। एवं मतभेदात्सिद्धौ त्वत्त्वशब्दौ सर्वादिषु पठितौ ॥ (४) ॥*॥ अनिति। अन प्राणने ( अ० प० से० )। अघ्न्या दित्वात् (उ० ४।११२) य। अन्योऽसदृशतरयो इति हैम [२।३४८]। (५) ॥*॥ तरणम्। ऋदोरप् (३।३।५७) तरः। ए कामस्य तरः। इना कामेन तरति इति वा। अच् (३।१।१३४)। इतरः पामरेऽयस्मिन् इति हेमचन्द्र [३।५५६]॥(६)॥*॥ षट् भिन्नार्थका।

उच्चावचं नैकभेदम्

उच्चावचम्, नैकभेदम् ( २ त्रि ), 'अनेक प्रकारवाले के २ नाम हैं।

उच्चेति ॥ उदक् चावाक् च। मयूरव्यंसकादयश्च' (२।१।७२) इति साधु ॥ (१) ॥*॥ एको भेदोऽस्य। न एकभेदम्। 'सुप्सुपा' (२।१।४) इति समास। न एको भेदोऽत्र इति वा। उत्तरपदशब्दस्य समासचरमावयवे रूढत्वान्मध्यमपदे नलोपाभाव ॥ (२) ॥*॥ द्वे 'अनेक प्रकारस्य'।

उच्चण्डमविलम्बितम्।

उच्चण्डम्, अविलम्बितम् ( २ त्रि ), 'जल्दबाज, शीघ्रता करनेवाले' के २ नाम हैं।

विति ॥ उच्चण्डनम्। चडि कोपे (भ्वा० आ० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥ विलम्ब्यते स्म। लबि अवस्रंसने (भ्वा० आ० से०)। क्तः (३।२।१०२)। न विलम्बितम् ॥*॥ स्वामी—अवलम्बितम्—इति पठति। (२) ॥*॥ द्वे उत्तालस्य' [ उत्तान' इत्यादयस्य] ॥

अरुन्तुदं तु मर्मस्पृक्

अरुन्तुदम्, मर्मस्पृक् ( २ त्रि ), 'मर्मस्थलको पीड़ा देने वाले' के २ नाम हैं।

अवेति ॥ अरुपि तुदति। 'तुद व्यथने' (तु० उ० अ०)। विध्वरुपोस्तुदः (३।२।३५) इति खच्। अरु द्विषत्-' (६।३।६७) इति मुम् ॥ (१) ॥*॥ मर्म स्पृशति। स्पृश उपतापे (तु० प० अ०)। स्पृशोऽनुदके-' (३।२।५८) इति क्विन् ॥ (२) ॥*॥ द्वे मर्मपीडकस्य।

---

[1] एकल' इति पाठान्तरम्। तत्प्रयोगो यथा श्रीमद्भागवते— तस्मिन् वावकिल स एकल पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभि —" ( ५।७।११ ) इति। अ यत्रच— जायेत चैकल प्राणी प्रलीयेत तथैकल। एकलः सुकृतं भुङ्क्तेऽश्नीयाद् दुष्कृतमेकल।' इति।

अबाधं तु निरर्गलम् ॥ ८३ ॥

अबाधम्, निरर्गलम् ( २ त्रि ), 'अबाध' अर्थात 'बिना रोक-टोकवाले' के २ नाम हैं।

अबेति ॥ न बाधाऽस्य ॥ (१) ॥*॥ निष्क्रान्तमर्गलायाः। 'निरादय.–' (वा० २।२।१८) इति समासः ॥ (२) ॥*॥ द्वे 'अबाधितस्य'।

प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च।

प्रसव्यम्, प्रतिकूलम्, अपसव्यम्, अपष्ठु (४ त्रि), 'प्रतिकूल, उलटा' के ४ नाम हैं।

प्रेति ॥ प्रगत सव्यात्। 'प्रसव्यं वाच्यलिङ्ग [स्यात्] प्रतिकूलानुकूलयोः' (इति मेदिनी) [११९।९२] ॥ (१) ॥*॥ प्रतीप कूलात् ॥ (२) ॥*॥ अपगत सव्यात्। 'अपसव्य त्रिलिङ्ग तु' दक्षिणप्रतिकूलयो.' इति विश्व. [१२४।११७] (मेदिनी) [१२१।११७] ॥ (३) ॥*॥ अपतिष्ठति। 'अपदु.सुषु स्थः' (उ० १।२५) इति कु। सुषामादि. (८।३।९८)। 'अपष्ठु पुंसि काले च वामे स्यादन्यलिङ्गक' (इति मेदिनी) [३९।१०] (४) ॥*॥ 'चत्वारि विरुद्धार्थस्य'।

वामं शरीरं सव्यं स्यात्

सव्यम् (त्रि), 'शरीरके वाम भाग' का १ नाम है।

वेति ॥ सूयते। 'षू प्रेरणे' (तु० प० से०)। 'अचो यत्' (३।१।९७)। 'सव्य वामे च दक्षिणे' इत्यजयः। 'सव्य तु दक्षिणे। वामे² च प्रतिकूले च' इति विश्व³ (हैम.) [२।३८८-३८९] ॥ (१) ॥*॥ एक 'सव्यशरीरस्य'।

अपसव्यं तु दक्षिणे ॥ ८४ ॥

अपसव्यम् (त्रि), 'शरीरके दाहिने भाग'का १ नाम है।

अपेति ॥ अपक्रान्तं सव्यात् ॥ (१) ॥*॥ एकं शरीर 'दक्षिणभागस्य'।

संकटं ना तु संबाधः

संकटम् (त्रि), संबाधः (नि० पु), 'तङ्ग रास्ता, या गली आदि'के २ नाम हैं।

समिति ॥ संकटति। 'कटे वर्षावरणयो.' (भ्वा० प० से०)। अच् (३।१।१३४) यद्वा–सबाधार्थात् 'सम्'शब्दात् स्वार्थे 'सप्रोदश्च–' (५।२।९२) इति कटच् ॥ (१) ॥*॥ सम्यग् बाधन्तेऽत्र। 'बाधृ लोडने' (भ्वा० आ० से०) 'हलश्च' (३।३।१२१) इति घञ्। 'सबाध. सकटे भगे' इति विश्वः [८३।२१] [मेदिनी ८१।३७ च] ॥ (२) ॥*॥ द्वे 'सकीर्णस्य'।

कलिलं गहनं समे।

कलिलम्, गहनम् (२ त्रि), 'दुष्प्रवेश्य (मुश्किलसे प्रवेश करने योग्य) रास्ता, गली, जङ्गल आदि' के नाम हैं।

केति ॥ कलते, कल्यते वा। 'कल शब्दसंख्यानयोः' (भ्वा० आ० से०) 'सलिकल्य–' (उ० १।५४) इतीलच् ॥ (१) ॥*॥ गाह्यते। 'गाहू विलोडने' (भ्वा० आ० से०) 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्। पृषोदरादित्वात् (६।३।१०९) ह्रस्व। गस्य गानस्य गतेर्वा हननम्। 'गहनं वनदु खयो.¹। गह्वरे कलिले चापि' इति विश्व-हैमौ² [३।३९८] ॥ (२) ॥*॥ द्वे 'दुष्प्रवेशस्य' ॥

संकीर्णं संकुलाकीर्णे

संकीर्णम्, संकुलम्, आकीर्णम् (३ त्रि), 'सभा, देवदर्शन या मेले आदिके कारण मनुष्य आदिसे ठसाठस भरे हुए स्थान आदि' के ३ नाम हैं।

समिति ॥ संकीर्यते स्म। 'कॄ विक्षेपे' (तु० प० से०)। क्त (३।२।१०२)। संकीर्णं निचितेऽपि स्यादशुद्धे त्वभिधेयवत्'³ (इति मेदिनी) [५१।८२] ॥ (२) ॥*॥ सकोलति। 'कुल सस्त्याने' (भ्वा० प० स०)। 'इगुपध–' (३।१।१३५) इति कः। यत्तु–शकिधातोरुलचि 'शकुलम्' तालव्यादि इति तु स्वामी—इति मुकुटेनोक्तम्। तच्चिन्त्यम्। संकोलति' इति स्वामिना विगृहीतत्वात् ॥ (२) ॥*॥ आकीर्यते स्म। कॄ विक्षेपे' (तु० प० से०)। क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि 'नानाजातीयसमिलितस्य'। यथा सकीर्णवर्ग। केचित्तु एतान् पूर्वपर्यायानाहु.। सकीर्णमृषिपत्नीनाम्' इति प्रयोगात् ॥

मुण्डितं परिवापितम् ॥ ८५ ॥

मुण्डितम्, परिवापितम् (२ त्रि) 'मुण्डित' अर्थात् 'मुण्डन किये हुए' के २ नाम हैं।

---

१ विश्वे 'त्रिलिङ्गं तु' इत्ययो नास्ति। मेदिन्यामपि '—त्रिलिङ्गस्तु—' इति पाठ।

२. वामार्थे 'सव्य'शब्दप्रयोगो यथा—'उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विज। सव्ये प्राचीन आवीती' इति मनु. (२।६३)।

३. विश्वे 'सव्यं वामप्रतीपयो.' इति (११७।७३) भिन्नपाठादत्र 'मेदिनी'त्येव पाठयम्।

१. हैमे 'क'पुस्तके '–वनगुह्ययो।–' इति पाठ।

२. विश्वे 'गहनं गहने दु खे विपिने कलिलेऽपि च' इति (८८।३३) भिन्नपाठादत्र 'हैम' इत्येव पाठः समुचितः।

३ मेदिन्या '—चापि भेद्यवत्', '–चापि वाच्यवत्' इति पाठभेदः।

म्विति ॥ मुण्ड्यते स्म । 'मुडि खण्डने' (भ्वा० आ० से०)। क्त (३।२।१०२) ॥ (१) ॥*॥ परिवाप्यते स्म । मुण्डनार्थोऽत्र[1] वपि । ण्यन्त । क्त (३।२।१०२)॥*॥ द्वे 'कृतमुण्डनस्य'।

[2]ग्रन्थिते संदितं दृब्धम्

ग्रन्थितम्, सदितम्, दृब्धम् (३ त्रि), 'गुथी हुई माला आदि' के ३ नाम हैं।

ग्रेति ॥ ग्रथ्यते स्म । 'ग्रन्थ संदर्भे' (क्र्या० प० से०) । क्त (३।२।१०२) ॥*॥ ग्रन्थितम्' इति पाठान्तरम् । तत्र ग्रथि कौटिल्ये' (भ्वा० आ० से०) इति धातु । ग्रन्थित गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम्' (इति मेदिनी) [६२।१०७] ॥ (१) ॥*॥ सदीयते स्म । दो अवखण्डने' (दि० प० अ०) । क्त (३।२।१०२) । 'द्यतिस्यति–' (७।४।४०) इतीत्वम् ॥*॥ गुम्फितम्' इति पाठे—'गुम्फ ग्रन्थे' (तु० प० से०)। ण्यन्त ॥ (२) ॥*॥ दृभ्यते स्म । 'दृभी ग्रन्थे' (तु० प० से०) । क्त (३।२।१०२) ॥ (३) ॥*॥ त्रीणि 'गुम्फितस्य' ॥

विसृतं विस्तृतं ततम् ।

विसृतम् , विस्तृतम् , ततम् (३ त्रि), फैले हुए' के ३ नाम हैं।

वीति ॥ विसरति स्म । 'सृ गतौ' (भ्वा० प० अ०)। 'गत्यर्था–' (३।४।७२) इति क्त ॥ (१) ॥*॥ विस्तीर्यते स्म । 'स्तृञ् आच्छादने' (क्र्या० उ० से०) । क्त (३।२।१०२) ॥ (२) ॥*॥ तन्यते स्म । 'तनु विस्तारे' (त० उ० से०) । क्त (३।२।१०२) । [अथ] 'ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुल्लिङ्गस्तु सदागतौ[3]' (इति मेदिनी) [५५।२०-२१] ॥ (३) त्रीणि 'लब्धप्रसरस्य'।

अन्तर्गतं विस्मृतं स्यात्

अन्तर्गतम्, विस्मृतम् (२ त्रि), 'भूले हुए' के २ नाम हैं।

अन्तेति ॥ अन्तर्गम्यते स्म, गच्छति स्म वा । गम्लृ गतौ' (भ्वा० प० अ०) । क्त (३।२।१०२, ३।४।७२) । 'अन्तर्गतं विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत्' इति विश्व[1] [७०।१७८] । (मेदिनी) [६७।७९] ॥ (१) ॥*॥ विस्मर्यते स्म । 'स्मृ आध्याने' (भ्वा० प० अ०) । क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'विस्मृतस्य'।

प्राप्तप्रणिहिते समे ॥ ८६ ॥

प्राप्तम्, प्रणिहितम् (२ त्रि), 'पाये हुए' के २ नाम हैं।

प्रेति ॥ प्राप्यते स्म । 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। क्त (३।२।१०२) । 'प्राप्त लब्धे समञ्जसे' (इति मेदिनी) [५६।३२] ॥ (१) ॥*॥ प्रणिधीयते स्म । क्त (३।२।१०२) । 'दधातेर्हिः' (७।४।४२) ॥ (२) ॥*॥ द्वे 'स्थापितस्य'।

वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।

वेल्लित , प्रेङ्खित , आधूत , चलित , आकम्पित , धुत (६ त्रि), थोड़ा काँपे या हिले हुए' के ६ नाम हैं।

वेल्लीति ॥ वेल्ल्यते स्म । 'वेल्ल चलने' (भ्वा० प० से०) । क्त (३।२।१०२) । 'वेल्लितं गमने क्लीबं कुटिले विधुते त्रिषु' (इति मेदिनी) [६६।१६१] ॥ (१) ॥*॥ प्रेङ्ख्यते स्म । 'इखि गतौ' (भ्वा० प० से०) । क्त (३।२।१०२) ॥ (२) ॥*॥ आधूयते स्म । 'धू विधूनने' (तु० प० से०), धूञ् कम्पने (क्र्या० प० से०) वा । क्त (३।२।१०२) ॥ (३) ॥*॥ चल्यते स्म । 'चल कम्पने' (भ्वा० प० से०) । क्त (३।२।१०२) ॥ (४) ॥*॥ आकम्प्यते स्म । 'कपि चलने' (भ्वा० आ० से०) । क्त (३।२।१०२) ॥ (५) ॥*॥ धूयते स्म । 'धूञ् कम्पने' (स्वा० उ० अ०)। क्त (३।२।१०२) । [अथो] धुतम् । त्यक्ते विधूते' इति हैम[2] (मेदिनी) [५६।२७-२८] ॥ (६) ॥*॥ षट् 'ईषत्कम्पितस्य'।

नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥

नुत्त , नुन्न, अस्त , निष्ठ्यूत , आविद्ध , क्षिप्त , ईरित (७ त्रि), 'भेजे या किसी काममें लगाये हुए' के ७ नाम हैं।

न्विति ॥ नुद्यते स्म । णुद प्रेरणे' (तु० उ० अ०)।

---

१ यत्लक्ष्य—'प्रयागे भास्करक्षेत्रे पितृमातृवियोगतः । आधाने सोमपाने च पञ्चसु वपनं स्मृतम् ॥' इति प्रा० त० इति वाच० (पृ० ४८४७) । वपन केशमुण्डनमित्यर्थ । परिपूर्वो वपिर्मुण्डनार्थ यथा–'मद्रात्परिवापणे' ( पा० सू० ५।४।६७ ) । इति स्वामी ।

२ 'गुन्थित–' इति क्वचित्' इति पीयूषव्याख्या । 'गुम्फितं गुफितं च' इति पाठ'' इति महेश्वर । 'मदितं मदितम्' इति पाठे—मृद क्षोदे' (क्र्या० )—अनेकार्थत्वाद् ग्रथने इति स्वामी इति मुकुट ' इति दाधिमथा । किं तु मुकुटोक्तं क्षी० स्वा० वचनं तट्टीकायां नैव लभ्यते ।

३ मेदिन्या '—समीरणे' इति पाठ ।

१ विश्वे—कथ्यते' इति पाठ ।

२ हैमे 'धुतं त्यक्ते कम्पिते च' इति ( २।१७७ ) इति पाठादत्र मेदिनी'स्येव पाठ्यम् ।

क्तः (३।२।१०२)। 'मृदविद-' (८।२।५५) इति वा नत्वम् ॥ (१) ॥ * ॥ (२) ॥*॥ अस्यते स्म। 'असु क्षेपणे' (दि० प० से०)। क्त. (३।२।१०२)। 'अस्तः क्षिप्ते पश्चिमाद्रौ' इति हैम. [२।१६०] ॥ (३) ॥*॥ निष्ठीव्यते स्म। 'ष्ठिवु निरसने' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'यस्य-'(७।२।१५)इति नेट्। 'च्छ्वोः-' (६।४।१९) इत्यूठ् ॥ (४) ॥*॥ आविध्यते स्म। 'व्यध ताडने' (दि० प० अ०)। क्त. (३।२।१०२)। 'आविद्धो वाच्यलिङ्ग. स्यात्कुटिले च पराहते' (इति मेदिनी) [८०। २८] ॥ (५) ॥*॥ क्षिप्यते स्म। 'क्षिप प्रेरणे' (तु० उ० अ०)। क्त (३।२।१०२) ॥ (६) ॥*॥ ईर्यते स्म। 'ईर गतौ कम्पने च' (अ० आ० से०)। क्तः (३। २।१०२) ॥ (७) ॥*॥ सप्त 'प्रेरितस्य'।

परिक्षिप्तं तु निवृतम्

परिक्षिप्तम्, निवृतम् ( २ त्रि ), 'खाईं या दिवाल आदिसे घिरे हुए' के २ नाम हैं।

पेति ॥ परितः क्षिप्यते स्म। क्तः (३।२।१०२) ॥ (१) ॥*॥ निव्रियते स्म। 'वृञ् वरणे' (क्र्या० उ० से०)। क्तः (३।२।१०२)॥ (२) ॥*॥ द्वे 'परिखादिना वेष्टितस्य'।

मूषितं मुषितार्थकम्।

मूषितम्, मुषितम् ( मुषितके पर्याय-वाचक सब शब्द। २ त्रि ), 'चुराये हुए के २ नाम हैं।

म्विति ॥ मूष्यते स्म। 'मूष स्तेये'(भ्वा० प० से०)। क्तः (३।२।१०२)॥ (१)॥*॥ मुष्यते स्म। 'मुष स्तेये' (क्र्या० प० से०)। क्त. (३।२।१०२)। 'मुषित[२] हृत-खण्डिते[३] इति विश्वः [६३।८३], (मेदिनी) [६३।१४३]। (२) ॥*॥ द्वे 'चोरितस्य'।

प्रवृद्धप्रसृते

प्रवृद्धम्, प्रसृतम् ( २ त्रि ), 'पसरे (फैले) हुए' के २ नाम हैं।

प्रेति ॥ प्रवर्धते स्म ॥ 'वृधु वृद्धौ' (भ्वा० आ० से०)। 'गत्यर्था-' (३।४।७२) इति क्तः ॥ (१) ॥*॥ प्रसरति स्म। 'सृ गतौ' (भ्वा० प० अ०) क्त. (३।४।७२) ॥ (२) ॥*॥ द्वे 'प्रसृतस्य'।

न्यस्तनिसृष्टे

न्यस्तम्, निसृष्टम् ( २ त्रि ), 'फेंके हुए' के २ नाम हैं।

न्येति ॥ न्यस्यते स्म। 'असु क्षेपणे' (दि० प० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ निसृज्यते स्म। 'सृज विसर्गे' ( दि० आ० अ०)॥ क्त. (३।२।१०२) ॥ (२) ॥*॥ द्वे 'त्यक्तस्य'।

गुणिताहते ॥ ८८ ॥

गुणितम्, आहतम् ( २ त्रि ), 'गुणा किये हुए अङ्क या बटी ( बरी ) हुई रस्सी आदि' के २ नाम हैं।

ग्विति ॥ गुण्यते स्म। 'गुण आमन्त्रणे' ( चु० उ० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ आहन्यते स्म। 'हन्' (अ० प० अ०)। क्त (३।२।१०२) [ आहतं तु मृषार्थके। गुणिते ताडिते चापि' इति हैम', २।२५८-२५९] ॥ (२) ॥*॥ द्वे 'गुणितस्य'।

निदिग्धोपचिते

निदिग्धम्, उपचितम् ( २ त्रि ), 'बढ़े (पुष्ट) हुए'के २ नाम हैं।

नीति ॥ निदिह्यते स्म। 'दिह उपचये' ( अ० उ० अ० )। क्तः (३।२।१०२) ॥ (१) ॥*॥ उपचीयते स्म। 'चिञ् चयने' ( स्वा० उ० अ० )। क्तः (३।२। १०२)। 'भवेदुपचितं दिग्धे[१] समृद्धे वाच्यलिङ्गकम्' ( इति मेदिनी ) [६८।१९०] ॥(२)॥*॥ द्वे 'पुष्टिं प्रापितस्य'।

गूढगुप्ते

गूढम्, गुप्तम् ( २ त्रि ), 'गुप्त' के २ नाम हैं।

ग्विति ॥ गुह्यते स्म। गुहू संवरणे'(भ्वा० उ० से०) क्त (३।२।१०२)। 'गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु' (इति मेदिनी) [४३।१] ॥ (१) ॥*॥ गुप्यते स्म। 'गुप गोपनादौ[२]' (भ्वा० आ० से० )। क्त. (३।२।१०२) 'गुप्तं गूढे त्राते' इति हैम. ॥ (२) द्वे 'कृतगोपनस्य'।

---

१. भ्वादिस्थधातो. 'मुषित'शब्दस्य च दीर्घादित्वा-दत्र 'मुष' इति ह्रस्वादिधातूपन्यासोऽनुचित इत्यतोऽत्रत्यं 'मुष'पाठं परिवर्त्य मया 'मूष' इति दीर्घादिधातु स्थापितः।

२. विश्व-मेदिन्योर्ह्रस्वादे'र्मुषित'शब्दस्य दर्शनाद् ह्रस्वादि'मुषित'शब्दविवरणे ह्रस्वादेरेवौचित्याच्च मयाऽत्रत्य 'मूषितम्' इति प्राक्तनपाठं परिवर्त्य ह्रस्वादि-'मुषितं—इति पाठ स्थापित.।

३. विश्वस्थो 'मुषितं खण्डिते हृते' इति पाठो युक्तः। मेदिन्या च 'मुषितं हृतखण्डितयोः' इति पाठः।

१. हेम (४।१०५-१०६) विश्व (७१।८५) योरनुरोधान्मेदिनीस्थः 'दग्ध' इति पाठो न समीचीनः प्रतिभाति।

२. अस्य सेट्कत्वादितो दुर्वारतयाऽत्र 'गुप रक्षणे' ( भ्वा० प० अ० ) इत्यस्योपन्यास उचितः।

गुण्डितरूषिते ।

गुण्डितम्, रूषितम् ( २ त्रि ), 'धूल आदिमें लिपटे हुए' के २ नाम हैं।

गिवति ॥ गुण्डयते स्म। 'गुडि वेष्टने' ( चु० प० से० ) । क्त (३।२।१०२) ॥*॥ 'गुण्ठितम्' इति पाठे— 'गुठि वेष्टने' (चु० प० से०)। क्त (३।२।१०२) ॥(१) ॥*॥ रूष्यते स्म। रूषिर्वेष्टनार्थोऽपठितोऽपि भ्वादौ द्रष्टव्यो भ्वादेराकृतिगणत्वात्। क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे धूलिलिप्तस्य',' गुण्डालित' इति ख्यातस्य।

द्रुतावदीर्णे

द्रुतम्, अवदीर्णम् ( २ त्रि ), 'पिघले हुए' के २ नाम हैं।

द्रुतेति ॥ द्रूयते स्म। 'द्रु गतौ (भ्वा० प० अ०) । क्त (३।२।१०२)। 'द्रुत शीघ्रविलीनयो' इति हैम [२। १७५] ॥ (१) ॥*॥ अवदीर्यते स्म। दृ विदारणे' (क्र्या० प० से०) । क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'प्रापितद्रवीभावस्य'।

उद्गूर्णोद्यते

उद्गूर्णम्, उद्यतम् ( २ त्रि ), 'उठाए हुए खड्ग आदि, उठाकर तौल आदिका अन्दाजा किये हुए, या फेंके हुए गेंद आदि' के २ नाम हैं।

विति ॥ उद्गूर्यते स्म। गुरी उद्यमने' (दि० आ० से०) । क्त (३।२।१०२) ॥ (१) ॥*॥ उद्यम्यते स्म। 'यम उपरमे' (भ्वा० प० अ०) । क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'उत्तोलितस्य'।

[२]काचितशिक्यिते ॥ ८९ ॥

काचितम्, शिक्यितम् ( २ त्रि ), 'सिकहरपर रक्खे हुए' के २ नाम हैं।

केति ॥ काचे धृतम्। 'प्रातिपदिकाद्धात्वर्थे—' ( चु० ग० ) इति णिच्। क्त [३।२।१०२] ॥ (१) ॥*॥ एवं शिक्ये धृतम् ॥ (२) ॥*॥ द्वे शिक्ये [ छींका, सिकहर' इति ख्याते ] स्थापितस्य'।

घ्राणघ्राते

घ्राणम्, घ्रातम् ( २ त्रि ), 'सूँघे हुए' के २ नाम हैं।

घ्रेति ॥ घ्रायते स्म। 'घ्रा गन्धोपादाने' (भ्वा० प० अ०) । क्त (३।२।१०२) । 'नुदविद—' (८।२।५६) इति वा नत्वम्। घ्राणं तु घ्रातघोणयो' इति हैम [२।१४१] ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'आघ्रातस्य'।

दिग्धलिप्ते

दिग्धम्, लिप्तम् ( २ त्रि ), 'लिपे हुए स्थान आदि' के २ नाम हैं।

दीति ॥ दिह्यते स्म। 'दिह उपचये' (अ० उ० अ०) क्त (३।२।१०२)। 'दिग्धो विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गक' (इति मेदिनी) [७९।७] ॥ (१)॥*॥ लिप्यते स्म। 'लिप उपदेहे' (तु० उ० अ०) । क्त (३।२। १०२)। 'लिप्त [१]भुक्तविलिप्तयो। विषाक्ते' इति हैम [२। १९५-१९६]॥ (२) ॥*॥ द्वे 'लिप्तम्' इति ख्यातस्य।

समुदक्तोद्धृते

समुदक्तम्, उद्धृतम् ( २ त्रि ) 'नदी, तालाब, कूँए आदि से निकाले हुए पानी आदि' के २ नाम हैं।

सेति ॥ समुदच्यते स्म। 'अञ्चु गतौ' ( भ्वा० प० से०)। क्त (३।२।१०२)॥ (१) ॥*॥ उद्ध्रियते स्म। 'हृञ् हरणे' (भ्वा० उ० से०)। 'धृञ् धारणे' (भ्वा० उ० अ०) वा। क्त (३।२।१०२)। उद्धृतं स्यात् निष्पूतिक्षप्ते परिभुक्तोज्झितेऽपि च'(इति मेदिनी) [६१।९८]॥ (२) ॥*॥ द्वे 'कूपादेर्निष्कासितजलादे'।

समे ।

'प्रवृद्ध, प्रसृत' (अमर० ३।१।८८) से यहाँतक दो-दो शब्द समान लिङ्ग और अर्थवाले हैं।

सेति ॥ समे'इति प्रवृद्धप्रसृते [अम० ३।१।८८] इत्यादिषु अन्वेति।

वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥

वेष्टितम्, वलयितम्, संवीतम्, रुद्धम्, आवृतम् ( ५ त्रि ) 'चारों तरफसे घेरे हुए' के ५ नाम हैं।

वेष्टीति ॥ वेष्ट्यते स्म। 'वेष्ट वेष्टने' (भ्वा० आ० से०) । क्त (३।२।१०२)। 'वेष्टितं रुद्धे लासकेकरणान्तरे' (इति मेदिनी) [६६।१६*] ॥ (१) ॥*॥ वलयं जातमस्य। तारकादि (५।२।३६)। यद्वा—वलयवत् कृतम्। 'तत्करोति—' (वा० ३।१।२६) इति णिच्। क्त (३।२।१०२) ॥ (२) ॥*॥ संवीयते स्म। 'व्येञ् संवरणे' (भ्वा० उ० अ०)। क्त। (३।२।१०२) ॥ (३) ॥*॥ रुध्यते स्म। रुधिर् आवरणे' ( रु० उ० अ० )। क्त (३।२।१०२) ॥ (४) ॥*॥ आव्रियते स्म। वृञ्

१ यथा— पदातिरन्तर्गिरि रेणुरूषित ' इति किरात० (१।३४)।

२ '—कारितशिक्षिते' इति पाठा०।

१. हैमे 'क'पुस्तके '—मुक्त—' इति पाठ।

'ध्यावरणे' (क्र्या० उ० से०) । क्तः (३।२।१०२)॥(५) ॥*॥ पञ्च 'नद्यादिवेष्टितस्य'।

रुग्णं भुग्ने

रुग्णम्, भुग्नम् (२ त्रि), 'व्यथित या टूटे हुए' के २ नाम हैं।

विति ॥ रुज्यते स्म । 'रुजो भङ्गे' (तु० प० अ०) । क्त. (३।२।१०२) । 'ओदितश्च' (८।२।४५) इति नत्वम् ॥ (१) ॥*॥ भुज्यते स्म । 'भुजो कौटिल्ये' (तु० प० अ०) । क्त (३।२।१०२) ॥ (२) ॥*॥ द्वे 'वक्रस्य'।

अथ निशितक्ष्णुतशातानि तेजिते।

निशितम्, क्ष्णुतम्, शातम्, तेजितम् (४ त्रि), 'सान आदि देकर तेज किये हुए तलवार, भाला चाकू आदि' के ४ नाम हैं।

अथेति ॥ निशायते स्म । 'शो तनूकरणे' (दि० प० अ०) । क्त (३।२।१०२) । 'शाच्छो–' (७।४।४१) इति वेत्वम् ॥ (१) ॥*॥ (३) ॥*॥ क्ष्णूयते स्म । 'क्ष्णु तेजने' (अ० प० से०) । क्त (३।२।१०२) ॥(२) ॥*॥ तेज्यते स्म । 'तिज निशाने' चुरादि. । क्त (३।२। १०२) ॥ (४) ॥*॥ चत्वारि 'शाणादिना तीक्ष्णीकृतस्य'।

स्याद्विनाशोन्मुखं पक्वम्

विनाशोन्मुखम्, पक्वम् (२ त्रि), 'पके हुए या शीघ्र नष्ट होनेवाले' के २ नाम हैं।

स्यादिति ॥ विनशनं विनाश. । भावे घञ् (३।३। १८)। उद्गतं मुखमारम्भोऽस्य । विनाशे उन्मुखम् ॥(१) ॥*॥ पच्यते स्म । 'डुपचष् पाके' (भ्वा० उ० अ०) । क्तः (३।२।१०२) । 'पचो व' (८।२।५२)। 'पक्वं परिणते नाशाभिमुखे' इति हैम [२।५४३] ॥ (२) ॥*॥ द्वे 'विनाशोन्मुखस्य'।

ह्रीणह्रीतौ तु लज्जिते ॥ ९१ ॥

ह्रीण., ह्रीत, लज्जितः (३ त्रि), 'लजाये हुए' के ३ नाम हैं।

ह्रीति ॥ अह्रैषीत् । 'ह्री लज्जायाम्' (जु० प० अ०) । क्त. (३।२।१०२) । 'नुदविद–' (८।२।५६) इति वा नत्वम् ॥ (१) ॥*॥ (२) ॥*॥ लज्जा जाताऽस्य । तारकादि. (५।२।३६) ॥ (३) ॥*॥ त्रीणि 'संजातलज्जस्य'।

वृते तु वृत्तवावृत्तौ

वृतः, वृत्तः, वावृत्तः (३ त्रि), 'स्वयंवर आदिमें स्वीकार किये हुए वर आदि' के ३ नाम हैं।

विति ॥ वियते स्म । 'वृञ् वरणे' (क्र्या० उ० से०)। क्त. (३।२।१०२) ॥ (१) ॥*॥ वृत्यते स्म । 'वृतु वर्तने' (भ्वा० आ० से०) । क्त (३।२।१०२) । 'वृत्त वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्द स्वतीताधीत[1]योर्वृते' इति हेमचन्द्र [२।२०१]॥ (२) ॥*॥ केचित्तु—'[2]वावृतु वर्तने' (दि० आ० से०) इति पठन्ति, तन्मते वावृत्यते स्म । क्त (३।२।१०२) ॥ (३) ॥*॥ त्रीणि 'स्वयंवरादौ स्वीकृतस्य वरादे'।

संयोजित उपाहितः।

संयोजितः, उपाहितः (२ त्रि), 'जोड़े हुए' के २ नाम हैं।

समिति ॥ संयोज्यते स्म । 'युजिर् योगे' (रु० उ० अ०) ण्यन्त । क्त (३।२।१०२) ॥ (१) ॥*॥ उपाधीयते । क्त. (३।२।१०२) । 'दधातेर्हिः' (७।४।४२) । 'उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु' (इति मेदिनी) [६८।१८७] ॥ (२) ॥*॥ द्वे 'मेलितस्य'।

प्राप्यं गम्यं समासाद्यम्

प्राप्यम्, गम्यम्, समासाद्यम् (३ त्रि), 'प्राप्त करने या जानने योग्य' के ३ नाम हैं।

प्रेति ॥ प्राप्यते । 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। ण्यत् (३।१।१२४) ॥ (१) ॥*॥ गम्यते । 'गम्लृ गतौ' (भ्वा० प० अ०)। 'पोरदुपधात्' (३।१।९८) इति यत् ॥ (२)॥*॥ समासद्यते । 'षद्लृ विशरणादौ'(तु० प० अ०)। ण्यत् (३।१।१२४) ॥ (३) ॥*॥ त्रीणि 'प्राप्तुं शक्यस्य' ['योग्यस्य वा'] ।

स्यन्नं रीणं स्नुतं स्नुते ॥ ९२ ॥

स्यन्नम्, रीणम्, स्नुतम्, स्रुतम् (४ त्रि), 'टपके, चूए या बहे हुए जल आदि' के ४ नाम हैं।

स्येति ॥ स्यन्द्यते स्म । 'स्यन्दू प्रस्रवणे'(भ्वा० आ० से०) । क्त (३।२।१०२) । 'रदाभ्याम्–' (८।२।४२) इति नत्वम् ॥ (१) ॥*॥ रीयते स्म । 'रीङ् [3]प्रस्रवणे'

१ '–स्वतीताधीनयो–इति च पाठः ।

२ "वावृत्त । वृतु–वावृतु वरणे (वर्तने), इत्यमबुद्ध्वा वृत्तव्यावृत्ता'विति पेठु । लक्ष्येऽपि–ततो वावृत्त(त्य) माना सा' इति भट्टि (४।२८) ।" इति स्वामी । '–मानाऽसौ' इति च पाठ ।

३ सर्वपुस्तकेषु धातुपाठादौ 'रीङ श्रवणे' इत्येव पाठोपलब्धावपि, अत्र 'प्रस्रवणे' इति अग्रे 'स्रवरीण'शब्दे (अम० ३।१।९४) च स्वयं 'स्रवणे' इति दन्त्यादित्वस्यान्मिसवचनात्, स्वामिना च 'स्रवणार्थस्यैवोक्तत्वाद् भट्टमल्लेन च आख्यातचन्द्रिकायां 'क्षरणे स्तेपते श्रोतत्यपि क्षरति तेपते । रीयते स्यन्दते चैव' (२।४।३५) इति वचनेन 'रीङ्'धातोः स्रवणार्थस्यैवौचित्यं प्रतिभाति ।

(दि० भा० अ०)। क्त (३।२।१०२)। 'स्वादय ओदित' (दि० ग० सू०) इति नत्वम् (८।२।४५) ॥ (२) ॥•॥ सूयते स्म। 'षु गतौ' (भ्वा० प० अ०)। क्त (३।२।१०२) ॥ (३) ॥•॥ स्नूयते स्म। 'ष्णु प्रस्रवणे' (अ० प० से०)। क्त (३।२।१०२) ॥ (४) ॥•॥ चत्वारि 'प्रस्नुतस्य'।

संगूढः स्यात्संकलित

संगूढ, संकलित (२ त्रि), 'जोड़े हुए अङ्क आदि' के २ नाम हैं।

समिति ॥ संगुह्यते स्म। 'गुहू संवरणे' (भ्वा० उ० से०)। क्त (३।२।१०२) ॥ (१) ॥•॥ संकल्यते स्म। 'कल संख्याने' (भ्वा० आ० से०)। क्त (३।२।१०२)॥ (२) ॥•॥ द्वे 'अङ्कान्तरेणैकीकृतस्याङ्कादे'।

अवगीतः स्यात्तगर्हणः।

अवगीत, ख्यातगर्हण (२ त्रि), 'लोक प्रसिद्ध निन्दावाले' के २ नाम हैं।

अवेति ॥ अवगीयते स्म। 'गै शब्दे' (भ्वा० प० से०)। क्त (३।२।१०२)। घुमास्था-' (६।४।६६) इतीत्वम्। अवगीतं तु निर्वादे दृष्टगर्हितयोरपि[1] इति विश्व [७०।१७८] (मेदिनी) [६७।१७९] ॥ (१) ॥•॥ ख्याता गर्हणा यस्य ॥ (२) ॥•॥ द्वे 'प्रसिद्धनिन्दस्य'।

विविधः स्याद् बहुविधो नानारूपः पृथग्विधः ॥९३॥

विविध, बहुविध, नानारूप, पृथग्विध (४ त्रि), 'अनेक प्रकारके पदार्थ आदि' के ४ नाम हैं।

वीति ॥ विभिन्ना विधा यस्य ॥ (१) ॥•॥ बह्वी विधा यस्य ॥ (२) ॥•॥ नाना रूपमस्य ॥ (३) ॥•॥ पृथग् विधा यस्य ॥ (४) ॥•॥ चत्वारि 'नानारूपस्य'।

अवरीणो धिक्कृतश्चापि

अवरीण, धिक्कृत (२ त्रि), 'धिक्कारे हुए' के २ नाम हैं।

अवेति ॥ अवरीयते स्म। 'रीङ् स्रवणे' (दि० आ० अ०)। क्त (३।२।१०२) ॥ (१) ॥•॥ धिक्कारि। क्त (३।२।१०२) ॥ (२) ॥•॥ पर्यायान्तरं दर्शयितुमुक्तस्यैव धिक्कृतस्यानुवादः। यद्वा-निर्भर्त्सित उक्त [अम० ३।१।३९]। अत्र तु निन्दितमात्रे ॥•॥ द्वे 'निन्दितमात्रस्य'।

अवध्वस्तोऽवचूर्णितः।

अवध्वस्त, अवचूर्णित (२ त्रि), 'चूर्ण किये हुए' के २ नाम हैं।

अवेति ॥ अवध्वस्यते स्म। 'ध्वसु गतौ च' (भ्वा० आ० से०)। क्त (३।२।१०२)। 'अवध्वस्तं परित्यक्ते निन्दितेऽप्यवचूर्णिते' इति विश्व [७२।२०३] ॥•॥—'अपध्वस्त' इत्यपि पाठः ॥ (१) ॥•॥ अवचूर्ण्यते स्म। 'सत्याप-' (३।१।२५) इति ण्यन्तात् क्त (३।२।१०२)। यद्वा-'चूर्ण पेषे' चुरादि ॥ (२) ॥•॥ द्वे 'क्षितमुषादिचूर्णस्य'।

अनायासकृतं फाण्टम्

अनायासकृतम्, फाण्टम् (२ त्रि), 'विना परिश्रमसे तैयार होनेवाले त्रिफला आदिके काढ़ा-विशेष' के २ नाम हैं।

अनेति ॥ (१) ॥•॥ फण्यते स्म। 'फण गतौ' (भ्वा० प० से०)। क्त (३।२।१०२)। 'क्षुब्धस्वान्त-' (७।२।१८) इति साधु ॥ (२) ॥•॥ द्वे 'अनायासेन कृतस्य क्वाथविशेषस्य'।

स्वनितं ध्वनितं समे ॥ ९४ ॥

स्वनितम्, ध्वनितम् (२ त्रि), 'ध्वनित' अर्थात् 'अव्यक्त शब्द' के २ नाम हैं।

स्वेति ॥ स्वन्यते स्म। 'स्वन शब्दे' (भ्वा० प० से०) क्त (३।२।१०२) ॥ (१) ॥•॥ ध्वन्यते स्म। 'ध्वन शब्दे' (भ्वा० प० से०)। क्त। (३।२।१०२) ॥ (२) द्वे 'कृतशब्दस्य'।

बद्धे संदानितं मूतमुद्दितं[1] संदितं सितम्।

बद्धम्, संदानितम्, मूतम्, उद्दितम्, संदितम्, सितम् (६ त्रि), 'बँधे हुए' के ६ नाम हैं।

बेति। बध्यते स्म। 'बन्ध बन्धने' (क्र्या० प० से०)। क्त (३।२।१०२) ॥ (१) ॥•॥ संदान्यते स्म। 'दान खण्डने' (भ्वा० उ० से०)। क्त (३।२।१०२) ॥ (२) ॥•॥ मूयते स्म। 'मूङ् बन्धने' (भ्वा० आ० से०)। क्त (३।२।१०२) ॥ (३) ॥•॥ उद्द्यते स्म। संद्यते स्म। 'दो अवखण्डने' (दि० प० अ०)। क्त (३।२।१०२)। 'द्यतिस्यति-' (७।४।४०) इतीत्वम् ॥ (४) ॥•॥ (५) ॥•॥ सीयते स्म। 'षिञ् बन्धने' (स्वा० उ० अ०)। क्त (३।२।१०२) ॥ (६) ॥•॥ षट् 'बद्धस्य'।

निष्पक्वं क्वथितम्

निष्पक्वम्, क्वथितम् (२ त्रि), 'अच्छी तरह पकाये या उबाले हुए' के २ नाम हैं।

नीति ॥ निश्चयेन पक्वम् ॥ (१) ॥•॥ क्वथ्यते

---

१. विश्वे '-मुहुर्दृष्टे विगर्हिते' इति पाठः। मेदिन्यां च '-दुष्टगर्हि-' इति, '-त्वष्टगर्हि-' इति च पाठौ।

१. 'मूर्णमुद्दित-' इति पाठान्तरम्।

स्म। 'क्वथे निष्पाके' (भ्वा० प० से०)। क्तः (३।२।१०२)॥ (२)॥*॥ द्वे 'साकल्येन पक्वस्य'।

पाके क्षीराज्यपयसां[१] श्रृतम्॥ ९५॥

श्रृतम् (त्रि), 'पके हुए दूध, घी और हविष्य आदि या पाकमात्र' का १ नाम है।

पेति॥ श्रायते स्म। 'श्रा पाके' (अ० प० अ०)। क्तः (३।२।१०२)। 'शृतं पाके' (६।१।२७) इति साधुः॥ (१)॥*॥ एक 'क्षीरादिषु कृतपाकस्य'।

निर्वाणो मुनिवह्न्यादौ

निर्वाणः (त्रि), 'मुक्तिप्राप्त मुनि या बुझी हुई अग्नि आदि' का १ नाम है।

नीति॥ निर्वाति स्म। 'वा गतिगन्धनयोः' (अ० प० अ०)। 'गत्यर्था–' (३।४।७२) इति क्त। 'निर्वाणोऽवाते' (८।२।५०) इति साधु। आदिना 'निर्वाणो हस्ती'। 'निमग्नः' इत्यर्थ। 'निर्वाणमस्तगमने निर्वृत्तौ गजमज्जने। सगमेऽप्यपवर्गे च' इति विश्व. [५२।५६-५७] (मेदिनी) [४९।५१]॥ (१)॥*॥ एक 'मुनिवह्न्यादौ प्रयुक्तस्य'।

निर्वातस्तु गतानिले।

निर्वातः (त्रि), 'विना हवाके स्थान आदि' का १ नाम है।

निर्वेति॥ गतश्चासावनिलश्च। तस्मिन् निवहने(?)। पृथक् पदं वा॥ (१)॥*॥ एकम् 'अनिले गते सति निर्वातस्य'।

पक्वं परिणते

पक्वम्, परिणतम् (२ त्रि), 'पके हुए' के २ नाम हैं।

पेति॥ [पच्यते स्म। 'डुपचिष् पाके' (भ्वा० उ० अ०)। क्तः (३।२।१०२)॥ (१)॥*॥] परिणमति स्म। 'णम प्रह्वत्वे' (भ्वा० प० अ०)। अकर्मकत्वात् क्त (३।२।१०२)॥ (२)॥*॥ द्वे 'परिणाम प्राप्तस्य'।

गूनं हन्ने

गूनम्, हन्नम् (२ त्रि), 'पाखाना किये हुए' के २ नाम हैं।

गिवति॥ गूयते स्म। 'गु पुरीषोत्सर्गे' (तु० प० अ०)। क्त. (३।२।१०२)। 'दुग्वोर्दीर्घश्च' (वा० ८।२।४४) इति वत्वम्। –'ल्वादिभ्यश्च' (८।२।४४)–इति मुकुटोक्तिश्चिन्त्या। तौदादिकत्वेनास्य ल्वादित्वाभावात्॥ (१)॥*॥ हद्यते स्म। 'हद पुरीषोत्सर्गे' (भ्वा० आ० अ०)। क्तः (३।२।१०२)॥ (२)॥*॥ द्वे 'गुदनिष्कासितपुरीषस्य'।

मीढं तु मूत्रिते॥ ९६॥

मीढम्, मूत्रितम् (२ त्रि), 'पेशाब किये हुए' के २ नाम हैं।

मीति॥ मिह्यते स्म। 'मिह सेचने' (भ्वा० प० अ०)। क्तः (३।२।१०२)॥ (१)॥*॥ मूत्र्यते स्म। 'मूत्र प्रस्रावे' (चु० उ० से०)। क्त (३।२।१०२)॥ (२)॥*॥ द्वे 'उपस्थनिष्कासितमूत्रस्य'।

पुष्टे तु पुषितम्

पुष्टम्, पुषितम् (२ त्रि), 'पाले हुए' के २ नाम हैं।

प्विति॥ पुष्यते स्म। 'पुष पुष्टौ' (दि० प० अ०)। क्त. (३।२।१०२)॥ (१)॥*॥ सौवादिकस्य रिवट्॥ (२)॥*॥ द्वे 'यस्य पोषण कृत तस्य'।

सोढे क्षान्तम्

सोढम्, क्षान्तम् (२ त्रि), 'क्षमा किये हुए' के २ नाम हैं।

सविति। सह्यते स्म। 'षह मर्षणे' (भ्वा० आ० से०)। क्त (३।२।१०२)। 'सहिवहोरोदवर्णस्य' (६।३।११२)॥ (१)॥*॥ क्षम्यते स्म। 'क्षमूष् सहने' (दि० प० से०)। क्तः (३।२।१०२)। 'अनुनासिकस्य–' (६।४।१५) इति दीर्घ.॥ (२)॥*॥ द्वे 'क्षमा प्रापितस्य'।

उद्वान्तमुद्गते।[१]

उद्वान्तम्, उद्गतम् (२ त्रि), 'वमन (उलटी) किये हुए' के २ नाम हैं।

उद्वेति॥ उद्वम्यते स्म। 'टुवम उद्गिरणे' (भ्वा० प० से०)। क्त (३।२।१०२)। ['उद्वान्त उद्गीर्णे निर्मदद्विपे' इति हैम, ३।२६६]॥ (१)॥*॥ उद्गम्यते स्म। 'गम्लृ गतौ' (भ्वा० प० अ०)। क्त (३।२।१०२)॥ (२)॥*॥ द्वे 'वमित्वा त्यक्तस्यान्नादे'।

दान्तस्तु दमिते

दान्तः, दमितः (२ त्रि) 'दमन किये हुए वत्स आदि' के २ नाम हैं।

देति॥ दम्यते स्म। 'दमु उपशमे' (दि० प० से०) णिजन्तः। क्त. (३।२।१०२)। 'वा दान्तशान्त–' (७।२।२७) इति साधुः। 'दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे

१. —हविषां—' इति पाठान्तरम्।

२. विश्वे '–गजमज्जने। अपवर्गे च' इत्येवं पाठः।

१ 'मुद्वानमुद्गते' इति'–मुद्वानमुद्रते' इति च पाठा०।

[ आयःशूलिकः ( त्रि ), 'सरल उपायसे भी होने योग्य कामको तीक्ष्ण ( कठोर ) उपायसे करनेवाले' का १ नाम है ]।

[ गेहेशूर', गृहेनर्दी, पिण्डीशूरः (३ त्रि), 'घरमें ही बहादुर बननेवाले' के ३ नाम हैं ]।

[ संस्कृत', व्युत्पन्नः, प्रहतः, क्षुण्णः ( ४ त्रि ), 'शास्त्रादिसे संस्कृत, व्युत्पन्न' के ४ नाम हैं ]।

[ अन्वेष्टा, अनुपदी ( २ त्रि ), 'खोज ( अनुसन्धान ) करनेवाले'के २ नाम हैं ]।

[ नीलीरागः, स्थिरस्नेहः ( २ त्रि ), 'स्थिर प्रेमवाले' के २ नाम हैं ]।

[ हरिद्रारागकः ( त्रि ), 'अस्थिर ( कच्चे ) प्रेमवाले'का १ नाम है ]।

[ आसीन', उपविष्टः (२ त्रि), 'बैठे हुए'के २ नाम हैं ]।

[ ऊर्ध्वस्थः, ऊर्ध्वदमः, स्थितः ( ३ त्रि ), 'खड़े या ठहरे हुए'के ३ नाम हैं ]।

[ उत्परथः, उन्मुखः ( २ त्रि ), 'उन्मुख' ( ऊपर मुख किये हुए ) के २ नाम हैं ]।

[ गृह्यः, पक्षः ( २ त्रि ), 'पक्ष ( तरफदारी करनेवाले )' के २ नाम हैं ]।

[ न्युब्जः, अधोमुखः, ( २ त्रि ) 'कुबड़ा, या नीचे मुख झुकाये हुए' के २ नाम हैं ]।

भेति ॥ भक्ष्यते स्म। 'भक्ष अदने' (चु० प० से०)। क्त (३।२।१०२) ॥ ( १ ) ॥*॥ चर्व्यते स्म। 'चर्व अदने' (भ्वा० प० से०)। क्त ( ३।२।१०२ ) ॥ (२) ॥*॥ लिप्यते स्म। 'लिप उपदेहे' (तु० उ० से०)। क्त ( ३।२।१०२ )। [ 'लिप्तं भुक्तेविलिप्तयो। विषाक्ते' इति हैम, २।१९५-१९६ ] ॥*॥ क्वचित्तु 'लीढम्' इति पाठ। तत्र 'लिहृ आस्वादने' ( अ० उ० अ० ) धातु ॥ (३) ॥*॥ प्रत्यवसीयते स्म। 'षो अन्तकर्मणि' ( दि० प० अ० )। क्त (३।२।१०२) ॥ (४) ॥*॥ —गीर्यते स्म। 'गॄ निगरणे' (तु० प० से०)। क्त (३।२।१०२)। 'अचि विभाषा' ( ८।२।२१ ) इति वा लत्वम्—इति स्वामी। तन्न। अयुक्तः किति'(७।२।११) इतीण्निषेधप्रसङ्गात्। गरण गिलि। 'इकृष्यादिभ्य' (वा० ३।३।१०८)। 'अचि-' (८।२।२१) इति वा लत्वम्। गिलिर्जातास्य। तारकादि (५।२।३६) ॥ (५) ॥*॥ खाद्यते स्म। 'खाद भक्षणे' ( भ्वा० प० से० )। क्त ( ३।२।१०२ ) ॥ ( ६ ) ॥*॥ प्सायते स्म। 'प्सा भक्षणे' ( अ० प० अ०)। [ वत, ३।२।१०२ ] ॥ ( ७ ) ॥*॥ अभ्यवह्रियते स्म। क्त ( ३।२।१०२ ) ॥ (८) ॥ * ॥ अद्यते स्म। क्त ( ३।२।१०२)। 'अदोऽनन्ने' ( ३।२।६८ ) इति ज्ञापकाज्जग्धिर्वा। [ 'अन्न भुक्तेऽशिते' इति हैम', २।२६० ] ॥ (९) ॥*॥ (१०) ॥*॥ ग्रस्यते स्म। ग्लस्यते स्म। 'ग्रसु ग्लसु अदने' ( भ्वा० आ० से० )। क्त (३।२।१०२)। [ 'ग्रस्त जग्धे लुप्तपदोदिते' इति हैम, २।१६८ ] ॥ (११) ॥*॥ (१२) ॥*॥ अश्यते स्म। 'अश भोजने' ( क्र्या० प० से० )। क्त' (३।२।१०२) ॥ (१३) ॥*॥ भुज्यते स्म। 'भुज पालनाभ्यवहारयो' (रु० प० अ०)। क्त (३।२।१०२)॥ ( १४ ) ॥*॥ चतुर्दश 'खादितस्य'।

१ हैमे 'क'पुस्तके '—मुक्त—' इति पाठ। स च मेदिनी ( ५।७१।५२-५३ ) विरुद्धतया लेखकादिभ्रान्तिजः प्रतिभाति।

**क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥**

**क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ॥**

क्षेपिष्ठः, क्षोदिष्ठ, प्रेष्ठः, वरिष्ठ, स्थविष्ठ', बंहिष्ठः (६त्रि) बहुत जल्द, बहुत खोटा या छोटा, बहुत प्रिय, बहुत बड़ा, बहुत मोटा, और बहुत ज्यादा' का क्रमशः १—१ नाम है।

क्षेपीति ॥ अतिशयेन क्षिप्र.। इष्ठन् (५।३।५५)। स्थूलदूर–' (६।४।५६) इति साधु ॥ (१) ॥*॥ अतिशयेन क्षुद्र। पूर्ववत् (५।३।५५), ( ६।४।५६ ) ॥ (१) ॥*॥ अतिशयेन प्रिय। 'प्रियस्थिर–' (६।४।५७) इति साधुः ॥ ( १ ) ॥*॥ अतिशयेन उरुः। पूर्ववत् ( ६।४।५७) ॥ ( १ ) ॥*॥ अतिशयेन स्थूलः। 'स्थूलदूर–' (६।४।५६) इति साधु ॥(१)॥*॥ अतिशयेन बहुल। 'प्रियस्थिर–' ( ६।४।५७ ) इति साधु ॥ ( १ ) ॥*॥ 'पीवर' इति पाठस्त्वयुक्त। छन्दोभङ्गात्। 'पीव' इति पाठे नान्तो' युक्त ॥*॥ क्षेपिष्ठादीना क्षिप्रादिभिर्यथासंख्य ज्ञेयम् ॥*॥ एकैक 'क्षिप्रादीना' [ प्रत्यर्थ ]।

**साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥**

**बाढव्यायतबहुगुरुवामनवृन्दारकातिशये।**

**ग्राम्ये ग्रामेयकग्रामीणावाच्छिन्नो बलादधृते [ १३ ]**

**चोरिते मुषितं मुष्टं स्थपुटं तु नतोन्नतम् [ १४ ]**

१. एतत्पद्यस्यार्यात्वमात्राच्छन्दस्त्वेन द्वितीये पादे 'पीव' शब्दप्रयोगे चतुर्दश मात्रा एव जायन्ते, परञ्चोक्तच्छन्दसि द्वितीयपादे पञ्चदशमात्राणा 'पीवर'शब्दस्य प्रयोग एव सम्भवाच्छन्दोनुरोधाद् भा० दी० कथन चिन्त्यमेवेति।

उत्पाटितोन्मूलितार्थमुद्धृतं बर्हिते वृद्धम् [ १५ ]
आचितं निचितं पूर्णे पूरितं निभृते भृतम् [ १६ ]
प्रतिश्रितं प्रविष्टं स्यादन्तर्गड्डु निरर्थके [ १७ ]
न्यक्षितं स्यादधःक्षिप्तं क्षिप्तमूर्ध्वमुदक्षितम् [ १८ ]
स्पष्टेऽचितं चतुर्थे तु तुरीयं तुर्यमास्थिते [ १९ ]
आकारे श्लिष्टसंपृक्तः खचिते क्षुरितभूषितौ [ २० ]
प्रचर्चितं प्रलीढं द्वेष्यामूष्याक्षिगताः समाः [ २१ ]
श्यानं शीनेऽन्वितेऽन्वीतं प्रकाशप्रकटौ स्फुटे [ २२ ]

साधिष्ठ, द्राघिष्ठ, स्थेष्ठः, गरिष्ठः, ह्रसिष्ठ, वृन्दिष्ठः, ( ६ त्रि ), 'बहुत भला, बहुत लम्बा, बहुत स्थिर, बहुत भारी, बहुत छोटा और बहुत प्रधान' का क्रमशः १—१ नाम है।

[ ग्राम्यः, ग्रामेयकः, ग्रामीणः ( ३ त्रि ), 'दिहाती'के ३ नाम है ]।

[ आच्छिन्नः, बलाद्धृतः ( २ त्रि ), 'बलपूर्वक ( जबर्दस्तीसे ) पकड़े या छीने हुए' के २ नाम है ]।

[ चोरितम्, मुषितम्, मुष्टम् ( ३ त्रि ), 'चुराये हुए'के ३ नाम हैं ]।

[ स्थपुटम्, नतोन्नतम् ( २ त्रि ), 'ऊँचे-नीचे'के २ नाम हैं ]।

[ उत्पाटितम्, उन्मूलितम्, उद्धृतम् ( ३ न ), 'उखाड़े हुए' के ३ नाम हैं ]।

[ बर्हितम्, वृद्धम्, ( २ त्रि ), 'बढ़े हुए' के २ नाम हैं ]।

[ आचितम्, निचितम् ( २ त्रि ), 'घटे हुए'के २ नाम हैं ]।

[ पूर्णम्, पूरितम् ( २ त्रि ), 'पूरे हुए' के २ नाम है ]।

[ निभृतम्, भृतम् ( २ त्रि ), 'वशमें रहनेवाले' के २ नाम हैं ]।

[ प्रतिश्रितम्, प्रविष्टम्, ( २ त्रि ), 'प्रवेश किये ( घुसे ) हुए' के २ नाम हैं ]।

[ अन्तर्गड्डु, निरर्थकम् ( २ त्रि ), 'निरर्थक, बेमतलब' के २ नाम हैं ]।

[ न्यक्षितम्, अधःक्षिप्तम् ( २ त्रि ), 'नीचे फेंके हुए' के २ नाम हैं ]।

[ उदक्षितम् ( त्रि ), 'ऊपर फेंके हुए' का १ नाम है ]।

[ स्पष्टम्, अचितम् ( २ त्रि ), 'स्पष्ट' के २ नाम हैं ]।

[ चतुर्थम्, तुरीयम्, तुर्यम् ( ३ त्रि ), 'चौथे' के ३ नाम हैं ]।

[ श्लिष्टसंपृक्तः ( त्रि ), 'स्थायी आकारवाले' का १ नाम है।

[ खचितः, क्षुरितः, भूषितः ( ३ त्रि ), 'रत्न जवाहिरात जड़े हुए भूषण आदि' के ३ नाम हैं ]।

[ प्रचर्चितम्, प्रलीढम् ( २ त्रि ), 'चन्दनादि छिड़के हुए स्थान आदि' के २ नाम हैं ]।

[ द्वेष्यः, अमूष्यः, अक्षिगतः ( ३ त्रि ), 'आँखमें गड़े हुए ( वैरी )' के ३ नाम हैं ]।

[ श्यानम्, शीनम् ( २ त्रि ), 'जमे हुए घी आदि' के २ नाम हैं ]।

[ अन्वितम्, अन्वीतम् ( २ त्रि ), 'युक्त, सहित' के २ नाम हैं ]।

[ प्रकाशः, प्रकटः, स्फुटः ( ३ त्रि ), 'प्रकट, स्पष्ट' के ३ नाम हैं ]।

सेति ॥ अतिशयेन बाढ । इष्ठन् (५।३।५५)। 'अन्तिकबाढयोर्नेदसाधौ' (५।३।६३) ॥ ( १ ) ॥*॥ अतिशयेन दीर्घ । 'प्रियस्थिर-'(६।४।५७) इति साधुः ॥(१) ॥*॥ अतिशयेन स्थिर । पूर्ववत् ( ६।४।५७ ) ॥ (१) ॥*॥ अतिशयेन गुरु । पूर्ववत् (६।४।५७) ॥ (१) ॥*॥ अतिशयेन ह्रस्व. । 'स्थूल-' ( ६।४।५६ ) इति साधु ॥ (१) ॥*॥ अतिशयेन वृन्दारक । 'प्रियस्थिर-' (६।४।५७) इति साधु ॥ (१) ॥*॥ साधिष्ठादीनां बाढादिभिर्यथासंख्यं बोध्यम् ॥*॥ एकैकं 'बाढादीनां'[प्रकर्षे']।

इति विशेष्यनिघ्नवर्गविवरणम् ॥ १ ॥

## अथ संकीर्णवर्गः ॥ २ ॥

प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत्।

पूर्वोक्त शब्दोंके आपसमें संकीर्ण होने ( मिल जाने ) के भयसे पहले नहीं कहे हुए शब्दोंके संग्रहके वास्ते 'प्रकृति—' इस श्लोकसे द्वितीय 'संकीर्णवर्ग'का आरम्भ करते हैं। संकीर्ण अर्थ और संकीर्ण लिङ्गसे आरब्ध होनेके कारण 'संकीर्णवर्ग' नामके इस प्रकरणमें 'प्रकृति १, प्रत्यय २ आदि ( 'आदि' से रूपभेद ३, साहचर्य ४, के अर्थका संग्रह हैं ) से लिङ्गोंको समझना चाहिये।' ( "प्रत्येकके क्रमशः उदाहरण। १ला प्रकृत्यर्थ जैसे—अपरस्पराः ( त्रि ), इस उदाहरणमें

'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२।४।२६) इस सूत्रसे पर ( आगे ) वाले शब्दके लिङ्गका अतिदेश होनेसे यहां (अपरस्पर शब्दमें ) 'पर' शब्दके त्रिलिङ्ग होनेके कारण 'अपरस्पर' शब्द भी त्रिलिङ्ग है। इसी तरह अन्यत्र भी समझना चाहिये। २ रा प्रत्ययार्थ जैसे—'शान्ति, कृति, चिति, विपत्ति, ' (४ स्त्री), 'हसितम्, हसनम्, क्षिपनम्, शयनम्'' ' (४ न), 'आकर, राम, सन्धि, ' (३ पु), इन उदाहरणोंमें 'स्त्रीलिङ्ग, नपुंसकलिंग और पुंल्लिङ्ग' में क्तिन्, आदि प्रत्ययोंके होनेसे ये शब्द भी क्रमशः स्त्रीलिङ्ग नपुंसक तथा पुंल्लिङ्गमें प्रयुक्त होते हैं। इसी तरह अन्यान्य ( ३ रा रूपभेद और ४था साहचर्यके ) उदाहरणका भी स्वयं तर्क कर लेना चाहिये'' )।

प्रेति ॥ सकीर्णार्थे सकीर्णलिङ्गश्चास्थानत्वात् सकीर्णे वर्गे प्रकृत्यर्थादिभिर्लिङ्गमूहेत । यथा— अपरस्पर ' । अत्र हि लिङ्गविशेषाभिधायिप्रत्ययस्याविधानात्प्रकृति । अस्य च 'परवल्लिङ्गम्–' ( २।४।२६ ) इत्यतिदेशात्परशब्दस्येव लिङ्गं भवति । परशब्दस्य च सर्वनामत्वात् त्रिलिङ्गत्वम् । न च द्वन्द्वे च' (१।१।३१) इति निषेध । तस्य समुदायविषयत्वेनावयवविषयत्वाभावात् । यत्तु—अत्र हि विभक्तिप्रकृतित्वात् प्रकृति —इति मुकुटेनोक्तम् । तन्न । एवं सति सर्वत्र प्रकृत्यर्थेनैव लिङ्गनिर्णये प्रत्ययार्थेन लिङ्गनिर्णयाभिधानस्य वैयर्थ्यप्रसङ्गात् । प्रत्ययार्थेन यथा—शान्ति । [ स्त्रियां क्तिन् (३।३।९४) इत्यनेन ] स्त्रिया क्तिनो विधानात् । विधूननम् । [ ल्युट् च (३।३।११५) इत्यनेन ] नपुंसके ल्युटो विहितत्वात् । आद्यशब्देन रूपभेदाद्ग्रहः । रूपभेदेन कर्मादि —कर्मशब्दवत्वादि । साहचर्येण डित्थादेः पुंस्त्वादि । यद्वा भिन्नजातीयेन लिङ्गेन समर्थे सति अत्र वर्गे वर्गान्तरे च प्रकृत्यर्थाद्यैर्लिङ्गं ज्ञेयम् । लिङ्गसंग्रहे वक्ष्यमाणमपि लिङ्गमनित्यत्वेनेहोक्तम् ।

**कर्म क्रिया**

कर्म ( न ), क्रिया ( स्त्री ), 'काम' के २ नाम हैं।

केति ॥ क्रियते । कृञो भावे कर्मणि च मनिन् ( उ० ४।१४५ )। कर्म स्यात्क्रियायां च पुनपुंमवयोमतम्' इति रुद्र ॥ (१) ॥*॥ डु च ( ३।३।१०० ) । रिङ् शयग्लिङ्क्षु' ( ७।४।२८ ) । 'अचि श्नु–' ( ६।४।७७ ) इतीयङ् ॥ (२) ॥*॥ द्वे क्रियायाः' ।

तत्सातत्ये गम्ये स्युरपरस्पराः ॥ १ ॥

अपरस्परम् ( १ले अर्थमें नपुं० और दूसरे अर्थमें त्रि ) 'लगातार काम होते रहना और लगातार काम करनेवाला' इन दो अर्थोंमें है।

तेति ॥ तत्सातत्ये क्रियायाः क्रियावतां च नैरन्तर्ये ॥*॥ 'अपरे च परे च' इति द्वन्द्व । 'अपरस्पराः क्रियासातत्ये' (६।१।१४४) इति सुण्निपात्यते । क्रियासातत्ये 'अपरस्परं गच्छन्ति' । निर्दिष्ट कर्मसातत्ये सुधीभिरपरस्परम्' इति माधुरि । क्रियावतां सातत्ये तु लिङ्गत्रयम्। 'अपरस्पराः सार्था स्त्रियश्चागच्छन्ति' । 'अपरस्पराणि कुलानि' ॥ (१)॥*॥ एकं नैरन्तर्येण क्रियायाः, क्रियावतश्च' ।

**साकल्यासङ्गवचने पारायणतुरायणे ।**

पारायणम्, तुरायणम् ( २ न ), 'पूर्ण कथन ( कहना, वक्तव्य ) और प्रासङ्गिक ( अवसरके अनुकूल ) कथन' का क्रमशः १—१ नाम है।

सेति ॥ साकल्य च आसङ्गश्च । तौ वचन वचे कर्तरि ल्युट् (३।३।११३) ॥*॥ पारस्य अयनम् । पूर्वपदात्–' (८।४।३) इति णत्वम् ।–क्लीवलिङ्गमेव–इत्येके ॥ * ॥ परायणम्' इति वा पाठ । परमयनम् । 'आश्रये तत्परा भीष्टे परायणपदं विदु ' इति शाश्वत[२] ॥ ( १ ) ॥*॥ तोतोति । 'तुर त्वरणे' ( जु० प० से० ) । इगुपध–' (३।१।१३५) इति क । तुरस्यायनम् । यत्तु—त्वरणम् । तुरणं वा । तु तुरा आसमन्तादयनम्—इति स्वामिमुकुटावाहतु । तन्न । अन्तर्वर्तिविभक्त्या पदान्तत्वेन 'धौरपथादा –' (८।२।७६) इति दीर्घप्रसङ्गात् ॥ ( १ ) ॥ * ॥ एकैकं साकल्यासङ्गवचनयो '।

**यदृच्छा स्वैरिता**

यदृच्छा, स्वैरिता ( २ स्त्री ), 'स्वतन्त्रता' के २ नाम हैं।

येति ॥ ऋच्छनम् ऋच्छा । ऋच्छ गत्यादौ' (तु० प० से०) । गुरोश्च हल ' ( ३।३।१०४ ) इत्यप्रत्यय । या ऋच्छा । विशेषणम्–' ( २।१।५७ ) इति समास ॥ ( १ ) ॥*॥ स्वेनेरितुं शीलमस्य । सुप्यजातौ–' (३।२।७८) इति णिनि । स्वैरिणो भाव । तस्य भाव –' (५।१।११९) इति तल ॥ (२) ॥*॥ द्वे स्वातन्त्र्यस्य' ।

हेतुशून्या त्वास्था[३] विलक्षणम् ॥ २ ॥

विलक्षणम् ( न ), 'निष्कारण ठहरने' का १ नाम है।

---

१ पारायणपरायणे' इति पाठान्तरम् । तत्र प्रथम पारायणशब्दोदाहरणम्— रत्नपारायणं नाम लङ्केयं मम मैथिलि' इति भट्टि ( ५।८९ ) । द्वितीय परायण'-शब्दस्योदाहरणम्—'अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।' इति कुमार० ( ४।१ ) इति ।

२ शाश्वते तु 'परायणमभीष्टं स्यात्तत्परश्च परायण ' इति ( ५६१ ) भिन्नपाठात्प्रकृतस्य मूलं मृग्यम् ।

३ '—त्वास्या विलक्षणम्' इति पाठान्तरम् ।

हृयिति ॥ हेतुना कारणेन शून्या आस्था स्थितिः ॥●॥ विगतं लक्षणमालोचनं यत्र । 'विलक्षण मतं स्थानं यद्भवेन्निष्प्रयोजनम्' इति भागुरि. ॥ (१) ॥●॥ एकं 'हेतुशून्यास्थाया.' ।

**शमथस्तु शमः शान्तिः**

**शमथः, शमः ( २ पु ), शान्तिः ( स्त्री ), 'शान्ति' के ३ नाम हैं।**

शेति ॥ शमनम् । 'शमु उपशमे' (दि० प० से०) । 'शमादिभ्योऽथच्'[१] ॥ (१) ॥●॥ 'भावे'(३।३।१८) इति घञ् । 'नोदात्तोपदेश–' ( ७।४।३३ ) इति वृद्ध्यभाव ॥ (२) ॥●॥ 'स्त्रियां क्तिन्' (३।३।९४)। 'अनुनासिकस्य–' (६।४।१६५) इति दीर्घ ॥ (३) ॥●॥ त्रीणि 'कामक्रोधाद्यभावस्य' ।

**दान्तिस्तु दमथो दमः ।**

**दान्तिः ( स्त्री ), दमथः, दमः ( २ पु ) 'इन्द्रियोंको अपने वशमें करने' के ३ नाम हैं।**

देति ॥ दमनम् । 'दमु उपशमे' (दि० प० से०) । (पूर्ववत्प्रक्रिया) ॥ त्रीणि 'तप क्लेशसहनस्य' ।

**अवदानं कर्मवृत्तम्**

**अवदानम्, कर्मवृत्तम्, ( २ न ) 'बीते हुए काम, अच्छे काम' के २ नाम हैं।**

अवेति ॥ 'दैप् शोधने' (भ्वा० प० अ०)। भावे ल्युट् (३।३।११४)॥●॥ क्वचित् 'अपदानम्' इति पाठ ॥(१) ॥●॥ वर्तनम् । 'वृतु वर्तने' ( भ्वा० आ० से० ) । भावे क्तः (३।३।११४) । कर्मण. कर्मणि वा वृत्तम् [ 'अवदान खण्डने स्यादतिवृत्ते च कर्मणि' इति मेदिनी, ९४।६१ ] ॥ (२) ॥●॥ द्वे 'प्रशस्तकर्मण '।

**काम्यदानं[२] प्रवारणम् ॥ ३ ॥**

**काम्यदानम्, प्रवारणम् ( २ न ) 'मनचाहा दान देने' के २ नाम हैं।**

केति ॥ कामोऽस्ति यत्र । 'अन्यत्रापि–' (वा० ५।२।१२०)इति यप् । –हिमादित्वाद्यप्—इति मुकुटस्त्वपाणिनीय. । यद्वा–काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०)। 'अचो यत्' (३।१।९७) काम्येनेच्छया काम्यस्य वरस्त्रीहस्त्यश्वादेर्वा दानम् ॥ (१) ॥●॥ प्रव्रियते । 'वृञ् वरणे' चुरादि । ल्युट् (३।३।११५)। 'प्रवारणं महादानम्' इति त्रिकाण्डशेष[१]। ('प्रवारण निषेधे स्यात्काम्यदाने च न द्वयो ' इति मेदिनी [५२।१०१]॥ (२) ॥●॥ द्वे 'काम्यदानस्य' ।

**वशक्रिया संवननम्[२]**

**वशक्रिया (स्त्री), संवननम् (न) 'मन्त्र या मणि आदिसे वशमें करने' के २ नाम हैं।**

वेति ॥ वशस्य करणम् । 'कृञ श च'(३।३।१००)॥ (१) ॥●॥ सपूर्व 'वनु याचने' (त० आ० से०) इति वशीकरणार्थं । ल्युट् (३।३।११५)॥(२)॥●॥ द्वे 'वशीकरणस्य' ।

**मूलकर्म तु कार्मणम् ।**

**मूलकर्म, कार्मणम् ( २ न ), 'जड़ी-बूटी आदिसे उच्चाटन, मारण, मोहन आदि करने' के २ नाम हैं।**

मिति ॥ ओषध्यादिमूलेन कर्म ॥ (१) ॥●॥ कर्मैव 'तद्युक्तात्कर्मणोऽण्' (५।४।३६) । ('कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च' इति मेदिनी [४८।४१]॥(२) ॥●॥ द्वे 'ओषधीना मूलैरुच्चाटनादिकर्मण ;' 'कामेण' इति ख्यातस्य ।

**विधूननं विधुवनम्**

**विधूननम्, विधुवनम्, ( २ न ) 'कँपाने' के २ नाम हैं।**

वीति ॥ 'धूञ् कम्पने' चुरादि । 'धूञ्प्रीञो –'[३](वा० ७।३।३७) इति नुक् । ल्युट् (३।३।११५) ॥ (१) ॥●॥ 'धू विधूनने'(तु० प० से०)। ल्युट् (३।३।११५)। "गाङ्कुटादिभ्य.–' (१।२।१) इति ङित्त्वाद् गुणाभावः ॥ (२) ॥●॥ द्वे 'कम्पनस्य' ।

---

१ इद सूत्र वार्तिकं वा क्वचिन्नोपलभ्यते, परं सि० कौ० 'शीङ्शपिरुगमि— ( उ० ३।११३ ) इति सूत्रव्याख्याने 'बाहुलकाच्छमिदमिभ्याम्' 'शमथस्तु शम. शान्तिः—इत्युक्तथा बाहुलकात् सिद्धिरुचिता ।

२. 'कामदानं—' इति पाठान्तरम् ।

१. त्रिकाण्डशेषेऽस्य वचनस्यानुपलब्ध्या मूलं मृग्यम् ।

२. 'वशीकार संवननम्' इति ( पृ० ९२ श्लो० ११७) वजयन्त्युक्ततया तृतीयो वर्णस्तवर्गपञ्चम । 'आख्यायनी तु सन्देशो दिष्टं सवदनं च तत्' इति ( पृ० ३३ श्लो० २५ ) तस्या एवोक्तया तवर्गतृतीयस्तृतीयो वर्णो भिन्नार्थकः । हेमचन्द्रस्तु 'सवदनं संवादे समालोचे वशीकृतौ' इति ( अ० सं० २।२०६ ) आह । तत्र 'ख–ग'पुस्तकयोस्तु 'संवननम्' इति दन्त्योष्ठ्यो द्वितीयो वर्णो लभ्यते ।

३. भाष्ये 'णिच्प्रकरणे धूञ्प्रीञोर्नुग्वचनम्' इति वार्तिकस्वरूपम् । सि० कौ० तु 'धूञ्प्रीञोर्नुग्वक्तव्य.' इति।

तर्पणं प्रीणनावनम् ॥ ४ ॥

तर्पणम् प्रीणनम्, अवनम् (३ न), 'तृप्त करने' के ३ नाम हैं।

तेति ॥ तृप प्रीणने (दि० प० अ०)। ल्युट (३।३।११५) ॥ (१) ॥*॥ प्रीञ तर्पणे (क्र्या० उ० अ०)। स्वाथण्य ता मुक (वा० ७।३।३७)। ल्युट (३।३।११५)॥ (२) ॥*॥ अव रक्षण (भ्वा० प० से०)। ल्युट (३।३।११५) ॥ (३) ॥*॥ त्रीणि प्रीणनस्य ।

पर्याप्तिः स्यात्परित्राणं हस्तवारणमित्यपि।

पर्याप्ति (स्त्री), परित्राणम् हस्तवारणम् (२ न), 'मारनेके लिये उद्यत (तैयार) को रोकने के ३ नाम हैं।

पेति ॥ पर्यापन पर्याप्नोतिस्त्राणाय । क्तिन् (३।३।९४) ॥ (१) ॥*॥ त्रैङ पालने (भ्वा० आ० अ०)। ल्युट (३।३।११५) ॥ (२) ॥*॥ हस्तेन हस्तस्य वा वारणम् ॥*॥ क्वचित् (हस्त) धारणम् इति पाठ । प्रहारोद्यतस्य हस्तस्य धारण रोध ॥ (३) ॥*॥ त्रीणि मारणोद्यतनिवारणस्य ।

सेवनं[1] सीवनं स्यूतिः

सेवनम्, सीवनम्, (२ न) स्यूति (स्त्री), 'सिलाई करने' के ३ नाम हैं।

सेविति ॥ षिवु तन्तुसन्ताने (दि० प० से०)। ल्युट (३।३।११५)॥(१) ॥*॥ पृषोदरादित्वात् (६।३।१०९) वा दीर्घ ।—च्छ्वोः शूडनुनासिके च—इति स्वामी।—अ ये षामपि– (६।३।१३७) इति दीर्घ—इति मुकुट । तन्न। वचनाभावात् पूर्वपदत्वाभावाच्च ॥ (२) ॥*॥ क्तिन् (३।३।९४)। च्छ्वो – [६।४।१९] इति पाठस्तु यात्य ॥*॥ त्रीणि सूचीक्रियायाः ।

विदरः स्फुटनं भिदा ॥ ५ ॥

विदर (१) स्फुटनम् (न), भिदा (स्त्री) 'फटने या अलग होने के ३ नाम हैं।

वीति ॥ विदरणम् । दॄ विदारणे (क्र्या० प० से०)। ॠदोरप् (३।३।५७)। ग्रस— ग्रहवृद– (३।३।५८) इत्यप–इति मुकुटेनोक्तम्। तन्न। दृङ आदरे (तु० आ० अ०) इति ह्रस्वस्यैव ग्रहणात्। विदारण इत्यस्य स्वयमुप मस्तत्वात् ॥ (१) ॥*॥ स्फुट विकसने (तु० प० से०)। कुटादि। ल्युट (३।३।११५) ॥ (२) ॥*॥ भिदिर विदारण (रु० उ० अ०)। भिदाद्यङ (३।३।१०४) ॥ (३) ॥*॥ त्रीणि द्विधाभावस्य ।

आक्रोशनमभीषङ्गः

आक्रोशनम् (न) अभीषङ्ग (पु), 'गाली या शाप देने के २ नाम हैं।

आक्रेति ॥ क्रुश आह्वाने (भ्वा० प० से०)। ल्युट (३।३।११५) ॥ (१) ॥*॥ षञ्ज सङ्गे (भ्वा० प० अ०)। घञ् (३।३।१८)। उपसर्गस्य घञि– (६।३।१२२) इति दीर्घ ॥ (२) ॥*॥ द्वे शापस्य ।

संवेदो वेदना न ना।

संवेद (पु) वेदना (स्त्री न) 'अनुभव' के २ नाम हैं।

समिति ॥ विद ज्ञाने (अ० प० से०)। घञ् (३।३।१८)॥ (१)॥*॥ विद चेतनाख्याननिवासेषु चुरादि। ण्यास– (३।३।१०७) इति युच्। यद्वा विद ज्ञाने (अ० प० से०)। घट्टिवन्दिविदिभ्यश्च (वा० ३।३।१०७) इति युच्। ल्युट च (३।३।११५) इति ल्युटि क्लीबत्वम् ॥ (२) ॥*॥ द्वे अनुभवस्य

सम्मूर्च्छनमभिव्याप्तिः

सम्मूर्च्छनम् (न) अभिव्याप्ति (स्त्री) व्याप्त होने अर्थात् 'चारों तरफसे बढ़ने या भर जाने के २ नाम हैं।

समिति ॥ मूर्छा मोहसमुच्छ्राययो (भ्वा० प० से०) ल्युट (३।३।११५)॥ (१) ॥*॥ अभिव्यापनम्। आप्लृ व्याप्तौ (स्वा० प० अ०)। क्तिन्नाबादिभ्य (वा० ३।३।९४) इति क्तिन ॥ (२) ॥*॥ द्वे सर्वतो व्याप्ते ।

याच्ञा भिक्षार्थनार्दना ॥ ६ ॥

याच्ञा, भिक्षा, अर्थना, अर्दना (४ स्त्री) 'मांगने के ४ नाम हैं।

येति ॥ याचनम्। टुयाचृ याच्ञायाम् (भ्वा० उ० से०)। यजयाच– (३।३।९०) इति नङ् ॥ (१) ॥*॥ भिक्षणम्। भिक्ष याचने (भ्वा० उ० से०)। गुरोश्च– (३।३।१०३) इत्य ॥ (२) ॥*॥ अर्थ याच्ञायाम् (चुरादि से०) ण्यास– (३।३।१०७)। इति युच् ॥ (३) ॥*॥ अर्द गतौ याचने च (भ्वा० प० से०) स्वार्थण्यन्त। युच (३।३।१०७) ॥ (४) ॥*॥ चत्वारि याच्ञायाः ।

वर्धनं छेदने

वर्धनम्, छेदनम् (२ न) काटने के २ नाम हैं।

वेति ॥ वर्ध छेदनपूरणयो (चु० प० से०)। ल्युट (३।३।११५)। वर्धन छेदने वर्द्धो इति दन्तोष्ठ्याद्यावर्जय। [वर्धनं छेदने वर्द्धो वर्धनी तु गलन्तिका। इति हैम ३। ४३९]॥ (१) ॥*॥ छिदिर द्वैधीकरण (रु० उ० अ०)। ल्युट (३।३।११५) ॥ (२) द्वे कर्तनस्य ।

---

१ अनुपदोक्ता टिप्पणी द्रष्टव्या

२ सेवस्तु— इति पाठा तरम् ।

अथ द्वे आनन्दनसभाजने।
आप्रच्छन्नम्

आनन्दनम्, सभाजनम्, आप्रच्छनम्, (३ न), 'मित्र गुरुजन आदिके आनेपर अभ्युत्थान (उठकर अगवानी), आलिङ्गन आदि और कुशल-प्रश्न आदिके द्वारा उनके सत्कार करने' के ३ नाम हैं।

अथेति ॥ 'टुनदि समृद्धौ' (भ्वा० प० से०)। ल्युट् (३।३।११५) ॥*॥ 'आमन्त्रणम्' इति क्वचित्पाठः। तत्र 'मन्त्रि गुप्तभाषणे' (चु० आ० से०)॥ (१) ॥*॥ 'सभाज प्रीतिदर्शनयोः[1]' (चु० उ० से०)। ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'प्रच्छ ज्ञीप्सायाम्' (तु० प० अ०)। आङ्पूर्वः प्रच्छिरानन्दनार्थः। ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि 'आलिङ्गनकुशलप्रश्नादिनाऽऽनन्दनस्य'।

अथाम्नायः संप्रदायः

आम्नायः, सम्प्रदायः (२ पु), रिवाज, कुलक्रमागत (खान्दानी) रहन-सहन या गुरु-परम्परागत उपदेश आदि' के २ नाम हैं।

अथेति ॥ आम्नानम्। 'म्ना अभ्यासे' (भ्वा० प० अ०)। घञ् (३।३।१८)। 'आत —' (७।३।३३) इति युक्। ['आम्नाय कुल आगम। उपदेशे च' इति हैम, ३।५११] (१) ॥*॥ सम्प्रदानम्। ['डु] दाञ्' [दाने] (जु० उ० अ०)। घञ् (३।३।१८)। युक् (७।३।३३)॥(२)॥*॥ द्वे 'गुरुपरम्परागतसदुपदेशस्य'।

क्षये क्षिया ॥ ७॥

क्षयः (पु), क्षिया (स्त्री), 'घटने या कम होने' के २ नाम हैं।

क्षेति ॥ क्षयणम्। 'क्षि क्षये' (भ्वा० प० अ०)। 'एरच्' (३।३।५६) ॥ (१) ॥*॥ 'क्षीष् हिंसायाम्' (क्र्या० प० अ०)। 'षिद्भिदादिभ्योऽङ्' (३।३।१०४)॥ (२) ॥*॥ द्वे 'अपचयस्य'।

ग्रहे ग्राहः

ग्रहः, ग्राहः (२ पु), 'ग्रहण-करने' के २ नाम हैं।

ग्रेति ॥ ग्रहणम्। ग्रह उपादाने' (क्र्या० उ० से०)। 'ग्रहवृदृ–'(३।३।५८) इत्यप् ॥ (१) ॥*॥ स्वार्थण्यन्तादच् (३।३।५६)। घञ् (३।३।१८) वा ॥ (२) ॥*॥ द्वे '–ग्रहणस्य'।

वशः कान्तौ

वशः (पु), कान्तिः (स्त्री), 'चाहना, इच्छा' के २ नाम हैं।

वेति ॥ 'वश कान्तौ'[1](अ० प० से०)। 'वशिरण्योः–' (वा० ३।३।५८) इत्यप् ॥ (१) ॥*॥ कमु कान्तौ' (भ्वा० आ० से०)। 'आयादय –'(३।१।३१) इति णिङभावे क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे 'इच्छायाः'।

[2]रक्षणत्राणे

रक्षणः (स्त्री) त्राणः (२ पु), 'रक्षा' के २ नाम हैं।

रेति ॥ 'रक्ष पालने' (भ्वा० प० से०)। 'यजयाच–' (३।३।९०) इति नङ् ॥ (१) ॥*॥ 'त्रैङ् पालने' (भ्वा० आ० अ०)। ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे रक्षणस्य'।

रणः क्वणे।

रणः, क्वणः (२ पु), 'ध्वनि करने' के २ नाम हैं।

रेति ॥ रणनम्। 'रण शब्दे'(भ्वा० प० से०)। 'वशिरण्योः' (वा० ३।३।५८)इत्यप्। ['रण. कोणे क्वणे पुंसि समरे पुन्नपुंसकम्' इति मेदिनी, ४६।२५] ॥ (१) ॥*॥ क्वणनम्। 'क्वण शब्दे' (भ्वा० प० से०)। 'क्वणो वीणायाम्' (३।३।६५) इति साधु ॥ (२) ॥*॥ द्वे 'शब्दकरणस्य'।

व्यधो वेधे

व्यधः, वेधः (२ पु), 'छेदने' के २ नाम हैं।

व्येति ॥ व्यधनम् ॥ व्यध ताडने' (दि० प० अ०)। 'व्यधजपो –' (३।३।६१) इत्यप् ॥ (१) ॥*॥ वेधनम्। 'विध विधाने' (तु० प० से०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'वेधनस्य'।

पचा पाके

पचा (स्त्री), पाकः (पु), 'पकाने' के २ नाम हैं।

पेति ॥ पचनम्। 'डुपचष् पाके' (भ्वा० उ० अ०)। षित्वादङ् (३।३।१०४) ॥ (१) ॥*॥ घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'पचनस्य'।

१. '—प्रीतिसेवनयोरित्यन्ये' इति सि० कौ०। '—सेवनयोरित्येके' इति धातुपाठे। '—प्रीतिदर्शने' इति स्वा०।

१ अत्र 'कान्ति'शब्द इच्छार्थक, यथा 'कमु कान्तौ' इत्यत्र। अत एव 'वशो जनस्पृहायत्तेष्वायतत्वप्रभुत्वयोः। वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि ॥' इति हैमः (२।५६६)।

२. "रक्षः' इत्यपपाठ" इति क्षी० स्वा०।

भ्रमो भ्रमौ ।

भ्रम (पु), भ्रमि (स्त्री) 'भ्रमण करने' के २ नाम हैं।

भ्रमि ॥ भ्रमणम् । भ्रमु अनवस्थाने ( दि० प० अ० ) । घञ (३।३।१८) । 'नोदात्तोपदेशस्य–' (७।३।३४) इति वृद्ध्यभावः ।—मित्त्वाद्ध्रस्व —इति मुकुटस्तु चिन्त्यः । णिजन्तस्य प्रवृत्त ( १ ) ॥*॥ इक्कृष्यादिभ्य (वा० ३।३।१०८) ॥ (२) ॥*॥ [redacted] भ्रमणस्य ।

स्फातिर्वृद्धौ

स्फाति, वृद्धि (२ स्त्री), 'बढ़ने' के २ नाम हैं।

स्फेति ॥ स्फायी वृद्धौ (भ्वा० आ० से०) । क्तिन् (३।३।९४) । स्फातिर्वृद्धि प्रसारो ना इति बोपला लित ॥ (१) ॥*॥ वर्धनम् । वृधु वृद्धौ (भ्वा० आ० से०)। क्तिन (३।३।९४)॥ (२)॥*॥ द्वे वृद्ध ।

प्रथा ख्यातौ

प्रथा, ख्याति, (२ स्त्री) 'प्रसिद्धि' के २ नाम हैं।

प्रति ॥ प्रथनम् । प्रथ प्रख्याने (भ्वा० आ० से०)। भिदाद्यङ्[1] (३।३।१०४) ॥ (१) ॥*॥ ख्यानम् । ख्या प्रकथने (अ० प० अ०) । चक्षिङ्ख्यादेशो [२।४।५४] । वा । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे ख्याते ।

स्पृष्टिः पृक्तौ

स्पृष्टि, पृक्ति (२ स्त्री), 'स्पर्श करने' के २ नाम हैं।

स्पृष्टि ॥ स्पर्शनम् । स्पृश संस्पर्शे (तु० प० अ०)। क्तिन् (३।३।९४) ॥ (१) ॥*॥ पचनम् । पृची संपर्के (रु० प० से०) । क्तिन (३।४।९४) ॥ (२) ॥*॥ द्वे स्पर्शनस्य ।

स्नवः स्रवे ॥ ९ ॥

स्नव, स्रव (२ पु) 'धीरे धीरे चूने' के २ नाम हैं।

स्नेति ॥ स्नवनम् । ष्णु प्रस्रवणे (अ० प० से०)। ऋदोरप् (३।३।५७) ॥ (१) ॥*॥ स्रु गतौ (भ्वा० प० अ०) ॥ (२) ॥*॥ द्वे प्रस्रवणस्य ।

विधा समृद्धौ

एधा (विधा), समृद्धि (२ स्त्री) 'बढ़ने के २ नाम हैं।

वीति ॥ विधानम् । [डु] धाञ् [धारणपोषणयो]। (जु० उ० अ०)। आतश्च– (३।३।१०६) इत्यङ्।

[1] भिदादावस्य पाठाभावेनेयमुक्तिरसंगता । भ्वादौ घटादयः षित इति गणसूत्रोक्त्या षित्त्वेनैव सिद्धे भिदादौ तत्पाठस्य कल्पनमप्यनुचितमेवेति ।

हवो हूतौ

हव (पु) हूति (स्त्री), पुकारने या बुलाने के २ नाम हैं।

हेति ॥ ह्वानम् । ह्वेञ् स्पर्धायां शब्दे च (भ्वा० उ० ९०) । भावेऽनुपसर्गस्य (३।३।७५) इत्यप् संप्रसारणं च । [ हव आज्ञाह्वानाध्वाने ध्वनि मेदिनी १५९।३०] ॥ (१) ॥*॥ क्तिन (३।३।९४) ॥ (२) ॥*॥ द्वे आह्वानस्य ।

वरो वृतौ ॥ ८ ॥

वर (पु) वृति (स्त्री), 'तप, सेवा आदि से प्रसन्न होकर देवता गुरु आदि के वरदान देने' के २ नाम हैं।

वेति ॥ वरणम् । वृञ् वरणे (स्वा० उ० से०) । ग्रहवृदृ– (३।३।५८) इत्यप् । [यत्कात्य —] तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः । (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे वेष्टनसंभक्त्योः ।

ओषः प्लोषे

ओष, प्लोष (२ पु), 'दाह' के २ नाम हैं।

ओष इति ॥ ओषणम् । उष दाहे (भ्वा० प० से०)। घञ (३।३।१८) ॥ (१) ॥*॥ प्लोषणम् । प्लुष दाहे (भ्वा० प० से०) । घञ (३।३।१८) ॥ (२) ॥*॥ द्वे दाहस्य ।

नयो नाये

नय, नाय (२ पु), 'नीति' के २ नाम हैं।

नेति ॥ नयनम् । णय गतौ (भ्वा० प० से०)। घञ (३।३।१८)। संज्ञापूर्वकत्वान्न वृद्धिः । यद्वा– णीञ् [प्रापणे] (भ्वा० उ० अ०) । एरच् (३।३।५६) । क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥(१)॥*॥ णीञ् प्रापणे (भ्वा० उ० अ०)। श्रिणीभुवो– (३।३।२४) इति घञ ॥ (२) ॥*॥ द्वे नीतेः ।

ज्यानिर्जीर्णौ

ज्यानि, जीर्णि (२ स्त्री), 'पुराना होने' के २ नाम हैं।

ज्येति ॥ ज्यानम् । ज्या वयोहानौ (क्र्या० प० अ०) । ग्लाम्लाज्याहाभ्यो नि (वा० ३।३।९५) [ ज्यानिर्जीर्णे च हानौ च त्रुटि यामपि योषिति ।' इति मेदिनी ८३।७ ] ॥ (१) ॥*॥ जरणम् । जॄष वयोहानौ (दि० प० से०) । क्तिन् (३।३।९४) । ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्य (वा० ८।२।४४) । रदाभ्यां म्– (८।२।४२) इति नत्वम् ॥ (२) ॥*॥ द्वे जीर्णत्वस्य ।

'विधा गजान्ने ऋद्धौ च' [ प्रकारे वेतने विधौ' ] ( इति मेदिनी) [८०।७०]॥*॥ क्वचित् 'एधा' इति पाठ । 'एध वृद्धौ' (भ्वा० आ० से०)। 'गुरोश्च–' (३।३।१०३) इत्य ॥ (१) ॥ *॥ समर्धनम् । 'ऋधु वृद्धौ' (भ्वा० आ० से०)। क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे 'धनसम्पत्तेः' ।

स्फुरणे स्फुरणा

स्फुरणम् (न), स्फुरणा (स्त्री), 'फरकने'के २ नाम हैं।

स्फुरेति ॥ 'स्फुर स्फुरणे सचलने च' कुटादि.। ल्युट् (३।३।११५) । (धातुपाठे) मदुपधपाठे 'स्फु[स्फ]-रणम्' अपि ॥ (१)॥*॥ स्वार्थण्यन्ताद्युच् (३।३।१०७) संज्ञापूर्वकत्वान्न गुण. ॥ (२) ॥*॥ द्वे 'स्फुरणस्य' ।

प्रमितौ प्रमा ।

प्रमितिः, प्रमा ( २ स्त्री ), 'यथार्थ ज्ञान' के २ नाम हैं।

प्रेति ॥ प्रमाणम् । 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ०) । क्तिन् ( ३।३।९४ ) ॥ ( १ ) ॥*॥ 'माङ् माने (दि० आ० अ०) । 'आतश्चोप–' ( ३।३।१०६ ) इत्यङ् ॥ (२) ॥*॥ द्वे 'प्रमाज्ञानस्य' ।

प्रसूतिः प्रसवे

प्रसूतिः ( स्त्री ), प्रसवः ( पु ), 'बच्चा पैदा करने' के २ नाम हैं।

प्रेति ॥ प्रसवनम् । 'षूङ् प्राणिप्रसवे' ( दि० आ० से० ) । क्तिन् (३।३।९४) ॥ ( १ ) ॥*॥ 'ऋदोरप्' (३।३।५७) ॥*॥ 'पू प्रेरणे (तु० प० से०) वा ॥ (२) ॥*॥ द्वे 'प्रसवनस्य, प्रेरणस्य वा' ।

श्च्योते प्राघारः

श्च्योतः, प्राघारः ( २ पु ), 'पानी आदिके धारासे चूने या बहने' के २ नाम हैं

श्च्यविति ॥ श्च्योतनम् । 'श्च्युतिर् क्षरणे ( भ्वा० प० से०) । घञ् (३।३।१८) ॥ (१) ॥*॥ प्रघरणम् । 'घृ क्षरणदीप्त्योः' (जु० प० अ०) । घञ् (३।३।१८) । 'उपसर्गस्य–' (६।३।१२२) इति दीर्घ ॥ (२) ॥*॥ द्वे 'क्षरणस्य' ।

क्लमथः क्लमे ॥ १० ॥

क्लमथः, क्लमः ( २ पु ), 'ग्लानि, खेद'के २ नाम हैं।

क्लेति ॥ क्लमनम् । 'क्लमु ग्लानौ' (दि० प० से०)। 'शमादिभ्योऽथच्'[१] (१) ॥*॥ घञि (३।३।१८) 'नोदात्तोपदेश–' (७।३।३४) इति वृद्धिर्न ।—मित्त्वाद्ध्रस्वत्वम्—इति मुकुटस्तु चिन्त्यः। मिता णौ ह्रस्वविधानात् ॥ (२) द्वे 'ग्लाने' ।

उत्कर्षोऽतिशये

उत्कर्षः, अतिशयः ( २ पु ), 'उत्कर्ष, बढ़ाई'के २ नाम हैं।

[उदिति] ॥ उत्कर्षणम् । 'कृष विलेखने' ( भ्वा० प० अ० ) । घञ् (३।३।१८) ॥ (१) ॥*॥ अतिशयनम् । शीङः [ स्वप्ने' (अ० आ० से०)]। 'एरच्' (३।३।५६) ॥ ( २ ) ॥ द्वे 'उत्कर्षस्य' ।

सधिः श्लेषे

सन्धिः, श्लेषः ( २ पु ), 'जोड़, मेल'के २ नाम हैं।

[समिति] ॥ संधानम् । धाञ 'उपसर्गे घोः किः' (३।३।९२) । [ 'सन्धिर्भेदे सुरङ्गायां भगे सङ्घटनेऽपि च' इति विश्व, ध३।१५ ] ॥ ( १ ) ॥*॥ श्लेषणम् । 'श्लिष आलिङ्गने' (दि० प० अ०) । घञ् ( ३।३।१८ ) ॥ (२) ॥*॥ द्वे 'संधानस्य' ।

विषय आशये ।

विषयः, आशयः ( २ पु ), 'आशय, अभिप्राय' के २ नाम हैं।

[वीति] ॥ विसयनम् । 'षिञ् बन्धने' ( स्वा० उ० अ०) । 'एरच्' (३।३।५६) । 'परिनिविभ्यः सेव–' (८।३।७० ) इति षः । यत्तु—वध्यन्तेऽत्र, इति 'पुसि–' (३।३।११८) इति घ । विसीयते विसिनोति वाऽत्र–इति मुकुटेनोक्तम् । तन्न । भावप्रत्ययानामेव पूर्वापरयोर्दर्शनेनाधिकरणार्थस्यानौचित्यात् । ल्युट्प्रसङ्गाच्च । बध्यन्तेऽत्र । 'पुसि–' इति 'घ' इत्यस्यानुपयोगाच्च ॥(१)॥*॥ शीङः [ स्वप्ने' (अ० आ० से०)]। 'एरच्' (३।३।५६) ॥*॥ आश्रय' इति पाठे—'एरच्' (३।३।५६) ॥ ( २ ) ॥*॥ द्वे 'आश्रयस्य' ।

क्षिपायां क्षेपणम्

क्षिपा ( स्त्री ), क्षेपणम् ( न ), 'प्रेरणा करने या फेकने' के २ नाम हैं।

[ क्षीति ] ॥ क्षेपणम् । 'क्षिप प्रेरणे' ( तु० उ० अ० )। भिदाद्यङ् ( ३।३।१०४ ) ॥ ( १ ) ॥ * ॥ ल्युट् ( ३।३।११५ ) ॥ ( २ ) ॥*॥ द्वे 'प्रेरणस्य' ।

गीर्णिर्गिरौ

गीर्णिः, गिरिः ( २ स्त्री ), 'निगलने' अर्थात् 'घोंटने' के २ नाम हैं।

१. 'औणादिकोऽप्ययच् । 'क्लमथुरित्यपपाठः' इति स्वामी ।

[ गीरिति ] ॥ गिलनम् । 'गृ निगरणे' ( तु० प० से० )। क्तिन् ( ३।३।९४ )। 'ऋल्वादिभ्य क्तिन्निष्ठावत्' [ वाच्यः ] ( वा० ८।२।४४ ) ॥ ( १ ) ॥ * ॥ 'इक्कृष्यादिभ्य' ( वा० ३।३।१०८ )।—साहचर्यात्स्त्रीत्वम्—इति मुकुटश्चिन्त्य । 'स्त्रियाम्' इत्यधिकारात् ॥ ( २ ) ॥ द्वे 'गिलनस्य'।

गुरण'मुद्यमे ॥ ११ ॥

गुरणम् ( न ), उद्यम ( पु ), 'उद्यम, उद्योग'के २ नाम हैं।

[गुरेति] ॥ 'गुरी उद्यमे' (तु० प० से०) । कुटादि ल्युट् (३।३।११५) ॥ ( १ ) ॥ * ॥ उद्यमनम् । 'यम उपरमे' ( भ्वा० प० से० )। घञ् (३।३।१८) । संज्ञापूर्वकत्वाद् वृद्ध्यभाव[२] ॥(२)॥*॥ द्वे 'भारायुद्यमनस्य'।

उन्नाय उन्नये

उन्नाय, उन्नय (२ पु), 'उन्नति या ऊहा' के २ नाम हैं।

[उन्नेति] ॥ उन्नयनम् । 'भवोदोर्निय.' (३।३।२६) इति घञ् ॥ ( १ ) ॥*॥ 'क्वचिदपवादविषये उत्सर्गोऽभिनिविशते' इत्यच् (२) ॥*॥ द्वे 'उन्नयनस्य'।

श्रायः श्रयणे

श्राय ( पु ), श्रयणम् ( न ), 'सेवा' के २ नाम हैं।

[श्रेति] ॥ श्रयणम् । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। 'श्रिणीभुवो–' ( ३।३।२४ ) इति घञ् ॥ ( १ ) ॥*॥ ल्युट् ( ३।३।११५ ) ॥ ( २ ) द्वे सेवायाः'।

जयने जयः।

जयनम् (न), जय (पु), 'जीत, विजय'के २ नाम हैं।

[जयेति] ॥ जि जये' (भ्वा० प० अ०)। ल्युट् (३।३।११५ ) ॥ (१) ॥*॥ 'एरच्' ( ३।३।५६ ) ॥ ( २ ) ॥*॥ द्वे 'जयस्य'।

निगादो निगदे

निगाद, निगद ( २ पु ), 'स्पष्ट कहने के २ नाम हैं।

[नीति]॥ निगदनम् । 'गद व्यक्तायां वाचि' ( भ्वा० प० से० )। 'नौ गद–' ( ३।३।६४ ) इत्यप् वा ॥ ( १ ) ॥*॥ घञ् ( ३।३।१८ ) ॥ ( २ ) ॥*॥ द्वे 'गदनस्य'।

१. 'कुटादित्वाद् गुरणमाहु । चुरादेर्गोरणमपि।' इति स्वामी । 'गूरण—' इति पाठान्तरम्

२ 'अड उद्यमे' ( ग० ) इति निपातमादुद्यम ' इति क्षीरस्वामी ।

माद्रो मदे

माद, मद (२ पु), 'मद, हर्ष' के २ नाम हैं।

[मेति] ॥ मदनम् । 'मदी हर्षे' ( दि० प० से० )। 'मदोऽनुप–' ( ३।३।६७ ) इत्यप ॥ ( १ ) ॥*॥ 'मधमादस्ययो –' ( ६।३।९६ ) इति निर्देशात् क्वचिदपवाद–' इति न्यायाद्वा घञ ( ३।३।१८ ) ॥ ( २ ) ॥ * ॥ द्वे 'हर्षस्य'।

उद्वेग उद्भमे ॥ १२ ॥

उद्वेग, उद्भ्रम ( २ पु ), 'घबराहट'के २ नाम हैं।

[उदिति] ॥ उद्वेजनम् । 'ओविजी भयचलनयो' ( तु० आ० से० )। घञ् ( ३।३।१८ ) ॥ ( १ ) ॥*॥ उद्भ्रमणम् । 'भ्रमु अनवस्थाने' ( दि० प० अ० )। घञ् (३।३।१८)। 'नोदात्तोप–' ( ७।३।३४ ) इति न वृद्धि ॥ ( २ ) ॥*॥ द्वे 'उद्वेजनस्य'।

विमर्दन परिमले

विमर्दनम् ( न ), परिमल ( पु ), 'शरीरमें कुङ्कुम, चन्दन या उबटन आदिको लगाने' के २ नाम हैं।

[वीति] ॥ 'मृद क्षोदे' ( क्र्या० प० से० )। ल्युट् ( ३।३।११५ ) ॥ ( १ ) ॥ * ॥ परिमलनम् । 'मल धारणे' ( भ्वा० आ० से० )। घञ् ( ३।३।१८ )। संज्ञापूर्वकत्वान्न वृद्धि ॥ ( २ ) ॥*॥ द्वे 'कुङ्कुमादिमर्दनस्य'।

अभ्युपपत्तिरनुग्रहः।

अभ्युपपत्ति ( स्त्री ), अनुग्रह ( पु ), 'अनुग्रह' अर्थात् भलाई करने या बुराईसे बचाने' के २ नाम हैं।

[एति] ॥ अभ्युपपदनम् । 'पद गतौ' ( दि० आ० अ० )। क्तिन् ( ३।३।९४ ) ॥ ( १ ) ॥*॥ 'अनुग्रहणम्। ग्रह उपादाने' ( क्र्या० उ० से० )। 'ग्रहवृदृ–' ( ३।३।५८ ) इत्यप् ॥ ( २ ) ॥*॥ द्वे 'हितसंपादनाहितनिवारणप्रवृत्ते'।

निग्रहस्तु निरोधः[१] स्यात्

निग्रह, निरोध ( २ पु ), 'निग्रह' अर्थात् 'बुराई करने और भलाईसे बचाने ( रोकने )' का १ नाम है।

[नीति]॥ निग्रहणम् । अप् ( ३।३।५८ )। [निग्रहो भर्त्सनेऽपि स्यान्मर्यादायां च बन्धने' इति मेदिनी, [१७६। १७] ॥ ( १ ) ॥ * ॥ निरोधनम् । 'रुधिर् आवरणे'

१. '–विरोध स्यात्' इति पाठान्तर स्वामिग्रन्थे। "निरोध" इति पाठ्यम् । विग्रहो विरोध इति वा" इति स्वामी ।

(रु० उ० अ०)। घञ् (३।३।१८)॥ (२)॥*॥ द्वे 'निरोधस्य'।

अभियोगस्त्वभिग्रहः ॥ १३ ॥

अभियोग., अभिग्रहः (२ पु), 'युद्ध आदिमें ललकारने' के २ नाम हैं।

[अभीति]॥ अभियोजनम्। 'युजिर् योगे' (रु० उ० अ०)। घञ् (३।३।१८)॥ (१)॥*॥ अभिग्रहणम्। अप् (३।३।५८)। 'अनुग्रहोऽभिग्रहणेऽप्यभियोगे च गौरवे' इति रुद्रः॥ (२)॥ ॥ द्वे 'कलहाह्वानस्य'।

मुष्टिबन्धस्तु संग्राहः

मुष्टिबन्धः, संग्राहः (२ पु), 'मुट्ठी बाँधने या प्रतिमल्ल आदिको पकड़ने'के २ नाम हैं।

[मुष्टीति]॥ मुष्टेर्बन्ध॥ (१)॥*॥ संग्रहणम्। 'समि मुष्टौ' (३।३।३६) इति ग्रहेर्घञ्॥ (२)॥*॥ द्वे 'मुष्टिबन्धनस्य'।

डिम्बे डमरविप्लवौ।

डिम्बः, डमर., विप्लवः (३ पु), 'प्रलय, लूटना (डाका), या हथियारोंकी लड़ाई' के ३ नाम हैं। (जिसे बालक रस्सी लपेटकर नचाते हैं, उस 'लट्टू' अर्थमें भी 'डिम्ब' शब्दका प्रयोग श्रीहर्षने नैषधचरितमें किया है[1])।

[डीति]॥ डिम्बनम्। 'डि विनोदे' ( )। घञ् (३।३।१८)। —'डीङ् विहायसा गतौ (दि० आ० अ०)। डयनं विद्रव डिम्बम्। उणादिनिपात —इति मुकुटस्तु निर्मूल.। 'भयध्वनौ पुप्फुसेऽपि डिम्ब प्लीहनि विप्लवे' इति रभस.। ['डिम्ब एरण्डभययोर्विप्लवे प्लीह्नि पुप्फुसे' इति हैम, २।३०८]॥ (१)॥*॥ 'डम' इति शब्दस्य राणम्। 'रा दाने' (अ० प० अ०)। बाहुलकाद्वलर्थे क॥ (२)॥*॥ विप्लवनम्। प्लुङ् गतौ' (भ्वा० आ० अ०)। 'ऋदोरप्' (३।३।५७)॥(३)॥*॥ त्रीणि 'धाडकलुण्ठनादे'। अयसकलहस्य—इति स्वामी।

बन्धनं प्रसितिश्चारः

बन्धनम् (न), प्रसितिः (स्त्री), चार (पु), 'बन्धन' के ३ नाम हैं।

[बन्धेति]॥ 'बन्ध बन्धने' (क्रया० प० अ०)। ल्युट् (३।३।११५)॥ (१)॥*॥ प्रसयनम्। 'षिञ् बन्धने' (स्वा० उ० अ०)। क्तिन् (३।३।९४)॥ (२)॥*॥ चरणम्। 'चर गतौ' (भ्वा० प० से०)। अनेकार्थत्वाद् बन्धने। घञ् (३।३।१८)। 'बन्धापसर्पयोश्चारः' इति रुद्र॥ (३)॥*॥ त्रीणि 'बन्धनस्य'। मुकुटस्तु—बन्धनसाधनरज्जुनिगडादे —इत्याह। तन्न। भावप्रकरणात्। स्वामी तु—'चार'स्थाने 'स्वारम्' पठित्वा स्वारादीनां चतुर्णां पर्यायतामाह। स्वरति। 'स्तृ शब्दोपतापयोः' (भ्वा० प० से०)। अन् (३।१।१३४)। प्रज्ञाद्यण् (५।४।३८)।

स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥

स्पर्श., स्प्रष्टा, उपतप्ता (३ पु), 'संतप्त या उपताप रोगसे पीड़ित' के ३ नाम हैं।

[स्पर्श इति]॥ स्पृशति। 'स्पृश बाधनस्पर्शनयो.' (तु० आ० से०)। 'पदरुज—' (३।३।१६) इत्यत्र 'स्पृश उपतापे' (वार्ति०) इति कर्तरि घञ्॥*॥ ('स्पश')इति रेफहीनपाठे तु 'स्पश-स्पर्श-बाधनयो' (भ्वा० उ० से०) इति धातोरच् (३।१।१३४)। ['स्पर्शो वर्णाक्षरे दाने स्पर्शने स्पर्शके रुचि' इति हैम, २।५६८]॥ (१)॥*॥ स्पृशति। तृच् (३।१।१३३)। 'अमुदात्तस्य च—' (६।१।५९) इत्यमागमः॥ (२)॥*॥ उपतपति। 'तप संतापे' (भ्वा० प० अ०)। तृच् (३।१।१३३)॥ (३)॥*॥ यद्वा—स्वरस्पर्शयोर्भवे घञ्। स्प्रष्टोपतप्त्रोर्भावे 'कृत्यल्युटो बहुलम्' (३।१।१३३) इति तृच्। भावप्रकरणानुरोधात्॥*॥ त्रीणि 'संतप्तस्य' 'सतापस्य वा'।

निकारो विप्रकारः स्यात्

निकारः, विप्रकारः (२ पु),'अपकार, बुराई'के २ नाम हैं।

[नीति]॥ निकृष्टीकरणम्। कृञो घञ् (३।३।१८)। 'निकार. स्यात् परिभवे धान्यस्योत्क्षेपणेऽपि च' इति धरणि.॥ (१)॥*॥ विप्रकरणम्। घञ् (३।३।१८)॥ (२)॥*॥ द्वे 'अपकारस्य'

आकारस्त्विङ्ग इङ्गितम्।

आकारः, इङ्ग (२ पु), इङ्गितम् (न), 'मतलबके अनुसार चेष्टा' के ३ नाम हैं।

[आकेति]॥ आकरणम्। घञ् (३।३।१८)॥ (१)॥*॥ इङ्गनम्। 'इगि गतौ' (भ्वा० प० से०)। घञ् (३।३।१८) ['इङ्ग. स्यादिङ्गितेऽद्भुते। ज्ञानजङ्गमयोश्चापि' इति हैम", २।३०-३१]॥ (२)॥*॥ क्त. (३।३।११४)॥ (३)॥*॥ त्रीणि 'अभिप्रायानुरूपचेष्टायाः'।

परिणामो विकारो द्वे समे विकृतिविक्रिये ॥ १५ ॥

परिणामः, विकारः (२ पु), विकृतिः, विक्रिया (२ स्त्री), 'विकार, स्वभावके बदलने' के ४ नाम हैं।

---

[1] तद्यथा—'बालेन नक्तं समयेन मुक्तं रौप्यं लसद्दिम्बमिवेन्दुबिम्बम्' इति नैषधचरिते (२२।५३)।

[पेति] ॥ परिणमनम् । 'णम प्रह्वत्वे' (भ्वा० प० अ०) । घञ् (३।३।१८) ॥ (१) ॥ * ॥ विकरणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ विकरणम् । क्तिन् (३।३।९४) ॥ (३) ॥*॥ 'कृञः श च' (३।३।१००) ॥ (४) ॥*॥ चत्वारि 'प्रकृतेरन्यथाभावस्य' । द्वयो साम्य स्नोत्वात् ।

अपहारस्त्वपचयः

अपहारः, अपचय ( २ पु ), 'छीन लेने या घटने' के २ नाम हैं ।

[अपेति] ॥ अपहरणम् । हृञ् हरणे' (भ्वा० उ० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥ अपचयनम् । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे 'अपहरणस्य' ।

समाहारः समुच्चयः ।

समाहार, समुच्चयः ( २ पु ), 'बटोरने, इकट्ठा या ढेर करने' के २ नाम हैं ।

[सेति] ॥ समाहरणम् । घञ् (३।३।१८) ॥ (१) ॥ ॥ समुच्चयनम् । 'चिञ् चयने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे 'राशीकरणस्य' ।

प्रत्यहार उपादानम्

प्रत्याहारः ( पु ), उपादानम् ( न ), 'इन्द्रियोंको अपने ( इन्द्रियोंके ) विषयोंसे हटाकर वशीभूत करने' के २ नाम हैं ।

[प्रेति] ॥ प्रत्याहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ उपादानो ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'स्वविषयेभ्य इन्द्रियपरावर्तनस्य' ।

विहारस्तु परिक्रमः ॥ १६ ॥

विहार, परिक्रमः ( २ पु ), 'टहलने' के २ नाम हैं ।

[वीति] ॥ विहरणम् । घञ् (३।३।१८) [विहारस्तु जिनालये । लीलाया भ्रमणे स्कन्धे' इति हैम, २।६३८-६३९] ॥ (१) ॥*॥ परिक्रमणम् । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । घञ् (३।३।१८) । नोदात्तोपदेश-' (७।३।३४)इति वृद्धिर्न ॥ (२)॥*॥ द्वे 'क्रीडार्थसंचरणस्य' ।

अभिहारोऽभिग्रहणम्

अभिहारः ( पु ), अभिग्रहणम् ( न ), 'चुराने' के २ नाम हैं ।

[अभीति] ॥ अभिहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अभिग्रहल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'आभिमुख्येन ग्रहणस्य' ।

निर्हारोऽभ्यवकर्षणम् ।

निर्हारः ( पु ), अभ्यवकर्षणम् ( न ), 'पैर आदिमें चुभे ( गड़े हुए ) काँटे आदिको निकालने' के २ नाम हैं ।

[निरिति] ॥ निर्हरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अभ्यवकृषेर्ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'शल्यादेर्युक्त्या निःसारणस्य' ।

अनुहारोऽनुकारः स्यात्

अनुहार, अनुकारः ( २ पु ), 'अनुकरण ( नकल ) करने' के २ नाम हैं ।

[अन्विति] ॥ अनुहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अनुकरणम् । घञ् (३।३।१८) ॥ (२)॥*॥ द्वे 'सदृशकरणस्य' ।

अर्थस्यापगमे व्ययः ॥ १७ ॥

व्यय' ( पु ), 'धनादिके खर्च होने'का १ नाम है ।

[अर्थेति] ॥ व्ययनम् । 'व्यय वित्तसमु सर्गे' (चु० उ० से०) अदन्त । घञ् (३।३।१८) । 'एरच्' (३।३।५६) वा ॥ (१) ॥*॥ एक 'द्रव्यापगमस्य' ।

प्रवाहस्तु प्रवृत्तिः स्यात्

प्रवाह ( पु ), प्रवृत्तिः ( स्त्री ), 'पानी आदि तरल पदार्थोंके निरन्तर बहने' के २ नाम हैं' ।

[प्रेति] ॥ प्रवहणम् । 'वह प्रापणे' (भ्वा० उ० से०)। घञ् (३।३।१८)। ['प्रवाहस्तु व्यवहाराम्बुवेगयो । इति हैम, ३।८१०] ॥ (१) ॥*॥ प्रवर्तनम् । 'वृतु वर्तने' (भ्वा० आ० से०) । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे 'अविच्छेदेन जलादिप्रवृत्ते' ।

प्रवहो गमनं बहिः ।

प्रवहः ( पु ), 'जलादिके बाहर निकलने' के १ नाम हैं ।

[प्रेति] ॥ प्रकृष्टो वह । 'गोचरसञ्चर-' (३।३।११९) इति साधु । 'प्रवहस्तु बहिर्यात्रावातरिम्प्रभेदयो ' इति विश्व ' (मेदिनी) [१७६।२०] ॥ (१) ॥*॥ एक 'बहिर्यात्राया' ।

वियामो नियमो यामो यमः संयामसंयमौ ॥ १८ ॥

वियाम, नियम, याम, यम, संयाम, संयम ( ६ पु ), 'संयम' अर्थात् 'योगके सयमनामक अङ्ग-विशेष'के ६ नाम हैं ।

[वीति] ॥ नियमनम् । यम समुपनिविषु च' (३।३।६३) इत्यप् वा । चावनुपसर्गेऽप्यप् वा । पक्षे घञ्

१ विश्वे पुस्तकद्वये 'प्रवह शब्दस्य विवरणानुपलब्धेरत्र 'मेदिनी'त्येव पाठः समुचित ।

['यमः काले च यमजेऽप्यहिंसादिपु पञ्चसु। सयमे यमने ध्वाङ्क्षे' इति 'यामो प्रहरसंयमो। इति च हैम', २।३३६] ॥(१)॥*॥ (२) ॥*॥ (३) ॥*॥ (४) ॥*॥ (५) ॥*॥ (६) ॥*॥ 'षट् संयमनस्य'। स्वामी तु-द्वे विविधयमनस्य,' द्वे 'उपरतिमात्रस्य,' द्वे 'सयमनस्य'—इत्याह।

हिंसाकर्माभिचारः स्यात्

हिंसाकर्म (न), अभिचार. (पु), 'हिंसा आदि करने' के २ नाम हैं।

[हिंसेति] ॥ हिंसाफलं कर्म। शाकपार्थिवादि. (वा० २।१।७८) ॥ (१) ॥ * ॥ अभिचरणम्। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'मारणादिक्रियायाः'।

जागर्या[1] जागरा द्वयोः।

जागर्या (स्त्री), जागरा (स्त्री !), 'जागने' के २ नाम हैं।

[जेति] ॥ जागरणम्। 'जागर्तेरकारो वा' (वा० ३।३।१०१)। पक्षे (से) यक् (३।१।६६)। 'जाग्रोऽवि-' (७।३।८५) इति गुण ॥ (१) ॥*॥ (२) ॥*॥ भावे घञि पुंसि ['जागर' अपि] ॥*॥ द्वे 'जागरणस्य'।

विघ्नोऽन्तरायः प्रत्यूहः

विघ्नः, अन्तरायः, प्रत्यूहः (३ पु), 'विघ्न' के ३ नाम हैं।

[वीति] ॥ विहननम्। घञर्थे क. (वा० ३।३।५८) (१) ॥*॥ अन्तर्मध्ये, अन्तरस्य व्यवधानस्य वायनम्। 'अय गतौ' (भ्वा० आ० से०)। 'इण् गतौ' (अ० प० अ०) वा। घञ् (३।३।१८)। अच् (३।२।५६) वा ॥ (२) ॥*॥ प्रत्यूहनम्। घञ् (३।३।१८)॥ (३) ॥*॥ त्रीणि 'विघ्नस्य'।

स्यादुपघ्नोऽन्तिकाश्रये ॥ १९ ॥

उपघ्न', अन्तिकाश्रयः (२ पु), 'समीप रहने, आश्रय करने' के २ नाम हैं।

[स्यादिति] ॥ उपहन्यते। उपहनन वा। 'उपघ्न आश्रये' (३।३।८५) इति साधु. ॥ (१) ॥*॥ अन्तिके आश्रीयते, आश्रयण वा। 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे सन्निहिताश्रयस्य' 'आश्रयणस्य वा'।

निर्वेश उपभोगः स्यात्

निर्वेश., उपभोगः (२ पु), 'उपभोग' के २ नाम हैं।

[निरिति] ॥ निर्वेशनम्। विशेर्घञ् (३।३।१८) ॥ (१)। ['निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च' इति मेदिनी, १६४।२२ ] ॥*॥ उपभोजनम्। 'भुज पालनाभ्यवहारयोः' (रु० प० से०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'उपभोगस्य'।

परिसर्पः परिक्रिया।

परिसर्पः (पु), परिक्रिया (स्त्री), 'परिवार आदि इष्टजनोंसे घिरे रहने' के २ नाम हैं।

[परीति] ॥ समन्तात् सर्पणम्। 'सृप्लृ गतौ' (भ्वा० प० से०)। घञ् [३।३।१८] ॥ (१) ॥*॥ परिकरणम्। 'कृञः श च' (३।३।१००)। रिङ् शयग्लिङ्क्षु' (७।४।२८) ॥ (२) ॥*॥ द्वे 'परिजनादिना वेष्टनस्य'।

विधुरं तु प्रविश्लेषे

विधुरम् (न), प्रविश्लेषः (पु), 'परिवार आदि इष्टजनोंसे अलग होने' के २ नाम हैं।

[वीति] ॥ विगता धूः कार्यभारः। 'ऋक्पूर्-' (५।४।७४) इत्य ॥ (१) ॥*॥ प्रविश्लेषणम्। 'श्लिष आलिङ्गने' (दि० आ० अ०)। घञ् (३।३।१८)। 'वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु' इति त्रिकाण्डशेष. [३।३।३७२] ॥ (२) ॥ द्वे 'विश्लेषस्य'।

अभिप्रायश्छन्द आशयः ॥ २० ॥

अभिप्राय', छन्दः, आशयः (३ पु), 'आशय, भाव, मतलब' के ३ नाम हैं।

[अभीति] ॥ अभिप्रयणम्। 'प्रीञ् तर्पणे' (क्र्या० उ० अ०)। घञ् (३।३।१८) ॥ (१) ॥*॥ छन्दनम्। 'छदि संवरणे' (चु० प० से)। घञ् (३।३।१८) ॥(२) ॥*॥ आशयनम्। 'शीङ् [स्वप्ने]' (अ० आ० से०)। 'एरच्' (३।३।५६) ॥ (३) ॥*॥ त्रीणि 'अभिप्रायस्य'।

संक्षेपणं समसनम्

संक्षेपणम्, समसनम् (२ न), 'संक्षेप (लाघव, थोड़ा, हल्का) करने' के २ नाम हैं।

[समिति] ॥ संक्षिपेर्ल्युट् (३।३।११५) ॥(१)॥*॥ 'असु क्षेपणे' (दि० प० से०)। ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'संक्षेपस्य'।

पर्यवस्था विरोधनम्।

पर्यवस्था (स्त्री), विरोधनम् (न), 'विरोध करने' के २ नाम हैं।

[ पर्येति ] ॥ पर्यवस्थानम्। 'आतश्चो-' (३।३।१०६) इत्यः ॥ (१) ॥*॥ 'रुधिर् आवरणे' (रु० उ० अ०)। ल्युट् [३।३।११५] ॥(२)॥*॥ द्वे 'विरोधस्य'।

१. "इच्छा' इति सूत्रे 'जागर्तेरकारो वा वक्तव्य.' इति (वा०) पक्षे क्यप्। 'जाग्रोऽविचिण्णल्ङित्सु' इति गुण.। घञि तु 'जागर' इति स्वामी। 'जागर्या, जागर्ति.' इत्यपीति बोध्यम्।

परिसर्या परीसार.

परिसर्या ( स्त्री ), परीसार ( पु ), 'सब तरफ जाने' के २ नाम हैं।

[परीति] ॥ परिसरणम् । 'सृ गतौ' (भ्वा० प० अ०)। 'परिचर्यापरिसर्या–' (वा० ३।३।१०१) इति साधु ॥ (१) ॥*॥ घञ् (३।३।१८)। 'उपसर्गस्य घञि–' (६। ३।१२२) इति दीर्घः ॥ (२) ॥*॥ द्वे 'सर्वतो गमनस्य'।

स्यादास्था त्वासना स्थितिः ॥ २१ ॥

आस्था, आसना, स्थिति ( ३ स्त्री ), 'टिकाव या स्थिति' के ३ नाम हैं।

[स्यादिति]॥ आसनम्। 'आस उपवेशने' (अ० आ० से०)। ण्यत् ( ३।१।११३ )। [ 'आस्य मुखभवे मुखे। सुखान्तरास्था तु स्थि यत्नम्' इति हेम, २।३४८-३४९ ]॥ (१) ॥*॥ 'ण्यास–' (३।३।१०६) इति युच ॥ ( २ ) स्थानम्। 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०)। 'स्थागा–' (३।३।९५) इति क्तिन् ॥(३)॥*॥ त्रीणि 'आसनस्य'।

विस्तारो विग्रहो व्यासः

विस्तार, विग्रह, व्यास (३ पु), 'फैलाव'के ३ नाम हैं।

[वीति] ॥ विस्तरणम्। 'स्तृञ् आच्छादने' (क्र्या० उ० से०)। 'प्रथने वावशब्दे' ( ३।३।३३ ) इति घञ् ॥ (१) ॥*॥ विग्रहणम्। 'ग्रहवृदृ–' (३।३।५८) इत्यप्। [ विग्रह कायविस्तारविभागे ना, रणेऽस्त्रियाम्।' इति मेदिनी, १७६।२३ ] ॥ ( २ ) ॥ * ॥ व्यसनम्। 'असु क्षेपणे' (दि० प० से०)। घञ् (३ ३।१८) ॥(३)॥*॥ त्रीणि 'विस्तारस्य'।

स च शब्दस्य विस्तरः ।

विस्तर (पु), 'शब्दके फैलाव'का १ नाम है।

[ स इति ] ॥ स = व्यास । 'ऋदोरप्' ( ३।३। ५७ ) ॥ (१) ॥*॥ एक 'शब्दविस्तरस्य'।

स्यादन्मर्दनं संवहनम्¹

मर्दनम्, सवहनम् ( २ न ), 'शरीरको दबाने' के २ नाम हैं।

[ स्यादिति ] ॥ 'मृद क्षोदे' (क्र्या० प० से०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'वह प्रापणे' ( भ्वा० उ० अ० )। स्वार्थण्यन्तात्ल्युट् (३।३।११५) ।—'वाह-नमाहितात्' (८।४।८) इति निपातनाद्दीर्घः । [संवाहनम्] —इत्येके ॥ (२) ॥*॥ द्वे 'पादमर्दनादे'।

विनाशः स्याददर्शनम् ॥ २२ ॥

विनाश (पु), अदर्शनम् ( न ), 'अन्तर्धान होने या छिप जाने' के २ नाम हैं।

[ वीति ] ॥ विनशनम्। 'णश अदर्शने' ( दि० प० से० )। घञ् (३।३।१८) ॥ ( १ ) ॥*॥ दर्शनस्य अभाव ॥ (२) ॥*॥ द्वे 'तिरोधानस्य'।

संस्तवः स्यात्परिचयः

संस्तव, परिचय ( २ पु ), 'परिचय'के २ नाम हैं।

[ समिति ] ॥ संस्तवनम्। 'ष्टुञ् स्तुतौ' (अ० प० अ०)। 'ऋदोरप्' (३।३।५७) ॥ ( १ ) ॥*॥ सम्पत्ता च्चयनम्। 'चिञ् चयने' (स्वा० उ० अ०)। 'एरच्' (३। ३।५६) ॥ (२) ॥*॥ द्वे 'परिचयस्य'।

प्रसरस्तु विसर्पणम् ।

प्रसर ( पु ), विसर्पणम् ( न ), 'धान ( व्रण ) आदि के बढ़ना ( फैलाव )'के २ नाम हैं।

[प्रेति] ॥ प्रसरणम्। सृ गतौ (भ्वा० प० से०)। बाहुलकादप् ॥(१)॥*॥ 'सृप्लृ गतौ' (भ्वा० प० से०)। ल्युट् (३।३।११५)॥(२)॥*॥ द्वे 'व्रणादिविसरणस्य'।

नीवाकस्तु प्रयामः स्यात्

नीवाक, प्रयाम ( २ पु ), 'धान्य आदिको एकत्रित करने के २ नाम हैं।

[ नीति ] ॥ निवचनम्। घञ् (३।३।१८)। 'उपसर्गस्य–' (६।२।१२२) इति दीर्घः ॥ (१) ॥*॥ प्रयमणम्। यमेर्घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'धान्यसञ्चयस्य, क्रयादरस्य वा'।

संनिधिः संनिकर्षणम् ॥ २ ॥

संनिधि (पु), संनिकर्षणम् ( न ), 'पास, समीप करने'के २ नाम हैं।

[ समिति ] ॥ संनिधानम्। धाञः 'उपसर्गे घोः कि' ( ३।३।९२ )। [ 'संनिधिरन्तिके। प्रत्यक्षे च' इति हैम ३।३७९ ] ॥ (१) ॥*॥ कृषेर्ल्युट् ( ३।३।११५ ) ॥ (२) ॥*॥ द्वे संनिधानस्य'।

लवोऽभिलावो लवने

लव, अभिलाव ( २ पु ), लवनम् ( न ), 'काटने' के २ नाम हैं।

[ लेति ] ॥ लवनम्। 'लूञ् छेदने' ( क्र्या० उ० से० )। 'ऋदोरप्' ( ३।३।५७ )। [ 'लव कालभिदि

---

१ 'संवाहनम्' इति पाठं मत्वा 'संवाहनं स्पर्शसुखम्' इति तल्लक्ष्य स्वाम्याह। कालिदासोऽपि—'सम्भोगान्ते सममुपचितो हस्तसंवाहनानाम्' इत्याह (मेघ० उ० ३३)।

छिदि । विलासे रामजे लेशे जपाकिंजल्कपक्ष्मणोः । गोपुच्छलोमस्वपि च' इति हैम., २।५४८-५४९ ] ॥ ( १ ) ॥*॥ 'निरभ्यो. पूल्वोः' (३।३।५८) इति घञ् ॥ (२) ॥*॥ ल्युट् (३।३।११५)॥(३)॥*॥ त्रीणि 'छेदनस्य' ।

निष्पावः पवने पवः ।

निष्पावः ( पु ), पवनम् ( न ), पवः ( पु ), 'धान आदि अन्नको ओसाने या सूप आदिसे फटककर भूसा अलग करने' के ३ नाम हैं।

[ निष्पेति ] ॥ निष्पवनम् । घञ् ( ३।३।१८ ) ॥ (१) ॥*॥ ल्युट् ( ३।३।११५ ) ॥ ( २ ) ॥ * ॥ अप् (३।३।५७) ॥ ( ३ ) ॥*॥ त्रीणि 'धान्यादीनां बहुलीकरणस्य' ।

प्रस्तावः स्यादवसरः

प्रस्तावः, अवसरः ( २ पु ), 'अवसर, प्रसङ्ग, प्रस्ताव' के २ नाम हैं

[ प्रेति ] ॥ प्रस्तवनम् । 'ष्टुञ् स्तुतौ' ( अ० प० अ० ) । 'प्रे द्रुस्तुस्रुव.' ( ३।३।२७ ) इति घञ् ॥ ( १ ) ॥*॥ अवसरणम् । 'सृ गतौ' ( भ्वा० प० अ० ) । बाहुलकादप् ॥ (२) ॥*॥ द्वे 'प्रसङ्गस्य' ।

त्रसरः सूत्रवेष्टनम् ॥ २४ ॥

त्रसरः ( पु ), सूत्रवेष्टनम् ( न ), 'कपड़ा बुननेके लिये जुलाहा आदिके सूत लपेटने ( ताना-पाई करने )' के २ नाम हैं।

[त्रेति]॥ त्रसनम् । 'त्रसी उद्वेगे' ( दि० प० से० ) । अरम् बाहुलकादौणादिक । त्रसेर्भद्रादित्वादरम्—इति मुकुटस्तत्पाणिनीय. ॥*॥ 'तसर.' इति पाठे–'तन्यृषिभ्या क्सरन्(उ० ३।७५)॥ (१)॥*॥ ( २ )॥*॥ द्वे 'सूत्रस्य वेष्टनक्रियायाः' ।

प्रजनः स्यादुपसरः

प्रजनः, उपसरः, ( २ पु ), 'पहली बार गर्भ धारण' के २ नाम हैं।

[ प्रजेति ] ॥ प्रजननम् । 'जनी' [प्रादुर्भावे](दि० आ० से०) । घञ् (३।३।१८) । 'जनिवध्योः–' (७।३।३५) इति न वृद्धिः ॥(१)॥*॥ उपसरणम् । 'सृ गतौ' (भ्वा० प० अ०) । 'प्रजने सर्तेः' (३।३।७१) इत्यप् ॥ (२) ॥*॥ द्वे 'प्रथमगर्भग्रहणस्य' ।

प्रश्रयप्रणयौ समौ ।

प्रश्रयः, प्रणयः ( २ पु ), 'प्रेम, प्रीति' के २ नाम हैं।

[प्रेति] ॥ प्रश्रयणम् । 'श्रिञ्' [सेवायाम्] (भ्वा० उ० से०) । 'एरच्' (३।३।५६)॥*॥ 'प्रसर' इति पाठे—सरतेर्बाहुलकादप् । 'प्रसरः प्रणये वेगे' (इति मेदिनी) [१३५।१८१] ॥(१)॥*॥ प्रणयनम् । 'णीञ्' [प्रापणे] (भ्वा० उ० अ०) । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे 'प्रीत्या प्रार्थनस्य' ।

धीशक्तिर्निष्क्रमः

धीशक्तिः ( स्त्री ), निष्क्रमः ( पु ), 'बुद्धिके सामर्थ्य' के २ नाम हैं।

[धीति] ॥ धियः शक्तिः । साऽष्टधा—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणाः' ॥ (१) ॥*॥ निष्क्रमणम् । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । घञ् (३।३।१८) । 'नोदात्तोप–' ( ७।३।३४ ) इति वृद्धिर्न । 'निष्क्रमो निर्गमे ख्यातो बुद्धिसम्पदि निष्क्रम.' इति रुद्रः । [ 'निष्क्रमो निर्गमे बुद्धिसम्पत्तौ दुष्कुलेऽपि च' इति हैम., ३।४९९ ] ॥ (२) ॥*॥ द्वे 'बुद्धिसामर्थ्यस्य' ।

अस्त्री तु संक्रमो दुर्गसंचरः ॥ २५ ॥

संक्रमः ( पु न ), दुर्गसंचरः ( पु ), 'किलामें जाने, दुर्ग ( किला ) के मार्ग' के २ नाम हैं।

[अस्त्रीति] ॥ संक्रमणम् । घञ् (३।३।१८) । 'नोदात्तोप–' (७।३।३४) इति न वृद्धि. ॥ (१) ॥*॥ संचरणम् । 'चर गतौ' (भ्वा० प० से०) । 'पुंसि–' ( ३।३।११८) इति घ । दुर्गस्य संचर. ॥*॥ घञि तु 'संचार.' । 'संचारो निर्गमो भ्रमाम्बुपथ.' इति रत्नकोषः ॥ ( २ ) ॥*॥ द्वे 'दुर्गप्रवेशनक्रियाया.' ।

प्रत्युत्क्रमः प्रयोगार्थः

प्रत्युत्क्रमः, प्रयोगार्थः (प्रयोगके पर्यायवाचक सब शब्द । २ पु ), 'कार्यारम्भमें पहली बार प्रयोग करने या युद्धके लिये अच्छी तरह उद्योग करने'के २ नाम हैं।

[ प्रेति ] ॥ प्रत्युत्क्रमणम् । घञ् (३।३।१८) ॥*॥ प्रयोजनम् । 'युजिर् योगे' (रु० उ० अ०) । घञ् (३।३।१८) । प्रयोगोऽर्थो यस्य ॥*॥ 'प्रयुद्धार्थः' इति पाठे–प्रकृष्टं युद्धमर्थोऽस्य । 'प्रत्युत्क्रम. प्रयुद्धार्थ.' इति भागुरिः ॥ ( २ ) ॥*॥ द्वे 'कर्मारम्भे प्रथमप्रयोगस्य' ।

प्रक्रमः स्यादुपक्रमः ।

स्यादभ्यादानमुद्घात आरम्भः

प्रक्रमः, उपक्रमः ( २ पु ), अभ्यादानम् ( न ), उद्घातः आरम्भः ( २ प ), 'आरम्भमात्र' के ५ नाम हैं।

[प्रेति] ॥ प्रक्रमणम् । घञ् (३।३।१८)॥(१)॥*॥ उपक्रमणम् । [ 'उपक्रम स्यादुपधाचिकित्सारम्भविक्रमे' इति विश्व, १४।५५ ] ॥ (२) ॥*॥ आभिमुख्येनादानम् ॥ (३) ॥*॥ उद्घनम् । हन्' [हिंसागत्यो ](अ० प० अ०) । घञ् (३।३।१८) । 'हनस्तोऽचिण्णलो' (७।३।३२)॥(४)॥*॥ आरम्भणम् । 'रभ राभस्ये' (भ्वा० आ० अ०) । घञ् (३।३।१८) । 'रधिजभोरचि' (७।१।६१) इति नुम् ॥ (५) ॥*॥ पञ्च 'आरम्भस्य' । (आदौ 'प्रथमारम्भस्य । त्रीणि 'आरम्भमात्रस्य'—इत्यन्ये ) ।

संभ्रमस्त्वरा ॥ २६ ॥

संभ्रम ( पु ), त्वरा ( स्त्री ), 'शीघ्रता, जल्दीबाजी' के २ नाम हैं।

[ समिति ] ॥ संभ्रमणम् । भ्रमु अनवस्थाने' (दि० प० से०) । घञ् (३।३।१८) । 'नोदात्तोप-' ( ७।३।३४) इति न वृद्धि ॥ (१) ॥*॥ त्वरणम् । 'ञित्वरा सम्भ्रमे' (भ्वा० आ० से०) । 'घटादय षित' (भ्वा० ग०) इति षित्वातिदेशादङ् (३।३।१०४) आवेगस्तु त्वरा त्वरि ' इति वाचस्पति ॥ (२) ॥*॥ द्वे 'त्वरायाः ' ।

प्रतिबन्धः प्रतिष्टम्भः

प्रतिबन्ध , प्रतिष्टम्भ ( २ पु ), 'कार्य आदिमें रुकावट पड़ने' के २ नाम हैं।

[प्रतीति] ॥ प्रतिबन्धनम् । 'बन्ध बन्धने' (क्र्या० प० अ०)। घञ् (३।३।१८)॥ (१) ॥*॥ प्रतिष्टम्भनम् 'ष्टम्भु रोधे' (सौत्र ) । घञ (३।३।१८) ॥ (२) ॥*॥ विष्कम्भ प्रतिबन्धो वियोग ' इति पालित ॥*॥ द्वे 'रोधस्य' ।

अयनायस्तु निपातनम् ।

अवनाय ( पु ), निपातनम् ( न ), 'नीचे झुकने' के २ नाम हैं।

[अवेति]॥ अवनयनम् । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । 'अवोदोर्नियः' (३।३।२६) इति घञ् ॥ ( १ ) ॥*॥ पते स्वार्थण्यन्ताल्ल्युट् (३।३।११५) ॥*॥ 'नियातनम्' इति पाठे—'यत निकारोपस्कारयो ' (चु० उ० से०) धातु ॥ (२) ॥*॥ द्वे 'अधोनयनस्य' ।

उपलम्भस्त्वनुभव

उपलम्भ, अनुभव ( २ पु ), 'अनुभव, प्राप्ति'के २ नाम हैं।

[विति] ॥ उपलम्भनम् । डुलभष् प्राप्तौ ( भ्वा० आ० अ० ) । घञ् ( ३।३।१८ ) । 'उपसर्गात्खल्घञो' (७।१।६७) इति नुम् ॥ (१) ॥*॥ अनुभवनम् । 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ द्वे 'अनुभवस्य' ।

समालम्भो विलेपनम् ॥ २७ ॥

समालम्भ ( पु ), विलेपनम् ( न ), 'चन्दन आदि लपेटने'के २ नाम हैं।

[सेति] । समालम्भनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ 'लिप उपदेहे' (तु० उ० अ०) । ल्युट (३।३।११५) ॥ (२) ॥*॥ द्वे कुङ्कुमादिनोपलेपस्य' ।

विप्रलम्भो विप्रयोगः

विप्रलम्भ , विप्रयोग ( २ पु ), 'अलग होने'के २ नाम हैं।

[वीति] । विप्रलब्धि । लभेर्घञ् (३।३।१८) ॥ (१) ॥*॥ विप्रयोजनम् । 'युजिर् योगे' (रुधा० उ० अ०) । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे 'रागिणोर्वियोजन[न]स्य' ।

विलम्भस्त्वतिसर्जनम् ।

विलम्भ ( पु ), अतिसर्जनम् ( न ), 'बहुत देने' के २ नाम हैं।

[वीति] ॥ विलब्धि । लभेर्घञ् (३।३।१८) ॥ (१) ॥*॥ 'सृज विसर्गे' (दि० आ० अ०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'दानस्य' ।

विश्रावस्तु प्रविख्यातिः

विश्राव ( पु ), प्रविख्याति ( स्त्री ), 'बहुत प्रसिद्धि' के २ नाम हैं।

[वीति] विश्रवणम् । 'श्रु श्रवणे' (भ्वा० प० अ०)। 'वौ क्षुश्रुवः' [३।३।२५] इति घञ् ॥ (१) ॥*॥ प्रविख्यानम् । क्तिन् (३।३।९४)॥ (२) ॥*॥ द्वे 'अतिप्रसिद्धेः'।

अवेक्षा प्रतिजागर ॥ २८ ॥

अवेक्षा ( स्त्री ), प्रतिजागर ( पु ), 'किसी वस्तु आदि की निगरानी ( देखभाल ) करने' के २ नाम हैं।

[एति]। अवेक्षणम् । ईक्ष दर्शने' (भ्वा० आ० से०)। 'गुरोश्च हल ' ( ३।३।१०३ ) इत्य ॥ (१) ॥*॥ प्रतिजागरणम् । 'जागृ' [निद्राक्षये'] (अ० प० से०) । घञ् (३।३।१८) । 'जाग्रोऽविचिण्-' (७।३।८५) इति गुण ॥ (२) ॥*॥ द्वे 'अवेक्षणस्य' ।

---

१ अस्मिन् सूत्रे 'रभ'धातोर्ग्रहणाभावादत्र 'रभेरशब्लिटो –' ( ७।१।६३ ) इति सूत्रेण नुमागम पठनीय आसीत् ।

निपाठनिपठौ पाठे

**निपाठः, निपठः, पाठः ( ३ त्रि ), 'पढ़ने' के ३ नाम हैं।**

[नीति] । निपठनम् । 'पाठ व्यक्तायां वाचि' ( भ्वा० प० से० ) । 'नौ गदनद–' (३।३।६४) इत्यब् वा, पक्षे घञ् (३।३।१८) ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'पठनस्य'।

तेमस्तेमौ समुन्दने।

**तेमः, स्तेमः ( २ पु ), समुन्दनम् ( न ), 'पानी आदिसे भींगने' के ३ नाम हैं।**

[तेमेति] ॥ तेमनम् । स्तेमनम् । 'तिम ष्टिम आर्द्रीभावे' (दि० प० से०)। भावे घञ् (३।३।१८)॥(१)॥*॥ (२)॥*॥ 'उन्दी क्लेदने' (रु० प० से०) । ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि 'आर्द्रीभावस्य'।

आदीनवास्रवौ क्लेशे

**आदीनवः, आस्रवः, क्लेशः (३ पु), 'दुःख'के ३ नाम हैं।**

[आदीति] ॥ आदानम् । 'दीङ् क्षये' (दि० आ० अ०) । भावे क्त (३।३।११४)। 'स्वादय ओदित' (दि० ग०) । 'ओदितश्च' (८।२।४५) इति नत्वम् । आदीनस्य वानम् । घञर्थे कः (वा० ३।३।५८) इति बाहुलकाद्वात्तेः कः ॥ (१) ॥*॥ आस्रवणम्[1] । 'स्रु गतौ' (भ्वा० प० अ० ) । ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ क्लेशनम् । 'क्लिशू विबाधने' (क्र्या० प० से०)। घञ् (३।३।१८)॥ (३) ॥*॥ त्रीणि 'क्लेशस्य'।

मेलके संगसंगमौ ॥ २९ ॥

**मेलकः, सङ्गः, सङ्गमः ( ३ पु ), 'मेल, मिलाप'के ३ नाम हैं।**

[मेलेति]॥ मेलनम् । 'मिल संश्लेषे' (तु० प० से०)। घञ् (३।३।१८)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ सञ्जनम् । 'षञ्ज सङ्गे' (भ्वा० प० अ०) । घञ् (३।३।१८) ॥ (२) ॥*॥ सगमनम् । 'ग्रहवृद–' (३।३।५८) इत्यप् । 'ना मेल संगमो ना वा' इत्यमरमाला ॥ (३) ॥*॥ त्रीणि 'सगमस्य'।

संवीक्षणं[1] विचयनं मार्गणं मृगणा[2] मृगः।

**संवीक्षणम्, विचयनम्, मार्गणम् ( ३ न ), मृगणा ( स्त्री ), मृगः ( पु ), 'ढूँढ़ने, खोजने' के ५ नाम हैं।**

[सविति] ॥ सम्यक् विविधमीक्षणम् । 'ईक्ष दर्शने' (भ्वा० आ० से०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'चिञ् चयने' (स्वा० उ० अ०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'मार्ग अन्वेषणे' (चु० उ० से०)। ल्युट् (३।३।११५) ॥ (३) ॥ * ॥ 'मृग अन्वेषणे' ( चु० आ० से०) अदन्त । 'ण्यास–' (३।३।१०७) इति युच् ॥(४) ॥*॥ घञ् (३।३।१८)॥(५)॥*॥ पञ्च 'अन्वेषणस्य'।

परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥

**परिरम्भः, परिष्वङ्गः, संश्लेषः ( ३ पु ), उपगूहनम् ( न ), 'आलिङ्गन करने या लिपटने' के ४ नाम हैं।**

[पेति]॥ परिरम्भणम् । 'रभ राभस्ये' (भ्वा० आ० अ०) । घञ् (३।३।१८) । 'रभेरशब्लिटोः' (७।१।६३) इति नुम् ॥ (१) ॥*॥ परिष्वञ्जनम् । ष्वञ्ज परिष्वङ्गे' (भ्वा० आ० अ०) । घञ् (३।३।१८) । 'परिनिविभ्य –' (८।३।७०) इति षत्वम् ॥ (२) ॥*॥ संश्लेषणम् । 'श्लिष आलिङ्गने' (दि० प० अ०) । घञ् (३।३।१८) ॥ (३) ॥*॥ 'गुहू संवरणे' (भ्वा० उ० से०) । ल्युट् (३।३।११५) ॥ (४) ॥*॥ चत्वारि 'आलिङ्गनस्य'।

निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्[1]।

**निर्वर्णनम्, निध्यानम्, दर्शनम्, आलोकनम्, ईक्षणम् (५ न ), 'देखने' के ५ नाम हैं।**

[निरीति]॥ वर्णशब्दात् 'सत्याप–'(३।१।२५) इति णिच् । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'ध्यै चिन्तायाम्' (भ्वा० प० अ०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०) ॥ (३) ॥*॥ 'लोकृ दर्शने' (भ्वा० आ० से०) ॥ ( ४ ) ॥*॥ 'ईक्ष दर्शने' (भ्वा० आ० से०)॥(५)॥*॥ पञ्च 'वीक्षणस्य'।

प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥

**प्रत्याख्यानम्, निरसनम् ( २ न ), प्रत्यादेशः ( पु ), निराकृतिः ( स्त्री ), 'निषेध या खण्डित करने'के ४ नाम हैं।**

१. "आस्रवन्तीन्द्रियाण्यनेनास्रव. । यज्जैना.–'जीवाजीवास्रवसंवरनिर्जरबन्धमुक्तय. सप्त पदार्था.' इति स्वामी।

२. "अन्वीक्षणम्' 'अन्वेषणम्' इत्येके पेठु." इति स्वाम्याह।

३. 'इच्छा' (३।३।१०३) इति सूत्रस्थेन 'इच्छापरिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' इति भाष्येण। उक्तसूत्रे '–मृग अन्वेषणे। चुरादावदन्त, अतो लोपाभावोऽपि, शे यकि णिलोप, 'मृगया'' इति सि० कौ० वचनेन च 'मृगया'शब्दोऽपि।

१. '–लोकलक्षणम्' इति महेश्वर-सम्मतः पाठः। '–लोकनक्षमम्' इति केचित्।

[प्रेति] ॥ 'ख्या प्रकथने' (अ० प० अ०)। चक्षि-ङादेशो वा ॥ (१) ॥ * ॥ 'असु क्षेपणे' (दि० प० से०)। ल्युट् (३।३।११५)। ['निरसनं निसूदने। निष्ठीवने निरासे च' इति हैम, ४।१८३]॥ (२) ॥*॥ प्रत्यादेशनम्। दिश अतिसर्जने' (तु० प० अ०)। घञ् (३।३।१८) ॥ (३) ॥ * ॥ निराकरणम्। डुकृञ् ['डुकृञ् करणे' (क्र्या० उ० अ०)] क्तिन् (३।३।९४) ॥ (४) ॥*॥ चत्वारि 'निराकरणस्य'।

उपशायो विशायश्च पर्यायशयनार्थकौ ।

उपशायः, विशायः (२ पु), 'पहरेदार आदिके बारी २ से सोने' के २ नाम हैं।

[उपेति] ॥ उपशयनम्। विशयनम्। 'उपपर्यो शते पर्याये' (३।३।३९) इति घञ् ॥ (१) ॥*॥ (२) ॥*॥ पर्यायेण शयनम्। पर्यायशयनमर्थो ययोस्तौ ॥*॥ द्वे 'पर्यायेण प्रहरकाद्युपशयनस्य'।

अर्तनं च ऋतीया च हृणीया च घृणार्थके ॥ ३२ ॥

अर्तनम् (न), ऋतीया, हृणीया, घृणा (३ स्त्री), 'घृणा' के ४ नाम हैं।

[अर्तेति] ॥ 'ऋति' सौत्र। ईयङ् (३।१।२९) अभावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ ईयङ्पक्षे 'अ प्रत्ययात्' (३।३।१०२) ॥ (२) ॥*॥ 'हृणीङ्' कण्ड्वादि। यक् (३।१।२७)। 'अ प्रत्ययात्' (३।३।१०२) ॥ (३) ॥*॥ 'मोहो बीभत्सा जुगुप्सा च हृणीया हृणिया घृणा' इति वाचस्पतिः ॥*॥ चत्वारि 'जुगुप्सनस्य'।

स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।

व्यत्यासः, विपर्यासः, व्यत्ययः, विपर्ययः (४ पु), 'उलटा, क्रमरहित' के ४ नाम हैं।

[स्यादिति] ॥ व्यत्यसनम्। असु क्षेपणे (दि० प० से०)। घञ् (३।३।१८) ॥ (१) ॥ * ॥ विपर्यसनम्। घञ् (३।३।१८) ॥ (२) ॥ * ॥ व्यत्ययनम्। 'इण्' [गतौ] (अ० प० अ०)। 'एरच्' (३।३।५६) ॥ (३) ॥*॥ विपर्ययनम्। 'इण्' [गतौ] (अ० प० अ०)। 'एरच्' (३।३।५६) ॥ (४) ॥*॥ चत्वारि 'व्यतिक्रमस्य'।

पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥

पर्यय, अतिक्रम, अतिपात, उपात्यय (४ त्रि), 'अतिक्रम' (क्रमको छोड़कर आगे बढ़ने) के ४ नाम हैं।

[ पर्येति ] ॥ पर्ययणम्। 'इण् [ गतौ' ( अ० प० अ० ) ] 'एरच्' ( ३।३।५६ ) ॥ (१) ॥ * ॥ अतिक्रमणम्। घञ् (३।३।१८) ॥ (२) ॥*॥ अतिपतनम्। 'पत्लृ गतौ' (भ्वा० प० से०)। घञ् (३।३।१८) ॥ (३) ॥*॥ उपात्ययनम्। 'इण् [ गतौ' (अ० प० अ०) ]। 'एरच्' (३।३।५६) ॥ (४) ॥*॥ चत्वारि 'अतिक्रमस्य'।

प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।

प्रतिशासनम् (न), 'नौकर आदिको बुलाकर कहीं भेजने या किसी काममें लगाने' का १ नाम है।

[प्रेषेति] ॥ 'शासु अनुशिष्टौ' (अ० प० अ०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ एकं 'भृत्यादिप्रेषणस्य'।

स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥

संस्तावः (पु), 'यज्ञमें ब्राह्मणोंकी स्तुति करनेके लिये नियत स्थान-विशेष' का १ नाम है।

[स इति] ॥ समेत्य स्तुवन्त्यत्र। 'ष्टुञ् स्तुतौ' (अ० प० अ०)। 'यज्ञे समि स्तुवः' (३।३।३१) इति घञ् ॥ (१) ॥*॥ एकं 'यज्ञ स्तावकद्विजावस्थानभूमेः'।

निधाय तक्ष्यते यत्र काष्ठे काष्ठं [redacted] उद्घनः ।

उद्घनः (पु), 'ठेहा' अर्थात् 'जिस लकड़ीपर रखकर दूसरी लकड़ीको छीलते हैं, उस नीचेवाली लकड़ी' का १ नाम है।

[नीति] ॥ ऊर्ध्वं हन्यतेऽस्मिन्। 'उद्घनोऽत्याधानम्' (३।३।८०) इति साधु ॥ (१) ॥*॥ ['ठेहा' इत्याख्यस्य] एकम्।

स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥

स्तम्बघ्नः, स्तम्बघनः (२ पु), 'घास काटनेके हथियार खुरपा आदि, या तीनीके धानको झटका देकर झाड़नेके लिये बाँस या खूंटीमें बँधे हुए डोरी आदि वर्तन' के २ नाम हैं।

[ स्तम्बेति ] ॥ स्तम्बो हन्यते येन। 'स्तम्बे क च' (३।३।८३) इति क्वौ घनादेशश्च ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'तृणादिगुच्छोन्मूलनसाधनस्य'। —नीवारादिग्रहणार्थं कृतवंशपात्रस्य—इत्यन्ये।

आविधो विध्यते येन

आविधः (पु), 'बर्मा' का १ नाम है।

[आवीति] ॥ आविध्यते येन। 'व्यध ताडने' (दि० प० अ०)। घञर्थे कः (वा० ३।३।१८) ॥ (१) ॥*॥ एकं 'भ्रमरमूच्यादेः', 'बर्मा' इति ख्यातस्य।

*तत्र विष्वक्समे निघः ।*

निघः (पु), 'सब तरफसे एक समान जमे या लगाये हुए पेड़ आदि' का १ नाम है।

[ तत्रेति ] ॥ नियतं हन्यते। 'निघो निमितम्' (३।३।८७) इति साधु ॥ (१) ॥*॥ एकं 'तुल्यारोहपरिणाहवृक्षादेः'।

**उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥**

उत्कारः, निकारः ( २ पु ), 'धान आदि अन्नको ओसाने या फटकने' के २ नाम हैं।

[ उदिति ] ॥ उत्करणम् । निकरणम् । 'कॄ विक्षेपे' (तु० प० से०) 'कॄ धान्ये' (३।३।३०) इति घञ् ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'धान्यानामूर्ध्वक्षेपणस्य' ।

**निगारोद्गारविक्षावोद्ग्राहा निगरणादिषु ।**

निगारः, उद्गारः, विक्षावः, उद्ग्राहः ( ४ पु ), 'निगलने ( घोंटने ), वमन ( उगली, कय ) करने, छींकने और डकारने'का क्रमशः १—१ नाम है।

[ नीति ] ॥ निगरणम् । 'गॄ निगरणे' (तु० प० से०)। 'उन्न्योर्ग्रः' (३।३।२९) इति घञ् ॥ (१) ॥*॥ उद्गरणम् । 'गॄ शब्दे' (क्र्या० प० से०) । 'उन्न्यो—' (३।३।२९) इति घञ् ॥ (१) ॥*॥ विक्षवणम् । 'टुक्षु शब्दे' (अ० प० से०) । 'वौ क्षुश्रुवः' (३।३।२५) इति घञ् ॥ (१) ॥*॥ उद्ग्रहणम् । 'ग्रह उपादाने' (क्र्या० उ० से०) । 'उदि ग्रहः' (३।३।३५) इति घञ् ॥ (१) ॥ * ॥ आदिना उद्गरणम्, विक्षवणम्, उद्ग्रहणम् ॥*॥ क्रमेणैकैकं [ निगरणादीनाम् ] ।

**आरत्यवरतिविरतय उपरामे**

आरतिः, अवरतिः, विरतिः ( ३ स्त्री ), उपरामः ( पु ), 'रुकने'के ४ नाम हैं।

[ आरेति ] ॥ आर्यंम्¹ ॥ आरमणम् । 'रमु क्रीडायाम्' (भ्वा० आ० से०) । क्तिन् (३।३।९४) ॥ (१) ॥*॥ एवमवविभ्याम् ॥ (२) ॥*॥ (३) ॥*॥ उपरमणम् । घञ् (३।३।१८) ॥ (४) ॥*॥ चत्वारि 'उपरमणस्य' ।

**अथास्त्रियां तु निष्ठेवः ॥ ३७ ॥**

**निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ।**

निष्ठेवः ( पु न ), निष्ठ्यूतिः ( स्त्री ), निष्ठेवनम्, निष्ठीवनम् ( २ न ), 'थूकने' के ४ नाम हैं।

[अथेति] ॥ 'ष्ठिवु निरसने' (दि० प० से०) । घञ् (३।३।१८) । 'यत्तु—निष्ठीव्यति'—इति—विगृह्य—'पचाद्यच्'—इत्युक्तं मुकुटेन । तन्न । निष्ठ्यूत्यादिभिरेकत्वासंभवात् ॥ (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ ल्युट् (३।३।११५) । 'ष्ठिवि-सिव्योर्ल्युटि दीर्घो वा'—इति स्वामी ॥ पृषोदरादित्वाद्वा दीर्घ इति मुकुट. ॥ (३) ॥*॥ (४) ॥ * ॥ चत्वारि 'मुखात् श्लेष्मनिरसनस्य' ।

**जवने जूतिः**

जवनम् ( न ), जूतिः ( स्त्री ), 'वेग'के २ नाम हैं।

[जेति] ॥ 'जु' सौत्रो वेगे । ल्युट् (३।३।११५) ॥ (१) ॥ * ॥ क्तिन् (३।३।९४) । 'ऊतियूति—' (३।३।९७) इति साधु । (२) ॥*॥ द्वे 'वेगस्य' ।

**सातिस्त्ववसाने स्यात्**

सातिः (स्त्री), अवसानम् (न), 'समाप्ति'के २ नाम हैं।

[सेति] ॥ 'षोऽन्तकर्मणि' (दि० प० अ०) । क्तिन् (३।३।९४) । 'ऊतियूति—' ( ३।३।९७ ) इति साधु. ॥ (१) ॥*॥ ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे 'समापनस्य' ।

**अथ ज्वरे जूर्तिः ॥ ३८ ॥**

ज्वरः ( पु ), जूर्तिः (स्त्री), 'ज्वर, बुखार'के २ नाम हैं।

[अथेति] ॥ ज्वरणम् । 'ज्वर रोगे' (भ्वा० प० से०) । घञ् (३।३।१८) । संज्ञापूर्वकत्वाद् वृद्ध्यभावः ॥ (१) ॥*॥ क्तिन् (३।३।९४)। 'ज्वरत्वर—' (६।४।२१) इत्यूठ् ॥ (२) ॥*॥ द्वे 'ज्वरणस्य' ।

**उदजस्तु पशुप्रेरणम्**

उदजः ( पु ), पशुप्रेरणम् ( न ), पशुओंको हाँकने, ललकारने या किसी तरह प्रेरित करने' के २ नाम हैं।

[वीति]॥ उदजनम् । 'अज गतौ'(भ्वा० प० से०)। 'समुदोरज पशुषु' (३।३।६९) इत्यप् ।'—ध्यञपो.' (२।४।५६) इति पर्युदासाद्वीभावो न ॥ (१) ॥*॥ पशूनां प्रेरणम् ॥ (२) ॥*॥ द्वे 'पशुप्रेरणस्य' ।

**अकरणिरित्यादयः शापे ।**

अकरणिः ( स्त्री ), आदि 'शाप देने'का नाम है।

[अकेति] ॥ अकरणम् । 'आक्रोशे नञ्यनिः' (३।३।११२) ॥ (१) ॥ * ॥ आदिना अजननिः, अवग्राहः, निग्राह. । 'आक्रोशेऽवन्योर्ग्रहः' ( ३।३।४५ ) इति घञ् ॥*॥ एकम् आक्रोशनस्य' ।

**गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ॥ ३९ ॥**

औपगवकम् ( न ), आदि 'औपगव ( 'उपगु के समूह)' का १ नाम है।

---

१. अग्रे निष्ठ्यूतिर्निष्ठेवन—' इति पादे द्वादशाधिकमात्राणां सत्त्वेनेयं 'विपुलार्या' छन्दः । तल्लक्षणम्—'संलंघ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पाद. । यस्यास्तां पिङ्गलनागो 'विपुला'मिति समाख्याति ॥' इति वृत्तरत्नाकर. (२।४) ।

[गविति] ॥ अपप्रत्ययान्तेभ्य तस्य समूह ' (२।४। ३७) इत्यर्थे 'गोत्रोक्षोष्ट्र–' (४।२।३९) इति वुञ् ॥ (१)॥*॥ आदिना 'गार्गकम्, 'दाक्षकम् '। [औपगव-समूहस्य']।

आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ।

आपूपिकम्, शाष्कुलिकम् ( २ न ), आदि 'पूआ, पुड़ी आदिके समूह ( ढेरी )' का १—१ नाम है।

[ एनि ] ॥ अचेतसा वृन्दम् ॥*॥ अपूपाना समूह, शष्कुलीना समूह । 'अचित्तहस्तिधेनोष्ठक्' (४।२।४७)। आदिना साक्तुकम् । [क्रमेणैकैकम् 'अपूप-शष्कुलिसमूहस्य']।

माणवानां तु माणव्यम्

माणव्यम् ( न ), 'लड़कोंके झुण्ड' का १ नाम है।

[ मेति ] ॥ माणवाना समूह । ब्राह्मणमाणव–' (४।२।४२) इति यत् । [ एक 'माणवाना समूहस्य ]।

सहायानां सहायता ॥ ४० ॥

सहायता ( स्त्री ), 'सहायकोंके झुण्ड'का १ नाम है।

[सेति] ॥ सहायाना समूह । 'गजसहायाभ्याम्–' (वा० ४।२।४३) इति तल् । [एक 'सहायसमूहस्य, सहायतायाः']।

हल्या हलानाम्

हल्या ( स्त्री ), 'हलोंके समूह' का १ नाम है।

[हेति] ॥ हलाना समूह । 'पाशादिभ्यो य' (४।२।४९। ॥ [एक हलसमूहस्य']।

ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ।

ब्राह्मण्यम्, वाडव्यम् ( २ न ), 'ब्राह्मणोंके झुण्ड' के २ नाम हैं।

[ब्रेति] ॥ ब्राह्मणाना वाडवाना [च] समूह । ब्राह्मण–' ( ४।२।४२ ) इति यत् । [ द्वे एना 'ब्राह्मण-समूहस्य' ]।

द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमिति क्रमात् ॥४१॥

पार्श्वम्, पृष्ठ्यम् ( २ न ), 'पर्शुओं (पँजड़ीकी हड्डियों) और पीठोंके समूह'का क्रमश' १—१ नाम है। ( 'इन दोनों-का यज्ञमें स्मरण होनेसे ये दोनों यज्ञ-विषयक हैं' )।

[द्वे इति] ॥ पर्शूना समूह । 'पर्श्वा णस्–' (वा० ४।२।४३)। सिति च (१।४।१६) इति पदत्वाद्रुत्वा-भाव ॥ (१) ॥*॥ पृष्ठाना समूह । 'पृष्ठाद्यत्' (वा० ४।२।४२)। यज्ञविषय इदं स्मरन्ति ॥ [क्रमश एकैक 'पर्शूना पृष्ठाना च समूहस्य']।

खलानां खलिनी खल्यापि

खलिनी, खल्या ( २ स्त्री ), 'खलिहानके समूह' के २ नाम हैं।

[खलेति]॥ खलाना समूह । 'इनित्रकट्यचश्च' (४।२।५१) इतीनि ॥(१)॥*॥ 'खलगोरथात्' (४।२।५०) इति यः ॥ (२) ॥*॥ [ द्वे 'खलाना समूहस्य' ]।

अथ मानुष्यकं नृणाम् ।

मानुष्यकम् ( न ) 'मनुष्योंके समूह' का १ नाम है।

[ अथेति ] ॥ मनुष्याणा समूहः । 'गोत्रोक्षोष्ट्र–' (४।२।३९) इति वुञ् । 'प्रकृत्याके राजन्य–' ( वा० ६। ४।१६३) इति यलोपो न ॥ (१) ॥*॥ [ 'एक मनुष्य-समूहस्य' ]।

ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ॥४२॥

ग्रामता, जनता, धूम्या, पाश्या, गल्या (५ स्त्री), 'ग्राम, जन, धूम, पाश ( जाल ), तथा काशके समूह'का क्रमश १—१ नाम है।

[ ग्रेति ] ॥ ग्रामाणा समूहः, जनाना समूह । 'ग्राम-जन–' (४।२।४२) इति तल् ॥ (१) ॥*॥ (१) ॥*॥ धूमाना पाशाना गलाना च समूह । 'पाशादिभ्यो य.' (४।२।४९) ॥ (१) ॥ * ॥ (१) ॥ गल. = बृहत्काश. ॥ (१) ॥*॥ [ कमेणैकैक 'ग्रामाणा जनाना धूमाना पाशाना गलाना च समूहस्य' ]।

अपि साहस्रकारीषचार्मणाथर्वणादिकम् ।

साहस्रम्, कारीषम्, चार्मणम्, आथर्वणम् ( ४ न ), आदि हजार, कंडा (उपला या गोहरा), कवचधारी, अथर्वण, आदिके समूह' का क्रमशः १—१ नाम है।

[ अपीति ]। सहस्राणाम्, करीषाणाम्, चर्मणाम्, अथर्वणाम् च समूह । 'भिक्षादिभ्योऽण्' ( ४।२।३८ )। आदिना 'वार्मणम्' आङ्गारम्' । [ क्रमश एकैक 'सहस्राणा करीषाणा चर्मणा अथर्वणा च समूहस्य' ]।

इति संकीर्णार्थवर्ग ॥

[ इतीति ] ॥ सकीर्णार्थत्व च घञादीना वर्तुभिन्ने कारके भावे च विधानात्, उणादीना भावकारकेषु विधानात् भावे प्रायेण विग्रहो दर्शित, कारकेषु तु यथासभव-मूह्य ।

इति सकीर्णवर्गविवरणम् ॥ २ ॥

---

## अथ नानार्थवर्गः ॥ ३ ॥

नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।
भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥

वक्ष्यमाण ( आगे कहे जानेवाले ) इस कान्तादि (आदि से—खान्त, गान्त, घान्त, ... ) वर्गमें अनेक अर्थवाले भी कई शब्द कहे गये हैं, जो पहलेके पर्यायोंमें नहीं कहे गये हैं और पण्डित-जनोंने काव्य-पुराण आदि ग्रन्थोंमें 'पृथुक, गरुत्मत्, रजस्' आदि जिन शब्दोंका बहुधा प्रयोग किया है, वे ( पृथुक, गरुत्मत्, रजस् आदि ) शब्द पहले स्वर्गवर्ग आदिके पर्यायोंमें तथा यहाँ भी कहे गये हैं। ( 'जैसे-पृथुक शब्द 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' ( २।५।३८ ) यहाँ 'बालक' अर्थमें और 'पृथुकः स्याच्चिपिटकः' ( २।९।४७ ) यहां 'चिउड़ा' अर्थमें कहे जानेपर भी इस नानार्थवर्गमें 'पृथुकश्चिपिटार्भकौ' ( ३।३।३ ) उक्त दोनों ( बालक और चिउड़ा ) अर्थोंमें फिर कहा गया; 'गरुत्मत्' शब्द 'गरुत्मान् गरुडस्तार्क्ष्यो—' ( १।१।२९ ) यहाँ 'गरुड' अर्थमें और '—नीडोद्भवा गरुत्मन्तो पित्सन्तो नभसङ्गमाः' ( २।५।३४ ) यहाँ 'पक्षी' अर्थमें कहे जानेपर भी इस नानार्थवर्गमें 'पक्षिताक्ष्यौं गरुत्मन्तौ' ( ३।३।९८ ) उक्त दोनों ( पक्षी और गरुड़ ) अर्थोंमें फिर कहा गया; 'तमस्' शब्द 'तमस्तु राहुः स्वर्भानुः—' ( १।३।२६ ) यहां 'राहु' अर्थमें, 'गुणाः सत्त्वं रजस्तमः' ( १।५।२९ ) यहाँ 'सत्त्वादि गुण' अर्थमें और 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' ( १।८।३ ) यहाँ 'अन्धकार' अर्थमें कहे जानेपर भी इस नानार्थवर्गमें 'राहौ ध्वान्ते गुणे तमः' (३।३।२३१) उक्त तीनों (राहु, सत्त्वादि गुण और अन्धकार) अर्थोंमें पुनः कहा गया है। इसी तरह विद्वज्जन अन्यान्य उदाहरणोंका भी तर्क कर लें' )। यद्यपि 'जम्बुक' शब्दके क्रमशः 'स्यार, वरुण' और 'बालिश' शब्दके 'मूर्ख, बालक' ये २-२ अर्थ हैं; तथापि इन्हें पण्डितोंने क्रमशः 'स्यार और मूर्ख' इन्हीं १-१ अर्थोंमें उक्त ( जम्बुक और बालिश ) शब्दोंका प्रयोग किया है, अन्य दो ( वरुण और बालक ) अर्थोंमें नहीं, अत एव ग्रन्थकारने भी वैसा ही किया है अर्थात् 'जम्बुक' शब्दको 'सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः' ( २।५।५ ) यहाँ पर 'स्यार' अर्थमें कहकर इस नानार्थवर्गमें 'जम्बुकौ क्रोष्टुवरुणौ' ( ३।३।३ ) 'स्यार और वरुण' दोनों अर्थोंमें कहा है। इसी तरह 'बालिश' शब्दको भी 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' (३।१।४८) यहां 'मूर्ख' अर्थमें कहकर इस नानार्थवर्गमें 'शिशावज्ञे च बालिशः' ( ३।३।२१८ ) 'मूर्ख और बालक' दोनों अर्थोंमें कहा है। इसी तरह अन्यान्य उदाहरणोंका तर्क करना चाहिये' )।

[ नेति ] ॥ अनेकार्थाः केचिदत्रैव वर्गे कान्ता आदयो येषा खान्तगान्तादीनां तेषु वर्गेषु कथिता । यथा— 'क'शब्द । ये कान्तादयो येषु पर्यायेषु प्रचुरप्रयोगाः, ते तेषु कथिताः । अपिशब्दादिहापि । यथा 'नाक'-शब्द. । अतः पुनरुक्तिर्नोद्भाव्या इति भावः ।

अथ कान्ताः शब्दाः ।

आकाशे त्रिदिवे नाकः

'नाकः' ( पु ) के स्वर्ग, आकाश २ अर्थ हैं।

[ एति ] ॥ न अकं दुःखमत्र । [ 'नाक ' स्वर्गान्तरीक्षयो ' इति विश्व , ५।३५ ] ।

लोकस्तु भुवने जने ।

'लोकः' ( पु )के भुवन ( संसार ), जन २ अर्थ हैं।

[ लविति ] ॥ लोक्यते । 'लोकृ दर्शने' (भ्वा० आ० से०) । घञ् (३।३।१८)। ['लोको विश्वे जने' इति हैमः, २।१६ ] ।

पद्ये यशसि च श्लोकः

'श्लोकः' ( पु ) के पद्य, यश २ अर्थ हैं।

[ पेति ] ॥ श्लोक्यते । 'श्लोकृ सघाते' (भ्वा० आ० से०)। घञ् (३।३।१८)। [ 'श्लोकस्तु पद्यबन्धे यशस्यपि' इति हैम , २।२१] ।

शरे खड्गे च सायकः ॥ २ ॥

'सायकः' ( पु ) के बाण, तलवार २ अर्थ हैं।

[ शर इति ] ॥ स्यति । 'षोऽन्तकर्मणि' (दि० प० अ०) । ण्वुल् (३।१।१३३) । युक् (७।३।३३) । [ 'सायको बाणखड्गयो ' इति हैम', ३।१०६ ] ।

जम्बुकौ क्रोष्टुवरुणौ

'जम्बुकः' ( पु ) के स्यार, वरुण २ अर्थ हैं।

[ जम्ब्विति ] ॥ जमति । 'जमु अदने' ( भ्वा० प० से०) । 'मितद्र्वादयश्च' ( वा० ३।२।१८० ) इति साधु । 'जम्बुकः[1] फेरवे नीचे पश्चिमाशापतावपि' ( इति मेदिनी ) [ ८।९१ ] ।

पृथुकौ चिपिटार्भकौ ।

'पृथुकः' ( पु) के चिउड़ा, बालक २ अर्थ हैं।

---

१. मेदिन्या 'जम्बूक —' इति दीर्घमध्य पाठ. ।

[ प्रिति ] ॥ पृथुरेव । 'संज्ञायां कन्' (५।३।७५) । प्रथते । 'प्रथ प्रख्याने' (भ्वा० आ० अ०) । 'अर्मकपृथुकपाका वयसि' (उ० ५।५३) इति साधुर्वा । 'पृथुक पुंसि चिपिटे, शिशौ स्यादभिधेयवत्' (इति मेदिनी) [११।१२६]।

आलोकौ दर्शनोद्द्योतौ

'आलोक' (पु) के दर्शन ( देखना ), प्रकाश २ अर्थ हैं।

[ एति ] ॥ आलोकनम् । 'लोकृ दर्शने' (भ्वा० आ० अ०) । घञ् (३।३।१८)। 'आलोकस्तु पुमान् द्योते दर्शने वन्दिभाषणे' ( इति मेदिनी ) [५।४८] ।

भेरीपटहमानकौ ॥ ३ ॥

'आनक' ( पु ) के भेरी, नगाड़ा २ अर्थ हैं।

[ भेरीति ] ॥ अनिति । 'अन प्राणने' ( अ० प० से० ) । ण्वुल् (३।१।१३३) । 'आनक पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे' (इति मेदिनी) [५।४७] ।

उत्सङ्गचिह्नयोरङ्कः

'अङ्क' (पु) के उत्सङ्ग (क्रोड, गोदी), चिह्न २ अर्थ हैं।

[उदिति] ॥ अङ्क्यतेऽनेन । 'अकि लक्षणे' (भ्वा० आ० से०) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'अङ्को रूपकभेदाङ्कचिह्ने रेखाजिभूषणे । रूपकांशान्तिकोत्सङ्गस्थानेऽङ्क' पापयुक्तयो ' (इति मेदिनी) [२।१७]।

कलङ्कोऽङ्कापवादयोः ।

'कलङ्क' ( पु ) के चिह्न, लाञ्छन २ अर्थ हैं।

[केति] ॥ कलति । 'कल शब्दसंख्यानयो ' (भ्वा० आ० से०) । खिच्, (३।२।१७८) । कल् चासावङ्कश्च । 'कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च' (इति मेदिनी) [६।५१] ।

तक्षको नागवर्धक्यो

'तक्षक' ( पु ) के 'तक्षक'नामक सर्प, बढ़ई २ अर्थ हैं।

[ तक्षेति ] ॥ तक्षति । तक्षू तनूकरणे' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) । [ तक्षकस्तक्षिण पन्नगे। द्रुमभेदे' इति हैम, ३।४५ ] ।

अर्कः स्फटिकसूर्ययोः ॥ ४ ॥

'अर्क' ( पु ) के स्फटिक मणि, सूर्य, मदार या एकवन ( आक नामका पौधा ) २ अर्थ हैं।

[ अर्क इति ] ॥ अर्च्यते । 'अर्क स्तवने' (चु० प० से०) 'अर्च' पूजायाम्' ।(भ्वा० प० से०) वा । घञ् (३।३।१९) । 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' (इति मेदिनी) [२।१६] ।

मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनो ।

'क' ( पु ) के हवा, ब्रह्मा, सूर्य ३ अर्थ, 'कम्' ( न ) के शिर, पानी २ अर्थ हैं।

[ मेति ] ॥ कायति । 'कै शब्दे' (भ्वा० प० अ०)। कचति (ते) । 'कच दीप्तौ' (बन्धने)'(भ्वा० आ० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति ड । 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । [कामग्रन्थौ चक्रिणि च प्रजापतिनि च पार्थिवे । ] मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजलेषु कम्' (इति मेदिनी) [२।१५-१६] ।

स्यात्पुलाकस्तुच्छधान्ये सङ्क्षेपे भक्तसिक्थके ॥५॥

'पुलाक' ( पु ) के तीनी ( तोवार ), अन्न या धानकी भूसी, सक्षेप, अन्न ( भात ) का अवयव ४ अर्थ हैं।

[ स्यादिति ] ॥ पोलनम् । 'पुल महत्त्वे' (भ्वा० प० से०) । सपदादि (वा० ३।३।१०८) । पुलमकति । 'अक कुटिलायां गतौ' (भ्वा० प० से०)। 'कर्मण्यण्'(३।२।१)। पोलति वा । 'बलाकादयश्च' (उ० ४।१४) इति साधु । ['पुलाको भक्तसिक्थे स्यात् सक्षेपासारधान्ययो ' इति हैम, ३।६७] ।

उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।

'पेचक' ( पु ) के उल्लू, हाथीकी पूँछकी जड़ ( मांसपिण्ड-विशेष ) २ अर्थ हैं।

[ विति ] ॥ पचति, पच्यते वा दुःखेन । पचिमच्योरिच्चोपधायाः ' (उ० ५।३७) इति वुन । [ 'पेचक करिलाङ्गूलमूले घूके' इति हैम, ३।७१ ] ।

कमण्डलौ च करकः

'करक' ( पु ] के कमण्डलु, ओला २ अर्थ हैं।

[कति] ॥ करोति । कृञादिभ्यो वुन् (उ० ५।३५) 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ' (इति मेदिनी) [५।५४-५५] ।

सुगते च विनायकः ॥ ६ ॥

'विनायक' ( पु ) के बुद्धदेव, गणेश, गरुड, गुरु, विघ्न ५ अर्थ हैं।

[ सुगेति ] ॥ विनयति । 'णीञ्' (भ्वा० उ० अ०)।

१ 'अर्क'शब्दार्थबोधकत्वान्नायमत्र प्रकृतोपयोगी । मेदिन्या '—रूपकांशाऽन्तिको—' इति पाठश्च ।

१ 'अर्क'शब्दस्य प्राक्तनी ( अ० १।३।२९ ) व्याख्या द्रष्टव्या ।

ण्वुल् (३।१।१३३)। 'विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' (इति मेदिनी) [ १७।२१३ ]।

किष्कुर्हस्ते वितस्तौ च

'किष्कुः' (पु) के हाथभर, बित्ताभर (क्रमशः २४ और १२ अङ्गुलका प्रमाण-विशेष ) २ अर्थ हैं।

[ किष्कुरिति ] ॥ कायतेऽनेन । 'कै शब्दे' ( भ्वा० प० अ० )। 'मृगय्वादि.' (उ० १।३७)। 'किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि[१] च' (इति मेदिनी) [३।२३]।

शूककीटे च वृश्चिकः ।

'वृश्चिकः' (पु) के बिच्छू, आठवाँ राशि ( लग्न ), भौंरा, केकड़ा, ओषधि-विशेष, ५ अर्थ हैं।

[ शूकेति ] ॥ वृश्चति । 'ओव्रश्चू छेदने' ( तु० प० से० )। 'व्रश्चिकृषो किकन्' (उ० २।४०)। 'वृश्चिकस्तु द्रुणौ राशौ शूककीटौषधीभिदोः' (इति मेदिनी) [ १३। १६० ]।

प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥

'प्रतीकः' ( त्रि ) का प्रतिकूल, १ अर्थ और 'प्रतीकः' (पु ) का अवयव (हिस्सा ) १ अर्थ है।

[ प्रेति ] ॥ प्रतिगता ई लक्ष्मीर्येन य वा। 'नद्युतश्च' ( ५।४।१५३ ) इति कप्। 'प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः' (इति मेदिनी [ १०।११३ ]

स्याद् भूतिकं तु भूनिम्बे कट्फले भूस्तृणेऽपि च ।

'भूतिकम्' ( न ) के चिरायता, 'रोहिस'नामक घास, भूस्तृण ३ अर्थ हैं।

[ स्यादिति ] ॥ भवति । 'क्तिच्क्तौ च संज्ञायाम्' (३।३।१७४) इति क्तिच्। संज्ञायां कन्(५।३।७५)। 'स्याद् भूतिकं तु भूनिम्बे दीप्य-भूस्तृण[२]-कत्तृणे' (इति मेदिनी) [ ११।१३५, विश्व ११।११० च ]।

ज्योत्स्निकायां च घोषे च कोशातकी

'कोशातकी' ( स्त्री ) के चिचिंडा, तरोई या परवल २ अर्थ हैं।

[ ज्योत्स्नीति ] ॥ कोशमतति । 'अत सातत्यगमने' ( भ्वा० प० से० )। ण्वुल् (उ० २।३२)। गौरादिः ( ४। १।४१ )। 'कोशातक. कचे[३] पुंसि पटोल्यां घोषके स्त्रियाम्' (इति मेदिनी) [१५।१८४]। 'ज्योत्स्ना चन्द्रमसो भासि स्फुरज्ज्योतिर्निशि स्मृता' इत्यजय.। ('ज्योत्स्नी पटोली-ज्योत्स्नावन्निशो' इति हैमः) [२।२७०]।–ज्योत्स्निका= पटोलिका, घोष.=अपामार्ग —इति स्वामी।

अथ कट्फले ॥ ८ ॥

सिते च खदिरे सोमवल्कः स्यात्

'सोमवल्कः' (पु) के 'कायफल, दुधिया खैर' २ अर्थ हैं।

[ अथेति ] ॥ सोम इव वल्को बलमस्य । [ 'सोमवल्क. कट्फले स्याद्वलक्षखदिरद्रुमे' इति हैम., ४।१२ ]।

अथ सिह्लके ।

तिलकल्के च पिण्याकः

'पिण्याकः' (पु) के लोहबान, तिलकी खली २ अर्थ हैं।

[ अथेति ] ॥ पण्यते । 'पण व्यवहारे' (भ्वा० प० से०)। 'पिनाकादयश्च' (उ० ४।१५) इति साधु । 'पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' (इति मेदिनी) [ १०।११९ ]।

बाह्लीकं रामठेऽपि च ॥ ९ ॥

'बाह्लिकम्' ( न ) के हींग, बाह्लीक देशका ( काबुली ) घोड़ा, कुंकुम, ३ अर्थ हैं।

[बेति] ॥ उह्यते, वहति वा। 'वह प्रापणे' (भ्वा० प० अ०)। 'अलीकादयश्च' ( उ० ४।२५ ) इति साधु । 'बाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाभ्वदेशयो' इति रभस । [अथ बाह्लीक बाह्लिक धीरहिङ्गुनो । द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे।' इति मेदिनी, १३।१५६ ]।

महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ।

'कौशिक.' ( पु ) के इन्द्र, गुग्गुलु, उल्लू पक्षी, सँपेरा ४ अर्थ हैं।

[मेति] ॥ कुशिकस्यापत्यम्। ऋष्यण् (४।१।११४)। 'कौशिको नकुले व्यालग्राहिगुग्गुलुशक्रयोः। विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिक.। कौशिकी चण्डिकाया च नदीभेदे च कौशिकी' (इति विश्व.) [ ११।१०८-१०९ ]।

रुक्तापशङ्कास्वातङ्कः

'आतङ्कः' ( पु ) के रोग, ताप, शङ्का, मुरज बाजेका शब्द ४ अर्थ हैं।

[रुगिति] ॥ आतङ्कनम्। 'तकि कृच्छ्रजीवने' (भ्वा० प० से०)। घञ् (३।३।१८)। 'हलश्च' ( ३।३।१२१ ) इति करणे वा। 'आतङ्को रोगसन्तापशङ्कासु मुरजध्वनौ' (इति मेदिनी) [ ५०।५० ]।

१. मेदिन्या '—प्रकोष्ठेऽपि करेऽपि च' इति पाठः।
२. मेदिन्या 'भूतीकमपि···दीप्यकपूरके तृणे' इति, विश्वे च '—कर्पूरकत्तृणे' इति पाठौ।
३. मेदिन्या '—कठे—'इत्यपि पाठः।

कर्णिका कर्णभूषणे ॥ १५ ॥
करिहस्ताङ्गुलौ पद्मबीजकोश्याम्

'कर्णिका' ( स्त्री ) के कानका भूषण ( कनफूल, ऐरन, आदि ) हाथीकी सूँड़, हाथके बीचकी अंगुलि, कमलका छत्ता ( जिसमें कमलगट्टे रहते हैं ) ४ अर्थ हैं।

[ कर्णेति ]॥ कर्णस्यालङ्कारः। 'कर्णललाटात्–' (४।३।६५) इति कन्। कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि। क्रमुकादिच्छदाशेऽब्जवराटे कर्णभूषणे। कर्णिका[१] कथ्यतेऽन्य तत्सूक्ष्मवस्त्वेमिव वयो ' (इति मेदिनी) [ ६। ६० ६१ ]।

त्रिपूत्तरे।

[ त्रीति ]। स्तात्येभ्य [अम० ३ ३।१७] प्राक्।

वृन्दारकौ रूपिमुख्यौ

'वृन्दारक' (त्रि) के मनोहर या अनेक रूप धारण करनेवाला मायावी, श्रेष्ठ, देवता ३ अर्थ हैं।

[ त्रिति ]॥ प्रशस्त वृन्दमस्य। 'शृङ्गवृन्दाभ्यामारकन्' ( वा० ५।२।१२२ )। 'वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु' (इति मेदिनी) [ १७।२०४ ]।

एके मुख्यान्यकेवलाः ॥ १६ ॥

'एक' ( त्रि ) के प्रधान, दूसरा, केवल ( सिर्फ ), पहला अङ्क ४ अर्थ हैं।

[एक इति]॥ एति। 'इण गतौ' (अ० प० अ०)। 'इण्भीका–' (उ० ३।४३) इति कन्। 'एकः सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' (इति मेदिनी) [ २।१८ ]।

स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः।

'कौक्कुटिक' ( त्रि ) के दम्भ करनेवाला पाससे चेष्टा आदिको देखनेवाला २ अर्थ हैं।

[ स्यादिति ]॥ कुक्कुटीं पश्यति। 'संज्ञायां ललाटकुक्कुट्यौ पश्यति' (४।४।४६) इति ठक्। [ अथ कौक्कुटिकोऽदूरप्रेरिताक्षे च दाम्भिके इति मेदिनी १२।१८४ ]।

लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ १७ ॥
भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् [ २३ ]
सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः [ २४ ]
पाकौ पक्तिशिशू मध्यरत्ने नेतरि नायकः [ २५ ]
पर्यङ्कः स्यात्परिकरे स्याद्व्याधेऽपि च लुब्धकः [ २६ ]
पेटकस्त्रिषु वृन्देऽपि गुरौ देश्ये च देशिकः [ २७ ]
खेटकौ ग्रामफलकौ धीवरेऽपि च जालिकः [ २८ ]
पुष्परेणौ च किञ्जल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च [ २९ ]
स्यादुत्कोलेऽप्युत्कलिका वार्द्धकं भाववृन्दयोः [ ३० ]
करेण्वां चापि गणिका दारकौ बालभेदकौ [ ३१ ]
अन्धेऽप्यनेडमूकः स्याद्वृको दर्पाश्मदारणौ [ ३२ ]
मृद्भाण्डेऽप्युष्ट्रिका मन्थे खजको रसदीयके[२] [ ३३ ]

'लालाटिक' ( त्रि ) के स्वामीके ललाट ( या भाव ) को देखनेवाला भृत्य, काम करनेमें असमर्थ २ अर्थ हैं।

[ 'कटक' (पु न) के पहाड़के बीचका भाग, कङ्कण, चक्र, ३ अर्थ हैं ]।

[ 'कण्टक' ( त्रि ) के सूई काँटा या ढूँड़ आदिकी नोक ( आगेवाला हिस्सा ), क्षुद्र (छोटा) वैरी, रोमाञ्च ३ अर्थ हैं।

[ 'पाक' ( पु ) के पकाना बालक २ अर्थ हैं ]।

[ 'नायक' ( पु ) के मालाके बीचवाली मणियाँ (सुमेरु), नेता ( मुखिया आदि ) २ अर्थ हैं ]।

[ 'पर्यङ्क' ( पु ) के परिकर ( नौकर आदि आत्मीय जन ), पलङ्ग या मचान २ अर्थ हैं ]।

[ 'लुब्धक' ( त्रि ) के व्याध, लोभी २ अर्थ हैं ]।

[ 'पेटक' ( त्रि ) के समूह, पिटारी ( बक्स, झपोली आदि ) ९ अर्थ हैं ]।

'देशिक' (त्रि) के गुरु, देशमें होनेवाला पदार्थ ( जैसे— देशिक वसनम्, देशिका पुत्तलिका, देशिकोऽश्व, ) २ अर्थ हैं ]।

[ 'खेटक' ( त्रि ) के ग्राम, ढाल २ अर्थ हैं।

[ 'जालिक' ( त्रि ) के मल्लाह, ग्रामज अलि, जालकी वृत्तिसे जीविका करनेवाला ३ अर्थ हैं ]।

[ 'किञ्जल्क' ( त्रि ) के फूलका पराग, कमल केसर २ अर्थ हैं ]।

[ 'शुल्क' ( पु न ) के स्त्रीका धन, रुपया ( महसूल, कर फीस आदि ) २ अर्थ हैं ]।

[ 'उत्कलिका' (स्त्री) के नदी आदिकी तरङ्ग, हँसी मजाक, उत्कण्ठा ३ अर्थ हैं ]।

[ 'वार्द्धकम्' (त्रि) के बुढ़ापा, बूढ़ोंका समूह २ अर्थ हैं ]।

[ 'गणिका' ( स्त्री ) के हथिनी, वेश्या २ अर्थ हैं ]।

[ 'दारक' ( पु ) के लड़का, भेद करनेवाला २ अर्थ हैं ]।

[ 'अनेडमूक' ( पु ) के अन्धा, मूर्ख, शठ ३ अर्थ हैं ]।

१ कर्णिका शब्दबोधकत्वा नेदं प्रकृतोपयोगि।

[ 'टङ्कः' ( पु ) के दर्प, पत्थरको चीरनेवाली टाँकी २ अर्थ हैं ]।

[ 'उष्ट्रिका' (स्त्री) के मिट्टीका मद्य-भाण्ड-विशेष, ऊँटिनी २ अर्थ हैं ]।

[ 'खजकः' ( पु ) के मथनीका डण्डा, कलछुल, युद्ध ३ अर्थ हैं।

[ लेति ] ॥ ललाटं पश्यति । [ 'संज्ञाया ललाटकुक्कुट्यौ पश्यति' (४।४।४६)]। 'लालाटिक प्रभोर्भालदर्शि'-न्याइलेपणान्तरे । कार्याक्षमे' (इति मेदिनी) [ १७।२११-२१२, विश्व १९।२०८-२०९ ]। 'भावदर्शी' इति वा पाठ. । 'लालाटिक. सदालस्यप्रभुभावनिदर्शिनि' इत्यजय. ।

इति कान्ता शब्दा ।

अथ खान्ता शब्दा. ।

मयूखस्त्विट्करज्वालासु

'मयूखः' ( पु ) के शोभा, किरण, ज्वाला ३ अर्थ हैं।

[मिति]॥ मिमीते । 'माङ् माने' (जु० आ० अ०) । 'माङ ऊखो मय् च' (उ० ५।२५) 'मयूख. किरणेऽपि च । ज्वालायामपि शोभायाम्' (इति मेदिनी) [२०।१०-११]।

अलिबाणौ शिलीमुखौ ।

'शिलीमुखः' ( पु ) के भौंरा, बाण २ अर्थ हैं।

[ एति ] ॥ शिली शल्यं मुखे यस्य । [ 'शिलीमुखोऽली बाणे च' इति हैम , ४।४७ ]।

शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री

'शङ्खः' ( पु ) के निधि ( खजाना-विशेष ), ललाटकी हड्डी, २ अर्थ और 'शङ्ख' ( पु न ) का शङ्ख १ अर्थ है।

[शङ्ख इति] ॥ शाम्यत्यनेन । 'शमु उपशमे' (दि० प० से०) । शमे. ■ ' (उ० १।१०२) । 'शङ्ख. कम्बौ न योषिन्ना भालास्थ्नि निधिभिन्नखे' ( इति मेदिनी ) [ २०।५ ]।

इन्द्रियेऽपि खम् ॥ १८ ॥

'खम्' ( न ) के इन्द्रिय, शून्य, आकाश ३ अर्थ हैं।

[ ईति ] ॥ खनति । 'खनु अवदारणे' ( भ्वा० उ० से० ) । 'अन्येभ्योऽपि-' (वा० ३।२।१०१) । 'खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्' (इति मेदिनी) [ १९।१ ]।

१. मेदिन्यां विश्वे च '—प्रभोर्भाव—' इति पाठः ।

घृणिज्वाले अपि शिखे

'शिखा' (स्त्री)के किरण, ज्वाला, मोरकी शिखा, शिखामात्र ( चोटी ) ४ अर्थ हैं।

[ घृिति ] ॥ शेते । 'शीङो ह्रस्वश्च' (उ० ५।२४)। 'शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफाया च[१] ज्वालाया प्रपदेऽपि च' ( इति मेदिनी ) [२०।६-७ ]।

इति खान्ताः शब्दा ।

अथ गान्ता शब्दाः ।

शैलवृक्षौ नगावगौ ।

'नगः, अगः' ( २ पु ) के पहाड़, पेड़ २ अर्थ हैं।

[ शैलेति ] ॥ न गच्छति । 'गम्लृ गतौ' (भ्वा० प० अ० ) । 'अन्येष्वपि–' (वा० ३।२।४८) इति, 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति वा ड. । 'नगोऽप्राणिष्व–' (६।३।७७) इति नञ् वा प्रकृत्या । 'नगो महीरुहे शैले भास्करे पवनाशने[२]'। ('अग स्यान्नगवत्तरौ शैले, सरीसृपे भानौ' इति हैमः) [ ४।२९ ]।

आशुगौ वायुविशिखौ

'आशुगः' ( पु ) के वायु, बाण, सूर्य ३ अर्थ हैं।

[ आशिति ] ॥ आशु गच्छति । पूर्ववत् (वा० ३।२।४८) । ['आशुगोऽर्के शरे वायौ' इति हैमः, ३।११६]।

शरार्कविहगाः खगाः ॥ १९ ॥

'खगः' ( पु ) के बाण, सूर्य, पक्षी ३ अर्थ हैं।

[ शेति ] ॥ खे गच्छति । पूर्ववत् (वा० ३।२।४८) । 'खग सूर्ये ग्रहे देवे मार्गणे च विहंगमे' ( इति मेदिनी ) [ २२।४ ]।

पतङ्गौ पक्षिसूर्यौ च

'पतङ्गः' ( पु ) के पक्षी, सूर्य २ अर्थ हैं।

[ पेति ] ॥ पतति । 'पत्लृ गतौ' (भ्वा० प० से०)। 'पतेरङ्गच् पक्षिणि' (उ० १।११९)। 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययो । क्लीबं सुते' (इति मेदिनी) [२४। ४२-४३ ]।

पूगः क्रमुकवृन्दयोः ।

'पूग.' ( पु ) के सुपारी, समूह २ अर्थ हैं।

[पुग इति] ॥ पुनाति । 'पूञ् पवने'(क्र्या० उ० से०)।

१. मेदिन्या '—शिखायां च—' इति पाठः ।

२. मेदिन्यां 'ख'पुस्तके 'अगो मही'''शने'इति पाठः ।

'छापूखडिम्य कित् (उ० १।१२४) इति गन्। [ पूगस्तु क्रमुके वृन्दे' इति विश्व, २५।१३ ]।

पशावोऽपि मृगा

'मृग' ( पु ) के पशु, हरिण, पाँचवाँ नक्षत्र, याचना ४ अर्थ हैं।

[ मेति ] ॥ मृग्यते। 'मृग अन्वेषणे'(चु० आ० से०)। घञ् (३।३।१९)। 'मृग पशौ कुरङ्गे च करिनक्षत्रभेदयोः। अन्वेषणायां याच्ञायां मृगी तु वनितान्तरे' (इति मेदिनी) [ २३।१६ ]।

वेग प्रवाहजवयोरपि ॥ २० ॥

'वेग' ( पु ) के प्रवाह, तेज़ी, वीर्य ३ अर्थ हैं।

[ वेग इति ] ॥ वजनम्। 'ओविजी भयचलनयोः'। (तु० आ० से०)। घञ् ( ३।३।१८ )। ( वेगो रयप्रवाहयोः। रेत निपाकयोश्चापि इति हैम ) [ २।४९ ५० ]।

परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि।

'पराग' ( पु ) के फूल का पराग, स्नान करने योग्य सुगन्धित चूर्ण (पाउडर), धूलि, विख्याति, पर्वत ५ अर्थ हैं।

[ परेति ] ॥ परागच्छति। ड (वा० ३।२।४८)। 'पराग कौसुमे रेणौ' धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने' (इति मेदिनी) [२४।४० ४१]।

गजेऽपि नागमातङ्गौ

'नाग' ( पु )के हाथी, साँप, नागकेसर, मेघ आदि अर्थ और 'मातङ्ग' ( पु ) के हाथी, चण्डाल २ अर्थ हैं।

[ गेति ] ॥ न अग। 'नाग नपुंसक रङ्गे सीसके करणान्तरे। नाग पतगमातङ्गक्रूराचारिषु तोयदे। नागकेसरपुंनागाग्रद तक्षकमतके'। देहानिलप्रभदे च श्रेष्ठे स्या दुत्तरस्थितः (इति मेदिनी) [२२।७ ९] ॥ (१) ॥ ०॥ मतङ्गस्याम्।'तस्येदम्' (४।३।१२०) इत्यण्। ( मातङ्ग श्वपचे गज इति मेदिनी) [ २५।४५ ] ॥ (२) ॥०॥

अपाङ्गस्तिलकेऽपि च ॥ २१ ॥

'अपाङ्ग' ( पु ) के तिलक, नेत्रका किनारा २ अर्थ हैं।

[ एति ] ॥ अपगतोऽङ्गात्। निरादय –' (वा० २। २।१८) इति समासः। 'अपाङ्गो नयनस्यान्ते स्यात्त्रिच्चत्रप्रधानयोः' इत्यजय। 'अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च' (इति मेदिनी) [ २३।२८ ]।

१ मेदिन्यां '—सुमनोरेणौ—' इति पाठः।
२ मेदिन्यां '—दन्तक मुस्तके–' इति पाठः।

सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु।

'सर्ग' (पु) के स्वभाव, त्याग, निश्चय, काव्यके प्रकरण (जैसे—वाल्मीकि, नैषध, आदिका प्रकरण), सृष्टि ५ अर्थ हैं।

[ सग इति ] ॥ सृज्यते। सृज विसर्गे (दि० आ० अ०)। घञ् (३।३।१९)। 'सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु' (इति मेदिनी) [ २३।२७ ]। निर्मोक्षस्त्याग, मोक्षाभावो वा।

योगः संनहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥

'योग' ( पु ) के कवच, साम दाम आदि उपाय, ध्यान ( चित्तको एकाग्र करना ), संगति, युक्ति, विश्वासघातक, दवा आदि अर्थ हैं।

[ यत्रिति ] ॥ योजनम्। 'युज समाधौ' (दि० आ० अ०)। 'युजिर् योगे (र० उ० अ०)। घञ् (३।३।१८)। 'योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु। वपुः स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे। विश्वस्तघातके द्रव्योपायसंनहनेष्वपि। कार्मणेऽपि च' (इति मेदिनी) [ २३।१८ १९ ]। संनहनम् = कवचम्। उपाय = सामादि।

भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः।

'भोग' ( पु ) के सुख, स्त्री आदिकी मजदूरी या वेतन, साँपका फण, साँपका शरीर ४ अर्थ हैं।

[भोग इति] ॥ भोजनम्। 'भुज पालनाभ्यवहारयोः' (रु० प० अ०)। 'भुजो कौटिल्ये' (तु० प० से०)। घञ् (३।३।१८)। 'भोग सुखे धने पुंसि शरीरफणयोर्मतः[२]। पालनेऽभ्यवहारे च यादिदादिभृतावपि' (इति मेदिनी) [२२।१४ १५] [विश्व २४ १० च]। भृति = भाड़ा। आदिना हर्म्यश्वादिकसंस्कारणा च भृतिः। 'पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिताम्' इति विश्व [२४।१०]।

चातके हरिणे पुंसि सारङ्गः, शबले त्रिषु ॥ २३ ॥

'सारङ्ग' ( पु ) के चातक पक्षी, हरिण, हाथी, ३ अर्थ और 'सारङ्ग' ( त्रि ) का चितकबरा, १ अर्थ है।

[ चेति ] ॥ सारमङ्गं यस्य। शकन्ध्वादि (वा० ६। १।९४)। सारं गच्छति, इति वा। खच् (वा० ३।२।३८)। सहारङ्गेण, इति वा। 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे। शबले त्रिषु' (इति मेदिनी) [२५।५० ५१]।

१ मेदिन्यां '–प्यूर्वार्थ' ' वपु स्थैर्ये–' इति पाठः।
२ मेदिन्यां '—वाहे शरीरफणयोरपि' इति पाठः। विश्वे 'भोग सुखे धने वाहे शरीरफणयोर्मतः' इत्यप्यस्य।

कपौ च प्लवगः

'प्लवगः' (पु) के बन्दर, मेढक, सूर्यका सारथि ३ अर्थ हैं।

[ केति ]॥ प्लवेन गच्छति। ड. (वा० ३।२।४८)। 'प्लवगो वानरे भेके सारथौ चोष्णदीधितेः' (इति मेदिनी) [ २४।४० ]।

शापे त्वभिषङ्गः पराभवे।

'अभिषङ्गः' (पु) के शाप, पराभव, शपथ ३ अर्थ हैं।

[षेति] अभिषञ्जनम्। 'षञ्ज सङ्गे' (भ्वा० प०अ०)। 'उपसर्गात्–' (८।३।६५) इति षः। 'अभिषङ्गः पुंलिङ्गः पराभवाक्रोशशपथेषु' (इति मेदिनी) [ २४।५२ ]।

यानाद्यङ्गे युगः पुंसि, युगं युग्मे कृतादिषु॥ २४॥

'युगः' (पु) के रथ-गाड़ी आदिका जुआठ (जुआ), १ अर्थ और 'युगम्' (न) के युग्म' (न) के युग (सत्य-युग, त्रेता, द्वापर, कलियुग), जोड़ा २ अर्थ हैं।

[ येति ]॥ योजनम्। युज्यते वा 'युजिर् योगे' (रु० उ० अ०)। घञ् (३।३।१८, १९)। 'सञ्ज्ञापूर्वकत्वान्न गुणः। '—रथयुग–' (४।४।७६) इति निपातनाद्वा। 'युगो रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु। युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च' (इति मेदिनी) [ २३।१७ ]।

स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले।
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः

'गौः' के स्वर्ग, बाण, पशु (गाय, बैल, सांढ आदि), वाक् (बोली), वज्र, पूर्व पश्चिम आदि दिशा, आंख, सूर्य, पृथ्वी, पानी १० अर्थ हैं।

[ स्वरिति ]॥ गच्छति, गम्यते वा, अनेन वा। 'गमेर्डोः' (उ० २।६७)। '*गौर्नादित्ये बलीवर्दे किरणक्रतु-भेदयोः*। स्त्री तु स्यादृशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' इति केशवः। 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौर-भेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' (इति मेदिनी) [२१।१]।

लिङ्गं चिह्नशेफसोः॥ २५॥

'लिङ्गम्' (न) के चिह्न, लिङ्ग (पुरुषके पेशावका रास्ता) २ अर्थ हैं।

[लीति]॥ लिङ्ग्यतेऽनेन। 'लिगि गतौ' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि। शिवमूर्तिविशेषे च[1] मेहनेऽपि नपुंसकम्' (इति मेदिनी) [ २३।२१-२२ ]।

शृङ्गं प्राधान्यसान्वोश्च

'शृङ्गम्' (न) के प्राधान्य, शिखर (पहाड़की चोटी), सींग ३ अर्थ हैं।

[ श्रिति ]॥ शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन् नुट् च। 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषाया स्वर्णमीनभेदयोर्ऋषभौषधौ' (इति मेदिनी) [ २३।२५-२६ ]।

वराङ्गं मूर्धगुह्ययोः।

'वराङ्गम्' (न) के मस्तक, गुह्येन्द्रिय या योनि (स्त्रीके पेशावका रास्ता) २ अर्थ हैं।

[ वरेति ]॥ वरं च तदङ्गं च। वराङ्गं योनिमात-ङ्गमस्तकेषु गुह्यत्वचि' (इति मेदिनी) [ २५।४४ ]।

भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु॥ २६॥

'भगम्' (न) के शोभा, योनि, वीर्य, वैराग्य, इच्छा, माहात्म्य (प्रशंसा या बड़ाई), सामर्थ्य, यत्न, यश, धर्म, १० अर्थ और 'भगः' (पु) का सूर्य १ अर्थ हैं।

[ भेति ]॥ भजन्ते। 'भज सेवायाम्' (भ्वा० उ० से०) 'पुंसि–' (३।३।११८) इति घः। 'खनो घ च' (३।३।१२५) इति घो वा। 'भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ' (इति मेदिनी) [ २२।१२ ]।

इति गान्ताः शब्दाः।

अथ घान्ता शब्दाः।

परिघः परिघातेऽस्त्रेऽपि

'परिघः' (पु) के 'परिघ' नामका हथियार (लोहा मढ़ी हुई लाठी), योग-भेद २ अर्थ हैं।

[ परिति ]॥ परिहननम्। परिहन्यतेऽनेन वा। 'हन् हिंसागत्योः' (अ० प० अ०)। 'परौ घः' (३।३।८४) इत्यप्, घादेशश्च। 'परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः' (इति मेदिनी) [ २७।९ ]।

'परेश्च घाङ्कयोः'(८।२।२२)इति लत्वमपि ('पलिघ काचकलशे घटे प्राकारगोपुरे' इति हैम– [ ३।१।३५ ]। मेदिन्यां [ २६।९ ]।

[1] मेदिन्यां '—विशेषेऽपि' इति पाठः।

ओघो वृन्देऽम्भसां रये ।

'ओघ' (पु) के समूह, जलका प्रवाह, शीघ्रतासे नाचना, परम्परा, उपदेश ५ अर्थ है।

[ ओघ इति ] ॥ वहति । वह प्रापणे' (भ्वा० उ० अ०) । पचाद्यच् (३।१।१३४) । न्यङ्क्वादित्वात् (७।३।५३) साधु । ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयो ' (इति मेदिनी [ २६।३ ] ।

मूल्ये पूजाविधावर्घः

'अर्घ' ( पु न ) के मूल्य पूजा विधि ( अतिथि आदिके आनेपर या देव-पूजामें दिया हुआ 'अर्घ' नामका सत्कार विशेष २ अर्थ है।

[ द्वेति ] ॥ अर्ह्यतेऽनेन । अर्ह पूजायाम्' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । न्यङ्क्वादि (७।३।५३) । 'अर्घोर्घात्वन्तर वा' । [अर्घ पूजाविधौ मूल्ये' इति हैम- [२।५३] विश्व-[ २९।२ ] मेदि च [ २६।२ ] ।

अघो दुःखव्यसनेष्वघम् ॥ २७ ॥

'अघ' (न) के पाप, दुःख, व्यसन ( जुआ खेलने आदि की आदत ) ३ अर्थ हैं।

[ अघ इति ] ॥ अघ्यतेऽनेन । 'अघि गत्याक्षेपे'(भ्वा० आ० से०) । घञ् (३।३।१९, १२१) अनित्यमागमशासनम्' इति नुम् न ॥

त्रिष्विष्टेऽल्पे[1] लघु

'लघु' ( त्रि ) के इष्ट, कम २ अर्थ है।

[त्रीति] ॥ लङ्घ्यते । लघि गतौ' (भ्वा० आ० से०) लङ्घिबंह्योर्नलोपश्च ( उ० १।२९ ) इत्यु । कृष्णागुरुणि शीघ्रे च लघु क्लीबेऽगुरौ त्रिषु । निःसारे च मनोज्ञे च पृक्कायां तु लघु स्त्रियाम्' इति रभसः । 'लघुनि गुरौ च[2] मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ तु स्त्री (इति मेदिनी) [ २६।५ ] ।

इति घान्ताः शब्दाः ।

अथ चान्ताः शब्दाः ।

काचाः शिक्यमृद्भेदद्रुग्रुजः ।

'काच' ( पु ) के सिकहर, काच, आंखका रोग विशेष, अर्थ हैं।

[ केति ] ॥ कच्यते अनेन वा । कच बन्धे' (भ्वा० आ० से०) । घञ् (३।३।१९ १२१) 'न क्वादे' (७।३।५९)इति कुत्व न । णिजन्तात् पचाद्यच् (३।१।१३४) वा । काच शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे' (इति मेदिनी) [ २७।२ ] ।

विपर्यासे विस्तरे च[1] प्रपञ्चः

'प्रपञ्च'( पु ) के विपर्यास ( उलटा-पुलटा ), शब्दका फैलना, संसार ३ अर्थ हैं।

[ वीति ] ॥ प्रपञ्च्यते । 'पचि व्यक्तीकरणे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । 'प्रपञ्च सञ्चये ऽपि स्याद्विस्तरे च[2] प्रतारणे' (इति मेदिनी) [ २८।१५ विश्व ३१।१५ च ] ।

पावके शुचि ॥ २८ ॥

मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु।

'शुचि' ( पु ) के आग, आषाढ मास, मन्त्री, शृङ्गार रस ४ अर्थ और 'शुचि' ( त्रि ) के सफेद वस्तु, पवित्र, शुद्ध चित्तवाला ३ अर्थ हैं।

[ पेति ] ॥ शोचत्यनेन । शुच शोके' (भ्वा० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । शुचि र्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' (इति मेदिनी) [ २८।११ ] । उपधामुक्तौचमतिका-तेऽमात्ये ।

अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचि स्त्रियाम् २९

'रुचि' ( स्त्री ) के अभिष्वङ्ग ( राग ), स्पृहा, सूर्य आदिकी किरण, शोभा ४ अर्थ हैं।

[ अभीति ] ॥ रोचते । 'रुच दीप्तावभिप्रीतौ च' ( भ्वा० आ० से० ) । इगुपधात्कित्' ( उ० ४।१२० ) इतीन् । 'रुचि स्त्री दीप्ति[3]शोभायामभिष्वङ्गाभिलाषयो' ( इति मेदिनी ) [ २८।८ ] ।

इति चान्ताः शब्दाः ।

१ त्रिष्विष्टेऽपि-' इति पाठः ।

२ '-लघुरगुरौ च-' इति मेदिनीपाठः ।

१ 'विपर्यये च विस्तारे' इति युक्त पाठ' इति क्षी० स्वा० ।

२. 'मेदिन्यां '—स्याद्विस्तारे—' इति पाठः । विश्वे च '-सञ्चय प्रोक्तो विस्तरे—' इति पाठः ।

३ —दीप्तौ शोभा—'इति पाठो मेदिन्याम् । प्रधाने' इति पाठान्तरम् ।

अथ छान्ताः शब्दाः ।

'प्रसन्ने भल्लुकेऽप्यच्छो गुच्छः स्तबकहारयोः [३४]
परिधानाञ्चले कच्छो जलप्रान्ते त्रिलिङ्गकः' [ ३५ ]

[ 'अच्छः' ( पु ) के प्रसन्न, भालू, स्फटिक मणि ३ अर्थ हैं ]।

[ 'गुच्छः' ( पु ) के फूल-फल आदिका गुच्छा, ३२ या ७० लड़ीका हार-विशेष २ अर्थ हैं ]।

[ 'कच्छः' ( पु ) के कपड़े आदिको पहिरना, अञ्चल, २ अर्थ और 'कच्छः' ( त्रि ) का पानीका किनारा १ अर्थ है ]।

इति छान्ताः शब्दाः ।

अथ जान्ताः शब्दाः ।

केकिताक्ष्यावहिभुजौ

'अहिभुक्' ( पु ) के मोर, गरुड २ अर्थ हैं।

[ केकीति ] ॥ अहिं भुङ्क्ते । 'भुज पालनाभ्यवहारयो' (रु० उ० अ०) । क्विप् ( ३।२।७८ ) [ अहिभुक्केकिताक्ष्ययो' इति विश्वः, ३५।३२ ]।

दन्तविप्राण्डजा द्विजाः ।

'द्विजः' ( पु ) के दाँत, ब्राह्मण क्षत्रिय और वैश्य ये तीनों वर्ण, अण्डज ( चिड़िया, साँप, आदि ) ३ अर्थ हैं।

[ दन्तेति ] ॥ द्विर्जायते । 'अन्येष्वपि-' (३।२।१०१) इति ड । 'द्विज स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना । द्विजा भार्ग्यां हरेणौ च' (इति मेदिनी) [ ३०।९-१० ]।

अजा विष्णुहरच्छागाः

'अजः' (पु) के विष्णु, शिवजी, छाग, रघुके पुत्र ('अज' नामका रघुवंशी राजा ), ब्रह्मा, कामदेव ६ अर्थ हैं।

[ अजा इति ] ॥ न जायते । 'पूर्ववत् ( ३।२।१०२ ) ड.। अजति वा । 'बहुलं तणि' ( वा० २।४।५४ ) इति वी न। पचाद्यच् (३।१।१३४) । अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्व [ ३२।२ ]।

गोष्ठाध्वनिवहा व्रजाः ॥ ३० ॥

'व्रजः' (पु) के गोष्ठ (गौओंके ठहरनेका स्थान गोशाला आदि ), रास्ता, समूह ३ अर्थ हैं।

[ गोष्ठेति ] ॥ व्रजति, अस्मिन् वा । 'व्रज गतौ' (भ्वा० प० से०)। पचाद्यच् [३।१।१३४]। 'गोचरसंचर-' ( ३।३।११९ ) इति वा साधु । [ व्रजो गोष्ठाध्ववृन्देषु' इति विश्व- ( ३२।३ ) मेदिन्यौ (३०।१५) ]।

धर्मराजौ जिनयमौ

'धर्मराजः' ( पु ) के जिन ( बुद्धदेव ), यमराज, युधिष्ठिर ३ अर्थ हैं।

[ धर्मेति ] ॥ धर्मेण राजति । अच् (३।१।१३४) । धर्मस्य राजा । धर्मश्चासौ राजा च इति वा । 'राजाहःसखिभ्यष्टच्' ( ५।४।९१ ) । 'धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्' (इति मेदिनी) [ ३२।३३ ]।

कुञ्जो दन्तेऽपि न स्त्रियाम् ।

'कुञ्जः' ( पु न ) के हाथीका दाँत, कुञ्ज २ अर्थ हैं।

[ कुञ्ज इति ] ॥ कौ जायते । 'सप्तम्यां जनेर्डः' (३।२।९७ ) । पृषोदरादि (६।३।१०९)। यत्तु—कुञ्जन्यत्र । 'कुजि अव्यक्ते शब्दे' । 'हलश्च' (३।३।१२१) । इति घञ्—इत्याह । तन्न । 'कुजि'धातोरप्रसिद्धत्वात् । 'गुजि'धातोर्दर्शनात् । 'कुञ्जोऽस्त्रिया निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्' (इति मेदिनी) [ ३०।६ ]।

वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥ ३१ ॥

'वलजम्' ( न ) के खेत, नगरका द्वार २ अर्थ और 'वलजा' ( त्रि ) का देखनेमें प्रिय लगनेवाला १ अर्थ है।

[ वलेति ] ॥ वले जातम् । 'सप्तम्यां जनेर्डः' (३।२।९७) । 'वलज गोपुरे क्षेत्रे सस्यसंगरयोरपि । 'वलजा वरयोषाया यूथ्याम्' (इति मेदिनी) [ ३१।२५-२६ ]

समक्ष्मांशे रणेऽप्याजिः

'आजिः' ( स्त्री ) के बराबर जमीन, युद्ध २ अर्थ हैं।

[ समेति ] ॥ अजन्त्यस्याम् । 'अज गतौ' (भ्वा० प० से०) । 'अज्यतिभ्यां च' (उ० ४।१३१) इतीण् । 'अथाजिः स्त्री समभूमौ च संग्रामे' (इति मेदिनी) [३०।३]।

प्रजा स्यात्संततौ जने ।

'प्रजा' ( स्त्री )के सन्तान (पुत्र या पुत्री) जन २ अर्थ हैं।

[ प्रेति ] ॥ प्रजायते । 'उपसर्गे च संज्ञायाम्' (३।२।९९) इति जनेर्ड । [ 'प्रजा संतानलोकयो' इति विश्वः ३३।१० ]।

अब्जौ शङ्खशशाङ्कौ च

'अब्जः' (पु न) के शंख, चन्द्रमा, धन्वन्तरि, ३ अर्थ और 'अब्जम्' ( न ) का कमल, १ अर्थ है।

[ अब्जाविति ] ॥ अप्सु जायते । 'सप्तम्याम्-' ( ३।२।९७) इति डः । 'अब्जोऽस्त्री शङ्खे, ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीबं पद्मे' (इति मेदिनी) [ ३०।३ ]।

स्वके नित्ये निजं त्रिषु ॥ ३२ ॥

'निजम्' ( त्रि ) के आत्मीय, नित्य २ अर्थ हैं।

[स्वेति] ॥ नि जायते । उपसर्गे च–' ( ३ २।९९ ) इति ड [ निजमात्मीयनित्ययो' इति विश्व ३२।३ ]।

इति जान्ता शब्दाः ।

अथ ञान्ता शब्दाः ।

पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः।

'क्षेत्रज्ञ' ( पु ) का आत्मा, १ अर्थ और 'क्षेत्रज्ञ' (त्रि) का क्षेत्रज्ञ ( शरीरको जाननेवाला ज्ञानी पुरुष ) १ नाम है।

[ पुंसीति ]॥ क्षेत्रं जानाति। ज्ञा अवबोधने (क्र्या० प० अ०)। 'आतोऽनुप–' (३।२।३) इति क। [ क्षेत्रज्ञावात्मनिपुणो' इति हैम ३।१५० ]।

संज्ञा स्याच्चेतना नामहस्ताद्यैश्चार्थसूचना ॥ ३३ ॥

'दोषज्ञौ वैद्यविद्वांसौ ज्ञो विद्वान् सोमजोऽपि च [३६]

विज्ञौ प्रवीणकुशलौ कालज्ञो ज्ञानिकुक्कुटौ' [३७]

'संज्ञा' ( स्त्री ) के चेतना ( होश, ज्ञान ) नाम, हाथ आदिका इशारा, गायत्री, सूर्यकी स्त्री ५ अर्थ हैं।

[ 'दोषज्ञ' ( पु ) के वैद्य, विद्वान् २ अर्थ हैं ]।

[ 'ज्ञ' ( पु ) के विद्वान्, बुध नामका ग्रह, ब्रह्मा ३ अर्थ हैं ]।

[ 'विज्ञ' ( पु ) के प्रवीण, चतुर २ अर्थ हैं ]।

[ 'कालज्ञ' ( पु ) के ज्ञानी, मुर्गा २ अर्थ हैं ]।

[संमिति] ॥ संज्ञानम् । आतश्चोप– (३।३।१०६) इत्यङ् । संज्ञा नामनि गायत्र्यां चेतनारविंयोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति' (इति मेदिनी) [३३।३] ।

इति ञान्ता शब्दाः ।

अथ टान्ता शब्दाः ।

काकेभगण्डौ करटौ

'करट' ( पु ) के कौआ, हाथियोंका कपोल २ अर्थ हैं।

[केति] ॥ 'क' इति रटति । रट शब्दे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४)। 'करटो गजगण्डे स्यात्कुसुम्भे निःद्यजीवने । एकादशाहादिश्राद्धे दर्दुरूढेऽपि वायसे । करटो वाद्यभेदे' (इति मेदिनी) [२६।३६-३७]।

गजगण्डकटी कटौ ।

'कट' ( स्त्री ) के हाथी का कपोल, कमर २ अर्थ हैं।

[गजेति] ॥ कटति । 'कटे वर्षावरणयो' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४)। 'कट श्रोणौ क्रियाकारे कलिञ्जेऽतिशये शवे[1] । समये गजगण्डेऽपि किप्पल्यां च कटी मता' इति विश्व [२६।१] । 'कट श्रोणौ द्वयो पुंसि कलिञ्जेऽतिशये शवे । [समये गजगण्डे च पिप्पल्यां च कटी मता] (इति मेदिनी) [३३।३४] ।

शिपिविष्टस्तु खल्वतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥

'शिपिविष्ट' ( पु ) के खल्वाट ( रोग आदिके कारण जिसके सिरके बाल गिर गये हों वह मनुष्य, खराब चमडे वाला, शिव विष्णु ४ अर्थ हैं।

[शीति]॥ शिपिषु रश्मिषु पशुषु वा विष्ट । 'शिपिविष्ट शिव खोरिदुश्चर्मा खलतिस्तथा' [ शिपिविष्टस्तु खल्वाटे दुश्चर्मणि पिनाकिनि' इति हैम, ४।९८] ।

देवशिल्पिन्यपि त्वष्टा

'त्वष्टा' ( पु ) के विश्वकर्मा ( देवताओं का बढ़ई या कारीगर), बारह सूर्योंमेंसे एक सूर्य, बढ़ई ३ अर्थ हैं।

[ देवेति ]॥ त्वक्षति, त्वक्ष्यते च । 'त्वक्षू तनूकरणे' ( भ्वा० प० से० ) । 'नप्तृनेष्टृ–' ( उ० २।९५ ) इति साधु । 'त्वष्टा पुमान् देवशिल्पितक्षणोरादित्यभिद्यपि' (इति मेदिनी) [ ३४।१६ ]।

दिष्टं दैवेऽपि न द्वयो ।

'दिष्टम्' ( न ) का भाग्य १ अर्थ और 'दिष्ट' ( पु ) का समय १ अर्थ है।

[दीति] ॥ दिश्यते स्म । 'दिश अतिसर्जने' (तु० उ० अ०) । क्त (३।२।१०२)। 'दिष्टं दैवे पुमान् काले' (इति मेदिनी) [ ३४।१७ ] ।

रसे कटुः, कट्वकार्ये त्रिषु मत्सरतीक्ष्णयो ॥ ३५ ॥

'कटु' ( पु ) का कडुवा १ अर्थ, 'कटु' ( न ) का नहीं करने योग्य १ अर्थ और 'कटु' ( त्रि ) के मत्सर ( दूसरेकी भलाईसे द्वेष करना ), तीक्ष्ण २ अर्थ हैं।

[ रेति ]॥ कटति । 'कटे' [ 'वर्षावरणयो' ] (भ्वा० प० से० ) । मृगय्वादित्वात् ( उ० १।३७ ) उ । 'कटु स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात् पुलिङ्गो रसभाजके । त्रिषु तद्वत्सुगन्धयोश्च मत्सरेऽपि खरे च' (इति मेदिनी) [ ३३।४५ ]।

रिष्टं क्षेमाशुभाभावेषु

'रिष्टम्' ( न ) के कल्याण, अशुभका अभाव २ अर्थ हैं।

१ 'अधाने च–'इति पाठान्तरम् ।

[1] '—शिवे–' इति मेदिनीपाठ ।

[ रीति ]॥ रेषणम् । रिष्यते स्म, ऋषति इति वा । 'रिष हिंसायाम्' (दि० प० से०) । ऋषि गतौ (तु० प० अ०) क्तः (३।३।११४ ३।२।१०२)। 'रिष्टं स्यादशुभेनसोः' इत्यजयः । 'रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले' (इति मेदिनी) [ ३५।२६ ]।

अरिष्टे तु शुभाशुभे ।

'अरिष्टम्' (पु) के शुभ, अशुभ २ अर्थ हैं।

[ अरीति ]॥ न रिष्टम् । 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' (इति मेदिनी) [३५।३२-३३]।

मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३६ ॥

अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।

'कूटम्' (न पु) के माया, निश्चल (आकाशादि), हरिण आदि फँसानेका यन्त्र-विशेष (जाल आदि), कपट, असत्य, गञ्जा (अन्न आदिकी ढेरी), लोहेका हथौड़ा, पहाड़की चोटी, हलके आगेवाला भाग ९ अर्थ हैं।

[ मेति ]॥ माया = विपरीतदर्शनम् । यन्त्रं = मृगबन्धनविशेषः । सीराङ्गे = फालाधारे । कूटयते । 'कूट आप्रदाने' (चु० आ० से०) । पचाद्यच् (३।१।१३४) । [ 'कूट पूर्दारयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽद्रुततुच्छयोः । निश्चलेऽयोघने राशौ' इति हैम., २।८५-८६]।

सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ॥ ३७ ॥

'त्रुटिः' (स्त्री) के छोटी इलायची, समय-भेद, न्यूनता (कमी) संशय ४ अर्थ हैं।

[ त्रिवति ]॥ त्रुटयते, अनेन वा । 'त्रुट छेदने' (चु० आ० से०)। 'इगुपधात्-' (उ० ४।१२०) इतीन् । 'त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः' (इति मेदिनी) [ ३४।१६ ]।

अत्युत्कर्षाश्रयः कोटयः

'कोटिः' (स्त्री) के धनुषके दोनों छोर, प्रकर्ष, कोण, करोड़ (संख्या-विशेष) ४ अर्थ हैं।

[ एति ]॥ कोटयते । 'कुट प्रतापने' (चु० आ० से०)। 'अच इः' (उ० ४।१३९)। 'कोटिः स्त्री धनुषोऽग्र्यां संख्याभेदप्रकर्षयोः' (इति मेदिनी) [ ३४।९ ]।

मूले लग्नकचे जटा ।[1]

'जटा' (स्त्री) के पेड़ आदिकी जड़, जटा (मुनि आदिके सटे हुए बाल), जटामासी ३ अर्थ हैं।

[म्विति]॥ जटति । 'जट संघाते' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४) । 'जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी' (इति मेदिनी) [ ३४।१४ ]।

व्युष्टिः फले समृद्धौ च

'व्युष्टिः' (स्त्री) के फल (प्रयोजन), समृद्धि २ अर्थ हैं।

[व्युष्टिरिति]॥ व्युच्छनम् । व्युच्छयते वा । 'उच्छी विवासे' (भ्वा० प० से०)। क्तिन् (३।३।९४)। [ 'व्युष्टिः फले समृद्धौ स्त्री' इति मेदिनी, ३५।२८ ]।

दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥ ३८ ॥

'दृष्टिः' (स्त्री) के ज्ञान, आँख, देखना ३ अर्थ हैं।

[ द्रिति ]॥ दर्शनम् । 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०) । क्तिन् (३।३।९४) । करणे वा । [ 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इति हैम , २।९३ ]।

इष्टिर्यागेच्छयोः

'इष्टिः' (स्त्री) के यज्ञ, इच्छा २ अर्थ है।

[ ईति ]॥ एषणम् । 'इषु इच्छायाम्' (तु० प० से०)। क्तिन् (३।३।९३)। इज्यतेनया वा इति वा । यजेः क्तिन् (३।३।९३)। 'इष्टिर्मताभिलाषेऽपिसंग्रहश्लोकयागयोः' (इति मेदिनी) [ ३३।३ ]

सृष्टिर्निश्चिते बहुनि त्रिषु ।

'सृष्टिः' (स्त्री) के स्वभाव, रचना, निश्चित ३ अर्थ हैं।

[ स्विति ]॥ सर्जनम् । 'सृज विसर्गे' (दि० आ० अ०) । क्तिन् (३।३।९४) । [ 'सृष्ट' इति ] अकारान्तपाठे—भावे क्तः (३।३।११४) । 'मुक्तनिर्मितयोः प्राज्ये त्रिषु सृष्टं तु निश्चिते' इति रुद्र । [ 'सृष्टिः स्वभावे निर्माणे सृष्टं निश्चितयुक्तयोः । प्रचुरे निर्मिते च' इति हैम., २।१०२-१०३ ]।

कष्टे तु कृच्छ्रगहने

'कष्टम्' (त्रि) के दुःख, गहन (दुःसाध्य काम आदि), २ अर्थ हैं।

[ केति ]॥ कष्यते स्म । 'कष हिंसायाम्' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'कृच्छ्रगहनयोः कषः' (७।२। २२) इति नेट् । [ 'कष्टं गहनकृच्छ्रयोः' इति हैमः, २।८३ ]।

दक्षामन्दागदेषु तु ॥ ३९ ॥

पटुः

'पटुः' (त्रि) के चतुर, निरालसी, रोग ३ अर्थ हैं।

१. सि० कौ० धातुपाठे च "कूट परितापे । परिदाहे' इत्यन्ये" इति पाठः ।

[दक्षेति] ॥ पाटयति । 'पट गतौ' (भ्वा० प० से०) ण्यन्त । 'फलिपाटि-' (उ० १।१८) इत्यु, पटादेशश्च । 'पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्र । 'पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्त्रालवणयोरपि' (इति मेदिनी) [३५।२०] ।

द्वौ[१] वाच्यलिङ्गौ च

'पोटा दासी द्विलिङ्गा च घृष्टी घर्षणसूकरौ [ ३८ ]
घटा गोष्ठया हस्तिपङ्क्तौ कुपीटमुदरे जले' [ ३९ ]

[ 'पोटा' ( स्त्री ) के दासी, स्त्री-पुरुषके चिह्नोंसे युक्त स्त्री २ अर्थ हैं ]।

[ 'घृष्टि' ( पु ) के घिसना, सूअर २ अर्थ हैं ]।

[ 'घटा' (स्त्री) के सभा, हाथियोंकी कतार २ अर्थ हैं ]।

[ 'कुपीटम्' ( न ) के पेट, पानी २ अर्थ हैं ]।

इति टान्ता शब्दा ।

अथ ठान्ता शब्दा ।

नीलकण्ठः शिवेऽपि च ।

'नीलकण्ठ' ( पु ) के शिव, मोर २ अर्थ हैं।

[नीति] ॥ नील कण्ठो यस्य । 'कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने । सितापाङ्गे हरे पीतसारके नीलकण्ठवत्' इति विश्व [४२।१९] । [नीलकण्ठो शिखीश्वरौ' इति नानार्थरत्नमाला [प० २१६०] । 'नीलकण्ठौ शिखिहरौ' इति वाप्यवतन्त्र, ६१२ ]।

पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥ ४० ॥

'कोष्ठ' ( पु ) के कोठ ( पेटके भीतरका एक भाग ), कोठिला या बखार, घरका भीतरी भाग ३ अर्थ हैं।

[ पुंसिति ] ॥ कुष्यते । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'उपिकुषि-' (उ० २।४) इति थन । 'कोष्ठ कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च' (इति मेदिनी) [३६।४] ।

निष्ठा निष्पत्तिनाशान्त

'निष्ठा' ( स्त्री ), के निष्पत्ति ( सिद्धि ) नाश, आखीर ३ अर्थ हैं।

[नीति] ॥ निष्ठानम् । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । 'निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च' (इति मेदिनी) [३६।६] ।

काष्ठोत्कर्षे स्थितौ दिशि ।

'काष्ठा' ( स्त्री ) के वृद्धि, मर्यादा, पूर्व आदि दिशा ३ अर्थ हैं।

[केति] ॥ काशते । 'काशृ दीप्तौ' (भ्वा० आ० से०) । 'हनिकुषि-' (उ० २।२) इति क्थन् । 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' (इति मेदिनी) [३६।२-३] ।

त्रिषु ज्येष्ठोऽतिशस्तेऽपि

'ज्येष्ठ' ( त्रि ) के बहुत उत्तम, बड़ा भाई आदि, वृद्ध ३ अर्थ और 'ज्येष्ठ' ( पु ) का ज्येष्ठ महीना १ अर्थ है।

[ त्रीति ] ॥ अतिशयेन प्रशस्त । अतिशयेन वृद्ध वा । 'अतिशायने तमबिष्ठनौ' (५।३।५५) । 'ज्य च' (५।३।६१) इति प्रशस्यस्य ज्यादेश । 'ज्येष्ठ श्रेष्ठे च वृद्धे[१] च त्रिषु, मासान्तरे पुमान् । ज्येष्ठा तु गृहगोधायामन्त्यनक्षत्रभेदयो' (इति मेदिनी) [३६।५-६] ।

कनिष्ठोऽतियुवाल्पयोः ॥४१॥

'कनिष्ठ' ( त्रि ) के बालक, छोटा भाई आदि, थोड़ा ३ अर्थ हैं।

[कनीति] ॥ अतिशयेन युवा अल्पो वा । इष्ठन् (५।३।५५) । 'युवाल्पयो कनन्यतरस्याम्' (५।३।६४)। 'कनिष्ठोऽतियुवात्यल्पानुजे, स्त्री दुर्बलाङ्गुली' ( इति मेदिनी ) [३६।१२] ।

इति ठान्ता शब्दा ।

अथ डान्ता शब्दा ।

दण्डोऽस्त्री लगुडेऽपि स्यात्

'दण्ड' ( पु न ) के दण्डा, सजा २ अर्थ हैं।

[देति] ॥ दण्ड्यति, अनेन वा । 'दण्ड निपातने' (चु० उ० से०) । पचाद्यच् (३।१।१३४)। 'पुंसि-' (३।३।११८) इति घो वा । दमे ( दि० प० से० ) ड (उ० १।११४) वा । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययो । व्यूहभेदे प्रकाण्डेऽश्वे कोणसंस्थानयोरपि । अभिमाने ग्रहे दण्डश्च ण्डांशो पारिपार्श्विके' इति विश्व [४४।१२ १३] ।

---

१ 'च'शब्दाल्लवणो रस पटु । 'द्वौ कष्टपटू" इति स्वाम्याह ।

२. अयमक्षेपक स्वामिनो व्याख्याया पोटा दासी द्विलिङ्गा च, घृष्टी घर्षणसुकरौ । घटा गोष्ठ्या हस्तिपङ्क्तौ, कुपीटमुदरे जले ॥' च लभ्यते ।

१ मेदिन्या '—श्रेष्ठेऽतिवृद्धे—' इति पाठ ।

गुडो गोलेक्षुपाकयोः ।

'गुडः'¹ ( पु ) के मिट्टीकी गोली, गुड़ १ अर्थ हैं।

[गिविति] ॥ गुडति । 'गुड वेष्टने' (तु० प० से०) । 'इगुपध–' (३।३।१३५) इति कः । 'गुड स्याद् गोलके हस्तिसंनाहेक्षुविकारयो.' । गुडा स्नुह्यां च कथिता गुडिकायां च योषिति' ( इति मेदिनी ) [४१।१०] ।

सर्पमांसात्पशू व्याडौ

'व्याडः' ( पु ) के साँप, दुष्ट, बाघ ३ अर्थ हैं।

[सर्पेति]॥ व्याडति । 'अड उद्यमे'(भ्वा० प० से०)। से०) । पचाद्यच् (३।१।१३४) 'व्याडो व्याघ्रे खले सर्प' इति रभसः । ['व्याडो हिंस्रपशौ सर्प' इति विश्व–(४३। १) हैम–(२।१२९) मेदिन्य (४२।२५) ।

गोभूवाचास्त्विडा इला: ॥ ४२ ॥

'इडा, इला' ( २ स्त्री ) के गौ, पृथ्वी, वचन, बुधकी स्त्री ४ अर्थ हैं।

[गविति] ॥ इलति । इल उत्प्रेक्षे' ( तु० प० से० ) 'इगुपध–' (३।१।१३५) इति क । ( 'इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च' इति मेदिनी) [१४५।४] ॥ (२) ॥*॥ डलयोरेकत्वस्मरणात् इडा । 'इडा तु बुधयोषिति । सौरभेय्या च वचने वसुमत्यामपि स्त्रियाम्' (इति मेदिनी) [४०।१-२] ॥ (१) ॥*॥

क्ष्वेडा वंशशलाकापि

'क्ष्वेडा' ( स्त्री ) के पिंजड़ा–टोंरी आदि बनानेके लिये बाँस आदिको छीलकर चिकनी और पतली की हुई शलाका, सिहकी गर्जना २ अर्थ हैं।

[क्ष्वेडेति] ॥ क्ष्वेलति । 'क्ष्वेलृ चलने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । डलयोरेकत्वम् । 'क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्ग प्रकीर्तित.' (इति मेदिनी) [ ४०। ५-६] ।

नाडी कालेऽपि षट्क्षणे ।

'नाडी' ( स्त्री ) के छः क्षण ( एक घटी या २४ मिनट ) का समय-विशेष, नाड़ी (नस), नाल ( डंठल ) ३ अर्थ हैं।

[ नाडीति ] ॥ नालयति । 'णल गन्धे' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। डलयोरेकत्वम् । गौरादि. (४।१।४१) । 'नाडी नाले व्रणान्तरे । शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च । तथा षट्क्षणकालेऽपि' (इति मेदिनी) [४१।१६-१७]।

काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥ ४३ ॥

'काण्डः' ( पु न ) के दण्ड, बाण, निन्दित, वर्ग ( प्रकरण, जैसे–अमरकोषके स्वर्गवर्ग,⋯ ⋯) अवसर, पानी ६ अर्थ हैं।

[ केति ] ॥ कन(ल)ति । 'कनी दीप्तौ' (भ्वा० प० से०) । अमन्ताड्डः (उ० १।११४) । 'कवादिभ्यः कित्' (उ० १।११५) । अनुनासिकस्य–' (६।४।१५) इति दीर्घं । 'काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनाम् । स्तम्बे रहसि वर्गे च' इति धरणिः । ('काण्ड. स्तम्बे सद॰ स्कन्धे बाणेऽवसरनीरयो. । कुत्सिते वृक्षभिन्नादौ वृन्दे रहसि न स्त्रियाम्' (इति मेदिनी) [४०।२०३] ।

स्याद् भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।

'संघातग्रासयोः पिण्डी द्वयोः पुंसि कलेवरे [ ४० ]

गण्डौ कपोलविस्फोटौ मुण्डकं त्रिषु मुण्डिते' [ ४१ ]

'भाण्डम्' ( न ) के घोड़ेका भूषण, व्यापार आदिमें लगाया हुआ मूल धन, बर्तन ३ अर्थ हैं।

[ 'पिण्डी' (स्त्री पु) के समूह, ग्रास २ अर्थ और 'पिण्डी' ( पु ) का शरीर १ अर्थ है ]।

[ 'गण्डः' ( पु ) के गाल, विस्फोट ( फोड़ा आदि ) २ अर्थ हैं ]।

[ 'मुण्डकम्' ( त्रि ) के मुण्डित, शिर २ अर्थ हैं ]।

[ स्यादिति ] ॥ भण्यते । 'भण शब्दे' (भ्वा० प० से०) । पूर्ववत् पृषोदरादि (६।३।१०९) । 'भाण्डं भूषणमात्रे स्यात्' इति धरणि । 'भाण्डं पात्रे वणिग्मूलधने भूषाश्वभूषयो.' (इति मेदिनी) [ ४२।२१ ]।

इति डान्ताः शब्दा ।

अथ ढान्ता. शब्दाः ।

भृशप्रतिज्ञयोर्बाढम्

'बाढम्' ( न ) का अत्यन्त १ अर्थ और 'बाढम्' (अ०) के प्रतिज्ञा, स्वीकार २ अर्थ हैं।

[भ्रिति] ॥ उह्यते स्म । 'वह प्रापणे' (भ्वा० उ० अ०) । क्त (३।२।१०२) । 'सुध्वस्वान्त–' (७।२।१८) इति साधु । [ 'बाढ भृशप्रतिज्ञयो.' इति हैमः, २।१३१]।

१. विश्वेऽपि 'गुडः स्याद्गोलके हस्ते⋯विकारयोः । गुडा स्नुहीगुडिकयो:' इत्येवं (४३।१) पाठो लभ्यते ।

१. विश्वे 'बाढं दृढे प्रतिज्ञायाम्' (४६।१) इति, मेदिन्या च 'बाढं दृढं दृढप्रतिज्ञयो.' इति पाठौ ।

प्रगाढं भृशकृच्छ्रयोः ॥ ४४ ॥

'प्रगाढम्' ( न ) के दृढ, कष्ट २ अर्थ हैं।

[प्रेति] ॥ प्रगाह्यते स्म । 'गाहू विलोडने' (भ्वा० आ० से०) । क्त (३।२।१०२) । 'यस्य विभाषा' (७।२।१५) इति नेट् । 'प्रगाढ स्याद् दृढे कृच्छ्रे' इति धरणि ['प्रगाढो दृढकृच्छ्रयो' इति हैम. ३।१२५] ।

शक्तस्थूलौ त्रिषु दृढौ

'दृढ' ( त्रि ) के समर्थ, मोटा या पुष्ट, अच्छी तरह ३ अर्थ हैं।

[ शक्तेति ] ॥ दृहति, दृंहति वा स्म । 'दृह दृहि वृद्धौ' (भ्वा० प० से०) । गत्यर्था-' (३।४।७२) इति क्त । 'दृढ स्थूलबलयो' ( ७।२।२० ) इति साधु । 'दृढ स्थूले नितान्ते च प्रगाढे' बलवत्यपि' (इति मेदिनी) [ ४३।२ ] ।

व्यूढौ विन्यस्तसंहतौ ।

'व्यूढ' (त्रि) के रचित, मिला हुआ (संहत) २ अर्थ हैं।

[व्यूढाविति] ॥ विशेषेणोह्यते स्म । 'वह प्रापणे' (भ्वा० उ० अ०) । क्त (३।२।१०२) । 'व्यूढ संहत-विन्यस्ते पृथुलेऽप्य'भिधेयवत्' (इति मेदिनी) [४४।४] ।

इति ढान्ता शब्दा ।

अथ णान्ता शब्दा ।

भ्रूणोऽर्भके स्त्रैणगर्भे

'भ्रूण' ( पु ) के बालक, स्त्रीका गर्भ २ अर्थ है।

[ भ्रूण इति] ॥ भ्रूण्यते । भ्रूण आशायाम्' (चु० आ० से०) । घञ् (३।३।१८) । 'भ्रूण स्त्रीगर्भडिम्भयो' (इति मेदिनी) [४६।२३] स्त्रिया अयम् । स्त्रीपुंसाभ्याम्-' (४।१।८७) इति नञ् । स्त्रैणश्चासौ गर्भश्च । शाल्यादिगर्भव्यावृत्त्यर्थं विशेषणम् ।

बाणो बलिसुते शरे ॥ ४५ ॥

'बाण' ( पु ) के बलिका पुत्र (बाणासुर), बाण २ अर्थ है।

[ बेति ] ॥ बाणयति । बण शब्दे' ( भ्वा० आ० से० ) । स्वार्थण्यन्त । पचाद्यच् (३।१।१३४) । 'बाण स्याद्गोस्तने दैत्यभेदे केवलकाण्डयो । बाणा तु बाणमूले स्त्री नीलझिण्टया पुनर्द्वयो' (इति मेदिनी) [४६।२७] ।

कणोऽतिसूक्ष्मे धान्यांशे

'कण' ( पु ) के अत्यन्त सूक्ष्म ( पानीकी छोटी २ बूँदें, मोती के दाने, ), धान्य ( अन्न ) की खुद्दी २ अर्थ हैं।

[ केति ] ॥ कणति । 'कण निमीलने' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । 'कणा जीरककुम्भीरमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे' ( इति मेदिनी [ ४५।५ ] ।

संघाते प्रमथे गण ।

'गण' ( पु ) के समूह शिवजीके दूत, सेनाकी संख्या-विशेष ३ अर्थ हैं।

[ समिति ] ॥ गण्यते । 'गण संख्याने' ( चु० उ० से० ) । घञ् (३।३।१९) । अच् (३।३।५६) वा । 'गण स्यात्प्रमथे संघे संख्यासैन्यप्रभेदयो' ( इति मेदिनी' ) [इति विश्व, ४७।२] ।

पणो द्यूतादिपूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ ४६ ॥

'पण' ( पु ) के जुआ आदिम दावपर रक्खा हुआ धन आदि, वेतन या मजदूरी, कीमत, धन ४ अर्थ हैं।

[ पेति ] ॥ पणनम् । अनेन वा । 'नित्यं पण परिमाणे' (३।३।६६) इत्यप् । 'पणो माने वराटाना मूल्ये कार्षापणे धने । द्यूते विक्रय्यशाकादेर्बद्धमुष्टौ ग्लहे भृतौ' इति धरणि । [ 'पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे । क्रय्यशाकटिकद्यूतव्यवहारे भृतौ धने ।' इति विश्व, ४७।१] ।

मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके' गुण ।

'गुण' ( पु ) के धनुष्की ताँत, रूप रस आदि २४ गुण, सत्त्व-रजस्-तमस्ये ३ गुण, बहादुरी चातुर्य पाण्डित्य आदि गुण, सन्धि-विग्रह आदि ६ गुण, इन्द्रिय ६ अर्थ है।

[मौर्वीति] ॥ गुण्यते । 'गुण आमन्त्रणे' ( चु० उ० से० ) । घञ् ( ३।३।१९ ) । 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्या[3] च' (इति मेदिनी) [४५।१०-११] ।

१. मेदिन्या 'दृढ प्रगाढबलयो—' इति पाठ ।

२ मेदिन्या '—विन्यस्तपृथुलेष्वभि—' इति पाठ ।

१ मेदिन्या 'गण प्रमथसंख्यौघे चण्डीसैन्यप्रभेदयो' इति (४५।९) सर्वथा भिन्नपाठ । विश्वे च 'गण समूहे प्रमथे—' इति पाठ ।

२. 'सत्त्वशौर्यसन्ध्यादिके—' इति स्वामिसम्मत पाठ ।

३ '—वख्या च' इति मेदिनीपाठ ।

निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ ४७ ॥

'क्षणः' ( पु ) के निकम्मा होकर बैठे रहना, एक घड़ीका बारहवाँ हिस्सा या ३ मिनटका समय-विशेष, उत्सव ३ अर्थ हैं।

[निरिति] ॥ क्षणोति । 'क्षणु हिंसायाम्' (त० उ० से०)। पचाद्यच् (३।१।१३४)। 'क्षणो व्यापारशून्यत्व-मुहूर्तोत्सवपर्वसु' इति रुद्रः। [ शाश्वतश्च, २२८ । 'क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्वमध्ययो.।' इति हैमः, २।१३६-१३७ ]।

वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे।

'वर्णः' ( पु ) के ब्राह्मण आदि ४ वर्ण, रंग तथा स्तुति ( व्रत, गुण, गीतक्रम ताल-विशेष, यश ) ये ३ अर्थ और 'वर्णम्' ( न ) का अक्षर १ अर्थ है।

[ वर्ण इति ] ॥ वर्ण्यते । 'वर्ण प्रेरणे' ( चु० उ० से० )। घञ् ( ३।३।१८ )। 'वर्णो द्विजादिशुक्लादियशो-गुणकथासु च। स्तुतौ ना, न स्त्रियां भेदरूपाक्षरविलेपने' ( इति मेदिनी ) [ ४६।२६ ]।

अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥ ४८ ॥

'अरुणः' ( पु ) का सूर्य, सूर्यका सारथि, सन्ध्या समय की लालिमा, कुष्ठ ४ अर्थ और 'अरुणः' ( त्रि ) का लाल रङ्गवाला १ अर्थ है।

[ एति ] ॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० से०)। 'अर्तेश्च' ( उ० ३।६० ) इत्युनन्। 'अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना, गुणिनि त्रिषु। अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च' ( इति मेदिनी ) [ ४७।३३-३४ ]।

स्थाणुः शर्वेऽपि च

'स्थाणुः' ( पु ) के शिव, ठुण्ठ ( ठूंट अर्थात् बिना डाल पातका सूखा हुआ पेड़ ) २ अर्थ हैं।

[स्थेति] ॥ तिष्ठति। 'स्थो णुः' ( उ० ३।३७ )। 'स्थाणु' कीले हरे पुमान्। अस्त्री ध्रुवे' ( इति मेदिनी ) [४७।३२]।

द्रोणः काकेऽपि च

'द्रोणः' ( पु ) के कौआ, द्रोणाचार्य, द्रोण ( परिमाण-विशेष ) ३ अर्थ हैं।

[द्रवति] ॥ द्रवति। 'द्रु गतौ' ( भ्वा० प० अ० )। 'कुद्रुजुसि-' (उ० ३।१०) इति नः। 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये। पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे। स्त्रियां[1] काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते' ( इति मेदिनी ) [ ४६।१७-१८ ]।

रवे रणः।

'रणः' ( पु ) के लड़ाई, शब्द २ अर्थ हैं।

[ रव इति ] ॥ रणति। 'रण शब्दे' ( भ्वा० प० से० )। पचाद्यच् ( ३।१।१३४ )। 'रणः कोणे क्वणे पुंसि समरे पुनपुंसकम्' (इति मेदिनी) [ ४६।२५ ]।

ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥ ४९ ॥

'ग्रामणीः' ( पु ) का नाई ( हजाम ) १ अर्थ और 'ग्रामणीः' ( त्रि ) के श्रेष्ठ, स्वामी ( सरपञ्च, ठीका ) २ अर्थ हैं।

[ग्रामेति ] ॥ ग्रामं नयति। 'णीञ्' [प्रापणे'] (भ्वा० उ० अ० )। 'सत्सू-' ( ३।२।६१ ) इति क्विप्। 'अग्रग्रा-माभ्याम्-' इति णत्वम्-'। 'ग्रामणीर्भोगिके[2] पत्यौ प्रधाने नापितेऽपि च। ग्रामणीर्नीलिकायां च[2] ग्रामेयीपण्ययोषितोः' इति विश्वः [५३।७५][स्याद् ग्रामणी प्रधानेऽधिपतौ त्रिषु नापिते पुंसि' ]। 'ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभि-धेयवत्' ( इति मेदिनी ) [४८।४६]।

ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ[3]।

'ऊर्णा' ( स्त्री ) के ऊन, दोनों भौंहोंके बीचवाला भाग २ अर्थ हैं।

[ ऊर्णेति ] ॥ ऊर्णोति। 'ऊर्णुञ् आच्छादने' ( अ० उ० से० )। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः। आदिना छागोष्ट्रमृगादिग्रहः। [ 'ऊर्णा भ्रूमध्यगावर्ते मेषा-दीनां च लोमनि' इति हैम, २।१३५ ]।

हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ ५० ॥

'हरिणी' ( स्त्री ) के मृगी, सोनेकी मूर्ति, हरे रंगवाली ३ अर्थ हैं।

[ हरीति ] ॥ हरिणस्य स्त्री। 'पुंयोगाद्-' ( ४।१।४८ ) इति ङीष्। ('हरितवर्णविशिष्टा वा)। 'वर्णादनुदा-त्तात्-' ( ४।१।३९ ) इति ङीप्नौ। 'हरिणी हरितायां च नारीभिद्वृत्तभेदयोः। सुवर्णप्रतिमायां च' ( इति मेदिनी ) [ ५१।८८ ]।

१. मेदिन्यां '-दाढवाप''' द्रवकाके'''तथा काष्ठा-' इति पाठः।

२. '—भौगिके ''' । ग्रामणी नापिते-' इति विश्वे ग्रन्थद्वये पाठः।

३. '—भ्रुवोः' इति पाठान्तरम्।

त्रिषु पाण्डौ च हरिणः

'हरिण' ( त्रि ) के पाण्डु (कुछ २ पीलापन लिये सफेद) रंग, हरिण २ अर्थ हैं।

[ त्रिष्विति ] ॥ हरति । 'हृश्याम्यास्त्या–' (उ० २। ४६) इतीनच । 'हरिण. पुंसि सारङ्गे धवले<sup>१</sup> स्वभिधेयवत्' ( इति मेदिनी ) [ ५९।८७ ]।

स्थूणा स्तम्भेऽपि वेश्मनः।

'स्थूणा' ( स्त्री ) के घरका खम्भा, लोहेकी मूर्ति, रोग-विशेष २ अर्थ हैं।

[ स्थूणेति ] ॥ तिष्ठति। 'रास्नासास्ना–' ( उ० ३। १५)इति साधु । स्थूणा स्यात् सूर्म्यां स्तम्भेऽपि वेश्मनः[२] ( इति मेदिनी ) [ ४७।३२ ] ।

तृष्णे स्पृहापिपासे द्वे

'तृष्णा' ( स्त्री ) के स्पृहा, प्यास २ अर्थ हैं।

[ त्रिति ] ॥ तर्षणम् । 'ञितृष पिपासायाम्' ( दि० प० से० ) । तृषिशुषिरसिभ्य कित्' ( उ० ३।१२ ) इति न । [ 'तृष्णा स्यात्तर्षलिप्सयो' इति मेदिनी, ४६।१६ ] ।

जुगुप्साकरुणे घृणे ॥ ५१ ॥

'घृणा' ( स्त्री ) के घृणा, करुणा २ अर्थ हैं।

[ ज्विति ] ॥ घर्णनम् । 'घृणु दीप्तौ' (त० उ० से०)। भिदादङ् ( ३।३।१०४ ) । [ घृणा जुगुप्साकृपयो ' इति शाश्वत (६६४),मेदिनी (४५।१२), विश्व (४९।६) च ]।

वणिक्पथे च विपणिः

'विपणि' ( स्त्री ) के बाजार, बाजारकी गली, दूकान ३ अर्थ हैं।

[वेति] ॥ विपण्यते, अस्या वा । 'पण व्यवहारे' (भ्वा० प० से०) । सर्वधातुभ्य इन्' (उ० ४।११८) । आपणे पण्यवीथ्या च पण्ये च विपणि स्त्रियाम्' इति रुद्र, । [ आपण पण्यवीथी च द्वय विपणिसञ्ज्ञकम्' इति शाश्वत ६२५] ।

सुरा प्रत्यक् च वारुणी ।

'वारुणी' ( स्त्री ) के मदिरा, पश्चिम दिशा २ अर्थ हैं।

[सुरेति] ॥ वरुणस्येयम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । 'वारुणी गण्डदूर्वाया प्रतीचीसुरयो स्त्रियाम्' (इति मेदिनी) [५०।६८ ]।

करेणुरिभ्यां स्त्री. नेभे

'करेणु' (स्त्री) का हथिनी १ अर्थ और करेणु' (पु) का हाथी १ अर्थ है।

[केति] ॥ करोति । 'कृहृभ्यामेणु' ( उ० २।१ ) 'करेणुर्गजयोषाया स्त्रिया पुंसि मतङ्गजे' इति (मेदिनी) । [४८।४१]। के रेणुरस्येति वा । 'करेणुश्च गरेणुश्च करिणी-कर्णिकारयो ' इति रन्तिदेव ।

द्रविणं तु बलं धनम् ॥५२॥

'द्रविणम्'(न) के बल, धन २ अर्थ हैं।

[ द्रेति ] द्रूयत, द्रवति वा । द्रु गतौ' ( भ्वा० प० अ० ) । 'द्रुदक्षिभ्यामिनन्' ( उ० २।५० ) । 'द्रविण न द्वयोर्वित्ते काञ्चने च पराक्रमे' (इति मेदिनी ) [४८।५१]।

शरणं गृहरक्षित्रो

'शरणम्' (न) के मकान(घर), रक्षक २ अर्थ हैं।

[शरेति] ॥ शृणाति । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । ल्युट् (३।३।११३) । भावे (३।३।१११) वा। 'शरण गृहरक्षित्रोर्वधरक्षणयोरपि' ( इति मेदिनी ) [ ५०।७६ ] ।

श्रीपर्णं कमलेऽपि च ।

'श्रीपर्णम्' (न) के कमल, अरणि (यज्ञमें रगड़कर जिससे आग पैदा करते हैं, वह काष्ठ-विशेष ) २ अर्थ हैं।

[ श्रीति ] ॥ श्री पर्णेऽस्य । 'श्रीपर्णी कुम्भीगम्भार्यो क्लीबे पद्माग्निमन्थयो ' इति रभस । [ 'श्रीपर्णमग्निमन्थे-ऽब्जे श्रीपर्णी शाल्मली हठे' इति विश्व, ५३।६८]।

विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ५३ ॥

'तीक्ष्णम्' ( न ) के विष, लड़ाई, लोहा ३ अर्थ और 'तीक्ष्णम्' (त्रि ) का तेज हथियार आदि १ अर्थ है।

[ विषेति ]॥ तेजयति । 'तिज निशाने' ( भ्वा० आ० से० ) । 'तिजेर्दीर्घश्च' (उ० ३।१८) इति क्स्न । 'तीक्ष्ण सामुद्रलवणे विषलोहाजिमुष्कके । क्लीब य(ज)-वाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु' ( इति मेदिनी ) [ ४६।१५ ] । भवेदभिमरो युद्धे बले[१] स्वबलसाध्वसे' (इति मेदिनी ) [ १४०।२४१ ] ।

प्रमाणं हेतुमर्यादाशास्त्रेयत्ता प्रमातृषु ।

'प्रमाणम्'(न) के हेतु (जैसे—पहाड़पर अग्निका अनुमान करने धूम हेतु है, ), सीमा (हद), शास्त्रकी इयत्ता, प्रमाता ५ अर्थ हैं।

१. '—विष(ष)दे—' इति मेदिन्या पाठ ।
२ मेदि या '—स्तम्भे गृहस्य च' इति पाठ ।

१ हैम-(४।२४० २४१) विश्व (१४४।२३१) योर-नुरोधात् –युद्धे वधे–' इति मेदिनीस्थ पाठ एव युक्ततर ।

[ प्रमेति ] ॥ प्रमीयते, प्रमिमीतेऽनेन वा । करणे (३।३।११७) कर्तरि ( ३।३।११३ ) भावे (३।३।११४) च ल्युट् । 'प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि' ( इति मेदिनी ) [ ४९।६१ ] ।

करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५४ ॥

'करणम्' ( न ) के कामकी सिद्धिमें अत्यंत उपकारक साधन ( जैसे—मारनेमें खड्‌ग-तलवार आदि ), क्षेत्र, शरीर, इन्द्रिय, ४ अर्थ हैं ।

[केति] ॥ 'करणं कारणे कार्ये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः । पुमान् शूद्राविशो पुत्रे वानरादौ च कीर्त्यते' इत्यजयः । [ 'करणं साधनक्षेत्रकायकायस्थकर्मसु । गीताङ्गहारसवेशक्रियाभेदेन्द्रियेषु च । वालवादौ च, करणः स्मृतः शूद्राविशोः सुते ।' इति विश्व०, ५०।३४-३५ ] । कर्तृकर्मकरणभावेषु ल्युट्' ( ३।३।११३, ११५, ११७ ) ।

प्राण्युत्पादे संसरणमसंबाधचमूगतौ ।
घण्टापथे

'संसरणम्' (न) के प्राणियोंकी उत्पत्ति, सेनाका निर्विघ्न आगे बढ़ना, राजमार्ग ( सड़क ) ३ अर्थ हैं ।

[प्रेति] ॥ सम्यक् सरन्त्यनेन । 'सृ गतौ' ( भ्वा० प० अ० ) । करणे ल्युट् ( ३।३।११७ ) । [ संसरणं त्वसंबाधचमूगतौ[1] । संसारे समरारम्भे नगरस्योपनिर्गमे ।' इति हैमः, ४।१९५ ] ।

अथ वान्तान्ने समुद्धरणमुन्नये[3] ॥ ५५ ॥

'समुद्धरणम्' ( न ) के उल्टी ( वमन, कय ) किया हुआ अन्न आदि, किसी को ऊपर खींचना या उठाना, उखाड़ना ३ अर्थ हैं ।

[अथेति] ॥ सम्यग् उद्ध्रियते । उद्धरतेर्ल्युट् ( ३।३।११३ ) । भावे ( ३।३।११५ ) वा । 'भुक्तोज्झितोन्मूलितयोः स्याद्‌द्धरणमुन्नये' इति रभसः ।

अतस्त्रिषु[4]

[अत इति] ॥ आणान्तम् [अम० ३।३।७७] ।

विषाणं स्यात्पशुशृङ्गेभदन्तयोः[1] ।

'विषाणम्' ( त्रि ) के सींग, हाथी का दाँत २ अर्थ हैं ।

[वीति] ॥ व्यस्ति । 'अस भुवि' ( अ० प० से० ) । चानश् (३।२।१२९) । श्नसोरल्लोपः' (६।४।१११) । 'उपसर्गप्रादुर्–' (८।३।८७) इति षत्वम् । यत्तु–वेवेष्टि । विषाणम् । विषे शानच्—इति मुकुट० । तन्न । शपः श्लौ सति 'श्लौ' ( ६।१।१० ) इति प्रसङ्गात् । 'विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधौ क्लीबं, त्रिषु शृङ्गेभदन्तयोः' ( इति मेदिनी ) [ ५०।७७–७८ ] ।

प्रवणं क्रमनिम्नोर्व्यां प्रह्वे, ना तु चतुष्पथे ॥ ५६ ॥

'प्रवणम्' ( त्रि ) के ढालू जमीन, नम्र २ अर्थ और 'प्रवणः' ( पु ) का चौरास्ता १ अर्थ है ।

[प्रेति] ॥ प्रवन्तेऽनेन, अत्र वा । 'प्रुङ् गतौ' (भ्वा० आ० अ०) । ल्युट् (३।३।११७) । 'प्रवणं क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षी(क्ष)णे प्रगुणे समुदाहृतः' इति धरणिः । 'प्रवणो ना चतुष्पथे । क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु' ( इति मेदिनी ) [ ४९।५९-६० ] ।

'संकीर्णो निचिताशुद्धौ

'संकीर्णः' (त्रि) के व्याप्त ( फैला या भरा हुआ ), अशुद्ध ( दो या अधिक जातियोंका मेल ) २ अर्थ हैं ।

[समिति] ॥ संकीर्यते स्म । 'कॄ विक्षेपे' ( तु० प० से० ) । क्तः (३।२।१०२) । 'संकीर्णं सङ्कटे व्याप्ते क्वचिद्वर्णसंकरे' इत्यजयः । 'संकीर्णं निचितेऽपि स्यादशुद्ध वाभिधेयवत्' (इति मेदिनी) [५१।८२] ।

ईरिणं शून्यमूषरम् ।

'सेतौ च वरणो वेणी नदीभेदे कचोच्चये' [ ४७ ]

'ईरिणम्' (न) के खाली स्थान, ऊसर जमीन २ अर्थ हैं ।

[ 'वरणः' ( पु ) के पुल, बाँस-तार या काँटा आदिका घेरा २ अर्थ हैं ] ।

['वेणी' (स्त्री) के नदी-विशेष, केशकी चोटी २ अर्थ हैं ] ।

[ईति] ॥ ऋच्छन्ति यस्मिन् । 'ऋ गतौ' ( भ्वा० प० अ० ) । 'ऋतेः किदिच्च' ( उ० २।५१ ) इतीनन् ।

---

१ साधनप्रकारः 'करण —' इति वचनात् पूर्वमेव लेखनीय आसीत् । अन्यथा शैलीविरोधः स्यात् ।

२. '—चमूपतौ—' इति 'ख-ग' पुस्तकपाठः ।

३. '—समुद्धरणमुद्गिरे' इति पाठा० ।

४. 'स्वतो न तु वाच्यलिङ्गतया' इति क्षी० स्वा० व्याख्यानेनात्र 'अतः' स्थाने 'स्वतः' इति पाठः प्रतीयते । 'त्रिषु' इत्यस्य च विषाणशब्दस्यैव विशेषणता, अत एवाग्रे 'प्रवण'शब्दव्याख्यानपरक 'त्रिष्वित्येव, संकीर्णं यावत्' इति स्वामिग्रन्थः संगच्छते ।

१. '—पशुशृङ्गेभदन्तयोः' इति मेदिन्यां पाठः ।

'ईरिण तूषरे शून्ये' ( इति मेदिनी ) [४७।३६] ॥ * ॥ [ 'इरिण' इति ] इदादिरपि। 'इरिणं निराश्रये सूभागे कथितमूषरे' इति ह्रस्वादावजय[1]।

अथ णान्ता शब्दा ।

इति तान्ता शब्दा ।

देवसूर्यौ विवस्वन्तौ

'विवस्वान्' ( पु ) के देवता, सूर्य २ नाम हैं।

[ देवेति ]॥ विवस्तेजोऽस्यास्ति। मतुप् ( ५।२। ९४ ) विवस्वांस्तु सुरे[2] सूर्ये तन्नगर्यां विवस्वती' ( इति मेदिनी ) [७७।२२०]।

सरस्वन्तौ नदार्णवौ ॥ ५७ ॥

'सरस्वान्' ( पु ) के नद ( शोणभद्र, सिन्धु, ब्रह्मपुत्र आदि), समुद्र २ अर्थ हैं।

[सेति]॥ सरो गमनमस्यास्ति। मतुप् (५।२।९४)। 'सरस्वांस्तु नदे चाब्धौ नाऽन्यवद्रसिके, स्त्रियाम्। वाणीस्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि'(इति मेदिनी)।[७०। २२३-२२४]।

पक्षिताक्ष्यौ गरुत्मन्तौ

'गरुत्मान्' ( पु ) के पक्षी, गरुड २ अर्थ हैं।

[ पेति ]॥ गरुत्त सन्त्यस्य। मतुप् ( ५।२।९४ )। ['गरुत्मान् पक्षिमात्रे खगाधिपे' इति मेदिनी, ६८।१९७]।

शकुन्तौ भासपक्षिणौ।

'शकुन्त' ( पु ) के गिद्ध, चिड़िया मात्र २ अर्थ हैं।

[शेति]॥ शक्नोति। 'शकेरुनोन्तोन्त्युनय' (उ० ३। ४९)इत्युन्त। 'भासो भासि समाख्यातो गोष्टकुक्कुटगृध्रयो' इति विश्व [ १७४।२ ]।[शकुन्त पक्षिभेदे स्याद्भासपक्षिविहङ्गयो' इति विश्व , ६७।१२१ ]।

अग्न्युत्पातौ धूमकेतू

'धूमकेतु' ( पु ) के आग, भविष्यमें होनेवाले उत्पात का सूचक पुच्छल तारा २ अर्थ हैं।

[ धेति ]॥ धूम केतुश्चिह्नमस्य। 'धूमकेतु स्मृतो वह्नावुत्पातग्रहभेदयो' इति विश्व [ ७२।२०३ ]।

जीमूतौ मेघपर्वतौ ॥ ५८ ॥

'जीमूत' ( पु ) के बादल, पहाड़ २ अर्थ हैं।

[ जीति ]॥ जीवनं मुञ्चति। पृषोदरादि ( ६।३। १०९ )। 'जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे' ( इति मेदिनी ) [ ६२।१११ ]।

हस्तौ तु पाणिनक्षत्रे

'हस्त' ( पु ) के हाथ, हस्त नामक तेरहवाँ नक्षत्र २ अर्थ हैं।

[ हेति ]॥ हसति। 'हसे हसने' (भ्वा० प० से०)। 'हसिमृग्रिण्—' (उ० ३।८६) इति तन्। 'हस्त करे करिकरे सप्रकोष्ठकरेऽपि च। ऋक्षे केशात्परो व्राते' ( इति मेदिनी ) [ ५६।७५-७६ ]।

मरुतौ पवनामरौ।

'मरुत्' ( पु ) के वायु, देवता २ अर्थ हैं।

[ मवेति ]॥ म्रियतेऽनेन। 'मृङ् प्राणत्यागे' ( तु० आ० अ० )। 'मृग्रोरुतिः' (उ० १।९४)। 'मरुद् देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति (मेदिनी) [६४।१४३]।

यन्ता हस्तिपके सूते

'यन्ता' ( पु ) के हाथीवान, सारथि २ अर्थ हैं।

[ यन्तेति ]॥ यच्छति। 'यमु उपरमे' ( भ्वा० प० अ० )। तृच् ( ३।१।१३३ )। [ 'यन्ता सूते निषादिनि' इति हैम, २।१९२ ]।

भर्ता धातरि पोष्टरि ॥ ५९ ॥

'भर्ता' ( पु )के ब्रह्मा, पोषण करनेवाला, पति ३ अर्थ हैं।

[भर्तेति]॥ बिभर्ति। 'डुभृञ् धारणपोषणयो' (जु० उ० अ०)। भरति। भृञ् भरणे' (भ्वा० उ० अ०)। तृच् (३।१।१३३)। 'भर्ता स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरि' (इति मेदिनी) [ २६।३९ ]।

यानपात्रे शिशौ पोतः

'पोत' ( पु ) के जहाज, बालक २ अर्थ हैं।

[ पेति ]॥ पुनाति। पूयते वा। 'पूञ् पवने'(क्र्या० उ० से० )। हसिमृग्रिण्—' ( उ० ३।८६ ) इति तन्। 'पोत शिशौ वहित्रे च गृहस्थाने च वाससि'(इति मेदिनी) [ ५६।३८ ]।

प्रेतः प्राण्यन्तरे मृते।

'प्रेत' ( पु ) के प्रेत, मरा हुआ जीव २ अर्थ हैं।

[ प्रेत इति ]॥ प्रकर्षेणेत। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गक' (इति मेदिनी) [ ५६।३७ ]।

ग्रहभेदे ध्वजे केतु-

'केतु' ( पु ) के केतु नामका ग्रह, पताका २ अर्थ हैं।

---

१ ह्रस्वादौ' इत्युक्तिसंगत्यर्थम् 'इरिणं निरा—' इति पाठो युक्त।

२ '—विबुधे सूर्ये—' इति मेदिनीपाठ।

[प्रेति]। चाय्यते, अनेन वा। 'चायृ पूजानिशामनयोः' (भ्वा० उ० से०)। 'चायः किः' (उ० १।७३) इति तुः। 'केतुर्ना रूक्पताकारिग्रहोत्पातेषु लक्ष्मणि' (इति मेदिनी) [५४।१३]।

पार्थिवे तनये सुतः ॥ ६० ॥

'सुतः' (पु) के राजा, पुत्र २ अर्थ हैं।

[पार्थीति] ॥ सूयते स्म। 'षूञ् अभिषवे' (स्वा० उ० अ०)। सौति स्म वा। 'षु प्रसवैश्वर्ययोः' (अ० प० से०)। क्तः (३।२।१०२, ३।४।७२)। 'सुतः स्यात्पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता' (इति मेदिनी) [५९।७२]।

स्थपतिः कारुभेदेऽपि

'स्थपतिः' (पु) के बढ़ई, कंचुकी, बृहस्पतिके मन्त्रसे यज्ञ करनेवाला ३ अर्थ हैं।

[स्थेति] ॥ तिष्ठन्त्यस्मिन्। 'घञर्थे कः' (वा० ३।३।५८)। स्थञ्चासौ पतिश्च। 'स्थपतिः कञ्चुकिन्यपि। जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु' (इति मेदिनी) [६६।१६६-१६७]।

भूभृद् भूमिधरे नृपे।

'भूभृत्' (पु) के पहाड़, राजा २ अर्थ हैं।

[भ्विति] ॥ भुवं बिभर्ति। 'डुभृञ्' [धारणपोषणयोः] (जु० उ० अ०)। क्विप् (३।२।७६)। तुक् (६।१।७१) ['भूभृन्महीधरे पृथ्वीपतौ' इति हैम', २।१८७]।

मूर्धाभिषिक्तो भूपेऽपि

'मूर्धाभिषिक्तः' (पु) के राजा, प्रधान मन्त्री, क्षत्रियमात्र, ब्राह्मण जातिके पितासे क्षत्रिय जातिकी मातामें उत्पन्न संतान ५ अर्थ हैं।

[मूर्धेति] ॥ मूर्धनि अभिषिच्यते स्म। 'षिच क्षरणे' (तु० उ० से०)। क्तः (३।२।१०२)। 'मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च' (इति मेदिनी) [७१।२३४]।

ऋतुः स्त्रीकुसुमेऽपि च ॥ ६१ ॥

'ऋतुः' (पु) के स्त्रियोंका मासिक धर्म, हेमन्त आदि छः ऋतु २ अर्थ हैं।

[रिति] ॥ ऋच्छति। 'अर्तेश्च तुः' (उ० १।७२) किच्च। 'ऋतुर्मासि वसन्तादौ धीरे स्त्रीकुसुमेऽपि च' इति धरणिः। ['ऋतुर्वर्षादिषट्सु ना। आर्तवे मासि च पुमान्' इति मेदिनी, ५४।६]।

विष्णावप्यजिताव्यक्तौ

'अजितः' (पु) के विष्णु, शिव २ अर्थ और 'अजितः' (त्रि) का नहीं हारा हुआ १ अर्थ है।

'अव्यक्तः' (पु) के विष्णु, शिव, मूर्ख ३ अर्थ; 'अव्यक्तम्' (न) का महदादिक, आत्मा २ अर्थ और 'अव्यक्तम्' (त्रि) का अस्पष्ट १ अर्थ है।

[वीति] ॥ न जीयते स्म। 'जि अभिभवे' (भ्वा० प० अ०)। क्तः (३।२।१०२)। 'अजितो ना हरौ त्रिषु। अनिर्जिते च' इति विश्व.[1] (मेदिनी) [५९।७८-७९]। न व्यज्यते स्म। 'अञ्जू व्यक्त्यादौ' (रु० प० से०)। क्तः (३।२।१०२)। 'अव्यक्तः शंकरे विष्णावव्यक्तं महदादिके। आत्मन्यपि स्यादव्यक्तमस्फुटे स्वभिधेयवत्' इति विश्व [६४।१०४]।

सूतस्त्वष्टरि सारथौ।

'सूतः' (पु) के बढ़ई, सारथि, क्षत्रिय जातिके पितासे ब्राह्मण जातिकी मातामें उत्पन्न संतान, बन्दी, पारा ५ अर्थ और 'सूतः' (त्रि) के जन्मा हुआ, प्रेरित २ अर्थ हैं।

[स्विति] ॥ सुवति स्म, सूयते स्म वा। 'षू प्रेरणे' (तु० प० से०)। क्तः (३।२।१०२)। 'सूतस्तु सारथौ तक्षिण क्षत्रियाद् ब्राह्मणीसुते। बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु' (इति मेदिनी) [५९।७३]।

व्यक्तः प्राज्ञेऽपि

'व्यक्तः' (पु) के विद्वान्, स्पष्ट २ अर्थ हैं।

[व्येति] ॥ व्यज्यते स्म। 'अञ्जू [व्यक्तिम्रक्षणकान्तिगतिषु] (रु० प० से०)। क्तः (३।२।१०२)। 'व्यक्तः स्फुटमनीषिणोः' (इति मेदिनी) [५८।५४]।

दृष्टान्तावुभे शास्त्रनिदर्शने ॥ ६२ ॥

'दृष्टान्तः' (पु) के तर्क आदि शास्त्र, उदाहरण २ अर्थ हैं।

[दृष्टेति] ॥ दृष्टोऽन्तोऽत्र। 'अन्त प्रान्तेऽन्तिके नाशे' [स्वरूपेऽतिमनोहरे'] इति विश्वः [५९।३१]। 'दृष्टान्त उदाहृतौ। शास्त्रे च मरणे' (इति मेदिनी) [६२।११६]॥

क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे।

'क्षत्ता' (पु) के सारथि, द्वारपाल, शूद्र जातिके पितासे क्षत्रिय जातिकी मातामें उत्पन्न संतान, वश्या-पुत्र, नियुक्त, ब्रह्मा ६ अर्थ हैं।

[क्षेति] ॥ क्षदति। 'क्षद' सौत्र.। 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २।९४)। 'क्षत्ता शूद्रात् क्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनये क्षत्ता नियुक्ते च प्रजासृजि' इति विश्व. [५९।४०]।

१. इदं मेदिन्यामेव लभ्यते, न तु विश्वे।

वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः॥ ६३ ॥

'वृत्तान्त' ( पु ) के प्रकरण ( अवसर ), प्रकार ( तरह, भाव, यथा—पाँच प्रकारके, ... ), साकल्य ( पूरा २ ), बात ४ अर्थ हैं।

[व्रिति] ॥ वृत्तोऽन्तोऽस्य । वृत्तस्यान्त इति वा । 'वृत्तान्तोऽवसरे भावे कार्त्स्न्यवार्ताविशेषयोः । वृत्तान्त प्रक्रियाया च' इति विश्व [ ६७।१३३ ] ।

आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः।

'आनर्त' ( पु ) के लड़ाई, नाचघर, देश-विशेष (पश्चिम समुद्रके पासकी द्वारावती अर्थात् द्वारकापुरी ) ३ अर्थ हैं।

[एति] ॥ आनृत्यन्त्यत्र । 'नृती गात्रविक्षेपे' (दि० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'आनर्तो नृत्यशालायां जने जनपदान्तरे' इत्यजय । 'आनर्तो देशभेदेऽपि नृत्यस्थाने जने रणे (इति मेदिनी) [ ६०।९१ ]।

कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु॥ ६४ ॥

'कृतान्त' ( पु ) के यमराज, सिद्धान्त, भाग्य, पापकर्म ४ अर्थ हैं।

[क्रिति] ॥ कृतोऽन्तो येन, यस्य वा । [कृतान्तोऽक्षेमकर्मणि । सिद्धान्तयमदैवेषु' इति हैम, ३।२७२] ।

श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः।

इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः॥ ६५ ॥

'धातु' (पु) के कफ आदि (थूक, खखार, पित्त आदि), रस ( भोजन करनेके बाद उत्पन्न अन्नादिका विकार विशेष ), खून आदि ( चर्बी, मज्जा, वीर्य, मांस, पीब, हड्डी आदि ), पृथ्वी आदि ( जल, तेज, वायु, आकाश ) पञ्च महाभूत, एव उनके गुण ( गन्ध, रस, रूप, स्पर्श और शब्द ), इन्द्रिय, हरताल, मैनसिल, धातु ( पत्थरके विकारसे उत्पन्न गेरू आदि धातु), भू, एध, अद, पच आदि शब्दोत्पत्तिके कारणभूत व्याकरणशास्त्रसम्मत धातु, सोना चाँदी ताँबा पीतल आदि धातु ९ अर्थ हैं।

[श्लेष्मेति] ॥ आदिना पित्तादिग्रह । रस = प्रथम आहारस्य विकार । आदिना वसामज्जशुक्रादिग्रह । तद्गुणा = गन्धादय । गैरिकादि । दधाति, धीयते वा । [डु] धाञ् [ धारणपोषणयो ] (जु० उ० अ०)। 'सित निगमि–' (उ० १।६९) इति तुन् । [ धातु रसादौ श्लेष्मादौ भ्वादिग्रावविकारयो । महाभूतेषु लोहेषु शब्दादाविन्द्रियेऽस्थनि' इति हैम, २।१७६-१७७ ] ।

कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे।

'शुद्धान्त' ( पु )के रनिवास, राजाकी स्त्रिया, अशौचका अन्त ३ अर्थ हैं।

[केति] ॥ शुद्धोऽन्तोऽस्य । 'असर्व–' इति पूर्वविशेषणम् । 'शुद्धान्तोऽन्त पुरे गुह्यकक्षाभेदे च भूपते' इत्यजय । [ 'शुद्धान्त स्याद्रह कक्षान्तरे राज्ञोऽवरोधने' इति हैम, ३।३२७ ] ।

कासूसामर्थ्ययोः शक्तिः

'शक्ति' ( स्त्री ) के बर्छी, सामर्थ्य २ अर्थ हैं।

[केति] ॥ शक्यतेऽनया । शक्लृ शक्तौ (स्वा० प० अ०) । क्तिन् (३।३।९४) । 'शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्' (इति मेदिनी) [ ५८।६२ ] ।।७।। 'कासूर्विकलवाचि स्यात्कासू शक्त्यायुधेऽपि च' (इति विश्व) [ १७५।१३ ] ।

मूर्तिः काठिन्यकाययोः॥ ६६ ॥

'मूर्ति' ( स्त्री ) के कठोरता, शरीर २ अर्थ हैं।

[मूर्तिरिति] ॥ मूर्च्छ्यते । 'मूर्च्छा मोहादौ' (भ्वा० प० से०) । क्तिन् (३।३।९४) [ 'मूर्ति कायकाठिन्ययो स्त्रियाम्' इति मेदिनी ५७।४५ ]।

विस्तारवल्ल्योर्व्रततिः

'व्रतति' ( स्त्री ) के विस्तार, लता २ अर्थ हैं।

[ वीति ] ॥ व्रजन्ती ततिरस्या । पृषोदरादि (६।३।१०९) । श्रीभोजस्तु 'व्रज'धातु स्वीकृतवान । ततो बाहुलकादति । [ व्रततिस्तु प्रतानिन्यां विस्तारे' इति हैम, ३।३१३ ]।

वसती रात्रिवेश्मनोः।

'वसति' ( स्त्री ) के रात, घर २ अर्थ हैं।

[ वेति ]॥ वसन्त्यस्याम् । 'वस निवासे' (भ्वा० प० अ०) । 'वहिवसि–' ( उ० ४।६० ) इत्यति । 'वसति स्यात्स्त्रिया वासे यामिन्या च निकेतने' (इति मेदिनी) [ ६२।१५१ ] ।

क्षयार्चयोरपचितिः

'अपचिति' ( स्त्री ) के क्षय, पूजा, खर्च ३ अर्थ हैं।

[क्षेति] ॥ अपचीयते । क्तिन् (३।३।९४) । अपचाय्यते

---

१. हैम–(३।२५८) विश्व–(६२।७८) विरोधान्मेदिनीस्थ '—जले—' इति पाठो लेखकादिभ्रान्तिमूलकः प्रतिभाति ।

२. श्लोकार्द्धमिदं विश्वे ( ६७।१३२ ) मेदिन्यां (६१।१०६) च लभ्यते ।

स्म वा। 'चायृ पूजादौ' (भ्वा० उ० से०)। 'चाय चि-क्तिति' ( वा० ७।२।३० ) इति चिः। 'भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु' (इति मेदिनी) [६८।१८५]।

सातिर्दानावसानयोः ॥ ६७ ॥

'सातिः' ( स्त्री ) के दान ( गज-मदका जल ), अन्त २ अर्थ हैं।

[सेति]॥ सननम्। 'षणु दाने' (त० उ० से०)। सानं वा। 'षोऽन्तकर्मणि' ( दि० प० अ० )। क्तिन् ( ३।३।९४ )। 'ऊतियूतिजूति–' (३।३।९७) इति साधु। यत्तु–'सनः क्तिचि' ( ६।४।४५ ) इति नलोपात्वयोः सातिः सन्तिश्च—इति मुकुटो व्याहरत्। तन्न। क्तिच कर्तरि विधानाद्भावकर्मणोरसंभवात्। [ 'सातिर्दानेऽवसाने च' इति विश्वः, ६१।६४ ]।

अर्तिः पीडाधनुष्कोट्योः

'अर्तिः' ( स्त्री ) के दुःख, धनुषका दोनों किनारा (छोर) २ अर्थ हैं।

[अर्तिरिति]॥ अर्दनम्। 'अर्द हिंसायाम्' ( चु० उ० से० )। 'क्तिन्नाबादिभ्यः' ( वा० ३।३।९४ )। [ 'अर्तिः स्त्रवरनिपीडयोः' इति हैमः, २।१६० ]। ॥ * ॥ आङ् ऋच्छते क्तिनि 'उपसर्गादृति—' (६।१।९१) इति वृद्धौ 'आर्तिः' इति कश्चित्। [ 'आर्तिः पीडाधनुष्कोट्यो' इति मेदिनी, ५४।१ ]।

जातिः सामान्यजन्मनोः।

'जातिः' ( स्त्री ) के सामान्य अर्थात् जाति ( जैसे—गोत्व, ब्राह्मणत्व, आदि ), जन्म, मालती नामका फूल, छन्द, जातीफल, गोत्र, आँवला ७ अर्थ हैं।

[ जेति ]॥ जननम्। अनया, इति वा। 'जनी' [प्रादुर्भावे' ]। (दि० आ० से०)। क्तिन् (३।३।९४)। 'जनसन–' ( ६।४।४२ ) इत्यात्वम्। 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः। जातिर्जातीफले धात्र्यां चुल्लीकम्पिल्लयोरपि' इति विश्वः [६१।६३]। 'जातिः स्त्री गोत्रजन्मनोः। अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि। जातीफले च मालत्याम्' ( इति मेदिनी ) [ ५५। १९–२० ]।

प्रचारस्यन्दयो रीतिः

'रीतिः' ( स्त्री ) के रिवाज ( रस्म, लोकाचार ), छन्द, धीरे २ बहना, टपकना, पीतल, लोहेकी मैल ( मण्डूर ), वैदर्भी आदि ( गौडी, पाञ्चाली, लाटिका ) काव्यके रसादि-संबन्धी चार[1] रीतियां ७ अर्थ हैं।

[ रेति ]॥ रीयते। 'रीङ् स्रवणे' (दि० आ० अ०)। रिणाति। 'री गतिरेषणयोः' (क्र्या० प० से०)। क्तिच् (३।३।१७४)। रयणम्। क्तिन् (३।३।९४) वा। 'रीतिः प्रचारे स्यन्दे च लोहकिट्टारकूटयोः' इति विश्वः[६१।१५५]।

ईतिर्डिम्बप्रवासयोः ॥ ६८ ॥

'ईतिः' ( स्त्री ) के विप्लव ( बहुत वर्षा होना आदि उपद्रव ), परदेश जाना २ अर्थ हैं।

[ईति] ॥ ईयतेऽनया। 'ईङ् गतौ' (दि० आ० अ०)। क्तिन् ( ३।३।९४ )। डिम्ब = विप्लवः। 'ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु[2] च स्त्रियाम्' ( इति मेदिनी ) [ ४४।२ ]।

उदयेऽधिगमे प्राप्तिः

'प्राप्तिः' के उत्पत्ति, पाना २ अर्थ हैं।

[ प्रेति ]॥ प्रापणम्। 'आप्लृ व्याप्तौ' ( स्वा० प० अ० )। 'क्तिन्नाबादिभ्यः' ( वा० ३।३।९४ )। 'प्राप्तिर्महोदये। लाभेऽपि च स्त्रियाम्' ( इति मेदिनी ) [ ५६। ३२–३३ ]।

त्रेता त्वग्नित्रये युगे।

'त्रेता' ( स्त्री ) के दक्षिण गार्हपत्य और हवनीय नाम के तीन अग्निविशेष, त्रेता नामका युग २ अर्थ हैं।

[त्रेतेति] ॥ त्रीन् भेदानिता। पृषोदरादिः ( ६।३। १०९ )। [ 'त्रेता युगेऽग्नित्रितये' इति विश्वः (५१।३८) मेदिनी (५५।२३) च]।

वीणाभेदेऽपि महती

'महती' ( स्त्री ) के नारद ऋषिकी वीणा, महत्त्वसे युक्त ( बड़ी ) स्त्री २ अर्थ हैं।

[ मेति ]॥ मह्यते। 'मह पूजायाम्' ( भ्वा० प०

---

१. तदुक्तम्—' 'पदसंघटना रीतिरङ्गसंस्थाविशेषवत्। उपकर्त्री रसादीनां, सा पुनः स्याच्चतुर्विधा। वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा।' इति साहित्यदर्पणः (९।६४४–६४५)।

२. 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥' इति स्वामी। क्वचित् 'स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः' इत्युत्तरार्धं पठित्वा सप्त ईतयः इत्युक्तम्।

से० )। 'वर्तमाने पृषत्–' ( उ० २।८४ ) इति साधु। 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमान् वृद्धे वाच्यवत्' (इति मेदिनी) [६४।१४१-१४२]।

भूतिर्भस्मनि संपदि ॥ ६९ ॥

'भूति' ( स्त्री ) के राख, सम्पत्ति, हाथीका शृंगार ३ अर्थ हैं।

[ भ्विति ] ॥ भवति, अनया वा। भवन वा। क्तिच् (३।३।१७४)। 'भूतिर्भस्मनि संपत्तिहस्तिशृङ्गारयो स्त्रियाम्' (इति मेदिनी) [ ५७।४१ ]।

नदीनगर्योर्नागानां भोगवती

'भोगवती' ( स्त्री ) के सर्पोंकी नदी, सर्पोंकी नगरी ( पाताल ), साँप ३ अर्थ हैं।

[ नेति ] ॥ भोगोऽस्त्यस्याम्। मतुप् (५।२।९४)। 'अथ भोगवती नागपुरीनद्योरहो पुमान्' ( इति मेदिनी ) [ ७०।२१६ ]।

अथ सगरे।

सङ्गे सभायां समितिः

'समिति' ( स्त्री ) के युद्ध, सङ्ग, सभा ३ अर्थ हैं।

[ अथेति ] ॥ समयनम्। समीयते वाऽस्याम्। 'इण् गतौ' (अ० प० अ०)। क्तिन् (३।३।९४)। [ 'समिति सपराये स्यात् सभाया सगमेऽपि च' इति मेदिनी, ६६। १६६ ]।

क्षयवासावपि क्षितिः ॥ ७० ॥

'क्षिति' ( स्त्री ) के विनाश, निवास, पृथ्वी, कालभेद ४ अर्थ हैं।

[ क्षेति ] ॥ क्षयणम्। क्षीयतेऽस्या वा। क्षि क्षये' (भ्वा० प० अ०)। क्षि निवासगत्यो' (तु० प० अ०)। क्तिन् (३।३।९४)। क्षितिर्निवासे मेदिन्या कालभेदे क्षये स्त्रियाम्' (इति मदिनी) [ ५४।१० ]।

रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः।

'हेति' ( स्त्री ) के सूर्यकी किरण, हथियार, आगकी ज्वाला ३ अर्थ हैं।

[ रेति ] ॥ हन्ति, हिनोति वा। हन्यतेऽनया वा। क्तिन् (३।३।९४)। 'ऊतियूति–' (३।३।९७) इति साधु। [ 'हेति स्यादायुधज्वालासूर्यतेज सु योषिति' इति मेदिनी, ५९।७६ ]।

१. '—क्षिती' इति पाठान्तरम्।

जगती जगतिच्छन्दोविशेषेऽपि क्षितावपि ॥ ७१ ॥

'जगती' (स्त्री) के संसार, बारह अक्षरके वंशस्थ तोटक आदि छन्द, पृथ्वी, जन ४ अर्थ हैं।

[ जगेति ] ॥ गच्छति। 'वर्तमाने पृषत्–' (उ० २।८४) इति साधु। यद्वा—'द्युतिगमिजुहोतीना द्वे च' (वा० ३।२।१७८) इति क्विप्। 'गम क्वौ' (६।४।४०) इति मलोप। तुक् (६।१।७१)। 'जगत् स्याद्विष्टपे क्लीब, ना वायौ, जगमे त्रिषु। जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' (इति मेदिनी) [६२।१०९]। [छन्दोभेदे= द्वादशाक्षरपादे ]।

पङ्क्तिश्छन्दोऽपि दशमम्[1]

'पङ्क्ति' (स्त्री) के दस अक्षरके चम्पकमाला मनोरमा आदि छन्द, पंक्ति ( कतार ), दस सख्या ३ अर्थ हैं।

[ पङ्क्तिरिति ] ॥ पचनम्। 'पचि व्यक्तीकरणे' (भ्वा० आ० से०)। क्तिन् (३।३।९४)। यद्वा–पचक-द्वयम्। पङ्क्तिविंशति–' (५।१।५९) इति साधु। (दशम छन्द ) दशाक्षरपादम्। 'पङ्क्तिर्दशाक्षरच्छन्दोदशसख्यादिषु स्त्रियाम्' इति (मेदिनी) [ ५६।११ ]।

स्यात्प्रभावेऽपि चायतिः।

'आयति' ( स्त्री ) के प्रभाव, उत्तर काल २ अर्थ हैं।

[ स्यादिति ] ॥ आयम्यतेऽनया। आयमन वा। 'यमु उपरमे' (भ्वा० प० अ०)। क्तिन् ( ३।३।९४ )। 'आयति सयमे दैर्घ्ये प्रभावागामिकालयो' (इति विश्व ) [ ६९।१५८ ]।

पत्तिर्गतौ च

'पत्ति' ( स्त्री ) के चलना, योद्धा, सेना-विशेष, पैदल ४ अर्थ हैं।

[ पेति ] ॥ पतति। 'पत्लृ गतौ' (भ्वा० प० से०)। क्तिच् (३।३।१७४)। 'पत्तिर्ना पदगे स्त्रियाम्। गतावेकरथैकेभत्र्यश्वपञ्चपदातिके' (इति मेदिनी) [५६।३०-३१]।

मूले तु पक्षतिः पक्षभेदयोः ॥ ७२ ॥

'पक्षति' ( स्त्री ) का ( शुक्ल या कृष्ण पक्ष )की प्रथम तिथि अर्थात् प्रतिपदा, चिड़िया आदिके पङ्खकी जड़ २ अर्थ हैं।

[म्विति] ॥ पक्षस्य मूलम्। 'पक्षात्तिः' (५।२।२५)। प्रतिपदि, गरुन्मूले च। [ 'पक्षति प्रतिपत्तिथौ। पक्षमूले' इति हैम, ३।२९३ ]।

१. 'पङ्क्तिश्छन्दो दशापि स्यात्' इति पाठान्तरम्।

प्रकृतिर्योनिलिङ्गे च

'प्रकृतिः' ( स्त्री ) के योनि, लिङ्ग ( पुंलिङ्ग, स्त्रीलिङ्ग, नपुंसक लिङ्ग ), स्वभाव, शिल्पी, नागरिक-मन्त्री आदि, गुणसाम्य ६ अर्थ हैं।

[ प्रेति ] ॥ प्रकुरुते । क्तिच् ( ३।३।१७४ )। क्तिन् (३।३।९४)। 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे' (इति मेदिनी) [६३।१३२]।

कैशिक्याद्याश्च वृत्तयः।

'वृत्तिः' ( स्त्री ) के नाट्य-सम्बन्धी कैशिकी आदि ( आरभटी, सात्वती, भारती ) चार वृत्तियां, जीविका, सूत्रादिका अर्थ ४ अर्थ हैं।

[कैशीति] ॥ 'भारती सात्वती चैव कैशिक्यारभटी तथा। चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम्' इति भरत.। 'वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु' चेष्यते' इति विश्वः [६१।५८]।

सिकताः स्युर्वालुकापि

'सिकताः' ( स्त्री नि० ब० व० ) के बालू, बालूसे युक्त स्थान या देश, चीनी ३ अर्थ हैं।

[ सीति ] ॥ सिच्यते। 'षिच क्षरणे' ( तु० उ० से० )। बाहुलकादतच्। पृषोदरादिः ( ६।३।१०९ )। 'सिकता स्त्री सिकतिले वालुकाया तु भूमनि'(इति मेदिनी) [ ६६।१७१ ]।

वेदे श्रवसि च श्रुतिः ॥ ७३ ॥

'श्रुतिः' ( स्त्री ) के चारो वेद, कान, वार्ता ३ अर्थ हैं।

[वेद इति] ॥ श्रूयते, अनया वा। 'श्रु श्रवणे' (भ्वा० प० अ०)। क्तिन् [३।३।९४]। श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः [ ६०।५१ ]।

वनिता जनितात्यर्थानुरागायां च योषिति[१]

'वनिता' ( स्त्री ) के अत्यन्त प्यारी स्त्री, स्त्रीमात्र २ अर्थ हैं।

[ वेति ] ॥ वन्यते स्म। 'वनु याचने' ( त० आ० से० ) क्तः (३।२।१०२)। 'यस्य विभाषा' (७।२।१५) इत्यस्यानित्यत्वादिट्। 'वन संभक्तौ' ( भ्वा० प० से० ) वा। 'वनिता जातरागस्त्रीस्त्रियोः स्त्री, त्रिषु' याचिते' (इति मेदिनी) [ ६५।१५० ]।

गुप्तिः क्षितिव्युदासेऽपि

'गुप्तिः' ( स्त्री ) के जमीनका गढा ( गुफा या सुरङ्ग ) जेलखाना, रक्षा ३ अर्थ हैं।

[ गिवति ] ॥ गुप्यते। गोपनं वा। 'गुपू रक्षणे' (भ्वा० प० से०)। क्तिन् (३।३।९४)। 'गुप्तिः कारा च रक्षा च दीर्णं च[२] विवरं भुवः' इति शाश्वत. [ ५९४ ]। 'गुप्तिरव्यवकरस्थाने कारागारे च रक्षणे' ( इति मेदिनी ) [ ५५।१६ ]।

धृतिर्धारणधैर्ययोः ॥ ७४ ॥

'धृतिः' ( स्त्री ) के धारण, धैर्य, योग-विशेष, यज्ञ, तुष्टि ५ अर्थ हैं।

[ धिति ] ॥ धरणम्। 'धृञ् धारणे' ( भ्वा० उ० अ०) क्तिन् (३।३।९४)। 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः [ ६०।५० ]।

बृहती क्षुद्रवार्ताकीछन्दोभेदे महत्यपि।

'बृहती' ( स्त्री ) के रेंगनी ( भटकटैया ), नव अक्षरका अनियम्य आदि छन्द, बड़ी, विश्वावसुकी वीणा, वस्त्र-विशेष ५ अर्थ हैं।

[बृहेति] ॥ बहते। 'बृह वृद्धौ' (भ्वा० प० से० )। 'वर्तमाने पृषत्–'(उ० २।८४) इति साधु। 'बृहती क्षुद्रवार्ताक्यां कण्टकार्या च वाचि च। वारिधान्यां महत्यां च छन्दोवसनभेदयोः' इति विश्वः [ ७०।१७१ ]।

वासिता स्त्रीकरिण्योश्च

'वासिता' ( स्त्री ) के स्त्री, हथिनी २ अर्थ हैं।

[वेति] ॥ वासयति। 'वस निवासे'(भ्वा० प० अ०) ण्यन्तः। 'वास उपसेवायाम्' ( चु० उ० से० ) वा। क्तः (३।३।१७४)। 'वासिता करिणीनार्योर्वासितं सुरभीकृते। ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टिते' इति विश्वः [६८ १५१] ॥+॥ स्वामी तु ('वाशिता' इति) तालव्यमध्यपाठमाह। तत्र 'वाशृ शब्दे' ( दि० आ० से० )। [ 'वाशिता करिणीस्त्रियो.' इति शाश्वत., ७७१ ]।

---

१. 'भारती सात्वती चैव कैशिक्यारभटी तथा। चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम्।' इति। दशरूपकेऽपि 'तद्व्यापारात्मिका वृत्तिश्चतुर्धा, तत्र कैशिकी' (दशरूपकम् २।४७) इत्यारभ्य 'चतुर्थी भारती सापि वाच्या नाटकलक्षणे' (दशरूपकम् २।६०) इत्यन्तेन तद्भेदा उक्ता.। अग्रे च—

'शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती' ॥

(२।६१) इत्यनेन कस्याः क्वोपयोग इति कथितम्।

१. मेदिन्यां '—स्त्रियोस्त्रिषु च–' इति पाठः।

२. '—'जीर्णं च–' इति च पाठ.।

वार्ता वृत्तौ जनश्रुतौ ॥ ७५ ॥
वार्तं फल्गुन्यरोगे च त्रिषु

'वार्ता' ( स्त्री ) के जीविका, बात २ अर्थ और 'वार्तम्' ( त्रि ) के साग्हीन ( निस्तत्त्व, निर्बल ), नीरोग ३ अर्थ हैं।

[ वार्तेति ]॥ वृत्तिरस्त्यस्याम्। 'वृत्तेश्च' ( वा० ५।२।१०१) इति ण। 'वार्ता वार्तिङ्गणे वृत्तौ वार्ता कृष्याद्युदन्तयो। (वृत्तिमन्नीरुजोर्वार्ता वार्तमारोग्यफल्गुनो )' इति विश्व [ ६०।४६ ]। 'वार्तं फल्गुन्यरोगे स्यादारोग्ये वृत्तिमत्यपि' इति धरणि।

अप्सु च घृतामृते।

'घृतम्' ( न ) के घी, पानी २ अर्थ और 'घृतम्' ( त्रि ) का प्रदीप्त १ अर्थ है।

'अमृतम्' ( न ) के अमृत, पानी, घी, यज्ञशेष, अयाचित, मोक्ष ६ अर्थ और 'अमृतः' ( पु ) के धन्वन्तरि, देवता २ अर्थ हैं।

[ अप्स्विति ]॥ घ्रियते। जिघर्ति वा। 'घृ क्षरणदीप्त्योः' ( जु० प० से० )। 'अञ्जिघृसिभ्यः क्तः' ( उ० ३।८९ )। 'घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्' (इति मेदिनी) [५५।१७] ॥ न मृतं मरणमत्र। 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च, ना धन्वन्तरिदेवयोः' [ 'अमृता मागधीपथ्यागुडूच्यामलकीषु च' ] (इति मेदिनी) [५९।७७-७८]।

कलधौतं रूप्यहेम्नोः

'कलधौतम्' ( न ) के चाँदी, सोना २ अर्थ हैं।

[ केति ]॥ कलो मलो धौतोऽस्य। कलधौतं सुवर्णे स्याद्रजते च नपुंसकम्' (इति मेदिनी) [ ६८।१९४ ]।

निमित्तं हेतुलक्ष्मणोः[1] ॥ ७६ ॥

'निमित्तम्' ( न ) के कारण, चिह्न २ अर्थ हैं।

[ नीति ]॥ निमेद्यति। 'ञिमिदा स्नेहने' ( दि० प० से० )। 'नीतः क्तः' ( ३।२।१८७ )। संज्ञापूर्वकत्वान्नत्वम्।—'अनात्मनेपदनिमित्ते' ( ७।२।३६ ) इति निर्देशाद्वा। [ निमित्तं लक्षणे हेतौ' इति शाश्वत, ७२४ ]।

श्रुतं शास्त्रावधृतयोः

'श्रुतम्' ( न ) का शास्त्र, १ अर्थ और 'श्रुतम्' ( त्रि ) का सुना हुआ १ अर्थ है।

[ श्रुतमिति ]। श्रूयते स्म। श्रवणं वा। 'श्रु श्रवणे' ( भ्वा० प० अ० )। क्त (३।२।१०२)। [ 'श्रुतमाकर्णिते शास्त्रे' इति मेदिनी, ५९।६७ ]।

युगपर्याप्तयोः कृतम्।

'कृतम्' ( न ) के सत्ययुग, पर्याप्त ( पूरा, काफी ) २ अर्थ हैं।

[ युगेति ]॥ अकारि। 'डुकृञ्' [करणे] (त० उ० अ०)। क्त (३।२।१०२)। 'शक्तौ निवारणे तृप्तौ पर्याप्तं स्याद्यथेप्सिते' इति रुद्र। 'कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु' (इति मेदिनी) [ ५४।११ ]।

अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ ७७ ॥

'अत्याहितम्' ( न )के बड़ा भय, जीनेकी आशा छोड़कर किया हुआ बहुत बड़ा साहस २ अर्थ हैं।

[ एति ]॥ अतीवाधीयते स्म मनसि। 'डुधाञ् [ धारणपोषणयोः'] (जु० उ० अ०)। 'दधातेर्हिः' (७।४।४२)। [ अत्याहितं तु महाभये। जीवनिरपेक्षकर्मणि इति हैम, ४।१९८ ]।

युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु।

'भूतम्' ( न ) के युक्त ( उचित ), पृथ्वी आदि पञ्च तत्त्व, सत्य ३ अर्थ और 'भूतम्' ( त्रि ) के प्राणी, बीता हुआ, सदृश, प्राप्त ४ अर्थ हैं।

[ युक्त इति ]॥ प्राण्यतीते' इति समाहारद्वन्द्व। अभवत्। 'भू' [ सत्तायाम्, भ्वा० प० से० ]। 'गत्यर्था–' (३।४।७२)। 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिपूचिते। प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना। कुमारेऽपि' (इति मेदिनी) [ ५७।४१-४२ ]।

वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ७८ ॥

'वृत्तम्' ( न ) के श्लोक आदि पद्यमात्र ( जिसमें मात्रा की नहीं, किन्तु वर्णोंकी गणना हो, वह पद्यविशेष ), चरित्र २ अर्थ और 'वृत्तः' ( त्रि ) के बीता हुआ, दृढ, गोलाकार, मरा हुआ ४ अर्थ हैं।

[वृत्ति] ॥ वर्तते स्म। वर्तनं वा। 'वृतु वर्तने' ( भ्वा० आ० से० )। 'वरणे' ( दि० आ० से० ) वा। 'गत्यर्था–' ( ३।४।७२ ) इति क्त। भावे (३।३।११४) वा। 'वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि मृते वृते। वृत्तेऽन्यलिङ्गं वा क्लीबे[1] छन्दश्चारित्रवृत्तिषु' ( इति मेदिनी ) [ ५८।६१ ]।

---

१. मेदिन्या ( ६३।११९ ) हैमे ( ३।२८४ ) विश्वे (६६।१२२) चैष एव पादो दृश्यते।

१. '–वृते मृते। क्लीबे–' इति मेदिनीपाठ।

महद्राज्यं च

'महत्' (त्रि) का बड़ा १ अर्थ और 'महत्' (न) का राज्य १ अर्थ है।

[ मेति ] ॥ मह्यते। 'मह पूजायाम्' (भ्वा० प० से०)। 'वर्तमाने पृषत्–' (उ० २।८४) इति साधुः। 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमाञ्श्रेष्ठे[1] वाच्यवत्' (इति मेदिनी) [ ६४।१४१-१४२ ]।

अवगीतं जन्ये स्याद्गर्हिते त्रिषु।

'अवगीतम्' (न) का जनापवाद १ अर्थ और 'अवगीत' (त्रि) के सिद्धान्त, निन्दित, दुष्ट ३ अर्थ हैं।

[अवेति ] ॥ अवगीयते स्म। 'गै शब्दे' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'अवगीतस्तु निर्वादे दुष्टगर्हितयोरपि[2]' (इति मेदिनी) [६७।१७९]। जन्ये=जनापवादे।

श्वेतं रूप्येऽपि

'श्वेतम्' (न) का चांदी १ अर्थ; 'श्वेत' (त्रि) का सफेद पदार्थ १ अर्थ, 'श्वेत' (पु) के द्वीप-विशेष, पर्वत-विशेष २ अर्थ और 'श्वेता' (स्त्री) के कौड़ी, काष्ठपाटली, शङ्खिनी ३ अर्थ हैं।

[ श्वेतमिति ] ॥ श्वेतते [श्वि] 'श्विता वर्णे' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। 'श्वेतो द्वीपाद्रिभेदयोः। श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च। क्लीबं रूप्येऽप्यवच्चवले' (इति मेदिनी) [५९।६७-६८]।

रजतं हेम्नि रूप्ये सिते त्रिषु ॥ ७९ ॥

'रजतम्' (न) के सोना, चांदी २ अर्थ और 'रजतम्' (त्रि) का सफेद पदार्थ १ अर्थ है।

[ रेति ]॥ रजति, रज्यतेऽनेन वा। 'रञ्ज रागे' (भ्वा० प० अ०)। 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच्। 'रजतं रञ्जने रूप्ये शोणिते हृदहारयोः' इत्यजयः। [ रजतं त्रिषु शुक्ले स्यात् क्लीबे हारे च दुर्वर्णे' इति मेदिनी, ६४।१४४]।

त्रिष्वितः

यहांसे आगे सब तान्त शब्द त्रिलिङ्ग हैं।

[ त्रीति ] ॥ आतान्तम् [ अम० ३।३।८५]।

जगदिङ्गेऽपि

'जगत्' (त्रि) का जङ्गम १ अर्थ; 'जगत्' (न) का संसार १ अर्थ और 'जगत्' (पु) का वायु १ अर्थ है।

[ जेति ]॥ गच्छति। 'द्युतिगमिजुहोतीनां द्वे च–' (वा० ३।२।१७८) इति क्विप्। 'गमः क्वौ' (६।४।४०) इति मलोपः। तुक् (६।१।७१) 'जगत् स्यात्पिष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' [जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' ] (इति मेदिनी) [६२।१०९]।

रक्तं नील्यादि रागि च।

'रक्तम्' (न) का लाल रँग, खून, कुङ्कुम ३ अर्थ; 'रक्तः' (त्रि) का अनुरक्त, रँगा हुआ कपड़ा आदि २ अर्थ हैं।

[ रेति ] ॥ रजति, रज्यते वा। 'रञ्ज रागे' (भ्वा० प० अ०)। 'गत्यर्था–' (३।४।७२) इति क्तः। कर्मणि (३।२।१०२) वा क्तः। 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु। क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि' (इति मेदिनी) [ ५७।४८-४९ ]।

अवदातः सिते पीते शुद्धे

'अवदातः' (त्रि) के सफेद, पीला, शुद्ध ३ अर्थ हैं।

[ अवेति ] ॥ अवदायते स्म। 'दैप् शोधने' (भ्वा० प० अ०)। क्तः (३।२।१०२)। [ 'अवदातः सिते गौरे विशुद्धेऽप्यन्यलिङ्गकः' इति मेदिनी, ६७।१७८]।

बद्धार्जुनौ सितौ ॥ ८० ॥

'सितः' (त्रि) के बँधा हुआ, समाप्त, श्वेत, सफेद पदार्थ ४ अर्थ हैं।

[बद्धेति] ॥ सीयते स्म। 'षिञ् बन्धने' (स्वा० उ० अ०)। क्तः (३।२।१०२)। 'सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री[1]' (इति मेदिनी) [५९।७१]।

युक्तेऽतिसंस्कृते मर्षिण्यभिनीतः

'अभिनीतः' (त्रि) के कृत्रिम (बनावटी, नकली), अत्युत्तम, सहनशील ३ अर्थ हैं।

[भिति] ॥ अभिनीयते स्म। 'णीञ्' [ प्रापणे ] (भ्वा० उ० अ०)। क्तः (३।२।१०२)। मर्षिणि=क्षन्तरि। [ अभिनीतो भवेन्न्याय्ये संस्कृतामर्षिणोरपि' इति विश्व, ७१।१८२]।

अथ संस्कृतम्।

कृत्रिमे लक्षणोपेतेऽपि

'संस्कृतम्' (त्रि) के बनाया (संस्कार किया) हुआ, उत्तम, भूषित ३ अर्थ और 'संस्कृतम्' (न) का पाणिन्यादिके व्याकरण शास्त्रसे सिद्ध संस्कृत भाषा १ अर्थ है।

१. 'पुमान् वृद्धे–' इति मेदिनीपाठः।

२. '–दुष्टगर्हितयोरपि' इति च पाठः।

१. मेदिनीस्थः '–धवलायां स्त्री' इति पाठः पुनरुक्तेः हैम(२।२१०)विरुद्धत्वाच्च न समीचीनः।

[अयेति] ॥ सत्क्रियते स्म । 'सस्कृत कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गक । क्लीव तु लक्षणोपेते' ( इति मेदिनी) [६६।१६६] । लक्षणेन उपेते=पाणिन्यादिसूत्रव्युत्पादिते ।

अनन्तोऽनवधावपि ॥ ८१ ॥

'अनन्त' ( त्रि ) का अन्तरहित १ अर्थ, 'अनन्त' (पु) के शेषनाग, विष्णु २ अर्थ और 'अनन्तम्' ( न ) का आकाश १ अर्थ है ।

[ एति ] ॥ न अन्तोऽस्य । 'अनन्त केशवे शेषे पुमानिरवधौ' त्रिषु । अनन्ता च विशल्याया शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वम्भरागुडूच्यो स्यादनन्त सुरवर्त्मनि' (इति मेदिनी) [६०।८१-८३ ] ।

ख्याते हृष्टे प्रतीत

'प्रतीत' (त्रि) के प्रसिद्ध, प्रसन्न, जाना हुआ ३ अर्थ हैं ।

[ प्रेति ] ॥ प्रतीयते स्म । इण् गतौ' (अ० प० अ०) । क्त (३।२।१०२) । 'प्रज्ञातज्ञातहृष्टेषु प्रतीत सादरे त्रिषु' इति रभस । [ प्रतीत सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु' इति मेदिनी, ६३।१२६ ] ।

अभिजातस्तु कुलजे बुधे ।

'अभिजात' ( त्रि ) के श्रेष्ठ कुलमें उत्पन्न ( खान्दानी ), विद्वान्, न्याययुक्त ३ अर्थ है ।

[ अभीति ] ॥ अभिजायते स्म । 'गत्यर्था–' (३।४।७२) इति क्त । 'अभिजात कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु' (इति मेदिनी) [६७।१८२] । बुधे=पण्डिते ।

विविक्तौ पूतविजनौ

'विविक्त' ( त्रि ) के पवित्र, एकान्त, विवेकवाला ३ अर्थ हैं ।

[ वीति ] ॥ विविच्यते स्म । विजिर् पृथग्भावे' (जु० उ० अ०) । क्त (३।२।१०२) । विचिर् विरेचने (पृथग्भावे)' ( रु० उ० अ० ) वा । 'विविक्त त्रिषु सपृक्ते रह पूतविवक्तिषु' [वसुनन्दे ना'] (इति मेदिनी) [ ६५।१५४ ] ।

मूर्च्छितौ मूढसोच्छ्रयौ ॥ ८२ ॥

'मूर्च्छित' (त्रि) के मूर्ख, वृद्धिसे युक्त, बेहोश ३ अर्थ हैं ।

[ मूर्च्छेति ] ॥ मूर्च्छति[२] स्म । 'मुर्छा मोहसमुच्छ्राययो' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्त । 'मूर्तं स्यात्त्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि' (इति मेदिनी) [ ५७।४६ ] । ( मूर्च्छितमपि सोच्छ्रये च मूढे च' (इति मेदिनी) [६४।१४३] ।

द्वौ चाम्लपरुषौ शुक्तौ

'शुक्त' ( त्रि ) के खट्टा ( काँजी ), कठोर २ अर्थ हैं ।

[ द्वाविति ] ॥ शुच्यते स्म । 'ईशुचिर् पूतीभावे' (दि० उ० से०) । (क्त) (३।२।१०२) । 'श्वीदित –' (७।२।१४) इतीण्निषेध । 'शुक्त पूताम्लनिष्ठुरे (इति मेदिनी) [५८।६५] । मूलमूलादिशुचौ भाण्डे सगुड सक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थ शुक्त चुक्र तदुच्यते'[२] इति वैद्यकम् ।

शिती धवलमेचकौ ।

'शिति' ( त्रि ) के सफेद, काला २ अर्थ हैं ।

[ शीति ] ॥ शीयते । शिनोति स्म वा । 'शिञ् निशाने' (स्वा० उ० अ०) । क्तिन् (३।३।९४) । क्तिच् (३।३।१७४) वा । 'निशितेऽपि[३] शितिर्भूर्जे ना सितासितयोस्त्रिषु' (इति मेदिनी) [ ५८।६४ ] ।

सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥८३॥

'सत्' ( त्रि ) के सत्य, साधु ( सज्जन ), विद्यमान, प्रशस्त, पूजित, धीर, मान्य ७ अर्थ हैं ।

[ सेति ] ॥ अस्ति । 'अस भुवि' (अ० प० से०)। 'लट शतृ–' ( ३।२।१२४ ) । 'श्नसोरल्लोप' (६।४।१११) । 'सत् साधौ धीरशस्तयो । मान्ये सत्ये विद्यमाने त्रिषु, साध्व्यामपो स्त्रियाम्' (इति मेदिनी) [४९।६८-६९ ] ।

पुरस्कृत. पूजितेऽरात्यभियुक्तेऽग्रत. कृते ।

'पुरस्कृत' ( त्रि ) के पूजित, शत्रुसे आक्रान्त, आगे किया हुआ, श्रेष्ठ ४ अर्थ हैं ।

[पुरेति] ॥ पुरोऽकारि । 'डुकृञ्' [ करणे ] (त० उ० अ० ) । क्त ( ३।२।१०२ ) । 'पुरोऽव्ययम्' वाच्य, 'आदितश्च' ( ७।२।१६ ) इत्यनेनेडागमनिषेधस्य दुर्वारत्वात् ।

१ मेदिन्या '—श्नवधौ—इति पाठ ।

२ अत्र मूर्च्छा सजातास्येति विग्रहे 'तदस्य सजात तारकादिभ्य इतच्' ( ७।२।२६ ) इत्यनेन इतच् प्रत्ययो

१. 'मूर्तं'शब्दस्याप्रकृतत्वादिदमुद्धरणमनावश्यकम् ।

२ स्वामिसम्मतपाठस्त्वेवम्–'यन्मूलादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिकम् ।···चुक्र शुक्त तदुच्यते ।' इति ।

३ 'शित च दुर्बले' इत्यनेन पूर्वेणास्य सबधादत्र 'शिति—' इत्येवात्र प्रकृतोपयुक्त ।

( ११४।६७ ) इति गतित्वम् । 'नमस्पुरसो –' (८।३।४०) इति सत्वम् । 'पुरस्कृतोऽभिशस्तारिग्रस्ताग्रे कृतपूजिते' (इति मेदिनी) [ ७०।२१५ ]

निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ ८४ ॥

'निवातः' ( त्रि ) के निवासस्थान, वायुसे रहित स्थान आदि, हथियारसे अभेद्य कवच ३ अर्थ हैं ।

[ नीति ] ॥ निरुद्धो निवृत्तो वा वातोऽस्मात् । 'निवातौ दृढमंनाहे निवासे वातवर्जिते' इत्यजयः । [निवातो वातरहिते दृढसन्नाह आश्रये' इति हैम, २।२८५] ।

जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिताः

'उच्छ्रितः' ( त्रि ) के उत्पन्न, अभिमानी, बढ़ा हुआ ३ अर्थ हैं ।

[ जेति ] ॥ उच्छ्रयति, उच्छ्रीयते स्म वा । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । कर्मणि (३।२।१०२) वा । 'उच्छ्रितं त्रिषु संजाते समुन्नद्धप्रवृद्धयो.[1]' (इति मेदिनी) [६१।१०१] ।

उत्थितास्त्वमी ।

वृद्धिमत्प्रोद्यतोत्पन्नाः

'उत्थितः' ( त्रि ) के वृद्धिवाला, प्रवृत्त ( लगा हुआ ), उत्पन्न ३ अर्थ हैं ।

[ उदिति ] ॥ उत्तिष्ठति स्म । 'गत्यर्था–' (३।४।७२ ) इति क्त । 'उत्थितं स्यात्त्रिपूत्पन्ने प्रोद्यते वृद्धिमत्यपि' (इति मेदिनी) [६१।९९] ।

आदृतौ सादरार्चितौ ॥ ८५ ॥

कर्मविपाकेऽपि गतिर्गर्मुद् हेम्न्युल्बणे तृणे [ ४३ ]
ऋतमुञ्छशिले सत्ये शोभनेऽपि विवक्षितम् [ ४४ ]
उदास्थितः प्रतीहारे चरभेदे समाहितः [ ४५ ]
ध्यानस्थे चाप्यनीकस्थो गजलक्षणवेदिनि [ ४६ ]
श्रद्धारचनयोर्भक्तिर्गौण्यां वृत्तौ च सेवने [ ४७ ]
आप्तौ लब्धप्रत्ययितौ नप्ता पुत्रश्च पुत्रयोः [ ४८ ]
समूहोत्पन्नयोर्जातमहिजिन्द्रोपनीन्द्रयोः [ ४९ ]
सौप्तिकेऽपि प्रपातोऽथावपातावतटावटौ [ ५० ]
समित्सङ्गे रणेऽपि स्त्री व्यवस्थायामपि स्थितिः[1] [ ५१ ]

'आदृतः' ( त्रि ) के सत्कारसे युक्त, आदार पाया हुआ, २ अर्थ हैं ।

[ 'गतिः' ( स्त्री ) के कर्म-विपाक, गमन २ अर्थ हैं ] ।

[ 'गर्मुत्' ( पु ) के सोना, स्पष्ट, तृण ३ अर्थ हैं ]

[ 'ऋतम्' ( न ) के उञ्छशिल (खेत या खलिहान आदिसे अन्नका १-१ दाना चुँगना), सत्य, सुन्दर ३ अर्थ हैं ] ।

[ 'उदास्थित ' ( पु ) का प्रतीहार ( द्वार ), दूत-विशेष, अध्यक्ष ३ अर्थ हैं ] ।

[ 'समाहितः' ( त्रि ) के ध्यानमें मग्न, आहत, प्रतिज्ञात समाधान करनेवाला ४ अर्थ हैं ] ।

[ 'अनीकस्थः' ( पु ) के युद्धमें स्थित, हाथीके लक्षणोंको जाननेवाला, राजरक्षक ३ अर्थ हैं ] ।

[ 'भक्ति ' ( स्त्री ) के श्रद्धा, रचना-विशेष, गौणी वृत्ति, सेवा करना ४ अर्थ हैं ] ।

[ 'आप्तः' ( त्रि ) के लब्ध ( मिला हुआ ), विश्वस्त २ अर्थ हैं ] ।

[ 'नप्ता' ( पु ) का पोता ( पुत्रका पुत्र ), नाती ( पुत्रीका पुत्र ) २ अर्थ हैं ] ।

[ 'जातम्' ( न ) का समूह १ अर्थ और 'जातम्' ( त्रि ) का उत्पन्न १ अर्थ है ] ।

[ 'अहिजित्' ( पु ) के विष्णु, इन्द्र २ अर्थ हैं ] ।

[ 'प्रपातः' (पु) के पहाड़का झरना, लेटना २ अर्थ हैं ] ।

[ 'अवपातः' ( पु ) के अतट ( बिना किनारावाला ), गढ़ा २ अर्थ हैं ] ।

[ 'समित्' ( स्त्री ) के संग, युद्ध २ अर्थ हैं ] ।

[ 'स्थितिः' ( स्त्री ) के व्यवस्था, निवासस्थान, टिकाव ३ अर्थ हैं ] ।

[ एति ] ॥ आद्रियते स्म । 'दृङ् आदरे' (तु० आ० अ०) । क्त. (३।२।१०२) । [ 'आदृत. सादरेऽर्चिते' इति मेदिनी, ६०।८९] ।

इति तान्ता शब्दाः ।

अथ थान्ताः शब्दाः ।

अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।

'अर्थः' ( पु ) के कहने योग्य, धन, वस्तु, प्रयोजन, निवृत्ति ५ अर्थ हैं ।

[ अर्थ इति ] ॥ अर्थते । ऋच्छति वा । 'ऋ गतौ' (भ्वा० प० अ०) । 'उषिकुषिगार्तिभ्यस्थन्' (उ० २।४) । यद्वा–अर्थ्यते । 'अर्थ उपयाच्ञायाम्' (चु० आ० से०) । घञ् (३।३।१९) । ('अर्थो' विषयार्थनयोर्धनकारणवस्तुषु ।

---

१. '—समुन्नतप्रवृद्धयोः' इति मेदिनीपाठः ।

१. तान्तशब्देषु थान्तस्यार्थशब्दस्य विवरणं चिन्त्यम् ।

अभिधेये च शब्दाना, निवृत्तौ च प्रयोजने' (इति मेदिनी) [७२।२]।

निपानागमयो[1]स्तीर्थमृषिजुष्टजले गुरौ ॥ ८६ ॥

'तीर्थम्' (न) के कूपादिके पासका जलाशय गढ़ा, सीढ़ी, बौद्धशास्त्रसे भिन्न शास्त्र, ऋषिसे सेवित जल, गुरु, यज्ञ, पुण्यक्षेत्र, यज्ञवाला, स्त्रीरज, योनि, पात्र, दर्शन ११ अर्थ हैं।

[ तीति ]॥ तीर्यते, अनेन वा। 'तॄ प्लवनतरणयो' (भ्वा० प० से०)। 'पातृतुदि–' (उ० २।७) इति थक्। 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु' (इति मेदिनी) [७२।७]। निपान = जलाधार। निदानम् = उपाय – इति मुकुट।

समर्थस्त्रिषु शक्तिस्थे सम्बद्धार्थे हितेऽपि च।

'समर्थ' (त्रि) के बलवान्, सम्बद्ध अर्थ, हित ३ अर्थ हैं।

[सेति]॥ समर्थयते, समर्थ्यते वा। 'अर्थ उपयाच्ञायाम्' (चु० आ० से०)। पचाद्यच् (३।१।१३४) घञ् (३।३।१९) वा। [समर्थस्तु हिते क्षमे सम्बद्धेऽप्यभिलिङ्गक' इति मेदिनी, ७३।२९]।

दशमीस्थौ क्षीणरागवृद्धौ

'दशमीस्थ' (त्रि) के क्षीण रागवाला (प्रेमहीन), वृद्ध २ अर्थ हैं।

[ देति ]॥ दशम्यां तिष्ठति। 'सुपि स्थः' (३।२।४) इति क। 'दशमीस्थो नष्टबीजे[2] स्थविरेऽप्यभिलिङ्गक' (इति मेदिनी) [७४।२८]।

वीथी पदव्यपि ॥ ८७ ॥

'वीथी' (स्त्री) के रास्ता (गली), पङ्क्ति (कतार), गृहप्रान्त ३ अर्थ हैं।

[ वीति ]॥ विध्यतेऽनया। विधृ याचने (भ्वा० आ० से०)। घञ् (३।३।१९)। पृषोदरादि (६।३।१०९)। गौरादि (४।१।४१)। 'वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनो' (इति मेदिनी) [७२।१२]।

आस्थानीयत्नयोरास्था

'आस्था' (स्त्री) के सभा, उपाय, आलम्बन, अपेक्षा ४ अर्थ हैं।

[ आस्थेति ]॥ आतिष्ठन्त्यस्याम्। आस्थान वा। 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०)। 'आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति' (इति मेदिनी) [७२।३]।

प्रस्थोऽस्त्री सानुमानयोः।

'शास्त्रद्रविणयोर्ग्रन्थः संस्थाऽऽधारे स्थितौ मृतौ'[५२]

'प्रस्थ' (पु) के शिखर (कँगूरा), परिमाणविशेष (सेर) २ अर्थ हैं।

['ग्रन्थ' (पु) के शास्त्र, धन २ अर्थ हैं]।

['संस्था' (स्त्री) के आधार, स्थिति, मृति, संस्था (सभा आदि) ४ अर्थ हैं]।

[ प्रेति ]॥ प्रतिष्ठन्तेऽस्मिन्, अनेन वा। घञर्थे क (वा० ३।३।५८)। 'प्रस्थोऽस्त्रियां मानभेदे सानावुन्नतवस्तुनि' (इति मेदिनी) [७२।९]।

इति थान्ता शब्दा।

अथ दान्ता शब्दा।

अभिप्रायवशौ छन्दौ

'छन्द' (पु) के अभिप्राय, वश २ अर्थ हैं।

[ अभीति ]॥ छन्द्यते। 'छदि संवरणे' (चु० प० से०)। घञ् (३।३।१९)। [छन्दो वशेऽप्यभिप्राये' इति मेदिनी, ७४।५]।

अब्दौ जीमूतवत्सरौ ॥ ८८ ॥

'अब्द' (पु) के मेघ, वर्ष, पर्वत-विशेष, मोथा, ४ अर्थ हैं।

[ अब्दाविति ]॥ अपो ददाति। 'आतोऽनुप–' (३।२।३) इति क। 'अब्दः संवत्सरे मेघे गिरिभेदे च मुस्तके' इति विश्व [७८८]।

अपवादौ तु निन्दाज्ञे

'अपवाद' (पु) के निन्दा, आज्ञा, विश्रम्भ, निरवशेष मुखादि ४ अर्थ हैं।

[ अपेति ]॥ अपोच्यते, अपवदन वा। वद व्यक्तायां वाचि' (भ्वा० प० से०)। घञ् (३।३।१९)। अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि' (इति मेदिनी) [७७।४५]॥*॥ मुकुटस्तु 'अववाद' इति पठित्वा अववादस्तु निन्दायामाज्ञाविश्रम्भयोरपि' इति विश्व-[८०।४०] मुदाजहार।

दायादौ सुतबान्धवौ।

'दायाद' (पु) के पुत्र, परिवार २ अर्थ हैं।

१ 'निदानागमयो —' इति पाठान्तरम्।

२ नष्टवीर्ये—' इति पाठो मेदिन्याम्।

[देति] ॥ दायमत्ति । 'अद भक्षणे'(अ० प० अ०)। 'कर्मण्यण्' (३।२।१) । यद्वा—आदत्ते । 'डुदाञ्' [ दाने ] 'आतश्चोप–' (३।१।१३६) इति क । दायस्य आद । 'दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च' (इति मेदिनी) [ ७६।३१ ]।

पादा रश्म्यङ्घ्रितुर्यांशाः

'पादः' ( पु ) के किरण, पैर, चौथाई हिस्सा ३ अर्थ हैं।

[ पेति ] ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'पदरुज–' (३।३।१७) इति घञ् । 'पादो बुध्ने तुरीयांशे शैले प्रत्यन्तपर्वते¹ । चरणे च मयूखे च' (इति मेदिनी) [ ७५।९-१० ]।

चन्द्राग्न्यर्कास्तमोनुदः ॥ ८९ ॥

'तमोनुद' ( पु ) के चन्द्र, अग्नि, सूर्य ३ अर्थ हैं।

[ चन्द्रेति ] ॥ तमो नुदति । 'णुद प्रेरणे' (तु० उ० अ०) । क्विप् (वा० ३।२।७६) । [ तमोनुदग्नीन्द्वर्के ना' इति मेदिनी, ७८।४९ ]।

निर्वादो जनवादेऽपि

'निर्वादः' ( पु ) के जनापवाद, सिद्धान्त २ अर्थ हैं।

[ निर्वेति ] ॥ निर्वदनम् । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । घञ् (३।३।१८) । 'निर्वादः स्याल्लोकवादे²परिनिष्ठितवादयो' (इति मेदिनी) [७७।३४]।

शादो जम्बालशष्पयोः ।

'शादः' ( पु ) के कीचड़, घास २ अर्थ हैं।

[शेति] ॥ शद्यते, अनेन वा । 'शद्लृ शातने'(भ्वा० प० अ०) । 'हलश्च' ( ३।३।१२१ ) इति, भावे (३।३।१८) वा घञ् । जम्बाल = पङ्कः । शष्प = बालतृणम् । [ 'शाद कर्दमशष्पयो' इति हैम, २।२३८ ]

सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ ९० ॥

'आक्रन्दः' ( पु ) के कष्टयुक्त शब्द, रोना, रक्षक, भयङ्कर युद्ध ४ अर्थ हैं।

[ सेति ] ॥ आक्रन्दनम् । आक्रन्दति । आक्रन्द्यतेऽस्मिन् । आक्रन्दयति वा । 'क्रदि आह्वाने रोदने च'(भ्वा० प० से०) । 'आङः क्रन्द शब्दसातत्ये' (चु० उ० से०) । घञ् (३।३।१८, १९) । पचाद्यच् (३।१।१३४) वा । 'आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयो' (इति मेदिनी) [ ७६।२१ ]।

१. मेदिन्या '—बुध्ने तुरीयांशे शैलप्रत्य–' इति पाठः।
२. '—लोकवादे—' इति मेदिनीपाठ ।

स्यात्प्रसादोऽनुरोधेऽपि

'प्रसादः' ( पु ) के अनुग्रह, प्रसन्नता, काव्यका गुणविशेष ३ अर्थ हैं।

[ स्यादिति ]॥ प्रसदनम् । अनेन वा। 'षद्लृ विशरणादौ' ( भ्वा० प० अ० ) । घञ् (३।३।१८, १९) । 'प्रसादोऽनुग्रहे काव्यगुणे¹स्वास्थ्यप्रसत्तिषु' (इति मेदिनी) [ ७७।३५ ]।

सूदः स्याद्व्यञ्जने त्रिषु² ।

'सूदः' ( त्रि )के व्यञ्जन ( कढ़ी, बरी, तरकारी आदि ), रसोइयादार २ अर्थ हैं।

[ स्विति ] ॥ सूद्यते, सूदयति वा । 'षूद क्षरणे' (चु० उ० से०) । 'एरच्' (३।३।५६) । पचाद्यच् । (३।१।१३४) वा । 'सूदस्तु सूपवत्सूपकारे च व्यञ्जनेऽपि च' इति विश्व [ ७८।७ ]।

गोष्ठाध्यक्षेऽपि गोविन्दः

'गोविन्दः' ( पु ) के गोष्ठ ( गोशाला ) का मालिक, बृहस्पति ३ अर्थ हैं।

[गोष्ठेति]॥ गां विन्दति । 'विद्लृ लाभे' (तु० उ० अ०) गवादिषु च विन्दे संज्ञायाम्' ( वा० ३।१।१३८ ) इति श । 'गोविन्दो वासुदेवे स्याद् गवाध्यक्षे बृहस्पतौ' (इति मेदिनी ) [ ७६।२८ ]।

हर्षेऽप्यामोदवन्मदः ॥ ९१ ॥

'आमोदः' ( पु ) के हर्ष, दूर ही से चित्तको आकर्षित करनेवाला कस्तूरी आदिका गन्ध २ अर्थ और 'मदः' ( पु ) के हर्ष, कस्तूरी, वीर्य ( शुक्र ), गर्व, हाथीका मद ५ अर्थ हैं।

[ हर्ष इति ] ॥ आमोदनम् । आमोदयति वा । 'मुद हर्षे' ( भ्वा० आ० से० ) स्वार्थण्यन्तः । घञ् (३।३।१८)। पचाद्यच् ( ३।१।१३४ ) वा । 'आमोदो गन्धहर्षयोः' ( इति मेदिनी ) । [ ७६,२१ ]। मदनम् । अनेन वा । 'मदी हर्षे' ( दि० प० से० ) । 'मदोऽनुपसर्गे' (३।३।६७) इत्यप् । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयो.' [मद्योऽपि मद आख्यातो मदी कृषकवस्तुनि'](इति विश्व.) [७७।२]।

१ विश्वनाथेन प्रसादलक्षणमुक्तन्तद्यथा—
'चित्तं व्याप्नोति य क्षिप्रं शुष्केन्धनमिवानल. ।
स प्रसादः समस्तेषु रसेषु रचनासु च'॥ इति सा० द० (६।६३१) ॥ काव्यप्रकाशे च—
'शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थिति.' । इति ।
२. '—न त्रिषु' इति पाठान्तरम् ।

प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।

'ककुद' ( पु न ) के प्राधान्य, राज-चिह्न ( छत्र, चँवर आदि ), बैल या साँडका डील, पहाड़की चोटी ४ अर्थ हैं।

[ प्रेति ] ॥ क सुखं कौति । 'कु शब्दे' ( अ० प० अ० ) । क्विप् ( ३।२।७६ ) । तुक् (६।१।७१)। पृषोदरादि (६।३।१०९)। 'ककुदत् ककुदं श्रेष्ठे वृषाङ्गे[१] राजलक्ष्मणि' इति विश्व [ ८०।२२ ]। प्राधान्य स्त्रार्थे ष्यञ् ( वा० ५।१।१२४ ) ।

स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥ ९२ ॥

'संविद्' ( स्त्री ) के ज्ञान, सम्भाषा, कर्मका नियम या व्यवस्थापन, लड़ाई, नाम, तोषण, आचार, प्रतिज्ञा ८ अर्थ हैं।

[ स्त्रीति ] ॥ संवेदनम् । संविद्यतेऽनया वा । विद ज्ञाने (अ० प० से०) । विद चेतनाख्यानादौ च' ( चु० आ० से० ) । सम्पदादिक्विप् ( वा० ३।३।१०८ ) । 'संवित् स्त्रिया प्रतिज्ञायामाचारे ज्ञानसंगरे[२] । संभाषणे क्रियाकारे सङ्केते नाम्नि तोषणे' ( इति मेदिनी ) [ ७७।४२ ] । क्रियायाः कारो नियमः पणबन्धो वा, आजिर्युद्धम् ।

धर्मे रहस्युपनिषत्

उपनिषद्' ( स्त्री ) के धर्म, एकान्त, वेदान्त ३ अर्थ हैं।

[धर्मे इति]। उपनिषदनम् । उपनीयोदति श्रेयोऽस्या वा । 'षद्लृ विशरणादौ' ( भ्वा० प० अ० ) । संपदादि ( वा० ३।३।१०८ ) । 'भवेदुपनिषद्धर्मे वेदान्ते विजने स्त्रियाम्' (इति मेदिनी) [ ७८।५६ ] ।

स्यादृतौ वत्सरे शरत् ।

'शरद्' ( स्त्री ) के शरद् ऋतु, वर्ष २ अर्थ हैं।

[ स्यादिति ] ॥ शृणाति । शृ हिंसायाम्' (क्र्या० प० से० ) । 'शृदृभसोऽदिः' (उ० १।१३०) शरत् स्त्री वत्सरेऽप्यृतौ' (इति मेदिनी) [७७।३९] ।

पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ ९३ ॥

'पदम्' ( न ) के व्यवसाय, रक्षा, स्थान, चिह्न, पैर, शब्द ( सुबन्त और तिङन्त ), वाक्य, एक वस्तु, व्यवसाय, अपदेश १० अर्थ हैं।

[ पति ] ॥ पदति । 'पद स्थैर्ये' ( ) । पद्यते वा । 'पद गतौ' ( दि० आ० अ० ) । पचाद्यच् (३।१।१३४) । भावकरणयोर्वा घञ् । संज्ञापूर्वकत्वाद् वृद्ध्यभाव । 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयो[१] स्थानत्राणयोरङ्कवस्तुनो' इति विश्व [७७।३] । 'श्लोकपादेऽपि च क्लीबं पुलिङ्गं किरणे पुनः (इति मेदिन्यां, [७५।८-९] विशेष ) ।

गोष्पद सेविते माने

'गोष्पदम्' ( न ) के गौओंसे सेवित स्थान, गोके चरण तुल्य प्रमाणवाला गढा २ अर्थ हैं।

[ गोष्पेति ] ॥ गो पदम् । 'गोष्पदं सेवितासेवित-' (६।१।१४५) इति साधु । 'गोष्पदं गोपदे ख्याते गवां च गतिगोचरे' इति विश्व[२] (मेदिनी) [७६।२७] ।

प्रतिष्ठाकृत्यमास्पदम् ।

'आस्पदम्' ( न ) के प्रतिष्ठाका स्थान, काम २ अर्थ हैं।

[ प्रेति ] ॥ आपद्यतेऽस्मिन् । 'आस्पदं प्रतिष्ठायाम्' (६।१।१४६) इति साधु । 'आस्पदं पदकृत्ययो' ( इति मेदिनी ) [ ७६।२० ] ।

त्रिषु

[ त्रीति ] ॥ आ दान्तात् [ अम० २।३।९५ ] ।

इष्टमधुरौ स्वादू

'स्वादु' ( त्रि ) के इष्ट, मधुर, स्वादिष्ट ३ अर्थ हैं।

[ इष्टेति ] स्वदते । 'ष्वद आस्वादने' ( भ्वा० आ० से० ) । कृवापा-'(उ० १।१) इत्युण् । 'स्वादु[३] मिष्टमनोज्ञयो' (इति मेदिनी) [ ७५।१६ ] ।

मृदू चातीक्ष्णकोमलौ ॥ ९४ ॥

'मृदु' ( त्रि ) के तेजोहीन, कोमल २ अर्थ हैं।

[ म्रिति ] ॥ म्रदते । म्रद मर्दने' ( भ्वा० आ० से० ) । 'प्रथिम्रदि-' (उ० १।२८) इति कु सम्प्रसारणं च । ['मृदु स्यात् कोमलेऽतीक्ष्णे' इति मेदिनी, ७५।१४]।

मूढाल्पापटुनिर्भाग्या मन्दा स्यु

'मन्द' ( त्रि ) के अज्ञ, बेवकूफ, भाग्यहीन, शिथिल, स्वच्छन्द, रोगी, शनि ७ अर्थ हैं।

[ म्विति ] ॥ मन्दते । 'मदि स्तुत्यादौ' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । 'मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु, पुंसि स्याद्धस्तिजात्यन्तरे शनौ' (इति मेदिनी) [ ७५।१३ ] ।

१ —वृषाङ्के— इति पाठ ।

२. मेदिन्यां '—माचारज्ञान—' इति पाठ ।

१ विश्वे —पादपच्चिह्नयो—' इति पाठ ।

२ विश्वे पुस्तकद्वयेऽपि नेदं वचो लभ्यत इति हेतोरत्र 'मेदिनी' त्येव पाठो युक्त ।

३ स्वादुर्मिष्ठ–' इति मेदिनीपाठ ।

द्वौ तु शारदौ ।

प्रत्यग्राप्रतिभौ

'शारदः' (त्रि) के नया (टटका), डरपोक, शरद् ऋतुमें उत्पन्न ३ अर्थ हैं।

[द्वाविति]॥ शरदि भवः। 'सन्धिवेला–' (४।३।१६) इत्यण्। 'शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः। शस्ये क्लीबं, शरज्जातनूतनाप्रतिभे त्रिषु (इति मेदिनी) [७७।४०]।

विद्वत्सुप्रगल्भौ विशारदौ ॥ ९५ ॥

'विशारदः' (त्रि) के विद्वान्, प्रतिभावाला २ अर्थ हैं।

[वीति]॥ विशिष्टो विपरीतो वा शारदः। 'प्रादयो गता–' (वा० २।२।१८) इति समासः। 'विशारदः पण्डिते च धृष्टे' (इति मेदिनी) [७८।५३]।

इति दान्ताः शब्दाः।

अथ धान्ताः शब्दाः।

व्यामो वटश्च न्यग्रोधौ

'न्यग्रोधः' (पु) के व्याम (अँकवारभर अर्थात् फैलाये हुए दोनों हाथोंके घेरेका प्रमाण-विशेष), बरगदका पेड़ २ अर्थ हैं।

[न्येति]॥ न्यक् रुणद्धि। 'रुधिर् आवरणे' (रु० उ० अ०)। 'कर्मण्यण्' (३।२।१)। न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतरौ' ['न्यग्रोधी विषपर्ण्यां च'] (इति मेदिनी) [८३।२४]।

उत्सेधः काय उन्नतिः।

'उत्सेधः' (पु) के शरीर, ऊँचाई २ अर्थ हैं।

[उदिति]॥ उत्सेधनम्। अनेन वा। 'षिधु गत्याम्' (भ्वा० प० से०)। घञ् (३।३।१८, १९)। ['उत्सेधस्तूच्छ्रये काये' इति विश्वः, ८३।२३]।

पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥ ९६ ॥

'विवधः, वीवधः' (२ पु) के बहँगी या काँवर, रास्ता, बोझ ३ अर्थ हैं।

[पर्येति]॥ विविधो वधो हननं गमनं वा। अनेन वा। 'प्रादिभ्यो धातुजस्य–' (वा० २।३।२४) इति समासोत्तरपदलोपौ। 'अन्येषामपि–' (६।३।१३७) इति वा दीर्घः। 'विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः' इति विश्वः [८३।२१]। परित आह्रियतेऽनेन। पर्याहार उभयतो बद्धशिक्यं स्कन्धवाह्यं काष्ठं 'कावठी' इति ख्यातम्। यत्तु—'उपसर्गस्य–' (६।३।१२२) इति दीर्घः—इति मुकुट आह। तन्न; वधशब्दस्याबन्तत्वेनाघञन्तत्वात्।

परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।

'परिधिः' (पु) के यज्ञ-सम्बन्धी पेड़ (पलाश, शमी आदि) की शाखा, परिवेष नामका सूर्यके चारों तरफवाला घेरा, गोलाई ३ अर्थ हैं।

[परीति]॥ परिधीयते। 'डुधाञ्' [धारणपोषणयोः] (जु० उ० अ०)। 'उपसर्गे घोः किः' (३।३।९२) [परिधिर्यज्ञियद्रुशाखायामुपसूर्यके' इति मेदिनी, ८१।३३]।

बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥ ९७ ॥

'आधिः' (पु) के बन्धक (ऋण लेनेके समय विश्वासके लिये महाजनके पास रखा गया आभूषण आदि), आपत्ति, मानसिक पीड़ा, अधिष्ठान ४ अर्थ हैं।

[बन्धेति] आधानम्। अनेन, अस्मिन् वा। पूर्ववत्। 'आधिः पुमान्मानसपीडाप्रत्याशाबन्धकेषु च। व्यसने चाप्यधिष्ठानेऽपि' (इति मेदिनी) [७९।३-४]।

स्युः समर्थननीवाकनियमाश्च समाधयः।

'समाधिः' (पु) के समर्थन, चुप रहना, नियम (अपनेको ब्रह्मरूप समझना) ३ अर्थ हैं।

[स्युरिति]॥ नीवाको वचनाभावः, मूलोत्कर्पार्थं धान्यादिसंग्रहो वा। समाधानम् अनेन वा। पूर्ववत्। 'समाधिर्नीवाकनियमेषु समर्थने' इति विश्वः[1] (रभस)। 'समाधिर्ना समर्थने। ध्याननीवाकनियमे[3] काव्यस्य च गुणान्तरे'। (इति मेदिनी) [८१।३८–३९]।

---

१ एवमेव पाठो हैमे (३।३७५) विश्वे (८४।२९) च लभ्यते।

२. विश्वे तु 'समाधिर्नियमे ध्याने नीवाके च समर्थने' इति (८४।३०) भिन्न एव पाठः।

३. क्वचित् '–ध्याने वैरस्य नियमे–' इति पाठः।

सूतसंहितायां समाधिलक्षणमुक्तं तद्यथा—

'सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन।

इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः।' इति।

अन्यच्च—समाधिस्तु समाधानं जीवात्मपरमात्मनोः।

ब्रह्मण्येव स्थितायां स समाधिः प्रत्यगात्मनः।' इति।

भगवता पतञ्जलिना योगसूत्रेऽप्युक्तम्—

'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।' ॥ (४।३) इति ॥

दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ ९८ ॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।

'अनुबन्ध' (पु) के दोष लगाना, नष्ट करनेवाले (प्रकृति, प्रत्यय, आगम, आदेश आदिमें इत्संज्ञा होनेपर लुप्त होनेवाले) अक्षर (जैसे—एध, डुपचष् सु, ओट्, सिप्, ङीप्, णुद, तुद्, ष्णुद, नुम्, में क्रमशः अकार, डु तथा अष् उ, वर्ण), पिता आदि श्रेष्ठोंकी आज्ञा माननेवाला बालक, प्रकरणागत विषयोंका अनुवर्तन (जैसे—वैरानुबन्ध, ) ४ अर्थ हैं।

[ दवेति ] ॥ अनुबध्यते । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । घञ् ( ३।३।१९ ) । 'अनुबन्धस्तु बन्धे स्याद्दोषोत्पादे विनश्वरे । मुख्यानुयायिवाले च प्रकृतस्यानुवर्तने'। अनुबन्धी तु हिक्कायां तृष्णायामपि' [ योषिति' ] (इति मेदिनी) । [८२।४१-४२] । मुख्यं पित्रादिकमनु याति य शिशु [१] प्रकृतस्य प्राग्व्यवस्यानुवर्तनेऽनिवर्तने ।

विधुर्विष्णौ चन्द्रमसि

'विधु' (पु) के विष्णु, चन्द्रमा, कर्पूर, राक्षस ४ अर्थ हैं।

[वीति] ॥ विध्यति विरहिणम् । 'व्यध ताडने' (दि० प० अ०) । 'पृभिदि–' (उ० १।२३) इति कु । 'ग्रहिज्या–' ( ६।१।१६ ) इति सम्प्रसारणम् । 'विधु शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इति विश्व [८२।१२] ।

परिच्छेदे बिलेऽवधिः ॥ ९९ ॥

'अवधि' (पु) के सीमा, बिल या गड्ढा, समय ३ अर्थ हैं।

[ परीति ] ॥ अवधानम् । 'उपसर्गे–' ( ३।३।९२ ) इति कि । 'अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान्' (इति मेदिनी) । [८०।२६] ।

विधिर्विधाने दैवेऽपि

'विधि' (पु) के विधान, भाग्य, ब्रह्मा, समय, प्रकार ५ अर्थ हैं।

[वीति] ॥ विधानम् । अनेन वा । पूर्ववत् कि (३। ३।९२) । 'विधिर्ना नियतौ काले विधाने परमेष्ठिनि' (इति मेदिनी) [८०।१७] ।

प्रणिधिः प्रार्थने चरे ।

'प्रणिधि' (पु) के याचना करना, दूत २ अर्थ हैं।

[प्रेति] ॥ प्रणिधानम् । प्रणिधीयते वा । कि (३।३।९२) । प्रणिधिर्याचने चरे' (इति हैम) [ ३।३७४ ] । [शाश्वतश्च ७१८] । 'प्रणिधिरवधानेऽपि' ।

बुधवृद्धौ पण्डितेऽपि

'बुध' (पु) के पण्डित, बुधनामक ग्रह, २ अर्थ हैं।

'वृद्ध' (त्रि) के पण्डित, पुराना या बूढ़ा, बढ़ा हुआ २ अर्थ हैं।

[ बुधेति ] ॥ 'बुध अवगमने' ( दि० आ० अ० ) । 'इगुपध–' (३।१।१३५) इति क । 'बुध कवौ रौहिणेये' इति विश्व [ ८२।३ ] । वर्धते स्म । 'वृधु वृद्धौ' (भ्वा० आ० अ०) । 'गत्यर्था–' (३।४।७२) इति क्त । 'वृद्धो जीर्णे प्रवृद्धे से त्रिषु, क्लीबं तु शैलजे' ( इति मेदिनी ) [८०।१८] ।

स्कन्धः समुदयेऽपि च ॥ १०० ॥

'स्कन्ध' (पु) के समूह, सैन्यभाग, काण्ड ( शाखा, डाल ), कन्धा, राजा ५ अर्थ हैं।

[स्कन्ध इति] ॥ कं शिरो दधाति । 'आतोऽनुप–' (३।२।३) इति क । पारस्करादित्वात् ( ६।१।१५७ ) सुट् । स्कन्धः स्यान्नृपतावंसे सपरायसमूहयो । काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि' (इति मेदिनी) [ ८०। २२-२३ ] ।

देशे नद्विशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।

सिन्धु' (पु) के सिन्धुदेश, नद विशेष ( यह पञ्जाबमें है ), समुद्र ३ अर्थ और 'सिन्धु' (स्त्री) का नदी १ अर्थ है।

[देश इति ] ॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०) । 'स्यन्देः सम्प्रसारणं धश्च' ( उ० १।११ ) इत्यु । 'सिन्धुः समुद्रे नद्यां च नदे देशेभदानयो' इति विश्व [ ८२।१३ ] । 'सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्' (इति मेदिनी) [८२।१३]।

विधा विधौ प्रकारे च

'विधा' (स्त्री) के विधि, प्रकार ( तरह, जैसे–द्विविधा, त्रिविधा, ), हाथी घोड़े आदिका भोजन, वतन, वृद्धि ५ अर्थ हैं।

[वीति] ॥ विधानम् । 'डुधाञ्' [ धारणपोषणयो ] (जु० उ० अ०) । 'आतश्चोप–' (३।३।१०६) इत्यङ् । विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ' इति विश्व [८३।१७] । विधौ = विधाने ।

१ मेदिन्यां '–मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।–' इति पाठः ।

१ हैम–(२।२५६)शाश्वता–(३७६)भ्यां विरोधात् '–कार्ये–' इति मेदिन्यां पाठो न समीचीनः ।

साधू रम्येऽपि च त्रिषु ॥ १०१ ॥

'साधु' ( त्रि ) के रमणीय, सज्जन, बनियो ३ अर्थ हैं।

[सेति] ॥ साध्नोति । 'साध संसिद्धौ' ( स्वा० प० से०) 'कृवापा–' ( उ० १।१ ) इत्युण् । 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्व. [८२।१२] ।

वधूर्जाया स्नुषा स्त्री च

'वधू' ( स्त्री ) के पत्नी, पतोहू ( पुत्र भतीजा आदिकी स्त्री ), स्त्री-मात्र ३ अर्थ हैं।

[वेति] ॥ वहति । 'वह प्रापणे' (भ्वा० उ० अ०) । 'वहो धश्च' ( उ० १।८३ ) इत्यूः । वधू स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च । शट्यां च शारिवायां च'[1] इति विश्वः [८३।२०] ।

सुधा लेपोऽमृतं स्नुही।

'सुधा' ( स्त्री ) के लेप, अमृत, सेंहुड़ ३ अर्थ हैं।

[सुवेति] ॥ सुष्ठु धीयते । 'डुधाञ्' [धारणपोषणयोः] ( जु० उ० अ० ) धेट्' [ पाने ] ( भ्वा० प० अ० ) । 'आतश्चोप–' (३।३।१०६) इत्यङ्। 'सुधा गङ्गेष्टकाचूर्णं स्नुही चामृतमूर्वयोः' इत्यजय. । [ 'सुधा गङ्गेष्टिकास्नुह्यो-र्मूर्वालिपामृतेषु च' इति हैम, २।२५९] ।

संधा प्रतिज्ञा मर्यादा

'संधा' ( स्त्री ) के स्वीकार, मर्यादा, प्रतिज्ञा ३ अर्थ हैं।

[सधेति] ॥ सधानम् । अत्र वा । 'डुधाञ्' [ धारण-पोषणयोः ] ( जु० उ० अ० ) । 'आतश्चोप–' ( ३।३। १०६ ) इत्यङ् । [ संधा स्थितिप्रतिज्ञयोः' इति हैम, २। २५६ ] ।

श्रद्धा संप्रत्ययः स्पृहा ॥ १०२ ॥

'श्रद्धा' ( स्त्री ) के आदर, काङ्क्षा २ अर्थ हैं।

[ श्रेति ] ॥ श्रद्धानम् पूर्ववत् । 'श्रद्धाऽऽदरे च काङ्क्षा-याम्' (इति मेदिनी) [ ८०।१९ ] । संप्रत्यय=आदर ।

मधु मद्ये पुष्परसे क्षौद्रेऽपि

'मधु' ( न ) के मदिरा, फूलका रस, शहद, दूध ४ अर्थ और 'मधु' ( पु ) के वसन्त ( चैत्र-वैशाखकी ) ऋतु, मधु नामका दैत्य, चैत्र महीना, एक प्रकारका पेड़ ४ अर्थ हैं।

[ मध्विति ] ॥ मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'फलिपाटि–' (उ० १।१८) इत्यु, धश्च । 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवशाके[1] मधुद्रुमे' इति विश्व [ ८३।११ ] ।

अन्धं तमस्यपि ।

'अन्धम्' (न) का अन्धकार १ अर्थ और 'अन्ध' ( त्रि ) का अन्धा १ अर्थ है।

[ अन्धमिति ] ॥ अन्धयति । 'अन्ध दृष्ट्युपघाते' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । 'अन्धं तु तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्' (इति मेदिनी) [७९।३] ।

अतस्त्रिषु

यहाँसे आगे सब तान्त शब्द त्रिलिङ्ग हैं।

[ एति ] ॥ आधान्तात् [ अम० ३।३।१०४ ] ।

समुन्नद्धौ पण्डितमन्यगर्वितौ ॥ १०३ ॥

'समुन्नद्ध' ( त्रि ) के स्वयं पण्डित न होते हुए भी अपनेको पण्डित समझनेवाला, अभिमानी २ अर्थ हैं।

[ सेति ] ॥ समुन्नह्यते स्म । 'णह बन्धने' (दि० उ० अ०) । क्तः (३।२।१०२) । 'समुन्नद्धः समुद्धूते पण्डितं-मन्यदृप्तयो[2] इति विश्व [ ८४।३५ ] ।

ब्रह्मबन्धुरधिक्षेपे निर्देशे

'ब्रह्मबन्धु' ( त्रि ) के निन्द्य, (जैसे–हे ब्रह्मबन्धो ! दुष्टोऽसि ···), निर्देश २ अर्थ हैं।

[ बेति ] ॥ ब्रह्मैव ब्राह्मणजातिः बन्धुरस्य । 'ब्रह्म-बन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्' इति विश्व.[८५।३९] ।

अथावलम्बितः ।

अविदूरोऽप्यवष्टब्धः

'अवष्टब्ध' ( त्रि ) के अवलम्बित, समीप, बँधा हुआ, ३ अर्थ हैं।

[ एति ] ॥ अवलम्बित आश्रितः, वस्त्रादिरुद्धो वा । अवष्टभ्यते स्म । 'ष्टभि स्तम्भे' (भ्वा० आ० से०) । 'स्तम्भु रोधने' ( सौत्र. ) वा । 'स्तम्भेः' (८।३।६७) 'आवाच्चा–' ( ८।३।६८ ) इति षः । 'अवष्टब्धोऽविदूरे स्यादाक्रान्ते चावलम्बिते' (इति मेदिनी) [ ८१।४० ] ।

प्रसिद्धौ ख्यातभूषितौ ॥ १०४ ॥

'लेशेऽपि गन्धः संबाधः गुह्यसंकुलयोरपि [५३]
बाधा निषेधे दुःखेऽपि ज्ञातृचान्द्रिसुरा बुधाः' [५४]

१. विश्वे '–स्नुषानवोढास्त्रीभार्यास्पृक्काङ्गनासु च । ···धाया स्यात्' इति पाठः ।

१. हैमानु(२।२४७-२४८) रोधाद्य '–जीवाशाक–' इति विश्वस्थः पाठ एव समीचीनः प्रतीयते ।

२. विश्वे '–दृप्तयोः' इति पाठः ।

'प्रसिद्ध' ( त्रि ) के विख्यात, सुशोभित २ अर्थ हैं।

[ 'गन्ध' ( पु ) के लेश (थोड़ा सा), गन्ध २ अर्थ हैं। ]

[ 'सबाध' ( पु ) के गुह्य, सङ्कुल ( भीड आदिसे ठसाठस भरा हुआ ) २ अर्थ हैं ]।

[ 'बाधा' ( स्त्री ) के निषध, दुःख २ अर्थ हैं ]।

[ 'बुध' ( पु ) के जाननेवाला, बुध नामका ग्रह, देवता ३ अर्थ हैं ]।'

[ प्रेति ]॥ प्रसिद्ध्यति प्रसिद्ध्यते स्म वा। 'षिधु संराद्धौ' ( दि० प० से० )। [ षिधु ] गत्याम्' (भ्वा० प० से०)। कर्तरि ( ३।४।७२ ) कर्मणि (३।२।१०२) वा क्तः। [ प्रसिद्धो भूषिते ख्याते' इति हैम (३।३७४) मेदिनी (ध१।३४) च ]।

इति धान्ता शब्दाः।

अथ नान्ताः शब्दाः।

सूर्यवह्नी चित्रभानू

'चित्रभानु' ( पु ) के सूर्य, अग्नि २ अर्थ हैं।

[ सूर्येति ]॥ चित्रा भानवो रश्मयोऽस्य [ चित्रभानुस्तु हुताशनदिनेशयोः' इति हैम, ४।१७८ ]।

भानू रश्मिदिवाकरौ।

'भानु' ( पु ) के किरण, सूर्य २ अर्थ हैं।

[ भेति ]॥ भाति। 'भा दीप्तौ (अ० प० अ०)। 'दाभाभ्यां नुः' ( उ० ३।३२) [ 'भानु किरणसूर्ययोः' इति विश्व, ८७।२० ]।

भूतात्मानौ धातृदेहौ

'भूतात्मा' ( पु ) के ब्रह्मा, शरीर २ अर्थ हैं।

[ भूतेति ]॥ भूतानामात्मा। भूतानि आत्मा स्वभावो यस्य, इति च [ 'भूतात्मा द्रुहिणे देहे' इति हैम, ३।४२५ ]।

मूर्खनीचौ पृथग्जनौ॥ १०५॥

'पृथग्जन' ( पु ) के मूर्ख, नीच २ अर्थ हैं।

[ मूर्खेति ]॥ पृथक्कार्यो जनः। शाकपार्थिवादि (वा० २।१।७८)।[पृथग्जनोऽधमे जने' इति हैम ४।१९०]।

ग्रावाणौ शैलपाषाणौ

ग्रावा' ( पु ) के पहाड़, पत्थर २ अर्थ हैं।

[ ग्रेति ]॥ ग्रसते। ग्रसु अदने (भ्वा० आ० से०)। अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः। आवनाति। 'वन संभक्तौ' (भ्वा० प० से०) [ वन ] 'शब्दे' ( भ्वा० प० से० ) वा। विच् (३।२।७६)। प्रश्नातावावा च [ 'अथ ग्रावा प्रस्तरे जलदे गिरौ' इति विश्व, ९४।११६ ]।

पत्त्रिणौ शरपक्षिणौ।

'पत्त्री' ( पु ) के बाण, पक्षी बाज चिड़िया, रथिक, पहाड़ ५ अर्थ हैं।

[ पेति ]॥ पत्त्राणि सन्त्यस्य। 'अत –' ( ५।२।११५) इतीनि ॥ 'पत्त्री श्येने रथे काण्डे खगद्रुगिरिशाद्रिषु' इति विश्व '।

तरुशैलौ शिखरिणौ

'शिखरी' ( पु ) के पेड़, पहाड़ २ अर्थ हैं।

[ तेति ]॥ शिखरमस्ति ययोः। 'अत –' ( ५।२।११५ ) इतीनि। [ शिखरी स्यादपामार्गे शैलपादपयोः पुमान्' इति मेदिनी, ९८।११२ ]।

शिखिनौ वह्निबर्हिणौ॥ १०६॥

'शिखी' ( पु ) के मोर, अग्नि, पेड़, मुर्गा, पक्षी, बाण, केतु नामका ग्रह ७ अर्थ हैं।

[ शिखीति ]॥ शिखा सन्त्यस्य। 'इन्द्रोपताप–' (५।२।१२८) इतीनि ॥ व्रीह्यादि ( ५।२।११६ ) वा। शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः' (इति मेदिनी) [ ९३।४२ ]।

प्रतियत्नावुभौ लिप्सोपग्रहौ

'प्रतियत्न' ( पु ) के लिप्सा, बन्दी-ग्रहणादि, सत्कार ३ अर्थ हैं।

[ प्रेति ]॥ प्रतियतनम्। प्रतियत्यते वा। यती प्रयत्ने' (भ्वा० आ० से०)। 'यत निकारादौ' (चु० उ० से०) वा। यजयाच–' (३।३।९०) इति नङ्। 'प्रतियत्नश्च संस्कारलिप्सोपग्रहणेषु च' ( इति मेदिनी )। [ ९७।९३ ]। उपग्रह = बन्दीग्रहणादि।

अथ सादिनौ।

द्वौ सारथिहयारोहौ

'सादी' ( पु ) के सारथि, घुड़सवार २ अर्थ हैं।

[ अथेति ]॥ अवश्यं सीदति, सादयति वा। षद्लृ विशरणादौ' (भ्वा० प० अ०)। 'आवश्यका–' ( ३।३।१७० ) इति णिनिः। ग्रह्यादि (३।१।१३४) वा। 'सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते' (इति मेदिनी) [९४।५२]।

१ विश्वे नेदं वचनं दृश्यते। मेदिन्यां च '—पत्त्री श्येने पत्त्ररथे काण्डद्रुगिरिकाद्रिषु' इति ( ८९।८७ ) वचो लभ्यते।

वाजिनोऽश्वेषुपक्षिणः ॥ १०७ ॥

'वाजी ( पु ) के घोड़ा, बाण, पक्षी ३ अर्थ हैं।

[ वेति ] ॥ वाजाः पक्षाः सन्त्यस्य। 'अतः–' ( ५।२।११५ ) इतीनिः। [ 'वाजी बाणाश्वपक्षिषु' इति मेदिनी, ९२।२६ ]।

कुलेऽप्यभिजनो जन्मभूम्यामपि

'अभिजनः' ( पु )के वंश ( खान्दान ), जन्म भूमि, ख्याति, कुलसमूह ४ अर्थ हैं।

[ विवति ] ॥ अभि जायतेऽस्मिन्। 'जनी' [ प्रादुर्भावे ] ( दि० आ० से० )। 'हलश्च' ( ३।३।१२१ ) इति घञ्। 'जनिवध्योश्च ( ७।३।६३ ) इति वृद्धिर्न। 'अभिजनः कुले ख्यातौ जन्मभूम्यां कुलध्वजे'[1] इति विश्व [ ९६। १४१ ]।

अथ हायनाः।

वर्षार्चिर्व्रीहिभेदाश्च

'हायनः' ( पु ) के वर्ष, किरण, नीवार ( तिन्नी ) आदि अन्न ३ अर्थ हैं।

[ वर्षेति ] ॥ जहाति, जिहीते वा। 'ओहाक् त्यागे' ( जु० प० अ० )। 'ओहाङ् गतौ' ( जु० आ० अ० ) वा। 'हश्च व्रीहिकालयोः' ( ३।१।१४८ ) इति ण्युट्। 'हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः' ( इति मेदिनी )। [ ९४। ५८ ] 'वर्षः = अब्दम्। अर्चिः = रश्मि। व्रीहिभेद. = नीवारादि' इतिमुकुटः। षष्टिकः–इति स्वामी।

चन्द्राग्न्यर्का विरोचनाः ॥ १०८ ॥

'विरोचनः' ( पु ) के चन्द्र, अग्नि, सूर्य ३ अर्थ हैं।

[ चन्द्रेति ] ॥ विरोचते। 'रुच दीप्तौ'[2] ( भ्वा० आ० से० )। 'अनुदात्तेतश्च हलादेः' ( ३।२।१४९ ) इति युच्। 'विरोचन. प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयो.' ( इति मेदिनी ) [ ९८।१०७ ]।

केशेऽपि वृजिनः

'वृजिनः' ( पु )का केश, 'वृजिनम्' ( न ) का पाप, रक्तचम २ अर्थ और 'वृजिन.' ( त्रि ) का कुटिल १ अर्थ है।

[ केश इति ] ॥ वृज्यते। 'वृजी वर्जने' ( अ० आ० से० )। 'वृजेः किच्च' ( उ० २।४७ ) इतीनन्। 'वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु' इति रभसः [ मेदिनी, ९२।३४ च ]।

विश्वकर्मार्कसुरशिल्पिनोः।

'विश्वकर्मा' ( पु )के सूर्य, देवताओंका कारीगर ( बढ़ई ) २ अर्थ हैं।

[ वीति ] ॥ विश्वं कर्मास्मात्, अस्य वा। 'विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनो.' ( इति मेदिनी ) [ १०१।१४५ ]।

आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥१०९॥

'आत्मा' ( पु ) के यत्न, धैर्य, बुद्धि, स्वभाव, ब्रह्म, शरीर, क्षेत्रज्ञ ( ज्ञानी पुरुष ) ७ अर्थ हैं।

[ एति ] ॥ अतति। 'अत सातत्यगमने' ( भ्वा० प० से० )। 'सातिभ्यां मनिन्मनिणौ' ( उ० ४।१५३ )। 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणि। [ 'आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति मेदिनी, ८५।३८-३९ ]।

शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः[1]।

'घनाघनः' ( पु ) के इन्द्र, घातुक ( मतवाला या खूनी हाथी, ) बरसनेवाला साल ( वर्ष ) ३ अर्थ हैं।

[ शेति ] ॥ हन्ति। 'हन हिंसागत्योः' ( अ० प० अ० )। 'हन्तेर्घत्वं च' ( वा० ६।१।१२ ) इति पचाद्यचि द्वित्वम्, आक् चाभ्यासस्य। 'अन्योन्यघट्टने चैव घातुके च घनाघन' इति धरणि.। [ 'घनाघनो निरन्तरे। वासवे घातुके मत्तगजे वर्षुकवारिदे' इति हैम', ४।१७७ ]।

अभिमानोऽर्थादिदर्पेऽज्ञाने प्रणयहिंसयोः ॥ ११० ॥

'अभिमानः'(पु)के घमण्ड, अज्ञान, प्रेम, हिंसा ४ अर्थ हैं।

[ अभीति ] ॥ अभिमननम्। 'मन ज्ञाने' ( दि० आ० अ० )। घञ् ( ३।३।१८ )। 'मीञ् हिंसायाम्' ( क्र्या० उ० अ० )। भावे ल्युट् ( ३।३।११५ )। 'मीनाति–' ( ६। १।५० ) इत्यात्वम्। आदिना कुलपशुगुणादिग्रह। [ 'गर्वविज्ञप्तिहिंसासु प्रणये चाभिमानवाक्' इति शाश्वत', १८४ ]।

घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे।

'घनः' ( पु )के बादल, कठोरता, लोहेका मुद्गर, बाहुल्य, मुस्त ५ अर्थ और 'घनः' ( त्रि ) के कठोर, सघन, काँसेका बाजा ३ अर्थ हैं।

---

१. विश्वे '—कुलध्वजे' इति पाठ.। मेदिन्या ( ९५। ६५ ) हैमे ( ४।१६० ) चास्यार्थः 'कुलध्वज' इत्येवं लभ्यते।

२. '—अभिप्रीतौ च' इति पाठ. सि० कौ० धातुपाठे च।

१. 'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघना' इति पाठान्तरम्।

[ घेति ] ॥ हननम् । हन्यते वा । 'मूर्तौ घन' (३।३।७७) इत्यप् । 'घन सान्द्र घन वाद्य घनो मुस्तो घनोऽम्बुद । घन काठिन्यसघातो विस्तारो लोहमुद्गरो' इति धरणि । मूर्तिगुणे = काठिन्ये ।

इन सूर्ये प्रभौ

'इन' ( पु ) के सूर्य, प्रभु या समर्थ, श्रेष्ठ ३ अर्थ हैं।

[ ईति ] ॥ एति । ईयते वा । 'इण्सिञ्जि–' ( उ० ३।२ ) इति नक् । [ 'इन पत्यौ नृपार्कयो' इति मेदिनी, ८३।२ ]।

राजा मृगाङ्के क्षत्रिये नृपे ॥ १११ ॥

'राजा' ( पु ) के चन्द्रमा, क्षत्रिय, राजा, स्वामी, यक्ष, इन्द्र ६ अर्थ हैं।

[रेति] ॥ राजति । 'राजृ दीप्तौ' (भ्वा० उ० से०) कनिन् । युवृषि– [उ० १।१५६] इति कनिन्। 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' (इति मेदिनी) [ ९१।१२५ ]।

वाणिन्यौ नर्तकीदूत्यौ

'वाणिनी' ( स्त्री ) के नाचनेवाली वेश्या आदि, दूती, चतुर स्त्री, मतवाली स्त्री ४ अर्थ हैं।

[ वेति ] ॥ अवश्य वणति । 'वण शब्दे' ( भ्वा० प० से० ) । आवश्यका–' (३।३।१७०) इति, ग्रहादित्वात् (३।१।१३४) वा णिनि । बहुषोर्वैयम् । 'वाणिनिर्नर्तकीमत्ताविदग्धवनितासु च' (इति मेदिनी)[८९।९८]।

स्रवन्त्यामपि वाहिनी।

'वाहिनी' ( स्त्री ) के नदी, सेना, सेनाका भेद-विशेष ३ अर्थ हैं।

[वेति] ॥ वहति । ग्रहादि (३।१।१३४) णिनि । 'वाहिनी स्यात्तरङ्गिण्या सेनासैन्यप्रभेदयो' इति विश्व [८९।९८]।

ह्रादिन्यौ वज्रतडितौ

'ह्रादिनी' ( स्त्री ) के वज्र, बिजली २ अर्थ हैं।

[ह्रेति] ॥ ह्लादतेऽवश्यम् । 'ह्लाद अव्यक्ते शब्दे' ( भ्वा० आ० से० ) 'आवश्यका–' (३।३।१७०) इति णिनि । [ह्लादिनी वज्रतडितो' इति मेदिनी, ९४।५६]।

वन्दायामपि कामिनी ॥११२॥

'कामिनी' ( स्त्री ) के बन्दा ( बाँदा ), स्त्री, काम ( इच्छा ) करनेवाली स्त्री, विलासिनी स्त्री ४ अर्थ हैं।

[वन्देति] ॥ अवश्य काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । पूर्ववत् ( ३।३।१७० ) णिनि । 'कामिनी भीरुवन्दयो । कामी तु कामुके चक्रवाके पारावतेऽपि च' (इति मेदिनी) । [ ८६।४९ ] । वन्दा = वृक्षे विजातीय प्ररोह ।

त्वग्देहयोरपि तनु

'तनु' ( स्त्री ) के त्वचा ( छाल, चमड़ा ), शरीर २ अर्थ और 'तनु' ( त्रि ) के कृश, थोड़ा, विरल ३ अर्थ हैं।

[ त्वगिति ] ॥ तनोति, तन्यते वा । 'तनु विस्तारे' ( त० उ० से० ) । भृमृशी–' (उ० १।७) इत्यु । 'तनु काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे'(इति मेदिनी) [८३।९]।

सूनाधोजिह्विकापि च।

'सूना' ( स्त्री ) के गलेकी घाँटी, प्राणियोंका वधस्थान, सन्तान ३ अर्थ हैं।

[सुनेति] ॥ सवनम् । सूयते वा । 'षूङ् प्राणिगर्भविमोचने' (अ० आ० से०)। ( ३।३।११४ ) कर्मणि (वा० ३।३।१०२) क्त । 'स्वादय ओदित' ( दि० ग० ) इति (ओदित्त्वात् 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम्) । 'सूनाऽस्या पुष्पिते पुष्पे जिह्वातले वधालये' इत्यजय' [ 'सून वाच्यवदुत्तेषु ] ( सून प्रसवपुष्पयो ) । सूना पुत्र्या वधस्थानगलशुण्डिकयोरपि'(इति विश्व ) [८६।९]।

क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ॥ ११३ ॥ मन्दे

'वितानम्' ( न पु ) के यज्ञ, विस्तार, चँदोवा ३ अर्थ और 'वितानम्' ( त्रि ) के तुच्छ, मन्द २ अर्थ हैं।

[क्रेति] ॥ विततनम् । वितन्यते वा । घञ् (३।३।१८, १९ ) । वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि वृत्तभेदावसरयोर्वितान तुच्छमदयो ' इति विश्व [ ८९।५४ ] । 'वितानो यज्ञ उल्लोचे विस्तारे पुनपुमवम् । क्लीब वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयो.[1]' ( इति मेदिनी) [९२।२९-३०] । मन्देऽमूढे ।

अथ केतन कृत्ये केतावुपनिमन्त्रणे।

'केतनम्' ( न ) के कार्य, पताका, निमन्त्रण, निवास ४ अर्थ हैं।

[ अथेति ]॥ 'कित निवासादौ' (भ्वा० प० से०) । भावकर्मकरणाधिकरणेषु ल्युट् । 'केतन [illegible] ध्वजे कार्ये

१ '—मत्ततुच्छयो ' इति पाठोऽपि मेदिन्याम् ।

*निमन्त्रणनिवासयोः'* इत्यजयः। [ 'केतनं तु निमन्त्रणे। गृहे केतौ च कृत्ये' इति मेदिनी, ८६।५२-५३]।

वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥ ११४ ॥

'ब्रह्म' (न) के ऋग्, यजुष्, साम ये तीनों वेद, तत्त्व, तप, ब्रह्म ४ अर्थ और 'ब्रह्मा' (पु) के ब्राह्मण, ब्रह्मा २ अर्थ हैं।

[*वेयिति*]॥ बृंहति। 'बृहि वृद्धौ' (भ्वा० प० से०)। 'बृंहेर्नोऽच्च' (उ० ४।१४६) इति मनिन्। 'ब्रह्म तत्त्वतपोवेदे न द्वयोः, पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे' (इति मेदिनी) [८९।९६-९७]।

उत्साहने च हिंसायां सूचने चापि गन्धनम्।

'गन्धनम्' (न) के उत्साहित करना, हिंसा करना, आशय प्रकट करना, प्रकाशन ४ अर्थ हैं।

[*उदिति*]॥ 'गन्ध मर्दने' (चु० आ० से०)। भावा[३।३।११५]दौ ल्युट्। गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने' इति विश्वः [९१।७४]।

आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् ॥ ११५ ॥

'आतञ्चनम्' (न) के जोरन डालना (औंटे दूधमें दही छोड़कर दही जमाना), वेग, तृप्त करना ३ अर्थ हैं।

[*एति*]॥ 'तञ्चु गतौ' (भ्वा० प० से०)। ल्युट् (३।३।११४)। प्रतीवापः=दुग्धादौ दध्यादिभावार्थं तक्रादिप्रक्षेपः, निक्षेपो वा। जवनं=वेगः। आप्यायनं=तर्पणम्। [ 'आतञ्चनं प्रतीवापजवनाप्यायनेषु च' इति मेदिनी, ९५।६६]।

व्यञ्जनं लाञ्छनं श्मश्रु निष्ठानावयवेष्वपि।

'व्यञ्जनम्' (न) के चिह्न, दाढ़ी-मूँछ, तेमन (दही, कढ़ी, आदि), अवयव ४ अर्थ हैं।

[*व्येति*]॥ व्यज्यते, अनेन वा। ल्युट् (३।३।११३, ११७)। 'व्यंजनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च'[2] (इति मेदिनी) [९१।२२]। निष्ठानं=तेमनम्।

स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ ११६ ॥

'कौलीनम्' (न) के लोकापवाद, पशु-पक्षी आदिकी लड़ाई, कुलीनता ३ अर्थ हैं।

[*स्यादिति*]॥ *कुलीनस्य कर्म भावो वा*। युवादण् (५।१।१३०)। 'कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः' इति धरणिः। [ 'कौलीनं गुह्यजन्ययोः'। कुकर्मणि कुलीनत्वे युद्धे पश्वहिपक्षिणाम्' इति मेदिनी ८६।५३-५४]।

स्यादुद्यानं निःसरणे वनभेदे प्रयोजने।

'उद्यानम्' (न) के निकलना, बगीचा, प्रयोजन ३ अर्थ हैं।

[*स्यादिति*]॥ उद्यात्यनेन, अस्मिन् वा। 'या प्रापणे' (अ० प० अ०)। 'करणा—' (३।३।११७) इति ल्युट्। 'उद्यानं वनभेदे स्यान्निःसृतौ च प्रयोजने' इति धरणिः। [ *उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने*' इति मेदिनी, ८५।४२ ]।

अवकाशे स्थितौ स्थानम्

'स्थानम्' (न) के अवकाश, स्थिति, सादृश्य, ज्योंका त्यों रहना ४ अर्थ हैं।

[*अवेति*]॥ स्थीयतेऽत्र। अधिकरणे (३।३।११७) भावे (३।३।११५) च ल्युट्। 'स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे' (इति मेदिनी) [८४।२३]।

क्रीडादावपि देवनम् ॥ ११७ ॥

'देवनम्' (न) के क्रीडा आदिमें जीतनेकी इच्छा, व्यवहार २ अर्थ और 'देवनः' (पु) का पाश १ अर्थ है।

[*क्रीति*]॥ दीव्यतेऽनेन। 'दिवु क्रीडादौ' (दि० प० से०)। भावकरणा[३।३।११५ ११७]दौ ल्युट्। 'देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि। अक्षेषु देवनः प्रोक्तः [वाच्यवद्वाग्मिविप्रयो] इति विश्व [९०।६६]।

उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च।

'उत्थानम्' (न) के पुरुषार्थ, तन्त्र (सैन्य, अपने मण्डल अर्थात् राज्य-विषयक चिन्ता, या पारिवारिक काम), उन्नति करना, पुस्तक, युद्ध, सिद्धान्त ६ अर्थ हैं।

[*उदिति*]॥ 'उत्थानमुच्यते तन्त्रे पौरुषे पुस्तके रणे।' ('प्राङ्गणोद्गमहर्षेषु मलवेगेऽपि न द्वयो' (इति मेदिनी) [८५।४१]। 'तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे। प्रधाने तन्तुवाने(ये) च शास्त्रभेदे परिच्छदे। श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके' [ इतिकर्तव्यतायां च तन्त्रीवीणागुणे मता। अमृता देहशिरयो (इति मेदिनी) [१२५।४०-४२]।

व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ॥ ११८ ॥

'व्युत्थानम्' (न) के तिरस्कार, चोरी आदि विरुद्ध आचरण, स्वतन्त्रता ३ अर्थ हैं।

[*व्युदिति*]॥ विरुद्धमुत्थानम्। 'प्रादयो गता—' (वा० २।२।१८) इति समास। 'स्वतन्त्रता च व्युत्थानम्' इति त्रिकाण्डशेषः [३।३।२५९]। [व्युत्थानं स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च' इति मेदिनी, ९२।३४ ]।

---

१. '—लाञ्छनश्मश्रु—' इति पाठान्तरम्।
२. '—यवेऽह्नि' इति मेदिनीपाठः।

[ वेति ] वन्यते । 'वन सम्भक्तौ' (भ्वा० प० से०) । 'वनु याचने' (त० उ० से०) वा । 'हलश्च'(३।३।१२१)। इति घञ् । सञ्ज्ञापूर्वकत्वान्न वृद्धि । कर्तरि पचाद्यच् (३।१।१३४) वा । क्लीब स्यात् कानने नीरे निवासे निलये वनम्' इति रभस । [ वन नपुंसक नीरे निवासालय-कानने' इति मेदिनी, ८४।१९ ]।

तलिनं विरले स्तोके

'तलिनम्' ( त्रि ) के विरल, थोड़ा, स्वच्छ ३ अर्थ हैं।

[ तेति ] ॥ तलति, तल्यते वा । 'तल प्रतिष्ठायाम्' (भ्वा० प० से०)। 'तलिपुलिभ्यामिनन्'[2] (उ० २।५३)। 'तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्' ( इति मेदिनी) [ ८७।७० ]।

वाच्यलिङ्गास्तथोत्तरे ।

इसके आगे सब नान्त शब्द वाच्यलिङ्ग ( त्रिलिङ्ग ) हैं।

[ वेति ] ॥ तथा = तलिनवत् । उत्तरे=आगामिनः [ अम० ३।३।१२८ ]।

समानाः सत्समैकेषु

'समान' ( त्रि ) के पण्डित, समान ( तुल्य ), मुख्य ३ अर्थ, 'समान' ( पु ) ना नाभि मण्डलमें रहनेवाली वायु १ अर्थ है।

[ सेति ] ॥ समति । 'षम वैक्लव्ये' (भ्वा० प० से०) । ताच्छील्यवयोवचनशक्तिषु चानश्'(३।२।१२९)। आगमशासनमनित्यम्' इति मुग् न । सह मानेन वर्तते, इति वा । 'समान सत्समैकेषु त्रिषु ना नाभिमारुते'(इति मेदिनी ) [ ९३।४६ ]।

पिशुनौ खलसूचकौ ॥ १२७ ॥

'पिशुन' ( त्रि ) के दुष्ट, चुगलखोर २ अर्थ हैं।

[पीति] ॥ पिंशति । 'पिश अवयवे'(तु० प० से०)। 'क्षुधिपिशिमिथिभ्य कित्'(उ० ३।५५) इत्युनन् । पिशुन कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्'(इति मेदिनी) [८६।९१ ९२]।

हीनन्यूनावूनगर्ह्यौ

'हीन, न्यून' ( २ त्रि ) के कम, निन्दनीय २ अर्थ हैं।

[ हीति ] ॥ जहाति हीयते स्म वा । 'ओहाक् त्यागे' (जु० प० अ०) । 'आदिकर्मणि क्त-' ( ३।४।७१ ) । कर्मणि (३।२।१०२) वा । ओदितश्च' (८।२।४५)इति नत्वम् । 'हीन गर्ह्योनयोस्त्रिषु'(इति मेदिनी) [८४।२६]।

न्यूनयति । न्यून्यते स्म वा । 'ऊन परिहाणे' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । यत्तु-'इगुपध-' (३।१।१३५) इति क-इति मुकुटेनोक्तम् । तन्न । चुरादिण्यन्तत्वेन अदन्तत्वेन चेगुपधत्वाभावात् । 'न्यून गर्ह्योनयो ' (इति मेदिनी) (८३।१३)।

वेगिशूरौ तरस्विनौ।

'तरस्वी' ( त्रि ) के वेगवान्, शूरवीर २ अर्थ हैं।

[वेगीति]॥ तरो बलं जवो वाऽस्यास्ति । 'अस्मायामेधा-' (५।२।१२१) इति विनि [ 'तरस्वी शूरवेगिनो ' इति मेदिनी, ९२।८३ ]।

अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गता अपि ॥१२८॥

'लेख्य भूम्यादिदानार्थं यातनाऽऽज्ञा च शासनम् [५५]

निदानमवसानेऽपि सार्थे वार्धुषिके धनी [५६]

कक्षापटेऽपि कौपीनं न ना ज्ञानेऽपि बाधना [५७]

द्युम्न बलेऽथ भार्यापि जनी दोषेऽपि लाञ्छनम् [५८]

'अभिपन्न' ( त्रि ) के अपराधी, शत्रुसे आक्रान्त, विपत्तिमें पड़ा हुआ ३ अर्थ हैं।

[ 'शासनम्' ( न ) के राजासे मिली हुई भूमि आदि (जागीर),शास्त्र (जैसे-'अथ धर्मानुशासनम्' यो० सू० १।१), आज्ञा, राज्य लेख्य भेद, शासन ( दण्ड देना ) ५ अर्थ हैं।

[ 'निदानम्' ( न ) के अवसान ( अन्त ), रोग निर्णय, आदि कारण, कारणमात्र, कारण समूह, शुद्धि, रोग ७ अर्थ हैं ]।

[ 'धनी' ( पु ) के सूदखोर, बनियोंका झुण्ड, धनवान् ३ अर्थ हैं।

[ 'कौपीनम्' ( न ) के नहीं करने योग्य, गुह्य ( लिङ्ग ), लंगोटी ३ अर्थ हैं ]।

[ 'बाधना' ( स्त्री ) के प्रतिरोध (रोक), स्वभाविक ज्ञान, हेत्वाभासभेद, पीड़ा, न्यायोक्त ५ अर्थ हैं ]।

[ 'द्युम्नम्' ( न ) के बल, धन २ अर्थ हैं ]।

[ 'जनी' ( स्त्री ) के सीमन्तिनी ( केश वेशसे युक्त स्त्री ), बहू २ अर्थ हैं ]।

[ 'लाञ्छनम्' ( न ) के दोष, चिह्न, नाम ३ अर्थ हैं ]।

---

१ करणाधिकरणयोश्चे'त्यस्याधिकारतया कर्मण्यस्य प्रवृत्त्यभावादत्र अकर्तरि च कारके सञ्ज्ञायाम् (३।३।१९) इत्यनेन सिद्धिरुचिता प्रतिभाति ।

२ उणादिसूत्रपाठे धातुपाठे च 'तलिपुलिभ्यां च' इत्येव पाठ ।

[ अभीति ] ॥ अभिपद्यते स्म । गत्यर्था–' (३।४।७२) इति क्तः । कर्मणि (३।२।१०२) वा । 'अभिपन्नो-ऽपराद्धेऽभिद्रुते ग्रस्ते विपद्गते' इति विश्वः [९७।१४६]।

इति नान्ताः शब्दाः ।

अथ पान्ताः शब्दाः ।

कलापो भूषणे बर्हे तूणीरे संहतेऽपि च ।

'कलापः' (पु) के भूषण (गहना), मोरका पंख, तरकस, संहत (मिला हुआ) ४ अर्थ हैं ।

[ कलेति ] ॥ कलामाप्नोति । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । 'कर्मण्यण्' (३।२।१) । कला आप्यतेऽनेन वा । 'हलश्च' (३।३।१२१) इति घञ् । 'कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः' इत्यजय. । ('चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः' इति मेदिन्या [१०३।१७] विशेषः) ।

परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥ १२९ ॥

'परीवापः' (पु) के तम्बू कनात आदि, बीज बोना, थाला ३ अर्थ हैं ।

[ परीति ] ॥ परिवपनम् । अनेन । अत्र वा । 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० अ०) । भावे (३।३।१८) घञ् । 'हलश्च' (३।३।१२१) इति वा । 'उपसर्गस्य–' (६।३।१२२) इति दीर्घ. । परिच्छद = परिवारः । [परिवापो जलस्थाने पर्युप्तिपरिवारयोः' इति हैम, ४।२१५] ।

गोधुग् गोष्ठपतिर्गोपौ

'गोपः' (पु) के गौ दुहनेवाला, गोशालाका स्वामी (ग्वाला), देश या कुलका अध्यक्ष २ अर्थ हैं ।

[ गवीति ] ॥ गां पाति । 'पा रक्षणे' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति क । 'गोपो ग्रामौघगोष्ठाधिकृतयोर्बल्लवे' [नृपे । गोपी गोपालमहिलाशारिवारत्तिकासु च' ] इति विश्वः [१०४।६] ।

हरो विष्णुर्वृषाकपिः ।

'वृषाकपिः' (पु) के शिवजी, विष्णु भगवान्, अग्नि ३ अर्थ हैं ।

[हेति] ॥ वृषं धर्मं न कम्पयति । 'कपि किंचिच्चलने' (भ्वा० आ० से०) । अहिकम्प्योर्नलोपश्च[1] (उ० ४।१४४) इतोः । वृषाद्धर्मादाकम्पयति दुष्टान् इति वा । यद्वा–वर्षति कामान् । 'वृषु सेचने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । आकम्पयति पापानि । पूर्ववदिः (उ० ४।१४४) । वृषश्चासावाकपिश्च । यद्वा–वृषा इन्द्रोऽनेन कम्पते आकम्पते वा अस्मात् । यद्वा–वृषो धर्मो वृषा इन्द्रो वा कपिरिव वशे यस्य । यद्वा–वृषरूपक कपिर्वराहः । शाकपार्थिवादिः (वा० २।१।७८) । 'अन्येषामपि–' (६।३।१३७) इति दीर्घ । यद्वा– वृष्ण इन्द्रस्यार्कं वृषार्कं पिबति । 'पि गतौ' (तु० प० अ०) । अन्तर्भावितण्यर्थो वा । इन्द्रत्वं प्राप्नोति प्रापयति वा देवान् । रक्षकत्वात् । विच् (३।२।७५) संज्ञापूर्वकत्वान्न गुणः । क्विप् (३।२।७६) तु आगमशास्त्रस्यानित्यत्वान्न तुक् । पररूपस्यैष्टव्याचित्वादियङ् बाधित्वा पूर्वसवर्णदीर्घ. (६।१।१०२) पूर्वरूपे (६।१।१०७) इतः । 'वृषाकपिः पुमान् कृष्णे शंकरे जातवेदसि' (इति मेदिनी) [१०४।३०]।

बाष्पमूष्माश्रु

'बाष्पम्' (न) के भाफ, आँसू २ अर्थ हैं ।

[ बेति ]॥ बाधति । बाधृ लोडने' (भ्वा० प० से०) । वाति । 'वा गत्यादौ' (अ० प० अ०) । 'खष्पशिल्पशष्प–' (उ० ३।२८) इति साधु । [बाष्प ऊष्माश्रिजलयो.' इति हैम, २।३०१ ] ।

कशिपु त्वन्नमाच्छादनं द्वयम् ॥ १३० ॥

'कशिपुः' (पु) के अन्न, वस्त्र २ अर्थ हैं ।

[ कशीति ] ॥ कशति दुःखम् । कश्यते वा । 'कश गतिशासनयो' (अ० आ० अ०) । 'मृगय्वादित्वात् (उ० १।३७) साधु' । 'एकोक्त्या कशिपुर्भक्ताच्छादने च द्वयो' पृथक्' इति विश्व. [ १०५।१८ ] ।

तल्पं शय्याट्टदारेषु

'तल्पम्' (न) के शय्या, अटारी, स्त्री ३ अर्थ हैं ।

[ तेति ] ॥ तल्पतेऽस्मिन् । 'तल प्रतिष्ठायाम्' (भ्वा० प० से०) । 'खष्पशिल्प–' (उ० ३।२८) इति साधु । वक्ष्यमाणम्, 'अस्त्रियाम्' इति कशिपुतल्पाभ्यामपि[2] संबध्यते । अट्टः=अट्टालिका ।

1. सि० कौ० उणादिसूत्रपाठे च 'कुडिकम्प्योर्नलोपश्च' इत्येवं सूत्रं लभ्यते ।

1. विश्वे पुस्तकद्वयेऽप्युपलभ्यमानः '–भवत्याच्छा–' इति पाठो हैम–(३।४७१) मेदिनी (१०३।१८) भ्यां विसंवादाल्लेखकादिभ्रान्तिजः प्रतीयते ।

2. "द्वयं=युगपत् पृथक्त्वेन । 'कशिपू' इत्यपपाठः" इति स्वामी । हैमनाममालायां 'कसिपुर्भोजनाच्छादौ' (अभि० चिन्ताम० ३।३४९) इति दन्त्यमध्यः पुन्नपुंसकलिङ्गश्चोक्तः । वैजयन्त्यां तु 'कशिपू स्यान्नवस्त्रयो.' (पृ० १८७ श्लो० १६) इत्युक्तत्वायं शब्दः स्त्रीलिङ्गस्तालव्यम-

स्तम्बेऽपि विटपोऽस्त्रियाम् ।

'विटप' ( पु न ) के गुच्छा, विस्तार, शाखा ३ अर्थ हैं।

[ स्तम्ब इति ] ॥ वेटति, विटयते वा । 'विट आक्रोशे शब्दे' (भ्वा० प० से०) । 'विटपपिष्टपविशिपोलपा' (उ० ३।१४५) । विटप पल्लवे पिङ्गे विस्तारे स्तम्बशाखयो' इति विश्व [ १०४।१३ ]।

प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥ १३१ ॥
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च कच्छपी ।
'कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेऽशके' [ ५९ ]

'प्राप्तरूप, स्वरूप, अभिरूप' ( ३ त्रि ) के विद्वान्, मनोहर २ अर्थ हैं।

'कच्छपी' ( स्त्री ) के सरस्वतीकी वीणा, कछुही २ अर्थ हैं।

[ 'कुतप' ( पु ) के ऊनी कपड़ा, दिनका आठवाँ हिस्सा २ अर्थ हैं ]।

[ प्रेति ] ॥ प्राप्तो रूपम् । 'प्राप्तापन्ने च-' (२।२।४) इति समास । प्राप्त रूप येन। 'प्राप्तरूपो मनोरमे' (इति मेदिनी) [ १०३।२६ ]।

स्वमेव रूप यस्य । ['अभिरूपप्राप्तरूपस्वरूपा बुधरूपिणो ' इति शाश्वत , ५४४ ]।

अभिलक्ष्य रूपमस्य । 'अभिरूपो बुधे रम्ये' ( इति मेदिनी) [ १०३।२३ ]।

[कूर्मीति] ॥ कच्छे कच्छ वा पिबति । कच्छेन पाति वा । 'सुपि-' (३।२।४) इति क । 'आपोष्टक्'(३।२।८) तु न । 'पिबतेः सुरासीध्वो' इति वचनात् । 'गतिकारकोपपदा-'इति सुबुत्पत्ते प्राक् समास ।'जाते -'(४।१।६३) इति ङीष् । कच्छपी वल्लकीभेदे कुली क्षुद्रगदान्तरे'[मल्लबन्धविशेषेऽपि कच्छप ' ] इति विश्व [१०५।१६-२०] ।

इति पान्ता शब्दा ।

अथ फान्ता शब्दा ।

रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः ॥१३२॥
'शिफा शिखाया सरिति मासिकाया च मातरि [६०]
शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च [ ६१ ]
गुम्फ स्याद् गुम्फने बाहोरलङ्कारे च कीर्तितः' [६२]

'रेफ' ( पु )के रेफ अर्थात् 'र' अक्षर १ अर्थ और 'रेफ' ( त्रि ) का निन्दित १ अर्थ है।

'शिफा' ( स्त्री ) के शिखा, नदी, जटामसी, माता ४ अर्थ हैं ]।

[ 'शफम्' ( न ) के पेड़की जड़, पशुओंका खुर २ अर्थ हैं ]।

[ 'गुम्फ' ( पु ) के फूल माला आदिका गूथना, हाथका भूषण २ अर्थ हैं ]।

[ रेति ] ॥ 'रादिफ' (वा० ३।३।१०८) । रिफ्यते, रिफति वा । 'रिफ हिंसायाम्' (तु० प० से०) । घञ् (३।३।१९) । पचाद्यच् (३।१।१३४) वा [ रेफो रवर्णे सम्प्रोक्त कुत्सिते वाच्यवस्तुन ' इति विश्व , १०६।१]।

इति फान्ता शब्दा ।

अथ वा(बा)न्ता[1] शब्दा ।

अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने ।

'गन्धर्व' ( पु ) का जन्म और मरणके मध्य समयमें स्थित प्राणी, मृगविशेष, पुस्कोकिल, घोड़ा, स्वर्गके ( हाहा, हूहू आदि ) गायक ५ अर्थ हैं।

[ अन्तेति ] ॥ अन्तरा मरणजन्मनोर्मध्ये भव सत्त्व यातनाशरीरम् । यदाहु —'अन्तराभवदेहो हि नेष्यते विन्ध्यवासिनाम्' । तन्न । स्वग्रविरोधात् । तस्मादन्तरिक्षवासिनो गन्धर्वाख्या भूता । यद्व्यास -'अस्माभिर्यदनुष्ठेय गन्धर्वैस्तदनुष्ठितम्'— इति स्वामी । तच्चिन्त्यम् । 'गन्धर्व. पशुभेदे स्यात्पुस्कोकिलतुरगयो । अन्तराभवसत्त्वे च गायने खेचरेऽपि च[2]' (मेदिनी) [ १०५।११ ]

---

मध्यश्च । पर मेदिन्या कशिपुर्भक्ताच्छादनयोरेकोक्त्या पृथक् तयो पुंसि' ( १०३।१८ ) अथ पुंलिङ्ग 'तल्पमट्टे कलत्रे च शयनीये च न द्वयो' (१०२।६) इति मेदिन्या 'तल्प'शब्द क्लीबलिङ्ग । हैम(२।२९८)विश्वाभ्या(१०४।८) च 'तल्प'शब्दस्य क्लीबत्वमेवेत्यलम् ।

१ विश्वपुस्तकद्वयस्थ '—शृङ्गे—' इति पाठो हैम-(३।४७५)मेदिनी(१०३।२२)भ्या विरोधान्न समीचीन ।

२ हैमपुस्तकत्रये तु 'सुरूपस्तु बुधे रम्ये प्राप्तरूपाभिरूपवत्' इति ( ३।४७६ ) वचनेन नामरत्नमालाया च सुरूपप्राप्तरूपभिरूपा पण्डितसौम्ययो' इति ( पङ्क्ति २५१७)वचनेन च स्वरूप'शब्दस्थाने सुरूप' इति लभ्यते ।

१. बव'योरभेदस्मरणादत्र स्पर्शान्तास्थान्त स्यान्ताः शब्दा पठिता ।

२ हैमे तु 'गन्धर्वस्तु नभश्चरे । पुस्कोकिले गायने च मृगभेदे तुरगमे । अन्तराभवदेहे च' इति ( ३।७३५-७३६ ) 'गन्धर्व'शब्दोऽन्तःस्थान्तवर्ग पठ्यते ।

इत्यादौ द्वयोः पृथक् पाठात्। दृष्टान्तोऽपि विषम। दिव्यगायनानां विश्वावस्वादीनामेव तत्र ग्रहणात्। गन्धमर्दति। 'अर्द गतौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। शकन्ध्वादि. (वा० ६।१।९४)।

कम्बुर्ना वलये शङ्खे

'कम्बुः' (पु) के कङ्कण, शङ्ख, गज, घोंघा या सीप ४ अर्थ हैं।

[ केति ]॥ कम्बति। 'कम्ब गतौ' ( )। मृगय्वादिः (उ० १।३७)। 'कम्बुः शङ्खे स्त्रियां पुंसि शम्बूके वलये गजे' (इति मेदिनी) [ १०४।२ ]।

द्विजिह्वौ सर्पसूचकौ ॥ १३३॥

'द्विजिह्वः' (पु) के साँप, चुगलखोर २ अर्थ हैं।

[द्वीति]॥ द्वे जिह्वे यस्य। ['द्विजिह्वस्तु' खले सर्पे' इति मेदिनी, १०५।१२ ]।[1]

पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान्।

'चित्रपुङ्खेऽपि कादम्बो नितम्बोऽद्रितटे कटौ [ ६३ ]

दर्वी फणापि बिम्बोऽस्त्री मण्डले चाकृतौ फले' [ ६४ ]

'पूर्वः' (त्रि) का पहला (जैसे—पूर्वो ग्रामः, पूर्वं वमम, ...) १ अर्थ; 'पूर्वा' (स्त्री) पूर्व दिशा १ अर्थ और 'पूर्वे' (पु नि० ब० व०) का पुरखा (पुराने वंशवाले पुरनियाँ), ब्रह्मा २ अर्थ हैं।

['कादम्बः' (पु) के चित्र पंखवाला पक्षि-विशेष (कलहंस), बाण २ अर्थ हैं]।

['नितम्बः' (पु) के, पहाड़का किनारा, कटि २ अर्थ हैं]।

['दर्वी' (स्त्री) के साँपकी फणा, कलछुल २ अर्थ हैं]।

['बिम्बः' (पु न) के सूर्यादिका मण्डल, आकृति, प्रतिबिम्ब, बिम्बिका-फल (कुनरुन) ४ अर्थ हैं]।

[ पूर्व इति ]॥ पूर्वयति। 'पूर्व निकेतने' (चु० प० से०)। पचाद्यच् (३।१।१३४)। 'पूर्वं तु पूर्वजेषु स्युः पूर्वः[2] प्रागाद्ययोस्त्रिषु' (इति मेदिनी) [१०५।६]। प्राक् पूर्वमग्रत.' इति धरणिः।

इति वा(बा)न्ताः शब्दाः।

अथ भान्ताः शब्दाः।

कुम्भौ घटेभमूर्धांशौ

'कुम्भः' (पु) के घड़ा, हाथीके मस्तकका कुम्भ (मांसपिण्ड-विशेष), कुम्भ नामका ग्यारहवाँ राशि, वेश्या-पति, कुम्भकर्णका पुत्र ५ अर्थ हैं।

[ कुम्भाविति ]॥ कु भूमिं कुत्सितं वा उम्भति। 'उम्भ पूरणे' (तु० प० से०)। 'कर्मण्यण्' (३।२।१)। पचाद्यच् (३।१।१३४) वा। शकन्ध्वादि (वा० ६।१।९४)। 'कुम्भः स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे। राशिभेदे द्विपाङ्गे च कुम्भं त्रिवृति गुग्गुले[1]' इति विश्वः [ १०८।१९ ]।

डिम्भौ तु शिशुबालिशौ ॥ १३४॥

'डिम्भ' (पु) के बालक, मूर्ख २ अर्थ हैं।

[ डिम्भाविति ]॥ डिम्भयति। 'डिभि संघाते' चुरादि। पचाद्यच् (३।१।१३४)। [ 'डिम्भो मूर्खेऽर्भकबालयो' इति हैम, २।३१३ ]।

स्तम्भौ स्थूणाजडीभावौ

'स्तम्भः' (पु) के खम्भा, जड़ता २ अर्थ हैं।

[स्तम्भाविति]॥ स्तभ्नाति। 'स्तम्भु रोधने'(सौत्रः) [३।१।८२]। पचाद्यच् (३।१।१३४)। भावे घञ् (३।३।१८) वा। [ स्तम्भः स्थूणाजडत्वयो' इति मेदिनी, १०६।१० ]।

शंभू ब्रह्मत्रिलोचनौ।

'शम्भुः' (पु) के ब्रह्मा, शिव, पूज्य ३ अर्थ हैं।

[शमिति]॥ शं भवति। 'भू सत्तायाम्'(भ्वा० प० से०) 'प्राप्तौ' (चु० आ० से०) वा। अन्तर्भावितण्यर्थ.। मितद्र्वादित्वात् (वा० ३।२।१७८) डु। शम्भुः पुंसि महादेवे परमेष्ठिनि चार्हति'(इति मेदिनी) [ १०६।८ ]। विष्णौ[2] च।

कुक्षिभ्रूणार्भका गर्भाः

'गर्भः' (पु) के कुक्षि (कोख), गर्भमें रहनेवाला बच्चा या गर्भ, बालक ३ अर्थ हैं।

[ कुक्षीति ]॥ गिरति। 'गॄ निगरणे' (तु० प० से०)। गृणाति, गीर्यते वा। 'गॄ शब्दे' (क्र्या० प० से०)।

१. हैमे तु 'द्विजिह्वः खलसर्पयोः' इति ( ३।७३८ ) 'द्विजिह्व.' शब्दोऽन्तःस्थान्तवर्णः पठितः।

२.'पूर्व'शब्दोऽपि हैमे 'पूर्वं तु पूर्वजे। प्रागग्रे श्रुतिभेदे च' इति(३।५४४-५४६)अन्तःस्थान्तवर्णान्त एव पठ्यते। विश्वे त्विमे त्रयो 'गन्धर्व-द्विजिह्व-पूर्व'शब्दाः पवर्गान्ता एव पठ्यन्ते।

१. विश्वे 'वेश्यासुते······गुग्गुलौ' इति पाठः।

२. 'शम्भुर्धातृहरीशेषु' इति ( पंक्ति ७०६ ) नाममालोक्तेः।

'अतिगृभ्या भन्' (उ० ३।१५२)। 'गर्भो भ्रूणेऽर्भके कुक्षौ सधौ पनसकण्टके' (इति मेदिनी) [ १०६।३ ]।

विस्रम्भ प्रणयेऽपि च ॥ १३५ ॥

'विस्रम्भ' ( पु ) के श्रृङ्गार-याचना, विश्वास, प्रेम, वध ४ अर्थ हैं।

[ वीति ]॥ विस्रम्भणम्। विस्रभ्यतेऽनेन वा। 'स्रम्भु विश्वासे' (भ्वा० आ० से०)। घञ् (३।३।१८)। 'विस्रम्भ केलिकलहे विश्वासे प्रणये वधे' इति विश्व [१०९।२८]। परिचयप्रार्थनयो प्रणय परिकीर्तित' इत्यमरमाला।

स्याद्भेर्यां दुन्दुभि पुंसि स्यादक्षे दुन्दुभि स्त्रियाम्।

'दुन्दुभि' ( पु ) के भेरी बाजा, वरुण, दुन्दुभि नामक दैत्य ३ अर्थ और 'दुन्दुभि' ( स्त्री ) का लड़कोंका खिलौना विशेष, चतका पासा २ अर्थ है।

[ स्यादिति ]॥ दुन्दु' इति शब्देन उभति। 'उभ पूरणे (तु० प० से०)। इगुपधात् कित्' (उ० ४।१२०) इतीन्। शकन्ध्वादि (वा० ६।१।९४)। यद्वा-'दुन्द्' इति हृलन्त्यस्यैवानुकरणम्।'दुन्दुभि पुमान्। वरुणे दैत्यभेर्योश्च, स्त्र्यक्षे बिन्दुत्रिकद्वये[1]' (इति मेदिनी) [१०७।१६-१७]।

स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ॥१३६॥

'कुसुम्भम्' ( न ) के बर्रे ( कुसुम ) का फूल, सोना २ अर्थ और 'कुसुम्भ' ( पु ) का कमण्डलु १ अर्थ है।

[ स्यादिति ]॥ कुपुम्भ्यति, अनेन वा। 'कुसुम्भ क्षेपे' (कण्ड्वादि)। पचाद्यच (३।१।१३४)। 'हलश्च' (३।३।१२१) इति घञ वा। पृषोदरादि (६।३।१०९)। 'कुसुम्भ हेमनि महारजने ना कमण्डलौ' (इति मेदिनी) [१०७।१५]।

क्षत्रियेऽपि च नाभिर्ना

'नाभि' ( पु ) के क्षत्रिय, विजनेन्द्रक या प्रधान राजा, पहियेके पीछेवाला भाग ३ अर्थ और 'नाभि' ( स्त्री ) कस्तूरीका मद १ अर्थ है।

[ क्षति ]॥ नभ्यत। 'णभ हिंसायाम् (भ्वा० आ० से०)। 'इसजादिभ्य ' (वा० ३।३।१०८)। यद्वा-नाभयति। स्वार्थण्य तात् 'अच इ.' (उ० ४।१३९)। 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययो पुमान। द्वयो प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' (इति मेदिनी) [१०६।५-६]।

सुरभिर्गवि च स्त्रियाम्।

'सुरभि' ( स्त्री ) का गौ १ अर्थ, 'सुरभि' ( पु ) के वसन्त ऋतु, जातीफल, चम्पा ३ अर्थ और 'सुरभि' ( त्रि ) के सुगंधित, मनोहर २ अर्थ हैं।

[ सुरेति ]॥ सुष्ठु रमते, रम्यते वा। 'रभ रामस्ये' (भ्वा० आ० अ०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। 'सुरभि शल्लकीमातृभिन्सुरागोपु योषिति। चम्पके च वसन्ते च तथा जातीफले पुमान्। स्वर्णे गन्धोत्पले क्लीब सुगन्धिकान्तयोस्त्रिषु। ( विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्') (इति मेदिनी) [१०७।२२ २४]।

सभा संसदि सभ्ये च

'सभा' ( स्त्री ) के सभा, द्यूत, मन्दिर ३ अर्थ हैं।

[ सभेति ]॥ सह भान्ति ये, यस्या वा। 'भा दीप्तौ' (अ० प० अ०)। सुपि-' (३।२।४) इति क। 'अन्येष्वपि-'(वा० ३।२।१०२)इति डो वा। 'स्त्रिया सामाजिके गोष्ठ्या द्यूतमन्दिरयो सभा' इति रभस। [ 'सभा सामाजिके गोष्ठ्या द्यूतमन्दिरयोरपि' इति मेदिनी, १०६।९ ]।

त्रिष्वध्यक्षेऽपि वल्लभ ॥ १३७ ॥

'वल्लभ' ( त्रि ) के अध्यक्ष, प्रिय २ अर्थ हैं।

[त्रीति]॥ वल्लते वल्ल्यते वा। 'वल्ल संवरणे सञ्चरणे च' (भ्वा० आ० से०)। 'रासिवल्लिभ्या च ( उ० ३।१२५) इत्यभच्। 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे' (इति मेदिनी) [ १०७।१८ ]।

इति भान्ता शब्दा।

*अथ मान्ता शब्दा।*

किरणप्रग्रहौ रश्मी

'रश्मि' ( पु ) के किरण, रस्सी २ अर्थ हैं।

[ किरनि ]॥ अश्नुते अनेन वा। 'अशू व्याप्तौ' (स्वा० आ० से०)। 'अश्नोते रश च' (उ० ४।४६) इति मि [रश च]। 'रश्मि पुमान दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि' (इति मेदिनी) [ ११०।२५ ]।

कपिभेकौ प्लवंगमौ।

'प्लवङ्गम' ( पु ) के बन्दर, मेढक २ अर्थ है।

[ कपीति ]॥ प्लवेन प्लुत्या गच्छति। 'गमश्च' (३।२।४७) इति खच। [प्लवगमस्तु मण्डूके तथा शाखामृगेऽपि च' इति मेदिनी, ११२।६१ ]।

१ '—स्त्र्यक्षबिन्दु—' इति मेदिनीपाठ।

इच्छामनोभवौ कामौ

'कामः' ( पु ) के इच्छा, कामदेव, काम्य ३ अर्थ हैं।

[ईति]॥ कमनम् । कम्यते वा । 'कमु कान्तौ' (भ्वा० आ० से०) । घञ् (३।३।१८, १९) । 'कामः स्मरेच्छयो पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्' (इति मेदिनी) [१०८।५ ] ।

शौर्योद्योगौ पराक्रमौ ॥ १२८ ॥

'पराक्रमः' ( पु ) के सामर्थ्य, उद्योग २ अर्थ हैं।

[ शौरिति ]॥ पराक्रमणम् । अनेन वा । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । घञ् (३।३।१८, १२१) । नोदात्तोपदेशस्य-' (७।३।३४) इति न वृद्धिः । 'पराक्रमः स्यात्सामर्थ्ये विक्रमोद्यमयोरपि' (इति मेदिनी[1]) [विश्व, ११४।५५ ] ।

धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।

'धर्मः' (पु न) के पुण्य ( यज्ञ, अहिंसा आदि ), आचार (जैसे-धर्मशास्त्र, आदि ), स्वभाव, उपक्रम, उपनिषत्, न्याय ( जैसे-धर्माधिकारी, धर्माध्यक्ष, .. ) ६ अर्थ और 'धर्मः' ( पु ) के यमराज, सोमलताका पान करनेवाला, जिन ३ अर्थ हैं।

[ धर्मा इति ] ॥ धरति, ध्रियते वा । 'धृञ् धारणे' ( भ्वा० उ० अ० ) । 'अर्तिस्तुसु-' (उ० १।१४०) इति मन् ।'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' (इति मेदिनी) [१०९। १६] ।

उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ॥ १२९ ॥

'उपक्रमः' ( पु )के उपायको सोचकर किया हुआ आरम्भ, मन्त्रीके शीलकी परीक्षा करनेका उपाय, चिकित्सा, घूस ४ अर्थ हैं।

[ विति ] ॥ उपधा = उत्कोच । उपक्रमणम् । अनेन वा । पूर्ववत् (३।३।१८, १२१, ७।३।३४) । 'उपक्रमः स्यादुपधाचिकित्सारम्भविक्रमे' इति विश्व [११४।९५] ।

वणिक्पथः पुरं वेदो निगमाः

'निगमः' (पु) के वाणिज्य, पुर (ग्राम), वेद ३ अर्थ हैं।

[ वेति ] ॥ निगम्यते, अनेन वा । 'गोचरसंचर-' (३।३।११९) इति साधु. । 'निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे' इति विश्व [ ११३।४२ ] ।

नागरो वणिक् ।

नैगमौ द्वौ

'नैगमः' ( त्रि ) के वेद-सम्बन्धी, नगरवासी २ अर्थ और 'नैगमः' ( पु ) के उपनिषद्, बनियां २ अर्थ हैं।

[ नेति ] ॥ निगमे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । 'नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च' इति विश्व [ ११३।४२ ] ।

बले रामो नीलचारुसिते त्रिषु ॥ १४० ॥

'रामः' ( पु ) के बलदेवजी, परशुरामजी, रामचन्द्रजी ३ अर्थ और 'राम' ( त्रि ) के नीला, सुन्दर, सफेद, बामीचा ४ अर्थ हैं।

[ बेति ] ॥ रमते । अनेन वा । 'रमु क्रीडायाम्' (भ्वा० आ० अ०) । 'ज्वलितिकसन्तेभ्यो णः' ( ३।१। १४०)। 'हलश्च'(३।३।१२१) इति घञ् वा । 'रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे च सितश्वेतमनोज्ञेषु च वाच्यवत्' इति विश्व [ १११।२१ ] ।

शब्दादिपूर्वो वृन्देऽपि ग्रामः

'ग्रामः' ( पु ) के शब्दके आदि ( पूर्व ) में रहे तो समूह (जैसे—शब्दग्रामः' गुणग्राम), गांव, स्वरविशेष ३ अर्थ हैं।

[ येति ] ॥ ग्रसते, ग्रस्यते वा । 'ग्रसु अदने' (भ्वा० आ० से०)। 'ग्रसेरा च' (उ० १।१४३) इति मः । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः' [ रामाऽङ्गनाहिंगुलिन्यो रामं वास्तुककुष्ठयोः' ] इति विश्व [ १११।२१-२२ ] ।

क्रान्तौ च विक्रमः ।

'विक्रमः' ( पु ) के क्रान्ति, पराक्रम २ अर्थ हैं।

[ क्रेति ] ॥ विक्रमणम् । अनेन वा । घञ् ( ३।३। १८, १२१) । 'विक्रमः शक्तिसंपत्तिः क्रान्तिमात्रं च विक्रमः' इति धरणिः । ['विक्रमः क्रान्तिमात्रे स्या द्विक्रमः शक्तिसंपदि' इति विश्व, ११३।३७] ।

स्तोमः स्तोत्रेऽध्वरे वृन्दे

'स्तोमः' ( पु ) के स्तोत्र, यज्ञ, समूह ३ अर्थ हैं।

[ स्तविति ] ॥ स्तूयते । अनेन वा । 'ष्टुञ् स्तुतौ' (अ० उ० अ०) । 'अर्तिस्तुसु-' ( उ० १।१४० ) इति मन् ।

जिह्मस्तु कुटिलेऽलसे ॥ १४१ ॥

उष्णेऽपि घर्मश्चेष्टालङ्कारे भ्रान्तौ च विभ्रमः[1] ।

1. मेदिन्यां तु 'पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि' इति (११२।६१) भिन्न एव पाठः ।

1. 'उष्णेऽपि''''''विभ्रमः' इत्यंशो भा० दी० नैव व्याख्यातः ।

पर्जन्यौ रसदब्देन्द्रौ

'पर्जन्य' ( पु ) के मेघ, इन्द्र, मेघका गर्जन २ अर्थ हैं।

[पर्जेति] ॥ पिपर्ति । 'पृ पालनपूरणयोः' (जु० प० से०)। पर्षति । पृषु सेचने' (भ्वा० प० से०) । 'पर्जन्य' (उ० ३।१०३) इति साधु। 'पर्जन्यो मेघशब्देऽपि ध्वनद म्बुदशक्रयो' इति विश्व [१२१।८३, मे० ११९।९१ च]।

स्यादर्यः स्वामिवैश्ययोः ॥ १४६ ॥

'अर्य' ( पु ) के स्वामी, वैश्य २ अर्थ हैं।

[स्यादिति] ॥ अर्यते । ऋ गतौ' (भ्वा० प० से०)। 'अर्य स्वामिवैश्ययोः' ( ३।१।१०३ ) इति साधु [ 'अर्यः स्वामिनि वैश्य च' इति विश्व, ११६।१७ ]।

तिष्यः पुष्ये कलियुगे

'तिष्य' ( पु ) के पुष्य नामका आठवा नक्षत्र, कलियुग २ अर्थ हैं।

[ तीति ] ॥ त्वेषति । त्विष दीप्तौ' ( भ्वा० उ० अ० ) । क्यादि (उ० ४।११२) । 'तिष्य कलियुगे ऋक्षे तिष्या धात्री च कीर्त्यते' इति धरणि । [ 'तिष्य पुष्ये कलौ धात्र्या ,तिष्या पुष्यवदिष्यते' इति विश्व, ११९।५१ ]।

पर्यायोऽवसरे क्रमे ।

'पर्याय' ( पु ) के अवसर, क्रम, प्रकार, निर्माण ४ अर्थ हैं।

[पर्येति] ॥ पर्ययणम् । इण् गतौ' (अ० प० अ०)। 'परावनुपात्यये—' ( ३।३।३८ ) इति घञ् । 'पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे' इति विश्व [१२१।७५]।

प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ॥ १४७ ॥
रन्ध्रे शब्दे

'प्रत्यय' ( पु ) के अधीन, शपथ, विश्वास, कारण, आचार, प्रसिद्ध, छिद्र, प्रत्यय (जैसे—सन्, क्यप्, तिप्, तस्, झि, सु, औट्, जस्, ) ८ अर्थ हैं।

[प्रेति]॥ प्रत्ययनम् । प्रतीयतेऽनेन वा। प्रत्येति, इति वा । 'एरच्' (३।३।५६) । 'पुंसि—' (३।३।११८) इति घो वा। पचाद्यच् ( ३।१।१३४ ) वा। 'प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु । प्रथितत्वे च 'सत्तादावधीनज्ञानयोरपि' [अतिक्रमे च दण्डे च विनाशे दोषकृच्छ्रयो' इति विश्व १२०।६९ ७०]।

१. 'सनादौ चाप्यधीन—' इति पाठो दिश्वे ।

अथानुशयो दीर्घद्वेषानुतापयो ।

'अनुशय' ( पु ) के बड़ा द्वेष, पछतावा २ अर्थ हैं।

[अथेति] ॥ अनुशयनम् । अनेन वा । शीङ् स्वप्ने' ( अ० आ० से० ) । 'एरच्' ( ३।३।५६ ) । पुंसि—' (३।३।११८) इति घो वा । 'भवदनुशयो द्वेषे पश्चात्तापानुबन्धयो' इति विश्व [ १२३।१०६ ]।

स्थूलोच्चयस्त्वसाकल्ये गजानां मध्यमे गते ॥१४८॥

'स्थूलोच्चय' ( पु ) के असपूर्णता, हाथियोंका मध्यम गतिसे चलना, चट्टान ३ अर्थ हैं।

[स्थूलेति] ॥ उच्चयनम् । 'चिञ् चयने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) । स्थूलस्योच्चय । 'स्थूलोच्चयस्त्वसाकल्ये गण्डोपलकरण्डयो' [गजानां मध्यमगतौ स्थूलोच्चय उदाहृत'] इति विश्व [१२४।११६]।

समयाः शपथाचारकालसिद्धान्तसंविदः ।

'समय' (पु) के शपथ, आचार, काल, सिद्धान्त, भाषा, बुद्धि, निर्देश, सङ्केत ८ अर्थ हैं।

[सेति] ॥ समयनम् । समीयतेऽत्र, अनेन वा, समेति वा । इण् गतौ' (अ० प० अ०) । 'इ गतौ' (भ्वा० प० से० ) वा । एरच्' ( ३।३।५६ ) । पुंसि—' ( ३।३।११८) इति घो वा । पचाद्यच् (३।१।१३४) वा। 'समयः शपथाचारसिद्धान्तेषु तथा चिदि । क्रियाकारे च निर्देशे सङ्केते कालभाषयो' (इति मदिनी) [१२०।१११]।

व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ॥ १४९॥

'अनय' (पु) के बुरी आदत, दुर्भाग्य, विपत्ति, अन्याय ४ अर्थ हैं।

[व्येति] ॥ व्यसन = स्त्रीद्यूतपानादि । अशुभ दैवविशेषणम् । न नयनम्. अनेन वा. अत्र वा । णीञ् प्रापणे (भ्वा० उ० अ०) । 'एरच्' (३।३।५६) । विरोधे नञ्। अयाच्छुभावहविधेरन्य । 'अनयस्तु विपद्दैवाशुभयोर्व्यसनेषु च' (इति मेदिनी) [११७।६७]।

अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽपि

'अत्यय' ( पु ) के उल्लङ्घन, कष्ट, दोष, दण्ड, बड़ा उत्पात ५ अर्थ हैं।

[ एति ] ॥ अत्ययनम् । अनेन वा । 'इण् गतौ (अ० प० अ०) । 'एरच्' (३।३।५६) । 'अत्ययोऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयो' इति धरणि । [ अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयो' इति मेदिनी, ११७।६७]।

अथापदि ।
युद्धायत्यो सम्परायः

'सम्पराय' ( पु ) के युद्ध, आपत्ति, उत्तर काल ३ अर्थ हैं।

[ युद्धेति ] ॥ संपरायणम् । 'इण् गतौ' (अ० प० अ०) । पूर्ववत् ( ३।३।५६ ) । संपरायः समीके स्यादापदुत्तरकालयोः' (इति मेदिनी) [१२२।१२९] ।

पूज्यस्तु श्वशुरेऽपि च ॥ १५० ॥

'पूज्यः' ( पु ) के श्वशुर, पूजा करने योग्य २ अर्थ हैं।

[ज्विति] ॥ पूजयितुमर्हः । 'पूज पूजायाम्' (चु० प० से०) । 'अर्हे कृत्यतृचश्च' ( ३।३।१६९ ) इति यत् । 'पूज्यो श्वशुरपूजार्हौ' इति धरणि. । ['पूज्य. श्वशुरवन्द्ययो' इति हैम, २।३७५] ।

पश्चाद्वस्थायिबलं समवायश्च संनयौ ।

'सनय.' ( पु ) के सेनाके पीछे रहनेवाली सेना, समूह २ अर्थ हैं।

[ पेति ] ॥ संनयनम् । संनीयते वा, सनयति वा । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । 'एरच्' (३।३।५६) पचाद्यच् (३।१।१३४)वा । ['सनयस्तु समवायानुगम्ययोः। सामर्थ्ययोग्यताशक्त्यो.' इति हैम , ३।५४३] ।

संघाते संनिवेशे च संस्त्यायः

'संस्त्यायः' ( पु ) के समूह, स्थान-विशेष, विस्तार ३ अर्थ हैं।

[सेमिति] ॥ संस्त्यानम् । 'ष्ट्यै स्त्यै शब्दसघातयोः' (भ्वा० प० अ० ) । घञ् ( ३।३।१८ ) । 'आतो युक्-' (७।३।३३)। 'संस्त्याय' संनिवेशे च संघाते[1] विस्तृतावपि' (इति मेदिनी) । [१२०।११०] ।

प्रणयास्त्वमी ॥ १५१ ॥

विश्रम्भ[1]याच्ञाप्रेमाणः

'प्रणयः' ( पु ) के विश्वास, याचना, प्रेम, परिचय ४ अर्थ हैं।

[प्रेति] ॥ प्रणयनम् । 'णीञ्' [प्रापणे] (भ्वा० उ० अ०) ।'एरच्' (३।३।५६)। 'प्रणय. प्रसरे प्रेम्णि (याच्ञाविश्रम्भयोरपि । निर्वाणेऽपि)'(इति मेदिनी)[११९।८९]। 'विश्रम्भः स्यात्परिचये विश्वासविप्रलम्भयो ' इत्यजयः ।

विरोधेऽपि समुच्छ्रयः ।

'समुच्छ्रयः' ( पु ) के विरोध, ऊँचाई २ अर्थ हैं।

[वोति] ॥ सुष्ठु ऊर्ध्वं श्रयणम् । 'श्रिञ् सेवायाम्' ( भ्वा० उ० से० ) । 'एरच्' (३।३।५६) 'वैरोन्नत्योः समुच्छ्रय ' इति रभसः । ['समुच्छ्रयः समुत्सेधे विरोधेऽपि समुच्छ्रय.' इति हैमः, ४।१०७] ।

विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥ १५२ ॥

'विषय.' ( पु ) के देश, स्थान, कर्णादि इन्द्रियोंके शब्दादि विषय ३ अर्थ हैं।

[विषेति] ॥ विसयनम् । अत्र वा, विसिनोति वा । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) । 'पुंसि-' ( ३।३।११८ ) इति घो वा । पचाद्यच् ( ३।१।१३४ ) वा । 'परिनिविभ्य. सेवसितसय-' (८।३।७०) इति ष. । 'विषयो गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान्' (इति मेदिनी ) । [ १२०।१०६ ] ।

निर्यासेऽपि कषायोऽस्त्री

'कषायः' ( पु न ) के काढ़ा, कषाय रस, गेरुआ रंग ३ अर्थ हैं।

[ निरिति ] ॥ निर्यास = क्वाथ. । कषति कण्ठम् । 'कष हिंसायाम्' ( भ्वा० प० से० ) । बाहुलकादयः । 'कषायो रसभेदे स्यादङ्गरागे विलेपने । निर्यासे च कषायोऽथ सुरभौ लोहितेऽन्यवत्' इति विश्व [१२०।७३] ।

सभायां च प्रतिश्रयः ।

'प्रतिश्रय.' ( पु ) के सभा, आश्रय २ अर्थ हैं।

[सेति] ॥ प्रतिश्रयणम् । अत्र वा । 'श्रिञ्' [सेवायाम्] ( भ्वा० उ० से० ) । 'एरच्' ( ३।३।५६ ) । घः (३।३।११८) वा । 'प्रतिश्रय सभायां चाश्रये[1]ऽभ्युपगमेऽपि च' (इति मेदिनी) [१२१।१२२] ।

प्रायो भूम्न्यन्तगमने

'प्रायः' ( पु ) के अधिकतर, मृत्यु, अनशन, तुल्य ४ अर्थ हैं।

[ प्रेति ] ॥ प्रायणम् । 'अय गतौ' ( भ्वा० आ० से० ) । घञ् (३।३।१८) । 'इण् गतौ' (अ० प० से०)। 'एरच्' ( ३।३।५६ ) वा । 'प्रायश्चानशने मृत्यौ प्रायो[2] बाहुल्यतुल्ययो.' इति विश्वः [११५।९] ।

मन्युर्दैन्ये क्रतौ क्रुधि ॥ १५३ ॥

'मन्युः' ( पु ) के दीनता, यज्ञ, क्रोध ३ अर्थ हैं।

---

१. मेदिन्यां '—संस्थाने—' इति पाठः ।

१. 'विस्रम्भ—' इति पाठान्तरम्।

१. मेदिन्या '—चाश्रये' इत्यनन्तरं 'प्रतिभयं भये' इति पाठः, स च 'प्रतिभय'शब्दार्थक इति न प्रकृतोपयुक्तः।

२. विश्वे '—मृत्यौ तुल्यबाहुल्ययोरपि' इति पाठः ।

[मेति]॥ मन्यते । 'मन ज्ञाने' (दि० आ० अ०)। मृगय्वादि (उ० १।३७)। 'मन्यु पुमान् क्रुधि। दैन्ये शोके च यज्ञे च' (इति मेदिनी) [ ११६।४५ ]।

रहस्योपस्थयोर्गुह्यम्

'गुह्यम्' (न) के रहस्य, उपस्थ (योनि, लिङ्ग) २ अर्थ हैं।

[ रहेति ]॥ गूहनम्। गुह्यते वा। 'गुहू संवरणे' (भ्वा० आ० से०)। शासिदुहि-' इति क्यप्[1]। 'गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयो' इति विश्व [११६।१८]।

सत्यं शपथतथ्ययोः।

'सत्यम्' (न) के शपथ, सत्य २ अर्थ हैं।

[सेति]॥ सति साधु। तत्र साधु' (४।४।९८) इति यत्। 'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति' (इति मेदिनी) [ ११७।६१ ]।

वीर्यं बले प्रभावे च

'वीर्यम्' (न) के बल, प्रभाव, तेज, शुक्र (पुरुषका धातु) ४ अर्थ हैं।

[ वीर्यमिति ] वीर्यतेऽनेन। 'वीर विक्रान्तौ' (चु० उ० से०)। 'अचो यत्' (३।१।९७) वीरे साधुर्वा। 'तत्र साधु' (४।४।९८) इति यत्। 'वीर्यं प्रभावे शुक्रे च तेजःसामर्थ्ययोरपि' (इति मेदिनी) [११५।४१]।

द्रव्य भव्ये गुणाश्रये॥ १५४॥

'द्रव्यम्' (न) के भव्य (योग्य), गन्ध आदि गुणका आश्रय-पृथिवी, जल, आदि, धन, विलेप, ओषधि ५ अर्थ हैं।

[ द्रेति ]॥ द्रोरिदम्। 'द्रव्यं च भव्ये' (५।३।१०४) इति साधु। 'द्रव्यं स्याद्द्रविणे भव्ये पृथिव्यादौ च पित्तले। भेषजे च विलेपे च जतुद्रुमविशेषयो[2]' इति विश्व [ ११७।३४-३५ ]।

१ 'ह्रस्वस्य पिति कृति तुक्' (६।१।७१) इति सूत्रविवरणे "शासिदुहिगुहिभ्यो वा' इति काशिका। शास्यम्-शास्यम्। दुह्यम्—दोह्यम्। गुह्यम्-गोह्यम्। 'प्रशस्यस्य श्र' (५।३।६०) 'ईडवन्दवृशंसदुहां ण्यत' (६।१।२१४) इति सूत्रद्वयवलाच्छसे सिद्धम्। इतरयोस्तु मुलं मृग्यम्" इति सि० कौ०वचनात् अत्र ण्यत्प्रत्यय सज्ञापूर्वकत्वाद्गुणाभावश्च बोध्य।

२ विश्वे '—च निवेशे च जतुद्रुमविकारयो' इति पाठ।

धिष्ण्यं स्थाने गृहे भेऽग्नौ

'धिष्ण्यम्' (न) के स्थान, गृह, नक्षत्र, अग्नि, शक्ति ५ अर्थ हैं।

[ धीति ] धिष्यते। धिष शब्दे' (जु० प० से०) धृष्णोति वा। 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०)। 'सानसिवर्णसि–'(उ० ४।१०७) इति साधु। यत्तु 'धष्या-दयश्च' इति य –इत्युक्त मुकुटेन। तदेतत्सूत्रास्मरणमूलकम्, निर्मूलं च। 'धिष्ण्यं स्थानाग्निसद्मसु। शक्तावृक्षेऽपि' (इति मेदिनी)। [ ११५।३३-३४ ]।

भाग्यं कर्म शुभाशुभम्।

'भाग्यम्' (न) के पूर्व जन्मका किया शुभाशुभ कर्म, ऐश्वर्य २ अर्थ हैं।

[ भेति ]॥ भज्यतऽनेन। 'भज सेवायाम्' (भ्वा० उ० अ०)। 'ऋहलोर्ण्यत्' (३।१।१२४)। 'चजो —' (७।३।५२) इति कुत्वम्। 'भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि' इति विश्वः [ ११६।२१]।

कशेरु[1]हेम्नोर्गाङ्गेयम्

'गाङ्गेयम्' (न) के कशेरू, सुवर्ण २ अर्थ और 'गाङ्गेय' (पु) का भीष्म पितामह १ अर्थ है।

[ गेति ]॥ गङ्गाया अपत्यम्। 'शुभ्रादिभ्यश्च' (४।१।१२३) इति ढक्। 'गाङ्गेय स्यात्पुमान्भीष्मे क्लीब स्वर्णकशेरुणो' (इति मेदिनी) [ ११८।८१ ]।

विशल्या दन्तिकापि च॥ १५५॥

'विशल्या' (स्त्री) के दन्ती (ओषधि-विशेष), आगकी लपट, गुडूच, त्रिपुटा ओषधि ४ अर्थ हैं।

[वीति] विगता शल्यात्। विगत शल्यं यस्या वा। 'विशल्याऽग्निशिखादन्तीगुडूचीत्रिपुटासु च' (इति मेदिनी) [ १२०।१०७ ]।

वृषाकपायी श्रीगौर्योः

'वृषाकपायी' (स्त्री) के लक्ष्मीजी, पार्वतीजी, जीवन्ती नामका ओषधि-विशेष, शतावर ४ अर्थ हैं।

[वृति]॥ वृषाकपे स्त्री। वृषाकप्यग्नि—' (४।१।३७) इति ङीप्, ऐ च। 'वृषाकपायी श्रीगौरीवरीजीवन्तिकासु च' (इति मेदिनी) [ १२२।१३४ ]।

अभिख्या नामशोभयो।

'अभिख्या' (स्त्री) के नाम, शोभा, यश ३ अर्थ हैं।

१ 'कशेरु—' इति पाठान्तरम्।

[अभीति] ॥ अभिख्यानम् । 'ख्या प्रकथने' ( अ० प० अ० ) चक्षिङादेशो वा । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । 'अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि' ( इति मेदिनी ) [ ११७।६९ ]।

**आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥१५६॥**
**उपायः कर्मचेष्टा च चिकित्सा च नव क्रियाः ।**

'क्रिया' (स्त्री) के कार्य, प्रायश्चित्त, शिक्षा, पूजा, विचार, साम आदि चार उपाय, काम, चेष्टा, रोग आदिकी चिकित्सा ९ अर्थ हैं।

[एति] ॥ निष्कृतिः = प्रायश्चित्तम् । संप्रधारणम् = विचारः । उपायः = सामादि । चेष्टा = परिस्पन्द । करणम् । भावादौ 'कृञ' श च' (३।३।१००) । 'क्रिया कर्मणि चेष्टायां करणे संप्रधारणे । ( आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि)' इति विश्वः [ ११९।६०-६१ ]।

**छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ॥ १५७ ॥**

'छाया' ( स्त्री ) के सूर्यकी स्त्री, शोभा, प्रतिबिम्ब, छांह ४ अर्थ हैं।

[ छेति ] ॥ छ्यति । 'छो छेदने' (दि० प० अ०) । 'श्याद्व्यधा–' (३।१।१४१) इति ण । आतो युक्–' (७।३।३३) । यद्वा– 'माछाशसिभ्यो यः' ( उ० ४।१०९ ) । 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः' [ पालनोत्कोचयोर्दीप्तिसच्छोभापङ्क्तिषु स्त्रियाम्' ( इति मेदिनी ) [ ११४।२३-२४ ]।

**कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ।**

'कक्ष्या' ( स्त्री ) के राजगृह आदिकी ड्योढ़ी, करधनी, हाथियोंका हौदा गद्दा आदि कसनेकी डोरी ३ अर्थ हैं।

[ केति ] ॥ कक्षे भवा । 'शरीरावयवात्–' ( ४।३।५५ ) इति यत् । 'कक्ष्या बृहतिकायां स्यात् ( काञ्च्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे च )' ( इति यान्तेषु मेदिनी ) [ ११३।१० ]।

**कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥ १५८ ॥**

'कृत्या' ( स्त्री ) के क्रिया, 'मारी' नामक देवताविशेष २ अर्थ और 'कृत्या' ( त्रि ) के धन स्त्री भूमि आदिसे शत्रुका भेद्य ( फोड़ने योग्य ) पुरुष आदि, कार्य २ अर्थ हैं।

[क्रिति] ॥ करणम् । 'कृञः श च' ( ३।३।११० ) इति चात् क्यप् । कृत्यते । 'कृती छेदने' ( तु० प० से० )। 'ऋदुपधात्' ( ३।१।११० ) इति क्यप् । 'कृत्यो विद्विषि कार्ये च कृत्या क्रियादिवौकसोः' इति रभस. । ['कृत्याऽपि देवताभेदे कृत्या स्तव्यादिषु स्मृता' इति विश्व [ ११९।२७ ]।

**जन्यः स्याज्जनवादेऽपि**

'जन्यः ( न )' के जनापवाद, उत्पात, युद्ध ३ अर्थ हैं।

[ जेति ] ॥ जनानां वाद । 'मतजनहलात्–' ( ४।४।९७) इति यत् । यद्वा–जायते । जनयति वा । 'ऋहलो॰ र्ण्यत्' ( ३।१।१२४ ) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धि । 'अचो यत्' ( ३।१।९७ ) वा । जनी वहति । 'संज्ञायां जन्या' ( ४।४।८२ ) इति वा साधु । 'जन्या मातृवयस्या स्याज्जन्या जनीवरप्रिया । जननीजनयित्रोश्च जन्य निर्वादयुद्धयो ' इति धरणि । [ जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्य स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययो । वरस्निग्धे' इति मेदिनी, ११४।२५–२७ ]

**जघन्योऽन्त्येऽधमेऽपि च ।**

'जघन्यः' ( त्रि ) के अन्त, नीच, निन्दित, शिश्न ( लिङ्ग ) ४ अर्थ हैं।

[ जेति ] ॥ जघने भव । 'शरीरावयवात्–' ( ४।३।५५ ) इति यत् । यद्वा–कुटिलं हन्यते । हन्तेर्यङन्तात् 'अचो यत्' ( ३।१।९७ ) । 'अनित्यमागमशासनम्' इति 'नुगत –' (७।४।८५) इति न नुक् । 'जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत्' इति विश्व [ १२१।८२ ]।

**गर्ह्याधीनौ[1] च वक्तव्यौ**

'वक्तव्य' ( त्रि ) के निन्दित, हीन, कहने योग्य ( निन्द्य ) ३ अर्थ हैं।

[ गर्ह्येति ] । वचनार्ह । 'वच परिभाषणे' ( अ० प० अ० ) । ब्रूञ् आदेशो वा । तव्य ( ३।१।९६ ) । 'वक्तव्य कुत्सिते हीने वचनार्हे च वाच्यवत्' ( इति मेदिनी) [ १२०।१०४ ]।

**कल्यौ सज्जनिरामयौ ॥ १५९ ॥**

'कल्यः' ( त्रि ) के उपाय–युक्त ( तैयार, सजा हुआ ), नीरोग २ अर्थ हैं।

[ केति ] ॥ कलासु साधु । 'तत्र साधुः' ( ४।४।९८ ) इति यत् । यद्वा–कल्यते । 'कल गतौ सख्याने च' चुरादिरदन्तः । 'अचो यत्' (३।१।९७) । 'कल्यं प्रभाते क्लीब स्यात् कल्यो वाक्श्रुतिवर्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च । उपायवचनेऽपि स्यात् ( त्रिषु, मद्ये

1. 'गुह्याधीनौ—' इति पाठान्तरम् ।

तु यमिति )' (इति मेदिनी) [ ११३।८-९ ]। मज्ज = मद्वसनाहादि ।

आत्मवाननपेतोऽर्थादर्थ्यो

'अर्थ्य' (त्रि) के बुद्धिमान्, अर्थसे युक्त, न्यायसे युक्त ३ अर्थ हैं।

[आत्मेति] ॥ आत्मवान् ज्ञानी। अर्थे साधु। 'तत्र साधु' (४।४।९८) इति यत्। अर्थादनपेत। 'धर्मपथ्य-' (४।४।९२) इति यत्। 'अर्थ्यो विज्ञार्थशालिनो' इत्यजय।'अर्थ्यं शिलाजन्तु-यर्थ्यो बुधे न्याय्ये च वाच्यवत्' (इति मेदिनी) [ ११३।३ ]।

पुण्यं तु चार्वपि।

'पुण्यम्' (त्रि) के मनोहर, पवित्र २ अर्थ और 'पुण्यम्' (न) के सुकृत, धर्म २ अर्थ हैं।

[पुण्विति] ॥ पुनाति। 'पूञ् पवने' (क्र्या० उ० से०)। 'पूञो यण्णुग् ह्रस्वश्च' (उ० ५।१५)। यद्वा-पुणति। 'पुण कर्मणि शुभे' (तु० प० से०)। 'इगुपध-' (३।२।१३५) इति क। पुणे साधु। 'तत्र साधु' (४।४।९८) इति यत्। 'पुण्यस्त्रिषु मनोज्ञे स्यात्क्लीब सुकृत धर्मयो' इति विश्व.[२] [ ११७।३० ]।

रूप्यं प्रशस्ते रूपेऽपि

'रूप्यम्' (त्रि) का सुन्दर रूपवाला १ अर्थ और 'रूप्यम्' (न) के सोनेका सिक्का (अशर्फी, गिन्नी आदि), चाँदीका सिक्का (रुपया, आदि) २ अर्थ हैं।

[ रिति ] ॥ आहत प्रशस्त वा रूपमस्यास्ति। 'रूपादाहतप्रशंसयो-' (५।२।१२०) इति यप्। 'रूप्य स्यात्सुन्दरे त्रिषु। आयतस्वर्णरजते[३] रजते च नपुंसकम्' (इति मेदिनी) [ ११६।५१-५२ ]।

वदान्यो वल्गुवागपि ॥ ९० ॥

'वदान्य' (त्रि) के मधुर बोलनेवाला, बहुत दान देनेवाला २ अर्थ हैं।

[ वदेति ] ॥ 'वदेरान्य' (उ० ३।१०४)। वदान्यो दातृवाग्मिनो' इत्यजय [ शाश्वतश्च ६६८ ]।

न्याय्येऽपि मध्यम्

'मध्यम्' (त्रि) के न्याय्य (न्यायसे युक्त), कमर, बीच, अधम ४ अर्थ हैं।

[ न्याय्य इति ] ॥ मा ध्यायति। 'ध्यै चिन्तायाम्' (भ्वा० प० से०)। 'आतोऽनुप-' (३।२।३) इति क। यद्वा-मह्यते। 'मह पूजायाम्' (भ्वा० प० से०)। अघ्न्यादि (उ० ४।११२)। 'न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु' इति रभस। [ 'मध्यं न्याय्येऽवकाशे चावलग्ने लग्नकेऽधमे' इति विश्व, ११७।२६ ]।

सौम्यं तु सुन्दरे सोमदैवते।
सर्वज्ञभिषजौ वैद्यावात्मा कामश्च हृच्छयौ [९१]
फलकल्याणयोर्भव्यं योग्यं सांप्रतिके त्रिषु [९२]
क्रियाचारातिक्रमेऽपि जलाधारेऽपि चाशय [९३]
दैत्याचार्येऽपि धिष्ण्यो ना कषाय सुरभावपि [९४]
चन्द्रोदयो वितानेऽपि स्यादाम्नायोऽन्वये श्रुतौ [९५]
शीताशिते शिते शैत्यं जात्यं कुलजकान्तयोः [९६]
व्यवायो व्यवधौ च स्यात् कुल्या कुलवधूः सरित् [९७]

'सौम्यम्' (त्रि) के सुन्दर, उग्रताहीन, सोम देवता वाला हविष्य आदि ३ अर्थ और 'सौम्य' (पु) का बुध नामका ग्रह १ अर्थ है।

[ 'वैद्य' (पु) के सर्वज्ञ, वैद्य (डाक्टर हकीम आदि) २ अर्थ हैं।]

[ 'हृच्छय' (पु) के आत्मा, कामदेव २ अर्थ हैं ]।

[ 'भव्यम्' (न) के फल, कल्याण २ अर्थ हैं ]।

[ 'योग्यम्' (त्रि) के योगार्ह, उचित, निपुण, समर्थ ४ अर्थ, 'योग्य' (पु) के पुष्य नक्षत्र १ अर्थ और 'योग्यम्' (न) का ऋद्धि औषध १ अर्थ है।

'क्रिया' (स्त्री) के आचारातिक्रम, आरम्भ, चेष्टा, कार्य, उपाय, चिकित्सा, निर्णय, शिक्षा, पूजा ९ अर्थ हैं।

[ 'आशय' (पु) के जलाधार, अभिप्राय, कटहल ३ अर्थ हैं।]।

[ 'धिष्ण्य' (पु) के शुक्र, अग्नि २ अर्थ और 'धिष्ण्यम्' (न) के स्थान, नक्षत्र, घर, बल ४ अर्थ हैं ]।

[ 'कषाय' (पु) के सुगन्धि, कसैला स्वाद २ अर्थ हैं]।

[ 'चन्द्रोदय' (पु) के वितान (चदोवा), चन्द्रमा का उदय, चन्द्रोदय रस (औषध विशेष) ३ अर्थ हैं ]।

[ 'आम्नाय' (पु) के वंश, वेद, उपदेश ३ अर्थ हैं ]

[ 'शैत्यम्' (न) के ठंडक, दौर्बल्य, तीक्ष्णता ३ अर्थ हैं ]।

[ 'जात्यम्' (न) के कुलीन, सुन्दर २ अर्थ हैं ]।

[ 'व्यवाय' (पु) के व्यवधान, मैथुन २ अर्थ हैं ]।

[ 'कुल्या' (स्त्री) के कुलवधू, नहर २ अर्थ हैं ]।

१ 'अन्नवानानपेतो-' इति पाठान्तरम्।

२ विश्वे 'पुण्य मनोज्ञेऽभिहित तथा सु—'इत्येव भिन्न एव पाठ।

३. मेदिन्या '—आहतस्वर्ण—' इति पाठ।

[ साविति ]॥ सोमो देवताऽस्य। 'सोमाट्ट्यण्' (४।२।३०) यद्वा-सोम इव सोमः। ततश्चतुर्वर्णादित्वात् (वा० ५।१।१२४)ष्यञ्। यत्तु-शाखादित्वात्(५।३।१०३) यः—इति मुकुटः। तन्न। वृद्ध्यप्रसङ्गात्। 'सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते' ('इल्वलासु च सौम्याः स्युः') '[सौम्ये बोध्ये च वाच्यवत्]'इति विश्वः [११६।२४–२५]।

इति यान्ताः शब्दाः।

अथ रान्ताः शब्दाः।

निवहावसरौ वारौ

'वारः' (पु) के समूह, अवसर, सूर्य चन्द्र आदि सात दिन ३ अर्थ हैं।

[ नीति ]॥ वारयति, व्रियते वा। 'वृञ् वरणे' (स्वा० उ० से०)। पचाद्यच् (३।१।१३४)। घञ् (३।३।१८) वा। 'वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोः। कुब्जवृक्षे हरे द्वारे[1], वारं मद्यस्य भाजने' इति विश्वः [१२६।१७–१८]।

संस्तरौ प्रस्तराध्वरौ ॥ १६१ ॥

'संस्तरः' (पु) के शय्या या कुशादिकी चटाई आदि, यज्ञ २ अर्थ हैं।

[ समिति ]॥ संस्तीर्यते। 'स्तृञ् आच्छादने (क्र्या० उ० से०)। 'ऋदोरप्' (३।३।५७)। संस्तरप्रस्तरावेतौ प्रस्तराध्वरयोरपि[2]। मणिपाषाणयोश्चापि (यथाक्रममुदीरितौ)' इति विश्वः [१३४।११५]। प्रस्तरः = शय्या।

गुरू गीष्पतिपित्राद्यौ

'गुरुः' (पु) के बृहस्पति, पिता आदि गुरुजन, पढ़ाने वाला ३ अर्थ हैं।

[ गिवति ]॥ गृणाति। 'गॄ शब्दे' (क्र्या० प० से०)। 'कृग्रोरुच्च' (उ० १।२४) इत्युः। 'गुरुस्त्रिलिङ्ग्या महति दुर्जरालघुनोरपि। पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि' (इति मेदिनी) [ १२४।२५ ]।

द्वापरौ युगसंशयौ।

'द्वापरः' (पु) के द्वापर युग, संशय २ अर्थ हैं।

[ द्वेति ]॥ द्वाभ्यां परः, द्वौ परावत्र वा। पृषोदरादि (६।३।१०९) [ 'द्वापरः संशये युगे' इति शाश्वतः, ७१२ ]।

प्रकारौ भेदसादृश्ये

'प्रकारः' (पु) के भेद (तरह), सादृश्य २ अर्थ हैं।

[प्रेति]॥ प्रकरणम्। कृञो घञ् (३।३।१८)। 'प्रकारस्तुल्यभेदयो' (इति मेदिनी) [ १३५।१८० ]।

आकाराविङ्गिताकृती ॥ १६२ ॥

'आकारः' (पु) के चेष्टा, आकृति (आकार डीलडौल) २ अर्थ हैं।

[ आकेति ]॥ आकरणम्। घञ् (३।३।१८)। [ 'आकार इङ्गिताकृत्योः' इति हैम, ३।५५५ ]। इङ्गितं = चेष्टा। आकृति = अवयवसंस्थानम्।

किंशारू धान्यशूकेषू[1]

'किंशारुः' (पु) के धान आदिका टूंड, बाण २ अर्थ हैं।

[ किमिति ]॥ किञ्चित् कुत्सितं वा शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'किंजरयोः श्रिणः' (उ० १।४) इति ञुण्। 'किंशारुर्ना शस्यशूके विशिखे कङ्कपत्रिणि' (इति मेदिनी) [ १३२।१३६ ]।

मरू धन्वधराधरौ।

'मरुः' (पु) के मरुस्थल, पहाड़ २ अर्थ हैं।

[ मेति ]॥ म्रियन्तेऽत्र जन्तवः। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'भृमृशी–' (उ० १।७) इत्युः। 'मरुर्ना गिरिधन्वनोः' (इति मेदिनी) [ १२८।७५ ]।

अद्रयो द्रुमशैलार्काः

'अद्रिः' (पु) के पेड़, पहाड़, सूर्य ३ अर्थ हैं।

[ अद्रेति ]॥ अत्ति, अद्यते वा। 'अद भक्षणे' (अ० प० अ०)। 'अदिशदि–'(उ० ४।६५) इति क्रिन्। ['अद्रिः शैलद्रुमार्के ना' इति मेदिनी, १२३।६ ]।

स्त्रीस्तनाब्दौ पयोधरौ ॥ १६३ ॥

'पयोधरः' (पु) के स्त्रीका स्तन, मेघ, कोषकार, कशेरु नारियल ५ अर्थ हैं।

[ स्त्रीति ]॥ धरति। 'धृञ् धारणे' (भ्वा० उ० अ०)। पचाद्यच् (३।१।१३४)। पयसो धरः। 'पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि' (इति मेदिनी) [ १४२।२७९ ]।

---

१. विश्वे '—हरेर्वारं द्वारे—' इति पाठः।

२. विश्वे '—संस्तराध्वर—' इत्येवं पाठः पुस्तकद्वयेऽपि।

१. '—सस्यशूकेषू' इति पाठान्तरम्।

ध्वान्तारिदानवा वृत्राः

'वृत्र' ( पु ) के अन्धकार, शत्रु, वृत्रासुर, पर्वत-भेद ४ अर्थ हैं।

[ ध्वान्तेति ] ॥ वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) । बाहुलकात् क । 'वृत्रो रिपौ घने' ध्वान्ते शैलभेदे च दानवे (इति मेदिनी) [ १२८।८५ ]।

बलिहस्तांशवः कराः ।

'कर' ( पु ) के कर ( मालगुजारी, टैक्स, आदि ), हाथ किरण, हाथीका सूँड ४ अर्थ हैं।

[ बलीति ] ॥ बलि = राजग्राह्यो भाग । अंशु = मयूख । कीयते । 'कॄ विक्षेपे ( तु० प० से० ) । 'ऋदो-रप्' ( ३।३।५७ ) । करोति वा । अच् (३।१।१३४) । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयो' (इति मेदिनी) [ १२१।१२ ]।

प्रदरा भङ्गनारीरुग्बाणाः

'प्रदर' (पु)के भङ्ग, स्त्रीका रोग-विशेष, बाण ३ अर्थ हैं।

[ प्रेति ] ॥ प्रदीर्यते । प्रदरणम् । अनेन वा । 'दॄ विदारणे' (क्र्या० प० से०) । 'ऋदोरप्' (३।३।५७) । 'प्रदरो रोगभेदे स्याद्विकारे[1] शरभङ्गयो' (इति मेदिनी) [ १३५।१७८ ]।

अस्राः कचा अपि ॥ १६४ ॥

'अस्र' ( पु ) के केश, कोण २ अर्थ और 'अस्रम्' के आँसू, खून २ अर्थ हैं।

[ एति ] ॥ अस्यन्त । 'असु क्षेपणे' (दि० प० से०)। बाहुलकात् र । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणित' (इति मेदिनी) [ १२३।१ ]।

अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तुवरौ ।

'तुवर' ( पु ) को शृङ्ग (समय आने पर भी सींगहीन ) गौ, अवस्था आनेपर भी दाढ़ी मूँछ जिसकी नहीं ऐसा हो वह पुरुष, कसला स्वाद ३ अर्थ हैं।

[ अजेति ] ॥ 'काले' इत्युभाभ्या सबध्यते । तौति । 'तु' सौत्रो गत्यादौ । बाहुलकाद्वर , दीर्घश्च । यद्वा—तनोति बाहुलकाण्डु । तुवरासौ वरश्चाच्छादक । 'तुवरो'ऽश्मश्रुपुरुषे प्रोढाशृङ्गमवेऽपि च । पुरुषे व्यञ्जनत्यक्तं[2] स्यात्कषायरसेऽपि च' (इति मेदिनी) [ १३४।१६४–१६५ ]।

स्वर्णेऽपि राः

'रा' ( पु ) के स्वर्ण, धन २ अर्थ हैं।

[ स्वरिति ] ॥ राति सुखम् । रायते वा । 'रातेर्डै' (उ० २।६६) । 'रा पुंसि स्वर्णवित्तयो' (इति मेदिनी) [ १२२।१ ]।

परिकरः पर्यङ्कपरिवारयोः ॥ १६५ ॥

'परिकर' (पु) के पर्यङ्क, परिवार, मन्त्री आदि परिजन, समूह, विवेक, आरम्भ, यत्न ७ अर्थ हैं।

[ परीति ] ॥ परिकीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) ॥ 'ऋदोरप्' (३।३।५७) । यद्वा—परिक्रियतेऽनेन । 'पुंसि–' ( ३।३।११८ ) इति घ । 'भवेत्परिकरो व्राते पर्यङ्कपरिवारयो । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि' इति विश्व [ १४३।२२५ ] । 'यत्नारम्भौ परिकरौ' इति त्रिकाण्डशेष [ ३।३।३६२ ]।

मुक्ताशुद्धौ च तारः स्यात्

'तार' (पु) के मुक्ताशुद्धि, निर्मल मोती, तैरना, वानर-भेद ४ अर्थ, 'तारम्' ( न स्त्री ) के नक्षत्र, आँखकी पुतली २ अर्थ, 'तारम्' ( न ) का चाँदी १ अर्थ, 'तारा' ( स्त्री ) के बुद्धदेवी, सुग्रीवकी स्त्री, बृहस्पतिकी स्त्री ३ अर्थ और 'तारम्' ( त्रि ) का ऊँचा शब्द १ अर्थ है।

[मुक्तेति] तारयति । अच् [ ३।१।१३४ ]। यद्वा—तार्यते अनेन वा । घञ् (३।३।१९)। घ (३।३।११८)वा। 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके । तार च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम् । ऋक्षाक्षिमध्ययोस्तारा सुग्रीवगुर्वयोषितो । बुद्धदेव्या मता तारा' इति विश्व [ १२६।१८–२० ]

शारो वायौ स तु त्रिषु।

कर्बुरे

१. '—घने–' इति प्राच्यमेदिनीस्थ पाठो 'वृत्रो रिपौ घने ध्वान्ते–' इति विश्व(१२८।२९)पाठात् 'वृत्रो मेघे रिपौ–' इति हैम( २।४७१ )पाठाच्च लेखकादिप्रमादजन्य प्रतीयत ।

२. '—विदारे–' इति मेदिन्या पाठ ।

१ 'पशु ''' । तूपर शृङ्गवर्जित' इति ( पृ० ७१ श्लो० ७३ ), 'पशु कालेऽपि निःशृङ्गो नरोऽश्मश्रुश्च तूपरो' इति (पृ० २५५ श्लो० १२) च वैजयन्त्युक्त्या पवर्गादिमध्य 'तूपर'शब्दोऽपि । अत एव वेदेऽपि 'अश्वस्तूपरो गोमृग ' इति तल्लक्ष्यं लभ्यते ।

२. मेदिन्या ▮ '—प्रोढशृङ्गगवे'''पुरुषव्यञ्जन–इति पाठ ।

'शारः' ( पु ) का वायु १ अर्थ और 'शारः' ( त्रि ) का चितकबर १ अर्थ है।

[ शेति ] ॥ शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'शृणातेर्वायुवर्णनिवृतेषु'[1] ( वा० ३।३।२१ ) इति घञ्। 'शारः स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे' [ अक्षोपकरणे' ] ( इति तालव्यादौ मेदिनी ) [ १२९। ८९-९० ]।

अथ प्रतिज्ञाजिसंविदापत्सु संगरः ॥ १६६ ॥

'संगरः' ( पु ) के प्रण, युद्ध, क्रियाकार, आपत्ति, विष ५ अर्थ और 'संगरम्' ( न ) का शमीफल १ अर्थ है।

[ अथेति ] ॥ सगरणम्। संगीर्यते वा। अनेन वा। 'गॄ शब्दे' (क्र्या० प० से०)। 'ऋदोरप्' (३।३।५७)। पुंसि-' ( ३।३।११८ ) इति घो वा। 'संगरो युधि चापदि। क्रियाकारे विषे चाङ्गीकारे क्लीबं शमीफले' (इति मेदिनी) [ १३९।२३३-२३४ ]।

वेदभेदे गुह्यवादे मन्त्रः

'मन्त्रः'(पु) के वेद-भेद (मन्त्र), गुप्त सलाह २ अर्थ हैं।

[वेदेति] ॥ मन्त्र्यते। मन्त्रणं वा। 'मत्रि गुप्त[परि]भाषणे'(चु० प० से०)। घञ् (३।३।१९, १८)। 'मन्त्रो वेदविशेषे स्याद्देवादीनां च साधने। गुह्यवादेऽपि च पुमान्' (इति मेदिनी) [ १२८।७४-७५ ]।

मित्रो रवावपि।

'मित्रः' ( पु ) का सूर्य १ अर्थ और 'मित्रम्' ( न ) का दोस्त १ अर्थ है।

[ मीति ] ॥ मेद्यति। 'ञिमिदा स्नेहने' ( दि० प० से० )। 'अमिचिमिदिशसिभ्यः क्त्रः' ( उ० ४।१६४ )। 'मित्रं सुहृदि न द्वयोः। ( सूर्ये पुंसि )' (इति मेदिनी) [ १२८।७७ ]।

मखेपुयूपखण्डेऽपि स्वरुः

'स्वरुः' ( पु ) के यज्ञ-स्तम्भको छीलते समय पहलो बार गिरा हुआ काष्ठ-खण्ड, इन्द्रका वज्र २ अर्थ हैं।

[ मेति ] इषुः = बाणः। स्वरति। स्वर्यते वा। 'स्वृ शब्दोपतापयोः' ( भ्वा० प० अ० )। 'शृस्वृस्निहि-' (उ० १।१०) इत्युः। 'स्वरुः पुमान् यूपखण्डे भिदुरेऽप्यध्वरे शरे' (इति मेदिनी) [ १२९।९३ ]। यूपखण्डे = यूपे तक्ष्यमाणे प्रथमपतिते शकले।

गुह्येऽप्यवस्करः ॥ १६७ ॥

'अवस्करः' ( पु ) के उपस्थ ( भग, लिङ्ग ), विष्ठा २ अर्थ हैं।

[ गिवति ] ॥ अवोऽधः कीर्यते। 'कॄ विक्षेपे' (तु० प० से०)। 'ऋदोरप्' ( ३।३।५७ )। कस्कादि (८।३।४८)। 'वर्चस्केऽवस्करः' ( ६।१।४८ ) इति वा साधुः। 'अवस्करोऽपि वर्चस्के गुह्ये' ( इति मेदिनी ) [१४०। २४४ ]। गुह्ये = उपस्थे।

आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते।

'आडम्बरः' ( पु ) के 'तूर्य' बाजा, हाथियोंका गर्जना, समारम्भ ( आडम्बर ) ३ अर्थ हैं।

[ एति ] ॥ आडम्ब्यते। 'डबि क्षेपे' चुरादिः। घञ् (३।३।१९)। भावे ( ३।३।१८ ) वा। आडम्बं राति। 'आतोऽनुप-' ( ३।२।३ ) इति कः। आडम्बयति वा। बाहुलकादरन्। 'आडम्बरः समारम्भे गजगर्जिततूर्ययोः' इति विश्वः [ १४४।२३८ ]।

अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च[1] ॥१६८॥

'अभिहारः' ( पु ) के अभियोग, चोरी, कवच आदिको धारण करना ३ अर्थ हैं।

[अभीति] ॥ अभिहरणम्। घञ् ( ३।३।१८ )। अभिगम्याक्रमणम्=अभियोगः। संनहनं = कवचादिधारणम्।

स्याज्जंगमे परीवारः खड्गकोशे परिच्छदे।

'परीवारः' (पु) के कुटुम्ब, या भृत्य आदि परिजन, तलवारकी म्यान, सहायक सामग्री ३ अर्थ हैं।

[ स्यादिति ] ॥ जगमे = परिजने। परिव्रियतेऽनेन। परिवारणं वा। घञ् ( ३।३।१८, १९ )। 'उपसर्गस्य-' (६।३।१२२)[इति पाक्षिको] दीर्घः। 'परीवारः[2] परिजने खड्गकोशे परिच्छदे' ( इति मेदिनी ) [ १४३।२८० ]। परिच्छदः = उपकरणम्।

विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥ १६९ ॥

'विष्टरः' ( पु ) के पेड़, कुशाकी मुट्ठी ( जिसमें २५ कुशा हों ), मृगचर्म आदि आसन ३ अर्थ हैं।

१. भाष्ये 'शॄ' इत्यविभक्तिक एव निर्देशः। सिद्धान्तकौमुद्यां च 'शॄ वायुवर्णनिवृतेषु' इत्यविभक्तिकमेवेदं वार्तिकं पठित्वाग्रे 'शॄ' इत्यविभक्तिको निर्देशः। शारो वायुः। करणे घञ्। शारो वर्णः।" चित्रीकरणमिह धात्वर्थ इति तद्व्याख्यानम्।

१. विश्वे (१४६।२५६) मेदिन्यां (१४०।२४६) च श्लोकार्द्धमिदं लभ्यते।

२. मेदिन्यां 'परिवारः-' इति ह्रस्वद्वितीयः पाठः।

[ वीति ] ॥ विस्तीर्यते । 'स्तृञ् आच्छादने (क्र्या० उ० से० ) । वृक्षासनयोर्विष्टर' [ ८।३।९३ ] इति साधु । [ विष्टर कुशमुष्टौ[1] स्यादासने च महीरुहे' इति मेदिनी, १३८।१४ ]।

**द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।**

'प्रतीहार' ( पु ) के द्वार, द्वारपाल २ अर्थ और 'प्रतीहारी' ( स्त्री ) का द्वारपालिका १ अर्थ है।

[हृति] ॥ प्रतिह्रियतेऽनेन, अत्र वा । 'हृञ्' [हरणे] ( भ्वा० उ० अ० ) । घञ ( ३।३।१९ ) 'उपसर्गस्य–' (६।३।१२२) इति दीर्घः । गौरादि ( ४।१।४१ ) ङीप् । 'प्रतीहारो द्वारि द्वाःस्थे [?] स्थितायां तु योषिति' ( इति मेदिनी) [ १४३।२८० ] । अन ०रे = द्वाःस्थे ।

**विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु ॥१७०॥**

'बभ्रु' ( पु ) के बड़ा, नेवला, विष्णु मुनि ४ अर्थ और 'बभ्रु' ( त्रि ) के भूरा, अग्नि, शूली ३ अर्थ हैं।

[बीति] ॥ बिभर्ति, भरति वा । 'डुभृञ् [ धारणपोषणयो ](जु० उ० [?]०)।'भृञ् भरणे(भ्वा० उ० अ०)वा। 'कुर्भ्रश्च' (उ० १।२२) इति कुद्विरत्व च । यत्तु–भृञ डाङ्क्वादित्वात् कुद्विर्वचन च–इति मुकुट । तदुक्तसूत्रादर्शनमूलकम्, निर्मूल च । 'बभ्रुर्ना नकुले विष्णौ विपुले पिङ्गले त्रिषु' इति बलधर्मा । बभ्रुर्विशाले नकुले कृशानावज्वे[2] मुनौ शूलिनि पिङ्गले च' इति विश्व [ १३१।७१ ] ।

**सारो बले स्थिरांशे च न्याय्ये[3] क्लीबं वरे त्रिषु ।**

'सार' ( पु )क बल, स्थिर अश (सारिल लकड़ी आदि) २ अर्थ, 'सारम्' ( न ) का न्याययुक्त १ अर्थ और 'सार' ( त्रि ) का उत्तम १ अर्थ है।

[ सति ] ॥ सरति । सृ स्थिरे' (३३।३।१७) इति घञ् । 'सारो बले स्थिरांशे[4] [?] मज्जि पुंसि जले घने । न्याय्ये क्लीबं त्रिषु वरे'(इति मेदिनी)[१२९।९५–९६]।

**दुरोदरो द्यूतकारे पणे, द्यूते दुरोदरम् ॥ १७१ ॥**

'दुरोदर' ( पु ) के द्यूतकार ( नालदार अर्थात् जूआ खेलानेवाला ), दाव २ अर्थ और 'दुरोदरम्' ( न ) का जूआ १ अर्थ है।

[ द्विति ] ॥ दुष्टमासमन्तादुदरमस्य । 'दुरोदरो द्यूतकारे द्यूताक्षपणयो[1] पुमान्' [ इति मेदिनी, १४२। २६७ ] । पण = ग्लह ।

**महारण्ये दुर्गपथे कान्तारः पुनपुंसकम् ।**

'कान्तार' ( पु न ) के बड़ा जङ्गल, कठिन रास्ता, बिल ३ अर्थ हैं।

[ महेति ] ॥ का ता अरा अस्य । यद्वा–कान्त मनोज्ञमृच्छति, इयर्ति वा । 'कर्मण्यण्' ( ३।२।१ )। 'कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि । पुंसि स्यादिक्षुभेदे' (इति मेदिनी) [ १३२।१३४ ] ।

**मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ १७२ ॥**

'मत्सर' ( पु ) का दूसरेकी उन्नति आदिसे द्वेष करना १ अर्थ और 'मत्सर' ( त्रि ) के दूसरेकी उन्नति आदिसे द्वेष करनेवाला, कृपण २ अर्थ हैं।

[ मत्सेति ] ॥ माद्यति परकृच्छ्रे । 'मदी हर्षे' (दि० प० से०)। 'कृधूमदिभ्य कित्' (उ० ३।७३) इति सर । 'मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयो पुमान् । असह्याधान्यसम्पत्तौ कृपणे चाभिधेयवत्' (इति मेदिनी) । [ १३६।१६३ १६४ ] तद्वान् = अन्यशुभद्वेषवान् ।

**देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ।**

'वर' ( पु ) के वरदान, दामाद, विट ३ अर्थ, 'वर' ( त्रि ) का श्रेष्ठ १ अर्थ और 'वरम्' ( न ) का थोड़ा प्रिय १ अर्थ है।

[दवति] ॥ व्रियते । वरणं वा । वृञ् वरणे' (स्वा० उ० से०)। 'ग्रहवृदृ–' (३।३।५८) इत्यप् । यद्वा–वृणोति, वरति वा । पचाद्यच् ( ३।१।१३४ ) । 'वरो जामातरि वृतौ देवतादेरभीप्सिते । षिड्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् । वरी शोक्ता शतावर्या वरा च स्यात्फलत्रिके । मनागिष्टे वर क्लीबं केचिदाहुस्तदव्ययम्' (इति मेदिनी) [ १२७।६२ ६३ ] ।

**वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ॥ १७३ ॥**

'करीर' (पु न) का बाँसका कोंपल १ अर्थ और 'करीर' ( पु ) के करील पेड़, घड़ा २ अर्थ हैं।

---

१ तदुक्तम्—भवेत्पञ्चशता ब्रह्मा तदर्धेन तु विष्टर ' इति ।

२. विश्वे क'पुस्तके '–कृशानौ वज्रे–' इति पाट, 'ख'पुस्तके तु '–कृशानावज्वे–' इति पाठ ।

३ न्याय्ये' इति स्वामिसम्मत पाठ ।

४ "बले यथा—मुसार, घृताभ्यास तु सारकृत् । स्थिरांशे यथा—चन्दनसार मज्जासार । न्याय्ये यथा–नैतत् सारम् । वरे यथा–जये धरित्र्याः पुरमेव सारम् ।" इति क्षीरस्वामी ।

१ मेदिन्या '–द्यूतभेदे द्यूतकृत्पणयो –' इति पाठ ।

[ वंशेति ] ॥ कृणाति । 'कॄ हिंसायाम्' (क्र्या० प० से० ) किरति, कीर्यते वा । 'कॄ विक्षेपे' ( तु० प० से०) वा । 'कृपृशृकटि-' (उ० ४।३०) इतीरन् । करिणमीरयति । 'ईर गतौ' ( अ० आ० से० ) । 'कर्मण्यण्' (३।२।१)। 'वंशांकुरे करीरोऽस्त्री' वृक्षभिद्धटयो पुमान् । करीरा[1] चीरिकायां च दन्तमूले च दन्तिनाम्' ( इति मेदिनी ) [ १३१।१२५ ]।

द्वा चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ।

'प्रतिसरः' ( पु ) के सेनाका पिछला हिस्सा, मन्त्र-भेद, माला, कङ्कण ४ अर्थ, 'प्रतिसरः' ( पु न ) के मण्डल, विवाह-आदिमें हाथमें बँधा हुआ माङ्गलिक सूत्र विशेष या राखी २ अर्थ और 'प्रतिसर' ( त्रि ) का नियोज्य (भृत्यादि) १ अर्थ है।

[ सेति ] ॥ प्रतिसरति । पचाद्यच् ( ३।१।१३४ ) । प्रतिस्रियते । अनेन वा । 'पुंसि-'(३।३।११८) इति घ । 'स्यात्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले[3] । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गक.' (इति मेदिनी) [ १४२।२७६-२७७ ] ।

यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥ १७४ ॥
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।

'हरिः' ( पु ) के यमराज, वायु, इन्द्र, चन्द्रमा, सूर्य, विष्णु, सिंह, किरण, घोड़ा, तोता, साँप, वानर, मण्डूक, परलोक १४ अर्थ और 'हरिः' ( त्रि ) के हरा रंग, कपिल रंग १ अर्थ हैं।

[ यमेति ] ॥ हरति । 'हृञ्' [ हरणे ] ( भ्वा० उ० अ० ) । 'अच इः' (उ० ४।१३९) । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयो ' इति विश्वः [ १११।७८-७९ ] ।

शर्करा कर्परांशेऽपि

'शर्करा' ( स्त्री ) के छोटे २ कङ्कड़ या ठिकड़ा, शक्कर, रोग-विशेष, टुकड़ा ४ अर्थ हैं।

[ शर्केति ] ॥ शृणाति, शीर्यते वा । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'श्रॄ करन्' (उ० ४।३) । 'शर्करा खण्डविकृतावुपलाकर्परांशयो. । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि[1] च' (इति मेदिनी) [ १३८।२२०-२२१ ]।

यात्रा स्याद्यापने गतौ ॥ १७५ ॥

'यात्रा' ( स्त्री ) के समय बिताना, चलना, देव-दर्शन आदि करना २ अर्थ हैं।

[ येति ] ॥ यानम् । अनेन वा । 'या प्रापणे' (अ० प० अ०) । 'हुयामा-' (उ० ४।१६८) इति त्रन् । 'यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे' इति विश्व [१३२।९२]।

इरा भूवाक्सुराप्सु स्यात्

'इरा' ( स्त्री ) के पृथ्वी, बात ( वचन ), मदिरा, जल ४ अर्थ हैं।

[ इरेति ] ॥ एति, ईर्यते वा । 'इण् गतौ' (अ० प० अ०) । 'ऋज्रेन्द्राग्र-' (उ० २।२९) इति साधु । ['इरा भूवाक्सुराभूमिषु' इति हैम, २।४०७ ] ।

तन्द्रा[2] निद्राप्रमीलयोः ।

'तन्द्रा' ( स्त्री )के नींद, श्रमादिजन्य इन्द्रियोंकी शिथिलता २ अर्थ हैं।

[ तन्द्रेति ] ॥ तत् राति । 'आतोऽनुप-' (३।२।३) इति क । स्त्रियां टाप् (४।१।४) । केचिद् गौरादित्वात् (४।१।४१)ङीषमाहु[3] । तद द्राति वा। 'द्रा कुत्सायां गतौ' (अ० प० अ०) । 'निद्रातन्द्रा-' (३।२।१५८) इति तदो नान्तत्वं निपात्यते । [ 'तन्द्री तन्द्रेरुभौ शब्दौ स्यातां निद्राप्रमीलयो ' इति नानार्थरत्नमाला, पङ्क्ति० ८८० ] । प्रमीला=अत्यन्तश्रमादिना मोहप्रायता ।

धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ॥ १७६ ॥

'धात्री' (स्त्री) के धाई, पृथ्वी, आँवला, माता ४ अर्थ हैं।

[ धेति ] ॥ धीयते । 'धेट् पाने' (भ्वा० प० अ०)। 'ध कर्मणि ष्ट्रन्' (३।२।१८१) । षित्वात् (४।१।४१) ङीष् । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' ( इति मेदिनी ) [ १२६।४९ ] ।

---

१. मेदिन्या 'करीरो वंशाकुरेऽस्त्री-' इति पाठ. ।

२. '—करीरी चीरिकायां च दन्तमूले च दन्तिनाम्' इति ( १४०।१८६ ) विश्वानुरोधात् '—करीरी चीरिकायाञ्च—' इति मेदिनीस्थः पाठ एव प्रशस्यतरः ।

३. 'आहुः प्रतिसरं हस्तसूत्रे माल्येऽपि मण्डने । व्रण—' इति (१४४।२३२) विश्वानुरोधात् 'प्रतिसरश्चमूपृष्ठे ··· मण्डने स्रजि । —' इति (४।२७३-२७४) हैमानुरोधाच्च मेदिनीस्थ. '—मण्डने—' इति पाठ एव युक्ततरः ।

१. शर्करा खण्ड··· शकलेऽपि च' इति (३।६४२-६४३) विश्ववाक्यात् '—सकलेऽपि च' इति मेदिन्या. पाठो न समीचीन. ।

२. 'तन्द्री—' इति पाठान्तरम् ।

३. तथा च हैम —'तन्द्री निद्रा प्रमीला च' इति (२।४३८), 'तन्द्री निद्राप्रमीलयोः' इति मेदिनी (१४५।४२) च ।

क्षुद्रा व्यङ्गा नटो वेश्या सरघा कण्टकारिका।
त्रिषु क्रूरेऽधनेऽल्पेऽपि क्षुद्र

'क्षुद्रा' ( स्त्री ) के किसी अङ्गसे हीन स्त्री, नटी, वेश्या, मधुमक्खी, भटकटैया ५ अर्थ और 'क्षुद्र' ( त्रि ) के क्रूर, गरीब, नीच ३ अर्थ हैं।

[ क्षुद्रेति ] ।। क्षुणत्ति, क्षुद्यते वा। 'क्षुदिर् संचूर्णने' (रु० उ० अ०)। 'स्फायितञ्चि—' (उ० २।१३) इति रक्। क्षुद्रं स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्। क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च। चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि' इति विश्व [ इति मेदिनी ] [१२४।१७-१८]। व्यङ्गा=अङ्गहीना। सरघा=मधुमक्षिका।

मात्रा परिच्छदे ॥ १७७ ॥

अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे।

'मात्रा' ( स्त्री ) के परिच्छद या सामग्री थोड़ा परिमाण, अक्षरके अवयव ( इकार, ईकार, उकार, ), कानका भूषण विशेष ५ अर्थ और 'मात्रम्' ( न ) के साकल्य (जैसे—हस्तमात्रं वस्त्रम्, ), अवधारण ( केवल, जैसे—पयोमात्रं मत्ति,'' ) २ अर्थ हैं।

[ मात्रेति ] ।। मीयते, अनया वा। माति, मिमीते वा। 'मा माने' (अ० प० अ०)। 'माङ् माने'(जु० आ० अ०) वा। हुयामा—' (उ० ४।१६८) इति त्रन्। 'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे'(इति मेदिनी) [१२८।७९-७६]।

आलेख्याश्चर्ययोश्चित्रम्

'चित्रम्' (न) के फोटो, आश्चर्य, चितकाबर ३ अर्थ हैं।

[ एति ] ।। चिनोति, चीयते वा। 'अमिचि—' (उ० ४।१६४) इति क्त्र। 'चित्रा सुभद्रीमोदुम्बायासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि। तद्युक्तयोर्वाच्यलिङ्गं[२] चित्री चित्रयां नपुंसकम्। गोम्तम वसभेदे च रेखास्लिखनभेदयो' (इति मेदिनी) [१२९।३४-३६]।

कलत्रं श्रोणिभार्ययोः ॥ १७८ ॥

'कलत्रम्' ( न ) के कमर, स्त्री २ अर्थ हैं।

[ केति ] ।। गडति, गड्यते वा। 'गड सेचने'(भ्वा० प० से०)। 'गडेरादेश्च क' (उ० ३।१०६) इत्यत्रन्। डलयोरेकत्वम्। कलं त्रायते वा। 'त्रैङ् पालने' (भ्वा० आ० अ०)। क (३।२।१)। कडति, कड्यते वा। 'कड मदे' (भ्वा० प० से०)। बाहुलकादत्रन्। 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययो.' इति रभस। [कलत्रं श्रोणौ भार्यायां दुर्गस्थाने च भूभुजाम्' इति हैम ,३।५६६]।

योग्यभाजनयोः पात्रम्

'पात्रम्' ( न ) के योग्य, बर्तन, दो तटोंका बीच, स्रुवा आदि, राजमंत्री, पत्ता, अभिनेता ७ अर्थ हैं।

[ योग्येति ] ।। पाति पायते वा। पीयतेऽनेन वा। 'पा रक्षणे' ( अ० प० अ० )। पा पाने' ( भ्वा० प० अ०) वा। ष्ट्रन् (उ० ४।१५९)। 'पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे। पात्रं स्रुवादौ पर्णे[१] च राजमन्त्रिणि चेष्यते' इति विश्व [१०७।३५-३६]।

पत्रं वाहनपक्षयोः।

'पत्रम्' ( न ) के वाहन पङ्ख, पत्ता, बाण, पक्षी ५ अर्थ हैं।

[ पत्रमिति ] ।। पतन्त्यनेन। दाम्नी—' (३।२।१८२) इति ष्ट्रन्। 'पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणो[२] इति विश्व [ १२८।३५ ]।

निदेशग्रन्थयोः शास्त्रम्

'शास्त्रम्' ( न ) के आदेश, व्याकरण आदि छः शास्त्र २ अर्थ हैं।

[ नीति ] ।। निदेश = आज्ञा। शासनम्। शिष्यते अनेन, इति वा। 'सर्वधातुभ्य ष्ट्रन् (उ० ४।१५९)। [ 'शास्त्रं ग्रन्थनिदेशयो' इति विश्व १२८।४०, हैम' २।४७४ च ]।

शस्त्रमायुधलोहयोः ॥ १७९ ॥

'शस्त्रम्' ( न ) के हथियार, लोहा २ अर्थ हैं।

[ शति ] ।। शस्यतेऽनेन। 'शसु हिंसायाम्' (भ्वा० प० से०)। 'दाम्नी—' (३।२।१८२) इति ष्ट्रन्। 'शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति'(इति मेदिनी) [ १२९।८७ ]।

स्याज्जटांशुकयोर्नेत्रम्

'नेत्रम्' ( न ) के पेड़की सोर ( जड़ ), वस्त्र, मथनीकी रस्सी, आँख ४ अर्थ हैं।

१ विश्वे तु क्षुद्रं स्यादधमे क्रूरे कृपणेऽल्पे च वाच्यवत्। क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च। चाङ्गेरी बृहतीहिंस्रामक्षिकामात्रकेषु च' इति (१२९।५७–५८) भिन्न एव पाठ।

२. '—तद्युक्तयोस्त्वन्यलिङ्ग—' इति पाठो मेदिन्याम्।

१ 'पर्णेऽपि—' इति पाठो विश्वे।

२ पत्रं स्यात्—शरपक्षिणाम्' इति पाठो विश्वे।

[ नयतीति ] ॥ नयति नीयते, अनेन वा । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । 'दाम्नी–' ( ३।२।१८२) इति ष्ट्रन् । 'नेत्रं (मथिगुणे वस्त्रे तरुमूले विलोचने । नेत्रं रथे च नाड्यां च नेत्रो) नेतरि भेद्यवत्[1]' इति विश्व [१२८।४३ ]। नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां च नेत्री नाड्यां च योषिति' (इति मेदिनी) [ १२६।५४ ] ।

क्षेत्रं पत्नीशरीरयोः ।

'क्षेत्रम्' ( न ) के स्त्री, शरीर, खेत, सिद्ध-मुनि आदिका स्थान ४ अर्थ हैं ।

[ क्षयिति ] ॥ क्षयति, क्षीयते, अनेन वा । 'क्षि क्षये (भ्वा० प० अ०) । 'क्षि निवासगत्योः' (तु० प० अ०) वा । ष्ट्रन् (उ० ४।१५९) । 'क्षेत्रं शरीरे केदारे सिद्ध-स्थानकलत्रयोः' (इति मेदिनी) [ १२४।२० ] ।

मुखाग्रे क्रोडहलयोः पोत्रम्

'पोत्रम्' ( न ) के सूअरका मुख, हलका अगला भाग, वज्र ३ अर्थ हैं ।

[ पुवेति ] ॥ पूयतेऽनेन । 'पूञ् पवने' (क्र्या० उ० से०) । 'हलसूकरयोः पुवः' (३।२।१८३) इति ष्ट्रन् । 'पोत्रं वस्त्रे मुखाग्रे च सूकरस्य[2] हलस्य च' इति विश्व [ १२८।३६ ] ।

गोत्रं तु नाम्नि च ॥ १८० ॥

'गोत्रम्' ( न ) के नाम, गोत्र ( वंश, कुल ), संभाव्य बोध, जङ्गल, खेत, रास्ता ६ अर्थ हैं ।

[ गवेति ] ॥ गूयतेऽनेन । 'गुङ् शब्दे' (भ्वा० आ० अ०) । ष्ट्रन् ( उ० ४।१५९ ) । गां त्रायते वा । 'त्रैङ् [ पालने' ] (भ्वा० आ० अ०)। 'आतोऽनुप–' (३।२।३) इति कः । 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु[3]' ( इति मेदिनी ) [ १२४।२७ ] ।

सत्त्रमाच्छादने यज्ञे सदादाने वनेऽपि च ।

'सत्त्रम्' ( न ) के आच्छादन, यज्ञ, सर्वदा दान करना, जङ्गल, दम्भ ५ अर्थ हैं ।

[ सेति ] ॥ सीदन्त्यत्र, अनेन वा । 'षद्लृ विशरणादौ' (भ्वा० प० अ०) । ष्ट्रन् (उ० ४।१५९) । 'सत्त्रं यज्ञे सदादानच्छादनारण्यकैतवे' (इति मेदिनी) [ १२९।९४ ]।

अजिरं विषये कायेऽपि

'अजिरम्' ( न ) के विषय ( रूप, रस आदि ), शरीर, आँगन, हवा, मेढक ५ अर्थ हैं ।

[ अजीति ] ॥ अजन्त्यत्र, अनेन वा । 'अज गतौ' (भ्वा० प० से०) । 'अजिरशिशिर–' (उ० १।५३) इति साधु । 'अजिरं प्राङ्गणे वाते विषये दुर्दुरे[1] तनौ । (स्त्री चण्ड्याम्)' (इति मेदिनी) [ १३०।१०९ ] ।

अम्बरं व्योम्नि वाससि ॥ १८१ ॥

'अम्बरम्' ( न ) के आकाश, कपड़ा, रूई ३ अर्थ हैं ।

[ अम्बेति ] ॥ अम्बते, अम्ब्यते वा । 'अबि शब्दे' ( भ्वा० आ० से० ) । बाहुलकादरः । 'अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके' इति विश्व [ १३३।१०२ ] ।

चक्रं राष्ट्रेऽपि

'चक्रम्' ( न ) के राज्य, सेना, पहिया, आयुध-विशेष, समूह, कुम्भारका चाक, पानीकी भौंरी ७ अर्थ और 'चक्रः' ( पु ) का चकवा पक्षी १ अर्थ है ।

[ चेति ] ॥ क्रियतेऽनेन । घञर्थे कः (वा० ३।३। ५८) । '–कृञादीनां के' (वा० ६।१।१२) इति द्वित्वम् । 'चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि' (इति मेदिनी) [ १२५।३१-३२ ] ।

अक्षरं तु मोक्षेऽपि

'अक्षरम्' ( न ) के मोक्ष, परब्रह्म, वर्ण ( अक्षर ), आकाश, धर्म, तप, मूल कारण, चिचिड़ा ८ अर्थ हैं ।

[ एति ] ॥ न क्षरति । 'क्षर सञ्चलने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । यद्वा–अश्नुते । 'अशू व्याप्तौ' (स्वा० आ० से०) । 'अशेः सरः' (उ० ३।७०)। 'मोक्षेऽपवर्गे ब्रह्मण्यच्युतेऽक्षरम्' इत्यनेकार्थकोषः । [ 'अक्षरं प्रणवे धर्मे प्रकृतौ तपसि क्रतौ । वर्णे मोक्षे च, ना त्वेष शिवविष्णुविरञ्चिषु । मुगदानवबौद्धेषु' इति नानार्थरत्नमाला (पृ० १९४७-१९४९) ] ।

क्षीरमप्सु च ।

'क्षीरम्' ( न ) के पानी, दूध २ अर्थ हैं ।

[ क्षीति ] ॥ घस्यते । 'घस्लृ अदने' (भ्वा० प० अ०) । 'घसेः किच्च' (उ० ४।३४) इतीरन् । 'गमहन–' (६।४।९८) इत्युपधालोपः । ('शासिवसि–') (८।३।६०)

१. '–बान्धववत्' इति विश्वे पाठः ।

२. '–शूकरस्य–' इति विश्वे पाठः ।

३. 'काननच्छत्रवर्त्मसु' इति मेदिनीपाठः ।

१. '–दर्दुरे–' इति मेदिन्या पाठः ।

इति ( पत्वम् ) । 'क्षीरं दुग्धे जले' ( इति मेदिनी ) [ १२४।१६ ] ।

स्वर्णेऽपि भूरिचन्द्रौ द्वौ

'भूरि' ( न ) का सोना १ अर्थ; 'भूरि' ( पु ) के कृष्ण, शिव, ब्रह्मा ३ अर्थ और 'भूरि' ( त्रि ) का अधिक १ अर्थ है।

'चन्द्र' ( पु ) के सोना, चन्द्रमा, सुन्दर, कपूर, पानी ५ अर्थ हैं।

[ स्वर्णेऽपीति ] ॥ भवति, भूयते वा । 'भू सत्तायाम्' (भ्वा० प० से०) । 'भू प्राप्तौ' (चु० आ० से०) । 'अदिशदि- (उ० ४।६५) इति क्रिन् । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक' (इति मेदिनी) [१२८।७३-७४] ।

चन्दति । 'चदि आह्लादने' ( भ्वा० प० से० ) । 'स्फायितञ्चि-' (उ० २।१३) इति रक् । 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु' (इति मेदिनी) [ १२५।३१ ] ।

द्वारमात्रे तु गोपुरम् ॥ १८२ ॥

'गोपुरम्' ( न ) के द्वारमात्र, नगरका द्वार, मोथा ३ अर्थ हैं।

[ द्वारेति ] ॥ पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । 'इगुपध-' (३।१।१३५) इति कः । गवां पुरम् । 'गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च' (इति मेदिनी) [ १३०।१५० ] ।

गुहादम्भौ गह्वरे द्वे

'गह्वरम्' ( न ) के गुफा, दम्भ, निकुञ्ज, गहन ४ अर्थ हैं।

[ गुहेति ] ॥ गाह्यते । 'गाहू विलोडने' (भ्वा० आ० से०) । 'छित्वरछत्वर-' (उ० ३।१) इति साधु । 'गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि' इति विश्व [ १३७।१५५ ] ।

रहोऽन्तिकमुपह्वरे ।

'उपह्वरम्' ( न ) के एकान्त, समीप २ अर्थ हैं।

[रेति] ॥ उपह्वरन्त्यत्र । 'ह्वृ कौटिल्ये' (भ्वा० प० अ०) । 'पुंसि-' (३।३।११८) इति घः । यत्तु—गह्वरवदुपह्वरम्—इति मुकुटेनाभाणि । तन्न । छित्वरादावस्य पाठाभावात् । 'उपह्वरं समीपे स्यादेकान्ते [redacted] नपुंसकम्' (इति मेदिनी) [ १४०।२५० ] ।

पुरोऽधिकमुपर्यग्राणि

'अग्रम्' ( न ) के आगे, एक पल ( ४ भरी ) का प्रमाणविशेष, ऊपर, आलम्बन, समूह, प्रान्त ६ अर्थ और 'अग्रम्' ( त्रि ) के अधिक, प्रधान, पहला ३ अर्थ हैं।

[ पुर इति ] ॥ अग्यते, अगति वा । 'अग कुटिलायां गतौ' ( भ्वा० प० से० ) । 'ऋज्रेन्द्राग्र-' (उ० २।२९) इति साधु । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' (इति मेदिनी) [ १२३।३-४ ] ।

अगारे नगरे पुरम् ॥ १८३ ॥

मन्दिरं च

'पुरम्' ( न ) के घर, नगर २ अर्थ और 'पुरः' ( पु ) के गुग्गुल १ अर्थ है।

'मन्दिरम्' ( न ) के घर, नगर २ अर्थ हैं।

[ अगेति ] ॥ पिपर्ति । 'पॄ पालनपूरणयोः' ( जु० प० से० ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) कः । यद्वा—पुरति । 'पुर अग्रगमने' (तु० प० से०) । 'इगुपध-' ( ३।१।१३५ ) इति कः । 'पुरं शरीरमित्याहुर्गृहोपरिगृहे पुरम् । पुरो गुग्गुलुराख्यातो नगरेऽपि पुरं पुरी' इति धरणिः । ['पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः । पुष्पादीनां दलावृत्तौ, ना गुग्गुलौ, न ना पुरि' इति मेदिनी, १२७। ५८-५९ ] ।

मन्दतेऽत्र । 'मदि स्तुत्यादौ' ( भ्वा० आ० से० ) । 'इषिमदिमुदि-' ( उ० १।५१ ) इति किरच् । 'मन्दिरं नगरेऽगारे क्लीबं, ना मकरालये' ( इति मेदिनी ) [ १३७।१९७ ] ।

अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ।

'राष्ट्र' ( पु न ) के देश, उपद्रव २ अर्थ हैं।

[ अथेति ] ॥ राजति । 'राजृ दीप्तौ' ( भ्वा० उ० से० ) । ष्ट्रन् ( उ० ४।१५९ ) । 'राष्ट्रं स्यादुपवर्तने उपद्रवे क्लीबपुंसो' (इति मेदिनी) [ १२८।७८-७९ ] ।

दरोऽस्त्रियां भये श्वभ्रे ]

'दर' ( पु न ) के डर, गढा २ अर्थ हैं।

[ देति ] ॥ दरणम् । दीर्यते वा । 'दॄ भये' (भ्वा० प० से०) । 'दॄ विदारणे' (क्र्या० प० से०) वा । 'ऋदोरप्' (३।३।५७) । 'दरोऽस्त्री साध्वसे गर्ते कन्दरे तु दरी स्मृता । दराऽव्ययं मनागर्थे' (इति मेदिनी) [ १२९।४६-४७ ] ।

वज्रोऽस्त्री हीरके पवौ ॥ १८४ ॥

'वज्र' ( पु न ) के हीरा, वज्र २ अर्थ हैं।

[ वेति ] ॥ वजति । 'वज गतौ' (भ्वा० प० से०) । 'ऋज्रेन्द्र-' ( उ० २।२९ ) इति साधु । 'वज्रं स्याद्धाधके

धान्या क्लीबं योगान्तरे पुमान् । वज्रा स्नुह्या गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता । दम्भोलौ हीरकेऽप्यस्त्री वज्रं त्रपुवरत्वयोः[1]' ( इति दन्तोष्ठयादौ मेदिनी ) [ ११८। ८१-८२ ] ।

तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ।

'तन्त्रम्' ( न ) के प्रधान, सिद्धान्त, जुलाहा, सामग्री, वेदकी एक शाखा, कारण, उत्तम औषध ७ अर्थ हैं ।

[ तन्त्रमिति ] ॥ तननम्, तन्यते, अनेन वा । 'तनु विस्तारे' (त० उ० से०)। ष्ट्रन् (उ० ४।१५९) । यद्वा—तन्त्रणम्। तन्त्र्यते वा । 'तत्रि [कुटुम्ब–] धारणे' (चु० प० से०) । घञ् ( ३।३।१८ ) । यत्तु—'स्फायितञ्चि–' (उ० २।१३ ) इति रक्–इति मुकुट आह । तन्न । उक्तस्थलीयत्वस्य पाठाभावात् । तनोतेरकि नलोपप्रसङ्गात् । तन्त्रयतेर्घञ्याया अपि सिद्धत्वाच्च । 'तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे । श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके । इतिकर्तव्यतायां च ( तन्त्री वीणागुणे मता । अमृतादेहशिरयोः )' (इति मेदिनी) [ १२५।४०–४२ ] ।

औशीरं चामरे[2] दण्डेऽप्यौशीरं शयनासने[3] ॥१८५॥

'औशीरः' ( पु ), का चँवरका दण्ड १ अर्थ; 'औशीरम्' (न) के शयन, आसन, खसासे उत्पन्न ३ अर्थ हैं ।

[ औशीरीति ] ॥ उश्यते । 'वश कान्तौ' ( अ० प० से०)। 'न[ब]शेः कित्' (उ० ४।३१) इतीरन् । प्रज्ञाद्यण् (५।४।३८) । यद्वा—उशीरस्येदम् । 'तस्येदम्' ( ४।३। १२०)इत्यण् । 'औशीरं चामरे दण्डे औशीरं स्वापपीठयोः' इत्यजयः । [ 'औशीरं शयनासनचामरदण्डेऽप्युशीरजे प्रोक्तम्' इति मेदिनी, १३१।१२० ] ।

पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥१८६॥

[1]. 'स्याद् बालके ''वज्र त्रपुवरत्वयोः' इति मेदिनीपाठः ।

[2]. 'औशीश्चामरे—' इति पुल्लिङ्गपाठं कुर्वन्ति ।

[3]. स्वामी तु 'शयनासनयोः समुदितयोः मतीयम्' इत्याह । अत एव 'औशीरं चामरे दण्डेऽप्येकोक्त्या शयसने' इति विश्वलोचन( पृ० २२१ श्लोक ११९ )स्यापि सङ्गतिः । सुभूतिस्तु पृथगाह इति मुकुटः । अत एव 'औशीरं शयनासनयोः' इति वैजयन्त्याः ( पृ० १८७ पङ्क्तिः ३३ ) सङ्गतिः ।

'पुष्करम्' ( न ) के हाथीकी सूँड़के आगेवाला हिस्सा, बाजाके भाण्डका मुख, पानी, आकाश, तलवारका फल, कमल, 'पुष्कर क्षेत्र'नामक तीर्थ-विशेष, पुष्करमूल औषध ८ अर्थ हैं ।

[ पुष्केति ] ॥ पुष्णाति, पुष्यते, अनेन वा । 'पुष पुष्टौ' (क्र्या० प० से०) । 'पुष कित्' (उ० ४।४) इति करन् । 'पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । औषधिद्वीपविहगतीर्थरागोरगान्तरे । पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च' (इति विश्वः )[ १३७।१५३-१५४]।

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च[1] ॥१८७॥

'अन्तरम्' ( न ) के अवकाश ( खाली ), अवधि, पहिरनेका कपड़ा आदि, छिपना, भेद, तादर्थ्य ( उसके लिये, जैसे–ओदनान्तरस्तण्डुलः अर्थात् भातके लिये चावल है, ), छिद्र, आत्मीय, बिना, बाहर, अवसर, बीच, अन्तरात्मा, सादृश्य, अन्य १५ अर्थ हैं ।

[ अन्तेति ]॥ अन्तं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । [ 'अन्तरं तु परीधाने भेदे रन्ध्रावकाशयोः । आत्मान्तर्द्धिविनास्मीयबहिर्मध्यावधिष्वपि । तादर्थ्येऽवसरे चोक्तम्' इति विश्वः, १३३।९७-९८ ] ।

मुस्तेऽपि पिठरम्

'पिठरम्' ( न ) के मोथा घास, बटलोही, मथनी ३ अर्थ हैं ।

[ पिवति ] ॥ पेठति, पिठ्यते वा । 'पीठ हिंसासंक्लेशनयोः' (भ्वा० प० से०) । बाहुलकादरो गुणाभावश्च । 'पिठरं स्थाल्यां ना, क्लीबं मुस्तामन्थानदण्डयोः' ( इति मेदिनी ) [ १३६।१८४ ] ।

राजकशेरुण्यपि नागरम् ।

'नागरम्' (न) के सोंठ, नागरमोथा २ अर्थ और 'नागरः' ( त्रि )के नगरवासी या नगरमें होनेवाला, चतुर २ अर्थ हैं ।

[ राजेति ] ॥ नगरे भवम् । 'तत्र भवः' ( ४।३। ५३ ) इत्यण् । यद्वा—न अग राति । नकारेण 'सुप्सुपा[2]' इति समासः । 'नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे'

[1]. 'अन्तर'''मध्यात्मसदृशेषु' इत्येवमयं श्लोको मेदिन्यां (१३०।१०६) चापि लभ्यते ।

[2]. 'सह सुपा' (२।१।४) इत्यत्र 'सहे'त्यस्य योगविभागेनेत्याशयः ।

( इति मेदिनी ) [ १३५।१७२ ]। राजकशेरु = कन्द-विशेष ।

शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम्[1] ॥१८८॥

'शार्वरम्' ( न ) का घोर अन्धकार १ अर्थ, 'शार्वरम्' ( त्रि ) का घातक १ अर्थ और 'शार्वर' ( पु ) का घातक हाथी १ अर्थ है।

[ शार्वेति ]॥ शर्वर्यां भवम् । 'तत्र भव' ( ४।३।५३ ) इत्यण् । स्वामी तु 'घातुकेभे नृलिङ्गकम्' इति पठित्वा घातुकस्त्रासाविभश्च । नृलिङ्ग पुल्लिङ्गम्' इति व्याख्यत् । [ शार्वरं तमसि क्लीब, हिंस्रे त्रिष्वथ शार्वरं । शशाङ्के ना निशास्वाहरिद्रासु च शार्वरी' इति नानार्थरत्नमाला प० २५२७-२५२८ ]।

गौरोऽरुणे सिते पीते

गौर' (त्रि) के अरुण, गोर, पीला, विशुद्ध ४ अर्थ 'गौर' ( पु ) के पीला सरसो, चन्द्रमा २ अर्थ और 'गौर' ( पु न ) का पद्मकेसर १ अर्थ है।

[ गाविति ] ॥ गोरति । 'गुरी उद्यमने' (तु० आ० से०)। गवते वा मनोऽत्र । गुङ गतो' (भ्वा० आ० अ०) वा । ऋज्रे न्द्रा–'(उ० २।२९) इति साधु । यद्वा-गुयतेऽनेन । गुरी' [उद्यमने] (तु० आ० से०)। 'हलश्च' (३।३।१२१) इति घञ् । गोर एव। प्रज्ञाद्यण् (५।४।३८)। गौर पीतऽरुणे श्वेते[2] विशुद्धे चाभिधेयवत् । ना श्वेत सर्षपे चान्द्रे न द्वयो पद्मकेसरे ।(गौरी त्वमजातरज कन्या शङ्करभार्ययो । रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेपे च यादसांपतियोषिति)' (इति मेदिनी) [ १२४।२७-२९ ]।

व्रणकार्यप्यरुष्कर[3]।

'अरुष्कर' ( पु ) का भेलावा १ अर्थ और 'अरुष्कर' ( त्रि ) का घाव करनेवाला या घावका चीर फाड़ करना १ अर्थ है।

[ व्रेति ] ॥ अरु करोति । दिवाविभा-' ( ३।२।२१) इति ट । अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान्' (इति मेदिनी) । [ १४०।२४० ]।

१ घातुकेभे नृलिङ्गकम्' इति पाठान्तरम् । श्लोकार्द्धमिद मेदिन्या (१३८।२२४) च लभ्यते ।

२ मेदिन्या तु 'गौर श्वेतेऽरुणे पीते–' इति पाठ ।

३ '—व्रणकार्येऽप्यरुष्कर' इति पाठान्तरम्।

जठर कठिनेऽपि स्यात्

'जठर' ( त्रि ) का कठोर १ अर्थ, 'जठर' ( पु न ) का पेट १ अर्थ और 'जठर' ( पु ) बूढ़ा १ अर्थ हैं।

[जेति] ॥ जायते, अस्मिन् वा । 'जनी' [प्रादुर्भावे] (दि० आ० से०)। 'जनेररष्ठ च' (उ० ५।३८) इत्यर । जठरो न स्त्रिय। कुक्षौ बद्धककखटयोस्त्रिषु[1]'(इति मेदिनी) [ १२४।१५३ ]।

अधस्तादपि चाधरः ॥ १८९ ॥

'अधर' ( त्रि ) के नीचे, हीन २ अर्थ और 'अधर' ( पु ) का ओठ १ अर्थ है।

[ एति ]॥ न धरति। धृञ् धारणे' ( भ्वा० उ० अ० ) । पचाद्यच् ( ३।१।१३४ ) । यद्वा-धरात्पुच्चात्कठिनाद्दाऽन्य । अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि[2] वाच्यवत्' (इति मेदिनी) [ १३०।१०५ ]।

अनाकुलेऽपि चैकाग्र

'एकाग्र' ( त्रि ) के अनाकुल, एकान्त २ अर्थ हैं।

[ अनेति ]॥ एकमकत्र वाऽग्रमस्य । एकाग्रम च-लिङ्ग स्यादेकतानेऽप्यनाकुले' ( इति मेदिनी ) [ १३१।१२० ]।

व्यग्रो व्यासक्त आकुले[3]।

'व्यग्र' ( त्रि ) के अनेक कार्योंमें फँसा हुआ, व्याकुल २ अर्थ हैं।

[ व्येति ] ॥ विविध विविघे वाऽग्रमस्य । विरुद्ध मगति वा । अग कुटिलाया गतौ' ( भ्वा० प० से० ) । 'ऋज्रेन्द्रा—' (उ० २।२९) इति साधु ।

उपर्युदीच्यश्रेष्ठेष्वप्युत्तर स्यात्

'उत्तर' ( त्रि ) के ऊपर, उत्तर दिशामें होनेवाला, श्रेष्ठ ३ अर्थ, 'उत्तरम्' ( न ) का जवाब १ अर्थ, 'उत्तर' ( पु ) का विराट् राजाका पुत्र १ अर्थ और 'उत्तरा' ( स्त्री ) के उत्तर दिशा, अभिमन्युकी स्त्री २ अर्थ हैं।

[उदिति] ॥ उत्तरति । तृ प्लवनतरणयो ' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४)। यद्वा-अतिशयेनो द्गत । तरप् ( ५।३।५७ ) । द्रव्यप्रकर्षत्वान्नामु (५।४।११ ) । 'उत्तर प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत्।

१ '—वृद्धककठयोस्त्रिषु' इति मेदिन्या पाठ ।

२ '—नूर्ध्वे च–' इति मेदिन्या पाठ ।

३ मेदिन्यां (१२८।८३) विश्वे (१२९।५४) चापीद वचो लभ्यते ।

इतरस्तु विराटस्य तनये, दिशि चोत्तरा' इति विश्वः [ १३३।९९ ]।

अनुत्तरः ॥ १९० ॥

एषां विपर्यये श्रेष्ठे

'अनुत्तरः' ( त्रि ) के नीचे, उत्तरसे भिन्न दिशामें होनेवाला, नीच, श्रेष्ठ ४ अर्थ और 'अनुत्तरम्' ( न ) का निरुत्तर १ अर्थ है।

[ एषि ]॥ उत्तरस्याभावः। उत्तरस्य विरुद्धो वा। श्रेष्ठे न उत्तरो यस्मात्। [ 'अनुत्तरः स्मृतः श्रेष्ठे प्रतिवचनविवर्जिते' इति विश्व., १४४।२४२ ]।

दूरानात्मोत्तमाः पराः।

'परः' ( त्रि ) के दूर, शत्रु, उत्तम, दूसरा ४ अर्थ और 'परम्' ( न ) का केवल १ अर्थ है।

[ दूरेति ]॥ पिपर्ति, पूर्यते, अनेन वा। पचाद्यच् (३।१।१३४)। 'ऋदोरप्' ( ३।३।५७ )। 'पुंसि-' (३। ३।११८) इति घो वा। 'परं श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले' (इति मेदिनी) [ १२६।५५ ]।

स्वादुप्रियौ च मधुरौ

'मधुरः' ( त्रि ) के स्वादिष्ट, प्रिय २ अर्थ, 'मधुरः' (पु) का मीठा १ अर्थ और 'मधुरा' ( स्त्री ) का सौंफ १ अर्थ है।

[ स्वेति ]॥ मधु माधुर्यं राति। अस्त्यथ वा। 'आतोऽनुप—' (३।२।३) इति कः। 'उपसुषि-' (५।२। १०७) इति रो वा। 'मधुरो स्वादुसोमनौ' इति व्याडि। 'मधुरस्तु रसे विषे। मधुर रसवत्स्वादुप्रियेषु मधुरोऽन्यवत्'। ['मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः। मधुकर्कटिकामेदामधूलीमण्डिकासु च' ] इति विश्व [ ११६। ११२-११३ ]।

क्रूरौ कठिननिर्दयौ ॥ १९१ ॥

'क्रूरः' ( त्रि ) के कठिन, निर्दय, घोर ३ अर्थ हैं।

[ क्रूराविति ]॥ कृन्तति। 'कृती छेदने' (तु० प० से०)। 'कृतेश्छः क्रू च' (उ० २।२१) इति रक्। 'क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्' इति विश्व. [ १२७।२५ ]।

उदारो दातृमहतोः

'उदारः' ( त्रि ) के दाता, बड़ा, चतुर ३ अर्थ हैं।

[ उदेति ]॥ उच्चैरासमन्ताद्च्छति। पचाद्यच् ( ३।१।१३४ )। 'उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्' (इति मेदिनी) [ १३१।११७ ]।

इतरस्त्वन्यनीचयोः।

'इतरः' ( त्रि ) के दूसरा, नीच २ अर्थ हैं।

[ ईति ]॥ इना कामेन तरति। 'तॄ' [ प्लवनतरणयो ] ( भ्वा० प० से० ) पचाद्यच् (३।१।१३४)। [ 'इतर पामरेऽन्यस्मिन्' इति विश्वः, १३३।१०० ]।

मन्दस्वच्छन्दयोः स्वैरः

'स्वैरः' ( त्रि ) के मन्द, स्वतन्त्र २ अर्थ हैं।

[ मन्देति ]॥ स्वेन स्वातन्त्र्येण ईर्ते, ईरति वा। 'ईर गतौ कम्पने च ( अ० आ० से० )। 'ईर प्रेरणे' ( चु० उ० से० ) वा। पचाद्यच् (३।१।१३४)। 'स्वादीरेरिणोः' (वा० ६।१।८९) इति वृद्धिः। यत्तु मुकुट — स्वेन स्वयमेव न तत्सगरयास्य इर्यति। अच् (३।१।१३४) —इति व्याख्यत्। तन्न। अचि गुणे च 'स्वारः' इति प्रसङ्गात्। ['स्वैरो मन्दे स्वतन्त्रे च' इति हैम, २।४८२]।

शुभ्रमुद्दीप्तशुक्लयोः ॥ १९२ ॥

'आसारो वेगवद्वर्षे सैन्यप्रसरणं तथा [ ७४ ]
धाराम्बुपाते चोत्कर्षेऽसौ कटाहे तु कर्परः [ ७५ ]
बन्धुरं सुन्दरे नम्रे गिरिर्गेन्दुकशैलयोः [ ७६ ]
चरुः स्थाल्यां हविःपक्वावधीरः कातरे चले' [ ७७ ]

'शुभ्रम्' ( त्रि ) के प्रकाशमान, श्वेत वर्णवाला २ अर्थ और 'शुभ्रम्' ( न ) का सफेद रंग १ अर्थ है।

[ 'आसार' ( पु ) के जोरसे वर्षा होना, सेनाका फैलना २ अर्थ हैं ]।

[ 'धारा' ( स्त्री ) के धारसे पानी आदिका गिरना, तलवार आदिकी धार, घोड़ेकी गति-विशेष, सेनाग्र भाग ४ अर्थ हैं ]।

[ 'कर्परः' ( पु ) के बड़ा कड़ाह, शस्त्र-विशेष, कपाल ३ अर्थ हैं ]।

[ 'बन्धुरम्' ( त्रि ) के सुन्दर, नम्र २ अर्थ हैं ]।

[ 'गिरिः' ( पु ) के गेंद, पहाड़, आँखका रोग-विशेष ३ अर्थ और 'गिरिः' ( त्रि ) का पूज्य १ अर्थ है ]।

[ 'चरुः' ( पु ) के बटलोही, हविष्यका पाक २ अर्थ हैं ]।

[ 'अधीरः' ( त्रि ) के कातर, धैर्यहीन २ अर्थ हैं ]।

[शुभ्रेति]॥ शोभते। 'शुभ दीप्तौ' (भ्वा० आ० से०)। 'स्फायितञ्चि—' (उ० २।१३) इति रक्। 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु (इति मेदिनी) [ १२९।९२ ]।

इति रान्ताः शब्दाः।

(उ० ४।१३९)। 'पालि कर्णलताया स्यात्प्रदेशे पङ्क्ति चिह्नयो' इत्यजय। मश्मश्रुयुवती पालि पङ्क्ति' कर्णलतापि च' इति त्रिकाण्डशेष [३।३।३९९]। पालि' कर्णलताग्रेऽस्री पङ्क्तावङ्कप्रभेदयो। छात्रादिदेये स्त्री पाली यूकासश्मश्रयोषितो (इति मेदिनी) [१४७।३०-३१]।

**कला शिल्पे कालभेदेऽपि**

'कला' ( स्त्री ) के कारीगरी, ० काष्ठाका (८ सेकेण्डका) समय-विशेष, सूद, सोलहवाँ हिस्सा, चन्द्र कला ५ अर्थ हैं।

[ कलेति ]॥ कलयति, कल्यते वा। 'कल शब्दसंख्यानयो' (चु० आ० से०)। पचाद्यच (३।१।१३४)। यद्वा–क लाति। कला स्य मूलरेवृद्धौ' शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयो'[३] (इति मेदिनी) [ १४५।५ ]। तालेषु च गुरु कला'।

**आली सख्यावली अपि।**

'आलि' ( स्त्री ) के सखी, पङ्क्ति २ अर्थ हैं।

[ एति ]॥ आ अलति, अल्यते आ, अनया वा। 'अल भूषणादौ' (भ्वा० प० से०)। सर्वधातुभ्य इन्' (उ० ४।११८)। 'कृदिकारात्–' (वा० ४।१।४५) इति वा ङीप्। 'आलिर्विशदाशये। त्रिषु स्त्रियां वयस्यायां सेतौ पङ्क्तौ च[४] कीर्तिता' (इति मेदिनी) [ १४३।२-३ ]।

**अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि॥ १९८॥**

'वेला' ( स्त्री ) के चन्द्रमाके उदय होनेपर समुद्रका बढ़ना, समय, मर्यादा, तट, बुधकी स्त्री, धनिकोंका भोजन, बिना दुःखका मरना ७ अर्थ हैं।

[ वेलति ]॥ 'वेलृ गतौ'[५] (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। वेल्यते, अनया वा। वेल कालोपदेश' (चु० उ० से०)। 'गुरोश्च हल' (३।३।१०४) इत्यङ्। 'वेला काले च सीमायामब्धे कूलविकारयो। अक्लिष्टमरणे रोगे[६] ईश्वरस्य च भोजने (इति मेदिनी) [ १४८।४१ ]

१ 'प्रस्थ' इति पाठान्तरम्।

२ '—मूलविवृद्धौ–' इति मेदिनीपाठ।

३ विश्व तु '—कलनाकालयो कला' इति (१५२।४३) पाठ।

४ '—प्रकीर्तिता' इति मेदिन्या पाठ।

५ धातुपाठे मि० वौ० च '–ष्वलने' इति पाठ।

६. '—रागे–' इति मेदिनीपाठ।

**बहुला कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु।**

'बहुला' ( स्त्री ) के कृत्तिका नामका तीसरा नक्षत्र, गौ २ अर्थ, 'बहुल' ( पु ) के अग्नि, कृष्णपक्ष २ अर्थ और 'बहुल' ( त्रि ) के काला वर्ण, बहुत २ अर्थ हैं।

[ वेति ]॥ वहति। वह प्रापणे (भ्वा० उ० अ०)। बाहुल्काद्लच। बहु लाति वा। 'बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयो (इति मेदिनी) [ १५३।११७-११८ ]। शितौ=कृष्णे।

**लीला विलासक्रिययो**

'लीला' ( स्त्री ) के विलास, केलि, शृङ्गारभावसे उत्पन्न क्रिया विशेष ३ अर्थ हैं।

[ लीति ]॥ लेलायनम्। 'लेला दीप्तौ' कण्ड्वादि। भिदादित्वाद् (३।३।१०४)। 'अ प्रत्ययात्' (३।३।१०२) न्ति वा। पृषोदरादि (६।३।१०९)। यद्वा–लयनम्। लीङ् श्लेषणे' (दि० आ० अ०)। बाहुलकाल्लो गुणाभावश्च। 'लीला विदु केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु' इति विश्व [ १५२।४५ ]।

**उपला शर्करापि च॥ १९९॥**

'उपला' ( स्त्री ) के शिरडी, खाड या चीनी १ अर्थ तथा 'उपल' ( पु ) के पत्थर, रत्न २ अर्थ हैं।

[ उपेति ]॥ उप लाति। 'ला दाने' (अ० प० अ०) आतश्चोपसर्गे (३।१।१३६) इति क। उ शमु पलति। ओ शमो वा पलति। 'पल गतौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। शर्करा शब्दे शेया सितोपलाज स्वपि' इत्यजय। ['उपल प्रस्तरे रत्ने शर्करायां तु योषिति) (इति मेदिनी) [ १४९।६३ ]।

**शोणितेऽम्भसि कीलालम्**

'कीलालम्' ( न ) के खून, पानी २ अर्थ हैं।

[ शोणेति ]॥ कीलेन प्रतिबन्धेनाल्यते वार्यते। 'अल भूषणादौ' (भ्वा० प० से०)। घञ् (३।३।१६)। कील प्रतिबन्धमलति वा। 'कर्मण्यण' (३।२।१) ['कीलाल रुधिरे तोये' इति मेदिनी, १५०।७७ ]।

**मूलमाद्ये। शिफाभयो:[१]।**

'मूलम्' ( न ) के पहला, जड, मूल नामक उन्नीसवाँ नक्षत्र, समीप ४ अर्थ हैं।

१ '—शिकार्ययो' इति, –शिफोभयो' इति च पाठान्तरे।

[ मूलेति ] ॥ मूलति । 'मूल प्रतिष्ठायाम्' (भ्वा० प० से०) । मूल रोहणे' (चु० प० से०) वा । इगुपध–' (३।१।१३५) इति कः । आद्ये = प्रथमे । शिफा = जटा । भं = नक्षत्रम् । 'मूलं शिफाद्ययोः । मूलवित्तेऽन्तिके ना भे' (इति मेदिनी) [ १४८।४५-४६ ] ।

जालं समूह आनायो गवाक्षक्षारकावपि ॥ २०० ॥

'जालम्' ( न ) के समूह, जाल ( फन्दा ), गवाक्ष, बिना खिली हुई कली, दम्भ ५ अर्थ और 'जालः' ( पु ) का कदम्बका पेड़ १ अर्थ है ।

[जेति] ॥ जलति । 'जल घातने' (भ्वा० प० से०) । ज्वलादिण. (३।१।१४०) । जालयति वा । 'जल संवरणे' चुरादिः । पचाद्यच् (३।१।१३४) । 'जालं गवाक्ष आनाये क्षारके जन्मवृन्दयोः । जालो नीपद्रुमे' ( इति मेदिनी ) [ १४६।१९ ] ।

शीलं स्वभावे सद्वृत्ते'

'शीलम्' ( न ) के स्वभाव, सदाचरण २ अर्थ हैं ।

[ शीति ] ॥ शीलनम् । शीलयतेऽनेन वा । 'शील समाधौ' (भ्वा० प० से०) । घञ् (३।३।१८) । घो (३।३।१८) वा ।

सस्ये हेतुकृते फलम् ।

'फलम्' (न) के धान्य-वृक्ष आदिका फल, फल (लाभ), बाणकी नोक, जातीफल, त्रिफला, कंकोल, सम्पत्ति ७ अर्थ हैं ।

[ सेति ] ॥ फलनम् । 'फल निष्पत्तौ' (भ्वा० प० से०) । पचाद्यच् (३।३।१३४) । फल हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः । जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि' [फलिन्या तु फली प्राहुस्त्रिफलायां फलं क्वचित्'] इति विश्व [ १४९।२-३ ] ।

छदिर्नेत्ररुजोः क्लीवं समूहे पटलं न ना ॥ २०१ ॥

'पटलम्' ( न ) के छप्पर, आँखका रोग २ अर्थ और 'पटलम्' ( न स्त्री ) का समूह १ अर्थ है ।

[ छेति ] ॥ पट विस्तारं लाति । 'ला दाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः । 'अथ पटलं पिटके च परिच्छदे । छदिर्नेत्रोगतिलके क्लीबं वृन्दे पुमान्न ना' (इति मेदिनी) [ १५२।१०५ ] । स्त्रियां गौरादिः (४।१।४१) [ पटली ] । छदिः = गृहाच्छादनम् । 'छानी' इति ख्यातम् ।

अधःस्वरूपयोरस्त्री तलम्

'तलम्' ( पु न ) के नीचेवाला भाग, स्वरूप, पृष्ठ भाग ३ अर्थ हैं ।

[ एति ] ॥ तलति । तल प्रतिष्ठायाम्'(भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'तलं स्वरूपेऽनुर्घ्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च, द्रुमि ताल-महीरुहे । चपेटे च स्मृतो सन्नीघाते सदयेन पाणिना' (इति मेदिनी) [ १४१।२१-२२ ] ।

स्यात्त्वामिषे पलम् ।

'पलम्' ( न ) के मांस, चार भरीका प्रमाण-विशेष, समय-विशेष ३ अर्थ हैं ।

[ स्यादिति ] ॥ पलति । पल गतौ' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । 'पलमुन्मानमांसयोः' इति रुद्र [ मेदिनी १४७।२९, हैम २।५०७ च ] ।

और्वानलेऽपि पातालम्

'पातालम्' ( न ) के वडवानल, नागलोक ( पाताल ), बिल ३ अर्थ हैं ।

[ और्वेति ] ॥ पतति, अत्र वा । 'पत्लृ गतौ'(भ्वा० प० से०) । 'वडिपतिभ्यामालञ्' (उ० १।१७) । पातमलति वा, पातमालाति वा । 'पातालं नागलोके स्याद्विवरे वडवानले' (इति मेदिनी) [ १५३।११० ] ।

चेलं वस्त्रेऽधमे त्रिषु ॥ २०२ ॥

'चेलम्' ( न ) का कपड़ा १ अर्थ और 'चेलः' ( त्रि ) का नीच १ अर्थ है ।

[ चयिति ] ॥ चिलति, चिल्यते वा । चिल वसने' (तु० प० से०) । पचाद्यच् (३।१।१३४) घञ् ( ३।३।१९ ) वा । चेलति, चेल्यते वा । 'चेलृ गतौ (भ्वा० प० से०) । पूर्ववत् । प्रज्ञाद्यण् (५।४।३८) । गौरादिङीष् (४।१।४१)वा । ['चेलं गर्हितवस्त्रयो 'इति हैम २।४६८]।

कुकूलं शङ्कुभिः कीर्णे श्वभ्रे, ना तु तुषानले ।

'कुकूलम्' ( न ) का कील आदिसे भरा गड्ढा १ अर्थ और 'कुकूलः' ( पु ) का भूसेकी आग १ अर्थ है ।

[ किरति ] ॥ कोर्भूमेः कुलम् । कुत्सितं वा कुलम् । [ 'कुकूल तु तुषानले शङ्कुसंयुक्तगर्ते च' इति हैम ३। ६७६-६७७ ] ।

निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥ २०३ ॥

१. 'मेदिन्यां (१४८।५३) विश्वे (१५०।२४) चेदमेव वचनं दृश्यते ।

१. 'चैलं–' इति पाठः क्वचित् ।

'केवलम्' ( अव्यय ) का सिर्फ १ अर्थ और 'केवलम्' ( त्रि ) के अकेला, समूचा ( जैसे—केवला भिक्षुका, ) २ अर्थ हैं।

[ निरिति ] ॥ केवते । केवृ सेचने' (भ्वा० आ० से०) । वृषादित्वात् (उ० १।१०६) कल । के शिरसि बलयति वा । 'वल प्राणने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) स्त्रियां टाप् [ केवला ] । सञ्ज्ञाछ-द-सोस्तु केवलमामक-' (४।१।३०) इति ङीप् । [ केवली कुहने पुमान् । नपुंसक तु निर्णीते वाच्यवच्चैवकृत्स्नयो । केवली ज्ञानभेदे' इति मेदिनी १५१।८३८४ ] ।

पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ।

'कुशलम्' ( न ) के पर्याप्ति, कल्याण, पुण्य ३ अर्थ और 'कुशलम्' ( त्रि ) का शिक्षित १ अर्थ है।

[पर्येति] ॥ पर्याप्ति = सामर्थ्यम् । पुण्य = सुकृतम् । कौ भूमौ शलति । शल चलने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । यद्वा–कुशयति । 'कुश सश्लेषणे' ( )। कल (उ० १।१०६)। कुशाल्लाति वा । [कुशल शिक्षिते त्रिषु । क्षेमे च मुहूर्ते चापि, पर्याप्तौ च नपुंसकम्' इति मेदिनी, १०५।७७ ] ।

प्रवालमङ्कुरेऽप्यस्त्री

'प्रवालम्' ( न पु ) के नया पल्लव, मूँगा, वीणाका दण्ड ३ अर्थ हैं।

[ प्रेति ] ॥ अङ्कुरे = किसलये । प्रवलति । 'वल प्राणने' (भ्वा० प० से०) । 'ज्वलिति–' (३।१।१४०) इति ण । यद्वा–व्य तात् पचाद्यच् (३।१।१३४) । 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' ( इति मेदिनी) [ १५२।१०७ ] ।

त्रिषु स्थूलं जडेऽपि च ॥२०४॥

'स्थूलम्' ( त्रि ) के मोटा, मूर्ख २ अर्थ हैं।

[त्रिष्विति] ॥ स्थूलयति । स्थूल परिबृंहणे' चुराद्यदन्त । पचाद्यच ( ३।१।१३४)। 'स्थूल कूटे च[१] निष्प्रज्ञे पीवरऽप्यन्यलिङ्गकम्' (इति मेदिनी) [ १४९।५६] ।

करालो दन्तुरे तुङ्गे

'कराल' ( त्रि ) के दाँतुल, ऊँचा, भयङ्कर ३ अर्थ हैं।

[ करेति ] ॥ करेणालाति । 'आतश्चोपसर्गे' (३।१।१३६) इति, सुपि–' ( ३।२।४ ) इति योगविभागाद्वा क । यद्वा–करमलति । 'अल भूषणादौ' ( भ्वा० प० से० ) । 'कर्मण्यण' ( ३।२।१ ) । 'कराल[१] दन्तुरे तुङ्गे भीषणे चाभिधेयवत् । ( ससर्जरसतैले ना क्लीब कृष्णकुठेरके )' (इति मेदिनी) [ १५०।६८-६९ ] ॥ दन्तुरस्तून्नतरदे तयोन्नतनत त्रिषु[२]' ( इति रान्तेषु मेदिनी ) [ १३४।१६६ ] ।

चारौ दक्षे च पेशलः ।

'पेशल' ( त्रि ) के सुन्दर, चतुर २ अर्थ हैं।

[ चेति ] ॥ 'पिश अवयवे' ( तु० प० से० ) । भावे ( ३।३।१८ ) घञ । पेश लाति । बाहुलकात् पिशेरलज् वा । [ पेशल कुशले रम्ये' इति हैम, ३।७०९ ] ।

मूर्खेऽर्भकेऽपि बालः स्यात्

'बाल' ( त्रि ) के मूर्ख, बालक, केश, नेत्रवाला औषध, हाथी-घोड़ेकी पूँछके बालका गुच्छा ५ अर्थ हैं।

[ मूर्ख इति ] ॥ बलति । 'बल प्राणने' (भ्वा० प० से०) । 'ज्वलिति–' ( ३।१।१४० ) इति ण । यद्वा–वाडते । वाडृ आप्लाव्ये' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४)। यद्वा–वल्यते । 'बल संवरणे' (भ्वा० आ० से०) । कर्मणि ( ३।३।१९ ) घञ् । 'वाल पुंसि शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयो' [ अलङ्कारान्तरे मेध्ये[३] बाली, बाला त्रुटिस्त्रियो ' ] इति विश्व [ १५०।२१ ] । 'बालो ना कुन्तलेऽश्वस्य गजस्यापि च बालधौ । [ नारिकेले हरिद्रायां मल्लिकाभिन्नयापि स्त्रियाम् ] । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेर पुनपुंसकम् । अलकारान्तरे मेध्य बाली, बाला त्रुटिस्त्रियो[४]' ( इति पवर्गीयादौ मेदिनी ) [ १४७।३९–४० ] ।

लोलश्चलसतृष्णयोः ॥२०५॥

'कुलं गृहेऽपि तालाङ्के कुबेरे चैककुण्डलः [ ७८ ]
शोभायावश्योर्हेला हेलि सूर्ये रणे हलिः [ ७९ ]
हालः स्यान्नृपतौ मद्ये शकलं त्वेदयोर्दलम् [ ८० ]
तूलिश्चित्रोपकरणशलाकातूलशय्ययोः [ ८१ ]
तुमुलं व्याकुले शब्दे शष्कुली कर्णपाल्यपि' [ ८२ ]

'लोल' ( त्रि )के चञ्चल, चाहनासे युक्त २ अर्थ हैं।

[ 'कुलम्' ( न ) के घर, देह, देश, वंश, परिवार ५ अर्थ हैं ] ।

१ '–कूटेऽथ– इति पाठो मेदिन्याम् ।

१ 'करालो–' इति मेदिनीपाठ ।
२ –तयोन्नतानते त्रिषु' इति पाठो मेदिन्याम् ।
३ '–मेधी–' इति विश्वे 'ख' पुस्तके पाठ ।
४, '–त्रुटौ स्त्रियाम्' इति मेदिन्या पाठ ।

['एककुण्डलः' (पु) के बलभद्र, कुबेर २ अर्थ हैं]।

['हेला' (स्त्री) के स्त्रीका भाव-विशेष, अवज्ञा २ अर्थ हैं]।

['हेलिः' (पु) के सूर्य, आलिङ्गन २ अर्थ हैं]।

['हिलिः' (पु) के लड़ाई, भाव-सूचन २ अर्थ हैं]।

['हालः' (पु) के शालिवाहन राजा १ अर्थ और 'हाला' (स्त्री) का मदिरा १ अर्थ है]।

['दलम्' (न) के टुकड़ा, पत्ता २ अर्थ हैं]।

['तूलिः' (स्त्री) के चित्र बनानेकी कूंची, तोसक २ अर्थ हैं]।

['तुमुलम्' (न) का रण आदिमें जनसमूहादिसे ठसाठस भरा हुआ स्थान १ अर्थ और 'तुमुलः' (पु) का बहेड़ेका पेड़ १ अर्थ है]।

['शष्कुली' (स्त्री) के कर्णपाली (कानका पर्दा), पूड़ी २ अर्थ हैं]।

[लोल इति]॥ लोडति। 'लोडृ उन्मादे' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। 'लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः' (इति हैमः) [२।५२१]।

इति लान्ताः शब्दाः।

अथ वान्ताः शब्दाः।

दवदावौ वनारण्यवह्नी

'दवः, दावः' (२ पु) के वन, दावानल २ अर्थ हैं।

[दवेति]॥ दुनोति, दवति वा। 'टुदु उपतापे' (स्वा० प० अ०)। 'दु गतौ' (भ्वा० प० अ०)। 'दुन्योरनुपसर्गे' (३।१।१४२) इति वा ण। पक्षे अच्। यत्तु—दूयन्तेऽनेनेति। 'दुनो विभाषा' इति घञ्—इत्युक्तं स्वामिना। तन्न। उक्तवचनाभावात्। [दवदावौ तु वनवह्नौ वनेऽप्युभौ' इति मेदिनी, १५८।१०]।

जन्महरौ भवौ।

'भवः' (पु) के जन्म लेना, शिव, प्राप्ति, सत्ता, संसार, कल्याण ६ अर्थ हैं।

[जन्मेति]॥ भवति। पचाद्यच् (३।१।१३४)। अन्तर्भावितण्यर्थो वा। जन्मनि तु भावे 'ऋदोरप्' (३।३।५७)। 'भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः' (इति मेदिनी) [१५९।२०]।

मन्त्री सहायः सचिवौ[1]

'सचिवः' (पु) के मन्त्री (बुद्धि सचिव), सहायक (कर्मसचिव) २ अर्थ हैं।

[मन्त्रीति]॥ सह अयते, अयति वा। 'अय गतौ' (भ्वा० आ० से०)। 'ई गतौ' (भ्वा० प० से०) वा। पचाद्यच् (३।१।१३४)। सचनम्। 'षच समवाये' (भ्वा० उ० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। सचिं वाति। 'वा गत्यादौ' (अ० प० अ०)। 'आतोऽनुप—' (३।२।३) इति क। ['सचिवो मन्त्रिणि स्मृतः। सहाये' इति मेदिनी, १६१।५२–५३]।

पतिशाखिनरा धवाः॥ २०६॥

'धवः' (पु) के पति, धवका पेड़, नर, धूर्त ४ अर्थ हैं।

[पतीति]॥ धवति, धुवति, धुनोति, धुनाति वा। 'धूञ् कम्पने' (चु० उ० से०, स्वा० उ० से०, क्र्या० उ० से०)। 'धू विधूनने' (तु० प० से०)। पचाद्यच् (३।१।१३३)। यद्वा—धूयते। 'ऋदोरप्' (३।३।५७)। 'धवः पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च' (इति मेदिनी) [१५८।११]।

अवयः शैलमेषार्काः

'अविः' (पु) के पहाड़, भेंड़ा, सूर्य, स्वामी ४ अर्थ हैं।

[अवेति]॥ अवति, अव्यते वा। 'अव रक्षणादौ' (भ्वा० प० से०)। इन् (उ० ४।११८)। 'अविर्नाथे रवौ मेषे शैले मूषिककम्बले[1]' (इति मेदिनी) [१५७।२]। ('अविर्भूपुष्पवत्यो स्त्री वायुप्राकारभ सु[2] ना (इति वैजयन्ती) [पृ० २३० पं० ७]।

आज्ञाह्वानाध्वरा हवाः।

'हवः' (पु) के आज्ञा, पुकारना, यज्ञ ३ अर्थ हैं।

[एति]॥ 'ह्वेञ् स्पर्धायां शब्दे च' (भ्वा० उ० अ०)। 'भावेऽनुपसर्गस्य' (३।३।७५) इति ह्व संप्रसारणमप् च। हूयतेऽनेति वा। ['हवस्तु सततन्तौ स्यान्निदेशाह्वानयोरपि' इति हैमः, २।५५४]।

भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु॥ २०७॥

'भावः' (पु) के सत्ता, स्वभाव, अभिप्राय, चेष्टा, आत्मा, जन्म, वस्तु, क्रिया, लीला, विभूति, पण्डित, जन्तु, रतिवेग १३ अर्थ हैं।

[भेति]॥ भावयति। पचाद्यच् (३।१।१३४)। भवन वा। श्रिणीभुवोऽनुपसर्गे (३।३।२४) इति घञ्।

१. वचनमिदं नानार्थरत्नमालायामपि (पं० २०३५) लभ्यते।

१. '—शैलमूषिककम्बले' इति मेदिन्यां पाठः।

२. —भासु ना' इति वैजयन्त्यां पाठः।

भाव सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु । रत्याधौ च' (इति मेदिनी) [ १५९।२०-२१ ]।

स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने।

'प्रसव' (पु) के उत्पत्ति, फल, फूल, गर्भसे पैदा होना, सन्तान ५ अर्थ हैं।

[ स्यादिति ]॥ प्रसवनम्, प्रसूयते वा। षूङ् प्राणिप्रसवे ( दि० आ० से० )। 'ऋदोरप्' ( ३।३।५७ )। पचाद्यच् ( ३।१।१३४ ) वा। 'प्रसवो गर्भमोचने। उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च' (इति मेदिनी) [ १६०।४१-४२ ]।

अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः॥२०८॥

'निह्नव' (पु) के अविश्वास, सत्यको छिपाकर बोलना, शठता ३ अर्थ हैं।

[ अवीति ]॥ निह्नवनम्। 'ह्नुङ् अपनयने' ( अ० आ० अ० )। 'ऋदोरप्' (३।३।५७)। निह्नव पुंसि[1] निकृतावविश्वासापलापयोः' ( इति मेदिनी ) [१६०।३९]।

उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः।

'उत्सव' (पु) के उन्नति, क्रोध, इच्छाका वेग, आनन्दका अवसर ४ अर्थ हैं।

[ उदिति ]॥ उत्सेक =उद्रेक। इच्छाया प्रसव = उत्पत्ति। मह = उद्धव। उत्सवनम्। षू प्रसवैश्वर्ययोः' ( भ्वा० प० से० )। ऋदोरप् (३।३।५७)। 'उत्सवो मह उत्सेक इच्छाप्रसवकोपयोः' (इति मेदिनी)। [ १६०। ३३ ]।

अनुभावः प्रभावे च सतां च मतिनिश्चये॥२०९॥

'अनुभाव' (पु) के प्रभाव, सज्जनोंके ज्ञानका निर्णय, भाव-प्रकाशन ३ अर्थ हैं।

[अन्विति]॥ भवनम्। 'श्रिणीभुवो-' (३।३।२४) इति घञ्। अनुमतो भाव। 'प्रादयो गताद्यर्थे-' ( वा० २।२।१८) इति समासः। यद्वा-अनुभावयति। पचाद्यच् (३।१।१३४)। 'अनुभाव प्रभावे स्यान्निश्चये भावसूचके[2]' इति विश्व [ १६७।५८ ]।

स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये।

'प्रभव' (पु) के जन्मकारण (जैसे—पुत्रादिका जन्मकारण माता पिता, ...), प्रथम उपलब्धिका स्थान २ अर्थ हैं।

[ स्यादिति ]॥ जन्मनो हेतु। प्रभवत्यस्मात्। 'ऋदोरप्' (३।३।५७)। 'प्रभवो जलमूले[2] स्याज्जन्महेतौ पराक्रमे। ज्ञानस्य चादिमस्थाने' (इति मेदिनी) [१६०। ४१]। आद्योपलब्धये = प्रथमज्ञानार्थम्।

शूद्रायां विप्रतनये शस्त्रे पारशवो मतः॥२१०॥

'पारशव' (पु) के शूद्र जातिकी मातामें ब्राह्मण जातिके पितासे उत्पन्न सन्तान, फरसा २ अर्थ हैं।

[ शूद्रेति ]॥ पराञ्छृणाति। 'शृ हिंसायाम्' (क्र्या० प० से०)। 'आङ्परयो खनिशृभ्यां डिच्च' (उ० १।३३) इत्यु। परशुरेव। प्रज्ञाद्यण् (५।४।३८)। परस्त्रिया अपत्यं वा। 'परस्त्री परशुं च' (ग० ४।१।१०४) इत्यण्। पुंसि पारशव पुमान्[3]। परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च' (इति मेदिनी) [१६२।६०-६१]।

ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु।

'ध्रुव' (पु) के ध्रुव तारा, वट, वसु, योग-भेद, शिव, शङ्कु, कील ७ अर्थ, 'ध्रुवम्' (न) का निश्चित (जैसे—ध्रुव मूर्खोऽयम्,... ) १ अर्थ और 'ध्रुवम्' (त्रि) के निरन्तर, तर्क, आकाश ३ अर्थ हैं।

[ ध्रुव इति ]॥ ध्रुवति। 'ध्रुव गतौ' (तु० प० से०)। पचाद्यच् ( ३।१।१३४ )। 'ध्रुव कीले शिवे शङ्कौ वसौ योग वटे सुतो। ध्रुवा मूर्वाशालिपर्ण्यो[3] गीतिस्रुग्भेदयोरपि। ध्रुव तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्' इति विश्व [ १६२।८-९ ]। भभेदे=नक्षत्रविशेषे।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ॥२११॥

'स्व' (पु)के ज्ञाति (जाति), आत्मा २ अर्थ, 'स्वम्' (त्रि) का आत्मीय १ अर्थ और 'स्व' (पु न) का धन १ अर्थ है। (ज्ञाति और धन अर्थमें 'राम' शब्दकी तरह और आत्मा तथा आत्मीय अर्थमें 'सर्व' शब्दकी तरह इसके रूप होते हैं)।

---

१ 'पुंसि इति न प्रकृतोपयोगि। अग्रे पुमान् इत्युक्ते" इति म० म० शिवदत्तशर्मोक्तिन सम्यक्, मेदिन्यामग्रे पुमान्' इत्यनुक्तेः।

२ —भावसूचने' इति पाठो विश्वे।

२ '—जन्ममूले—' इति पाठो मेदिन्याम्।

३ '—पारशव पुमान्' इति पाठोऽपि।

३. '—शालिपर्ण्योर्गीति—' इति पाठो विश्वे।

[ स्व इति ] ॥ स्वनति, स्वन्यते वा । 'स्वन शब्दे' (भ्वा० प० से०) । 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति ड. । 'स्वो ज्ञातावात्मनो. स्वं निजे धने' इति हेमचन्द्र. [ ११५ ] । 'स्व' स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' (इति मेदिनी) [ १५७।२ ] ।

स्त्रीकटीवस्त्रबन्धेऽपि नीवी[1] परिपणेऽपि च ।

'नीवी' ( स्त्री ) के फुफुनी, राजपुत्रादिके धनका अदल-बदल, बनियां आदिका मूल धन ३ अर्थ हैं ।

[स्त्रीति] ॥ स्त्रियाः कट्या वस्त्रस्य बन्धने । परिपणे = राजपुत्रादेर्बन्धके ।—वणिजां मूलधने—इति मुकुट । तन्न । मेदिन्या ( हैमे ) तयो. पृथक्पाठात् । निव्ययति, निवीयते वा । 'व्येञ् संवरणे' ( भ्वा० उ० अ० ) । 'नौ व्यो यलोपः पूर्वस्य च दीर्घः' ( उ० ४।१३६ ) इतीण् । 'कृदिकारात्-' ( ग० ४।१।४५ ) इति ङीष् । 'नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे' ( इति हैम ) [ २।५४१ ] ।

शिवा गौरीफेरवयोः

'शिवा (‚स्त्री ) के पार्वती, सियारिन, स्यार, दामी वृक्ष, आँवला, भूंई,ऑवला ६ अर्थ हैं ।

[ शिवेति ] ॥ शिवमस्त्यस्या । अर्शआद्यच् ( ५। २।१२७ ) । [ 'शिवं मोक्षे सुखे भद्रे सलिलेऽथ शिवो हरे। वेदे योगान्तरे कीले वालुके गुग्गुलेऽपि च । ] । 'पुण्डरीकद्रुमे चापि शिवा झाटामलोपयो[2]। अभयामलकी-गौरीक्रोष्ट्रीसक्तुफलासु च' इति विश्व. । [१०५।१०-११]।

द्वन्द्वं कलहयुग्मयोः ॥ २१२ ॥

'द्वन्द्वम्' ( न ) के लड़ाई, जोड़ी, रहस्य ३ अर्थ हैं ।

[ द्वन्द्वमिति ] ॥ द्वौ द्वौ । 'द्वन्द्व रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' ( ८।१।१५ ) इति साधु. । 'चार्थे द्वन्द्व.' (२।२।२९) इति निर्देशात्पुंस्यपि । 'द्वंद्वं रहस्ये कलहे तथा मिथुनयुग्मयो.' ( इति मेदिनी ) [ १५८।१० ] ।

द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।

'सत्त्वम्' ( न ) के वस्तु, प्राण, अधिक पराक्रम होना ३ अर्थ और 'सत्त्वम्' ( न पु ) का प्राणी १ अर्थ है ।

[ द्रव्येति ] ॥ द्रव्यं = वित्तम् । असु = प्राण [ण ]। व्यवसायः = निश्चयः । सीदन्त्यस्मिन् गुणाद्या । 'षद्लृ विशरणादौ' ( भ्वा० प० अ० ) । 'अन्येभ्योऽपि दृश्यते' ( उ० ४।१०५ ) इति त्वन् । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयो' । आत्मत्वव्यवसायासुवित्तेष्वस्त्री[1]तु जन्तुषु' (इति मेदिनी) [ १५९।२८ ] ।

क्लीबं नपुंसके पण्ढे वाच्यलिङ्गमविक्रमे ॥ २१३ ॥

'अन्यध्वगातिप्रणतौ प्राध्वौ प्राध्वं तु बन्धने' ८३ ]

'क्लीबम्' ( न ) का नपुंसक १ अर्थ और 'क्लीबम्' (त्रि) का सामर्थ्यहीन १ अर्थ है ।

[ 'प्राध्वः' ( पु ) के चलकर मार्गको पूरा किया हुआ, अतिनम्र २ अर्थ और 'प्राध्वम्' (न) का बन्धन १ अर्थ है ]।

[ क्लीति ] ॥ पण्डे = तृतीयाप्रकृतौ । क्लीबते । 'क्लीबृ अधाष्टर्ये' ( भ्वा० आ० से० ) । 'इगुपध-' (३। १।१३५) इति क । 'अस्त्री नपुंसके क्लीब वाच्यलिङ्गमविक्रमे' इति रुद्र. । अयमोष्ठ्योऽत्र भ्रमात्पठितः[2] । पूर्वगन्धर्वजिह्वास्वोष्ठ्येषु ।

इति वान्ता शब्दा. ।

अथ शान्ता शब्दा ।

द्वौ विशौ वैश्यमनुजौ

'विट्' ( पु ) के वैश्य, मनुष्य, प्रवेश ३ अर्थ हैं ।

[ द्वाविति ] ॥ विशति । 'विश प्रवेशने' ( तु० प० से० ) । क्विप् ( ३।२।१७८ ) । 'विट् स्मृतो वैश्यमनुजप्रवेशेषु[3] मनीषिभि.' इति विश्व [१६७।५] ।

द्वौ चराभिमर्दौ स्पशौ ।

'स्पश.' ( पु ) के दूत, युद्ध २ अर्थ हैं ।

[द्वाविति] ॥ अभिमर = युद्धम् । स्पशति । 'स्पश

---

१. 'नीवि.—' इति पाठान्तरम् ।

२. '—झण्टामलो—' इति मेदिनीपाठः ।

१ '—आत्मत्वे व्यवसायाऽसुवित्तेष्वस्त्री—' इति मेदिन्या पाठ ।

२. इदं 'बवयो सावर्ण्यादत्र पाठ' इति महे० वचनं च चिन्त्यम् । 'क्रूणक्षुद्रक्लीवक्षुद्रा ''' इति, क्लीवो वर्ववर: पण्ढ ' इति, (अभि० रत्न० क्रमश २।१९२, २।२७५.) क्लीवो विक्रमहीनेऽपि — इति(हलायुधात्.५।३४) 'क्लीवोऽपौरुषपण्ढयो ' (अने० सं० २।५३२)इति वान्तप्रकरणहैमात्, 'पापे क्लीवं नपुंसके पण्ढोऽन्यवदविक्रमे'इति मेदिन्याश्च वान्तस्यै (दन्त्योष्ठ्यस्यै)व 'क्लीव'शब्दस्यौपलब्ध्या सर्वेषां भ्रमकल्पनानौचित्यात् । विश्व (१६३। १२ ) मेदिनी ( १५८।५ ) विश्वलोचने ( ) त्वयं दन्त्योष्ठ्यः पठितः ।

३. विश्वे'क' पुस्तके '—प्रवेशे तु' इति पाठः ।

धाधतस्पर्शनयो ( भ्वा० उ० से० )। पचाद्यच् (३।१।१३४)।'दशा स्यात्सपराधे च प्रणिपातेऽपि पूरुषम्' (इति मेदिनी) [ १६३।१६ ]।

द्वौ राशी पुञ्जमेषाद्यौ

'राशि' ( पु ) के ढेरी, मेष आदि बारह लग्न २ अर्थ हैं।

[ द्वाविति ]॥ रश्यते, रशति वा। 'रश' इति सौत्रो' धातु स्वनार्थ। बाहुलकादिन्। णिजन्तात्। 'अच इ' (उ० ४।१३६) वा। [ 'राशिर्मेषादिपुञ्जयोः' इति हैम २।५६५, मेदिनी १६३।१२ च ]।

द्वौ वंशौ कुलमस्करौ ॥ ७१४॥

'वंश' ( पु ) के कुल ( खान्दान ), बाँस, सध, पीठकी रीढ ४ अर्थ हैं।

[द्वाविति]॥ वमति, वम्यते वा। 'टुवम उद्गिरणे' (भ्वा० प० से०)। 'वृभूवमिभ्य शक्'। मस्कर=वेणु। 'वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च' (इति विश्व) [ १६८।१० ]।

रहःप्रकाशौ वीकाशौ

'वीकाश' ( पु ) के एकान्त, स्पष्ट, २ अर्थ हैं।

[ रेति ]॥ विकाशनम्। अस्मिन् वा। 'काशृ दीप्तौ' (भ्वा० आ० से०)। भावे' (३।३।१८) 'हलश्च' ( ३।३।१२० ) इत्यधिकरणे वा घञ्। 'इक काशे (६।३।१२३) इति दीर्घ। यद्वा–विकशनम्। अत्र वा। कश शब्दे'(अ० आ० से०)। पूर्ववत्। 'वीकाशो विजने व्यक्त[3]' इति विश्व [ १६६।२० ]। 'विकाश पुंसि विजने प्रकाशे सदृश[4] समे। उचिते च' (इति मेदिनी) [ १६४।२९ ]।

---

१. रश'धातो सौत्रत्व 'अशे रश च' (उ० ७७५) इत्युणादिसूत्रेणाऽदशविधानमूलकमव, अन्यथा अशिपणा द्योरुडायत्युकौ च (उ० ४।१२२) इत्युणादिसूत्रेण रुडा गमविधानेन 'राशि शब्दसाधुत्व पूर्वसूत्रेणादेशाश्च च वृथैव स्यादित्यवधेयम्।

२. सि० कौ० उणादिसूत्रपाठे चेद सूत्र नोपलभ्यते तस्मात् पूर्वोक्तो (२।४।१६०, २।७।१) वंश'शब्दसाधन प्रकार एव साधीयान्।

३ –व्यक्तौ' इति विश्वे पाठो ग्रन्थद्वये, विकाश–' इति 'क' पुस्तके विश्वे।

४ सदृश—' इत्यशो न प्रकृतोपयुक्त, 'विकाश-' शब्दाथकत्वाभावात्।

निर्वेशो भृतिभोगयोः।

'निर्वेश' ( पु ) के वेतन, उपभोग २ अर्थ हैं।

[ निरिति ]॥ निविश्यते। निर्वेशन च। घञ् ( ३।३।१८, १९ )। भृति = वेतनम्। निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च (इति मेदिनी) [ १६४।२२ ]।

कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ॥ ७१५॥

'कीनाश' ( पु ) के यमराज, वानर २ अर्थ और 'कीनाश' ( त्रि ) के क्षुद्र, किसान २ अर्थ हैं।

[ कृतेति ]॥ की' इत्यव्ययं कुत्सायाम्। की कुत्सित नाशयति। पचाद्यच (३।१।१३४)। यद्वा–क्लिश्नाति। क्लिश्यते वा। 'क्लिशू विबाधने' ( क्र्या० प० से० )। क्लिश्यते व धे (उपतापे)' (दि० आ० से०)वा। क्लिशेरीच्चोपधाया कन् लोपश्च लो नाम् च' (उ० ५।५६)। 'कीनाश कर्षकक्षुद्रोपांशुघातिषु वाच्यवत्। (यमना)' (इति मेदिनी) [१६४।२२]।

पदे लक्ष्ये निमित्तेऽपदेशः स्यात्

'अपदेश' ( पु ) के व्याज ( बहाना ) लक्ष्य, निमित्त ३ अर्थ हैं।

[ पेति ]॥ अपदेशनम्। अपदिश्यते वा। 'दिश अतिसर्जने' (तु० उ० अ०)। घञ् (३।३।१८, १९)। पदे = स्थाने। 'अपदेश पुमाल्लक्ष्ये निमित्तव्याजयोरपि' इति विश्व [ १७०।३२ ]।

कुशमप्सु च।

'कुशम्' ( न ) का पानी १ अर्थ और 'कुश' ( पु ) के रामचन्द्रका पुत्र, कुशा, द्वीप, जोती ( जुव ठकी रस्सी ) ४ अर्थ हैं।

[ कुशेति ]॥ को शेते तिष्ठति। 'अन्येष्वपि–' (वा० ३।२।१०१) इति ड। कुशयति। 'कुश श्लेषणे' (दि० प० से०)। इगुपध–' (३।१।१३५) इति क। कु पाप श्यति। शो तनूकरणे' (दि० प० अ०)। 'सुपि–' ( ३।३।४ ) इति योगविभागात्क। 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुश जले' [ कुशी फालेऽपि, वल्गाया कुशा, पापिष्ठमत्तयो। कुशो वाच्यवदाख्यात' ] इति विश्व [ १६७।२३ ]।

दशावस्थानेकविधापि

'दशा' ( स्त्री ) के हालत, अनेक तरह, दीपकी बत्ती ३ अर्थ और 'दशा' ( स्त्री नि० ब० व० ) का कपड़ेकी किनारी १ अर्थ है।

[दशेति] ॥ दशति । 'दंश दशने' (भ्वा० प० अ०) । मूलविभुजादि(वा० ३।२।५)कः । यद्वा-पचाद्यच् (३।१।१३४) । 'जपजभदहदश-' (७।४।८६) इति निर्देशादनिदयति नलोपः । यद्वा—दश्यते । 'गुरोश्च-' (३।३।१०४) इत्यङ् । अनेकविधा=बाल्यादिरूपा । 'दशावस्था दीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति' (इति मेदिनी) [१६३।८] ।

आशा तृष्णापि चायता ॥ २१६ ॥

'आशा' (स्त्री) के तृष्णा (आशा), पूर्व आदि दिशा २ अर्थ हैं।

[आशेति] । आ समन्तादश्नुते । 'अशू व्याप्तौ' (स्वा० आ० से) । पचाद्यच् (३।१।१३४) । 'आशा ककुभि तृष्णायाम्' (इति हैमः) [२।५२६] ।

वशा स्त्री करिणी च स्यात्

'वशा' (स्त्री) के स्त्री, हथिनी, बाँझ गौ, लड़की, वशमें रहनेवाली ५ अर्थ हैं।

[वशेति] ॥ वष्टि । 'वश कान्तौ' (अ० प० से०)। पचाद्यच् (३।१।१३४)। स्त्री=योषिति[त्] । 'वशा वन्ध्यासुतायोषास्त्रीगवीकरिणीषु च' इति विश्वः [१६७।७२]।

दृग् ज्ञाने ज्ञातरि त्रिषु ।

'दृक्' (स्त्री) के ज्ञान, नेत्र, बुद्धि ३ अर्थ और 'दृक्' (त्रि) का जाननेवाला १ अर्थ है।

[दृगिति] ॥ पश्यति । 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०) । क्विप् (३।२।१७८) । यद्वा—दर्शनम् । अनया वा । सम्पदादि. (वा० ३।३।१०८) । 'दृक् स्त्रिया दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके' (इति मेदिनी) [१६३।८]।

स्यात्कर्कशः साहसिकः कठोरावसृणावपि ॥ २१७ ॥

'कर्कशः' (त्रि) के साहसी, कठोर, रूखा, दृढ, निर्दय, कृपण, क्रूर ७ अर्थ और 'कर्कशः' (पु) के तलवार, कबीला, ऊखकी भेद, गन्ना, कासमर्द ४ अर्थ हैं।

[स्यादिति] ॥ कृणाति । 'कॄ हिंसायाम्' (क्र्या० उ० से०) । 'अन्येभ्योऽपि-' (३।२।७५) इति विच् । कश्यते । 'कश शब्दे' (अ० आ० से०) । पचाद्यच् (३।१।१३४) । कर् चासौ कशश्च । 'कर्कश परुषे क्रूरे कृपणे निर्दये दृढे । इक्षौ साहसिके कासमर्दकाम्पिल्लयोरपि' इति विश्वः [१६९।२७-२८] । अमसृण.=दुस्पर्शः ।

प्रकाशोऽतिप्रसिद्धेऽपि

'प्रकाशः' (पु) के बहुत प्रसिद्ध, घाम, उजाला, हँसी ४ अर्थ हैं।

[प्रेति] ॥ प्रकाशते । प्रकाशनं वा । 'काशृ दीप्तौ' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१८) वा । प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे' इति विश्वः[१] [१६९।२०] ।

शिशावज्ञे च बालिशः ।

कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः [८४]
नाशः क्षये तिरोधाने जीवितेशः प्रिये यमे [८५]
नृशंसखड्गौ निस्त्रिंशावंशुः सूर्यांशवः कराः [८६]
आशुर्व्रीहौ शालिशीघ्रार्थे पाशो बन्धनशस्त्रयोः[८७]

'बालिशः' (पु) के बालक, मूर्ख २ अर्थ हैं।

['कोशः' (पु न) के फूलकी कोंढी, तलवारकी म्यान, खजाना, दिव्य (शपथ-भेद) ४ अर्थ हैं]।

['नाशः' (पु) के क्षय, छिपना २ अर्थ हैं]।

['जीवितेशः' (पु) के प्रिय, यमराज २ अर्थ हैं]।

['निस्त्रिंशः' (पु) के क्रूर, तलवार २ अर्थ हैं]।

['अंशुः' (पु) के सूर्य, किरण, सूत आदिका पतला हिस्सा ३ अर्थ हैं]।

['आशु' (न) के व्रीहि (धान्य-भेद), शीघ्र २ अर्थ हैं]।

['पाशः' (पु) के बन्धन, वरुणका हथियार या फाँस २ अर्थ हैं]।

[बालीति] ॥ बाडनम् । 'बाडृ आप्लाव्ये' (भ्वा० आ० से० ) । इन् (उ० ४।११८) । बालिं श्यति । 'शो तनूकरणे' (दि० प० अ०) 'आतोऽनुप-' (३।२।३) इति कः । [बालिशस्तु शिशौ मूर्खे' इति हैमः, २।७६४ ]।

इति शान्ताः शब्दाः ।

अथ षान्ताः शब्दाः ।

सुरमत्स्यावनिमिषौ

'अनिमिषः' (पु) के देवता, मछली २ अर्थ हैं।

[सुरेति] ॥ न निमिषति । 'मिष स्पर्धायां' (तु० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । नञ्समास (२।२।६) । ['अनिमिषः सुरमत्स्ययोः' इति हैमः, ४।३३१ ]।

पुरुषावात्मामानवौ ॥ २१८ ॥

'पुरुषः' (पु) के क्षेत्रज्ञ (ज्ञानी), पुरुष, पुन्नाग वृक्ष ३ अर्थ हैं।

---

१. विश्वे '—कासमर्दकाम्पिल्लयोरपि' इति पाठः ।

[णिविति] ॥ पुरति । 'पुर अग्रगमने' (तु० प० से०)। 'पुर कुषन्' ( उ० ४।७४ ) । 'पुरुषः पूरुषे साख्यजे च पुंनागपादपे' (इति मेदिनी) [१६८।४१] ।

वाङ्मत्स्याशत्स्थगो ध्वाङ्क्षौ

'ध्वङ्क्ष' ( पु ) के कौआ, मछलीको खानेवाला पक्षी ( बगुला ), भिक्षुक, तक्षक सर्प, कपासके बीज निकालनेका यन्त्र-विशेष ६ अर्थ हैं।

[ केति ] ॥ मत्स्यानत्ति । मत्स्याश्चासौ खगश्च । ध्वाङ्क्षति । 'ध्वाक्षि घोरवाशिते च' (भ्वा० प० से०) । 'अच् काङ्क्षायाम्' । पचाद्यच् ( ३।१।१३४ ) । ध्वाङ्क्षो मत्स्याशिनि काके भिक्षुके तक्षकेऽपि च' [ ध्वाङ्क्षी कककोलिकायां स्यात्' ] (इति मेदिनी) [१६८।१६] ।

कक्षौ तु तृणवीरुधौ ।

'कक्ष' ( पु ) के घास, लता, काँख, जङ्गल ४ अर्थ हैं।

[ केति ] ॥ कषति कष्यते वा । 'कष हिंसायाम्' (भ्वा० प० से०) । वृतृवदिहनिकमिकषिभ्यः सः' ( उ० ३।६२ ) । 'कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि । कक्षः शुष्कतृणे प्रोक्तः कक्षः कच्छ उदाहृतः । कक्षा स्पर्धापदे काञ्च्यां रथगेहप्रकोष्ठयोः । गजरज्जौ परीधानपश्चादञ्चलपल्लवे इति धरणिः । [ कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे । पापे कक्षा त्विभरज्जौ काञ्च्यां गेहप्रकोष्ठके । भित्तौ साम्ये रथभागेऽवरोधपश्चिमाञ्चले । उद्ग्राहिण्यां च' इति हैम, २।५७२-५७३ ] । वीरुत् = लता ।

अभीषुः प्रग्रहे रश्मौ

'अभीषु' ( पु ) के घोड़े आदिका बागडोर, किरण २ अर्थ हैं।

[ एति ] ॥ ईषते ईष्यते वा । 'ईष गतिहिंसादर्शनेषु' (भ्वा० आ० से०) । 'इषे किच्च' (उ० १।१३) इत्यु । प्रादेरित्वम् । अभिगत इषु । 'प्रादयो ग-ा-' (वा० २।२।१८) इति समासः । प्रग्रहे = अश्वादिरज्जौ । रश्मौ = किरणे । [ अभीषुः प्रग्रहरोचिषो ' इति मूर्धन्यान्तेषु हैम, ३।७७० ] ।

प्रैषः प्रेषणमर्दने ॥ २१९ ॥

'प्रैष' ( पु ) के भेजना, पीड़ा २ अर्थ हैं।

[ प्रैष इति ] ॥ प्रेषणम् । इषेर्भावे घञ् (३।३।१८)। 'प्रादूहो—' (वा० ६।१।८९) इति वृद्धिः । 'प्रैष प्रेषणपीडयो ' इत्यजयः । प्रैष [1] स्यात्प्रेषणे क्लेशे मर्दनोन्माद

योरपि' इति विश्वः [ १७१।१० ] ।

पक्षः सहायेऽपि

'पक्ष' ( पु ) के सहाय, पखवारा, पार्श्व, ग्रह, साध्य, अवरोध, केश आदिसे आगे रहनेपर उसका समूह, बल, मित्र, पंख, रुचि, विकल्पित १२ अर्थ हैं।

[पेति] ॥ पक्षति, पक्ष्यते वा । 'पक्ष परिग्रहे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः [1] । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च वाजिकुञ्जरपार्श्वयोः ' (इति मेदिनी) [१६६।१८-१९] ।

उष्णीषं शिरोवेष्ट[2]किरीटयोः ।

'उष्णीष' ( पु ) के पगड़ी, किरीट २ अर्थ हैं।

[ विति ] ॥ उष्णमीषते हिनस्ति । ईष गत्यादौ' (भ्वा० आ० से०) । इगुपध-' (३।१।१३५) इति कः । शकन्ध्वादि' ( वा० ६।१।९४ ) । 'उष्णीषं तु शिरोवेष्टे किरीटे लक्षणान्तरे' इति विश्वः [ १७२।१९ ] । शिरसो वेष्टने = वस्त्रादिरूपे । किरीटे = मुकुटे ।

शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ॥ २२० ॥

'वृष' ( पु ) के बहुत पराक्रमवाला, चूहा, श्रेष्ठ, धर्म, वृष नामका दूसरा राशि, बैल ६ अर्थ हैं।

[शुक्रेति] ॥ वर्षति । वृषु सेचने[3]'(भ्वा० प० से०)। इगुपध-' (३।१।१३५) इति कः । वृषो धर्मे बलीवर्दे शृङ्ग्यां पुराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च वास[4]मूषिकशुक्रले' (इति मेदिनी) [ १६७।२५-२७ ] । शुक्रले=बहुवीर्यवति, व्यवप्रयोगे वा ।

कोपोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।

'कोष' ( पु न ) के फूलकी कली, तलवारकी म्यान, खजाना, दिव्य ( शपथ भेद ) ४ अर्थ हैं।

[ कविति ] ॥ कुष्यते । 'कुष निष्कर्षे' (क्र्या० प० से०) । घञ् (३।३।१९)। कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोशेऽण्डसघाते पेश्यां शब्दादिसंग्रहे' ( इति मेदिनी ) [ १६६।१०, विश्व १७१।८ च ] ।

१ विश्वे पुस्तकद्वये मेदिन्यां ( १६६।१९ ) पाठ्यते (७३२) नानार्थरत्नमालायां (प० ११०१) च 'प्रैष—' इत्यैकारादिरेवाय पठितः ।

१ '—पार्ष्णिग्रहे साध्यविरोधयोः । वाजे—' इति मेदिनीपाठः ।

२ 'उष्णीष— इति पुस्त्वे क्वचित्पठ्यते ।

३ 'वृषु ( श्रेष्ठे )' इति पाठान्तरम् ।

४ '—वासा—' इति मेदिनीपाठः ।

दिव्ये = शपथे। शब्दादिसंग्रहे = अमरादौ। तालव्यान्तो-[ कोशो ]ऽपि। 'विश्वक्सेनोऽमर्षः कोपविषादौ च' इत्यूष्मविवेकात्। 'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके-' इति श्लोकस्य (मेदिन्याम्) [ १६२।६ ]। तालव्यादौ (न्ते) अपि पाठः।

धृतेऽक्षे शारिफलकेऽप्याकर्षः

'आकर्षः' (पु) के जुआ, जुआ खेलनेका पाशा, शतरंज आदि खेलनेकी बिसात, खींचना, इन्द्रिय ५ अर्थ हैं।

[ धूत इति ]॥ अक्षे = पाशके। शारिफलकम् = प्रक्षपीठिका। आकर्षणम्। आकृष्यते वा। आकृष्यन्त्यस्मिन् वा। 'कृष विलेखने' (तु० उ० अ०)। घञ् (३।३।१८-१९)। 'नाकर्षो' धूत इन्द्रिये। पाशके शारिफलके कोदण्डाभ्यासवस्तुनि। आकर्षणेऽपि पुंसि स्यात्' ( इति मेदिनी) [ १६७।३०-३१ ]।

अथाक्षमिन्द्रिये ॥ २२१ ॥

ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे।

'अक्षम्' (न) के इन्द्रिय, तूतिया, सोचरलार २ अर्थ और 'अक्षः' (पु) के जुआ खेलनेका पाशा, कर्ष (सोलह मासाका प्रमाण-विशेष); पहिया, बहेड़ा, व्यवहार (लेन-देन) ५ अर्थ हैं।

[ अपेति ]॥ अश्नोति, अश्यते वा, अनेन, अत्र वा। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। घञ् (३।३।१९)। 'हलश्च' (३।३।१२०)। इत्यन्यतरयोर्वा। 'अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः। आत्मज्ञे पाशके चाक्षं तुत्ये सौवर्चलेन्द्रिये' इति विश्वः [ १८२।२ ]। व्यवहारे = आयव्ययचिन्तायाम्। कर्षे = मानभेदे। चक्रे = रथावयवे।

कर्पूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनी ॥२२२॥

'कर्षूः' (पु) का खेती, गोइंठाका अङ्गार २ अर्थ और 'कर्षूः' (स्त्री) का नहर १ अर्थ है।

[ कर्षूरिति ]॥ कर्षणम्। कृष्यते, कर्षति वा। 'कृष विलेखने' (भ्वा० प० अ०)। 'कृषिचमितनि-' (उ० १।८०) इत्यू.। 'करीषाग्निः पुमान् कर्षूः कुल्यायामपि[2] च स्त्रियाम्' इति रभसः। [ 'कर्षूस्तु तुषाग्नौ कृषिकुल्ययोः' इति हैम', २।५७३ ]। वार्ता = जीविका।

पुंभावे तत्क्रियायां च पौरुषम्

'पौरुषम्' (न) के पुरुषका भाव, पुरुषार्थ, तेज ३ अर्थ और 'पौरुषम' (त्रि) का पोरसा (साढे चार हाथका प्रमाण-विशेष) १ अर्थ है।

[पुमिति ]॥ पुरुषस्य कर्म, भावो वा। 'प्राणभृज्जाति-' (५।१।१२९) इत्यञ्। 'पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि। ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत्' इति विश्व.[1] [ १७१।१७, मेदिनी १६८।४२ ]।

विषमप्सु च।

'विषम्' (न) के जल, जहर २ अर्थ हैं।

[ विषेति ]॥ वेवेष्टि। 'विष्लृ व्याप्तौ' (जु० उ० अ०)। 'इगुपध-' ( ३।१।१३५ ) इति कः। 'विषं तु गरले तोये' [ ऽतिविषायां विषा भवेत्' ] इति विश्वः [ १७१।२ ]।

उपाधानेऽप्यामिषं स्यात्

'आमिषम्' (न पु) के उपादन (घूस, रिश्वत), भोग्य वस्तु, संभोग, मांस ४ अर्थ हैं।

[ उपेति ]॥ आमिष्यते भुज्यते। 'मिष स्पर्धे' (तु० प० से०)। घञ्। (३।३।१९)। सञ्ज्ञापूर्वकत्वान्न गुणः।— घञर्थे कः (वा० ३।३।५८)—इति तु परिगणनादयुक्तम्। 'आमिषं पुनपुंसकम्। भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च' (इति मेदिनी) [ १६७।३१ ]। उपादानम् = उत्कोच.।

अपराधेऽपि किल्बिषम्[2] ॥ २२३ ॥

'किल्बिषम्' (न) के अपराध, पाप, रोग ३ अर्थ हैं।

[ अपेति ]॥ केलनम्। किल्यते वा। 'किल श्वैत्ये' (तु० प० से०)। 'कीलेर्बुक्च' (उ० १।५०) इति टिषच्। 'किल्बिषं पापरोगयो. [ अपराधेऽपि' ]। (इति मेदिनी) [ १६८।३४ ]।

स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्।

'वर्षम्' (पु न) के वर्षा, जम्बूद्वीपके खण्ड आदि, वर्ष (साल) ३ अर्थ और 'वर्षाः' (स्त्री नि० ब० व०) का वर्षा ऋतु १ अर्थ है।

१. अत्रे 'पुंसि स्यात्' इत्युक्त्याऽस्य 'ना' इत्यस्य पूर्वेणाभीवृशब्देनान्वयादत्र 'आकर्ष—' इत्येव पाठ समीचीनः प्रतिभाति।

२. 'कुल्याल्पकृत्रिमनदीनदीजीवासु निर्झरे' इति वि० लो० ( पृ० २२५ श्लो० १२),······'जलबिना कुल्या च जम्बालिनी' इति अभि० चि० म० (४।१४६) वचनाच्च 'नदी'सामान्येपि 'कुल्या'शब्दः।

१. विश्वे तु '—स्योन्नत'···नृमानेऽपि [illegible] पौरुषः' इत्येषं पाठः।

२. 'किल्मिषम्' इति पाठान्तरम्।

[ स्यादिति ]'॥ लोकधातु =जम्बुद्वीपादि । तदंशे = भारतादौ । वर्षणम् । 'वृष् सेचने' (भ्वा० प० से०) । 'अज्विधौ भयादीनामुपसंख्यानम्' ( ३।३।५६ ) इत्यच् । वर्षयति । वर्षति वा । पचाद्यच् (३।१।१३४)। 'वर्षोऽस्त्री भारतादौ च जम्बुद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि' (इति मेदिनी) [ १६७।२४ ] ।

प्रेक्षा नृत्येक्षणं प्रज्ञा

'प्रेक्षा' ( स्त्री ) के नाच देखना, बुद्धि २ अर्थ हैं।

[ प्रेक्षेति ] ॥ प्रेक्षणम् । अनया वा । 'ईक्ष दर्शने' (भ्वा० आ० से०) । 'गुरोश्च–' ( ३।३।१०३ ) इत्य । 'प्रेक्षा धीनृत्यदर्शयो' इत्यजय । 'प्रेक्षा नृत्येक्षणे बुद्धौ' (इति मेदिनी) [ १६६।१६ ]।

भिक्षा सेवार्थना भृतिः ॥ २२४ ॥

'भिक्षा' ( स्त्री ) के सेवा, याचना, वेतन, भिक्षामें मिला हुआ पदार्थ ४ अर्थ हैं।

[ भीति ] ॥ भिक्षणम् । भिक्ष्यते वा । 'भिक्ष याञ्चायां' (भ्वा० आ० से०) । 'गुरोश्च–' ( ३।३।१०३ ) इत्य । 'भिक्षा भृतौ च याच्ञायां सेवाभिक्षितवस्तुनो' इति विश्व [ १८३।१३ ] । भृति = वेतनम् ।

त्विट् शोभापि

'त्विट्' ( स्त्री ) के शोभा, वचन, तेज ३ अर्थ हैं।

[त्विडिति] ॥ त्वेषणम् । अनया वा । 'त्विष दीप्तौ' ( भ्वा० उ० अ० ) । सम्पदादि ( वा० ३।३।१०८ ) । 'कान्तौ वाचि रुचौ त्विट् स्त्री' इति रभस । [ 'त्विट् कान्तौ व्यवसाये च जिगीषायां रुचौ गिरि' इति विश्व, १७३।११ ] ।

त्रिषु परे

यहाँसे आगे सब षकारान्त शब्द त्रिलिङ्ग हैं।

[ त्रिष्विति ] ॥ वक्ष्यमाणास्त्रयो वाच्यलिङ्गा ।

न्यक्षं कार्त्स्न्यनिकृष्टयोः[1] ।

'न्यक्षम्' ( त्रि ) के साकल्य, नीच २ अर्थ और 'न्यक्ष' ( पु ) का परशुराम १ अर्थ है।

[न्येति] ॥ नियतानि निकृतानि वा अक्षाणि यस्य वा । 'न्यक्ष परशुरामे स्यान्न्यक्षं कार्त्स्न्यनिकृष्टयोः' इति विश्व [ १८३।८ ] ।

[1] '–कास्र्न्ये निकृष्टयो' इति विश्वस्य पाठश्चिन्त्य ।

प्रत्यक्षेऽधिकृतेऽध्यक्षः

'अध्यक्ष' ( त्रि ) के प्रत्यक्ष, मालिक २ अर्थ हैं।

[ प्रेति ] ॥ अधिगतोऽक्षम् । अधिगतोऽक्षेण वा । अक्षेषु व्यवहारेषु अधिकृत । अधिकृतान्यक्षाण्यस्य । अध्यक्ष्णोति वा । पचाद्यच् (३।१।१३४) । [ 'अध्यक्षोऽधिकृते प्रोक्त प्रत्यक्षेऽध्यक्षमिष्यते' इति विश्व, १८३।१४ ] ।

रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २२५ ॥

व्याजसंख्याशरव्येषु लक्षं घोषो रवव्रजौ [ ८८ ]
कपिशीर्षं भित्तिशृङ्गेऽनुतर्षश्चषकः सुरा [ ८९ ]
दोषो वातादिके दोषा रात्रौ दक्षोऽपि कुक्कुटे [ ९० ]
शुण्डाग्रभागे गण्डूषो द्वयोश्च मुखपूरणे [ ९१ ]

'रूक्ष' ( त्रि ) के प्रेमरहित, रूखा २ अर्थ हैं।

[ 'लक्षम्' ( न ) के व्याज, लाख संख्या, निशाना ३ अर्थ हैं ]।

[ 'घोष' ( पु ) के शब्द ( हल्ला, आवाज ), अहीरोंके रहनेका स्थान २ अर्थ हैं ]।

[ 'कपिशीर्षम्' ( न ) के दिवालका ऊपरी भाग, मद्य २ अर्थ हैं ] ।

[ 'अनुतर्ष' ( पु ) के मदिरा पीनेका प्याला, मदिरा, अभिलाष, तृष्णा ४ अर्थ हैं ]।

[ 'दोष' ( पु ) के वात आदि तीन दोष, अपराध २ अर्थ और 'दोषा' ( अव्य० ) का रात १ अर्थ है ]।

[ 'दक्ष' ( पु ) का मुर्गा १ अर्थ और 'दक्ष' ( त्रि ) का चतुर १ अर्थ है।

[ 'गण्डूष' ( पु ) के हाथीके सूंडका अगला भाग १ अर्थ और 'गण्डूष' ( पु स्त्री ) का कुल्ला १ अर्थ है ]।

[ विति ] ॥ रूक्षयति । 'रूक्ष पारुष्ये' ( चु० उ० से० ) । पचाद्यच् (३।१।१३४) । अप्रेम्णि = निःस्नेहे । अचिक्कणे = मसृणे । [ 'रूक्ष पादपजातौ स्याद्रूक्ष प्रेमण्यचिक्कणे' इति विश्व, १८३।१२ ] ।

इति षान्ताः शब्दाः ।

अथ सान्ताः शब्दाः ।

रविश्वेतच्छदौ हंसौ

'हंस' ( पु ) के सूर्य, हंस पक्षी, योगि-भेद ३ अर्थ हैं।

[ रेति ] ॥ हन्ति गच्छति । 'हन हिंसागत्योः' (अ० प० अ०) । पचाद्यच् (३।१।१३४) । 'भवेद्वर्णागमाद्ध-

सः' इति सक्। यद्वा—'वृतुवदिवंविचिषसिहृनिकमिकपिभ्यः.' (उ० ३।६२) इति सप्रत्ययः।[1] 'हंसो विहंगभेदे स्यादर्के विष्णौ हयान्तरे। योगिमन्त्रादिभेदेषु[2] परमात्मन्यमत्सरे[3]। निर्लोभनृपतौ हंसः शारीरमरुदन्तरे' इति विश्व [ १७४। ८-९ ]।

सूर्यवह्नी विभावसू।

'विभावसुः' ( पु ) के सूर्य, अग्नि २ अर्थ हैं।

[ सूर्येति ] ॥ विभा प्रभा वसु धनमस्य। 'विभावसु पुमान्सूर्ये हारभेदे च पावके' (इति मेदिनी) [१७४।६४]।

वत्सौ तर्णकवर्षौ द्वौ

'वत्सः' ( पु ) के गौका बाछा, वर्ष २ अर्थ और 'वत्सम' (न) का छाती १ अर्थ है।

[ वत्साविति ] ॥ वसति, अस्मिन्वा। 'वस निवासे' (भ्वा० प० अ०)। 'वृतुवदि–' (उ० ३।६२) इति सः। 'वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीबम्' ( इति मेदिनी) [१७०।११-१२]। तर्णकः = गो पुत्र, वर्ष = वत्सरः।

सारङ्गाश्च दिवौकसः ॥ २२६ ॥

'दिवौकसः' ( पु ) के चातक पक्षी, देवता २ अर्थ हैं।

[ सारेति ] ॥ सारङ्गमस्य। शकन्ध्वादि. (वा० ६। १।९४)। सारं गायति वा[3]। 'गै शब्दे'(भ्वा० प० अ०)। गापोष्टक्' ( ३।८।८ ) मृगचातकहरिणा। द्यौरोको यस्य। 'दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके' (इति मेदिनी) [ १७३।५४ ]।

शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः।

'रसः' ( पु ) के शृङ्गार आदि नव रस, विष, वीर्य, कसाव आदि छः रस, राग, पिघलना, पारा, जल, स्वाद ९ अर्थ हैं।

[ शृङ्गेति ] ॥ रस्यते। 'रस आस्वादने' अदन्त। घञ् (३।३।१९)। 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे[1]। रसा तु शल्यकीपाठाजिह्वाधरणिकगुपु' इति विश्वः [ १७३। १-२ ]।

पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥ २२७ ॥

'उत्तंस, अवतंस' ( २ पु ) के कानका भूषण, भूषणमात्र २ अर्थ हैं।

[ पुमिति ] ॥ उत्तंसयति, उत्तंस्यते, अनेन वा। तसि सौत्रो भूषार्थ.। पचाद्यच् (३।१।१३४)। 'हलश्च' ( ३।३।१२० ) इति घञ् वा। 'उत्तंस. कर्णपूरेऽपि शेखरे चावतंसवत्[2]' इति विश्व। [ कर्णपूरः = कर्णाभरणम् ], शेखर. = भूषणम्।

देवभेदेऽनले रश्मौ वसू रत्ने धने वसु।

'वसु.' ( पु ) धर आदि आठ वसु, अग्नि, किरण, राजा, जोति ५ अर्थ; 'वसु' ( न ) के रत्न, धन, वृद्धि औषध, स्वर्ण ४ अर्थ और 'वसु.' ( त्रि ) का मधुर १ अर्थ है।

[ देवेति ] ॥ वसति सर्वत्र। उष्यतेऽनेन वा। 'वस निवासे' (भ्वा० प० अ०)। 'शृस्वृस्निहि–' (उ० १।१०) इत्यु। 'वसुर्ना देवभे[3]दाग्निभायोक्त्रधकराजसु। क्लीब वृद्ध्यौषधे श्याले रै रत्ने[4] मधुरे त्रिषु' ( इति मेदिनी ) [ १७०।६ ]।

विष्णौ च वेधाः

'वेधा.' ( पु ) के विष्णु, ब्रह्मा, पण्डित ३ अर्थ हैं।

[ वीति ] ॥ विधति। 'विध विधाने' ( तु० प० से० )। असुन् (उ० ४।१८९)। विदधाति वा। 'विधाञो वेध च' (उ० ४।२२५) इत्यसुन्। 'वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि' (इति मेदिनी) [१७२।४१]।

स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥ २२८ ॥

'आशीः' ( स्त्री ) के आशीर्वाद, सर्पका दाँत २ अर्थ हैं।

---

१. तदुक्तम्– 'कुटीचको बहूदको हंसश्चैव तृतीयक.। चतुर्थः परमो हंसो योग्यः पश्चात् स उत्तमः।' इति हारीतः।

२. '–परमात्मनि मत्सरे–' इति विश्वे ग्रन्थद्वये पाठो न सम्यक् प्रतीयते।

३. सि० कौ० 'सृवृभूशुषिमुषिभ्यः' इति (उ० १।११९) सूत्रेण 'सृ गतौ' इति धातोरङ्गच् प्रत्यये वृद्धौ च साधितोऽयं 'सारङ्ग'शब्दः।

१. '–विषादौ···वीर्ये देहधातौ च पारदे–' इति विश्वे 'क'पुस्तके पाठः। '–देहधातौ च पारदे–' इति 'ख'पुस्तके पाठ।

२. '–पूरे स्याच्छेकरे च वतंसवत्' इति विश्वे 'क'-पुस्तकस्थः 'शेकर' इति पाठो लेखकादिप्रमादजः प्रतीयते।

३. तदुक्तम्– "धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनल.। प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः।' इति भा० अ० ६६० इति वाचस्पत्यम् (पृ० ४८६३)।

४. '–क्लीवे वृद्ध्यौषधे श्यामरैरत्ने–' इति मेदिनी-पाठः।

[ स्त्रीति ]॥ आशास्ते। 'आङ् शासु इच्छायाम्' (अ० आ० से०)। क्विप् (३।२।७६)। यद्वा—आशासनम्। अनया वा। संपदादि (वा० ३।३।१०८)। 'आशास क्वौ–' (वा० ६।४।३४) इतीत्वम्। 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति'। हितस्याशसा, अहेर्दंष्ट्रा। [ 'आशीर्हितैषिणि। उरगस्य च दंष्ट्रायाम्' इति हैम, ३।५८८-५८९ ]।

लालसे प्रार्थनौत्सुक्ये

'लालसा' ( स्त्री ) के प्रार्थना, उत्सुकता, अधिक चाह, याचना ४ अर्थ हैं।

[लेति]॥ लालसनम्। लस दीप्तौ (भ्वा० प० से०)। यङन्त। 'अ प्रत्ययात्' (३।३।१०२)। 'लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयो'(इति मेदिनी) [१७२।३४]।

हिंसा चौर्यादिकर्म च।

'हिंसा' ( स्त्री )के चोरी आदि बुरा काम, मारना २ अर्थ हैं।

[ हिंसेति ] ॥ हिंसनम्। हिसि हिंसायाम्' ( रु० प० से० )। 'गुरोश्च—' (३।३।१०३) इत्य। 'हिंसा चौर्यादिघातयो' (इति मेदिनी) [१७१।१४]। चोरस्य कर्म। ब्राह्मणादित्वात् ष्यञ् ( ५।१।१२४ )। आदिना बन्धनत्रासनताडनादि। घातघोऽपि।

प्रसूरश्वापि

'प्रसू' ( स्त्री ) के घोड़ी, माता, केला, लता ४ अर्थ हैं।

[ प्रति ] ॥ प्रसूते। षूङ् प्रसवे[1] (अ० आ० स०)। 'सत्सू–' ( ३।२।६१ ) इति क्विप्। 'प्रसूरश्वाजनन्योश्च कदली[2]वीरुधोरपि' इति विश्व [ १७५।१३ ]।

भूद्यावौ रोदसी रोदसी च ते ॥ २७९ ॥

'रोदस्यौ' ( स्त्री ), 'रोदसी' ( न। २ नि० द्विव० ) का जमीन, आसमान २ अर्थ हैं।

[ भ्विति ] ॥ रोदिति सवमस्मिन्। 'रुदिर् अश्रुविमोचने' (अ० प० से०)। असुन् (उ० ४।१८९)। पक्षे गौरादित्वात् (४।१।४१) ङीष्। 'रोदसी इत्यव्ययमप्यस्ति। द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च'( )। विगृहीतयोरप्यस्ते नामनी। 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक्। सहप्रयोगेऽप्यनयो रोद स्यादपि रोदसी' इति विश्व [ १७६।२९ ]।

ज्वालाभासोर्नपुंस्यर्चिः

'अर्चि' (स्त्री न)के ज्वाला, किरण या कान्ति २ अर्थ हैं।

[ ज्वेति ] ॥ अर्च्यते। 'अर्च पूजायाम्' ( भ्वा० प० से० )। अर्चिशुचि–' (उ० २।१०८) इतीसि। 'अथार्चिर्मयूखशिखयोर्न ना' (इति [सान्तेषु] मेदिनी) [१७१। १५ ]।

ज्योतिर्भद्योतदृष्टिषु।

'ज्योति' ( न ) के नक्षत्र, प्रकाश, दृष्टि, ज्योतिष शास्त्र ४ अर्थ हैं।

[ ज्यवेति ] ॥ द्योतते, द्योतनं वा, अनेन वा। द्युत दीप्तौ' (भ्वा० आ० से०)। 'द्युतेरिसिन्नादेश्च ज'(वा० २।१।१०)। 'ज्योतिरग्नौ दिवाकरे। पुमान्, नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयो' ( इति [ सान्तेषु ] मेदिनी) [ १७१।२२-२३ ]।

पापापराधयोरागः

'आगस' ( न ) के पाप, अपराध २ अर्थ हैं।

[ पापेति ] ॥ एति। इण् गतौ (अ० प० अ०)। 'इण् आग् अपराधे च' (उ० ४।२१२) इत्यसुन्।—आगच्छतीत्याग—इति स्वाम्युक्तिस्तु चिन्त्या। [ 'आगोऽपराधे पापे स्यात्' इति मेदिनी, १७१।१६ ]।

खगबाल्यादिनोर्वयः ॥ २८० ॥

'वय' ( न ) के चिड़िया, अवस्था ( बचपन आदि ) २ अर्थ हैं।

[खेति] ॥ वयते। 'वय गतौ' (भ्वा० आ० से०)। वेति। 'वी गत्यादौ'[1](अ० प० अ०)। अजति वा। 'अज गत्यादौ' (भ्वा० प० से०) वा। असुन् (उ० ४।१८९)। —वाति—इति स्वामि मुकुटोक्तिस्तु चिन्त्या। असुन्युक्तरूपासिद्धेः। 'वय पक्षिणि बाल्यादौ यौवने च नपुंसकम्' (इति मेदिनी) [ १७२।३५ ]।

तेज पुरीषयोर्वर्चः

'वर्च' ( न ) के तेज, मैला, रूप ३ अर्थ हैं।

[ तेज इति ] ॥ वर्चते। 'वर्च दीप्तौ' ( भ्वा० आ० से० )। असुन् ( उ० ४।१८९ )। 'वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि। पुंसि चन्द्रस्य तनये'(इति मेदिनी) [ १७२।३६ ]।

---

१ 'षूङ् प्राणिगर्भविमोचने' इत्येव पाठ सि० कौ० धातुपाठे च। पूङ् प्रसवे' इत्यथ तु दिवादौ पठित, रूपं चास्य सूयते' इति भवति।

२ 'विश्वे पुस्तकद्वये कन्दली—' इति पाठ।

१ 'गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इति वक्तव्यम्।

महस्तूत्सवतेजसोः ।

'महः' (न) के उत्सव, तेज २ अर्थ हैं।

[ मेति ] ॥ महनम् । मह्यते वा । 'मह पूजायाम्' (भ्वा० प० से०)। असुन् (उ० ४।१८९)। ['मह उत्सवतेजसो' इति सान्तेषु मेदिनी, १७२।३०] 'महावुत्सवतेजसी' इति हैमात् २।६।१३, 'मह उत्सवतेजसोः' इति हान्तेषु मेदिन्याः १७५।७, विश्वात् १८०।१० चायमदन्तोऽपि ]।

रजो गुणे च स्त्रीपुष्पे

'रजः' (न) के रजोगुण, स्त्रीका मासिक आर्तव २ अर्थ हैं।

[ रेति ] ॥ रजनम् । रज्यतेऽनेन वा । 'रञ्ज रागे' (भ्वा० प० अ०)। असुन् (उ० ४।१८९)। 'अनि-दिताम्–' (वा० ६।४।२४) इति नलोपः। 'रज क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' (इति [जान्तेषु] मेदिनी) [ १७२।३१-३२ ] ॥●॥ [ रजः = रज ] मदन्तोऽपि । 'रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयः.' । ['रजो' रेणौ परागे स्यादार्तवे च गुणान्तरे' इति जान्तेषु मेदिनी ३०।१३ च ]।

राहौ ध्वान्ते गुणे तमः ॥ २३१ ॥

'तमः' (पु) का राहु ग्रह १ अर्थ और 'तमः' (न) के अन्धकार, तमोगुण, शोक ( मोह, मूर्च्छा ) ३ अर्थ हैं।

[ रेति ] ॥ ताम्यतेऽनेन । 'तमु ग्लानौ' (दि० प० से०)। असुन् (उ० ४।१८९)। 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' (इति मेदिनी) [१७१।२४]।

छन्दः पद्येऽभिलाषे च

'छन्दः' (न), पद्य ( श्लोक आदि ), अभिलाषा, वेद स्वच्छन्दता ४ अर्थ हैं।

[ छेति ] ॥ चन्दनम् । चन्द्यतेऽनेन वा । 'चदि आह्लादने दीप्तौ च' (भ्वा० प० से०)। 'चन्देरादेश्च छः' (उ० ४।२१९) इत्यसुन् ॥—छन्दति—इति स्वामि-मुकुटौक्तो विग्रहश्चिन्त्यः । 'छन्द पद्ये च वेदे च स्वैराचाराभिलाषयोः.' (इति मेदिनी) [१७१।२२]। पद्ये = अनुष्टुबादौ ।

तपः कृच्छ्रादिकर्म च ।

'तपः' (न)का तपस्या, तपोलोक, धर्म ३ अर्थ, 'तपाः' (पु) के माघ महीना, शिशिर ऋतु २ अर्थ हैं।

[तेति] ॥ तपनम् । तप्यते, अनेन वा । 'तप संतापे' (भ्वा० प० से०)। असुन् (उ० ४।१८९)। 'तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे[1] च पुमान्शिशिरमाघयो.' (इति मेदिनी) [ १७१।२४ ]। [ 'तपेन वर्षाः शरदा हिमागम' (शिशु० वधः १।६६) इति लक्ष्यात् '–प्राचीपतिस्तपस्तङ्क:–' इति त्रिकाण्डशेषात् (१।१।५७) चायं ग्रीष्मार्थे इन्द्रार्थे चादन्तोऽपि ]।

सहो बलं सहा मार्गः

'सहः' (न) के बल, ज्योतिष २ अर्थ और 'सहाः' (पु) के अगहन महीना, हेमन्त ऋतु २ अर्थ हैं।

[ सेति ] ॥ सहते, सह्यते, अनेन, अत्र वा । 'षह मर्षणे' (भ्वा० आ० अ०)। असुन् (उ० ४।१८९)। 'सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयो.' (इति मेदिनी) [ १७३।४३ ]। लिङ्गभेदार्थो द्विः पाठः । एवमग्रेऽपि ।

नभः खं श्रावणो नभाः ॥ २३२ ॥

'नभः' (न) का आकाश १ अर्थ और 'नभाः' (पु) के श्रावण महीना, मेघ, विस्वान, नाक, मृणालसूत्र, वर्षा ऋतु ६ अर्थ हैं।

[नेति] ॥ नभनम्, नभ्यते, अनेन, अत्र वा । 'णभ हिंसायाम्' (भ्वा० आ० से०)। असुन् (उ० ४।१८९)। 'नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृत.' इति विश्व [१७७।३७]।

ओकः सद्माश्रयश्चौकाः

'ओकः' (न) का मकान १ अर्थ और 'ओकाः' (पु) का आश्रयमात्र १ अर्थ है।

[ अविति ] ॥ उच्यति समवैत्यत्र । 'उच समवाये' (दि० प० से०)। असुन् (उ० ४।१८९)। न्यङ्क्वादिः (७।३।५३)। 'ओक उचः के' (७।३।६४) इति निपातनाददन्तो['ओको']ऽपि । 'ओका आश्रयमात्रे च मन्दिरे च नपुंसकम्' (इति मेदिनी) [ १७१।२० ]।

पयः क्षीरं पयोऽम्बु च ।

'पयः' (न) के दूध, पानी २ अर्थ हैं।

[ पेति ] ॥ पीयते । 'पीङ् पाने' (दि० आ० अ०)। पयते वा । 'पय गतौ' (भ्वा० आ० से०) वा । असुन् (उ० ४।१८९)। [पयः स्यात् क्षीरनीरयो.' इति विश्वः १७६।३२)।

ओजो दीप्तौ बले

'ओजः' (न) के दीप्ति, बल, प्रकाश ३ अर्थ हैं।

१. वचनमिदं सि० कौ० अनुरोधेन, भाष्ये तु 'रजकरजनरजःसु' इति पठितम्।

[1] '–धर्मे च–' इति पाठो मेदिन्याम्।

अहिर्वृत्रेऽपि

'अहि' ( पु )के वृत्रासुर, साँप २ अर्थ हैं।

[ एति ] ॥ आहन्ति । 'हन हिंसागत्योः' (अ० प० अ०)। 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ०४।१३८) इतीण् डित् आङो ह्रस्व । यत्तु—'अहति' इति स्वामिना 'अन्यति'—इति मुकुटेनोक्तम् । तन्न । नलोपासम्भवात् । 'अहिर्वृत्रासुरे सर्पे' [ इति ] इति विश्व [ १८०।८ ]।

अग्नीन्दर्कास्तमोपहा ॥ २३८ ॥

'तमोपह' ( पु ) के अग्नि, चन्द्रमा, सूर्य, जिन ४ अर्थ हैं।

[ एति ] ॥ तमोऽपहन्ति । 'अपे क्लेशतमसोः' ( ३। २।५० ) इति ड । 'तमोपहः सहस्रांशुमृगाङ्कजिनवह्निषु' इति विश्व [ १८१।२७ ]।

परिच्छदे नृपार्हेऽर्थे परिबर्हः

'परिबर्ह'¹ ( पु ) के सामाग्री, राजाका छत्र-चामर आदि चिह्न, धन ३ अर्थ हैं।

[ पेति ] ॥ परिबर्हने, परिबर्हते वा । 'बर्ह प्राधान्ये' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। घञ् (३।३।१६)वा। 'परिबर्हस्तु राजार्हवस्तुन्यपि परिच्छदे' इति विश्व [ १८१।३६ ]।

इति हान्ता शब्दा ।

अथाव्यया. शब्दा ।

अव्ययाः परे ।

यहाँसे आगे नानार्थवर्गके अन्ततक सब शब्द अव्यय हैं।

[ अव्येति ] ॥ इत परेऽनेकार्था अव्यया उच्यन्ते ।

आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥ २३९ ॥

'आङ' के थोड़ा, अभिव्याप्ति, सीमा, धातुयोगसे उत्पन्न अर्थ ४ अर्थ हैं। ( 'क्रमश उदा—१ आपिङ्गल, २ आस्वर्गात्, ३ आसमुद्रं क्षितीशानाम् (रघु० १।५), ४ आक्रामति, ..')।

[ एति ]। अतति । बाहुलकाड् डाङ् प्रत्यय । तेन सहेत्यभिविधि । तेन विना सीमा = मर्यादा । धातुना योगे सति योऽर्थो जायते तस्मिन् । ['आङ् सीमाया परिव्याप्तौ क्रियायोगेषदर्थयो ' इति विश्व १८५।२ ]।

आ प्रगृह्य स्मृतौ वाक्येऽपि

'आ' (इसकी प्रगृह्य संज्ञा होती है) के स्मरण, वाक्य २ अर्थ हैं। ('क्रमश उदा०—१ आ एव नु मन्यसे, २ आ एव किल तत्, ..')।

[ एति ] ॥ आप्नोति । क्विप् (३।२।१७८)। पृषोदरादित्वात् (६।३।१०९) पलोप । प्रगृह्यसंज्ञकत्वात्। 'प्लुतप्रगृह्या अचि—'( ६।१।१२५ ) इति सधि न याति। स्मरणे वाक्यारम्भे च । 'आ प्रगृह्य¹ स्मृतौ वाक्येऽनुकम्पायां समुच्चये' (इति मेदिनी) [ १७८।३ ]।

आस्तु स्यात्कोपपीडयोः।

'आः' के कोप, पीड़ा २ अर्थ हैं। ('क्रमश. उदा—१ आः पाप एवम् अधुनापि प्रजल्पसि, २ आः शीतम्, ...')।

[ आ इति ] ॥ आस्ते । 'आस उपवेशने' (अ० आ० से०)। क्विप् (३।२।१७८)। आङ्पूर्वादस्तेर्वा । 'आः स्मरणेऽप्यकारणे कोपसंतापयोरपि' ( इति मेदिनी² )। [ 'आः सन्तापप्रकोपयो ' इति हैम , परिशिष्ट० ३ ]।

पापकुत्सेषदर्थे कु

'कु' के पाप, कुत्सा (निन्दा), थोड़ा ३ अर्थ हैं। ('क्रमश' उदा०—१ कुकर्म, २ कुभार्योऽयम् , ३ कोष्णम्,'')।

[ पापेति ] ॥ कवते, कूयते वा 'कूङ् शब्दे' (भ्वा० आ० अ०)। मितद्र्वादित्वात् (वा० ३।२।१८०) डु । कु (पापे चेषदर्थे च) कुत्सायां च निवारणे' इति विश्व [ १८६।७ ]।

धिग्निर्भर्त्सननिन्द्योः³ ॥ २४० ॥

'धिक्' के धमकाना, निन्दा २ अर्थ हैं। ( क्रमश उदा०—१ धिक् तार्किकान् , २ धिग् वारवधूगामिन त्वाम्,''' )।

[ धिगिति ] ॥ धक्कयति । 'धक्क नाशने' (चु० प० से०)। बाहुलकाड्डिक् प्रत्ययः। दधातेर्वा । अपकारशब्दैर्भयोत्पादनं = भर्त्सनम् । निन्दा = दोषकीर्तनम् ।['धिग्भर्त्सने च निन्दायाम्' इति मेदिनी, १८९।११ ]।

चान्वाचयसमाहारेतरेतरसमुच्चये।

'च' के अन्वाचय ( जहाँ दो कामोंमें-से एक काम अप्रधान हो वह ), समाहार ( समूह ) इतरेतरयोग

१ विश्वे पुस्तकद्वयेऽपि 'परिबर्हस्तु—' इति क्लीबलिङ्गोऽयम् ।

१ आ 'प्रगृह्य—' इति मेदिनी पाठ ।

२ इद वचो मेदिन्या न लभ्यते ।

३. इदं वच विश्वे (१८६,७), हैमे (परिशिष्टकाण्डे १४) च लभ्यते ।

(एकाधिकका आपसमें मिल जाना), समुच्चय (परस्पर निरपेक्ष क्रियाओंका आपसमें अन्वय होना), विनियोग, तुल्ययोगिता, कारण ७ अर्थ हैं। ('क्रमशः उदा०—१ भिक्षामट गाञ्चानय, २ पाणिपादम्, ३ धवखदिरौ, हरिहरौ, ४ ईश्वरं च गुरुं च भजस्व, ५ अहं च त्वं च वृत्रहन्त्संयुज्याव सनिभ्य आ(निरु० ३।४।२१), ६ ध्यानशोपस्थितश्च, ७ आमश्च गन्तव्यः आतपश्च अर्थात् आतपात्कथं ग्रामो गम्यते,' )।

[ चेति ] ॥' चदति। 'चदि आह्लादे' (भ्वा० प० से०)। 'अन्येभ्योऽपि—' (वा० ३।२।१०१) इति ड। 'च पादपूरणे पक्षान्तरे हेतौ विनिश्चये' इति त्रिकाण्डशेषः [ ३।३।६५ ]।

स्वस्त्याशीःक्षेमपुण्यादौ[1]

'स्वस्ति'के आशीर्वाद, कल्याण, पुण्य, मङ्गल ४ अर्थ हैं। ('क्रमश. उदा०—१ स्वस्ति भवद्भ्यः, २ स्वस्ति प्रजाभ्यः, स्वस्ति गच्छ, ३ स्वस्तिमान् स्वर्गमाप्नोति, ४ स्वस्ति सुगृहीतनाम्नेऽस्य'''( मुद्राराक्षस पृ० ३४९ ),'''')।

[ स्वेति ] ॥ स्वसति, स्वस्यति वा। 'असु दीप्तौ' (भ्वा० प० से०)। 'असु क्षेपणे' (दि० प० से०) वा। क्विप् (३।२।१७४)। बाहुलकात्तिर्वा। 'स्वस्ति मङ्गलाशीर्विवादनिर्णजनादिषु' इति मार्गुरिः। [ 'स्वस्ति स्यात् मङ्गले पुण्येऽप्याशंसायामपि क्वचित्' इति मेदिनी, १८०।२७ ]।

प्रकर्षे लङ्घनेऽप्यति ॥ २४१ ॥

'अति' के अतिशय, लङ्घन २ अर्थ हैं। ( क्रमशः उदा०—१ अत्युत्तमं भोजनम्, २ मर्यादामतिक्रामति दुष्टः,''''''')।

[ अतेति [ ॥ अतति। इन् (उ० ४।११८) प्रत्यय। 'अतिशय्य प्रशंसायां प्रकर्षे लङ्घनेऽपि च'[2] इति विश्व [ १८७।२४ ], ( मेदिनी ) [ १८०।२० ]।

स्वित्प्रश्ने च वितर्के च

'स्वित्'के प्रश्न, वितर्क २ अर्थ हैं। ( 'क्रमशः उदा०—१ किं स्विन्मङ्गलस्ति, २ अधः स्विदासीदुपरि स्विदासीत्,...')।

[ स्विदिति ] ॥ सुष्ठु एति, अयति वा। 'इण् गतौ' (अ० प० अ०)। 'इ गतौ' (भ्वा० प० अ०) वा। क्विप् (३।२।७६)। 'स्वित् प्रश्ने च वितर्के च तथैव पादपूरणे' (इति मेदिनी) [ १८०।२७ ]।

१. हैमे (परि० काण्ड ३३), विश्वे (१८७।१८) चेदं वचो लभ्यते।

२. '—लङ्घनेऽप्यति' इति पाठो विश्वे।

तु स्याद् भेदेऽवधारणे।

'तु'के भेद ( कमी-बेशी ), निश्चय २ अर्थ हैं। ( 'क्रमशः उदा०—१ क्षीरान्मांसं तु पुष्टिकृत्, २ भोजनं तु रुचिप्रियम्,''''''')।

[ त्विति ] ॥ तुदति। 'तुद व्यथने' (तु० उ० अ०)। मितद्रवादित्वात् (वा० ३।२।१८०) डु। 'तु पादपूरणे भेदे समुच्चयेऽवधारणे। पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे' (इति मेदिनी) [ १८०।११ ]।

सकृत् सहैकवारे चापि

'सकृत्' के साथ, एक बार, सर्वदा ३ अर्थ हैं। ( 'क्रमशः उदा०—१ 'सकृद्गच्छन्ति बालकाः' सह गच्छन्तीत्यर्थः, २ सकृदध्ययनाद्विरमति पाठः, ३ 'सकृद्युवानो गीर्वाणाः' देवाः सदा युवानो भवन्तीत्यर्थः,' ''')।

[ सेति ] ॥ एकवारम्। 'एकस्य सकृच्च' (५।४।१९) इति सुच्। 'सकृत् सहैकवारयोः' इत्यजयः। ['सकृत् सहैकवारे स्यात्' इति मेदिनी, १८१।२३ ]।

आराद् दूरसमीपयोः ॥ २४२ ॥

'आरात्'के दूर, समीप २ अर्थ हैं। ( 'क्रमशः उदा०—१ आराद् दुर्जनसंसर्गात्त्याज्यः श्रेयोऽभिलाषुकैः, २ 'सखायं स्थापयेदारात्' समीपे स्थापयेदित्यर्थः,''''' ')।

[ एति ] ॥ आ राति। 'रा दाने' (अ० प० अ०)। बाहुलकादातिप्रत्ययः। [ 'आराद् दूरे समीपे च' इति मेदिनी १८०।२८ ]।

प्रतीच्यां चरमे पश्चात्

'पश्चात्' के पश्चिम दिशा, अन्तिम २ अर्थ हैं। ( 'क्रमशः उदा०—१ 'पश्चादस्तमितो रविः' पश्चिम इत्यर्थः, २ पश्चादुराचक्षते,''''''')।

[ प्रेति ] ॥ अवरस्मिन्। 'पश्चात्' (५।३।३२) इत्यनेनावरस्य सप्तमीपञ्चमीप्रथमान्तस्य निपातितः। ['पश्चात् प्रतीच्यां चरमे' इति विश्व १८७।१५ हैमः, परि० ३१ च ]।

उताप्यर्थविकल्पयोः।

'उत' के समुच्चय, प्रश्न, विकल्प, वितर्क ४ अर्थ हैं। ('क्रमशः उदा०—१ उत भीम उतार्जुन', २ उत दण्डः पतिष्यति, ३ उत पर्वतं भिन्द्याव, ४ स्थाणुरुत पुरुषः,''''''')।

[ उतेति ] ॥ ऊयते स्म। 'उङ् शब्दे' (भ्वा० आ० अ०)। क्तः (३।३।१७४)। अप्यर्थः समुच्चयः प्रश्नश्च।

'उतापी द्वौ च वाढार्थौ' इत्यजय । ['उत प्रश्नविकल्पयो' इति हैम, परि० २९ ]।

पुन सहार्थयो शश्वत

'शश्वत' के बारबार, साथ, सदा ३ अर्थ हैं। ( क्रमश उदा०—१ 'शश्वद्गच्छति' अनेकवार गच्छतीत्यर्थ, २ शश्वद्भुङ्क्ते, ३ शाश्वत वैरम्, ')।

[ श्वेति ]।। शशति । शश प्लुतगतौ (भ्वा० प० से०) । बाहुलकादुत् । 'शश्वत् सहसहार्थयो' इत्यजय । [ 'शश्वत् सह' पुनर्नित्ये' इति हैम, परि० ३२ ]।

साक्षात् प्रत्यक्षतुल्ययो ॥ २४३ ॥

'साक्षात्' के प्रत्यक्ष, तुल्य २ अर्थ हैं। ( 'क्रमश उदा० —१ साक्षात्पश्यति परमात्मान योगी, २ 'दृष साक्षाद्वृषभी' वृषभीतुल्येत्यर्थ, ')।

[ सेति ]।। सहाक्षेण साक्ष । तमतति । विवप (३।२।१७८)। साक्षात्तुल्यसमक्षयो इत्यजय । ['साक्षात् प्रत्यक्षतुल्ययो' इति मेदिनी १८१।३३ ]।

खेदानुकम्पासतोषविस्मयामन्त्रणे बत ।

'बत' के खेद, दया, सन्तोष, विस्मय, आमन्त्रण ५ अर्थ हैं। ('क्रमश उदा०—१ अहो बत महद् दु खम्, २ बत ति स्वोऽसि त्वम्, ३ बत प्राप्ता सीता, ४ अहो बतासि स्पृह णीयवीर्य (कु० स० ३।२०), ५ बत जिगरत तोय तोयवाहा मिता-सम्, ')।

[ खेदेति ]।। वयते स्म । वय गतौ' (भ्वा० आ० से०) गत्यर्था-' (३।४।७२) इति क्त । नेट् ( )। व यते स्म । वनु याचने (त० उ० से०)। क्त (३।२। १०२) । बत खेदेऽनुकम्पाया हर्षे सबोधनेऽद्भुत इति तोण्ठधादावजय [२]। [ 'खेदानुकम्पाहर्षेषु विस्मये च स्मृत बत' इति शाश्वत ७८४ ]।

हन्त हर्षेऽनुकम्पाया वाक्यारम्भविषादयो ॥ २४४ ॥

'हन्त' के हर्ष, दया, वाक्यारम्भ विषाद ४ अर्थ हैं। ('क्रमश उदा०—१ हन्त जीवामो वयम्, २ हन्त दीनो रक्षणीय, ३ हन्त ते कथयिष्यामि (गीता १०।१९) ४ हन्त जातमजातारे प्रथमेन त्वयारिणा ( शिशु० वध २।१०२), ')।

[ हन्तेति ]।। हन्ति । बाहुलकात । हन्त वाक्यारम्भखेदविषादहर्षसभ्रमे' (इति मेदिनी) [ १८०।२८ ]।

प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगत ।

'प्रति'के प्रतिनिधि, वीप्सा, लक्षण, 'आदि'से–इत्थभूताख्यान, भाग, प्रतिदान ६ अर्थ हैं । ('क्रमश उदा०—१ अभिमन्युरर्जुन प्रति, २ वृक्ष वृक्ष प्रति विद्योतते विद्युत, ३ वृक्ष प्रति विद्योतते विद्युत, ४ साधु देवदत्तो मातर प्रति, ५ यदत्र मां प्रति स्यात्तद्दीयताम्, ६ माषानस्मै तिलेभ्य प्रतिप्रयच्छति, ')।

[ प्रेति ]।। प्राति । प्रा पूरणे' (अ० प० अ०) । प्रथते वा । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । बाहुलकाद्डति । इत्थभूताख्यान = मुख्यसदृश प्रतिनिधि । व्याप्तुमिच्छा = वीप्सा । आदिना इत्थभूताख्यानभागप्रतिदानस्तोकेषु ।['प्रति प्रतिनिधावित्थभूताख्यानाभिमुख्ययो' इति मेदिनी १८०।२५ ]।

इति हेतुप्रकरणप्रकाशादिसमाप्तिषु[१] ॥ २४५ ॥

'इति' के हेतु, प्रकरण, प्रकाश, 'आदि'से—इस तरह, समाप्ति विवक्षा, नियम, स्वरूप ७ अर्थ हैं। ( क्रमश उदा० —१ हन्तीति पलायते २ गौरश्वो हस्तीति जाति, ३ 'इति पाणिनि' पाणिनिर्लोके प्रकाशत इत्यर्थ, ४ क्रमादमु नारद इत्यबोधि स (शिशु० वध १।३), ५ धर्ममाचरेदिति, अ अ इति ( पा० सू० ८।४।६८ ), ६ सदस्यास्त्यस्मिन्निति मतुप् ( पा० सू० ५।२।९४ ), ७ वृद्धिरित्येव या सा वृद्धि । ')।

[ ईति ]।। एति अयति वा । क्तिच(३।३।१७४)। इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे स्यादनुकर्षे च सम्मतम् इति विश्व [ १८७।२३ ]।

प्राच्या पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ।

'पुरस्तात्, अग्रत' २ के पूर्व दिशा, पहले (प्रथम), बीता हुआ काल, सामने ४ अर्थ हैं। ( क्रमश उदा०—१ 'पुरस्ताद् द्वारम्'पूर्वस्या दिशीत्यर्थ ,२ पुरस्ताद्भुङ्क्ते प्रथम भुङ्क्त इत्यर्थ, ३ पुरस्ताद्ग्रामोऽभूत, ४ पित्रो पुरस्तात् क्रीडति शिशु, ')। इसी प्रकार 'अग्रत' का उदाहरण समझना चाहिए।

[ प्रेति ]।। पूर्वस्मिन् । सप्तम्य-' (५।४।२७) इत्यस्ताति । 'अस्ताति च'(५।३।४०)इति पुरादेश । 'प्राच्या

१ विश्वे तु प्रद्वये 'शश्वत्पुन सहार्थयो' इति(१८७। १५ ) शाश्वते 'पुन सहार्थयो शश्वत्' इति ( श्लो० ७९८ ) नामरत्नमालायाञ्च 'भूय सहार्थयो शश्वत्' (प० २०१७) इति सहार्थस्य पठित ।

२ अमिश्रशाश्वतवचनेन हैमोक्त (परि० ३१) वचनेन मेदिन्युक्त (८०।२९) वचनेन पवर्गादित्वमेवास्य समीचीनम्।

१ '—प्रकर्षादिसमाप्तिषु' इति पाठान्तरम्

पुरः पुरस्तादग्रप्रथमव्यतीतेषु' इति वोपालितः। 'अग्रे' इति अग्रतः। आद्यादित्वात्तसिः ( वा० ५।४।४४) [पुरस्तात् चतुर्षु प्राच्या पुरार्थे प्रथमेऽग्रतः' इति शाश्वत, ७८९ ]।

यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४६ ॥

'यावत्, तावत्'के सम्पूर्ण, अवधि, प्रमाण, निश्चय ४ अर्थ हैं। ('दोनोंके क्रमशः उदा०—१ मम यावत्कार्यमस्ति तावत्कुरु, यावदध्यापितं तावत्पठितम्, २ यावद्गन्ता तावत्तिष्ठ, ३ यावत्सुवर्णं तावन्नञ्चतम्, यावद्दत्तं तावद्भुक्तम्, ४ यावदमत्रं ब्राह्मणानामन्त्रयस्व, ......)।

[ येति ] ॥ यत्, तत्, परिमाणमस्य। तद्धिता'(४।१।७६)इति बहुवचनेनान्येऽनुक्ता अपि तद्धिता ज्ञापिता। तेन डावतु.[१]। 'यावत् तावत्ऽवधारणे। प्रशमायां परिच्छेदे मानाधिकारसम्भ्रमे। पक्षान्तरे च' ( इति मेदिनी ) [ १८१।३१-३२ ]।

मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।

'अथो, अथ' के मङ्गल, बाद, आरम्भ, प्रश्न, कार्त्स्न्य, अधिकार, प्रतिज्ञा, एक बार कहे हुएको फिर कहना, समुच्चय ९ अर्थ हैं। ( 'क्रमशः उदा०—१ अथातो ब्रह्मजिज्ञासा (ब्र० सू० १।१।१), २ स्नानं कृत्वाऽथ भुञ्जीत, ३ अथ शब्दानुशासनम् (पात० भा० १।१ आह्नि० १ पस्प०), ४ अथ वक्तुं समर्थस्त्वम् ?, ५ अथ क्रतून् व्रूमः, ६ अथ स्नानविधिः, ७ नीचो भवानथेति प्रश्नः, ८ अथो इमं वेदमध्यापय अथो पुनं छन्दोऽपि, ९ अथो खल्वाहुः, भीमोऽथार्जुनः,...")।

[ मङ्गेति ]॥ अर्थ्यते। अथ याञ्चायाम्' ( चु० आ० से०)। बाहुलकात् डोः। 'अव्ययेष्वपि–' (वा० ३।३।१०१) इति डः। पृषोदरादित्वात्लोपः। 'अथाथो संशये स्यातामधिकारे च मङ्गले'। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये' (इति मेदिनी) [१८१।३५]।

वृथा निरर्थकाविध्योः

'वृथा' के व्यर्थ, विधि-हीन २ अर्थ हैं। ('क्रमशः उदा० —१ वृथा दुग्धोऽनड्वान्, २ प्रतिभाव्यं वृथा दानमाक्षिकं सौरिकं च यत् (मनुः ८।१५९), ...')।

[ वृथेति ] ॥ वृणोति, वृणीते वा। 'वृञ् वरणे' (स्वा० उ० से०)। 'वृञ् सम्भक्तौ' ( क्र्या० आ० से० ) वा। बाहुलकात् थाक्। 'वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते' इति विश्व [ १८८।२९ ]।

नानानेकोभयार्थयोः ॥ २४७ ॥

'नाना' के अनेक, उभय, बिना ३ अर्थ हैं। ('क्रमशः उदा०—१ नानाविधाः पुरुषाः, २ नानाविधं न सज्जेत, ३ 'नानानारीं निष्फला लोकयात्रा' नारीबिना लोकयात्रा निष्फलेत्यर्थ,....')।

[नेति] ॥ नेति नाना। 'विनञ्भ्यां नानाञौ न सह' ( ५।२।२७ ) इति नञो नाञ्। 'नानाशब्दो विनार्थेऽपि तथानेकोभयार्थयो' (इति मेदिनी) [ १८२।४५ ]।

नु पृच्छायां विकल्पे च

'नु'के प्रश्न, विकल्प, वितर्क ३ अर्थ हैं। ('क्रमशः उदा०—१ को नु धावति, २ देवदत्तो नु यज्ञदत्तो नु पण्डितः, ३ स्थाणुर्नु पुरुषो नु,......,)।

[ न्विति ] ॥ नुदति, नौति वा। 'णुद प्रेरणे' (तु० उ० अ०)। 'णु स्तुतौ' (अ० प० से०) वा। मितद्र्वादित्वात् (वा० ३।२।१८०) डु। 'नु स्यात्प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयो' इति विश्व [ १८८।३१ ]।

पश्चात्सादृश्ययोरनु।

'अनु' के पश्चात्, सादृश्य, लक्षण, तत्त्वाख्यान, भाग, वीप्सा, लम्बाई ७ अर्थ हैं। ('क्रमशः उदा०—१ राममनुगच्छति लक्ष्मणः, २ पितरमनुकरोति बालः, ३ वृक्षमनुद्योतते विद्युत्, ४ साधु देवदत्तो मातरमनु, ५ यदत्र मामनु स्यात्तद्दीयताम्, ६ वृक्षं वृक्षमनुसिञ्चति, ७ अनुगङ्ग काशी,...')।

[ अन्विति ] ॥ अनिति। 'अन प्राणने' (अ० प० से०)। बाहुलकादु। 'अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि। आयामे च समीपे च लक्षणादावनुक्रमे' इति विश्व[२] [ १८८।३३-३४ ]।

प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४८ ॥

'ननु' के प्रश्न, अवधारण, अनुज्ञा, आमन्त्रण, वाक्या-

---

१. 'यत्तदेतेभ्यः–' इति सूत्रस्थ—'डावतावर्थवैशिष्ट्यान्निर्देशः पृथगुच्यते' इति भाष्यप्रतीकमादाय 'यावत्तावदि'त्याभ्यामनेन वतुप्प्रत्ययं कृत्वा 'आ सर्वनाम्नः' (६।३।९१) इत्यात्वविधानस्य कैयटेन स्पष्टमुक्ततयेदं वचनं न सम्यक्। 'डावतु'प्रत्ययस्य विधानं तु प्राचां सम्मतमित्यपि तत्रैव कैयटेनोक्तम्।

२. 'ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥' इत्यभियुक्तोक्त्या 'अथ'शब्दो मङ्गलार्थकः।

२. विश्वे तु '—श्ययोरनु। आयामे च नियामे च–' इति पाठः।

रम्भ, आक्षेप, प्रत्युक्ति ७ अर्थ हैं। ('क्रमश उदा०—१ ननु पठति नात्र?,२ नन्वच गच्छामो वयम्, ३ नन्वादिश, ४ ननु चण्डि प्रसीद मे, ५ नन्वपोह प्रसूयते, ६ नन किमर्थमागत स्त्वम्, ७ अकार्षी गृहकार्यं? ननु करोमि भो, पठसि पुस्तकम्? ननु पठामि भो, ')।

[ प्रश्नेति ]॥ न नुदति। णुद प्रेरणे' (तु० उ० अ०)। डु (या० ३।२।१८०)। 'ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे। आमन्त्रणे' (चापि) ननु इति विश्व [ १८८।३१-३२ ]।

गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि।

'अपि' के निन्दा, समूह (भी), प्रश्न, शङ्का, संभावना, इष्टप्रश्न, आक्षेप, युक्त पदार्थ (वस्तु) ८ अर्थ हैं। ('क्रमश उदा०—१ अपि सिञ्चेत्पलाण्डुम्, २ स्त्रिय पाल्य पुत्रमपि, ३ अपि गच्छसि गृहम्?,४ अपि प्रसिद्दुष्टा नृपति, ५ पर्वतमपि शिरसा भिन्द्यात्, ६'अपि क्रियार्थं सुलभ समित्कुशा जलान्यपि स्नानविधिक्षमाणि ते। अपि स्वशक्त्या तपसे प्रवर्तसे—' (कु० स० ५।३३), ७ अपि गृहीया चेदम्, ८ सर्पिषोऽपि स्यात्, )।

[ गर्हेति ]॥ न पियति। पि गतौ'(तु० प० अ०)। क्विप् (३।२।१७८)। आगमशास्त्रस्यानित्यत्वात्' तुक्। अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये। तथा युक्तपदार्थे च' कामचारक्रियासु च इति विश्व [ १८८।३९ ]।

उपमायां विकल्पे वा

'वा' के उपमा, विकल्प, समूह ३ अर्थ हैं। ('क्रमश उदा०—१ सर्पो वा क्रुद्ध' सर्प इव क्रुद्ध इत्यर्थ, २ यवैर्व्रीहिभिर्वा यजेत, ३'सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम, (कु० स० २।६०), मे तृतीया मूर्तिरित्यर्थ, ')।

[ उपेति ]॥ वाति। वा गत्यादौ (अ० प० अ०)। क्विप् (३।२।१७८)। वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे। समुच्चये च (इति मेदिनी) [ १८५।७४-७५ ]। वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्व [ १८९।४० ]।

सामि त्वर्धे जुगुप्सिते ॥ २४९॥

'सामि' के आधा, निन्दित २ अर्थ हैं। ('क्रमश उदा०—१ सामि समीक्षिताक्षी, २ सामि कृतमकृत स्यात्, ')।

[ सेति ]॥ साम्यति। 'साम सान्त्वप्रयोगे' (चु० उ० से०)। 'अच इ' (उ० ४।१३८)। [ 'सामि निन्दार्धयोर्मतम्' इति मेदिनी १८३।५५ ]।

अमा सह समीपे च

'अमा' के साथ, निकट २ अर्थ हैं। ('क्रमश उदा०—१ पुत्रेणामा भुङ्क्ते' सहेत्यर्थ, २ अमा भवोऽमात्य, ')।

[ एति ]॥ न माति। 'मा माने' (अ० प० अ०)। क्विप् (३।२।७६)। सहार्थे। [ 'अमा सहार्थान्तिकयो' इति विश्व, १८९।४३ ]।

कं वारिणि च मूर्धनि।

'कम्' के पानी, शिर, सुख ३ अर्थ हैं। ('क्रमश उदा०—१ कञ्ज कमलम्, २ कक्षा वेश्या, ३ कयु, '' )।

[ कमिति ]॥ कम्यते। कमु कान्तौ' (भ्वा० आ० से०)। णिङभाव विप् (३।३।७५)। कम् शिर सुखवारिषु' इति विश्व [ १८९।४६ ]। कम् पादपूरणे तोये [ मस्तके च सुखेऽपि च ] (इति मेदिनी) [ १८३।५२ ]।

इवेत्थमर्थयोरेवम्

'एवम्'के सदृश, इस तरह, उपदेशादि, निर्देश, निश्चय, स्वीकार ६ अर्थ हैं। ('क्रमश उदा०—१ अग्निरेव द्विजोऽग्निरिवेत्यर्थ, २ एव वादिनि देवर्षौ-(कु० सं० ६।८४), ३ एवमधीष्व, ४ एव तावत्, ५ एवमेतत्, ६ एव कुर्म, '')।

[ इति ]॥ 'ए' एत्य वमति। टुवम् उद्गिरणे (भ्वा० प० से०)। विच (३।२।७५)। एव प्रकारोपमयोरङ्गीकारेऽवधारणे' इति धरणि। [ एव प्रकारे स्यादङ्गीकारेऽवधारणे इति मेदिनी, १८३।५६ ]।

नूनं तर्केऽर्थनिश्चये ॥ २५०॥

'नूनम्'के तर्क, अर्थका निश्चय २ अर्थ हैं। ('क्रमश उदा०—१ नूनं शरत्फुल्ला हि काशा, २ नूनं हन्तास्मि रावणम्, ')।

[ निवति ]॥ नुवा स्तुत्या नमति। विच (३।२।७५)। [ नूनं तु निश्चिते तर्के स्मरणे वाक्यपूरणे' इति मेदिनी, १८३।६० ]।

तूष्णीमर्थे सुखे जोषम्

'जोषम्'के मौन (चुप रहना), सुख २ अर्थ हैं। ('क्रमश उदा०—१ 'जोषमास्व' मौनमास्वेत्यर्थ, २ जोषमास्ते जितेन्द्रिय, ' ')।

[ त्विति ]॥ जुष्यते। 'जुष तृप्तौ' (चु० उ० से०)।

---

१ आगमशास्त्रमनित्यम्' इति परिभाषेन्दुशेखर० [९४]

२ विश्वे '—पदार्थेषु—' इत्येव पाठ

ध्यायीका पातञ्जल भाष्य ), शाणी ( सनका वस्त्र-विशेष ), द्रुणी ( गोजर ), दरत् ( म्लेच्छ जाति ), सातिः ( समाप्तिः ), कन्था ( थिथड़ा ), आसन्दी ( एक प्रकारका आसन या बेत का आसन ), नाभिः, ( पेटकी ढोंढी ), राजसभा।

[पिच्छेति] ॥ पिच्छयते । 'पिच्छ बाधे' ( चु० प० से० ) । 'गुरोश्च–' (३।३।१०३) इत्य । = 'शाल्मलिनिर्यास., भक्तादिमण्डश्च ॥ (१) ॥•॥ वितण्ड्यते परपक्षोऽनया। 'तडि आघाते' (भ्वा० आ० से०) । 'गुरोश्च–' ( ३।३।१०३ ) इत्यः । ['वितण्डा वादभेदे स्यात् करवीशाके शिलाह्वये । करयीर्यामपि स्त्री स्यात्' इति मेदिनी, ४३।३६-३७ ] ॥ ( १ ) ॥•॥ वकनम् । 'वक लौल्ये–' (भ्वा० आ० से० ) । घञ् ( ३।३।१९ ) । काकमणति । 'क्वण शब्दे' (भ्वा० प० से०) । अण् (३।२।१) । पृषोदरादि ( ६।३।१०९ ) । 'पणगण्डकयोस्तुर्ये उदमानस्य काकिणी'[1] इति रुद्र ॥•॥ रभसस्तु नान्तेष्वप्याह—'पणोदमानगण्डानां तुर्यांशेऽपि च काकिनी' इति । तत्र अन प्राणने' ( अ० प० से० ) धातुर्बोध्य । उ्चाढकस्य पञ्चाशत्तमो भाग उदमान । उक्तं च गणितावल्याम्—'कुन्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढक । अतोऽर्धशतिको भाग उदमानमुदाहृतम्' इति ॥(१)॥•॥ 'चूर्णो धूली क्षारभेदे चूर्णानि वासयुक्तिषु' (इति मेदिनी) [४५।१२] । चूर्णस्य करणम् । 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्तात् 'अच इ.' (उ० ४।१३९)। यद्वा–चरण चोरण वा । 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णय' (उ० ४।५२) इति साधु ॥(१) ॥•॥ शाणस्य विकारः। 'तस्य विकार' ( ४।३।१३४ ) इत्यण् । 'टिड्ढाण–' ( ४।१।१५ ) इति स्वामी । 'शाण' इत्यन्ये ॥ (१) ॥ • ॥ द्रुणति । 'द्रुण जिंहाघे वधे गतौ' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति क । 'जाते–' (४।१।६३) इति ङीप् । 'द्रुण्यस्त्वृद्रोणीकच्छप्यो' (इति मेदिनी) [४७।१७] ॥ (१) ॥•॥ दरणम् । दीर्यते वा । 'दॄ विदारणे' ( क्र्या० प० से० ) । 'भये' (भ्वा० प० से०) वा । दाद्रभ्मोऽदि' ( उ० १।१३० ) । 'दरत् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि' (इति [दान्तेषु] मेदिनी) [७६।२०] ॥ (१) । • ॥ सननम् । सान वा । 'षणु दाने' ( त० उ० से० ) । 'षोऽन्तकर्मणि' (दि० प० अ०) इति वा । 'ऊतियूति–' ( ३।३।९७ ) इति साधु । 'सातिर्दानावसानयो.' ( इति हैम ) [ २।२०९ ] ॥ (१) ॥•॥ कम्यते । 'कमु कान्तौ' ( भ्वा० आ० से० ) । बाहुलकात्थन् । 'कन्था मृन्मयभित्तौ स्यात्तथा प्रावरणान्तरे' (इति मेदिनी) [७२।३] ॥ (१) ॥•। आस्यतेऽस्याम् । 'आस उपवेशने' (अ० प० से०) । 'श(अ)न्दादयश्च' (उ० ४। ९८ ) इति साधु । 'कुन्दादयश्च' इति मुकुटश्चिन्त्यः, एतत्पाठादर्शनात् । 'वेत्रासनमासन्दी स्त्री वृषी च व्रतिकासनम्' ( ) ॥ ( १ ) ॥•॥ नभ्यतेऽनया, अस्या वा । 'णभ हिंसायाम्' ( भ्वा० आ० से० ) । इञजादिभ्य.' ( वा० ३।३।१०८ ) । 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययो पुमान् । द्वयो प्राणिप्रतीके स्यात्स्त्रिया कस्तूरिकामदे (इति मेदिनी ) [ १०६।५-६ ] ॥ ( १ )॥•॥ राज्ञ सभा ॥ ( १ ) ॥•॥

**झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला।**
**लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥१॥**

झल्लरी ( हुडुक बाजा ), चर्चरी (ताली या गान-विशेष), पारी (हाथीके पैर बाँधनेकी रस्सी या पानभाण्ड घड़ा आदि), होरा ( लग्न, लग्नार्द्ध, जातक ), लट्वा ( ग्रामका गौरैया पक्षी, करञ्ज फल, वाद्य-विशेष ), सिध्मला ( सूखी मछली, गीली खुजली, मल ), लाक्षा ( लाह ), लिक्षा ( जूआका अण्डा, लीख ), गण्डूषा (पानीसे मुख भरना, कुल्ला), गृध्रसी ( उरु-सन्धिमें होनेवाला वातरोग–विशेष ), चमसी ( उड़द या मसूरका आदिका बेसन, काष्ठका बना हुआ यज्ञपात्र-विशेष ), मसी ( स्याही ), ये ४२ शब्द स्त्रीलिङ्ग होते हैं।

[झल्लेति] ॥ झर्झते । 'झर्झ भर्त्सने'[1] ( तु० प० से० ) । बाहुलकादरन् । पृषोदरादि ( ६।३।१०९ ) गौरादिः (४।१।४१)। 'झल्लरी भिल्लरी'[2] च द्वे हुडुके वाल चक्रके' (इति मेदिनी)[१३४।१५९]॥ (१) ।•॥ चर्च्यते । 'चर्च उक्तौ' (भ्वा० प० से०) । बहुलकादरन् । गौरादि ( ४।१।४१ ) । 'चर्चरी गीतभेदे च केशभिल्करशब्दयो:' ( ) ॥ ( १ ) ।•॥ पारयति । पार्यते वा । 'पृ पूर्तौ'[3] चुरादि । पचाद्यच् ( ३।१।१३४ ) । घञ् ( ३।२।१९ ) वा । गौरादि ( ४।१।४१ ) । 'शर्करीपूर्यो.[4] पारी पादरज्ज्वां च हस्तिन ' (इति विश्व ) [१२६।१७] ॥ ( १ ) ॥•॥ होलति, हुल्यते वा । 'हुल हिंसासंवरणयो ' (भ्वा० प० से०)। पचाद्यच् ( ३।१।१३४ ) घञ् वा । रलयोरेकत्वम् । 'होरा तु लग्ने राश्यर्धे रेखाशास्त्रभिदोरपि'(इति मेदिनी)[१३०।१०२]॥ (१) ।•॥ लटति । 'लट बाल्ये'

1. '–परिभाषणभर्त्सनयो 'इति सि० कौ० धातुपाठे च ।
2. 'झल्लरी झलरी—' इति मेदिनीपाठ ।
3. 'पृ पूरणे' इति सि० कौ० धातुपाठे च ।
4. 'कर्करी' इति पाठान्तरम् ।

1. "काकिणी' नाम माषकचतुर्थो भागः 'पणचतुर्थभाग' इत्येके" इति स्वामी ।

(भ्वा० प० से०)। 'अशूपुषिलटि—' (उ० १।१५१) इति क्वुन्। 'लटवा करञ्जभेदे फलेऽनखे खगान्तरे' (इति मेदिनी) [१५९।२२]॥ (१)॥*॥ सिध्ममस्त्यस्याः। 'सिध्मादिभ्यश्च' (५।२।९७) इति लच्। 'सिध्मला मत्स्यविकृतौ वाच्यवत्तु विलासिनि' (इति मेदिनी) [१५५।१४५]॥ (१)॥*॥ लाक्ष्यते। लष[६] 'शिल्पयोगे' चुरादि। बाहुलकात्स। यद्वा—लक्ष्यते। 'लक्ष आलोचने' (च० उ० से०)। घञ् (३।३।१९)। पृषोदरादित्वात् (६।३।१०९) 'लाक्षारोचना—' (४।२।२) इति निर्देशाद्वा दीर्घः॥ (१)॥*॥ लक्ष्यते। लक्ष आलोचने' (चु० उ० से०)। घञ् (३।३।१९)। पृषोदरादित्वात् (६।३।१०९) अस्य इ। = यूकाण्डम्॥ (१)॥*॥ गण्ड्यते। गडि वदनैकदेशे' (भ्वा० प० से०)। गण्डेरू' (उ० ४।७८) इत्यूषन्। पुंस्यपि। 'गण्डूषो मुखपूर्तौ भपुष्करप्रमृतान्जलि॰[७] (इति रुद्रः) [विश्व, १६८।३५]। उत्पलमालास्तु गण्डूषा नापि मुखपूर्तिः इति बोपालित॥ (१)॥*॥ गृध्यमपि स्यति। 'षोऽन्तकर्मणि' (दि० प० अ०)। 'आतोऽनुप—' (३।२।३) इति क। गौरादि (४।१।४१) ङीष्। = करुसवी वातरोग॥ (१)॥*॥ चम्यते। चमु अदने (भ्वा० प० से०)। 'अत्यविचमितमि—' (उ० ३।११७) इत्यसच्। गौरादित्वात् (४।१।४१) ङीष्। 'चमसो यज्ञपात्रस्य भवेऽस्त्री पिष्टके स्त्रियाम्' (इति मदिनी) [१७१।२१]॥ (१)॥*॥ मस्यति। मसी परिणामे (दि० प० स०)। पचाद्यच् (३।१।१३४)। मसा मसीजल' पत्राञ्जन च स्यान्मसिद्वयोः[१] इति त्रिकाण्डशेष [२।८।२७]।

इति स्त्रीलिङ्गशेषः॥

अथ पुंल्लिङ्गशेषः॥

**पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः।**
**स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः॥ ११॥**

यहाँसे आगे 'द्विहीने—' (अम० ३।५।२२) के पूर्व 'पुंस्त्वे' इसका अधिकार होनेसे इसके मध्यवर्ती सब शब्द पुंल्लिङ्ग होते हैं। भेद और अनुचरके सहित सुर(देवता)तथा असुर (दैत्य) के पर्यायोंके सहित सब शब्द पुंल्लिङ्ग होते हैं। स्वर्ग, याग (यज्ञ), अद्रि (पहाड़), मेघ (बादल), अब्धि (समुद्र), द्रु (पेड़), काल (समय), असि (तलवार), शर (बाण), और अरि (शत्रु), इनके पर्याय और भेदवाचक शब्द पुंल्लिङ्ग होते हैं।

[पुमिति]॥ 'पुंस्त्वे' इत्यधिकारः। सह भेदैरनुचरैश्च वर्तमानाः सह पर्यायैर्वर्तमानाः, सुरासुराश्च देवदैत्याः। अमराः निर्जराः देवाः। सुरभेदाः—तुषिताः, साध्याः, आभास्वराः, इन्द्र, शक्र, सूर्य, आदित्य। देवानुचराः—हाहा, हूहू, तुम्बुरु, नारद, मातलि। असुरपर्यायाः—दैत्याः, दैतेयाः, दानवाः। दैत्यभेदाः—बलि, नमुचि, जम्भ। दैत्यानुचराः—कूष्माण्डमुण्डकुम्भाण्डादयः। 'दैवतानि—देवताः' इत्यादौ बाधोऽस्य। स्वर्गादय एकोनविंशतिः सभेदाः सपर्यायाश्च पुंसि स्युः। स्वर्ग, नाक, त्रिदिव। 'द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्' [अम० १।१।६] इति विप्रतिपिद्धविधित्व। यज्ञ, मख, क्रतु। तद्भेदाः—उ अतिरात्राग्निष्टोमाश्वमेधाः। अद्रि, गिरि, पर्वत। भेदाः—मरु, हिमवान्, सह्य। 'गन्धमादनम्' इति बाधः [अम० १।३।३] मेघ, घन, जलद। भेदाः—पुष्करावर्तकादयः। 'अभ्रम्' इति तु बाधः। अब्धि, समुद्र, सागर। भेदाः—क्षीरोद लवणोद। द्रु, वृक्ष, शाखी। भेदाः—प्लक्ष, वट॰, आम्र। पाटलाशिंशपादैर्बाधः। काल, दिष्ट, समय। भेदाः—मास, पक्ष, ऋतु। दिनतिथ्यादौ बाधः। असि, खड्ग, मण्डलाग्र। भेदाः—नन्दक, चन्द्रहास। 'कठिनम्' इत्यादौ बाधः। शर, बाण, विशिख। भेदाः—नाराच, काण्ड, भल्ल। 'इषुर्द्वयोः' इति [अम० २।८।८७]। बाधः। अरि, शत्रु, अराति। भेदाः—आततायी।

**करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः।**
**अह्नाह्नान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः॥१२॥**

कर (कौड़ी राजाका कर अर्थात् मालगुजारी, किरण), गण्ड (गाल), ओष्ठ (ओठ), दोः (हाथ), दन्त (दाँत), कण्ठ (गला), केश (बाल), नख (नाखून), स्तन (थन), इनके पर्याय और भेदके सहित शब्द पुंल्लिङ्ग होते हैं। 'अह्न, अहन्' शब्द जिनके अन्तमें हों, वे शब्द, विषभेदके वाचक शब्द, 'रात्रि' शब्द हो अन्तमें जिनके ऐसे अस, ख्यापूर्वक (संख्या-वाचक शब्द पूर्व में न रहें ऐसे) शब्द, पुंल्लिङ्ग होते हैं। ('क्रमश उदा०—पूर्वाह्न, सायाह्न, अप राह्न, मध्याह्न,' ... । २ द्व्यह, त्र्यह, उत्तमाह॰, परमाह॰ ... । ३ वत्सनाभ, सौराष्ट्रिक, ब्रह्मपुत्र, शौक्लिकेय, काल

५ '—फल वायो खगान्तरे' इति पाठो मदिन्याम्।
६ सि० कौ० धातुपाठे च्याय 'लस' इति दन्त्यान्त पठित।
७ '—प्रसृतोन्मिते' इति विश्वे पाठ।
१ त्रिकाण्डशेषे 'मसिजल तु मसा स्यात् पत्राञ्जन मसिर्द्वयो' इति पाठ।

कूटः, हलाहलः,……। ४ अहोरात्रः, सर्वरात्रः, दीर्घरात्रः,……)
('प्रागसंख्यकाः' (असंख्यापूर्वक) ग्रहण करने से 'पञ्चरात्रम्, द्विरात्रम्, त्रिरात्रम्……' में संख्यावाचक शब्द पूर्वमें रहनेसे पुंल्लिङ्ग नहीं होता है')।

[करेति]॥ करौ=राजग्राह्यो भाग, रश्मि, पाणिश्च। मरीच्यादीनां तु बाध.। गण्ड =कपोल। ओष्ठ =दन्तच्छद, अधरः। दो =प्रकोष्ठ। भुजादे 'द्वयो' [अम० २।६।७९] इति बाध.। दन्तः=दशनः, रद। भेद —जम्भ। कण्ठ, गल.। 'समीपगलशब्देषु कण्ठं त्रिषु विदुर्बुधा' इति शाश्वत. [४८९]। केशः=कचः। नख=पुनर्भव। 'नखरोऽस्त्रियाम्' [अम० २।६।८३] इति बाध। स्तन=कुचः, पयोधरः। अरश्च अह्नश्च अन्ते येषां ते पुंसि स्युः। परवल्लिङ्गापवादोऽयम्। अह्न. पूर्वम्-पूर्वाह्णः, अपराह्ण। द्वयोरह्नो समाहारो द्व्यहः, त्र्यहः। अत्र 'स नपुंसकम्' (२।४।१७) इत्यस्यापवादः। क्ष्वेडः=विषम्। तद्भेदाः पुंसि स्युः। सौराष्ट्रिकः, शौक्लिकेय, ब्रह्मपुत्रः। रात्रोऽन्तो येषां ते। प्राक् पूर्वपदं न संख्या येषां ते पुंसि स्युः। परवल्लिङ्गतापवादोऽयम्। परत्वात्समाहारनपुंसकतामपि बाधते। तेन अहोरात्र, सर्वरात्रः, पूर्वरात्रः। 'प्रागसंख्यकाः' इति किम्? पञ्चरात्रम्।

श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः।
कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः॥ १३॥

श्रीवेष्ट आदि गोंदके वाचक शब्द, अस् और अन् ये हों अन्तमें जिनके, ऐसे अबाधित शब्द पुंल्लिङ्ग होते हैं। 'कशेरु, जतु, वस्तु, शब्दको छोड़कर। अन्य 'तु १, रु २' अन्तमें हों जिनके ऐसे शब्द पुंल्लिङ्ग कशेरुज तुवस्तूनि हित्वा' इसके कहनेसे इदं 'कशेरु' जलज कन्द विशेष, 'जतु' लाक्षा, इदं 'वस्तु' यहाँपर 'कशेरु, जतु, वस्तु' शब्द पुंल्लिङ्ग नहीं होते हैं।

[श्रीति]॥ श्रीवेष्ट आद्यो येषां ते निर्यासा वृक्षद्रवाः पुंसि स्युः। श्रीवेष्टः, सरलः, द्रवः। 'श्रीपिष्टः' इति क्वचित्पाठः। आद्येन श्रीवासः, वृकधूपः, गुग्गुलुः, सिह्लक इत्यादयः पुंसि बोध्याः। असन्ता अन्नन्ताश्च पुंसि स्युः। अङ्गिराः, वेधाः, चन्द्रमाः। कृष्णवर्त्मा, प्रतिदिवा, मघवा। अबाधिताः किम्? अप्सरसः, जलौकसः, सुमनसः, लोम, साम, वर्म। तुश्च रुश्च तुरू। तौ विरामौ विरामे वा येषां ते पुंसि स्युः। कशेर्वादीनि विहाय। हेतुः, सेतुः, धातुः। कुरु, मेरुः, स्मरुः। 'कशेरुजतुवस्तूनि हित्वा' इति व्यर्थम्। 'अबाधिता.' इत्यस्यान्वयसंभवात्। वस्तुतस्तु 'अबाधिताः' इत्यपि व्यर्थम्। 'विशेष्यवदबाधित.' [अम० ३।५।२] इत्यनेन निर्वाहात्। अत एव दारवंश्चादिषु निर्वाहः।

कपणभमरोपान्ता यद्यदन्ता अमी अथ।
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः॥ १४॥

'क, प, ण, भ, म, र' ये ६ वर्ण जिस अदन्त शब्द के उपान्त (अन्तवाले वर्णके अव्यवहित पूर्व) में रहें; वे शब्दविशेष, पुंल्लिङ्ग होते हैं। 'प, थ, न, य, स, ट' ये ६ वर्ण जिनके उपान्त (अन्तके वर्णके अव्यवहित पूर्व) में रहें; वे शब्द पुंल्लिङ्ग होते हैं। गोत्राख्य (गोत्रके वाचक) शब्द १ और चरण (वेद-शाखा) के वाचक शब्द पुंल्लिङ्ग होते हैं।

[कपेति]॥ ककारादिषड्वर्णोपधा अदन्ताः पुंसि स्युः। शङ्कुः, स्तोकः, अर्कः। माषः, तूपः, रोपः। पाषाणः, गुणः, घुणः। दर्भ-गरभ गर्दभाः। होमः, ग्रामः, धूमः। झर्झरः, शीकर, समीरः। यूपः, कूपः, सूपः, कलापः। सार्थः नाथः, शपथ.। इनः, अपघन., जनः। अनय-विनय-प्रणयाः। रस-ह्रास-पनसा। पट-स(र)ट-करटाः। मुकुटस्तु—पोपान्तादिषु 'अदन्ताः' इति न सम्बध्यते, अथादित्वात्—इत्याह। गोमायुप्रभृतीनुदाहरति च। गोत्र वंश आख्यायते व्यपदिश्यते यैस्ते। 'अन्येभ्योऽपि—' (वा० ३।२।१०१) इति ड.। गोत्रस्यादिपुरुषाः प्रवराश्च पुंसि स्युः। स्वामी तु 'अपत्यप्रत्ययान्ताः' इति व्याख्यत्। तदसत्। 'अपत्यप्रत्ययान्तः' [३।५।३७] इत्यनेन पुनरुक्तिप्रसङ्गात्। गौतमः, भरद्वाज, वसिष्ठः। चरणानां वेदशाखानामाह्वया नामानि—कठः, कलापः, बह्वृचः।

नाम्न्यकर्तरि भावे च घञजब्नङ्णघाथुचः।
ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः॥ १५॥

नाम, कर्तृभिन्न कारक और भावमें विहित 'घञ्, अच्, अप्, नङ्, ण, घ, अथुच्' प्रत्यय जिनके अन्तमें हों, वे शब्द पुंल्लिङ्ग होते हैं। कर्तामें विहित 'ल्यु' प्रत्ययान्त, भावमें विहित 'इमनिच्' और 'क' प्रत्ययान्त तथा प्रादिसे और अन्यसे, परे घुसंज्ञक धातुसे विहितः कि' प्रत्ययान्त शब्द पुंल्लिङ्ग होते है।

[नेति]॥ घञादयः सप्त प्रत्ययाः संज्ञायां विषये, कर्तृभिन्ने कारके, भावे च ये विहिताः तदन्ताः पुंसि स्युः। प्रासीदन्त्यस्मिन्मनांसि प्रासादः। 'हलश्च' (३।३।१२१) इति घञ्। प्रास्यते प्रास, विदन्त्यनेन वेदः, प्रपतन्त्यस्मादस्मात्प्रपातः। भावे—पाकः, त्यागः, रोग.। चकारात् 'पदरुज—' (३।३।१६) इति घञ्, दायो धायः, इत्यादयोऽसंज्ञायां विहिता अपि गृह्यन्ते। चयः, जयः। 'एरच्'

(३।३।५६)। वरः, सरः, स्तवः, स्तवः। 'ऋदोरप्' (३।३।५७)। 'गजयाचयत—' (३।३।९०) इति नङ। यज्ञः, यत्न। नङ' इत्युरलक्षणम्। स्वपो नन्'(३।३।९१)अपि गृह्यते। 'भरनः मवश इत्यपि' इति [अम० १।७।३६]वा पुस्त्वसिद्धिर्बोध्या। न्यादनम्—न्यादः। नौण च' (३।३।६०) इति ण। 'पुंसि सज्ञायाम्–'(३।३।११८) इति घ। उरश्छद, प्रच्छद। ट्वितोऽथुच्' (३।३।८९)। श्वयथु वेपथु। नन्दिग्रहि'–'(३।१।१३४)इति नद्यादिभ्यो विहितो ल्यु पुंसि स्यात्। नन्दन रमण मधसूदन। सज्ञायामिदम्। असज्ञाया तु कृत कर्तर्यसज्ञायाम्' इति [३ ५।४५] सिद्धम्। इमनिजन्ता' पुंसि। 'पृथ्वादिभ्य इमनिज्वा' (५।१।१२२)। प्रथिमा, महिमा। इह 'भावे' इति न सबध्यते। 'गर्मार्थमेमनिचोऽसग्रहात्तो। चण्डस्य कर्म भावो वा चण्डिमा महत गर्म भावो वा महिमा। स्वामिमुकुटो तु वरिमा' तरिमा' इत्याद्योणादिकेमनिज्वारणाय भावे इति सबद्धनतु। नञ। 'कृत कर्तर्यसज्ञायाम्'[अम०३।३।४५]इत्यनेन तत्र सिद्धत्वात् प्रीयातोरौणादिकर्मानिनन्त प्रेमशब्दः सुपि स्थ'(३।२।४) इति योगविभागाद्भावे कप्रत्यर्थे कः (वा० ३।३।५८) इति च। आयूस्म' प्रस्थ। उपसर्गादिभ्यस्माच्च सुबन्तात् परो यो घु[२] तस्माद्विहितो सः किप्रत्ययस्तदन्त पुंसि स्यात्। 'उपसर्गे घो कि' (३।३।९२)। कर्मण्यधिकरणे च' (३।३।९४)। निधि, आधि, विधि, उदधिः जलधि। अत्र 'प्रादितोऽन्यत' इति वचम्। '—घो कि '[३।३।९२]इत्यनेनेष्टसिद्धेः।

**द्वन्द्वेऽश्ववडवावश्ववडवा न समाहृते।**

**कान्तः सूर्येन्दुपर्यायपूर्वोऽय पर्यकोऽपि च ॥ १६ ॥**

समाहार अथमे भिन्न द्वन्द्व समासमें 'अश्ववडव' शब्द पुंलिङ्ग होता है। 'सूर्य, चन्द्र'के पर्याय और 'अयस्' शब्दके परे ( आगे ) रहनेपर 'कान्त' शब्द पुंलिङ्ग होता है।

[द्वन्द्व इति] ॥ अश्वश्च वडवा च। 'पूर्ववदश्ववडवौ' (२।४।२७) इति परवल्लिङ्गतापवाद। द्वित्वमविवक्षितम्। तेन अश्ववडवान्'। असमाहृते किम्? अश्ववडवम्। 'विभाषा वृक्षमृग–' (२।४।१२) इति चैकवद्भावः। सूर्येन्दुनामपूर्व कान्तशब्द पुंसि। सूर्यकान्त, चन्द्रकान्त, अयस्कान्त।

१. 'नन्दिग्रहिपचादिभ्यो– इति सूत्रस्वरूपम्, न तु 'पचिनन्दि–' इति।

२ 'दाधा घ्वदाप्' (१।१।२०) इति 'घु'सज्ञको धातुरित्यर्थ।

**वटकश्चानुवाकश्च रल्लकश्च कुडङ्गक'।**

**पुङ्खो न्युङ्ख समुद्गश्च विटपट्टघटाः घटः॥ १७॥**

अब 'कान्त, पर्यङ्क' ' ' के क्रमसे 'पुंलिङ्गसंग्रह' के अन्ततक पुंलिङ्ग शब्दोंको कहते हैं। वटकः ( बारा ), अनुवाक ( वेद-भेद, ऋक् और यजुष् का समूह ), रल्लकः ( पक्ष्म-कम्बल, रोंआदार कम्बल ), कुडङ्गकः स्थान ), पुङ्खः ( वाणके नीचेवाला भाग, पङ्ख ), न्युङ्खः ( सामवेदके ६ ॐकार ), समुद्गः ( सम्पुट, डब्बा ), विटः ( कामी, अनुचर, धूर्त ), पट्ट ( पीढ़ा, काठका आसन-विशेष ), घटः ( काठकी तराजू, परीक्षा करनेकी तराजू ), घटः ( अन्धा कूआँ, तृण, प्रहार ), ।

[वटेति] ॥ वटति। वट वेष्टने' (भ्वा० प० से०)। क्वुन् (उ० २।३२)। = मापपिष्टविकार ॥ (१) ॥*॥ अनु उच्यते। वच भाषणे' (अ० प० अ०)। घञ् (३।३।१९)। 'चजो –' (७।३।५२) इति कुत्वम्। =ऋग्यजुःसमूह ॥ (१) ॥*॥ लल्यते। 'लल ईप्सायाम्' (भ्वा० प० से०)। सगदादि ( वा० ३।३।१०८ )। रलयोरेकत्वम्। लक्यते। लक आस्वादने' ( )। 'पुंसि सज्ञायाम्–' (३।३।११८) इति घ। रल् चासौ लकश्च। = पक्ष्मकम्बलम्–'॥ कुटति। 'कुट कौटिल्ये'(तु० प० से०)। किप ( ३।२।१७८ )। कुट अङ्गमस्य। 'शेषाद्विभाषा' (५।४।१५४) इति कप्। 'कुडङ्गको ना छदि' पिटम्' इति वोपालित। =वृक्षलतागृहम्' इति स्वामी। 'कुटङ्गक' इति क्वचित् पाठ। तत्र कुटे 'इगुपध–' ( ३।१।१३५ ) इति के शकन्ध्वादित्व (वा० ६।१।९४) बोध्यम्॥ (१) ॥*॥ पुमास खनति, पुसा खन्यते वा। 'खनु अवदारणे' (भ्वा० प० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१)। पुङ्ख =बाणमूलम्॥ (१) ॥*॥ न्युङ्ख्यते। 'उखि गतौ' (भ्वा० प० से०)। 'पुंसि सज्ञायाम्–' (३।३।११८) इति घ। 'न्युङ्खं भम्यङ्गमनोज्ञे च साम्न पदप्रणवेषु च' (इति मेदिनी) [२०१२] ॥ *॥ ( 'न्यूङ्ख' इति ) दीर्घपाठे तु पृषोदरादित्वात् (६।३।१०९)। 'यजकर्मण्यजपन्यूङ्खसामसु' ( १।२।३४ ) इति निर्देशाद्वा दीर्घ ॥ (१) ॥*॥ समुद्गम्यते। 'गम्लृ गतौ' (भ्वा० प० अ०)। 'अन्येष्वपि–' ( वा० ३।२।४८ ) इति ड। = सपुटक ॥ (१) ॥*॥ वेटति। 'विट आक्रोशे' ( भ्वा० प० से० )। 'इगुपध–' (३।१।१३५) इति क। विटोऽद्री धवले' विङ्गे मूषिके खदिरेऽपि च' ( इति मेदिनी ) ॥ (१) ॥*॥ पटति, पट्यते

१ मेदिन्या 'विटोऽद्री लवणे–' इति पाठ।

वा। 'पट गतौ' (भ्वा० प० से०)। बाहुलकात्। 'पट्ट पेषणपाषाणे व्रणादीनां च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयो.' (इति मेदिनी) [३५।२१]॥ (१)॥*॥ तटपते। 'तट उच्छ्राये' (भ्वा० प० से०)। घन्यते वा। 'धन शब्दे' (भ्वा० प० से०)। 'पुंसि–' (३।३।११८) इति घः। तस्य घः। नस्य टो वा। 'पणेक्षायांतुलायां च घटः सूरिभिरिष्यते' इति विश्व [२८। २६]। 'घटो दिव्यतुलायां स्याद् घटी चौरे च वामम' (इति मेदिनी) [३४।१८]॥ (१)॥*॥ खटपते। 'खट काङ्क्षायाम्' (भ्वा० प० से०)। 'पुंसि–' (३।३।११८) इति घ.। 'खटोऽन्धकूपकफयोः प्रहारान्तरटङ्कयो' (इति मेदिनी) [३४।९]।

कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत्।

गडुः करण्डो लगुडो वरण्डश्च किणो घुणः॥ १८॥

कोट्टारः (नगरकूप, बावली या घाट), घट्टः (घाट), हट्टः (बाजार), पिण्डः (कवल या पिण्ड), गोण्डः (नीच जाति, बढ़ी हुई ढोंढी), पिचण्डः (पेट), गडुः (गाल या गलगण्ड रोग, या कुबड़ा), करण्डः (समुद्र या बाँसकी कोठिला आदि भाण्ड-विशेष), लगुडः (लाठी), वरण्डः (समूह, मुखरोग), किणः (घावका चिह्न, मांस-ग्रन्थि, घट्ठा), घुणः (घुन)।

[कोट्टेति]॥ कुट्टयते। 'कुट्ट छेदने' (चु० प० से०)। 'प्रतापने' (चु० आ० से०) वा। 'बाहुलकादारन् गुणश्च'। 'कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके' इति रभस, [मेदिनी १३३।१४४, विश्वप्र १३९।१७७]॥ (१)॥*॥ घट्टयतेऽस्मिन्। 'घट्ट चलने' (भ्वा० आ० से०)। 'हलश्च' (३।३।१२१) इति घञ्। = 'घाट' इति प्रसिद्ध॥ (१)॥*॥ केचित्तु 'कोट' 'अरघट्ट' इति छित्वा 'कोट्टो दुर्गपुरम्। अरघट्ट. कूपभेद' इति व्याचख्यु। तत्र हट्टघटीति वाहुलकाद् गुण.। अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्टयते रच्यते—अरघट्ट। कूपाज्जलनिःसारणार्थं घटीयन्त्रमित्यन्ये॥ (१)॥*॥ हटन्त्यत्र। 'हट दीप्तौ' (भ्वा० प० से०)। वाहुलकात्त.। हट्टः = आपण-॥(१)॥*॥ पिण्डयते, पिण्डते वा। 'पिडि सघाते' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। घञ् (३।३।१९) वा। 'पिण्डो बोले वले सान्द्रे देहागारैकदेशयो। देहमात्रे निवापे च गोलसिह्लकयोरपि। ओण्ड्रपुष्पे च पुंसि स्यात्क्लीवमाजीवनायसो.। पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयो.' (इति मेदिनी) [५१।१८-२०]॥ (१)॥*॥ गोरण्ड इव। 'गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति'

(इति मेदिनी) [४१।११]॥ (१)॥*॥ अपि चण्डते अनेन, अत्र वा। 'चडि कोपे' (भ्वा० आ० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'वष्टि भागुरि–' इत्यपेर्लोपः। 'पिचण्डः पिचण्ड उदरे पशोरवयवे पुमान्' (इति मेदिनी) [४२।३२]। शस्ते = देहे॥(१)॥*॥'–पिचण्डवत् कोट्टारादय पुंसि' इत्यन्वय॥*॥ गडति, गडयते वा। 'गड सेचने' (भ्वा० प० से०)। बाहुलकाद्। 'गडु पृष्ठगुडे कुब्जे' इति विश्वः [४३।२]॥(१)॥*॥ क्रियते। 'डुकृञ् [करणे] (त० उ० अ०)। 'अण्डन् कृसृभृवृञ्' (उ० १।१२९)। 'करण्डो मधुकोषासिकारण्डवदलाढके[१]' (इति मेदिनी) [४२।२७]॥ (१)॥*॥ लगति। 'लगे सङ्गे' (भ्वा० प० से०)। बाहुलकादुडच्. लगुड = यष्टि.॥ (१)॥*॥ वृणोति, व्रियते वा। 'वृञ् वरणे' (स्वा० उ० से०) अण्डन् (उ० १।१२९)। 'वरण्डोऽन्तरवेदौ स्यात् समूहमुखरोगयो' (इति मेदिनी) [४३।३३]॥ (१)॥*॥ कणति। कण गतौ (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। पृषोदरादित्वात् (६।३।१०९) अत इः। किण = मांसग्रन्थि, व्रणज चिह्न च॥ (१)॥*॥ घोणते। 'घुण भ्रमणे'।(भ्वा० आ० से०)। इगुपध–'(३।१।१३५) इति क। 'घुण स्यात्काष्ठवेधके' इति रत्नकोष.।

हतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः।

कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सपूपकौ॥ १९॥

हतिः (मार्ग), सीमन्तः (केश-वेश), हरित् (हरा रंग), रोमन्थः (पगुरी), उद्गीथः (साम-भेद), बुद्बुदः (बुलबुला), कासमर्दः (गुल्म-भेद, बेसवार अर्थात् एक प्रकारका मसाला या छौंक), अर्बुदः (दश करोड़, आबू पहाड़, रोग-विशेष), कुन्दः (कुन्द फूल या खिराद-भाण्ड), फेनः

१ ग्रन्थकृता प्रथमं "नानार्थं. प्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शित। सप्तम्यन्तोऽभिधेयेषु वर्तमानो विनिश्चित।" (मेदि० २।१२) इति स्वय प्रतिज्ञाततया 'प्रकाण्डोऽस्त्री तरुस्कन्धे प्रशस्ते विटपेऽपि च' इति, पिचण्ड पुंसि जठरे पशोरवयवेऽपि च' इति च (विश्वलो० पृ० ९२ श्लो० ३३-३४) वचनाभ्या, 'प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरो–' इति, 'पिचण्डमुदरे विद्यात् पशोरवयवेऽपि च' इति च विश्व(४५।२९,२६) वचनाभ्या 'शस्त'र्थस्य प्रकाण्डशब्देनैवान्वयोचित्यात् 'शस्ते' इत्यस्य पूर्वेण 'प्रकाण्ड'-शब्देनैवान्वयो युक्तः, न तु परेण 'पिचण्ड' शब्देनेत्यतः 'शस्ते' इत्यस्योदाहरणं तद्व्याख्यानं च व्यर्थमेवेति।

२. मेदिन्यां '—काण्डेषु दलाढके' इत्येव पाठः।

( फेन, गाज ), स्तूप ( मिट्टी आदिका ढेर, यज्ञमें वध्य पशु बाँधनेका काष्ठ-विशेष ), पूप ( पूआ )।

[ द्रिति ] ॥ द्रियते । 'दृङ् आदरे' (तु० आ० अ०)। क्तिच ( ३।३।१७४ ) । 'दृतिश्चर्मपुटे मत्स्ये ना' ( इति मेदिनी ) [ ५५।२६ ] ॥ ( १ ) ॥ * ॥ सीम्नोऽन्त । शकन्ध्वादि (वा० ६।१।९४)। =केशविन्यास ॥ (१) ॥ * ॥ हरति, ह्रियते वा । 'हृञ् हरणे' ( भ्वा० उ० अ०) । 'हृसृरुहि-' (उ० १।९७) इतीति. । 'हरिर्दिशि स्त्रियां पुंसि हृयवर्णविशेषयो । अस्त्रियां स्यात्तृणे च' ( इति मेदिनी) [ ६७।१७४-१७५ ]॥ (१) ॥*॥ रोमस्य[रणो] मन्थो रोमन्थ । पृषोदरादि । (६।३।१०९) । =पागुरा चर्वितस्य चर्वणम् ॥ ( १ ) ॥ * ॥ उद्गीयन । गै शब्दे (भ्वा० प० अ०)। 'पश्चादि-' (उ० २।१०) इति थक । यत्तु-'स्युदो गोऽवुभ्याम्' इति सूत्र मुकुटेनोप यस्तम् । तदुज्ज्वलदत्ताद्यणादिवृत्तिपु न पश्याम । उद्गीथ प्रणव सामवेदध्वनि ' इत्यरुण ॥ (१) ॥ * ॥ बुद इत्यव्य क्तध्वनि बुन्दति करोति । 'बुन्दिर् निशामने' (भ्वा० उ० से०)। मूलविभुजादित्वात् (वा० ३।२।५)क । बुद्बुद = जलविकार ॥ (१) ॥ * ॥ वास मृद्नाति । 'मृद क्षोदे' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) । = वेसवार-भेद ॥(१) ॥*॥ अर बुन्दति । 'उबुन्दिर्' [निशामने'] (भ्वा० प० से०) मूलविभुजादि (वा० ३।२।५)। पृषोदरादि (६।३।१०९) । 'अर्बुदो मासकीलेऽस्त्री पुरुषे' दश कोटिषु । महीधरविशेषे ना'(इति मेदिनी)[७५।१९-२०] 'अर्दनि ' इति पठित्वा 'अनि ' इति व्याख्यत् मुकुट । तत्र 'अर्द गतौ' (भ्वा० प० से०) । अनिप्रत्यय. ॥ (१) ॥ * ॥ स्कुन्दते । स्कुदि आप्रवणे' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४) । पृषोदरादि ( ६।३।१०९ ) । 'कुन्दो माध्येऽस्त्री, मुकुन्दभ्रमिनिध्यन्तरपु ना ( इति मेदिनी) [ ७७।३ ] ॥ (१) ॥ * ॥ स्फायते । 'स्फायी वृद्धौ' (भ्वा० आ० से०) । फेनमिनौ' (उ० ३।३)इति साधु ॥ (१) ॥ * ॥ स्तूयते । 'ष्टुञ् स्तुतौ' (अ० उ० अ० ) । 'स्तुवो दीर्घश्च' (उ० ३।२५) इति प । स्तूप्यते वा । ष्टुप समुच्छ्राये' (चु० प० से०) । घञ् ॥— मृत्तादिकृतकूट —इति मुकुट ॥ (१) ॥ * ॥ पुनाति, पूयते वा । बाहुलकात्पक् ॥ * ॥ स्वामी तु-'यूप' शब्द पठति । यौति, यूयते वा । 'यु मिश्रणेऽमिश्रणे च' (अ० प० से०) कुयुभ्या च' (उ० ३।२७) इति दीर्घ किच्च । स्वार्थे कन् (ज्ञा० ५।४।५) ।

१ मेदिन्या '—कीले स्यात्-' इति पाठ । '—मास पुरुषे दशकोटिषु न स्त्रियाम्' इति पाठान्तरम् ।

आतप क्षत्रिये नाभि कुणपक्षुरकेदरा' ।
पूरक्षुरप्रचुकाश्च गोलहिङ्गुलपुद्गला ॥ २० ॥

आतप, ( घाम ), नाभि ( क्षत्रिय, मुख्य राजा, '' ), कुणप ( मुर्दा-विशेष ), क्षुर ( छूरा ), केदर ( एक प्रकार का व्यावहारिक पदार्थ ), पूर ( पानीका प्रवाह ), क्षुरप्र ( बाण-भेद ), चुक ( चुक, शाक-विशेष ), गोल ( गोला, पिण्ड ), हिङ्गुल ( ईंगुर ), पुद्गल ( आत्मा, जैनसिद्धान्त सम्मत आकाशादि-द्रव्य )।

[ आतेति ] ॥ आतपति । 'तप सन्तापे' (भ्वा० प० अ० ) । पचाद्यच् (३।१।१३४) ॥ (१) ॥ * ॥ कुण पाति, पिबति वा । 'आतोऽनुप-' (३।२।३) इति क । (=प्रासविशेष ) ॥ * ॥ क्वचित् 'कुणप ' इति पाठ । [ कुणपी पुन । विटसारिकाया ] कुणप' पूतिगन्धौ शवेऽपि च' (इति मेदिनी) [ १०३।१९-२० ] ॥ (१) ॥*॥ क्षुरति । 'क्षुर विलेखने' (तु० प० से०) । 'इगुपध-' (३।१।१३५) इति क । क्षुर स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' (इति मेदिनी) [ १२४।१८ ] ॥ (१) ॥ * ॥ के दृणाति । दृ विदारणे' (क्र्या० प० से०) । पचाद्यच् ( ३।१।१३४ ) । 'ऋद्धोरप्' ( ३।३।५७ ) । =केकर । सव्यवहारपदार्थश्च । 'तरुभेद' इत्यन्ये ॥ (१) ॥ * ॥ पूरयति । पूर पूरणे' (चु० उ० से०)। पचाद्यच् (३।१।१३४)। 'पूरो जलप्रवाहे' स्याद्व्रणसंशुद्धिखाद्ययो ' (इति मेदिनी)[ १२७।६० ] ॥ (१) ॥ * ॥ क्षुर प्राति । क्षुर इव प्राति वा । प्रा पूर्तौ (अ० प० अ०) आतोऽनुप- (३।२।३) इति, 'सुप-' (३।२।४ ) इति योगविभागाद्वा क । मुकुटस्तु क्षुरप्र इति कवर्गद्वितीयादि पठति । = बाणभेद ॥ ( १ ) ॥ * ॥ चकयतेऽनेन । चक तृप्तौ प्रतिघाते च' (भ्वा० प० से०)। चकिचम्योरुच्चोपधायाः ' ( उ० २।१४ ) इति रक । चुक्र शुक्ताम्ले, चाङ्गेर्यां स्त्री, पुस्यम्लेऽम्लवेतसे' ( इति मेदिनी) [१२५।२६]।(१)॥*॥ गुडयते । 'गुड रक्षायाम्' ( तु० प० से० ) । घञ ( ३।३।१९ ) । रलयोरैकत्वम् । गोला गोदावरीसख्यो कुनटीदुर्गयो स्त्रियाम् । पत्त्राञ्जने मण्डले चालिञ्जरे बालखेलने । द्वयोर्लदम्या,[२] पुमान्

१ मेदिन्यां 'पूरो जलसमूह —' इति पाठ ।

२. मेदिन्यां द्वयो ' इत्यस्य स्थाने 'चला लक्ष्म्या पुमान् कम्पे कम्पयुक्तेऽभिधेयवत्' इति पाठोपलम्भेन, 'चलश्चलाचले कम्पे कमलाविद्युतोश्चला' इति विश्वलो० (३३।१५) स्य चल कम्पे चलाश्रये' इति विश्व(१४१।५)स्य च वचनाभ्या 'गोला शब्दस्य लक्ष्मीकम्पार्थाभावाच्चायमत्रो न प्रकृतोपयुक्तः ।

कम्पे कम्पयुक्तेऽभिधेयवत् (इति मेदिनी) [ १४६।१५ ] (१) ॥ * ॥ हिङ्गुलाति । 'आतोऽनुप–' (३।२।३) इति कः। 'हिङ्गुलो वर्णकद्रव्ये ना, भण्टाक्या तु हिङ्गुली' (इति मेदिनी) [१५५।१४६] ॥ * ॥ (हिङ्गुल' इति) उदन्तपाठे तु मितद्र्वादित्वात् (वा० ३।२।१८०) डु । मुकुटस्तु 'हिङ्गुलु स्यात्तु हिङ्गुलम्' इति पठति । (१) ॥ * ॥ 'पुत्' इति कुत्सायामव्ययम् । पुद्गिलति, गीर्यते वा। 'गृ निगरणे' (तु० प० से०)। पचाद्यच् (३।१।१३४) । 'ऋदोरप्' (३।३।५७) वा । 'अचि विभाषा' (८।२।२१) इति वा लः । पुद् गलति वा । 'गल अदने' (भ्वा० प० से०), 'स्रावे' (चु० आ० से०) वा । अच (३।१।१३४)। 'पुद्गल. सुन्दराकारे त्रिषु पुंस्यात्मदेहयो' (इति मेदिनी) [ १५३।११६ ] ॥

वेतालमल्लभल्लाश्च पुरोडाशोऽपि पट्टिशः ।
कुल्मापो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥

वेतालः (प्रेत-विशेष), मल्लः (कुश्ती लड़नेमें चतुर पहलवान), भल्लः (भाल, बाण-विशेष, पट्ट), पुरोडाशः (यज्ञ सम्बन्धी पूआ, हविष्य-विशेष), पट्टिशः (अस्त्र-विशेष), कुल्मापः (आधा गीला यव या उड़द आदि), रभसः (हर्ष, वेग, पौर्वापर्यका विचार), कटाहः (कराह), पतद्ग्रहः (पीकदान), ये ५५ शब्द पुंलिङ्ग होते हैं।

[ वेवेति ] ॥ वो वायुरितो गतो यस्मात् स वेत । वैतमलति । 'अल भूषणादौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। यद्वा–वे वायौ ताल प्रतिष्ठा यस्य। भूताविष्ट. शवः ॥ (१)॥ * ॥ मल्लते । 'मल्ल धारणे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । मल्यते । घञ् (३।३।१९) । 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' (इति मेदिनी) [१४८।४४]॥(१)॥*॥ मल्लते, भल्यते वा।'भल्ल परिभाषणहिंसादानेषु' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । 'भल्ल स्यात्पुंसि भल्लके, शस्त्रभेदे पुनर्द्वयो । भल्लातक्या स्त्रियां भल्ली' (इति मेदिनी) [१४८।४२]॥(१)॥*॥ पुर प्रथम दाश्यत्येनम् । 'दाशृ दाने' (भ्वा० उ० से०) । कर्मणि घञ् (३।३।१९)। पृपोदरादित्वात् (६।३।१०९)। 'व्रीहेश्च पुरोडाशे' (४।३।१४८) इति निर्देशाद्वा दस्य ड. । 'पुरोडाशो हविर्भेदे चमस्या पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तित.' इति विश्वः [ १७०।३४ ] ॥ (१) ॥ * ॥ 'पट्टीः स्त्री पट्टभेदे स्याल्ललाटे[1] कुम्भिकाद्रुमे' (इति मेदिनी) [ ३५।२२ ] । पट्टिं श्यति । 'शो तनूकरणे' (दि० प० अ०) । 'आतोऽनुप–' (३।२।३ ) इति क ॥ ॥ ('पट्टिमः इति) दन्त्यमान्त' इति मुकुटः । 'जस पोऽन्तकर्मणि' (दि० प० अ० ) धातुर्बोध्यः । = शस्त्रभेदः ॥ ( १ ) ॥ * ॥ कोलनम् । 'कुल संस्त्याने बन्धुषु च' (भ्वा० प० से०) । सम्पदादिक्विप् (वा० ३।३।१०८ ) । कुल मपति । 'मष हिंसायाम्' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । 'कुल्मापो यावके प्रोक्तः कुल्मापं काञ्जिकेऽपि च' इति ( मूर्धन्यान्ते ) विश्वः [१०२।१२] । 'कुल्माप काञ्जिके यावके पुमान् (इति मूर्धन्यान्ते मेदिनी) [ १६८।३४ ] ॥ * ॥—धातुपारायणे ('कुल्माम' इति)दन्त्यान्त । तत्र मसेः[2] ['मसी परिणामे ] (दैवादिकात्) [ प० से० ] घञ् (३।३।१९) । कुल्मासो = मापादिमिश्रपर्यषितसममोदन 'खिचुड़म्' इति ख्यातम्—इति मुकुट ॥ (१) ॥ * ॥ रभणम् । रभते अनेन वा । 'रभ राभस्ये' (भ्वा० आ० अ०) । 'अत्यविचमितमि–' (उ० ३।१।१७) इत्यसच् । 'रभसो वेगहर्षयो.' इति विश्व [ १७५।१४ ]॥ (१) ॥ * ॥ कटेनातिशयेनाहन्ते गम्यते । 'हन हिंसागत्योः' (अ० प० अ०) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः । 'कटाहो कूर्मतैलादिपाकपात्रेऽपि कर्परे । स्तूपे, कटाहः कूर्मपृष्ठे च महीषीशिशौ[3]' इति विश्व [१८०।१६] । 'कटाहः कूर्मकर्परे । द्वीपस्य च प्रभेदे च[4] तथा स्यान्महिषीशिशौ । तैलादिपाकपात्रे च' [ इति मेदिनी, १७६।१५-१६ ] ॥ ( १ ) ॥ * ॥ गृह्णाति । 'ग्रह उपादाने' (क्र्या० प० से० )। पचाद्यच् ( ३।१।१३४ )। पततस्ताम्बूलादेर्ग्रह. । 'पीकदान' इति ख्यातः ॥ ( १ ) ॥ * ॥

इति पुंलिङ्गसंग्रहः ।

१. मेदिन्या 'पटि. स्त्री पट्टभेदे स्याद्वागुली—' इति पाठः ।

१ हैमे 'शक्तिपट्टिसदु स्फोटचक्रकाण शस्त्रजातय' (अभि० चि० ३।४५१), हलायुधे च 'यष्टिपट्टिसदु स्फोट–' ( अभि० रत्न० २।३२१ ) इति दन्त्यान्त एव 'पट्टिस'-शब्द पठित ।

२ शब्दस्यास्य दीर्घकारान्ततया भिर्सज्ञागुणयोरप्राप्त्या 'मसे'रित्युक्तिश्चिन्त्या ।

३. विश्वे तु 'कटाह. कूर्मपृष्ठे च स्तूपे च महिषीशिशौ' इति पाठः ।

४. मेदिन्या '—प्रभेदे स्यात्तैलादे पाकभाजने । उत्पन्नाजविपाणाग्रमहिषीशावकेऽपि च' इति भिन्नोऽधिकश्च पाठः ।

अथ क्लीबलिङ्गसंग्रहः ।

द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ।
शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥ २२ ॥

यहाँसे आगे 'पुनपुंसकयोः' ( ३।५।३२ ) के पहले तक 'द्विहीन' इसका अधिकार होनेसे इसके मध्यवर्ती शब्द नपुंसकलिङ्ग होते हैं।

खम् ( इन्द्रिय ), अरण्यम् ( वन ), पर्णम् ( पत्ता ), श्वभ्रम् ( पाताल, बिल ), हिमम् ( बर्फ ), उदकम् (पानी), शीतम् ( ठण्ढा ), उष्णम् ( गर्म ), मांसम् ( मांस ), रुधिरम् (खून), मुखम् ( मुँह ), अक्षि ( आँख ), द्रविणम् ( धन ), बलम् ( सेना )।

[द्वीति] ॥ द्वाभ्यां हीने = क्लीबे । अधिकारोऽयम् । अन्यदवशिष्टम् । उक्तात्समूहाच्छेषं क्लीबे स्यात्, बाधकविषयादन्य । तत्र चाद्यं 'द्वाभ्याम्'—खमिति । खनति, खन्यते वा । 'खनु अवदारणे' ( भ्वा० प० से० ) । 'अन्येभ्योऽपि—' ( वा० ३।२।१०१ ) इति डः । 'खं मिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्' ( इति मेदिनी ) [ १९।१ ] ॥ (१) ॥ * ॥ अर्यते । 'ऋ गतौ' (भ्वा० प० अ० ) । 'अर्तेर्निच्च' ( उ० ३।१०२ ) इत्यन्यः ॥ (१) ॥ * ॥ पर्णयति । 'पर्ण हरितभावे' (चु० प० से०) । पचाद्यच् ( ३।१।१३४ ) । 'पर्णं पत्रे पलाशे ना' [ इति मेदिनी, ४६।२० ] ॥ (१) ॥ * ॥ श्वभ्रयति । 'श्वभ्र विलपे गतौ तर्के' [ चु० प० से० ]। पचाद्यच् ( ३।१।१३४) ॥ (१) ॥ * ॥ हन्ति । 'हन्तेर्हि च' (उ० १।१४७ ) इति मक् । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गं' (इति मेदिनी)[ ११०।३२]॥ (१) ॥ * ॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से०) । क्वुन् (उ० २।३२) । नलोपः (६।४।२४) ॥ (१)॥*॥ श्यायते स्म । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । 'गत्यर्था—' (३।४।७२) । 'द्रवमूर्तिस्पर्शयोः श्यः' (६।१।२४) इति सम्प्रसारणम् । 'शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु । वानीरे बहुवारे ना' ( इति मेदिनी ) [ ५८।६५ ]॥ (१) ॥ * ॥ ओषति । 'उष दाहे' (भ्वा० प० से०) । 'इण्सिञ्जिदीङुष्यविभ्यो नक्' ( उ० ३।२ ) । 'उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः' ( इति मेदिनी ) [४५।३] ॥ (१) ॥*॥ मन्यते । 'मन ज्ञाने'(दि० आ० अ०) । 'मनेर्दीर्घश्च' (उ० ३।६४) इति सः । 'मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' (इति मेदिनी) [१७०।८] ॥ ( १ ) ॥*॥ रुणद्धि, रुध्यते वा । 'रुधिर् आवरणे' (रु० उ० अ०)। 'इषिमदिमुदि—' (उ० १।५१) इति किरच् । 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः' (इति मेदिनी) [ १३७।२०६ ] ॥ ( १ ) ॥*॥ खन्यते, खनति वा । 'डित्खनेर्मुट् चोदात्तः' (उ० ५।२०) इत्यच्। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि न नपुंसकम्' (इति मेदिनी) [२०।३४] ॥ (२) ॥*॥ अश्नुते । 'अशूङ् व्याप्तौ, सङ्घाते च' (स्वा० आ० से०) । 'अशेर्नित्' (उ० ३।१५६) इति क्सिः ॥ ( १ ) ॥*॥ 'द्रुदक्षिभ्यामिनन्' (उ० २।५०)। 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति ( मेदिनी) [ ४८।५१ ] ॥ ( १ ) ॥ * ॥ वलते । 'वल[2] संवरणे' (भ्वा०आ०से०) । पचाद्यच् (३।१।१३४) । 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यभेदे वायसेऽपि च । बलयुक्तेऽन्यलिङ्गं स्याद्बाट्यालके तु योषिति' (इति मेदिनी)[१४७।३७-३८]॥(१)॥*॥

फलहेमशुल्वलोहसुखदुःखशुभाशुभम् ।
जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥

'भयामृतशकृद्वक्त्रचापाभरणलाङ्गलम् [ ९२ ]
दार्वोषधक्षुधापत्यहृदयोदरकार्मुकम् [ ९३ ]
पत्तनाजिरशृङ्गान्नद्वारवर्होडुमानसम् [ ९४ ]
ध्वान्तं चाव्यक्तलिङ्गं च भं गतौ यत्प्रयुज्यते' [ ९५ ]

फलम् ( आम आदिका फल ), हेम ( सुवर्ण ), शुल्वम् ( तांबा ), लोहम् (लोहा), सुखम् ( सुख ), [illegible]खम् (दुःख) शुभम् ( शुभ ), अशुभम् ( अशुभ ), जलपुष्पम् ( पानीमें होनेवाले फूल ), लवणम् ( नमक ), व्यञ्जनम् ( तरकारी

---

१. द्विहीने तृतीये नपुंसके, उक्तादन्यः शेषो वक्ष्यत इत्यर्थः । 'खादिसपर्यायविशेषः तृतीये' इति वदता स्वामिना मुकुटसम्मते एतेषां खादीनां पर्यायपरकव्याख्याने स्वस्य सम्मतिः प्रदर्शिता ।

२ मेदिन्यां '—रिशुके ना' इति पाठः ।

१ क्वचित् '—वृत्ते—' इति पाठः ।

२ संवरणार्थकस्य 'वल' धातोरन्तःस्थादित्वेनात्र 'बल प्राणने धान्यावरोधने च' ( भ्वा० प० से० ) इत्यस्योपन्यासो युक्तः ।

३ '—शकृद्वस्तुचाप—' इति पाठान्तरम् ।

आदि ), अनुलेपनम् ( लेप-भेद ), ये २६ शब्द नपुंसक लिङ्ग होते हैं । ( तथा किसी किसीके मतमें इनके पर्यायवाचक शब्द भी नपुंसकलिङ्ग होते हैं । क्रमशः उदा०—१ प्रथमार्थक ( इन्द्रिय पर्याय ) जैसे—१ खम्, इन्द्रियम्, करणम्, हृषीकम्,…… । १ द्वितीयार्थक (आकाश-पर्याय) जैसे—खम्, आकाशम्, गगनम्, अम्बरम्,…… । २ अरण्यम्, कान्तारम्, वनम्, विपिनम्,… । ३ पर्णम्, दलम्, पत्रम्,…… । ४ रन्ध्रम्, बिलम् विवरम्, पातालम्, … । ५ हिमम्, प्रालेयम्, तुहिनम्,…… । ६ उदकम्, जलम्, पानीयम्, तोयम्,…… । ७ शीतम्, शिशिरम्,… । ८ उष्णम्, घर्मम्,…… । ९ मांसम्, पिशितम्, तरसम्,… । १० रुधिरम्, रक्तम्,…… । ११ मुखम्, आननम्, लपनम्, आस्यम्, वदनम्,…… । १२ अक्षि, नयनम्, नेत्रम्, … । १३ द्रविणम्, धनम्, स्वापतेयम्,…… । १४ बलम्, सैन्यम्, अनीकम्,…… । १५ फलम्, आम्रम्, कपित्थम्, … । १६ हेम, कनकम्, सुवर्णम्, हाटकम्, स्वर्णम्, … । १७ (लोह-भेद ) जैसे—शुल्वम्, ताम्रम्, औदुम्बरम्,…… । १८ लोहम्, कालायसम्, अश्मसारम्,…… । १९ सुखम्, उपजोषम्, शर्मम्, शर्म, सातम्,…… । २० दुःखम्, कष्टम्, कृच्छ्रम्, आभीलम्,…… । २१ शुभम्, कल्याणम्, कुशलम्, पुण्यम्, सुकृतम्,…… । २२ अशुभम्, पापम्, दुष्कृतम्, … । २३ ( जलपुष्प भेद ) जैसे—कमलम्, कैरवम्, कुमुदम्, कह्लारम्,…… । २४ (लवण-भेद ) जैसे—लवणम्, सैन्धवम्, विडम्, रुचकम्,…… । २५ व्यञ्जनम्, तेमनम्, निष्ठानम्, उपसेचनम्, मस्तु,… । और २६ ( अनुलेपन-भेद ) जैसे—अनुलेपनम्, कुङ्कुमम्, अग्निशिखम्, काश्मीरम्, चन्दनम्, …… ) ।

[ भयम् ( डर ), अनृतम् ( झूठा ) शकृत् ( मैला ), वक्त्रम् ( मुख ), चापम् ( धनुष ), आभरणम् ( भूषण ), लाङ्गलम् ( हल ), दारु ( लकड़ी ), औषधम् ( दवा ), युधम् ( युद्ध ), अपत्यम् ( सन्तान ), हृदयम् ( हृदय ), उदरम् ( पेट ), काकुदम् ( तालु ), पत्तनम् ( नगर ), अजिरम् (आँगन), शृङ्गम् ( सींग या शिखर ), अन्नम् (अनाज), द्वारम् ( दरवाजा ), वर्हम् ( मोरका पङ्ख ), उडु (नक्षत्र), मानसम् ( मनका भाव या कर्म या मानसरोवर तालाब ), ध्वान्तम् ( अन्धकार ) और अव्यक्त ( अस्फुट ) लिङ्गवाले जो शब्द कहनेमें प्रयुक्त होते हैं, वे सब शब्द नपुंसकलिङ्ग होते हैं ]।

[ फलेति ] ॥ फलति । 'फल निष्पत्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः ।' (इति हैम )[२।५१०-५११] ॥*॥ क्वचित्तु 'हलम्' इति पाठः । हलति । 'हल विलेखने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥ * ॥ हिनोति । 'हि गतौ' (स्वा०प०अ०) । 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५) ॥ (१) ॥*॥ शलति, शल्यते वा । 'शल गतौ' (भ्वा० प० से०) । 'उल्कादयश्च' ( उ० ४।१९५ ) इति साधु । 'शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' (इति मेदिनी) [१५९। २७] ॥ (१) ॥*॥ लोहयति, लुह्यते वा । 'लुह गार्ध्ये' (१) पचाद्यच् ( ३।१।१३४ ) । घञ् ( ३।३।१९ ) वा । 'लोहोऽस्त्री शस्त्रके लोहे जोङ्गके सर्वतैजसे' (इति मेदिनी) [१७५।८] ॥ (१) ॥*॥ सुखयति । 'सुख-दुःख तत्क्रियायाम्' ( चु० उ० से० ) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ शोभते । 'शुभ दीप्तौ' (भ्वा०आ० से०) । 'इगुपध-' (३।१।१३५) इति कः ॥ (१) ॥*॥ न शुभम् ॥ (१) ॥*॥ जलभवानि पुष्पाणि कुमुदकमलकह्लारोत्पलानि ॥ ( १ ) ॥*॥ लुनाति । 'लूञ् छेदने' (क्र्या० प० से०) । नन्द्यादित्यु (३।१।१३४) । 'लवणाल्लुक्' (४।४।२४) इति निर्देशाण्णत्वम् । 'लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसः । तद्युक्ते वाच्यलिङ्गं स्यात्तदीभेदद्विपो' स्त्रियाम्' (इति मेदिनी) [ ५०।७५ ] ॥ (१) ॥*॥ व्यज्यतेऽनेन । 'अञ्जू व्यक्त्यादौ' ( रु० प० से० ) । 'करणाधि-' (३।३।११७) इति ल्युट् । 'व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽहनि' (इति मेदिनी) [९१।२२] (१) ॥*॥ अनुलिप्यते अनेन वा । लिप उपदेहे' ( तु० प० अ० ) । कर्मणि (३।३।११३) करणे (३।३।११७) वा ल्युट् ॥ (१) ॥*॥ (द्व )खादि सपर्यायं सविशेषं च क्लीबे भवति, इति मुकुटः ।

कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं च तत् ।
द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥

'कोटि' शब्दको छोड़कर अन्य 'शत' (सौ) आदि संख्यावाचक शब्द नपुंसकलिङ्ग होते हैं । और 'लक्षा' शब्द विकल्पसे नपुंसकलिङ्ग होता है, पक्षमें स्त्रीलिङ्ग 'लक्षा' होता है । उसी ( लक्षा ) का पर्याय - 'नियुतम्' भी नपुंसकलिङ्ग है । 'कोटि' शब्द स्त्रीलिङ्ग है । 'शतादि' ग्रहण करनेसे 'विंशतिः,

१. 'नदीभेदे त्रिषो स्त्रियाम्' इति मेदिनीस्थः पाठ एव सम्यक्, लवणा त्रिवृद्' (३।३३४) इति हैमेन सवादात् ।

ग्रहण करनेसे प्रश्न, यत्न, स्वप्न, न्याद', आखूत्थ, विघ्न, चय, जय, कारणा, हारणा,'' " मे नपुसकलिङ्ग नहीं होता है )। पुण्य और, सुदिन, शब्दसे परे कृतसमासान्त 'अहन्' शब्द नपुसकलिङ्ग होता है। 'अह' ग्रहण करनेसे पुण्यान्यहानि यस्मिन्मासि स 'पुण्याह' यहाँपर नपुसकलिङ्ग नहीं होता है।

[भेति] ॥ नश्च णश्च भश्च चित (च इद् येषा ते) च। एभ्योऽन्येऽदन्तप्रत्ययाः कृतो य भावे विहिता, तथा समूहेऽर्थे भावकर्मणोर्विहिता येऽकारान्तप्रत्ययास्तद्धिता, तदन्त नाम क्लीबे स्यात्। भूतम्, 'नपुसके भावे क्त' (३।३।११४)। भवितव्यम्, भवनीयम् ( भव्यम् )। 'तयोरेव–' ( ३।४।७० ) इति भावे तव्यादय। भुवो भावे' (३।१।१०७) क्यप्, ब्रह्मभूयम्। 'अभिविधौ भाव इनुण्' ( ३।३।४४ )। 'अणिनुण' (५।४।१५)। सारविणम्, माकृन्नि वर्तते। नगर्नि किम् ? यजयाच–'(३।३।९०) इति नङ। यज यत्ने। स्वपो नन्' ( ३।३।९१ )। स्वप्न। 'नौ ण च' ( ३।३।६० ) न्याद। सुपि–' (३।२।४) इति घञर्थे–' ( वा० ३।३।५८ ) इति च क। आखूत्थ, विघ्न। चित्–'एरच्' ( ३।३।५६ )। चय जय। 'ण्यासश्रन्थो युच्' (३।३।१०७)—कारणा। यत्तु —ट्वितोऽथुच्' (३।३।८९) श्वयथु —इति मुकुट उदाहरत्। तन्न। अदन्तत्वाभावात्॥ * ॥ समूहे तद्धिता। भिक्षादिभ्योऽण' ( ४।२।३८ )। भैक्षम्। 'गोत्रोक्षोष्ट्र–' ( ४।२।३९ )। इति वुञ्। औपगवकम्। 'तस्य समूहः' ( ४।२।३७ )। काकम्। केदाराद्यञ्च' ( ४।२।४० )। कैदार्यम् कैदारकम् ॥*॥ भावे—गोत्वम्। 'इगन्ताच्च–' (५।१।१३१)। मौनम्, मार्दवम्। मनोज्ञादिभ्यः (५।१।१३३)। मानोज्ञकम्। 'स्तेनाद्यन्नलोपश्च' (५।१।१२५) स्तेयम्। गुणवचन–' (५।१।१२४) इति ष्यञ्। चौक्ल्यम् ॥ * ॥ कृतसमासान्तोऽहन्शब्द क्लीबे स्यात्। पुण्य च तदहश्च। 'राजाह सखिभ्यष्टच्' ( ५।४।९१ )। सुदिशब्द प्रशस्तवाची। सुदिन च तदहश्च। पुण्याहम्, सुदिनाहम्। कृतसमासान्त इति किम् ? पुण्यानि अहानि यस्मिन् स पुण्याहो गाम।

क्रियाऽव्ययाना भेदकान्येकत्वेऽप्युक्थतोटके।
चोचं पिच्छ गृहस्थूर्ण[1] तिरीटं मर्मयोजने॥ ३०॥

क्रिया और अव्ययके विशेषण नपुंसकलिङ्ग और एकवचन होते हैं। ( अब नपुसकलिङ्गवाले कुछ शब्दोंको कण्ठरवसे स्वय कह रहे हैं—) 'उक्थम्' ( सामभेद ), तोटकम् ( १० अक्षरवाले 'पङ्क्ति'जातीय वृत्तका छन्दो-विशेष ), चोचम् ( जटा छोड़ा हुआ, तालफल, कदली–फल ), पिच्छम् ( मोरका पंख ) गृहस्थूणम् ( घरमें लगा हुआ खम्भा ), तिरीटम् (शिरका वेष्ठन, साफा, पगड़ी आदि,शिरका भूषण), मर्म ( सन्धिस्थान, हृदय आदि मर्म स्थल ), योजनम् (चार कोस लम्बे रास्ते आदिका प्रमाण विशेष )।

[क्रियेति]॥ अनिशब्दात् क्लीबे। मृदु पचति। प्रात कमनीयम् ॥*॥ उच्यते। 'वच भाषणे' (अ० प० अ०)। पातृतुदि–' ( उ० २।७ ) इति थक्।–'वशिकाशि–' इत्यादिना थक्—इति मुकुटश्चिन्त्य। तादृशसूत्राभावात्। उक्थ = सामविशेष ॥*॥ तुदति। 'तुट कलहकर्मणि' ( तु० प० से० )। ण्वुल् ( ३।१।१३३ )। यत्तु कृञादिभ्यो वुन्' (उ० ५।३५) इति मुकुटेनोक्तम्। तन्न। तुट कुटादित्वेन गाङ्कुटादिभ्य' (१।२।१) इति ङित्त्वाद्गुणाभावप्रसङ्गात्' ॥*॥ चोप्यते। 'चुप मन्दाया गतौ'(भ्वा० प० से०) ण्यन्त। घञ् (३।३।१९)। यद्वा–चञ्चति, चञ्च्यते वा। 'चञ्चु गतौ' (भ्वा० प० से०)। पचाद्यच् ( ३।१।१३४ )। घञ् (३।३।१९) वा। पृषोदरादि ( ६।३।१०९ )। 'फलावशिष्टं तालफलं च चोचं कदल्या फलं भवेत्' इत्यजयकोष ॥ * ॥ पिच्छयते। पिच्छ खण्डने' ( चु० प० से० )। घञ् ( ३।३।१९ )। 'पिच्छा पूगच्छटाकोषमोचाशाल्मलिवेष्टके। भक्तसमूतमण्डे च पङ्क्तावश्वपदामये। स्त्रियाँ, पुसि तु लाङ्गूले न द्वयोर्बर्हचूडयो' (इति मेदिनी) [२९।३ ४] ॥*॥ 'मुक्तम्' इति पाठे–'मुच्लृ मोक्षणे' (तु० उ० अ०)। मुच्यते स्म। क्त (३।२।१०२) ॥ (१) ॥*॥ गृहस्य स्थूणा ॥ (१) ॥*॥ तरति, तीर्यते वा। 'कृतॄकृपिभ्य कीटन्' (उ० ४। १८५)। तिरीट = वेष्टनम्। = 'शिरोभूषणम्' इत्यन्ये ॥ (१) ॥*॥ म्रियतेऽनेन। 'मृङ् प्राणत्यागे (तु० आ० अ०)। 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५)। 'अन्तत्वादेव सिद्धे पुनर्मर्मग्रहणमन्तरय क्लीबत्वानित्यत्वज्ञापनार्थम्' इति मुकुट ॥ ( १ ) ॥*॥ युज्यते। 'युजिर् योगे' (रु० उ० अ०)। कर्मणि 'कृत्यल्युटो–'(३।३।११३) इति ल्युट्। योजन परमात्मनि। चतुष्कोश्या च योगे च' (इति मेदिनी) [९१।१११ ११२]॥ (१) ॥*॥

१. 'चोचमुक्त गृहस्थूण–'इति स्वामिना व्याख्यात पाठ, तत्र उक्तमेकाक्षर छन्द। स्वव्याख्याया स्थूणा' इति व्याख्यानान्मूले 'गृहस्थूण' इत्येव पाठो युक्त।

१ तोटक वृत्तभेद, दशरूपकभेदश्च' इति स्वामी। तत्र वृत्तम्—'इह तोटकमम्बुधिसै प्रथितम्'' ( वृत्तरत्ना० ३।१२।४ ) इत्युक्तरूप बोध्यम्।

राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः।
माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥

राजसूयम् (राजसूय नामका यज्ञ-विशेष), वाजपेयम् (वाजपेयनामक यज्ञ-विशेष), गद्यम् (कवि-रचित बिना छन्दकी शब्द-योजना, जैसे—दशकुमार, कादम्बरी आदि) पद्यम् छन्दसे युक्त (कवि-रचित श्लोक आदि, जैसे—रघुवंश, कुमारसंभव, नैषधचरित, आदि काव्य), माणिक्यम् (रत्न), भाष्यम् (जैसे—पा० सू० पर पातञ्जलभाष्य, वेदान्तसूत्रपर शाङ्करभाष्य,……), सिन्दूरम् (सिन्दूर), चीरम् (कपड़ा), चीवरम् (मुनियोंका वस्त्र), पञ्जरम् (पिंजड़ा)।

[राजेति]॥ राजा सोतव्योऽभिषेकद्वारा निष्पाद-यितव्यः। यद्वा—राजा लतात्मकः सोमः सूयतेऽत्र। 'पूङ् अभिषवे' (स्वा० उ० अ०)। 'राजसूयसूर्य—' (३।१।११४) इति साधु ॥ (१) ॥*॥ वाजमन्नं पेयं सुरा। पेयमत्र ॥*॥ एतावर्धर्चादौ (२।४।३१) ॥ (१) ॥*॥ गद्यते। 'गद व्यक्तायां वाचि' (भ्वा० प० से०)। 'गदमद—' (३।१।१००) इति साधुः ॥(१)॥*॥ पादाः सन्त्यस्य। 'अन्येभ्योऽपि—' (वा० ५।२।१२०) इति यप्। 'पद्दन्नो—' (६।१।६३) इति पद्। पद सन्त्यस्येति वा। 'पद्यं श्लोके पुमाञ्छूद्रे पद्या वर्त्मनि कीर्तिता' (इति मेदिनी) [११५। १५]। रवे. कृतौ किम्? पद्या=वार्ता। पद्य. = पङ्क, पद्यं=रजः ॥ (१) ॥*॥ मणिशब्देन कायति जनो यम्। 'कै शब्दे' (भ्वा० प० से०)। 'अन्येभ्योऽपि—' (वा० ३। २।१०१) इति ड.। 'मूलविभुजा—' (वा० ३।२।५) इति को वा। मणिके = मणिपूराख्ये नगरे भवम्। 'कण्डिका-दिभ्यो ञ्यः' (४।३।९२)। चतुर्वर्णादिष्यञ् (वा० ५।१। १२४) वा ॥ (१) ॥*॥ भाष्यते सूत्रार्थो येन। 'भाष व्यक्तायां वाचि' (भ्वा० आ० से०)। 'कृत्यल्युटो—' (३। ३।११३) इति करणे ण्यत्। 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' ( )॥ (१) ॥*॥ स्यन्दते। 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०)। 'स्यन्देः सम्प्रसारणं च' (उ० १।६८) इत्यूरन्। 'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तवर्णके। सिन्दूरी रोचनीरक्तचेलिका'धातकीषु च' (इति मेदिनी) [१३९।२३६] ॥ (१) ॥*॥ चीयते। 'चिञ् चयने' (स्वा० उ० अ०) 'शुसिचिमीनां दीर्घश्च' (उ० २।२५) इति रक्। 'चीरी झिल्ल्या, नपुंसकम्। गोस्तने वस्त्रभेदे च रेखालिखनभेदयो.।' (इति मेदिनी) [१२५।३५-३६] ॥ (१) ॥*॥ चीयते। 'छित्वर-छत्वर—' (उ० ३।१) इति साधु। चीवरं = मुनिवास.। 'शाक्यभिक्षुप्रावरणम्' इति सुभूतिः। (१) ॥*॥ पिञ्जयते। 'पिजि सपर्के' (अ० आ० से०)। बाहुलका-दर.। पृषोदरादि[1](६।३।१०९)॥*॥ क्वचित्तु 'पिञ्जरम्' इति पाठ.। 'पिञ्जरोऽश्वान्तरे क्लीबं स्वर्णे, पीते च वाच्यवत्'[2] (इति मेदिनी) [१३६।१८५]। = कायादिपक्षिनं पक्ष्यादिबन्धनगृहं च ॥ (१) ॥*॥

लोकायतं हरितालं विदलं स्थालबाह्लवम्[3]।

लोकायतम् (तर्क), हरितालम् (हरताल नामका औषध-विशेष), विदलम् (बाँसका बर्तन-विशेष), स्थालम् (भोजनपात्र-विशेष), बाह्लवम् (बह्व देशमें होनेवाला), ये २३ शब्द नपुंसकलिङ्ग होते हैं।

[लोकेति]॥ लोके आयतन्ते। 'यती प्रयत्ने' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। =चार्वाका। तैरा-मिदं शास्त्रम्। 'तस्येदम्' (४।३।१२०) इत्यण्। संज्ञापू-र्वकत्वान्न वृद्धि ॥ (१) ॥*॥ हरितेनालति। 'अल भूषणादौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। 'हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयो' (इति मेदिनी) [१५७।१६७] ॥ (१) ॥*॥ विदलं = वंशकृतपात्र-भेद.। विदलति। 'दल विदारणे' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ स्थलत्यत्र। 'ष्ठल स्थितौ' (भ्वा० प० से०)। 'हलश्च' (३।३।१२०) इति घञ्। णिजन्तादच् (३।१।१३४)वा। 'स्थालं भाज-नभेदेऽपि स्थाली स्यात्पाटलोखयोः' (इति मेदिनी) [१५९।५५] ॥ (१) ॥*॥ बह्लदेशे भवम्। 'तत्र भव' (४।३।५३) इत्यण् ॥ (१) ॥*॥

इति क्लीबलिङ्गसंग्रहः ॥

*अथ पुन्नपुंसकलिङ्गसग्रहः।*

पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥

(यहाँसे आगे 'स्त्रीपुंसयोः……' (३।५।३७) के पहले 'पुन्नपुँसकयोः' इसका अधिकार होनेसे इसके मध्यवर्ती

१. मेदिन्यां '—रक्तचूर्णके। सिन्दूरी रोचना रक्तचेलिका—' इति पाठः।

[1] तथा च कालिदासप्रयोगः—'अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थ.' इति (रघु० ५।७४)।

[2] मेदिन्यां '—न्तरे पीते क्लीबं स्वर्णे च पीतने' इति पाठः।

[3] '—बाह्लिकम्' इति पाठान्तरम्।

शेष शब्द 'पुंल्लिंग और नपुंसकलिंग' होते हैं।) अर्धर्च अर्धर्चम् (ऋचाका आधा), पिण्याक पिण्याकम् (तिलकी खली), कण्टक कण्टकम् (काँटा)।

[ पुमिति ] ॥ 'पुनपुंसकयो' इत्यधिकार। शेष उत्तरादन्य, ऋचोऽर्धम्। 'अर्धं नपुंसकम्' (२।२।२) इति समास। 'ऋक्पूर-' (५।४।७४) इत्य समासान्त ॥(१) ॥*॥ पण्यते। 'पण व्यवहारे' [स्तुतौ च]। (भ्वा० आ० से०)। 'पिनाकादयश्च' (उ० ४।१५) इति साधु। 'पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' (इति मेदिनी) [१०।११९]॥(१)॥*॥ कण्टति। 'कटि गतौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। 'कण्टक क्षुद्रशत्रौ च कर्मस्थानकदोषयो। रोमाञ्चे च द्रुमाङ्गे च कण्टको मकरेऽपि च' इति विश्व [ १३।१३५ ]। 'कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे। नैयोगिकादिदोषोक्तौ[1] स्याद्रोमाञ्चद्रुमाङ्गयो' (इति मेदिनी) [ ५।५८ ] ॥ (१) ॥*॥

मोदकस्तण्डकष्टङ्कः शाटक[2] खर्वटोऽर्बुदः।
पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥

मोदक मोदकम् ( मिठाई, लड्डू ... ), तण्डक तण्डकम् ('खञ्जन' पक्षी, फेन ), टङ्क टङ्कम् (पत्थर चीरनेकी टाँकी), शाटक शाटकम् (साड़ी), खर्वट खर्वटम् (नदी और पहाड़से मिश्रित स्थान), अर्बुद अर्बुदम् (आँखका रोग-विशेष, दस करोड़की सख्या ), पातक पातकम् (ब्रह्महत्या आदि पाप), उद्योग उद्योगम् ( उद्योग ), चरक चरकम् ( चरक नामका वैद्यक ग्रन्थ ), तमाल तमालम् ( तम्बाकू, सुर्ती ), आमलक आमलकम् ( आँवलेका फल ), नड नडम् ( भीतरी बिल, नरसल नामका तृणविशेष )।

[ मोदेति ] ॥ मोदयते। 'मुद हर्षे' [भ्वा० आ० से० ]। ण्वुल् ( ३।१।१३३ )। 'मोदक खाद्यभेदेऽस्त्री हर्षके[3] पुनरन्यवत्' (इति मेदिनी)[ १२।१४२ ] ॥(१) ॥*॥ तण्डते। 'तडि आघाते' (भ्वा० आ० से०)। ण्वुल् (३।१।१३३)। 'तण्डक खञ्जने फेने समासप्रायवाचि च। गृहदारुतरुस्कन्धमायाबहुलकेष्वपि' (इति मेदिनी) [ ९।९८ ] ॥*॥ 'तण्डव' इत्यपि। 'तण्ड एव। स्वार्थे कन् (५।४।५) ॥ (१) ॥*॥ टङ्कयति। 'टकि बन्धे' चुरादि [ प० से० ]। अच् (३।१।१३४)। 'टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम्। जङ्घायां स्त्री पुमान् कोपे कोषासिग्रावदारणे' (इति मेदिनी) [ ३।२४-२५ ] ॥ ( १ ) ॥*॥ शटति। 'शट गतौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३) ॥ (१)॥*॥ खर्वति। 'खर्व दर्पे' (भ्वा० प० से०)। 'शकादिभ्योऽटन्' (उ० ४।८१)। 'यत्रैकतो भवेद् ग्रामो नगरं चैकत स्मृतम्। मिश्र तु खर्वटं नाम नदीगिरिसमाश्रयम्' ॥(१) ॥*॥ अर्बति। 'अर्ब हिंसायाम्' (भ्वा० प० से०)। बाहुलकादुदच्। 'अर्बुदो मासकीलेऽस्त्री परुषे दशकोटिषु[4]। महीधरविशेषे ना' (इति मेदिनी) [ ७५।१९ ] ॥ (१) ॥*॥ पातयति। 'पत्लृ गतौ' ( भ्वा० प० से० )। ण्यन्त। ण्वुल्(३।१।१३३)॥ (१) उद्योजनम्। 'युजिर् योगे' (रु० उ० अ०)। घञ् (३।३।१९) ॥ (१) ॥*॥ चरति। 'चर गतौ' ( भ्वा० प० से० )। क्वुन्। (उ० २।३२)। चरक = वैद्यकशास्त्रभेद ॥*॥ 'चरकम्' इति पाठे स्मृतवस्त्रम् ॥ (१) ॥*॥ ताम्यति। 'तमु ग्लानौ' (दि० प० से०)। 'तमिविशि-' (उ० १।११८) इति कालन्। 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' ( इति मेदिनी) [ १५२।९७ ] ॥ (१) ॥*॥ आमलक्या फलम्। 'नित्य वृद्ध-' (४।३।१४४) इति मयट्। तस्य फले लुक्' (४।३।१६३) ॥ (१) ॥*॥ नडति। 'नड भ्रंशे' ( )। 'चुरादीना वा णिच्' इति पक्षाश्रये पचाद्यच् (३।१।१३४)। नडोऽन्तरविवर तृणभेदश्च।

कुष्ठं मुण्डं शीधु बुस्त क्ष्वेडितं क्षेमकुट्टिमम्।
सगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥

कुष्ठम् कुष्ठ ( कोढ़ रोग ), मुण्डम् मुण्ड ( शिर ), शीधु शीधु ( मदिरा ), बुस्तम् बुस्त ( मासकी पूर्वी, कटहल आदिका निःसारभाग, भूना हुआ मास ), क्ष्वेडितम् क्ष्वेडित (वीरोंका सिंहके समान गर्जना,) क्षेम क्षेमा (कुशल), कुट्टिमम् कुट्टिम ( मणि पत्थर आदि जड़ा हुआ फर्श ), सगमम् सगम ( दो नदी आदिका मिलना ), शतमानम् शतमान ( चार रुपयाभरका प्रमाण विशेष ), अर्मम् अर्म ( आँखका रोग विशेष ), शम्बलम् शम्बल ( रास्तेका कलेवा ), अव्ययम् अव्यय ( व्ययका न होना, लिङ्ग और सख्यासे रहित सब लिङ्गों और वचनोंमें तुल्यरूप

१. मेदिन्यां '—नैयोनिकादि—' इति पाठ।
२. 'शङ्क' इति पाठः। शङ्को = भयम्। 'खर्वटोऽर्बुद' इति पाठान्तरम्।
३. मेदिन्यां '—हर्षुके' इति पाठ।
४. मेदिन्यां '—स्यात् पुरुषे दशकोटिषु' इति पाठ।

वाले 'अव्यय'संज्ञक स्वर्, अन्तर, प्रातर्,''' शब्द ), ताडवम् ताण्डवः ( नाच )।

[ कुष्ठमिति ] ॥ कुष्णाति । 'कुष निष्कर्षे' (क्र्या० प० से०)। 'हनिकुषि–'(उ० २।२)इति क्थन्। 'कुष्ठं रोगे पुष्करेऽस्त्री' (इति मेदिनी) [ ३६।३ ] ॥ ( १ ) ॥*॥ मुण्डयते । 'मुडि खण्डने' (भ्वा० आ० से०) । घञ् (३।३।१९) । मुण्डं = शिरः ॥ ( १ ) ॥ * ॥ धीतेऽनेन । 'धीङो धुगुलक्–' (उ० ४।३८) इति धुक् ॥ (१) ॥७॥ 'बुस उत्सर्गे' (दि० प० से०) ।बुस्यते स्म । क्त (३।२।१०२) । बुस्तं = मासशष्कुली, भृष्टमासम्, पनसादिफलासारभागश्च ॥ २ ॥ क्वचित् 'पुस्तम्' इति पाठः ॥*॥ क्वचित् 'बुस्तम्' इति पाठः ॥ (१) ॥ * ॥ क्ष्वेडनम् । क्ष्वेडयते वा। 'ञिक्ष्वेडा स्नेहनमोचनयोः' ( दि० प० से० ) । 'श्वीतः क्तः' ( ३।२।१८७ ) ॥ (१) ॥ * ॥ क्षियति, क्षयति वा । 'क्षि निवासगत्योः' (तु० प० अ०)। 'क्षि क्षये (भ्वा० प० अ०) । 'अर्तिस्तुसु–' ( उ० १।१४१ ) इति मन् । 'जानीयान्मङ्गलं क्षेम क्षेमं लब्धार्थरक्षणम्' ( ) । (१) ॥ * ॥ कुट्टनम् । 'कुट्टच्छेदने' (चु० प० से०) । घञ् (३।३।१८) कुट्टेन निर्वृतम् । 'भावप्रत्ययान्तादिमप्' (वा० ४।४।२०)। 'कुट्टिमोऽस्त्री निबद्धा भूः' ॥ (१) ॥ * ॥ संगमनम् । 'ग्रहवृद्–' (३।३।५८) इत्यप् ॥ ( १ ) ॥ * ॥ शतं मानमस्य । रूप्यपलम्[1] । (१) ॥ * ॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० से०) । 'अर्तिस्तुसु–' (उ० १।१४१) इति मन् । अर्मं = अक्षिरोगः ॥ (१) ॥ * ॥ शम्बत्यनेन । 'शम्ब गतौ' (चु० प० से०) । बाहुलकादलच् । शम्बलं= पाथेयम् ॥ * ॥ ( 'सम्बल' इति ) दन्त्यादिपाठे–'षम्ब सर्पणे' (चु० प० से०) इति बोध्यं ॥ (१) ॥ * ॥ न व्येति[2] । 'इण् गतौ' (अ० प० अ०) 'एरच्' ( ३।३।५६ ) । 'अव्ययोऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु' (इति मेदिनी) [ ११८।७१ ] ॥ (१) ॥ * ॥ तण्डुना प्रोक्तम् । 'तेन प्रोक्तम्'(४।३।१०१)इत्यण् ॥ (१) ॥*॥

१. 'शतमान'लक्षणं स्मृतावुक्तम्, तद्यथा—'द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव च ॥' इति ।

२. 'तद्धितश्चासर्वविभक्तिः' ( १।१।३७ ) इति सूत्रे भगवता पतञ्जलिना 'अव्यय'–लक्षणमुक्तम्, तद्यथा–'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' इति ।

कवियं कन्दकर्पासं पारावारं युगंधरम् ।
यूपं[1] प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥

कवियम् कवियः ( लगाम ), कन्दम् कन्दः ( सूरन, कन्दा आदि कन्द ), कर्पासम् कर्पासः ( कपास, रूई ), पारम् पारः ( नदी आदिका पार अर्थात् दूसरा किनारा ), अवारम् अवारः ( नदी आदिके इधरका किनारा ), युगन्धरम् युगन्धरः ( जिसमें घोड़े बैल आदि जोते जाते हैं, वह रथका लम्बा काष्ठ-विशेष ), यूपम् यूपः ( यज्ञमें पशु बाँधनेका खम्भा), प्रग्रीवम् प्रग्रीवः, (खिड़की), पात्रीवम् पात्रीवः (यज्ञ-पात्र-विशेष ), यूषम् यूषः ( जौंड़ ), चमसः चमसम् (यज्ञ-पात्र-विशेष), चिक्कसः चिक्कसम् (सोम-पान करनेका पात्र-विशेष या जौ का आटा ), ये ४० शब्द पुंलिङ्ग और नपुंसकलिङ्ग होते हैं।

[कवीति] ॥ कवते । 'कुङ् शब्दे' (भ्वा० प० अ०)। बाहुलकादियः । 'तार्यो कवी खलीनं कवियं वा ना तुरगमुखभाण्डम्' इति बोपालितः ॥(१)॥*॥ कन्दति । 'कदि आह्वाने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्' (इति मेदिनी) [ ७४।३ ] ॥*॥ क्वचित् 'कर्म' इति पाठः ॥ ( १ ) ॥*॥ करोति, क्रियते वा । 'कृञः पासः' (उ० ५।४५) ॥ (१)॥*॥ पारयति । 'पार कर्मसमाप्तौ' (चु० प० से०)। पचाद्यच् (३।१।१३४) । यद्वा–पार्यते समाप्यते कर्मनेन । 'पुंसि–' (३।३।११८) इति घः ॥ (१) ॥*॥ न वारयति । 'वृञ् वरणे' (स्वा० उ० से०) । पचाद्यच् (३।१।१३४) ॥ ( १ ) ॥ * ॥ युगं धारयति । 'धृञ् धारणे' चुरादि [प० से०] । 'संज्ञायां भृतृ–' (३।२।४६) इति खच् । 'खचि ह्रस्वः' (६।४।९४) । 'अरुर्द्विषत्–' (६।३।६७) इति मुम् । कूबरः ॥ (१) ॥*॥ युवन्त्यस्मिन् । 'यु मिश्रणेऽमिश्रणे च' ( अ० प० अ० ) । 'कुयुभ्यां च' ( उ० ३।२७ ) इति पो दीर्घश्च ॥ ( १ ) ॥*॥ प्रगता ग्रीवा यस्मिन् ।=वातायनम्, मुखशाला वा, द्रुमशीर्षं वा ॥ (१) ॥*॥ पात्री वाति । कः (३।२।३) ।=यज्ञोपकरणपात्रभेदः ॥ (१) ॥*॥ यूषति । 'यूष बन्धे' (भ्वा० प० से०) । 'इगुपध–' ( ३।१।१३५ ) इति कः । 'मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः' ( ) ॥ (१) ॥*॥ चमन्त्यनेन । 'चमु अदने' (भ्वा० प० से०)। 'अत्यविचमि–' ( उ० ३।११७ ) इत्यसच् । चमसं = सोमपानपात्रम् ।

१. 'यूयम्—' इति पाठान्तरम् ।

